उष्णं तीक्ष्णं विशदं लघु चेषत्स्निग्धं द्रवञ्च। द्रवत्वसामान्येऽपि कफमम्लादिविशेषैर्भूयस्त्वात् द्रवत्वमवजित्य ह्रासयति न तु द्रवत्वेन कफं वर्द्धयति। तथा हिमे सञ्चितस्य कफस्य वसन्ते वमनलङ्घनकटुकादिसेवनं सन्निकृष्टं जीवनीयघृतादिकं बाधित्वा च विषं सद्यो जीवनं हन्ति। इत्येवं प्राधान्याप्राधान्यं बोध्यम्। अभिव्यक्तिरप्युत्पत्तिविशेषः। तद्धेतुत्वात् अभिव्यञ्जकश्च हेतुभेदमाह कश्चित्। हेतुत्रयमिदं किञ्चिद्धातुप्रदूषणवचनेन दोषहेतुव्याधिहेतु-दोषव्याध्युभयहेतुत्वेन बोध्यम्। दोषहेतवो यथर्त्तूत्पन्ना मधुरादयः। व्याधिहेतवो मृद्भक्षणादयः पाण्डुरोगादेः। यथा—कषाया मारुतं पित्तमूषरा मधुरा कफम्। कोपयेन्मृद्रसादींश्च रौक्ष्याद् भुक्तञ्च रूक्षयेत्। इति कषायादिमृद्भक्षणतः कुपितवातादीनां पाण्डुशोफरोगेतररोगानारम्भकत्वेन पाण्डुरोगशोफरोगमात्रारम्भकत्वात् तु व्याधिहेतुत्वात्। उभयहेतवो वातरक्तादौ हस्त्यश्वादियानादयः। ते हि दोषं कोपयित्वा वातरक्तादिप्रतिनियतमेव व्याधिं जनयन्ति नान्यविकारमिति कश्चित्; तन्न, मृद्भक्षणस्येव हस्त्यश्वादियानादेर्व्याधिहेतुत्वात्। हस्त्यश्वादियानादेरिव च मृद्भक्षणस्योभयहेतुत्वापत्तेः। तेन व्याधिहेतवोऽभिघातादयः, उभयहेतवो मृद्भक्षणहस्त्यश्वयानादय इति।

यस्तु वाह्याभ्यन्तरभेदेन द्विविधं हेतुं प्रज्ञापराधोऽसात्म्येन्द्रियार्थसंयोगादित्रयं वाह्यं कारणं दोषा दूष्याश्चाभ्यन्तरम्। तत्र दोषा वातादयः शारीराः; रजस्तमसी मानसौ दोषौ दूष्याश्च रसादयो धातवः। पुरीषादयश्च शारीराः सत्त्वगुणस्तु मानसो दूष्य इति व्याचष्टे तदनेन प्रत्याख्यातं भवति, यतोऽस्मिन्नुक्त विकारो धातुवैषम्यं साम्यं प्रकृतिरुच्यते। इति। वातादिधातुवैषम्यं व्याधिं प्रति हि न दोषादिको हेतुः। तद्धातुवैषम्यहेतुकास्तु ज्वरादयो व्याधयस्तेषूपादानं दोषा वातादयो रसादयश्च दूष्याः। मानसदोषरजस्तमोवैषम्यनिमित्ताः कामक्रोधादयश्च ये तेषूपादानं विषमरजस्तम इति वातादिभ्यः पृथङ् न ज्वरादयः कामादयश्च न पृथग्रजस्तमोभ्यामिति; तच्चोक्तं—स्वधातुवैषम्यनिमित्तजा ये विकारसङ्घा बहवः शरीरे। न ते पृथक् पित्तकफानिलेभ्य आगन्तवस्ते तु ततो विशिष्टाः। इति। ये चागन्तवः शरीरेऽभिघातादिभ्यो जायन्ते क्षतादयस्ते-

व्याधीनुक्तहेतुजानाह—द्विविधाश्चापर इत्यादि। राजसतामसानाञ्च विच्छिद्य पाठेनेह तन्त्रे शारीरव्याध्यधिकारप्रवृत्तेरनधिकारत्वेनाप्रपञ्चनीयत्वं दर्शयति; अभिधानञ्च राजसतामसयोरिह व्याधिकथनस्य न्यूनतापरिहारार्थम्; आगन्तवश्चाभिघातादिजा रोगा आग्नेयादिष्वेवान्त-

तत्र व्याधिरामयो गद आतङ्को यक्ष्मा ज्वरो विकार* इत्यनर्थान्तरम् ॥ ४ ॥

ऽपि तद्रसमांसादिवैषम्यजा एव, किञ्चित्कालं प्रथमं यद्वातादिदोषसम्बन्धरहितास्तावत्कालं पित्तकफानिलेभ्यो विशिष्टा न पित्तादिदोषात्मकाः। तस्मादाभ्यन्तरहेतवो न सन्ति ज्वरादयो हि धातुवैषम्यरूपव्याधिजन्यत्वाद् व्याधय उच्यन्ते। यथा पञ्चभूतारब्धं वस्तु द्रव्यारब्धत्वात् द्रव्यं तदुक्तं सेन्द्रियं चेतनं द्रव्यं निरिन्द्रियमचेतनमिति। एवं वक्ष्यते चात्र। कश्चिद्धि रोगो रोगस्य हेतुर्भूत्वा प्रशाम्यतीति। स च रोगजत्वाद् रोगः इत्यतो रोगाख्यहेतुर्नाधिक इति। यथा पञ्चभूतजमन्नमन्नजञ्च शुक्रमित्यन्नं न पृथग्द्रव्यं भूतेभ्य इति।

एवं त्रिविधे हेतौ सिद्धान्ते तत्कार्य्यमाह—अत इत्यादि। अतस्त्रिविधात् असात्म्येन्द्रियार्थसंयोगादितः। यथा धातुवैषम्यं स्यात् तद्विधं शस्त्रादिजसद्योव्रणाद्यागन्तुकं वातादिवैषम्यञ्च। तद्वातादिवैषम्यनिमित्ता ज्वरादयश्चेति। त्रिविधा आधिभौतिका आध्यात्मिका आधिदैविकाश्चेति त्रिविधाः आग्नेयादिनिर्द्देशेनैव त्रिविधत्वे सिद्धे त्रिविधवचनात् ख्यापिताः। आग्नेया इत्यादि पृथक्पदनिर्द्देशेन त्रिविधाद्धेतोर्यथार्हं न तु यथाक्रमम्। त्रिधा व्याधीनाह—आग्नेया इत्यादि। शारीरास्त्रिधाग्नेयादिभेदात्। तत्र मातृजधातुवैषम्यरूपा आग्नेयास्तथा पैत्तिकाश्च। पितृजधातुवैषम्यरूपाः सौम्याः श्लैष्मिकाश्च। वातवैषम्यं तन्निमित्ताश्च वायव्या इति। अत्रागन्तवोऽन्तर्भवन्ति। द्विविधाश्चापरे मानसा राजसास्तामसाश्च। आग्नेयस्य राजसत्वं वायव्यस्य च तथा सौम्यस्य तामसत्वम् यद्यपि तथापि साक्षात्कारणेन भूतेन निर्द्देशो न त्वतिपरम्पराकारणेन गुणेन। इति ॥ ३ ॥

गङ्गाधरः—अथ वातादिरसादिस्वेदादीनां शारीराणां धातूनां रजस्तमसोर्मानसयोश्च धात्वोः सत्त्वस्य च वैषम्येभ्यो विकारेभ्यो जातानां ज्वरादीनां कामक्रोधादीनाञ्च विकारत्वं किमस्ति नास्ति वा इति? अत उच्यते—तत्रेत्यादि। तत्राग्नेयादिषु त्रिविधेषु राजसतामसेषु च धातुवैषम्यनिमित्तेषु रोगेषु व्याधिः

भवन्ति ; यतस्तत्रापि हि दोषप्रकोपव्यपदेशोऽस्त्येव ; किंवा 'अपरे' इत्यप्रधानाः, परो हि श्रेष्ठ उच्यते ; अप्रधानत्वे चोक्तैवोपपत्तिः। व्याधीनामाग्नेयादिविभागं दर्शयित्वा व्यवहारार्थं लक्षणार्थञ्च पर्य्यायानाह—अत्र व्याधिरित्यादि। अत्रापि पर्य्यायाणामनर्थान्तरेणातङ्कादि-

* इतः परं रोग इत्यधिकः पाठो बहुषु ग्रन्थेषु दृश्यते।

तस्योपलब्धिर्निदानपूर्व्वरूपलिङ्गोपशयसम्प्राप्तितश्च ।

इत्यादि विकार इत्यन्तं सर्व्वं प्रातिपदिकमनर्थान्तरमेकार्थकम्। परस्पर-मेकार्थकं सद् यमर्थमभिदधाति सोऽर्थो रोगो रोगत्वात्। यथा गोजातो गौरश्व-जातश्चाश्व इति। तत्र व्यध ताड़ने इत्यस्य रूपं व्याधिः। अम रोगे चौरादिस्तस्य रूपमामय इति। गद व्यक्तायां वाचीत्यस्य रूपं गद इति संज्ञायाम्। तकि दौःस्थ्ये इत्यस्याङ्पूर्व्वस्य रूपमातङ्कः। यक्ष पूजने इति चौरादिकस्य संज्ञायां यक्ष्मा। ज्वर रोगे इत्यस्य रूपं ज्वर इति। विपूर्व्वक कृञो रूपं विकार इति। एषां यथा धातुवैषम्यमुपादानं तथा चासात्म्येन्द्रियार्थसंयोगादित्रयञ्च कारणमिति। कुष्ठाद्योषधिविशेषस्य व्याधिपर्य्यायवाच्यत्वेऽर्थान्तराभावाद् व्याधित्वं न प्रसज्यते, तत्रेतिपदेनाग्नेयादीनामनुकर्षणात्। यक्ष्मा ज्वरश्चेति रोगसामान्ये यथा वर्त्तते तथा रोगविशेषे च वर्त्तते। यथा शालशब्दो वृक्ष-सामान्ये वृक्षविशेषे च वर्त्तते। विस्तरेण रोगस्वरूपं विकारो धातुवैषम्यमिति श्लोके व्याख्यातमिति ॥ ४ ॥

गङ्गाधरः—अथास्य व्याधेः कुत उपलब्धिर्भवतीति अत उच्यते—तस्येत्यादि। तस्य धातुवैषम्यनिमित्तस्य तदनिमित्तस्य चासात्म्येन्द्रियार्थसंयोगादिजस्य व्याधेः स्वरूपतः प्रभेदतः साध्यत्वासाध्यत्वादितो बलाबलतोऽनुबन्ध्यानुबन्धा-दितश्च सर्व्वतोभावेनोपलब्धिर्यथासम्भवं प्रत्यक्षमनुमानञ्च निदानादिभ्यः पूर्व्वमाप्तोपदेशेन ज्ञातस्य। यथा हिक्कादौ शब्दः श्रोत्रेण प्रत्यक्षमुपलभ्यते। शैत्यौष्ण्यादिकमातुरगतं स्पर्शनेन। कृष्णारुणश्वेतपीतादिकं चक्षुषा कृश-

शब्दानां भयाद्यर्थताव्युदासाद् व्याधिलक्षणत्वं बोध्यम्। आतङ्केन हि भयमप्युच्यते, विकार-शब्देन हि इन्द्रियादयोऽपि षोड़श विकारा उच्यन्ते। तथा व्याध्यादिशब्दानां व्युत्पत्त्या रोग-धर्म्मा लक्षणीयाः ;—तथा च विविधं दुःखमादधातीति व्याधिः। प्रायेणाम‌समुत्थत्वेनामय उच्यते। आतङ्क इति दुःखयुक्तत्वेन कृच्छ्रजीवनं करोति। वचनं हि "आतङ्कः कृच्छ्रजीवने"। यक्ष्मशब्देन च राजयक्ष्मवदनेकरोगयुक्तत्वं विकाराणां दर्शयति ; ज्वरशब्देन च देहमनःसन्ताप-करत्वम्। विकारशब्देन च शरीरमनसोरन्यथाकरणत्वं व्याधेर्दर्शयति। रोगशब्देन च रुजाकर्तृत्वम् ॥ ३।४ ॥

चक्रपाणिः—इदानीं व्याधेर्जनकहेतुमभिधाय तथा तद्धेतुजन्यञ्च व्याधिमुक्त्वा तस्य व्याधे-र्ज्ञानोपायमाह—तस्येत्यादि। अविज्ञाते हि व्याधौ चिकित्सा न प्रवर्त्तते। अतः सामान्येन व्याधिज्ञानोपायनिदानपञ्चकाभिधानम्।

त्वाक् शत्वञ्च। रसश्चातुरगतो रसनेनानौचित्याद् ग्रहणानुक्तेः परन्त्वनुमानेनोपलभ्यते। गन्धस्तु घ्राणेनेति। प्रत्यक्षमन्यत् सर्व्वमनुमानेनेति।

अथैवमस्तु—निदानेन रोगस्य भविष्यतो वर्त्तमानस्यानुपशयेन निदानेनानुमानादुपलब्धौ सत्यां पुनः कथं पूर्व्वरूपादिभिर्ज्ञानमिष्यते; ज्ञातस्य पुनर्ज्ञाने प्रयोजनाभावादिति चेत्? न, निदानेन हि व्याधिरयं भविष्यतीति विज्ञायते, स च कीदृशो व्याधिरिति न विज्ञायते, न वा निदानादिपञ्चकान्यतममेकमप्यन्तरेण व्याधेः सर्व्वथा ज्ञानं भवति, तस्मादपरे ज्ञानहेतवो वक्तव्याः। एकनिदानकानाम् अनेकव्याधीनाञ्च समानानेकनिदानकानां वा न निश्चयेन व्याधीनां ज्ञानं भवति को व्याधिर्भविष्यतीति संशयात्। निदानस्य सन्निकर्ष-विप्रकर्षादिना जयपराजयविघातादितो व्याध्युत्पत्तिव्यभिचाराच्च। तस्मात् पूर्व्वरूपादीनां वक्तव्यत्वे सामान्यपूर्व्वरूपात् केवलात् व्याधेर्वातजत्वादिविशेषावधारणं न स्यात्, न वा विशेषेण पूर्व्वरूपात् केवलात् व्याधीनां निश्चयज्ञानं स्यात्। रक्तपित्तपित्तप्रमेहसन्देहे हि वक्ष्यते "हारिद्रवर्णं रुधिरञ्च मूत्रं विना प्रमेहस्य हि पूर्व्वरूपैः। यो मूत्रयेत् तं न वदेत् प्रमेहं रक्तस्य पित्तस्य हि स प्रकोपः॥" इति। हारिद्रवर्णरुधिरवर्णमूत्रदर्शने पूर्व्वमस्मात् प्रमेहपुर्व्वरूपमभूत् किं नाभूत् तं विज्ञाय निःसंशयो भवति न केवलहारिद्रवर्णरुधिरवर्णमूत्रस्य रूपस्य दर्शनमात्रेण निःसंशयः स्यात्, तस्माद्रूपज्ञानमात्रतो न व्याधिज्ञानं भवति। नाप्युपशयात् केवलाद् व्याधेर्निश्चयः स्यात्। एकद्रव्योपशयानां वातिकानां पैत्तिकानाञ्च व्याधीनां मधुरस्निग्धादिभिरुपशये वातिकत्वपैत्तिकत्वान्यतरसंशयात्। व्याधिप्रभावेण चावम्यतिमिरादीनां कफजत्वनिश्चयो न वमनेन स्यात् इति। न वा केवलया सम्प्राप्त्या व्याधिनिश्चयः स्यात्। वातादिः प्रत्येकमेव प्रतिरोगं सर्व्वरोगस्य नियमतः स्थानसंश्रयादिमत्तया व्याधिजनकत्वात्। स्वस्वलिङ्गं विना वाताद्यवगमाभावात्। तस्मान्निदानादिपञ्चकात् समस्तादेव व्याधेरुपलब्धिर्भवति सर्व्वथैव। एकैकस्मात् तु कस्यचित् कदाचित् कथञ्चित् क्वाचिदुपलब्धिर्भवति।

अथ भविष्यति व्याधिनिश्चयश्चतुर्भिरिति निदानं नोक्त्वा शेषाणि चत्वार्युच्यन्तामिति चेत्? न। भूताद्यभिषङ्गादिजानां व्याधीनां निदानं भूतादिकमन्तरेण भूतलक्षणसमानलक्षणवातादिलिङ्गैः वातादिजत्वेन ज्ञानाभावात्। एवमग्निदग्धादिषु बोध्यम्। भूतादिनिदानेन हि तज्ज्ञानात् तस्मान्निदानं वक्तव्यम्। निदानेनैव चानुपशयात्मकेन गूढलिङ्गानां व्याधीनां

ज्ञानाच्च। यत् तु संक्षेपतः क्रियायोगो निदानपरिव्वर्ज्जनमिति सुश्रुत-वचनदर्शनेन निदानज्ञानमन्तरेण निदानपरिवर्ज्जनं न स्यात् अतो निदान-मवश्यं वाच्यमिति व्याचष्टे, तन्न, व्याधेरुपलब्ध्यर्थं हि न निदानं ज्ञातव्यं भवति, क्रियार्थन्तु भवतीति क्रियोपदेशे वक्तव्यं स्यादिति।

अथ तर्हि पूर्व्वरूपं नोच्यतां निदानरूपोपशयसम्प्राप्तयस्तूच्यन्तामिति चेत्? न। विना हि पूर्व्वरूपं निदानादिभिश्चतुर्भिर्न व्याधेर्निश्चयः स्यात्। यथा— "हारिद्रवर्णं रुधिरञ्च मूत्रं विना प्रमेहस्य हि पूर्व्वरूपैः। यो मूत्रयेत् तं न वदेत् प्रमेहं रक्तस्य पित्तस्य हि स प्रकोपः" इति। यत् तु व्याधिज्ञानहेतुषु निदानादिषु पूर्व्वरूपस्यानुपादाने पूर्व्वरूपावस्थायां विहितक्रियाविशेषो न कर्त्तुं शक्यते भिषग्भिः, पूर्व्वरूपज्ञानाभावात्। उक्तञ्च सुश्रुते। वातिक-ज्वरपूर्व्वरूपे घृतपानमिति। वक्ष्यते चात्र ज्वरस्य पूर्व्वरूपे लघ्वशनमपतर्पणं वेति। तदपि व्याध्युपलब्धिरुपादाने साधकं न भवति। चिकित्सार्थं पूर्व्वरूपस्य ज्ञानस्यावश्यकत्वात् तत्रैवोपदिश्यतां पूर्व्वरूपमिति। ज्ञानहेतुषु उपादाने ज्ञानार्थं यत् तत् साधकं भवतीति।

अथ लिङ्गं नोच्यतां निदानपूर्व्वरूपोपशयसम्प्राप्तयस्तूच्यन्तामिति चेत्? न। लिङ्गं हि विना व्याधेः स्वरूपज्ञानं न स्यात् वातादिजत्वविशेषज्ञानञ्च। यत् तु रूपावस्थायां विहिता सर्व्वा चिकित्सा विना लिङ्गज्ञानं न सम्भवति, तस्माल्लिङ्गं वक्तव्यमिति व्याचष्टे, तन्न। व्याध्युपलब्धिहेतुषु लिङ्गोपादाने साधकं भवति। चिकित्सार्थं लिङ्गज्ञानावश्यकत्वे तत्रैव वक्तव्यं भवतीति। इत्थञ्च व्याधेः साध्यत्वासाध्यत्वादिज्ञानार्थञ्च निदानपूर्व्वरूपलिङ्गान्यवश्यं वक्त-व्यानि भवन्ति। उक्तं हि सुखसाध्यलक्षणप्रकरणे—हेतवः पूर्व्वरूपाणि रूपा-ण्यल्पानि यस्य वा इत्यादि। कृच्छ्रसाध्यलक्षणे च—निमित्तपूर्व्वरूपाणां रूपाणां मध्यमे बले इति। तथा ज्वरस्यासाध्यलक्षणे—हेतुभिर्बहुभिर्जातो बलिभिर्बहुलक्षणः। ज्वरः प्राणान्तकृत्। एवं, पूर्व्वरूपाणि सर्व्वाणि ज्वरोक्ता-न्यतिमात्रया। यं विशन्ति विशत्येनं मृत्युर्ज्वरपुरःसरः। अन्यस्यापि च रोगस्य पूर्व्वरूपाणि यं नरम्। विशन्त्यनेन कल्पेन तस्यापि मरणं ध्रुवमिति। सुख-साध्यत्वादिज्ञानार्थञ्चावश्यं वक्तव्यानि निदानपूर्व्वरूपलिङ्गानीति।

अथोपशयोऽप्यवश्यं वक्तव्यः। न हि गूढ़लिङ्गव्याधीनामनभिव्यक्तत्वेन सङ्कीर्णलक्षणानाञ्चोपशयानुपशयाभ्यामन्तरेण विशेषज्ञानं भवति। वक्ष्यते चात्र गूढ़लिङ्गं व्याधिमुपशयानुपशयाभ्यां परीक्षेतेति।

## तत्र निदानं कारणमित्युक्तमग्रे ।

अथ सम्प्राप्तिरिह व्याधिविज्ञानहेतुषु नोच्यतामिति चेत्? न। यतो निदानेन जातस्यापि व्याधेः आरम्भकदोषाणामंशांशविकल्पानुबन्ध्यानुबन्धरूप-प्राधान्याप्राधान्यबलकालादिज्ञानं सम्प्राप्तिमन्तरेण न स्यात् ततो व्याधेरशेष-विशेषेण स्यात् न चाविशेषविशेषेण व्याधेर्ज्ञानमन्तरेण विशेषेण चिकित्सा भवति। वक्ष्यते च—रोगमादौ परीक्षेत ततोऽनन्तरमौषधम्। ततः कर्म्म भिषक् पश्चाज्ज्ञानपूर्व्वं समाचरेत्॥ इति। इत्थञ्च व्याधिज्ञानार्थमिहोपदिष्टेषु पञ्चसु निदानादिषु चिकित्सार्थं पुनस्तत्र नैतानि वाच्यानि भवन्ति।

पञ्चानामेषां निर्द्देशान्निदानस्थानग्रन्थोऽपि निदानशब्देनोच्यते। तत्राथ निरुक्तिरियं—निदीयते निबध्यते हेत्वादिसम्बन्धो व्याधिरनेनास्मिन् वेति निदानं निदानस्थानम्। या गौः कामदुघा न तां निदद्दीतेति निबन्धनार्थे निपूर्व्वदाञो व्यासेन प्रयुक्तत्वात्। हेतुलक्षणनिर्द्देशान्निदानानीति षोड़शेति सुश्रुतवचनाच्च। नैषा निरुक्तिः सुश्रुतवचनेन संगच्छते हेतुलक्षणनिर्द्देशादित्युक्तेः, निबन्धनोक्त्यभावात्। करणाधिकरणयोश्च ल्युट् ग्रन्थार्थे पुंलिङ्गत्वप्रसङ्गा-च्चाध्यायार्थे च। स्थानार्थे चेन्निदानानीति षोड़शेति अध्यायार्थे निदाना-नीति नपुंसकत्वानुपपत्तिश्च। हेतुलक्षणनिर्द्देशादिति निर्द्देशोक्त्या निदीयन्ते निर्द्दिश्यन्ते निदानादीनि यस्मिन् तन्निदानं निदानस्थानं पृषोदरादित्वाद् रूपसिद्धिः। इयमपि निरुक्तिर्न साधुः। निदानानीति षोड़शेति षोड़शाध्याय-परत्वान्नपुंसकत्वानुपपत्तेः। हेतुलक्षणनिर्द्देशादित्युक्त्या निदानशब्दे निपूर्व्व-दिशेः प्रयोगाभावात्। एवञ्च निदानशब्दस्य हेतुलक्षणवचनस्य तत्तदध्याये उपचारस्तत्तद्व्याधेर्हेतुलक्षणनिर्द्देशादिति, अन्यथा नपुंसकलिङ्गानुपपत्तिर्निदाना-नीति, अध्यायविशेषणत्वेन पुंलिङ्गप्रसङ्गश्चेति।

तत्र निदानादीनि क्रमेण लक्षयति—तत्र निदानमित्यादि। कारणमित्युक्तमग्रे इति। यदिहैवाग्रे उक्तं हेतुर्निमित्तमित्यादिपर्य्यायेण उत्पत्तिकारणं तदिह व्याधेर्निदानमिति। यदा तु व्याधिरपरं व्याधिं जनयति; यथा—ज्वरसन्तापाद् रक्तपित्तं जायते इत्येवमादि, तदा तद्रक्तपित्तकरो ज्वरो निदानार्थकरो रोग एव न तु निदानम्। यथा घटादि द्रव्यं द्रव्यारब्धद्रव्यं

उक्तं निदानं विवृणोति—निदानमित्यादि। अग्रे उक्तमिति 'इह खलु' इत्यादिना 'परिणामश्च' इत्यन्तेन। कारणञ्च व्याधीनां सन्निकृष्टं वातादि, विप्रकृष्टञ्चार्थानाम्

तदारम्भकमृदादि द्रव्यं द्रव्यार्थकरं द्रव्यं न तु नवद्रव्यान्तर्गतं द्रव्यम्। तस्मात् असात्म्येन्द्रियार्थसंयोगादित्रिविधनिदानातिरिक्तं निदानं नास्तीति। यच्च सेतिकर्त्तव्यताको व्याध्युत्पत्तिहेतुर्निदानमित्युक्त्वा त्रिविधेष्वसात्म्येन्द्रियार्थसंयोगादिषु द्रव्यभूतेषु यथा समन्वेति, तथा वातादिषु च विषमेषु समन्वेति। हेतुश्च वाह्य आभ्यन्तरश्चेति द्विविधः। वाह्यस्त्रिविधः, आभ्यन्तरास्तु दोषदूष्या इति व्याख्याय दोषाणामितिकर्त्तव्यतायाश्च इतिकर्त्तव्यतान्तरभावान्न निदानत्वं किन्तु सम्प्राप्तित्वमिति सुश्रुतेन वातादीनां निदानत्वमुक्तम्। तद्यथा—सर्व्वेषाञ्च व्याधीनां वातपित्तश्लेष्माण एव मूलं तल्लिङ्गत्वाद् दृष्टफलत्वादागमाच्चेति व्याचष्टे, तन्न सङ्गतम्; अद्रव्यभूतेष्वसात्म्येन्द्रियार्थादिष्वत्युग्रशब्दादिषु परुषवागादिषु लक्षणस्याप्रसङ्गात् सेतिकर्त्तव्यताकत्वाभावात् द्रव्यभूतानामितिकर्त्तव्यतास्वप्रसङ्गाच्च। निदानार्थकरेषु विषमवातादिषु ज्वरादिषु चातिप्रसङ्गात्। सुश्रुते तु सर्व्वेषाञ्च व्याधीनां वातपित्तश्लेष्माण एव मूलं तल्लिङ्गत्वात् इत्युक्तं न निदानमुक्तम् तल्लिङ्गत्वादित्यनेन वातादिप्रकृतिकत्वमुक्तं तेन सर्व्वेषां व्याधीनामिति वातादिप्रकृतिकानां व्याधीनां ज्वरादीनां मूलमित्युक्तं न त्वागन्तुव्याधीनां न वा कामादीनां मानसव्याधीनां मूलमुक्तं तस्मात् विषमवातपित्तश्लेष्माणो न निदानं किन्तु विकारा एव। यत उक्तं विकारो धातुवैषम्यमिति, तच्च धातुवैषम्यं निदानार्थकरं निदानार्थकरज्वरादिव्याधिवद्व्याधिरेव। तत्र सुश्रुते च पुनरुक्तं तद् यथा—"भूयोऽत्र जिज्ञास्यं—किं वातादीनां ज्वरादीनाञ्च नित्यः संश्लेषः परिच्छेदो वेति? यदि नित्यः संश्लेषः स्यात् तर्हि नित्यातुराः सर्व्व एव प्राणिनः स्युः। अथाप्यन्यथा वातादीनां ज्वरादीनाञ्चान्यत्र वर्त्तमानानामन्यत्र लिङ्गं न भवतीति कृत्वा यदुच्यते वातादयो ज्वरादीनां मूलानीति।" तस्मात् सर्व्वेषां व्याधीनामिति ज्वरादीनां न तु धातुवैषम्यागन्तुव्याधीनाम्; किं हि वातवैषम्यस्य वातवैषम्यं मूलम्? तत्रोत्तरञ्चोक्तं—"दोषान् प्रत्याख्याय ज्वरादयो न भवन्ति, अथ च न नित्यः सम्बन्धो यथा हि विद्युद्वाताशनिवर्षाणि आकाशं प्रत्याख्याय न भवन्ति, सत्यप्याकाशे कदाचिन्न भवन्ति अथ च निमित्ततस्तत एवोत्पद्यन्ते। तरङ्गबुद्बुदादयश्च उदकविशेषा एव। एवं वातादीनां ज्वरादीनाञ्च नाप्येव संश्लेषो न

अयोगादि; पुनर्विप्रकृष्टं कारणं ज्वरस्य रुद्रकोपः, सन्निकृष्टं कारणं रक्तपित्तस्य ज्वरसन्ताप इति। पुनश्च व्याधीनां सामान्येन विप्रकृष्टं कारणमुक्तम्, यथा—'प्रागपि चाधर्म्मादृते न रोगोत्पत्तिरभूद्' इत्यादि। तदेतत् सर्व्वमपि कारणशब्देन ग्राह्यम्। तत्राधर्म्मकार्य्यत्वेन व्याधीनां

परिच्छदः शाश्वतिकः, अथ च निमित्तत एवोत्पत्तिरिति। तस्मान्निदानशब्देन कुपितवातादयो नोच्यन्ते। शास्त्रेऽस्मिन् वाह्यहेतोः पर्य्यायेण निदानशब्द उक्तः। एवमेषामसात्म्येन्द्रियार्थसंयोगप्रज्ञापराधपरिणामानां निदानानां कानिचित् दोषान् वर्द्धयित्वा ज्वरादीन् जनयन्ति कानिचित् कारणान्तरतः सञ्चितान् दोषान् व्यञ्जयन्ति विकारान् जनयन्ति। दोषप्रकोपपूर्व्वकज्वरादिव्याधिहेतून् प्रतिरोगाध्याये वक्ष्यति। हेमन्ते सञ्चितं श्लेष्माणं घृतमिव सूर्य्यसन्तापो विलयन् कफरोगं जनयति। तदुक्तं—हेमन्ते निचितः श्लेष्मा वसन्ते कफरोगकृदिति। सुश्रुते च वातादीनां चयप्रकोपादिहेतुरुक्तः एकविंशतितमेऽध्याये। तद्यथा—प्राक्सञ्चितहेतुरुक्त इति ऋतुभेदेन। तत्र सञ्चितदोषाणां स्तब्धपूर्णकोष्ठता पीतावभासता मन्दोष्मता चाङ्गानां गौरवमालस्यं चयकारणविशेषश्चेति लिङ्गानि भवन्ति। तत्र प्रथमः क्रियाकाल इति। एष प्राकृतचय ऋतुस्वभावादेव भवति। समयोगयुक्तानामपि। एवं सञ्चिते दोषे पूर्व्वं प्रज्ञापराधकृतकर्म्मफलेनाधर्म्मविशेषेण काले परिणमता फलोन्मुखीभूतेनाधिष्ठितः; तत्प्रतिकारं न करोति, करोति पुनः प्रज्ञापराधादहितसेवनम्। रोगसामान्यकारणं विशेषरोगकारणं वा सेवते। तत्र वातसामान्यकारणमुक्तं सुश्रुतेन। तद्यथा—अत ऊर्द्ध्वं प्रकोपणानि वक्ष्यामः। तत्र बलवद्विग्रहातिव्यायामव्यवायाध्ययनप्रपतनप्रधावनप्रपीड़नाभिघातलङ्घन-प्लवनतरण-रात्रिजागरण-भारहरण-गजतुरगरथपदातिचर्य्याकटुकषायतिक्तरूक्ष-लघुशीतवीर्य्य-शुष्कशाक-वल्लूरवरकोद्दालककोरदूष-श्यामाकनीवारमुद्गमसूराढ़कीहरेणुकलाय-निष्पावानशनविषमाशनाध्यशन-वातमूत्रपुरीषशुक्रच्छर्द्दिक्षवथूद्गारवाष्पवेगविघातादिभिर्विशेषैर्वायुः प्रकोपमापद्यते। स शीताभ्रप्रवातेषु घर्म्मान्ते च विशेषतः। प्रत्यूषस्यपराह्णे च जीर्णेऽन्ने च प्रकुप्यतीति। एतान्यासेवमानस्यादौ वायुः सञ्चीयते तत्र चोक्तानि लक्षणानि यश्च वा पूर्व्वकर्म्मकृताधर्म्मविशेषेणाधिष्ठितो वक्ष्यमाणानि वातज्वरादिकारणान्यासेवते तस्य चादौ वायुः सञ्चीयते। तस्य चोक्तानि लक्षणानि भवन्ति न विशेषापरलक्षणानि, तस्मादनुमीयतेऽस्य वातजो व्याधिर्भविष्यति, वातलाहारादिजातस्तब्धपूर्णकोष्ठतादिमत्त्वात्। एवमेव पूर्व्वं प्रज्ञापराधकृतकर्म्मविशेषफलेनाधर्म्मविशेषेण

दैवव्यपाश्रयप्रायश्चित्तबलिमङ्गलेत्यादिचिकित्सासाध्यत्वं प्रतीयते। रुद्रकोपभवत्वेन च ज्वरस्य महादेवप्रभवत्वं तथाग्नेयत्वं प्रतीयते। क्रोधो ह्याग्नेयः। तेन तन्मयो ज्वरोऽप्याग्नेयः। तथा च वचनम्—"ऊष्मा पित्तादृते नास्ति ज्वरो नास्त्युष्मणा विना। तस्मात् पित्तविरुद्धानि त्यजेत्

काले परिणमता फलोन्मुखीभूतेनाधिष्ठितः प्राक्सञ्चितपित्तसञ्चयप्रतिकारं न करोति, करोति पुनः प्रज्ञापराधादहितसेवनम्, रोगसामान्यकारणं रोगविशेष-कारणं वा सेवते। तत्र पित्तसामान्यकारणमुक्तं सुश्रुतेन। तद्यथा—क्रोधशोक-भयायासोपवास-विदग्ध-मैथुनोपगमनकट्वम्ल-लवण-तीक्ष्णोष्णलघुविदाहितिल-तैलपिण्याककुलत्थ-सर्षपातसीहरितकशाक-गोधामत्स्याजाविकमांस-दधि-तक्र-कूर्च्चिकामस्तुसौवीरकसुराविकाराम्लफलकट्वराकप्रभृतिभिः पित्तं प्रकोप-मापद्यते। तदुष्णैरुष्णकाले च मेघान्ते च विशेषतः। मध्याह्ने चार्द्धरात्रे च जीर्य्यत्यन्ने च कुप्यति॥ एतान्यासेवमानस्यादौ पित्तं सञ्चीयते, तत्र चोक्तानि स्तब्धपूर्णकोष्ठतादीनि लक्षणानि भवन्ति। यश्च वा पूर्व्वकर्म्मकृताधर्म्म-विशेषेणाधिष्ठितो वक्ष्यमाणपित्तज्वरादीनां कारणमासेवते तस्य चादौ पित्तं सञ्चीयते, तत्राप्युक्तानि लक्षणानि भवन्ति न विशेषापरलक्षणानि; तस्मादनुमीयतेऽस्य पित्तजो व्याधिर्भविष्यति, पित्तलाहारादिजातस्तब्ध-पूर्णकोष्ठतादिमत्त्वात्। एवमेव पूर्व्वं प्रज्ञापराधकृतकर्म्म विशेषफलेनाधर्म्मविशेषेण काले परिणमता फलोन्मुखीभूतेनाधिष्ठितः प्राक्सञ्चितं श्लेष्माणं न प्रतिकुरुते, कुरुते पुनः प्रज्ञापराधादहितसेवनम्, रोगसामान्यकारणं रोगविशेषकारणं वा सेवते। तत्र कफसामान्यकारणमुक्तं सुश्रुतेन—दिवास्वप्नाव्यायामालस्य-मधुराम्ललवणशीत-स्निग्ध-गुरु-पिच्छिलाभिष्यन्दि-हायनकयवकनैषधकेत्कटक-माष-महामाष-गोधूम तिलपिष्टविकृति-दधिदुग्धकृशरापायसेक्षुविकारानूपौदक-मांसवसाविस-मृणाल-कशेरुक शृङ्गाटक-मधुरवल्लीफल-समशनाध्यशनप्रभृतिभिः श्लेष्मा प्रकोपमापद्यते। स शीतैः शीतकाले च वसन्ते च विशेषतः। पूर्व्वाह्ने च प्रदोषे च भुक्तमात्रे प्रकुप्यति इति॥ एतान्यासेवमानस्यादौ श्लेष्मा सञ्चीयते तत्र चोक्तानि स्तब्धपूर्णकोष्ठतादीनि लक्षणानि भवन्ति। यश्च वा पूर्व्वकृताधर्म्मविशेषेण अधिष्ठितो वक्ष्यमाणकफज्वरादिकारणमासेवते तस्य चादौ श्लेष्मा सञ्चीयते। तत्राप्युक्तानि स्तब्धतादीनि लक्षणानि भवन्ति न विशेषापरलक्षणानि। तस्मादनुमीयतेऽस्य श्लेष्मजो व्याधिर्भविष्यति; श्लेष्मला-हारादिजातस्तब्धकोष्ठतादिमत्त्वात्। एवं सञ्चितवातादिदेहस्य पुनः प्रज्ञाप-राधात् पित्तप्रकोपणैः सेव्यमानैश्चाभीक्ष्णमेव द्रवद्रव्यस्निग्धगुरुभिश्चाहारैर्दिवा-स्वप्नक्रोधानलातपश्रमाभिघाताजीर्णविरुद्धाध्यशनादिभिरसृक् प्रकोपमापद्यते।

पित्ताधिकेऽधिकम्" ॥ इति। वातादिजन्यत्वज्ञापनेन च वातादिविपरीतभेषजसाध्यत्वं तथानुक्त-वातादिविकारान्तरसम्बन्धोऽपि भावी कल्प्यते। असात्म्यहेतुसेवोपदर्शकेन च भावी व्याधिः

यस्माद् रक्तं विना दोषैर्न कदाचित् प्रकुप्यति। तस्मात् तस्य यथादोषं कालं विद्यात् प्रकोपणे॥ इति। इत्येवमेकशो द्विशः समस्ता वा दोषाः शोणितसहिता वा सञ्चिता यदा प्रकुप्यन्ति तल्लक्षणमुक्तं सामान्येन सुश्रुते। तद्यथा—तेषां प्रकोपात् कोष्ठ-तोदसञ्चरणाम्लिकापिपासा-परिदाहान्नद्वेषहृदयोत्क्लेदा जायन्ते। इति। तदानुमीयतेऽस्य देहे कोष्ठतोदादिभिर्वातादिप्रकोपोऽभूदित्यस्य वातादिजव्याधिर्भविष्यतीति न चानुमीयते को व्याधिः भविष्यतीति। एष द्वितीयः क्रियाकालः।

यद्यप्यत्र सामान्यतः प्रकोपलिङ्गान्युक्तानि, तथाप्येतानि दोषविशेषतो विभज्य प्रकोपलिङ्गानि विद्यात्। तत्र कोष्ठतोदसञ्चरणाभ्यां वातप्रकोपोऽनुमीयेत। अम्लिकापिपासापरिदाहैः पित्तस्य शोणितस्य च प्रकोपः। अन्नद्वेषहृदयोत्क्लेदाभ्यां श्लेष्मप्रकोप इति। एवं प्रकुपितवातादिदेहः पुमान् यदि तदा तत्प्रतिकारं प्रज्ञापराधान्न करोति तदा यद्व्याधिं जनयिष्यति दोषस्तं देशमभिप्रसरति। तद्यथा यदुक्तं सुश्रुतेन। अत ऊर्द्ध्वं प्रसरं वक्ष्यामः। तेषामेभिरातङ्कहेतुविशेषैः प्रकुपितानां पर्य्युषितक्लिन्नोदकपिष्टसमवाय इवोद्रिक्तानां प्रसरो भवति। तेषां वायुर्गतिमत्त्वात् प्रसरणहेतुः। सत्यप्यचैतन्ये स हि रजोभूयिष्ठो रजश्च प्रवर्त्तकं सर्व्वभावानाम्। यथा महानुदकसञ्चयोऽतिवृद्धः सेतुमवदीर्य्यापरेणोदकेन व्यामिश्रः सर्व्वतः प्रधावति एवं दोषाः कदाचिदेकशो द्विशः समस्ता वा शोणितसहिता वाऽनेकधा प्रसरन्ति। वातः पित्तं श्लेष्मा शोणितं वातपित्ते वातश्लेष्माणौ पित्तश्लेष्माणौ वातशोणिते पित्तशोणिते श्लेष्मशोणिते वातपित्तशोणितानि वातश्लेष्मशोणितानि पित्तश्लेष्मशोणितानि वातपित्तकफाः वातपित्तकफशोणितानीत्येवं पञ्चदशधा प्रसरः। तत्र वायोः पित्तस्थानगतस्य पित्तवत् प्रतिकारः। पित्तस्य कफस्थानगतस्य कफवत्। कफस्य च वातस्थानगतस्य वातवत्। एवं क्रियाविभागः। एवं प्रकुपितानां प्रसरताञ्च वायोर्विमार्गगमनाटोपौ। ऊषाचोषपरिदाहधूमायनानि पित्तस्य। अरोचकाविपाकाङ्गसादाश्छर्दिश्च श्लेष्मणो लिङ्गानि भवन्तीति। तत्र तृतीयः क्रियाकालः। इति।

एतस्मिन् काले विमार्गगमनाटोपाभ्यामनुमीयते प्रकुपितो वायुः प्रसरति वातजो रोगो भविष्यतीति, न तु को रोगो भविष्यति सोऽनुमीयते।

तज्जन्य उन्नीयते। व्याधिपरीक्षायाञ्च सन्देहे जाते यस्य व्याधेर्हेतुसेवा दृश्यते, स परिकल्प्यते, एवमादिहेतुना व्याधिपरीक्षणम्।

पूर्व्वरूपं प्रागुत्पत्तिलक्षणं व्याधेः।

एवमोषचोषादिभिरनुमीयते प्रकुपितपित्तमस्य प्रसरति पित्तजो व्याधिः भविष्यतीति, न तु यो व्याधिर्भविष्यति सोऽनुमीयते। एवमरोचकादिभिरनुमीयतेऽस्य प्रकुपितः श्लेष्मा प्रसरति श्लेष्मजोऽस्य व्याधिर्भविष्यतीति, न तु यो व्याधिर्भविष्यति सोऽनुमीयते तद्व्याधिविशेषलिङ्गाभावात्। अस्मिन् क्रियाकाले प्रज्ञापराधात् प्रतिकारमकुर्व्वतो यो व्याधिर्भविष्यति तद्व्याध्युत्पत्तिस्थानं दोषाः संश्रयन्ति। तदुक्तं सुश्रुतेन—अत ऊर्द्ध्वं स्थानसंश्रयं वक्ष्यामः; एवंप्रकुपिताः प्रसृताश्च दोषास्तांस्तान् शरीरप्रदेशानागत्य तांस्तान् व्याधीन् जनयन्ति। तत्र स्थानविशेषान् कियत उक्त्वा चोवाच। तेषामेवमभिनिविष्टदोषात् प्रादुर्भविष्यतां व्याधीनां पूर्व्वरूपप्रादुर्भावस्तत् प्रतिरोगं वक्ष्याम इति। तत्र पूर्व्वरूपागते चतुर्थः क्रियाकालः। अत ऊर्द्ध्वं व्याधिदर्शनं, तत्र पञ्चमः क्रियाकाल इति। भवति चात्र। सञ्चयञ्च प्रकोपञ्च प्रसरं स्थानसंश्रयम्। व्यक्तिं भेदञ्च यो वेत्ति दोषाणां स भवेद्भिषगिति।

इत्येवं निदानसेवनानन्तरं चयप्रकोपप्रसरानन्तरं स्थानसंश्रये पूर्व्वरूपाणि भवन्तीत्यभिप्रायेण निदानलक्षणानन्तरं पूर्व्वरूपलक्षणमाह—पूर्व्वरूपं प्रागुत्पत्तिलक्षणं व्याधेरिति। व्याधेरुत्पत्तेः पूर्व्वं यल्लक्षणं तत् पूर्व्वरूपं व्याधेः। तच्च प्रतिरोगं वक्ष्यते। सुश्रुते तेषामेवमभिनिविष्टदोषात् प्रादुर्भविष्यतां व्याधीनां पूर्व्वरूपप्रादुर्भाव इत्युक्त्या तथाविधस्थानसंश्रितदोषादेव भवन्ति; भविष्यतो ज्वरस्य पूर्व्वरूपाणि मुखवैरस्यादीनि भवन्ति चरकेणोक्तानि, सुश्रुतेनोक्तानि श्रमोऽरतिर्विवर्णत्वमित्यादीनि। यक्ष्मिणाञ्च घुणतृणकेशपतनानि तत्स्थानसंश्रितदोषादेव भवन्ति तज्जनकाधर्म्माधिष्ठितदोषाणामधिष्ठातुरधर्म्मप्रभावात्। यथा धर्म्माधर्म्माभ्यामधिष्ठितपुरुषस्यानन्विच्छतो लभ्यालभ्यादीनि गजतुरगपुत्र-

निदानानन्तरीयकत्वात् पूर्व्वरूपादीनां निदानानन्तरं पूर्व्वरूपादीन्युच्यन्ते। अतः पूर्व्वरूपलक्षणमाह—पूर्व्वेत्यादि। उत्पत्तेः प्राक् प्रागुत्पत्तिः। एतेन उत्पत्तेः पूर्व्वं यत् भविष्यद्व्याधेर्लक्षणम्, तत् पूर्व्वरूपम्। निदानसेवा तु भाविव्याधिबोधिका भवन्त्यपि निदानशब्दगृहीतत्वादेव तथा लक्षणशब्दानभिधेयत्वाच्च न पूर्व्वरूपशब्देनोच्यते। उक्तं ह्यन्यत्र "स्थानसंश्रयिणः क्रुद्धा भाविव्याधिप्रबोधकम्। लिङ्गं कुर्व्वन्ति यद् दोषाः पूर्व्वरूपं तदुच्यते॥" न च वाच्यम्— यदनुत्पद्यमानस्य व्याधेः कथं लक्षणं भवतीति। यतः मेघादपि

पौत्रमणिरत्नादीनि धर्म्माधर्म्मप्रभावात् स्वयमेवावगम्यन्ते दूरतोऽदूरतश्च इति। एवंव्याख्यानमविद्वांसो दूषयन्ति; लक्षणमिदं—स्थानसंश्रयिणः क्रुद्धा भाविव्याधिप्रबोधकम्। दोषाः कुर्व्वन्ति यल्लिङ्गं पूर्व्वरूपं तदुच्यते॥ इति। यक्ष्मिणां घुणतृणकेशपतनानामदृष्टजन्यत्वेन दोषजन्यत्वाभावान्न तत् पूर्व्वरूपस्य लक्षणमिति। केचित् श्रमादिनश्च—सुश्रुते; श्रमोऽरतिर्विवर्णत्वं वैरस्यं नयनप्लवः। इच्छाद्वेषौ मुहुश्चापि शीतवातातपादिषु। जृम्भाङ्गमर्द्दो गुरुता रोमहर्षोऽरुचिस्तमः। अप्रहर्षश्च शीतञ्च भवत्युत्पतस्यति ज्वरे। सामान्यतो विशेषात् तु जृम्भात्यर्थं समीरणात्। पित्तान्नयनयोर्दाहः कफान्नान्नाभिनन्दनमिति सामान्यविशेषवचनमालोच्य द्विविधं पूर्व्वरूपं व्याचक्षते; सामान्यपूर्व्वरूपं विशिष्टपूर्व्वरूपञ्च। तच्च पूर्व्वरूपमव्यक्तलक्षणं, व्यक्तलक्षणन्तु रूपमिति कृत्वा विप्रतिपद्यन्ते। जृम्भात्यर्थं समीरणादित्यत्यर्थत्वं व्यक्तत्वं ततो जृम्भाया रूपत्वप्रसङ्गः। तत्रान्ये समादधति; प्रभूताव्यक्तपूर्व्वरूपसहचरितत्वेन व्यक्तस्याप्यव्यक्तत्वं छत्रिणो गच्छन्ति माषराशिरित्यादिवत्। तदसाधु, श्रमादीनां सर्व्वेषामेव व्यक्तत्वात्। अन्येषामपि अतिसारादीनां पूर्व्वरूपाणि किमव्यक्तानि? सर्व्वाणि हि व्यक्तानि दृश्यन्ते, तस्मादव्यक्तलक्षणं पूर्व्वरूपमित्यसाधु। परे चात्र यदाहुः—श्रमादीनामिवाव्यक्तव्याधिबोधकत्वाज्जृम्भाया अव्यक्तत्वमित्यप्यसाधु। न हि भविष्यद्व्याधिरव्यक्तः किं नास्तित्वमव्यक्तत्वं? नास्ति हि व्याधिः पूर्व्वरूपे। तच्चेदिष्टमतीतो व्याधिरपि नास्ति, तस्य लक्षणमप्यव्यक्तव्याधिबोधकत्वादव्यक्तं लक्षणं तच्च पूर्व्वरूपं भवतु; तस्मादव्यक्तलक्षणं न पूर्व्वरूपम्। अथाव्यक्तत्वमीषद्व्यक्तत्वमिति चेन्न, ज्वरातिसारादीनां यानि पूर्व्वरूपाणि तानि व्यक्तान्येव नेषद्व्यक्तानि न च येन दोषविशेषेणानधिष्ठित उत्पित्सुर्व्याधिर्लक्ष्यते तत् पूर्व्वरूपम्। एकशो द्विशो वा समस्ता वा दोषा हि सञ्चिताः प्रकुपिताः प्रसृताः तत्तत् स्थानं संश्रिताः पूर्व्वरूपाणि जनयन्ति, तैरुत्पित्सुर्व्याधिर्लक्ष्यते दोष-

भाविनी वृष्टिरनुमीयते, तथा रोहिण्युदयं दृष्ट्वा कृत्तिकोदयोऽनुमीयते। तच्च पूर्व्वरूपं द्विविधं—एकं भाविव्याध्यव्यक्तलिङ्गम्, यदुक्तम्—"अव्यक्तं लक्षणं तस्य पूर्व्वरूपमिति स्मृतम्" इति, तथा "पूर्व्वरूपं, लिङ्गमव्यक्तमल्पत्वाद् व्याधीनां तद्यथायथम्" इति। द्वितीयन्तु—दोषदूष्यसंमूर्च्छनाजन्यमव्यक्तलिङ्गादन्यदेव, यथा—ज्वरे बालप्रद्वेषरोमहर्षादि। न ह्येतत् पूर्व्वरूपं ज्वरावस्थायां नियमेन व्यक्तं भवति, किन्तु ज्वरपूर्व्वकाल एव। यत्र तु व्यक्तं भवति स चासाध्यो मतः। अत एवैवंभूतपूर्व्वरूपाभिप्रायेणैव अरिष्टे वक्ष्यति,—"पूर्व्वरूपाणि सर्व्वाणि

विशेषषेणानधिष्ठित इति विशेषणानर्थक्यम्। दोषविशेषाष्ठितो हि उत्पद्यमानो व्याधिरुत्पन्नश्च व्याधिर्न च स उत्पित्सुः। दोषविशेषेणानधिष्ठित आतङ्को येन लक्ष्यते तत् पूर्व्वरूपमिति वा भवतु व्यर्थमुत्पित्सुरिति विशेषणम्। तस्मात् असाधु चैतत्—तत्प्राग्रूपं येन लक्ष्यते। उत्पित्सुरामयो दोष-विशेषेणानधिष्ठित इति। अत्र यदुच्यते दोषविशेषेण अनधिष्ठित इति दोष-विशेषवातादिजन्यासाधारणवेपथ्वादिना लक्षणेनानधिष्ठित इति, तदप्यसाधु। दोषविशेषवातादिजन्यासाधारणवेपथ्वादिनाधिष्ठितो यो वातादिजातः स खलु नोत्पित्सुर्व्याधिरुत्पन्नो व्याधिर्हि नोत्पित्सुः भवतीति। एवं यदुच्यते विशिष्टपूर्व्वरूपम्—लिङ्गमव्यक्तमल्पत्वाद्व्याधीनां तद् यथायथमिति, तदप्यसाधु, अनार्षत्वादयौक्तिकत्वाच्च। अल्पत्वाद् हि अव्यक्तं लिङ्गमुत्पद्यमानस्यैव व्याधेर्भवति न भविष्यतो व्याधेः। पूर्व्वरूपं व्याधेः इति किं व्याध्युत्पत्तेः पूर्व्वं यद्रूपं तत् पूर्व्वरूपम्? अथ किमुत्पन्नाद्व्याधेः पूर्व्वं यद्रूपं तत् पूर्व्वरूपमिति? तत्रोत्पद्यमानस्य यद्रूपं तन्नोत्पत्तेः पूर्व्वं किन्तु उत्पत्तिसमानकालम्। अथोत्पन्नात् पूर्व्वमिति चेत्? तदा चरकाद्यर्षिवचनविरुद्धं, चरकेणोक्तं हि पूर्व्वरूपं प्रागुत्पत्तिलक्षणं व्याधेरिति न तु प्रागुत्पन्नलक्षणमित्युक्तम्। सुश्रुतेनाप्युक्तमातुरोपक्रमणीयेऽध्याये। यो भविष्यद्व्याधिख्यापकः स पूर्व्वरूपसंज्ञ इति। उत्पद्यमानस्यालपत्वादव्यक्तलक्षणस्य ख्यापकं लिङ्गं न भविष्यद्व्याधिख्यापकमिति। पराशरेणाप्युक्तं—पूर्व्वरूपं नाम तत् येन भावी व्याधिविशेषो लक्ष्यते, न तु दोषविशेष इति। अत्र कश्चिद्विप्रतिपद्यते। ननु दोषविशेष इति वचनानर्थक्यम्; सुश्रुते ह्युक्तं—सामान्यतो विशेषात् तु जृम्भात्यर्थं समीरणात्। पित्तात् नयनयोर्दाहः कफान्नान्नाभिनन्दनमिति, सत्यमेतत्। पराशरेण यदुक्तं येन भाविव्याधिविशेषो लक्ष्यत इत्येतन्मात्रेणैव वचनेन सिध्यति भाव्येव व्याधिविशेषो ज्वरादिर्लक्ष्यते इति भाविपदेन भविष्यद्वर्त्तमानोभयव्याधि-

ज्वरोक्तान्यतिमात्रया। यं विशन्ति विशत्येनं मृत्युर्ज्वरपुरःसरः॥" इति। तथा "अन्यस्यापि च रोगस्य पूर्व्वरूपाणि यं नरम्। विशन्त्यनेन कल्पेन तस्यापि मरणं ध्रुवम्॥" इति। एतद्धि अव्यक्तलक्षणपूर्व्वरूपाभिप्रायेण। वचनं हि—तदा सर्व्वज्वराणामसाध्यत्वं स्यात्, यदा पूर्व्वरूपावस्थायामव्यक्तानि लक्षणानि ज्वरे जाते व्यक्तानि सर्व्वाणि सर्व्वत्रैव भवन्ति। तस्मात् पूर्व्वरूपावस्थाप्रतिनियतपूर्व्वरूपाभिप्रायेणैवैतद् वचनम्। अव्यक्तता च लक्षणानामियमेव, यदल्पत्वेन स्फुटत्वम्। यत् तु पूर्व्वरूपं दोषदूष्यसंमूर्च्छनावस्थानियतम्, तद् व्याधिमात्रस्य

बोधकानां निदानोपशयादीनां व्यावृत्तेः, व्याधिविशेष इतिपदेन चय-प्रकोपप्रसरलक्षणानां व्यावृत्तेश्च। व्याधिपदेन भावी दोषाणां सामान्य-भूतान्त्यभूतोभयविशेषो व्यावृत्तो प्रसज्यते। अत्रान्त्यविशेषव्यावृत्त्यर्थमुक्तं न तु दोषविशेष इति। येन भावी दोषाणामन्त्यविशेषो न लक्ष्यते भावी व्याधि-विशेषो लक्ष्यते तत् पूर्व्वरूपमित्यर्थः। सामान्यं द्विधा विशेषश्च द्विधा, सर्व्व-सामान्यं यथा सत्ता, विशेषसामान्यं यथा द्रव्यत्वं गुणत्वं कर्म्मत्वञ्च। सत्तापेक्ष-विशेषश्च। तत्त्वमन्त्यविशेषः। तथैव वातादेरेकैकदोषोऽन्त्यविशेषः। यच्च सुश्रुतेनोक्तं—सामान्यतो विशेषात् त्विति, तत् सर्व्वसामान्यानि श्रमादीनि पूर्व्वरूपाणि ज्वरस्य ततो विशेषात् तु सामान्यभूतविशेषा श्रमादिषु या जृम्भा सा चेदत्यर्थं तदा समीरणादिति केवलवाताद्वाताधिकवातपित्ताद्वा अधिकवात-कफाद्वाताधिकसन्निपाताच्च। एवम् इच्छा द्वेषो मुहुश्चापि शीतवातातपादिषु इत्यनेन यो दाह उक्तः स चेन्नयनयोरत्यर्थं स्यात् तदा स पित्तात्, केवल-पित्तात् पित्ताधिकवातपित्तात् पित्ताधिककफपित्तात् पित्ताधिकसन्निपाताच्च भवति। तथा श्रमादिषु याऽरुचिरुक्ता सा चेदत्यर्थं भवति तदा कफात् केवलकफात् कफाधिकवातकफात् कफाधिकपित्तकफात् कफाधिकसन्नि-पाताच्चेति सामान्यभूतविशेषादन्त्यभूतविशेषाच्च। ततोऽन्त्यभूतो भावी दोषविशेषो न लक्ष्यते इति। द्विविधं सामान्यं सर्व्वसामान्यं तदपेक्षविशेष-सामान्यमिति। विशेष-सामान्यपूर्व्वरूपमत्यर्थजृम्भादिकं न त्वन्त्यविशेष-पूर्व्वरूपमिति न पराशरवचनविरोधः। सुश्रुतेनापि ज्वरचिकित्सिते ज्वरपूर्व्व-रूपचिकित्सोक्ता। ज्वरस्य पूर्व्वरूपेषु वर्त्तमानेषु बुद्धिमान्। पाययेत घृतं स्वच्छं ततः स लभते सुखम्। विधिर्मारुतजेष्वेष पैत्तिकेषु विरेचनम्। मृदु प्रच्छर्दनं तद्वत् कफजेषु विधीयते। सर्व्वं त्रिदोषजेषूक्तं यथादोषं विकल्पयेत्। अस्नेहनीयोऽशोध्यश्च संयोज्यो लङ्घनादिना। रूपप्राग्रूपयोर्विद्यान्नानात्वं वह्निधूमवत्। इति। अत्र मारुतजेषु पैत्तिकेष कफजेष्विति बहुवचनात् वातज-

गमकम्, न तद्दोषविशेषगमकम्। एतत् पूर्व्वरूपाभिप्रायेण च वाग्भटेऽप्युक्तम्; यथा—"प्राग्रूपं येन लक्ष्यते। उत्पित्सुरामयो दोषविशेषेणानधिष्ठितः" इति। यत् तु अव्यक्तलिङ्गं पूर्व्वरूपम्, तद्दोषदूष्यविशेषमपि व्याधेर्गमयति, यदुक्तं हारीते—"इति पूर्व्वरूपमष्टानां ज्वराणां सामान्यतो, विशेषतस्तु जृम्भाङ्गमर्दभूयिष्ठं हृदयोद्वेगि वातजम्" इत्यादि। तथा सुश्रुते-ऽप्युक्तम्—"सामान्यतो विशेषात् तु जृम्भात्यर्थं समीरणात्। पित्तान्नयनयोर्दाहः कफान्नान्नाभि-

वाताधिकवातपित्तजादिष्वित्युक्तम्। तत्र पूर्व्वरूपेषु वर्त्तमानेषु न त्वतीतेषु। स्वच्छघृतपानादिभिर्ज्वरकारिदोषनाशात् दोषजश्रमादिनाशः स्यात् तेन च दूष्यसंयोगोऽपि न दोषेण भवतीत्यतो न ज्वरो भविष्यतीति। भविष्यज्ज्वरस्यापीयं पूर्व्वरूपचिकित्सया चिकित्सा भवति, इत्यभिप्रायेण कतिधापुरुषीयेऽप्युक्तम्। पूर्व्वरूपं विकाराणां दृष्ट्वा प्रादुर्भविष्यताम्। या क्रिया क्रियते सा च वेदनां हन्त्यनागताम्॥ इति द्विधैव सामान्यपूर्व्वरूपमिति।

अथ दूष्यसंयोगे दोषाणां यथा यथा व्याधिर्जायते तत् सर्व्वं प्रतिरोगं सम्प्राप्तौ वक्ष्यते। तत्र दोषाणामल्पत्वात् तत्तद्व्याध्यारम्भसमाप्तिपर्य्यन्तं यद् यल्लक्षणं तत् सर्व्वमव्यक्तं स्वल्परूपत्वात्। यथा गर्भे बालकस्य लक्षणमिति। लिङ्गमव्यक्तमल्पत्वाद् व्याधीनां तद् यथायथमिति विशिष्टप्राग्रूपम्। तदेव व्यक्ततां यातं रूपमित्यभिधीयते। यत उक्तं चरकेण क्षतक्षीणे। अव्यक्तं लक्षणं तस्य पूर्व्वरूपमिति स्मृतमिति चेत्? नैवं, ज्वरादीनां सामान्यजानां व्याधीनां स्वस्वलक्षणातिरिक्तमस्ति पूर्व्वरूपं क्षतक्षीणस्य तु खल्वेकविधस्य प्रभेदहीनत्वात् नास्ति स्वलक्षणातिरिक्तं पूर्व्वरूपं, तेन लक्षणातिदेशेन संक्षेपोक्त्यर्थमुक्तम्। अव्यक्तं लक्षणं तस्य पूर्व्वरूपमिति स्मृतमिति, यदेव क्षतक्षीणस्योत्पन्नस्य लक्षणं तदेव दोषदूष्यसंयोगात् पूर्व्वमपि चाव्यक्तरूपेण भवति तदस्य पूर्व्वरूपं न तु दोषदूष्यसंमूर्च्छनावस्थायामव्यक्तं यत् तत् पूर्व्वरूपम् उत्पत्तेः समकालिकत्वेन पूर्व्वत्वाभावादिति, तस्मात् तत्प्रमाणतो दोषदूष्यसंमूर्च्छनावस्थातः पूर्व्वमन्येषां व्याधीनां ज्वरादीनां श्रमादिवदव्यक्तस्वलक्षणातिरिक्तलक्षणं नास्ति च ज्वरादीनां क्षतक्षीणस्य दोषदूष्यसंमूर्च्छनावस्थातः पूर्व्वमव्यक्तलक्षणात् अव्यक्तस्वलक्षणं स्वस्वलक्षणातिरिक्तश्रमादिपूर्व्वरूपाणामुक्तत्वादिति। तस्मादनार्षमयौक्तिकञ्च तद् यदुक्तं लिङ्गमव्यक्तमल्पत्वाद्व्याधीनां तद् यथायथमिति प्राग्रूपम्। तत् तु सम्प्राप्त्यवस्थाजातं लक्षणं गर्भस्थबालस्याकृतिवत्।

नन्दनम्॥" इति। एतद्धि पूर्व्वरूपं भाविज्वरलिङ्गमेवाव्यक्तमल्पत्वेन ज्ञेयम्। व्यक्ते हि ज्वरे वातादिजे जृम्भादयः पूर्व्वरूपापेक्षया अत्यर्थं भवन्ति। एवं पूर्व्वरूपद्वैविध्ये यत्र विशिष्टं पूर्व्वरूपमस्ति, तत्र साक्षादेवाभिधीयते, यत्र विशिष्टन्तु नास्ति, तत्र लिङ्गमात्रं वक्ष्यति; तेन अव्यक्तान्येव लिङ्गानि पूर्व्वरूपमिति तत्र ज्ञातव्यम्।

**प्रादुर्भूतलक्षणं पुनर्लिङ्गमाकृतिर्लक्षणं चिह्नं संस्थानं व्यञ्जनं रूपमित्यनर्थान्तरमित्यस्मिन्नर्थे।**

अथ तर्हि किं तद् व्यक्तं लिङ्गं व्याधे रूपं नेत्याह—प्रादुर्भूतेत्यादि। प्रादुर्भूतलक्षणं पुनर्लिङ्गमिति। प्रादुर्भूतस्योत्पन्नस्य व्याधेः यल्लक्षणं तद्व्याधेर्लिङ्गं न तु भविष्यतो भवतो वा व्याधेरिति। प्रादुर्भूतपदस्थभूतार्थनिष्ठाप्रत्ययेन भाविभवद्व्याधेर्लक्षणनिदानोपशयसम्प्राप्तीनां व्यावृत्तिः कृता। उत्पन्नस्य च व्याधेर्लिङ्गं न सर्व्वं व्यक्तं भवति किञ्चित् तु व्यक्तं किञ्चिच्चाव्यक्तम्। यथा जातस्य बालकस्य पाणिपादादिकं सर्व्वमङ्गं व्यक्तं श्मश्रुदन्तलोमविशेषशुक्रादिकमव्यक्तं बालायाः स्तनार्त्तवादिकमिति। उक्तश्च श्वासाधिकारे—स साध्य उक्तो बलिनः सर्व्वे चाव्यक्तलक्षणा इति। अत्राव्यक्तलक्षणा जायमाना एव जातानां व्यक्ताव्यक्तलक्षणत्वात्। तस्मात् तदेव व्यक्ततां यातं रूपमित्यभिधीयते इति यदुक्तं तदसाधु। व्याधेः स्वरूपं यल्लक्षणं तदपि लिङ्गं, यथा षडङ्गः पुरुषस्तस्यैकैकमङ्गं लिङ्गं, तथा सन्तापलक्षणो ज्वरः, मांसाङ्कुरलक्षणमर्शः, ग्रन्थिविशेषरूपो गुल्मः, न चात्माश्रयदोषः। सूक्ष्मशरीरी हि पुरुषो यथा देवनरतिर्य्यग्योनिषु जायमानः षडङ्गलक्षणो जायते तत्षडङ्गेनानुमीयतेऽयं देवोऽयं मनुष्योऽयं पशुरिति; एवमेव मृत्युकन्यारोदनात् यावन्तोऽश्रुबिन्दवोऽपतन् प्राक्काले तावन्त एव रोगाख्या अभवन् तेषामेकैक एव बिन्दुरेकैकव्याधिरभूत्—कश्चित् ज्वरः कश्चिद्रक्तपित्ताख्यः कश्चित् यक्ष्मेत्येवमादिः, तेषां ज्वरो दक्षाध्वरध्वंसे जातस्य वीरभद्रस्यैकस्य शिवाज्ञया तिस्रो मूर्त्तयः स्वरूपरूपेण प्रथमगणपतिर्वीरभद्र एव द्वितीया मूर्त्तिः भूमिसम्भवा मङ्गलग्रहात्मिका तृतीया मूर्त्तिः लोके ज्वरः। स प्राणिनां जन्म-

लक्षणमाह—प्रादुर्भूतेत्यादि। उत्पन्नव्याधेः स्वरूपं तथा वाताद्यामपक्वादिविशेषणविशिष्टं व्याधिं निदानोपशयसंप्राप्तिव्यतिरिक्तं यद् बोधयति तल्लिङ्गम्। अनेन च व्याधिप्रतिनियतं लिङ्गम्, यथा ज्वरस्य सन्तापः, तथा अतिसरणमतीसारस्येत्यादि गृह्यते। तथा वातादिकृतञ्च वातादिज्वरस्य विषमारम्भविसर्गित्वादि गृह्यते। तथा आमपक्वजीर्णज्वरलक्षणादीनि विशिष्टव्याधिबोधकानि गृह्यन्ते। तथा उपद्रवाश्चासाध्यताद्यवस्थापन्नव्याधिबोधकत्वेन लक्षणान्येव। रिष्टन्तु मरणस्य पूर्व्वरूपमेव। निदानादयस्तु यद्यपि उत्पन्नव्याधिगमका अपि भवन्ति, तथापि पृथग्लक्षणनिर्द्देशात्त ते इह लिङ्गशब्देनोच्यन्ते। व्यवहारार्थं तथा लक्षणार्थञ्च पर्य्यायानाह—तत्र लिङ्गमित्यादि। अस्मिन्नर्थेऽनर्थान्तरमिति लिङ्गलक्षणे-

मात्रे महामोहरूपः मरणकाले तमोरूपः मध्ये सन्तापलक्षणः। इति स्वरूपलक्षणमपि लिङ्गं न चात्माश्रयो दोषः। एवं प्राग्भूतरक्तपित्तादयोऽपि लोकेऽपचारादिना जायमाना यथास्वलक्षणा जायन्ते। तेषाञ्चापरे व्याधयो ये लिङ्गानि ते तद्व्याधिबोधने तु न व्याधयः पृथग्भूता यदा तदा पृथगेव व्याधयः। वक्ष्यतेऽत्रैव। ज्ञानार्थं यानि चोक्तानि व्याधिलिङ्गानि संग्रहे। व्याधयस्ते तदात्वे हि लिङ्गानीष्टानि नामयाः। इति। प्रमादिनः केचिदाहुः। पूर्व्वरूपाणि सर्व्वाणि ज्वरोक्तान्यतिमात्रया। यं विशन्ति विशत्येनं मृत्युर्ज्वरपुरःसर.। अन्यस्यापि च रोगस्य पूर्व्वरूपाणि यं नरम्। विशन्त्यनेन कल्पेन तस्यापि मरणं ध्रुवम्, इत्यनेन चरकवचनेन पूर्व्वरूपानुवृत्तिरुत्पन्ने च व्याधौ भवतीति तदसाधु। तत्पूर्व्वरूपाणि हि सर्व्वाणि यस्य स्युस्तस्य मरणं स्यादुत्पन्ने व्याधौ यं विशन्तीत्येवमुक्तिर्न कृता, कथं तथा व्याचक्षते इति। उपद्रवास्तु नोत्पन्नव्याधिलक्षणानि। किन्तूत्पन्नव्याध्यारम्भकदोषप्रकोपाज्जातोऽन्यो व्याधिः। सुश्रुतेनोक्तं—यः पूर्व्वोत्पन्नं व्याधिं जघन्यजातव्याधिरुपसृजति स तन्मूल उपद्रवसंज्ञ इति। अत्र स तन्मूल इति तन्मूलं मूलं यस्येति तन्मूलः। तद्व्याधेर्यन्मूलमारम्भको दोषः अपचारादिना भूयः प्रकुपितः स दोषस्तस्य मूलं तं व्याधिं जनयतीत्याहुरेके। तत्रापरे चाहुः। अत्र जिज्ञास्यं, यो दोषो दूष्यसंयोगेन विक्रियमाणो यद्व्याधिरूपेण जायते, स किं कार्त्स्न्येनैकदेशेन वा? यदि कार्त्स्न्येन मृदादिर्यथा घटादिरूपेण जायते तथा दोषो व्याधिरूपेण जायते, तदा तद्व्याध्यारम्भकदोषः पृथङ् न वर्त्तते, कः पुनरपचारादिना प्रकुपित उपद्रवं कुर्य्यात्? अथ चेदेकदेश उपद्रवं करोत्येकदेशो व्याधिरूपेण जायत इति तर्हि स एकदेशो न व्याधेर्मूलं, कथं तन्मूलं मूलं यस्येति सिध्यति? तस्मात् स पूर्व्वोत्पन्नो व्याधिर्मूलं यस्य स तन्मूल इति। यत्कारणेन

ऽर्थेऽभिधेयेऽनर्थान्तरम्। प्रकरणान्तरे तु अर्थान्तरेऽपि लिङ्गादयो भवन्ति, यथा—"बली लिङ्गं समर्पयेत्" इत्यत्र शेफ उच्यते। तथा "संस्थानमाकृतिर्ज्ञेया सुषमा विषमा च या" तथा "लक्षणवच्चोदाहरणवच्च" तथा "तैलसर्पिर्भ्यां व्यञ्जनमुपकल्पयेत्," तथा 'रूपस्य सत्त्वस्य च सन्ततिर्या' इत्यादौ। ननु यथेह "अस्मिन्नर्थे" इत्युक्तम्, तथा हेतुव्याधिसम्प्राप्तिपर्य्यायाभिधानेऽपि "अस्मिन्नर्थे" इति वक्तव्यम् ननु हेतुपर्य्यायाभिधाने तावत् "इह खलु" इत्यनेनैव तदर्थं उक्त एव। सम्प्राप्तिपर्य्यायकथने च "व्याधेः" इति पदेन 'अस्मिन्नर्थे' इतिपदस्यार्थं उक्त एव, गदपर्य्याये तु नार्थान्तरता प्रायो दृश्यते; तेन तत्र 'अस्मिन्नर्थे' इति न कृतम्; अयञ्च आचार्य्याभिप्रायः—यद्—यत्रान्यार्थतां शब्दस्य पश्यति, तत्रैव 'अस्मिन्नर्थे' इति करोति। तथा

कुपितो दोषो व्याधिरूपेण जायते तत्कारणेन सेव्यमानेन पुनः स व्याधिः लब्धबलो ह्युपद्रवं करोति। ततो वा तन्मूलं मूलं यस्येति स तन्मूल इति। यथातथा तन्मूलो भवतु व्याधिकृत एवोपद्रवो न व्याधिलक्षणम्। वह्निकार्य्य-धूमो वह्निलिङ्गं तद्वत् पूर्व्वोत्पन्नव्याधिकृतो व्याधिर्न कथं लिङ्गं भवति लक्षणत्वाभावान्न पूर्व्वोत्पन्नव्याधेर्लिङ्गं तद्व्याधिकृतो व्याधिः। लक्षणं तत् तस्य भवति, व्यक्ताव्यक्तयद्रूपापन्नः सन् य उत्पन्नो भवति तत्त-द्व्यक्ताव्यक्तरूपं तस्य लक्षणं तत्तद्व्याधेर्लिङ्गमिति। न हि पितुः पुत्रो लक्षणं न वा धूमो वह्नेरिति। किन्तु कार्य्यं कार्य्येण लिङ्गेनानुमीयते, यथा वह्निः तथोपद्रवेणानुमीयते व्याधिर्बलवान् कष्टसाध्योऽसाध्यो वा, न चानुमीयते वाताद्यात्मक इति। कष्टसाध्यत्वादौ व्याधेर्लिङ्गं न तु व्याधेर्लक्षणं लिङ्गमिति। व्याधिस्तु यथा स्वाधिकारे वक्ष्यमाणसन्तापादिलक्षणः स्वरूपतो ज्वरादिर्यथा गलकम्बलादिलक्षणः स्वरूपतो गवादिः स शुक्लोऽब्बहुलस्तेजोबहुलो लोहितः श्यावो वायुबहुल इति। एवमेव ससन्तापादिलक्षणो ज्वरादिर्वेपथ्वादिलक्षणो वातात्मकः तीक्ष्णवेगादिलक्षणः पित्तात्मकः स्तैमित्यादिलक्षणः कफात्मक इति। समुदायात्मको व्याधिः प्रत्येकं तस्य लक्षणम्। समुदायात् पृथक् समुदायी। यथा खदिरवणं देवदारुवणमित्येवमादयः। तत्रापि वनाधिष्ठाता कश्चिद् भावो वनं तस्य लक्षणं प्रत्येकं वृक्षः। यथा च कालः षड्तुकः षडङ्गस्तत्राधिष्ठाता कलनलक्षणः कश्चिद् भावस्तस्य लक्षणं शीतोष्णवर्षं तत्तल्लक्षणा ऋतवः षट् च लक्षणानि। यथा च पर्व्वतस्तत्राधिष्ठितः कश्चिद् भावस्तस्य लक्षणं प्रस्तर-तरुलतादिकम्। एवं मांसाङ्कुरादिकमर्शोव्याधिः स्वरूपतो भवत्यस्य लक्षणं कृष्णत्वङ्नखादिकं तत्समुदायात्मकमर्श इति।

अथैतच्छास्त्रे व्यवहारार्थं लिङ्गस्य पर्य्यायानाह—आकृतिरित्यादि। अनर्थान्तरमिति। योऽर्थो लिङ्गशब्दस्य स एवार्थ आकृतिशब्दस्य स चार्थो लक्षणशब्दस्य स एवार्थश्चिह्नशब्दस्य संस्थानशब्दस्य स एवार्थः सोऽर्थश्च व्यञ्जनशब्दस्य रूपशब्दस्य च स एवार्थ इत्येकोऽर्थो लिङ्गादिशब्दानां न त्वर्थान्तरमिति। कथमिति चेत्?

"समवेतानां पुनर्दोषाणामंशांशविकल्पो विकल्पोऽस्मिन्नर्थे इति। 'विकल्प'शब्दो ह्यन्यत्रापि वर्त्तते, यथा—"अन्यैश्च विकल्पैर्विकल्पितानाम्," तथा "विकल्पो न त्वसाध्यानाम्" इत्यादि। ननु पूर्व्वरूपोपशययोः किमिति पर्य्यायानभिधानम्? ब्रूमः, पूर्व्वरूपस्य तावत् पर्य्यायाभि-धानम्,—यदेव रूपस्य तदेव; ततः रूपादय एव हि 'पूर्व्व' शब्दयुक्ताः पूर्व्वरूपपर्य्यायाः।

उपशयः पुनर्हेतुव्याधिविपरीतानां विपरीतार्थकारिणाञ्च औषधाहारविहाराणामुपयोगः सुखानुबन्धः।

लिङ्ग्यते प्रादुर्भूतो भावः स्वरूपतो ज्ञायतेऽनेनेति लिङ्गं न त्वस्वरूपतो येन तदिह लिङ्गं, एवम् आक्रियते ज्ञायतेऽनेनेत्याकृतिः, लक्ष्यते ज्ञायतेऽनेनेति लक्षणं, चिह्न्यते ज्ञायतेऽनेनेति चिह्नं, संस्थीयते ज्ञायतेऽनेनेति संस्थानं, व्यज्यते ज्ञायतेऽनेनेति व्यञ्जनं, रूप्यते ज्ञायतेऽनेनेति रूपम् इति। लक्ष्यतेऽनेनेति सामान्यतो ज्ञानकरणेऽपि लक्षणशब्दो वर्त्तते इति ज्ञापनार्थं लक्षणे लक्षणशब्दोपादानं कृतम्। यो यथारूपो ज्ञायते येन तस्य तल्लक्षणमिति तस्याप्येकार्थमाकृत्यादिकमिति द्व्यर्थकत्वख्यापनार्थं लक्षणशब्दः पुनर्लिङ्गपर्य्याये गृहीतः। व्याधेर्ज्ञानं त्रिविधं कस्यचित् प्रश्नेन कस्यचित् प्रत्यक्षेण कस्यचिदनुमानेन। अरोचकादौ मुखरसो ज्ञायते पृष्टेनोक्तप्रतिवचनात्। तदुपदेशेऽन्तर्भूतम्। दाहादौ स्पर्शनेन्द्रियादिना प्रत्यक्षम्। ज्वरादिज्ञानं सन्तापादिना लिङ्गेनानुमानमित्येवं त्रिविधज्ञानकरणं लिङ्गमिति। तत्रादौ स्वरूपलक्षणेन स्वरूपतो व्याधिं ज्ञात्वा वातादिलिङ्गेन वातजत्वादिकं जानाति ततः स्वरूपतो ज्ञातस्य वातादिलक्षणं न व्यभिचारि भवति। यस्य हि सन्तापलक्षणो ज्वरो जातो ज्ञातस्तस्य वेपथ्वादीनि लिङ्गानि तं ज्वरं वातजमेव ज्ञापयन्ति न त्वन्यं व्याधिं सन्तापलक्षणत्वाभावात्; एवं सर्व्व एव व्याधिः स्वरूपेण ज्ञातः प्रभेदलिङ्गेन च ज्ञायते नान्यो विज्ञायते स्वरूपलिङ्गाभावादिति। तस्मादिदं वक्ष्यमाणं न विरुद्धं भवति। लिङ्गमेकमनेकस्य तथैकस्यैकमुच्यते। बहून्येकस्य च व्याधेर्बहूनां स्युर्बहूनि च।

अथोद्देशक्रमेणोपशयमाह—उपशयः पुनरित्यादि। हेतुव्याधिविपरीतानामिति। हेतुश्च व्याधिश्चेत्यन्वाचये द्वन्द्वः। हेतुस्त्रिविध उक्तः—असात्म्येन्द्रियार्थसंयोग-प्रज्ञापराध-परिणामभेदात्। न तु ज्वरादीनां दोषा दूष्याश्च। ते तूपदेशे तेषामुपदेशाभावात्। व्याधिश्च प्रागिहैवोक्तः। अतस्त्रिविधा व्याधयः प्रादुर्भवन्ति। आग्नेयाः सौम्या वायव्याश्च; द्विविधाश्चापरे राजसास्तामसाश्चेति। तथा

भवन्ति। उपशयस्तु चिकित्सा, तस्यास्तु पर्य्यायाश्चिकित्सित एव स्वाधिकारत्वेन वक्तव्याः इति नेह पुनरुक्ताः।

उपशयमाह—उपशय इत्यादि। उपशमनमुपशयः सुखानुबन्ध इत्यर्थः। हेतुना, तथा व्याधिना, तथा हेतुव्याधिभ्याञ्च विपरीता हेतुव्याधिविपरीताः, तेषामौषधाहार-

रोगस्य निदानार्थकरो रोगश्चेत्युक्तं, तत् कुतो हेतुराभ्यन्तरो दोषदूष्यात्मकोऽभिधीयते ? तस्मादाग्नेयाः पित्तवैषम्यं तद्वैषम्यनिमित्ताश्च ज्वरादयः। सौम्याः श्लेष्मवैषम्यं तद्वैषम्यनिमित्ताश्च ज्वरादयः। वायव्या वायुवैषम्यं तद्वैषम्याश्च ज्वरादयः। एषु द्वन्द्वसन्निपातजा अन्तर्भवन्ति। राजसा रजोगुणवैषम्यं तद्वैषम्यनिमित्ताः कामादयश्च। तामसास्तमोगुणवैषम्यं तद्वैषम्यनिमित्ता मोहादयश्च। एषु प्रज्ञापराधजा आगन्तवो ज्वरादयश्चान्तर्भवन्ति। विपरीतानामिति। यद्गुणक्रियो हेतुस्तद्गुणक्रियाविपरीतगुणक्रियावताम् औषधान्नविहाराणाम्। यद्गुणक्रियो व्याधिस्तद्गुणक्रियाविपरीतगुणक्रियावताश्चौषधान्नविहाराणाम्। यद्गुणक्रियौ हेतुव्याधी चोभौ तदुभयस्य च तद्गुणक्रियाविपरीतगुणक्रियावतामौषधान्नविहाराणाम्। विपरीतार्थकारिणामिति औषधान्नविहाराणामित्यस्य विशेषणम्। तेनान्वाचये द्वन्द्वात्। यदौषधं यच्चान्नं वा यो विहारो वा यदौषधान्नं ये चौषधान्नविहारा वा हेतुविपरीता न भवन्ति व्याधिविपरीता वा न भवन्ति हेतुव्याध्योरुभयोर्वा विपरीता न भवन्ति भवति च हेतुविपरीतमौषधं वान्नं वा विहारो वा यमर्थं तद्व्याधिप्रशमनं करोति तदर्थकारिणः स्वप्रभावेण तेषाश्चौषधान्नविहाराणाम् औषधस्य वान्नस्य वा विहारस्य वा द्वन्द्वस्य समुदायस्य वा सुखानुबन्धः उपयोग उत्तरकालं सुखं बध्नाति य उपयोगः स उपशयः। अनुशब्देन आपाततः सुखकरं यन्नोत्तरकालं सुखं बध्नाति तदुपयोगो नोपशयः। यथा सदाहपिपासस्य नवज्वरिणः तत्कालसुखकरं सुशीतलजलपानं नोत्तरकालं सुखकरं तन्नोपशयः। सुखमत्र सुखसंज्ञकमात्मगुणविशेषः दुःखनिवृत्तिः। यदा यथा दुःखं भवति तदा तद्दुःखनिवृत्तिः। निःशेषा दुःखनिवृत्तिस्तु मुक्तिः। औषधमुक्तं चतुष्पादं षोड़शकलं युक्तियुक्तं भेषजमिति। तेषु चतुर्षु पादेषु द्रव्यपाद इहौषधं तत्र देशकालयोरप्यन्तर्भावः। तत्र देशा जाङ्गलानूपसाधारणभेदाः। तत्र शीतदेशे जातस्य व्याधेरुष्णदेशेऽवस्थानम् उष्णदेशे जातस्य शीतलदेशेऽवस्थानमित्येवमुपयोगः। एवं कालस्यापि, यत्-

विहाराणाम्। तथा हेतुव्याधिविपरीतार्थकारिणाञ्चौषधान्नविहाराणाम्। सुखानुबन्ध इति सुखरूपोऽनुबन्धः। अनुबन्धश्च सुखकराणामित्यर्थः। अयञ्चोपशयो गूढ़लिङ्गे च व्याधौ ज्ञानोपायो भवति। यदुक्तम्—"गूढ़लिङ्गं व्याधिमुपशयानुशयाभ्यां परीक्षेत"। वक्ष्यति च गुल्मे—"स्नेहोष्णमर्द्दनाभ्याञ्च प्रणश्येत् स च वातिकः"। तत्र विपरीतार्थकारि तदेवोच्यते, यदविपरीततया आपाततः प्रतीयमानं विपरीतस्यार्थं प्रशमलक्षणं करोति। अत्रोदाहरणानि

काले जातो यो व्याधिस्तत्कालविपरीतगुणकालोपयोगः। वक्ष्यते च शीतेनोष्णकृतान् रोगान् शमयन्ति भिषग्विदः। ये च शीतकृता रोगास्तेषामुष्णं भिषग्जितम्॥ श्रमजे श्रमहरं द्राक्षादिदशकम्। श्रमजायामनिलवृद्धौ श्रमजे ज्वरे वा रसौदनः। इत्यन्नम्। स्निग्धदिवानिद्राजायां कफवृद्धौ तज्जेच ज्वरे रात्रिजागरणं रुक्षं दिवानिद्राविपरीतम्। इति विहारः। इत्युक्ता हेतुविपरीता औषधान्नविहाराः। व्याधिविपरीतमौषधं यथा—रौक्ष्यगुणतो वातवृद्धौ स्निग्धं भद्रदार्व्वादिकम्। अतीसारे स्तम्भनं पाठादि। विषे शिरीषः। कुष्ठे खदिरः। प्रमेहे हरिद्रा। तृष्णाघ्नादिकं दशकं दशकम्। व्याधिविपरीतमन्नं यथा। रौक्ष्यगुणतो वायुवृद्धौ स्निग्धं घृतादिकम्। अतीसारे स्तम्भनं मसूरयूषादि। व्याधिविपरीतविहारस्तु रौक्ष्यगुणतो वातवृद्धौ दिवानिद्रा। उदावर्त्ते प्रवाहणम्। उभयविपरीतमौषधं यथा—शीतगुणतो वृद्धवातशोथे दशमूलमुष्णं शीतहेतुविपरीतं वातशोथविपरीतञ्च। उभयविपरीतमन्नं यथा—शीतनिमित्तवृद्धवातजे ज्वरे यवागूरुष्णा ज्वरघ्नी च। ज्वरघ्नी ज्वरसात्म्यत्वादित्युक्तम्। उभयविपरीतो विहारो यथा—स्निग्धदिवास्वप्नजायां कफवृद्धौ तज्जायां तन्द्रायाञ्च तदुभयविपरीतं रात्रिजागरणम्। अथ हेतुविपरीतार्थकारि औषधं यथा—कटुरसातियोगजनिते शुक्रक्षये वृष्यं पिप्पलीशुण्ठ्यादिकं, पित्तप्रधाने पच्यमानव्रणशोथे पित्तकर उष्ण उपलेपश्च। हेतुविपरीतार्थकार्य्यन्नं यथा—रुक्षाहारातियोगजे शुक्रक्षये रुक्षः पुराणगोधूमो वृष्यः, पित्तप्रधाने पच्यमानव्रणशोथे चान्नं विदाहि द्रव्यम्। उभयविपरीतार्थकारी विहारो यथा—भयजायां वातवृद्धौ भयजे च ज्वरे कामः। कामजे वा ज्वरे शोकः क्रोधश्च। भयजे वातोन्मादे त्रासनम्। अथ व्याधिविपरीतार्थकारि चौषधं यथा—वातजे वृद्धिसंज्ञरोगे शुण्ठ्यादिकं यावच्चौषधं तन्त्रेषु प्रोक्तं, छर्द्यां वमनकरं मदनफलादिकम्। व्याधिविपरीतार्थकारि चान्नं यथा—कफवृद्धिजे प्रमेहे पुराणा मधुयवगोधूमाः, वातातीसारे रेचनार्थं क्षीरम्। व्याधिविपरीतार्थकारी विहारस्तु—सस्नेहपित्तवृद्धिजाते स्निग्धे दिवास्वप्नः, छर्द्यां वमनार्थं प्रवाहणञ्च।

क्लिश्यन्ते—हेतुविपरीतमौषधं, यथा—शीतकफज्वरे शुण्ठ्याद्युष्णं भेषजम्। हेतुविपरीतमन्नं, यथा—श्रमानिलजे ज्वरे रसौदनः। हेतुविपरीतो विहारः, यथा—दिवास्वप्नोत्थकफे रात्रौ जागरणम्। व्याधिविपरीतमौषधं, यथा—अतिसारे स्तम्भनं पाठादि। व्याधिविपरीतमन्नं, यथा—अतीसारे स्तम्भनं मसूरादि। व्याधिविपरीतो विहारः, यथा—उदावर्त्ते प्रवाहणम्।

अथोभयविपरीतार्थकारि चौषधं यथा। कट्वम्लोष्णाहारात् पित्तवृद्धौ अम्लमामलकं पित्तहरम्। जाङ्गमविषे मौलविषं मौले जाङ्गमम्। अग्निप्लुष्टे चोष्णोऽगुर्वादिलेपः। उभयविपरीतार्थकारि चान्नं यथा—तीक्ष्ण-रुक्षाहारजाते पित्तरोगे मन्दं स्निग्धं घृतम्। मद्यपानोत्थे मदात्यये मदकारणं मद्यञ्च। उभयविपरीतार्थकारी विहारस्तु—व्यायामातियोगजे वृद्धे वाते सम्यग्व्यायामः। तथातिव्यायामज चोरुस्तम्भे जलप्रतरणं स्थलाक्रमणञ्च इति। वक्ष्यते च रसविमाने। तत्र खल्वनेकरसेषु द्रव्येष्वनेकदोषात्म-केषु विकारेषु रसदोषप्रभावमेकैकश्येनाभिसमीक्ष्य ततो द्रव्यविकारप्रभावतत्त्वं व्यवस्येत्। न त्वेवं खलु सर्व्वत्र। न हि विकृतिविषमसमवेतानां नानात्म-कानां परस्परेण चोपहतप्रकृतिकानामन्यैश्च विकल्पनैर्विकल्पितानामवयव-प्रभावानुमानेन समुदायप्रभावतत्त्वमध्यवसातुं शक्यम्। तथायुक्ते हि समुदाये समुदायप्रभावतत्त्वमेवोपलभ्य ततो द्रव्यविकारप्रभावतत्त्वं व्यवसेत्। ततो द्रव्यं प्रयुञ्जीतेति। अत्र जिज्ञास्यं, हेतुर्यदि असात्म्येन्द्रियार्थसंयोगप्रज्ञाप-राधपरिणामा एवेति त्रिविधो भवति तत उत्पन्ने व्याधौ चिकित्सार्थं हेतु-विपरीतविपरीतार्थकारिणामौषधादीनामुपयोगवचनं व्यर्थं भवति, रोगे ह्युत्पन्ने निदानानामसद्भावात्। नैवं प्राणिनामभ्यवहृतमाहारजातं जाठरेण अग्निना पक्वं श्लेष्मादिभिः सहैकीभूतं श्लेष्मादिधातुरूपेणाभिनिष्पद्यते, ततः श्लेष्मादयो धातवस्तद्धेतुस्वभावा भवन्ति समाः सम्यग्योगेन विषमा—विषमयोगेण तत्स्वभावप्रशमार्थं तद्धेतुविपरीतार्थकारिणामौषधादीनाम् उपयोग इति न तद्वचनानर्थक्यम्। ये च व्याचक्षते—दोषा दूष्याश्च व्याधीनां हेतव इति दोषविपरीतार्थकारिणामौषधान्नविहाराणां सुखानु-बन्ध उपयोगोऽप्युपशयः। व्याधयो ज्वरादयस्तेषां विपरीतविपरीतार्थ-कारिणामौषधान्नविहाराणां सुखानुबन्ध उपयोगश्चोपशयः। दोषव्याध्यु-भयविपरीतविपरीतार्थकारिणामौषधान्नविहाराणां सुखानुबन्ध उपयोगश्च उपशय इति। तत्र यत्तु ज्वरादिव्याधिहरं तदवश्यं दोषहरमन्यथा स रोगो

हेतुव्याधिविपरीतमौषधं, यथा—वातशोथे वातहरं शोथहरञ्च दशमूलम्। हेतुव्याधिविपरीत-मन्नं, यथा—शीतोत्थज्वरे उष्णा ज्वरघ्नी यवागूः। हेतुव्याधिविपरीतो विहारः, यथा—स्निग्ध-दिवास्वप्नजायां तन्द्रायां रुक्षं तन्द्राविपरीतं रात्रिजागरणम्। हेतुविपरीतार्थकार्य्यौषधं, यथा—पित्तप्रधाने पच्यमाने शोथे पित्तकर उष्ण उपनाहः। हेतुविपरीतार्थकार्य्यन्नं, यथा—पच्यमाने पित्तप्रधाने शोथे विदाह्यन्नम्। हेतुविपरीतार्थकारी विहारः, यथा—वातोन्मादे त्रासनम्।

जित एव न स्यात् कारणताद्‌वस्थ्यात्। दोषविपरीतादस्यायं भेदः। यद् द्रव्यं दोषविपरीतं तन्नावश्यं व्याधिं हरति। यथा वमनलङ्घने कफहरे कफगुल्मं न हरतः। उक्तं हि—कफे लङ्घनसाध्ये तु कर्त्तरि ज्वरगुल्मयोः। तुल्येऽपि देशकालादौ लङ्घनं न च सम्मतम्॥ तथा। न वामयेत् तैमिरिकं न गुल्मिनमिति। तन्नातिसङ्गतमित्यन्ये। दोषो हि तत्र समवायी न च समवायिकारणाभावान्नियमेन कार्य्याभाव इति। यदि दोषो निमित्तकारण-मुच्यते किमर्थं तर्हि वमनादिना दोषहरणं विधीयते न हि घटादेर्निमित्तानां दण्डसूत्रकुलालादीनां विनाशो घटादिविनाशार्थं विधीयते। तत्राह। दोषो निमित्तकारणं यत् तु निमित्तकारणस्थायि कार्य्यं तन्निमित्तकारणा-भावादपि कार्य्यनाशो भवति, यथा वर्त्तितैलविनाशात् दीपनाशः पङ्कजलनाशात् पङ्कजनाश इति। तस्मादनियमात् समवायिनिमित्ताभावे कार्य्यनाश इति। असमवायिकारणाभावात् तु नियमेन कार्य्याभावः। यथा घटस्य कपाल-मालासंयोगस्यासमवायिकारणस्य नाशाद् घटनाशः। एवं रोगस्यापि सम्प्राप्तिलक्षणस्य संयोगस्यासमवायिकारणस्य व्याधिविपरीताद्यौषधादिना नाशाद् विनाशः। दोषस्तत्र स्वयं निवर्त्तते क्रियान्तरेण वा। यदि व्याधि-हरं यत् तदवश्यं दोषहरं स्यात् तदा पुनरुभयविपरीताद् व्याधिविपरीतस्य भेदो दुरुपादः स्यादिति। इत्येवमुक्तमुभयमेवासाधु। तथा हि दृश्यते। पाठा-दिकं यदतीसारादिहरं न तद् दोषहरणपूर्व्वकमिति यदुक्तं तत् कथमुपपन्नं स्यात्? दोषदूष्या हि संयुक्ता विक्रियमाणा ज्वरादिरूपेण जायन्ते। ततो ज्वरादयो न दोषदूष्यातिरिक्ता व्याधिहरणभेषजादिना तस्य नाशः स्यात् सुतरां विकृतदोषदूष्यनाशः स्यात् यतो दोषदूष्यास्तत्र प्रकृतिभूतहेतवः सम-वायिन एव। यथा मृद्वालुकादिव्यतिरिक्तो न घटः। इति वाप्यचन्द्रवचनं साधु। दोषस्य हेतुशब्देनानुक्तत्वाद् व्याधित्वेन ग्रहणात्। तत्र यदुक्तमन्यैः तन्नातियुक्तं यतस्तत्र दोषः समवायी निमित्तं वा। न च समवायिकारणा-

व्याधिविपरीतार्थकार्य्यौ पथ्यं, यथा—छर्द्दयां वमनकारकं मदनफलम्। व्याधिविपरीतार्थ-कार्य्यन्नं, यथा—अतीसारे विरेककारकं क्षीरम्। उक्तं हि—"बहुदोषस्य दीप्ताग्नेः सप्राणस्य न तिष्ठति। पैत्तिको यस्त्वतीसारः पयसा तं विरेचयेत्॥" इति। व्याधिविपरीतार्थकारी विहारो यथा—छर्द्दयां छर्द्दिसाध्यायां वमनार्थं प्रवाहणम्। हेतुव्याधिविपरीतार्थकार्य्यौ पथ्यं, यथा—अग्निना प्लुष्टेऽगुर्व्वादिना लेपः। उष्णं हि हेतावग्नौ व्याधौ चानुगुणं प्रतिभाति। हेतुव्याधि-विपरीतार्थकार्य्यन्नं, यथा—मद्यपानोत्थे मदात्यये मद्युक्तं मदकारकं मद्यम्। हेतुव्याधि-

भावान्नियमेन कार्य्याभावः, किन्त्वसमवायिकारणाभावप्रयुक्तोऽपि। सम्प्राप्ति-लक्षणस्य संयोगस्यासमवायिकारणस्य व्याधिहरौषधादिना नाशाद्व्याधि-नाशः स्यात्, दोषस्तु स्वयं क्रियान्तरेण वा निवर्त्तते इति। तदिदं दूषणमयुक्तं विक्रियमाणा दोषदूष्या हि ज्वरादिरूपेण जायन्ते नातो व्याधेः पृथग्दोष-दूष्या न वा दोषदूष्येभ्यः पृथग् ज्वरादय इति। दोषदूष्यसंयोगनाशो यदि व्याधिहरौषधादिना भवति ततः किं स्वरूपो व्याधिनश्यति, किं विकृत-दोषदूष्यव्यतिरिक्तोऽपरो व्याधिरस्ति; यस्य नाशो व्याधिहरौषधादिना संयोगनाशे भवति? सन्तापलक्षणो हि ज्वरो दोषदूष्यव्यतिरिक्तः किं भवति? दूष्येण सह दोषसंयोगस्य हेतुस्तु दोषप्रकोपविशेषस्तत्सत्त्वे तत्संयोगनाशस्यासम्भवस्तस्माद् व्याधिहरौषधादिना दोषसञ्चयप्रकोपनाशो वक्तव्यस्तत एव दोषहरत्वमुपपद्यते व्याधिहराणामौषधादीनामिति। यथा यथा हि दोषसञ्चयप्रकोपनाशः स्यात् तथा तथैव दूष्यसंयोगः शिथिली-भवति दोषबलहानेः। निःशेषेण दोषबलहानौ दूष्यबलहानौ च तयोः संयोगो विनश्यति शिथिलीभावेऽपि हि वर्त्तते। तस्मात् समवायिकारणा-भावान्नियमेन कार्य्याभावः स्यात्। न चासमवायिकारणं तयोः संयोगः। सोऽपि समवायिकारणं गुणत्वात्। अन्यथा संयोगस्य गुणत्वं व्याहन्यते। उक्तं हि पूर्व्वाध्याये—समवायी तु निश्चेष्टः कारणं गुण इति। कणादेन अप्युक्तम्—द्रव्याश्रय्यगुणवान् संयोगविभागेष्वकारणमनपेक्षो गुण इति समवायिकारणमित्यनुवर्त्त्योक्तम्। तथा। द्रव्यगुणयोः सजातीयारम्भकत्वं साधर्म्म्यम्। द्रव्याणि द्रव्यान्तरमारभन्ते गुणाश्च गुणान्तरमित्युक्तम्। तत्र गुणस्य सजातीयगुणारम्भे यदि समवायिकारणत्वं नोच्यते, तर्हि यो गुणो यमपरं गुणमारभते तमपरं गुणं किंप्रकृतिकमारभते? नान्तरेण विक्रियमाणं स्वं कोऽपि गुणः सजातीयमपरं गुणं शक्नोत्यारब्धुमिति। विक्रियमाणो हि गुणः सजातीयमपरं गुणमारभते। यथा लोहितशुक्लकृष्णा गुणाः स्वाश्रयद्रव्या-श्रितकर्म्मणा तत्तद्द्रव्यसंयोगविभागाभ्यां विक्रियमाणाः परस्परं समवायेन एकीभूय पीतरूपेण निष्पद्यन्त इति पीतगुणमारभन्त इत्युच्यते। तत् समवायि-कारणानि लोहितादयः पीतगुणस्य। इत्येवं निश्चेष्टसमवायिकारणं गुण

विपरीतार्थकारी विहारः, यथा—व्यायामजनितसम्मूढवाते जलप्रतरणादिरूपो व्यायामः। अयं हेतौ व्यायामे व्याधौ च सम्मूढवातेऽनुगुणः प्रतिभाति।

इति गुणत्वे संयोगस्यापि संयोगान्तरारम्भे समवायिकारणत्वं द्रव्यस्य सजातीयद्रव्यान्तरारम्भे समवायिकारणवत्। कार्य्यद्रव्यं हि द्रव्यगुणकर्म्म-विकारसमुदायात्मकं तत्रारम्भकाणि द्रव्यगुणकर्म्माणि विक्रियमाणानि स्वस्वविकारसमुदायात्मके कार्य्ये समवयन्त्येव वर्त्तन्ते नासमवायीनि। एवं सति संयोगो यद्यसमवायी स्याद् द्रव्यमप्यसमवायि भवतु; तस्मात् संयोगेऽपि गुणः समवयन् कार्य्यद्रव्ये वर्त्तते। इति कथमसमवायिकारण-मुपपद्यते। तस्मादसमवायिकारणमेव नास्ति गुणकर्म्मणामसमवायिकारणत्व-वचनं भ्रान्तानां ततस्तदसाधु। कर्म्माण्यपि स्वस्वाश्रयद्रव्याणि परस्परं संयोज्य विभज्य यथा तत्सजातीयद्रव्यान्तरमारम्भयन्ति तदा गुणांश्च सजातीयगुणान्तरमारम्भयन्ति तथा तदा निजान्यपि परस्परं समवायेन मिलित्वा सजातीयविजातीयानि कर्म्मान्तराण्यारभमाणानि विकारसमु-दायात्मके कार्य्ये समवयन्ति वर्त्तन्ते इति समवायिकारणान्येव कर्म्माणि न त्वसमवायीनि कारणानि। द्रव्यगुणकर्म्मविकारसमुदायात्मकं हि कार्य्यद्रव्यम् उक्तमिति। यदि निमित्तकारणं दोष इति कृत्वा दोषस्थायी च ज्वरादिः व्याधिर्वर्त्तितैलनाशे दीप इव नश्यति तर्हि कोऽन्यो दोषादिव्यतिरिक्तो ज्वरादिः किंप्रकृतिको वा? तदभावात् तद्वचनमसाधु। यदि विक्रियमाणदोषद्रव्य-विकारात्मको व्याधिर्नोच्यते दोषतः पृथक् चोच्यते कथं तर्हि व्याधिनामान-भिज्ञस्य तद्व्याधिचिकित्सायां सामर्थ्यं दोषज्ञानेनोपपद्यते। यत उक्तं स्वयमेव। व्याधयोऽपरिसंख्येया भिद्यमाना भवन्ति हि। रुजावर्णसमुत्थान-स्थानसंस्थान-नामभिः॥ व्यवस्थाकरणं तेषां यथा स्थूलेन संग्रहः। तथा प्रकृतिसामान्यं विकारेषूपदिश्यते॥ विकारनामाकुशलो न जिह्रीयात् कदाचन। न हि सर्व्वविकाराणां नामतोऽस्ति ध्रुवा स्थितिः॥ स एव कुपितो दोषः समुत्थान-विशेषतः। स्थानान्तरगतश्चापि विकारान् कुरुते बहून्॥ तस्माद्विकारप्रकृती-रधिष्ठानान्तराणि च। समुत्थानविशेषांश्च बुद्ध्वा कर्म्म समाचरेत्॥ यो ह्येतत्त्रितयं ज्ञात्वा कर्म्माण्यारभते भिषक्। ज्ञानपूर्व्वं यथान्यायं स कर्म्मसु न मुह्यति॥ नित्याः प्राणभृतां देहे वातपित्तकफास्त्रयः। विकृताः प्रकृतिस्था वा तान् बुभुत्सेत

ननूपशयवदनुपशयोऽपि व्याधिपरीक्षकोऽस्ति। उच्यते च—"गूढलिङ्गं व्याधिमुपशयानुप-शयाभ्यां परीक्षेत"। तथा वाग्भटेऽप्युक्तम्,—"विपरीतोऽनुपशयः स ह्यसात्म्यमिति स्मृतः" इति। सत्यमस्ति च, परं निदानग्रहणेनैव गृहीतत्वान्न पृथगुच्यते, अनुपशयोऽपि हेतुसेवयैव भवति।

सम्प्राप्तिरागतिर्जातिरित्यनर्थान्तरं व्याधेः। सा सङ्ख्या-प्राधान्यविधिविकल्पबलकालविशेषैर्भिद्यते ॥ ५ ॥

पण्डितः॥ इति। एतेन विकृता दोषा एव विकारास्तत्प्रकृतिका ज्वरादयस्तेषां प्रकृतिसमुत्थानविशेषाधिष्ठानविशेषज्ञानेनानामकव्याधीनामपि प्रकृतिविघातेन एवोपघातो भवतीति कथं निमित्तकारणं दोषः स्यात्? एवं पूर्व्वरूपावस्थायां प्रयुक्तभेषजादीनां सुखकरानुबन्धः कथमसमवायिकारणदोषदूष्यसंयोगलक्षण-सम्प्राप्तिनाशाद्भवति? नास्ति हि पूर्व्वरूपे सम्प्राप्तिः। उक्तं हि स्वयमेव। भविष्यन्त्या असम्प्राप्तिरतीताया अनागमः। साम्प्रतिक्या अपि स्थानं नास्त्यर्त्तेः संशयो ह्यतः। इति। विषमा धातवो दोषा दूष्याश्च व्याधय एव न तु हेतव उक्ताः। हेतवस्तु त्रयोऽसात्म्येन्द्रियार्थसंयोगप्रज्ञापराधपरिणामा उक्ताः। ततो व्याधिविपरीताद्यौषधाहारविहाराणामुभयविपरीतादिभ्यो भेदः सुव्यक्त एव, न दुरुपपादः। यथा कामजे ज्वरे कामहरः क्रोधः कामज्वरहरश्चेति। अतीसारे पाठादिस्तदारम्भकदोषवैषम्यात्मकव्याधितन्निमित्तातिसारहर एव न तु गुर्व्वतिस्निग्धाहारादिहेतुहर इति। विपरीतार्थकारिणामिति निदान-समानधर्म्मिणामपि प्रभावाद् रोगोपशमकारिणामिति नार्थः। निदानसमान-धर्म्मिणो न व्याधिविपरीतार्थकारिणः किन्तु निदानविपरीतार्थकारिण इति। तस्माद् हेतुव्याध्युभयसमानधर्म्मिणोऽपि प्रभावाद् हेतुव्याध्युभयविपरीतानाम् औषधादीनामर्थकारिण इत्यर्थः।

एष उपशयः पूर्व्वरूपे प्रयुक्तो भविष्यद्व्याधिं बोधयति। उत्पन्ने व्याधौ प्रयुक्तो वर्त्तमानं व्याधिं बोधयति। जायमानन्तु व्याधिं किं बोधयति न वाऽथ चेद्बोधयति कदा प्रयुक्तो बोधयतीत्यतः सम्प्राप्तिमाह—सम्प्राप्तिरित्यादि। सम्प्राप्तिरागतिर्जातिरित्यनर्थान्तरं व्याधेः इति। सम्प्राप्तिरिति भावे क्तिच्। जातिरित्यपि जनेर्भावे क्तिच्। आगतिरित्यपि आगमेर्भावे क्तिच्। य एवार्थो जनेः स एवार्थः सम्प्राभ्यामापेः स एव आङ्पूर्व्वगमे रित्य-नर्थान्तरमित्युक्तम्। जनी प्रादुर्भावे इति सत्तानुकूलव्यापारो जनिधात्वर्थः।

यद्यपि सम्प्राप्त्यनन्तरं लिङ्गप्रादुर्भावः, तथापि संप्राप्तेर्निरूपणं प्रति अल्प-प्रयोजनाच्छेषतः सम्प्राप्तिमाह—सम्प्राप्तिरित्यादि। जातिर्जन्म, सम्प्राप्त्यागतिजातिशब्दैर्यो-ऽर्थोऽभिधीयते व्याधेः, सा सम्प्राप्तिरित्यर्थः। अत्रैके व्याधिजन्ममात्रमन्त्यकारणव्यापारजन्यं संप्राप्तिमाहुः। इयञ्च सम्प्राप्तिर्यद्यपि निदानादिवद्व्याधिबोधिका न भवति, तथापि

जन्यर्थस्वरूपो वाह्यभावः क्तिच्प्रत्ययार्थः। स च सत्तानुकूलव्यापार-स्वरूपः। सदिति। यतः स सत्ता सद्भावः प्रकृतिभूतकारणानां रूपान्तरेण अभिनिष्पन्नानामनुवृत्तिहेतुः। उत्पन्नो येनोत्तरकालं वर्त्तते स स्वकारण-समवाय एव सत्ता। सा द्विधा सामान्यं विशेषश्च। आरम्भकद्रव्याणां स्वस्वक्रियाजन्यपुनःपुनःसंयोगविभागाभ्यां विक्रियमाणानां रूपान्तरेण समानप्रसवात्मिका सत्ता सामान्यं जातिरित्युच्यते। यथा ब्राह्मणानां निखिलानां समान एव प्रसवः। असमानप्रसवात्मिका सत्ता प्रत्येकशो जातिः जन्मविशेष उच्यते। यथा ब्राह्मणानामेकैकस्य प्रसवोऽसमानः, उक्तश्च जातिः सामान्यजन्मनोरिति। तत्रेदं सामान्यजातिलक्षणम्. विशेष-जातिस्तु प्रतिरोगं वक्ष्यते। उत्पन्नानां भावानां समवायिकारणसमवायो यावन्तं कालं वर्त्तते तावन्तं कालं तेषामुत्पत्तेरनु पश्चाद्वृत्तिरित्यनुवृत्तेर्हेतुः समवायः सत्तोच्यते। तस्याश्च सत्ताया अनुकूलव्यापारः प्रकृतिभूतद्रव्याणां स्वस्वक्रियाभिः परस्परं पुनःपुनःसंयोगविभागौ जनयित्वा निष्पाद्यते तत्तत्-कार्य्याणां स्वरूपनिष्पत्तौ सर्वावयवसमवाय इति। शारीरव्याध्युत्पत्तौ तु स्वकारणैः दुष्टानां दोषाणां दुष्टिर्बहुधा, संग्रहेण द्विधा प्राकृती वैकृती च। प्राकृती यथा स्वलक्षणर्त्तुसंवत्सराहोरात्रभुक्तांशकालकृतचयप्रकोपौ। वैकृती दुष्टिः पुनः ऋतूनां यथास्वलक्षणहीनातिविपर्य्ययेण या दुष्टिर्निदान-सेवाभिश्च। सा च द्विधा दुष्टिरेकशो द्विशः सर्व्वश्च। वृद्धौ क्षये च। रजस्तमसोश्चैवं दुष्टिरेकशो द्विशश्च। तत्र शारीरदोषाणां सांसर्गिकी दुष्टिर्द्विधा प्रकृतिसमविषमसमवायाभ्यां भवति। तत्र समसमवायात् षट्पञ्चाशत्, एकशः षड़िति, वृद्धिक्षययोर्द्वाषष्टिधा। विषमसमवायात् तु नियमो नास्ति। एवं दुष्टौ स्वभावाद् यस्मिन् व्याधौ यावती दुष्टिस्तावती

नानुत्पन्नस्य व्याधेर्लक्षणं भवतीति कृत्वा उत्पत्तेर्व्याध्युपलम्भकत्वं वर्णयन्ति। एतच्चान्ये न मन्यन्ते। यतः—नैवं सति सम्प्राप्तितः कश्चिद् विशेषो व्याधेरधिगम्यते; न चायं नियमः—यदुत्पन्न एव परं व्याधिरुपलभ्यते। यतः निदानपूर्व्वरूपाभ्यामनुत्पन्नो व्याधिर्भावित्वेन बुध्यते। तस्माद्व्याधिजनकदोषव्यापारविशेषयुक्तं व्याधिजन्मेह सम्प्राप्तिः। पर्य्याये 'आगतिः' इत्युक्तम्। आगतिर्हि उत्पादकारणस्य व्याधिजननपर्य्यन्तं गमनम्। इयञ्च सम्प्राप्तिर्व्याधिविशेषं बोधयत्येव, यथा—ज्वरे—"स यदा प्रकुपितः प्रविश्यामाशयम्" इत्यारभ्य "तदा ज्वरमभि-निर्व्वर्त्तयति" इत्यन्तेन या सम्प्राप्तिरुच्यते तथा ज्वरस्यामाशयदूषकत्वमग्न्युपघातकरत्वदूषकत्वा-दयो धर्म्माः प्रतीयन्ते। न च वाच्यम्—दोषाणामयमामाशयदूषकत्वादिधर्म्मः, ततश्च कारण-

सङ्ख्या तावदष्टौ ज्वराः पञ्च गुल्माः सप्त कुष्ठानी-त्येवमादि।

संख्या तस्य व्याधेः सर्व्वंश इति सत्तानुकूला सङ्ख्या व्यापारविशेषः। आगन्तुजेष्वपि सङ्ख्या सत्तानुकूला व्यापारभेद एव। दोषाणां तथैव दुष्टानां द्विशो बहूनाञ्च प्राधान्यमप्राधान्यञ्च व्यापारविशेषः। प्रकारश्च व्यापारभेदः। निदानस्वभावेन यादृशस्वभावो दोषो भवति स तस्य प्रकारः। यावतांशेन यस्य दोषस्य चयप्रकोपौ तत्कल्पना च व्यापारभेदः। बलकालश्च दोषाणां व्यापारभेदः।

इत्येते दोषाणां दूष्यसंयोगे स्वस्वक्रियैव व्यापारास्तानाह—सा संख्या प्राधान्यविधिविकल्पबलकालविशेषैर्भिद्यते। इति। सा सत्तानुकूला क्रिया सम्प्राप्तिः संख्यादिभिः पञ्चभिर्भेदैर्भिद्यते॥ ५॥

गङ्गाधरः—संख्या तावदित्यादि। संख्या तावत् द्वौ ज्वरौ पुनरष्टौ ज्वराः पञ्च गुल्मा इत्येवमादयः। यद्यपि यो भावो जायते स एक एव जायते

धर्म्माणां निदानग्रहणेनैव ग्रहणं भवतीति। यतः कारणधर्म्मोऽप्ययं व्याधिजनकदोषव्यापाररूपः सम्प्राप्तिशब्देन विशेषबोधनार्थं पृथक् कृत्वोच्यते। यथा—लिङ्गत्वाविशेषेऽपि भाविव्याधिबोधकत्वविशेषात् पूर्व्वरूपं पृथगुच्यते। अत एव वाग्भटेऽप्येवमेव सम्प्राप्तिलक्षणमुक्तम्;—'यथा दुष्टेन दोषेण यथा चानुविसर्पता। निर्व्वृत्तिरामयस्यासौ सम्प्राप्तिर्जातिरागतिः॥" इति। सम्प्रति सम्प्राप्तेः प्रतिव्याधिव्यक्तिभिन्नायाः सर्व्वत्र व्याधौ तत्प्रयोजनाभावान्न भेदो वक्तव्यः, यस्तूपयुक्तो भवति सम्प्राप्तिविशेषः, तमभिधास्यत्येव, "स यदा प्रकुपितः प्रविश्यामाशयम्" इत्यादिना ग्रन्थेन; अतः सर्व्वसम्प्राप्त्यनभिधानात् न्यूनतादोषपरिहारार्थं सर्व्वव्याधिसाधारणान् सम्प्राप्तिभेदानाह—सा संख्येत्यादि। सा सम्प्राप्तिः संख्यादिभिर्भिद्यते इति संख्यादिभिन्ने व्याधौ भिन्ना भवतीत्यर्थः, यतः न भिन्नानां भावानामभिन्नोत्पत्तिर्भवति, किं तर्हि भिन्नैव भवति; यद्यपि च प्रतिव्याधिव्यक्त्यपि सम्प्राप्तिर्भिन्नैव भवति, तथापि स भेदः सम्प्राप्तेरिह प्रयोजनाभावान्नोच्यते; यतः, संख्याप्राधान्यविध्यादितुल्यासु ज्वरव्यक्तिषु एकरूपनिदानलिङ्गचिकित्सितासु भेदप्रतिपादने न किञ्चित् प्रयोजनमस्ति; संख्यादिभिन्ने तु ज्वरादौ निदानलिङ्गचिकित्साभेदोऽस्ति; अतः संख्यादिभेदजनिकायाः सम्प्राप्तेर्भेदकथनमुचितमेव॥ ५॥

चक्रपाणिः—संख्याभेदमुदाहरति—संख्या तावदिति। यद्यपि प्राधान्यादिभेदभिन्नेऽपि व्याधौ संख्याभेदोऽस्त्येव, तथापीह यैव शास्त्रसिद्धा अष्टोदरीयादिप्रतिपादिता सैव संख्याशब्देन प्राप्ता; अत एवाष्टौ ज्वरा इत्यभिधाय द्विविधं शोणितपित्तमिति क्रमात् प्राप्तं रक्तपित्तं

प्राधान्यं पुनर्दोषाणां तरतमाभ्यामुपलभ्यते तत्र द्वयोस्तरस्त्रिषु तमः।

विधिर्नाम द्विविधा व्याधयो निजागन्तुभेदेन त्रिविधास्त्रिदोषभेदेन चतुर्व्विधाः साध्यासाध्यमृदुदारुणभेदेन पृथक्।

नानेकतया जायत इति, तथापि स भावः सर्व्व एव कतिधा जायत इति। तत् सामान्यस्य संख्याज्ञानार्थं संख्योपदेशः।

प्राधान्यमित्यादि। व्याध्यारम्भे खल्वेकैको दोषश्चेद्व्याधिमारभते तत्र प्राधान्यं न सम्भवति। प्राधान्यं हि सापेक्षम्। यञ्च व्याधिं द्वौ वा त्रयो वा दोषा आरभन्ते तत्र प्राधान्यमेकमपेक्ष्यापरस्य भवति। तत्र द्वयोस्तरः। द्वयोर्मध्ये यस्तर उत्कृष्टः अधिकलिङ्गस्तस्य प्राधान्यम्। त्रिषु तम इति त्रिषु दोषेषु मध्ये यस्तम उत्कृष्टोऽधिकलिङ्गस्तस्य प्राधान्यम्। लिङ्गतारतम्याभ्यां प्राधान्यं दोषयोर्दोषाणां विज्ञायते।

विधिस्तु प्रकारः। संख्या भेदमात्रम्। सजातीयविजातीयेषु पञ्च ब्राह्मणाः पञ्च ब्राह्मणक्षत्रियाः। प्रकारस्तु सजातीयेषु भिन्नेषु धर्म्मान्तरेण उपपत्तिः। निजः शारीरदोषजत्वेन धर्म्मेणैकप्रकारः। आगन्तुकरणजत्वेन धर्म्मेण अपरप्रकारः। इति तत्तद्धर्म्मं ज्ञापयति विधिः। तस्य प्रयोजनं यथोर्द्ध्वगतधर्म्मकं रक्तपित्तं नोर्द्ध्वहरणसाध्यं किन्त्वधोहरणसाध्यमधोगतधर्म्मकमूर्द्ध्वहरणसाध्यं नाधोहरणसाध्यमिति। एष विधिर्येन नोक्तस्तस्य भ्रमः।

नोदाहरति ; यतः द्विविधं हि रक्तपित्तस्य विधिभेदे प्रविशति, न द्विविधं संख्यायाम्, 'द्विविधं शोणितपित्तम्' इति विधिशब्देनैवोक्तत्वात्।

प्राधान्यं पुनरित्यादौ तरतमाभ्यामिति 'तरतम'शब्दाभिधेयाभ्यां वृद्धिभ्याम् ; तरतमशब्दयोर्विषयं विभजते—द्वयोरित्यादि। 'द्वयोस्तर:' इति द्वयोर्दोषयोर्वृद्धयोः 'तर' प्रयोगो भवति, 'वृद्धतरः' इति ; एवं 'त्रिषु तमः' इति त्रिषु दोषेषु वृद्धेषु सत्सु 'तम'-प्रयोगो भवति ; तदेवं द्वन्द्वारब्धे विकारेऽन्यतरदोषस्य 'तर'शब्दलक्षितेन प्राधान्येन सम्प्राप्तिः भिद्यते ; तथा त्रिदोषारब्धे विकारे 'तम'शब्दलक्षितान्यतमदोषप्राधान्यात् सम्प्राप्तिर्भिद्यते इत्युक्तं भवति।

सम्प्राप्तिभेदकं क्रमागतं विधिमाह—विधिर्नामेत्यादि। 'द्विविधा व्याधयो निजागन्तुभेदेन' इत्यादिना विधिरिति कृतमित्यर्थः ; ते द्विविधत्वादयो भेदा यतो भवन्ति, स विधिः ; विधिश्च प्रकारो भेद इत्यर्थः ; साध्यासाध्यमृदुदारुणभेदेनेति साध्यासाध्यगतेन

समवेतानां पुनर्दोषाणामंशांशबलविकल्पो विकल्पोऽस्मिन्नर्थे।

बलकालविशेषः पुनर्व्याधीनामृत्वहोरात्राहारकालविधिविनियतो भवति ॥ ६ ॥

अथ विकल्पः। समवेतानामिति। रौक्ष्यादिगुणानां यावता गुणेन कुपितो यो यो दोषः कार्य्यमारभमाणः परस्परं समवैति, तस्य तस्य दोषस्य तावान् गुणोऽंशस्तत्तत् प्रत्येकमंशांशस्ततो दोषाणां तेषां समवेतानां बलस्य विकल्पः विशेषेण कल्पना, कस्य दोषस्य किम्मितं बलं तस्यावधारणं कल्पनेत्यस्मिन्नर्थे विकल्प इति। एष विकल्पश्चिकित्साविशेषार्थं भवति। एवंविकल्पेन दोषबलं विज्ञायते तथा कालविशेषेणापि।

ततो बलकालविशेषमाह—बलकालविशेषः पुनरिति। ऋतवो वसन्तादयः अहोरात्रः आहारश्च तेषां कालविधिना विनियतोऽवधारितो भवति। यस्य दोषस्य यो बलकालविशेषः स ऋत्वादिभिरवधार्य्यते तद्दोषजव्याधेरपि तैः ऋत्वादिभिर्बलकालविशेषोऽवधार्य्यते। वसन्ते बलवांश्चेद्व्याधिर्भवति, तद्व्याध्यारम्भकं कफं ज्ञापयति वसन्तः, कफजश्चेद् व्याधिर्वसन्ते

मृदुदारुणभेदेन; तेन मृदुसाध्यं सुखसाध्यम्, दारुणसाध्यं कृच्छ्रसाध्यम्—रोहिणीवलयादि, तथा मृदुसाध्यं याप्यं, दारुणासाध्यं प्रत्याख्येयमिति भेदचतुष्टयम्; यद्यपि च संख्याप्राधान्यादिकृतोऽपि व्याधेर्विधिभेदो भवत्येव, तथापि संख्यादिभेदानां स्वसंज्ञयैव गृहीतत्वाद् गोबलीवर्द्दन्यायात् संख्याद्यगृहीते व्याधिप्रकारे च विधिशब्दो वर्त्तनीयः।

क्रमागतं विकल्पमाह—समवेतानामित्यादि। समवेतानां सर्व्वेषाम्; तेन एकशो द्विशो मिलितानाञ्च दोषाणां ग्रहणम्; अंशमंशं प्रति बलम् अंशांशबलम्, तस्य विकल्प उत्कर्षापकर्षरूपः अंशांशबलविकल्पः; एवम्भूतो दोषाणाम् अंशांशविकल्पोऽस्मिन्नर्थे इति अस्मिन् प्रकरणे विकल्प उच्यते; प्रकरणान्तरे तु विकल्पशब्देन भेदमात्रमुच्यते, यथा—'विकल्पो न त्वसाध्यानाम्' इत्यादाविति भावः। तत्र दोषाणामंशांशविकल्पो यथा—वाते प्रकुपितेऽपि कदाचिद् वातस्य शीतांशो बलवान् भवति, कदाचिल्लघ्वंशः, कदाचिद्रूक्षांशः, कदाचिल्लघुरूक्षांश इति; एवं पित्तकफयोरप्युदाहार्य्योऽंशांशविकल्पः; अयञ्चांशांशविकल्पो दोषाणां शीतादिगुणोद्भूतहेतुभेदाद् भवति।

बलकालविशेषमाह—बलेत्यादि। बलस्य कालो बलकालः, तस्य विशेषो वसन्तपूर्व्वाह्णादिर्बलकालविशेषः; ऋतवश्चाहोरात्राहारयोश्च काला ऋत्वहोरात्राहारकालाः, तेषां

स बलवान् भवति। यस्य ग्रीष्मे बलं तस्यारम्भकं पित्तमिति ग्रीष्मो ज्ञापयति। यस्य प्रावृषि बलं तस्यारम्भको वायुरिति प्रावृड् ज्ञापयति। वर्षासु यस्य बलं तस्यारम्भकः कफ इति वर्षा ज्ञापयन्ति। यस्य शरदि बलं तस्यारम्भकं पित्तमिति शरज्ज्ञापयति। यस्य हेमन्ते बलं तस्यारम्भको वायुरिति ज्ञापयति हेमन्तः। एवं पूर्व्वाह्णे यस्य बलं तस्यारम्भकः कफ इति ज्ञापयति पूर्व्वाह्णः। यस्य मध्याह्ने बलं तस्यारम्भकं पित्तमिति मध्याह्नो ज्ञापयति। यस्यापराह्णे बलं तस्यारम्भको वायुरित्यपराह्णो ज्ञापयति। एवं प्रदोषे यस्य बलं तस्यारम्भकः कफ इति प्रदोषो ज्ञापयति। यस्य मध्यरात्रे बलं तस्यारम्भकं पित्तमिति ज्ञापयति मध्यरात्रः। यस्य रात्रिशेषे बलं तस्यारम्भको वायुरिति ज्ञापयति रात्रिशेषः। आहारकालस्तु भुक्तमात्रं पच्यमानकालः जीर्णकालश्च। यस्य भुक्तमात्रकाले बलं तस्यारम्भकः कफ इति ज्ञापयति भुक्तमात्रकालः। यस्य पच्यमानकाले बलं तस्यारम्भकं पित्तमिति ज्ञापयति पच्यमानकालः। यस्यान्ने जीर्णे बलं तस्यारम्भको वायुरिति ज्ञापयति जीर्णकालः। इत्येवं सत्त्वानुकूलव्यापारः सम्प्राप्तिः। प्रतिरोगं वक्ष्यते हि सम्प्राप्तिः सर्व्वत्रैव। तत्तत्स्थानसंश्रयिणो दोषाः पूर्व्वरूपाणि कुर्व्वन्तः प्रज्ञापराधान्न प्रतिक्रियन्तेऽथ ते दूष्यानादाय स्वस्वक्रियाभिः परस्परं संयुज्य विभज्य समवेत्य सर्व्वत्रैवैकीभूय तत्तद्व्याधिरूपेण जायन्त इति स स व्याधिर्भवतीत्युच्यते। तदा स्वरूपतो जातः स स व्याधिर्गर्भान्निष्क्रान्तो बाल इव क्रमेण वर्द्धमानो यथावातादिप्रकृत्यकृत्स्नलक्षणोऽभिव्यज्यते व्यज्यते चास्योत्तरकालं यथाबलं प्रकृतिसमविषमसमवायतो लक्षणं किञ्चिदन्यद् बालस्य रेतःश्मश्रुदन्तादिवदिति। एवमेषा सम्प्राप्तिर्व्याधीनां प्रत्यक्षादिभिरुपलब्धौ कारणम्। यदि ह्येवं नाभविष्यन्न तदा ताद्रूप्येण प्रत्यक्षादिभिर्व्यज्ञास्यत। सम्प्राप्तिश्चैषा व्याधीनां समानप्रसवात्मिका सामान्यभूता जातिराकृतिग्रहणा। स्वस्वा तु विशेषभूता जातिर्जन्मोच्यते। प्रतिक्षणं हि

भेदो विधिः, तत्र नियतो बलकालविशेष ऋत्वहोरात्राहारकालविधिनियतः। अत्र ऋतुविनियतो बलकालविशेषो यथा—श्लेष्मज्वरस्य वसन्तः; अहोरात्रविनियतो यथा—श्लेष्मज्वरस्य पूर्व्वाह्णः प्रदोषश्च; आहारविनियतो यथा—श्लेष्मज्वरस्य भुक्तमात्रकालः; एवमाद्यन्नेयम्; केचित् तु विधिशब्देन पूर्व्वकृतं कर्म्म ब्रुवते; अत्र कर्म्मनियतो बलकालविशेषः पच्यमानकर्म्मकाल एव बोद्धव्यः; एषु बलकालेषु यद्यपि व्याधेरभूतप्रादुर्भावरूपा सम्प्राप्तिर्न भवति, तथापि व्याधिसन्ताने तत्कालं व्याध्युत्पत्तौ च सम्प्राप्तिर्भिन्नैव भवतीति मन्तव्यम्; इयञ्च कालविशेषप्राप्त्या

भावानां नित्यगलस्वभावादुपादानसातत्याच्चारम्भकहेतवः प्रागयथाभूतत्वं प्रकृतिस्थं विकृतिस्थं वा तथाभूतत्वेनोत्तरावस्थां यथोपादानमारभमाणाः प्रागवस्थाभङ्गं कुर्व्वन्तीति प्रतिक्षणमवस्थान्तरगमनमपि जन्मोच्यते, तच्च स्वा स्वा जातिः सम्प्राप्तिरागतिरित्यनर्थान्तरत्वात्। ततः पुरुषस्य बाल्ययौवन-मध्यमस्थाविर्य्यवद्व्याधीनामुत्तरकालं वृद्धिह्रासादिकं यथोपादानं भवति। तत्रापि प्रागवस्थायां भविष्यदुत्पत्तिरुत्तरावस्थारम्भपूर्व्वकप्रागवस्थाभङ्गो वर्त्तमानोत्पत्तिस्तत्समाप्तौ त्वतीतोत्पत्तिरित्येवमुत्पत्तिर्जातिः स्वा स्वा सम्प्राप्तिस्त्रिकाला।

आगन्तुव्याधीनामपि प्रागेव कारणतो जायमानानामन्तरेणा-दोषसम्बन्धं धातुवैषम्ये जाते तद्विषमधातुव्यापारेण तथैव सत्ता निष्पद्यते। इति सम्प्राप्तिर्जातिरित्यस्य नामसङ्गः। यस्तु यथा दुष्टेन दोषेण यथा चानुविसर्पता। निर्वृत्तिरामयस्यासौ सम्प्राप्तिर्जातिरागतिरिति व्याचष्टे तदसाधु, दोषसम्बन्धाभावादागन्तुषु। तस्माज्जन्मापि ज्ञानकारणं भविष्य-दुत्पत्तिमान् भावः पूर्व्वरूपेण ज्ञायते। वर्त्तमानोत्पत्तिमांस्तु सम्प्राप्तिकालिक-तत्तल्लक्षणेन। अतीतोत्पत्तिमांस्तु वर्त्तमानो भावो व्यक्तलक्षणेन। यस्यैवं त्रैकालिकोत्पत्तिर्नास्ति तन्नास्ति न च ज्ञायते। सर्गावस्थायां परं ब्रह्म चावस्थान्तरमासाद्य गायत्री बभूवेति तत् सर्व्वं यज्जःपुरुषीये दर्शितमिति। तस्माज्जन्मापि भावानां प्रत्यक्षादिज्ञानहेतुर्निदानादिवद्बोधकमेव न तु रूपादि-वद्विषयत्वेन, विषयो हि घटादिवदाकृतिसमुदायो वातादिज्वरादिस्तेन च कपालादीनामिव वेपथ्वादीनामाकृतीनां स्वज्ञाने विषयत्वे सिद्धे समुदायस्य ज्ञाने लिङ्गत्वेनानुमित्यादिषु हेतुत्वात् यावत्समवायिसमवायस्तु सत्ताजातिः सामान्यविशेषरूपासामान्यविशेषाकृतिभ्यामनुमीयते इति।

यत् तु फलविशिष्टव्यापारात्मकं व्याधेजन्म सम्प्राप्तिरित्यभिप्रायेणोक्तं—

बलवद्व्याधिजनिका सम्प्राप्तिर्व्याधेर्विशेषं स्फुटमेव बोधयति; यतः पूर्व्वाह्णादिबलसम्प्राप्तया ज्वरस्य कफादिजत्वमुन्नीयते इति; इह च सम्प्राप्तेरेव विशेषाः संख्यादिकृता उक्ताः, न तु निदानादीनां विशेषाः; यतः, निदानादिविशेषाः प्रतिव्याधि वक्ष्यमाणभेदेनैवोपयुक्ताः; यतः, यादृग् ज्वरे निदानम्, न तादृग् रक्तपित्ते, ये च पूर्व्वरूपादिविशेषाः ज्वरे, न ते रक्तपित्तादौ, भिन्नजातीया एव, स च भेदो निदानादीनां भेदगमकत्वेनोपयुक्तो व्याधिभेदकथन एव, सम्प्राप्तेस्तु संख्यादिभेदः सर्व्वव्याधिष्वेकजातीयत्वेन न विशेषगमक इति इहैव कथ्यते; निदानादिविशेषास्तु प्रतिव्याधि विशिष्टत्वेन नेह प्रपञ्चेनोच्यन्ते, अत एव चास्मिन्नेवाध्याये सम्प्राप्तेः

तस्माद्व्याधीन् भिषगनुपहतसत्त्वबुद्धिर्हेत्वादिभिर्भावैर्यथावदनुबुध्येत। इत्यर्थसंग्रहो निदानस्थानस्योद्दिष्टो भवति, तं विस्तरेणोपदिशन्तो भूयस्तरतमतोऽनुव्याख्यास्यामः॥ ७॥

यथा दुष्टेन दोषेण यथा चानुविसर्पता। निर्वृत्तिरामयस्यासौ सम्प्राप्तिर्जातिरागतिः इति। अत्रामयस्येति ज्वरत्वादिरूपेण दोषस्य दोषात्मकत्वाच्छारीरव्याधीनामिदन्तु लक्षणं निजमानसव्याध्यभिप्रायेण बोध्यम्, अन्यथागन्तुव्याधिसम्प्राप्तौ तस्याव्याप्तिः दोषदुष्ट्यभावात्। चरकाचार्य्यस्तु सर्व्वसम्प्राप्तिव्यापकत्वाभिप्रायेण सम्प्राप्तिः आगतिर्जातिरित्यनर्थान्तरं व्याधेरिति लक्षणमुक्तवान्; इत्थञ्च ज्वरादिषु रससंयोगामाशयगमनजाठराग्निवहिष्करणादिज्ञाने पाचनलङ्घनस्वेदनादिक्रियाविशेषोऽपि लभ्यते इति यदन्यैः फलात्मकजन्मनश्चिकित्सायामुपयोगित्वमुक्तं तन्न युक्तम्, आमाशयगमनरसदूषणवह्निबहिष्करणादिको हि प्रकारो विधिर्व्यापार एव ज्वरत्वादिरूपेणाभिव्यक्तौ दोषाणामिति तत्समवायिकारण-समवायात्मकफलं विना किं व्यापारः सम्भवति? निष्फला हि क्रिया नास्ति। तस्मात् फलरूपं जन्म सत्ता व्याधीनामसत्तायां कस्य चिकित्सा स्यात्? तस्माद् व्याधिजन्मनः सत्तारूपस्य सर्व्वथैव चिकित्सायामुपयोगित्वमिति निष्कर्षः॥ ६॥

गङ्गाधरः—नन्वेभिर्निदानादिभिः किं कः कुर्य्यादिति? अत आह—तस्मादित्यादि। यस्मात् तत्र निदानं कारणमित्यादिग्रन्थेन विवरीतनिदानपूर्व्वरूपलिङ्गोपशयसम्प्राप्तितस्तस्योपलब्धिस्तस्मात् व्याधीननुपहतसत्त्वबुद्धिर्भिषक्

सामान्याभिधानेनैवोक्तत्वात् सम्प्राप्तिं परित्यज्य निदानादिविशेषाभिधानम्, तत् प्रतिजानीते "तस्य निदानपूर्व्वरूपलिङ्गोपशयविशेषाननुव्याख्यास्यामः" इति॥ ६॥

चक्रपाणिः—यस्मादिमे निदानादय उक्तेन न्यायेन परीक्षायामुपयुक्ताः, तस्माद् व्याधीन् भिषग् हेत्वादिभिः परीक्षेतेति योजना; न च वाच्यम्—यन्निदानादीनां मध्ये चेदन्यतमेनापि व्याधिं परिच्छेत्तुं समर्थस्तत् कथं पञ्चकाभिधानेनेति; यतः यावन्तो ज्ञानोपाया व्याधीनाम्, ते सर्व्व एवोपदर्शनीयाः; तत्र यो निदानं विस्मृतवान्, तस्य पूर्व्वरूपादिभिर्व्याधिः परीक्ष्यते; तथा यत्र च पूर्व्वरूपादयो विस्मृताः सन्दिग्धा वा, तत्रोपशयेन परीक्षा भवति; एवं कफज्वरसन्देहे ज्वरस्य सम्प्राप्तिरपि पूर्व्वाह्णे भुक्तमात्रे वा भवतीति कफजत्वं गमयतीत्यादि प्रयोजनमनुसरणीयम्; तथा पूर्व्वरूपेणापि लिङ्गसामान्यनिश्चय उक्तः; यदुक्तम्—"हारिद्रवर्णं रुधिरञ्च मूत्रं विना प्रमेहस्य हि पूर्व्वरूपैः। यो मूत्रयेत् तं न वदेत् प्रमेहं रक्तस्य पित्तस्य हि स प्रकोपः॥"

हेत्वादिभिर्निदानादिभिरुक्तलक्षणलक्षितैर्भावैः स्वस्वाधिकारोक्तैर्यथावद् यथाविधि अनुमानादुत्तक्तविधानेनानुबुध्येत उपदेशेन ज्ञातान् पश्चात् बुध्येत। उपसंहरति—इत्यर्थैरित्यादि। इति निदानादिपञ्चकरूपस्यार्थस्य संग्रहो निदानस्थानस्य उद्दिष्टः संक्षेपेणोपदिष्टो भवति। अत्र निदानशब्देन हेत्वादीनि पञ्च गृह्यन्ते; निदीयते प्रतिपद्यते व्याधिरनेनेति व्युत्पत्तेः। ननु निदानादिपञ्चानामेवमस्तु स्वरूपं तेन कथं ज्वरादिरुपलभ्यते इत्याकाङ्क्षायामाह—तमित्यादि। तमुद्दिष्टं निदानस्थानस्यार्थसंग्रहं निदानादिपञ्चकमर्थं विस्तरेण प्रतिरोगमुपदिशन्तो वयं भूयस्तरं प्रतिरोगं निदानादिप्रत्येकेन भूयिष्ठातिशयमनु निदानस्थाने चिकित्सास्थाने च व्याख्यास्यामः॥ ७॥

इति; तथा, लिङ्गनिश्चितेऽपि व्याधौ पूर्व्वरूपेणासाध्यत्वमुक्तम्; यथा—"पूर्व्वरूपाणि सर्व्वाणि ज्वरोक्तान्यतिमात्रया। यं विशन्ति विशत्येनं मृत्युर्ज्वरपुरःसरः" इति; तस्मान्निदानादिपञ्चकमभिधातव्यमेव। ननु लिङ्गेन व्याधिः परीक्षणीय इति वचनाल्लिङ्गव्यतिरिक्तो व्याधिः इत्युक्तं भवति; तत्र च लिङ्गसमुदायव्यतिरिक्तो न व्याधिरुपलभ्यते; विषमारम्भविसर्गित्वादयो हि सन्तापसहिता ज्वराः, तथा प्रतिश्यायकासादेकादशरूपमेलक एव यक्ष्मा; नैवम्, लिङ्गत्वेन शास्त्रे प्रतिपादितानां तदतिरिक्तव्याध्यभावे लिङ्गत्वानुपपत्तेः; वचनं हि—"विषमारम्भमूलाद्यैर्ज्वर एको निरुच्यते"; विकारश्चेह दोषदूष्यमेलकविशेषो ज्वरादिशब्देनोच्यते; स च दोषदूष्यविशेषात्मा ज्वरोऽरुच्यादिभ्यो दोषदूष्यवैषम्यविशेषेभ्योऽर्थान्तरमेव; न च वाच्यम्—ज्वरलिङ्गारुच्यङ्गमर्दादिरूपधातुवैषम्यविशेषमेलको ज्वरोऽस्तु, अलं तदतिरिक्तज्वरकल्पनया; लिङ्गलिङ्गिभावश्च समुदायसमुदायिभेदात् भविष्यतीति; यतः, एवमप्यरुच्यङ्गमर्दादिधातुवैषम्यानुगतो धातुवैषम्यविशेषो ज्वररूपोऽवयवीति भिन्न एव वक्तव्यः; जङ्घाबाहुशिरोऽन्तराध्यवयवानतिरिक्तमेव शरीरमवयविरूपम्। न च दुःखमेव व्याधिरिति पूर्व्वमेव पराकृतम्; तेन दुःखरूपत्वाद् व्याधेरवयवित्वं न सम्भवतीति न वाच्यम्; लिङ्गानि तु स्वरूपेण व्याधयो भवन्ति, ते च बोद्धव्यव्याध्यपेक्षया लिङ्गं भवति; तदुक्तम् 'व्याधयस्ते तदात्वे तु लिङ्गानीष्टानि नामयाः" इति; लिङ्गलिङ्गिभावश्च जिज्ञासावशाद् भवति; यद् वक्ष्यति—'विषमारम्भमूलानां ज्वर एको हि लक्षणम्। विषमारम्भमूलैश्च ज्वर एको निरुच्यते॥' अस्य चार्थमपस्मारनिदाने प्रकरणागतं व्याख्यास्यामः; तस्मात् सुस्थितं व्याधिगमकत्वं निदानादिपञ्चकस्येत्यर्थः।

इतीत्यादौ इति परिसमाप्तौ। निदानस्थानस्येति सर्व्वव्याधिनिदानस्य। अर्थसंग्रह इत्यनेनैव संक्षेपार्थाभिधाने लब्धे, 'उद्दिष्टः' इति संक्षेपाभिधायिपदकरणेन संक्षेपस्यापि संक्षेपाभिधानमेतदिति दर्शयति; तमिति सामान्यनिदानोद्देशम्; अतो निदानोद्देशमात्रतो भूयस्तरमुपदिशन्तो विस्तरेण व्याख्यास्याम इति योजना; तेनैतदतिसंक्षेपकथनापेक्षया प्रपञ्चकथनमेवेह विस्तरशब्दार्थ इति दर्शयति; तेन निदानादीनां यावद विस्तरकथनमुत्तरत्रोपपन्नं भवति॥ ७॥

तत्र प्रथमत एव तावदाद्यान् लोभातिद्रोह*कोपप्रभवानष्टौ व्याधीन् निदानपूर्व्वेण क्रमेणानु व्याख्यास्यामः। तथा सूत्र-संग्रहमात्रं चिकित्सायाः, चिकित्सिते चोत्तरकालं† यथोद्दिष्टं

गङ्गाधरः—ननु सर्व्वान्नेव व्याधीन् किं भूयस्तरेण निदानस्थाने व्याख्यास्यसीति? अत आह—तत्रेत्यादि। तत्र निदानादिपञ्चानामर्थस्य भूयस्तरत्वेनानुव्याख्यातव्यत्वे प्रथमत एव निदानस्थान एवाष्टौ व्याधीन् निदान-पूर्व्वेण द्रव्यगुणकर्म्मरूपसमवायिकारणोपदेशपूर्व्वकेण क्रमेण पूर्व्वरूपादुपदेशेनानु अत ऊर्द्ध्वं व्याख्यास्यामः। तथा चिकित्सायाः सूत्रसंग्रहमात्रमनु व्याख्यास्यामः। ननु कुतोऽष्टौ व्याधीन् व्याख्यास्यसीत्यत आह—तावदाद्यानित्यादि। तावदाद्यान् तावतां व्याधीनां मध्ये पूर्व्वतनत्वेनोद्भूतान्। नन्वष्टानां व्याधीनामाद्यत्वं यौगपद्येनोत्पत्तिं विना न सम्भवति इत्यत आह—लोभेत्यादि। लोभातिद्रोहकोपाणां परमाणुकालेऽपि यौगपद्याभावात् दिनाहोरात्रपक्षमासर्त्तु रूपस्थूलकालेन यौगपद्यसम्भवाद् दिनादिकालेन युगपदुत्पन्नत्वं ख्यापितम्। तेन दक्षाध्वरध्वंसे ज्वरोत्पत्त्यनन्तरं रक्तपित्ताद्युत्पत्तिर्व्याख्यास्यमाना संगच्छते।

अथ निदानपूर्व्वक्रमेण व्याख्याने कर्त्तव्ये उपशयस्यापि भूयस्तरत्वेन व्याख्याने प्राप्ते सूत्रसंग्रहेण व्याख्यानमिह कार्य्यमिति ज्ञापनार्थमाह—सूत्रसंग्रहमात्रं चिकित्साया इति। प्रतिरोगमुपशयन्तु न भूयस्तरमत्र

चक्रपाणिः—तत्रेत्यादि। ज्वराद्यष्टविधरोगस्य निदानस्थाने कथनं प्रतिजानीते; "प्रथमत एव तावद्" इत्यनेन पश्चाच्चिकित्साभिधेयानर्शःप्रभृतीन् सूचयति। "आद्यान्" इत्यनेन आदौ दक्षाध्वरोद्ध्वंसे उत्पन्ना ये, तेषामिह कथनं दर्शयति; यद्यपि च राजयक्ष्मा पृथगेवोत्पन्नः, वचनं हि—"अतिव्यवायात् पुनर्नक्षत्रराजस्य यक्ष्मा"; तथाप्यस्य प्राधान्यादिहाभिधानम्; यद्यपि च दक्षाध्वरोद्ध्वंसोद्भूतानपस्मारान्तानभिधाय पृथगुत्पन्नस्य यक्ष्मणोऽभिधानमुचितम्, तथाप्युन्मादापस्मारयोरागन्तुत्वेन शोषमप्यभिधायान्तेऽभिधानम्। "लोभाभिद्रोहप्रभवान्" इत्यनेन जनपदोद्ध्वंसनीये "प्रागपि चाधर्म्मादृते न रोगोत्पत्तिरभूद्" इत्यनेन वक्ष्यमाणानां ज्वरादीनां लोभाभिद्रोहजन्यतां दर्शयति; अनेनाधर्म्मजत्वं ज्वरादीनामुक्तं भवति। निदानपूर्व्वेणेति निदानप्रथमेन। क्रमेणेति रोगसामान्योक्तनिदानपूर्व्वरूपरूपोपशयसम्प्राप्तिरूपेण; अयञ्च क्रमः

* अभिद्रोहेति पाठान्तरम्।

† उत्तरकालं यथोपचितविकाराननुव्याख्यास्याम इति चक्रसम्मतः पाठः।

विकाराणाम्। इह खलु ज्वर एवादौ विकाराणामुपदिश्यते तत्प्रथमत्वाच्छारीराणाम् ॥ ८ ॥

व्याख्यास्यामः, किन्तु सूत्रसंग्रहमात्रमस्मिन् स्थाने व्याख्यास्यामः। ननु भूयस्तरमुपशयं कुत्र व्याख्यास्यसि इत्यत आह—चिकित्सिते चेत्यादि। उत्तरकालं चिकित्सास्थानोपदेशकाले प्रतिरोगं चिकित्सिते चिकित्सिताध्यायेषु यथोदितं श्लोकस्थाने रोगचतुष्के यथोद्दिष्टं तथोद्दिष्टमनतिक्रम्य विकाराणां चिकित्सायाः भूयस्तरमनुव्याख्यास्याम इति।

नन्वष्टानामाद्यानां व्याधीनामादौ क उपदेक्ष्यते इति? अत आह—इहेत्यादि। इह निदानस्थाने विकाराणां लोभादिप्रभवानामष्टानां वाच्यत्वेन प्रतिज्ञातानामादौ ज्वर एवोपदिश्यतेऽन ऊर्द्ध्वम्। ननु कुतो ज्वर एवाष्टानामादावुपदिश्यते इत्यत आह—तदित्यादि। ननु गर्भस्थस्यापि कामो मानसव्याधिः प्राथमिकत्वेन दृश्यते कथं तत्प्रथमत्वमित्यत आह—शारीराणामिति। शारीराणां व्याधीनां गर्भेऽपि सहजार्शःप्रभृतिर्भवतीति चेन्न। अवैगुण्येन जातस्य पुंस इत्यभिप्रायात्। अवैगुण्येन जायमानो हि सज्वर एव जायते-ऽथवा लोके शारीराणामुत्पत्तेः पूर्व्वं प्रथमं ज्वरस्योत्पत्तेः। वक्ष्यते हि ज्वरस्तु खलु महेश्वरकोपप्रभव इति, तथा चिकित्सास्थाने विस्तरेण वक्ष्यते ॥ ८ ॥

क्वचित् प्रयोजनवशाद्बाध्यते; यथा अत्रैव ज्वरे,—अग्रे हि रूपमभिधाय पूर्व्वरूपमभिधातव्यम्; क्रमभेदप्रयोजनञ्चेह,—यत्, रूपाण्यत्र प्रतिज्वरमभिधातव्यानि; न तु प्राग्रूपाणि प्रतिज्वरमभिधातव्यानि; तेन सर्व्वसाधारणत्वात् रूपमभिधाय सामान्यं प्राग्रूपमभिधातव्यम्; तथा सूत्रसंग्रहमात्रं चिकित्साया व्याख्यास्याम इति सम्बन्धः; निदाने च चिकित्साभिधानप्रयोजनं प्रागेवोक्तम्। 'सूत्रम्' इति कृत्वा यत् संग्रहं करोति, तेन सूत्रस्यापि संक्षेपेणाभिधानं दर्शयति; तथा च चिकित्सासूत्रमपीह किञ्चिन्न वक्तव्यम्; यथा "लङ्घनयवाग्वादयश्चिकित्सिते" इत्यनेनैव चोत्तरकालत्वे लब्धे, पुनः 'उत्तरकालम्' इति वचनम्; चिकित्सितस्थानेऽपि ज्वराद्यभिधानोत्तरकालमेव यथोपचितविकाराणां निदानादिकथनं दर्शयति; यथोपचितमिति ये ये उपचिता विकाराः शोषार्शःप्रभृतयस्तान्; किंवा, यथाचितम् इति पाठः, तत्रापि 'यथाप्रधानम्' इत्यर्थ उन्नेयः। चिकित्सिते च विकाराणां निदानाद्यभिधानं निदानादिनाव्यवधानेन प्रतीते विषये चिकित्सा सम्यक् प्रतीयते इत्यभिप्रायेण। अत एव च ज्वरादीनामपि च पुनर्निदानाद्यभिधास्यति, इह तु ज्वरादीनां निदानाद्यभिधानं बहुवक्तव्यत्वेन स्थानभेदं कृत्वा कृतम्, स्थानभेदकरणेन च

अथ खल्वष्टाभ्यः कारणेभ्यो ज्वरः संजायते मनुष्याणाम्; तद् यथा—वातात् पित्तात् कफाद् वातपित्ताभ्यां वातकफाभ्यां पित्तश्लेष्मभ्यां वातपित्तश्लेष्मभ्य आगन्तोरष्टमात् कारणात् ॥ ९ ॥

गङ्गाधरः—अथ निदानपूर्व्वेण क्रमेणानु व्याख्यास्याम इत्यादि यत् प्रतिज्ञातं, तथैव व्याचष्टे—अथेत्यादि। अथ व्याख्यानादिक्रमोपदर्शनानन्तरं, खलुशब्दो वाक्यालङ्कारे। अष्टाभ्य इत्यादि। मनुष्याणामिति प्राधान्यात् सर्पकरभादीनामनावश्यकत्वाद् व्यवच्छेदः। अष्ट कारणानि विवृणोति—तद् यथेत्यादि। वातादित्यादि। यथाह सुबन्ततया कारणेतिपदं योज्यं, कारणोपदेशे वृद्धिकारणदर्शनात् क्षयकारणोपदर्शनाभावाच्च कारणत्वन्तु वातादीनां ज्वरादिषु न क्षयावस्थायां सम्भवति तेन वृद्धाद् वातादित्येवमादि व्याख्येयं, वातादित्यादि प्रत्येकस्य निर्देशात् वातपित्ताभ्यामित्यादिकं चतुष्कं विकृतिविषमसमवायेन प्रकृतिसमसमवायेन च समस्तत्वेन बोध्यम्। तत्र च वातादिनूनाधिक्यादिकत्वेऽपि तदात्मकत्वेनानतिरिक्तत्वाद् द्वन्द्वत्रयमेकैकमेव सन्निपातश्चैक एव नाधिकः। आगन्तोरिति। आगमयति हठादुत्पादयति इत्यागन्तुरागच्छति हठादुत्पद्यते यतो वेति। भूताद्यभिषङ्गादिः अनेकोऽप्यागन्तुरागन्तुत्वसामान्येनैक एव गणित इति नाधिकत्वमिति। तथा गणनयाष्टत्वाधिकत्वाशङ्कावारणायोक्तमष्टमादिति। नन्वष्टभ्यः कारणेभ्य इति किमसात्म्येन्द्रियार्थसंयोगप्रज्ञापराधपरिणामेष्वन्तर्भूतेभ्यः केभ्यश्चिदित्यतो वातादित्यादीनां विशेषणमाह—कारणादिति। अष्टाभ्यः कारणेभ्य इति यत् तद्वातात् कारणादसात्म्येन्द्रियार्थसंयोगादिभिः प्रेरकैः प्रेरितादित्येवम्

चिकित्सावदायुर्व्वेदे निदानस्यापि ज्ञेयत्वेन प्राधान्यं दर्शयति। इह खल्वित्यष्टविधव्याधिनिदाने वक्तव्ये। 'शारीराणाम्' इत्यनेन, कामक्रोधादिमानसं रोगं प्रति न ज्वरस्य प्रथमत्वमिति दर्शयति ॥ ८ ॥

चक्रपाणिः—ज्वरस्य निरूपणीयस्य कारणकृतं भेदमाह—अथेत्यादि। एतच्च कारणं वातादि सन्निकृष्टम्। मनुष्याणामितिवचनेन गोगजशकुन्यादीनां नावश्यमिदं ज्वराष्टत्वमनुगामीति दर्शयति; तथा हि—हस्त्यादीनां पाकलादयो नाष्टविधाः प्रतिपाद्यन्ते। आगन्तोरिति वक्तव्ये 'अष्टमाद्' इतिवचनं, आगन्तोरभिघातादिचतुष्कारणभेदेऽपि एकत्वोपदर्शनार्थम्; आगन्तुर्हि

तस्य निदानपूर्व्वरूपलिङ्गोपशयसम्प्राप्तिविशेषान् अनुव्याख्यास्यामः ॥ १० ॥

आदितो ज्वरः संजायते। तेन जनिकर्त्तुः प्रकृतिरित्यनेनापादानात्। कारणादिति प्रकृतिभूतात् कारणात्। तेन दोषः समवायी कारणं ज्वरादौ घटादिषु मृदादिवत्। आगन्तुरपि तथा। ननु द्वौ ज्वरावित्युक्तमष्टोदरीये शीतोष्णाभिप्रायेण कथमत्राष्ट ज्वरा उक्ता वातादिकारणभेदेन? अत्रोच्यते, शीतोष्णाभिप्रायेण ज्वरस्य द्वित्वोक्तौ नाशेषविशेषेण चिकित्सा भवति वातज्वरस्य शीतविपरीतोष्णक्रिया कफज्वरस्यापि युक्तापि न हि स्निग्धानुवासनादिक्रिया युज्यते, तस्माद् वातादिषु स्निग्धशीतरुक्षादिक्रियाविशेषविधानार्थं वाताद्यात्मकत्वेन वातादिकारणभेदो दर्शित इति। एवमभिषङ्गादिविपरीतक्रियाविधानार्थं न तु तत्तदागन्तुजेऽपि उत्तरकाले वाताद्यनुबन्धे सति वातादिविधानमिति ज्ञापनार्थञ्चेति ॥ ९ ॥

गङ्गाधरः—ननु निदानपूर्व्वेण क्रमेणेति प्रतिज्ञातं भवता, कथमादौ संख्योक्तेति चेद्? न, यद्यपि ह्यत्र पूर्व्वमसात्म्येन्द्रियार्थसंयोगादि त्रिविधं निदानमागन्तुनिजयोः प्र रणमुक्तं हेतुर्निमित्तमायतनमित्यादिपर्य्यायवचनेन समवायिकारणवाचित्वं हेत्वादिपदानां न व्यवच्छिन्नं कृतमिति ज्ञापनार्थं प्रत्येकं निदानादिव्याख्यानार्थञ्चादौ प्रकृतिभूतकारणभेदेन संख्यानिर्देशं कृत्वा प्रत्येकं निदानादिकं यथासम्भवं व्याखरातुं प्रतिज्ञायते—तस्येत्यादि। तस्य वातादिप्रकृतिभूतकारणभेदेन भिन्नस्य ज्वरस्य यथासम्भवं विशेषतस्तु असात्म्येन्द्रियार्थसंयोगादित्रयरूपं निदानं सामान्यतः पूर्व्वरूप विशेषतो लिङ्गानुपशयः सम्प्राप्तयश्चात्र व्याख्यास्यन्ते व्याधीनामनुत्पन्नावस्थायां पूर्व्वरूपाणि भवन्ति। तन्निबन्धनविशेषप्रयोजनसाध्यत्वासाध्यत्वादिज्ञानार्थं सर्व्वत्र व्याखरास्यन्ते ॥ १० ॥

कारणभेदोत्पन्नोऽप्येकरूप एव; यतः आगन्तुः सर्व्वो व्यथापूर्व्वमेव भवति; यस्तु तत्र, "कामशोकभयाद् वायुः" इत्यादिना भेदो वक्तव्यः, स वातादिकृत एवेति भावः ॥ ९ ॥

चक्रपाणिः—तस्येत्यादौ 'तस्य' इति ज्वरस्य; विशेषानिति निदानादिभिः प्रत्येकं सम्बध्यते; निदानादिविशेषाश्चेह रोगान्तररक्तापित्ताद्यपेक्षया तथा परस्परं वातादिज्वरापेक्षया च यथासम्भवं बोद्धव्याः; तेन पूर्व्वरूपविशेष इह रक्तपित्तादिपूर्व्वरूपापेक्षया बोद्धव्यः, पूर्व्वरूपस्य विशेषेण इहानभिधानात्; उपशयविशेषानभिधानञ्च निदानविशेषादेव लभ्यते; यतः निदानविपर्य्ययेण

तद् यथा — रुक्षलघुशीतवमनविरेचनास्थापनशिरोविरेचनातियोग-व्यायाम-वेगसन्धारणानशनाभिघातव्यवायोद्वेगशोक-शोणिताभिषेक-जागरण-विषम--शरीरन्यासेभ्योऽतिसेवितेभ्यो वायुः प्रकोपमापद्यते।

स यदा प्रकुपितः प्रविश्यामाशयमुष्मणः स्थानमुष्मणा

गङ्गाधरः—तत्र वातादिज्वरनिदानादीन्याह—तद् यथेत्यादि। रुक्षेत्यादि वातज्वरनिदानम्। रुक्षाश्च लघवश्च शीताश्चौषधाहारदेशकालाः। वमन-विरेचनास्थापनशिरोविरेचनानां चतुर्णामन्यतमस्यातियोगश्च। व्यायामश्च इत्यादीनां द्वन्द्वसमासः। शोणिताभिषेकः शोणितमोक्षणम्। एषामति-सेवनेनातियोगस्य लाभात् पुनः कथं वमनाद्यतियोग उक्त इति? तत्रोच्यते, अतियोगयुक्तवमनादीनामिव सम्यग्योगेनाप्येषामतिसेवनेन वायुः यत् प्रकुप्यति सोऽपि ज्वरमभिनिर्व्वर्त्तयति न केवलोऽतियोगयुक्तवमनादिना वृद्धो वायुरिति बोधनार्थं पुनरुक्तः।

अथ निदानानन्तरं स्थानसंश्रयात् पूर्व्वरूपाणि यद्यपि भवन्ति, तथापि यथानुपूर्व्व्या व्याधिर्जायते तथानुपूर्व्व्या शिष्यबोधनार्थं व्याधेः सम्प्राप्त्युपदेशो युज्यते, तेन हि चयप्रकोपप्रसरस्थानसंश्रया ज्ञायन्ते

उपशयमभिधास्यति; पूर्व्वरूपञ्चेह विशिष्टमव्यक्तलिङ्गविशेषरूपमेव ज्ञेयम्; सम्प्राप्तेस्तु वक्ष्यमाणाया इहाप्रतिज्ञानम्, तस्याः सर्व्वरोगे सम्प्राप्तिभेदाभिधानेनैव कथितत्वात्, तथा निदानादिवत् सम्प्राप्तेर्व्याधिबोधनं प्रत्यप्रधानत्वाच्च। यश्च सम्प्राप्तिभेदोऽभिधातव्यः स सर्व्व-रोगसाधारण एव; भेदस्तु तस्या वातादिदोषमात्रकृत एव; वातादिभेदश्च निदानभेद एव; अन्ये तु ब्रुवते—सम्प्राप्तिं नाभिधास्यत्येवायम्, यदेतत्;—'स यदा प्रकुपितः' इत्यभिधास्यति, तन्निदानरूपवातादिधर्म्मकथनमिति निदानान्तर्गतमेव ॥ १० ॥

चक्रपाणिः - रुक्षेत्यादि। वातप्रकोपणं प्रति रुक्षस्य प्रधानत्वेनाग्रेऽभिधानम्; रुक्षो हि गुणो वातगुणेषु प्रधानम्; आस्थापनं यद्यपि वातहरमुक्तम्,—"आस्थापनानुवासनन्तु खलु सर्व्ववातविकारेषु प्रधानम्" इति वचनात्, तथापीहास्थापनस्यातियोगो वातहेतुरुक्त एवेति न दोषः; वचनं हि—"उत्क्लेशाग्निवधौ स्नेहान्निरूहात् पवनाद् भयम्"; निरूहश्चानुवासनं कृत्वा युक्त एव मात्राकृतः साधारणवातहर इति सिद्धान्तः।

'स यदा' इत्यादिना सम्प्राप्तिमाह—'यदा' इति वचनात्। एवं कुपितोऽपि वायुर्यदा आमाशयप्रवेशादिसम्प्राप्तियुक्तो भवति, तदैव ज्वरं करोति नान्यदेति दर्शयति;

सह मिश्रीभूत आद्यमाहारपरिणामधातुं रसनामानम् अन्ववेत्य रसस्वेदवहानि स्रोतांसि पिधायाग्निमुपहत्य पक्तिस्थानात् उष्माणं वहिर्निरस्य केवलं शरीरमनुपद्यते, तदा

ततः पूर्व्वरूपोपदेशार्थं ते चयादयो न पुनर्वाच्या भवन्ति; इति मनसि कृत्वा निदानानन्तरं वातज्वरसम्प्राप्तिमाह—स यदेत्यादि। स वायुर्यदा उक्तरुक्षाद्यन्यतमैकानेकनिदानतः सञ्चितः सन् यदा वातज्वरकारणाशुभकर्म्मफलेन संसृज्यमानः प्रचोदितः प्रकुपितः स्वस्थानात् प्रसरन् आमाशयं प्रविश्य नाभिस्तनान्तरं जन्तोरामाशय इति स्मृत इत्युक्तरूपं प्रविश्य सामान्यतो वक्ष्यमाणं पूर्व्वरूपं मुखवैरस्यं गुरुगात्रत्वमित्यादिकं जनयति, ततो यदुष्मणो जठराग्नेः स्थानं नाभेर्वामत ऊर्द्धं स्थानं तदात्मकपच्यमानाशयं प्रविश्य तत्रस्थेनोष्मणा जठराग्निना मिश्रीभूय आद्यं रसनामानमाहारपरिणामतो यो द्रवरूपो धातुस्तं धातुं न तु तत्पोषितं रसनामानं धातुं शारीरम्। अन्ववेत्यानुगम्य। रसवहानि सप्तशतानि सूक्ष्मच्छिद्राणि नाभिकन्दजानि स्रोतांसि स्वेदवहानि रोमकूपादीनि पिधायावृत्य। अग्निमिति उक्तजठराग्निम् उपहत्य मन्दीकृत्य पक्तिस्थानादिति नाभेर्वामत ऊर्द्धस्थानात् उष्माणं तस्य जाठराग्नेरौष्ण्यं वहिर्निरस्य कियदंशेन रोमकूपतस्त्वग्गतं कृत्वा केवलं शरीरं कृत्स्नं देहमनुपद्यते। एतेन स एवाग्निर्वहिर्देहे उष्णतया भाति वायुर्व्यानाख्यो यः कृत्स्नदेहचरः न तु प्राणादिसंज्ञ इति

'प्रविश्यामाशयम्' इत्यनेन ज्वरकर्त्तुर्दोषस्यामाशयदूषकत्वं दर्शयति; अत एव सर्व्वज्वरे आमाशयविशुद्ध्यर्थं लङ्घनमुत्सर्गतो वदन्ति; यद्यपि चामाशयप्रवेशादेवोष्मणापि मिश्रत्वं लभ्यत एव; यतः आमाशय एव वह्निस्थानम्, "नाभिस्तनान्तरं जन्तोरामाशय इति स्मृतः" इति वचनात्, तथापि वह्निस्थानस्यामाशयैकदेशत्वेनामाशयप्रवेशेऽपि नावश्यं ग्रहणीरूपवह्निस्थानदुष्टिर्विशेषेण लभ्यत इति; अत एवोक्तम्—"उष्मणा सह मिश्रीभूतः" इति। 'रसनामानम्' इत्युच्यमाने आहाररसेऽपि मधुररसादौ प्रसक्तिः स्यात्, अत उक्तम्—'आहारपरिणामभवो धातुराहारपरिणामधातुस्तमिति; तेन आहारपरिणामधातुत्वञ्च परम्परया रक्तादिष्वप्यस्तीत्याह—'आद्यम्' इति प्रथममित्यर्थः। रसमिति वक्तव्ये 'रसनामानम्' इति यत् करोति; तेन रसतीति 'रसः' इति व्युत्पत्तिमात्रेण रक्तादिषु रससंज्ञां निषेधयति; यत्रैव रससंज्ञा रूढा, तं ग्राहयति. एवमन्यत्रापि च यत्पदमधिकार्थमिह प्रतीयते तत् स्पष्टार्थमेव, यतस्त्रिविधशिष्यबुद्धिहितमेव विस्पष्टार्थं तन्त्रं युज्यते। अन्विति यथोक्तक्रमेण; अवेत्य गत्वा; पिधायेत्यवरुध्य;

ज्वरमभिनिर्व्वर्त्तयति। तस्येमानि लिङ्गानि भवन्ति। तद् यथा—विषमारम्भविसर्गित्वम् उष्मणो वैषम्यं तीव्र-तनुभावानवस्थानानि ज्वरस्य, जरणान्ते दिवसान्ते निशान्ते

सूचितः। तदा ज्वरमभिनिर्व्वर्त्तयतीति यथात्मात्मानं गर्भमभिनिर्व्वर्त्तयति तथा प्रकुपितो वायुरेव यदा कृत्स्नं देहमनुपद्यते तदात्मानं ज्वररूपेणाभि-निष्पादयत्यन्यथा तु तथा प्रकुपितोऽपि न ज्वररूपेणाभिनिष्पद्यते इति यदा-तदेतिपदाभ्यां ख्यापितमिति। एवंजायमानस्यास्य लिङ्गान्यव्यक्तानि यथा गर्भे बालस्य, तानि व्यक्तानि प्रादुर्भूतस्य लिङ्गानि भवन्ति यथा जातस्य बालस्येति, तदाह—तस्येमानीत्यादि। तस्य प्रादुर्भूतस्याभिव्यक्तस्य वातज्वरस्य इमानि सम्प्राप्तावव्यक्तानि। इमानीति विवृणोति—तद् यथेत्यादि। विषमारम्भ-विसर्गित्वमिति ज्वराभिव्यक्तिः कस्मिंश्चिद् दिने स्वल्परूपेण कस्मिंश्चिदिने-ऽधिकरूपेण इति विषमारम्भित्वम्, कचिद्दिने सर्व्वथा ज्वरमुक्तिः कचिदिने मन्दतामात्रमिति विषमविसर्गित्वमिति वायोरस्थिरत्वस्वभावात्। एवमुष्मणो जठराग्नेरपि वैषम्यं तीव्रतनुभावानवस्थानरूपम्। जरणान्ते जीर्णेऽन्ने सति, दिवसान्तेऽपराह्णे, निशान्ते रात्रिशेषे रात्र्यन्तस्य वायुकालत्वेऽपि शैत्यातिशयत्वेन रात्रेश्च सामान्यतः श्लेष्मकालत्वेन श्लेष्मानुबन्धं विना केवलवायुना न

पक्तिस्थानादितिवचनेन पाकस्थानात् पाचकाग्निस्थानात्; उष्माणमिति पाचकवह्निम्; बहिरिति पक्तिस्थानव्यतिरिक्तशरीरे; यद्यपि चोष्माणं निरस्येतिवचनादेव 'पक्तिस्थानाद्' इति लभ्यते, तथापि 'पक्तिस्थानाद्' इतिवचनेन पक्तिस्थानात् कृत्स्नस्य वह्नेर्निरसनं दर्शयति, इह चोष्मशब्देन पाचकाग्निं व्यपदिशन् पाचकस्य वह्नेरुष्मरूपतां दर्शयति, बाह्यवह्निरिव दशज्वालाकरं पित्तं निषेधयति; अत एव च वह्नेर्निरसनादग्निमान्द्यं ज्वरे दर्शितं भवति। वायुश्चात्रातिवृद्धत्वेन वह्निनिरासकस्तेनाग्निर्दीप्तिं न करोति; यत्र हि प्रेरकमात्रो भवति वायुः, तत्र वह्नेर्वृद्धिं करोति; यथा—मेदस्विनः कोष्ठे चरन् वायुरग्निवृद्धिकरो भवति।

लिङ्गान्याह—तद्यथा विषमेत्यादि। तदिति सामान्येन स्त्रीपुंनपुंसकलिङ्ग-वक्ष्यमाणरूपप्रत्ययसमर्पकम्, सर्व्वलिङ्गप्रत्ययसमर्थं हि 'तद्' इति सर्व्वनाम युक्तम्। यथेत्युदाहरणे। आरम्भ उत्पादः, विसर्गो मोक्षः, तौ विषमौ यस्य स विषमारम्भविसर्गी; विषमत्वञ्च कदाचिच्छिरो गृहीत्वा भवति, कदाचित् पृष्ठं कदाचिदङ्गमित्यादि. एवं मोक्षोऽपि कदाचिच्छिरोऽग्रे मुच्यते इति; किंवा, ज्वरारम्भमोक्षकालानवस्थितत्वमेव वैषम्यम्. उष्मणो वैषम्यमिति क्वचिच्छरीरप्रदेशे महानुष्मा क्वचिन्मन्द इत्यादि। तीव्रतनुभावानवस्थानानीति तीव्रभावस्तनुभावश्च ज्वरस्य

घर्म्मान्ते वा ज्वराभ्यागमनमभिवृद्धिर्वा ज्वरस्य, विशेषेण परुषारुणवर्णत्वं नखनयनवदनमूत्रपुरीषत्वचाम् अत्यर्थं क्लृप्तीभावश्च। अनेकविधोपमाश्चलाचलाश्च वेदनास्तेषां तेषामङ्गावयवानाम्। तद् यथा—पादयोः सुप्तता पिण्डिकयोरुद्वेष्टनं जानुनोः केवलानाञ्च सन्धीनां विश्लेषणमूर्व्वोः सादः

ज्वराभिनिर्वृत्तिरिति, घर्म्मान्ते वर्षासु, वाशब्दः जरणान्तादिकालविकल्पव्यवस्थायां ज्वराभ्यागमनमनुत्पन्नस्य ज्वरस्योत्पत्तिरभिवृद्धिर्वा उत्पन्नस्य ज्वरस्य प्रकोपः। बलकालस्य विशेषस्य सम्प्राप्तिविशेषत्वेऽपि तत्तत्कालविशेषे जन्माभिवृद्ध्योर्लिङ्गत्वख्यापनाय वचनमिदं बोध्यम्। विचित्रलक्षणान्तरमाह—विशेषेणेत्यादि। विशेषणेति वायोः सर्व्वशरीरचरत्वेऽपि नखादीनां परुषारुणत्वमधिकमन्यत्र तु स्वल्पमिति व्याधिस्वभावात्। अत्यर्थं क्लृप्तीभावश्चेति अतिशयानुपङ्क्तित्वं नखनयनादीनामेव। अनेकविधोपमाः सूचीवेधादिनानारूपाश्चलाचलाः क्षणिकान्यथाभावाश्च वेदनास्तेषां तेषामङ्गावयवानाम्। ननु केषां केषामङ्गावयवानां किं किमुपमाश्चलाचला वेदना इत्यतस्तद्विवरीतुमाह—तद् यथेत्यादि। पादयोरित्यादि। सुप्तता स्पर्शानभिज्ञता। पिण्डिकयोर्जान्वधोमांसपिण्डयोरुद्वेष्टनं दण्डादिनेव ताड़नं, जानुनोः केवलानां कृत्स्नानां

कालोऽप्रतिनियत इत्यर्थः। एतत् सर्व्वं वायोरनवस्थितत्वेनोपपन्नम्; यच्च वायोर्जरणान्तदिवसान्तादिषु बलवत्कारर्यकर्त्तृत्वं प्रोक्तम्, तदपि प्रायिकत्वेन ज्ञेयम्; अन्यथा, एतदेवारम्भादिवैषम्यं न स्यात्; यदि कालविशेषेषु जरणान्तादौ शरीरप्रदेशविशेषे च जङ्घादौ प्रतिनियमेन वातकोपः स्यात्, तदा शरीरप्रदेशविशेषे वातस्थाने जङ्घादौ कालविशेषे जरणान्तादौ च वातप्रकोपः प्रायिको ज्ञेयः; एतमेव प्रायिकवातकालमाश्रित्याह—जरणान्त इत्यादि; धर्म्मान्त इति प्रावृषि; मुक्तप्रभावतो ज्वरस्य सततकादेरभ्यागमनं, नित्यानुषक्तस्य त्वभिवृद्धिरिति व्यवस्था। परुषारुणत्वञ्च नखादिष्वेव प्रव्यक्तमुपलभ्यत इति कृत्वा नखादय इत्युच्यते; त्वग्ग्रहणेनैव वदनग्रहणे लब्धेऽपि वदनग्रहणं वदनत्वचि विशेषेण परुषत्वादिदर्शनार्थम्। क्लृप्तीभावोऽप्रवृत्तिः, सा च योग्यतया मूत्रपुरीषयोरेव नखादिषूक्तयोर्मन्तव्या; किंवा, क्लृप्तीभावो भेदः स्फुटनमिति यावत्, स च नखादीनाम्। चलाश्च काश्चिद् वेदना अचलाश्च काश्चिन्नित्यानुषक्तत्वेनेति चलाचलाः; किंवा, अत्यर्थं चलाश्च चलाचलाः; पिण्डिका जान्वधोजङ्घामध्यमांसपिण्डिका; भग्नं

कटीपार्श्वपृष्ठस्कन्धबाह्वंसोरसाञ्च भग्नरुग्णमृदितमथितचटितावपीड़ितावनुन्नत्वमिव, हन्वोश्चाप्रसिद्धिः स्वनश्च कर्णयोः शङ्खयोर्निस्तोदः कषायास्यता आस्यवैरस्यं वा मुखतालुकण्ठशोषः, पिपासा हृदयग्रहः शुष्कच्छर्द्दिः शुष्ककासः क्षवथूद्गारविनिग्रहोऽन्नरसखेदः प्रसेकारोचकाविपाकाः, विषादजृम्भाविनामवेपथुश्रमभ्रमप्रलापप्रजागरण-रोमहर्षदन्तहर्षाः तथोष्णाभिप्रायता, निदानोक्तानुपशयो विपरीतोपशयश्चेति वातज्वरलिङ्गानि स्युः ॥ ११।१२ ॥

सन्धीनाञ्च विश्लेषणं द्विधेव। ऊर्व्वोः सादोऽवसन्नता। कट्यादीनां यथाक्रमं भग्नादित्वमिव वेदना कट्याः भग्नत्वमिव पार्श्वयो रुग्णत्वमिव पृष्ठे मृदितत्वमिव स्कन्धे मथितत्वमिव बाह्वोरुत्पाटितत्वमिव असयोरवपीड़ितत्वमिव उरसो बन्धभूतत्वमिव वेदना इत्यर्थः। हन्वोश्चाप्रसिद्धिरचालनत्वमिव। स्वनश्च कर्णयोः शङ्खादिध्वनिरिव। शङ्खयोर्ललाटस्योभयतोभागयोर्निस्तोदः निःक्षेपतो वेदना। कषायास्यत्वमास्यकषायता आस्यवैरस्यं स्वभावरसान्यथाभावः। मुखादिशोषः। पिपासा मुखादिशोषाभावेऽपि जल पातुमिच्छा। हृदयग्रहो वक्षोग्रहः। शुष्कच्छर्द्दिश्छर्द्दिवेगमात्रम्। शुष्ककासो निष्ठेवनाभावे सति कासः। क्षवथूद्गारविनिग्रहः क्षवोद्गारयोरप्रवृत्तिः। अन्नरसखेदः खिद विघाते इति अन्नरसास्वादनविघातः। प्रसेको मुखस्रावः। विनामो नतशिरस्त्वम्। श्रमोऽनायासश्रमः। भ्रमश्चक्रस्थितस्येव भ्रमणम्। प्रलापोऽनर्थकासम्बन्धवचनमुष्णाभिप्रायता उष्णद्रव्यकामिता। निदानोक्तानुपशय इति। उक्ता ये रुक्षलघुशीतादयो निदानत्वेन तैरनुपशयो दुःखानुबन्धः। विपरीतोपशयश्चेति प्रस्तावात् निदानत्वेन उक्तरूपलघुशीतादीनां विपरीता ये स्निग्ध-

किञ्चिदवशेषेण च्छिन्नम्; मृदितं पार्श्वावमोटितम्; अवपाटितमेकदेशोत्पाटितम्; अवनुन्नं प्रेरितम्; एषाञ्च भग्नादीनां लोकत एवार्थावगतिः; यतः, लौकिकैरेव एते शब्दाः प्रसिद्धत्वेन तत्र तत्र शास्त्रैरभिधीयन्ते। हन्वोरप्रसिद्धिरिति हन्वोः स्वव्यापाराकरणम्; आस्यस्य वैरस्यमिति अरसज्ञता; अन्नरसखेदोऽन्नरसे मधुररसादौ खेदः सर्व्वरसेष्वनिच्छेत्यर्थः; किंवा अन्नरसस्य खेदो वमनमन्नरसखेदः। अर्हाश्चर्वक्ष्यमाणा वक्त्रे प्रविष्टस्यान्नस्यानभ्यवहरणा

उष्णाम्ल-लवण-क्षारकटुकाजीर्णभोजनेभ्योऽतिसेवितेभ्यः तथा तीक्ष्णातपाग्निसन्तापश्रमक्रोधविषमाहारेभ्यश्च पित्तं प्रकोपमापद्यते। तद् यदा प्रकुपितमामाशयं प्रविशत् एवोष्माणमुपसृजदाद्यमाहारपरिणामधातुं रसनामानम् अन्ववेत्य रसस्वेदवहानि स्रोतांसि पिधाय द्रवत्वादग्निमुपहत्य पक्तिस्थानादुष्माणं वहिर्निरस्य प्रपीड़यत् केवलं शरीरमनुप्रपद्यते, तदा ज्वरमभिनिर्वर्त्तयति। तस्येमानि लिङ्गानि भवन्ति। तद् यथा—युगपदेव केवले शरीरे ज्वरस्याभ्यागमनम्

गुरूष्णादयस्तरुपशयः सुखानुबन्ध इत्यनुपशयोपशययोर्वातज्वरस्य वृद्धिह्रासकरत्वेन वृद्धिह्रासाभ्यामुपलब्धिहेतुत्वेन निदानेऽनुपशयस्यान्तर्भावे पृथक् चोपशयस्योपादानमिति ताभ्यां वृद्धिह्रासे च व्याधिं वातजत्वादिरूपेण ज्ञापयत इति वृद्धिह्रासयोर्लिङ्गत्वेनेदं वचनं न त्वनुपशयोपशययोरिति। इति वातज्वरलिङ्गानि स्युरिमानीत्यर्थः ॥ ११।१२ ॥

गङ्गाधरः—क्रमिकत्वात् पित्तज्वरनिदानादीन्याह—उष्णेत्यादि। कटुकान्ता आहाराः। अजीर्णे सति भोजनम्। तीक्ष्णादीन्यद्रव्याणि। विषमाहारस्तु उष्णलवणादिद्रव्यव्यतिरेकेणापि पित्तं कोपयतीति ख्यापनार्थं पृथक्पदं कृतम्। तद् यदेति पित्तज्वरसम्प्राप्तिः। तत् पित्तं प्रकुपितमित्यादि पूर्ब्ववद् व्याख्येयम्। तत्र पित्तस्य तैजसस्याग्न्युपहन्तृत्वाभावाशङ्कानिरासायोक्तं द्रवत्वादिति। द्रवतैजसेनाद्रवतैजसोपघातः सम्भवतीति बोध्यम्। युगपदेवेत्यादिना पित्तज्वरलिङ्गानि। केवले कृत्स्ने शरीरे युगपदेव ज्वरस्याभ्यागमनमुत्पत्तिरभिवृद्धिः

बोद्धव्या; उष्णाभिप्रायता उष्णप्रियता। निदानोक्तानामनुपशय इति वचनेनैव विपरीत उपशयोऽर्थलब्धोऽपि स्पष्टार्थमुच्यते; किंवा अर्थापत्तेरनैकान्तिकत्वेन उच्यते; यथा,—नवज्वरे दिवास्वप्ने प्रतिषिद्धेऽर्थापत्त्या पुराणज्वरे दिवास्वप्नं प्राप्नोति, अथच तत्र दिवास्वप्नो न विहित इति अर्थापत्तेरनैकान्तिकत्वमस्ति; निदानोक्तानामित्यत्र 'उक्त'ग्रहणात्, यदेव निदानत्वेनोक्तम्, तस्यैवानुपशयित्वं दर्शितं, न पुनर्यस्यापातत्तो निदानत्वं प्रतिभाति; तेन मदात्ययादौ मद्यादेर्निदानत्वेन प्रतीयमानस्यापि उपशयित्वमेव ॥ ११।१२ ॥

चक्रपाणिः—उष्णेत्यादिना पित्तज्वरमाह—तद्यथेत्यादि पूर्ब्ववद् व्याख्येयम्; द्रवत्वाद् अग्निमुपहत्येतिवचनादुष्णस्यापि पित्तस्य द्रवत्वेनाग्निविपरीतेन गुणेनाग्निहन्तृतां दर्शयति;

अभिवृद्धिर्वा, भुक्तस्य विदाहकाले मध्यन्दिनेऽर्द्धरात्रे शरदि वा विशेषेण, कटुकास्यता, घ्राणमुखकण्ठौष्ठतालुपाकस्तृष्णा* मदो भ्रमो मूर्च्छा पित्तच्छर्द्दनम् अतीसारोऽन्नद्वेषः सदनं

प्रकोप इति द्वयम्। वाशब्देनाभिवृद्धिश्च ज्वरस्य विदाहकाले पच्यमानकाले। मध्यन्दिने त्रिभागीकृतदिनस्य मध्यभागे, एवमर्द्धरात्रेऽपि बोध्यम्। एवं दिवसान्तादिर्व्याख्यातः। वाशब्देनानियतत्वं ख्यापितम्। विशेषेण कटुकास्यता तिक्तास्यता। महारोगाध्याये हि पित्तनानात्मजेषु तिक्तास्यत्वमुक्तम् अन्ये तु कटुः स्यात् कटुतिक्तयोरिति स्मृत्या तथा योऽम्लं भृशोष्णं कटुतिक्तवक्त्रः पीतं सरक्तं हरितं वमेद् वा। सदाहचोषज्वरवक्त्रशोषं सा पित्तकोपप्रभवा हि छर्दिः। इति सुश्रुतवचनाच्च कटुतिक्तान्यतरास्यतामिच्छन्ति, दृश्यते हि तिक्तास्यत्वमेव ज्वरे इति। घ्राणादीनां पाकः क्षतः पिड़काभिनिर्वृत्तिः। मदो मत्तत्वमिव, पूगधुस्तूरादिभक्षणे यादृशत्वं तदिव। भ्रमश्चक्रस्थितस्येव भ्रमणशीलवस्तुदर्शनमिव स्वदेहभ्रमणज्ञानञ्च। यद्यपि महारोगाध्याये वातजाशीतिविकारेषु भ्रमोऽभिहितस्तथापि रजःपित्तानिलाद् भ्रम इति वचनात् वातजत्ववत् पित्तजत्वमपि भ्रमस्य ख्यापनार्थमिदं वचनं वातज्वरेऽपि भ्रमस्योक्तत्वात्। अन्ये तु न रोगोऽप्येकदोषज इति वचनात् पैत्तिकेऽपि वातानुबन्धाद् भ्रम इत्याहुः, तन्न, सर्व्वेषां प्रेरकत्वेऽपि वायोर्न पैत्तिके ज्वरे आरम्भकत्वम्, न हि स्वनिदानकुपितस्तत्र वायुः किन्तु एकः प्रकुपितो दोषः सर्व्वानेव प्रकोपयेदिति वचनात् प्रेरकत्वशक्तिमात्रेणैव वायोः कोपो न तु रूक्षत्वादिधर्म्मेण। तथात्वे हि वातपित्तजत्वव्यपदेशापत्तिरन्यतरलक्षणापत्तिश्च। परे तु दोषदूष्यसंयोगप्रभावात् कारणदृष्टस्यापि कार्य्यत्वेन सम्भवो यथा हरिद्राचूर्णसंयोगाद्रक्तत्वमरुणत्वञ्च नीरूपत्वेऽपि वातातिसारे पुरीषस्य इत्याहुस्तदपि न मनोरमं तथाविधरूपान्तरापत्तेः। केचित् तु पित्तदूषितनेत्रत्वेन शङ्खः पीत इति ज्ञानवद्भ्रमज्ञानमाहुः। मूर्च्छान्धकारप्रवेश इव ज्ञानम्। पित्तच्छर्द्दनमिति कफं विना केवलपित्तवान्तिः। अतीसार इति पित्तस्य सरत्वेन

वक्ष्यति हि ग्रहण्यध्याये—"आप्लावयद्धन्त्यनलं जलं तप्तमिवानलम्" इति ; वह्निः प्रपीड्यदिति-वचनेन पित्तज्वरे वातज्वर इव न सहसा वह्निक्षेपणं भवति, किन्तु शनैः स्तोकक्रमेणेति दर्शयति।

* तृष्णेत्यत्र उष्मेति पाठान्तरम्।

**स्वेदः प्रलापो रक्तकोठाभिनिर्वृत्तिः शरीरे । हरितहारिद्रत्वं नख-नयनवदनमूत्रपुरीषत्वचामत्यर्थमुष्मणस्तीव्रभावोऽतिमात्रं**

सद्रवविट्प्रवृत्तिर्न त्वतीसाररोगः, तस्य ज्वरोपद्रवत्वेनोक्तत्वात्। केचित् तु यदा सद्रवप्रवृत्तिस्तदा पित्तज्वर एव यदा तूपद्रवत्वेनातिसाररोगस्तदा ज्वरातिसार इतीच्छन्ति। वस्तुतस्तु द्रवपुरीषत्वमिति नोक्त्वातिसार इति वचनेन द्रवातिसरणं वातादिज्वरापेक्षया स्यात् तथा रसधातोरति-वृद्धत्वे पित्तदूषितत्वे च यस्मिन् पित्तज्वरे पित्तस्यैव वह्निदूषकत्वं पुरीषमिश्रता च स्यात् तस्मिन् पित्तज्वरे त्वतीसारो भवति, अतिसार-ज्वरयोस्तुल्यसम्प्राप्तिकत्वात् इत्युभयरूपत्वं ख्यापितमिति। केचित् तु अस्या-मेवावस्थायां ज्वरो ज्वरातिसार इत्याहुस्तद् यथा पित्तज्वरे पित्तभवोऽतिसारः तथातिसारे यदि वा ज्वरः स्यात्। दोषस्य दूष्यस्य समानभावात् ज्वरातिसारः कथितो भिषग्भिरिति। अत्र तथातिसारे पित्तजातिसारे इत्यर्थः। अन्ये तु वाताद्यतिसारेऽपि वातादेरामाशयगमनम् अब्धातु-विशेषरसधातुदूषणञ्चेति ज्वरस्य दोषदूष्यसामान्याद् यदि वाताद्यति-सारेऽपि ज्वरः स्यात् तदा सोऽपि ज्वरातिसार उच्यते, तेन ज्वरातिसारे भेषज-विधानं पृथगिष्यते यतो ज्वरघ्नं प्रायशो भेदि, अतिसारघ्नन्तु स्तम्भि। तच्च प्रत्येकं न युज्यते इत्याहुः। तच्च न चरकसुश्रुताद्यभिमतं युक्त्या ज्वरोक्ताति-सारोक्तभेषजयोर्मिश्रेण भेषजकल्पनया सिद्धेः, क्रियासामान्यञ्च युक्त्याभि-सन्धाय प्रयोक्तुमर्हति। वह्निवर्द्धनपाचनादिकं हि लङ्घनादिकं ज्वरे चाति-सारे च युक्तं दृश्यते इति ज्वरातिसारः पृथङ् नोक्त इति। उपद्रवाणाञ्च स्वस्व-चिकित्सा विहिता, अन्यथा तत्तदुपद्रववतां प्रत्येकं चिकित्साविशेषस्य वाच्य-त्वापत्तिः स्यात्। न चातिसारज्वरयोर्विरुद्धोपक्रमोऽस्ति तावानेव, लङ्घनादि-समोपक्रमदर्शनात्। अनद्वेषोऽरुचिः, सदनमङ्गानाम्। स्वेदो घर्म्मप्रवृत्तिः, सर्व्वे-ज्वरे प्रायशो घर्म्मनिरोधेऽपि पैत्तिकादिज्वरे पित्तस्य तैक्ष्ण्यात् ज्वरप्रभावाद्वा घर्म्मनिरोधो न स्यात्। प्रलापोऽसम्बन्धवचनं वातकार्य्यवत् पित्तकार्य्यश्च। रक्तकोठाभिनिर्वृत्तिरिति ज्वरप्रभावात् पित्तातिशयकोपाद्वा रक्तस्य दुष्ट्या रक्त-वर्णकोठः स्यात्, कोठस्तु वरटीदष्टदेहप्रदेशे इव क्षणिकोत्पत्तिविनाशी मण्डला-

युगपदेवेति न वैषम्येण; अभ्यागमनमभिवृद्धिर्वेति च पूर्व्वेण, युगपदेवेत्यादिना परेण च विशेषेणेत्यन्तेन च ग्रन्थेन सम्बध्यते; कोठाभिनिर्व्वृत्तिः शरीर इति च्छेदः ॥ १२ ॥

दाहः शीताभिप्रायता निदानोक्तानुपशयो विपरीतोपशयश्चेति पित्तज्वरलिङ्गानि भवन्ति ॥ १३ ॥

स्निग्ध-गुरु-मधुर-पिच्छिल-शीताम्ल-लवण-दिवास्वप्नहर्षा-व्यायामेभ्योऽतिसेवितेभ्यः श्लेष्मा प्रकोपमापद्यते। स यदा प्रकुपितः प्रविश्यामाशयमुष्मणा सह मिश्रीभूय आद्यमाहार-परिणामधातुं रसनामानमन्ववेत्य रसस्वेदवहानि स्रोतांसि पिधायाग्निमुपहत्य पक्तिस्थानात् उष्माणं वहिर्निरस्य प्रपीड़यन् केवलं शरीरमनुप्रपद्यते, तदा ज्वरमभिनिर्व्वर्त्तयति। तस्येमानि लिङ्गानि भवन्ति। तद् यथा—युगपदेव केवले शरीरे ज्वरस्याभ्यागमनमभिवृद्धिर्वा। भुक्तमात्रे पूर्व्वाह्णे पूर्व्व-रात्रे वसन्तकाले वा विशेषेण। गुरुगात्रत्वम् अनन्नाभिलाषः श्लेष्मप्रसेको मुखमाधुर्य्यं हृल्लासो हृदयोपलेपः स्तिमितत्वं

कारः शोफः। हरितहारिद्रत्वं हरितत्वं, पलाशपुष्पवर्णत्वं हारिद्रत्वं हरिद्रा-वर्णत्वं व्यस्तत्वेनेह बोध्यं युगपदसम्भवात्। उष्मणो देहे वहिरुष्मणोऽत्यर्थं तीव्रभावः। शेषं सुगमम् ॥ १३ ॥

गङ्गाधरः—क्रमिकत्वात् कफज्वरनिदानादीन्याह—स्निग्धेत्यादि। लवणान्ता आहाराः। स्वप्नाद्या विहाराः। हर्षो मनःप्रह्लादो न तु मैथुनम्। स यदेत्यादिना श्लेष्मज्वरसम्प्राप्तिः। स इति श्लेष्मा। प्रकुपित इति उक्तस्निग्धादिनिदाना-न्यतमैकानेकातिसेवनेन यद्यदंशेन वृद्धस्तत्तदंशतो वृद्ध इत्यर्थः। एवं सर्व्वत्र व्याख्यातव्यम्। शेषं पूर्व्ववद् व्याख्येयम्। श्लेष्मज्वरलिङ्गान्याह—तद् यथेत्यादि। युगपदेवेत्यादि पूर्व्ववद् व्याख्यातव्यम्। हृल्लासो हृदयस्थ-

चक्रपाणिः—स्निग्धेत्यादिना श्लेष्मज्वरमाह—स यदेत्यादि पूर्व्ववत् कफज्वरेऽपि व्याख्येयम्; ननु श्लेष्मण आमाशयः स्थानम्, तत् किं प्रविश्यामाशयमिति वचनेन? नैवम्, श्लेष्मण उरोऽपि प्रधानं स्थानम्; तेन इहोरःस्थस्यापि श्लेष्मण आमाशयप्रवेशं दर्शयति; यत् तु केवलामाशयस्थितं पित्तम्, तत्र 'आमाशयं प्रविश्य' इति न कृतम्, किन्तु, 'आमाशयादुष्माणमुत्सृज्य' इति कृतम्; पित्तं ह्यामाशयप्रविष्टमेव भवति; तच्चामाशयैकदेशस्थं ग्रहणीकरामाशयैकदेशं वहिःस्थानं स्वस्थानाद् गच्छतीति युक्तम्। युगपदित्येककालम्, एकदैव

छर्दिर्मृद्वग्निता निद्राधिक्यं स्तम्भस्तन्द्रा कासः श्वासः प्रतिश्यायः शैत्यं श्वैत्यञ्च नखनयनवदनमूत्रपुरीषत्वचामत्यर्थञ्च शीतपिड़का भृशमङ्गेभ्य उत्तिष्ठन्ति, उष्णाभिप्रायता निदानोक्तानुपशयो विपरीतोपशयश्चेति श्लेष्मज्वरलिङ्गानि भवन्ति ॥१४॥

विषमाशनादनशनादन्नस्यापरिवर्त्तादृतुव्यापत्तेः असात्म्य-

कफस्योपस्थितवमनमिव। हृदयोपलेपः अन्तर्वक्षःस्थश्लेष्मणान्तर्वक्षसि उपलेपः। स्तिमितत्वमार्द्रवसनावगुण्ठितत्वमिव मन्यते गात्रम्। छर्द्दिः कफस्य, मृद्वग्निता वातादिज्वरापेक्षयाऽधिकमन्दाग्निता सर्व्वज्वरेऽपि वह्निमान्द्यात्। निद्राधिक्यं वातज्वरे निद्रानाशः पित्तज्वरेऽल्पनिद्रा कफज्वरेऽस्मिन्नधिकनिद्रेति बोध्यम्। स्तम्भः शरीरस्य पुरीषस्य च। तन्द्रा निद्रावदर्द्धोन्मीलितनेत्रत्वं प्रेरकवायोर्नेत्रस्थानगतत्वात्। कासः सश्लेष्मा। प्रतिश्यायो नासास्रावः। शैत्यं शीतत्वम्। श्वैत्यं श्वेतवर्णत्वञ्च नखादीनामत्यर्थमन्यत्र तु न तथा। शीतपिड़काः शीतमारुतादिसम्भवकोठवच्छोफा उदर्द्द इत्याख्याः भृशमत्यर्थमुत्तिष्ठन्त्यङ्गेभ्य इति। शेषं पूर्व्ववत्॥ १४ ॥

गङ्गाधरः—क्रमिकत्वाद् वातपित्तादिद्वन्द्वसन्निपातानां निदानादीन्याह—विषमेत्यादि। विषमाशनं वातादिकोपनमनशनं वातपित्तकोपनम् अन्नपरिवर्त्त इहान्नपरिणामः स च पित्तकोपन इव वातकोपनश्च, उक्तं हि भुक्ते जीर्य्यति भोजने चेत्यादि। ऋतुव्यापत्तिः ऋत्वयोगातियोगमिथ्यायोगाः त्रिदोष-

कफज्वरे सर्व्वशरीरव्याप्त्या आगमनमभिवृद्धिर्वा भवतीति दर्शयति। शीतपिड़कास्तन्त्रान्तरे श्वेतपिड़का उच्यन्ते; 'तस्येमानि लिङ्गानि भवन्ति' इत्येतावतैव कफज्वरलिङ्गत्वे लब्धे पुनः 'श्लेष्मज्वरलिङ्गानि भवन्ति' इतिवचनं किमर्थम्? ब्रूमः—'तस्य'इतिपदेन स्वदोषमात्रप्रत्यवमर्षोऽपि स्यात्; तेन दोषलिङ्गतैव परं लिङ्गानां सा स्यादित्येतदर्थं पुनरभिधानम्; किंवा पूर्व्वप्रतिज्ञया लिङ्गानां प्रागवच्छेद उक्तः, उत्तरेण श्लेष्मज्वरलिङ्गानि भवन्तीत्यनेनान्यावच्छेद उच्यते; एवमन्यत्रापि वातज्वरादौ पूर्व्वरूपे च पुनरुक्तिः परिहर्त्तव्या॥ १४ ॥

चक्रपाणिः—विषमाशनादिना द्वान्द्विकसान्निपातिकज्वरानाह। अनशनं यद्यपि न पित्तश्लेष्मकरम्, तथापि अग्निमान्द्यकरत्वात् त्रिदोषकरमपि भवति; किंवा एषु विषमाशनादिषु यथायोग्यतया द्वन्द्वकारणत्वं त्रिदोषकारणत्वञ्चोन्नेयम्; तेन अनशनं वातपित्तकरं बोध्यम्; यत् तु पित्तहरत्वमुक्तमनशनस्य, तत् तु द्रवांशाश्रयात्; वचनं हि—"कफपित्ते द्रवे धातू सहेते लङ्घनं

गन्धोपघ्राणात् विषोपहतस्य चोदकस्योपयोगाद् गरेभ्यो गिरीणाञ्चोपश्लेषात् स्नेहस्वेदवमनविरेचनास्थापनानुवासन-शिरोविरेचनानाम् अयथावत् प्रयोगात् मिथ्यासंसर्जनाद्वा स्त्रीणाञ्च विषमप्रजननात् प्रजातानाञ्च मिथ्योपयोगात् यथोक्तानाञ्च हेतूनां मिश्रीभावात् यथानिदानं द्वन्द्वाना-मन्यतमः सर्व्वे वा त्रयो दोषा युगपत् प्रकोपमापद्यन्ते,

कोपनाः। असात्म्यगन्धोपघ्राणं त्रिदोषकोपनम्। विषोपहतोदकोपयोग-स्त्रिदोषकोपनः। गरश्च त्रिदोषकोपनः। गिरीणामुपश्लेषश्च त्रिदोषकोपनः। स्नेहादीनामयथावत्प्रयोगस्त्वयोगातियोगरूपस्त्रिदोषकोपनः। मिथ्यासंस-र्ज्जनञ्च स्नेहादीनामविधिना पथ्ययोगस्त्रिदोषकोपनः। स्त्रीणाञ्च विषम-प्रजननमल्पकाले कालात्यये वा विपुलदेहापत्यस्य वा प्रसवस्त्रिदोषकोपनः। प्रजातानाञ्च प्रसूतानां स्त्रीणाञ्च मिथ्योपचारो विधिविपर्य्ययेणाहारो विहारश्च त्रिदोषकोपनः। प्रजातेति कर्त्तरि क्तः। यथोक्तानाञ्च हेतूनां वातादि-ज्वरोक्तानां रूक्षादीनामुष्णाम्लादीनां स्निग्धादीनाञ्च निदानानां मिश्रीभावात् द्वन्द्वानां त्रयाणां वा मिलितत्वेन सेवनात्। यथानिदानं यस्य वातादेर्द्वन्द्वा-न्यतमस्य त्रिकस्य वा यद्यदंशतो वर्द्धकनिदानं सेवितं भवति तत्तदंशतो द्वन्द्वानामन्यतमो वातपित्तरूपो वातश्लेष्मरूपो वा पित्तश्लेष्मरूपो वा द्वन्द्वो दोषः। सर्व्वे वा समस्तास्त्रयो दोषा वा युगपत् एककालमेव प्रकोपम् आपद्यन्ते। सर्व्वे इतिपदेन प्रत्येकं त्रयाणां दोषाणां प्रकोपव्यवच्छेदः। एवं द्वन्द्वपदेन वोध्यम्। युगपदितिपदेन पूर्व्वोत्तरकाले मिलितत्वेन कोप-व्यवच्छेद इति। एतेन तन्निरस्तं यदुच्यते पित्तं येन वर्द्धते तेन कफोपशमनं येन तु श्लेष्मा वर्द्धते तेन पित्तस्य मारुतस्यापि प्रशमनं भवतीति।

महत्" इति। अन्नपरिवर्त्तादिति सहसैवाक्रमेण कृताभ्यस्तान्नपरिवर्त्तात्; असात्म्यगन्धोपघ्राणात् असात्म्यगन्धद्रव्यस्य नासिकयान्तःप्रवेशाद् यथा दोषकरो भवति, न तथा असात्म्यरूपादयः; ते हि नावश्यं शरीरं विशन्ति; तेन नेहासात्म्यरूपादय उक्ताः। यथानिदानमिति यदा द्वयोर्निदानं सेव्यते, तदा द्वन्द्वः, यदा त्रयाणाम्, तदा त्रयो दोषाः; द्वन्द्वेऽपि यदा वात-पित्तयोर्निदानं सेव्यते, तदा वातपित्तरूपं द्वन्द्वम्; एवमन्यदपि कुप्यतीत्यर्थः। सर्व्वे त्रयो दोषा इत्यनेन लब्धेऽपि 'युगपत्' इति वचनं क्रमप्रकोपप्रतिषेधार्थम्, युगपदेव प्रकोपमापद्यन्ते

**ते प्रकुपितास्तथैवानुपूर्व्व्या ज्वरमभिनिर्व्वर्त्तयन्ति। तत्र यथोक्तानां ज्वरलिङ्गानां मिश्राभावविशेषदर्शनात् द्वान्द्विकमन्यतमं ज्वरं सान्निपातिकं वा विद्यात् ॥ १५ ॥**

सलिलानलयोरिव विरोधात्। युगपत् प्रकोपासम्भवो यथा—तीक्ष्णोष्णाम्लकटुगुणस्य पित्तस्य रुक्षशीतलघ्वादिगुणस्य वातस्य गुरुशीतमृदुस्निग्धस्तिमितपिच्छिलगुणस्य कफस्य परस्परं गुणविरोधाच्च वह्निजलयोरिव परस्परोपघातात् मिलित्वैककार्य्यारम्भकत्वं नोपपद्यते, तत् कथं द्वन्द्वसन्निपातविकारसम्भव इति? विषमाशनादीनां यथायोग्यं प्रभावात् द्वन्द्वसन्निपातदोषकोपकत्वं बोध्यम्। अन्यथा पञ्चमहाभूतानामपि परस्परविरुद्धगुणत्वात् जगदारम्भानुपपत्तिश्च। दृढ़बलेन त्वन्यथा उपपादयिष्यते। विरुद्धैरपि न त्वेते गुणैर्घ्नन्ति परस्परम्। दोषाः सहजसात्म्यत्वाद् घोरं विषमहीनिव ॥ इति।

द्वन्द्वसन्निपातज्वराणां सम्प्राप्तिमाह—ते प्रकुपिता इत्यादि। ते द्वन्द्वाः सर्व्वे वा त्रयो दोषाः। तथैवानुपूर्व्व्येति वातादुक्तसम्प्राप्त्यनुरूपया, तथाच ते यदा प्रकुपिताः प्रविश्यामाशयमुष्मणा सह मिश्रीभूयाद्यमाहारपरिणामधातुं रसनामानमन्ववेत्य रसस्वेदवहानि स्रोतांसि पिधायाग्निमुपहत्य पक्तिस्थानादुष्माणं वहिर्द्वारं निरस्य केवलं शरीरमनुपद्यन्ते तदा ज्वरमभिनिर्व्वर्त्तयन्तीत्यर्थः।

द्वन्द्वसन्निपातज्वराणां लिङ्गान्याह—तत्रेत्यादि। तत्र द्वन्द्वसन्निपातज्वरेषु मध्ये प्रत्येकश उक्तानां वातादिसम्भवज्वरलिङ्गानां मिश्रीभावविशेषदर्शनात् द्वान्द्विकमन्यतमं ज्वरं विद्यात्। ययोरेव वातादिजयोर्द्वयोर्ज्वरयोः उक्तानामेव लिङ्गानां मिश्रीभावे सत्येकैकजाद् विशेषरूपदर्शनात् पृथग्जेभ्यो भिन्नरूपदर्शनाच्च द्वान्द्विकमन्यतमं तद्वातपित्तादिद्वन्द्वेन प्रकृतिसमसमवायारब्धं तद् द्वान्द्विकं ज्वरं विद्यात्। ययोर्वाताद्योः द्वयोः ज्वरयोरुक्तानां लिङ्गानां विषमारम्भित्वादीनां मिश्रीभावस्य ततोऽतिरिक्तलिङ्गविशेषस्य च दर्शने तद्वातपित्तादिप्रत्येकज्वरोक्तानां तद्वाताद्योः द्वयोर्ज्वरयोर्लिङ्गानां तदतिरिक्तलिङ्गानाञ्च दर्शनात्। तद् वातपित्तादिद्वन्द्वेन

न क्रमेणेत्यर्थः। ज्वरलिङ्गानामित्यादौ मिश्रीभावविशेषा वातपित्तलिङ्गं वातश्लेष्मलिङ्गं वा पित्तश्लेष्मलिङ्गं वा; अन्यतममिति वातपित्तज्वरादिकम् ॥ १५ ॥

अभिघाताभिषङ्गाभिचाराभिशापेभ्य आगन्तुर्हि व्यथा-पूर्व्वोऽष्टमो ज्वरो भवति। स किञ्चित्कालमागन्तुः केवलो

विकृतिविषमसमवायारब्धं तद् द्वान्द्विक ज्वरं विद्यात्। एवं वातादिजानां त्रयाणां ज्वराणां प्रत्येकत उक्तानां लिङ्गानां मिश्रीभावमात्रदर्शनात् तदतिरिक्तलिङ्गविशेषादर्शनात् प्रकृतिसमसमवायारब्धं सान्निपातिकं ज्वरं विद्यात्। मिश्रीभावस्य तदतिरिक्तलिङ्गविशेषस्य च दर्शनात् तु विकृतिविषमसमवायारब्धं सान्निपातिकं ज्वरं विद्यात्। एतेनैतद् उक्तं भवति—प्रकृतिसमसमवायारब्धे द्वन्द्वजे सान्निपातिके वा व्याधौ प्रकृतिभूतयोर्द्वयोर्दोषयोः प्रकृतिभूतानां त्रयाणां वा दोषाणां स्वस्वकार्य्यरूपाण्येव लिङ्गानि भवन्ति न तु अतिरिक्तानि। विकृतिविषमसमवायारब्धे तु तानि च तत्तद्द्विशस्त्रिकस्य वा दोषस्य कारणवैचित्र्यात् कोपविशेषात् विकृतिविशेषात् संयोगतो दोषाणां स्वस्वकर्म्माणि मिलित्वा परिणम्यासमानजातीयानि लिङ्गानि भवन्तीति। अत्र विशेषशब्दो भिन्नवाचकः॥ १५॥

गङ्गाधरः—अथाष्टमागन्तुजज्वरनिदानादीन्याह—अभिघातेत्यादि। अभिघातोऽभिहननं शस्त्रदण्डमुष्टिलोष्ट्रादिभिः। अभिषङ्गो देवादीनां भूतानां कामादीनाञ्च सम्बन्धः। अभिचारः श्येनादियागकृतः सर्षपादिना लौहस्रुचा विपरीतमन्त्रे होम इति। अभिशापो गुरुवृद्धसिद्धब्राह्मणादीनामनिष्टाभिशंसनम्। एभ्यश्चतुर्भ्यः आगन्तुभ्य आगन्तुजोऽष्टमो ज्वरो भवति।

ननु किमभिघातादिभ्यो वातादयः प्रकुपिताः पूर्व्वोक्तयैवानुपूर्व्व्या ज्वरमभिनिर्वर्त्तयन्तीत्यत आह—व्यथापूर्व्व इति। हिशब्दो हेत्वर्थे। व्यथा दुःखमभिघातादिजं तदेव पूर्व्वमग्रे यस्य न तु ततो दोषकोपः पूर्व्वं यस्य स तथा। ननु किमागन्तुजन्मकालावधि यावत्कालं दोषासम्बन्ध एवेत्यत आह—स किञ्चिदित्यादि। स व्यथापूर्व्वो जात आगन्तुज्वरः किञ्चित्कालं

चक्रपाणिः—आगन्तुज्वरमाह—अभिघातेत्यादि। अभिघातो लगुडाद्यभिघातः; अभिषङ्गः कामाद्यभिषङ्गः; अभिचारोऽथर्व्वमन्त्रादिः ज्वरकरः; अभिशापस्तु गुरुसिद्धाद्यभिशपनम्; एतत् प्रधानत्वेन चतुर्व्विधं कारणमिहोक्तम्; तेन ओषधिगन्धभूताभिषङ्गदुष्टग्रहनिरीक्षणादयोऽप्यागन्तुज्वरहेतवो बोद्धव्याः; किंवा अभिघातग्रहणेन शरीराभिहननवाचिनोऽसात्म्यगन्धादयो ग्राह्याः; अभिषङ्गेण तु भूताभिषङ्गादयः; व्यथापूर्व्वमिति आगन्तौ प्रथमं व्यथा भवति, पश्चात् दोषानुबन्धकृतानि लक्षणानीति दर्शयति; किंवा 'व्यथापूर्व्वम्' इति वचनात् आगन्तौ

भूत्वा पश्चान्निजैर्दोषैरनुबध्यते। तत्राभिघातजो वायुना दुष्ट-
शोणिताधिष्ठानेन, अभिषङ्गजः पुनर्वातपित्ताभ्याम्, अभि-

क्षणादिकं केवलो भूत्वा दोषासम्बन्धो भूत्वा पश्चान्निजैः शारीरैरभिघातादि-स्वस्वनिदानकुपितैर्यथासम्भवैर्दोषैर्वातादिभिरनुबध्यते। इति वातादयो दोषा आगन्तुज्वरेऽनुबन्धा अनुबन्ध्यस्तु अभिघातादिरिति व्याधेरागन्तुहेतु-प्राधान्याद् व्याधित्वभिघाताभिषङ्गादीनां विशेषेण चिकित्सा कार्य्या वाताद्य-विरोधेन। उक्तं हि अनुबन्ध्यो विशेषेण चिकित्स्योऽनुबन्धाविरोधेनेति। नन्वभिघातादीनां कतमजो ज्वरः केन दोषेणानुबध्यते इत्यत आह—तत्रेत्यादि। तत्राभिघातादिजेषु ज्वरेषु मध्येऽभिघातजो ज्वरो दुष्टशोणिताधिष्ठानेन दण्डाद्यभिहननेन दुष्टं शोणितमधिष्ठानं यस्य तेन वायुना न तु केवलेन वायुनानुबध्यते इत्यनुवर्त्तते तत्परेण च युज्यते। अभिषङ्गज इति काम-शोकभयक्रोधज एव तत्र भयान्तजो वातेन क्रोधजस्तु पित्तेन। अभिचाराभि-शापौ त्विति तुशब्दो भिन्नक्रमेऽनुक्तसमुच्चये च, तेन भूताभिषङ्गजो विषकृतश्च अभिषङ्गज्वरोऽभिशापज्वरश्च सन्निपातेनानुबध्यते इत्यर्थो बोध्यः। वक्ष्यते हि चिकित्सिते। कामशोकभयक्रोधैरभिषक्तस्य यो ज्वरः। सोऽभिषङ्गज्वरो ज्ञेयो यश्च भूताभिषङ्गजः। तथा, विषवृक्षानिलस्पर्शात् तथान्यैर्विषसम्भवैः। अभिषक्तस्य चाप्याहुर्ज्वरमेकेऽभिषङ्गजम्॥ इति। अत्रौषधिगन्धजज्वरस्यान्त-र्भावस्तेन न न्यूनत्वम्। अथैषां दोषागन्तुजानामष्टानां ज्वराणामेकविध-सम्प्राप्त्यभावादेकमेव सम्प्राप्तिलक्षणं न कृत्वा पृथक् पृथक् कृतमित्यवधेयम्। दोषजानान्त्वेकविधा सम्प्राप्तिभङ्ग्या व्याख्याता तेन, ज्वरं कुर्य्युः प्रकुपिता दोषास्त्वामाशयं गताः। रसं सन्दूष्य सन्दूष्य वह्निं कृत्वा वहिस्तथा इति।

ज्वरे व्यथैव पूर्व्वरूपमिति वदन्ति; रूपन्तु यदेव ज्वरस्य आत्यात्मिकं सन्तापरूपम्, तदेव वातज्वरादिलक्षणरहितं बोद्धव्यं प्रथमतः, उत्तरकालीनदोषानुबन्धे तु यथावक्ष्यमाणदोषलिङ्गान्येव भवन्ति; अष्टम इति वचनेनाभिघातादिहेतुचतुष्टययोगप्राप्तं चातुर्व्विध्यं निषेध्य व्यथापूर्व्वक-त्वेनैकरूपयोगादेकविधत्वं चतुर्णां दर्शयति; चातुर्व्विध्ये ह्यागन्तोर्नाष्टमत्वम्, नवमत्वा-दयोऽपि स्युः। किञ्चित्कालमिति स्तोककालम्; केचित् 'त्र्यहम्', अन्ये 'सप्ताहम्' आहुः; आगन्तौ सप्ताहादूर्द्ध्वं दोषलिङ्गानि भवन्तीति दृष्टम्; तस्य यस्यागन्तोर्यादृशो दोषानुबन्धोऽस्ति, तमाह—तत्राभिघातेत्यादि। वातपित्ताभ्यामिति कश्चिद् वातेन, कश्चित् पित्तेन, कश्चिद् वातपित्ताभ्याम्; वचनं हि—'कामशोकभयाद् वायुः क्रोधात् पित्तं त्रयो मलाः। भूताभि-

चाराभिशापजौ तु सन्निपातेनानुबध्येते। स सप्तविधात् ज्वराद् विशिष्टलिङ्गोपक्रमसमुत्थानत्वाद् विशिष्टो वेदितव्यः,

दोषजानां सामान्यलक्षणं बोध्यम्। एवमन्यत्राप्युक्तं—मिथ्याहारविहारस्य दोषा ह्यामाशयाश्रयाः। वहिर्निरस्य कोष्ठाग्निं ज्वरदाः स्य रसानुगा इति। शेषं सुगमम्।

ननूत्तरकालं निजैर्दोषैरनुबन्ध्यत्वेनायं कथमष्टम उच्यते, इत्यत आह—स सप्तेत्यादि। सप्तविधादिति वातादिदोषजसप्तविधात् विशिष्टलिङ्गत्वात् विशिष्टोपक्रमत्वात् विशिष्टसमुत्थानत्वाच्च विशिष्टः पृथगेव। दुष्टशोणिताधिष्ठान-वातानुबन्ध्योऽप्यभिघातजो ज्वरो न वातज्वरलिङ्गः परन्तु ज्वरचिकित्सिते—तत्राभिघातजो वायुः प्रायो रक्तं प्रदूषयन्। सव्यथाशोथवैवर्ण्यं सरुजं कुरुते ज्वरम्। इत्युक्तलिङ्गत्वेन वातज्वरात् भिन्न एव। तथाभिषङ्गजेषु ज्वरेषु कामशोक-भयजो वातानुबन्धोऽपि न वातज्वरलिङ्गः, परन्तु—कामजे चित्तविभ्रंशस्तन्द्रा-लस्यमभोजनम् इति लिङ्गत्वेन कामजज्वरो भिन्नः—कामाद् भ्रमोऽरुचिर्दाहो ह्रीनिद्राधीधृतिक्षय इत्यपरोक्तलिङ्गत्वाद्वा। तथा शोकजो ज्वरो न वातज्वरलिङ्गः किन्तु प्रलापमात्रलिङ्गत्वात् ततो भिन्न एव। एवं भयजो ज्वरो न वातज्वरलिङ्गः किन्तु प्रलापमात्रलिङ्गत्वात् ततो भिन्न एव। एवं क्रोधजो ज्वरः पित्तानुबन्धोऽपि न पित्तज्वरलिङ्गः, परन्तु—क्रोधात् कम्पः शिरोरुक् च प्रलापो भयशोकज इत्यप-रोक्तकम्पशिरोरुक्प्रलापलक्षणत्वात् पित्तज्वरतो भिन्न एव। तथा भूताभिषङ्गजो ज्वरः सन्निपातानुबन्ध्योऽपि न सन्निपातज्वरलिङ्गः, परन्तु देवादिभूतलिङ्गहास्य-रोदनकम्पादित्वात् ततो भिन्नः। विषकृतस्तु ज्वरो दोषत्रयानुबन्धोऽपि न त्रिदोषज्वरलिङ्गः, परन्तु—श्यावास्यता विषकृते तथातिसार एव च। भक्तारुचिः पिपासा च तोदश्च सह मूर्च्छया। इति लक्षणत्वात् ततो भिन्नः। ओषधी-गन्धघ्राणजस्तु त्रिदोषानुबन्धोऽपि न त्रिदोषज्वरलिङ्गः, किन्तु—ओषधीगन्धजे मूर्च्छा-शिरोरुग्वमथुस्तथा इत्युक्तलिङ्गत्वात् भिन्न एव। अभिचाराभिशापजौ तु त्रिदोषानुबन्धावपि न त्रिदोषज्वरलिङ्गौ, परन्तु—अभिचाराभिशापाभ्यां मोह-स्तृष्णा च जायते। इति लिङ्गत्वाद् भिन्नावेवेति। अथ अत ऊर्द्ध्वं चिकित्सिते च

षङ्गात् कुप्यन्ति भूतसामान्यलक्षणाः॥" इति; भूताभिषङ्गे तु यद्यपि त्रिदोषप्रकोप उक्तस्तथापि तत्र वातपित्तयोरेवैतद्वचनात् प्राधान्यम्। आगन्तोर्निजाद् भेदमाह—स इत्यादि। विशेष-लिङ्गता आगन्तोर्यथापूर्व्वव्याख्यानव्याकृता; समुत्थानविशेषोऽपि अभिघातादिरुक्तः; उपक्रम-

**कर्म्मणा साधारणेन चोपक्रम्यत इत्यष्टविधा ज्वरप्रकृतिरुक्ता ॥ १६ ॥**

**ज्वरस्त्वेक एव सन्तापलक्षणः, तमेवाभिप्रायविशेषाद्**

वक्ष्यमाणविभिन्नोपक्रमत्वाच्च दोषजसप्तज्वरतो भिन्नः। विशिष्टसमुत्थानत्वन्तु वातादिदोषाभिघातादिकं स्फुटम्। नन्वस्य कश्चोपक्रम इत्यत आह—कर्म्मणेत्यादि। चकारात् स इत्यनुवर्त्तते। स चाष्टमः सप्तविधदोषज्वराद्विशिष्ट आगन्तुज्वरः कर्म्मणा साधारणेन दैवव्यपाश्रययुक्तिव्यपाश्रयोभयेण कर्म्मणा उपक्रम्यते भिषजेति शेषः। नन्वेतेऽष्टौ ज्वराः किमुपादाना इत्यत आह—इत्यष्टेत्यादि। प्रकृतिरुपादानं सा वातादिरूपा ॥ १६ ॥

गङ्गाधरः—नन्वष्टविधप्रकृत्या किमष्टस्वरूपं ज्वराणामुक्तरूपेण किमन्यथान्यदस्तीत्यतः सामान्यतः स्वरूपमाह—ज्वर इत्यादि। एक एवेति ज्वरस्यैकमेव स्वरूपं सन्तापलक्षणत्वं सर्व्वेषामेव ज्वराणां सन्तापः शरीरोत्तापश्चिह्नम्। न ह्यन्येषां रोगाणां चिह्नं सन्तापोऽस्ति। दाहाख्यरोगस्य तु शरीरे स्वभावोष्मानतिरिक्तोष्मत्वे दाहमात्रलक्षणं ज्वरस्य तु स्वभावोष्मातिरिक्तदेहोष्मलक्षणमिति बोध्यमथवा सन्तापो देहेन्द्रियमनस्तापस्तत्र देहतापो देहस्य स्वाभाविकोष्माधिकोष्मा। इन्द्रियताप इन्द्रियाणां वैकल्यम्। मनस्तापो वैचित्त्यमरतिर्ग्लानिर्मनसस्तापलक्षणमिति, ईदृशश्च सन्तापो न दाहाख्यः तेन तन्निरस्तम्। स्वेदावरोधः सन्तापः सर्व्वाङ्गग्रहणं तथा। युगपद् यत्र रोगे च स ज्वरो व्यपदिश्यते। इति सुश्रुतवचनं यदिदं केचिद् व्याचक्षते स्वेदावरोधो घर्म्मनिरोधः सन्तापो निरुक्तः। सर्व्वाङ्गग्रहणं सर्व्वाङ्गवेदना। युगपदिति मिलितलक्षणत्रयमिदं यत्र स ज्वरः, प्रत्येकशो व्यभिचारात्। स्वेदावरोधः कुष्ठपूर्व्वरूपे। सन्तापो दाहाख्ये। सर्व्वाङ्गग्रहणं सर्व्वाङ्गवातरोगे। इति व्याख्यानञ्चेदं अविद्वान् कश्चिदाह। स्वेदावरोधः सन्तापः सर्व्वाङ्गग्रहणं तथा। युगपद् यत्र रोगे च स ज्वरो व्यपदिशते। इति। तत्र पुनः पैत्तिक-

विशेषस्तु "साधारणेन कर्म्मणा चोपचर्य्यते" इति वचनेनैवात्र कथ्यते; साधारणेनेति दैवयुक्तिव्यपाश्रयेण; दैवव्यापाश्रयं हि बलिमङ्गलहोमादि, युक्तिव्यपाश्रयं हि लङ्घनशनापतर्पणयवागूकषायपानादि। प्रकृतिरुक्तेति स्वभावोऽपि वातादिज्वराणां निदानाद्यपाहित उक्त इत्यर्थः ॥ १६ ॥

द्विविधमाचक्षते निजागन्तुविशेषाच्च। तत्र निजं द्विविधं

वातश्लैष्मिकादिज्वरे घर्म्मागमात्। वातज्वरे विषमारम्भविसर्गित्वेन सर्व्वाङ्ग-ग्रहाभावाच्चाव्याप्तिनाशङ्क्या। उत्सर्गत्वालक्षणस्यास्य पैत्तिकादिज्वरलक्षणेन विशेषेण बाधितत्वादिति, तन्नेत्यन्ये, विधावुत्सर्गापवादभावस्य स्वीकारेण लक्षणे तदस्वीकारात्। ब्रूवते च स्वेदोऽग्निस्तस्यावरोधो वह्निनिरसनेन मन्दत्वम्। वातज्वरे वायोश्चलत्वेनारम्भविसर्गयोर्वैषम्यमिति सर्व्वदेहगतदोषस्य ज्वरा-रम्भकत्वेनानुवृत्त्याऽस्फुटसर्व्वाङ्गग्रहणमस्त्येवेति नाव्याप्तिः। तदपि न मनो-रमम्। अभिघाताद्यागन्तुज्वरे जठराग्नेरपगमस्य ज्वरोत्पत्तिकालेऽभावात्। देहेन्द्रियमनस्तापानाञ्च सूक्ष्मकालव्यवधानेन शारीरमानसज्वरे यौगपद्या-भावाच्च। न हि सूक्ष्मकालव्यवधानेनावश्यम्भावित्वं सन्तापस्य यौगपद्यं भवति। तस्मात् स्वेदावरोध इत्यादित्रिलक्षणो न ज्वरः। किन्तु सन्तापलक्षण इति। तत्र चैवञ्चेत् भिषक् पृच्छ्यते, कोऽयं व्याधिरिति; पृष्टश्चैवं भिषक् ब्रूयादस्यातुरस्य अयं व्याधिर्ज्वरः देहेन्द्रियमनस्तापित्वात् यथा दाहो देहतापी यथा च दाहो देहं तापयति तथायं देहेन्द्रियमनांसि तापयति तस्मादयं ज्वर इत्येक-पक्षकसाध्यकत्वात् व्यतिरेकेण दृष्टान्तः एवं ज्वरत्वेन स्थापितं तमेनं रोगं चेद्भिषक् पृच्छ्यते कोऽयं ज्वर इति पृष्टश्चैवं भिषक् ब्रूयाज्ज्वरोऽयं वातजो विषमारम्भविसर्गादिलक्षणत्वात्, यथा पित्तजः यथा च पित्तजज्वरः कटुकास्य-त्वादिलक्षणस्तथा चायं विषमारम्भविसर्गित्वादिलक्षणस्तस्माज्ज्वरोऽयं वातज इत्येवमसाधारणलक्षणसहचरितसव्यभिचारिलक्षणेनापि सामान्यतो विशेषत-श्चानुमीयेत। एवं सर्व्वत्र।

सामान्यप्रकृतिमुक्त्वा ज्वरस्य प्रकृत्यन्तरमाह—तमेवेत्यादि। तमेव सन्ताप-लक्षणमेव ज्वरमभिप्रायविशेषात् द्विविधमाचक्षते। शीताभिप्राय उष्णाभि-प्रायश्चेति द्विविधो ज्वरो भवति। तत्र वातात्मक उष्णाभिप्रायः, पित्तात्मकः शीताभिप्रायः; कफात्मक उष्णाभिप्रायः। वक्ष्यते च चिकित्सिते—वात-पित्तात्मकः शीतमुष्णं वातकफात्मकः। इच्छत्युभयमेतत् तु ज्वरो व्यामिश्र-लक्षणः। योगवाहः परं वायुः संयोगादुभयार्थकृत्। दाहकृत् तेजसा युक्तः शीतकृत् सोमसंश्रयात्। इति। व्यामिश्रलक्षणः सान्निपातिकः। प्रकृत्यन्तर-माह—निजागन्तुविशेषाच्चेति। चकाराद् द्विविधमाचक्षते इत्यनुवर्त्तते।

चक्रपाणिः—निजागन्तुविशेषाच्च द्विविधमिति सम्बन्धः। निजं द्विविधमित्यादौ द्वैविध्यं

त्रिविधं चतुर्व्विधं पञ्चविधं* सप्तविधञ्च जगुर्भिषजो वातादि-विकल्पात्॥ १७॥

तस्येमानि पूर्व्वरूपाणि भवन्ति। तद् यथा—मुखवैरस्यं

तत्र निजः शारीरदोषजः, आगन्तुस्तु कामादिमानसज्वरोऽभिघातादिजश्चेति द्विविधस्य वाचकः। चिकित्सिते च—द्विविधो विधिभेदेन ज्वरः शारीरमानस इत्युक्त्वा शारीरो जायते पूर्व्वं देहे मनसि मानस इति यद् वक्ष्यते तत्र शारीरो दोषजोऽभिघाताद्यागन्तुश्च, मानसस्तु कामाद्यागन्तुज इति न स्ववचनविरोधः, नाप्यत्र तत्र न्यूनत्वम्; अत एव स्वयमत्र निजं विवृणोति—तत्रेत्यादि। तत्र निजागन्तु-ज्वरयोर्मध्ये निजं द्विविधं चिकित्सिते वक्ष्यमाणरूपम्—सौम्य आग्नेयश्च। वातात्मक-कफात्मक-वातकफात्मक-वातकफान्यतरप्रधानद्वन्द्वसन्निपातात्मकभेदात् सौम्यः। पित्तात्मक-वातपित्तात्मक-पित्तप्रधानसन्निपातात्मकभेदादाग्नेयः। तथापरो द्विविधश्चान्तर्वेगो वहिर्वेगश्च। तथान्यो द्विविधश्च प्राकृतो वैकृतश्च। तथान्योऽपि द्विविधः साध्योऽसाध्यश्च। तथापरो द्विविधो मृदुर्दारुणश्चेति। द्विविधश्चापरो राजसस्तामसश्चेति। त्रिविधमिति एक-दोषज-द्विदोषज-त्रिदोषजभेदात् सौम्याग्नेयवायव्यभेदाच्च। चतुर्व्विधमिति साध्यासाध्य-मृदुदारुणभेदात्। सुखसाध्य-कृच्छ्रसाध्य-याप्यासाध्य-प्रत्याख्येयासाध्यभेदाच्च। पञ्चविधमिति सन्ततसततान्येद्युस्तृतीयकचतुर्थक-भेदात्। सप्तविधमिति वातिकादिभेदेनोक्तदोषजः सप्तविधः, रसादिसप्तधातु-गतत्वेन च सप्तविधः। आगन्तुज्वरस्य विधिभेदोऽभिघातादिहेतुभेदादुन्नेयो न ह्यपरभेदेन भेदोऽस्तीति न स्फुटमुक्तवान्॥ १७॥

गङ्गाधरः—ज्वराणां प्रकृतिमुक्त्वा निदानसम्प्राप्तिलिङ्गानि चोक्तानि प्रागेव, अधुना पूर्व्वरूपमाह—तस्येत्यादि। तस्येति निजज्वरस्य न तु निजागन्तूभयस्य। स्थानसंश्रयात् परं दोषाणां जनिष्यमाणस्य निजस्य ज्वरस्येमानि पूर्व्वरूपाणि

संसृष्टासंसृष्टजन्यत्वेन शीतोष्णाभिप्रायभेदात्; त्रिविधं दोषभेदात्; चतुर्व्विधं प्रत्येकं वातादिदोषजन्यत्वभेदात्; तत्र चातुर्व्विध्ये द्वन्द्वज्वराः प्रतिक्षिप्यन्ते, तेषां प्रत्येकं वातादिज्वर-सदृशत्वात्, त्रिदोषज्वरस्तु असाध्यतायोगात् कृच्छ्रसाध्यतायोगाद् वा पृथगुच्यते॥ १७॥

चक्रपाणिः—तस्येमानीत्यादिना सर्व्वज्वरसाधारणं पूर्व्वरूपमाह; एतानि च पूर्व्वरूपाणि आगन्तोरपीत्येके वदन्ति; अन्ये तु निजानामेवैतानि वदन्ति, आगन्तोस्तु व्यथैव पूर्व्वम्;

* आदर्शान्तरे पञ्चविधमिति पाठो न दृश्यते।

गुरुगात्रत्वमनन्नाभिलाषश्चक्षुषोराकुलत्वमश्रागमनं निद्राधिक्यम् अरतिः जृम्भा विनामो वेपथुः श्रमभ्रमप्रलापजागरणरोमहर्ष-दन्तहर्षाः शब्दशीतवातातपसहत्वासहत्वमरोचकाविपाकौ दौर्ब्बल्यमङ्गमर्दः सदनमल्पप्राणता दीर्घसूत्रतालस्यमुचितस्य कर्म्मणो हानिः प्रतीपता स्वकार्य्येषु गुरूणां वाक्येष्वभ्यसूया बालेभ्यः प्रद्वेषः स्वधर्म्मेष्वचिन्ता माल्यानुलेपनभोजनक्लेशनं मधुरेभ्यश्च भक्ष्येभ्यः प्रद्वेषः उष्णाम्ललवणकटुप्रियता* चेति ज्वरस्य पूर्व्वरूपाणि भवन्ति प्राक् सन्तापात्, अपि चैनं सन्तापार्त्तमनुबध्नन्ति ॥ १८ ॥

भवन्ति—तद् यथेत्यादि । मुखवरस्यं मुखस्य विरुद्धरसत्वम्, चक्षुषोराकुलत्वमश्रागमनम् । अरतिरनवस्थितचित्तत्वमक्रीड़त्वं वा, जृम्भा जृम्भणम् । तच्च सर्व्वेष्वेव ज्वरेषु प्राग्रूपतया भवति, वाताधिक्ये त्वत्यर्थं भवति । उक्तञ्चान्यत्र—सामान्यतो विशेषात् तु जृम्भात्यर्थं समीरणादिति । विनामो नतशिरस्त्वम् । श्रमोऽनायास-श्रमः श्रान्तत्वमिव मन्यते । शब्दादीनां सहत्वासहत्वमनियतेच्छाद्वेषौ । अरोचक इह सत्यप्यभिलाषेऽन्नाभ्यवहारासामर्थ्यमतोऽनन्नाभिलाषाद् भेदः । अङ्गमर्दोऽङ्गवेदना । सदनमवसन्नता । अल्पप्राणता स्वल्पबलत्वम् । दीर्घसूत्रता कर्म्मण्युपस्थिते चिरकर्त्तृत्वम् । आलस्यं कर्म्मस्वनुत्साहः । हानिरकर्त्तृत्वेन त्यागः । स्वकार्य्येषु प्रतीपता विरोधाचरणम् । असूया गुणेषु दोषारोपस्तेन गुरूणां स्वस्मिन्ननुकूलवाक्येषु दोषारोपः । स्वधर्म्मेषु नित्यक्रियासन्ध्यावन्दनादिषु अचिन्ता मनसोऽप्रवृत्तिः । इतीति एतानि । प्राक् सन्तापादिति शरीरादिषु सन्तापाभिव्यक्तेः पूर्व्वमेतानि ज्वरस्य पूर्व्वरूपाणि भवन्तीति । अतोऽनन्तरं

अत्राप्यनन्नाभिलाषारोचकयोः पूर्व्ववद् भेदः; दौर्ब्बल्यं शरीरमात्रबलहानिः; अल्पप्राणता च मानसबलहानिर्बोद्धव्या; किंवा दौर्ब्बल्यं मांसापचयः; दीर्घसूत्रता चिरेण कार्य्यकर्त्तृत्वम् । ज्वरपूर्व्वरूपाणि भवन्ति प्राक् सन्तापादिति च्छेदः, ज्वरपूर्व्वरूपसन्तापात् प्रागेतानि पूर्व्वरूपाणि भवन्तीत्यर्थः; अपि च सन्तापार्त्तमनुबध्नन्तीत्यनेन प्रव्यक्तेऽपि ज्वरे कानिचित् पूर्व्वरूपाणि मुखवैरस्यारुच्यादीनि भवन्तीति; न चैवं पूर्व्वरूपानुवृत्ते रिष्टत्वं वाच्यम्, यतः सर्व्वपूर्व्व-

* उष्णाम्ललवणकटुप्रियतेत्यत्र अम्ललवणकटुप्रियता इति पाठश्चक्रधृतः ।

इत्येतान्येकैकशश्च ज्वरलिङ्गानि व्याख्यातानि भवन्ति विस्तरसमासाभ्याम् ॥ १९ ॥

ज्वरस्तु खलु महेश्वरकोपप्रभवः सर्व्वप्राणिनां प्राणहरः,

सन्तापाभिव्यक्तौ तु किमेतान्यनुवर्त्तन्ते न वा इत्यत आह—अपि चैनमित्यादि। एतानि ज्वरपूर्व्वरूपाणि एनं ज्वरपूर्व्वरूपिणं पुरुषं सन्तापार्त्तं जायमानसन्तापं जातसन्तापमपि अनुबध्नन्ति च यथादोषबलं कृत्स्नशोऽकृत्स्नशो वा। अनुबन्धवचनेन व्यक्तसन्तापत्वे वातात्मकादिज्वरलक्षणविषमारम्भविसर्गित्वाद्यपेक्षया त्वप्राधान्येनैषामनुवृत्तिः सूचिता भवति। उत्पन्नज्वरस्य तु तानि लिङ्गानि भाषन्ते कुशलाः ॥ १८ ॥

गङ्गाधरः—उपसंहरति—इत्येतानीत्यादि। एकैकशः प्रत्येकशः। चकारात् सामान्यतश्च। ज्वरलिङ्गानि ज्वरस्य रूपाणि पूर्व्वरूपाणि च। किंवा निदानादीनि पञ्च, लिङ्ग्यते ज्ञायते यैस्तानि लिङ्गानीति व्युत्पत्तेः। अनुपशयोपशयाभ्यां वृद्धिह्रासवचनेन पुनरुपशयस्य व्याख्यातत्वान्न पञ्चानां व्याख्यानन्यूनता। विस्तरसमासाभ्यामिति एकैकशो निदानादीनां व्याख्यानं विस्तरेण बोध्यं सन्तापलक्षणं पूर्व्वरूपाणि च समासेन व्याख्यातानीति बोध्यम् ॥ १९ ॥

गङ्गाधरः—ननु पूर्व्वमुक्तं लोभातिद्रोहकोपप्रभवानष्टौ व्याधीन् निदानपूर्व्वेण क्रमेण व्याख्यास्याम इति, ततस्तु खल्वयं ज्वरो लोभप्रभवो वातिद्रोहप्रभवो वा कोपप्रभवो वेत्यत आह—ज्वरस्त्वित्यादि। महेश्वरः शिवस्तस्य कोपात् प्रभव आद्योत्पत्तिर्यस्य स तथा। महेश्वरकोपात् प्रभवप्रकारस्तु चिकित्सास्थाने विस्तरेण दर्शयिष्यते। महेश्वरकोपोद्भवत्वदर्शनेन महेश्वरकोपस्य ज्वरं प्रति

रूपाणामतिमात्रानुवर्त्तनं रिष्टमुक्तम्; वचनं हि—'पूर्व्वरूपाणि सर्व्वाणि ज्वरोक्तान्यतिमात्रया। यं विशन्ति विशत्येनं मृत्युर्ज्वरपुरःसरः॥' इति; किंवा अस्य श्लोकस्यान्य एवार्थः, तमिन्द्रिये वक्ष्यामः। न चारुच्यादीनां व्यक्तज्वरभावित्वेन पूर्व्वरूपत्वं हन्यते; यतः लिङ्गान्तरयुक्तानि अरुच्यादीनि लिङ्गानि भवन्ति; लिङ्गान्तरविरहितानि तु पूर्व्वरूपाणि। एकैकशो ज्वरलिङ्गानीत्यत्र 'लिङ्ग'शब्देन निदानपूर्व्वरूपादीन्युच्यन्ते; विस्तरसमासाभ्यामिति विस्तरेण वातादिज्वरा उक्ताः, समासेन संसर्गसन्निपातजाः, यस्त्वत्र समासेनोक्तः, स चिकित्सिते प्रपञ्चनीय इति भावः ॥ १८।१९ ॥

चक्रपाणिः—सम्प्रति ज्वरस्य महाप्रभावतां दर्शयितुं पूर्व्वोत्पत्तिप्रकारान्तरमाह—ज्वरस्तु इत्यादि। 'महेश्वरकोपप्रभवः' इति, ज्वरचिकित्सिते 'द्वितीये हि युगे शर्व्वमक्रोधव्रत-

देहेन्द्रियमनस्तापकरः, प्रज्ञाबलवर्णहर्षोत्साहह्रासकरः, श्रमक्लमभोहाहारोपरोधसंजननः, ज्वरयति शरीराणीति ज्वरः। नान्ये व्याधयस्तथा दारुणा बहूपद्रवा दुश्चिकित्स्याश्च यथायम्। स सर्व्वरोगाधिपतिर्नानातिर्य्यग्योनिषु च बहुविधैः

विप्रकृष्टकारणत्वं ख्यापितं, ज्वरो यदि महेश्वरकोपान्नाभविष्यत् तदाधुनाप्यपचारादिना नोदपत्स्यत। कोपप्रभवत्वेन ज्वरस्य च तैजसत्वं महेश्वरस्य कोपोद्भवत्वेन देवतात्मकत्वञ्च ख्यापितम्। तैजसत्वख्यापनेन सर्व्वज्वरे पित्ताविरोधेन क्रिया युक्ता देवतात्मकत्वेन पूजार्हत्वञ्च युक्तम्। अत एव—उष्मा पित्तादृते नास्ति ज्वरो नास्त्युष्मणा विना। तस्मात् पित्तविरुद्धानि त्यजेत् पित्ताधिकेऽधिकमित्युक्तम्। विदेहे च ज्वरस्तु पूजनैर्वापि सहसैवोपशाम्यति इत्यादि। ज्वरस्त्रिपादस्त्रिशिराः षड्भुजो नवलोचनः। भस्मप्रहरणो रौद्रः कालान्तकयमोपम इति हरिवंशे मूर्त्तिमानुक्त इति। सर्व्वप्राणिनां स्थावरवृक्षादीनां जङ्गममनुष्यपशुपक्ष्यादीनाञ्च। देहेन्द्रियमनस्तापकर इति देहादितापलक्षणं चिकित्सिते दर्शयिष्यते। आहारस्योपरोधो निरोधः प्रतिबन्धकत्वम्। ज्वरयतीति निरुक्त्युपदर्शनेन ज्वरशब्दस्य रुग्जनकत्वेन सर्व्वव्याधिबोधकत्वेऽपि ईदृशो यो ज्वरयति चेदृशवेदनया स ज्वर इति योगरूढिवृत्त्या सन्तापलक्षणनिरुक्तस्यास्य रोगस्य वाचक इति ख्यापितः। अस्य सर्व्वव्याधिप्राधान्यमाह—नान्ये इत्यादि। यथायं निरुक्तप्रभावो ज्वरो दारुणो बहूपद्रवो दुश्चिकित्स्यश्च तथा नान्ये रक्तपित्तादयो व्याधयो दारुणा बहूपद्रवा दुश्चिकित्स्याश्च। सुतरामयं ज्वरः सर्व्वरोगाधिपतिः। न केवलमुक्तप्रभावात् सर्व्वरोगाधिपतिः प्रभावान्तरेणापि तदाह—नानेत्यादि। नाना सर्पगजादिषु।

मास्थितम्" इत्यादिग्रन्थे वक्ष्यमाणां ज्वरोत्पत्तिमाह। क्रोधभवत्वेन च श्लेष्मजन्यस्याप्याग्नेयत्वं दर्शयति; क्रोधो ह्यग्निरूपः, तेन तन्मयोऽपि ज्वरस्तथैव; अत एवोक्तम्—"उष्मा पित्तादृते नास्ति ज्वरो नास्त्युष्मणा विना। तस्मात् पित्तविरुद्धानि त्यजेत् पित्ताधिकेऽधिकम्॥" न च रुद्रकोपभवत्वेन लोभाभिद्रोहप्रभवत्वं ज्वरस्य विरुध्यते; यतः, रुद्रकोपोद्भूत एव ज्वरो लोभाभिद्रोहस्वरूपपापाचारप्राप्त्या पुरा मनुष्येषु भूतः; सर्व्वप्राणिनां ज्वर एव प्राणहर इति, मरणकाले सर्व्वप्राणिनां ज्वर एव प्राणहर इति दर्शयति। देहेन्द्रियमनस्तापकर इत्यत्र प्रत्येकं तापलक्षणं ज्वरचिकित्सिते बोद्धव्यं "वैचित्त्यमरतिर्ग्लानिर्मनःसन्तापलक्षणम्" इत्यादिना; ज्वरयति सन्तापयति। 'इति'शब्दो हेतौ; तेन यस्मादुक्तमहेश्वरक्रोधप्रभवत्वादियुक्तः, तस्मात् सर्व्व-

शब्दैरभिधीयते । सर्व्वप्राणभृतश्च सज्वरा एव जायन्ते सज्वरा एव म्रियन्ते । स महामोहः । तेनाभिभूताः प्राग्दैहिकं देहिनः किञ्चिदपि न स्मरन्ति, सर्व्वप्राणिनाञ्च ज्वर एवान्ते प्राणानादत्ते ॥ २० ॥

तत्र पूर्व्वरूपदर्शने ज्वरादौ वा हितं लघ्वशनमपतर्पणं वा

बहुविधैः शब्दैः पालकेश्वरादिशब्दैरभिधीयते । तदुक्तं पालकाप्येन—पालकः स तु नागानामभितापस्तु वाजिनाम् । गवामीश्वरसंज्ञस्तु मानवानां ज्वरो मतः । अजावीनां प्रलापाख्यः करभे चाल्सो भवेत् । हारिद्रो महिषाणान्तु मृगरोगो मृगेषु च । पक्षिणामभिघातस्तु मत्स्येष्विन्द्रमदो मतः । पक्षाघातः पतङ्गानां व्याडेष्वाक्षिकसंज्ञकः । इत्यादि । अन्यत्र च जलस्य नीलिका भूमेरूषरः वृक्षस्य कोटर इत्यादि । प्रभावान्तरमाह—सर्व्वेत्यादि । सर्व्वप्राणभृत इति सर्व्वे प्राणिनः । स महामोह इति । लोके यो महामायाकार्य्यतया मोहो दृश्यते स ज्वर एव । तं दर्शयति—तेनेत्यादि । तेन ज्वरेण । जन्ममात्रं ज्वरेण प्राग्दैहिकं पूर्व्वजन्मभवम् । ज्वर एवान्ते मरणकाले सर्व्वप्राणिनां प्राणानादत्ते न यमादिः । ज्वरादत्तप्राणान् हि पुरुषान् यमादिरादत्ते ॥ २० ॥

गङ्गाधरः—लिङ्गोपदेशव्याजेनोपशयमुक्त्वा निर्देशसूत्रेण पुनर्व्याकरोति—तत्रेत्यादि । तत्र ज्वरे पूर्व्वरूपदर्शने प्रागुत्पत्तेः ज्वरादौ उत्पन्नमात्रनवज्वरे

रोगाधिपतिरिव रोगाधिपतिः ; नानाविधैः शब्दैरिति हस्तिषु पाकलो गोषु खेरिको मत्स्यानामिन्द्रजालो विहङ्गानां भ्रामरक इत्यादिशब्दैः ; सर्व्वप्राणभृतः सज्वरा एव जायन्ते सज्वरा एव म्रियन्ते ; तत् किमिति तेषां जन्मनि मरणे वा सन्तापात्मा ज्वरो न लक्ष्यत इत्याह—स महामोह इति, जन्ममरणयोर्महामोहरूपो ज्वरो भवति, न सन्तापात्मेत्यर्थः ; अत एवोक्तम्—"ज्वरप्रभावो जन्मादौ निधने च महत् तमः" इति ; जन्मनि महामोहतामाह—तेनेत्यादि । प्राग्दैहिकं जन्मान्तरकृतम् । ननु शुद्धसत्त्वानुगमात् प्राग्दैहिकं स्मरणं युक्तम् ; वचनं हि—"यदा तेनैव सत्त्वेन मनसा युज्यते, तदा जातिमतिक्रान्तामपि स्मरति" इति ; न, तस्य शुद्धमनःसत्त्वानुवृत्तेरपवादत्वादेतत् परित्यज्यान्यत्र ज्वरस्य प्राग्दैहिकविस्मारकत्वं ज्ञेयम् । मरणे महामोहतामाह—सर्व्वप्राणभृतामित्यादि । ज्वर एव महामोह एवेति भावः ; तेन म्रियमाणाः सर्व्वे महामोहं प्रविशन्तीत्यर्थः ॥ २० ॥

चक्रपाणिः—सम्प्रति सूत्रितं चिकित्सासूत्रमाह—तत्रेत्यादि । यद्यपि चिकित्सिते ज्वरादौ लङ्घनं वक्ष्यति, तथापीह पाक्षिकलघ्वशनविधानं न विरोधि, लघ्वशनस्यापि लाघवकर्त्तृत्वेनैव

ज्वरस्यामाशयसमुत्थत्वात्। ततः कषायपानाभ्यङ्गस्नेहस्वेद-प्रदेहपरिषेकानुलेपनवमनविरेचनास्थापनानुवासनोपशमननस्तः-कर्म्मधूपधूमपानाञ्जन-क्षीरभोजनविधानञ्च यथास्वं युक्त्या प्रयोज्यम् ॥ २१ ॥

जीर्णज्वरेषु तु सर्व्वेष्वेव सर्पिषः पानं प्रशस्यते यथास्वौषधसिद्धस्य। सर्पिर्हि स्नेहाद् वातं शमयति संस्कारात्

रसाल्पतया दुष्टदोषे लघ्वशनं साधितं पेयादिकं रसाधिक्ये दुष्टे तु दोषेऽपतर्पणमनशनम्। कस्मादित्यत आह—आमाशयसमुत्थत्वादिति। आमाशयसमुत्थानं हि वह्निदूषणमन्तरेण न भवतीत्यतो वह्निदीपनं लघ्वशनानशनयोर्विधिर्युक्तः। सम्यगल्लङ्घिते च लघ्वशनं यथास्वौषधसिद्धपेयादिकमिति वाशब्दव्यवस्थया व्यवस्था ख्यापिता। ततस्तरुणत्वानन्तरं मध्यज्वरादौ सम्यगल्लङ्घितपीतपेयादिके कषायपानादिकविधानं यथास्वं यस्मिन् ज्वरे यस्यामवस्थायां यदुपयुक्तं तत् युक्त्या दोषबल-पुरुषबल-देशकालानुसारेण प्रयोज्यमित्यर्थः ॥ २१ ॥

गङ्गाधरः—जीर्णज्वरेष्विति। पुराणज्वरे दशाहादूर्द्धं सम्यगल्लङ्घितक्षयितकफे सर्व्वेष्वेव ज्वरेषु न तु न्यूनकफव्यतिरिक्तेषु। न्यूनकफजीर्णज्वरेषु कफावजयः कथं भवति किमु सर्पिषोऽसिद्धस्य पानमित्यत आह—यथास्वौषधेत्यादि। यथास्वौषधसिद्धत्वे न्यूनकफहरत्वं दर्शयति—सर्पिर्हीत्यादि। हेतुं दर्शयित्वा

लङ्घनत्वात्; किंवा यत्र वातादिज्वरे लङ्घनं न कर्त्तव्यम्, तत्र लघ्वशनं बोद्धव्यम्, अपतर्पणञ्च लङ्घनमेव; अथ किमिति वातिकेऽपि वातकारकं लघ्वशनमपतर्पणं वा कार्य्यमित्याह—आमाशयसमुत्थत्वादित्यादि। आमाशयसमुत्थत्वेन वातोऽपि मनाक् लङ्घनीयः स्थानापेक्षया भवतीति भावः; वचनं हि—"जयेद्धि पूर्व्वं स्थानस्य विरुद्धञ्च" इति ॥ २१ ॥

चक्रपाणिः—यथास्वौषधसिद्धस्येति वातादिज्वरे वातज्वरादिहरद्रव्यसिद्धस्य। कथं सर्पिः सर्व्वत्र कार्य्यमित्याह—सर्पिर्हि * स्नेहादित्यादि। संस्कारात् कफमिति कटुतिक्तादिकफहरसंस्कारात्; यद्यपि च यथास्वौषधसिद्धस्येति वचनात् वातेऽपि वातहरसंस्कृतमेव सर्पिर्विहितम्, तथापि वाते रूक्षविपरीतेन स्नेहेनापि सर्पिर्वातहरमेव, पित्तेऽपि उष्णविपरीतशैत्यान्वितम्, कफे तु सर्पिषा स्नेहशैत्यादिना समानेन कश्चिन्न स्वाभाविको विरोधिगुणोऽस्ति, किन्तु संस्कारात् हितमेव दर्शयति; ऊष्माणञ्चेति ज्वरप्रभावभूतमुष्माणम्, न पित्तोष्माणम्, तस्य पित्तग्रहणेनैव

कफं शैत्यात् पित्तमुष्माणञ्चोपशमयति। तस्मात् जीर्णज्वरेषु सर्व्वेष्वेव सर्पिर्हितमुदकमिवाग्निप्लुष्टेषु द्रव्येष्विति ॥ २२ ॥

निगमनमाह—तस्मादित्यादि। दृष्टान्तमाह—उदकमिवेत्यादि। प्राणिनां व्यवच्छेदार्थमाह—द्रव्येष्विति। द्रव्येषु प्राणिषु। इममर्थं पदेन दर्शयति ॥२२

ग्रहणात्; अनेन ज्वरस्योष्महरणेन सर्पिषो ज्वरव्याधिप्रत्यनीकत्वं दर्शितं भवति; अत्र वातशमनं सर्पिषोऽभिधाय पित्तशमनेऽभिधातव्ये कफशमनमुच्यते शैत्यतो वक्तव्योष्मरूपव्याधिप्रत्यनीकतयापि पित्तशमनहेतोः शैत्यस्य समानगुणत्वात्; यदि त्विह मध्ये पित्तप्रशमनमुच्यते, तदा पुनःसंस्कारात् कफमित्युक्त्वा शैत्यादुष्माणमिति वक्तव्यं स्यात्, यत्र तु श्लोकपाठे प्रत्यनीकत्वं घृतस्य पृथङ्नोक्तम्, तत्र, "स्नेहाद् वातं शमयति" इत्यादौ वातमनु पित्तमेव कृतमिति साधु कृतम्; तस्मादिति दोषव्याधिप्रत्यनीकत्वात्; 'जीर्णज्वर' इति वचनेनामज्वरे निषेधयति; सामे हि समानगुणत्वात् सर्पिरहितम्; शान्तिमिति सन्तापशान्तिम्; अभिप्रेत्येति बुद्ध्या स्वीकृत्य, तथा जीर्णज्वरे घृतं दद्यादिति शेषः। नन्वत्र श्लोके सर्पिर्गुणकथने किमिति व्याधिरूपोष्मशमनं नोच्यते? ब्रूमः—पित्तोष्माव्यतिरिक्तत्वेन ज्वरोष्मणः पित्तशमनेन एव लब्धत्वात्; ननु यद्येवम्, गद्यपाठे पृथङ् न पठनीय उष्मा; ब्रूमः—यावानुष्मा शारीरः, स पैत्त एव; यतो ब्रूते—"उष्मा पित्तादृते नास्ति" इति, तथा "पित्तादुष्मणः पक्तिर्नराणामुपजायते" इति; किन्तु, नासावुष्मा कदाचित् पित्तेन साम्येऽप्येको भवति, यथा—कफज्वरे कदाचित् तु अधिके पित्ते वह्निरूप उष्मा मन्दो भवति, यथा च—पित्ताग्निमान्द्ये; तदेवमुष्मा पित्ताद् भिन्नोऽभिन्नश्च भवति; तत्र भेदं गृहीत्वा गद्यपाठे पृथग् ज्वरोष्मा पठितः, श्लोकपाठे त्वभेदविवक्षया न पृथक् पठितः; ज्वरे तु पित्तोष्मा ज्वरप्रभावेण वर्त्तते, स च प्रभावो ज्वरस्य दोषदूष्यविशेषात्मकस्य, तथा "रुद्रकोपोद्भूतत्रिपादत्रिशिराः" इत्यादुरक्तप्राणिविशेषस्य ज्ञेयः। ननु सर्पिः कथं पित्तं हन्ति, यतः यथा पित्तविपरीतशैत्यं सर्पिषि, तथा पित्तसमानः स्नेहोऽप्यस्ति? नैवम्; पित्तं सस्नेहमित्यत्र ईषदर्थेन 'स'शब्देनाल्पस्य स्नेहस्याभिधानात्, उष्णत्वन्तु पित्ते प्रधानम्; यद्यपि पित्तं जलेनाप्यारब्धम्, तथापि तत्र शैत्यमभिभूयाग्निकृतम् औष्ण्यमेवाधिकं भवति तथा तेजसो रौक्ष्येण जलकृतस्नेहोऽपि पित्तेऽभिभूयते, द्रवत्वन्तु जलकृतं तेजसा नाभिभूयते; दृश्यते ह्यग्निसंपृक्तजले द्रवत्वमल्पस्नेहता उष्णता चेति; किंवा किमनेन तप्तजलदृष्टान्तेन, अदृष्टकृत एवायं भूतानामुत्पादः; तेन कश्चिदेव गुणः पाञ्चभौतिकत्वेऽपि द्रव्याणामाविर्भूतो भवति न तु सर्व्वः; यथा—शालिषु तोयकृतं मधुरत्वम्, न तु गौरवमित्युक्तं सूत्रस्थाने। उत्सर्गतः सस्नेहस्यापि पित्तस्य कदाचित् तेजोभूयस्त्वेन रूक्षत्वमपि भवति जीर्णज्वरे; तेन सस्नेहशीतं सर्पिर्हितं तत्र भवतीति न दोषः; अत एवोक्तं चिकित्सिते—"रूक्षं तेजो ज्वरकरम्" इत्यादि; न च वाच्यम्—यथा सांसिद्धिकमपि चेत् पित्तस्य स्निग्धत्वमपैति तथा वातस्यापि रौक्ष्यं किमिति नापैतीति; यतो विचित्रा एव हि गुणा अप्रतिक्षेपणीयाः प्रति-

भवन्ति चात्र।

यथा प्रज्वलितं वेश्म परिषिञ्चन्ति वारिणा।
नराः शान्तिमभिप्रेत्य तथा जीर्णज्वरे घृतम्॥
स्नेहाद्वातं शमयति शैत्यात् पित्तं नियच्छति।
घृतं तुल्यगुणं दोषं संस्कारात् तु जयेत् कफम्॥
नान्यः स्नेहस्तथा कश्चित् संस्कारमनुवर्त्तते।
यथा सर्पिरतः सर्पिः सर्व्वस्नेहोत्तमं मतम्॥
पूर्व्वोक्तो* यः पुनः पद्यैरर्थः समनुगीयते।
तद्व्यक्तिव्यवसायार्थं द्विरुक्तं तन्न गर्ह्यते॥ २३॥

गङ्गाधरः—भवन्ति चात्रेत्यादि। यथेत्यादि। वेश्म काष्ठतृणादिनिर्म्मित-गृहं, दोषं कफमित्यन्वयः। संस्कारादिति कफहरद्रव्येण। ननु तैलवसादीनाम् अप्येवं विधिर्जीर्णज्वरे कुतो नोक्त इत्यत आह—नान्य इत्यादि। अन्यः स्नेहस्तैलादिः। वातश्लेष्मणोर्हितमपि हि तैलं वातकफादिहरद्रव्येण संस्कारात् स्वगुणं विहाय संस्कारकद्रव्यगुणानावहतीति सर्व्वेषु ज्वरेषु न युज्यते इति भावः। ननु च्छान्दसच्छन्दसा यदेतमर्थमुक्तवान् पुनश्च तमर्थं पद्येन कथं वक्तीत्यत आह—पूर्व्वोक्त इत्येदि। तद्व्यक्तीति एतत् संहिताध्येतृपुरुषस्य व्यवसायार्थं शब्दतः कण्ठे धारणार्थं न गर्ह्यते पुनरुक्तत्वदोषाय न भवति॥२३॥

क्षेपणीयाश्च; तत्र ये न सर्व्वदा दृश्यन्ते वातशैत्यपित्तस्नेहादयः, त एव प्रतिक्षेपणीयाः, नान्ये, तथैव दृष्टत्वात्॥ २२॥

चक्रपाणिः—तुल्यगुणमिति सर्व्वथा तुल्यगुणम्, ननु संस्कारात् कफहन्तृत्वे संस्कारेणैव कफो हन्यते, कस्तत्र सर्पिषो व्यापार इत्याह—नान्य इत्यादि। नान्य इति तैलादिः; संस्कारम् अनुवर्त्तत इति संस्कारकद्रव्यकार्य्यं करोति। तेनैतद् दर्शयति, यत्—तेनैव द्रव्येण यावन्मानेन घृतं संस्क्रियते, अन्यश्च तैलादिस्तथैव संस्क्रियते, तदा घृतमेवान्यस्नेहेभ्यो विशेषेण संस्कारक-द्रव्यकार्य्यं करोति;—अयं घृतप्रभावोऽधिकः; तेन संस्कारात् कफविजये घृतमेव कर्त्तव्यम् इत्यर्थः, प्रपञ्चितश्चायमर्थः स्नेहाध्याये।

ननु स्नेहाद वातं शमयतीत्यादिग्रन्थो गद्ये नैवोक्तः, तत् किमर्थं श्लोकेनोच्यते

* गद्योक्त इति चक्रसम्मतः पाठः।

तत्र श्लोकाः।

त्रिविधं नामपर्य्यायैर्हेतुं पञ्चविधं गदम्।
गदलक्षणपर्य्यायान् व्याधेः पञ्चविधं ग्रहम्॥
ज्वरमष्टविधं तस्य प्रकृष्टासन्नकारणम्।
पूर्व्वरूपञ्च रूपञ्च भेषजं संग्रहेण च॥

गङ्गाधरः—अथाध्यायार्थमुपसंहरति—तत्र श्लोका इति। त्रिविधमित्यादि। नामपर्य्यायैरिह खल्वित्यादिना नामपर्य्यायैर्हेतुं तत्त्रिविधमसात्म्येत्यादिना त्रिविधं हेतुम्। अतस्त्रिधेत्यादिना पञ्चविधं गदम्। तत्र व्याधिरामयेत्यादिना गदस्य लक्षणपर्य्यायान् लक्षणाय पर्य्यायान्। तस्योपलब्धिरित्यादिना व्याधेः पञ्चविधं ग्रहमुपलब्धिकारणम्। तं विस्तरेणेत्यादिना सन्दर्भाय प्रतिज्ञाय अथ खल्वष्टभ्य इत्यादिना ज्वरमष्टविधम्। तस्येत्यादिना प्रतिज्ञाय तस्याष्टविधस्य ज्वरस्य प्रत्येकशः क्रमेण। रूक्षलघ्वित्यादिना आसन्नकारणं सम्प्राप्तिकं पूर्व्व-

इत्याह—गद्योक्तो य इत्यादि। तद्व्यक्तिव्यवसायार्थमिति, तद्व्यक्तिर्गद्योक्तार्थस्य व्यक्तिः प्रसन्नतेति यावत्, व्यवसायोऽध्यवसायो ग्रहणमित्यर्थः; यस्मात् पूर्व्वोक्तार्थस्य स्वीकरणार्थं पुनः श्लोकेनाभिधानम्, तस्मात् प्रयोजनान्तरयुक्तत्वात् न पुनरुक्तिदोष इति भावः, गद्योक्तापेक्षया श्लोकाभिधानं सुखग्रहणं भवतीति लोकसिद्धमेव। अत्र च गद्योक्त इत्युपलक्षणं तेन श्लोकोक्तोऽपि श्लोकेनोच्यत इति बोद्धव्यम्; यथा—आरग्वधीये; एवं गद्योक्तोऽपि गद्येनेति बोद्धव्यम्; यथा—प्रपञ्चेन कारणाद्यभिधायोक्तमेव "असात्म्येन्द्रियार्थसंयोगः प्रज्ञापराधः परिणामश्च" इत्यादि; तथा श्लोकेनोक्तोऽपि गद्येनोच्यते; यथा—"ब्रह्मणा हि यथा प्रोक्तम्" इत्यादि श्लोकेनाभिधाय आद्येऽध्याये, पुनरन्यत्रोक्तम्—"यमायुर्व्वेदमश्विनौ मह्यं प्रायच्छेताम्" इत्यादि; अत्र श्लोकाभिधानमेव सुखग्रहणार्थमिति ज्ञेयम्; किंवा, तद्व्यक्तिव्यवसायार्थमिति यथायोग्यतया बोद्धव्यम्; तेन प्रपञ्चाभिधानमनुवृत्त्यर्थं बोद्धव्यम्, संक्षेपाभिधानन्तु व्यवसायार्थम्; तेन गद्यश्लोकाभिधानाभ्यां व्यक्तिव्यवसायौ क्रियेते; तत्र प्रपञ्चाभिधाने अर्थस्य व्यक्तिः स्फुटतैवेति, संक्षेपाभिधानन्तु प्रपञ्चापेक्षया सुखग्रहणं भवति॥ २३॥

चक्रपाणिः—संग्रहे यद्यपि हेतुपर्य्यायाः पूर्व्वमुक्तास्तदनु हेतुत्रैविध्यम्, तथापि च्छन्दोऽनुरोधेन व्युत्क्रमेण कथनम्; नामरूपा योगरूढाः पर्य्याया नामपर्य्यायाः; पञ्चविधं गदमित्याग्नेयादि-भेदेन; पर्य्यायनामानीति पाठे लिङ्गपर्य्यायाभिधानम्; तस्य व्याधिपञ्चविधग्रहशब्देनैव "तस्योपलब्धिः" इत्यादिग्रन्थान्तर्निविष्टसकलार्थस्य गृहीतत्वात्; गदलक्षणपर्य्यायानिति पाठे तु पूर्व्वपक्षो नास्त्येव; पाठस्तु नायमतिप्रसिद्धः; प्रकृष्टासन्नकारणमिति ज्वरस्य रूक्षादि

तथाजहार ज्वरस्याग्रे निदाने विगतज्वरः।
भगवानग्निवेशाय प्रणताय पुनर्व्वसुः॥ २४॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते निदानस्थाने
ज्वरनिदानं नाम प्रथमोऽध्यायः॥ १॥

रूपश्च रूपश्च। संग्रहेण सामान्यतः संक्षेपेण भेषजञ्चाष्टविधस्यैव ज्वरस्योपशयम्। अग्रे निदानेऽस्मिन् ज्वरनिदानाध्याये। विगतज्वरः पुनर्व्वसुरिति॥२४॥
अध्यायं समापयति—अग्नीत्यादि॥

इति श्रीगङ्गाधरकविरत्नकविराजविरचिते चरकजल्पकल्पतरौ
द्वितीयस्कन्धे निदानस्थानीयप्रथमाध्यायज्वरनिदान-
जल्पाख्या प्रथमशाखा॥ १॥

प्रकृष्टम्, आसन्नं वातादि, तथा प्रकृष्टं हृद्रोगोपः, आसन्नन्तु रूक्षादि; यद्यपि रूपात् पश्चात् पूर्व्वरूपमित्युक्तम्, तथापि च्छन्दोऽनुरोधात् पूर्व्वरूपमग्रे कृतम्; किंवा वातादिजविशिष्टज्वर-लक्षणानामव्यक्तानां विशिष्टज्वरपूर्व्वरूपतां सूचयता पूर्व्वरूपं पूर्व्वं कृतम्; वातादिज्वर-लक्षणानि ह्यव्यक्तानि पूर्व्वरूपमेव भवन्ति॥ २४॥

इति चरकचतुरानन-श्रीमच्चक्रपाणिदत्तविरचितायाम् आयुर्व्वेददीपिकायां निदानस्थानस्य
व्याख्यायां ज्वरनिदानं नाम प्रथमोऽध्यायः॥ १॥

## द्वितीयोऽध्यायः ।

अथातो रक्तपित्तनिदानं व्याख्यास्यामः,
इतिह स्माह भगवानात्रेयः ॥ १ ॥

पित्तं यथाभूतं लोहितपित्तमिति संज्ञां लभते, तथानुव्याख्यास्यामः ।

यदा जन्तुर्यवकोद्दालककोरदूषप्रायाण्यन्नानि भुङ्क्ते, भृशोष्णतीक्ष्णमपि चान्नजातं निष्पावमाषकुलत्थसूपक्षारोपहितं, दधिदधिमण्डोदश्वित्कट्वराम्लकाञ्जिकोपसेकं वा,

गङ्गाधरः—अथ ज्वरसन्तापाद् रक्तपित्तस्य सम्भव इति हेतुत्वसङ्गत्या तथा ऊष्मा पित्तादृते नास्ति ज्वरो नास्त्युष्मणा विनेति वचनात् सर्व्वज्वरे पित्तसम्बन्धो लोहितपित्ते च सर्व्वत्रैव पित्तसम्बन्ध इत्येककार्य्यत्वसङ्गत्या च ज्वरानन्तरं रक्तपित्तनिदानमाह—अथात इत्यादि । सर्व्वं पूर्व्ववत् ॥ १ ॥

गङ्गाधरः—ननु रक्तपित्तमिति किं रक्तसहितं पित्तं ? किं रक्तञ्च तत् पित्तञ्चेति रक्तपित्तं ? कि रक्तगतपित्तं रक्तपित्तमिति ? अतस्तदर्थं प्रवक्तुमाह—पित्तमित्यादि । यथाभूतं येन प्रकारेण यद्रूपं भूत्वेत्यर्थः । तथानुव्याख्यानमाह—यदेत्यादि । यवकादयः प्राया बहुला यत्र तानि तथा । यवकादीनां शीतवीर्य्यादित्वेऽपि संयोगप्रभावात् पित्तप्रकोपकत्वं लोहितपरिमाणातिवर्त्तकत्वञ्च । एवं माषादीनां बोध्यम् । न हि केवलयवकादिभक्षणेन पित्तं रक्तञ्चाशु मानमतिवर्त्तते, किन्तु यवकादिभिर्बहुलैः संयुक्तादन्नात् तथा

चक्रपाणिः—आद्योत्पत्तौ ज्वरसन्तापाद्रक्तपित्तोत्पत्तेः ज्वरमनु रक्तपित्तनिदानमुच्यते । 'पित्तं यथाभूतम्' इत्यादिना पित्तमेव अवस्थावशात् लोहितपित्तमित्युच्यते इति दर्शयति, न तु रक्तञ्च पित्तञ्च रक्तपित्तमिति ।

'यदा जन्तुः' इत्यादिना निदानमुच्यते ; यवको व्रीहिविशेषः ; उद्दालो वनकोद्रवः ; कोरदूषो यद्यप्यन्नपाने पित्तहर उक्तस्तथापि अस्य निष्पावादियुक्तस्य संयोगमहिम्ना रक्तपित्तनिदानत्वं ज्ञेयम् ; एवमन्यत्रापि । रक्तपित्तनिदानत्वेनेह उक्तक्षीरादौ ज्ञेयम् । दधिमण्डो

वाराह-माहिषाविक-मात्स्यगव्यपिशित-पिण्याक-पिण्डालु-शुष्क-शाकोपहितं, मूलकसर्षपलसुनकरञ्जशिग्रुमधुशिग्रुखड़यूष-भूस्तृणसुमुखसुरस-कुठेरक-गण्डीर-कालमालक*पर्णासच्चवक-फणिज्झकोपदंशं, सुरासौवीरकतुषोदकमैरेयकमेदकमधूलक-शुक्तकुवलबदराम्लप्रायान्नपानं, पिष्टान्नोत्तरभूयिष्ठमुष्णाभितप्तो वातिमात्रमतिवेलं वा पयसा† वा समश्नाति, रौहिणीकं काणकपोतं वा सर्षपतैलक्षारसिद्धं, कुलत्थमाष‡पिण्याक-जाम्बवनिकुचपक्वैः शौक्तिकैरामक्षीरमतिमात्रमथवा पिब-त्युष्णाभितप्तः, तस्यैवमाचरतः पित्तं प्रकोपमापद्यते, लोहित-ञ्चाशु प्रमाणमतिवर्त्तते।

भृशोष्णतीक्ष्णान्नान्निष्पावमाषादुपहितात् दध्यादुपसिक्ताद्वा वराहादि-मांसपिण्डालुकादुपहिताद्वा मूलकसर्षपादुपदंशाद्वान्नात् सुरासौवीरकादि-प्रायान्नपानाद्वा तथोष्णाभितप्तस्य पुंसः पिष्टान्नोत्तरभूयिष्ठं पिष्टान्नमुत्तरं भोजनावसाने भूयिष्ठं यस्मिन्नशने तत् तथा। तथाविधमन्नमतिमात्रमुष्णाभितप्तो वा योऽश्नाति यश्चातिमात्रमुष्णाभितप्तः सन्नतिवेलमतिशयं पयसा सहाश्नाति तस्य पित्तं प्रकोपमापद्यते, लोहितञ्चाशु प्रमाणमतिवर्त्तते। सर्षपतैलक्षाराभ्यां सिद्धं रोहिणीकं शाकं काणकपोतमांसं वा योऽश्नाति, तथा कुलत्थादिपक्वैः शौक्तिकैर्बदरफलैः आमक्षीरमपक्वदुग्धमतिमात्रं यः पिबति, अथवा य उष्णाभितप्तः सन्नतिमात्रं क्षीरं पिबति, तस्य पित्तं प्रकोपमापद्यते, लोहित-ञ्चाशु प्रमाणमतिवर्त्तते। उष्णाभितापेन पित्तप्रकोपः पिष्टान्नादिभोजनपानाभ्यां

मस्तु, उदश्विदर्द्धजलं तक्रम्; कट्वरं निर्जलम्, किंवा अम्लं तक्रम्; मधुशिग्रु स्वल्प-शोभाञ्जनकम्; खड़यूषो रागकर्पूर इति ख्यातः; सुमुखादयः फणिज्झकान्ताः पर्णासभेदाः; उपदंशमिति मूलकादीनि खादयित्वा यावकाद्यन्नं भुङ्क्त इत्यर्थः; मधूलको गोधूमविशेषः; शुक्तः सन्धानविशेषः; पिष्टान्नमुत्तरत्र भोजनस्य भूयिष्ठं यत्र तत् पिष्टान्नोत्तरभूयिष्ठम्; अति-वेलमिति पुनःपुनः; रौहिणीकं रोहिणीशाकम्; शौक्तिकैरिति बदरीफलैः; आममित्युत्तरेण

---

* कालमानक इति वा पाठः। † इतः परं 'पयः पिबति' इत्यधिकः पाठः क्वचित् दृश्यते।

‡ माषेतिशब्दश्चक्रपाणेरनभिमतः।

तस्मिन् प्रमाणातिवृत्ते पित्तं प्रकुपितं शरीरमनुसृप्य यदैव यकृत्प्लीहप्रभवाणां लोहितवहानाञ्च स्रोतसां लोहिताभिष्यन्दगुरूणि मुखान्यासाद्य प्रतिपद्यते, तदैव लोहितं प्रदूषयति, तल्लोहितसंसर्गात् लोहितप्रदूषणाल्लोहितवर्णगन्धानुविधानाच्च पित्तं लोहितपित्तमाचक्षते ॥ २ ॥

रक्तस्य वृद्धिर्भवति। रसधातुपरिणामे परिमाणेनाधिकं भवति रक्तम्। सुश्रुतेऽप्युक्तं—क्रोधशोकभयायास-विरुद्धान्नातपानिलान्। कट्वम्ललवणक्षार तीक्ष्णोष्णातिविदाहिनः। नित्यमभ्यस्यतो दुष्टो रसः पित्तञ्च कोपयेत्। विदग्धं स्वगुणैः पित्तं विदहत्याशु शोणितमिति।

इति निदानमुक्त्वा विधिरूपां सम्प्राप्तिमाह—तस्मिन्नित्यादि। तस्मिन् लोहिते प्रमाणातिवृत्ते परिमाणादतिशयेन वृत्ते प्रकुपितं पित्तं यदा शरीरमनुसृप्य यकृत्प्लीहप्रभवाणां यकृत्प्लीहाख्ये द्वे नाड्यौ रक्तोत्पत्तिस्थाने दक्षिणवामपार्श्वस्थे ताभ्यां प्रभवाणां तयोः प्रतानरूपाणां तयोः स्थितस्य रक्तस्य वहनानां स्रोतसां नाडीनां मुखानि वृद्धलोहिताभिष्यन्देन गुरूणि आसाद्य आगत्य प्रतिपद्यते प्राप्नोति, तदा लोहितं प्रदूषयति। एतेन वक्ष्यमाणस्योर्द्ध्वं प्रतिपद्यमानस्य रक्तस्य यकृत्प्लीहप्रभवेभ्य ऊर्द्ध्वगामिभ्यः स्रोतोभ्यश्च्यवनमामाशयस्थस्याधोगामिभ्यः स्रोतोभ्योऽधः प्रतिपद्यमानस्य च्यवनमुभयतः प्रतिपद्यमानस्योभयेभ्यः स्रोतोभ्यश्च्यवनम्। सुश्रुते—ततः प्रवर्त्तते रक्तमूर्द्ध्वञ्चाधो द्विधापि वा। आमाशयाद् व्रजेदूर्द्ध्वमधः पक्वाशयाद् व्रजेत्। विदग्धयोर्द्वयोश्चापि द्विधा मार्गं प्रवर्त्तते। केचित् सयकृतः प्लीह्नः प्रवदन्त्यसृजो गतिमिति।

निरुक्तिमाह—तदित्यादि। लोहितरागस्यानुविधानाच्चेति लोहितवर्णं लोहितगन्धं स्वं विधाय प्रवर्त्तनात् लोहितस्य वर्णगन्धानुवर्णगन्धौ स्वस्य विधा-

सम्बध्यते; स्वप्रमाणमतिवर्त्तते प्रवर्द्धत इत्यर्थः; यदैवेत्यनेन, एवमपि कुपितस्य पित्तस्य य एवांश उक्तसम्प्राप्तिमान् भवति, स एव रक्तं दूषयति, नान्य इति दर्शयति। लोहिताभिष्यन्दगुरूणि प्रवृद्धलोहितस्यन्देन गुरूणि उत्सन्नानि विवृतानीति यावत्; प्रतिलभ्यात् वृद्धेन शोणितेन इति शेषः; प्रतिपद्यत इति पाठपक्षे तु शोणितमिति शेषः, शोणितं प्रतिपद्यत इत्यर्थः। यकृत्-

तस्येमानि पूर्व्वरूपाणि भवन्ति ; तद् यथा—अनन्नाभिलाषो भुक्तस्य विदाहः शुक्ताम्लगन्धरस उद्गारश्छर्द्देरभीक्ष्णागमनं छर्द्दितस्य बीभत्सता स्वरभेदो गात्राणां सदनं परिदाहो

याधो वोर्द्ध्व वा युगपद् वा प्रवर्त्तनात् लोहितपित्तमाचक्षते। लोहितवर्णगन्धौ केन प्रकारेण स्वस्य विदधीतेत्यत आह—तल्लोहितसंसर्गादिति। एतेन लोहितमिश्रत्वं ख्यापितं पित्तस्य। लोहितमिश्रणे हेतुमाह—लोहितप्रदूषणादिति। एतेन दूष्यमत्र लोहितमिति दर्शितम्। तथा लोहितञ्च तत् पित्तञ्चेति लोहितपित्तमिति व्युत्पत्तिश्च ख्यापिता। लोहितत्वञ्च पित्तस्य लोहितसंसर्गात् लोहितसंमिश्रणन्तु लोहितवर्णगन्धाभ्यामनुमेयमिति। तेन स्वदूषितलोहितमिश्रितपित्तप्रवृत्तिर्बोध्या। अत एव लोहितञ्च पित्तञ्चेति लोहितपित्तमिति न युज्यते, पृथक् पित्तरक्तयोः प्रवृत्त्यदर्शनात्। न वा लोहितेन सह मिश्रं पित्तं लोहितपित्तमिति, युगपत् स्वरूपतो लोहितस्य पित्तस्य पृथक् प्रवृत्त्यदर्शनात् ॥ २ ॥

गङ्गाधरः—विधिसम्प्राप्तिमुक्त्वा पूर्व्वरूपाण्याह—तस्येमानीत्यादि। अनन्नाभीत्यादि। शुक्तं चुक्रं तस्याम्लस्य च द्रव्यस्यैव गन्धरसौ यत्रोद्गारे स तथा। अभीक्ष्णागमनं प्रायेण च्छर्दिवेगोपस्थितिर्न तु च्छर्दिः। यदि च च्छर्दिः स्यात् तदा तस्य बीभत्सता वैकृतचेष्टता। स्वरभेदः। परिदाहो गात्राणाम्

प्लीहप्रभवा गामित्यस्य विशेषणं—'लोहितवहानाम्' इति ; चकारोऽवधारणे ; वक्ष्यति च चिकित्सिते,—"प्लीहानञ्च यकृच्चैव तदधिष्ठाय वर्त्तते। स्रोतांसि रक्तवाहानि तन्मूलानि हि देहिनाम्" ॥ इति।

एवं रक्तदूषके पित्ते यथा 'रक्तपित्त'संज्ञा भवति, तदाह—संसर्गादित्यादि। संसर्गाल्लोहितसम्बन्धात् ; लोहितगन्धवर्णानुविधायित्वादिति लोहितसदृशगन्धवर्णयुक्तत्वात् ; एतेन रक्तयुक्तं पित्तं 'रक्तपित्तम्' इति प्रथमा निरुक्तिः ; रक्ते दूष्ये पित्तमिति द्वितीया, रक्तवत् पित्तं रक्तपित्तमिति तृतीया दर्श्यते ; उक्तञ्च चिकित्सिते—"संसर्गाद् दूषणात् तत् तु सामान्याद् गन्धवर्णयोः। रक्तस्य पित्तमाख्यातं रक्तपित्तं मनीषिभिः ॥" ; एतदेव च रक्तपित्तस्य सामान्यं लक्षणम् यद्—'रक्तगन्धवर्णानुविधानम्' ; विशेषलक्षणन्तु ऊर्द्ध्वादिभेदेन कफादिसम्बन्धात् एवेह बोद्धव्यम् ; चिकित्सितेऽपि "सान्द्रं सपाण्डु" इत्यादि लक्षणं वक्ष्यति ॥ १।२ ॥

चक्रपाणिः—पूर्व्वरूपे च्छर्दितस्य बीभत्सता वैवर्ण्यवैगन्ध्यादियोगात् ; पिड्कोलिका नेत्रमलाः ;

मुखाद्धूमागम इव लोहलोहितमत्स्यामगन्धित्वमिव चास्यस्य, रक्त-हरित-हारिद्रत्वमङ्गावयव-शकृन्मूत्रस्वेदलालासिंघाणकास्य-कर्णमलपिच्चड़िका-*-पिड़कानाम्, अङ्गवेदना, लोहितनीलपीत-श्यावानामर्च्चिष्मतां दुष्टानाञ्च रूपाणां स्वप्ने सन्दर्शन-मभीक्ष्णमिति लोहितपित्तपूर्व्वरूपाणि भवन्ति ॥ ३ ॥

उपद्रवास्तु खलु नियताः † दौर्ब्बल्यारोचकाविपाकश्वास-कासज्वरातिसारशोषशोथपाण्डुरोगाः स्वरभेदश्च ॥ ४ ॥

एव। लोहितमत्स्यस्य यथामगन्धस्तथैवामगन्धित्वमास्यस्य। रक्तहरितहारिद्र-त्वान्यतमवर्णत्वमङ्गावयवानां शकृतश्च मूत्रस्य च स्वेदस्य च लालायाश्च सिङ्घाणकस्य चास्यस्य च कर्णमलस्य च पिच्चड़िका नेत्रमलास्तेषां पिड़-कानाञ्च भवति। तथा स्वप्ने लोहिताद्यन्यतमवर्णानामर्च्चिष्मतां वह्न्यादीनां दुष्टानाञ्च रूपाणां कबन्धादिविकृतरूपाणां दर्शनमभीक्ष्णमिति ॥ ३ ॥

गङ्गाधरः—अस्य रक्तपित्तस्य दौर्ब्बल्यादीनां लिङ्गत्वेनाशङ्कानिरासार्थ-माह—उपद्रवास्त्वित्यादि। उपद्रवलक्षणन्तु सुश्रुतेनोक्तं—यः पूर्व्वोत्पन्नं व्याधिं जघन्यजातो व्याधिमुपसृजति स तन्मूल उपद्रवसंज्ञ इति। तथान्यत्र च—रोगारम्भकदोषप्रकोपजन्योऽन्यो विकार उपद्रव इति। एते दौर्ब्बल्यादय उपद्रवा रक्तपित्ते नियताः अवश्यम्भाविन इत्यत उक्ता ये चानियतास्ते नात्र तन्त्रे त्वाचार्य्येणोक्तास्तस्माज्ज्वरादीनामुपद्रवा नोक्ता अनियतत्वात्। तथा सति चास्य रक्तपित्तस्यापि येऽन्ये त्वनियता उपद्रवा न तेऽत्रोक्तास्ते तु वमन-मददाहमूर्च्छा भुक्तस्य घोरविदाहाधृतिहृदयातुल्यपीड़ा तृष्णा शिरोऽभितापभक्त-द्वेषपूतिनिष्ठीवनविकृतयश्च बोध्याः। सुश्रुते ह्युक्तम्—दौर्ब्बल्यश्वासकास-ज्वरवमथमदाः पाण्डुता दाहमूर्च्छा भुक्ते घोरो विदाहस्त्वधृतिरपि सदा हृद्यतुल्या

अङ्गवेदना अङ्गमर्दः। व्याधेरसाध्यस्य कृच्छ्रसाध्यस्य वा धर्म्मस्य व्यापकान् लिङ्गविशेषानुप-द्रवाख्यानाह—उपद्रवास्त्वित्यादि। तेनोपद्रवस्य लिङ्गभूतत्वेन निदानपञ्चकातिरिक्तत्वम्; रक्तपित्ते चैते उपद्रवाः प्रायोभावित्वेन नियता इत्यभिधीयन्ते; ज्वरे तूपद्रवा नियता न सन्ति, तेन तत्र नोक्ताः; एवं गुल्मादावपि प्रायोभावित्वेन उपद्रवकथनं व्याख्येयम्। स्वरभेदश्चेति पृथक्पाठेन, स्वरभेदस्य प्रायोभावित्वमाह ॥ ३। ४ ॥

* पिड़कोलिका इति चक्रः।   † नियता इति पदं केषुचित् ग्रन्थेषु न दृश्यते।

मार्गौ पुनरस्य द्वावूर्द्ध्वञ्चाधश्च। तद् बहुश्लेष्मणि शरीरे श्लेष्मसंसर्गादूर्द्ध्वं प्रतिपद्यमानं कर्णनासानेत्रास्येभ्यः प्रच्यवते। बहुवाते तु शरीरे वातसंसर्गादधः प्रतिपद्यमानं मूत्रवर्च्चोमार्गाभ्यां प्रच्यवते। बहुश्लेष्मवाते तु शरीरे श्लेष्मवातसंसर्गात् द्वावपि मार्गौ प्रतिपद्यते। द्वौ मार्गौ प्रतिपद्यमानं सर्व्वेभ्य एव यथोक्तेभ्यः खेभ्यः प्रच्यवते शरीरस्य। तत्र यदूर्द्ध्वभागं तत्

च पीड़ा। तृष्णा कण्ठस्य भेदः शिरसि च तपनं पूतिनिष्ठीवनञ्च भक्तद्वेषोऽविपाको विकृतिरपि भवेद् रक्तपित्तोपसर्गाः। इति॥ ४॥

गङ्गाधरः—मार्गमाहास्य—मार्गावित्यादि। यद्यपि मुखाद्यनेकमार्गा रक्तस्य प्रवर्त्तने तथापूर्द्ध्वाधस्त्वाद् द्वाभ्यां द्वावेव युगपद्द्विमार्गस्य तयोरनतिरिक्तत्वात्। मार्गप्रतिनियमे दोषप्रतिनियमस्य हेतुमाह—तद्बहिृत्यादि। तत् रक्तपित्तं बहुश्लेष्मणि शरीरे तच्छ्लेष्मसंसर्गात् खल्वामाशयस्थं प्रमाणातिवृत्तरक्तवहानां यकृत्प्लीहनाड़ीप्रभवाणां स्रोतसामूर्द्ध्वगामिभिः स्रोतोभिरूर्द्ध्वं प्रतिपद्यमानं कर्णनासिकानेत्रास्येभ्यः प्रच्यवते। बहुवाते तु शरीरे वातसंसर्गात्तद्रक्तपित्तं पक्वाशयस्थमधोगामिभिः स्रोतोभिरधः प्रतिपद्यमानं मूत्रवर्च्चोमार्गाभ्यां प्रच्यवते। बहुश्लेष्मवाते तु शरीरे श्लेष्मवातसंसर्गात् पक्वामाशयस्थं तद्रक्तपित्तं सर्व्वेभ्यः स्रोतोभ्यो द्वावपि मार्गावूर्द्ध्वाधोमार्गौ प्रतिपद्यमानं खलु प्रच्यवते। यथोक्तेभ्यः खेभ्य इति पूर्व्वोक्तेभ्यः कर्णनासानेत्रास्यमूत्रपुरीषमार्गेभ्यः। अस्य रोगस्य मार्गप्रतिनियतचिकित्सत्वान्मार्गप्रतिनियत कफादिदोषत्वाच्च मार्गप्रवृत्तिदर्शनेनैव दोषज्ञानाद् दोषलिङ्गानि नात्र स्थाने व्याख्यातानि इति बोध्यम्।

नन्वस्त्वेवं, रोगाणां साध्यत्वासाध्यत्वादिकन्तु दोषलिङ्गैरेव ज्ञायते तत् कथं दोषलिङ्गानि नोक्तानीत्याशङ्कायां रक्तपित्तस्य साध्यत्वासाध्यत्वादिकमपि न केवलं दोषलिङ्गविज्ञेयमपि तु तदपि मार्गप्रवृत्तिविज्ञेयमित्यभिप्रेत्याहास्य साध्यत्वासाध्यत्वलक्षणानि—तत्रेत्यादि। विरेचनोपक्रमणीयत्वात्

चक्रपाणिः—साध्यत्वादिविशेषस्य तथा कफादिसम्बन्धस्य च मार्गविशेषकृतस्य प्रतिपादनार्थं मार्गमाह—मार्गावित्यादि। बहुश्लेष्मणि शरीरे श्लेष्मसंसर्गादितिवचनेन ऊर्द्ध्वगे रक्तपित्ते श्लेष्मसम्बन्धः कारणान्तरचितेनापि श्लेष्मणा भवतीति दर्शयति; यत् तु रक्तपित्तनिदानजन्यत्वं

साध्यं, विरेचनोपक्रमणीयत्वाद् बह्वौषधत्वाच्च । यदधोभागं तद् याप्यं, वमनोपक्रमणीयत्वादल्पौषधत्वाच्च । यदुभयभागं तदसाध्यं, वमनविरेचनायोगित्वादनौषधत्वाच्चेति ॥ ५ ॥

इति विरेचनं पित्तहरणानामिति पित्तहरौषधेषु श्रेष्ठतमविरेचनेन उपक्रमयोग्यत्वात् । बह्वौषधत्वाच्चेति मधुराम्ललवणकटुवर्ज्जं कषायतिक्तौषधत्वात् । वमनोपक्रमणीयत्वादिति—वक्ष्यते हि प्रतिमार्गञ्च हरणं रक्तपित्ते विधीयते इति, तेन विरेचनस्य पित्तौषधश्रेष्ठतमस्यायोग्यत्वेन वमनस्य प्रतिमार्गहरणतयोपयुक्तस्य वातपित्तजयौषधत्वेन श्रेष्ठत्वाभावात् अल्पौषधत्वाच्चेति वातपित्तहरणे मधुरभेषजमेव योगिकं न तु अम्ललवणौ पित्तवर्द्धकत्वात्, न वा कटुतिक्तकषाया वातवर्द्धकत्वादिति ऊर्द्धगापेक्षयाल्पौषधत्वं बोध्यम् । वमनविरेचनायोगित्वादिति उभयभागप्रवृत्तस्याधोभागप्रवृत्तरक्तपित्तहरणे वमने प्रयुक्ते ऊर्द्धभागप्रवृत्तस्य वृद्धिः स्यात् तथोर्द्धभागप्रवृत्तस्य हरणार्थं प्रयुक्तेन विरेचनेनाधोभागप्रवृत्तस्य वृद्धिः स्यादिति वमनविरेचनोभयस्य नोपयोगित्वम् । अनौषधत्वाच्चेति नास्त्यौषधं, द्रव्यं हि षड्रसान् विना नास्ति, तत्राधोगस्य प्रतिकारार्थं मधुरमूर्द्धभागप्रवृत्तस्य वर्द्धकं भवति कफवर्द्धकत्वात् । ऊर्द्ध-भागहरणार्थं कषायतिक्तकौ वातवर्द्धकत्वेनाधोगस्य वृद्धिकरौ, तथाम्ललवणकटुका उभयत्रापि पित्तवर्द्धकत्वान्नैवौषधानि भवन्तीत्यौषधाभावो द्रष्टव्य इति । एतच्च मार्गप्रतिनियतसाध्यासाध्यत्वादिकं सूत्ररूपं दोषभेदेन विस्तरेण वक्ष्यमाणं चिकित्सिताध्याये बोध्यम्, तेन,—एकदोषानुगं साध्यं द्विदोषं याप्यमुच्यते । यत् त्रिदोषमसाध्यं स्यान्मन्दाग्नेरतिवेगवदिति वक्ष्यमाणवचनेन प्राकृतः सुखसाध्यस्तु वसन्तशरदुद्भव इति वचनाच्च रक्तपित्तस्य पैत्तिकरोगत्वात् । शरदि यदि कफमात्रसंसृष्टं सदूर्द्धगं रक्तपित्तं स्यात् तदा सुखसाध्यम्, अन्यकाले चेत् तदा कृच्छ्रं, यदि शरदि पित्तानुबन्धं वा वातानुबन्धं स्यात् तदा कृच्छ्रसाध्यं स्यात् तत्र मार्गमहिम्ना कफसंसर्गेऽपि द्विदोषत्वाभावात् न याप्यत्वम्, अन्यकाले तु याप्यत्वमतिकृच्छ्रत्वं वा । यदूर्द्धगं रक्तपित्तं शरदि

कफस्य, तत्तावश्यं भवति ; अत एव "स्निग्धोष्णमुष्णरूक्षञ्च रक्तपित्तस्य कारणम् । अधोगस्योत्तरं प्रायः" इत्यादौ 'प्रायः'शब्दं कृतवान् ; एवं बहुवाते इत्यत्रापि व्याख्येयम् ; खेभ्य इति रन्ध्रेभ्यः । विरेचनोपोक्रमणीयत्वात्, तत् श्लोकेन स्वयमेव व्याकरिष्यति ॥ ५ ॥

**रक्तपित्तप्रकोपस्तु खलु पुरा दक्षयज्ञध्वंसे रुद्रकोपामर्षप्रभवाग्निना प्राणिनां परिगतशरीरप्राणानामभूज्ज्वरमनु ॥ ६ ॥**

**तस्याशुकारिणो दावाग्नेरिवापतितस्यात्ययिकस्य आशु प्रशान्त्यै प्रयतितव्यम्। मात्रां देशं कालञ्चाभिसमीक्ष्य**

वातपित्तानुगं वातकफानुगं विशेषेण कफपित्तानुगं स्यात् तदा सुखेन याप्यमन्यकाले तु कष्टेन याप्यम्। यदि शरदि विशिष्टकफपित्तवातैः संसृष्टं स्यात् तदा त्वसाध्यं चिरकारित्वेन बोध्यम् अन्यकाले तु शीघ्रकारित्वेनासाध्यं भवतीति। अधोगन्तु यदि शरदि केवलविशिष्टवातानुगं स्यात् तदा सुखेन याप्यं स्यादन्यकाले तु कष्टेन याप्यम्, कफेन विशिष्टपित्तेन वा संसृष्टं स्यात् तदापि तथा। यदि शरदि विशिष्टवातपित्ताभ्यां विशिष्टवातकफाभ्यां विशिष्टपित्तकफाभ्यां वा तदातिकृच्छ्रेण याप्यमसाध्यं वा चिरकारि। तथान्यान्यकाले च। त्रिदोषानुगन्तु सर्व्वकाले क्षिप्रासाध्यमिति बोध्यम्। उभयगन्तु सर्व्वथैवासाध्यमिति ॥ ५ ॥

गङ्गाधरः—ननु पूर्व्वमुक्तं प्रथमत एव तावदाद्यान् लोभाभिद्रोहकोपप्रभवानष्टौ व्याधीनित्यादि तदयं रक्तपित्तरोगः किंभव इत्यत आह—रक्तपित्तप्रकोपस्त्वित्यादि। पुरा पूर्व्वस्मिन् काले रक्तपित्तप्रकोपस्तु ज्वरात् अभवत्। ज्वरमनु महेश्वरकोपात् ज्वरोत्पत्तितः पश्चात्। केन प्रकारेण तदाह—दक्षेत्यादि। दक्षस्य प्रजापतेः यज्ञध्वंसे सति रुद्रकोपप्रभवेण रुद्रस्यासौम्यभावमापन्नस्य शिवस्य कोपादमर्षाच्च प्रभवो यस्य, तेनाग्निना ज्वररूपेण परिगताः परीताः शरीरञ्च प्राणाश्च येषां, तेषां प्राणिनामर्थात् तात्कालिकज्वरिणां ज्वरसन्तापात् ज्वरानन्तरं रक्तपित्तप्रकोपोऽभवदिति भावः। यदि पुरा ज्वरसन्तापाद्रक्तपित्तं नाभविष्यदधुनापि यवकोद्दालकादुग्रपसेवनात् नोदपत्स्यत। इति रक्तपित्तस्य प्रभवमुक्त्वा प्रभावमाह—तस्याश्वित्यादि। तस्य रक्तपित्तस्याशुकारिणोऽतिशीघ्रं प्राणहरणकारिणः। कस्येवेत्यत आह—दावाग्नेरिवेति। आपतितस्य दावाग्नेरिवाशु आगतस्य तथा दावाग्नेरिवाशु चात्ययिकस्य उपक्रमाभावे शीघ्रं मारकस्य नितरामाश्वेव प्रशान्तौ प्रशमने

चक्रपाणिः—रक्तपित्तस्याप्याग्नेयत्वप्रतिपादनार्थं पूर्व्वोत्पत्तिमाह—रक्तेत्यादि। कोपयुक्तोऽमर्षोऽभिनिवेशः; अन्यत्रापि च कोपामर्षयोर्भेद उक्तः, यथा—"अमर्षसंरम्भविनम्रभावाः

सन्तर्पणेनापतर्पणेन वा मृदुमधुरशिशिरतिक्तकषायैरभ्यवहार्य्यैः प्रदेहपरिषेकावगाहसंस्पर्शैर्वमनाद्यैर्वा तत्रावहितेनेति ॥ ७ ॥

भवन्ति चात्र।

साध्यं लोहितपित्तं तद् यदूर्द्ध्वं प्रतिपद्यते।
विरेचनस्य योगित्वाद् बहुत्वाद्भेषजस्य च ॥
विरेचनं हि पित्तस्य जयार्थे परमौषधम्।
यश्च तत्रानुगः श्लेष्मा तस्य चानधमं स्मृतम् ॥

प्रयतितव्यं प्रयत्नः कार्य्यः। ननु केन प्रकारेण प्रयतितव्यमित्यत आह—मात्रामित्यादि। मात्रां दोषबलपुरुषबलाद्यनुरूपेणाहारविहारौषधानां परिमाणम्। देशं शीतं वोष्णं वा साधारणं वा। तथा कालञ्च। ननु केन प्रशान्तौ प्रयतितव्यमित्यत आह—सन्तर्पणेनेत्यादि। अत्र वाशब्दो व्यवस्थावाची, तेन रूक्षदुर्व्वलपुरुषस्याधोगरक्तपित्ते वा सन्तर्पणेन रक्तपित्तहरद्राक्षादिद्रव्यकृतद्रवेण आलोड़ितसक्तुकाभ्यवहारेण। स्निग्धप्रबलपुरुषस्योर्द्ध्वगरक्तपित्ते वापतर्पणेन अनशनेन। ननु केषां द्रव्याणां सन्तर्पणेन औषधत्वकल्पनेन प्रयतितव्यमित्यत आह—मृद्वित्यादि। मधुरेति वातानुबन्धे। तिक्तकषायेति कफानुबन्धे। शिशिरेति सर्व्वत्र। मृद्वादिभिरभ्यवहार्य्यादिकानां त्रयाणां सम्बन्धः। ननु केन पुरुषेण प्रयतितव्यमित्यत आह—तत्रावहितेनेति। अवहितोऽवधानशाली पुरुषः ॥ ६।७ ॥

गङ्गाधरः—अथोक्तार्थानां तद्विधव्यवसायार्थं श्लोकेन प्रवचनं करोति—भवन्तीत्यादि। साध्यमित्यादि। विरेचनस्य योगित्वादिति विरेचनं पित्तहरणानामिति पूर्व्वमुक्तमिति पित्तजयार्थं विरेचनं श्रेष्ठतममौषधम्। ननु ऊर्द्ध्वगे लोहितपित्ते केवलं न पित्तमस्ति कफानुबन्धश्चास्ति, तत् कथं पित्तमात्रजयभेषजस्य परमत्वं तत्साध्यत्वेन साध्यत्वमित्यत आह—यश्चेत्यादि। तस्य

सन्तर्ज्जनाभिद्रवणौष्णपरोषाः" इति। सन्तर्पणेनेति अधोगस्य; अपतर्पणेनेत्यूर्द्ध्वगस्य; संस्पृश्यत इति संस्पर्शनं मुक्तादि ॥ ६।७ ॥

चक्रपाणिः—ऊर्द्ध्वगस्य विरेचनयोग्यतां विवेचयति—विरेचनमिति। ऊर्द्ध्वगे रक्तपित्ते प्रधानं पित्तम्, अनुबन्धश्च श्लेष्मा; रक्तपित्ताख्यव्याधिर्जेतव्यः, अत्र पित्तस्य जयार्थे विरेचनं तावत् परमौषधम्, "विरेचनं पित्तहरणानाम्" इतिवचनादिति भावः। यश्च तत्रान्वयोऽनुबन्धस्वरूपः

भवेद् योगावहं तत्र कषायं तिक्तमेव च * ।
तस्मात् साध्यतमं रक्तं यदूर्द्ध्वं प्रतिपद्यते ॥ ८ ॥
रक्तन्तु यदधोभागं तद् याप्यमिति निश्चयः ।
वमनस्याल्पयोगित्वादल्पत्वाद् भेषजस्य च ॥
वमनं हि न पित्तस्य जयार्थे परमौषधम् ।
यश्च तत्रानुगो वायुस्तच्छान्तौ चावरं स्मृतम् ॥

कफस्य चौषधं विरेचनं नाधमं न चाश्रेष्ठतमम् अपि तु श्रेष्ठं अनधममिति करणात्। साध्यत्वे हेत्वन्तरमुक्तं बहुत्वाद् भेषजस्य चेति तद्विवृणोति—भवेदित्यादि। कषायं तिक्तमेव चेति कषायरसद्रव्यं तिक्तरसद्रव्यञ्चैव न तु मधुरमिति, मधुरमात्रद्रव्यस्य अयोगवहत्वाद् भेषजाधिक्यमधोगापेक्षया, अधोगे हि वक्ष्यते मधुरञ्चैव भेषजमिति न तु तत्र कषायं तिक्तं वा वातवर्द्धकत्वादिति, अधोगे भेषजाल्पत्वं तत्र व्याख्येयम्। साध्यत्वं निगमयति—तस्मादित्यादि। तत्र श्लेष्मानुबन्धोर्द्ध्वगस्योपदर्शनेन साध्यतममित्युक्तं न तु तत्र वाताद्यनुबन्धेन। सर्व्वोर्द्ध्वगाभिप्रायेण पूर्व्वमुक्तं साध्यं लोहितपित्तं स्यादिति। रक्तन्तु यदधोभागमित्यादिकं पूर्व्ववद्व्याख्येयम्। वमनस्याल्पयोगित्वं विवृणोति—वमनं हीत्यादि। ननु वमनं पित्तस्य जयार्थं न परमौषधमस्तु प्रभावात् तत्र दोषान्तरजयार्थं परमौषधं न वा इत्यत आह—यश्चेत्यादि।

श्लेष्मा, तस्य जयार्थे अनधममधमं न भवति मध्यममित्यर्थः; वचनं हि—"पित्तं वा कफपित्तं वा पित्ताशयगतं हरेत्। स्रंसनम्" इति। योगावहञ्च तत्रेति, तत्र ऊर्द्ध्वगे रक्तपित्ते तद्विरेचनं योगवाहं भवति प्रतिमार्गहरणरूपत्वादित्यर्थः; अनेन च व्याधिप्रत्यनीकमुच्यते। एवं व्याधिप्रधानकारणे पित्ते प्रधानशमकत्वात् तथा मध्यकुपिते च कफे मध्यभेषजत्वात् प्रतिमार्गहरणरूपतया च प्रत्यनीकत्वात् विरेचनमूर्द्ध्वगे साधु भेषजम्। मधुरञ्चैव भेषजमित्यत्र 'एव'-शब्दोऽप्यर्थः; तेन कषायतिक्ते तावद् भेषजे भवत एव पित्तकफप्रत्यनीकत्वात्। मधुरमपि लङ्घनादिना कफे जिते भेषजं भवतीत्यर्थः ॥ ८ ॥

चक्रपाणिः—अधोगे वमनस्यानुपयोगितां विवेचयति—वमनं हीत्यादि। पित्तस्य रक्तपित्तमूलस्य हरणे न श्रेष्ठं वमनम्, वमनं हि कफानुगतं पित्तं हरति, न पित्ते प्राधान्येन क्रियते; तच्छान्तौ चावरमिति वातहरणे स्वप्रधानमेव वमनम्; वातहरणेऽयुक्तत्वादेव वमनस्य;

* मधुरञ्चैव भेषजमिति चक्रसम्मतः पाठः।

स्याच्च योगावहं तत्र मधुरञ्चैव भेषजम् * ।
तस्माद् याप्यं समाख्यातं यद्रक्तमनुलोमगम् ॥ ८ ॥
रक्तपित्तन्तु यन्मार्गौ द्वावपि प्रतिपद्यते ।
असाध्यमिति तज्ज्ञेयं पूर्व्वोक्तादेव कारणात् ॥
न हि संशोधनं किञ्चिदस्यास्ति प्रतिमार्गगम् ।
प्रतिमार्गञ्च हरणं रक्तपित्ते विधीयते ॥

वमनमवरं स्मृतमित्यर्थः। अल्पौषधत्वं विवृणोति—स्याच्चेत्यादि। मधुरञ्चैव भेषजं न तु कषायं वा तिक्तं वा इत्यल्पभेषजत्वमूर्द्ध्वगापेक्षया बोध्यं। निगमयति—तस्मादित्यादि। अनुलोमगमधोगं याप्यमिति वातानुबन्धोपदर्शनात् तदभिप्रायेण द्विदोषाद्यनुबन्धे तु चिकित्सास्थानोक्त्या चासाध्यत्वं बोध्यम् ॥ ८।९ ॥

गङ्गाधरः—मार्गौ द्वावपीत्युर्द्ध्वाधोमार्गयुगलम्। पूर्व्वोक्तादेव कारणादिति वमनविरेचनायोगित्वात् अनौषधत्वाच्च। ननु वमनविरेचनयोः कथमयोगित्वं तयोरयोगित्वेन वा किं निरूहादिसंशोधनान्तरमप्यस्ति तेनैव साध्यते, इत्यत आह—न हीत्यादि। प्रतिमार्गगमिति रक्तपित्तस्य मार्गविपरीतमार्गगम्। यथा ऊर्द्ध्वगे विरेचनमधोगे वमनं प्रतिमार्गगं न तथास्थापनं, तद्ध्यधोमार्गहरं नोर्द्ध्वमार्गदोषमपहरतीत्युभयमार्गगरक्तपित्ते प्रतिमार्गगं न भवति। एवं शिरोविरेचनन्तु न केनापि मार्गेण प्रतिमार्गगमिति। ननु भवतु वा न वा प्रतिमार्गगं दोषहरत्वादास्थापनादिकानां यौगिकत्वं कथं न स्यादित्यत आह—प्रतिमार्गञ्चेत्यादि। चकारार्थोऽवधारणं, तेन तुल्यमार्गहरणं प्रतिषिध्यते। प्रतिमार्ग-

तच्चायोगावहमिति तद् वमनं प्रतिमार्गहरणरूपतया योगावहमपि सत् पित्तवातयोरुक्तेन न्यायेनायौगिकत्वेनायोगावहमित्यर्थः; कषायतिक्तकानि च अयोगावहानीति योजना, कषायतिक्तयोर्वातप्रतिकूलत्वादित्यर्थः; एवं मधुरमेकमवशिष्टमधोगे रक्तपित्ते भेषजं भवति; तेनाल्पौषधत्वं सिद्धम्; अम्ललवणकटुकानाञ्च पित्तविरुद्धत्वेन रक्तपित्तेऽप्रसक्तिरिति ॥ ९ ॥

चक्रपाणिः—पूर्व्वोक्तादिति वमनविरेचनायौगिकत्वादनौषधत्वाच्च; वमनविरेचनायौगिकत्वं व्युत्पादयति—न हीत्यादि। संशोधनमिति सामान्यवचनेन वस्तिशिरोविरेचनयोरपि प्रतिक्षेपणं सूचयति; यदधोभागं विरेचनम्, तदधोभागं रक्तपित्तं कोपयति, यदूर्द्ध्वभागं वमनम्, तदूर्द्ध्वभागं रक्तपित्तं कोपयति; अतः नास्त्युभयमार्गे रक्तपित्ते शोधनम्। अथानुगुणशोधनं

* कषायं तिक्तकानि च इति चक्रधृतः पाठः ।

एवमेवोपशमनं सर्व्वशो नास्य विद्यते।
संसृष्टेषु हि दोषेषु सर्व्वजिच्छमनं मतम्॥
इत्युक्तं त्रिविधोदर्कं रक्तं मार्गविशेषतः॥ १०॥

हरणस्य तु रक्तपित्ते यौगिकत्वं रोगस्वभावात् पित्तरक्तयोः स्वभावाच्च, अम्लपित्ते हि तुल्यमार्गहरणं यौगिकं दृश्यते। संशोधनस्य दोषाणामामूलत उन्मूलकरत्वात् उपक्रमेषु प्राधान्यादुभयगे रक्तपित्ते तदयोगित्वे चिकित्सायां भिषजां दौर्ब्बल्यमित्यसाध्यत्वे हेतुर्बोध्यः। ननु सर्व्वथा क्रियाभावो नास्ति संशमनेन च चिकित्साकरणसामर्थ्यादित्यत आह—एवमित्यादि। एवमुक्तप्रकारेण उपशमनभेषजमपि सर्व्वशो नास्यास्ति। ऊर्द्ध्वगे हि मधुरं भेषजं न यौगिकम् अधोगे तु कषायं तिक्तकञ्च न यौगिकं सुतरामुभयगे मधुरकषायतिक्तानि न यौगिकानि भवन्ति, कट्वम्ललवणानि तु पित्तरक्तविरोधित्वान्नौषधानीति सर्व्वथैवोपशमनौषधाभावः, तस्मादसाध्यमाख्यातं; यत् द्वौ मार्गौ प्रतिपद्यते इति वाच्यं निगमनम्।

अथ ऊर्द्ध्वगाधोगयोः कफवातानुबन्धप्रतिनियमेऽपि दोषान्तरसंसर्गे संशमनमाह—संसृष्टेषु इत्यादि। सर्व्वजिदिति वातपित्तकफरक्तानां चतुर्णामेवावजयकरं भेषजं शमनं मतम्। ऊर्द्ध्वगे हि रक्तञ्च पित्तञ्च तदारम्भकमनुबन्धस्तु कफः प्रतिनियतस्तत्र दोषान्तरन्तु वायुरेव परिशिष्टस्तत्संसर्गेऽपि चेत् तदा सर्व्वदोषसद्भाव इति, सर्व्वजित् संशमनं विधेयम् एव भवति। एवमधोगेऽपि व्याख्येयम्। दोषान्तरसंसर्गविज्ञानाय लिङ्गानि चिकित्सिते वक्ष्यन्ते, अत्र सूत्ररूपत्वान्नोक्तानि। इति त्रिविधं मार्गविशेषत ऊर्द्ध्वमार्गाधोमार्गोभयमार्गभेदात् उदर्कं साध्ययाप्यप्रत्याख्येयरूपं फलं यस्य तत् रक्तपित्तमुक्तं भवति। ननु मार्गौ पुनरस्य द्वाविति पूर्व्वमुक्तं, कथमत्र त्रिविधोदर्कोक्तिर्न विरुध्यते? उच्यते, ऊर्द्ध्वञ्चाधश्चेति द्वौ मार्गावेव यौगपद्येन तूभयमिच्छन्ति

कफच्छर्द्दरामिव वमनं रक्तपित्ते भवतीत्याह—प्रतिमार्गञ्चेत्यादि। रक्तपित्तव्याधिमहिम्ना प्रतिमार्गहरणमेव भेषजं भवति नान्यदित्यर्थः; अथात्रैव संशमनं वा भवतु भेषजम्? तन्न भवतीत्याह—एवमेवेत्यादि। उभयमार्गानुसारित्वेन वातकफानुबन्धत्वात् यथा यौगिकं संशोधनं नास्ति तथोपशमनमपि युगपद्वातकफशमकत्वाभावान्नास्तीत्यर्थः; सर्व्वशो न विद्यत इति किञ्चिदपि न विद्यत इति। एतदेवोपशमनभेषजाभावं स्फोटयति—संसृष्टेष्विति सन्निपातेषु बोद्धव्यम्। सर्व्वजिदिति अनुबन्धभूतवातकफमूलभूतपित्तजित्; मधुरं हि कफकारि,

एभ्यस्तु खलु हेतुभ्यः किञ्चित् साध्यं न सिध्यति ।
प्रेष्योपकरणाभावाद् दौरात्म्याद् वैद्यदोषतः ॥
अकर्म्मतश्च साध्यत्वं कश्चिद्रोगोऽतिवर्त्तते ।
तत्रासाध्यत्वमेकं स्यात् साध्ययाप्यपरिक्रमात् ॥

( च शब्दस्यान्वाचयार्थत्वात् ) न त्वतिरिक्तमित्यभिप्रायेणोक्तं त्रिविधोदर्कमिति । युगपद्गतस्यासाध्यत्वं फलविशेष एव प्रत्याखेयत्वात् ॥ १० ॥

गङ्गाधरः—ननु साध्यत्वेन यदुक्तं तदपि किं नासाध्यं भवितुमर्हतीत्यत आह —एभ्यस्त्वित्यादि । एभ्य इत्यत ऊर्द्ध्वं वक्ष्यमाणेभ्य एव प्रेष्योपकरणादिभ्यो हेतुभ्यः । प्रेष्येति आतुरस्य परिचारक उपकरणं धनं वास्ति चेत् तदा तस्य दौरात्म्यत्वाद् दुष्टबुद्ध्यादिना कुपथ्याचारात्, तेषु गुणवत्सु सत्स्वपि वैद्यदोषतः शास्त्रविहितप्रतिकारविपरीतक्रियादिकरणदोषात् । अकर्म्मतश्चेति प्रतिक्रियाकरणाभावात् । कश्चिद् रोगो रोगविशेषः साध्यत्वमतिवर्त्ततेऽसाध्यत्वमापद्यते । नन्वसाध्यत्वं द्विविधं—याप्यं प्रत्याखेयश्च । किं तद् द्विविधमित्यत आह—तत्रासाध्यत्वमित्यादि । साध्ययाप्यपरिक्रमात् कस्यचिद् याप्यत्वं कस्यचित् प्रत्याखेयत्वं, तस्मात् साध्ययाप्यपरिक्रमादेकमेवासाध्यत्वं स्यात् ।

तिक्तकषायौ तु वातकरौ, शेषास्तु पित्तकरा एवेति भावः ; किंवा, एवमेवेति, विना भेषजं नोपशमनं रक्तपित्तस्य भवतीति योजनीयम् । त्रिविधोदर्कमिति त्रिविधजातीयफलम्, तच्च साध्यत्वयाप्यत्वप्रत्याख्येयत्वरूपम् ॥ १० ॥

चक्रपाणिः—असाध्यतोपोद्घातेनेतरव्याधि-साधारण्येऽपि असाध्यतापत्तिकारणान्याह—एभ्यस्तु इत्यादि । उपकरणाभावादिति भेषजाभावात् ; दौरात्म्यादिति आतुरस्यानात्मवत्त्वात् । अकर्म्मत इत्यत्र कुत्सायाम् नञ्, अपुत्र इति यथा ; तेन अकर्म्मतोऽसम्यक्चिकित्सात इत्यर्थः ; किंवा अकर्म्मत इति अधर्म्मादसाध्यव्याधिजनकात् । कश्चिदिति वचनेन अचिकित्सया न सर्व्वे तिलकालकमशकादयोऽवश्यमसाध्या भवन्तीति दर्शयति, तेषामचिकित्सयापि साध्यत्वात् । प्रेष्यादिदोषेण प्रकृतरक्तपित्ते असाध्यत्वं दर्शयन्नाह—तत्रेत्यादि । तत्रेति रक्तपित्ते ; असाध्यत्वम् एकमिति असाध्यत्वमेव परं स्यात् ; साध्ययाप्यपरिक्रमादिति साध्ययाप्यमार्गाभ्यां परिक्रमात् उभयमार्गानुसारित्वादित्यर्थः ; किंवा, साध्ययाप्ययोः परिक्रमः, तस्मात् ; तत्र साध्यस्य परिक्रमो याप्यमार्गगामित्वम्, एवं याप्यस्य परिक्रमः साध्यमार्गगामित्वम् ; अयञ्च मार्गपरिक्रमो मार्गपरित्यागादपरित्यागाद् वा असाध्य एव, अपरित्यागे तावदुभयमार्गेणैव असाध्यत्वम् ; परित्यागेऽसाध्यत्वमुक्तं ; वक्ष्यति हि चिकित्सिते—"मार्गान्मार्गं चरेद् यत्र वा तच्च रक्तमसिद्धिमत्"

रक्तपित्तस्य विज्ञानमिदं तस्योपदेक्ष्यते।
यत् कृष्णमथवा नीलं यद्वा शक्रधनुःप्रभम्।
रक्तपित्तमसाध्यं स्याद् वाससो रञ्जनञ्च यत्॥
भृशं पूत्यतिमात्रञ्च सर्व्वोपद्रववच्च यत्।
बलमांसक्षये यच्च तच्च रक्तमसिद्धिमत्॥
येन चोपहतो रक्तं रक्तपित्तेन मानवः।
पश्येद् दृश्यं वियच्चापि तच्चासाध्यं न संशयः॥

सर्व्वरोगाणां साध्यानामसाध्यत्वप्रकारमुक्त्वा तेन प्रकारेण रक्तपित्तस्य साध्यस्याप्यसाध्यत्वे तद्विज्ञानार्थं लिङ्गान्याह—रक्तपित्तस्येत्यादि। रक्तपित्तस्य साध्यत्वेनाप्युपदिष्टस्य तस्य भैषज्योपकरणाभावादुक्तहेतुभ्योऽसाध्यत्वमापन्नस्य विज्ञानं लिङ्गमिदम् अत ऊर्द्ध्वमुपदेक्ष्यामः। यदित्यादिना। यदिति रक्तपित्तं कृष्णं भवति तदसाध्यम्। अथवा यद् रक्तपित्तं नीलं नीलवर्णं भवति तदसाध्यम्। अथवा यद् रक्तपित्तं शक्रधनुःप्रभं लोहितमेकदेशेन दूर्व्वादलश्याममेकदेशेन तथाविधं तदसाध्यम्। यच्च रक्तपित्तं वाससो रञ्जनं विमलवसनं येन रक्तेन म्रक्षितं शुष्कञ्च पुनर्जलेन धौतं रक्तमेव वर्त्तते तद् रक्तपित्तमसाध्यम्। यच्च रक्तपित्तं भृशमतिशयेन पूति दुर्गन्धि भवति भवति चातिमात्रमतिशयमानेन प्रवृत्तं तदसाध्यम्। यच्च सर्व्वोपद्रववत् उक्तदौर्ब्बल्यारोचकादिसमुदायोपद्रवयुक्तं तदसाध्यमित्यर्थः। येनेत्यादि। येन च रक्तपित्तेनोपहतो मानवो दृश्यं यावद्वस्तु रक्तं पश्येत् वियच्चापि रक्तं पश्येत् तच्च रक्तपित्तम्

इति; किंवा असाध्यत्वमेकं साध्ययाप्यपरिक्रमादिति साध्यस्य याप्यत्वेन परिक्रमादित्यर्थः।

ऊर्द्ध्वगस्यापि रक्तपित्तस्य लाक्षणिकीमसाध्यतामाह—रक्तपित्तस्येत्यादि। एते कृष्णादयो वर्णाः गम्भीरधातुसम्बन्धाद्भवन्ति; ततश्चासाध्यं युक्तमेव; वाससो रञ्जनञ्च यदिति प्रक्षालितमपि सद् वासो रञ्जयति, न क्षालनेनापैतीति बोद्धव्यम्; अन्यथा 'सर्व्वमेव रक्तं वाससो रञ्जनं भवति' इति वचनमनर्थकं स्यात्; किंवा 'अरञ्जनम्' इति पाठः; तेन रक्तस्य वाससो रञ्जकस्यारञ्जनमेव विकृतिः। भृशं पूतीति धात्वन्तरसम्बन्धादतिदुर्गन्धि; सर्व्वोपद्रववदिति उक्तदौर्ब्बल्याद्युपद्रवयुक्तम्।

दृश्यं घटपटादि; वियदाकाशम्; रक्तं रक्तवर्णमित्यर्थः; यद्यप्याकाशमपि दृश्यं

तत्रासाध्यं परित्यज्य याप्यं यत्नेन यापयेत् ।
साध्यञ्चावहितः सिद्धैर्भेषजैः साधयेद्भिषक् ॥ ११ ॥

तत्र श्लोकौ ।

कारणं नामनिर्वृत्तिं पूर्व्वरूपाण्युपद्रवान् ।
मार्गौ दोषानुबन्धञ्च साध्यत्वं न च हेतुमत् ॥
निदाने रक्तपित्तस्य व्याजहार पुनर्व्वसुः ।
वीतमोहरजोदोष-लोभमानमदस्पृहः ॥ १२ ॥

इत्यग्निवेशकृते तन्त्रे चरक-प्रतिसंस्कृते निदानस्थाने रक्तपित्तनिदानं नाम द्वितीयोऽध्यायः ॥ २ ॥

असाध्यम् । ननु असाध्यादिषु किं प्रतिकार्य्यमित्यत आह—तत्रेत्यादि । तत्र रक्तपित्तेषु यदसाध्यं रक्तपित्तं तत् परित्यज्य भिषग् यत्नेन याप्यं रक्तपित्तं पथ्यादिना यापयेदवहितः सन् भिषक् साध्यं रक्तपित्तं सिद्धैर्भेषजैः साधयेदिति ॥ ११ ॥

गङ्गाधरः—अध्यायार्थमुपसंहरति—तत्र श्लोकावित्यादि । यवकोद्दालकेत्यादिना कारणम् । ततस्तु तस्मिन् प्रमाणातिवृत्ते इत्यादिना नामनिर्वृत्तिं लोहितपित्तेति संज्ञाकरणार्थं निर्वृत्तिं सम्प्राप्तिम् । तस्येमानीत्यादिना पूर्व्वरूपाणि । उपद्रवस्त्वित्यादिना उपद्रवान् । मार्गौ पुनरित्यादिना मार्गौ । तद्बहुश्लेष्मेत्यादिना दोषानुबन्धम् । तत्र यदूर्द्ध्वमित्यादिना साध्यत्वं हेतुमत् साध्यत्वे हेतुसहितं साध्यत्ववचनं न हेतुमच्च न साध्यत्वं याप्यासाध्ययोः सहेतूपदेशवचनं चकारादुपक्रमप्रयत्नाय भोजनादिकञ्च ॥ १२ ॥

अध्यायं समापयति—अग्नीत्यादि ॥

इति श्रीगङ्गाधरकविरत्नकविराजविरचिते चरकजल्पकल्पतरौ द्वितीयस्कन्धे निदानस्थानीयरक्तपित्तनिदानाख्यद्वितीयाध्यायजल्पाख्या द्वितीयशाखा ॥ २ ॥

भवति मीमांसकनये, तथापि प्राय आकाश एवासाध्यरक्तपित्तरकत्वं प्रतीयत इति न पुनरुक्तम् । यत्नेनेतिवचनाद् याप्ययापनं यत्नं विना न भवतीति दर्शयति ॥ ११ ॥

चक्रपाणिः—कारणमित्यादि संग्रहः ; नामनिर्वृत्तिमिति 'लोहितसंसर्गाद्' इत्यादिना ; 'न च' इति न चासाध्यत्वम्, अनेन च याप्यमपि गृहीतम् ; असाध्यभेदो हि याप्यम् ; हेतुमदिति विरेचने यौगिकत्वायौगिकत्वादिहेतुवर्णनं संगृह्णाति ; वीता अपगता मोहादयो यस्य स तथा ॥ १२ ॥

इति चरकचतुरानन-श्रीमच्चक्रपाणिदत्त-विरचितायाम् आयुर्व्वेददीपिकायां निदानस्थानस्य व्याख्यायां रक्तपित्तनिदानं नाम द्वितीयोऽध्यायः ॥ २ ॥

## तृतीयोऽध्यायः ।

**अथातो गुल्मनिदानं व्याख्यास्यामः, इतिह स्माह भगवानात्रेयः ॥ १ ॥**

**इह खलु पञ्च गुल्मा भवन्ति, तद् यथा—वातगुल्मः पित्तगुल्मः श्लेष्मगुल्मः निचयगुल्मः शोणितगुल्मश्चेति ॥२॥**

गङ्गाधरः—अथातिकर्षकज्वरप्रभवत्वेन समाननिदानत्वात् रक्तपित्त-गुल्मयोरेककार्य्यत्वसङ्गत्या ; तथा सर्व्वत्र रक्तपित्ते पित्तस्याव्यभिचरित-हेतुत्वादेकदोषस्याव्यभिचारिहेतुत्वप्रसङ्गसङ्गत्या च सर्व्वगुल्मे वातस्याव्यभिचारि-प्रकृतिभूतहेतुत्वाच्च रक्तपित्तनिदानानन्तरं गुल्मनिदानव्याख्यानमारभते। अथात इत्यादि । गुल्मस्य निदानं निदानादि पञ्चनिदानम् ॥ १ ॥

गङ्गाधरः—इहेत्यादि । इह संसारे जन्तूनां पञ्च गुल्मा भवन्तीति यदुक्त-मष्टोदरीये तस्यानुवादोऽयं स्मरणार्थम् । निचयगुल्म इति सन्निपातजगुल्म इत्यर्थः । शोणितगुल्मश्चेति । पदार्थाख्यतन्त्रयुक्त्यात ऊर्द्ध्वं स्त्रीणामार्त्तवज-गुल्मव्याख्यानदर्शनादत्र शोणितपदेनार्त्तवमुच्यते, यत् तु—स्त्रीणामार्त्तवजो गुल्मो न पुंसामुपजायते । अन्यस्त्वसृग्भवो गुल्मः स्त्रीणां पुंसाञ्च जायते । इति वचनात् शोणितशब्देन प्रसादरक्तमार्त्तवरक्तञ्चोच्यते तन्न, चरक-सुश्रुतादौ प्रसादरक्तजगुल्मादर्शनेन तद्वचनस्यामूलकत्वात् ॥ २ ॥

चक्रपाणिः—दक्षाध्वरोद्ध्वंसे रक्तपित्तमनु गुल्मोत्पत्तिरिति रक्तपित्तमनु गुल्मनिदानम् । इह पञ्चेतिवचनात् चिकित्सितेऽभिकान् गुल्मान् सूचयति, वक्ष्यति हि—"व्यामिश्रलिङ्गानपरांस्तु गुल्मांस्त्रीनादिशेदौषधकल्पनार्थम्" इति । निचयः सन्निपातः ; तत्कृतगुल्मो निचयगुल्मः ; इह प्रत्येकवातादिगुल्मक्रियामेलकादेव द्वन्द्वजगुल्माः साध्यन्त इति कृत्वा न पृथगुक्ताः ; सन्निपातगुल्मास्तु वातादिगुल्मक्रियामेलकेन साध्या भवन्त्येव ; तेन वातादिसंयोगमहिम्ना अतिरिक्तासाध्यत्वयोगान्निचयगुल्मः पृथगुक्तः, एतदेव गुल्मेऽस्मिन्नसाध्यत्वं प्रतिपादयितुं सन्निपातशब्दं साध्यज्वरादिसन्निपातेऽपि वर्त्तमानं परित्यज्य निचयशब्दः ; अत्यर्थं हि असाध्य-रूपश्चायं निचयः ॥ १।२ ॥

एवंवादिनं भगवन्तमात्रेयमग्निवेश उवाच, कथमिह भगवन् पञ्चानां गुल्मानां विशेषमभिजानीमहे ? न ह्यविशेषविद् रोगाणामौषधविदपि भिषक् प्रशमसमर्थो भवतीति। तमुवाच भगवानात्रेयः। समुत्थानपूर्व्वरूपलिङ्गवेदनोपशयविशेषेभ्यो विशेषविज्ञानं गुल्मानां भवति, अन्येषाञ्च रोगाणामग्निवेश। तत्र तावद् गुल्मेषूच्यमानं निबोध॥ ३॥

गङ्गाधरः—एवमित्यादि स्पष्टम्। विशेषमिति वातजत्वादिरूपेण ज्ञातत्वं विना पञ्चत्वविज्ञानं न भवतीति वातजत्वादिना ज्ञानसिद्धौ तद्विशेषज्ञानसिद्धेः साध्यत्वादिविशेषं कथमभिजानीमहे इति नार्थः। पञ्चानां गुल्मानामिति वचनन्तु पञ्च गुल्मा भवन्तीत्युक्तानुवादे कृतं न तु वातजत्वादिरूपेण ज्ञातत्वेनोक्तवातगुल्मत्वादिविशेषमित्यर्थः। अविशेषविदिति गुल्मत्वरूपेणैव यो भिषक् गुल्मवेत्ता न तु वातजत्वादिविशेषरूपेण गुल्मवेत्ता स वातजादिगुल्मप्रशमौषधविदपि वातजादिविशेषगुल्मानां प्रशमनसमर्थो न भवतीति। समुत्थानेत्यादि। वेदनोपशयेति वेदनाया यातनाया उपशय इत्यर्थः। अन्येषाञ्च रोगाणामिति ज्वररक्तपित्तादीनाम्। ननु तस्योपलब्धिनिदानपूर्व्वरूपेत्यादिना रोगाणां विशेषविज्ञानमुक्तमत्र च पुनस्तदुक्तम् इति पौनरुक्त्यमिति चेन्न, तत्रोपलब्धिरित्युक्तं, तत्र तस्य सामान्यत उपलब्धिः किं विशेषतः उपलब्धिरिति संशयेन पुनर्विशेषज्ञानार्थं शिष्यप्रश्नस्तस्य भेदकमुत्तरवचनं नातः पुनरुक्तमिति बोध्यम्। तत्र समुत्थानादिषु तावत्समुत्थानादिविशेषेभ्यः॥ ३॥

चक्रपाणिः—समुत्थानेत्यादौ लिङ्गान्तर्निविष्टा उपद्रवा न पृथगुच्यन्ते; वेदनारूपञ्च लिङ्गं गुल्मलिङ्गान्तर्गतमपि वेदनाप्रधानविकारेषु प्रायो वेदनयैव विशेषावधारणं भवतीति पृथगुपदर्शितम्; सम्प्राप्तेस्त्विहाकथनं गुल्मविशेषागमकत्वेनैव बोद्धव्यम्, गुल्मविशेषविज्ञानञ्चेहाधिकृतम्; संख्यादिभेदभिन्ना तु सामान्यसम्प्राप्तिः सर्व्वरोगनिदान एवोक्तेति भावः; बलकालभिन्ना तु सम्प्राप्तिर्यद्यपि वातिकत्वादिविशेषं गमयत्यपि, तथाप्यल्पत्वात् तथा लिङ्गगृहीतत्वाच्च सा नाद्रियते। दिवसान्तजरणान्तादिबलसंप्राप्तिर्हि लिङ्गमध्य एव पठ्यते तत्र तत्र; तेन लिङ्गग्रहणेनैव तत् सुस्थम्। प्राग्रूपञ्च यद्यपि पृथग्वातादिगुल्मगमकं साक्षान्न पठितम्, तथापि विशेषलिङ्गाव्यक्ततारूपविशिष्टं प्राग्रूपं विशेषलिङ्गकथनेनैव उक्तमेव; तेन वातादिगुल्मविशेषगमक-

यदा पुरुषो वातलो * ज्वरवमनविरेचनातिसारान्यतमकर्षणेन कर्षितो वातलमाहारमाहरेच्छीतं वा, विशेषेणातिमात्रस्नेहपूर्व्वे † वा वमनविरेचने पिबत्यनुदीर्णां वा च्छर्द्दिमुदीरयत्युदीर्णान् वातमूत्रपुरीषवेगान् रुणद्धि, अत्यशितो वा पिबति नवोदकमतिमात्रम्, अतिसंक्षोभिणा वा यानेन याति, अतिव्यवायव्यायाममद्यशोकरुचिर्वाभिघातमृच्छति वा, विषमाशनशयनासनस्थानचंक्रमणसेवी वा भवति, अन्यद्वा किञ्चिदेवंविधमतिमात्रं व्यायामजातमारभते, तस्यापचाराद्

गङ्गाधरः—तत्रादौ वातजगुल्मसमुत्थानमाह—यदेत्यादि । वातल इति गर्भारम्भप्रभृति वातबहुलः । कर्षणेनाक्रमणेन कर्षित आक्रान्तः । वातलं वातदमाहारं शीतं वेति शीतमाहारं वेत्यर्थः । विशेषेणेतिपदेन ज्वरादिकर्षणानां तैश्च कर्षितस्य वातलाहारस्य सर्व्वगुल्मकारणत्वम् अतिमात्रस्नेहपूर्व्वकवमनविरेचनादीनां वातगुल्मकारणत्वं ख्यापितम् । पिबतीति बाहुल्येन पानोपदेशः तेन भक्षणाशनलेहा अपि बोध्याः । वमनविरेचने औषधे । अनुदीर्णामनुपस्थिताम् । उदीरयति प्रवर्त्तयति वमनचेष्टां करोतीति । उदीर्णान् प्रवृत्तान् निरुणद्धि निगृह्णाति । अत्यशित इति कर्त्तरि क्तः, कृतः कर्त्तरीत्युक्तेरन्यत्रापि प्रयोगतः कृतो भवन्तीति । अति अशितं येन स इति वा । नवोदकमतिमात्रमित्यन्तश्छेदः । नवोदकं प्रावृट्कालिकजलम् । अतिमात्रं संक्षोभिणेति अतिशयशरीरप्रचालकेन । अतिव्यवायादिरुचिरतिव्यवायादिकमाचरितवान् । अभिघातं दण्डाद्याघातमृच्छति प्राप्नोति वा । अन्यद्वेति उक्तव्यायामातिरिक्तं व्यायामजातं व्यायामसमूहं बलवदादिभिः सह विग्रहादिकम् । एवंविधमिति उक्तरूपम् । तस्येति उक्तस्य ज्वरादिकर्षितादेः पुरुषस्य अपचारादित्युक्तनिदानादिमध्ये पूर्व्वरूपपाठो न्याय्य एवेति ; किंवा पूर्व्वरूपविशेषोऽप्यत्र रक्तपित्तादिरोगापेक्षया सामान्योक्तोऽपि विशेषो ज्ञेयः ॥ ३ ॥

चक्रपाणिः—वातलो विशेषेणेतिवचनात् पित्तलादेरपि यथोक्तमाचरतो वातगुल्मो भवति, वातलस्य त्वत्यर्थमिति दर्शयति । शीतं वा विशेषेणेति अत्यर्थशीतमित्यर्थः । अतिमात्रमिति च्छेदः ; अतिव्यवायव्यायामादिरुचिर्भवतीति शेषः ; व्यवायादिरुच्या व्यवायाद्याचरणं

* इतः परं "विशेषेण" इत्यधिकं पठ्यते चक्रेण । † अतिमात्रमस्नेहपूर्व्वे इति चक्रसम्मतः पाठः ।

वायुः प्रकोपमापद्यते। स प्रकुपितो वायुर्महास्रोतोऽनुप्रविश्य रौक्ष्यात् कठिनीभूतमाप्लुत्य पिण्डितोऽवस्थानं कुरुते, हृदि बस्तौ पार्श्वयोर्नाभ्यां वा। स शूलमुपजनयति ग्रन्थींश्चानेकविधान्। पिण्डितश्चावतिष्ठते, स पिण्डितत्वाद् गुल्म इत्यभिधीयते ॥ ४ ॥

तत्तदपचारात्। स वायुः। महास्रोत इति कोष्ठगतग्रहण्यादिकं बृहद्विवरसिराम्। रौक्ष्यात् कठिनीभूतमिति निरवयवोऽपि वायुरुक्तहेतुसेवनेन रौक्ष्यगुणतः कठिनीभूतं दृढीभूतं महास्रोत आप्लुत्य आव्रतीकृत्यार्थात् तदाप्लुत्य तत्स्रोतसा मिश्रितः पिण्डितः पिण्डाकारः सन्नवस्थानं स्रोतोमध्येऽवस्थितिं कुरुते।

ननु स्रोतोमध्ये कुत्रावस्थानं कुरुते, इत्यत आह—हृदीत्यादि। नाभ्यामिति च्छेदः। ननु हृदादाववस्थानं कृत्वा किं कुरुते इत्यत आह—स इत्यादि। स हृदाद्यन्यतमस्थानावस्थितः पिण्डितो वायुः शूलं वातोत्पन्नमनेकविधं वेदनाविशेषं तोदभेदादिरूपमुपजनयति करोति। ग्रन्थींश्चानेकविधानुपजनयतीत्यन्वयः। नन्वेवं कृत्वा पिण्डितभावं किं त्यजतीत्यत आह—पिण्डितश्चावतिष्ठते इति न तु पिण्डितभावं मुञ्चतीति भावः। इति वातगुल्मस्य विधिरूपा सम्प्राप्तिः।

ननु कथं गुल्म इत्युच्यते इत्यत आह—स इत्यादि। स ज्वरादिकर्षणान्यतमादिकर्षितादेर्वातलाहारादुपसेवनेन कुपितो महास्रोतोऽनुप्रविष्टो रौक्ष्यात् कठिनीभूतो महास्रोत-आप्लावी पिण्डितीभूतो हृदाद्यन्यतमस्थानावस्थितः शूलकारी ग्रन्थिकारी च पिण्डितो वायुः पिण्डितत्वात् पिण्डाकारत्वाद्

लक्षयति। रौक्ष्यात् कठिनीभूतमिति महास्रोतोविशेषणम्; तच्च प्रकुपितस्य वायो रौक्ष्येण यथोक्तज्वरकर्षणादिहेतुकृतात्त्च रौक्ष्यात् कोष्ठस्य कठिनत्वमुपपन्नम्। आप्लुत्येति व्याप्य कोष्ठमेव; अन्यत्राप्युक्तम्—'आप्लुतं मारुतेनेह शरीरं यस्य केवलम्' इति; आप्लुतं व्याप्तमित्यर्थः; यदा तु, 'रौक्ष्यात् कठिनीभूतः' इति पाठः, तदा वातविशेषणम्, वातस्य कठिनत्वमप्यत्र प्रकोपेण घनत्वमेव बोद्धव्यम्; पिण्डित इति कुण्डलीभूतः; पिण्डितश्चेति द्वितीय-'पिण्डित'-शब्देन मांसाद्युण्डनेन गुल्मप्रदेशस्यापि पिण्डितत्वमुच्यते; तेन पूर्वोक्त-'पिण्डित'शब्देन वायोः पिण्डितत्वेन न पौनरुक्त्यम्। अनेकविधानिति च्छेदः। ग्रन्थींश्चानेकविधानिति 'दीर्घ'-'वृत्त'-

स मुहुराध्माति*, मुहुरल्पत्वमापद्यतेऽनियतविपुलाणुवेदनश्च भवति चलत्वाद्वायोश्च, मुहुः पिपीलिकासंप्रचार इवाङ्गेषु तोदभेदस्फुरणायामसङ्कोचसुप्तिहर्षप्रलयोदयबहुलः, तदातुरश्च सूच्येव शङ्कुनेवातिसंविद्धमात्मानं मन्यते। अपि च दिवसान्ते जीर्य्यति शुष्यति चास्यास्यमुच्छ्वासश्चोपरुध्यते हृष्यन्ति चास्य रोमाणि। वेदनायाश्च प्रादुर्भावे प्लीहाटोपान्त्रकूजनाविपाकोदावर्त्ताङ्गमर्द्दमन्याशिरःशङ्खशूलब्रध्नरोगाश्चैनमुपद्रवन्ति।

गुल्म इत्यभिधीयते। सुश्रुतेऽप्युक्तम्। कुपितानिलमूलत्वाद् गूढ़मूलोदयादपि। गुल्मवद्वा विशालत्वाद् गुल्म इत्यभिधीयते॥ इति। अत्र गुल्मवदिति पिण्डितवदित्यर्थः। इति वातगुल्मे निरुक्तिकथनात् सामान्यगुल्मनिरुक्तिर्बोध्या॥ ४॥

गङ्गाधरः—वातगुल्मरूपाण्याह—स इत्यादि। स इति वातगुल्मः। मुहुराध्माति मुहुरुपचीयते मुहुरल्पत्वमापद्यते मुहुरपचीयते। अनियता विपुलाणुर्वा वेदना यत्र स तथा कदाचित् विपुलवेदनः कदाचिदणुवेदन इत्यर्थः। नन्वेवंवेदनः कुत इत्यत आह—चलत्वाद् वायोरिति। ननु केवलमनियतविपुलाणुवेदनो वायोश्चलत्वादुतान्यलिङ्गो भवति न वेत्यत आह—वायोश्चेत्यादि। चकारात् वायोश्चलत्वात् पिपीलिकासंप्रचार इवाङ्गेषु तोदादीनां हर्षान्तानाम् अन्यतमस्य प्रलयोदयौ विनाशोत्पादौ बहुलौ यत्र स तथा। एवञ्च भवति तदातुरश्चेत्यादि। दिवसान्तेऽपराह्णे, शुष्यति चास्यास्यं वायोः शोषकत्वात्। उच्छ्वासश्चोपरुध्यते वातावृतस्रोतस्त्वात्। वेदनायाश्चेत्यादि प्रादुर्भावे बाहुल्येन स्रोतोऽन्तराले वेदनायाः शूलस्य जनने प्लीहाटोपादयश्चैनं वातगुल्मिनमुपद्रवन्ति। इत्यमी वातगुल्मोपद्रवा अपि वातगुल्मलिङ्गान्युच्यन्ते लिङ्गान्तर्गतत्वेन पाठात्, न तु लिङ्गातिरिक्ताः, परन्त्वपरलिङ्गापेक्षयाधिकबलवत्तया रोगोत्पादानन्तरमतिपीड़ाकरत्वादुपद्रवा उच्यन्ते, इत्यभिप्रायेणाचार्य्यो नोपद्रवान्

'स्थूला'दिभेदेन भिन्नान्; 'पिण्डितत्वात् गुल्मः इत्युच्यते' इत्यनेन लतादिगुल्मसादृश्यनिबन्धनां गुल्मसंज्ञां दर्शयति। आध्मति विस्तारीभवति; अनियतविपुलाणुवेदन इति कदाचित् विपुलवेदनः कदाचिदल्पवेदनश्चानियतमेव भवति; अत्रैव हेतुमाह—चलत्वाद् वायोरिति। आयामो विस्तरणम्; हर्षो रोमहर्षः; प्रलयो नाशः, उदयो जन्म, स्फुरणादीनां जन्मनाशौ बहुधा भवत

* आध्मतीति पाठः साधुः।

कृष्णारुणपरुषत्वङ्नखनयनवदनमूत्रपुरीषश्च भवति। निदानोक्तानि चास्य नोपशेरते विपरीतानि चोपशेरते ॥ ५ ॥

( इति वातगुल्मः । )

तैरेव तु कर्षणैः कर्षितस्याम्ललवणकटुक्षारोष्णतीक्ष्णशुक्तव्यापन्नमद्यहरितफलाम्लानां विदाहिनाञ्च शाकधान्यमांसादीनाम् उपयोगादजीर्णाध्यशनात् रौक्ष्यानुगते चामाशये वमनविरेचनमतिवेलं सन्धारणं वातातपौ चातिसेवमानस्य पित्तं सह मारुतेन प्रकोपमापद्यते। तत् प्रकुपितं मारुत आमाशयैकदेशे संवर्त्त्य तानेव वेदनाप्रकारानुपजनयति, य

निदानादिभ्यः पृथगुवाच। कृष्णारुणेति कृष्णत्वं वाऽरुणत्वं वा परुषत्वञ्च त्वङ्नखादिषु तादृशानि त्वगादीनि यत्र स तथा। निदानोक्तानीत्यादि सुगमम् ॥ ५ ॥ ( इति वातगुल्मः । )

गङ्गाधरः—पित्तगुल्मनिदानमाह—तैरेवेत्यादि। तैरिति वातगुल्मोक्तज्वरादिभिः कर्षणैः कर्षितस्येति अम्ललवणादिवचनेन वातलमाहारमाहरतीत्यस्य प्रतिषेधः कृतः। विदाहिनाञ्च शाकादीनामुपयोगान्न तु सर्व्वेषां शाकादीनामिति पित्तप्रकोपहेतवः। अजीर्णाध्यशनादयो वातकोपहेतवः। आतपश्च वातपित्तकोपहेतुः। अत एव पित्तं सह मारुतेन प्रकोपमापद्यते।

ननु पित्तमारुतौ प्रकुपितौ द्वावेव किं गुल्मं कुरुतः? इत्यतः पित्तगुल्मस्य विशिरूपां सम्प्राप्तिमाह—तदित्यादि। तत् पित्तं प्रकुपितं कर्म्म, मारुत इति कर्त्ता प्रकुपित एव आमाशयैकदेशे संवर्त्त्य संपिण्ड्य

इत्यर्थः; अत्रापि चलत्वमेव वायोर्हेतुर्बोद्धव्यः; हृष्यन्ति चास्य रोमाणीति वेदनाप्रादुर्भावे प्रतिनियमेन, स्फुरणादौ तु हर्षो विनापि वेदनामिति श्रेयम् ॥ ४।५ ॥

चक्रपाणिः—रौक्ष्यानुगते चामाशय इति रौक्ष्येण हेतुनाऽतीवरूक्षीकृत इत्यर्थः; किंवा, रौक्ष्यानुगते चामाशये सति वमनं सेवमानस्येति योजनीयम्, आमाशयैकदेशे संमूर्च्छेत्रवि·

उक्ता वातगुल्मे। पित्तन्त्वेनं विदहति कुक्षौ हृदुरसि कण्ठे वा विदह्यमानः सधूममिवोद्गारमुद्गिरत्यम्लान्वितम्। गुल्मावकाशश्चास्य दह्यते दूयते धूप्यत्युष्मायते स्विद्यति क्लिद्यति मृदुशिथिल इव स्पर्शासहोऽल्पलोमाञ्चो भवति। ज्वरभ्रमदवथुपिपासागलतालुमुखशोषप्रमोहविड्भेदाश्चैनमुपद्रवन्ति। हरितहारिद्रत्वङ्नखनयनवदनमूत्रपुरीषश्च भवति। निदानोक्तानि चास्य नोपशेरते विपरीतानि चोपशेरत ॥ ६ ॥

( इति पित्तगुल्मः। )

तरेव तु कषणैः कर्षितस्यात्यशनादतिस्निग्धगुरुमधुरशीताशनात् पिष्टेक्षुक्षीरतिलमाषगुड़विकृतिसेवनात्, मद्यातिपानाद्धरितकाति*-प्रणयनादानूपौदक-ग्राम्य-मांसातिभक्षणात्

तानेवेति मुहुराध्मातीत्यादुरक्तरूपान। ननु तत्सर्व्वं मारुतकार्य्यं, पित्तन्तु किं करोतीत्यत आह—पित्तन्त्वेनमित्यादि। विदहति विशेषेण ज्वालां करोति कुक्ष्यादिषु। पित्तेन कुक्ष्यादिषु विदह्यमानः पुरुषः सधूमं धूमेन सहितमिव गन्धवदम्लान्वितमुद्गारमुद्गिरति। गुल्मावकाश इत्यस्य दह्यते दूयते इत्यादिभिरन्वयः। गुल्मावकाशो गुल्मप्रदेशः। ज्वरादय उपद्रवाः। एनं पित्तगुल्मिन पुरुषम्। हरितो वर्णः हरिद्वर्णः पालाशवर्ण इति यावत्। हारिद्रो हरिद्रावत् पीतवर्णः। शेषं सुगमम् ॥ ६ ॥ ( इति पित्तगुल्मः। )

गङ्गाधरः—कफगुल्मनिदानमाह—तैरेवेत्यादि। तैरेवेति वातगुल्मोक्तज्वरादिभिः कर्षणैः। अतिस्निग्धादीनां यथायोग्यं केवलकफकरत्वं वात-

वचनात् पित्तगुल्मस्य कफगुल्मस्य च वस्तिः स्थानं न भवतीति दर्शयति; वचनं हि—"नाभिस्तनान्तरं जन्तोरामाशय इति स्मृतः" इति। वातगुल्मस्य तु वस्तिरपि स्थानं भवति; अत एव तत्र सामान्येन 'महास्रोतः' इति कृतम्; 'महास्रोतोग्रहणेन च वस्तिरपि गृह्यते, तथा वातगुल्म एव "हृदि वस्तौ" इत्यादि कृतम्; दाहदूयनादयः पित्तवेदनाविशेषा असकृद्व्याख्याताः; दवथुर्धकधकितेति लोके कथ्यते ॥ ६ ॥

चक्रपाणिः—श्लेष्मगुल्मेऽतिभुक्तस्येति अतिभुक्तितस्य; अतिसुहितस्येति वा पाठः;

* गन्दकमद्यातिपानात् इति वा पाठः।

सन्धारणादतिसुहितस्य चातिप्रगाढ़मुदकपानात् संक्षोभाद्वा शरीरस्य श्लेष्मा सह मारुतेन प्रकोपमापद्यते।

तं प्रकुपितं मारुत आमाशयैकदेशे संवर्त्त्य तानेव वेदनाप्रकारानुपजनयति*, य उक्ता वातगुल्मे। श्लेष्मा त्वस्य शीतज्वरारोचकाविपाकाङ्गमर्द-हर्ष-हृद्रोग-च्छर्दिनिद्रालस्य-स्तैमित्य-गौरवशिरोऽभितापानुपजनयति, अपि च गुल्मस्य स्थैर्य्य-गौरवकाठिन्यावगाढ़सुप्ततांश्च तथा कासश्वासप्रतिश्यायान् राजयक्ष्माणञ्चातिवृद्धः श्वैत्यञ्च त्वङ्नखनयनवदनमूत्रपुरीषेषु उपजनयति। निदानोक्तानि चास्य नोपशेरते विपरीतानि चोपशेरते ॥ ७ ॥ इति श्लेष्मगुल्मः।

त्रिदोषहेतुलिङ्गसन्निपाते तु सान्निपातिकं गुल्ममुप-

श्लेष्मकरत्वञ्च बोध्यम्। तं कफं प्रकुपितं प्रागुक्तहेतुभिः। मारुतः कर्त्ता। श्लेष्मा त्वस्येति। तत्र गुल्मे यं श्लेष्माणं मारुत आमाशयैकदेशे संवर्त्त्य तानेव वेदनाप्रकारान् उपजनयति, स श्लेष्मा, त्वस्य गुल्मिनः। अपि चेत्यादि गुल्मस्य ग्रन्थिरूपस्य स्थैर्य्यादीनुपजनयति श्लेष्मा। तथेत्यादि अतिवृद्धोऽयं श्लेष्मा कासादीन् राजयक्ष्माणञ्चोपजनयति, त्वगादिषु श्वैत्यञ्चोपजनयति, इत्येते कासादयः कफगुल्मानामुपद्रवा बोध्याः। अतिवृद्ध इति श्लेष्मणः कर्त्तृत्ववचनेन सर्व्वत्रैवोपद्रवाणां तत्तद्व्याधिकरहेतूपबृंहितदोषबलेन उपबृंहितबलव्याधिजन्यत्वं न तु तत्तद्व्याध्यारम्भकदोषजन्यत्वमित्युक्तं प्रत्याख्यातम् ॥ ७ ॥

गङ्गाधरः—त्रिदोषेत्यादि। इहैवमेकैकदोषस्य ये हेतवो यानि च लिङ्गानि उक्तानि तेषां त्रयाणां दोषाणां तेषां हेतूनां लिङ्गानाञ्च सन्निपाते परस्परमिलने। तुशब्दादधिकलिङ्गानाञ्च सन्निपातो विकृतिविषमसमवायारब्धत्वात्। चिकित्सिते महारुजं दाहपरीतमश्मवदित्यादिलक्षणेन त्रिदोषजगुल्मस्य

यद्यपि राजयक्ष्मा त्रिदोषजः, तथापि कफगुल्म एव रोगमहिम्ना अजनितदोषत्रयेण जन्यत इति बोद्धव्यम् ॥ ७ ॥

* वेदनाप्रकारानित्यत्र गाढ़वेदनाप्रकारान् इति द्वितीयः पाठः।

दिशन्ति कुशलाः। स विरुद्धोपक्रमत्वादसाध्यो निचय-गुल्मः ॥ ८ ॥

शोणितगुल्मस्तु खलु स्त्रिया एव भवति न पुरुषस्य, गर्भकोष्ठार्त्तवागमनवैशेष्यात्। पारतन्त्र्यादवैशारद्यात् सततम्

वक्ष्यमाणत्वात्। तथा तत्रैव निमित्तलिङ्गान्युपलभ्य गुल्मे इत्यादिना चिकित्सा-विशेषार्थमेव द्वन्द्वजानां त्रयाणां वक्ष्यमाणत्वेऽपि संख्यायां गणनाभावेन प्रकृति-समसमवायारब्धत्वख्यापनात् त्रिदोषजस्य संख्यायां गणितत्वेन विकृतिविषम-समवायारब्धत्वं प्रकृतिसमसमवायारब्धत्वञ्च ख्यापितवान्। विरुद्धोपक्रम-त्वादिति तुल्यबलविरुद्ध उपक्रम आरम्भो यस्य तस्मात्। न ह्यस्ति सान्नि-पातिकज्वरादेरिव विकृतिविषमसमवायारब्धत्वेऽपि पञ्चकषायकल्पनैः कल्पित-संशमनौषधसत्त्वेऽपि षडुपक्रमाणां वातादियोग्यानां परस्परविरुद्धत्वेन त्रिदोष-हरतया यौगिकत्वं निचयगुल्मे व्याधिस्वभावादिति ॥ ८ ॥

गङ्गाधरः—शोणितगुल्मस्त्विति उद्दिष्टः शोणितगुल्मः। स्त्रिया एवेति न तु पुरुषस्येति। शिश्नादिचिह्नस्य प्राणिमात्रस्यैव पुरुषपदेनोक्तत्वेन तल्लाभापत्तेः। ननु कुतो न पुरुषस्य शोणितगुल्मः स्यादित्यत आह—गर्भेत्यादि। गर्भात् गर्भाशयरूपकोष्ठादार्त्तवस्य रजइत्याख्यरक्तस्यागमनेन स्त्रीतः पुरुषस्य वैशेष्यात् तद्रक्ताभावात्। प्रसादरक्तन्तु व्याधिस्वभावान्न गुल्ममारभते।

आर्त्तवशोणितगुल्मस्य निदानान्याह—पारतन्त्र्यादित्यादि। पारतन्त्र्यं प्रायेण पराधीनत्वम्। अवैशारद्यादिति स्त्रीजातीनां स्वभावत एव प्रायो

चक्रपाणिः—विप्रतिषिद्धोपक्रमत्वादिति परस्परं वातादिविरुद्धोपक्रमत्वात्। इह च विप्रति-षिद्धोपक्रमत्वं विकृतिविषमसन्निपातेन बोद्धव्यम्, तेन साध्यत्रिदोषज्वरादौ वातादिविरुद्धोप-क्रमत्वं सदपि नासाध्यतामापादयति ॥ ८ ॥

चक्रपाणिः—शोणितगुल्मे 'स्त्रिया एव' इतिवचनादेव 'न पुरुषस्य' इति लब्धे पुनः 'न पुरुषस्य' इतिवचनं स्पष्टार्थम्। गर्भात्मकः कोष्ठो गर्भकोष्ठस्तस्मिन्, गर्भकोष्ठे य आर्त्तवस्य आगमनरूपो विशेषो रक्तगुल्मकारणम्, स स्त्रिया एव भवति ; तेन एवंरूप आर्त्तवप्रतिबन्धजन्यः शोणितगुल्मः पुरुषस्य न भवति। सामान्यशोणितदुष्टिजन्यस्तु पुरुषस्यापि भवति ; तथाहि वक्ष्यति—"कफे वाते जितप्राये पित्तं शोणितमेव वा। यदि कुप्यति वा तस्य क्रियमाणे चिकित्सिते ॥" इति ; तथा "गुल्मोपकुशवीसर्पा इत्याद्यो रक्तजगदाः" इत्युक्तम्। पारतन्त्र्यादि

उपचारानुरोधाद् वेगानुदीर्णानुपरुन्धत्याः आमगर्भे वाप्य-चिरपतिते अथाप्यचिरप्रजातायाः ऋतौ वा वातप्रकोपणानि आसेवमानायाः क्षिप्रं वातः प्रकोपमापद्यते। स प्रकुपितो योन्या मुखमनुप्रविश्यार्त्तवमुपरुणद्धि। मासे मासे तदार्त्तवमुपरुध्यमानं कुक्षिमभिवर्द्धयति, तस्याः शूलकासातिसारच्छर्द्यरोचका-विपाकाङ्गमर्द्दनिद्रालस्यस्तैमित्यकफप्रसेकाः समुपजायन्ते। स्तनयोश्च स्तन्यम्, ओष्ठयोः स्तनमण्डलयोश्च कार्ष्ण्यमत्यर्थं ग्लानिश्चक्षुषोर्मूर्च्छा हृल्लासो दोहदः श्वयथुश्च पादयोः, ईष-

विशारदत्वाभावः। सततमुपचारानुरोधादिति प्रायेण गृहकर्म्मानुरोधः स्त्रीणामस्ति तेषामन्यतमात् पुरीषादीनां वेगानुदीर्णानप्युपरुणद्धि इति उदीर्ण-वेगानुपरुन्धत्याः क्षिप्रं वातः प्रकोपमापद्यते। अपि च। अचिरपतिते अभिनवपतिते आमगर्भे आसप्तममासिकगर्भे अल्पकालातीतपतिते सति या स्त्री वातप्रकोपणान्यासेवते, तस्याः क्षिप्रं वातः प्रकोपमापद्यते। अथवा या स्त्री अचिरमल्पकालातीतं प्रजाता प्रसूता वातप्रकोपणान्यासेवते, तस्या वायुः क्षिप्रं प्रकोपमापद्यते। अथवा या स्त्री ऋतौ सति वातप्रकोपणानि आसेवते तस्याः क्षिप्रं वातः प्रकोपमापद्यते।

विधिसम्प्राप्तिमाह—स इत्यादि। स इति वायुः। योन्या मुखम् अन्तर्योनौ रजःक्षरणस्रोतोमुखं मासे मासे तेन वायुनोपरुध्यमानमक्षरत् तदार्त्तवं कृत्तं। तद्विज्ञानार्थं लिङ्गान्याह—तस्या इत्यादि। ओष्ठयोः स्तनमण्डलयोश्च कार्ष्ण्यं कृष्णवर्णत्वं, स्तनमण्डलं चूचुकं परितः कृष्णमण्डलम्। अत्यर्थं ग्लानिश्चक्षुषोरिति चक्षुषोरालस्यातिशयः। दोहदः सर्व्वरसाहारादिषु

हेतुत्रयं वेगविधारणे, पारतन्त्र्यादेव स्त्रियो वेगं विधारयन्ति। अवैशारद्यमज्ञानम्; तेन वेगविधारणेन महान् व्याधिर्भवत्येव, अज्ञा एव वेगं विधारयन्ति। उपचारादिति भर्त्त्राद्युपचारपरत्वात्; योनिमुखमिति गर्भाशयद्वारम्। स्तनयोः स्तन्यमिति रोगप्रभावादेव बोद्धव्यम्; आर्त्तवरोगलक्षणस्य व्याधेरयं प्रभाव, यतः स्तन्यं करोति, दृष्टत्वात्; तेन, यदुच्यते—"स्त्रिया ह्युत्पन्नगर्भायाश्छिन्ना रसः सम्पद्यते स्वशरीरपुष्टये, स्तन्याय, गर्भाभिवृद्धये च" इति वचनात् 'गर्भ एव स्तन्यं भवति,' तन्निरस्तं मन्तव्यम्; दोहदशब्देनेह नार्य्या उच्चावचतावदिच्छायोगो दोहदाभिधानो ज्ञेयः; यदुक्तं क्षारपाणिना—

च्चोद्गमो रोमराज्या योन्याश्चाटालत्वमपि च योन्यां दौर्गन्ध्य-मास्रावश्चोपजायते। केवलश्चास्या गुल्मः पिण्डित एव स्पन्दते, तामगर्भां गर्भिणीमित्याहुर्मूढ़ाः ॥ ९ ॥

काङ्क्षा। श्वयथुश्च पादयोः। ईषद्रोमराज्या योन्याश्चाटालत्वं विस्तृतत्वम्। केवलश्चास्या इति। अस्या आर्त्तवगुल्मिन्याः केवलः कृत्स्नः पिण्डितरूप एव गुल्मः स्पन्दते इति गर्भाद् भेदः, गर्भो हि करचरणाद्यवयवेन स्पन्दते निःशूलश्च। तामार्त्तवगुल्मिनीमगर्भां मूढ़ा आर्त्तवगुल्मलक्षणान्यविद्वांसो गर्भिणीमाहुः ॥ ९ ॥

"दोहदिनी वा स्यान्नारी शोणितगुल्मिनी'। न त्विह द्वैहृदयस्य कृतो भेदोऽभिप्रेतः; स हि गर्भहृदयस्य मातृहृदयेन हि सम्बन्धो भवतीति; वचनं हि—"मातृजन्त्वस्य हृदयं मातृहृदयेन सम्बद्धं भवति रसवाहिनीभिः संवाहिनीभिः; तस्मात् तयोर्भक्तिः सम्पद्यते' इति; शोणितगुल्मे च चेतना नास्ति; तेन नैवंरूपमिह द्वैहृद्यं दोहदम्; तेन गर्भभ्रान्त्या यत्किञ्चिदभ्यवहारेच्छादिलक्षणं दोहदं तस्या भवति; असत्यपि विषसम्बन्धे यथा शङ्काविषात् विषलिङ्गानि भवन्ति; वचनं हि—"शङ्काविषेणोपहताः कुर्व्वन्ति विषलक्षणम्" इति। चाटालत्वं विस्तृतत्वम्, योनिविस्तारेण च रोमराज्या अपि विस्तरणं वितन्यमानचर्म्मरोम्णा चैवोपपन्नम्; केवलः स्पन्दत इति नैकदेशेन; गर्भो ह्येकदेशेनापि स्पन्दते; तेन एतल्लक्षणं गर्भशङ्काव्यावर्त्तकम्; ननु यदुक्तं रक्तगुल्मे—'समगर्भलिङ्गः" इति, तथा 'मासे व्यतीते दशमे चिकित्स्यः" इति तदनुपपन्नम्; यतः गर्भाद् विशिष्टं पिण्डितस्पन्दनं विद्यत एव, तथा नवत्वं सुखसाध्यताहेतुत्वेनोक्तम्; इह च कथं कालातिक्रमेणोपक्रमणीयत्वमुच्यते? अत्र ब्रूमः—समगर्भलिङ्गस्तावत् भूरिगर्भसमलिङ्गताभिप्रायेणोक्तः; किंवा समस्यावैकारिकस्य दशममासिकगर्भस्य लिङ्गानि यस्य स समगर्भलिङ्गः; तेन वैकारिकस्तनागोदरादेर्लक्षणं नेह भवतीति दर्शयति; दशममासचिकित्स्यत्वञ्चेह व्याधिमहिम्ना बोद्धव्यम्, दशममास एवायं शिथिलीभूतः सन् चिकित्स्यो भवतीति व्याधिप्रभावः; दृष्टा च व्याधिप्रभावकृता कालापेक्षा—"ज्वरे पेयाः कषायाश्च सर्पिः क्षीरं विरेचनम्। षड़हे षड़हे देयम्" इत्यादिषु, यत् तु समगर्भलिङ्गत्वेन गर्भशङ्कानिरासार्थं रक्तगुल्मस्य दशममासापेक्षणम्, तन्न; दशममासादर्व्वागपि पिण्डितस्पन्दनेन रक्तगुल्मस्यावधारणात्, तथा दशममासादूर्द्धमपि गर्भावस्थानस्य दृष्टत्वेन गर्भशङ्कानपगमाच्च; वक्ष्यति हि दशममासादूर्द्धमवस्थानं गर्भस्य, 'वैकारिकमतः ऊर्द्धमवस्थानम्" इति वचनात् ॥ ९ ॥

एषान्तु खलु पञ्चानां गुल्मानां प्रागभिनिर्वृत्तेरिमानि पूर्व्वरूपाणि भवन्ति। तद् यथा—अनन्नाभिलषणमरोचकाविपाकावग्निवैषम्यं विदाहो भुक्तस्य पाककाले चायुक्त्या च्छर्द्दुद्गारौ, वातमूत्रपुरीषवेगाणां प्रादुर्भावः प्रादुर्भूतानाञ्च अप्रवृत्तिरीषदागमनं वा, शूलाटोपान्त्रकूजनपरिहर्षणातिवृत्तपुरीषताः, अबुभुक्षा दौर्ब्बल्यं सौहित्यस्य चासहत्वमिति गुल्मपूर्व्वरूपाणि भवन्ति ॥ १० ॥

सर्व्वेषु खल्वेतेषु गुल्मेषु कश्चिन्न वातादृते भवति गुल्मः। तेषां सान्निपातिकमसाध्यं ज्ञात्वा नैवोपक्रमेत। एकदोषजे

गङ्गाधरः—गुल्मानां पञ्चानामत्र सामान्यतः पूर्व्वरूपाण्याह—एषान्तु इत्यादि। अनन्नाभिलषणं सत्यामपि क्षुधायामशितुमनिच्छा। अरोचकस्तु सत्यप्यभिलाषेऽभ्यवहारासामर्थ्यम्। विदाहो भुक्तस्याद्धपरिपाकः। भुक्तस्य पाककालेऽयुक्त्या च्छर्द्दुद्गारौ। वातादिवेगानां प्रादुर्भाव उपस्थितिः, किन्तु प्रादुर्भूतानां उत्स्रष्टुं प्रवर्त्तितानां तेषां वातादिवेगानामप्रवृत्तिः सङ्गः। आटोपो गुड़्गुड़ाध्वनिः तनतनिर्वा। परिहर्षणं रोमाञ्चः। अतिवृत्तपुरीषता कोष्ठमभितो वृत्तं पुरीषं यस्य तत् तम्। अबुभुक्षा क्षुधाभावः। सौहित्यस्य आ तृप्तितो भुक्तेरसहत्वं दौर्ब्बल्यात् ग्लानिकरत्वाच्च सौहित्यस्य ॥ १० ॥

गङ्गाधरः—ननु वातगुल्मे यथा वातस्य गुल्मारम्भकत्वं तथा पित्तादिगुल्मेष्वप्युक्तं, ततः किं पित्तादिगुल्मो द्वन्द्वज इत्याशङ्कायामाह—सर्व्वेष्वित्यादि। चलत्वेन वातस्य पिण्डाकारकर्त्तृत्वे पित्तकफरक्तानाञ्च पङ्गुत्वेन पिण्डाकारकर्त्तृत्वाद् वातं विना न कश्चित् गुल्मो भवतीति भाव इति सर्व्वेष्वेव गुल्मेषु वाताविरुद्धा क्रिया विहिता। अपि च पित्तादिगुल्मेषु पित्तादिवद् वातप्रकोपसत्त्वेऽपि वातस्यौत्सर्गिकत्वान्न द्वन्द्वजत्वेन व्यपदेशः। चिकित्सासूत्राण्याह—तेषामित्यादि। तेषां पञ्चानां गुल्मानां मध्ये सान्निपातिकं गुल्मं ज्ञात्वा नोपक्रमेत, वातजादिकमप्यसाध्यं ज्ञात्वा नोपक्रमेत। एक-

चक्रपाणिः—तद् यथेत्यादिना पूर्व्वरूपाण्याह। अयुक्त्येति छर्द्द्युद्गारकारणमन्तरेण व्याधिप्रभावादेवेत्यर्थः। अतिवृत्तपुरीषता उदावर्त्तः ॥ १० ॥

तु यथास्वमारम्भं प्रणयेत्. संसृष्टांस्तु साधारणेन कर्म्मणोपचरेत्। यच्चान्यद्‌ध्यविरुद्धं मन्येत, तद्‌ध्यवचारयेद्विभज्य गुरुलाघवमुपद्रवाणां समीक्ष्य। गुरूनुपद्रवांस्त्वरमाणश्चिकित्सेत् जघन्यमितरांस्त्वरमाणश्च। विशेषमनुपलभमानो गुल्मेषु

दोषजे त्विति। तुशब्दो भिन्नक्रमे तेन साध्ये तु एकदोषजे यथास्वं स्वारम्भकदोषहरमारम्भं कर्म्म प्रणयेत् कुर्य्यादित्यर्थः। संसृष्टांस्त्विति। स्वकारणकुपितवातपित्तजं तथा वातकफजं पित्तकफजञ्च साधारणेन वातपित्तादिद्वन्द्वदोषहरेण कर्म्मणा विरेचनादि-स्वेदादिना च। एतेन द्वन्द्वजानां परिसङ्ख्यया गणनाभावेन च प्रकृतिसमसमवायारब्धत्वं ख्यापितम्। आचार्य्याणामियं हि रीतिः—प्रायेण विकृतिविषमसमवायारब्धान् द्वन्द्वसन्निपातजान् व्याधीन् परिसङ्ख्यया गणयित्वा तेषां लिङ्गानि साक्षात् पठित्वा प्रकृतिसमसमवायारब्धान् न गणयित्वा अतिदेशेन लिङ्गान्युपदेश्य क्रियाभिधीयत इति। यच्चान्यदिति। तदारम्भकदोषहरमपरदोषाविरुद्धं तदपि गुरुलाघवं विभज्य गुरुत्वेन वृद्धे दोषे लघुद्रव्यं लघुत्वेन वृद्धे गुरुद्रव्यमिति विभज्य अवचारयेत्। एतदुपदर्शनमात्रं, तेन स्निग्धत्वादिगुणैरपि वृद्धे रौक्ष्यादिगुणविभागः कर्त्तव्यः। नन्वत्र यदुग्रपद्रवा बलवन्तः सन्ति, तत्र किं व्याधिहरणमादौ कर्त्तव्यं तत्प्रशमनं चोपद्रवाः प्रशाम्यन्ति, किमुतोपद्रवान् प्रशमयेदित्यत आह—उपद्रवाणामित्यादि।

ननूपद्रवाणां गुरु लाघवं समीक्ष्य किं कुर्य्यादित्यत आह—गुरूनित्यादि। उपद्रवाणां वातजे प्रादुर्भूते वेदनाप्लीहाटोपादीनां मध्ये, पित्तजे ज्वरभ्रमादीनां मध्ये, कफजे कासश्वासादीनां मध्ये, गुरूनतिपीड़ाकरानुपद्रवान् समीक्ष्य त्वरमाणः शीघ्रः सन् तान् चिकित्सेत्। ननु किं लघून न चिकित्सेदित्यत आह—जघन्यमित्यादि। जघन्यं पश्चात् इतरान् लघूनुपद्रवान्। ननु व्याधेर्विशेषोपलब्धिर्विधानं न त्वरया भवति, यदि च गुल्मोऽतिवृद्ध आत्ययिकं कर्म्म कुरुते तदा त्वरमाणः किं कुर्य्यादित्यत आह—

चक्रपाणिः—पित्तादिकृतेष्वपि तु गुल्मेषु सम्प्राप्तिसिद्धस्य वातस्य प्राधान्यमाह—सर्व्वेष्वपि

आत्ययिके कर्म्मणि वातचिकित्सितं प्रणयेत्। स्नेहस्वेदौ वातहरौ स्नेहोपसंहितञ्च मृदु विरेचनं वस्तींश्चाम्ललवणमधुरांश्च रसान् युक्त्यावचारयेत्। मारुते ह्युपशान्ते स्वल्पेनापि यत्नेन शक्योऽन्योऽपि दोषो नियन्तुं गुल्मेष्विति ॥ ११ ॥

भवति चात्र।

गुल्मिनामनिलशान्तिरुपायैः सर्व्वशो विधिवदाचरितव्या।
मारुते ह्यवजितेऽन्यमुदीर्णं दोषमल्पमपि कर्म्म निहन्यात् ॥१२॥

त्वरमाणश्चेत्यादि। गुल्मेषु सर्व्वेष्वेवात्ययिके क्षिप्रं प्राणहरणकारिणि कर्म्मणि सति त्वरमाणश्च चिकित्सां कर्त्तुं शीघ्रं प्रवर्त्तमानश्च भिषक् विशेषं वातजत्वादिरूपेण गुल्मं प्रभेदमनुपलभ्यमानमुपलब्धिविषयमकुर्व्वन् वातचिकित्सितं प्रणयेत्। ननु कैरुपक्रमैरित्यत आह—स्नेहेत्यादि। स्नेहोपसंहितं स्नेहद्रव्यघटितं वस्तींश्च स्नेहोपसंहितान् युक्त्या व्याधिपुरुषबलाद्यनुरूपेण। ननु कस्मात् सर्व्वेष्वेव गुल्मेषु वातचिकित्सितं प्रणयेदित्यत आह—मारुत इत्यादि। अत्र न हि कश्चिद् वातादृते भवति गुल्म इति पूर्व्वमुक्तहेतुर्ज्ञेयः ॥११

एतमेवार्थं तद्विद्व्यवसायाय श्लोकेनाह—भवतीत्यादि। गुल्मिनामित्यादि। उपायैरुक्तैः स्नेहस्वेदादिभिः। सर्व्वशः संशोधनसंशमनाहाराचारादिसर्व्वरूपेण। विधिवदिति तत्तत्स्नेहादिप्रयोगविधानेन। अन्यमुदीर्णं दोषं पित्तादिकम् अल्पमपि कर्म्म पित्तादिहरणशीतादिकर्म्माल्परूपेण प्रयुक्तमपि निहन्यादित्यर्थः। अत्रेदमवधातव्यम्—सर्व्वेष्वेव गुल्मेषु वातकोपात् शूलो वर्त्तते, स च केवलवातजे गुल्मे केवलवातज एव सूचीवेधवदादिनानाप्रकारः। पित्तजादौ तु वातजनानाप्रकारोऽपि पित्तादिसम्बन्धेन तीव्रज्वालादिसहित एव भवति, इति शूलोऽपि तत्र वातजादिरूपेण व्यपदिष्टो भवति पञ्चविधः सह द्वन्द्वजैरष्टविधश्च कफजे त्वामशूलस्यान्तर्भावेणाधिकत्वाभावादिति। एतेन गुल्मातिरिक्तः कश्चिदन्यः शूलरोगो नास्ति यश्च शूल आपातत एव दृश्यते स वातकर्म्मविशेषो न च चिरस्थपीड़ाकर एतदभिप्रायेणाचार्य्येणानेनान्यः शूलो रोगो नोक्तः। सुश्रुतेनाप्येतदभि-

इत्यादि। साधारणेनेति संसृष्टोभयदोषप्रत्यनीकेन ; यद वा अन्यदपीति संसर्गे एकदोषोपशमकम्

प्रायेण गुल्माधिकारे गुल्मोपद्रवत्वेन शूलमुक्त्वा गुल्मोक्तस्थानजः पृथक् शूल उक्तः ; तद् यथा—अथास्योपद्रवः शूलः कथञ्चिदुपजायते। शूलं निखानितमिव सुखं येन न वेत्त्यसौ। तत्र विण्मूत्रसंरोधः कृच्छ्रोच्छ्वासः स्थिराङ्गता। तृष्णा दाहो भ्रमोऽन्नस्य विदग्धपरिवृद्धता। रोमहर्षोऽरुचिश्छर्दिर्भुक्तवृद्धिजड़ाङ्गता। वाय्वादिभिर्यथासंख्यं मिश्रैर्वा वीक्ष्य योजयेत्। पथ्यात्रिलवणं क्षारमित्यादिचिकित्सावचनानन्तरं—विना गुल्मेन यच्छूलं गुल्मस्थानेषु जायते। निदानं तस्य वक्ष्यामि रूपञ्च सचिकित्सितम्। वातमूत्रपुरीषाणां निग्रहादतिभोजनात्। अजीर्णाध्यशनायास विरुद्धान्नोपसेवनात्। पानीयपानात् क्षुत्काले विरूढ़ानाञ्च सेवनात्। पिष्टान्नशुष्कमांसानामुपयोगात् तथैव च। एवंविधानां द्रव्याणामन्येषाञ्चोपसेवनात्। वायुः प्रकुपितः कोष्ठे शूलं संजनयेद्भृशम्। निरुच्छ्वासो भवेत् तेन वेदनापीड़ितो नरः। शङ्कु स्फोटनवत् तस्य यस्मात् तीव्राश्च वेदनाः। शूलासक्तस्य लक्ष्यन्ते तस्माच्छूलमिहोच्यते। निराहारस्य यस्यैव तीव्रं शूलमुदीर्य्यते। प्रस्तब्धगात्रो भवति कृच्छ्रेणोच्छ्वसितीव च। वातमूत्रपुरीषाणि कृच्छ्रेण कुरुते नरः। एतैर्लिङ्गैर्विजानीयाच्छूलं वातसमुद्भवम् ॥ १ ॥ तृष्णा दाहो मदो मूर्च्छा तीव्रं शूलं तथैव च। शीताभिकामो भवति शीतेनैव प्रशाम्यति। एतैर्लिङ्गैर्विजानीयाच्छूलं पित्तसमुद्भवम् ॥ २ ॥ शूलेनोत्पीड्यमानस्य हृल्लास उपजायते। अतीवपूर्णकोष्ठत्वं तथैव गुरुगात्रता। एतच्छ्लेष्मसमुत्थस्य शूलस्योक्तं निदर्शनम् ॥ ३ ॥ सर्व्वाणि दृष्ट्वा रूपाणि निर्दिशेत् सान्निपातिकम्। सन्निपातसमुत्थानमसाध्यं तं विनिर्दिशेत्। शूलानां लक्षणं प्रोक्तं चिकित्साञ्च निबोध मे ॥ ४ ॥ इत्यादिना वातजशूलादिचिकित्सावचनानन्तरं—रुणद्धि मारुतं श्लेष्मा कुक्षिपार्श्वे व्यवस्थितः। स संरुद्धः करोत्याशु ध्मानं गुड़गुड़ायनम्। सूचीभिरिव निस्तोदः कृच्छ्रोच्छ्वासी तदा नरः। नान्नं वाञ्छति नो निद्रामुपैत्यर्त्तिनिपीड़ितः। पार्श्वशूलः स विज्ञेयः कफानिलसमुद्भवः ॥५॥ इत्यत ऊर्द्ध मस्य चिकित्सामुक्त्वा ; प्रकुप्यति यदा कुक्षौ वह्निमाक्रम्य मारुतः। तदास्य भोजनं भुक्तं सोपष्टम्भं न पच्यते। उच्छ्वसित्यामशकृता शूलेनाहन्यते मुहुः। नैवासने न शयने तिष्ठन् न लभते सुखम्। कुक्षिशूल इति ख्यातो वातादामसमुद्भवः ॥ ६ ॥ अत ऊर्द्ध मस्य चिकित्सामुक्त्वा ; कफपित्तावरुद्धस्तु मारुतो रसमूर्च्छितः।

मपि। अविरुद्धमिति उपद्रवाणां गुरूणामविरुद्धम्। विभज्येति गुरुलाघवं विभज्य ; तेन,

हृदिस्थः कुरुते शूलमुच्छ्वासरोधकं परम्। स हृच्छूल इति ख्यातो रसमारुतसम्भवः। तत्रापि कर्म्माभिहितं यदुक्तं हृद्विकारिणाम्॥ ७॥ संरोधात् कुपितो वायुर्वस्तिमावृत्य तिष्ठति। वस्तिवङ्क्षणनाभीषु ततः शूलोऽस्य जायते। विण्मूत्रवातसंरोधी वस्तिशूलः स मारुतात्॥ ८॥ नाभ्यां वङ्क्षणपार्श्वेषु कुक्षौ मेढ्रान्त्रमर्द्दकः। मूत्रमावृत्य गृह्णाति मूत्रशूलः स मारुतात्॥ ९॥ वायुः प्रकुपितो यस्य रुक्षाहारस्य देहिनः। मलं रुणद्धि कोष्ठस्थं मन्दीकृत्य तु पावकम्। शूलं संजनयंस्तीव्रं स्रोतांस्यावृत्य तस्य हि। दक्षिणं यदि वा वामं कुक्षिमादाय जायते। सर्व्वत्र वर्द्धते क्षिप्रं शूलं तत्र सघोषवत्। पिपासा वर्द्धते तीव्रा भ्रमो मूर्च्छा च जायते। उच्चारितो मूत्रितश्च न शान्तिमधिगच्छति। विट्शूलमेतज्जानीयाद् भिषक् परमदारुणम्॥ १०॥ अत ऊर्द्ध्वमस्य चिकित्सामुक्त्वा, अतिमात्रं यदा भुक्तं पावके मृदुतां गते। स्थिरीभूतन्तु तत् कोष्ठे वायुरावृत्य तिष्ठति। अविपाकगतं ह्यन्नं शूलं तीव्रं करोत्यति। मूर्च्छाध्मानं विदाहश्च हृदुत्क्लेशं विलम्बिकाम्। विरिच्यते च्छर्दयति कम्पतेऽतो विमुह्यति॥ ११॥ इति। अथ तन्त्रान्तरेऽपि। दोषैः पृथक् समस्ताम-द्वन्द्वैः शूलोऽष्टधा भवेत्। सर्व्वेष्वेतेषु शूलेषु प्रायशः पवनः प्रभुः॥ व्यायामयानादतिमैथुनाच्च प्रजागराच्छीतजलातिपानात्। कलायमुद्गाढ़कि-कोरदूषादत्यर्थरुक्षाध्यशनाभिघातात्। कषायतिक्तातिविरूढ़जान्न-विरुद्ध-वल्लूरकशुष्कशाकात्। विट्शुक्रमूत्रानिलवेगरोधाच्छोकोपवासादतिहास्य-भाष्यात्। वायुः प्रवृद्धो जनयेद्धि शूलं हृत्पृष्ठपार्श्वत्रिकवस्तिदेशे। जीर्णे प्रदोषे च घनागमे च शीते प्रकोपं समुपैति गाढ़म्। मुहुर्म्मुहुश्चोपशमप्रकोपौ विड्वातसंस्तम्भनतोदभेदैः। संस्वेदनाभ्यञ्जनमर्द्दनाद्यैः स्निग्धोष्णभोज्यैः प्रशमं प्रयाति॥ १॥ क्षारादितीक्ष्णोष्णविदाहितैल निष्पावपिण्याककुलत्थयूषैः। कट्वम्लसौवीरसुराविकारैः क्रोधानलायासरविप्रतापैः। ग्राम्यातियोगादशनैर्विदग्धैः पित्तं प्रकुप्याशु करोति शूलम्। तृड्दाहमोहार्त्तिकरं हि नाभ्यां संस्वेद-मूर्च्छाभ्रमचोषयुक्तम्। मध्यन्दिने कुप्यति चार्द्धरात्रे विदाहकाले जलदात्यये च। शीते च शीतैः समुपैति शान्तिं सुस्वादुशीतैरपि भोजनैश्च॥ २॥ आनूपवारिजकिलाटपयोविकारैर्मांसेक्षुपिष्टकृशरातिलशष्कुलीभिः। अन्यैर्बलाशजनकैरपि हेतुभिश्च श्लेष्मा प्रकोपमुपगम्य करोति शूलम्। हृल्लासकास-

एकत्रोपप्रशमनमपि तदेव कर्त्तव्यम्, यद् गुरूपद्रवप्रशमं भवतीति भावः। एतदेवाह—गुरून्

सदनारुचिसंप्रसेकैरामाशये स्तिमितकोष्ठशिरोगुरुत्वैः। भुक्ते सदैव हि रुजं कुरुतेऽतिमात्रं सूर्य्योदये च शिशिरे कुसुमागमे च॥३॥ सर्व्वेषु दोषेषु च सर्व्वलिङ्गं विद्याद् भिषक् सर्व्वभवं हि शूलम्। सुकष्टमेनं विषवज्रकल्पं विवर्ज्जनीयं प्रवदन्ति तज्ज्ञाः॥४॥ आटोपहृल्लासवमीगुरुत्व-स्तैमित्यमानाहकफप्रसेकैः। कफस्य लिङ्गेन समानलिङ्गमामोद्भवं शूलमुदाहरन्ति॥५॥ वस्तौ हृत्पार्श्व-पृष्ठेषु स शूलः कफवातिकः॥६॥ कुक्षौ हृन्नाभिमध्येषु स शूलः कफ-पैत्तिकः॥७॥ दाहज्वरकरो घोरो विज्ञेयो वातपैत्तिकः॥८॥ एकदोषोत्थितः साध्यः कृच्छ्रसाध्यो द्विदोषजः। सर्व्वदोषोत्थितो घोरस्त्वसाध्यो भूर्य्युपद्रवः॥ वेदना च तृषा मूर्च्छा आनाहो गौरवारुची। कासश्वासौ च हिक्का च शूलस्योपद्रवाः स्मृताः॥ अस्यैवावस्थान्तरम्। स्वैर्निदानैः प्रकुपितो वायुः सन्निहितस्तदा। कफपित्ते समावृत्य शूलकारी भवेद्बली। भुक्ते जीर्य्यति यच्छूलं तदेव परिणामजम्। तस्य लक्षणमप्येतत् समासेनाभिधीयते। आध्मानाटोप-विण्मूत्र-विबन्धारतिवेपनैः। स्निग्धोष्णोपशमप्रायं वातिकं तद् वदेद्भिषक्॥१॥ तृष्णादाहारतिस्वेदाः कट्वम्ललवणाशिनः। शूलं शीतशमप्रायं पैत्तिकं लक्षयेद् भिषक्॥२॥ छर्दिहृल्लाससम्मोहं स्वल्परुग्दीर्घसन्तति। कटुतिक्तोप-शान्तश्च तच्च ज्ञेयं कफात्मकम्॥३॥ संसृष्टलक्षणं बुद्धा द्विदोषं परिकल्पयेत्। त्रिदोषजमसाध्यन्तु क्षीणमांसबलानलम्॥४॥ जीर्णे जीर्य्यत्यजीर्णे वा यच्छूलमुपजायते। पथ्यापथ्यप्रयोगेण भोजनाभोजनेन च। न शर्म याति नियमात् सोऽन्नद्रव उदाहृतः॥ इति। तन्त्रान्तरे च। बलाशः प्रच्युतः स्थानात् पित्तेन सह मूर्च्छितः। वायुमादाय कुरुते शूलं जीर्य्यति भोजने। कुक्षौ जठरपार्श्वे च नाभ्यां वस्तौ स्तनान्तरे। पृष्ठमूलप्रदेशे च सर्व्वेष्वेतेषु वा पुनः। भुक्तमात्रेऽथवा वान्ते जीर्णेऽन्ने वा प्रशाम्यति। षष्टिकव्रीहिशालीनामोदनेन विवर्द्धते। तत् परिणामजं शूलं दुर्व्विज्ञेयं महागदम्। तमाहू रसवाहानां स्रोतसां दुष्टिहेतुकम्। केचिदन्नद्रवं प्राहुरन्ये तत् पक्तिदोषतः। पक्तिशूलं वदन्त्येके केचिदन्नविदाहजम्॥ इति। शूलस्य प्रागुत्पत्तिमुवाच हारीतः। अनङ्गनाशाय हरस्त्रिशूलं मुमोच कोपान्मकरध्वजश्च। तमापतन्तं सहसा निरीक्ष्य भयार्दितो विष्णुतनुं प्रविष्टः। स विष्णुहुङ्कारविमोहितात्मा पपात भूमौ प्रथितः सशूलः। स पञ्चभूतानुगतं शरीरं प्रदूषयत्यस्य हि पूर्व्वसृष्टिः। इति॥१२॥

इत्यादि। सर्व्वगुल्मानां वातमूलत्वेन वातनिरपेक्षचिकित्साविशेषानुपलम्भे वातिकचिकित्सा

तत्र श्लोकः ।

**संख्या निमित्तं रूपाणि पूर्व्वरूपमथापि च ।**
**दृष्टं निदाने गुल्मानामेकदेशश्च कर्म्मणाम् ॥ १३ ॥**

**इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते निदानस्थाने गुल्मनिदानं नाम तृतीयोऽध्यायः ॥ ३ ॥**

गङ्गाधरः—अथाध्यायार्थमुपसंहरति—तत्रेत्यादि । इह खलु पञ्च गुल्मा इत्यादिना सङ्ख्या । एवंवादिनमित्यारभ्य प्रकोपमापद्यते इत्यन्तेन वातगुल्मस्य निमित्तम् । स प्रकुपित इत्यादिना तस्य सम्प्राप्तिः । स मुहुरित्यादिना तस्य रूपाणि । निदानोक्तेत्यादिनानुपशयोपशयौ । तैरेवेत्यादिना पित्तगुल्मस्य निमित्तम् । तत् प्रकुपितमित्यादिना तस्य सम्प्राप्तिः । तानेव वेदनाप्रकारान् इत्यादिना रूपाणि । निदानोक्तानीत्यादिनानुपशयोपशयौ । पुनस्तैरेव इत्यादिना कफगुल्मस्य निमित्तम् । तं प्रकुपितमित्यादिना तस्य सम्प्राप्तिः । तानेवेत्यादिना रूपाणि । निदानोक्तानीत्यादिनानुपशयोपशयौ । त्रिदोषहेत्वित्यादिना निचयगुल्मस्य निमित्तं रूपाणि सम्प्राप्तिरुपशयाश्चातिदेशेन । शोणितगुल्मस्त्वित्यादिना शोणितगुल्मस्य निमित्तम् । स प्रकुपित इत्यादिना तस्य सम्प्राप्तिः । तस्याः शूल इत्यादिना रूपाणि शोणितगुल्मस्य । एषान्तु इत्यादिना सर्व्वगुल्मानां पूर्व्वरूपाणि । अथापि चेति चकारात् सम्प्राप्त्युपशयौ यथाव्याख्यातं बोध्यौ । सर्व्वेष्वित्यादिना सर्व्वत्र गुल्मेषु अव्यभिचारिदोषसम्बन्धश्च । तेषामित्यादिना यावदध्यायसमाप्तं कर्म्मणामेकदेश एतत्सर्व्वं गुल्मानां निदाने दृष्टमित्यर्थः ॥ १३ ॥

अध्यायं समापयति—अग्नीत्यादि ॥

इति श्रीगङ्गाधरकविरत्नकविराजकृते चरकजल्पकल्पतरौ द्वितीयस्कन्धे निदानस्थानजल्पे निदानस्थानीयगुल्मनिदानाख्य-तृतीयाध्यायजल्पाख्या तृतीया शाखा ॥ ३ ॥

एव त्वरया कर्त्तव्येत्याह—त्वरमाणस्त्वित्यादि । आत्ययिके कर्म्मणि क्रियमाण इति शेषः । अत्ययमपीति कर्म्मविशेषणम् । संग्रहे "एकदेशश्च कर्म्मणा"मिति चिकित्सितानाम् ॥ ११—१३ ॥

इति चरकचतुराननश्रीमच्चक्रपाणिदत्तविरचितायाम् आयुर्व्वेददीपिकायां गुल्मनिदानं नाम तृतीयोऽध्यायः ॥ ३ ॥

## चतुर्थोऽध्यायः ।

### अथातः प्रमेहनिदानं व्याख्यास्यामः, इतिह स्माह भगवानात्रेयः ॥ १ ॥

त्रिदोषप्रकोपनिमित्ता विंशतिः प्रमेहा भवन्ति, विकाराश्चापरेऽपरिसंख्येयाः। तत्र यथा त्रिदोषप्रकोपस्तु प्रमेहानभिनिर्व्वर्त्तयति, तथानुव्याख्यास्यामः ॥ २ ॥

गङ्गाधरः—रक्तपित्ते पित्तस्याव्यभिचारित्वं गुल्मे वातस्याव्यभिचारित्वञ्चोक्तम्, पारिशेष्यात् श्लेष्मणोऽव्यभिचारित्वस्य वक्तुमुचितत्वे सर्व्वप्रमेहेषु श्लेष्माव्यभिचारात् गुल्मनिदानानन्तरं प्रमेहनिदानमाह—अथात इत्यादि। सर्व्वं प्राग्वत् व्याख्येयम् ॥ १ ॥

गङ्गाधरः—त्रिदोषेत्यादि। पदार्थोख्यतन्त्रयुक्त्या विंशतावेव प्रमेहेषु मिलितत्रिदोषनिमित्तकत्वं बोध्यं न तु वातादेरेकैकदोषजत्वभेदेन विंशतिः प्रमेहा भवन्तीति बोध्यम्। प्रमेहचिकित्सिते हि वक्ष्यते—या वातमेहान् प्रति पूर्व्वमुक्ता वातोल्वणानां विहिता क्रिया सा इत्यादि। ननु त्रिदोषजा एव प्रमेहा विंशतिरेव भवन्ति किमेकैकदोषादिजा न भवन्तीत्यत आह—विकाराश्च इत्यादि। त्रिदोषनिमित्ताः प्रमेहा विंशतिरेव भवन्ति न तु प्रमेहा विंशतिरेव भवन्ति; परन्त्वपरे एकदोषजादयः प्रमेहविकाराः अपरिसंख्येया भवन्ति। दोषविकल्पेन वृद्धैर्दोषैर्दूष्यादिसंयोगेनापरिसंख्येयभेदात्। तत्रेत्यादि। तत्र एकादिदोषप्रकोपेषु अपरिसंख्येयेषु प्रमेहेषु मध्ये प्रमेहान् विंशतिम्। अथवा तत्र एकादिदोषप्रकोपेषु मध्ये त्रिदोषप्रकोपस्तु ॥ २ ॥

चक्रपाणिः—दक्षाध्वरे गुल्ममनु प्रमेहोत्पादात् प्रमेहाभिधानम्, वचनं हि—"हविःप्राशात्मेहकुष्ठयोर्जन्म" इति। त्रिदोषप्रकोपनिमित्ता इति, सर्व्वमेहेष्वेव त्रिदोषाः कारणम्, अधिकत्वाच्च श्लैष्मिकादिव्यपदेश इति दर्शयति; सुश्रुतेऽप्युक्तम्—"सर्व्व एव मेहाः सर्व्वदोषजाः" इति। विकारा इति प्रमेहलिङ्गोपद्रवरूपाः; किंवा अन्येऽपि ये केचन त्रिदोषजास्तेऽपि ग्राह्याः ॥ १।२ ॥

इह खलु निदानदोषदूष्यविशेषेभ्यो विकाराणां विघात-भावाभावभावप्रतिविशेषा भवन्ति। यदा ह्येते त्रयो निदानादिविशेषाः परस्परं नानुबध्नन्ति*, न तदा विकाराभि-

गङ्गाधरः—इहेत्यादि। इह मनुष्यदेहे निदानं दोषकोपनं द्रव्यादि, दोषा वातपित्तकफाः, दूष्या रसरक्तादयो धातूपधातुमलधातवः। विकाराणां सर्व्वेषामेव रोगाणां विघातस्य भावो विकाराणामनुत्पत्तिर्विघातस्याभावो विकाराणां जननं तयोर्विघातस्य भावाभावयोर्भावस्य प्रतिविशेषाः प्रत्येकं विशेषाः। तत्र विकाराणां विघाताभावविशेषा विकारजननं चिरेण विकार-जननं तनुविकारजननं सर्व्वलिङ्गविकारजननञ्च। पूर्व्वं वक्ष्यन्ते। विघात-भावप्रतिविशेषास्तु तद्विघाताभावविपर्य्ययेण वक्ष्यन्ते इति कश्चित्, तन्न, यतो यदा ह्येत इत्यादिना विकाराणामवश्याभिनिर्वृत्तिविघातवचनस्यासङ्गतिः। तस्मात् विकाराणां विघातश्च भावाभावश्च भावश्च तेषां विशेषा विशेषा इति प्रतिविशेषा भवन्ति।

कस्मादित्यत आह—यदा ह्येत इत्यादि। हि यस्मात्, एते निदानादिविशेषा विकाराणां ज्वरादीनां प्रतिरोगं ये निदानदोषदूष्य-विशेषास्ते यदा परस्परं नानुबध्नन्ति न तदा तत्तज्ज्वरादिविकाराणामभि-

चक्रपाणिः—इहेत्यादौ निदानादीनां विशेषाः परस्परानुबन्धित्वादयोऽग्रे वक्ष्यमाणा ज्ञेयाः; विकाराणां विघातस्य भावोऽभावश्चेति विकारविघातभावाभावौ तयोः प्रतिविशेषा विकार-विघातभावाभावप्रतिविशेषाः; तत्र विकाराणां विघाताभावस्य प्रतिविशेषाः—विकाराजननम्, तथा चिरेण च जननम्, तनुविकारजननं वा, असर्व्वलिङ्गविकारजननं वाग्रे वक्ष्यमाणाः। विघात-भावप्रतिविशेषास्तु विकाराजननादिविपर्य्ययेणाग्रे वक्ष्यमाणाः।

उक्तफक्किकार्थं व्याकरोति—यदेत्यादि। परस्परं नानुबध्नन्ति परस्परं प्रति-कूला भवन्ति, अनुबन्धो ह्यनुकूलेऽभिप्रेतः; तत्र तदेव निदानं दोषमनुबध्नाति, यद् भूयः सामान्यात् विरोधेन दोषं दूषयति; दोषस्य दूष्यानुबन्धित्वम्—यद्—दूष्यं व्याधिकरणं सामान्यगुणत्वादिधर्म्मयोगादविरोधेन दूषयति; तथा दूष्यस्य च दोषानुबन्धित्वम्—यद्—दोषस्य दूषणं प्रति शिथिलत्वसमानगुणत्वादिनानुकूल्येनावस्थानम्; तथा दोषस्य चेदमेव निदानानुबन्धित्वम्—यद्—निदानस्य व्याधिजननं प्रति समानगुणत्वम्; समानगुणतया हि दोषो निदानस्य व्याधिजननं प्रति अनुकूलो भवति; एतदुदाहरणानाञ्च विपर्य्ययेणाननुबन्धो

* इतः परम् अयथा वा कालप्रकर्षादिति पाठः क्वचित् दृश्यते।

निर्वृ त्तिर्भवति। अथाप्रकर्षादबलीयांसो वानुबध्नन्ति, न तदा विकाराभिनिर्वृ त्तिर्भवति। चिराद्वाप्यभिनिर्व्वर्त्तन्ते, तनवो वा भवन्त्यथवाऽयथोक्तसर्व्वलिङ्गाः, विपर्य्यये विपरीताः।

निर्वृ त्तिर्भवति। इत्येकान्तेन विघातो व्याख्यातः। अथाप्रकर्षाद् यदि ते निदानादयोऽवलीयांसोऽनुवध्नन्ति तदाप्यवश्यं न तत्तज्ज्वरादिविकाराणामभिनिर्वृ त्तिर्भवति। इत्यनेकान्तेन ज्वरादिव्याधीनां भावश्चाभावश्चेत्येकविधभावाभाव उक्तः। अपरस्तु अथ कथमनेकान्तेन विघातः स्यादित्यतो विघातस्यानैकान्तिकत्वप्रदर्शनेन विकाराणां भावविशेषा उच्यन्ते। चिराद् वाप्यभिनिर्व्वर्त्तन्त इति। यदा खल्वप्रकर्षान्निदानादयस्त्रयस्त्ववलीयांसः परस्परमनुबध्य विकारं नारभन्ते ततः कारणान्तरेण क्रमेण यावता कालेन बलं लभन्ते बलञ्च लभमानास्तावत्कालानन्तरं विकारमारभन्ते इति चिराद्वा विकारा अभिनिर्व्वर्त्तन्ते इति विकाराणामपरो भावाभावविशेषः। यदि कारणान्तरयोगेण बलतः प्रकर्षं न लभन्ते तदा तद् यत्किञ्चित्कारणयोगेन किञ्चिद्बलं लभमानास्तनून् सूक्ष्मान् विकारानारभन्त इति तनवो विकारा भवन्ति। इत्यपरो विकाराणां भावविशेषः। अथवा तनवो विकारा न भूत्वा भवन्त्ययथोक्तसर्व्वलिङ्गा यथोक्तसर्व्वलिङ्गादल्पलिङ्गव्यक्ततापन्ना विकारा इति विकाराणां चतुर्थो भावाभावविशेषः। इति विकाराणां चतुर्व्विधा भावाभावस्य विशेषाः। यदा निदानोपसेवनं नास्ति न तदा वातादयः कुप्यन्ति रसादयश्च न दूष्यन्ते तैरित्यतो विकाराणामेकान्तेन

बोद्धव्यः; निदानस्य च दोषाननुबन्धः समानासमानगुणयोगात् किञ्चिद्दोषजनने बोद्धव्यः, सर्व्वथा दोषवैपरीत्ये तदा दोषजननं प्रति उदासीनत्वे न च निदानस्य निदानत्वमेव स्यात्; जनकं हि निदानमुच्यते; अथवा कालप्रकर्षादिति अनुबध्नन्तीत्यनेन सम्बन्धः; कालप्रकर्षात् अनुबध्नन्तीति कालप्रकर्षात् परस्परं निदानादयोऽनुगुणा भवन्ति यदा, तदा विकारा अभिनिर्व्वर्त्तन्त इति ज्ञेयम्; यदा परस्परं नानुबध्नन्ति न तदा विकाराभिनिर्वृ त्तिर्भवतीति योजनीयम्। कालप्रकर्षाच्चानुबन्धो निदानस्य दोषेण तदा भवति, यदा हेतुर्विच्छेदं कृत्वा पुनः सेव्यते, काल एव वा चिरेण समानगुणतया हेतुरूपः प्राप्यते इत्यादि तर्क्यम्; अबलीयांसोऽथवाऽनुबध्नन्तीति निदानं यदल्पं भवति, तदा स्तोकदोषं करोति; दोषश्च स्तोकः स्तोकञ्च दूष्यं दूषयतीत्यादि ज्ञेयम्; यदा चाबलीयांसोऽनुबध्नन्ति, तदा तनवो वा विकारा भवन्ति, अयथोक्तसर्व्वलिङ्गा वा भवन्तीति योज्यम्; तनवोऽल्पमात्राः। अयथोक्तसर्व्वलिङ्गा इति येन

इति सर्व्वविकारविघातभावाभावभावप्रतिविशेषाभिनिर्वृ त्ति-हेतुर्भवत्युक्तः ॥ ३ ॥

तत्रेमे त्रयो निदानादिविशेषाः श्लेष्मनिमित्तानां प्रमेहाणामाश्वभिनिर्वृ त्तिकरा भवन्ति । तद् यथा—हायनक-

अभावोऽनुत्पत्तिरित्येको न विघातविशेषो निदानादित्रयसद्भावे हि विघात-व्याख्यानवचनम् । अथाबलीयसां निदानादीनामप्रकर्षादप्यनुबन्धविपर्य्ययेऽपि विकाराणामभावोऽनुत्पत्तिरिति द्वितीयो विकाराणां भावस्य विशेषः । तेषां कालेऽपि कारणान्तरेण बललाभाभावे चिरादपि न विकाराभिनिर्वृ त्तिः भवति । एवं तेषामेवाबलीयसां निदानादीनां परस्परानुबन्धानां कारणान्तर-लाभाभावे च तनुरूपेणापि विकारानुत्पत्तिर्नाप्ययथोक्तसर्व्वलिङ्गतया विकारोत्पत्तिरिति भावाभावो विकाराणामिति । अथैकान्तेन विकारोत्पत्ति-हेतुमाह—विपर्य्यये विपरीता इति । निदानादीनां त्रयाणां विघातभावा भावयोर्विपर्य्यये खल्वेकान्तेन विकारोत्पत्तिर्भवति । तद् यथा—निदानादीनां बलवतां यदा परस्परानुबन्धो भवति तदावश्यं विकाराभिनिर्वृ त्तिर्भवति । इति । अथैषां विकाराणां निदानादित्रयसद्भावेऽपि तेषामुत्पत्तौ विघातस्य भावाभावस्य भावस्य च हेतुवचनमुपसंहरति—इतीत्यादि ॥ ३ ॥

गङ्गाधरः—ननु प्रमेहरोगे निदानादयः कीदृशा इत्यत आह—तत्रेम इत्यादि । इमे वक्ष्यमाणा हायनकादयः । वातपित्तकोपने स्वल्प-बलवत्त्वेन श्लेष्मकोपने सम्पूर्णबललेन सम्पूर्णबलेन कुपितश्लेष्मणो दूष्यदूषणे क्षिप्रक्रियावत्त्वेन सम्पूर्णबलत्वात् श्लेष्मनिमित्तानां श्लेष्मोल्व-णानां त्रिदोषनिमित्तानाम् । आश्वभिनिर्वृ त्तिकरा न तु चिरात् ।

प्रकारेण लिङ्गान्युक्तानि, न तेन प्रकारेणापि सर्व्वलिङ्गानि भवन्तीत्यर्थः ; एवमेते निदानादीनाम् अननुबन्धविशेषकृता विकारविघाताभावस्य प्रतिविशेषा उक्ताः । सम्प्रति निदानादीनां परस्परानु-बन्धविशेषकृतान् विकाराणां विघातभावविशेषानाह—विपर्य्यये विपरीता इति ; विपर्य्यय इति निदानादीनामनुबन्धे तथा शीघ्रानुबन्धे तथा बलवताञ्चानुबन्धे ; विपरीता इति निर्व्वर्त्तमाना विकाराः, तथा शीघ्रं निर्व्वर्त्तमानास्तथा महान्तो यथोक्तसर्व्वलिङ्गाश्चेति यथासंख्यं बोध्यम् । उपसंहरति—इतीत्यादि । एतच्च प्रकरणं सर्व्वविकारसाधारणमपि प्रमेहस्य परस्परानुबन्धिभिरेव निदानादिभिर्जन्म भवतीति ख्यापयितुं प्रमेहनिदाने कृतम् ॥ ३ ॥

चक्रपाणिः—सम्प्रति प्रकृते कफजादिमेहे परस्परानुबन्धिनो निदानादिविशेषानाह—

यवक-चीन-कोद्दालक-नैषधेत्कटमुकुन्दकमहाव्रीहिप्रमोदकानां सुगन्धकानाञ्च नवान्नानामतिवेलमतिप्रमाणेन चोपयोगः, तथा सर्पिष्मतां नवहरेणुमाषसूप्यानां ग्राम्यानूपौदकानाञ्च मांसानां शाकतिलपललपिष्टान्नपायसकृशरविलेपीक्षुविकाराणां क्षीर-मन्दकदधिद्रवमधुरतरुणप्रायाणामप्युपयोगः, मृजाव्यायाम-वर्ज्जनं स्वप्नशयनासनप्रसङ्गो यः कश्चिद्विधिरन्योऽपि श्लेष्म-मेदोमूत्रजननः स सर्व्वो निदानविशेषः। बहुद्रवः श्लेष्मा दोषविशेषः। बहुबद्धं मेदो मांसं शरीरजक्लेदः शुक्रं शोणितं वसा मज्जा लसीका रसश्चौज इति संख्याता दूष्यविशेषाः॥ ४॥

ननु के ते निदानादिविशेषा इत्यत आह—तद् यथेत्यादि। हायनकेत्यादि। हायनकादीनां देशविशेषे स्वनाम्ना ख्यातप्रसिद्धानामतिवेलमतिशयं सर्पिष्मतां बहुसर्पिर्युक्तानां नवानां नूतनानां हरेणुमाषाणां वर्त्तुलकलायमाषाणां सूप्यानां, तिलपललेति तिलकल्कः। कृशरं तिलमाषयवपिष्टकृता यवागूः। मन्दकदधीति मन्दजातदधि च द्रवञ्च मधुरं तरुणञ्च यद् द्रव्यमन्यत् तदपि प्रायं बहुलं यत्र तेषाम्। मृजा गात्रमार्ज्जनं मृजाव्यायामयोर्वर्ज्जनं त्यागः। स्वप्नो दिवानिद्रा स्वप्नादीनां प्रसङ्गः सततमुपसेवा। अन्योऽपीत्यचिन्तादिः। श्लेष्मेति श्लेष्मप्रधानदोषत्रयम्। बहुद्रवो न त्वल्पद्रवः। श्लेष्मा श्लेष्मोल्वण-दोषत्रयम्। सर्व्वेषां प्रमेहाणां त्रिदोषजत्वात्। सुश्रुतेऽप्युक्तं प्रमेहनिदाने। तत्राविलप्रभूतमूत्रलक्षणाः सर्व्व एव प्रमेहाः सर्व्वे एव सर्व्वदोषसमुत्थाः सह पिड़काभिरिति। अत्र सर्व्वे एव प्रमेहा इति वक्ष्यमाणा विंशतिरेव न त्वपरे। बहुबद्धमित्यस्य मेदोमांसाभ्यामन्वयः। मेदो मांसोत्तरधातुः। शरीरजक्लेदो मूत्रादिद्रवः। वसा मांसस्य स्नेहः सर्व्वधातुस्नेहो वा।

तत्रेत्यादि। इह कफ एवाग्रेऽभिधीयते भूरिप्रमेहकर्त्तृत्वात्। हायनको धान्यविशेषः; अति-वेलमिति पुनःपुनः; हरेणुर्वर्त्तुलकलायः; तिलतण्डुलमाषकृतः कृशरः; मृजा उद्वर्त्तनम्; सर्व्वः स निदानविशेष इति, एवम्भूतमेव निदानं प्रमेहकर्त्तुः श्लेष्मणः कारणमित्यर्थः। बहुद्रवः श्लेष्मा दोषविशेष इति बहुद्रव एव कफो मेहजनकः, नाल्पद्रव इति। अबद्धमिति असंहतम्; अत्र तु बहुत्वमघनत्वञ्च यथायोग्यतया बोद्धव्यम्; तेन मेदसि मांसे

त्रयाणामेषां निदानादिविशेषाणां सन्निपाते क्षिप्रं श्लेष्मा प्रकोपमापद्यते प्रागतिभूयस्त्वात्। स प्रकुपितः क्षिप्रमेव शरीरविसृप्तिं लभते। शरीरशैथिल्यात् स विसर्पन् सर्व्वशरीरे मेदसैवादितो मिश्रीभावं गच्छति। मेदसो बहुबद्धत्वात्*

लसीका स्वयं वक्ष्यते—यत् तु मांसत्वगन्तरे उदकं तल्लसीकाशब्दं लभते इति। रस आद्यो धातुः। ओज इत्यर्द्धाञ्जलिमितं श्लेष्मविशेषो न तु रस एवौजस्तस्य पाठवैयर्थ्यात्। इति। दूष्यविशेषाः संख्याता नापरे॥ ४॥

गङ्गाधरः—निदानदोषदूष्यविशेषान् श्लेष्मप्रमेहाणामुक्त्वा विधिरूपां सम्प्राप्तिमाह—त्रयाणामित्यादि। निदानादिविशेषाणाम् उक्तानां हायनकाद्यन्यतमैकद्वित्र्यादिनिदान-विशेष-श्लेष्मोल्वण-त्रिदोषविशेष-बहुबद्धमेदःप्रभृति-समस्तदूष्यविशेषाणां सन्निपाते समुदायत्वेन समवाये सति प्रागतिभूयस्त्वात्। हायनकादिसेवनात् पूर्व्वं कारणान्तरसेवनेन न्यूनवातपित्ताभ्यां सहाधिकमानेन सञ्चितत्वात् श्लेष्मा हायनकाद्यन्यतमैकादिनिदानात् क्षिप्रं प्रकोपमापद्यते। सुश्रुतेऽप्युक्तं—तत्र वातपित्तमेदोभिरन्वितः श्लेष्मा श्लेष्मप्रमेहान् जनयतीति। मेदोऽन्वयं दर्शयति—स इत्यादि। स वातपित्तन्यूनाधिकश्लेष्मा शरीरविसृप्तिं शरीरे विसर्पणं क्षिप्रमेव लभते करोतीत्यर्थः। स किं कुरुते इत्यत आह—शरीरेत्यादि। शरीरशैथिल्यात् बहुबद्धमेदसा जाताद् देहशिथिलीभावात् स न्यूनवातपित्तसहिताधिकश्लेष्मा शरीरे विसर्पन् सन् आदितो मेदसैव मिश्रीभावं गच्छति। ननु कुत आदितो मेदसैव मिश्रीभावमेति इत्याशङ्कायामाह—मेदसेत्यादि। यद्धि बहुलं तदेवादितः संसृज्यते समुपस्थितत्वात्, न त्वबहुलं पश्चात्-

वसामज्जानौ द्वितीयमपि, शेषेषु बहुत्वम्; ओजःसंख्यात इति ओजोरूप एव; वक्ष्यति हि प्रमेहचिकित्सिते—"मज्जा रसौजः पिशितञ्च" इति; दूष्येति बहुबद्धमेदआदीन् प्रत्यवमृषति; किंवा, 'संख्याताः' इति पाठः सुगमः॥ ४॥

चक्रपाणिः—सन्निपाते मेलके। प्रकोपमापद्यते इति प्रमेहकरणायोद्यतो भवतीति; कुतः प्रमेहकरणायोद्यतो भवतीत्याह—प्रागतिभूयस्त्वात्; प्रागित्युत्पादकाल एव; यस्मात् प्रमेहकरणं प्रत्यभिमुखो भूयांश्च कफो भूतः, तत इत्यर्थः; प्रमेहनिदानेन हि कफोऽयं प्रमेहकरणाभिमुखो जनितो भूरिश्च; ततो भूयस्त्वात्, तथा प्रमेहकरणशक्तियोगाच्च तथा प्रकुप्यतीति युक्तम्;

* बहुबद्धत्वादिति वा पाठः।

मेदसश्च गुणैः * समानगुणभूयिष्ठत्वात् स मेदसा मिश्रीभवन् सन्दूषयत्येनद्द विकृतत्वात्। स विकृतो दुष्टेन मेदसोपहतः शरीरक्लेदमांसाभ्यां संसर्गं गच्छति। क्लेदमांसयोरति-प्रमाणाभिवृद्धत्वात् स मांसे मांसप्रदोषात् पूतिमांसपिड़काः शराविकाकच्छपिकाद्याः संजनयत्यप्रकृतिभूतत्वात्, शरीर-

स्थितत्वात्। नन्वेतावता प्रथमत एव प्राप्नोतु मेदः श्लेष्मा कथं मिश्रीभावमेतीत्यत आह—मेदसश्चेत्यादि। गुणसामान्यन्त्वेकत्वकरमित्यत उक्तं मेदसश्च गुणैर्द्रव-स्निग्धत्वादिभिः सह श्लेष्मणो द्रवस्नेहमधुरत्वादिसमानगुणभूयिष्ठत्वम्। ननु मेदः-समानगुणत्वेन मेदसा सह श्लेष्मा मिश्रीभवन् किं कुरुते इत्यत आह—स मेदसेत्यादि। एनत् स्वेन मिश्रीयमाणं मेदः सन्दूषयति। कुत इत्यत आह—विकृतत्वादिति श्लेष्मणो विकृतिमापन्नत्वात्। ननु मिश्रीयमाणमेदो-दूषणेन श्लेष्मणः किं भवतीत्यत आह—स इत्यादि। विकृत इति हायनका-द्यन्यतमैकादिनिदानेन वृद्धः श्लेष्मा दुष्टेन स्वकृतदुष्टिमता मेदसा उपहतः स्नेहद्रवादिगुणवहुलः सन्नपि शुक्रादिगुणेनान्यथाभूतः समुपस्थितत्वात् तुल्य-गुणत्वाच्च शरीरक्लेदमांसाभ्यां संसर्गं मिश्रतां गच्छति। ननु कुतः शरीर-क्लेदमांसाभ्यां संसर्गमेतीत्यत आह—क्लेदेत्यादि। शरीरक्लेदमांसयोरति-प्रमाणाभिवृद्धत्वात् पुरतः समुपस्थितत्वमिति बोध्यम्। ननु मांसक्लेदयोः दुष्ट्या किं कुरुते इत्यत आह—स मांसे इत्यादि। स तथाभूतः श्लेष्मा मांसप्रदोषात् स्वेन मांसदूषणात् मांसे पूतिमांसपिड़काः शराविकाद्याः संजनयति। कुत इत्यत आह—अप्रकृतिभूतत्वादिति हायनकादिना विकृतत्वात्।

विसृप्तिं विसरणम्; मेदसश्च गुणानां गुणैः समानगुणभूयिष्ठत्वादित्यादि। मेदसो गुणानां मधुरस्नेहगौरवादीनां श्लेष्मणो गुणैर्गुरुशीतादिभिर्भूरिसामान्यादित्यर्थः; समानं हि समानैः मिलतीति भावः। विकृतत्वादितिवचनेन, प्रकृतेन श्लेष्मणा सम्बन्धो मेदोदूषको न भवति, किं तर्हि विकृतेनैवेति दर्शयति; अतिप्रमाणवृद्धत्वादिति अतिशयितप्रमाणयोगेन वृद्धत्वात्, न गुणातिमात्रेण वृद्धमिह, किं तर्ह्यवयवोपचयेनेत्यर्थः; पूतिमांसवत्यः पिड़काः पूतिमांसपिड़काः; अप्रकृतिभूतत्वादिति मांसप्रदोषेण नानाविधशराविकादिजनकत्वशक्तियुक्तत्वादितीह बोद्धव्यम्;

* गुणैरित्यत्र गुणानां गुणरिति चक्राभिमतः पाठः।

क्लेदं पुनर्दूषयन् मूत्रत्वेन परिणामयति। मूत्रवहाणाञ्च स्रोतसां वङ्क्षणवस्तिप्रभवाणां मेदःक्लेदोपहितानि गुरूणि मुखान्यासाद्य प्रतिरुध्यन्ते। ततश्च तेषां स्थैर्य्यमसाध्यतां वा जनयति प्रकृतिविकृतिभूतत्वात्। शरीरक्लेदस्तु श्लेष्म-मेदोमिश्रः प्रविशन् मूत्राशयं मूत्रत्वमापद्यमानः श्लैष्मिकैः एभिर्दशभिर्गुणैरुपसृज्यते वैषम्ययुक्तैः। तद् यथा—श्वेतशीत-

ननु शरीरक्लेददूषणेन किं करोतीत्यत आह—शरीरक्लेदमित्यादि। स इत्यनुवर्त्तते। स श्लेष्मा स्वेन मिश्रीयमाणं शरीरक्लेदन्तु दूषयन् मूत्रत्वेन परिणमति मूत्ररूपो भवन् शरीरे तिष्ठति। ततः किं कुरुते इत्यत आह—मूत्रवहाणाञ्चेत्यादि। चकारेण मूत्रत्वेन परिणतः श्लेष्मानुवर्त्तते। वङ्क्षण-वस्तिप्रभवाणां मूत्रवहाणां स्रोतसां गुरूणि मुखानि आसाद्य प्रतिरुध्यते। कुतो गुरूणि भवन्तीत्यत आह—हेतुगर्भविशेषणं मुखानीत्यस्य। मेदःक्लेदोप-हितानीति मेदःक्लेदोपहितत्वाद् गुरूणि। ननु मूत्रवहवस्तिवङ्क्षणप्रभवस्रोतसां गुरुमुखप्रतिरोधेन किं करोतीत्यत आह—ततश्चेत्यादि। स्थैर्य्यं चिरानु-बन्धित्वं साध्यत्वं वाथात् स्वजनितप्रमेहाणां जनयति। कुतः स्थैर्य्यं साध्यत्वं वा जनयतीत्यत आह—प्रकृतीत्यादि। प्रकृतिविकृतिभूतत्वादिति प्रकृत्या हेतुना प्रकृत्यनुरूपेण विकृतिभूतत्वात् विकृत्या विकृतभूतत्वाभावात् दूष्यहर-क्रियासाध्यत्वेन समक्रियत्वाच्च। इति श्लेष्मकर्म्माण्युक्त्वा शरीरक्लेदकर्म्मा-ण्याह—शरीरक्लेदस्त्वित्यादि। मूत्रत्वमापद्यमान इति मूत्ररूपो भवन्, एभिरिति वक्ष्यमाणैः श्वेतादिभिर्दशभिः किं स्वाभाविकैरित्यत आह—

तेन, अप्रकृतभूतत्वादितिवचनं हि विशेषार्थत्वान्न पुनरुक्तम्; आसाद्य प्रतिरुध्यत इति गत्वाव-तिष्ठते; प्रकृतिविकृतिभूतत्वादिति प्रकृतिभूतैर्गुणैः सर्व्वैरेव विकृतत्वात्; सर्व्व एव यस्मात् श्लेष्मणो गुणा विकृतास्तस्मात् प्रकोपप्रकर्षात् स्थिरो भवति, अतिप्रकर्षात्तु असाध्य इत्यर्थः; किंवा प्रकृतिभूतः श्लेष्मा समाने दूष्ये मेदोवसादौ, विकृतिभूतश्चासमाने शोणितादौ, तेन समाना-समानत्वादित्यर्थः; तथाच समानदूष्यप्राप्त्या बलित्वमसमानदूष्यप्राप्त्या विरुद्धोपक्रमत्वं कफस्य भवति; ततश्च स्थैर्य्यमसाध्यतां वा युक्त्येति मन्तव्यम्।

सम्प्रति यथा कफमेहाः कफगुणयोगाद् दश भवन्ति, तथा प्राह—शरीरेत्यादि। वैषम्यमिह वृद्धिकृतमेव वेदितव्यम्; क्षयरूपवैषम्यस्य एवंरूपव्याध्यजनकत्वात्; वैषम्य एव

मूर्त्तपिच्छिलाच्छस्निग्धगुरुमधुरसान्द्रप्रसादगन्धैः *। तत्र येन येन गुणेनैकेनानेकेन वा भूयसा समुपगृह्यते तत्समाख्यं गौणं नामविशेषं प्राप्नोति। ते तु खल्विमे दश प्रमेहा नामविशेषेण भवन्ति। तद् यथा—उदकमेहश्चेक्षुबालिकारसमेहश्च सान्द्रमेहश्च सान्द्रप्रसादमेहश्च शुक्लमेहश्च शुक्रमेहश्च

वैषम्ययुक्तैः। कैरित्यत आह—गुणैः श्वेतशीतमूर्त्तस्निग्धपिच्छिलाच्छगुरुमधुरसान्द्रप्रसादगन्धैरुपसृज्यते समानत्वात्, स्वगुणानां वैषम्ययुक्तैरिति वृद्धैः। ननु कैः श्लैष्मिकैर्गुणैरित्यतस्तान् गुणानाह—तद् यथेत्यादि। सान्द्रप्रसादः सान्द्रत्वेऽपि किञ्चिद्विशदः सान्द्रप्रसादो गन्धोऽत्र विस्रगन्धः। अत्र श्लेष्मणः कर्त्तृत्वेन प्राधान्यात् तद्धर्म्मेणैव नामविशेषः कर्त्तुं युज्यते न त्वप्रधानमेदःक्लेदादिधर्म्मेणेत्यत आह—तत्र येनेत्यादि। समुपगृह्यते श्लेष्ममेदोमिश्रो मूत्राशयप्रविष्टो मूत्रत्वमापन्नः शरीरक्लेदः। स नामविशेषं गौणमेव प्राप्नोति मुख्यनाम हि शरीरक्लेदः। ते त्विति। श्लेष्मा मेदोमिश्रो मूत्राशयप्रविष्टो मूत्रत्वमापन्नः श्लैष्मिकश्वेताद्येकानेकभूयोऽन्यतमगुणोपगृहीतः खल्वेते दश प्रमेहाः नामविशेषेण भवन्ति। तन्नामान्याह—तद् यथेत्यादि। श्वेतशीताच्छगुणैरुपगृहीतत्वेन शरीरक्लेदस्योदकनिभत्वादुदकमेह इति संज्ञा। इक्षुबालिकारसमेहश्चेति शीतपिच्छिलाच्छाभावमधुरगुणैरुपगृहीतत्वेन काण्डेक्षुस्वरसवद् द्रवत्वेन मूत्रस्य इक्षुबालिकारसमेह इति संज्ञा। सुश्रुते इक्षुमेह इति संज्ञा इक्षुरसतुल्यत्वात्। सान्द्रमेहश्चेति सान्द्रगुणेन गृहीतत्वात् सान्द्रमेह इति संज्ञा। सान्द्रप्रसादमेहश्चेति सान्द्राच्छगुणाभ्यां सान्द्रप्रसादमेह इति संज्ञा।

वृद्धवृद्धतरत्वादिना हानिवृद्धी बोद्धव्ये ; तेन श्वेतादिगुणवृद्धा ये शुक्रमेहादय उक्ताः, तेष्वपीतरे श्लेष्मगुणा हानिवृद्धिरूपवैषम्ययुक्ताः सन्तीत्यर्थः ; किंवा वैषम्ये सति क्वचित् द्वयोश्च क्वचित् त्रयाणां क्वचिच्च चतुर्णां गुणानां वृद्धिर्भवतीति दर्शयति ; तेन गुणसंख्योत्कर्षापकर्षाद् हानिवृद्धी ज्ञेये ; न चेह श्वेतादिदशगुणयोगात् यथासंख्यं दश प्रमेहाः, किन्तु व्यस्तसमस्तगुणयोगाच्च, अत एवाह—"येन गुणेन एकैकेनानेकेन वा" इत्यादि। सान्द्रप्रसादशब्देनैक एव गुणो गणनीयः। सान्द्रमेहव्यपदेशस्तु सान्द्रप्रसादगुणैकदेशोद्भूतत्वेन ज्ञेयः ; तत्समाख्यमित्यादौ तत्समाख्यं वा तद्गौणं वा नामविशेषं प्राप्नोतीति योजनीयम् ; तद्गुणस्य समा आख्या यस्य तत्समाख्यं

* गन्धैरित्यत्र मन्दैरिति वा पाठः

शीतमेहश्च सिकतामेहश्च शनैर्मेहश्चालालमेहश्चेति । ते दश प्रमेहाः साध्याः समानगुणमेदःस्थानकत्वात् कफस्य प्राधान्यात् समक्रियत्वाच्च ॥ ५ ॥

तत्र श्लोकाः श्लेष्मप्रमेहविशेषविज्ञानार्था भवन्ति—

अच्छं बहु सितं शीतं निर्गन्धमुदकोपमम् ।
श्लेष्मकोपान्नरो मूत्रमुदमेही प्रमेहति ॥

श्वेतगुणेन शुक्रमेह इति संज्ञा । सुश्रुते तु हृष्टरोमा पिष्टरसतुल्यं पिष्टमेही मेहतीत्युक्तम् । शुक्रमेहश्चेति श्वेतमूत्तत्वाभ्यां शुक्रयोगेण च शुक्रमेह इति संज्ञा । शीतमेहश्चेति शीतमधुराभ्यां शीतमेह इति संज्ञा । श्वेतादिगुणैः शनैर्मेह इति संज्ञा । आलालमेहश्चेति पिच्छिलसान्द्राभ्यामालालमेह इति संज्ञा । सिकतामेहश्चेति श्वेतमूर्त्तत्वाभ्यां सिकतामेह इति संज्ञा । गुणान्तराणान्तु नियमो नास्ति, परन्तु उक्तगुणानामतिरिक्तगुणं मूत्रं दृष्ट्वा तद्गुणयोग उन्नेयः । सुश्रुते तु सान्द्रप्रसादमेहशीतमेहालालमेहान् न पठित्वा सुरामेही सुरातुल्यं विशदं लवणतुल्यं लवणमेही स्तोकं स्तोकं सफेनश्च फेनमेही मेहतीत्युक्तम् । अन्यत्रापि सुरामेही सुरातुल्यमुपर्यच्छमधोघनमित्युक्तं, तत्सर्व्वं मेदोमांसादिदूष्याधिक्येऽमीषामेवोन्नेयम् । न ह्येता दश संज्ञा मेदोमांसादिबाहुल्यादिभिः कृताः परन्तु शरीरक्लेदस्य मूत्रत्वापन्नत्वे श्लेष्मणो दशगुणान्यतमैकादिगुणान्वयेन कृतास्तद्गुणानुरूपाणि लिङ्गानि च वक्ष्यन्ते, न तु मेदोमांसादिदूष्यकृतलक्षणानि इति ॥ ५ ॥

गङ्गाधरः—तानि लक्षणान्याह—तत्र श्लोका इत्यादि । अच्छमित्यादि ।

नाम, यथा—शीतमेहशुक्रमेहसान्द्रमेहेषु । अत्र हि शीतादिगुणाख्ययैव मेहा व्यपदिश्यन्ते; इतरेषु तु उदकमेहादिषु न श्वेतादिगुणसंज्ञातुल्यं नाम, किं तर्हि श्लेष्मण एव गुणयुक्तोदकादितुल्यत्वेन गुणयोगप्रवृत्तत्वात् गौणमुदकमेह इति; अच्छसितशीतादिकफगुणयोगात् गौणमुदकमेह इति नाम भवति; एवमन्यत्राप्यनुसरणीयम्; उदकादयस्त्विह कफगुणमेलकलक्षणार्थाः तत्तत्कफगुणयुक्ता उपात्ताः संज्ञाकरणार्थं विशेषविज्ञानार्था भवन्तीति परस्परभिन्नलक्षणप्रतिपादका इत्यर्थः ॥ ५ ॥

चक्रपाणिः—उदकोपममिति उदकवर्णादितुल्यम् । ननु इक्षुवालिकातुल्ये मेहे काण्डेक्षु-

अत्यर्थमधुरं शीतमीषत् पिच्छिलमाविलम्।
काण्डेक्षुरससङ्काशं श्लेष्मकोपात् प्रमेहति॥
यस्य पर्य्युषितं मूत्रं सान्द्रीभवति भाजने।
पुरुषं कफकोपेन तमाहुः सान्द्रमेहिनम्॥
यस्य संहन्यते मूत्रं किञ्चित् किञ्चित् प्रसीदति।
सान्द्रप्रसादमेहीति तमाहुः श्लेष्मकोपतः॥
शुक्लं पिष्टनिभं मूत्रमभीक्ष्णं यः प्रमेहति।
पुरुषं कफकोपेन तमाहुः शुक्लमेहिनम्॥
शुक्राभं शुक्रमिश्रं वा मुहुर्मेहति यो नरः।
शुक्रमेहिनमाहुस्तं पुरुषं श्लेष्मकोपतः॥
अत्यर्थमधुरं शीतं मूत्रं मेहति यो भृशम्।
शीतमेहिनमाहुस्तं पुरुषं श्लेष्मकोपतः॥
मूर्त्तान् मूत्रगतान् दोषानणून् मेहति यो नरः।
सिकतामेहिनं विद्यात् तं नरं श्लेष्मकोपतः॥
मन्दं मन्दमवेगन्तु कृच्छ्रं यो मूत्रयेच्छनैः।
शनैर्मेहिनमाहुस्तं पुरुषं श्लेष्मकोपतः॥
तन्तुबद्धमिवालालं पिच्छिलं यः प्रमेहति।
आलालमेहिनं विद्यात् तं नरं श्लेष्मकोपतः॥

इत्येते दश प्रमेहाः श्लेष्मकोपनिमित्ता व्याख्याता भवन्ति॥ ६॥

उदमेहीत्युदकमेही। काण्डेक्षु इक्षुवालिका। संहन्यते मूत्रं भाजने घृतमधस्तात् संघातीभवति। किञ्चित् किञ्चित् प्रसीदतीति उपरिष्टादच्छं भवति।

रससङ्काशमिति किमित्युच्यते, इक्षुवालिकाकाण्डेक्ष्वोरर्थान्तरत्वात्; नैवम्, इक्षुवालिकारसस्य तथा काण्डेक्षो रसस्य च एकरूपताप्रतिपादनार्थमुभयोरुपादानम्; किंवा काण्डेक्षुरसतुल्योऽपि तथा इक्षुवालिकारसतुल्यश्चेक्षुवालिकामेहो भवतीत्युभयोपादानाद दर्शयति। संहन्यते स्त्यानी-

उष्णाम्ललवणक्षारकटुकाजीर्णभोजनोपसेविनः तथातितीक्ष्णातपाग्निसन्तापश्रमक्रोधविषमाहारोपसेविनश्च, तथाविधशरीरस्यैव पित्तमाशु प्रकोपमापद्यते। तत् प्रकुपितं तयैवानुपूर्व्या प्रमेहानिमान् षट् क्षिप्रतरमभिनिर्वर्त्तयति। तेषामपि

अन्यत्राप्युक्तं—सुरामेही सुरातुल्यमुपर्य्यच्छमधोघनमिति। अणून् सिकतावत् सूक्ष्मान् मूर्त्तान् मूर्त्तिमतो मूत्रगतान् दोषान् मेहति ॥ ६ ॥

गङ्गाधरः—अथ पित्तमेहान् वक्ति—उष्णाम्लत्यादि। एतेन उष्णाम्लादयो विषमाहारान्ता निदानविशेषा इत्युक्तम्। तथाविधशरीरस्यैवेत्यनेन बहुबद्धमेदोदुष्टमांसशरीरक्लेदशुक्रशोणितवसामज्जलसीकारसौजांसि दूष्यविशेषा इत्युक्तम्। पित्तमित्यनेन पित्तोल्वणास्त्रयो दोषा दोषविशेषा इत्युक्तम्। आशु प्रकोपमापद्यते इत्यनेन त्रयाणामेषां निदानादिविशेषाणां सन्निपाते प्रागतिभूयस्त्वात् वातकफानुगं पित्तमाशु प्रकोपमापद्यते इत्युक्तम्। सुश्रुतेऽप्युक्तं—"वातकफशोणितमेदोभिरन्वितं पित्तं पित्तमेहान् जनयतीति।" तत् वातकफानुपित्तं तयैवानुपूर्व्येति क्षिप्रमेव शरीरसृप्तिं लभते शरीरशैथिल्यात् तत् विसर्पत् शरीरे मेदसैवादितो मिश्रीभावं गच्छति मेदसश्चैव बहुबद्धत्वात्। मेदसश्च गुणानां स्नेहद्रवादीनां समानगुणभूयिष्ठत्वात्। तत् मेदसा मिश्रीभवत् सन्दूषयत्येनं विकृतत्वात्। विकृतन्तु तत् तेन च दुष्टेन मेदसोपहतं शरीरक्लेदमांसाभ्यां संसर्गमेति। क्लेदमांसयोरतिप्रमाणाभिवृद्धत्वात्। तत् तु मांसे मांसप्रदोषात् पूतिमांसपिड़काः शराविकाकच्छपिकाद्याः संजनयत्यप्रकृतिभूतत्वात्। शरीरक्लेदं पुनर्दूषयत् तत् पित्तं मूत्रत्वेन परिणमति। मूत्रवहाणाञ्च वङ्क्षणवस्तिप्रभवाणां स्रोतसां मेदःक्लेदोपहितानि गुरूणि मुखान्यासाद्य प्रतिरुध्यते, ततः प्रमेहानिमान् षट् क्षिप्रतरमभिनिर्व्वर्त्तयति।

भवति। मूर्त्तानिति कठिनान्; दोषानिति जातौ बहुवचनम्; येन, दोषोऽत्रैक एव प्रभूतः कफः। तन्तुबद्धं तन्तुवद्दीर्घमित्यर्थः। लालामिवालालं समन्ताल्लालारूपमित्यर्थः। प्रति प्रति मेहञ्च श्लेष्मकोपत इत्यादिवचनं सुखग्रहणार्थम्। न चेह वाच्यम्—यद्—यथा श्लेष्मगुणा दश प्रमेहान् जनयन्ति, न तथा किमित्यपरानपि गुणसंसर्गविकल्पान्तरेण कुर्व्वन्तीति; यतः, भावस्वभावोऽयम्—यथा दृष्ट एव परं कल्प्यते नादृष्टे च; न हि सत्यपि भूतसंसर्गभूयस्त्वे रसभूयस्त्वं भवतीति व्यवस्थितमेव ॥ ६ ॥

चक्रपाणिः—उष्णेत्यादिना पित्तमेहनिदानम्। षट् क्षिप्रतरमिति श्लेष्ममेहापेक्षया;

तु खलु पित्तगुणविशेषेणैव नामविशेषा भवन्ति। तद् यथा—क्षारमेहश्च कालमेहश्च नीलमेहश्च लोहितमेहश्च माञ्जिष्ठमेहश्च हारिद्रमेहश्चेति। ते षड्भिरेतैः क्षाराम्ललवणकटुविस्रोष्णैः पित्तगुणैरेव पूर्व्ववत् समन्विता भवन्ति। ते सर्व्व एव च याप्याः ज्ञेयाः संसृष्टदोषमेदःस्थानकत्वात् विरुद्धोपक्रमत्वाच्च इति ॥ ७ ॥

तेषामपि त्विति। तुशब्दात् शरीरक्लेदस्तु पित्तमेदोमिश्रः प्रविशन् मूत्राशयं मूत्रत्वमापद्यमानः पैत्तिकैर्गन्धरसरूपस्पर्शः वैषम्ययुक्तैरभिवक्ष्यमाणैः क्षाराम्ललवणकटुकविस्रोष्णैरुपगृह्यते। तत्र येन येन गुणनैकेनानेकेन वा भूयसा वा समुपगृह्यते तेन तेन खलु विकृतेन पित्तगुणविशेषेण तेषां षण्णां पित्तप्रमेहाणां तत्समाख्या नामविशेषा भवन्तीत्यर्थः।

तदाह—तद् यथेत्यादि। क्षारमेहश्चेति वैषम्यमापन्नैः क्षारस्येव पित्तस्य गन्धरसरूपस्पर्शैः क्षारमेह इति संज्ञा। कालमेहश्चेति पित्तस्य मसीतुल्य-वर्णवत् वैषम्यमापन्नवर्णेन उष्णेन च कालमेह इति संज्ञा। नीलमेहश्चेति चाषपक्षिणो नीलवर्णवत् पित्तस्य वैषम्यमापन्नस्य नीलवर्णेनाम्लरसेन च नीलमेह इति संज्ञा। लोहितमेहश्चेति वैषम्यमापन्नैः पित्तस्य विस्रगन्ध-लवणरसरक्तवर्णोष्णस्पर्शैर्लोहितमेह इति संज्ञा। माञ्जिष्ठमेहश्चेति वैषम्य-मापन्नाभ्यामामगन्धमाञ्जिष्ठोदकतुल्यरक्तवर्णाभ्यां माञ्जिष्ठमेह इति संज्ञा। हारिद्रमेहश्चेति कटुरसहारिद्रवर्णाभ्यां पित्तस्य हारिद्रमेह इति संज्ञा। ते षट् पित्तप्रमेहाः कथं क्षारमेहादिसंज्ञां लभन्ते इत्यतआह—ते षड्भिरित्यादि। पित्तगुणैः पित्तस्य गन्धरसरूपस्पर्शविकृतिभूतगुणैः। पूर्व्ववदिति श्लेष्म-प्रमेहोक्तशरीरक्लेदस्तु इत्यादिना प्रदर्शनवत्। ते सर्व्व एवेति षट् ते पित्तोल्वणजाः। कस्मात् याप्या इत्यत आह—संसृष्टेत्यादि। सर्व्वत्रैव प्रमेहेषु त्रिदोषजत्वेऽपि कफस्य प्राधान्ये संसर्गात् पित्तप्रमेहेषु पित्तवत् कफोऽपि

श्लेष्मणो ह्यक्षिप्रकारित्वेन क्षिप्रतरोत्पादो नोक्तः। पूर्व्ववद्युक्ता भवन्तीति श्लेष्मवद् वृद्धिहानि-युक्ता एवेत्यर्थः। संसृष्टदोषमेदःस्थानत्वादिति सन्निकृष्टं दोषस्य पित्तस्य मेदसश्च स्थानम्; यस्मात् पित्तस्य हि आमाशयः स्थानम्, तथा मेदसोऽपि यत् स्थानं वसावहुलम्, तदपि आमाशयैकदेश एव; तेन दोषदूष्ययोः स्थानप्रत्यासत्त्या दूषणं नित्यं प्रत्यासन्नत्वात् दुर्ज्जयमिति

तत्र श्लोकाः पित्तप्रमेहविशेष-विज्ञानार्था भवन्ति ।

गन्धवर्णरसस्पर्शैर्यथा क्षारस्तथाविधम् ।
पित्तकोपान्नरो मूत्रं क्षारमेही प्रमेहति ॥
मसीवर्णमजस्रं यो मूत्रमुष्णं प्रमेहति ।
पित्तस्य परिकोपेण तं विद्यात् कालमेहिनम् ॥
चाषपक्षनिभं मूत्रमम्लं मेहति यो नरः ।
पित्तस्य परिकोपेण तं विद्यान्नीलमेहिनम् ॥
विस्रं लवणमुष्णञ्च रक्तं मेहति यो नरः ।
पित्तस्य परिकोपेण तं विद्याद् रक्तमेहिनम् ॥
मञ्जिष्ठोदकसङ्काशं भृशं विस्रं प्रमेहति ।
पित्तस्य परिकोपात् तं विद्यान्माञ्जिष्ठमेहिनम् ॥
हरिद्रोदकसङ्काशं कटुकं यः प्रमेहति ।
पित्तस्य परिकोपात् तं विद्याद्धारिद्रमेहिणम् ॥

इत्येते षट् प्रमेहाः पित्तप्रकोपनिमित्ता व्याख्याता भवन्ति ॥८॥

प्रधानस्तेन कफेन संसृष्टस्य दोषस्य प्रकरणात् पित्तस्य मेदःस्थानत्वात् तेन मेदःप्रभृतिदूष्यहरणक्रियया पुनश्च चिकित्सायां विरुद्धोपक्रमत्वाच्च। चिकित्सिते वक्ष्यते प्रमेहहेतुः कफकृच्च सर्व्वमिति। यदा पित्तं मेदःस्थानं न गत्वा प्रमेहकरं भवति तदा पित्तजा अपि प्रमेहाः साध्या भवन्तीति बोध्यम् ॥ ७ ॥

गङ्गाधरः—षट् पित्तप्रमेहविज्ञानार्थान् श्लोकानाह—तत्र श्लोका इत्यादि। गन्धेत्यादि। क्षारो भस्मप्रस्रुतोदकम्। सुश्रुतेऽप्युक्तं स्रुतक्षारप्रतिमं क्षारमेही मेहतीति। मसीत्यादि सुगमम्। चाषेत्यादि चाषः पक्षिविशेषः। ननु सुश्रुते नीलमेहोऽन्यथा पठितः सफेनमच्छं नीलं नीलमेही मेहतीति। कालमेहस्तु न पठितः, अम्लमेहश्च पठितः, अम्लरसगन्धमम्लमेही मेहतीति,

भावः ; किंवा संसृष्टदोषं मेदोरूपं स्थानं यस्य स तथा, एष विरुद्धोपक्रमत्वे हेतुः ; तेन यस्मात् पित्तरूपेण दोषेण सम्बद्धं मेदोरूपं स्थानम्, तस्मात् विरुद्धोपक्रमता ; यद्धि पित्तस्य

कषायकटुतिक्तकरुक्षलघुशीतव्यवायव्यायामवमनविरेचनास्थापन-शिरोविरेचनातियोग-सन्धारणानशनाभिघातातपोद्वेग-शोकशोणिताभिषेकजागरणविषमशरीरन्यासान् उपसेवमानस्य तथाविधशरीरस्यैव क्षिप्रं वातः प्रकोपमापद्यते। स प्रकुपितस्तथाविधशरीरे विसर्पन् यदा वसामादाय मूत्र-

विरोधो नाशङ्क्यः। तत्रोक्ताम्लमेहोऽत्र नीलमेहसंज्ञया पठितः। तत्रोक्तनीलमेहस्त्वत्र कालमेहसंज्ञयापठितः। लक्षणातिरेकाल्पताया मेदोमांसादिदूष्यकार्य्यत्वेनोन्नेयम् ॥ ८ ॥

गङ्गाधरः—अथ वातोल्वणप्रमेहान् वक्ति—कषायेत्यादि। कषायादीनामतियोगः। सन्धारणं वेगानाम्। अनशनमुपवासः। उद्वेगः क्रियासु मनस उपस्थितप्रवृत्तिः। शोकोऽभीष्टविरहजं दुःखम्। शोणिताभिषेकः शोणितमोक्षः। जागरणं निशायाम्। विषमशरीरन्यासोऽयथावच्छरीरप्रवृत्तिः। एते कषायादयो निदानविशेषाः। तथाविधशरीरस्यैवेति। कषायादिनिदानसेवनेन बहुबद्धमेदोदुष्टमांसशरीरक्लेदशुक्रशोणितवसामज्जलसीकारसौजांसीति इत्येके, न तु बहुबद्धं मेदो मांसञ्च शरीरक्लेदः शुक्रं शोणितं वसा मज्जा लसीका रसश्चौज इत्येते दूष्यविशेषाः। ज्वरादिषु ह्येषां सर्व्वेषां न दूष्यत्वमतः सर्व्वेष्वेव प्रमेहेषु चैषां दूष्यत्वाविशेषेऽपि ज्वराद्यपेक्षया प्रमेहे दूष्यविशेषत्वम्। वात इति पित्तकफानुगवायुरिति दोषविशेषः। एषां त्रयाणां निदानादीनां सन्निपाते प्रागतिभूयस्त्वात् वातः क्षिप्रं प्रकोपमापद्यते इत्यर्थः।

स प्रकुपित इत्यादि। स वायुः प्रकुपितस्तथाविधशरीरे कषायाद्युपसेवनेन बहुबद्धमेदोमांसादिमति शरीरे विसृप्तिं लभते। बहुबद्धमेदोमांसादित्वेन शरीरस्य शैथिल्यात् तत्र शरीरे विसर्पस्तु स वायुर्मेदसैवादितो मिश्रीभावमृच्छति मेदसश्च बहुबद्धत्वात्, मेदसश्च शैत्यवैशद्यादिगुणानां समानगुणत्वात्। स च मेदसा मिश्रीभवन् सन्दूषयत्येनं विकृतत्वात्। स यदा विकृतो दुष्टेन मेदसोपहतः शरीरक्लेदमांसाभ्यां संसर्गमेति क्लेदमांस-

मधुरशीतादि पथ्यम्, तदपथ्यं मेदसः, यच्च मेदसः कटुकादि पथ्यम्, पित्तस्य तदपथ्यम्; चकारश्चाचिन्त्यप्रभावाच्चाद् याप्यत्वमिति दर्शयति ॥ ७।८ ॥

वहाणि स्रोतांसि प्रतिपद्यते, तदा वसामेहमभिनिर्व्वर्त्तयति। यदा पुनर्मज्जानं मूत्रस्थानवस्तावाकर्षति, तदा मज्जमेहमभिनिर्व्वर्त्तयति। यदा तु लसीकां मूत्राशयेऽभिवहन् मूत्रमनुबन्धं श्च्योतयति लसीकातिबहुत्वात् विक्षेपणाच्च वायोः खल्वस्यातिमूत्रप्रवृत्तिसङ्गं करोति, तदा स मत्त इव गजः क्षरत्यजस्रं

प्रमाणातिवृद्धत्वात्. स मांसप्रदोषान्मांसे शराविकाद्याः पिड़काः संजनयति। यदा तु तथाविधशरीरे विसर्पंस्तु स वायुर्वसां सर्व्वशरीरस्नेहमादाय दूषयन् प्रविश्य मूत्राशयं मूत्रत्वेन परिणतः सन् मूत्रवहाणि स्रोतांसि वङ्क्षणवस्तिप्रभवाणि मेदःक्लेदवसादुपहितानि स्रोतांसि प्रतिपद्यते, तदा वसामेहमभिनिर्व्वर्त्तयति वसामेहरूपेण भवति। एवं सर्व्वरोगाभिनिर्वृत्तौ तत्तद्रूपेण स स दोषो भवतीति व्याख्येयम्। यदा पुनरित्यादि। यदा पुनर्मज्जानं मूत्रस्थाने वस्तावाकर्षति चलत्वात् तदा मज्जमेहमभिनिर्व्वर्त्तयति। यदा त्वित्यादि। यदा तु लसीकां मांसत्वगन्तरस्थमुदकं मूत्राशये वस्तौ अभिवहन् अभिनयन् मूत्रमनुबन्धं सावशेषं मूत्रं श्च्योतयति। मूत्रानुबन्धे हेतुमाह—लसीकातिबहुत्वात्। लसीका हि पिच्छिला. पैच्छिल्यात् तु न निःशेषेण मूत्रं श्च्युतं भवति। ननु पैच्छिल्याद्बद्धमेव मूत्रं भवतु न किञ्चिदपि श्च्योततु इत्यत आह—विक्षेपणाच्च वायोः। वायोश्चलत्वेन विक्षेपणान्न मूत्रं पैच्छिल्यात् सर्व्वशोबद्धं न भवति किन्तु सानुबन्धं श्च्योतति। चकारात् लसीकाख्योदकस्यातिबहुत्वात् वायोर्विक्षेपणाच्च खल्वस्य पुंसो मूत्रातिप्रवृत्तिसङ्गं मूत्रस्यातिप्रवृत्तिश्च सङ्गश्च तयोः समाहारः तत् तथा समाहारकरणात् निःशेषेण न मूत्रातिप्रवृत्तिं करोति, किन्तु सङ्गपूर्व्वकमूत्रातिप्रवृत्तिं करोति, सावशेषं मूत्रातिक्षरणं करोतीत्यर्थः। स कीदृशः क्षरयतीत्यत आह—तदा मत्त इव गज

चक्रपाणिः—रूक्षेत्यादि वातमेहस्य निदानम्। मूत्रवस्तावाकर्षति मूत्रवस्तौ स्थित आकर्षति, अर्थात् मूत्रवस्तिमेव नयति; लसीका मांसत्वगन्तरे उदकभागः, वक्ष्यति हि शारीरे—"यन्मांसत्वगन्तरे उदकं, तल्लसीकाशब्दं लभते" इत्यादि; अनुबन्धमित्यविच्छेदेन। श्च्योतयतीति पातयति। अथ वायोर्विक्षेपकारित्वेन प्रवर्त्तकत्वेन कथं मूत्रप्रवृत्तेरन्तरा सङ्गः? यतः, मूत्राशयं रौक्ष्यात् छेदयित्वा रक्षञ्च कृत्वा नयत्योजः, स्वमहिम्ना च वायुरोजः कषायं करोति;

मूत्रमवेगं, तं हस्तिमेहिनमित्याचक्षते। ओजः पुनर्मधुरस्वभावं तद्रौक्ष्याद् वायुश्च कषायत्वेनाभिसंसृज्य मूत्राशयेऽभिवहन् मधुमेहं करोति। इमांश्चतुरः प्रमेहान् वातजानसाध्यानाचक्षते भिषजो महात्ययिकत्वात् विरुद्धोपक्रमत्वाच्चेति। तेषामपि

इत्यादि। अजस्रमित्यनेन निःशेषाभावः ख्यापितः। अवेगमित्यनेन मूत्रातिप्रवृत्तिः ख्यापिता। हस्तिमेहिनमिति हस्ती मत्त इवाजस्रमवेगश्च मूत्रस्य क्षरणात् हस्तिमेह इति संज्ञा।

ओज इत्यादि। यदा तु स वायुः ओजः पुनर्मधुरस्वभावं तदोजो रौक्ष्यात् कषायत्वेन चाभिसंसृज्य संसर्गं कृत्वा मूत्राशये वस्तौ सौक्ष्म्याच्चलत्वाच्च अभिवहन् नयन् सन् मिश्रीभवन् मूत्रत्वेन परिणमन् कषायं मधुरं पाण्डुरूक्षञ्च मूत्रं श्च्योतयति तदा तं मधुमेहं करोति, इति मधुमेह इत्याचक्षते।

इमानिति वसामेहमज्जमेहहस्तिमेहमधुमेहान्। असाध्यत्वे हेतुमाह—महात्ययिकत्वादिति। वसामज्जलसीकौजसां गम्भीरधातूनाम् अपकर्षणोत्पत्त्याशु मारकत्वात्। हेत्वन्तरञ्चाह—विरुद्धेत्यादि। सर्व्वत्रैव प्रमेहेषु कफप्राधान्येन तेन कफेन संसृष्टत्वात्तस्य मेदःस्थानत्वात् बहुत्वद्धमेदोमांसादिदूष्योपक्रमैः रूक्षोष्णादिभिः सह वातस्य स्नेहोष्णाद्युपक्रमाणां विरुद्धत्वात्। अत्र चकारः उक्तानुक्तसमुच्चये व्यवस्थायाञ्च। तेनोक्तसमुच्चयोऽयं दर्शितो महात्ययिकत्वेन सहैव विरुद्धोपक्रमत्वस्य। अनुक्तसमुच्चयस्तु संसृष्टदोषमेदःस्थानत्वादित्यनेन विरुद्धोपक्रमत्वस्य बोध्यस्तत्र च व्यवस्थापीयम्। यदा तु कषायादिभिर्निदानैः प्रकुपितो वायुर्बहुवद्धमेदोमांसादिमति शरीरे सर्पन् वसाद्याकर्षणेन वसामेहादिकान् जनयति, तदा ते वसामेहादयो महात्ययिकत्वात् संसृष्टदोषमेदःस्थानत्वात् विरुद्धोपक्रमत्वाच्च असाध्याः प्रत्याख्येया भवन्ति। यदा तु वसादीन् नाकृष्य शरीरक्लेदादिधातूनाकृष्य यान् मेहान् वातजान् जनयति ते पुनर्याप्याः संसृष्टदोषमेदःस्थानत्वाद्विरुद्धोपक्रमत्वाच्च। गम्भीरधातुवसाद्याकर्षणाभावात् तु न प्रत्याख्येयाः। वक्ष्यते च प्रमेहचिकित्सिते। या वातमेहान् प्रति पूर्व्व-

वातो हि वृद्धः प्रभावात् कषायरसं करोति। महात्ययिकत्वादिति मज्जप्रभृतिसारभूतधातुक्षयकरत्वात्; विरुद्धोपक्रमत्वन्तु वायोः स्निग्धादि पथ्यम्, तन्मेदसोऽपथ्यमित्यादि ज्ञेयम्॥ ९॥

वातगुणविशेषेणैव नामविशेषा भवन्ति। तद् यथा—वसामेहश्च मज्जमेहश्च हस्तिमेहश्च मधुमेहश्चेति ॥ ९ ॥

तत्र श्लोका वातप्रमेहविशेषविज्ञानार्था भवन्ति।

वसामिश्रं वसाभञ्च मुहुर्मेहति यो नरः।
वसामेहिनमाहुस्तमसाध्यं वातकोपतः ॥
मज्जानं सह मूत्रेण मूत्रं मेहति यो नरः।
मज्जमेहिनमाहुस्तमसाध्यं वातकोपतः ॥
हस्ती मत्त इवाजस्रं मूत्रं क्षरति यो नरः।
हस्तिमेहिनमाहुस्तमसाध्यं वातकोपतः ॥
कषायमधुरं पाण्डु रुक्षं मेहति यो नरः।
वातकोपादसाध्यं तं प्रतीयान्मधुमेहिनम् ॥

मुक्ता वातोल्वणानां विहिता क्रिया सा। वायुर्हि मेहेष्वतिकर्षितानां कुप्यत्यसाध्यान् प्रति नास्ति चिन्ता ॥ इति। सुश्रुते च—कफपित्तवसामज्जमेदोभिरन्वितो वायुर्वातजान् प्रमेहान् जनयति इत्युक्तम्। एषां वसामेहादिसंज्ञायां हेतुमाह—तेषामित्यादि। वसामेहश्चेति कषायमधुरपाण्डुरुक्षगुणविशेषेण वसामेह इति संज्ञा, कषायमधुराभ्यां संसृष्टेऽपि वसाभायाः प्राधान्यात्। मज्जमेहश्चेति वायोर्मधुरगुणसंसर्गेऽपि सर्पिर्वर्णमज्जप्राधान्यात् मज्जमेह इति संज्ञा। सुश्रुते तु मज्जमेहस्य सर्पिर्मेह इति संज्ञा कृता। सर्पिःप्रकाशं सर्पिर्मेही मेहतीत्युक्तम्। हस्तिमेहश्चेति वायोर्नीरसरूपत्वेऽपि विकृतीभूतरौक्ष्यादिगुणपरिणामे कषायादिगुणसंसर्गेऽपि मत्तहस्तिवदजस्रावेगाभ्यां मूत्रक्षरणप्राधान्यात् हस्तिमेहसंज्ञा। मधुमेहश्चेति मधुरकषायपाण्डुरौक्ष्यगुणवत्त्वेऽपि ओजःप्राधान्येनाकर्षात् तद्गुणेन मधुररसेन मधुमेह इति संज्ञा ॥ ९ ॥

गङ्गाधरः—एषां चतुर्णां वातप्रमेहाणां विशेषज्ञानार्थान् श्लोकानाह—तत्रेत्यादि। सुगमम्। कषायमित्यादि। यद्यपि वायोर्नीरसत्वं मधुरत्वमेव तु ओजसो न तु कषायत्वं तथापि वायो रौक्ष्यात् ओजसो मधुरस्वभावस्य कषायत्वेन परिणमयितृत्वात् कषायमधुरत्वं मूत्रस्य रौक्ष्यं पाण्डुत्वञ्च बोध्यम्।

इत्येते चत्वारः प्रमेहा वातप्रकोपनिमित्ता व्याख्याता भवन्ति। एवं त्रिदोषप्रकोपनिमित्ता विंशतिः प्रमेहा व्याख्याता भवन्ति ॥ १० ॥

त्रयस्तु खलु दोषाः प्रकुपिताः प्रमेहानभिनिर्व्वर्त्तयिष्यन्त इमानि पूर्व्वरूपाणि दर्शयन्ति ; तद् यथा—जटिलीभावं केशेषु, माधुर्य्यमास्यस्य, करपादयोः सुप्ततादाहौ, मुखतालुकण्ठशोषं, पिपासाम्, आलस्यं, मलञ्च काये, कायच्छिद्रेषु चोपदेहं, परिदाहं सुप्तताञ्चाङ्गेषु, षट्पदपिपीलिकाभिश्च शरीरमूत्राभिसरणं, मूत्रे च मूत्रदोषान् विस्रञ्च शरीरगन्धं, निद्रां तन्द्राञ्च सर्व्वकालमिति ॥ ११ ॥

उपद्रवास्तु खलु प्रमेहिणां तृष्णाज्वरातिसारदाहदौर्ब्बल्यारोचकाविपाकाः, पूतिमांसपिड़कालजीविद्रध्यादयश्च तत्प्रसङ्गाद् भवन्ति ॥ १२ ॥

अस्य मधुमेहस्य सुश्रुते क्षौद्रमेह इति संज्ञा कृता। सर्व्वेषामेव प्रमेहाणां कालेनाप्रतीकारात् मधुररसत्वमापन्नत्वे या मधुमेहसंज्ञा सा नेयमिति। एवमित्यादि सुगमम् ॥ १० ॥

गङ्गाधरः—तद् यथेत्यादि। जटिलीभावः केशेषु। करपादयोः सुप्ततादाहौ, इति विशेषेण बोध्यौ। परिदाहं सुप्तताञ्चाङ्गेष्वितिवचनेन करपादयोरपि सुप्ततादाहलाभात्। षट्पदेति मक्षिका, शरीरे मूत्रे च मक्षिकापिपीलिकानाम् अभिसरणमित्यर्थः। मूत्रे मूत्रदोषान् कफादिसंसर्गजमाधुर्य्यादिदोषान्। विस्रमामं शरीरगन्धं सर्व्वकालं निद्रां वा तन्द्रां वा दर्शयन्तीत्यन्वयः ॥ ११ ॥

गङ्गाधरः—प्रमेहाणां विंशतेरुपद्रवान् सामान्यत आह—उपद्रवास्त्वित्यादि। पूतिमांसपिड़काः कियन्तःशिरसीये माधुमेहिकी या या उक्ता सैव सैवात्र बोध्या। तत्प्रसङ्गात् प्रमेहोपेक्षया चिरावस्थनात्। सुश्रुते श्लैष्मिकादि-

चक्रपाणिः—त्रयस्त्विति त्रयोऽपीत्यर्थः ; तेन सर्व्वप्रमेहाणामप्येतदेव समानं पूर्व्वरूपमिति दर्शयति। तत्प्रसङ्गात् भवन्तीति प्रमेहाद्यनुबन्धाद भवन्तीत्यर्थः। यादृशे पुरुषे प्रमेहो

तत्र साध्यान् प्रमेहान् संशोधनोपशमनैर्यथाहमुपपादयन् चिकित्सेदिति ॥ १३ ॥

भवन्ति चात्र ।

गृध्नुमभ्यवहार्य्येषु स्नानचंक्रमणद्विषम् ।
प्रमेहः क्षिप्रमभ्येति नीड़द्रुममिवाण्डजः ॥
मन्दोत्साहमतिस्थूलमतिस्निग्धं महाशनम् ।
मृत्युः प्रमेहरूपेण क्षिप्रमादाय गच्छति ॥
यस्त्वाहारं शरीरस्य धातुसाम्यकरं नरः ।
सेवते विविधाश्चान्याश्चेष्टाः स सुखमश्नुते ॥ १४ ॥

तत्र श्लोकाः ।

हेतुर्व्याधिविशेषाणां प्रमेहाणाञ्च कारणम् ।
दोषधातुसमायोगो रूपं त्रिविधमेव च ॥

प्रमेहीयत्वभेदेन उपद्रवा उक्तास्तद् यथा—मक्षिकोपसर्पणमालस्यं मांसोपचयः प्रतिश्यायः शैथिल्यारोचकाविपाकाः कफप्रसेकच्छर्द्दिनिद्राकासश्वासाश्चेति श्लेष्मजानामुपद्रवाः। वृषणयोरवदरणं वस्तिभेदो मेढ्रतोदो हृदि शूलमम्लीका-ज्वरातिसारारोचका वमथुः परिधूमायनं दाहो मूर्च्छा पिपासा निद्रानाशः पाण्डुरोगः पीतविण्मूत्रनेत्रत्वञ्चेति पैत्तिकानाम्। हृद्ग्रहो लौल्यमनिद्रा स्तम्भः कम्पः शूलं बद्धपुरीषत्वञ्चेति वातजानामिति ॥ १२ ॥

गङ्गाधरः—उपशयज्ञानार्थं चिकित्सासूत्राण्याह—तत्रेत्यादि ॥ १३ ॥

गङ्गाधरः—अथ संग्रहेण प्रमेहकारणमाह—भवन्तीत्यादि। गृध्नुं लोभवन्तम् अण्डजः पक्षी। मन्दोत्साहादीन्यपि प्रमेहस्यासाध्यत्वेन भावित्वे कारणानि न तूत्पन्ने प्रमेहे मन्दोत्साहादीनि असाध्यत्वलिङ्गानि। सर्व्वत्र व्याध्यनुत्पादेऽव्यभिचारिकारणान्याह—यस्त्वित्यादि। सुगमम् ॥ १४ ॥

गङ्गाधरः—अध्यायार्थमुपसंहरति—तत्र श्लोका इत्यादि। व्याधिविशेषाणां

भवति प्रायः, तमाह—गृध्नुमित्यादि।—गृध्नुं लुब्धम्; नीड़द्रुमः पक्षिणां वासवृक्षः; मृत्युः प्रमेहरूपेणेति मन्दोत्साहादियुक्ते प्रमेहो जातोऽसाध्यो भवतीति दर्शयति। त्रिविधाश्चान्याश्चेष्टा इति धातुसाम्यकरा इत्यर्थः ॥ १०—१४ ॥

दश श्लेष्मकृता यस्मात् प्रमेहाः षट् च पित्तजाः।
यथा च वायुश्चतुरः प्रमेहान् कुरुते बली॥
साध्यासाध्यविशेषाश्च पूर्व्वरूपाण्युपद्रवाः।
प्रमेहाणां निदानेऽस्मिन् क्रियासूत्रञ्च भाषितम्॥ १५॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते निदानस्थाने
प्रमेहनिदानं नाम चतुर्थोऽध्यायः॥ ४॥

हेतुर्निदानदोषदूष्यविशेषेभ्यो विकाराणां विघातभावाभावभावप्रतिविशेषाणां हेतुर्यदा ह्यते इत्यादिना। तत्रेमे इत्यादिना प्रमेहाणां कारणम्। स प्रकुपित इत्यादिना दोषधातुसमायोगः सम्प्राप्तिर्विधिरूपा। तत्र येन येनेत्यादिना दश श्लेष्मकृता प्रमेहा यस्माद्धेतोर्भवन्ति तत्कारणम्। तत्र श्लोका इत्यादिना प्रमेहाणां दशानां विविधरूपम्। साध्यत्वञ्च कफप्रमेहाणां स्थैर्य्यमित्यादिना। ततस्तु पित्तमेहानाम् उष्णाम्लेत्यादिकारणम्। तत् प्रकुपितमित्यादिना दोषधातुसमायोगः। तेषामित्यादिना यस्मात् षट् पित्तजाः प्रमेहास्तत्कारणम्। ते सर्व्व एवेत्यादिना याप्यासाध्यत्वम्। तत्र श्लोका इत्यादिना षण्णां पित्तप्रमेहाणां विविधं रूपम्। ततः कषायेत्यादिना वातप्रमेहाणां कारणम्। स प्रकुपित इत्यादिना वातप्रमेहाणां दोषधातुसमायोगः। इमांश्चेत्यादिना वातप्रमेहाणां साध्ययाप्यत्ववचनम्। तेषामित्यादिना यथा वायुश्चतुरो मेहान् कुरुते तत्प्रकरणम्। तत्र श्लोका इत्यादिना वातप्रमेहाणां विविधं रूपम्। त्रयस्त्वित्यादिना सर्व्वप्रमेहाणां पूर्व्वरूपाणि। उपद्रवास्त्वित्यादिना सर्व्वे प्रमेहाणामुपद्रवास्तत्र साध्यानित्यादिना क्रियासूत्रञ्च। इति सर्व्वं प्रमेहाणां निदानेऽस्मिन्नध्याये भाषितमात्रेयेणेति शेषः॥ १५॥

अध्यायं समापयति—अग्नीत्यादि। स्पष्टम्॥

इति श्रीगङ्गाधरकविरत्नकविराजविरचिते चरकजल्पकल्पतरौ निदानस्थानजल्पे द्वितीयस्कन्धे प्रमेहनिदानाध्यायजल्पश्चतुर्थी शाखा॥ ४॥

चक्रपाणिः—संग्रहे व्याधिविशेषाणामिति "इह खलु" इत्यादि ग्रन्थं गृह्णाति, साध्यासाध्यविशेषा इत्यत्रासाध्यविशेषत्वेन पित्तजानां याप्यानां ग्रहणम्॥ १५॥

इति चरकचतुरानन-श्रीमच्चक्रपाणिदत्तविरचितायाम् आयुर्व्वेददीपिकायां निदानस्थानव्याख्यायां प्रमेहनिदानं नाम चतुर्थोऽध्यायः॥ ४॥

## पञ्चमोऽध्यायः ।

**अथातः कुष्ठनिदानं व्याख्यास्यामः, इतिह स्माह भगवानात्रेयः ॥ १ ॥**

सप्त द्रव्याणि कुष्ठानां प्रकृतिविकृतिमापन्नानि* भवन्ति। तद् यथा—त्रयो दोषा वातपित्तश्लेष्माणः प्रकोपणविकृताः, दूष्याश्च शरीरधातवस्त्वङ्मांसशोणितलसीकाश्चतुर्द्धा दोषोप-

गङ्गाधरः—अथाव्यभिचरितैकैकदोषत्रिदोषव्याधीनुक्त्वा त्रैदोषिकत्वप्रसङ्ग-संगत्या प्रमेहनिदानानन्तरं कुष्ठनिदानमाह—अथात इत्यादि ॥ १ ॥

गङ्गाधरः—सप्त द्रव्याणीति समवायिकारणानि, कुष्ठानां सर्व्वेषामेव सप्तैव प्रकृतिविकृतिमापन्नानि प्रकृत्या स्वभावेन सप्तैव न तु व्यस्तानि विकृति-मापन्नानि। तद् यथेति। त्रय इत्यादि। प्रकोपणविकृताः कुष्ठकरत्वेन वक्ष्यमाण-स्वस्वनिदानात् वृद्धिमापन्ना न तु क्षयमापन्नाः। दुष्टाः खलु त्वङ्मांसादयः दोषोपघातेन दोषैरुपघातेन विकृताः। एवं सर्व्वेषु दूष्याणां विकृतिः स्वकारणेन वृद्धानां क्षीणानां वा यथास्वनिदानकुपितदोषोपघातेन बोध्या, अन्यथा प्रति-

चक्रपाणिः—प्रमेहमनु प्रागुत्पत्तौ कुष्ठनिदानमुच्यते; वचनं हि—"हविःप्राशात्प्रमेहकुष्ठयोः" इति। सप्त द्रव्याणीति—त्रयो दोषाश्चत्वारि दूष्याणि; प्रकृतिरिति कारणमित्यर्थः; सप्त-द्रव्याणां विशेषणं—'प्रकृतिमापन्नानि' इति; किंवा प्रकृतिविकृतिमापन्नानीति पाठः; तदा प्रकृत्या कुष्ठकारणेन विकृतिमापन्नानीत्यर्थः; एतेन च यदा कुष्ठजनकहेतुव्यतिरेकेण वातादीनां विकृतिर्भवति, न तदा कुष्ठोत्पादो भवति, किन्तु विसर्पोत्पाद इति दर्शयति; विसर्पे हि "रक्तं लसीका त्वङ्मांसं दूष्यं दोषास्त्रयो मलाः। सर्व्व एव प्रकुप्यन्ति वीसर्पाणां समुद्भवे।" इति वचनादेते एव सप्त विकृताः कारणमित्युक्तम्; यद्यपि कुष्ठविसर्पयोर्दोषदूष्यकृतं साम्यमस्ति, तथापि विसर्पणशीलेन रक्तप्रधानदोषेण विसर्पजन्म, अन्यथा तु कुष्ठजन्मेति व्याधिभेदोत्पत्तिः; अत एव "विविधं सर्पति येन विसर्पस्तेन संज्ञितः"; तथा विशिष्टशोणितवशादेव विसर्पे प्रबला वेदना भवति, तथा रक्तचिकित्सायाः प्राधान्येनोपदेशाच्च रक्तप्राधान्यं विसर्पे ज्ञेयम्; वचनं हि—"एकतस्तानि सर्व्वाणि रक्तमोक्षणमेकतः" इति; अन्ये तु ब्रुवते—विसर्पे नावश्यं दोषदूष्य-सप्तकदृष्टिः, किन्तु सप्तानां तत्र दृष्टिर्योग्यतया दृश्यते; कुष्ठे तु सर्व्वत्र प्रतिनियमेन दृष्टिरिति,

* प्रकृतिमापन्नानि इति पाठान्तरम्।

घातविकृताः। इत्येतत् * सप्तधातुकमेवं गतमाजननं कुष्ठानाम्। अतः प्रभवाद् † भिनिर्व्वर्त्तमानानि केवलं शरीरमुपतपन्ति ॥ २ ॥

न च किञ्चिदस्ति कुष्ठमेकदोषप्रकोपनिमित्तम्, अस्ति तु

रोगं निदानवचनवैयर्थ्यापत्तिश्च। तेन दूष्याश्चेति प्रकोपणविकृता दोषोपघातविकृताश्च। इत्येतत् वातपित्तकफत्वङ्मांसशोणितलसीका इति सप्तधातुककुष्ठरोगे प्रकोपणविकृता दोषास्तत्स्वभावदोषोपघातविकृता न च दूष्या इति सप्तकं कुष्ठानामाजननं प्रकृतिभूतकारणम्। तन्मयानि हि कुष्ठानि न च समुदायत्वेन तेभ्यो विशिष्टान्यपि न तदतिरिक्तानि। अतः सप्तधातुकात् प्रभवात् प्रभवनकारणात्। अभिनिर्व्वर्त्तमानानि कुष्ठानि केवलमखिलं शरीरम् ॥ २ ॥

गङ्गाधरः—ननु किं वाताद्यन्यतमात् प्रभवात् उत मिलितात् सप्तकादित्याशङ्कां निरसितुमाह—न च किञ्चिदिति। किमपि कुष्ठम् एकदोषप्रकोपो निमित्तं यस्य

यथा कुष्ठारम्भका दोषाः कुप्यन्ति, तथा च दूष्याणि; तदाह—तद् यथेत्यादि। प्रकोपणविकृता इति कुष्ठनिदानप्रकोपणविकृताः, अन्यथा प्रकोपणवचनमनर्थकं स्यात्, विना प्रकोपणं व्याधिजनकविकृत्यभावात्। दोषोपघात इत्यनेन दोषोपघातादेव धातूनां विकृतिर्भवतीति दर्शयति, न दोषमन्तरा धातवो दुष्यन्तीत्यर्थः। किंवा कुष्ठकारणानां क्षयवृद्धिमात्ररूपधातूनां विकृतिं निराकृत्य दोषाभिसम्बन्धरूपां दुष्टिं ग्राहयन्ति; सप्तधातुकं सप्तधातुमेलकः; एवंगतमित्युक्तक्रमेण विकृतिं गतम्; आजननं कारणम्; अतः प्रभावाणीत्येतत्कारणभूतानि; अभिनिर्व्वर्त्तमानानीति अतिप्रसर्पमाणानि; केवलं कृत्स्नं दूष्यचतुष्टयातिरिक्तमपीत्यर्थः; एतेन प्रथमोत्पत्तौ कुष्ठे तु चतुर्द्धातुदुष्टिनियमः, उत्पन्नस्य अस्थिमज्जादिदूषणमपि भवतीति दर्शयति; तत्र सुश्रुते कुष्ठस्य प्रथमं त्वगाश्रयस्य पश्चादुत्तरोत्तरधातूनामनुगमनमुक्तम्—"एवं कुष्ठं समुत्पन्नं त्वचि कालप्रकर्षतः। क्रमेण धातून् व्याप्नोति" इत्यादिना ग्रन्थेन; तदिहापि अविरुद्धमेव। येन सर्व्वकुष्ठेषु प्रथमं त्वच्यमस्य वैकृतं भवति विशेषेण, पश्चाद् वैशेषिकी दुष्टिः कालप्रकर्षाद्रक्तादिषु भवति; चतुर्द्धातुदुष्टिश्चेह कुष्ठोत्पादे सामान्यदुष्ट्यभिप्रायेणोक्ता, वैशेषिके तु दुष्टिस्तेषां क्रमेणैव भवति; वैशेषिकदुष्टिश्चेह "शरीरमुपतपन्ति" इति वचनाद् व्याख्येया; अत एव सुश्रुते वैशेषिकदुष्ट्यभिप्रायेणैव—"कण्डूर्विपूयकश्चैव कुष्ठे शोणितसंश्रये" इत्यादिना विशिष्टलक्षणमुक्तम्; इह तु या सामान्येन चतुर्द्धातुदुष्टिरुक्ता, न सा तल्लक्षणयुक्ता, किन्तु कुष्ठोत्पादमात्रज्ञेया; तेन न विरोधः ॥ १।२ ॥

चक्रपाणिः—सम्प्रति त्रिदोषजन्यत्वेऽपि सर्व्वकुष्ठानां यथा वातिकादिव्यपदेशो भवति, तदाह—न च किञ्चिदित्यादि। समानप्रकृतीनामिति अवान्तरविकल्परहिततुल्यवातादिसप्त-

* इतः परं 'सप्तधातूनाम्' इत्यधिकः पाठो दृश्यते। † प्रभवादित्यत्र प्रभावाणीति पाठः।

खलु समानप्रकृतीनामपि कुष्ठानां दोषांशांशविकल्पानुबन्धस्थानविभागेन वेदनावर्णसंस्थानप्रभावनामचिकित्सितविशेषः ॥ ३ ॥

स सप्तविधोऽष्टादशविधोऽपरिसंख्येयविधो वा भवति।

तत् तथा। तेनैकदूष्यनिमित्तमपि नेति ख्यापितं, न वा द्विदोषदूष्यनिमित्तम् इति च। ननु मिलितसप्तधातुकत्वे कथं सप्तधा प्रसरो भवतीत्यत आह—अस्ति त्वित्यादि। समानप्रकृतीनां वातपित्तकफत्वङ्मांसरक्तलसीकेति-सप्तधातुप्रकृतिकत्वेऽपि चास्ति कुष्ठानां तत्तद्वातादिदोषाणामेकाद्युत्वणोऽंशांश-विकल्प इति एकद्वित्र्याद्यंशविकल्पेन विभागस्तथा दोषाणामनुबन्धेन स्थानेन त्वङ्मांसादिरूपेण च विभागस्तेन वेदनाविशेषो यातनाविशेषो वर्णविशेषश्च। संस्थानविशेष इति मण्डलाद्याकारभेदः। प्रभावविशेष इति अचिन्त्यक्रिया-विशेषः। नामविशेष इति कापालादिनामभेदः। चिकित्सितविशेषः क्रिया-विशेषः। तस्मात् नामविशेषादेव सम्पद्यते। इति विशेषशब्दस्य वेदनादि-प्रत्येकेनान्वयाद्व्याख्येयं, तन्न, परन्तु वेदनादिभिर्विशेषः प्रभेद इत्यर्थः ॥ ३ ॥

गङ्गाधरः—ननु वेदनावर्णसंस्थानप्रभावनामचिकित्सितैः समानप्रकृतीनां कुष्ठानां कतिविधो विशेष इत्यत आह—स इत्यादि। स वेदनादिभिर्विशेषः। ननु दोषांशांशविकल्पनैः किं कुष्ठानां साध्यत्वादयो विकल्प्यन्ते, किमथ

कारणानाम्, अवान्तरभेदाभावे हि कारणानां कार्य्यस्याप्यनेकरूपत्वमेव स्यात्; दोषांशांश-विकल्पस्य तथा स्थानस्य च विभागेन च वेदनाविशेषः कुष्ठे भवतीति वाक्यार्थः; दोषाणाम् अंशमंशं प्रति विकल्पोऽंशांशविकल्पः; कश्चिद्वायुः स्वस्य रुक्षांशेन प्रकुपितो भवति कश्चित् शैत्यांशेनेत्यादि; तथा दोषदूष्यरूपस्थानविभागेन च वेदनाविशेषो भवति; वचनं हि—"तत्र रसादिस्थानेषु प्रकुपितानां दोषाणां यस्मिन् यस्मिन् स्थाने ये ये व्याधयो सम्भवन्ति" इत्यादि; स्थानञ्च यद्यपि चतुर्व्विधदूष्यरूपनियतम्, तथाप्येष दोषस्यैव दूष्ये व्यासङ्गादिकृतः स्थानविभागो ज्ञेयः। तत्र वेदनाविशेषः—"कापालं तोदबहुलम्" इत्यादि। वर्णविशेषः—"काकणन्तिकावर्णम्" इत्यादि। संस्थानविशेषः—"ऋष्यजिह्वसंस्थानम्" इत्यादि; प्रभाव-विशेषः—"साध्यताऽसाध्यतादिः। नामविशेषः—"कापालः" इत्यादि; यतश्च समानेऽपि कारणे दोषांशांशविकल्पस्थानविभागेन वेदनाविशेषः कुष्ठभेदकोऽस्ति, अतः सप्तविध इत्यादि योजनीयम्; सप्तविध इत्यत्रैव, वक्ष्यमाणमहाकुष्ठभेदेनाष्टादशविधस्तु चिकित्सावक्ष्यमाणभेदेन, अपरि-

**दोषा हि विकल्पनैर्विकल्प्यमाना विकल्पयन्ति विकारानन्यत्र असाध्यभावात्। तेषां विकल्पविकारसंख्यानेऽतिप्रसङ्गमभिसमीक्ष्य सप्तविधमेव कुष्ठविशेषमुपदेक्ष्यामः ॥ ४ ॥**

सप्तविधत्वादिमात्रम्? इत्यत आह—दोषा इत्यादि। विकल्पनैरंशांशकल्पनैः विकल्प्यमाना दोषा विकारान् विकल्पयन्ति रोगाणां विशेषेण प्रकारान् कुर्व्वन्ति, तेन कुष्ठविसर्पयोः समसप्तधातुकत्वेऽपि निदानवैशेष्यात् प्रकृतिसामान्याभावान्न विशेषरूपता। एवमसाध्यत्वं पुनरचिन्त्यं न विकल्पयन्ति यतस्त्रिदोषजगुल्मोऽसाध्यो न चासाध्यं सर्व्वं कुष्ठं त्रिदोषजम् अपीति नास्त्यसाध्यतां प्रति चिन्ता। ननु सप्तविधत्वादिकं कैर्विकल्पनैः ज्ञेयमित्यतः सूत्ररूपत्वादस्य निदानस्थानस्य सप्तविधे सर्व्वविधानामन्तर्भावम् अभिप्रेत्य सप्तविधत्वोपदेशार्थमाह—तेषामित्यादि। तेषां वातपित्तकफानां विकल्पेन विकारप्रकारपरिसंख्याने परिसंख्याकरणेऽतिप्रसङ्गं तन्त्रस्यातिबाहुल्यप्रसङ्गं कुष्ठानां समानप्रकृतीनामपि दोषांशांशविकल्पस्थानभेदेन वेदनादिभिर्विशेषं सप्तविधमेवोपदेक्ष्याम इत्यन्वयः ॥ ४ ॥

संख्येयस्तु वेदनाद्यवान्तरभेदेन; कुतोऽपरिसंख्याता एवंविकल्पा भवन्तीत्याह—दोषा हीत्यादि। विकल्पनैरिति विविधभेदविकल्पनैरंशांशविकल्पादिभिर्विकल्प्यमाना भिद्यमाना विकल्पयन्ति भेदयन्ति, व्याधिकारणदोषभेदात् कार्य्यस्यापि व्याधेर्भेदो बहुविधो भवतीति भावः। सोऽयं दोषभेदकृतो भेदोऽसाध्ये व्याधौ नेह क्रियते इत्याह अन्यत्रेत्यादि। असाध्यमिह प्रत्याख्येयमभिप्रेतम्; याप्यस्य भेदोऽसाध्यस्य क्रियत एव यापनार्थम्; एवं मन्यते—प्रत्याख्येये व्याधौ सन्नपि दोषकृतो भेदोऽचिकित्स्यत्वेन चिकित्साविशेषाप्रवर्त्तकत्वान्नेह क्रियते, साध्ये तु चिकित्साभेदार्थं क्रियत इति युक्तम्। सम्प्रतीतरप्रकारत्यागं सहेतुकं दर्शयन् सप्तविधाभिधानं प्रतिजानीते—तेषामित्यादि। विकल्पैः सर्व्वैर्विकारकथनं विकल्पविकारसंख्यानम्; अतिप्रसङ्गमिति अत्यभिधानप्रसङ्गम्। ननु यदि सप्तविधकुष्ठे अपरैकादशचिकित्सावक्ष्यमाणकुष्ठान्तर्भावो भवति, तदा सप्तविधत्वं तथाष्टादशविधत्वञ्चेति विधाद्वयं भवति, यथा ज्वराणामेकविधत्वद्विविधत्वादि, तत्र सर्व्वास्वेव विधासु सर्व्वान्तर्भावोऽस्ति। न चेह सप्तमहाकुष्ठे क्षुद्रकुष्ठप्रवेशोऽस्ति, किञ्चैवं क्षुद्राप्रवेशे कथमिहाचार्य्यो निदाने सप्तकुष्ठाभिधानेन कृती स्यात्; इह तु सप्तविधकुष्ठाभिधानेन एकदोषजद्विदोषजत्रिदोषजकुष्ठाभिधानं कृतम्—"वातेऽधिकतरे कापालकुष्ठम्" इत्यादिना; न चैतत्प्रकारत्रयात् प्रकारान्तरं क्षुद्रकुष्ठानामप्यस्ति; तेन क्षुद्रकुष्ठेषु यत् कुष्ठम्, तद्दोषजं वक्तव्यम्; तस्योक्ततद्दोषलक्षणयुक्तत्वेनावरोधो व्याख्येयः, परं क्षुद्रकुष्ठे महाकुष्ठोक्तदोषलक्षणेनाल्पत्वं भवतीति ज्ञेयम्; अत्र "चर्म्माख्यमेककुष्ठन्तु किटिमं सविपादिकम्।

इह वातादिषु त्रिषु प्रकुपितेषु त्वगादींश्चतुरः प्रदूषयत्सु वातेऽधिकतरे कापालकुष्ठमभिनिर्व्वर्त्तते, पित्ते त्वौडुम्बरं, श्लेष्मणि मण्डलं कुष्ठं, वातपित्तयोः ऋष्यजिह्वं, पित्त-श्लेष्मणोः पुण्डरीकं, श्लेष्ममारुतयोः सिध्म, सर्व्वदोषाभि-निर्व्वृत्तौ काकणमभिनिर्व्वर्त्तते। एवमेष सप्तविधः कुष्ठविशेषो भवति। स एव खलु भूयस्तरतमतः प्रकृतौ विकल्प्यमानायां भूयसीं विकारविकल्पसंख्यामापद्यते ॥ ५ ॥

तत्रेदं सर्व्वकुष्ठनिदानं पुनः समासेनोपदेक्ष्यामः। शीतोष्णव्यत्यासं मलानुपूर्व्व्योपसेवमानस्य तथा

गङ्गाधरः—तन्तु विशेषं दर्शयति—इहेत्यादि। त्रिषु मध्ये वातेऽधिकतरे इत्यधिकतम इत्यर्थः, द्वयोरुत्कर्षे तरस्य च्छन्दसि नियमाभावात्। एवं पित्ते त्वित्यादिषु अधिकतरे इति पदमन्वेतव्यम्। सर्व्वदोषाभिनिर्व्वृत्ताविति सर्व्वदोषाणां समाभिवृद्धौ। स एवेति स एव सप्तविधः कुष्ठविशेष एव भूयस्तरतमत इति भूयिष्ठदोषस्यैकस्यानेकस्य च तरतमतस्तारतम्यात् उल्वणदोषस्य रौक्ष्यशैत्याद्यं कद्वित्र्यादिधर्म्मतो वृद्धा, प्रकृतौ स्वारम्भकदोषे विकल्प्यमानायां विशेषेण कल्प्यमाने भूयसीमष्टादशादिरूपां विकारविकल्पसंख्यां दद्रूकिटिमादिविकाररूपेण विकल्पतः सङ्ख्याम् ॥ ५ ॥

गङ्गाधरः—तत्रेदमित्यादि। इदमत ऊर्द्ध्वं वक्ष्यमाणशीतोष्णव्यत्यासादिकम्। समासेन नातिविस्तरेण। शीतोष्णव्यत्यासमिति शीतोष्ण-

कुष्ठन्त्वलसकं ज्ञेयं प्रायो वातकफात्मकम्" इत्यादि चिकित्सिते वक्ष्यमाणग्रन्थानुरोधात् क्षुद्रकुष्ठान्तर्भावो व्याख्येयः ॥ ३।४ ॥

चक्रपाणिः—कुष्ठानां कापालादिसंज्ञाः कपालादिसादृश्यप्रयुक्तास्तथा शास्त्रव्यवहारसिद्धाश्च बोद्धव्याः; न हि सिध्मसंज्ञायामन्वयोऽस्ति; तेन शास्त्रव्यवहारसिद्धैव सिध्मसंज्ञा; प्रकृतौ विकल्प्यमानायामिति कुष्ठजनककारणे भिद्यमाने; विकल्पसंख्या भेदरूपा संख्या; इह क्षुद्रकुष्ठाभिधानमुक्तन्यायेन महाकुष्ठान्तर्गतत्वादेवेति बोद्धव्यम् ॥ ५ ॥

चक्रपाणिः—शीतोष्णव्यत्यासं शीतोष्णपरिवर्त्तनम्; अनानुपूर्व्व्येति यथोक्तक्रमत्यागेन; क्रमत्यागश्चोष्णं निषेव्य सहसा शीतसेवा, तद्विपर्य्ययश्च, तथा अनुचिते काले शीतोष्णसेवा।

सन्तर्पणापतर्पणाभ्यवहार्य्यव्यत्यासञ्च, मधुफाणितमत्स्य-मूलककाकमाचीः सततमतिमात्रमजीर्णे समश्नतश्चिलिचिमञ्च पयसा, हायनकयवकचीनकोद्दालकोरदूषप्रायाणि चान्नानि क्षीरदधितक्रकोलकुलत्थमाषातसीकुसुम्भपरुषस्नेहवन्ति, एतै-रेवातिमात्रं सुहितस्य * च व्यवायव्यायामसन्तापानत्युपसेव-मानस्य, भयश्रमसन्तापोपहतस्य च सहसा शीतोदक-मवतरतो, विदग्धञ्चाहारजातमनुल्लिख्य विदाहीन्यभ्यवहरतः

विपर्य्ययम्। मलानुपूर्व्या वाताद्यानुपूर्व्या। शीतस्य वोष्णस्य वा व्यत्यासं क्रमपरित्यागम्। क्रमस्तु शीते वाते कफे चोष्ण उपयोगः, उष्णे च पित्ते शीत उपयोगस्तस्य विपर्य्ययः शीते वाते कफे च शीत उपयोगः, उष्णे पित्ते उष्ण उपयोगः। तथा। एवं सन्तर्पणापतर्पणाभ्यव-हार्य्याणां व्यत्यासं क्रमत्यागमुपसेवमानस्येत्यनेनान्वयः। यदा सन्तर्पणं कर्त्तव्यं यदा चापतर्पणं कार्य्यं, तत् तत् तदा तदा न कृत्वा यदा सन्तर्पणं विहितं तदा त्वपतर्पणं क्रियते, यदापतर्पणं विहितं तदा सन्तर्पणं क्रियते, इति सन्तर्पणापतर्पणव्यत्यासः। अत्र सन्तर्पणशब्देन बृंहणीयस्नेहनीयानां द्रव्याणां ग्रहणम्। अपतर्पणशब्देन पुनर्लङ्घनीयरूक्षणीयस्वेदनीयस्तम्भनीयानां द्रव्याणां ग्रहणम् अभ्यवहार्य्यत्वात् तथानशनादिदशविधलङ्घनानाम्। तेन पञ्चकर्म्मोपचारित्वमुक्तं भवतीति। अभ्यवहार्य्यस्य व्यत्यासो विमानस्थाने वक्ष्यमाणप्रकृतिकरणाद्याहारविधिविशेषायतनानां वर्ज्जनेनाहारस्योपयोगः। मधुफाणितादीनामतिशयेन सततमशनमजीर्णेऽप्यशनं तथा पयसा चिलि-चिममत्स्यानां विरुद्धाशनम्। हायनकादिबहुलान्नभोजनमपि। एतैरित्युक्तैः क्षीरादुत्पहितहायनकादिप्रायाणीत्यन्तैरतिमात्रं सुहितस्यातिशयतृप्तस्य व्यवायादित्रयात्युपसेवमानस्य तथाविधसुहितः सन् व्यवायादीन् यः सेवतेऽतिमात्रं तस्य। भयेत्यादि। यो भयाद्युत्कानेकोपहतचेताः सन् सहसा तत्क्षणं शीतोदकमवतरति अवगाहते तस्य। विदग्धमित्यादि।

एवं सन्तर्पणापतर्पणाभ्यवहार्य्यव्यत्यासमपि अनानुपूर्व्योपसेव्यमानस्येति ज्ञेयम्। चिलिचिमः

---

* सुहितभक्षितस्येति चक्रसम्मतः पाठः।

छर्द्दिश्च प्रतिघ्नतः, स्नेहांश्चातिचरतो युगपत् त्रयो दोषाः प्रकोपमापद्यन्ते, त्वगादयश्चत्वारः शैथिल्यमापद्यन्ते। तेषु शिथिलेषु दोषाः प्रकुपिताः स्थानमधिगम्य सन्तिष्ठमानास्तानेव त्वगादीन् दूषयन्तः कुष्ठान्यभिनिर्व्वर्त्तयन्ति ॥६॥

आहारजातं भुक्तमन्नं जाठराग्निना विदग्धमर्द्धपरिपक्वमनुल्लेख्य उल्लेखनं वमनं न कृत्वा पुनर्यो विदाहीन्यन्नानि भुङ्क्ते तस्य। छर्द्दिश्चोपस्थितां यः प्रतिहन्ति तस्य। चकारात् मलादीनां वेगान् यः प्रतिहन्ति तस्य। यश्च दिवानिद्रां भजति तस्य, यश्च विप्रगुरुवृद्धसिद्धादीन् धर्षयति तस्य। युगपदेकदा न तु एतैर्हेतुभिरेकः प्रकोपमापद्यापरौ प्रकोपमापादयतः। प्रकोपमिति वृद्धिम्। त्वगादय इति प्रकोपमापद्यन्ते इत्यन्वयः। आदिपदेन सप्तधात्वादिवारणाय मांसशोणितलसीकानां कुष्ठद्रव्यत्वेनोक्तानां त्रयाणां ग्रहणार्थमाह—चत्वार इति। चकारात् शैथिल्यमापद्यन्ते। तत्तदुक्तनिदानैरेव वृद्धत्वात्।

ननु तत्तदुक्तनिदानैर्वृद्धा वातादयस्त्वगादयश्च रोगान्तरमप्यारब्धुं किं नार्हन्ति इत्यत आह—तेष्वित्यादि। तेषूक्तनिदानैर्वृद्धा ये चत्वारस्त्वङ्मांसशोणितलसीकाधातवस्तेषु चतुर्षु न त्वेकशः शिथिलेषु तैरेव निदानैः युगपत्प्रकुपिता दोषा वातादयस्त्रयस्तान् त्वगादीन् चतुरो वृद्धत्वेन शिथिलान् धातूनधिगम्य तेषां मध्ये गत्वा तेष्वेव त्वगादिषु सन्तिष्ठमानाः सन्तस्तानेव त्वगादींश्चतुरो धातून् न त्वन्यान् धातून् दूषयन्तः सन्तः कुष्ठान्यभिनिर्व्वर्त्तयन्ति न त्वन्यान् रोगान्। न ह्यत्रतादृशसम्प्राप्तिका इतरे केचिद्रोगाः ईदृशाश्च कुपिता दोषा ईदृशाश्च कुपितशिथिलास्त्वगादयो धातवो यदि भवन्ति न तदान्यान् धातूनधिगच्छन्ति नाप्यन्यत्रावतिष्ठन्ते नान्यान् वा धातून् दूषयन्ति तस्मात् नान्यान् रोगानभिनिर्व्वर्त्तयन्ति। एवं सर्व्वत्र व्याख्येयम्। स्वभावो हि दोषाणां कुष्ठविसर्पादियुक्तस्वस्वनिदानाद् भवति, किञ्च कुष्ठेषु गुरुविप्रादिधर्षणस्वर्णस्तेयादिकारणानि सन्ति न तु विसर्पे। विसर्पे हि सामान्यनिदानम् उक्त्वा प्रत्येकञ्च निदानमुक्तं, तेन विसर्पनिदानकुपितानां त्रयाणां दोषाणां पुना रूक्षादिभिर्वातादीनां प्रत्येकं विशेषकारणैरुल्वणतया प्रकोपो भवति,

तन्त्रकृता आत्रेयभद्रकाप्यीये दर्शितो रोहितभेदः ; स्थानमधिगम्येति कुष्ठजननानुगुणं शिथिल-

तेषां कुष्ठानामिमानि खलु पूर्व्वरूपाणि भवन्ति। तद् यथा—अस्वेदनमतिस्वेदनं पारुष्यमतिश्लक्ष्णता वैवर्ण्यं कण्डूर्निस्तोदः सुप्तता परिदाहः परिहर्षो रोमहर्षश्च खरत्वम् उष्मायनं गौरवं श्वयथुर्विसर्पागमनमभीक्ष्णं कायच्छिद्रेषु चापदेहः पक्वदग्धदष्टक्षतोपस्खलितेष्वतिमात्रं वेदना, स्वल्पानाम्

कुष्ठे तु कुष्ठसामान्यकारणैरेवैकादुग्रल्वणादितया त्रिदोषकोपो युगपद् भवतीति भेदः। सुश्रुते चोक्तम्। मिथ्याहाराचारस्येत्यारभ्य, छर्द्दिं वा प्रतिहन्ति तस्य पित्तश्लेष्माणौ प्रकुपितौ परिगृह्यानिलः प्रवृद्धस्तिर्य्यग्गाः सिराः प्रतिपद्य समुद्धूय वाह्यं मार्गं प्रतिसमन्ताद्विक्षिपति। यत्र यत्र च दोषो विक्षिप्तो निःसरति तत्र तत्र मण्डलानि प्रादुर्भवन्त्येवमुत्पन्नस्त्वचि दोषस्तत्र च वृद्धिं प्राप्याप्रतिक्रियमाणोऽभ्यन्तरं प्रतिपद्यते धातून् दूषयन्निति। ननु विसर्पचिकित्सिते वक्ष्यते—रक्तं लसीका त्वङ्मांसं दूष्यं दोषास्त्रयो मलाः। विसर्पाणां समुत्पत्तौ विज्ञेयाः सप्त धातवः। स च सप्तविधो दोषैर्विज्ञेयः सप्तधातुकः। इति। तत् कथमन्यान् रोगान् नाभिनिर्व्वर्त्तयति? कुष्ठविसर्पयोर्वा को भेद इति? अत्रोच्यते केनचित्—विसर्पा वातादेरेकैक-द्वन्द्वसङ्घातदोषेभ्यो भवन्ति, न तथा कुष्ठानि। वक्ष्यते च। पृथक् त्रय-स्त्रिभिश्चैको विसर्पो द्वन्द्वजास्त्रयः इति। तन्न साधु; कुष्ठवद् द्व्युल्वणैकैकद्वन्द्व-सन्निपातैर्विसर्पस्य सप्तधातुकत्वात्। अपरस्तु। क्षिप्रविसर्पणशीलप्रबल-रक्तपित्तैर्जन्यते विसर्पः, कुष्ठन्तु चिरक्रियस्थिराप्रबलरक्तपित्तैरिति ॥ ६ ॥

गङ्गाधरः—पूर्व्वरूपाण्याह—तेषामित्यादि। अस्वेदनमतिस्वेदनं वेति व्याख्याय पुरुषभेदेन तद् द्वयं बोध्यम्। अतिश्लक्ष्णता गात्रस्य, परिहर्षोऽङ्गानां, रोमहर्षो रोमाञ्चः, खरत्वञ्चाङ्गानाम्, उष्णायनं शरीरत एवोष्णस्य आगमनम्, उष्णायमानता वा शरीरस्य। विसर्पागमनं शरीरेऽभीक्ष्णं विसर्पोद्गमः। कायच्छिद्रेषु रोमकूपेषु, इन्द्रियविवरेषु चोपदेहो मलैरुपलेपः। पक्वादिषु

त्वगादिस्थानं प्राप्य; किंवा स्थानमपि जनयितव्यकुष्ठशरीरदेशं प्राप्येत्यर्थः। अवतिष्ठमाना इति वचनेन स्थिरा एव दोषाः कुष्ठकरा भवन्ति, न हि सरणशीलास्त इति दर्शयति ॥ ६ ॥

चक्रपाणिः—अस्वेदनादि पूर्व्वरूपं प्रभावात्; परिहर्षो झिनिझिनिका ॥ ७ ॥

अपि च व्रणानां दुष्टिरसंरोहणञ्चेति कुष्ठपूर्व्वरूपाणि भवन्ति ॥ ७ ॥

तेभ्योऽनन्तरं कुष्ठान्यभिनिर्व्वर्त्तन्ते। तेषामिदं वेदनावर्ण-संस्थाननामप्रभावविशेषविज्ञानं भवति। तद् यथा—रुक्षारुण-परुषाणि विषमविसृतानि खरपर्य्यन्तानि तनून्युद्वृत्तवहि-स्तनूनि सुप्तसुप्तानि * हृषितलोमाचितानि निस्तोदबहुलानि अल्पकण्डूदाहपूयलसीकान्याशुगतिसमुत्थानानि आशुभेद-

शरीरावयवेषु स्वल्पानामपि चेति अपिकारात् महताञ्च व्रणानां दुष्टिरुप-पन्नैवास्ति दुष्टियोग्यत्वात् स्वल्पानां द्रष्टुमयोग्यानामपि त्वगादिशैथिल्याद् दुष्टिरहेति इति सूचितम्। असंरोहणमिति न सम्यग्रोहः स्यात् त्वगादि-शैथिल्यादेव, ततः शीघ्रोत्पादश्चिरस्थितिर्व्रणानां गात्रे भवतीति ख्यापितम्। चकारादतिमात्रञ्च वेदना व्रणानामिति। समापयति—इति कुष्ठपूर्व्व-रूपाणीति ॥ ७ ॥

गङ्गाधरः—तेभ्योऽनन्तरमिति पूर्व्वरूपेभ्योऽनन्तरम्। कुष्ठानां रूपाण्याह—तेषामित्यादि। तेषामिति सप्तानां कुष्ठानाम् इदं वक्ष्यमाणमत ऊर्द्ध्वमेव। अथ विशेषविज्ञानं भवतीति नोक्त्वा वेदनादिविज्ञानं भवतीति यदुक्तं तेनैवं गमयति—वेदनादिविशेषा एव व्याधीनां लिङ्गान्युच्यन्ते, तद्विज्ञानमिदं वक्ष्यमाणरुक्षारुणेत्यादि। तद् यथेत्यादि। रुक्षाणि च तानि अरुणानि च तानि परुषाणि च तानि विषमविसृतानि असमतया सरणशीलानि चेति तानि तथा। खरपर्य्यन्तानीति अन्तदेशे खराणि। तनूनि अबहलानि। उद्वृत्त-वहिस्तनूनि उच्चमध्यान्तर्निम्नानि। सुप्तसुप्तानि अतिमात्रं स्पर्शाज्ञानानि। हृषितलोमभिराचितानि सर्व्वदा रोमहर्षवद् बहुलोमव्याप्तानि। आशु गतिः प्रसरणं समुत्थानमुत्पत्तिश्च येषां तानि तथा, वायोराशुगत्वात्। आशु-

चक्रपाणिः—उद्वृत्तवहिस्तनूनीति उच्छलीकृतबाह्यदेहानि; सुप्तवत् सुप्तानि अत्यर्थस्पर्शाज्ञानि

* सुप्तवत् सुप्तानीति पाठान्तरम्।

जन्तुमन्ति कृष्णारुणकपालवर्णानि च कपालकुष्ठानीति विद्यात्॥ ८॥

ताम्राणि ताम्ररोमराजिभिः * अवनद्धानि बहलानि बहुबहलपूयरक्तलसीकानि कण्डूक्लेदकोथपाकदाहवन्ति आशुगतिसमुत्थानभेदीनि ससन्तापक्रिमीणि पक्वोडुम्बरफलवर्णानि † उडुम्बरकुष्ठानीति विद्यात्॥ ९॥

स्निग्धानि गुरूण्युत्सेधवन्ति श्लक्ष्णस्थिरपीनपर्य्यन्तानि शुक्लरक्तावभासानि ‡ शुक्लराजीसन्तानानि बहुबहलशुक्लरक्तपिच्छिलास्राविणि बहुकण्डूक्रिमीणि सक्तगतिसमुत्थानभेदीनि परिमण्डलानि मण्डलकुष्ठानीति विद्यात्॥ १०॥

भेदजन्तुमन्तीति आशुत्वङ्मांसादिभेदकरक्रिमियुक्तानि। कृष्णारुणकपालवत् खर्परवद्वर्णयुक्तानि। तस्मादेव कपालाख्यानि कुष्ठानि इति विद्यात्। अत्र सुप्तसुप्तनिस्तोदादिर्वेदनाविशेषः, कृष्णारुणकपालवर्णादिर्वर्णविशेषः, रुक्षारुणादिखरपर्य्यन्तादिः संस्थानविशेषः, तत्रापि विषमविसृतत्वखरपर्य्यन्तत्वादिः प्रभावविशेषः, कपालेति नामविशेषः। एवं परत्रापि सर्व्वाणि कुष्ठानि व्याख्यातव्यानि॥ ८॥

गङ्गाधरः—ताम्राणीत्यादि। ताम्ररोमराजीभिः पिञ्जराकारतया अवनद्धानि। बहलानि घनानि। बहुबहलेति बहवो घनाश्च पूयरक्तलसीका यत्र तानि तथा। आशुगतिसमुत्थानभेदित्वञ्चैषां पित्तस्य सरत्वेन तद्गतवातस्य चलत्वात्। ससन्तापत्वं क्रिमीणां पित्तदूषितरक्तस्थानजत्वात्। पक्वोडुम्बरफलवर्णत्वादुडुम्बराख्याणीति विद्यात्॥ ९॥

गङ्गाधरः—स्निग्धानीत्यादि। उत्सेधवन्तीत्युच्चानि अन्तदेशे श्लक्ष्णानि स्थिराणि पीनानि च। तेन न चलन्ति। बहुकण्डूक्रिमीणीति कफदूषित-

इत्यर्थः; कपालः स्थाल्यादिखण्डः। सक्तानि चिरभावीणि गत्यादीनि येषां ते तथा। ऋष्यजिह्व-

* ताम्रखररोमराजीभिरिति चक्रधृतः पाठः। † पक्वोडुम्बरफलानीति द्वितीयपाठः।

‡ शुक्लरोमराजीसन्तानानि तथा बहुलबहलशुक्लपिच्छिलस्राविणि तथा बहुप्लेदकण्डूक्रिमीणीति पाठान्तराणि दृश्यन्ते।

परुषाण्यरुणवर्णानि वहिः अन्तः श्यावानि नीलपीतताम्रावभासान्याशुगतिसमुत्थानान्यल्पकण्डूक्लेदक्रिमीणि दाहभेदनिस्तोदबहुलानि * शूकोपहतोपमवेदनानि उत्सन्नमध्यानि तनुपर्य्यन्तानि दीर्घपरिमण्डलानि कर्कशपिड़काचितानि ऋष्यजिह्वाकृतीनि ऋष्यजिह्वानीति विद्यात् ॥ ११ ॥

शुक्लरक्तावभासानि रक्तपर्य्यन्तानि रक्तसिराराजीसन्तानानि उत्सेधवन्ति बहुबहलरक्तपूयलसीकानि कण्डूक्रिमिदाहपाकवन्ति आशुगतिसमुत्थानभेदीनि पुण्डरीकपलाशसङ्काशानि पुण्डरीकाणीति विद्यात् ॥ १२ ॥

परुषारुणविशीर्णवहिस्तनूनि अन्तःस्निग्धानि शुक्लरक्ताव-

रक्तजत्वेनात्र क्रिमीणां बहुकण्डूकरत्वम्। सक्तगतीत्यादि। सक्तं चिरं संसक्तं गत्यादिकं यत्र तानि तथा परिमण्डलाकारत्वात् मण्डलाख्यानि ॥ १० ॥

गङ्गाधरः—परुषेत्यादि। वहिः पर्य्यन्तदेशे परुषारुणवर्णानि। अन्तर्मध्यदेशे श्यावानि किन्तु नीलाद्यवभासानि। आशुगत्यादीनि वातपित्तसम्बन्धात्। ततश्चाल्पकण्ड्वादीनि च। दाहबहुलानि निस्तोदभेदबहुलानि च। शूको धान्यशूकादि, उपहतवद्वेदनाशालीनि। उत्सन्नमध्यानि मध्यदेशे उच्चानि पर्य्यन्तदेशे निम्नानि, तथा तनुपर्य्यन्तानि पर्य्यन्तदेशेऽघनानि। दीर्घपरिमण्डलानीति विवृणोति ऋष्यजिह्वाकृतीनीति। ऋष्यो हरिणभेदः ॥ ११ ॥

गङ्गाधरः—शुक्लरक्तेत्यादि। रक्तसिराराजीसन्तानानीति रक्तवर्णसूक्ष्मसिरासमूहैः सन्तानं व्याप्तिर्येषां तानि तथा। आशुगत्यादिकत्वं वातानुपित्तसम्बन्धात्। कफस्य द्रवांशेन पित्ततुल्यत्वेऽपि ताभ्यामवजयात् ॥ १२ ॥

गङ्गाधरः—परुषारुणेत्यादि। वाह्ये पर्य्यन्तदेशे परुषारुणवर्णविशीर्णा-

लक्षणे वहिरिति कुष्ठपर्य्यन्ते, अन्तरिति विकृतमध्यमुच्यते। ऋष्यो हरिणविशेषः। पुण्डरीकपलाशशब्देन पद्मपुष्पदलमिह ॥ ८—१२ ॥

चक्रपाणिः— वशीर्णवहिस्तनूनि इत्यत्र 'तनु'शब्दः प्रदेशे वर्त्तते; तेन विशीर्णपर्य्यन्त-

* दाहभेदपाकनिस्तोदबहुलानीत्यन्यः पाठः।

भासानि बहून्यल्पवेदनानि अल्पकण्डूदाहपूयलसीकानि लघुसमुत्थानानि अल्पभेदक्रिमीणि अलाबूपुष्पसङ्काशानि सिध्मकुष्ठानीति विद्यात् ॥ १३ ॥

काकणन्तिकावर्णानि आदौ पश्चात् तु सर्व्वकुष्ठसमन्वितानि पापीयसां सर्व्वकुष्ठलिङ्गसम्भवेनानेकवर्णानि काकणकानीति विद्यात् ॥ १४ ॥

तान्यसाध्यानि, साध्यानि पुनरितराणि भवन्ति, तत्र यदसाध्यं तदसाध्यतां नातिवर्त्तते। साध्यं पुनः किञ्चित् साध्यताम् अतिवर्त्तते कदाचिदपचारात्। साध्यानि हि षट् काकणवर्ज्जानि

ऽघनमण्डलानि तानि चान्तर्मध्ये स्निग्धानि। अल्पवेदनादित्वं कफसम्बन्धाद् वायोः। लघुसमुत्थानानि क्षिप्रजन्मानि अलाबूपुष्पनिभत्वात् सिध्माख्यानि ॥ १३ ॥

गङ्गाधरः—काकणन्तिकेत्यादि। काकणन्तिकेति गुञ्जाफलम्। सर्व्वकुष्ठेति कपालकुष्ठादिसर्व्वकुष्ठयुक्तानि। पापीयसामतिशयपापिनां, स्वल्पपापिनान्तु न सर्व्वकुष्ठयुक्तानि ॥ १४ ॥

गङ्गाधरः—तान्यसाध्यानीत्यादि। तानीति काकणानि, इतराणीति कापालादीनि षट् कुष्ठानि। तत्रेत्यादि। साध्यं पुनः किञ्चित् कापालाद्यन्यतमं, कुतः साध्यतामतिवर्त्तते इत्यत आह—कदाचिदित्यादि। ननु कुतः कथं

देशानीत्यर्थः। सिध्मकुष्ठं यथोक्तलक्षणं सिध्मपुष्पिकाव्यतिरिक्तमेव ब्रूवते; एतत्सिध्मपुष्पिकाभिप्रायेण च सुश्रुते सिध्मकुष्ठं क्षुद्रकुष्ठेषु पठितम्; दद्रु तु सुश्रुते महाकुष्ठे पठितमपीह क्षुद्रकुष्ठे पठितमुत्तरोत्तरधात्वनुप्रवेशाभावात् तथात्यर्थपीडारहितत्वाच्च, सुश्रुते तु तदनुबन्धित्वप्रकर्षात् महाकुष्ठे पठितम् ॥ १३ ॥

चक्रपाणिः—सर्व्वकुष्ठलिङ्गसमन्वितानीत्येतेनार्थे लब्धे पुनः पापीयसां सर्व्वकुष्ठलिङ्गसम्भवेन इतिवचनाद् यदेव पापीयःकुष्ठलिङ्गम्, तदेव काकणके भवति, नान्यत्रेति दर्शयति; पापीयसा इत्यतिपीडाकृता; किंवा, पापीयसेत्यादिपुनर्व्वचनेन सर्व्वकुष्ठलिङ्गानां पापारब्धत्वेनासाध्यतामत्यर्थपीडाकर्त्तृताञ्च दर्शयति ॥ १४ ॥

चक्रपाणिः— कदाचिदपचारादिति, कदाचिदित्यनेनाग्रे वक्ष्यमाणचिकित्स्यमानतापक्षान्तरं

अचिकित्स्यमानानि। अपचारतो वा दोषैरभिष्यन्दमानानि असाध्यतामुपयान्ति। साध्यानामपि ह्युपेक्ष्यमाणानामेषां त्वङ्मांस-शोणित-लसीका-कोथ-क्लेद-संस्वेदजाः क्रिमयोऽभिमूर्च्छन्ति। ते भक्षयन्तस्त्वगादीन् दोषान् पुनर्दूषयन्तः इमानुपद्रवान् पृथक् पृथगुत्पादयन्ति। तत्र वातः श्यावारुणवर्णं परुषतामपि च रौक्ष्यशूलशोषतोदवेपथु*सङ्कोचहर्षायासस्तम्भसुप्तिभेदभङ्गान्, पित्तं पुनर्दाहस्वेदक्लेदकोथस्रावपाकरागान्, श्लेष्मा त्वस्य शैत्यश्वैत्यकण्डूस्थैर्य्यगौरवोत्सेधस्नेहोपलेपान्। क्रिमयस्तु त्वगादींश्चतुरः सिराः स्नायूनि चास्थीन्यपि च तरुणानि खादन्ति; अस्याञ्चैवावस्थायां कुष्ठिनमुपद्रवाः स्पृशन्ति। तद् यथा—प्रस्रवणमङ्गभेदः पतनान्यङ्गावयवानां

साध्यताम् अतिवर्त्तते इत्यत आह—साध्यानि हीत्यादि। ननु किं केवलमचिकित्सया वापचारतो वा दोषैर्वृद्धैः पुनरभिष्यन्दमानानि भूत्वा साध्यतामतिवर्त्तन्ते उतान्यथा वा इत्यत आह—साध्यानामित्यादि। ते इति क्रिमयः। पृथक् पृथक् इति दोषाः, क्रिमयश्च। तत्र वातः इत्यादि। तत्र क्रिमिकुपितवातपित्तकफक्रिमिषु मध्ये वातः क्रिमिभिः पुनर्दूषित एवं पित्तश्लेष्माणावपि बोध्यौ। श्यावारुणत्वादीनर्थाद् अङ्गानामुत्पादयतीत्यर्थः। अस्यामिति क्रिमिदूषितवातादिक्रिमिकृतोक्तोपद्रवशालितायामवस्थायां पुनरिमे चोपद्रवाः कुष्ठवतां भवन्ति। प्रस्रवणं गलितत्वेन स्रावस्रवणम्। अङ्गभेदोऽङ्गभङ्गः। पतनान्यङ्गावय-

दर्शयति; अपचारतो वेति उत्पन्नेऽपि कुष्ठे निदानं सेवन्ते। अभिष्यन्दमानानीत्यापूर्य्यमाणानि।

---

* वेपथ्वित्यत्र व्यथेति वा पाठः।

तृष्णाज्वरातिसारदाहदौर्ब्बल्यारोचकाविपाकाश्च, तथाविधम् असाध्यं विद्यादिति ॥ १५ ॥

भवन्ति चात्र।

साध्योऽयमिति यः पूर्व्वं नरो रोगमुपेक्षते।
स किञ्चित्कालमासाद्य मृत एवावबुध्यते ॥
यस्तु प्रागेव रोगेभ्यो रोगेषु तरुणेषु वा।
भेषजं कुरुते सम्यक् स चिरं सुखमश्नुते ॥
यथा ह्यल्पेन यत्नेन च्छिद्यते तरुणस्तरुः।
स चैवातिप्रवृद्धस्तु यत्नात् कृच्छ्रेण छिद्यते ॥
एवमेव विकारोऽपि तरुणः साध्यते सुखम्।
विवृद्धः साध्यते कृच्छ्रादसाध्यो वापि जायते ॥ १६ ॥

वानामङ्गुल्यादीनाम्, तथाविधमुक्तरूपं सर्व्वं कुष्ठमसाध्यं विद्यादित्यर्थः ॥ १५ ॥

गङ्गाधरः—अथोपेक्षायां हेतुं बुद्धिं प्रदर्श्य तत् परिहारार्थमुपदिशति। भवन्तीत्यादि। साध्योऽयमित्यादि। अयं व्याधिः साध्यः स्वयं निवर्त्तिष्यति किंवा प्रतिकरिष्यतेऽनन्तरमिति बुद्ध्या यो नरः पूर्व्वमुत्पन्नमात्रं न चिकित्सित्वा उपेक्षते, स किञ्चित्कालमासाद्य तत्रोगे वृद्धे गाढ़मूले सति अहं मृत एवेति अवबुध्यते। तेन रोगोपेक्षा न कार्य्येति ख्यापयितुमाह—यस्त्वित्यादि। प्रागेवेति उत्पत्तेः पूर्व्वमेव चयप्रकोपप्रसरपूर्व्वरूपावस्थासु तरुणेष्वित्युत्पन्नमात्रं सम्यगित्यनेनायथावच्चिकित्सयापि साध्यतामतिवर्त्तते इति ख्यापितम्। ननु कस्मात् चयाद्यवस्थासूत्पन्नमात्रावस्थायां वा सम्यग्भेषजकरणे साध्यता स्यादुपेक्षया वा कस्मान्न साध्यता स्यादित्यत आह—यथेत्यादि। असाध्यत्वे तु नायं दृष्टान्तः, किन्तु कृच्छ्रत्वदृष्टान्तेनैवातिविवृद्धत्वेऽच्छेद्यत्वोऽन्वयेनासाध्यत्वे दृष्टान्त उन्नेयः ॥ १६ ॥

दोषाः पुनर्दूषयन्त इति त्वगादीनेव। तरुणानीति कोमलानि नासास्थ्यादीन्यादद्ते भक्षयन्ति।

तत्र श्लोकः ।

संख्या द्रव्याणि दोषाश्च हेतवः पूर्व्वलक्षणम् ।
रूपाण्युपद्रवाश्चोक्ताः कुष्ठानां कौष्ठिके पृथक् ॥ १७ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते निदानस्थाने
कुष्ठनिदानं नाम पञ्चमोऽध्यायः ॥ ५ ॥

गङ्गाधरः—अथाध्यायार्थमुपसंहरति—तत्र श्लोका इत्यादि। कौष्ठिके कुष्ठनिदानाध्याये। अध्यायं समापयति—अग्नीत्यादि ॥ १७ ॥

इति श्रीगङ्गाधरकविराजकविरत्नविरचिते चरकजल्पकल्पतरौ द्वितीयस्कन्धे
निदानस्थानजल्पे पञ्चमाध्यायकुष्ठनिदानजल्पाख्या
पञ्चमी शाखा ॥ ५ ॥

किञ्चित्कालमिति असाध्यव्याधिकालम्; मृत एवेति मरणोपकण्ठगतः; अवबुध्यत इत्यत्र साध्यव्याध्यपेक्षाफलं मृत्युमिति शेषः ॥ १५—१७ ॥

इति चरकचतुरानन-श्रीमच्चक्रपाणिदत्तविरचितायाम् आयुर्व्वेददीपिकायां निदानस्थान-
व्याख्यायां कुष्ठनिदानं नाम पञ्चमोऽध्यायः ॥ ५ ॥

# षष्ठोऽध्यायः ।

अथातः शोषनिदानं व्याख्यास्यामः,
इतिह स्माह भगवानात्रेयः ॥ १ ॥

इह खलु चत्वारि शोषस्यायतनानि भवन्ति । तद् यथा—साहसं सन्धारणं क्षयो विषमाशनमिति ॥ २ ॥

तत्र साहसं शोषस्यायतनमिति यदुक्तं, तदनुव्याख्यास्यामः । यदा पुरुषो दुर्ब्बलः सन् बलवता सह विगृह्णाति,

गङ्गाधरः—अथो एकद्वित्रिदोषोल्वणत्रैदोषिकं कुष्ठमुक्त्वा त्रैदोषिकत्व-साधर्म्म्येणैककार्य्यत्वसंगत्या कुष्ठनिदानानन्तरं शोषनिदानमाह—अथात इत्यादि ॥ १ ॥

गङ्गाधरः—इहेत्यादि । चत्वारि अत ऊर्द्ध्वं वक्ष्यमाणसाहसादीनि । शोषस्य रसादीनां शारीरधातूनां शोषेण शरीरशोषणात् शोषाख्यस्य । सुश्रुतेऽप्युक्तं संशोषणाद् रसादीनां शोष इत्यभिधीयते । क्रियाक्षयकरत्वाच्च क्षय इत्युच्यते पुनः । राज्ञश्चन्द्रमसो यस्मादभूदेष किलामयः । तस्मात् तं राजयक्ष्मेति केचिदाहुर्मनीषिणः । इति । आयतनानि निदानानि । चत्वारीति विवृणोति, तद् यथेत्यादि । साहसमिति दुर्ब्बलानां बलवता सह विग्रहादिर्व्यायामः साहसम् । सुश्रुतेऽप्युक्तं—क्षयाद् वेगप्रतीघाताद्व्यायामाद्विषमाशनादिति । तेन च । सन्धारणं पुरीषादीनां वेगधारणं नवेगान्धारणीयोक्तम् । क्षयो रस-शुक्रयोः क्षयः । पदार्थाख्यतन्त्रयुक्त्या निदाने तद्दर्शनात् । विषममशनं विषमाशनम् अर्थात् शोषस्यायतनमित्यर्थः ॥ २ ॥

गङ्गाधरः—साहसादिप्रत्येकनिदानतः शोषं दर्शयितुमाह—तत्रेत्यादि । तत्र साहसादिषु चतुर्षु शोषस्यायतनेषु मध्ये । यदेत्यादि । बलवतेति बलवत्

चक्रपाणिः—ज्वरनिदानोक्तसम्बन्धाद्राजयक्ष्मनिदानमुच्यते । आयतनानीति कारणानि; संख्येयसाहसादिनिर्द्देशादेव संख्यायां लब्धायां 'चत्वारि' इति पुनर्वचनं साहसादीनामवान्तर-भेदबाहुल्यादिभेदेऽप्येकजातीयताप्रतिपादनार्थम् ॥ १।२ ॥

महता वा धनुषा व्यायच्छति, जल्पति चाप्यतिमात्रम्, अतिमात्रं वा भारमुद्वहति, अप्सु वा प्लवते चातिदूरम्, उत्सादनपदाघातने वातिप्रगाढ़मुपसेवते अतिविप्रकृष्टं वाध्वानं, द्रुतमभिपतति, अभिहन्यते वान्यद्वा किञ्चिदेवंविधं विषममतिमात्रं वा व्यायामजातमारभते, तस्यातिमात्रेण कर्म्मणोरः क्षण्यते। तस्योरः क्षतमुपप्लवते वायुः। स तत्रावस्थितः श्लेष्माणमुरःस्थम् उपसंगृह्य पित्तञ्च दूषयन् * विहरत्यूर्द्ध्वमधश्चितर्य्यक् च।

तस्य योऽंशः शरीरसन्धीन् आविशति तेनास्य जृम्भाङ्गमर्द्दौ ज्वरश्चोपजायते। यस्त्वामाशयमभ्युपैति तेनास्य च वर्च्चो

पुरुषेण सह युद्धं करोति। अप्सु अतिदूरं प्लवते सन्तरति स्रोतोऽभिमुखं वेति वाच्यम्। उत्सादनमुद्वर्त्तनं, पदाघातनं पद्भ्यामाहननम्, अतिप्रगाढ़म् अतिशयमतिप्रकृष्टं वा यथा स्यात् तथा सेवते यः। यो वाध्वानं पन्थानं वातिप्रगाढ़मतिप्रकृष्टं वा सेवते। यो वा द्रुतमभिपतति विषमोच्चतः। यो वाभिहन्यते शिलाकाष्ठाश्मादिभिः। अन्यद्वा तूर्णं विषमनृत्यादिकम्, तस्य निरुक्तविषमव्यायामजातं कुर्व्वतः तेनातिमात्रेण व्यायामरूपेण कर्म्मणा उरः क्षण्यते वक्षःक्षतं भवति। तस्योरः क्षतं क्षतं वक्षो वायुस्तद्व्यायामतो वृद्धो वायुरुपप्लवते उपगच्छति। स इति व्यायामकुपितो वायुस्तत्र क्षतवक्षसि उरःस्थं श्लेष्माणं पित्तञ्चोपसंगृह्य दूषयन् ऊर्द्ध्वाधस्तिर्य्यग् विहरति। इति त्रिदोषकोपः ख्यापितः।

तस्येत्यादि। तस्येति पित्तश्लेष्मसहितस्य वातस्य योऽंशो यो भाग इत्यर्थात् त्रयाणां दोषाणां मिलितानां यो भागः शरीरसन्धीन् सर्व्वान् एवाविशति बहुवचनादूर्द्ध्वाधस्तिर्य्यग्गमनाच्च। तेन मिलितत्रिदोषीयांशेन जृम्भाङ्गमर्द्दज्वरा भवन्ति वातप्राबल्यात्। तत्र जृम्भा हनुसन्धिस्थेनांशेन। अङ्गमर्द्दज्वरौ सर्व्वसन्धिस्थेनांशेन। यस्त्वामाशयमित्युत्तरग्रन्थं, वक्ष्यते हि

चक्रपाणिः—पदाघातनं पद्भ्यामुद्वर्त्तनम्; अतिप्रकृष्टमित्यति दूरम्। उरः क्षतमुपप्लवते प्राप्नोतीत्यर्थः; उरःस्थमिति स्वभावादेवोरःस्थम्; उरस्था इत्युरोगता हृच्छूलादयः;

* उपसंसृज्य शोषयन् इति पाठश्चक्रसम्मतः।

म्रियते। यस्तु हृदयमाविशति तेन रोगा भवन्त्युरस्याः। यो रसनां तेनास्यारोचकश्च। यः कण्ठमभिप्रपद्यते कण्ठस्तेनोद्ध्वंसते स्वरश्चावसीदति। यः प्राणवहानि स्रोतांस्यन्वेति तेन श्वासः प्रतिश्यायश्च जायते। यः शिरस्यवतिष्ठते शिरस्तेनोपहन्यते। ततः क्षणनाच्चैवोरसो विषमगतित्वाच्च वायोः कण्ठस्य चोद्ध्वंसनात् कासः सततमस्य संजायते। स कासप्रसङ्गादुरसि क्षते सशोणितं निष्ठीवति शोणितगमनाच्चास्य दौर्गन्ध्यमुपजायते।

एवमेते साहसप्रभवाः साहसिकमुपद्रवाः स्पृशन्ति, ततः स

चिकित्सिते, वर्चोभेदं गुदे स्थित इति। उरस्या इति वक्षोरुजा बह्वः। वक्ष्यते चोरःस्थश्चोरसो रुजमिति। अरोचकः कण्ठहृदयस्थदोषदुष्टेर्भवतीति हृदयगतांशेनापि अरोचकश्च। कण्ठमभिप्रपद्यते योऽंशः कण्ठस्तेन कण्ठस्थेन त्रिदोषांशेन उद्ध्वंसते उत्कासेन युज्यते। स्वरश्चावसीदति स्वरभङ्गो भवति अरोचकश्च भवति चकारात्। प्राणवहस्रोतःस्थेन तद्दोषांशेन श्वासः प्रतिश्यायश्च भवति। श्वासप्रतिश्याययोः सम्प्राप्तौ प्राणवहस्रोतोगतदोषजन्यत्वेनोक्तत्वात्। शिर उपहन्यते शिरःशूलं भवति। क्षणनादिति उरसि क्षतकरणात् तत्रस्थवायोश्च विषमगतित्वाच्च कण्ठस्य चोद्ध्वंसनाच्च प्राक् कासात् गलकण्डूयनाकरणात् कासः संजायते। स पुरुषः पुनस्तत्कासप्रसङ्गात् पूर्व्वं क्षते वक्षसि पुनःक्षते सति शोणितं निष्ठीवति मुखेन उद्गिरति। इत्येवंदिशा सर्व्वस्मिन्नेव व्याधौ लिङ्गोत्पत्तौ दोषांशप्रवेशो व्याख्यातव्यः। तथाच—ये ये रोगा यद्व्याधिलिङ्गतया निर्दिश्यन्ते तेषां तेषां व्याधीनां सम्प्राप्तौ दोषस्य यद्यत् स्थानसंश्रयदूष्यसंयोगादयो दृश्यन्ते तद्व्याध्यारम्भकतद्दोषांशस्य तत्तत्स्थानसंश्रयदूष्यसंयोगादिवशात् ते रोगास्तद्व्याधेर्लिङ्गरूपेण भवन्तीति बोध्यम्।

एवमेते इति। जृम्भाङ्गमर्द्दौ ज्वरो वर्चोभेदो वक्षोरुक् अरोचकः कण्ठोद्ध्वंसः स्वरभङ्गः श्वासः प्रतिश्यायः शिरःशूलं कासो रक्तनिष्ठीवनमित्येते

आमाशयगतत्वेन चोरस्यरोगकरणादुरसोऽप्यामाशयप्रत्यासन्नत्वमुक्तम्; बलेन सम्यगाधीयते

उपशोषणैरेतैरुपद्रुतः शनैः शनैरेवोपशुष्यति। तस्मात् पुरुषो मतिमान् बलमात्मनः समीक्ष्य तदनुरूपाणि सर्व्वकर्म्माणि आरभेत कर्त्तुम्। बलसमाधानं हि शरीरम्, शरीरमूलश्च पुरुष इति ॥ ३ ॥

त्रयोदशोपद्रवाः साहसप्रभवाः साहसिकं पुरुषं स्पृशन्ति। नन्वेते साहसप्रभवा उपद्रवाः किं समुदाय एव शोष उच्यते, इत्यत आह—ततः स इत्यादि। ततः साहसिकोपद्रवजन्मानन्तरं स साहसिकोपद्रववान् पुरुष एतैरुक्तैर्जृम्भाङ्गमर्द्दज्वरादिभिः साहसिकोपद्रवैरुपशोषणैः शरीरशोषकरैरुपद्रुतः पीड़ितः सन् शनैः शनैरुपशुष्यति शरीरशोषमापद्यते। एवमत ऊर्द्ध्वं वक्ष्यमाणप्रकारेण वेगसन्धारणक्षयविषमाशनोत्थशिरःशूलादिपार्श्वरुजादिशिरःशूलादिभिः उपशोषणै रसादिदेहधातुशोषात् शुष्यति। इत्येकादशरूपवान् राजयक्ष्मा सम्पूर्णबलत्रिदोषतः स्यात्। दोषबलानुरूपेणैव व्याधिषु लिङ्गाधिक्याल्पत्वसम्भवात् साहसादिचतुःकारणतस्त्वेकविधैकादशादिरूपसद्भावाच्चात्र स्वयमेव पूर्णबलदोषाभिप्रायेण शिरसः परिपूर्णत्वं कासः श्वासः स्वरभेदः श्लेष्मणश्छर्द्दनं शोणितनिष्ठीवनं पार्श्वसंरोजनमंसावमर्द्दो ज्वरोऽतिसारोऽरोचकश्चेत्येतानि वक्ष्यन्ते। चिकित्सिते तु पूर्णमध्यावरबलदोषाभिप्रायेणैकादश षट् त्रीणि च रूपाणि वक्ष्यन्ते; तद् यथा—कासोऽंसतापो वैस्वर्य्यं ज्वरः पार्श्वशिरोरुजा। छर्द्दनं रक्तकफयोः श्वासो वर्च्चोगदोऽरुचिः। रूपाण्येकादशैतानि यक्ष्मिणः षडिमानि तु। कासो ज्वरः पार्श्वशूलं स्वरवर्च्चोगदारुचिः। सर्व्वैरर्द्धैस्त्रिभिर्वापि लिङ्गैर्मांसबलक्षये। युक्तो वर्ज्ज्यश्चिकित्स्यस्तु सर्व्वरूपोऽप्यतोऽन्यथा। इत्यादि। सुश्रुतेऽपि—"भक्तद्वेषो ज्वरः श्वासः कासः शोणितदर्शनम्। स्वरभेदश्च जायन्ते षड्रूपे राजयक्ष्मणि। स्वरभेदोऽनिलाच्छूलं सङ्कोचश्चांसपार्श्वयोः। ज्वरो दाहोऽतिसारश्च पित्ताद् रक्तस्य चागमः। शिरसः परिपूर्णत्वमभक्तच्छन्द एव च। कासः कण्ठस्य चोद्ध्वंसो विज्ञेयः कफकोपतः। एकादशभिरेतैर्वा षड्भिर्वापि समन्वितम्। कासातीसारपार्श्वार्त्तिस्वरभेदारुचिज्वरैः। त्रिभिर्वा पीड़ितं लिङ्गैः कासश्वासासृगामयैः। जह्यात् शोषार्द्दितं जन्तुमिच्छन् सुविपुलं यशः ॥" इति। साहसिककर्म्मभिरेवं दोषात्

धार्य्यत इति बलसमाधानं शरीरम्; शरीरमूलश्च पुरुष इति संयोगपुरुष इत्यर्थः ॥ ३ ॥

भवति चात्र।

साहसं वर्ज्जयेत् कर्म्म रक्षन् जीवितमात्मनः।
जीवन् हि पुरुषस्त्विष्टं कर्म्मणः फलमश्नुते॥ ४॥

अथ सन्धारणं शोषस्यायतनमिति यदुक्तं तदनुव्याख्यास्यामः। यदा पुरुषो राजसमीपे भर्त्तुः समीपे वा गुरोर्वा पादमूलेऽन्यतमं * सतां वा समाजं स्त्रीमध्यं वानुप्रविश्य, यानैः वाप्युच्चावचैर्गच्छन् भयात् प्रसङ्गात् ह्रीमत्त्वाद् घृणित्वाद्

तद्वर्ज्जनमुपदिशति तस्मादित्यादि। तस्मादुक्तरूपेण साहसिककर्म्म, जृम्भाङ्गमर्द्दज्वरादीनां देहोपशोषकराणां व्याधीनामुत्पत्तिहेतुत्वात्। तदनुरूपाणीति बलानुरूपाणि न तु बलातिक्रमकराणि। ननु कुतो बलानुरूपाणीत्यत आह— बलसमाधानं हि शरीरमिति बलेन सम्यगाधीयते आधार्य्यते यत् तत् तथा। ननु कुतः शरीराधारणं बलेनेष्टमित्यत आह—शरीरमूलश्चेत्यादि। पुरुष इति राशिपुरुषो न त्वात्ममात्रम्। राशिपुरुषस्य हि शरीरं मूलं न त्वात्मनः। शरीरञ्च विना न राशिपुरुषस्थितिः शरीराभावे मरणप्रसङ्गात्॥ ३॥

गङ्गाधरः—ननु बलानुरूपाणि कर्म्माण्यारभमाणानां साहसिककर्म्माणि किं न कार्य्याणि कार्य्याणि वेत्यत आह—भवतीत्यादि। साहसं वर्ज्जयेदित्यादि। ननु कुतो जीवितं रक्ष्यं मृत्वापि पुनर्जनिष्यते जातोऽपि पुनर्मरिष्यतीत्येवं चक्रवद्भ्रमणं स्वाभाविकम् एवेत्यत आह— जीवन्नित्यादि। मृतो हि पुरुषोऽस्मिन् लोके कृतकर्म्मणः फलमुपभुङ्क्ते जीवंस्तु पुरुषोऽस्मिन् लोके कर्म्म कुरुते तत्फलञ्चाश्नुते इति जीवनस्य प्राधान्यं बोध्यम्॥ ४॥

गङ्गाधरः—अथक्रमप्राप्तमुक्तं सन्धारणं शोषायतनं व्याचष्टे—अथ सन्धारणमित्यादि। तत्र साहसमित्यादौ यत् तत्रेतिपदं तस्यानेनान्वयः। पुरुष इति राशिपुरुषः। भर्त्तुरिति दासादिर्भतिपालकस्य समीपे दासादिः पुरुषः, अन्यतममेषामन्यतमं समाजं सतां वा समाजं प्रविश्य, भयादितः

चक्रपाणिः—समाजमिति सभाम्; उच्चावचैरिति उच्चनीचैः; अभियानिति गच्छन्;

* अन्यतममित्यत्र वृत्तसभमिति द्वितीयः पाठः।

वा निरुणद्ध्यागतान् वातमूत्रपुरीषवेगान्, ततस्तस्य सन्धारणाद् वायुः प्रकोपमापद्यते। स प्रकुपितः पित्त-श्लेष्माणौ समुदीर्य्योर्द्ध्वमधस्तिर्य्यक् च विहरति। ततश्च अंशविशेषेण पूर्व्ववत् शरीरावयवविशेषं प्रविश्य * शूलं जनयति, भिनत्ति पुरीषमुच्छोषयति वा पार्श्वे चातिरुजति अंसाववमृद्नाति कण्ठमुरश्चावधमति शिरश्चोपहन्ति कासं श्वासं ज्वरं स्वरभेदं प्रतिश्यायञ्चोपजनयति। ततः स उपशोषणैः एतैरुपद्रवैरुपद्रुतः शनैः शनैरुपशुष्यति। तस्मात् पुरुषो मतिमानात्मनः शरीरेष्वेवं योगक्षेमकरेषु प्रयतेत विशेषेण। शरीरं ह्यस्य मूलम्, शरीरमूलश्च पुरुषो भवतीति ॥ ५ ॥

उच्चावचैर्यानैर्वा गच्छन् पुरुषो भयादितो यदाभ्यागतान् वातादिवेगान् निरुणद्धीत्यन्वयः। प्रसङ्गादिति राजादिभिः समागमात्। तत इत्यादि। भिनत्तीति पित्तसम्बन्धाधिक्येन रौक्ष्यगुणेन कुपितो वायुश्चलत्वेन पुरीषं भिनत्ति। अल्पपित्तसम्बन्धे तथा रुक्षत्वगुणेन कुपितो वायुः पुरीषमुच्छोषयति। कण्ठावधमनं कण्ठोद्ध्वंसः। उरोऽवधमनं वक्षोरुजा। शिरउपघातः शिरोरुजा शिरसि कफपूर्णत्वेन। ततः स इत्यादि सर्व्वं पूर्व्ववद्व्याख्येयम्। योगक्षेमकरेषु यैः कर्म्मभिः शरीरात्मयोगः क्रियते तत्सर्व्वेषु कर्म्मसु आत्मनः शरीरेष्वेव योगकरेषु प्रयतेत इत्यर्थः ॥ ५ ॥

भयादित्यादि राजसमीपादिषु यथायोग्यतया बोद्धव्यम्। योगेन ये क्षेमकरास्ते योगक्षेमकराः, ते चेह मूत्रपुरीषाविधारणादयः; विशेषेणेतिवचनात् शरीरेष्वेव विशेषेण यत्नं कुर्य्यात् मानसयोगक्षेमापेक्षयेति दर्शयति; आत्मन इति पदं परशरीरयोगक्षेमापेक्षया स्वशरीरयोगक्षेमकरणस्योपादेयतादर्शनार्थम्। अथ कथं मानसयोगक्षेमापेक्षया तथा परशरीरयोगक्षेमापेक्षया स्वशरीरयोगक्षेमः श्रेष्ठ इत्याह—शरीरमित्यादि। स्वशरीरे ह्युपहते परशरीरोपकारस्तथाध्यात्मिकशुभचिन्ता च व्याकुला भवतीति भावः; किंवा योगाः शरीरस्य बलवर्णाद्युत्कर्षयोगाः, क्षेमाश्चानागताबाधप्रतिषेधास्तेषु; ननु यद्येवम् आध्यात्मिकेऽपि भावे शरीरं मूलम्, तत् किं पुरुषोऽप्रधानमेव; नेत्याह—शरीरमूलश्च पुरुष

* पित्तश्लेष्माणावित्यादि—प्रविश्येत्यन्तः पाठो ग्रन्थान्तरेषु न दृश्यते।

भवति चात्र।

सर्व्वमन्यत् परित्यज्य शरीरमनुपालयेत्।
तदभावे हि भावानां सर्व्वाभावः शरीरिणाम्॥ ६ ॥

क्षयः शोषस्यायतनमिति यदुक्तं तदनुव्याख्यास्यामः। यदा पुरुषोऽतिमात्रं शोकचिन्तापरिगतहृदयो भवतीर्ष्योत्कण्ठा-भयक्रोधादिभिर्वा समाविश्यते, कृशो वा सन् रुक्षान्न-पानसेवी भवति, दुर्ब्बलप्रकृतिरनाहारो वाप्यल्पाहारो वा भवति, तदा तस्य हृदयस्थायी रसः क्षयमुपैति, स तस्योप-क्षयात् शोषं प्राप्नोति, अप्रतीकाराच्चानुबध्यते यक्ष्मणा यथोपदेक्ष्यमाणेन।

गङ्गाधरः—भवति चात्रेत्यादि। सर्व्वमन्यदिति आत्मशरीरयोगकरणे क्षेमं यद् यत् कर्म्म तत् सर्व्वम्॥ ६ ॥

गङ्गाधरः—क्रमिकत्वात् क्षयस्य शोषायतनत्वं विवरीतुमाह— क्षय इत्यादि। यदेत्यादि। हृदयं मनस्तात्स्थ्यात्। दुर्ब्बलप्रकृतिः आ जन्मन एव दुर्ब्बल-स्वभावः। स चेदनाहारोऽल्पाहारो वा भवति। स पुरुषस्तस्य हृदयस्थरसस्य कारणस्य उपक्षयादुत्तरोत्तरधातुशोणितादीनां कार्य्याणां पुष्ट्यभावात् शोषं देहशोषं प्राप्नोति। एतेनानुलोमधातुशोषः प्रदर्शितः। अप्रतीकाराच्चानु-बध्यते यक्ष्मणा यथोपदेक्ष्यमाणेनेतिवचनेन। साहसादिजनितैर्ज्जृम्भादिभिः शरीरोपशोषणैर्विना शरीरशोषे शोषमात्रसंज्ञा न तु राजयक्ष्मा न वा तत्-पर्य्यायश्च शोष इति ख्यापितम्।

इति। शरीरस्यादावुत्पत्तौ धर्म्माधर्म्मसहायो भोक्ता सुखदुःखानामात्मा मूलं कारणमित्यर्थः; 'मूल'शब्दश्चायं भावप्रधानः; तेन शरीरमूलत्वं यस्यात्मनः 'शरीरमूलः' इति पुंलिङ्गनिर्देश उपपन्नः। सर्व्वाभाव इति धर्म्मादिचतुर्व्वर्गाभाव इत्यर्थः॥ ४—६ ॥

चक्रपाणिः—हृदयस्थायी रस इति धातुस्वरूपोऽन्नरसपोषक इत्यर्थः; अन्ये तु, हृदयस्थायी रस इत्योजो ब्रुवते; यथोपदेक्ष्यमाणरूपेणेति "सन्धयः शिथिलीभवन्ति" इत्यादिग्रन्थवक्ष्यमाण-

यदा वा पुरुषोऽतिप्रहर्षादतिप्रसक्तभावात् स्त्रीष्वतिप्रयोग*मारभते, तस्यातिप्रयोगाद्रेतः क्षयमेति। क्षयमपि चोपगच्छति रेतसि मनः स्त्रीभ्यो नैवास्य निवर्त्तते, † तस्य चातिप्रणीतसङ्कल्पस्य मैथुनमापद्यमानस्य न शुक्रं प्रवर्त्तते उपक्षीणरेतस्त्वात्। अथास्य वायुर्व्यायच्छमानस्यैव धमनीरनुप्रविश्य शोणितवाहिनीस्ताभ्यः शोणितं प्रच्यावयति। तत् शुक्रक्षयादस्य पुनः शुक्रमार्गेण शोणितं प्रवर्त्तते वातानुसृतलिङ्गम्।

प्रतिलोमतः क्षयमाह—यदा वेत्यादि। प्रसक्तभावः प्रेमातिशयेनात्यासक्तचित्तः सन् अतिप्रयोगं मैथुनमतिशयेनारभते। अस्य क्षीणशुक्रस्य पुंसः स्त्रीभ्यो मैथने मनो न निवर्त्ततेऽर्थात् पुनरपि स्त्रीषु मैथुनाय प्रवर्त्तते। तस्य क्षीणशुक्रपुरुषस्यातिप्रणीतसङ्कल्पस्य स्त्रीष्वतिप्रणयशीलतया सङ्कल्पो मैथुनाय मनःप्रवर्त्तनं यस्य तस्य तथा। तस्य चातीत्यादि। तथाभूतस्य मैथुनमापद्यमानस्य क्रियमाणमैथुनस्य शुक्रच्यवनकाले शुक्रं न प्रवर्त्तते न क्षरति उपक्षीणरेतस्त्वात्। ननु तदा किं भवतीत्यत आह—अथास्येत्यादि। अथ क्षीणशुक्रस्य क्रियमाणमैथुनस्य शुक्रक्षयात् शुक्रस्याप्रवर्त्तनानन्तरं यस्य क्षीणशुक्रस्य मैथुनं कुर्व्वतः पुरुषस्य व्यायच्छमानस्य शुक्रच्यवनार्थं मैथुनकरणात्मकव्यायामं कुर्व्वतो वायुः प्रवृद्धः शोणितवाहिनीर्धमनीरनुप्रविश्य ताभ्यः शोणितवाहिनीभ्यो धमनीभ्यः शोणितं प्रच्यावयति। नन्वेवं प्रच्युतं शोणितं किं लिङ्गमूले वस्तौ वा तिष्ठति वहिश्च्यवते वा इत्यत आह—तच्छुक्रक्षयादिति। तत् प्रच्युतं शोणितं शुक्रक्षयाद्धेतोः शुक्रं विना शुक्रमार्गेण शुक्रक्षरणस्रोतसा प्रवर्त्तते च्यवते, तच्च च्युतं शोणितं वातानुसृतलिङ्गं वातानुगतचिह्नं रुक्षादिलक्षणेन। सम्प्रति शोषेषु क्षयकारणेषु प्रायः शोषजनकत्वेन प्रधानं शुक्रक्षयं शोषकारणं 'यदा वा' इत्यादिना प्राह ; अतिप्रणीतसङ्कल्पस्येति अतिमहता प्रयत्नेन कृतध्वजोच्छ्रायस्य ; व्यायच्छमानस्येति व्यायाममाचरतः ; वातानुसृतलिङ्गमिति वातलिङ्गयुक्तं दुष्टवातलिङ्गयुक्तमिति

---

* प्रसङ्गमिति वा पाठः।　　　　† इतः परम् अतिवर्त्तते इत्यधिकः पाठः क्वचित्।

अथास्य शुक्रक्षयात् शोणितप्रवर्त्तमानत्वाच्च सन्धयः शिथिलीभवन्ति, रौक्ष्यमपि चास्योपजायते, भूयः शरीरं दौर्ब्बल्यमाविशतीति वायुः प्रकोपमापद्यते। स प्रकुपितोऽरसिकं * शरीरमनुसर्पन् उदीर्य्य † श्लेष्मपित्ते, परिशोषयति मांस-शोणिते, प्रच्यावयति श्लेष्मपित्ते, संरुजति पार्श्वे, चावगृह्णाति अंसौ, कण्ठमुद्ध्वंसयति, शिरः श्लेष्माणमुपक्लिश्य परिपूरयति श्लेष्मणा, सन्धींश्च प्रपीड़यन् करोत्यङ्गमर्दारोचकाविपाकान्। पित्तश्लेष्मोत्क्लेशात् प्रतिलोमगत्वाच्च वायुर्ज्वरं कासं श्वासं स्वरभेदं प्रतिश्यायञ्चोपजनयति। ‡ स कासप्रसङ्गादुरसि क्षते शोणितं निष्ठीवति शोणितगमनाच्चास्य दौर्ब्बल्यमुपजायते। ततः सोऽप्युपशोषणैरेतैरुपद्रवैरुपद्रुतः शनैः शनैः उपशुष्यति।

रूपम्। अथास्येत्यादिना द्विविधक्षीणस्य रसक्षय-शुक्रक्षयाभ्यां राज-यक्ष्मणः सम्प्राप्तिमाह—अथास्येत्यादि। अथ अतिमात्रशोकचिन्तादिभिः हृदयस्थरसक्षये तथातिमहर्षादित्याद्युक्तरूपेणातिमैथुनात् शुक्रक्षये वा तत्-क्षयद्वयस्याप्रतिकारादनन्तरमस्य रसक्षयजक्षीणरक्तादिधातुकस्य शुक्रक्षयज-क्षीणरसरक्तादिधातुकस्य वा पुरुषस्य शुक्रक्षयात्। अतिमैथुनेन क्षीणशुक्रस्य पुनर्मैथुनमापद्यमानस्य शुक्रक्षयादेव शुक्रच्यवनं न भूत्वा शोणितप्रवर्त्तमानत्वाच्च, सन्धयः शरीरस्य सर्व्वसन्धयः, भूयो बाहुल्येन। स प्रकुपित इत्यादि। परि-शोषयतीत्यादि। मांसशोणितशोषः श्लेष्मपित्तच्यवनश्च लिङ्गतया न गण्यं तत्कार्य्याणामेव पार्श्वरुजादीनां तल्लिङ्गत्वादतः पार्श्वरुजा अंसग्रहः कण्ठोद्-ध्वंसः शिरसः परिपूर्णत्वेन शूलं सन्धिप्रपीड़नाङ्गमर्द अरोचकोऽविपाकः

यावत्; शरीरं कर्म्मभूतं दौर्ब्बल्यं कर्त्तृभूतमाविशतीत्यादि योजना; वशिकमिति शून्यं शुक्र-शोणितक्षयात् कृतमित्यर्थः; एतच्च हेतुगर्भविशेषणम्; एतेन, यस्माद्वशिकं शरीरम्, तस्मात्

* वशिकमित्यन्यः पाठः। † 'उदीर्य्य श्लेष्मपित्ते' इति क्वचित् न दृश्यते।

‡ इतः परं 'स इत्यादि—उपजायते' इत्यन्तः केषुचित् ग्रन्थान्तरेषु न दृश्यते।

तस्मात् पुरुषो मतिमानात्मनः शरीरमनुरक्षन् शुक्रमनुरक्षेत् । परा ह्येषा फलनिर्वृत्तिराहारस्येति ॥ ७ ॥

भवति चात्र ।

आहारस्य परं धाम शुक्रं तद् रक्ष्यमात्मनः ।
क्षयो ह्यस्य बहून् रोगान् मरणं वा नियच्छति ॥ ८ ॥

विषमाशनं शोषस्यायतनमिति यदुक्तं तदनुव्याख्यास्यामः । यदा पुरुषः पानाशनभक्ष्यलेह्योपयोगान् प्रकृति-करणराशिसंयोगदेशकालोपयोगसंस्थोपशयविषमान् उपसेवते, तदा तस्य तेभ्यो वातपित्तश्लेष्माणो वैषम्यमापद्यन्ते । ते विषमाः शरीरमनुसृत्य यदा स्रोतसां मुखानि प्रतिवार्य्यावतिष्ठन्ते, तदा जन्तुर्यद्यदाहारजातमाहरति तत्तन्मूत्रपुरीषमेवोपजायते भूयिष्ठं नान्यस्तथा शरीरधातुः, स पुरीषोप-

ज्वरः कासः श्वासः स्वरभङ्गः प्रतिश्यायश्चेत्येतान्येकादश रूपाणि क्षयप्रभवाणि । परा ह्येषेत्यादि । एषा शुक्ररूपा । परं धामेति चरमस्थानम् ॥ ७।८ ॥

गङ्गाधरः—क्रमिकत्वाद्विषमाशनस्य शोषायतनत्वं विवरीतुमाह—विषमाशनमित्यादि । यदेत्यादि । पानं पेयद्रव्यम्, अशनमन्नादिरूपमुपकार्य्यद्रव्यम्, भक्ष्यमन्नादुत्रपकरणरूपपूपपिष्टकादि द्रव्यम्, लेह्यं घनक्षीरादिकम, तेषामुपयोगान् पानादिरूपे प्रयोगान् प्रकृत्यादिभिराहारविधिविशेषायतनैर्विषमान् यथावद्रूपान् । वातपित्तश्लेष्माण इत्यनेन युगपत्त्रिदोषकोपो विषमाशनेन ख्यापितः । वैषम्यमिति वृद्धिम् । ते विषमा इति । ते वातपित्तकफा वृद्धाः स्रोतसां रसरक्तादिधातुवहानामभिमुखानि भूयिष्ठं मूत्रपुरीषं रसश्चात्यल्पः नान्यः शोणितादिः

अनुसर्पतीत्यर्थः ; परा फलनिर्वृत्तिरिति श्रेष्ठा आहारफलसम्पत्तिरित्यर्थः । परं धामोत्कृष्टसारम् ; उत्कृष्टत्वञ्च शुक्रस्यातिप्रसादरूपत्वात् ; एतच्च शोषकारणेषु केवलशुक्रक्षयोपसंहरणं प्राधान्यादस्य शोषहेतुभावादिति बोद्धव्यम् ; रूक्षाद्यन्नपानसेवाजनितोऽपि रक्तादिक्षयो राजयक्ष्मकरणत्वेनोक्तः ॥ ७।८ ॥

चक्रपाणिः—प्रकृतिकरणादयो रसविमाने प्रपञ्चनीयाः ; अत्र च 'उपशय'शब्देन, उपयोक्ता यो रसविमाने वक्तव्यः, स एव गृह्यते ; यतः, तत्रोक्तम्—"उपयोक्ता पुनर्यस्तमाहारमाहरति,

ष्टम्भाद् वर्त्तयति। तस्मात् शुष्यतो विशेषेण पुरीषमनुरक्ष्यं तथा सर्व्वेषामतिकृशदुर्ब्बलानाम्। तस्यानाप्याय्यमानस्य विषमाशनोपचितदोषाः पृथक् पृथगुपद्रवैर्युञ्जन्तो भूयः शरीरमुपशोषयन्ति ॥ ९ ॥

तत्र वातो ह्यस्य शिरःशूलम् * अङ्गमर्द्दं कण्ठोद्ध्वंसनं पार्श्वसंरोजनमंसावमर्द्दं स्वरभेदं प्रतिश्यायञ्च उपजनयति, पित्तं पुनर्ज्वरमतिसारमन्तर्द्दाहञ्च, श्लेष्मा तु प्रतिश्यायं शिरसो गुरुत्वमरोचकं कासञ्च। स कासप्रसङ्गादुरसि क्षते शोणितं

उपजायते, तस्मात् स पुरुषः पुरीषोपष्टम्भात् वर्त्तयति वर्त्तते जीवन्नेव तस्मात् शुष्यत इति। विषमाशनात् शुष्यत इति अक्षीणबलमांसपुरुषस्य विषमाशनज-शोषे पुरीषरक्षणावश्यत्वं दर्शयित्वा स्वभावतो वा रोगान्तरेण वा कृशदुर्ब्बल-स्यापि पुरीषरक्षणावश्यत्वं दर्शयति—तथा सर्व्वेषामित्यादि।

विषमाशनतः किं स्यादित्यत आह—तस्येत्यादि। तस्य विषममश्नतः पुरुषस्य प्रकुपितदोषत्रयवृतरसादिवहस्रोतोमुखत्वेन रसादिधातुपुष्ट्यभावेन अनाप्याय्यमानस्य अपुष्टशरीरस्य विषमाशनोपचितदोषा वातपित्तकफाः पृथक् पृथक् प्रत्येकं न मिलित्वा स्वकृतैरुपद्रवैर्लिङ्गैः शूलाङ्गमर्द्दादिभिरत उर्द्ध्वं वक्ष्यमाणैः ॥ ९ ॥

गङ्गाधरः—पृथक् पृथगुपद्रवानाह—तत्रेत्यादि। तत्र विषमाशनोपचितेषु वातादिषु मध्ये वातः शिरःशूलञ्च अङ्गमर्द्दञ्च कण्ठोद्ध्वंसनञ्च पार्श्वसंरोजनञ्च अंसावमर्द्दञ्च स्वरभेदञ्च प्रतिश्यायञ्च जनयति। प्रतिश्यायस्य कफकार्य्य-त्वेन वक्ष्यमाणत्वाद् वातकफात्मकत्वेन एक एव गण्यः। पित्तं पुनरित्यत्र तत्रेत्यन्वयः। शिरःशूलस्य वातकार्य्यत्वात् शिरसो गुरुत्वस्य कफकार्य्यत्वादेक एव गण्यः शिरःपीड़नसामान्यात्। ननु रुधिरष्ठीवनमत्र कासप्रसङ्गादुक्तं

यदायत्तमोक्षसात्म्यम्” इति; अनेन हि तत्रोपयोक्तृपरीक्षया सात्म्यमेव परीक्ष्यत इत्युक्तम्; अयनमुखानीति गतिद्वाराणि; अयतिर्हि गतिः; परिवार्य्येत्यवरुध्य; तथा सर्व्वेषामत्यर्थं-

* शिरःशूलमित्यत्र शूलमिति वा पाठः।

निष्ठीवति, शोणितगमनाच्चास्य दौर्ब्बल्यमुपजायते। एवमेते विषमाशनोपचितास्त्रयो दोषा राजयक्ष्माणमभिनिर्व्वर्त्तयन्ति। स तैरुपशोषणैरुपद्रवैरुपद्रुतः शनैः शनैः शुष्यति। तस्मात् पुरुषो मतिमान् प्रकृतिकरणराशिसंयोगदेशकालोपयोगसंस्थोपशयात् अविषममाहारमाहरेदिति ॥ १० ॥

भवति चात्र।

हिताशी स्यान्मिताशी स्यात् कालभोजी जितेन्द्रियः।
पश्यन् रोगान् बहून् कष्टान् बुद्धिमान् विषमाशनात् ॥११॥

एवमेतैश्चतुर्भिः शोषस्यायतनैरुपसेवितैः जन्तोर्वातपित्त-

चिकित्सिते पित्तकार्य्यमुक्तमिति स्ववचनविरोध इति चेन्न पित्तकार्य्यमेव रक्तनिष्ठीवनं तस्य प्रवृत्तिस्तु कासप्रसङ्गादिति बोध्यम्। एवं साहसादिजेषु शोषेषु दोषभेदेन लिङ्गानि व्याख्यातव्यानि। नन्वन्तर्दाहोऽतिसारश्चात्र पित्तकार्य्यतया पठितः चिकित्सिते तु न पठितः प्रसेकश्चाधिकः पठित इति स्ववचनविरोध इति चेन्न दोषाणां बलानुरूपाणि हि लिङ्गाधिक्यमध्यत्वाल्पत्वानि भवन्ति तस्मादत्राधिकबलदोषाभिप्रायेणाधिकलिङ्गानि व्याख्यातानि वस्तुतस्तु एकादशरूपतोऽल्पलिङ्गत्वे मध्यबलत्वमेकादशरूपप्रभृतिकाधिकरूपत्वे पूर्णबलत्वं षड्रूपन्यूनरूपत्वेऽल्पबलत्वमिति ख्यापनार्थमेकादशषट्त्रिरूपात्मकतया यक्ष्मा व्याख्यातः, न त्वेकादशरूपाधिकरूपव्यवच्छेदार्थमिति बोध्यम् ॥ १० ॥

गङ्गाधरः—भवति चेत्यादि। जितेन्द्रिय इति जितसत्त्वः ॥ ११ ॥

गङ्गाधरः—अथ साहसादि प्रत्येकहेतुतः शोषोत्पत्तिमुपदर्श्य अन्यहेतुतः शोषोत्पत्तिप्रतिषेधं दर्शयति। एवमेतैरित्यादि। एवमुक्तप्रकारेण एतैः साहससन्धारणक्षयविषमाशनैश्चतुर्भिरेकैकशो द्विशस्त्रिशः समस्तैश्च न तु समस्तैरेव नैकश एव न वा द्विश एव नैव च त्रिश एवेति, साहसादिप्रत्येकेन त्रिदोषकोपवचनात् व्यवायादिजशोषदर्शनाच्च।

कृशदुर्ब्बलानां पुरीषमनुरक्ष्यमिति योजना ; एवमेव चार्थं वक्ष्यति—"शोषी मुञ्चति गात्राणि पुरीषस्रंसनादति। सर्व्वधातुक्षयार्त्तस्य बलं तस्य हि विड्बलम् ॥" कासप्रसङ्गादिति कासानुसम्बन्धादित्यर्थः ॥ ९—११ ॥

श्लेष्माणः प्रकोपमापद्यन्ते। ते प्रकुपिता नानाविधोपद्रवैः

तत्र साहसादिषु चतुर्ष्वपि साहसादीनामेकैकस्य बहुप्रभेदात् तत्-प्रभेदादप्येकशो द्विशस्त्रिश इत्यादिरूपात् बलवद्विग्रहादिसाहसादितो वातपित्त-श्लेष्मकोपजो राजयक्ष्मा बोध्यः। एवमेव साहसादेरेकानेकोपसेवनेनाल्पमध्या-धिकबलवत्तया दोषकोपो भवति तथा चाल्पबलैर्दोषैस्त्रिचतुःपञ्चरूपो राजयक्ष्मा स्यात्। मध्यबलदोषैर्यथाबलं षट्सप्ताष्टनवदशान्यतमरूपो भवति। पूर्णबल-दोषैर्यथाबलमेकादशादिरूपो भवति। एतेन साहसाद्यन्तर्गतैर्व्रणोरःक्षतादिभिः हेतुभिः शोषो यैर्व्याख्यातस्तन्मतमसमग्रवचनान्निरस्तमपि चैतेषु चतुर्ष्वन्त-र्गतत्वात् अप्रतिषेधादनुमतम्, सुश्रुतेनाप्येतदभिप्रायेणाप्रतिषिध्य प्रोक्तम्। व्यवायशोकवार्द्धक्य-व्यायामाध्वोपसेवनात्। व्रणोरःक्षतपीड़ाभ्यां शोषानन्ये वदन्ति हि॥ व्यावायशोषी शुक्रस्य क्षयलिङ्गैरुपद्रुतः। पाण्डुदेहो यथापूर्व्वं क्षीयन्ते चास्य धातवः।१। प्रध्यानशीलः स्रस्ताङ्गः शोकशोष्यपि तादृशः। विना शुक्रक्षयकृतैर्विकारैरभिलक्षितः।२। जराशोषी कृशो मन्दः स्वल्पबुद्धि-बलेन्द्रियः। श्वसनोऽरुचिमान् भिन्न-कांस्यपात्रहतस्वरः। ष्ठीवति श्लेष्मणा हीनं तथैवारतिपीड़ितः। सम्प्रस्रुतास्यनासाक्षः शुष्करूक्षमलच्छविः।३। अध्वप्रशोषी स्रस्ताङ्गः सम्भृष्टपरुषच्छविः। प्रसुप्तगात्रावयवः शुष्कक्लोम-गलाननः।४। व्यायामशोषी भूयिष्ठमेभिरेव समन्वितः। लिङ्गैरुरःक्षतकृतैः संयुक्तश्च क्षतं विना।५। रक्तक्षयाद् वेदनाभिस्तथैवाहारयन्त्रणात्। व्रणि-तस्य भवेच्छोषः स चासाध्यतमो मतः।६। व्यायामभाराध्ययनैरभिघातातति-मैथुनैः। कर्म्मणा चाप्युरस्येन वक्षो यस्य विदारितम्। तस्योरसि क्षते रक्तं पूयः श्लेष्मा च गच्छति। कासमानश्छर्द्दयेच्च पीतरक्तसितारुणम्। सन्तप्तवक्षाः सोऽत्यर्थं दूयनात् परिताम्यति। दुर्गन्धवदनोच्छ्वासो भिन्नवर्णस्वरो नरः।७। इति। अत्र व्यावायशोषः शुक्रक्षयजः शोकशोषस्थाविर्य्यशोषौ तु तथा व्रण-शोषश्च रसक्षयजा इति क्षयजशोषेषु व्यवायशोकवार्द्धक्यव्रणशोषा लब्धा भवन्ति। व्यायामाध्वोरःक्षतजास्तु साहसजाः साहसजेषु लब्धाः अपरे च साहसादिजाः शोषास्तेषां मते न लभ्यन्ते इति न्यूनत्वात् तन्मतं हेयम्। एतेन तन्निरस्तं, यत् तूक्तव्यवायादिजाः सप्त शोषा न राजयक्ष्माणः केवलधातुशोष-मात्रतया व्याख्याय राजयक्ष्मत्वं तेषां न व्याचष्टे। केषाञ्चिदेव शोषो हि कारणैर्भेदमागतः। न तत्र दोषलिङ्गानां समस्तानां निपातनम्। क्षया एव

हि ते ज्ञेयाः प्रत्येकं धातुसंज्ञिताः । इति सुश्रुतवचनादित्येतद्व्याख्यातुः प्रमादाच्च तन्न ग्राह्यम् । सुश्रुतो हि स्वमते शोषं षड्रूपमेकादशरूपञ्च व्याख्यायानन्तरं तदसाध्यलक्षणमुक्त्वा—व्यावायशोकस्थाविर्य्ये-व्यायामाध्वोपसेवनात् । व्रणोरःक्षतपीड़ाभ्यां शोषानन्ये वदन्ति हि । इति वचनेन व्यवायादिजान् शोषान् निर्दिश्य तेषां शोषाणां परस्परं भेदविज्ञापनार्थं स्वस्वहेतुव्यवायादिजानि व्यवायशोषी शुक्रस्य क्षयलिङ्गैरुपद्रुत इत्यादीनि लक्षणान्युक्तवान्, न तु तत्र तत्र त्रिदोषाणां बलविशेषजानि त्र्यादिषड़ादेकादशादीनि लक्षणानि प्रतिपिद्धवान् । केषाञ्चिदेव शोषो हीत्यादिवचनेन पुनर्येषां केषाञ्चित् शोषाणां केवलं रसादिधातुक्षयहेतुव्यवायादिजनितानि लक्षणानि भवन्ति न तु दोषाणां समस्तलिङ्गानि, ते हि तत्तद्व्यवायादिमात्रहेतुजलक्षणैः भेदमात्रमापन्नाः शारीररसादिधातुशोषा दोषत्रयस्य समस्तलक्षणाभावात् प्रत्येकं धातुसंज्ञिताः क्षया एव ज्ञेयाः, रसक्षयरक्तक्षयेत्येवमादिसंज्ञाः क्षयरोगाः ज्ञेया न तु राजयक्ष्माण इति ज्ञापितवान् । शोषानन्यान् वदन्ति हीति पाठो हि न तत्र साधुश्च भवति, व्यवायशोषी शुक्रस्य क्षयलिङ्गैरुपद्रुत इत्यादिभिः वचनैः प्रत्येकं व्यवायादिहेतुजलक्षणोपदर्शनेनैव दोषलक्षणाभावेन राजयक्ष्मत्वनिरासे लब्धे तेषां संज्ञाकथनार्थं क्षया एव हि ते ज्ञेयाः प्रत्येकं धातुसंज्ञिता इत्येव वचनेन चरितत्वे केषाञ्चिदेव शोषो हीत्यादिवचनस्य वैयर्थ्यापत्तेः ।

वातपित्तश्लेष्माणः प्रकोपमापद्यन्ते इति एवमित्यनेनान्वयात् उक्तप्रकारेण साहसकर्म्मणा वायुः प्रकुपित उरःस्थश्लेष्माणं पित्तञ्चोदीरयेदिति साहसकर्म्मणा त्रिदोषप्रकोपः । तथा सन्धारणेन प्रकुपितोऽपि वायुः पित्तश्लेष्माणावुदीरयतीति सन्धारणेनापि त्रयो दोषाः कुप्यन्ति । एवं शोकादितो रसक्षयात् अतिव्यवायाच्च शुक्रक्षयात् प्रकुपितो वायुररसिकं शरीरम् अनुसर्पन् पित्तश्लेष्माणावुदीरयेदिति क्षयादपि त्रयो दोषाः कुप्यन्ति । एवं विषमाशनात् तु युगपदेव त्रयो दोषाः कुप्यन्ति इत्यर्थ । एतेन पृथक् द्वन्द्वदोषतो न राजयक्ष्मा भवतीति ख्यापितमेकैकदोषद्विदोषप्रकोपणानां राजयक्ष्मनिदानानामभावात् । सुश्रुतेनाप्युक्तम्—स व्यस्तैर्जायते दोषैरिति केचित् वदन्ति हि । एकादशानामेकस्मिन् सान्निध्यात् तन्त्रयुक्तितः ॥ क्रियाणाञ्चाविभागेन प्रागेवोत्पादनेन च । एक एव मतः शोषः सन्निपातात्मको ह्यतः । उद्रेकात् तत्र लिङ्गानि दोषाणां निपतन्ति हि ॥ क्षयाद् वेगप्रतीघाताद्

शरीरमुपशोषयन्ति। तं सर्व्वरोगाणां कष्टतमत्वात् राजयक्ष्माणमाचक्षते भिषजः। यस्माद्वा पूर्व्वमासीद् भगवतः सोमस्योडुराजस्य, तस्माद्राजयक्ष्मेति ॥ १२ ॥

तस्येमानि पूर्व्वरूपाणि भवन्ति। तद् यथा—प्रतिश्यायः क्षवथुरभीक्ष्णं श्लेष्मप्रसेको मुखमाधुर्य्यम् अनन्नाभिलाषः अन्नकाले चायासो दोषदर्शनञ्च अदोषेष्वल्प-

व्यायामाद् विषमाशनात्। जायते कुपितैर्दोषैर्व्याप्तदेहस्य देहिनः। कफप्रधानैः दोषैर्हि रुद्धेषु रसवर्त्मसु। अतिव्यवायिनो वापि क्षीणे रेतस्यनन्तराः। क्षीयन्ते धातवः सर्व्वे ततः शुष्यति मानवः। इति। नानाविधैरुपद्रवैरिति बहुभी रोगैः। सुश्रुतेऽप्युक्तम्। अनेकरोगानुगतो बहुरोगपुरोगमः। दुर्विज्ञेयो दुर्निवारः शोषो व्याधिर्महाबलः। इति। अत्र कफप्रधानत्रिदोषवचनं विषमाशनजे बोध्यं साहसादिजेषु साहसादितो वायुकोपाद्वह्निमान्द्येन कफपित्तवृद्धेः। वक्ष्यते च। विविधान्यन्नपानानि वैषम्येण समश्नताम्। जनयन्त्यामयान् घोरान् विषमा मारुतादयः।* स्रोतांसि रुधिरादीनां वैषम्याद् विषमं गताः। रुद्धा रोगाय कल्पन्ते पुष्यन्ति न च धातवः। इति। ते इत्यादि स्पष्टम्।

अथ शोषस्यास्य राजयक्ष्माख्यत्वे निरुक्तिमाह—तं सर्व्वरोगाणामित्यादि। यक्ष्मणां रोगाणां राजा इति राजदन्तादित्वात् पूर्व्वनिपाते रूपसिद्धिः। पक्षान्तरेणापि निरुक्तिमाह—यस्माद् वेत्यादि। सुश्रुतेनाप्येतन्मतं केषाञ्चिन्मततयोपन्यस्याप्रतिषेधादनुमतं ख्यापितम्, तद् यथा। राज्ञश्चन्द्रमसो यस्मादभूदेष किलामयः। तस्मात् तं राजयक्ष्मेति केचिदाहुर्मनीषिणः॥ इति। तेन राज्ञ उडुराजस्य सोमस्य रोगोऽग्रमासीदिति राजयक्ष्मा ॥ १२ ॥

गङ्गाधरः—अथास्य पूर्व्वरूपाण्याह—तस्येमानीत्यादि। तद्यथा प्रतिश्याय इत्यादि। अन्नकाले चायासः भोजनव्यापारे श्रमः। एवमन्नकाले भोजनपाना-

चक्रपाणिः—कष्टतमत्वादित्यत्र 'च'कारो लुप्तनिर्दिष्टो द्रष्टव्यः; तेन, कष्टतमत्वाच्च तथा चन्द्रमसः प्रागुत्पन्नत्वाच्चेति हेतुद्वयं योज्यम्; यदा कष्टतमत्वात्, तदा 'राजेव यक्ष्मा' राजयक्ष्मेति निरुक्तिर्बोध्या; उडुराजस्येति राजसंज्ञत्वं सोमस्य दर्शयति, ततश्च राज्ञो यक्ष्मा राजयक्ष्मेति निरुक्तिर्भवति ॥ १२ ॥

चक्रपाणिः—पूर्व्वरूपेषु प्रतिश्यायादिप्रायः कफयुक्तपूर्व्वरूपोत्पादो वायुनापि प्रधानेन

दोषेषु वा भावेषु पात्रोदकान्नसूपापूपोपदंशपरिवेशकेषु। भुक्तवतोऽप्यस्य हृल्लासस्तथोल्लेखनमप्याहारस्य अन्तरान्तरा, मुखस्य पादयोश्च शोषः, पाण्योश्चावेक्षणमत्यर्थम् अक्ष्णोः श्वेतावभासता चातिमात्रं बाह्वोश्च प्रमाणजिज्ञासा, स्त्रीकामता, निर्घृणित्वं, बीभत्सदर्शनता चास्य काये। स्वप्ने चाभीक्ष्णं दर्शनमनुदकानामुदकस्थानानां, शून्यानाञ्च ग्रामनगरनिगमजनपदानां, शुष्कदग्धभग्नानाञ्च वनानां, कृकलासमयूरवानरशुकसर्पकाकोलूकादिभिः स्पर्शनमधिरोहणं वा यानं वा वराहोष्ट्रखरैः, केशास्थिभस्मतुषाङ्गारराशीनाञ्चाधिरोहणमिति शोषपूर्वरूपाणि भवन्ति ॥ १३ ॥

सनपात्रादिषु चादोषवत्सु अल्पदोषयुक्तेषु वा दोषदर्शनम्। इदं भोजनपात्रं मलिनमन्यादृशं वेत्येवमादिदूषणप्रदर्शनम्। हृल्लास इति हृदयस्थदोषस्योपस्थितवमनत्वमिव भुक्तवत एव न त्वभुक्तवतः। तथान्तरान्तरा—अन्तरा अन्तरा मध्ये मध्ये कदाचित् कदाचित् भुक्तवतस्तस्याहारस्योल्लेखनं वमनं भवति। मुखस्य पादद्वयस्य च शोषः शुष्कता। पाण्योः कराग्रद्वयस्यात्यर्थमवेक्षणं प्रायेण स्वकरद्वयस्य भद्राभद्ररूपतया दर्शनमकारणम्। बाह्वोर्बाहुद्वयस्य प्रमाणस्य स्थूलादिपरिमाणस्य प्रायेण जिज्ञासा। स्त्रीकामता स्त्रीरिरंसुता। निर्घृणित्वं घृणाशून्यता। बीभत्सदर्शनता च काये स्वशरीरे निन्दनीयरूपतया दर्शनम् अनिन्दनीयत्वे। स्वप्ने च उदकस्थानानां नदीनदसरस्तडागदीर्घिकाकूपपुष्करिण्यखातादीनामनुदकानामुदकशून्यत्वेन दर्शनम्। निगमो नगरस्य पुटभेदः। ग्रामनगरादीनां शून्यानां जनरहितत्वेन दर्शनम्। तथा स्वप्ने वनानां शुष्कत्वादिरूपदर्शनम्। तथा कृकलासादिकर्तृकस्वकर्म्मकस्य स्पर्शनस्य अधिरोहणस्य वा स्वप्ने दर्शनम्। एवं स्वप्ने वराहोष्ट्रखरैः करणैर्यानं गमनम्, चकारात् चिकित्सास्थानोक्तमक्षिकाघुणादिपतनादीन्यपि समुच्चीयन्ते।

क्रियमाणे शोषे उरःस्थश्लेष्मसंसर्गाद् बोद्धव्यः ; यतश्च प्रायेण कफोऽत्र स्थानमहिम्ना प्रकुपितो भवति ; तेन शोषं कफप्रधानलिङ्गत्वेन श्लेष्मरोग इति च ब्रुवते। अदोषेष्विति पात्रादिविशेषणम् ; पाण्योश्चावेक्षणादि पूर्वरूपं प्रभावात् ; बीभत्सदर्शनता काय इति विवर्णविगन्धत्वा-

अत ऊर्द्ध्वमेकादश रूपाणि तस्य भवन्ति । तद् यथा—शिरसः प्रतिपूर्णत्वं कासः श्वासः स्वरभेदः श्लेष्मणश्छर्द्दनं शोणितष्ठीवनं पार्श्वसंरोजनमंसावमर्द्दो ज्वरोऽतिसारोऽरोचकश्च इत्येकादश रूपाणि भवन्ति ॥ १४ ॥

सुश्रुते तु—श्वासाङ्गसादकफसंस्रवतालुशोष-वम्यग्निसादमदपीनसकासनिद्राः । शोषे भविष्यति भवन्ति स चापि जन्तुः शुक्लेक्षणो भवति मांसपरो रिरंसुः ॥ स्वप्नेषु काकशुकसल्लकिनीलकण्ठ-गृध्रास्तथैव कपयः कृकलासकाश्च । तं वाहयन्ति स नदीर्विजलाश्च पश्येच्छुष्कांस्तरून् पवनधूमदवार्दितांश्च । इति । अत्र स्वप्ने काकादिकर्त्तृकारोहणादिकं दोषजमेव मक्षिकाघुणतृणादिपतनन्तु प्रायोऽन्नेऽदृष्टाधिष्ठितदोषजमेवेति बोध्यम् ॥ १३ ॥

गङ्गाधरः—ननु पूर्व्वरूपोत्पत्त्यनन्तरं व्याध्युत्पत्तिः, तदानीन्तु रूपाण्युत्पद्यन्ते तत् कथमत्र पूर्व्वमेव रूपाण्युक्त्वा पूर्व्वरूपाण्युक्तानि, तेन किं शिरः-शूलादीनि यान्युक्तानि तानि न रूपाणि, किञ्च साहसादिहेतुतो भिन्नभिन्न-लिङ्गानि भवन्तीत्याशङ्कायां सर्व्वेभ्य एव साहसादिभ्यो निदानेभ्यः कुपित-त्रिदोषत एकविधान्येव लिङ्गानि भवन्तीति ख्यापनार्थं पूर्णबलदोषाभिप्रायेण एकादश रूपाण्याह—अत ऊर्द्ध्वमित्यादि । अतः पूर्व्वरूपानन्तरम् एकादश रूपाणीति दोषाणां पूर्णबले न्यूनसंख्याकल्पे एकादश रूपाण्येव न ततो न्यूनरूपाणि, बलाधिक्ये अधिककल्पे तु द्वादशादीनि भवन्तीति बोध्यम् । अस्य स्थानस्य सूत्ररूपत्वात् दोषाणां बलाल्पत्वे न्यूनसंख्याकल्पे त्रिरूपाणि, तदधिककल्पे चतुःपञ्च रूपाणि, बलमध्यमत्वे न्यूनसंख्याकल्पे षड् रूपाणि,

दिना ; निगमनं नगरविशेषो बहुवसतिजनपदं मण्डलम् । अधिरोहणञ्चेति कृकलासादीनाम् एव शरीराधिरोहणम् ; स्वप्ने श्वोष्ट्रखरगमनञ्चेहादिङ्नियमेन बोद्धव्यम् ; तेन रिष्टं न भवति ; यत् तु वक्ष्यति—"श्वभिरुष्ट्रैः खरैर्वापि याति यो दक्षिणां दिशम्" इत्यादि ; तद्दक्षिणदिङ्नियतत्वाद् रिष्टत्वं ज्ञेयम्, यत्र रूपं स्वप्नरूपमस्ति राजयक्ष्मोन्मादादौ, तत्रोच्यते, ज्वरादौ त्वविद्यमानत्वान्नोच्यते ; यत् तु रिष्टं रिष्टाधिकारे ज्वरादीनां स्वप्नरूपं पूर्व्वरूपं वक्ष्यति—"प्रेतैः सह पिबन् मद्यम्" इत्यादिना, तद् रिष्टमेव ॥ १३ ॥

चक्रपाणिः—एकादशरूपाणीतिवचनेन एकादश रूपाण्येव सम्पूर्णराजयक्ष्मणि भवन्तीति दर्शयति ; कासश्वासादयश्च ये एकादशरूपा उदाहरणार्थं व्याख्याताः, न ते प्रतिनियतत्वार्थम् ; तेन, चिकित्सिते वक्ष्यमाणमेकादशरूपचतुष्टयं भिन्नलक्षणं न विरोधि ॥ १४ ॥

तत्रापरिक्षीणबलमांसशोणितो बलवानजातारिष्टः सर्व्वैरपि शोषलिङ्गैरुपद्रुतः साध्यो ज्ञेयः । बलवानुपचितो * हि सहत्वाद् व्याध्यौषधबलस्य कामं सुबहुलिङ्गोऽपि स्वल्पलिङ्ग एव मन्तव्यः । दुर्ब्बलन्तु अतिक्षीणबलमांसशोणितमल्पलिङ्गमजातारिष्टमपि बहुलिङ्गं जातारिष्टञ्च विद्यादसहत्वाद् व्याध्यौषधबलस्य, तं परिवर्ज्जयेत् । क्षणेनैव हि प्रादुर्भवन्त्यरिष्टानि अनिमित्ततश्च अस्यारिष्टप्रादुर्भाव इति ॥ १५ ॥

तदधिककल्पे सप्ताष्ट नव दश रूपाणि व्याख्यातव्यानि । चिकित्सिते तु त्रिषड़् रूपाणि तेषां तदभिप्रायेण वक्ष्यन्ते ॥ १४ ॥

गङ्गाधरः—अथास्य साध्यत्वासाध्यत्वादिकमाह—तत्रेत्यादि । सर्व्वैः अपीत्यपिशब्दात् असम्पूर्णलिङ्गैः सुखसाध्यः । कुतः साध्य इत्यत आह—बलवानित्यादि । उपचितो मांसशोणिताभ्यामक्षीणः कामं यथाभिलाषं व्याध्यौषधयोर्बलस्य वीर्य्यस्य सहत्वात् सहने क्षमत्वात् । ननु कुतो दुर्ब्बलं क्षीणमांसरक्तमजातारिष्टमपि जातारिष्टं विद्यादित्यत आह—क्षणेनैव हीत्यादि । अस्य राजयक्ष्मिणो जनस्य दुर्ब्बलस्य क्षीणमांसशोणितस्य क्षणमात्रमरिष्टं भवति कारणाभावतश्चारिष्टं स्यात् । अरिष्टन्तु सुश्रुतेऽप्युक्तम्— महाशनं क्षीयमाणमतीसारनिपीड़ितम् । शूनमुष्कोदरञ्चैव यक्ष्मिणं परिवर्ज्जयेत् । शुक्लाक्षमन्नद्वेष्टारमूर्द्ध्वश्वासनिपीड़ितम् । कृच्छ्रेण बहु मेहन्तं यक्ष्मा हन्तीह मानवम् । ज्वरानुबन्धरहितं बलवन्तं क्रियासहम् । उपक्रमेदात्मवन्तं दीप्ताग्निम् अकृशं नवम् । अन्यत्र च—परं दिनसहस्रन्तु यदि जीवति मानवः । सद्भिषग्भिः उपक्रान्तस्तरुणः शोषपीड़ितः । इति । अत्र महाशनं क्षीयमाणमित्येकमसाध्यलक्षणम्, अतीसारनिपीड़ितमित्यपरं, यक्ष्मिणो मलायत्तजीवितत्वात् । शून-

चक्रपाणिः—अपरिक्षीणबलाभिधानेऽपि बलवानिति पदं सहजबलयुक्तत्वोपदर्शनार्थम्; सहजबलो ह्यनु परिक्षीणबलोऽपि बलवद्भवतीति भावः; सहत्वाद् व्याध्यौषधस्येति यस्माद् व्याधिबलं तथौषधबलञ्च सहते; तेन न ताभ्यामभिभूयते इत्यर्थः; अल्पलिङ्ग एवेति अल्पलिङ्ग इव सुखसाध्य इत्यर्थः । बहुलिङ्गं जातारिष्टञ्च विद्यादिति बहुलिङ्गमिवासाध्यं तथा जातारिष्टमिव मारकं विद्यादित्यर्थः; ननु रिष्टं विना मरणं नास्ति; वचनं हि—"अरिष्टञ्चापि तथास्ति

* बलवर्णोपचयोपचित इति पाठान्तरम् ।

तत्र श्लोकः ।

समुत्थानञ्च लिङ्गञ्च यः शोषस्यावबुध्यते ।
पूर्व्वरूपञ्च तत्त्वेन स राज्ञः कर्त्तुमर्हति ॥ १६ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते निदानस्थाने
शोषनिदानं नाम षष्ठोऽध्यायः ॥ ६ ॥

मुष्कोदरमिति तृतीयं, मुष्कोदरशोथस्य विरेकसाध्यत्वेन विरुद्धोपक्रमत्वात् । शुक्राक्षत्वादीन्येकैकशोऽसाध्यचिह्नानि ॥ १५ ॥

गङ्गाधरः—अध्यायार्थमुपसंहरति—तत्र श्लोक इति । अध्यायार्थोपसंहारच्छलेन वैद्यप्रशंसनमिदं वचनम् । यो वैद्यः स राज्ञः कर्त्तुं प्रतिकर्त्तुम् ॥ १६ ॥

गङ्गाधरः—अध्यायं समापयति अग्नीत्यादि ॥

इति श्रीगङ्गाधरकविरत्नकविराजविरचिते चरकजल्पकल्पतरौ
द्वितीयस्कन्धे निदानस्थानजल्पे षष्ठाध्यायशोष-
निदानजल्पाख्या षष्ठी शाखा ॥ ६ ॥

यद् विना मरणं भवेत्' इति ; तत् कथं अजातारिष्टो जातारिष्ट इवादूरमरणत्वेनेह ज्ञातव्य इत्याह—क्षणेन हीत्यादि । असाध्ये हि रिष्टं भवति ; असाध्यता च बलमांसक्षयकृतास्त्येव ; तेन अवश्यं रिष्टेन भवितव्यम् ; अजातारिष्टे कारणासेवयारिष्टं भविष्यत्येवाह—अनिमित्ततश्चारिष्टप्रादुर्भाव इति ; न हि रिष्टं दृष्टं किञ्चित् कारणमपेक्षते, किन्त्वनिमित्तत एव भवति ; तेन, रिष्टानुत्पादे सति नाश्वासः कर्त्तव्य इत्यर्थः ॥ १५ । १६ ॥

इति चरकचतुरानन-श्रीमच्चक्रपाणिदत्तविरचितायाम् आयुर्व्वेददीपिकायां निदानस्थान-
व्याख्यायां शोषनिदानं नाम षष्ठोऽध्यायः ॥ ६ ॥

## सप्तमोऽध्यायः ।

**अथात उन्मादनिदानं व्याख्यास्यामः, इतिह स्माह भगवानात्रेयः ॥ १ ॥**

**इह खलु पञ्चोन्मादा भवन्ति ; तद् यथा—वात-पित्त-कफ-सन्निपातागन्तुनिमित्ताः ॥ २ ॥**

**तत्र दोषनिमित्ताश्चत्वारः पुरुषाणामेवंविधानां क्षिप्रमभिनिर्व्वर्त्तन्ते । तद् यथा—भीरूणामुपक्लिष्टसत्त्वानाम्,**

गङ्गाधरः—अथ त्रैदोषिकव्याधीनुक्त्वा भयपूर्व्वकत्वादुन्मादस्य भयकामजत्वाच्च शोषानन्तरमुन्मादमाह—अथात इत्यादि ॥ १ ॥

गङ्गाधरः—पञ्चोन्मादा इति विवृणोति—वातपित्तेत्यादि । ननु सुश्रुते एकैकशः समस्तैश्च दोषैरत्यर्थमूर्च्छितैः । मानसेन च दुःखेन स च पञ्चविधो मतः । विषाद् भवति षष्ठश्च यथास्वं तत्र भेषजम् । स चाप्रवृद्धस्तरुणो मदसंज्ञां बिभर्त्ति च । इत्युक्तमुक्तश्च भूतोन्मादः पृथक् तत् कथमत्र च दोषजाश्चत्वार इति न विरुध्यते ? उच्यते, कामादीनां वातकरत्वेनोन्मादनिदानानां वातजोन्मादनिदानेषु पाठात् वातजोन्मादत्वं मानसदुःखोन्मादस्य ख्यापितम् । विषजोन्मादस्य च विषेण त्रिदोषकोपात् त्रैदोषिकोन्मादत्वान्न पृथक् पाठः कृतो न च विषस्य यथास्वचिकित्साविधानार्थं त्रैदोषिकाद्भिन्नतया पाठ उचितः पूगकोद्रवधुस्तूरादिजानाम् अप्युन्मादानां पृथक्चिकित्साविधानात् पृथक्पाठापत्तेः । तत्रेत्यादि पुरुषाणामेवंविधानां भीरूणामित्यादिभिर्वक्ष्यमाणानाम् । किम्भूतानामित्यत आह—तद् यथेत्यादि । यद्यपि चिकित्सिते वातजाद्युन्मादानां पृथक् पृथक् निदानानि वक्ष्यन्ते तथाप्यत्र सूत्ररूपत्वेन सामान्यत एव त्रयाणां दोषाणां कोपनान्याह—भीरूणामित्यादि । उपक्लिष्टसत्त्वानामिति रजस्तमोभ्यामुद्रिक्ताभ्यामभि-

चक्रपाणिः—औत्पातिकं शोषमभिधाय दक्षयज्ञे कुष्ठानन्तरोत्पन्नमुन्मादं ब्रूते ; वचनं हि—"तयोर्ह्रासशोषैरुन्मादापस्माराणाम्" इति । उपक्लिष्टसत्त्वानामिति रजस्तमोभ्यामुपहतसत्त्वानाम् ;

उत्सन्नदोषाणां, समलविकृतोपहितान्यनुचितान्याहारजातानि वैषम्ययुक्तेन उपयोगविधिनोपयुञ्जानानाम्, तन्त्रप्रयोगमपि विषममाचरताम्, अन्याश्च शरीरचेष्टा विषमाः समाचरताम्, अत्युपक्षीणदेहानां, व्याधिवेगसमुद्भ्रामितोपहतमनसां वा, काम-राग-क्रोध-लोभ-हर्षभयमोहायासशोकचिन्तोद्वेगादिभि-र्भूयोऽभिघाताभ्याहतानां वा मनस्युपहते बुद्धौ च प्रचलितायाम्, अत्युदीर्णत्वाद् दोषाः प्रकुपिता हृदयमुपसंसृत्य मनो-

भूतसत्त्वगुणानाम् उत्सन्नदोषाणाम्, उन्मार्गमाश्रितातिप्रवृद्धवातादि-दोषवताम्। समलेत्यादि। समलानि मलिनानि विकृतानि अप्राकृतानि च यानि तैर्द्रव्यैरुपहितानि उपस्कृतानि अनुचितान्यसात्म्यानि आहारजातानि विषमेणोपयोगविधिना प्रकृतिकरणाद्यष्टविधानामाहारविधिविशेषायतनानां वैषम्येण हीनाधिकप्रकारेण उपयुञ्जानाश्चेद्भवन्ति भीरुप्रभृतयः पुरुषास्तदा तेषां तन्त्रप्रयोगं वेदादिशास्त्रोक्तं स्वाभीष्टदेवसिद्धिराजादिवशीकरणो-च्चाटनादिनिमित्तं प्रयोगं शवारोहणादिकर्म्म ये विषमं यथाविधि न कृत्वा विधिविपर्य्ययेणाचरन्ति तेषाम्। अन्याश्च शरीरस्य विषमाश्चेष्टा विषमाः श्माशा-निकपथादिना निशि सन्ध्यादिषु गमनादि ये आचरन्ति तेषां व्याधिवेगेन समुद्भ्रामितानां सततोच्चलितचित्तानाम्। उपहतमनसां वा कामादिभिर्भूयः पुनरपि कामिन्याद्यप्राप्तिप्रभृत्यभिघातैरभि सर्व्वतोभावेनाहतमनसां बुद्धौ प्रचलितायां चञ्चलायां सत्याम् अत्युदीर्णत्वादुन्मार्गाश्रितत्वेनातिवृद्धत्वात्, मनोवहानि स्रोतांसि हृदयाश्रिता दश सिराः।

उत्सन्नदोषाणामिति प्रवृद्धोद्भ्रान्तदोषाणाम्; समलैरशुचिभिर्विकृतैश्चेति वैरोधिकैरुपहितानि मिश्रीकृतानीति समलविकृतोपहितानि; किंवा, समलैर्मलिनैर्विकृतैः कुष्ठ्यग्नादिभिः परिजनैः उपहितानि उपढौकितानीति समलविकृतोपहितानि, वैषम्ययुक्तेनोपयोगविधिनेति यः प्रकृति-करणादिराहारोपयोगविधिर्वैकल्यस्तेन वैषम्ययुक्तेन, वैषम्यञ्च प्रकृत्यादीनामशस्तत्वं प्रकृति-गुरुत्वादिभिः कृतं ज्ञेयम्। तन्त्रं शरीरम्, तस्य परिपालनार्थं सद्वृत्तोक्तः प्रयोगः। 'शरीर-चेष्टा'शब्देन तु गमनादि गृह्यते, तेन न पौनरुक्त्यम्। 'तन्त्र'शब्दः शरीरे वर्त्तते; यदुक्तम्—'तन्त्रयन्त्रेषु भिन्नेषु तमोऽन्त्यं प्रविविक्षताम्' इति। व्याधिवेगसमुद्भ्रामितानामिति व्याधि-

वहानि स्रोतांस्यावृत्य जनयन्त्युन्मादम्। उन्मादं पुनर्मनोबुद्धिसंज्ञाज्ञानस्मृतिभक्तिशीलचेष्टाचारविभ्रमं विद्यात्॥ ३॥

तस्येमानि पूर्व्वरूपाणि भवन्ति। तद् यथा—शिरसः शून्यता चक्षुषोश्चास्वच्छता स्वनश्च कर्णयोः उच्छ्वासाधिक्यम् आस्यसंस्रवणम्, अनन्नाभिलाषारोचकाविपाकाश्च हृद्ग्रहो ध्यानायाससम्मोहोद्वेगाश्चास्थाने, सततञ्च लोमहर्षो

निदानपूर्व्विकां सम्प्राप्तिमुक्त्वा उन्मादस्य निरुक्तिं स्वरूपलक्षणत्वेनाह—उन्मादमित्यादि। भक्तिः श्रद्धया भजनम्। मनःप्रभृतीनां विभ्रममयथावद्भावम्। सुश्रुतेऽप्युक्तं—मदयन्त्युद्धता दोषा यस्मात् उन्मार्गमाश्रिताः। मानसोऽयमतो व्याधिरुन्माद इति कीर्त्तितः। इति। अत्र मदयन्ति मनःप्रभृतीनां विभ्रमं कुर्व्वन्ति इत्यर्थः। उद्धता अत्युदीर्णाः। उन्मार्गमाश्रिता ऊर्द्ध्वं हृदयं मार्गान् हृदयमूला मनोवहा दश धमनीः प्राप्ता इत्यर्थः। मानस इति न कामक्रोधादिवन्मानसो व्याधिः, किन्तु शारीरदोषदूषितमनःप्राधान्यात् शरीरस्थत्वे चाप्राधान्यात् मानस इति व्यपदेशः॥ २।३॥

गङ्गाधरः—सामान्यतः सम्प्राप्तिमुक्त्वा सामान्यपूर्व्वरूपाण्याह—तस्येमानीत्यादि। तद् यथेत्यादि। शिरसः शून्यता शिरसो लघुतया शिरोमध्ये शून्यभावः, अस्थाने अविषये ध्यानं चिन्ता, आयासकारणाभावे

बलेनाप्रकृतिस्थितानाम्; उपहतमनसामिति कामादिभिः सम्बध्यते; भूय इति पुनःपुनः; उपसृत्येति उपगम्य प्रदूष्येति यावत्।

उन्मादप्रत्यात्मलक्षणमाह—उन्मादं पुनरित्यादि। विभ्रममिति मनःप्रभृतिभिः प्रत्येकं सम्बध्यते; अत्र मनोविभ्रमाच्चिन्त्यानर्थान् न चिन्तयते, अचिन्त्यांश्च चिन्तयते; उक्तं हि—"मनसश्च चिन्त्यमर्थः" इति; बुद्धिविभ्रमात् तु नित्यमनित्यम्, प्रियञ्चाप्रियं पश्यति; वचनं हि—"विषमाभिनिवेशो यो नित्यानित्ये प्रियाप्रिये। ज्ञेयः स बुद्धिविभ्रंशः समं बुद्धिर्हि पश्यति॥" इति। संज्ञा ज्ञानम्, तद्विभ्रमादग्न्यादिदाहं न बुध्यते; किंवा, संज्ञा नामोल्लेखज्ञानम्; स्मृतिविभ्रमात् तु न स्मरति, अयथावद्वा स्मरति; भक्तिरिच्छा, तद्विभ्रमाच्च यत्रेच्छा पूर्व्वमासीत्, तत्रानिच्छा भवति; शीलविभ्रमात् क्रोधनोऽक्रोधनो वा भवतीति; चेष्टाविभ्रमादनुचितचेष्टो भवति; आचारः शास्त्रशिक्षाकृतो व्यवहारः, तद्विभ्रमादशौचाद्याचरति॥ १—३॥

चक्रपाणिः—अस्थाने इत्यविषये; तेन अध्यानविषये ध्यानम्, असंमोहविषये च मोह

ज्वरश्चाभीक्ष्णमभीक्ष्णमुन्मत्तचित्तत्वमर्दिताकृतिकरणमुन्मर्दित-त्वञ्च व्याधेः, स्वप्ने चाभीक्ष्णं दर्शनं भ्रान्तचलितानवस्थितानाञ्च रूपाणामप्रशस्तानाम्, तिलपीड़कचक्राधिरोहणं, वातकुण्डलिकाभिश्चोन्मथनं, मज्जनञ्च कलुषाम्भसामावर्त्ते, चक्षुषोश्चापसर्पणम्। इति दोषनिमित्तानामुन्मादानां पूर्व्वरूपाणि भवन्ति ॥ ४ ॥

ततोऽनन्तरमुन्मादाभिनिर्व्वृत्तिरेव। तत्रेदमुन्मादविशेष-विज्ञानं भवति। तद् यथा—परिसरणमजस्रमक्षिभ्रुवौष्ठांस-हन्वग्रहस्तपादाङ्गविक्षेपश्चाकस्मात्, सततम् अनियतानाञ्च

आयासः, सम्मोहाविषये संमुग्धता, अनुद्वेगविषये उद्विग्नता, सततमनवरतम्; अभीक्ष्णमुन्मत्तचित्तत्वमुन्मादिनामिव चित्तं न तून्मत्तचित्तम्, अर्दिताकृतिः हनुवक्रीभावस्तत्करणं, व्याधेः व्रणशोथादिरूपस्य उन्मर्दितत्वमुन्मर्दनम्, भ्रान्तादिरूपाणां वस्तूनामभीक्ष्णं स्वप्ने दर्शनम्, अप्रशस्तानाञ्च रूपाणां मूर्त्तीनां स्वप्ने दर्शनम्, तिलपीड़कचक्रं घानियन्त्रस्य चक्रम्, वातकुण्डलिभिः कुण्डलीभूतवहिश्चरवायुना उन्मथनमाकुलीकरणम्, आवर्त्ते जलजभ्रमे, अपसर्पणमितस्ततश्चालनम्। सुश्रुते च—मोहोद्वेगौ स्वनः श्रोत्रे गात्राणामपकर्षणम्। अत्युत्साहोऽरुचिश्चान्ने स्वप्ने कलुषभोजनम्। वायुनोन्मथनञ्चापि भ्रमश्चक्रस्थितस्तथा। यस्य स्यादचिरेणैव उन्मादं सोऽधिगच्छति। इति ॥ ४ ॥

गङ्गाधरः—ततोऽनन्तरमित्यादि। ततोऽनन्तरं पूर्व्वरूपानन्तरम्। इदं किमित्यत आह—तद् यथेति। परिसरणमजस्रं सर्व्वदा परिभ्रमणम्। अक्षिभ्रुवौष्ठांसहन्वग्रादिविक्षेपणमितस्ततश्चालनम्। हनोरग्रम् ओष्ठाधो-

इत्यादि ज्ञेयम्। उन्मत्तचित्तत्वमिति उद्भ्रान्ताकृष्टचित्तत्वम्। उद्दर्दितत्वमिति ऊर्द्ध्वकाये पीड़ितत्वम्; अर्दिताकृतिकरणमिति अर्दितस्य आकृतिर्वक्रार्द्धवक्रीभावादिलक्षणं तत्करणम्। व्याधेरिति व्याधेर्बुद्ध्यादिभ्रमरूपस्य उन्मादस्य यथोक्तानि पूर्व्वरूपाणीति योजना; चक्षुषोश्चापसर्पणमिति चक्षुषोर्व्यपगम इत्यर्थः ॥ ४ ॥

चक्रपाणिः—ततोऽनन्तरमेवेतिवचनात् पूर्व्वरूपानन्तरं शीघ्रमेवोन्मादो भवतीति दर्शयति; अन्ये रोगा यथा पूर्व्वरूपे भूते चिरेण भवन्ति, न तथा उन्माद इत्यर्थः। उन्मादविशेषविज्ञानम्

गिरामुत्सर्गः * फेनागमश्चास्यात्। अभीक्ष्णं स्मितहसितनृत्यगीतवादित्रसंप्रयोगाश्चास्थाने, वीणावंशशङ्खशष्प † तालशब्दानुकरणमसाम्ना, यानश्चायानैरलङ्करणञ्चानलङ्कारिकैः द्रव्यैः, लोभश्चाभ्यवहार्य्येष्वलब्धेषु लब्धेषु चावमानः। तीव्रञ्च मात्सर्य्यं ‡ कार्श्यं पारुष्यमुत्पिण्डतारुणाक्षता वातोपशयविपर्य्यासादनुपशयता चेति वातोन्मादलिङ्गानि भवन्ति ॥ ५॥

अमर्षः क्रोधः संरम्भश्चास्थाने, शस्त्रलोष्ट्रकषाकोष्ठमुष्टिभिश्चाभिहननं स्वेषां परेषां वा, अभिद्रवणं, प्रच्छाय-

भागः। अनियतानां गिरां वचनानामुत्सर्गः प्रयोगः प्रलाप इति यावत्। आस्यात् फेनागमः। अस्थाने अविषये स्मितादिकं, शष्पं तृणघासादिकम्, अतालः संगीतविधौ तालः कालक्रियामानं तद्विपर्य्ययेण शब्दस्त्वतालशब्दः, वीणादीनां शब्दानुकरणशब्दकरणम्, असाम्नाऽप्रीत्या, अवमानस्त्ववज्ञा, मात्सर्य्यं दम्भः। उत्पिण्डितमुच्छूनपिण्डाकारमरुणञ्चाक्षि यस्य तस्य भावः। वातोपशयविपर्य्ययाद् वातानुपशयात् ॥ ५ ॥

गङ्गाधरः—पित्तोन्मादलिङ्गान्याह—अमर्ष इत्यादि। अमर्षोऽसहिष्णुता। क्रोधः कोपः। संरम्भ आरभटी। अस्थानेऽविषयेऽसहिष्णुतादयः। कषा रज्जुवदश्वप्रहरणम्, शस्त्रादिभिः स्वेषां परेषां वाभिहननम्। अभिद्रवणं

इति वातादुन्मादलिङ्गमित्यर्थः। परिसरणं भ्रमणम्; शम्या दक्षिणहस्तेन वादनम्; तालस्तु वामहस्तेन वादनम्; यदुक्तं विशाखिलेना—"शम्या दक्षिणहस्तेन वामहस्तेन तालकः। उभाभ्यां वादनं यत् तु सन्निपातः स उच्यते" इति। असाम्नेत्युच्चैः; अयानैरिति हस्त्यादियानव्यतिरिक्तैः। लब्धेषु चावमान इति प्राप्तेष्वभ्यवहार्य्येष्वाहार्य्येष्ववधीरणञ्च, न केवलमवमानः किन्तु तीव्रं मात्सर्य्यञ्च, अभ्यवहार्य्यं लब्ध्वा न किञ्चित् दातुमिच्छतीत्यर्थः। वाते उपशय उपशयहेतुस्नेहादिः वातोपशयः, तस्य विपर्य्यासो रुक्षादिः, तेनानुपशयिता असुखिता इत्यर्थः; 'च'कारात् वातानुगुणस्नेहाद्युपशयिता च गृह्यते ॥ ५ ॥

* सततं गिरामुत्सर्गं इति पाठान्तरम्।　　　　† शष्पेत्यत्र शम्या इति चक्रः पठति।

‡ तीव्रं मात्सर्य्यमिति वा पाठः।

शीतोदकान्नाभिलाषश्च, सन्तापश्चातिवेलं, ताम्रहरित-हारिद्रस्तब्धाक्षता, पित्तोपशयविपर्य्यासात् अनुपशयता चेति पित्तोन्मादलिङ्गानि भवन्ति ॥ ६ ॥

स्थानमेकदेशे, तूष्णीम्भावोऽल्पशश्चंक्रमणं, लाला-सिंघाणस्रवणम्*, अनन्नाभिलाषो रहःकामता च, बीभत्सत्वं शौचद्वेषः, स्वप्ननित्यता, श्वयथुश्चानने, शुक्लस्तिमित-मलोपदिग्धाक्षत्वं, श्लेष्मोपशयविपर्य्यासादनुपशयता चेति श्लेष्मोन्मादलिङ्गानि भवन्ति ॥ ७ ॥

त्रिदोषलिङ्गसन्निपाते तु सान्निपातिकं विद्यात्। तम् असाध्यमित्याचक्षते कुशलाः ॥ ८ ॥

पलायनम्। प्रच्छायस्य शीतयोरुदकान्नयोश्चाभिलाषः। सन्तापो गात्रस्य उष्णत्वं, चकाराद्विनग्नत्वं, ताम्रं वा हरितं वा हारिद्रं वा स्तब्धश्चाक्षि यस्य तस्य भावः ॥ ६ ॥

गङ्गाधरः—कफोन्मादलिङ्गान्याह—स्थानमित्यादि। एकदेशे गृहैककोणे स्थितिः, तूष्णीम्भावो मौनत्वम्, अल्पशश्चंक्रमणम्, सिंघाणकं नासिकास्थकफ-क्लेदः तयोः प्रस्रवणम्। रहःकामता गोप्यावस्थानाभिलाषिता। बीभत्सत्वं देहस्य निन्दनीयभावः। स्वप्ननित्यता सततनिद्रारतिः, आनने श्वयथुः। शुक्लश्चाश्रुपिच्चिटादिना स्तिमितश्च मलेन पिच्चिटेन उपदिग्धश्चाक्षि यस्य तस्य भावः ॥ ७ ॥

गङ्गाधरः—त्रिदोषेत्यादि। त्रिदोषलिङ्गसन्निपाते तु त्रिदोषाणां यानि स्वस्वलिङ्गान्युक्तानि तेषां सम्यक् साकल्येनाधिक्येन च निपाते सति सान्निपातिकमुन्मादं विद्यादिति। विकृतिविषमसमवायारब्धत्वात् चतुर्थ-मिममुन्मादमुक्तवान्, प्रकृतिसमसमवायारब्धांस्तु द्वन्द्वसन्निपातजान् नोक्तवान्,

चक्रपाणिः—अमर्ष इत्यादि पित्तोन्मादलिङ्गम्; संरम्भश्चारभटी; स्वेषां स्वीयानाम्। कफोन्मादे रहो विजनम् ॥ ६—८ ॥

* लालासिंघाणकास्यस्रवणमिति पाठान्तरम्।

साध्यानान्तु त्रयाणां साधनानि स्नेहस्वेदवमनविरेचना-स्थापनानुवासननस्तःकर्म्म-धूमधूपनाञ्जनावपीड़प्रधमनाभ्यञ्जन-प्रदेह-परिषेकानुलेपन-वधबन्धनावबोधन*वित्रासन-विस्मापन-विस्मारणापतर्पणसिराव्यधनानि । भोजनविधानञ्च यथास्वं युक्त्या । यच्चान्यदपि किञ्चिन्निदानविपरीतमौषधं कार्य्यं तत् स्यादिति ॥ ९ ॥

तेषां दोषभेदविकल्पैः पृथग् दोषैर्लब्धत्वात् । अत एवाह तमसाध्यमित्याचक्षते कुशला इति । सुश्रुते तु—रूक्षच्छविः परुषवाग् धमनीततो वा श्वासातुरः कृशतनुः स्फुरिताङ्गसन्धिः । आस्फोटयन् पठति गायति नृत्यशीलो विक्रोशति भ्रमति चाप्यनिलप्रकोपात् । १ । तृट्स्वेददाहबहुलो बहुभुग विनिद्रश्छायाहिमानिलजलान्नविहारसेवी । तीक्ष्णो हिमाम्बुनिचयेऽपि स वह्निशङ्की पित्ताद् दिवा नभसि पश्यति तारकाश्च । २ । छर्द्यग्निसादसदनारुचिकासयुक्तो योषिद्विविक्तरतिरल्पमतिप्रचारः । निद्रापरोऽल्पकथनोऽल्पभुगुष्णसेवी रात्रौ भृशं भवति चापि कफप्रकोपात् । ३ । सर्व्वात्मके त्रिभिरपि व्यतिमिश्रितानि रूपाणि वातकफपित्तकृतानि विद्यात् । सम्पूर्णलक्षणमसाध्यमुदाहरन्ति सर्व्वात्मकं क्वचिदपि प्रवदन्ति साध्यम् । ४ । चौरैर्नरेन्द्रपुरुषैररिभिस्तथान्यैर्वित्रासितस्य धनबान्धवसंक्षयाद् वा । गाढ़ं क्षते मनसि च प्रियया रिंरसोर्जायेत चोत्कटतरो मनसो विकारः । ५ । चित्रं ब्रवीति च मनोऽनुगतं विसंज्ञो गायत्यथो हसति रोदिति चापि मूढ़ः । रक्तेक्षणो हतबलेन्द्रियभाः सुदीनः श्यावाननो विषकृते च भवेद् विसंज्ञः । ६ । इति ॥

गङ्गाधरः—अथ चिकित्सायाः सूत्राण्याह—साध्यानान्त्वित्यादि । त्रयाणाम् इति वातजपित्तजकफजानामुन्मादानाम् । धूमेति धूमपानम् । अवपीड़प्रधमने द्वे नस्तःकर्म्मविशेषौ पुनरुक्तौ विशेषेण प्रयोगज्ञापनार्थम्, वधो वधसूचनत्रासनम् । अवबोधनं ताड़नादिकं सान्त्वनवचनादिकञ्च, विस्मापनं विस्मयजननक्रिया, विस्मारणं विस्मृतिकरक्रिया ॥ ९ ॥

* अवरोधनमित्यन्यः पाठः ।

भवति चात्र।

उन्मादान् दोषजान् साध्यान् साधयेद् भिषगुत्तमः।
अनेन विधियुक्तेन कर्म्मणा यत् प्रकीर्त्तितम् ॥ इति ॥१०॥

यस्तु दोषनिमित्तेभ्य उन्मादेभ्यः समुत्थानपूर्व्वरूपलिङ्गवेदनोपशयविशेषसमन्वितो* भवत्युन्मादः, तमागन्तुकमाचक्षते। केचित् पुनः पूर्व्वकृतं कर्म्माप्रशस्तमिच्छन्ति तस्य निमित्तं, तत्र च हेतुः प्रज्ञापराध एवेति भगवान् पुनर्व्वसुरात्रेय उवाच। प्रज्ञापराधाद्ध्ययं देवर्षिपितृगन्धर्व्वयक्षराक्षसपिशाचगुरुवृद्धसिद्धाचार्य्यपूज्यानवमत्याहितान्याचरति। अन्यद्वा किञ्चित्

गङ्गाधरः—भवति चात्रेति। विधियुक्तेनानेन कर्म्मणा उक्तस्नेहादिना कर्म्मणा ॥ १० ॥

गङ्गाधरः—परिशिष्टमागन्तुमुन्मादं लक्षयति—तत्रागन्तून्मादस्य दोषोन्मादेभ्यो विशेषं दर्शयति—यस्त्वित्यादि। दोषनिमित्तेभ्य इति दोषा व्यस्ताः समस्ता वा निमित्तानि येषां तेभ्यस्तथा दोषजेभ्य इत्यर्थः। वेदना यातना उपशय इति वेदनोपशयौ वेदनापदसान्निध्यात्। न सर्व्वथोपशमन-सर्व्वथाप्रशमने। कस्य विज्ञानं विधेयं स्यादिति सर्व्वत्रैवापातत उपशमनमेवोपशयकार्य्यमवलोक्य व्याधीन् परीक्षेतेति ख्यापितम्।

समुत्थानविशेषं दर्शयति—केचिदित्यादि। प्रज्ञापराध एवेत्येवशब्देन पूर्व्वकृताप्रशस्तकर्म्ममात्रस्य हेतुत्वव्यवच्छेदः। ननु किं पूर्व्वकृतम् अप्रशस्तं कर्म्म नागन्तून्मादस्य हेतुरित्याशङ्कायामाह—प्रज्ञापराधाद्ध्ययमित्यादि। अयमागन्तून्मादित्वेन भावी देवादीन् अवमत्येत्यवज्ञाय एवंविधमन्यदप्रशस्तं कर्म्म

चक्रपाणिः—अवरोधनं तमोगृहावरोधनादि ; विधियुक्तेनेत्युन्मादचिकित्सिते प्रपञ्चवक्ष्यमाणविधियुक्तेनेत्यर्थः ॥ ९।१० ॥

चक्रपाणिः—केचित् पुनरित्यादौ 'तस्य निमित्तम्' इति पदमावृत्य पूर्व्वेण परेण च योजनीयम् ; तत्र प्रज्ञापराध एव तस्य निमित्तमिति ब्रुवता अप्रशस्तप्राक्तनकर्म्मजन्यत्वं न क्षिप्यते ;

* समुत्थानपूर्व्वरूपलिङ्गविशेषसमन्वित इति चक्रधृतः पाठः।

एवंविधं कर्म्माप्रशस्तमारभते। तमात्मनोपहतमुपघ्नन्तो देवादयः कुर्व्वन्त्युन्मत्तम् ॥ ११ ॥

तत्र देवादिप्रकोपनिमित्तेनागन्तुकोन्मादेन पुरस्कृतस्य इमानि पूर्व्वरूपाणि भवन्ति। तद् यथा—देवगोब्राह्मणतपस्विनां हिंसारुचित्वं कोपनत्वं नृशंसाभिप्रायतारतिरोजोवर्णच्छायाबलवपुषाञ्चोपततिः। स्वप्ने च देवादिभिरभिभर्त्सनं प्रवर्त्तनञ्चेत्यागन्तुनिमित्तस्योन्मादस्य पूर्व्वरूपाणि भवन्ति। ततोऽनन्तरमुन्मादाभिनिर्व्वृत्तिः ॥ १२ ॥

पुराणवेदादिपाठश्रवणादिकमन्यमत्यान्यद् वा कर्म्मारभते इति पूर्व्वकृताप्रशस्तकर्म्मणोऽपि निमित्तं प्रज्ञापराधः, इत्यतः पूर्व्वकृताप्रशस्तकर्म्ममात्रमागन्तून्मादस्य कारणमिति यत् तन्नासमग्रवचनादिति भावः। ननु देवादयोऽमी उन्मादयन्ति ते च हेतव इति तत्राप्यसमग्रवचनमित्यत आह—तमात्मनोपहतमित्यादि। तं प्रज्ञापराधात् पूर्व्वं कृताप्रशस्तकर्म्मणामात्मना कृतेन कर्म्मणा स्वेनैवोपहतं देवादय उपघ्नन्त उन्मत्तं कुर्व्वन्ति न तु पूर्व्वं प्रज्ञासमयोगात् कृतप्रशस्तकर्म्माणमकृताप्रशस्तकर्म्माणं वात्मनानुपहतं पुरुषमिति। तत्र देवादयोऽपि पूर्व्वकृताप्रशस्तकर्म्मभिः कुपिता हेतव इति भावः ॥ ११ ॥

गङ्गाधरः—तत्रेति। तथाविधागन्तून्मादाभिनिर्व्वर्त्तने पुरस्कृतस्य जन्मनः प्राक्कालिकस्येमानि रूपाणि अर्थात् आगन्तून्मादस्येमानि पूर्व्वरूपाणि भवन्तीत्यर्थः। इमानि कानीत्यत आह—तद् यथेत्यादि। देवादिहिंसायां रुचित्वमभिलाषिता प्रीतिरिति यावत्, कोपनत्वं क्रोधनत्वम्, नृशंसायां सतां निन्दनेऽभिप्रायो यस्य तस्य भावस्तथा, अरतिरनवस्थचित्तता, ओजो बलहेतुर्धातुरेषामुपततिरुपतापः। देवादिभिर्भर्त्सनं देवादिकर्त्तृकं निन्दनं स्वप्ने स्वप्नदर्शने यस्य। प्रभर्त्सनञ्च स्वस्मिन् देवादिकर्त्तृकमेव स्वप्ने दृश्यते। ततोऽनन्तरं पूर्व्वरूपानन्तरम् ॥ १२ ॥

यतः, प्राक्तनमपि हि कर्म्म प्रज्ञापराधजमेव ; किंवा तस्य निमित्तं प्रज्ञापराध एवेत्यनेन, तस्येति अप्रशस्तकर्म्मणः प्रज्ञापराध एव कारणमिति दर्श्यते ; तेन कर्म्मजस्य प्रज्ञापराधान्तर्निविष्टत्वम् उच्यते। आत्मना हतमित्यात्मना कृतेनाशुभकर्म्मणा हतम् ; उपघ्नन्त इत्यावेशं कुर्व्वन्तः ॥ ११ ॥

चक्रपाणिः—पुरस्कृतस्येति अभिशपनीयतया व्यवस्थापितस्य। नृशंसाभिप्रायता पराप-

तत्रायमुन्मादकराणां भूतानामुन्मादयिष्यतामारम्भविशेषो भवति, तद् यथा—अवलोकयन्तो देवा जनयन्त्युन्मादं, गुरुवृद्धसिद्धमहर्षयोऽभिशपन्तः, पितरस्तु धर्षयन्तः ; स्पृशन्तो गन्धर्व्वाः, प्रविशन्तो यक्षाः, राक्षसास्त्वात्मगन्धम् * आघ्रापयन्तः, पिशाचाः पुनरारुह्य वाहयन्तः ॥ १३ ॥

तस्येमानि रूपाणि भवन्ति। तद् यथा—अमर्त्त्य-†-बल-वीर्य्य-पौरुष-पराक्रम-ग्रहण-धारण-स्मरणवचनज्ञान-विज्ञानानि अनियतश्चोन्मादकालः ॥ १४ ॥

गङ्गाधरः—तत्रायमित्यादि। तत्रागन्तून्मादाभिनिर्व्वर्त्तने उन्मादकराणां देवादीनां भूतानां तं पुरुषमुन्मादयिष्यताम् उन्मत्तं करिष्यतामुन्मत्तकरणेऽयमारम्भविशेष उन्मादजनकव्यापारस्य विशेषः देवादिविशेषे व्यापारविशेषो न तु व्यापारसामान्यमस्ति। अयं को व्यापारविशेष इत्यत आह—तद् यथेत्यादि। अवलोकयन्त इत्यादि। देवानां नरोन्मादकरणे नरं प्रत्यवलोकनम्। उन्मादं जनयन्तीत्यस्य परत्र सर्व्वत्रान्वयः। गुरुवृद्धसिद्धर्षीणामभिशापः, पितॄणां धर्षणं, गन्धर्व्वाणां स्पर्शनं, यक्षाणां शरीरे समावेशः, राक्षसानामात्मगन्धघ्रापणं, पिशाचानामारोहणपूर्व्वकवाहनम् उन्मादकरणे व्यापारविशेषः ॥ १३ ॥

गङ्गाधरः—तस्यागन्तून्मादस्य रूपाणि सामान्यतो रूपाणि। इमानि कानीत्यत आह—तद् यथेति। अमर्त्त्येत्यादि। अमर्त्त्यानां मनुष्यभिन्नानां देवादीनां बलवीर्य्यादिवद् बलवीर्य्यादिकम्, अनियतश्चोन्मादकालः कदाचित् प्रातः कदाचित् सायं कदाचिन्मध्याह्न एवमन्यत्र उन्मत्तताधिक्यमित्यर्थः। इत्येतानि सामान्यरूपाणि भूतोन्मादानां, विशेषरूपाणि देवादिजानि चिकित्सिते वक्ष्यन्ते। सुश्रुतेऽप्युक्तं—गुह्यानागतविज्ञानमनवस्थासहिष्णुता। क्रिया वाऽमानुषी यस्मिन् स ग्रहः परिकीर्त्त्यते॥ इति ॥ १४ ॥

कारहचिस्त्वम्। अनोजा इत्योजःकार्य्यबलादिरहितः; प्रवर्त्तनं प्रेरणम्, दर्शयन्त इत्यत्रात्मानम् इति शेषः। 'अत्यात्म'शब्दो बलादिभिः प्रत्येकमभिसम्बध्यते; आत्मानमिति चेति अत्यात्मत्वेनात्माननुरूपबलादियोगो भवतीत्यर्थः ॥ १२—१४ ॥

---

* आत्मगन्धमित्यत्र आमगन्धमिति वा पाठः। † अमर्त्त्येत्यत्र अत्यात्मेति चक्रपाणिः।

उन्मादयिष्यतामपि तु खलु देवर्षिपितृगन्धर्व्वयक्षराक्षसपिशाचानां गुरुवृद्धसिद्धानां* वा एष्वन्तरेष्वभिगमनीयाः पुरुषा भवन्ति । तद् यथा—पापस्य कर्म्मणः समारम्भे, पूर्व्वकृतस्य कर्म्मणः परिणामकाले, एकस्य वा शून्यगृहनिवासे, चतुष्पथाधिष्ठाने, सन्ध्यावेलायाम्, अप्रयतभावे वा पर्व्वसन्धिषु वा मिथुनीभावे, रजस्वलाभिगमने वा, विगुणे वाध्ययनबलिमङ्गलहोमप्रयोगे, नियमव्रतब्रह्मचर्य्यभङ्गे वा, महाहवे वा, देशकुलपुरविनाशे वा, महाग्रहोपगमने वा, स्त्रिया वा प्रजननकाले, विविधभूताशुभाशुचिसंस्पर्शने वा, वमनविरेचनरुधिरस्रावे वा, अशुचेरप्रयतस्य वा, चैत्यदेवतायतनाभिगमने वा, मांसमधुतिलगुड़मद्योच्छिष्टे वा, दिग्वाससि वा, निशि

गङ्गाधरः—ननु देवादिषु कः कस्मिन् कस्मिन् काले पुरुषमभिगच्छतीत्यत आह—उन्मादयिष्यतामित्यादि । एष्वन्तरेषु अभ्यन्तरसमयेषु । तद् यथेत्यादि । पापस्येत्यादि । एकस्य एकाकिपुरुषस्य शून्यगृहे पलायितगृहे निवासकाले, अप्रयतभावे असंयतभावे, पर्व्वसन्धिषु पञ्चपर्व्वणां पौर्णमास्यादीनां सन्धिसमयेषु; अध्ययनादीनां प्रयोगे विगुणे वैषम्येणाचरणे, नियमः सत्कर्म्मसु नियमः, प्राजापत्यादि व्रतं, ब्रह्मचर्य्यमुपस्थसंयमः महाहवे महायुद्धे महाग्रहोपगमने, दीर्घकालमेकराशिस्थितिशीलो ग्रहो बृहस्पत्यादिस्तस्य राश्यन्तरगमने, प्रजननकाले प्रसवकाले, विविधानां भूतानां श्वसृगालादीनाम्, अशुभानां गोधूल्यादीनाम्, अशुचीनां भस्मकेशास्थ्यादीनां संस्पर्शने, रुधिरस्रावः सिराव्यधादिना क्षताद्वान्यस्माद् वा निमित्तात् । अशुचेः पुरुषस्य अप्रयतस्यासंयतस्य पुरुषस्य वा चैत्ये ग्राम्यदेवायतनप्रधानवृक्षे देवायतने तद्गृहस्थभवनस्थदेवालये मांसादुच्छिष्टं मांसादिभक्षणानन्तरम्

चक्रपाणिः—पर्व्वसन्धिरमावस्या पौर्णमासी च । दिग्वाससीति नग्ने । 'निशि' इत्यादौ

* गुरुवृद्धसिद्धानामिति पाठो न दृश्यते केषुचित् पुस्तकेषु ।

नगरनिगमचतुष्पथोपवनश्मशानायतनाभिगमने वा, द्विज-गुरुसुरपूज्याभिधर्षणे वा, धर्म्माख्यानव्यतिक्रमे वा, अन्यस्य वा कर्म्मणोऽप्रशस्तस्यारम्भे। इति अभिघातकाला व्याख्याता भवन्ति ॥ १५ ॥

त्रिविधन्तु खलून्मादकराणां भूतानामुन्मादने प्रयोजनं भवति। तद् यथा—हिंसा रतिरभ्यर्च्चनञ्चेति। तेषां तं प्रयोजनविशेषमुन्मत्ताचारविशेषलक्षणैर्विद्यात्। तत्र हिंसार्थ-मुन्माद्यमानोऽग्निं प्रविशत्यप्सु वा मज्जति स्थलात् श्वभ्रे वा पतति, शस्त्रकषाकाष्ठलोष्ट्रमुष्टिभिः हन्त्यात्मानम् अन्यच्च प्राणवधार्थमारभते किञ्चित्, तमसाध्यं विद्यात्। साध्यौ पुनर्द्वावितरौ। तयोः साधनानि मन्त्रौषधिमणिमङ्गलबल्युपहार-होम-नियमव्रतप्रायश्चित्तोपवासस्वस्त्ययनप्रणिपातगमनादीनि। इत्येवमेते पञ्चोन्मादा व्याख्याता भवन्ति ॥ १६ ॥

अनाचमने, दिग्वाससि दिगम्बरभावे। निशि चतुष्पथोपगमनस्य विशेषेणाभि-घातकालत्वं बोध्यं पुनरुक्तत्वात्। अभिघातकाल इति देवादीनामुन्मादकरण-कालः ॥ १५ ॥

गङ्गाधरः—ननु देवादयः किमर्थमुन्मादयन्ति इत्यत आह—त्रिविधन्तु इत्यादि। रतिर्विहारः। सुश्रुतेऽप्युक्तम्—अशुचिं भिन्नमर्य्यादं क्षतं वा यदि वाक्षतम्। हिंस्युर्हिंसाविहारार्थं सत्कारार्थमथापि च ॥ इति। ननु हिंसाद्यर्थ-ग्रहणं देवादीनां कुतो ज्ञायत इत्यत आह—तत्रेत्यादि। तत्र त्रिविधप्रयोजनेषु। तमसाध्यमिति हिंसार्थं ग्रहणमसाध्यम्। इतरौ विपर्य्ययलक्षणौ ॥ १६ ॥

पुनश्चतुष्पथवचनं, निशि पुनश्चतुष्पथगमनप्रदर्शनार्थम्। एकस्येत्यादौ तु दिवाप्येकस्य चतुष्पथ-गमनं ब्रुवते। धर्म्माख्यानव्यतिक्रम इत्यविधिना धर्म्मप्रकाशने ॥ १५ ॥

चक्रपाणिः—रतिः क्रीड़ा; अभ्यर्च्चनं पूजा; उन्मादाचारविशेषलक्षणैर्विद्यादिति उन्मत्तस्य आचारविशेषरूपैर्लक्षणैः हिंसार्थिनोन्मादितं विद्यात्, तत्र हिंसार्थिनोन्मादितो हिंसानुगुणमग्नि-प्रवेशाद्याचरति। रत्यर्थिना चोन्मादितः क्रीड़ार्थं प्रचरति। पूजार्थिना गृहीतो पूजां चेष्टते;

ते तु खलु निजागन्तुविशेषेण साध्यासाध्यविशेषेण च विभज्यमानाः पञ्च सन्तो द्वावेव भवतः। तौ च परस्परमनुबध्नीतः कदाचिद् यथोक्तहेतुसंसर्गात्। तयोः संसृष्टमेव पूर्व्वरूपं भवति संसृष्टमेव लिङ्गञ्च। तत्रासाध्यसंयोगं साध्यासाध्यसंयोगं वा असाध्यं विद्यात्, साध्यन्तु साध्यसंयोगम्। तस्य साधनं साधनसंयोगमेव विद्यादिति ॥ १७ ॥

गङ्गाधरः—पञ्चविधोन्मादानां भेदान्तरमाह—ते त्वित्यादि। ते वातादिभेदेन पञ्च सन्तोऽपि निजागन्तुभेदेन द्वौ भवतः। साध्यासाध्यभेदेन च द्वौ भवतः। तौ निजागन्तू साध्यासाध्यौ चोन्मादौ परस्परमनुबध्नीतः। निजम् आगन्तुरनुबध्नाति आगन्तुश्च निजोऽनुबध्नाति। तत्र साध्यासाध्यौ च परस्परम् अनुबध्नीत इति साध्योऽसाध्यमनुबध्नाति असाध्यः साध्यमनुबध्नाति असाध्यश्चासाध्यं साध्यश्च साध्यमिति तात्पर्य्यम्। ननु निजागन्त्वोः परस्परानुबन्धः कैर्ज्ञायते इत्यत आह—तयोरित्यादि। तयोर्निजागन्त्वोः साध्यासाध्ययोश्च। इति संसृष्टैः पूर्व्वरूपैर्लिङ्गैश्च निजागन्तुसंसज्जनं तयोश्च साध्यासाध्यसंसज्जनं ज्ञेयमित्यर्थः। एतेन निदानसंसर्गात् संसृष्ट एव निजागन्तून्मादो भवतीति सूचितम्। असंसृष्टनिदानादसंसृष्टतया तु जातो निजो वागन्तुर्वाभिप्रवृद्धो यदि स्यात् तदा तु मिथोऽनुबन्धित्वं पूर्व्वमेव व्याख्यातं, सर्व्वव्याधिव्याख्याने आगन्तुरन्वेति निजं विकारं निजस्तथागन्तुमति प्रवृद्धः इति वचनेन। ननु साध्यासाध्यसंसर्गे साध्यमसाध्यं वा कृच्छ्रं वा कथं विजानीम इत्यत आह—तत्रेत्यादि। असाध्ययोर्द्वयोर्निजागन्त्वोः परस्परं संयोगमसाध्यं विद्यात्। साध्यस्य निजस्यासाध्येनागन्तुना संयोगं साध्यस्यागन्तोः

इह च देवादिवचनेन देवाद्यनुचरा देवादिसधर्म्माणो ग्राह्याः, देवादयस्तु न मानुषानाविशन्ति; उक्तं हि सुश्रुते—"न ते मनुष्यैः सह संविशन्ति न वा मनुष्यान् क्वचिदाविशन्ति। ये त्वाविशन्तीति वदन्ति मोहात् ते भूतविद्याविषयादपोह्याः॥" इत्यादि। हिंसार्थिगृहीतस्य असाध्यत्वेन तद्विज्ञानार्थं सामान्योक्तान्यपि लक्षणानि श्रृङ्गग्राहिकतया ब्रुवते। तद् यथेत्यादौ 'गमनम्' देवतीर्थादिगमनम् ॥ १६ ॥

चक्रपाणिः—ताविति तौ निजागन्तू; परस्परमनुबध्नीतः कदाचिदिति न सर्व्वदा। यथोक्तहेतुसंसर्गादिति निजागन्तुहेतुमेलकात्। तत्रेति निजागन्तुसंसर्गे; असाध्यसंयोगमिति यदा

भवन्ति चात्र।

नैव देवा न गन्धर्व्वा न पिशाचा न राक्षसाः।
न चान्ये स्वयमुत्क्लिष्टमुपक्लिश्यन्ति मानवम् ॥
ये त्वेनमनुवर्त्तन्ते क्लिश्यमानं स्वकर्म्मणा।
न तन्निमित्तः क्लेशोऽसौ न ह्यस्ति कृतकृत्यता ॥
प्रज्ञापराधात् सम्भूते व्याधौ कर्म्मज आत्मनः।
नाभिशंसेद् बुधो देवान् न पितॄन् नापि राक्षसान् ॥

असाध्येन निजेन संयोगं वा असाध्यं विद्यात्। इति वाशब्दव्यवस्था। साध्ययोः निजागन्त्वोर्मिथः संयोगन्तु साध्यं विद्यादिति।* तस्य निजागन्तु-संसर्गस्य साधनसंयोगं निजस्य साधनानां स्नेहस्वेदादीनामागन्तोः साधनै-र्मन्त्रौषधिमण्यादिभिः सह संयोगम् ॥ १७ ॥

गङ्गाधरः—ननु देवादयः किं पुरुषमुन्मादयन्ति तेषामनिष्टमकुर्व्वन्तमनिष्ट-करं हि हिंस्यादित्याशङ्कायामाह—भवन्तीत्यादि। नवेत्यादि। देवादयो न मानवमुपक्लिश्यन्ति क्लेशयन्ति; यतस्तु मानवं स्वयं प्रज्ञापराधात् पूर्व्वकृता-प्रशस्तकर्म्मणा स्वतः क्लिष्टं। ननु तत् कथमुन्मादयन्तीत्यत आह—ये त्वेनमिति। ये तु देवादयः स्वकर्म्मणा क्लिश्यमानमेनं पुरुषमनुवर्त्तन्ते तस्य पुरुषस्यासौ क्लेशो न तन्निमित्तस्तत्तद्देवादिनिमित्तो न ज्ञेयः। ननु देवादय एव उन्मादयन्ति इति दृश्यते तत्तल्लिङ्गदर्शनात् कथं तत्तद्देवादिनिमित्तो नासौ क्लेश इत्यत आह—न ह्यस्तीत्यादि। आत्मनः प्रज्ञापराधात् कृतकर्म्मजे व्याधौ

त्रिदोषजोन्मादे हिंसार्थिना देवादिनानुबन्धो भवति, तदा असाध्यसंयोगो भवति; असाध्य-साध्यसंयोगस्तु एकदोषोन्मादे हिंसार्थिनोन्मादयोगात् तथा हिंसार्थिनोन्मादे हि दोषोन्मादानु-बन्धाच्चेत्यादिर्ज्ञेयः; साध्यसंयोगस्य साध्यरूपतयैव साध्यतायां सिद्धायां पुनः 'साध्यम्' इति वचनं साध्यरूपविकारान्तरसम्बन्धे विकारभूयस्त्वेनासाध्यशङ्काप्रतिषेधार्थम्; साधन-संयोगमेवेति निजागन्तुसाधनमेलकमित्यर्थः ॥ १७ ॥

चक्रपाणिः—सम्प्रति देवाद्युन्मादहेतुपरिग्रहार्थं देवेष्वपि कृतमेव कर्म्म कारणं दर्शयन्नि—नैवेत्यादि। 'अनुवर्त्तन्ते' इतिवचनात् दुष्कृतकर्म्मप्रेरिता एव देवादयोऽशुभकर्म्माणमभि-निविशन्तीति दर्शयति; यदि हि एवमेव देवादयः कर्म्मनिरपेक्षा उन्मत्तं कुर्य्युः, तदा सर्व्वानेव कुर्य्युरिति भावः; स तद्धेतुकः क्लेश इति नासौ देवादिकृत उन्माद इत्यर्थः। अथ कथं

आत्मानमेव मन्येत कर्त्तारं सुखदुःखयोः ।
तस्माच्छ्रेयस्करं मार्गं प्रतिपद्येत नोत्त्रसेत् * ॥
देवादीनामुपचितिर्हितानाञ्चोपसेवनम् ।
ते च तेभ्यो विरोधाश्च सर्व्वमायत्तमात्मनि ॥ १८ ॥

सम्भूते सति स्वकृतकर्म्मणा कृतस्य तस्य क्लेशस्य परेण कृत्यता कर्त्तव्यता यतो नास्ति, तस्मात् तन्निमित्तो नासौ क्लेशः। नन्वस्त्वेवं, देवादयश्च निन्दार्हा भवन्ति, इति चेदुच्यते नाभीत्यादि। बुधस्तत्त्वज्ञो देवादीन् स्वकृताप्रशस्तकर्म्मणा उन्मादाय प्रवृत्तान् नाभिशंसेत् न निन्देत्। यतो बुधः सुखदुःखयोः कर्त्तारमात्मानमेव मन्येत न त्वपरमिति, तस्मादात्मन एव सुखदुःखकर्त्तृत्वात् श्रेयस्करं शुभकरं मार्गं बुधः प्रतिपद्येत नोत्त्रसेत् नोल्लङ्घयेत्। ननु कुतो नोत्त्रसेदित्यत आह—देवादीनामित्यादि। उपचितिः प्रीणनं, तेभ्यश्च देवादिभ्यश्च ते विरोधा उपचितिविरोधहितसेवनविरोधा एवमन्यच्च सर्व्वम् आत्मनि आयत्तमधीनं चिकीर्षश्चेद्भवति कर्त्तुञ्चालं भवति न चेन्न भवति ॥ १८ ॥

देवाद्यावेशजनितोऽप्ययं न देवादिकृत इत्याह—न ह्यस्ति कृतकृत्यतेति ; न यस्मादशुभकर्म्मणा कृते उन्मादे पुनर्देवादिकृत्यत्वमस्ति, न हि कृतं पुनः क्रियते, देवादयश्च कर्म्मपराधीना एवेति भावः। किंवा 'न ह्यस्य कृतकृत्यता' इति पाठः, तत्र कृतेनैव प्राक्तनकर्म्मणा उन्मादितो न कृत्यः करणीयः पुरुषो भवति ; अन्यथा, सर्व्वथा सर्व्वेषामेवाविशेषेण देवादुन्मादः स्यात् ; तस्यैव उन्मादः स्यात्, येनैवोन्मादफलजनकं कर्म्म कृतम्, स एव देवादिभिः कर्म्मपराधीनैरभिगम्यते। अनेनाभिप्रायेणाह—न ह्यस्य कृतकृत्यता इति ; अकृतपापकर्म्मणो न देवाद्यभिगमनीयतास्तीत्यर्थः। यस्माद् देवादयोऽत्र पराधीनास्तस्माद् देवादयो नोपलभ्याः। न च देवादिभ्यो भेतव्या इत्याह—प्रज्ञापराधादित्यादि। नाभिशंसेदिति नोपलभेत। आत्मानमित्यादौ आत्मैव शुभाशुभकर्म्मकरणात् सुखदुःखयोर्यथासंख्यं कारणं भवतीति वाक्यार्थः ; नो त्रसेदिति देवादिभ्यः, एवमेवामी शुभकर्म्माणमपि गृह्णन्तीति कृत्वा नो त्रसेत्। अपचितिः पूजा ; ते चेत्यादौ ते चेति देवापचितिः हितोपसेवनञ्च ; तेभ्यो विरोधश्चेति तेभ्यो देवादिभ्यो विरोधो यथा भवति

* नो त्रसेदित्यपि पाठः।

तत्र श्लोकः।

सङ्ख्या निमित्तं प्राग्रूपं लक्षणं साध्यता न च।
उन्मादानां निदानेऽस्मिन् क्रियासूत्रञ्च भाषितम् ॥ १९ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते निदानस्थाने
उन्मादनिदानं नाम सप्तमोऽध्यायः ॥ ७ ॥

गङ्गाधरः—अध्यायार्थमुपसंहरति—तत्र श्लोक इति। सङ्ख्येत्यादि। चकाराद् असाध्यं मिथोऽनुबन्धश्च। उन्मादानामिति निजानामागन्तोश्च। अस्मिन् उन्मादनिदानेऽध्याये ॥ १९ ॥

अध्यायं समापयति—अग्नीत्यादि।

इति श्रीगङ्गाधरकविरत्नकविराजविरचिते चरकजल्पकल्पतरौ द्वितीयस्कन्धे
निदानस्थानजल्पे उन्मादनिदानजल्पाख्या सप्तमी शाखा ॥ ७ ॥

अशुभकर्मभ्यः, तत्सर्वमात्मन्यायत्तम्; एतेन, आत्माधीनमेवेदमुन्मादकारणस्य परिवर्जनं परिषेवणञ्च दर्शयति ॥ १८।१९ ॥

इति चरकचतुरानन-श्रीमच्चक्रपाणिदत्तविरचितायाम् आयुर्वेददीपिकायां निदानस्थानस्य
व्याख्यायाम् उन्मादनिदानं नाम सप्तमोऽध्यायः ॥ ७ ॥

## अष्टमोऽध्यायः ।

**अथातोऽपस्मारनिदानं व्याख्यास्यामः, इतिह स्माह भगवानात्रेयः ॥ १ ॥**

इह खलु चत्वारोऽपस्मारा भवन्ति वातपित्तकफसन्निपातनिमित्ताः । त एवंविधानां प्राणभृतां क्षिप्रमभिनिर्व्वर्त्तन्ते ; तद् यथा—रजस्तमोभ्यामुपहतचेतसाम्, उद्भ्रान्तविषमवहुदोषाणां, समलविकृतोपहितान्यशुचीन्यभ्यवहारजातानि वैषम्ययुक्तेनोपयोगविधिनोपयुञ्जानानां, तन्त्रप्रयोगमपि च विषममाचरतामन्याश्च शरीरचेष्टा विषमाः समाचरतामत्युपक्षीणदेहानां वा दोषाः प्रकुपिता रजस्तमोभ्यामुपहतचेतसाम् अन्तरात्मनः श्रेष्ठतममायतनं हृदयमुपसंगृह्योपरि तिष्ठन्ते,

गङ्गाधरः—अथ मानसविकारत्वसाधर्म्म्यादेकविधकारणत्वाच्चोन्मादानन्तरम् अपस्मारनिदानमाह—अथात इत्यादि ॥ १ ॥

गङ्गाधरः—इहेत्यादि । चत्वार इति संख्यानिर्द्देशः । तद्विवरणं वातेत्यादि । त इति चत्वारोऽपस्माराः । किंविधानामित्यत आह—तद् यथेति । रजस्तमोभ्यामुपहतं क्षीणीभूतं सत्त्वं यत्र तादृशं चेतो येषां तेषां तथा । रजश्च तमश्च द्वौ मानसदोषौ । उद्भ्रान्ता उद्धता हृदयादूर्द्ध्वं भ्रमणशीला विषमा वृद्धा बहवोऽधिकमानेन सञ्चिता दोषाः शारीरदोषा वातादयः येषां तेषां तथा । समलेत्यादि पूर्व्ववद् व्याख्येयम् ; दोषा वातादयः ; रजस्तमोभ्यामुपहतं चेतः क्षीणसत्त्वं मनो येषां तेषां तथा । अन्तरात्मनः आभ्यन्तरेन्द्रियस्य मनसः श्रेष्ठतममन्य-

चक्रपाणिः—उन्मादानन्तरं प्रागुत्पत्तौ अपस्मारोत्पादादपस्मारनिदानमुच्यते । चत्वार इति वचनमागन्तुसम्बन्धेऽप्यपस्माराणां चतुष्टयत्वप्रतिपादनार्थम् ; अपस्मारो हि नोन्मादवत् स्वतन्त्रेणागन्तुना क्रियते । उद्भ्रान्तविषमबहुदोषाणामित्यत्रोद्भ्रान्तत्वेनोन्मादित्वम्, विषमत्वेन कदाचिदपस्मारवेगकर्तृत्वं दर्श्यते ; समलेत्यादि उन्मादव्याख्यानतुल्यम् ; अत्युपक्षीणदेहानां वेति अत्युपक्षीणदेहत्वादित्यर्थः ; उन्मादनिदानेऽपि समलविकृतादिग्रन्थे 'अत्युपक्षीण-

तथेन्द्रियायतनानि। तत्र तत्र चावस्थिताः सन्तो यदा हृदयमिन्द्रियायतनानि चेरिताः कामक्रोधलोभमोहहर्षभयशोकचिन्तोद्वेगादिभिः भूयः सहसाभिपूरयन्ति तदा जन्तुः अपस्मरति ॥ २ ॥

अपस्मारं पुनः स्मृतिबुद्धिसत्त्वसंप्लवाद् बीभत्सचेष्टमावस्थिकं तमःप्रवेशमाचक्षते ॥ ३ ॥

स्थानापेक्षयातिशयेन श्रेष्ठतमाधिष्ठानत्वात्। तथेन्द्रियायतनानि श्रोत्रादीनां स्थानानि चोपगृह्य उपरि तिष्ठन्ते, तत्र तत्र मनःस्थाने हृदये श्रोत्रादिस्थाने च कर्णादौ अवस्थिताः सन्तो वातादयः भूयः पुनरपि कामादिभिरीरिता यदा हृदयम् इन्द्रियायतनानि च कर्णादीनि सहसा पूरयन्ति, तदा प्राणी अपस्मरति। रजस्तमोभ्यामुपहतसत्त्वमात्रे पुरुषो नापस्मरति पुनर्वातादिदूषितत्वेऽपस्मरतीति मानसोऽपि शारीरः ॥ २ ॥

नन्वपस्मरणं किं तावदित्यत आह—अपस्मारमित्यादि। स्मृतिबुद्धिसत्त्वसंप्लवात् दोषजन्यस्मृतिबुद्धिमनःसमावृतिजन्यां, बीभत्सा नेत्रमुखादिवैकृतफेनोद्वमनादिरूपा चेष्टा यत्र तं, तथा आवस्थिकं न सार्व्वकालिकं तमःप्रवेशमन्धकारे मग्नोऽहमिति स्वस्थस्यामावस्यारात्र्यादिषु यस्तमःप्रवेशो जातान्धस्य वा यस्तस्य वारणायावस्थिकपदं, मूर्च्छावतामन्धकारप्रवेशस्य वारणाय बीभत्सचेष्टपदं, कस्यचिन्निद्रितस्य निद्रावस्थायां बीभत्सचेष्टा हि दृश्यते तस्य निद्रावस्थिकतमःप्रवेशवारणाय स्मृत्यादिसंप्लवपदम्। अत्र सत्त्वं मनः स्मृत्यादित्रयप्लवनं स्वरूपलक्षणम्। तमःप्रवेशपदेन उन्मादस्य व्यवच्छेदः उन्मादश्चोक्तः मनोबुद्ध्यादिविभ्रमः। सुश्रुतेऽपि स्मृतिर्भूतार्थविज्ञानमपस्तत्परिवर्ज्जने। अपस्मार इति प्रोक्तस्ततोऽयं व्याधिरन्तकृत् ॥ इति। ननून्मादे भक्तिशीलाचारचेष्टाविभ्रमोऽप्यधिकोऽस्ति तेन तद्व्यावृत्तिः

देहानाम्' इत्युक्तम्; श्रेष्ठतमायतनमिति, अन्योऽपि शरीरदेशोऽन्तरात्मनः स्थानम्, हृदयन्तु श्रेष्ठतमम्, तत्रैव चेतना; विशेषेण पूरयन्ति यदा, तदा अपस्मरति अपस्मारवेगयुक्तो भवतीति वाक्यार्थः ॥ १—२ ॥

चक्रपाणिः—अपस्मारस्यात्मलक्षणमाह—अपस्मारं पुनरित्यादि। संप्लवादिति विकृतिगमनात्; बीभत्सा फेनवमनाङ्गभङ्गादिरूपा चेष्टा यस्मिन्, तद् बीभत्सचेष्टम्; आवस्थिकं

तस्येमानि पूर्व्वरूपाणि भवन्ति। तद् यथा—भ्रूव्युदासः सततमक्ष्णोर्वैकृतमशब्दश्रवणं लालासिंघाणकस्रवणम्, अनन्नाभिलषणमरोचकाविपाकौ हृदयग्रहः कुक्षेराटोपो दौर्ब्बल्यमङ्गमर्दो मोहस्तमसो दर्शनम् मूर्च्छा भ्रमश्चाभीक्ष्णं स्वप्ने च मदनर्त्तनव्यधनव्यथनवेपनपतनादीनि, इत्यपस्मार-पूर्व्वरूपाणि भवन्ति ॥ ४ ॥

ततोऽनन्तरमपस्माराभिनिर्व्वृत्तिरेव। तत्रेदमपस्मारविशेष-विज्ञानं भवति। तद् यथा—अभीक्ष्णमपस्मरन्तं क्षणे क्षणे संज्ञां प्रतिलभमानमुत्पिण्डिताक्षमसाम्ना विलपन्तमुद्वमन्तं फेनम्

भवति इति चेन्न, भक्तिशीलचेष्टाचारविभ्रमस्य बीभत्सचेष्टान्तर्गतत्वेन लाभात् ॥ ३ ॥

गङ्गाधरः—सम्प्राप्तिमुक्त्वा पूर्व्वरूपाण्याह—तस्येमानीत्यादि। तद् यथेति। भ्रूव्युदासः भ्रूभङ्गः। अक्ष्णोः सततं वैकृतं कुटिलता। अशब्दश्रवणं शब्दा-भावेऽपि शब्दस्येव श्रवणम्। कुक्षेराटोपो गुड़्गुड़ाशब्दस्तनतनिश्च। मोहो मन-इन्द्रियमोहः। तमोदर्शनमकस्मादन्धकारदर्शनं न च पतनम्। मूर्च्छा इन्द्रियमोहः। भ्रमश्चक्रस्थितस्येव गात्रभ्रमणं गृहादिभ्रमणश्च। मदो मत्तता पूगकोद्रवादिभक्षणेन यथा स्यात् तथा। स्वप्ने च मदादीनि ॥ ४ ॥

गङ्गाधरः—ततोऽनन्तरमिति। ततोऽनन्तरं पूर्व्वरूपानन्तरम्। तत्रा-पस्माराभिनिर्व्वृत्तौ सत्याम्। इदं किमत आह—तद् यथेत्यादि। अभीक्ष्णं वारंवारमपस्मरन्तं स्मृत्यादिसंप्लवात् भूमिपतनपूर्व्वकबीभत्स-चेष्टावस्थिकतमःप्रवेशवन्तम्, संज्ञां चैतन्यं क्षणे क्षणे प्रतिलभमानम् अर्थात् क्षणे क्षणे च संज्ञाहीनम्, उत्पिण्डिताक्षम् ऊर्द्धीभूतपिण्डाकाराक्षम्, असाम्ना

तमःप्रवेशमिति कादाचित्कं तमःप्रवेशम्; तमःप्रवेश इति तमःप्रवेशोऽज्ञानसाधर्म्यात्; अपस्मारवेगवान् हि तमःप्रवेश इव न किञ्चिद् बुध्यते। अशब्दश्रवणमिति शब्दविशेषो वात-जन्यः श्रूयत इत्यर्थः ॥ ३।४ ॥

चक्रपाणिः—तत्रेदमित्यादि। विशेषविज्ञानं वाताद्यपस्मारलिङ्गमित्यर्थः; क्षणेन संज्ञां

अति आखात-*-ग्रीवमाविद्धशिरस्कं विषमविनताङ्गुलिमनवस्थितसक्थिपाणिपादम् अरुणपरुषश्यावनखनयनवदनत्वचम् अनवस्थितचपलपरुषरूपदर्शिनं वातलानुपशयं विपरीतोपशयं वातेनापस्मारितं विद्यात् ॥ ५ ॥

अभीक्ष्णमपस्मरन्तं क्षणे क्षणे संज्ञां प्रतिलभमानमवकूजन्तम् आस्फालयन्तं भूमिम्, हरितहारिद्रताम्रनखनयनवदनत्वचं रुधिरोक्षितोग्रभैरवप्रदीप्तरुषितरूपदर्शिनं पित्तलानुपशयं विपरीतोपशयञ्च पित्तेनापस्मारितं विद्यात् ॥ ६ ॥

चिरादपस्मरन्तं चिराच्च संज्ञां प्रतिलभमानं पतन्तम् अनतिविकृतचेष्टं लालामुद्वमन्तं शुक्लनखनयनवदनत्वचं

विलपन्तमप्रीत्या रुदन्तम्। अति चाखातग्रीवमिति ग्रावाभङ्गेण खननमिव ग्रीवायाः, आविद्धशिरस्कं सूच्यादिभिरिव, विषमविनता वैषम्ये नम्रा अङ्गुलयो यस्य तं तथा। अनवस्थितमवस्थातुमशक्यं सक्थिपाणिपादं यस्य तं तथा। अनवस्थितं चपलं विद्युदादिव परुषञ्च रूपं मूर्त्तिर्यस्य सन्दर्शिनम् अपस्मारकाले वातलैर्वातवर्द्धनैर्भावैरनुपशयो यस्य तं तथा। विपरीतं वातहरणैरुपशयो यस्य तं तथा। अपस्मारितमित्यपस्मारेः कर्म्मणि क्तः ॥ ५ ॥

गङ्गाधरः—अभीक्ष्णमित्यादि। रुधिरोक्षितं शोणितोपसिक्तगात्रश्चोग्रश्च क्रुद्धश्च भैरवं भयजनकश्च दीप्तं ज्वलितं रुषितं गूढ़क्रुद्धश्च द्रष्टुं शीलं यस्य तं तथा ॥ ६ ॥

प्रतिलभमानमिति वातापस्मारे शीघ्रं प्रबोधो भवतीति दर्शयति; आध्मातग्रीवमिति पूरितस्तब्धग्रीवम्; आविद्धशिरस्कमिति वक्रशिरस्कम्; अनवस्थितचपलरूपदर्शनञ्च पतनकाले ज्ञेयम्; पतितस्तु न बुध्यत एव; एवमन्यत्रापि रूपदर्शनं ज्ञेयम्; सुश्रुतेऽपि पतनकाल एव रूपदर्शनमुक्तम्, यथा—"यो ब्रूयात् विकृतं सत्वं कृष्णं मामनुधावति। ततो मे चित्तनाशः स्यात् सोऽपस्मारोऽनिलात्मकः" ॥ इत्यादि ॥ ५ ॥

चक्रपाणिः—पित्तापस्मारे यद्यपि विशेषलक्षणे क्षणेन संज्ञां प्रतिलभमानमित्युक्तम्, तथापि वातापेक्षया कालप्रकर्षोऽत्र ज्ञेयः, पित्तादपि हि वायुः शीघ्रकारी भवति। उग्रं हिंसकमिव;

* आखातेत्यत्र आध्मातेति चक्रः पठति।

शुक्लगुरुस्निग्धरूपसन्दर्शिनं * श्लेष्मलानुपशयं विपरीतोपशयञ्च श्लेष्मणापस्मारितं विद्यात् ॥ ७ ॥

समवेतसर्व्वलिङ्गमपस्मारं सान्निपातिकं विद्यात्, तम् असाध्यम् आचक्षते। इति चत्वारोऽपस्मारा व्याख्याताः ॥८॥

तेषामागन्तुरनुबन्धो भवत्येव कदाचित्, स उत्तरकालम्

गङ्गाधरः—चिरादित्यादि। पतन्तं भुवि पतन्तम् ॥ ७ ॥

गङ्गाधरः—अथ सन्निपातजापस्मारस्य प्रकृतिसमसमवायारब्धस्य द्वन्द्वजानाञ्च प्रकृतिसमसमवेतानां दोषभेदविकल्पैर्लाभेऽपि यत् सन्निपातजस्य गणनं कृतं तेन विकृतिविषमसमवायारब्धत्वं सन्निपातजस्य लभ्यते तन्निरासाय पृथग्जलिङ्गातिदेशेन सान्निपातिकापस्मारमाह—समवेतसर्व्वलिङ्गमित्यादि। वातादिजानां सर्व्वेषां त्रयाणामपस्माराणां लिङ्गानि समवेतानि मिलितानि यत्र तं तथा। एतेन प्रकृतिसमसमवेतद्वन्द्वजानां विकृत्यारब्धसन्निपातस्य च निरासः। तमसाध्यं प्रभावात्। केचित् तु व्याधिप्रभावात् द्वन्द्वजा न भवन्ति सन्निपातजस्तु प्रकृतिसमसमवायाद् भवति तस्यासाध्यत्वाद् गणनमाचार्य्येण क्रियते यत्र साध्यत्वं तत्र न गणनमित्यतः पृथग्वातादिलिङ्गानि समवेतानि मिलितानि यत्र तं तथेत्येवं द्वन्द्वजानामनुक्तौ सन्निपातस्य उक्तौ व्याचक्षते ॥ ८ ॥

गङ्गाधरः—नन्वपस्मारोऽप्युन्मादवदशुचिभोजनविषमतन्त्रप्रयोगादितो भवति देवादयश्च भूता दोषजमुन्मादमनुबध्नन्ति न कथमस्मारमित्यत आह—तेषामित्यादि। तेषां चतुर्णां दोषजानामपस्माराणामनुबन्ध आगन्तुदेवादिग्रहो भवत्येव कदाचित् न तु सर्व्वदा न त्वागन्तून्मादवद्देवादिभ्योऽपस्मारः पृथक् पञ्चमो भवति। अत एव सुश्रुते भूतविद्याख्येऽङ्गेऽपस्मारः पठितश्चिकित्सा चोन्मादीयातिदिष्टा। तस्य कार्य्यो विधिः सर्व्वो य

भैरवन्तु अहिंसकमपि भयजनकं श्मशानादि; आदीप्तं ज्वलितम्। चिरादपस्मरन्तमिति भूयसा कालेनापस्मारवेगवन्तम् ॥ ६—८ ॥

चक्रपाणिः—भवत्येवेत्यत्र 'एव'कारोऽत्यन्तायोगव्यवच्छेदः; यथा—नीलं सरोजं भवत्येव, न च न भवति। 'कदाचित्'पदमत्यन्तायोगव्यवच्छेदार्थतामेव द्योतयति; एतेन सर्व्वापस्मारे

* शुक्लगुरुरूपदर्शिनमिति वा पाठः।

**उपदेक्ष्यते। तस्य विशेषविज्ञानं यथोक्तैर्लिङ्गैर्लिङ्गाधिक्यं दोषलिङ्गाननुरूपं किञ्चित् ॥ ६ ॥**

उन्मादेषु वक्ष्यते इति। न च केवलं हेतुसामान्यात् दोषदूष्यसामान्याच्च अयम् अतिदेश आगन्त्वनुबन्धादपि च। नन्वागन्त्वनुबन्धमपस्मारे कुतो जानीम इत्यत आह—स इत्यादि। विज्ञानैरिति शेषः। नन्वागन्त्वनुबन्धस्य किं विज्ञानम् इत्यत आह—तस्येत्यादि। किञ्चिल्लिङ्गमिति शेषः। चतुर्णामपस्माराणां सामान्यलक्षणं चिकित्सिते वक्ष्यते। सुश्रुतेऽपि सनिदानं सामान्यविशेष-लिङ्गमुक्तम्। मिथ्यादियोगेन्द्रियार्थ-कर्म्मणामतिसेवनात्। विरुद्धमलिना-हार-विहारैः कुपितैर्मलैः। वेगनिग्रहशीलानामहिताशुचिभोजिनाम्। रज-स्तमोऽभिभूतानां गच्छताञ्च रजस्वलाम्। तथा कामभयोद्वेग-क्रोधशोकादिभिः भृशम्। चेतस्यभिहते पुंसामपस्मारोऽभिजायते। संज्ञावहेषु स्रोतःसु दोष-व्याप्तेषु मानवः। रजस्तमःपरीतेषु मूढो भ्रान्तेन चेतसा। विक्षिपन् हस्तपादौ च विजिह्मभ्रू विलोचनः। दन्तान् खादन् वमन् फेनं विवृताक्षः पतेत् क्षितौ। अल्पकालान्तरश्चापि पुनः संज्ञां लभेत सः। सोऽपस्मार इति प्रोक्तः स च दृष्टश्चतुर्व्विधः। वातपित्तकफैर्नॄणां चतुर्थः सन्निपाततः। हृत्कम्पः शून्यता स्वेदो ध्यानं मूर्च्छा प्रमूढता। निद्रानाशश्च तस्मिंस्तु भविष्यति भवत्यथ। वेपमानो दशेद् दन्तान् श्वसन् फेनं वमन्नपि। यो ब्रूयाद्विकृतं सत्त्वं कृष्णं मामनुधावति। ततो मे चित्तनाशः स्यात् सोऽपस्मारो-ऽनिलात्मकः॥ तृट्तापस्वेदमूर्च्छार्त्तो धुन्वन्नङ्गानि विह्वलः। यो ब्रूयाद विकृतं सत्त्वं पीतं मामनुधावति। ततो मे चित्तनाशः स्यात् स पित्तभव उच्यते॥ शीतहृल्लासनिद्रार्त्तः पतन् भूमौ वमन् कफम्। यो ब्रूयात् विकृतं सत्त्वं शुक्लं मामनुधावति। ततो मे चित्तनाशः स्यात् सोऽपस्मारः कफात्मकः॥ हृदि तोदस्तृड्उत्क्लेशस्त्रिष्वप्येतेषु सङ्करात्। प्रलापः कूजनं क्लेशः प्रत्येकन्तु भवेदिह। सर्व्वलिङ्गसमावायः सर्व्वदोषप्रकोपजे॥ अनिमित्तागमाद् व्याधेः

भूतसम्बन्धो भवति, न च स्वतन्त्रापस्मारो भौतिको भवतीति दर्शयति। उत्तरकालमिति चिकित्सिते। यद्यपि चापस्मारचिकित्सितेऽपि प्रपञ्चो न वक्तव्यः, तथापि तत्रोन्मादविधवत्ति-देशात् उन्मादोक्तविस्तार एवेति कृत्वा इहोक्तम्,—'तमुत्तरकालमुपदेक्ष्यामः' इति; उक्तं हि— "यस्यानुबन्धस्त्वागन्तुं दोषलिङ्गाधिकाकृतिम्। पश्येत् तस्य भिषक् कुर्य्यात् आगन्तून्माद-भेषजम्" ॥ इति। यथोक्तलिङ्गैरिति पञ्चमीस्थाने तृतीया; तेन यथोक्तलिङ्गेभ्यो लिङ्गाधिक्यं लिङ्गातिरिक्तत्वम्; तच्चादोषलिङ्गानुरूपं दोषलिङ्गासदृशमित्यर्थः; किञ्चिदिति न सर्व्वम्, किन्तु

* हितान्यपस्माारिभ्यस्तीक्ष्णानि चैव संशोधनान्युपशमनानि यथास्वं मन्त्रादीनि चागन्तुसंयोगे ॥ १० ॥

तस्मिन् हि दक्षाध्वरध्वंसे देहिनां नानादिक्षु विद्रवताम् अभिद्रवणतरणधावनलङ्घनप्लवनाद्यैर्देहविक्षोभणैः पुरा गुल्मोत्-

गमनादकृतेऽपि च। आगमाच्चाप्यपस्मारं वदन्त्यन्ये न दोषजम्। क्रमोपयोगाद्दोषाणां क्षणिकत्वात् तथैव च। आगमाद् वैश्वरूपाच्च स तु निर्व्वर्ण्यते बुधैः। देवे वर्षत्यपि यथा भूमौ वीजानि कानिचित्। शरदि प्रतिरोहन्ति तथा व्याधिसमुच्छ्रयाः। स्थायिनः केचिदन्येन कालेनापि प्रवर्द्धिताः। दर्शयन्ति विकारांस्तु विश्वरूपान् निसर्गतः। अपस्मारो महाव्याधिस्तस्माद् दोषज एव तु। इति॥ ९॥

गङ्गाधरः—लिङ्गान्युक्त्वा चिकित्सासूत्राण्याह—हितानीत्यादि। तीक्ष्णानि तीक्ष्णवीर्य्यद्रव्यकृतानि संशोधनानि वमनादीनि उपशमनानि च तीक्ष्णानि यथास्वं यथादोषं तीक्ष्णानि सन्ति संशोधनानि संशमनानि च यथादोषं तीक्ष्णान्येवेत्यर्थः। मन्त्रादीनि चेति आदिना बलिमङ्गलादीनि चकारात् तीक्ष्णसंशोधनोपशमनानि च। आगन्तुसंयोगे देवादिग्रहानुबन्धे॥ १०॥

गङ्गाधरः—अथ गुल्मादीनाञ्चास्य च ज्वररक्तपित्तवत् प्रागुत्पत्तिमाह—तस्मिन् हीत्यादि। तस्मिन् शास्त्रे प्रसिद्धत्वेन श्रुते दक्षाध्वरध्वंसे। ज्वरात्त्रत्राणभयाद् विद्रवतां नानाविधविध्वस्तत्वादिविद्रवशालिनां दशसु दिक्षु अभिद्रवणं पलायनं तरणं नद्यादिषु सन्तरणं धावनमध्वादिना द्रुतगमनं लङ्घनम्

स्तोकम्। दोषलिङ्गविलक्षणलिङ्गागन्तुरनुबन्धो भवतीत्यभिप्रायः; एतेन स्वातन्त्र्येणागन्त्वपस्मारसम्भवो न भवतीति दर्शयति; यदि हि स्वतन्त्र एवागन्तुः स्यात्, तदा न स्तोकमागन्तुलिङ्गं स्यात्। 'सर्व्वमेवं हितम्' इत्यादिना चिकित्सासूत्रमाह; उपशमनानि च हितानीति योजना॥ ९—१०॥

चक्रपाणिः—सम्प्रत्युक्तानां गदानामुत्पत्तिमाह—तस्मिन्नित्यादि। यद्यपि च ज्वर एव तत्र प्रथम उत्पन्नस्तथाप्यसौ पृथगेव बहुक्रोधरूप उत्पन्न इति कृत्वा पश्चादुच्यते; गुल्मादयस्तु यज्ञध्वंसानन्तरकालभूता एकसामग्रीजातत्वेन प्रथममुच्यन्ते; ज्वरस्य तु सर्व्वप्रथमोत्पत्तिर्ज्वरनिदान

---

* अत्र सर्व्वमेव हितमित्यधिकः पाठः क्वचित्।

पत्तिरभूत्। हविःप्राशात् प्रमेहकुष्ठानाम्, भयोत्त्रासशोकैः उन्मादानाम्, नानाविधभूताशुचिसंस्पर्शादपस्माराणाम्। ज्वरस्तु खलु महेश्वरललाटप्रभवः, तत्सन्तापात् तु रक्तपित्तम्, अतिव्यवायान्नक्षत्रराजस्य राजयक्ष्मेति ॥ ११ ॥

तत्र श्लोकाः ।

अपस्मरति वातेन पित्तेन च कफेन च ।
चतुर्थः सन्निपातेन प्रत्याख्येयस्तथाविधः ॥
साध्यांस्तु भिषजः प्राज्ञाः साधयन्ति समाहिताः ।
तीक्ष्णैः संशोधनैश्चैव यथास्वं शमनैरपि ॥
यदा दोषनिमित्तस्य भवत्यागन्तुरन्वयः ।
तदा साधारणं कर्म्म प्रवदन्ति भिषग्वराः ॥
सर्व्वरोगविशेषज्ञः सर्व्वौषधविशेषवित् ।
भिषक् सर्व्वामयान् हन्ति न च मोहं समृच्छति ।
इत्येतदखिलेनोक्तं निदानस्थानमुत्तमम् ॥ १२ ॥

उपवासः प्लवनं जले उत्प्लवनम् । आद्यपदेन पतनादिदेहविक्षोभणदेहक्षोभकरैः । पुरा कृतयुगे । तस्मिन्नेव दक्षाध्वरध्वंसेऽतिशयहविःप्राशात् ॥ ११ ॥

गङ्गाधरः—अस्य चोपसंहारार्थमाह—अपस्मरतीत्यादि । तथाविधः सान्निपातिकोऽपस्मारः । साधारणं मन्त्रादितीक्ष्णसंशोधनसंशमनरूपम् । इत्येतदित्यादिना प्रतिज्ञाताष्टव्याधिनिदानादिव्याख्यानोपसंहारः ॥ १२ ॥

एवोक्तेति भावः । पुरा इत्याद्युत्पत्तौ ; ललाटप्रभव इति क्रोधाग्निप्रभव इत्यर्थः । अन्वयोऽनुबन्धः ; साधारणमिति दोषप्रत्यनीकं रसायनादि, देवादिप्रत्यनीकं बलिमङ्गलादि । निदानस्थानोक्तसर्व्वरोगज्ञानफलमाह—सर्व्वेत्यादि । न च मोहं निगच्छतीति निदानस्थानाद्यनुक्तेऽपि प्रमेये सूक्ष्मेऽपि बहुद्रष्टव्यत्वेन न मोहं गच्छति, किन्तु तदप्यूहत इत्यर्थः । अखिलेनेति यावन्निदानस्थानतया व्याध्यष्टकं प्रतिज्ञातम्, तावदखिलेनोक्तम् ; तेन चिकित्सास्थानवक्तव्यनिदानाभिधानात् न न्यूनत्वम् ; यच्च ज्वरादिनिदानमपि पुनर्वक्तव्यम्, तदस्यैव प्रपञ्च इति भावः ॥ ११ । १२ ॥

निदानार्थकरो रोगो रोगस्याप्युपलभ्यते।
तद् यथा ज्वरसन्तापाद् रक्तपित्तमुदीर्य्यते।
रक्तपित्ताज्ज्वरस्ताभ्यां शोषश्चाप्युपजायते॥

गङ्गाधरः—ननु असात्म्येन्द्रियार्थसंयोगप्रज्ञापराधपरिणामा इति त्रिविधा रोगहेतव उक्ता न चोक्ता दृश्यन्ते रोगा ये रोगहेतव इत्यसमग्रवचनमित्याशङ्कायामाह—निदानार्थेत्यादि। निदानस्यार्थः प्रयोजनं रोगाभिनिर्वृत्तिस्तं करोतीति निदानार्थकरो रोगोऽपि रोगकर इत्यकरणादिदं ज्ञापितं प्रज्ञापराधादिना लब्धबलः सन् रोगोऽपि रोगान्तरस्याप्यभिनिर्वृत्तिकर उपलभ्यते न तु सर्व्वो रोगः सर्व्वरोगकर इति। अत्र रोगोऽसात्म्येन्द्रियार्थयोगादिनिदानसम्भूतवातादिवैषम्यनिमित्तो वाताद्यात्मको विशिष्टो ज्वरादिर्न तु धातुवैषम्यमात्रम्, तस्य सर्व्वरोगप्रकृतित्वेनोक्तत्वात्। यथा प्रज्ञापराधादिना वातादयः ज्वरादुग्रक्तनिदानेन वा सञ्चिताः प्रकुपिताश्च ज्वरादिरूपेण परिणम्यन्ते तथा ज्वरादिरूपेणोत्पन्नाः पुनः प्रज्ञापराधादिरूपैरेव रक्तपित्तादुग्रक्तनिदानैर्लब्धबलाः सर्व्वांशेन कियदंशेन वा रक्तपित्तादिनानारूपेण परिणम्यन्ते इति दोषवद्विशिष्टरोगा अपि रोगान्तरहेतवो न दोषातिरिक्ता हेतवो वलयस्वर्णकृतकुण्डलवत् ज्वरादयो हि यावदसात्म्येन्द्रियार्थादिनिदानैर्लब्धबला न भवन्ति तावन्न रक्तपित्तादिकरा भवन्ति इति।

एके तु प्रज्ञापराधादिकं यत् त्रिविधनिदानमुक्तं तत् सर्व्वव्याधिविषयम्, इदन्तु प्रतिनियतरोगविषयम्। सर्व्वे हि रोगा रोगान्न जायन्ते किन्तु कश्चित् रोगः कुतश्चित् रोगाद्भवतीति रोगाख्यं चतुर्थनिदानमिदमूचुः। तन्न मनोरमम्; उक्तयुक्त्या त्रिविधनिदानादतिरिक्तनिदानाभावात् नवद्रव्यवत्। नवैव द्रव्याणि, तत्र पाञ्चभौतिकानि ताम्रसीसादीनि। तन्मयानि च कांस्यपित्तलादीनि न तु नवातिरिक्तानि। अस्योदाहरणं दर्शयति—तद् यथेत्यादि। रक्तपित्ताज्ज्वरश्चेति ज्वररक्तपित्तयोः परस्पर-

चक्रपाणिः—सम्प्रति निदानप्रकरणाद् रोगाणामपि केषाञ्चिद् व्याधिं प्रति कारणत्वं यत् सम्भवति, तदनुक्तमाह—निदानार्थेत्यादि। निदानस्यार्थः प्रयोजनं व्याधिजननम्, तत् करोतीति निदानार्थकरो व्याधिजनक इति भावः; निदानरूप इति वक्तव्ये यन्निदानार्थकर इति ब्रूते तेन, व्याधिना व्याध्यन्तरे क्रियमाणेऽपि मूलभूतव्याधिजनक एव हेतुः, व्याधिजन्येऽपि व्याधौ मूलव्याधिजननारम्भकापरं निदानमिति दर्शयति; तेन रोगजन्येऽपि रोगे

प्लीहाभिवृद्ध्या जठरं जठराच्छोफ एव च ।
अर्शोभ्यो जठरं दुःखं गुल्मश्चाप्युपजायते ॥
प्रतिश्यायादथो कासः कासात् संजायते क्षयः ।
क्षयोरोगस्य हेतुत्वे शोषश्चाप्युपजायते * ॥
ते पूर्व्वं केवला रोगाः पश्चाद्धेत्वर्थकारिणः ।
उभयार्थकरा दृष्टास्तथैवैकार्थकारिणः ॥

कार्य्यकारणभावः। ताभ्यां रक्तपित्ताज्ज्वराच्च शोषो राजयक्ष्मा। जठरमिति प्लीहाख्यजठरमन्यज्जठरं वा। शोफः श्वयथुः। अर्शोभ्यो जठरम् अर्शोभ्यश्च गुल्मः। क्षय इति ओजःप्रभृतीनां क्षयः। क्षयोरोगस्य क्षयो रसक्षयः शुक्रक्षयश्च, उरोग उरःक्षतं तयोः समाहारस्तस्य, तथा शोषो राजयक्ष्मा। ननु रोगो रोगान्तरस्य यन्निदानं भवति तत् किमुत्पन्नमात्रं किमुतोत्तरकालं, तदा किं रोगत्वेन गृह्यते किं हेत्वर्थकरत्वेन इति ? आह—ते पूर्व्वमित्यादि। ते इति ज्वरादयः पूर्व्वं प्रज्ञापराधादुपष्टंहककारणलाभात् पूर्व्वं केवला रोगा रोगाख्यमात्राणि पश्चाद्रक्तपित्तादिजनकरूपोपष्टंहकहेतुतो लब्धबला हेत्वर्थकारिणः तत्तद्रक्तपित्तादिस्वस्ववाह्यनिदानात् विषमपित्तादिवत्तुल्यरक्तपित्तादिरूप कार्य्यकारिणः स्युने तु तत्तद्रक्तपित्तादिजनकवाह्यहेत्वर्थकारिणः। असात्म्येन्द्रियार्थसंयोगादयो हि वाह्यहेतवो ज्वरादिव्याधिजनकवातादिवैषम्यजननम् अन्तरेण न ज्वरादीनुत्पादयितुं शक्नुवन्ति।

ननु ज्वरादिकरत्वस्वभाववत्तया तु दोषान् कोपयित्वैव ज्वरादीन् जनयन्ति यथा वाह्यहेतवः, तथात्रापि रक्तपित्तादिजनकत्वस्वभाववत्तया

मूलभूतासात्म्येन्द्रियार्थादि कारणत्रयमेव कारणं भवतीति ; न च चतुर्थकारणापत्तिरिति प्रसङ्गो वाच्यः ; ज्वरकारणान्येव हि उष्णादीन्यतिमात्राणि ज्वरमभिनिर्व्वर्त्त्य रक्तपित्तमपि कारणान्तरवर्द्धितशक्तीनि जनयन्तीत्याद्यनुसरणीयम्। गुल्मश्चाप्युपजायते इति अर्शोभ्य एव। कासात् सञ्जायते क्षय इति कासाद्धातुक्षयो जायते, स च धातुक्षयो रोगः शोषाभिधानस्य हेतुरुपलभ्यत इति योजना।

ननु यत्र रोगस्य कारणं रोगो भवति, तत्र किं कारणभूतरोगोऽप्रधानमेवेत्याशङ्क्याह—ते पूर्व्वमित्यादि। ते ज्वरादयो रक्तपित्ताद्युत्पादात् प्राक् पूर्व्वं केवलाः सन्तः

* क्षयो रोगस्य हेतुत्वे शोषस्याप्युपजायते इति द्वितीयः पाठः।

**कश्चिद्धि रोगो रोगस्य हेतुर्भूत्वा प्रशाम्यति।**
**न प्रशाम्यति चाप्यन्यो हेतुत्वं कुरुतेऽपि च॥**

ज्वरादीनुपबृंह्य रक्तपित्तादिकरा वाह्यहेतवो रक्तपित्तादिकं जनयन्तीति। ज्वरादौ वातादिवैषम्यवद्रक्तपित्तादौ ज्वरादिसन्तापो योनिः कथं हेत्वर्थकारिणो भवन्तीति चेत्? न, ज्वरादयो हि यत्किञ्चिदुपबृंहक-हेतुलाभमात्रे रक्तपित्तादिकरा न भवेयुः, किन्तु वृद्धिमाप्नुवन्ति। अन्यथा प्रतिनियतरोगारम्भानुपपत्तिः स्यात् सर्व्वव्याध्यारम्भश्च भवितुमर्हति। इत्थञ्च यथा यद्व्याधिजनकनिदानमासेवते ज्वरी तदा तेन निदानेनोपबृंहितबलः सन् ज्वरस्तद्व्याधिमेवारभते नान्यं रोगम्। न च तदा रक्तपित्तारम्भाय ज्वरारम्भदोषकोपो भवति। यो हि दोषो रक्तपित्तादिकं कुर्य्यादिति ज्वरादिः कार्य्यरूपो व्याधिर्न हेतुरूपो व्याधिरित्यतो रोगान्तर-कारी। ननु रोगो ज्वरादिर्व्याध्यन्तरहेतुर्भवतु तच्च व्याध्यन्तरं स्वकार्य्यं करोतु हेतुरूपश्च ज्वरादिः किं रक्तपित्तरूपकार्य्यकरः, स्वकार्य्य-देहेन्द्रियमनस्तापकरादिर्न स्यादित्यत आह—उभयार्थेत्यादि। उभयमर्थं व्याध्यन्तरारम्भमर्थं स्वं स्वं कार्य्यञ्चार्थं कुर्व्वन्तीत्युभयार्थकराः रक्तपित्तादि-व्याधिरूपं देहेन्द्रियमनस्तापादिरूपञ्च ते ज्वरादयः कुर्व्वन्तीत्युभयार्थकरा दृश्यन्ते केचिद् व्याधयः। तथैव तेन प्रकारेण एकमर्थं व्याध्यन्तरारम्भमेवार्थं कुर्व्वन्ति इत्येकार्थकारिणो दृश्यन्ते। तत्र स्वस्वकार्य्यकरा व्याख्याताः स्वस्वाधिकारे ये त एव बोध्याः।

प्रतिलोमतन्त्रयुक्त्या हेत्वर्थकारिणो द्व्यर्थकारिणश्चोपदर्श्यन्ते—कश्चिद्धी-त्यादि। हि यस्मात् कश्चित् रोगो न सर्व्व एव रोगो रोगान्तरस्य हेतुर्भूत्वा प्रशाम्यतीति हेतुमात्रार्थकरत्वरूपैकार्थकरत्वप्रदर्शनं, न प्रशाम्यतीत्यनेन

रोगा एव रुजाकर्त्तृत्वेन स्वयमेव प्रधाना इति, पश्चाद्धेत्वर्थकारिण इति पश्चाद्रक्तपित्ताद्युत्पादका भवन्तीत्यर्थः। प्रकारान्तरमाह—तथैवैकार्थकारिण इति, एकस्यैव हेतोरर्थं कुर्व्वन्ति एकार्थ-कारिणः। एतदेव पक्षद्वयं प्रातिलोम्येन विवृणोति—कश्चिद्धीत्यादि। अत्र यो हेत्वर्थं व्याधिजननं कृत्वा प्रशाम्यति, स एकार्थकारी; यस्तु हेत्वर्थं व्याध्यन्तरजननं कृत्वापि स्वयमप्यनु-वर्त्तते, स उभयार्थकारी; यदा कासं समारभ्यापि स्वयमनुवर्त्तते, तदा प्रतिश्यायः स्वयञ्च रुजा-कर्त्तृत्वेन रोगार्थकरः, कासजनकत्वेन च हेत्वर्थकरश्च भवति; यदा तु कासं जनयित्वा स्वयं

एवं कृच्छ्रतमा नृणां दृश्यन्ते व्याधिसङ्कराः।
प्रयोगापरिशुद्धत्वात् तथा चान्योन्यसम्भवात्॥
प्रयोगः शमयेद् व्याधिं योऽन्यमन्यमुदीरयेत्।
नासौ विशुद्धः शुद्धस्तु शमयेद् यो न कोपयेत्॥ १३॥
एको हेतुरनेकस्य तथैकस्यैक एव हि।
व्याधेरेकस्य चानेको बहूनां बहवोऽपि च॥

उभयार्थकरत्वोपदर्शनम्। एवमनेन प्रकारेण व्याधिसङ्कुले स पुरुषः कीदृशव्याधित उच्यते, इत्यत आह—एवमित्यादि। नन्वेवं व्याधिसङ्कराः कुतो भवन्तीत्यत आह—प्रयोगापरीत्यादि। प्रयोगाणामौषधयोगानाम् अपरिशुद्धत्वात् तथोक्त-प्रकारेण व्याधीनामन्योन्यसम्भवाच्च व्याधिसङ्करा भवन्तीति। ननु प्रयोगस्या-परिशुद्धत्वं किं तावदित्यत आह—प्रयोग इत्यादि। यः प्रयोग औषधान्न-विहारदेशकालादीनामुपयोग एकं व्याधिं शमयेदन्यमन्यं व्याधिमुदीरयेत् सोऽसौ प्रयोगो न विशुद्धो न परिशुद्धः। ननु कः प्रयोगः परिशुद्ध इत्यत आह—शुद्धस्त्वित्यादि। यस्तु प्रयोग एकमुदीर्णं दोषं शमयेदपरमुदीर्णमनुदीर्णं दोषं न कोपयेत् सोऽसौ प्रयोगः शुद्धः परिशुद्धः उच्यते। एतेनैकैकशो द्विशश्च दोषाज्जाते ज्वरादौ तदनारम्भकदोषकोपजव्याधिमिश्रणेऽपि व्याधिसाङ्कर्य्यं ख्यापितं भवति, न च केवलं हेतूपदृंहितबलव्याधिजव्याधिमिश्रणैर्व्याधि साङ्कर्य्यमिति॥ १३॥

<u>गङ्गाधरः</u>—ननु कुतो रोगा उभयार्थकरा एकार्थकरा निदानार्थकरा वा भवन्ति, येन व्याधिसाङ्कर्य्यं भवत्यन्योन्यसम्भवाद्व्याधीनामित्यत आह—

निवर्त्तते, तदा कासकाले निवृत्तत्वात् हेत्वर्थमात्रं करोतीत्युदाहार्य्यम्। व्याधिसङ्करा व्याधिमेलकाः। कुतः पुनरेवं भवतीत्याह—प्रयोगेत्यादि। प्रयोगापरिशुद्धत्वात्, यथा—आमातीसारे स्तम्भनं कृतं दोषं संस्तभ्य शूलानाहाध्मानादि जनयति। हेत्वन्तरमाह—अन्योन्यसम्भवादिति परस्परकारणस्वरूपत्वादित्यर्थः; प्रतिश्यायो हि स्वरूपेणैव कासकारणम्, स च राजयक्ष्मण इत्यादि ज्ञेयम्। प्रयोगापरिशुद्धिं विवृणोति - प्रयोग इत्यादि। न प्रकोपय-तीति व्याध्यन्तरं न कुर्य्यादित्यर्थः; अन्योन्यसम्भवश्च ज्वरसन्तापाद् रक्तपित्तमुदीर्य्यत इत्यादिनैवोक्तो न विव्रियते॥ १३॥

<u>चक्रपाणिः</u>—हेतुप्रकरणाद्धेतुधर्म्मान्तरमाह—एको हेतुरित्यादि। एतत्पक्षचतुष्टयोदाहरणानि

ज्वरभ्रमप्रलापाद्या दृश्यन्ते रुक्षहेतुजाः।
रुक्षेणैकेन चाप्येको ज्वर एवोपजायते ॥
हेतुभिर्बहुभिश्चैको ज्वरो रुक्षादिभिर्भवेत्।
रुक्षादिभिर्ज्वराद्याश्च व्याधयः सम्भवन्ति हि ॥
लिङ्गञ्चैकमनेकस्य तथैकस्यैकमुच्यते।
बहून्येकस्य च व्याधेर्बहूनां स्युर्बहूनि च ॥

एको हेतुरित्यादि। अनेकस्य व्याधेरेको हेतुर्हि यस्मादस्ति यथा ज्वर-भ्रमप्रलापाद्या रुक्षादेकस्माद्धेतोर्जायन्ते इति दृश्यते। अत्रेदमवधातव्यं, ज्वरभ्रमप्रलापादिजनने विनिगमनाभावस्तु रुक्षस्य भ्रमप्रलापादिकानां यदा यदीयकारणान्तरसहकारः स्यात् तदा तत्तद्व्याधिजनकत्वं स्यादित्यनुगमवचनेन निरसनीयः, कारणान्तरसहकाराभावे तु ज्वर एव स्यादित्यभिप्रायेण। तथैकस्य एक एव व्याधेर्हेतुरिति सूत्रस्योदाहरणं दर्शयति—रुक्षेणैकेन चेत्यादि। एकेन चापि अपिशब्दस्याल्पार्थत्वेन तत्तद्व्याधिजनककारणान्तरसहकाराभावे त्वेकेन तु रुक्षेण एक एव ज्वर उपजायते न तु भ्रमादिः। व्याधेरेकस्य चानेको हेतुरस्ति यथा हेतुभिर्बहुभिरेव रुक्षादिभिरिति रुक्षशीतादिभिरेको ज्वरो भवेत्। बहूनां व्याधीनां बहवोऽपि हेतवः सन्ति यथा—रुक्षादिभिर्ज्वररक्त-पित्तगुल्मादुक्तैः स्वैः स्वैर्बहुभिर्हेतुभिर्ज्वररक्तपित्तादयो बहवो व्याधयः सन्ति, अत एवात्रायं भावः—यस्मात् तु यो जायते तच्चेदन्यस्यापि कारणं स्यात् तदा यद्यपरहेतुसहकारः स्यात् तद्व्याधिस्तस्मान्निदानाद्भवेत् तस्य चोत्पन्नव्याधे-र्येन वृद्धिः स्यात् तस्माद् यदपरव्याधिसम्भवः स्यात् स व्याधिस्तेन व्याधिना जन्यते स्वयञ्च न प्रशम्यते। यदा स्वप्रशमनहेत्वपरजननहेतूभयसेवनं स्यात् तदा स व्याधिरन्यं व्याधिं जनयित्वा स्वयं शाम्यति इति। यद्यन्यव्याधिहेतुसेवनं न स्यात् तदा व्याध्यन्तरं न जनयति स्वयं केवलं वर्द्धते इति बोध्यः।

एवं व्यवस्थिते सति लिङ्गञ्चैकमनेकस्य व्याधेर्भवति, यथा हि

आह—ज्वर इत्यादि। यद्यपि रुक्षं बहूनां कारणम्, तथापि देशकालादिवशात् कदाचिदेकस्य एव ज्वरस्य कारणं भवतीति ज्ञेयम्; रुक्षादिभिरिति रुक्षोष्णादिभिर्लवणादिभिः; ज्वराद्या इति ज्वररक्तपित्तगुल्माद्याः।

लिङ्गस्यापि हेतोरिव चातुर्विध्यमाह—लिङ्गमित्यादि। तथैवैकस्य लक्ष्यत इति एकं

विषमारम्भमूलानां लिङ्गमेकं ज्वरो मतः।
ज्वरस्यैकस्य चाप्येकः सन्तापो लिङ्गमुच्यते॥
विषमारम्भमूलैश्च ज्वर एको निरुच्यते।
लिङ्गैरेतैर्ज्वरश्वास-हिक्काद्याः सन्ति चामयाः॥

समानं यन्निदानं तन्निदानेन प्रतिनियतकारणान्तरसहकारेण यो रोगो जन्यते तस्मिन् व्याधौ समानकारणकुपितदोषजानि लिङ्गानि, तानि च तत्-समाननिदानजान्यरोगेऽपि भवन्ति, इति समाननिदानत्वेन समानलिङ्गत्वं, यथा विषमारम्भमूलानां व्याधीनां सर्व्वेषामेव लिङ्गं ज्वर एकः स्यात्, तथा तेनैव प्रकारेण एकस्य व्याधेरेकमेव लिङ्गमुच्यते विभिन्ननिदानत्वात्; यथा ज्वरस्यैकस्याप्येकः सन्तापो लिङ्गमुच्यते। न ह्यन्येषां व्याधीनां सन्तापोऽस्ति लिङ्गं तज्ज्वरनिदाने व्याख्यातम्। एवमेकस्य व्याधेर्बहूनि लिङ्गानि भवन्ति विभिन्नबहुहेतुत्वात्, यथा विषमारम्भमूलैर्विषमारम्भविसर्गादिलिङ्गैर्ज्वर एको निरुच्यते। एकस्यैव ज्वरस्य विषमारम्भविसर्गादीनि बहूनि लिङ्गानि इत्यर्थः। तथा बहूनां व्याधीनां बहूनि लिङ्गानि स्युः समानबहुहेतुत्वात् यथा लिङ्गैरेतैर्विषमारम्भमूलैर्विषमारम्भविसर्गादिभिः बहुभिर्लिङ्गैर्ज्वरश्वास-हिक्काद्या आमयाः सन्ति। नन्वेवं चेदेकस्य ज्वरस्य कथं विषमारम्भमूलानि बहूनि लिङ्गानि श्वासादीनामपि च तानि भवन्तीति चेन्न, रूक्षादिना कुपित-वायोश्चलत्वगुणेन कोपे श्वासादयो न भवन्ति नातो विषमारम्भविसर्गमात्राणि बहूनि विषमारम्भकवायुमात्रजानि भवन्ति श्वासादिषु श्वासादीनां कार-णान्तरसहकारेण तु वायोः कफस्य च कोपे श्वासादयः स्युस्तत्र तल्लिङ्गान्तर-सहितविषमारम्भविसर्गादीनि विषमारम्भकवातजानि लिङ्गानि भवन्ति। ज्वरे तु केवलरूक्षादिसेवनेन चलत्वगुणेन कुपितवातात् ज्वरीयकारणान्तर सहकाराभावेऽपि ज्वरो भवति, तत्र च वातलिङ्गातिरिक्तलिङ्गव्यतिरेकेण विष-मारम्भविसर्गादिवातलिङ्गानि भवन्तीति विनिगमनयोपपत्तेः।

लिङ्गमिति सम्बन्धः। विषमारम्भमूलानामिति विषमारम्भप्रमाणानां विषमारम्भ-विसर्गित्वमुष्मणो वैषम्यमित्याद्युक्तज्वरलिङ्गानामित्यर्थः। ज्वरमेकं सन्तापात्मकं दृष्ट्वा विषमा-रम्भविसर्गित्वादयोऽस्य भूता भविष्यन्ति वर्त्तन्त इति लिङ्ग्यते। ज्वर एको निरुच्यत इति ज्ञायत इत्यर्थः। लिङ्गैरेतैरित्यादि। एतैर्विषमारम्भविसर्गित्वाद्यैर्ज्वरादयः सन्ति युक्ता इति शेषः।

एका शान्तिरनेकस्य तथैकैकस्य लक्ष्यते।
व्याधेरेकस्य चानेका बहूनां बह्वा एव च॥
शान्तिरामाशयोत्थानां व्याधीनां लङ्घनक्रिया।
ज्वरस्यैकस्य चाप्येका शान्तिर्लङ्घनमुच्यते॥
तथा लघ्वशनाद्याश्च ज्वरस्यैकस्य शान्तयः।
एताश्चैव ज्वरश्वास-हिक्कादीनां प्रशान्तयः॥

एका शान्तिरित्यादि। एवं व्यवस्थिते च एका शान्तिरनेकस्य व्याधेरस्ति समानहेतुजत्वात्, यथा शान्तिरामाशयोत्थानां ज्वरातिसारच्छर्द्यादीनां बहूनां व्याधीनां शान्तिरेका लङ्घनक्रिया वह्निमान्द्ये तद्दीपकत्वात्। तथा तेन प्रकारेण एका शान्तिरेकस्य व्याधेर्लक्ष्यते विभिन्नहेतुकत्वात्। यथैकस्य ज्वरस्य लङ्घनमेका शान्तिरुच्यते।

ननु ज्वरातिसारादीनां बहूनां व्याधीनां शान्तिर्लङ्घनमुक्तं कथमेकस्य ज्वरस्येति चेन्न। ज्वरातिसारादीनां समानं यन्निदानं केवलात् तस्मान्नातिसारादयः स्युः, किन्त्वतिसारादीनां कारणान्तरसहकारेण तेन ज्वरसमाननिदानेन तेऽतिसारादयो भवन्ति तत्र सर्व्वेषु लङ्घनक्रिया क्रियान्तरसहकारेण विहिता। ज्वरे तु निदानान्तरसहकाराभावेऽपि यत् समाननिदानाज्जातस्तत्र क्रियान्तरसहकाराभावेन लङ्घनमात्रमेव विहितमिति युक्त्या तदुपपत्तेरिति। एवं व्याधेरेकस्य चानेकाः शान्तयः सन्ति विभिन्नबहुहेतुकत्वात्। यथा तदाह—तथेत्यादि। लघ्वशनाद्याश्च बह्वो ज्वरस्यैकस्य शान्तयः। नानाविधबहुकारणैर्नानागुणैः कुपितदोषाणां नानाक्रियासाध्यत्वात्। तथा बहूनां व्याधीनां बह्व्य एव च शान्तयः सन्ति समानबहुहेतुकत्वात्। यथा—एताश्चैव लघ्वशनाद्याः क्रिया ज्वरश्वास-हिक्कादीनां शान्तयः स्युः समानबहुकारणैः कुपितवातादिजन्यत्वाज्ज्वरादीनाम्। श्वासादिकारणान्तरयोगेण समानबहुतत्तत्कारणजेषु श्वासादिषु बहुषु व्याधिषु च लघ्वशनाद्या बह्वः शान्तयः श्वासादिकारणातिरिक्तस्वकीय-कारणयोगं विनापि श्वासादिसमानबहुकारणतः सम्भूते त्वेकस्मिन् ज्वरे

विषमारम्भादयो हि वातज्वरे तथा वातश्वासे वातहिक्कायां वा यथासम्भवं लक्षणम् एव। एतच्चातुर्व्विध्यं चिकित्सायामपि ब्रूते एकेत्यादि।

लघ्वशनाद्या बह्व्यः क्रियाः शान्तय इति बोध्यम्। अथान्यैरेको हेतुरनेकस्य इत्यारभ्य प्रशान्तय इत्यन्तो ग्रन्थो व्याख्यातः। तद् यथा। नन्वेवं प्रयोगापरिशुद्धत्वात् तथा चान्योन्यसम्भवाद् व्याधिसङ्करा भवन्तु, उत्तरकालन्तु युगपच्च व्याधिसङ्करा दृश्यन्ते ; ते च कुतो भवन्तीत्यत आह—एको हेतुरित्यादि। यथा। एकस्माद्रूक्षाद्धेतोर्ज्वरभ्रमप्रलापाद्या जायन्ते इति। अत्रायं भावः। समानकारणं यदातिसेवितं भवति तदा युगपदेव व्याधिसङ्करो भवति। भवति च तस्य समानहेतुजानेकव्याधेरेकं लिङ्गं शान्तिश्चैकैव रूक्षादिविपरीता स्नेहादिक्रिया। तद्व्यभिचारं दर्शयति—तथैकस्यैव व्याधेरेक एव हेतुः। यथा। रूक्षेणैकेन ज्वरादीनां विनापि स्वकीयकारणान्तरमेक एव ज्वरोऽपि च भ्रमादेरेकश्चोपजायते न तु व्याधिसङ्करः स्यात्। यदा पुरुषो रूक्षमेकं कारणं नातिसेवते ज्वरभ्रमादिसाधारणजनकमपि तदनतिपरिमितरूक्षं दुर्ब्बलत्वात् सर्व्वान् ज्वरादीन् न जनयित्वा ज्वरादीनामन्यतमं जनयति। तदा च युगपद्व्याधिसङ्करो न स्यात्। तस्यैव चैकस्य व्याधेर्लिङ्गम् अप्येकमेका च शान्तिः स्नेहादिरूपा तदेकमात्रहेतुजत्वादिति भावः। ननु समानासमानकारणेन सङ्करासम्भवः किं न स्यादित्यत आह—व्याधेः एकस्य चानेको हेतुरस्ति, यतस्तस्मान्न युगपद्व्याधिसङ्करः स्यात्। तद् यथा। हेतुभिर्बहुभिश्चैको ज्वरो रूक्षादिभिर्भवेत् इति। तस्यानेकहेतुजस्य लिङ्गानि अपि बहूनि भवन्ति बहुहेतुत्वाच्च शान्तिरपि स्नेहादिरूपैवानेका क्रियेति। नन्वस्तु बहूनामेककारणत्वे व्याधिसङ्करः परन्तु बहूनां बहुहेतुकत्वेऽपि किं व्याधिसङ्करो न स्यादित्यत आह—बहूनां बहवोऽपि चेति। यथा रूक्षादिभिः बहुभिः समानैः कारणैर्ज्वराद्याः सम्भवन्ति हि यस्मात् तस्माच्च युगपद्व्याधिसङ्करः स्याद् बहुहेतुजत्वाद् बहूनामपि तेषां व्याधीनां बहून्येव लिङ्गानि भवन्ति शान्तिश्च तेषां बहुधा भवतीति। इत्थञ्चैकहेतुकज्वरभ्रमाद्यनेको व्याधिः अप्येकक्रियत्वात् सुखोपायः स्वल्पकालसाध्यत्वात् सुखसाध्य एवमेकहेतुक एकैकश्च ज्वराद्यन्यतमो व्याधिरेकक्रियत्वात् सुखोपायः स्वल्पकालसाध्यत्वाच्च सुखसाध्यः। तथा बहुहेतुक एकस्तु व्याधिर्बहुहेतुजत्वाद् बहुलिङ्गत्वाद् बहुशान्तित्वाच्च कृच्छ्रसाध्यः। तथा बहुहेतुको बहुव्याधिः कृच्छ्रसाध्यो याप्यः प्रत्याख्येयो वा स्यादित्यभिप्रायेणाह—लिङ्गञ्चैकमित्यादि। एवं शान्तिरपि व्याख्येया।

सुखसाध्यः सुखोपायः कालेनाल्पेन साध्यते।
साध्यते कृच्छ्रसाध्यस्तु यत्नेन महता चिरात्॥
याति नाशेषतां व्याधिरसाध्यो याप्यसंज्ञितः।
परोऽसाध्यः क्रियाः सर्व्वाः प्रत्याख्येयोऽतिवर्त्तते॥
नासाध्यः साध्यतां याति साध्यो याति त्वसाध्यताम्।
पादापचाराद् दैवाद्वा यान्ति भावान्तरं गदाः॥ १४॥
वृद्धिस्थानक्षयावस्थां दोषाणामुपलक्षयेत्।
सुसूक्ष्मामपि च प्राज्ञो देहाग्निबलचेतसाम्॥

अथ शान्तिप्रसङ्गसङ्गत्या सुखसाध्यत्वादेः कारणमाह—सुखसाध्य इत्यादि। सुखोपाय एकक्रिययानेकरोगप्रशान्तिर्यदि स्यात् तदा सङ्करोऽपि सुखोपायः सन् सुखसाध्यः स्यात् इत्यभिप्रायेण सूत्रमिदमुक्तम्। अल्पक्रिययाल्पयत्नेन प्रशमो यस्य स सुखोपायः। अल्पेन कालेनाल्पेन च यत्नेन यः साध्यते स सुखसाध्यः, महता यत्नेन चिरेण च कालेन यः साध्यते स कृच्छ्रसाध्यः, यस्तु महता यत्नेन चिरादपि कालादशेषतां निःशेषतां न याति शान्तिञ्च नैति किञ्चिद्वैति न च मारयति स याप्यसंज्ञितोऽसाध्यः, परो यो महता यत्नेन चिरादपि कालाच्छान्तिं नैति सर्व्वाश्च क्रिया अतिवर्त्तते स प्रत्याख्येयोऽसाध्यः स्यात्। तस्मात् नासाध्यः साध्यतां याति साध्यस्त्वसाध्यतां याति। कस्मात्? पादापचारात्; भिषगादिपादचतुष्टयस्य अयथावद्भावेन योगात्। दैवाद् वा गदा भावान्तरं यान्ति॥ १४॥

गङ्गाधरः—पादेषु भिषजो मुख्यत्वात् वैद्यस्य साधनयोग्यतोपायमाह—वृद्धीत्यादि। वृद्ध्यादुग्रपलक्षणात् तिर्य्यगादिगत्यवस्थाञ्च लक्षयेत्।

चिकित्साभिधानप्रसङ्गेन चिकित्साप्रवृत्तिविषयं साध्यभेदं तथा चिकित्सानिवृत्तिविषयमसाध्यभेदमाह—सुखेत्यादि। सुखोपाय इति सुखलभ्यवैद्याद्युपायः; किंवा सुखोपायः सन् साध्यत्वमल्पेनैव यत्नेनैव साध्यत इत्यर्थः। याति नाशेषतामिति न सर्व्वथा निवर्त्तते। परोऽसाध्य इति याप्यापेक्षया उत्कृष्टोऽसाध्यः; अस्यैव विवरणम्—प्रत्याख्येय इति। क्रियाश्चिकित्साः। भावान्तरमिति सुखसाध्यः कृच्छ्रसाध्यो भवति, कृच्छ्रश्च याप्यः, याप्यश्च प्रत्याख्येयो भवति॥ १४॥

चक्रपाणिः—व्याधेः सुखसाध्यत्वाभिधानप्रसङ्गेन वृद्ध्याद्यवस्थान्तरमाह—वृद्धीत्यादि।

व्याध्यवस्थाविशेषान् हि ज्ञात्वा ज्ञात्वा विचक्षणः।
तस्यां तस्यामवस्थायां तत्तच्छ्रेयः * प्रपद्यते॥
प्रायस्तिर्य्यग्गता दोषाः क्लेशयन्त्यातुरांश्चिरम्।
तेषान्तु † त्वरया कुर्य्यात् देहाग्निबलकृत्क्रियाम्॥
प्रयोगैः क्षपयेद्वा तान् सुखं वा कोष्ठमानयेत्।
ज्ञात्वा कोष्ठप्रपन्नांस्तान् यथास्वं तं हरेद्बुधः॥ १५॥

तेन दोषाणां सूक्ष्मामपि वृद्ध्याद्यवस्थां देहाग्निबलचेतसामपि च सूक्ष्मामवस्थां प्राज्ञो वैद्य उपलक्षयेत् तत्तल्लिङ्गैरिति शेषः। कस्मादित्यत आह—व्याध्यवस्थेत्यादि। हि यस्माद् विचक्षणो यदि व्याध्यवस्थाविशेषं जानाति तदा तस्यां तस्यामवस्थायां तत्तदवस्थाश्रेयो यत् कर्म्म तत् प्रतिपद्यते जानीते। जानन् हि तात्तदवस्थिककर्म्मणा तत्तद्व्याधिं शमयितुं समर्थः स्यादिति। अवस्थाज्ञाने प्रयोजनार्थमुदाहरणं दर्शयति—प्राय इत्यादि। देहस्य चाग्नेश्च बलकरीं क्रियां देहबलकरीमग्निबलकरीञ्च क्रियां त्वरया कुर्य्यात्। तांस्तिर्य्यग्गतान् दोषान् प्रयोगैः शमनैर्वा क्षपयेत्। यदि संशमनैः क्षपयितुमशक्याः स्युस्तथा सुखं यथा स्यात् तथा तांस्तिर्य्यग्गतान् दोषान् कोष्ठं वा आनयेत्। ननु कोष्ठानयनेन किं स्यादित्यत आह—ज्ञात्वेत्यादि। यथास्वं वमनविरेचनादिना कफपित्ताद्युपयोगिना निर्हरणेन तमातुरं हरेत् तान् कोष्ठप्रपन्नान् दोषान् हारयेत् इत्यन्तर्भावितो णिजर्थः॥१५

न केवलं रोगाणाम्, किन्तु देहाग्निबलचेतसामपि वृद्धिस्थानक्षयमुपलक्षयेदिति योजना। एतत्व्याध्यवस्थाज्ञानप्रयोजनमाह—व्याध्यवस्थेत्यादि। चतुःश्रेय इति चतुःश्रेयःकारकं चिकित्सितं प्रपद्यते बुध्यत इत्यर्थः।

व्याधिप्रकारानभिधाय चिकित्सोपयुक्तान् दोषप्रकारानाह—प्राय इत्यादि। तिर्य्यग्गताश्च दोषा उन्मार्गगतत्वेन न सम्यक् शीघ्रं वा भेषजेन योजयितुं पार्य्यन्ते; तेन चिरं क्लेशयन्तीति युक्तम्। देहाग्निबलविदित्यनेन तिर्य्यग्गतदोषे त्वरया भूरिप्रयोगे भेषजप्रयोगेण क्रियमाणा चिकित्सा देहाग्निबलञ्च हन्तीति सूचयति। प्रयोगैरिति अल्पमात्रदीर्घकालप्रयोगैः। सुखं वेति सुखं यथा भवति तथा मलं हरेदित्यर्थः; यच्छोधनं वमनादि तन्त्रामाशयगते दोषे आसन्नं हरणयोग्यतया भवति, तेन हरेदित्यर्थः॥ १५॥

* चतुःश्रेय इति पाठान्तरम्। † 'तेषु न' इति पाठः साधुः।

ज्ञानार्थं यानि चोक्तानि व्याधिलिङ्गानि संग्रहे।
व्याधयस्ते तदात्वे तु लिङ्गानीष्टानि नामयाः॥
विकारः प्रकृतिश्चैव द्वयं सर्व्वं समासतः।
तद्धेतुवशगं हेतोरभावान्नानुवर्त्तते॥ १६॥

गङ्गाधरः—ननु ज्वरादीनां लिङ्गानि यानि कम्पतृष्णादीन्युक्तानि तानि च पृथग्व्याधयो दृश्यन्ते इति सर्व्वेषामेव व्याधिसङ्कर एकान्तेन भवतीत्यत आह—ज्ञानार्थमित्यादि। व्याधेर्ज्ञानार्थं यानि लिङ्गानि व्याधिरूपाणि चोक्तानि ते व्याधिसंग्रहे व्याधिपरिसङ्ख्यावचनसङ्क्षेपे व्याधय एवोक्ताः तदात्वे तु व्याध्यन्तरज्ञानार्थोक्तत्वे तु लिङ्गानीष्टानि न पृथगामया उच्यन्ते, इति न व्याधिसङ्कर एकान्तेन स्यादिति। ननु कुतस्त तदात्वे पृथगामया नोच्यन्ते इत्यतस्तत्र हेतुरुन्नेयः प्रधानतया तद्व्याधेर्ज्ञेयत्वेन तद्व्याधिविज्ञानतया तेषामप्राधान्यादिति सङ्क्षेपः। प्रकृतिविकारप्रवृत्तिनिवृत्तिहेतुं दर्शयन्नाह—विकार इत्यादि। विकारो धातुवैषम्यं प्रकृतिर्धातुसाम्यमिति। द्वयमेव समासतः सर्व्वं प्रकृतिविकारव्यतिरिक्तञ्च न हि किञ्चिदस्ति। तद्विकारप्रकृतिरूपं द्वयं हेतुवशगं, न हि कारणमन्तरेण विकारो वा प्रकृतिर्वा निखिलेन तन्त्रेणोपदिश्यते॥ १६॥

चक्रपाणिः—सम्प्रति निदानेनोक्तानाञ्च व्याधीनां पृथग्व्याधित्वमपि भवतीत्याह—ज्ञानार्थमित्यादि। संग्रह इति व्याधिनिदानादिसंग्रहे; ये निदानस्थाने ज्ञानार्थं प्रधानभूतज्वरादिज्ञानार्थं व्याधयः सन्ति, तेऽविपाकारुच्यादयः स्वातन्त्र्येणोत्पद्यमाना व्याधय एव व्याधित्वेनैव व्यपदेष्टव्या इत्यर्थः; तदात्वे तु लिङ्गानीति, यदा ज्वरादिपरतन्त्रा जायन्तेऽरुच्यादयः, तदा पारतन्त्र्याल्लिङ्गान्येव ते, नामयाः; आमयो हि स्वतन्त्रः स्वचिकित्साप्रशमनीयो भवतीत्यायुर्व्वेदस्थितिः, ज्वरलिङ्गरूपास्त्वरुच्यादयो ज्वरचिकित्साप्रशमनीया एवेति भावः।

सम्प्रति निदानाधिकृतस्य हेतोर्विभावमाह—विकार इत्यादि। विकारो वैषम्यम्; प्रकृतिः साम्यम्। सर्व्वमित्यनेन शारीरं भावं बाह्यञ्च तथाध्यात्मिकञ्च सर्वं गृह्णाति; हेतुवशगमिति हेत्वधीनोत्पादात्; एतेन आरोग्यरूपप्रकृत्यर्थिना साम्यहेतुः सेवनीयः, र...। विकाररूपरोगपरिहारार्थिना च विकारहेतुः वर्ज्जनीयः; न च वाच्यम्—यत्—दध्यादिशो-

तत्र श्लोकाः ।

हेतवः पूर्व्वरूपाणि रूपाण्युपशयस्तथा ।
सम्प्राप्तिः पूर्व्वमुत्पत्तिः सूत्रमात्रं चिकित्सितम् ॥
ज्वरादीनां विकाराणामष्टानां साध्यता न च ।
पृथगेकैकशश्चोक्ता हेतुलिङ्गोपशान्तयः ॥
हेतुपर्य्यायनामानि व्याधीनां लक्षणस्य च ।
निदानस्थानमेतावत् संग्रहेणोपदिश्यते ॥

गङ्गाधरः—अध्यायार्थं पूर्व्वं संगृह्णन् स्थानार्थमुपसंहरति—तत्र श्लोका इत्यादि । चिकित्सितमित्यन्तेनाध्यायार्थसंग्रहः । ज्वरादीनामित्यादिना

जननहेतोरुपरमेऽपि तत्तज्जनितदोषादिदर्शनात् मृषैतद्वचनम्—'हेतोरभावान्न प्रवर्त्तते' इति ; यद्, उपरतेऽपि दध्यादौ दध्यादिजनितो दोषसन्तानः शोथानुजनकस्तत्र प्रवर्त्तते ॥ १६ ॥

चक्रपाणिः—संग्रहे 'सूत्रमात्रं चिकित्सितम्' इत्यन्तेनापस्माराध्यायार्थसंग्रह उक्त इति बोद्धव्यम् । 'ज्वरादीनाम्' इत्यादिग्रन्थेन तु निदानस्थानोक्तसंग्रहं करोति । यद्यपि ज्वरस्य ज्वरनिदानेऽसाध्यता नोक्ता, तथापि 'अष्टानाम्' इतिपदं "छत्रिणो गच्छन्ति" इति न्यायेन बोध्यम् ; किंवा अष्टानां हेतुलिङ्गोपशान्तय इति योजनीयम् ; असाध्यता यथायोग्यतयैव बोद्धव्या । पृथक्त्वेन चैकैकशश्चेति पृथगेकैकशः ; तेन, पृथक्त्वेन सर्व्वसाधारणहेत्वादयो निदानस्थानादावुक्ताः, तथैवैकशश्च ज्वरादीनां हेतुलिङ्गोपशान्तयः स्वे स्वे अध्याये उक्ताः । अत्र च लिङ्गग्रहणेन पूर्व्वलिङ्गग्रहणम्, उपशान्तिग्रहणेन चोपशयग्रहणम्, सम्प्राप्तेस्तु प्रतिरोगम् अभिधानाद् ग्रहणं व्याख्येयम् । हेतुपर्य्यायनामानीति "हेतुर्निमित्तम्" इत्यादिना, व्याधिपर्य्यायनामानीति तथा लक्षणपर्य्यायनामानीति चाध्यायोक्तान्येव ज्ञेयानि । सम्प्राप्तेस्तु "सम्प्राप्तिर्जातिरागतिः" इति नामकथनं लक्षणप्रयोजकमेव प्रायः, तेन इह न संगृहीतम् ; किंवा, हेतव इत्यादि स्थानसंग्रह एव, अपस्माराध्यायार्थसंग्रहस्तु, स्थानसंग्रहेणैवाव्यवहितत्वेन कृतत्वान्न पृथक् कृतः ; तत्र हेतव इत्यादि सर्व्वरोगे हेत्वादिसंग्रहणम् ; अस्मिन् सम्पक्षे पृथक्त्वेनेति ज्वरादीनामिति सम्बध्यते । संग्रहेणेतिवचनात् चिकित्सितप्रपञ्चनीयं निदानं सूचयति । केचिदत्र निदीयते निबध्यते इत्यादि-

अग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते ।
द्वितीयन्तु निदानस्य स्थानमेतत् समन्वितम् ॥ १७ ॥

इति निदानस्थानेऽपस्मारनिदानं नामाष्टमोऽध्यायः ॥ ८ ॥

निदानस्थानार्थसंग्रहः । अध्यायसमापनच्छलेन स्थानं समापयति इतीत्यादि ।
स्थानमेतन्निदानस्य श्लोकपञ्चशती मतम् ॥ १७ ॥

इति श्रीगङ्गाधरकविरत्नकविराजविरचिते चरकजल्पकल्पतरौ द्वितीयस्कन्धे निदानस्थानजल्पेऽपस्मारनिदानजल्पाख्याष्टमी शाखा ॥ ८ ॥

पञ्चकमनेनेोत निदानमिति 'निदान'शब्दव्युत्पत्तिं कुर्व्वन्ति ; 'निदान'शब्देन च गवां दोहनकाल-निबन्धनरज्जुरुच्यते ; ज्वरनिदाने च निदानशब्दो व्याकृत एव ॥ १७ ॥

इति चरकचतुरानन-श्रीमच्चक्रपाणिदत्त-विरचितायाम् आयुर्व्वेददीपिकायां निदानस्थानस्य व्याख्यायाम् अपस्मारनिदानं नाम अष्टमोऽध्यायः ॥ ८ ॥

समाप्तमिदं निदानस्थानम् ।

॥ श्रीः ॥

# चरक-संहिता।

## विमानस्थानम् ।

### प्रथमोऽध्यायः ।

अथातो रसविमानं व्याख्यास्यामः, इतिह
स्माह भगवानात्रेयः॥ १ ॥

गङ्गाधरः—अथ स्थानोद्देशक्रमाद् विमानस्थानमारभते—अथात इत्यादि। विशेषेण यथायोग्यता मीयतेऽनेनेति विमानं, रसस्य विमानं रसविमानमधिकृत्य कृतोऽध्यायस्तं तथा। शेषं सर्व्वं पूर्व्ववद् व्याख्येयम्॥ १ ॥

चक्रपाणिः—निदानज्ञातहेत्वादिपञ्चकस्य चिकित्सोपयोगिताया दोषभेषजादिविशेषज्ञानमपेक्षितं भवत्यतो वक्ष्यमाणदोषभेषजादिविशेषज्ञापकं विमानं ब्रूते। तत्रापि च दोषभेषजयोः प्राधान्यात् तद्विशेषज्ञापकं रसविमानं प्रथमं ब्रूते। तत्रापि इमञ्च स्थानसम्बन्धमध्यायसम्बन्धञ्च दर्शयिष्यति;—विशेषेण मीयते ज्ञायते दोषभेषजाद्यनेनेति विमानं, दोषभेषजादीनां प्रभावादिविशेष इत्यर्थः। एवम्भूतं विमानमभिधेयतया यत्र तिष्ठति तद्विमानस्थानम्। रसविमानमधिकृत्य कृतोऽध्यायो रसविमानम्। इह खल्वित्यादिना स्थानसम्बन्धमाह॥ १ ॥

इह खलु व्याधीनां निमित्तपूर्व्वरूपरूपोपशयसंख्याप्राधान्यविधिविकल्पबलकालविशेषानभिनिविश्य, रसद्रव्यदोषविकार*भेषजदेशकालबलशरीरसाराहारसात्म्यसत्त्वप्रकृतिवयसां, मानम् अवहितमनसा यथावज्ज्ञेयं भवति भिषजा दोषादि†मानज्ञानायत्तत्वात् क्रियायाः। न ह्यमानज्ञो दोषादीनां‡ भिषग् व्याधिनिग्रहसमर्थो भवति, तस्माद् दोषादिमानज्ञानार्थं§ विमानस्थानमुपदेक्ष्यामोऽग्निवेश ॥ २ ॥

गङ्गाधरः—ननु किमर्थं विमानं व्याख्यातव्यमित्यत आह—इहेत्यादि। संख्यादयः सम्प्राप्तिभेदाः पृथगुक्ताः स्फुटतया ज्ञापनार्थम्। व्याधीनां निमित्तादीन् सर्व्वानशेषविशेषेण व्याधिज्ञानार्थमभिनिविश्य विविच्य, अनन्तरमवहितमनसा भिषजा तद्व्याध्यारम्भकदोषादीनां मानं यथावत् ज्ञेयं भवति। कस्मात्? दोषादिमानज्ञानायत्तत्वात् क्रियायाः। तद्व्याधिप्रतिकारक्रियायाः तद्व्याध्यारम्भकदोषस्य तस्य विकारस्य तद्व्याधिप्रशमार्थं भेषजस्य तद्व्याध्युत्पत्तेर्देशस्य कालस्य च तद्व्याधिमतः पुरुषस्य बलस्य शरीरस्य त्वगादिसाराणामाहारद्रव्याणामाहारविहाराभ्यां सात्म्यानां सत्त्वस्य ब्राह्मादिमनोभेदबलाबलतो मनसः, प्रकृतेः समपित्तानिलकफप्रकृतिवातलादिप्रकृतेः बाल्यादिवयसश्च मानज्ञानाधीनत्वात्। ननु कस्मात् क्रियाया दोषादिमानज्ञानायत्तत्वम् इत्यत आह—न हीत्यादि। हि यस्मात्। दोषादीनाम् अमानज्ञो मानानभिज्ञो भिषक् व्याधिनिग्रहसमर्थो न भवति। स हि दोषाल्पाधिकादिमाने तद्भेषजादीनामननुरूपेण प्रयोगं करोति। तस्माद् दोषभेषजादीनां मानज्ञानार्थं विमानस्थानं व्याख्यास्याम इति ॥ २ ॥

चक्रपाणिः—इह सम्प्राप्तिभेदसंख्याप्राधान्यादिग्रहणेनैव सम्प्राप्तिमुपदिशन् संख्यादिभेदेन सर्व्वैव सम्प्राप्तिः कथिता भवतीति दर्शयति। निमित्तादीनान्तु न तादृशोऽल्पग्रन्थो वक्तव्योऽस्ति, येन भेदेन तेऽपीह कथ्यन्ते, अतस्ते सामान्येनोक्ताः। अनुप्रविश्येति बुद्ध्वा। दोषादयः सूत्रस्थान एव प्रपञ्चिताः। मानमिति प्रभावविशेषः। एतज्ज्ञाने हेतुमाह—दोषादीत्यादि। क्रियाया इति चिकित्सायाः ॥ २ ॥

* अनुप्रविश्यानन्तरं दोषभेषजेत्यादिपाठः चक्रसम्मतः। † रसादीति वा पाठः।
‡ रसादीनामित्यपरः पाठः। § रसादिमानज्ञानार्थमिति पाठान्तरम्।

तत्रादौ रसद्रव्यदोषविकारप्रभावान् वक्ष्यामः। रसास्तावत् खलु षट् मधुराम्ललवणकटुकतिक्तकषायाः। ते सम्यगुपयुज्यमानाः शरीरं यापयन्ति मिथ्योपयुज्यमानास्तु खलु दोषप्रकोपायोपकल्पन्ते। दोषाः पुनस्त्रयो वातपित्तश्लेष्माणः। ते प्रकृतिभूताः शरीरोपकारका भवन्ति। विकृतिमापन्नाः खलु नानाविधैर्विकारैः शरीरमुपतापयन्ति। तत्र दोषमेकैकं त्रयस्त्रयो

गङ्गाधरः तत्र विमानोपदेशे कर्त्तव्ये त्वादौ रसादिप्रभावान वक्ष्याम इति प्रतिज्ञा। अत्र रसशब्देन रसाश्रयद्रव्यं विवक्षितं, रसोपदेशेन तद्द्रव्यमुपदिश्यते। रसास्तावदित्यादि। प्रभवन्ति प्रभवो भवन्ति भावाः कर्म्मसमर्था भवन्त्येतैः स्वभावैर्वा गुणैर्वा कर्म्मभिर्वेति प्रभावाः। तत्र रसाः षट् मधुरादयः, ते सम्यगुपयुज्यमानास्तत्तद्रसद्रव्याण्युपयुज्यमानानि समयोगतः उपयुज्यमानाः शरीरमारोग्येण कालं यापयन्ति गमयन्ति। मिथ्योपयुज्यमानास्तु ते रसाः तत्तद्रसवन्ति द्रव्याणि खलु असम्यगुपयुक्तानि दोषप्रकोपायोपकल्पन्ते प्रकल्प्यानि भवन्ति। दोषविकारप्रभावानाह—दोष इत्यादि। त्रय इति सङ्ख्यामानम्। प्रकृतिभूता इत्यविषमाः। शरीरोपकारकाः आरोग्याय वर्त्तमाना भवन्ति। विकृतिम् आपन्नास्तु विषमा वातपित्तश्लेष्माणः खलु नानाविधैर्ज्वरादिभिर्विकारैः शरीरम् उपतापयन्ति। कथमेवं रसाः कुर्व्वन्तीत्यत आह तत्रेत्यादि। तत्र वातादीनां त्रयाणां शरीरस्य यापनायामुपतापने च खल्वेकैकं दोषं वाताद्यन्यतमं षण्णां मधुरादीनां रसानामन्यतमास्त्रयस्त्रयो रसास्त्रित्रिरसवद्द्रव्याणि

चक्रपाणिः—अध्यायार्थं वक्तुं प्रतिजानाति—तत्रादावित्यादि। यद्यपि च दोषभेषजेत्यादौ दोषापेक्षत्वाद् भेषजस्य, दोष आदौ कृतः, तथापीह रसद्रव्यरूपभेषजस्यापेक्षितरोगप्रशमकत्वेन तथा दोषस्यापि रसद्रव्ययोरेव कारणत्वेन भेषजशब्दसूचितेन रसद्रव्ये एवाग्रे कृते; पश्चात् तु दोषग्रहणगृहीतौ दोषविकारौ; प्रकृष्टो भावः प्रभावः शक्तिरित्यर्थः, स चेहाचिन्त्यश्चिन्त्यश्च ग्राह्यः। येन, "तत्र खल्वनेकरसेषु" इत्यादिना द्रव्यविकारयोः प्रभावं रसदोषद्वारा च चिन्त्यमपि वक्ष्यति। यापयन्तीति साम्येनावस्थापयन्ति। 'मिथ्या'शब्द इहातियोगायोगमिथ्यायोगेषु वर्त्तते। दोषा इति शारीरदोषाः। 'पुनः'शब्दो मानसदोषं व्यावर्त्तयति।

रसानामसंसृष्टानां कर्म्माह—तत्रेत्यादि। अनेन च रसकर्म्मोपदेशेन दोषाणाम्

रसा जनयन्ति, त्रयस्त्रयश्चोपशमयन्ति। तद् यथा—कटुतिक्त-कषाया वातं जनयन्ति मधुराम्ललवणास्तं शमयन्ति, कट्वम्ललवणाः पित्तं जनयन्ति, मधुरतिक्तकषायाः पुनरेनत् शमयन्ति। मधुराम्ल-लवणाः श्लेष्माणं जनयन्ति, कटुतिक्तकषायास्त्वेनञ्च शमयन्ति।

तैस्तै रसैर्जनयन्ति. त्रयस्त्रयो रसास्तत्तत्त्रित्रिरसवद्द्रव्याणि तैस्तै रसैश्चोपशमयन्ति। तत उदाहरति—तद् यथेत्यादि। तं वातम्। एनत् पित्तम्। पुनरेनं श्लेष्माणम्। इति रसानां प्रभावाः, एवम्प्रभावाश्च वातपित्तश्लेष्माणः प्रभावसामान्यात् तेषां वृद्धिः, प्रभाववैशेष्यात् तेषां प्रशान्तिः। तद् यथा—कटुतिक्तकषाया रसा यादृशप्रभावाः तादृशप्रभाव एव वायुः, तै रसैः जन्यते वायोर्वृद्धिः; मधुराम्ललवणास्तु यादृशप्रभावा न तादृशप्रभावो वायुः, अतः प्रभाववैशेष्यात् तै रसैर्वातस्य ह्रासः क्रियते। एवं कट्वम्ललवणा यादृशप्रभावास्तादृशप्रभावं पित्तं, प्रभावसामान्यात् तै रसैः पित्तं वर्द्धते। मधुरतिक्तकषायास्तु यादृशप्रभावास्तादृशप्रभावं न पित्तमतः प्रभाव-वैशेष्यात् पित्तस्य तै रसैर्ह्रासः क्रियते। एवं मधुराम्ललवणा यादृशप्रभावाः तादृशप्रभाव एव श्लेष्मा, प्रभावसामान्यात् तं ते वर्द्धयन्ति। कटुतिक्तकषायास्तु यादृशप्रभावा न तादृशप्रभावः श्लेष्मा, ततः प्रभाववैशेष्यात् ते रसाः श्लेष्मणो ह्रासं कुर्व्वन्ति। न हि कटुरसस्य गुणा लघूष्णरूक्षत्वानि, तिक्तस्य रूक्षशीतलघुत्वानि। कषायस्य रौक्ष्यशैत्यगौरवाणि। मधुरस्य स्निग्धत्वगुरुत्वशैत्यानि। अम्लस्य लघुत्वोष्णत्वस्निग्धत्वानि। लवणस्य गुरुत्वस्निग्धत्वोष्णत्वानि। कार्य्यगुणे गुणाभावात्। तत्तद्रसाश्रयाणान्तु द्रव्याणां ते गुणाः; अतो न गुणसामान्य-विशेषौ वातादीनां कट्वादिरसैः सह विद्येते. न वा कर्म्मसामान्यविशेषौ

अपि तत्तद्रसोपशमनीयत्वविशेष उक्तो भवति। कटुतिक्तकषाया वातं जनयन्तीति असति परिपान्थिनीति ज्ञेयम्; तेन अर्कागुरुगुडूच्यादीनां तिक्तानामपि वाताजनकत्वे न दोषः। तत्रोष्ण-वीर्य्यता परिपन्थिनी विद्यते, तेन न ते वातं जनयन्तीत्याद्यनुसरणीयम्। एनमितिपदेन, यश्च कट्वादिजो वायुस्तमेव मधुरादयः सर्व्वात्मवैपरीत्यविशेषेण शमयन्तीति दर्शयति। जागरणादिजे हि वायौ जागरणादिविपरीताः स्वप्नादय एव पथ्याः। एवं पित्तश्लेष्मणोरपि 'एनदेनं'-शब्दयो-स्तात्पर्य्यं दर्शयति।

**रसदोषसन्निपाते तु ये रसा यैर्दोषैः समानगुणाः समानगुणभूयिष्ठा वा भवन्ति ते तानभिवर्द्धयन्ति, विपरीतगुणास्तु विपरीतगुणभूयिष्ठा वा शमयन्त्यभ्यस्यमाना इति । एतद्व्यवस्थाहेतोः**

गुणेषु कर्म्माभावात् । तस्मात् प्रभावसामान्यविशेषाभ्यां रसा द्रव्यमाश्रिताः वातादीनां वृद्धिह्रासौ कुर्व्वन्तीति, द्रव्याणि तै रसैः कुर्व्वन्तीत्युच्यते । द्रव्याणि हि स्वप्रभावात् किञ्चित् कुर्व्वन्ति, किञ्चित् गुणप्रभावात्, किञ्चित् कर्म्मप्रभावाच्च । प्रभावो ह्यचिन्त्य उक्तः । स खलु भावानामुत्पत्तिकाले तद्भावारम्भकद्रव्यसंयोगे तद्द्रव्याणिष्टकर्म्मभिर्यद्विजातीयं कर्म्मारभ्यते तदचिन्त्यं कर्म्म, तस्य कार्य्यस्य द्रव्यस्य गुणस्य कर्म्मणो वा प्रभाव उच्यते सा शक्तिर्न तु कर्म्मातिरिक्तेति ।

इति पृथग् रसदोषप्रभावानुक्त्वा संसृष्टरसदोषप्रभावान् वक्ति रसदोषसन्निपाते त्वित्यादि । रससन्निपाते दोषसन्निपाते च । रसानां षण्णामन्यतमद्वित्रिचतुःपञ्चानां संसर्गे प्रकृतिसमसमवाये आत्रेयभद्रकाप्यीयोक्ते षट्पञ्चाशद्विधे, दोषाणां वातपित्तकफानां द्वित्रिदोषसंसर्गे प्रकृतिसमसमवाये कियन्तःशिरसीयोक्ते चैकोनषष्टिविधे । ये रसा द्विकास्त्रिकाश्चतुष्काः पञ्चका वा यैर्दोषैर्द्विकैस्त्रिकैर्वा सह समानगुणाः समानप्रभावाः कार्य्यगुणे गुणाभावात् समानगुणभूयिष्ठा वा समानप्रभावभूयिष्ठा वा भवन्ति ते रसास्तान् समानप्रभावान् दोषान् क्षीणान् वा समान् वा वृद्धान् वाभिवर्द्धयन्ति । समपरिमाणेन रसानां दोषाणाञ्च मेलने हि विरोधिनां नास्ति विरोधः समबलत्वात् । विषममानेन मेलने तु विरोधिनां रसानां दोषाणाञ्च बलीयसा यावद्बलेनाल्पबलस्यावजये न्यूनमध्यादिशावशेषे हीनमध्यादिरूपेण मेलनं भवति, तत्रापि हीनमध्यादिदोषाणां समानप्रभावाः समानप्रभावभूयिष्ठा वा हीनमध्यादिरसास्तान् हीनमध्यादिदोषान् वर्द्धयन्ति । विपरीतगुणास्त्विति । ये रसा द्विकास्त्रिकाश्चतुष्काः पञ्चका वा यैर्दोषैर्द्विकैः त्रिकैर्वा विपरीतप्रभावा विपरीतप्रभावभूयिष्ठा वा ते रसा अभ्यस्यमानास्तान् दोषान् शमयन्ति । तत्रापि हीनमध्यादिदोषाणां प्रभावविपरीता हीनमध्यादि-

अथ कया युक्त्या रसा दोषान् जनयन्ति शमयन्ति चेत्याह,—रसदोषेत्यादि । सन्निपात इत्यन्तःशरीरमेलके । 'तु'शब्दो विशेषे, तेन विपरीतगुणा एव विशेषेण विपरीतगुणभूयिष्ठापेक्षया शमयन्तीति दर्शयति । रसानान्तु यथा उपचारात् गुणा भवन्ति तदभिहितं

षट्त्वमुपदिश्यते रसानां परस्परेणासंसृष्टानाम्, त्रित्वञ्चैव दोषाणाम्। संसर्गविकल्पविस्तरो ह्येषामपरिसंख्येयभेदो भवति विकल्पभेदापरिसंख्येयत्वात्।

रसास्तान् हीनमध्यादिदोषान् शमयन्त्यभ्यस्यमाना इत्येतद्व्यवस्थाहेतोः षट्त्वं रसानां मधुरादीनां परस्परेणासंसृष्टानां तथा परस्परेणासंसृष्टानां दोषाणां त्रित्वञ्चोपदिश्यते।

ननु संसर्गस्तु किमात्रेयभद्रकाप्यीयोक्त एव रसानां षट्पञ्चाशद्विध एव कियन्तःशिरसीयोक्त एकोनषष्टिविध एव दोषाणां नातिरिक्तो भवतीत्यत आह संसर्गेत्यादि। हि यस्मादेषां रसानां षण्णां त्रयाणाञ्च दोषाणां संसर्गविकल्पस्य विस्तरोऽपरिसङ्ख्येयो भवति। कस्मात्? तेषां विकल्पभेदस्यापरिसङ्ख्येयत्वात् परिसङ्ख्यातुमशक्यत्वात्। रसस्य रसान्तरेण दोषस्य दोषान्तरेण संसर्गेऽंशांशतः परिमाणविशेषतश्च कर्म्मविशेषतश्च विकल्पस्य भेदानां परिसङ्ख्या नास्तीति। ननु एवञ्चेत् रसदोषसंसर्ग-विकल्पभेदपरिसङ्ख्या नास्ति तर्हि कथं रसानां षट्त्वस्य दोषाणां त्रित्वस्योप-देशेन रसदोषसंसर्ग विकल्पभेदे व्यवसायबुद्धिः स्यादित्यत आह तत्र खल्वित्यादि। तत्र रसदोषसंसर्गविकल्पभेदानामपरिसङ्ख्यायामपि अनेक-रसेषु द्रव्येषु तथैवानेकदोषात्मकेषु विकारेषु प्रकृतिसमसमवेतेषु रसदोष-प्रभावम् अनेकरसद्रव्येषु रसानामेकैकशयेन प्रभावमभिसमीक्ष्य सर्व्वथा पर्य्या-लोच्य दोषाणाञ्चैकैकशयेन प्रभावमभिसमीक्ष्य ततोऽनन्तरं तत्तद्रसवद्-द्रव्याणां तत्तद्दोषप्रकृतिकज्वरादिविकाराणां प्रभावस्य शक्तिविशेषस्य तत्त्वं याथार्थ्यं व्यवस्येत् कुशलः।

"गुणा गुणाश्रया नोक्ताः" इत्यादिसूत्रेण। अभ्यस्यमाना इति न सकृदुपयुज्यमानाः। अथ कस्मात् रसदोषसंसर्गभूयस्त्वं परित्यज्य रसषट्त्वं दोषत्रित्वञ्च उच्यते? इत्याह—इत्येतदित्यादि। व्यवस्थेति रसदोषसंसर्गप्रपञ्चसंक्षेपः। परस्परेणासंसृष्टानामितिपदं दोषाणामित्यनेनापि योज्यम्।

रसदोषसंसर्गप्रपञ्चानभिधाने हेतुमाह—संसर्गेत्यादि। यस्मात् संसर्गभेदविस्तरोऽपरिसंख्येयस्तस्मात् षट्त्वं त्रित्वञ्चोच्यते। विकल्पभेदापरिसंख्येयत्वादिति संसर्गस्य विकल्पस्य भेदो विजातीयप्रकारस्तस्यापरिसंख्येयत्वात्। एतेन, यथा रसानामवान्तरव्यक्ति-भेदेऽपि मधुरत्वादिसामान्ययोगात् मधुरादिव्यपदेशेन षट्त्वमुच्यते, तथा मधुराम्लमधुरलवणादि-

तत्र खल्वनेकरसेषु द्रव्येष्वनेकदोषात्मकेषु च विकारेषु रसदोषप्रभावमेकैकश्येन * अभिसमीक्ष्य ततो द्रव्यविकारयोः प्रभावतत्त्वं व्यवस्येत्। न त्वेवं खलु सर्व्वत्र। न हि विकृतिविषमसमवेतानां नानात्मकानां परस्परेण चोपहतप्रकृति-

ननु रसदोषसन्निपातः खलु रसानां संसर्गो दोषाणाञ्च संसर्गः, तत्र किं कारणसमानरूपेणैव कार्य्ये कारणसमवायः स्यान्न कारण-गुणकर्म्मवैपरीत्येन भवतीत्यत आह न त्वेवं खलु सर्व्वत्रेति। सर्व्वत्र रससंसर्गे सर्व्वत्र दोषसंसर्गे च खलु नैवमुक्तप्रकारेण व्यवस्येत्। कस्मात्? न हीत्यादि। हि यस्मात् विकृतिविषमसमवेतानां नानात्मकानां नानारसात्मकानां रसानां नानादोषात्मकानां ज्वरादिविकाराणां परस्परेणोप-हतानां नानारसानामारम्भकाणां कार्य्यारम्भे तदाश्रयद्रव्यस्थकर्म्माणि कालदेशादिवशात् प्रकृतिस्थान् रसान् विकृत्य परस्परेणोपहत्य तत्तद्रस-प्रभावतो विषमरूपेणापूर्व्वविशिष्टस्वरूपेण कार्य्यरसेषु समवायिनः कुर्व्वन्तीत्येवं परस्परेणोपहतरसजानां. तथा नानादोषाणामारम्भकाणां ज्वरादिकार्य्या-रम्भे तत्तद्दोषस्थकर्म्माणि कालदेशनिदानविशेषवशाद् विकृत्य प्रकृतिस्थस्वरूपं विहाय परस्परेणोपहत्य विषमकर्म्मरूपेणापूर्व्वविशिष्टस्वरूपेण परिणम्य क्रिय-माणे ज्वरादौ समवायीनि भवन्तीति परस्परेणोपहतकर्म्मवानादिदोषजानां

संसर्गाणामपि सत्यप्यवान्तरभेदे सामान्येनोपसंग्रहं कृत्वा त्रिषष्टित्वसंख्यानियमो भविष्यतीति निरस्यते। यतः मधुराम्लादिसंसर्गोऽपि विजातीयो मधुरतरमधुरतमादिभेदकृतभेदोऽपरिसंख्येयो भवति। वचनं हि—"रसान्तरतमाभ्यस्ताः संख्यामतिपतन्ति हि" इति।

अथ कथं तर्हि रसानां संसृष्टानां दोषाणाञ्च प्रभावो ज्ञेय इत्याह;—तत्र खल्वित्यादि। तत्र चानेकरसद्रव्यस्यानेकदोषविकारस्य च प्रत्येकरसदोषप्रभावमेलकेन प्रभावं कथयन् रससंसर्गदोषसंसर्गयोरपि तादृशमेव प्रभावं कथयति, यतः रसदोषसंसर्गप्रभावावस्र द्रव्यविकारप्रभावाश्रयित्वात् रसदोषजद्रव्यविकारप्रभावत्वेनोच्येते। अनेन न्यायेन साक्षादनुक्तोऽपि एकरसद्रव्यैकदोषविकारयोरपि प्रभावः संसृष्टदोषप्रभावकथनादुक्त एव ज्ञेयः। एकैकत्वेनाभि-समीक्ष्येति प्रत्येकयुक्तरसादिप्रभावेणानेकरसं द्रव्यम् अनेकदोषञ्च विकारं समुदितप्रभावमभि-समीक्ष्य।

अयञ्च रसदोषप्रभावद्वारा द्रव्यविकारप्रभावनिश्चयो न सर्व्वत्र द्रव्ये विकारे चेत्याह—

* एकैकत्वेनेति द्वितीयः पाठः।

कानाम्*, अन्यैश्च विकल्पनैर्विकल्पितानामवयवप्रभावानुमानेनैव

ज्वरादीनाञ्च अनेर्विकल्पनैरेकैकरसप्रभावकर्म्मविकल्पनैरेकैकदोषप्रभाव-विकल्पनाभ्यां भिन्नर्विकल्पनैर्गुणकृतगुणविकल्पनैर्विकल्पितानां कार्य्य-रसानां कार्य्यज्वरादीनामवयवप्रभावानुमानेन तदारम्भकरसाश्रयद्रव्यस्थकृतैः गुणैरवयवैस्तदारम्भकदोषस्थगुणकृतैर्गुणैश्चावयवैरनुमानेन समुदायस्य विकृति-विषमसमवेतस्य नानारसात्मकरसस्य विकृतिविषमसमवेतस्य नानादोषात्मकस्य ज्वरादेश्च प्रभावाणामारम्भकद्रव्याणां कर्म्मातिरिक्तकर्म्मणां तत्त्वं भिषग्भिः अध्यवसातुं शक्यं न भवतीति। सर्व्वे हि भावा द्विविधमारभ्यन्ते समवायिभिः कारणैर्देशकालकारणविशेषवशात् प्रकृतिसमसमवायेन विकृति-विषमसमवायेन च। यैर्द्रव्यैर्यो भाव आरभ्यते तद्भावमारभमाणानि द्रव्याणि चेतनप्रयुक्तानि स्वस्वकर्म्मभिः परस्परं संयुज्यमानानि पुनःपुनः विभज्यमानानि खलु संयोगविभागाभ्यामावर्त्तमानानि देशकालकारणादि-वशात् स्वाश्रयद्रव्यतद्गुणान् स्वानि चानुरूपेण मेलयित्वैकीकृत्य प्रकृत्यैव जायमाने भावे समवायीनि कुर्व्वन्तीति प्रकृतिसमसमवेतः स भावो जायते। तत्र द्रव्याणि सजातीयानि द्रव्यान्तराण्यारभन्ते गुणाश्च सजातीयानि

न त्वेवं खलु सर्व्वत्रेति। अत्रैव हेतुमाह—न हीत्यादिना अध्यवसातुं शक्यमित्यन्तेन। विकृतिविषमसमवेतानामिति विकृतिसमवेतानां तथा विषमसमवेतानाम्; समवेतानामिति मिलितानां रसानां दोषाणाञ्च। तत्र रसस्य विकृतिसमवायो यथा:—मधुरे तण्डुलीयके, मधुरो हि प्रकृत्या स्नेहबृंहणत्वादिकरः, तण्डुलीयके विकृतिसमवेतत्वेन तन्न करोति। विषमसमवेतास्तु तिले कषायकटुतिक्तमधुराः। यदि हीमे रसाः अमात्रया समवेता न स्युस्तत्तिलोऽपि पित्तश्लेष्म-हरस्त्रिदोषहरो वा स्यात्, पित्तकफकरस्त्वयं, तेन, अत्र रसानां क्वचित् कर्त्तृत्वमकर्त्तृत्वञ्च क्वचिदिति वैषम्यमुन्नीयते। "नानात्मकानाम्" इत्यादि हेतुत्रयन्तु विकृतिसमवायविषम-समवाययोरेवोपलम्भकम्; तेन "नानात्मकत्वात्" इत्यादिभिर्विकृतिसमवायविषमसमवायौ भवतः। नानात्मकानामिति नानारूपहेतुजनितानां, तेन हेतुबलादेव रसदोषयोर्विकृतो विषमो वा मेलको भवतीत्यर्थः। किंवा, नानात्मकानामिति नानाप्रमाणानाम्। एवञ्च नाना-प्रमाणत्वं विषमसमवाये हेतुः। परस्परेण चोपहतानामित्यन्योन्यमुपघातितगुणानाम्। परस्पर-गुणोपघातस्तु यद्यपि दोषाणां प्रायो नास्त्येव, तथाप्यदृष्टवशात् क्वचिद्भवतीति ज्ञेयम्, रसानान्तु प्रबलेनान्योपघातो भवत्येव। अन्यैश्च विकल्पनैरिति अन्यैश्च भेदकैः। तत्र रसस्य भेदकाः

* उपहतप्रकृतिकानामित्यत्र उपहतानामिति वा पाठः

गुणान्तराणि आरभन्ते कर्म्माणि च सजातीयानि कर्म्मान्तराण्यारभन्ते विरोधीनि च। यैस्तु द्रव्यैर्योऽपरो भाव आरभ्यते तानि द्रव्याणि चेतनप्रयुक्तानि स्वस्वकर्म्मभिर्देशकालकारणविशेषवशेनैकीभूतैर्विजातीयरूपमापद्यमानैः संयुज्यमानानि विभज्यमानानि च पुनःपुनरावर्त्त्यमानानि कारणानुरूपद्रव्यान्तररूपेण परिणम्य कारणानुरूपगुणान्तररूपेण गुणाश्च परिणम्य स्वस्वाननुरूपविशिष्टापूर्व्वविजातीयाचिन्त्यरूपेण च स्वयं स्वयं परिणम्य जायमाने कार्य्ये समवायीनि भवन्ति सन्ति द्रव्याणि गुणांश्च समवायिनः कुर्व्वन्तीति विकृतिविषमसमवेतः स भावो जायते। तत्र द्रव्याणि सजातीयद्रव्यान्तरमारभन्ते गुणाश्च गुणान्तरं सजातीयमेवारभन्ते कारणगुणपूर्व्वको हि कार्य्यगुणो भवति। कर्म्माणि तु सजातीयविजातीयं विरोधि कर्म्म आरभन्ते। तत् तु कर्म्मभावाणां संहतरूपाणां प्रभाव उच्यते। इति।

ननु च भो द्रव्याणि यदि विकृतिविषमसमवेतानि ज्वरादीनि गुणाश्च रसादयो विकृतिविषमसमवेताः कर्म्माणि च विकृतिविषमसमवेतानि प्रभावा उच्यन्ते, तर्हि कथं सजातीयारम्भकत्वं द्रव्यगुणयोर्न कर्म्मण इति चेन्न। यतः कार्य्यद्रव्यारम्भे तत्कार्य्यस्य कारणानां द्रव्याणां पृथिवी पृथिव्यन्तरं मूर्त्तिविशेषम् आरभते न तु जलादिकम्, आपश्च शारीररसादि जलान्तरमारभन्ते, तथा तेजः शारीरतेजोऽन्तरमारभते, इत्येवं सजातीयद्रव्यान्तरमारभन्ते द्रव्याणि न तु विजातीयद्रव्यान्तरम्। तथा गुणाश्च रसादयस्तत्तद् द्रव्यस्थाः सजातीय-

स्वरसकल्कादयः। एकस्यैव हि द्रव्यस्य विकल्पनविशेषेण गुणान्तराणि भवन्ति। दोषस्य तु दूष्यान्तराण्येव गुणान्तरयोगाद् भेदकानि भवन्ति। यदुक्तं,—"स एव कुपितो दोषः समुत्थानविशेषतः। स्थानान्तरगतश्चैव विकारान् कुरुते बहून्॥" अस्मिन् व्याख्याने रसानां दोषाणाञ्च यदुत्कर्षापकर्षकृतो विषमसमवायः पृथगुच्यते, स न युज्यते, यतः विषमसमवाये उत्कृष्टस्य रसस्य तथा दोषस्य चोत्कृष्टा गुणाः अपकृष्टस्य चापकृष्टा गुणा भवन्तीति कृत्वा अवयवप्रभावानुमानेनैव समुदायप्रभावानुमानं शक्यम्। अथोच्येत—विषममेलके रसस्य दोषस्य च न त एव गुणा उत्कृष्टा अपकृष्टा वा भवन्ति, किन्तु गुणान्तरमेव भवति। तत् तर्हि विकृत एवायं समवायो विसदृशकार्य्यकारणत्वात्। तदेवं दूषणदर्शनादन्यथोच्यते। यत्र द्विविधो मेलको भवति रसानां दोषाणाञ्च प्रकृत्यनुगुणः प्रकृत्यननुगुणश्च, तत्र यो मिलितानां प्रकृतिगुणानुपमर्द्देन मेलको भवति, स 'प्रकृतिसमसमवाय'-शब्देनोच्यते, यस्तु प्राकृतगुणोपमर्द्देन भवति, स विकृतिविषमसमवायोऽभिधीयते, विकृत्या हेतुभूतया विषमः प्रकृत्यननुगुणः समवायो विकृतिविषमसमवाय इत्यर्थः। विकृतिविषमसमवाये नानात्मकत्वादिहेतुत्रयं यथाविवृतमेव योजनीयम्। यत् तु विकृतिविषम-

समुदायप्रभावतत्त्वमध्यवसातुं शक्यम्। तथायुक्ते हि समुदाये समुदायप्रभावतत्त्वमेवोपलभ्य ततो द्रव्यविकारप्रभावतत्त्वं

गुणान्तरमारभन्ते न तु विजातीयगुणान्तरम्। यथा साधारणो रसोऽप्सु पृथिव्याञ्च भूतान्तरसंयोगेऽभिव्यज्यमानो मधुरादिरसान् सजातीयानारभते। मधुरादिरसवद्द्रव्यारभ्यमाणे पुनरन्यस्मिन् द्रव्ये प्रकृतिसमसमवेते विकृतिविषमसमवेते वा ते मधुरादयो रसाः सजातीयमेव प्रकृतिसमसमवेतं रसान्तरं विकृतिविषमसमवेतं वा रसान्तरमारभन्ते, न तु रूपान्तरं गन्धान्तरं वा विजातीयगुणान्तरम्। एवं रूपादयो गुणा व्याख्येयाः। कर्म्माणि तु खलूत्क्षेपणावक्षेपणादीनि द्रव्यस्थानि सजातीयं कर्म्मान्तरं प्रकृतिसमसमवेतमारभन्ते सर्व्वाणि चैकीभूय विकृतिविषमसमवेतं विजातीयमचिन्त्यं कर्म्मारभन्ते यदुच्यते प्रभाव इति। विजातीयेन कर्म्मणा सह मिलित्वा कर्म्म यथा विशिष्टापूर्व्वविजातीयकर्म्माण्यारभते न तथा द्रव्याणि गुणा वा विजातीयद्रव्यान्तरेण विजातीयगुणान्तरेण वा मिलित्वा विजातीयं द्रव्यान्तरं गुणान्तरं वारभन्ते इति।

नन्वेवञ्चेत् तर्हि नानारसात्मकं विकृतिविषमसमवेतं रसं नानादोषात्मकं ज्वरादिकञ्चावयवेनानुमाय तत्समुदायरूपरसविकारयोः प्रभावतत्त्वम् अध्यवस्येत्। कस्मादिति? अत आह— तथायुक्ते हीत्यादि। तथा कारणविशेषाद् विकृतिविशेषेण परस्परोपघातादारम्भकप्रकृतिभूतकारणानां विकृत्या स्वकर्म्मानुरूपकर्म्मवत्तया समवायेन युक्ते रसे विकारसमुदाये एकीभूतरूपे समुदायप्रभावतत्त्वं तथाविधमिलिततयैकीभूतरूपस्यैव प्रभावतत्त्वं तत्तदननुरूपकर्म्मप्रभावतत्त्वमुपलभ्य ततोऽनन्तरं समुदायप्रभावतत्त्वोपलम्भाद् द्रव्यविकारप्रभाव-

समवायौ पृथगेव कुर्व्वन्ति, विषमसमवायस्य वैषम्यतारतम्येनातिबहुप्रपञ्चितत्वात् विषमावयवगुणानुमानं दुःशक्यमिति कृत्वा तदपि द्रव्यविकारप्रभावेणैव व्यपदिशन्ति।

अथ कथं तर्हि विकृतिविषमसमवायप्रभावज्ञानमित्याह—तथायुक्ते हीत्यादि। तथायुक्ते समुदाय इति विकृतिविषमसमवाये। समुदायप्रभावतत्त्वमिति मेलकप्रभावतत्त्वम्। समधृते हि मधुसर्पिषी सूर्य्यावर्त्ताख्ये वा व्याधौ दोषसमुदाये न संयुज्यमानमधुघृतगुणक्रमागतं मारकत्वं, न च वातादिदोषप्रभावगतं सूर्य्यवृद्ध्या वर्द्धिष्णुत्वं किन्तु संयोगमहिमकृतमेवेत्यर्थः। यश्च गतिद्वयं दोषरसमेलकस्य, तेन, प्रकृतिसमसमवायरूपं सन्निपातं ज्वरनिदाने दोषलिङ्गमेलकेनैवोक्तवान्;—यदुक्तं "पृथक् लक्षणसंसर्गात् द्वान्द्विकं सान्निपातिकम् ज्वरं विद्यात्" इति। यस्तु विकृतिविषमसमवेतो ज्वरस्तस्य, चिकित्सिते—"क्षणे दाहः क्षणे शीतम्" इत्यादिना लक्षणमुक्तम्।

व्यवस्येत् । तस्माद् रसप्रभावतश्च द्रव्यप्रभावतश्च दोषप्रभावतश्च विकारप्रभावतश्च तत्त्वमुपदेक्ष्यामः । तत्रैष रसप्रभाव उपदिष्टो भवति ॥ ३ ॥

तत्त्वं तत्समुदायकार्य्यरूपद्रव्यविकारयोः प्रभावस्य स्वस्वकर्म्मकरत्वस्वभावस्य तत्त्वं याथार्थ्यं व्यवस्येत् । तस्मादुक्तरूपेण विना द्रव्यविकारयोर्ज्ञानाभावात् प्रकृतिसमसमवेतद्रव्यमानज्ञानार्थं रसप्रभावतश्च विकृतिविषमसमवेतभूतारब्ध-द्रव्यमानज्ञानार्थन्तु द्रव्यप्रभावतश्च प्रकृतिसमसमवेतदोषारब्धविकारमानज्ञानार्थं दोषप्रभावतश्च विकृतिविषमसमवेतदोषारब्धरोगमानज्ञानार्थं विकारप्रभावतश्च तत्त्वं द्रव्यविकारयोर्याथार्थ्यमुपदेक्ष्याम इत्यर्थः । तत्रैष इति उक्तरूपो रस-प्रभाव इति । यो रसो यत् कर्म्म करोति तस्य रसस्य तत्कर्म्मकरत्वेन प्रभावः शक्तिरुपदिष्टो भवति ॥ ३ ॥

न हि श्यावरक्तकोठोत्पत्त्यादि तन्त्रोक्तं वातादिज्वरं क्वचिदस्ति । एवं रसेऽपि यत्राम्राते मधुरत्वं प्रकृतिसमसमवेतम्, तत्राम्रातं मधुरमेतन्मात्रमेवोक्तं, तेन मधुरसामान्यगुणागतं तस्य वातहरत्वं पित्तहरत्वमपि लभ्यते । यत्र वार्त्ताके कटुतिक्तत्वेन वातकरत्वं प्राप्तमपि च विकृतिविषम-समवायात् तन्न भवति । तत्राचार्य्येण 'वार्त्ताकं वातघ्नम्' इत्युक्तमेव । एवमित्यादि तत्तदुदाहरणशास्त्रप्रसूतमनुसरणीयम् । यत् तु प्रकृतिसमसमवायकृतरसदोषगुणद्वारा प्राप्तमपि द्रव्यगुणं विकारलक्षणञ्च ब्रूते, तत् प्रकर्षार्थं स्पष्टार्थञ्चेति ज्ञेयम् ।

उपसंहरति तस्मादित्यादि । तत्त्वमिति प्रभावतत्त्वम् । यत् तु पूर्व्वं "तत्रादौ रसद्रव्यदोषविकारप्रभावानुपदेक्ष्यामः" इत्यनेन रसादिप्रभावव्याख्यानप्रतिज्ञानं कृतम्, तत्र रसप्रभावानुमानेनैव द्रव्यप्रभावकथनात्, तथा दोषप्रभावेण च विकारप्रभावकथनाच्चरितार्थम् । इह तु विकृतिविषमसमवायात्मके द्रव्ये विकारे वा रसदोषप्रभावानुमानेन न द्रव्यविकारप्रभावानु-मानमस्तीति कृत्वा पृथक् पृथग् रसादिप्रभावतत्त्वाभिधानप्रतिज्ञानमिति न पौनरुक्त्यम् ; इह द्रव्याणां वीर्य्यप्रभावविपाकप्रभावौ च द्रव्यप्रभावे रसप्रभावे चान्तर्भावनीयौ । तत्र यौ रसानु-गुणौ वीर्य्यविपाकप्रभावौ, तौ रसे, यौ तु रसक्रमोक्तवीर्य्यविपाकविपरीतौ वीर्य्यविपाकौ, तौ द्रव्य-प्रभावौ बोद्धव्यौ । उपदेक्ष्यामो निखिलेन तन्त्रेण रसादिप्रभावतत्त्वं पृथगुपदेक्ष्याम इति रसादि-प्रभावः प्रपञ्चेन निखिले तन्त्र एव वक्तव्य इत्यर्थः । सङ्क्षेपाभिधानमेतदेवेति दर्शयन्नाह—तत्रैष इत्यादि । एष इति "रसाः षड्" इत्यादिना "तत्त्वमुपदेक्ष्यामः" इत्यन्तेन ग्रन्थेनोक्त इत्यर्थः । उपदिष्टो भवतीति सङ्क्षेपेण कथितो भवति । अन्ये तु 'तत्रैष रसप्रभाव उद्दिष्टो भवति' इति पठन्ति । अस्मिन् पक्षे द्रव्यदोषविकारप्रभावोऽपि योऽत्रानुद्दिष्टः सोऽपि रसद्वारा, तेन, रसस्यैव प्रपञ्चाभिहितत्वात् तस्यैव अभिधानमुपसंहरति न द्रव्यादीनामिति ज्ञेयम् ॥ ३ ॥

द्रव्यप्रभावं पुनरुपदेक्ष्यामः। तैलसर्पिर्मधूनि वातपित्त-श्लेष्मप्रशमनानि द्रव्याणि। तत्र तैलं स्नेहौष्ण्यगौरवोप-पन्नत्वाद्वातं शमयति सततमभ्यस्यमानम्। वातो हि रौक्ष्यशैत्य-लाघवोपपन्नो विरुद्धगुणो भवति, विरुद्धगुणसन्निपाते हि भूयसा अल्पमवजीयते। तस्मात् तैलं वातं जयति सततमभ्यस्यमानम्।

गङ्गाधरः—द्रव्यप्रभावमिति यद् द्रव्यं यत् कर्म्म कर्त्तुं यथा प्रभवति तत्-कर्म्मकरत्वेन तस्य प्रभुत्वं प्रभावस्तम्। तैलेत्यादि। तैलादीनि त्रीणि द्रव्याणि वातादीनां त्रयाणां क्रमेण प्रशमनानि समुदायप्रभावेण न त्वेकैकरसादि-प्रभावेण। तद् विवृणोति—तत्रेत्यादि। तत्र तैलसर्पिर्मधुषु मध्ये तैल तिल-प्रभवं स्नेहरूपं द्रव्यं पाञ्चभौतिकमपि तिलप्रकृतिकत्वात् यत् स्नेहौष्ण्य-गौरवोपपन्नत्वं स्वप्रभावस्तस्मादेव वातं शमयति। ननु कस्माद् वातं शमयतीत्यत आह—वातो हीत्यादि। रौक्ष्यशैत्यलाघवोपपन्नत्वप्रभावो हि वातस्तस्मात् स्नेहादिस्वभावात् तैलाद विरुद्धगुण इति वातप्रभावात् तैल-प्रभावो विशेषो ह्रासहेतुश्च विशेषस्तस्मात् तैलं वातं शमयति। ननु रूक्षः शीतो लघुः सूक्ष्मश्चलोऽथ विशदः खर इत्यनेन वातस्यापि सूक्ष्मत्वं कषायानुरसं स्वादु सूक्ष्ममुष्णं व्यवायि चेत्यनेन तैलस्यापि कषायानुस्वादुरसत्वं सूक्ष्मत्वञ्चोक्तम् इत्यतो वातस्य सूक्ष्मगुणस्य सौक्ष्म्यगुणेन च तैलेन समानत्वात् कषायरसेन च तैलस्य वातवर्द्धकत्वं कथं न स्यादित्यत आह—विरुद्धेत्यादि। येन गुणेन यो यो गुणो विरुध्यते ते ते गुणास्तत्तद्गुणविरुद्धगुणास्तेषां गुणानां सन्निपाते संसर्गे तदन्तर्गतेन भूयसा बहुतमेन मानाधिकतमेन च गुणेनाल्पं गुणरूपम् अवजीयते। इति न पाठः इति कश्चित्। न ह्येकस्मिन् द्रव्ये विरुद्धगुणाः

चक्रपाणिः—द्रव्यप्रभावमित्यादौ पुनरिति सामान्येन द्रव्यप्रभावकथनात् पुनः शङ्काप्राह्निकतया तैलादिद्रव्यप्रभावं कथयिष्याम इत्यर्थः। प्रशमनार्थानि इति प्रशमनप्रयोजनानि।

सततमभ्यस्यमानमित्यविच्छेदेनोपयुज्यमानं, विरुद्धगुण इति तैलगुणेभ्यो विपरीतगुणः। विरुद्धगुणसन्निपात इति विरुद्धगुणयोर्मेलके। ननु विरुद्धगुणयोर्मध्ये भूयसाल्पं जीयते, तत् कथं तैलं वातं जयति ? न हि अस्य वातं प्रति भूयस्त्वं युक्तमित्याह—सततमभ्यस्यमानमिति। सततोपयोगेन हि तैलं वातादधिकं भवति, तेन वातं जयतीत्यर्थः।

सर्पिः खल्वेवमेव पित्तं जयति माधुर्य्यात् शैत्यान्मन्दवीर्य्यत्वाच्च, पित्तं ह्यमधुरमुष्णं तीक्ष्णञ्च। मधु च श्लेष्माणं जयति रौक्ष्यात्

सम्भवन्ति—यत्र च शैत्यं न तत्रौष्ण्यं, यत्र गुरुत्वं न तत्र लघुत्वं, यत्र स्निग्धत्वं न तत्र रूक्षत्वमित्येवमादि हि दृश्यते तस्मात् यस्यैकस्य द्रव्यस्य यैर्गुणैर्यदपरद्रव्यस्य ये गुणा विरुध्यन्ते ते विरुद्धगुणा ये च गुणा न विरुध्यन्ते तेऽविरुद्धगुणा इति। तेषां विरुद्धाविरुद्धगुणानां सन्निपाते सम्यगेकस्मिन् द्रव्ये निपतनेऽर्थात् प्रकृत्या चोत्तरकालं वा वर्त्तने तदन्तर्गतेन विरुद्धाविरुद्धान्यतरेण भूयसा मानतो वा संख्यया वाऽधिकतमेन गुणेनाल्पं तदन्तर्गतं विरुद्धाविरुद्धान्यतरत् संख्यया वा मानतोऽल्पं गुणात्मकं वस्तु अवजीयते इति। विरुद्धाविरुद्धगुण-सन्निपाते हि भूयसाल्पमवजीयते इति पाठः साधुरिति तन्न। जैमिनिनाप्युक्तस्य विरुद्धधर्म्मसमवाये भूयसां स्यात् सधर्म्मकत्वमिति सूत्रस्य दर्शनेन यदि गुणानां विरुद्धत्वं यस्य द्रव्यस्य यो यः समानोऽसमानश्च गुणो यत्रापरद्रव्ये वर्त्तते ते समानासमाना गुणा एव तेषां गुणविरुद्धगुणास्तेषां सन्निपाते तयोर्मध्ये भूयसाल्पमवजीयते इति व्याख्यानाद् विरुद्धगुणसन्निपाते हीत्येव पाठस्य साधुता। भूयसा इतीयमुना यत्किञ्चित् वाहुल्ये तु जयावजयत्वं न कल्पते इति ज्ञापितं, तस्मात् तैलं सततमभ्यस्यमानं न तु कदाचिदुपसेव्यमानं वातं जयति न तु अनुरसकषायेण सौक्ष्म्येण च वातं वर्द्धयति, पित्तस्य स्नेहद्रवत्वौष्ण्यगौरव-समानानां तैलस्य स्नेहौष्ण्यगौरवाणाञ्च मानतः संख्यया च भूयस्त्वेन कषाय-सूक्ष्मत्वयोरवजये तैलं पित्तं वर्द्धयतीति तैलद्रव्यप्रभावः। वातस्य दोषस्य च प्रभाव उपदिष्टो भवति।

सर्पिरित्यादि। अमधुरमिति मधुरविपरीतं तिक्तं विदग्धमम्लं तीक्ष्णञ्चेति विरुद्धगुणम्। सस्नेहमपि द्रवमपि च सर्पिस्तुल्यमिति समाना-समानतया विरुद्धगुणसन्निपातात् सर्पिर्भूयसा माधुर्य्यशैत्यमान्द्यगुणत्रयेण पित्तस्य। माधुर्य्यौष्ण्यतैक्ष्ण्यविरोधिना समानमप्यल्पं सङ्ख्यया स्वीयं स्नेहद्रवगुणद्वयमवजित्य न वर्द्धयित्वा। तस्मात् सर्पिः पित्तं जयति। इति सर्पिषः स्वप्रभावः पित्तस्य च दोषस्य प्रभाव उपदिष्टो भवति।

सर्पिः खल्वेवमेवेति। सर्पिरपि सततमभ्यस्यमानमित्यर्थः। अमधुरमिति रौक्ष्य-लाघवाद्युष्णत्वादिना मधुरविपरीतं कटुरसमित्यर्थः। इह च प्रभावशब्देन सामान्येन द्रव्यशक्ति-रुच्यते, तेनात्राचिन्त्यशक्तिः; तेन तैलादीनां स्नेहौष्ण्यादिगुणादपि वातादिशमनं द्रव्यप्रभावादेव

तैक्ष्ण्यात् कषायत्वाच्च, श्लेष्मा हि स्निग्धो मन्दो मधुरश्चेति विपरीतगुणः। यच्चान्यदपि किञ्चिद् द्रव्यमेवं वातपित्तकफेभ्यो गुणतो विपरीतं स्यात् तच्चैतान् जयत्यभ्यस्यमानम्॥ ४॥

अथ खलु त्रीणि द्रव्याणि नाभ्युपयुञ्जीताधिकमन्येभ्यो

मधु चेत्यादि। रौक्ष्यादिकस्तु मधुनः प्रभावः। स्निग्धादिकस्तु श्लेष्मदोषस्य प्रभाव इति श्लेष्मगुणेभ्यो विपरीतगुणं मधु। शीतं गुरु मधुरञ्चेति श्लेष्मसमानमपि पुरातनं चेद् भवति तदातितीक्ष्णरौक्ष्यकषायत्वेनाल्पं गुरुत्वशीतत्वमाधुर्य्यमादधत् भूयसा रौक्ष्यादिनाल्पं स्वगुरुत्वादिकम् अवजित्य श्लेष्मगुरुत्वादिकं न वर्द्धयति। तस्मात् मधु च श्लेष्माणं जयतीति मधुप्रभावः श्लेष्मदोषप्रभावश्चोपदिष्टो भवति।

अथ तैलादिद्रव्यत्रयप्रभावान दोषत्रयप्रभावांश्च दर्शयित्वा यावद्द्रव्यप्रभावमुपदर्शनार्थमुपसंहरति यच्चान्यदित्यादि। एतेन विकाराणाम् अपरिसङ्ख्यत्वेन सर्व्वत्र शारीरव्याधिषु निजागन्तुषु पूर्व्वोत्तरकालौ दोषाणामव्यभिचारेण सम्बन्धात् तदात्मकत्वेन संगृह्य दोषप्रभावोपदेशेनैव सर्व्वविकारप्रभावोऽप्युपदिष्टो भवतीति बोध्यम्॥ ४॥

गङ्गाधरः रसद्रव्यदोषविकारप्रभावानुपदिश्य द्रव्यप्रभावप्रसङ्गात् प्रभावोपदर्शनार्थं केषाञ्चिद् द्रव्याणामतिमात्रोपयोगे दोषमाह द्रव्याणां समुदायप्रभावोपदेशप्रसङ्गेन अथेत्यादि। अधिकमिति क्रियाविशेषणं, तेन सततमित्यर्थो

भवति। सर्पिषि च यद्यपि मधुरो रसः पित्तप्रशमे व्याप्रियते, तथापि माधुर्य्यशैत्यमन्दत्वैः पित्तशमनं सर्पिःकार्य्यमेव, तेन द्रव्यप्रभाव एव वाच्यः। यदा तु रसद्वारा कार्य्यं द्रव्यस्य चिन्त्यते, तदा रसप्रभाव इति व्यपदेशो भवति। एवं कषायानुरसे मधुनि समाधानं वाच्यम्। अन्ये तु ब्रुवते—यत् तैलादीनां वातादिशमनत्वं प्रत्यचिन्त्य एव प्रभावोऽयमुच्यते, तत्र च तैलवातयोर्विरुद्धगुणयोर्मेलके तैलमेव वातं जयति, न तु वातस्तैलमिति तैलस्याचिन्त्यप्रभावः। एवं सर्पिर्मधुनोरपि पित्तश्लेष्महरणे प्रभावाज् ज्ञेये। एतच्चान्ये नेच्छन्ति। यतस्तैलादीनां "सततमभ्यस्यमानम्" इति पठेनाधिक्यमेव वातादिजयकारणमुक्तम्, तथा, "यच्चान्यदपि किञ्चिद् द्रव्यम्" इत्यादिग्रन्थेन द्रव्याचिन्त्यप्रभावं परित्यज्य सामान्येन गुणवैपरीत्यमेवाभ्यासात् वातादिजयहेतुरुच्यते॥ ४॥

चक्रपाणिः—अभ्यस्य द्रव्यं प्रभावोदाहरणार्थमभिधायानभ्यस्यानाह— अथेत्यादि। अधिकम्

द्रव्येभ्यः। तद् यथा—पिप्पलीः क्षारं लवणमिति। पिप्पल्यो हि कटुकाः सत्यो मधुरविपाका गुर्व्यो नात्यर्थं स्निग्धोष्णाः प्रक्लेदिन्यो भेषजाभिमताश्च, ताः सद्य एव शुभाशुभकारिण्यो भवन्ति आपातभद्राः प्रयोगसमसाद्गुण्याद् दोषसञ्चयानुबन्धाः। सततम् उपयुज्यमाना हि गुरुप्रक्लेदित्वात् श्लेष्माणमुत्क्लेशयन्ति, औष्ण्यात् पित्तम्। न च वातप्रशमनाय कल्पन्ते अल्पस्नेहोष्णभावात् योगवाहिन्यस्तु खलु भवन्ति, तस्मात् पिप्पलीर्नाभ्युपयुञ्जीत॥ ५॥

न त्वधिकपरिमितमित्यर्थः। त्रयाणां द्रव्याणामुदाहरणमाह तद् यथेत्यादि। पिप्पलीरित्यादेर्नाभ्युपयुञ्जीतेत्यादिनानुवृत्तेनान्वयः। कटुका इत्यारभ्य दोषसञ्चयानुबन्धा इत्यन्तेन प्रभावप्रदर्शनम्। प्रयोगस्य समं साद्गुण्यं यस्य तत्त्वात् आपातभद्राः. दोषसञ्चयोऽनुबन्धो याभिः, कस्मादाभिः किं दोषसञ्चयानुबन्धो भवतीत्यत एवंप्रभावाणां पिप्पलीनां सततोपयोगतः प्रभावमाह—सततमित्यादि। गुरुक्लेदित्वादिति गुरुत्वात् प्रक्लेदित्वाच्च। औष्ण्यात् पित्तमुत्क्लेशयन्तीत्यन्वयः। न चेत्यादि। अल्पस्नेहोष्णभावान्न च वातप्रशमनायोपकल्पन्ते इत्यन्वयः। नन्वेवञ्चेत् सततोपयोगार्थमौषधेऽपि पिप्पलीर्नोपयुञ्जीतेत्याशङ्कायामाह—योगवाहिन्य इत्यादि। तस्मादित्यादि। अत्राधिकमन्येभ्यो द्रव्येभ्य इत्यनुसार्य्यम्॥ ५॥

अन्येभ्य इति वचनादन्यदपि चित्रकभल्लातकादेरेवंजातीयं नात्युपयोक्तव्यम्, पिप्पल्यादिद्रव्यन्तु अन्येभ्योऽप्यधिकमत्युपयोगे वर्जनीयमिति दर्शयति। "कटुकाः सत्यो मधुरविपाकाः" इत्यादि पिप्पलीगुणकथनम्। अनभ्यासप्रयोगे दोषवैपरीत्येन दोषप्रशमनोपदर्शनार्थं तथा अत्यभ्यासाद "गुरुप्रक्लेदित्वात् श्लेष्माणमुत्क्लेशयन्ति" इत्यादिग्रन्थवक्तव्यदोषकरणयोग्यतोपदर्शनार्थञ्च "भेषजाभिमताः" इति। सद्य इति च्छेदः, सद्य इत्यनभ्यासे शुभकारिण्यः, अत्यभ्यासप्रयोगे तु अशुभकारिण्यः। एतदेव शुभाशुभकारित्वं दर्शयति "आपातभद्राः" इत्यादिना। प्रयोगसमसाद्गुण्यादिति समस्य प्रयोगस्य सद्गुणत्वात्, समेऽल्पकाले अल्पमात्रे च पिप्पल्याः प्रयोगो सद्गुणा भवन्तीत्यर्थः। दोषसञ्चयानुबन्धो दुष्प्रयोगो यासां ता दोषसञ्चयानुबन्धाः। एतदेव दोषसञ्चयानुबन्धत्वं विवृणोति—सततमित्यादि। पिप्पलीधर्म्मकथनप्रस्तावात् गुणान्तरमाह—योगवाहिन्यस्त्विति। योगवाहित्वेन कटुकानामपि पिप्पलीनां वृष्यप्रयोगेषु योगः, तथा ज्वरगुल्मकुष्ठ-

क्षारः पुनरौष्ण्यतैक्ष्ण्यलवणोपपन्नः क्लेदयति त्वादौ पश्चादुपशोषयति दहति पचति भिनत्ति सङ्घातम्। स पचन-दहनभेदनार्थमुपयुज्यते। सोऽतिप्रयुज्यमानः केशाक्षिहृदय-पुंस्त्वोपघातकरः सम्पद्यते। ये ह्येनन्तु ग्रामनगरनिगमजन-पदाः सततमुपयुञ्जते, तेऽप्यान्ध्यषाण्ड्यखालित्यभाजो हृदयाप-कर्त्तिनश्च भवन्ति। तद् यथा—प्रायः प्राच्याश्चीनाश्च। तस्मात् क्षारं नाभ्युपयुञ्जीत * ॥ ६ ॥

गङ्गाधरः—क्षार इत्यादि। क्षार इति भस्मप्रस्रुतोदकनिर्य्यासः सारभागः। औष्ण्यतैक्ष्ण्यलवणास्त्रयो गुणाः प्रभावाः, क्लेदयत्यादौ पश्चात् शोषयतीति क्रियारूपः प्रभावः क्षारद्रव्यस्य स्वस्यैव न तु तद्गुणौष्ण्यादेः। औष्ण्यादि-गुणप्रभावजक्रियारूपान् प्रभावानाह दहतीत्यादि। पचनदहनभेदनानि त्रीणि गुणप्रभावजानि कर्म्माणि क्षारस्य प्रभावाः। तदुपयोगार्थमाह—स इत्यादि। तस्य सततोपयोगे दोष उक्तः, स यतः स्यात् तत्प्रभावमाह—सोऽतीत्यादि। केशोपघातोऽकालपालित्यं खालित्यञ्च, अक्ष्युपघात आन्ध्यं, हृदयोपघातो वक्षसि कर्त्तनवत्पीड़ा पुंस्त्वोपघातः षाण्ड्यम्। एतस्य सततोप-योगे केशोपघातादिष्वव्यभिचारं दर्शयति—ये ह्येनमित्यादि। जनपदा जन-समूहाः ग्रामीणा जनपदा वा नागरिका जनपदा वा निगमवासिनो जनपदा वा ये त्वेनं क्षारं सततमुपयुञ्जते तेऽपीत्यपिशब्दात् ग्रामादिवासिनः सर्व्वे वा अल्पे वा ये सततं क्षारमुपयुञ्जते ते सततोपयोजितक्षाराः सर्व्वे वाल्पे वाप्यान्ध्यादिभाजो भवन्ति हृदयोपकर्त्तिनश्च भवन्ति। पाण्ड्यं क्लैब्यं खालित्यमिन्द्रलुप्तरोगः केशस्य च्यवनादपुनर्भावः। पालित्यमकाले केशपक्वता।

हरादिप्रयोगेषु ज्वरादीन् हन्ति पिप्पली। अयञ्च पिप्पल्यतियोगनिषेधोऽपवादं परित्यज्य ज्ञेयः। तेन, न पिप्पलीरसायनप्रयोगस्तथा गुल्मादिषु वर्द्धमानपिप्पलीप्रयोगो विरोधमावहतीति। उक्ते हि विषये यथोक्तविधानेन निर्द्दोषा एव पिप्पल्य इति ऋषिवचनादुन्नीयते। अन्ये तु, अन्न-संस्करणे पिप्पल्यादीनामतिप्रयोगो निषिध्यते, न तु स्वातन्त्र्येणेति ब्रुवते। स ह्युपयोगोऽति-मात्रत्वेन तथा सततप्रयोगेण चेति ज्ञेयम् ॥ ५ ॥

चक्रपाणिः—हृदयापकर्त्तिन इति हृदयपरिकर्त्तनरूपवेदनायुक्ताः।

---

* नात्युपयुञ्जीतेति चक्रः।

लवणं पुनरौष्ण्यतैक्ष्ण्योपपन्नमनतिगुर्वनतिस्निग्धम् * उपक्लेदि विस्रंसनसमर्थमन्नद्रव्यरुचिकरमापातभद्रं प्रयोगसमसाद्गुण्याद् दोषसञ्चयानुबन्धं, तद्रोचनपचनोपक्लेदनविस्रंसनार्थमुपयुज्यते। तदत्यर्थमुपयुज्यमानं ग्लानिशैथिल्यदौर्बल्याभिनिर्वृत्तिकरं शरीरस्य भवति। ये ह्येतद् ग्रामनगरनिगमजनपदाः सततमुपयुञ्जते, ते भूयिष्ठं ग्लास्नवः शिथिलमांसशोणिता अपरिक्लेशसहाश्च भवन्ति। तद् यथा—वाह्लीकसौराष्ट्रिकसैन्धवसौवीरकाः, ते हि पयसापि सह सदा लवणमश्नन्ति। येऽपीह भूमेरत्यूषरा देशास्तेष्वोषधिवीरुद्वनस्पतिवानस्पत्या न जायन्ते,

ननु कस्मिन् देशे तथा स्यादित्यत उदाहरणार्थमाह—तद् यथेत्यादि। प्राच्याः कामरूपादिवासिनः ॥ ६ ॥

गङ्गाधरः—लवणमित्यादि। औष्ण्यतैक्ष्ण्यानतिगौरवानतिस्निग्धत्वानि गुणाः प्रभावाः। उपक्लेदित्वादीनि तत्तद्गुणजानि कर्म्माणि प्रभावाः। औष्ण्यजमुपक्लेदित्वं तैक्ष्ण्यजं विस्रंसनसामर्थ्यं लवणरसजमन्नद्रव्यरुचिकरत्वम्। मध्यगुरुस्नेहत्वाभ्यां मध्यमवातहरत्वं मध्यमकफकरत्वम्। आपातभद्रत्वं प्रयोगसमसाद्गुण्यतो दोषसञ्चयानुबन्धत्वञ्च लवणद्रव्यस्य स्वप्रभावाः लवणस्य प्रयोगकर्त्तव्यतायां प्रयोजनकरफलमाह—तद्रोचनेत्यादि। अस्य सततोपयोगे दोषजनकप्रभावानाह—तदत्यर्थेत्यादि। शैथिल्यमिति शरीरे मांसादिश्लथभावः। अव्यभिचारेण दोषोपदर्शनार्थमाह—ये ह्येतदित्यादि। ग्रामः प्रसिद्धः, नगरं महावसतिः भूपालाद्याढ्यसमूहवासस्थानं, निगमो नगरपुरोवर्त्तिग्रामः। ग्लास्नवो ग्लानिशीलाः, दौर्ब्बल्याद् देहशैथिल्याच्च सुतराम् अपरिक्लेशसहाः। उदाहरणार्थं देशवासिनामुपदर्शनमाह—तद् यथेति। वाह्लीका वाह्लीकदेशवासिनो जनपदाः। वाह्लीकादीनां लवणाशनेऽतिशयत्वमाह—ते हीत्यादि। लवणस्यातिमात्रसम्बन्धे दोषान्तरमपि दर्शयति—परिहारप्रवृत्तये येऽपीत्यादि। इह भूलोके

ग्लानिमांसापचयो हर्षहानिर्वा। न केवलं लवणातियोगः शरीरोपघातकरः, किन्तु भूमेरप्युपघातकर इत्याह—येऽपीह इत्यादि। ऊषरा इति लवणप्रधानाः। लवणं नात्युपयुञ्जीतेति नातिमात्रं लवणं सततमुपयुञ्जीत, अन्नद्रव्यसंस्कारकन्तु स्तोकमात्रमभ्यासेनाप्युपयोजनीयमेव। वाह्लीकादिव्यतिरिक्ते-

* अतिस्निग्धमिति चक्रः।

अल्पतेजसो वा भवन्ति लवणोपहतत्वात् । तस्माल्लवणं नाभ्युपयुञ्जीत । ये ह्यतिलवणसात्म्याः पुरुषास्तेषामपि खालित्यपालित्यानि * तथा वलयश्चाकाले भवन्ति । तस्मात् तेषां तत्सात्म्यतः क्रमेणापगमनं श्रेयः । सात्म्यमपि हि क्रमान्निवर्त्त्यमानमदोषमल्पदोषं वा भवति ॥ ७ ॥

सात्म्यन्तु नाम तत् यदात्मन्युपशेते, सात्म्यार्थो ह्युपशयार्थः । तत् त्रिविधं प्रवरावरमध्यविभागेन, सप्तविधन्तु रसैकैकत्वेन सर्व-रसोपयोगाच्च । तत्र सर्वरसं प्रवरम्, अवरमेकरसम्, मध्यमन्तु

भूमेर्ये देशाः प्रदेशा अत्यूषराः जायन्ते चेत् तदा अल्पतेजस इति बोध्यम् । अतिलवणसात्म्यत्वे ग्लानिकरदौर्बल्यदेहशैथिल्यवदपरेऽपि रोगा भवन्ति, तदाह—ये ह्यतिलवणेत्यादि । तस्मादिति श्लेष्मोत्क्लेशादिपाण्ड्वान्ध्यादिदेहशैथिल्यदौर्बल्याकालखालित्यवलिपलितरोगप्रवर्त्तनात् तेषां पिप्पलीक्षारलवणसात्म्यानां तत्सात्मतः पिप्पलीक्षारलवणसात्म्यतः क्रमेणापगमनं निवृत्तिः श्रेयः, न तु हठात् निवृत्तिः । ननु हठात् सात्म्यतो निवर्त्तने बहवो दोषा दृश्यन्ते कथं तन्निवृत्तिः श्रेयसी भवतीत्यत आह—सात्म्यमपीत्यादि ॥७॥

गङ्गाधरः—ननु सात्म्यत्वं किं तावदित्यत आह—सात्म्यन्त्वित्यादि । तदिति सात्म्यम् । त्रिविधमिति विवृणोति प्रवरेत्यादि । सप्तविधन्त्विति । सप्तधात्वं विवृणोति रसैकैकत्वेनत्यादि । रसानामेकैकत्वेन षड्विधं सर्व्वरसोपयोगात् तु एकमिति सप्तविधं सात्म्यम् । प्रवरादित्वं विवृणोति, तत्रेत्यादि । सर्व्वरसं सर्व्वे-

ऽपि देशे येऽतिलवणमश्नन्ति तेषामपि दोषानाह—ये हीत्यादि । एतेन चान्यत्रापि देशेऽतिमात्रलवणसात्म्यानां लवणाद्युपयोगकृत एव शैथिल्यादिदोष उच्यते, न देशस्वभावकृतः । तेषामिति अतिक्षारलवणसात्म्यानां, ततः सात्म्यत इति अतिमात्रक्षारादतिमात्रलवणाच्च सात्म्यात् । क्रमेणेति नवेगान्धारणीयोक्तसात्म्यपरित्यागक्रमेण । इह च सात्म्यशब्देन ओकसात्म्यमभिप्रेतम् । अल्पदोषमदोषं वेति पक्षद्वयेऽप्यर्थसात्म्यमल्पदोषं भवति, अन्यत् त्वदोषमिति व्यवस्था ॥ ६।७ ॥

चक्रपाणिः—सात्म्यं नामेति ओकसात्म्यं नामेत्यर्थः, उपशयार्थ इति उपशयशब्दाभिधेय इत्यर्थः । तदिन्योकसात्म्यम्, त्रिविधमिति प्रवरावरमध्यभेदेन । सप्तविधन्तु—एकैकरसेन षट्, संसृष्टरसोपयोगात् एकमेवं सप्तविधम् । संसृष्टशब्देन द्विरसादयः षड्रसपर्य्यन्ता गृह्यन्ते । प्रवरावरमध्यत्वम्

* खालित्येन्द्रलुप्तपालित्यानीत्यन्यः पाठः

प्रवरावरमध्यस्थम्। तत्रावरमध्याभ्यां सात्म्याभ्यां सेविताभ्यां क्रमेणैव प्रवरमुत्पादयेत् सात्म्यम्। सर्व्वरसमपि द्रव्यं सात्म्यम् उपपन्नं * सर्व्वाण्याहारविधिविशेषायतनानि अभिसमीक्ष्य हितमेवानुरुध्येत ॥ ८ ॥

तत्र खल्विमान्यष्टावाहारविधिविशेषायतनानि भवन्ति। तद् यथा—प्रकृतिकरणसंयोगराशिदेशकालोपयोगसंस्थोपयोक्तृष्टमानि भवन्ति ॥ ९ ॥

रससात्म्यं प्रवरम्, एकैकरससात्म्यमवरं, मध्यन्तु द्वित्रिचतुःपञ्चरससात्म्यम्। प्रवरावरमध्यस्थं मध्यमसात्म्यं तच्चाष्टमं नाशङ्क्यं मिश्रत्वात्। सर्व्वरसमिश्रत्वे सप्तमत्वं षट्त्वानतिरिक्तत्वेऽपि प्रवरार्थं सप्तमोपदेशः। नन्वेवमस्तु कथं सात्म्यीकुर्य्यादित्यत आह—तत्रावरमध्याभ्यामित्यादि। क्रमेणेति यस्य यो रसो नोपशेते स च तं रसं पूर्व्वमल्पाल्पमुपसेवेत। तस्य रसस्य सात्म्यीभावे सत्यपरो रसः सात्म्यीकार्य्यः, क्रमेण तस्मिन् सात्म्यीभूतेऽप्यपरः, इत्येवं द्वित्र्यादिषु मध्येषु रसेषु सात्म्यीभूतेषु प्रवरं षड्रसं सात्म्यीकुर्य्यात्। एवं द्वौ रसौ त्रयो वा रसाश्चत्वारो वा पञ्च वा रसाः क्रमेण सात्म्यीकार्य्याः, ततः सर्व्वरससात्म्यं कुर्य्यात्। नन्वेवमेव सर्व्वरसे सात्म्यीभूते किं शुभमुत्पद्यत एवाहारजं न त्वशुभमित्यत आह—सर्व्वरसमपीत्यादि। आहारविधिविशेषायतनसाकल्यानुसारेणाभ्यवहृतं सर्व्वरससात्म्यं हितमेवानुरुध्येत न तु अहितमन्यथात्वे हितमेवानुरुध्येत ॥ ८ ॥

गङ्गाधरः—तानि सर्व्वाण्याहारविधिविशेषायतनानि विवृणोति—तत्रेत्यादि। इमानि अत ऊर्द्ध्वं वक्ष्यमाणानि आहारविधेर्विशेषस्यायतनानि कारणानि। प्रकृतीत्यादि। उपयोक्ता चासौ अष्टमश्चेत्युपयोक्तृष्टमः। प्रकृतिश्चेत्यादिद्वन्द्वः ॥ ९ ॥

इति द्विरसादिपञ्चरसपर्य्यन्तम्। अवरमध्यमाभ्यां लक्षितः पुरुषः। प्रवरमिति सर्व्वरसम्, सात्म्यम् उपपादयेदभ्यस्येदित्यर्थः। क्रमेणेति यथोक्ताभ्यासक्रमेण। उपपादितसर्व्वरससात्म्येनापि चाहारः प्रशस्तप्रकृत्यादिसम्पन्नः कर्त्तव्य इत्याह—सर्व्वरसमित्यादि। अभिसमीक्ष्येति हिताहितत्वेन विचार्य्य। हितमेवेति पदेन यदेव प्रकृत्यादिना हितम्, तदेवानुरुध्येत सेवेतेत्यर्थः ॥ ८ ॥

* प्रकृत्याद्युपयोक्तृष्टमानि इत्यधिकः पाठो दृश्यते क्वचित्।

तत्र प्रकृतिरुच्यते स्वभावो यः, स पुनराहारौषधद्रव्याणां स्वाभाविको गुर्व्वादिगुणयोगः। तद् यथा—माषमुद्गयोः शूकरैणयोश्च। करणं पुनः स्वाभाविकद्रव्याणामभिसंस्कारः। संस्कारो हि गुणाधानमुच्यते। ते गुणास्तोयाग्निसन्निकर्षशौचमन्थनदेश-

गङ्गाधरः—तत्राष्टसु प्रकृत्यादिषु मध्ये स्वभावो य इति यो भावो याद्रूप्येण भवति स स्वः तस्य ताद्रूप्येण भवनं भाव इति स्वभावः। ननु किं ताद्रूप्यं विना तत्र भवनमात्रं स्वभावः किमथ ताद्रूप्यञ्च तद्भवनञ्च स्वभाव इत्यत आह—स पुनः इत्यादि। स च स्वभावः पुनराहाराणामौषधानाञ्च द्रव्याणां स्वाभाविकः स्वभावात् स्वस्यैव तदसाधारणभवनाज्जातो गुर्व्वादिगुणयोगः। समुदायत्वेऽपूर्व्वे ये गुर्व्वादयोऽसाधारणा गुणा आनुलोमिकादीनि च यानि कर्म्माणि युज्यन्ते यत् स गुर्व्वादिगुणयोग इति। तत्तदसाधारणं भवनं प्रभावः स्वभावो मुख्यस्तज्जास्तु कर्म्मगुणाश्च तद्वस्तुनिष्ठाः स्वभावा इष्यन्ते। तद्वस्तुना तु क्रियन्ते तैः कर्म्मगुणैः स्वभावैर्यानि विरेचनदहनादीनि कर्म्माणि तानि कर्त्तव्यस्य निष्ठानि न तस्य वस्तुनः स्वभावा इति, तत् तद्वस्तुनः कार्य्यस्थकर्म्मवारणाय योग इति पदम्। गुणशब्दोऽत्र निश्चेष्टकारणानां गुणीभूतानां गुर्व्वादीनाम् आनुलोमिकादीनाञ्च कर्म्मणां वाचक इति बोध्यम्। उदाहरणमाह—तद् यथेत्यादि। माषमुद्गयोरिति यथा व्रीहिर्गुरोर्लघवो लाजा इति गुर्व्वादि-लघ्वादि-यथास्वगुणयोग इत्यर्थः। एवं शूकरैणयोरित्यत्रापि बोध्यम्। प्रकृतिम् उक्त्वा करणमाह—करणं पुनरित्यादि। स्वाभाविकानां स्वभावसिद्धगुणानां न तु कृत्रिमाणां तेषां पुनःसंस्काराद् यद् गुणान्तराधानं कथितकृतासवादिषु भवति तदपि स्वाभाविकद्रव्याव्यतिरिक्तानामेवेति न दोषः। गुणाधानमिति ये गुणा न स्वाभाविकास्तेषां योग आधानमित्युत्तरकालं गुणयोगः करणम्। गुणानामाधानमाह—ते गुणाश्चेत्यादि। तोयादिव्यस्तसमस्तानां वशेन यथासम्भवं बोध्यम्। तोयसन्निकर्षवशेन कठिनखरादिगुणवतां द्रव्याणां

चक्रपाणिः—आहारस्य विधिः प्रकारो विधानं वा इत्याहारविधिः, तस्य विशेषो हितत्वमहितत्वञ्च, तस्यायतनानि हेतून् इत्याहारविधिविशेषायतनानि, आहारप्रकारस्य हितत्वमहितत्वञ्च प्रकृत्यादिहेतुकमित्यर्थः। उपयोक्ता अष्टमो येषां तान्युपयोक्त्रष्टमानि। उक्तानि प्रकृत्यादीनि विभजते—तत्रेत्यादिना। स्वाभाविक इति संस्काराद्यकृतः। माषमुद्गयोरिति प्रकृत्या माषे गुरुत्वं, मुद्गे लघुत्वं, शूकरे गुरुत्वं, एणे च लघुत्वम्। द्रव्याणामिति वक्तव्ये स्वाभाविकानामिति यत् करोति,

**कालवशेन भावनादिभिः * कालप्रकर्षभाजनादिभिश्चाधीयन्ते ।**

मृदुमसृणादिगुणाधानं स्यात् । अग्निसन्निकर्षवशेन शीतमृदुद्रवमसृणादिगुणवतामुष्णकठिनसान्द्रखरत्वादिगुणाधानं यथा व्रीहगुरोर्लघवो लाजा भञ्जनादिति । शौचवशेन तु द्रव्याणां शोधनेन यथा विषतुल्यगुणानां ताम्रादीनां गुणान्तराधानम् अशुचिद्रव्यवस्त्रादीनां धौतादिना शौचगुणाधानम् । मन्थनवशेन दध्यादीनां मन्थनेन तक्रादिरूपेण परिणामे स्वादुसौगन्ध्यादिगुणाधानम् । देशवशेन तु जाङ्गलानूपसाधारणादिदेशवशेन शरीराहारौषधिद्रव्याणां काठिन्यार्द्रसान्द्रतीक्ष्णत्वादिगुणाधानं भवति । कालवशेन पुनः संवत्सरावयवर्त्तुदिनरात्र्यादिवशेन स्थावरजङ्गमानां गुणविशेषाः फलादीनामामपक्वादीनामम्लमधुरादिगुणाधानं भवति । एवं बाल्ययौवनवार्द्धक्यावस्थाकालवशेन रूपप्रमाणबुद्ध्यादिगुणानामाधिक्यादि प्रमाणादि गुणाधानञ्च भवति । भावनादिभिः गुणा आधीयन्ते । द्रव्याणां द्रवेणालोड़नात् दिवा दिवातपे शोषणं निशि निशि स्थापनमित्येवंविधानं भावना तया गुणान्तराधानं स्यादेवमादिना कथनफाण्टशीतीकरणादिर्मन्त्रादिना च गर्भाधानादिक्रियाभिस्तत्तत्कर्म्माधिकारयोग्यतादि गुणाधानं भवति । यथोपनयनेन वेदाध्ययनादिष्वधिकारयोग्यता स्यात् । विवाहेन गृहाश्रमकर्म्मयोग्यताधीयते । ब्राह्मादिदानाद्यष्टविधः स्त्रीविवाहः, पुंविवाहस्तद्ग्रहणपूर्व्वकसप्तपदीगमनान्तव्यापारः । ताभ्यामाधीयते गृहस्थाश्रमोक्तक्रियाधिकारो दम्पत्योः इति । भाजनेन चित्रकादिलिप्तोदरकुम्भादिपात्रेणारिष्टानां गुणाधानं दशरात्रं कांस्यपात्रस्थघृतस्य विषवद्गुणाधानं मरकतवद्रूपाधानमेवमादिः । आदिना धान्यराश्यादिषु स्थापनादिभिश्च गुणविशेषाधानमेवमुन्नेयम् ।

तेन उत्पत्तिकाले जनकभूतैः स्वगुणारोपणम्, संस्कारः किन्तूत्पन्नस्यैव तोयादिना गुणान्तराधानमिति दर्शयति, तच्च प्राकृतगुणोपमर्द्देनैव क्रियते । यतो तोयाग्निसन्निकर्षशौचैस्तण्डुलस्थं गौरवमुपहृत्य लाघवमन्ने क्रियते । यदुक्तम्—"सुधौतः प्रस्रुतः स्विन्नः सन्तप्तश्चौदनो लघुः" । भावनया च स्वरसादिकृतया स्थितस्यैवामलकादेर्गुणोत्कर्षो भवति, तथा रक्तशाल्यादेर्लघोरपि अग्निसंयोगादिना लाघवं वर्द्धते । मन्थनाद् गुणाधानं यथा—शोथकृद् दधि शोथघ्नं सस्नेहमपि मन्थनादिति । देशेन यथा—भस्मराशेरधः स्थापयेद् इत्यादौ । वासनेन गुणाधानं यथा—अपामुत्पलादिवासनेन सुगन्धानुकरणम् । कालप्रकर्षाद् यथा—"पक्षाजातरसं पिबेत्" इत्यादि । भाजनेन यथा—"त्रैफलेनायसीं पात्रीं कल्केनालेपयेत्" इत्यादौ । आदिग्रहणात् पेषणाभिमन्त्रणादि गृह्यते । ननु

* देशकालवासनभावनादिभिरित्यपरः पाठः ;

संयोगस्तु पुनर्द्वयोर्बहूनां वा द्रव्याणां संहतीभावः। स विशेषमारभते, यं पुनर्नैकैकद्रव्याण्यारभन्ते। तद् यथा—मधुसर्पिषोर्मधुमत्स्यपयसाञ्च संयोगः।

राशिस्तु सर्व्वग्रहपरिग्रहौ मात्रामात्राफलविनिश्चयार्थः।

क्रमिकं संयोगमाह—संयोगस्त्वित्यादि। द्रव्याणामित्यनेन समवायेनापि द्रव्यगुणानां संहतत्वं स्यात् तद्वारणम् न स संयोगः। विशेषं विवृणोति—यमित्यादि। उदाहरणान्याह—तद् यथेत्यादि। मधुसर्पिषोः संयोगस्तु विषवद् गुणकर्म्माण्यारभते तानि च न मधु न वा सर्पिरारभते एवं मधुमत्स्यादीनां संयोग इत्यादि व्याख्यातव्यम्। एवं सर्व्वत्रापि यथायथं बोध्यम्।

क्रमिकं राशिमाह—राशिस्त्वित्यादि। द्विवचनात् सर्व्वग्रहपरिग्रहौ राशिर्न तु राशी, सर्व्वग्रहश्च राशिः परिग्रहश्च राशिरिति नार्थः। स च किमर्थः प्रक्रियते इत्यत आह—मात्रेत्यादि। मात्रा चामात्रा च तयोः फलस्य प्रयोजनस्य, विनिश्चयोऽर्थः प्रयोजनं चरमफलं यस्य स तथा।

संस्काराधेयेन गुणेन कथं स्वाभाविकगुणनाशः क्रियताम्, यतः "स्वभावो निष्प्रतिक्रियः" इत्युक्तम्। यदि संस्कारेण स्वाभाविकगुणत्वं प्रतिक्रियते, तदा "स्वभावो निष्प्रतिक्रियः" इति कथं ? ब्रूमः ;—"स्वभावो निष्प्रतिक्रियः" इति स्वभावो भावोत्पत्तौ नान्यथा क्रियते। तेन जातिसम्बन्धं माषादीनां गुरुत्वं न जातौ स्फोटयितुं पार्य्यते, संस्कारेण तु तदन्यथाकरणमनुमतमेव दृष्टत्वात्। कश्चित् तु गुणो द्रव्याणां संस्कारादिनापि नान्यथा क्रियते, यथा—वह्नेरौष्ण्यं वायोश्चलत्वं तैलस्य स्नेह इत्यादि। एते हि यावद्द्रव्यभाविन एव गुणाः। गौरवादयस्तु पुराणधान्यादिष्वप्यपगमदर्शनाच्च यावद्द्रव्यभाविनः। उक्तं हि "गुणो द्रव्यविनाशाद्वा विनाशमुपगच्छति। गुणान्तरोपघाताद् वा" इति। यत्र तु संस्कारेण व्रीहेर्लाजलक्षणं द्रव्यान्तरमेव जन्यते, तत्र गुणान्तरोत्पादः सुष्ठ्वेव।

संयोगमाह—संयोगस्त्वित्यादि। स विशेषमारभत इति संयुज्यमानद्रव्यैकदेशेऽदृष्टं कार्य्यमारभत इत्यर्थः। यन्नैकैकश इति यं विशेषं प्रत्येकमसंयुज्यमानानि द्रव्याणि नारभन्त इत्यर्थः ;—मधुसर्पिषी हि प्रत्येकममारके, मिलिते तु मारके भवतः, क्षीरमत्स्यादिसंयोगश्च कुष्ठादिकरो भवति। संयोगस्त्विह प्राधान्येनैवोपलभ्यमानद्रव्यमेलको विवक्षितः। तेन भावनादिष्वपि यद्यपि संयोगोऽस्ति, तथापि तत्र भावनाद्रव्याणां प्राधान्येनानुपलब्धेर्न संयोगेन ग्रहणम्।

राशिः प्रमाणम्। मात्रामात्राफलविनिश्चयार्थ इति मात्रावदाहारस्यौषधस्य च यत्

तत्र सर्व्वस्याहारस्य प्रमाणग्रहणम् एकपिण्डेन सर्व्वग्रहः। परिग्रहश्च पुनः प्रमाणग्रहणमेकैकत्वेनाहारद्रव्याणाम्। सर्व्वस्य ग्रहः सर्व्वग्रहः सर्व्वतो ग्रहः परिग्रह उच्यते।

देशः पुनः स्थानं, द्रव्याणामुत्पत्तिप्रचारौ देशसात्म्यञ्च आचष्टे।

राशेः प्रयोजनं मात्रामात्रयोः फलविनिश्चय इति। राशिः प्रकृतः। ननु सर्व्वग्रहः परिग्रहश्च कस्तावानित्यत आह—तत्रेत्यादि। तत्र सर्व्वग्रहपरिग्रहयोर्मध्ये सर्व्वस्य मूर्त्तामूर्त्ततावदाहारस्य एकपिण्डेन समुदायरूपेण प्रमाणग्रहणं परिमाणग्रहणं सर्व्वग्रहः। परिग्रहश्चेति पुनस्तस्यैकपिण्डेन गृहीतस्याहारस्य द्रव्याणां मूर्त्तामूर्त्तानामेकैकत्वेन प्रत्येकेन प्रमाणग्रहणं परिमाणज्ञानं परिग्रहः। ननु कथमयमर्थो न लभ्यते सर्व्वग्रहपरिग्रहपदाभ्यां ? किं सर्व्वतो ग्रहो हि सर्व्वग्रहः स एव परिग्रह इत्यर्थाभेद इत्यत आह—सर्व्वस्येत्यादि। सर्व्वस्य ग्रह इत्यनेन सर्व्वतो ग्रह इति सर्व्वग्रह इति नात्र विवक्षितमिति ख्यापितं सर्व्वतोग्रह इत्यर्थे परिग्रहशब्दो विवक्षित इति भेदः।

क्रमिकं देशमाह—देशः पुनरित्यादि। स्थानं तच्चाहारद्रव्याणां किंप्रयोजनकमित्यत आह—द्रव्याणामित्यादि। स्थानन्तु द्रव्याणामुत्पत्तिमाचष्टे प्रचारञ्चाचष्टे देशसात्म्यञ्चाचष्टे इति ज्ञापयत्येतानि द्रव्याणां स्थानम् इत्यर्थः। आनूपजाङ्गलादिस्थानं तत्तत्स्थानजौषधीनां मृदुतीक्ष्णादिकं ज्ञापयति उत्पत्त्या। प्रचारेण पुनर्देशान्तरं द्रव्याणां कालविप्रकर्षात् गुणान्तरं ज्ञापयति। जाङ्गलदेशीयस्तु बहुभुक् प्राच्या मत्स्यसात्म्या इत्यादि। तज्ज्ञानेन बलाबलादिकं देहदोषादीनां बुध्यते।

फलं शुभम्, अमात्रस्य हीनमात्रस्यातिरिक्तस्य च यत् फलमशुभम्। यदुक्तम्—"तस्य ज्ञानार्थमुचितप्रमाणमनुचितप्रमाणञ्च राशिसंज्ञं भवति"। सर्व्वग्रहं विवृणोति—तत्रेत्यादि। सर्व्वस्येति मिश्रीकृतस्यान्नमांससूपादेरेकपिण्डेन। परिग्रहं विवृणोति—परिग्रहः पुनरित्यादि। एकैकत्वेनेति अन्नस्य कुडवः, सूपस्य पलं, मांसस्य द्विपलमित्याद्यवयवमानपूर्व्वकं समुदायमानम्। सर्व्वग्रहे प्रत्यवयवमाननियमो नास्ति। तेन येन केनचिदाहारेणास्यानियतमानेन सम्पूर्णाहारमात्रानियमनं सर्व्वग्रहः। एतदेव शब्दव्युत्पत्त्या दर्शयति—"सर्व्वस्य हि" इत्यादि, सर्व्वत इति प्रत्येकावयवतः।

देशं विभजते—देश इत्यादि। स्थानग्रहणेन चाहारद्रव्यस्य तथा भोक्तुश्च स्थानं दर्शयति। आचष्ट इति द्रव्यस्योत्पत्तिप्रचारादिज्ञानहेतुर्भवति। तत्रोत्पत्त्या—हिमवति स्थाने जातं गुरु भवति,

कालो हि नित्यगश्चावस्थिकश्च। तत्रावस्थिको विकारम् अपेक्षते, नित्यगस्तु खल्वृतुसात्म्यापेक्षः।

उपयोगसंस्था उपयोगनियमः, स जीर्णलक्षणापेक्षः।

क्रमिकं कालमाह—काल इत्यादि। नित्यगः प्रातरादिः स्वस्थस्य आवस्थिको रोगिणां कालादीनाञ्च तत्र प्रतिलोमतन्त्रयुक्त्या कालद्वयं विवृणोति—तत्रेत्यादि। तत्र नित्यगावस्थिकयोर्मध्ये आवस्थिकः कालः प्रातर्मध्याह्नादिस्त्रिपश्चाहारादिश्च, आतुर्यं विना हि नावस्था भवति तेनातुराणां ज्वरितादीनां विकारज्वरादिकमपेक्षते। यथा नवज्वरी नाश्नीयात्। आमे तु स्तम्भनं नाचरेत् इत्यवमादिविकाराणामवस्थाविशेषापेक्षित्वमावस्थिककालत्वमिति। संवत्सरस्य नित्यगस्यावस्थिककालस्य ज्वराद्यार्त्तावस्थासम्बन्धिनः प्रयोजनमुक्तमाहारोपयोगे। नित्यगस्य तु प्रयोजनमाह—नित्यगस्त्वित्यादि। नित्यगः संवत्सररूपः कालो हि स्वस्थस्यर्त्तुसात्म्यं यस्मिन् ऋतौ यत् सात्म्यं तस्मिन् ऋतौ स्वस्थेन तदाहार्य्यमित्यपेक्षा यस्य स तथा। इति संवत्सररूपकालस्याहारोपयोगे प्रयोजनमुक्तम्।

क्रमिकत्वादुपयोगसंस्थामाह—उपेत्यादि। उपयोगेति प्रकरणादाहारोपयोगे नियमस्तदितराभावः। तस्य प्रयोजनमाह—स इत्यादि। स उपयोगनियमो जीर्णलक्षणापेक्षः, जीर्णलक्षणानि—उद्गारशुद्धिरुत्साहो वेगोत्सर्गो यथोचितः। लघुता क्षुत् पिपासा च जीर्णाहारस्य लक्षणम्॥ इत्यपेक्षते यः स तथा। वक्ष्यते चात्र उष्णं स्निग्धमित्यादिना, तस्माज्जीर्णेऽश्नीयादिति।

मरौ जातं लघु भवति इत्यादि। प्रचारेण लघुभक्ष्याणां प्राणिनां तथा धन्वप्रचारिणाञ्च बहुक्रियाणाञ्च लाघवं, विपर्य्यये च गौरवं गृह्यते। देशसात्म्येन च देशविपरीतगुणं सात्म्यं गृह्यते। यथा—आनूपे उष्णरूक्षादि, धन्वनि तु शीतस्निग्धादि। ओकसात्म्यन्तु उपयोक्तृग्रहणेन गृहीतम्।

नित्यग इत्यहोरात्रादिरूपः। आवस्थिक इति रोगित्वबाल्याद्यवस्थाविशेषित इत्यर्थः। विकारमपेक्षत इति बाल्यादिकृतन्तु श्लेष्मादिविकारं ज्वरादिकञ्चाहारनियमार्थमपेक्षत इत्यर्थः। ऋतुसात्म्यं हि ऋत्वपेक्षितमिति ऋतुसात्म्यापेक्षः।

एवमाहारोपयोगः कर्त्तव्य एवं न कर्त्तव्य इत्युपयोगनियमः, स जीर्णलक्षणापेक्ष इति प्राधान्येनोक्तः। तेनेह "अजल्पन्नातिद्रुतं नातिविलम्बितम्" इत्याद्यपि उपयोगनियममपेक्षत एव, अजीर्णभोजने तु महांस्त्रिदोषकोपलक्षणो दोषो भवतीत्ययमेवोदाहृतः।

उपयोक्ता पुनर्यस्तमाहारमुपयुङ्क्ते, यदायत्तमोकसात्म्यम् । इत्यष्टावाहारविधिविशेषायतनानि भवन्ति । एषां विशेषाः शुभाशुभफलाः परस्परोपकारका भवन्ति, तान् बुभुत्सेत, बुद्ध्वा च

क्रमिकमुपयोक्तारमाह—उपयोक्तेत्यादि । यः पुरुषस्तमाहारं प्रवरसात्म्यमुत्पाद्य प्रकृत्याभिगम्य द्रव्याणि पुरुषप्रकृत्यग्निबलाद्यनुरूपेण करणेन तत्पुरुषप्रकृत्यनुरूपमुत्पाद्य संयोगेन विरुद्धाविरुद्धत्वं विचार्य्य राशिना परिमाय मात्रां देशेन द्रव्याणामुत्पत्तिप्रचारदेशसात्म्यान्यनुगम्य कालेनावस्थिकेनावस्थां विचार्य्य तदनुरूपमण्डादिकमुपकल्प्य नित्यगेन तु ग्रीष्मादिसमुचितत्वेनाभिसमीक्ष्य उपयोगसंस्थया जीर्णाजीर्णलक्षणमभिसमीक्ष्य यस्य यदुचिततया युज्यते तस्य तत्तद्द्रव्यं योग्यतया विकल्पितमाहारमुपयुङ्क्ते स उपयोक्ता । ननु तस्य किं प्रयोजनमाहारोपयोगे इत्यत आह—यदायत्तमित्यादि । ओकसात्म्यं यस्य यदुचिततया सहात्मना युज्यते तदोकसात्म्यं, तत् तु यो विचारयति तस्यायत्तं तदिति प्रकृत्यादीनामष्टानां व्याख्यानमुपसंहरति इत्यष्टावित्यादि ।

नन्वेषां प्रकृत्यादीनां व्यस्तानां किमाहारोपयोगित्वं किमथ समस्तानाम्? फलञ्च किं शुभमेव न चाशुभमित्यत आह—एषामित्यादि । एषां प्रकृत्यादीनामष्टानाम् आहारविधिविशेषकारणानां विशेषाः प्रकृत्याद्यन्यतमानां स्वाभाविकगुर्व्वादिगुणादीनां शुभाशुभानां शुभश्चाशुभश्च फलं स्वजन्यं येषां ते तथा, पुरुषाणां देहाग्निदोषरोगबलप्रकृत्याद्यनुरूपेण गुरुलाघवादिमुत्पाद्य प्रयोगात् शुभं फलं स्वास्थ्यारोग्यलक्षणं जनयन्ति । अन्यथा त्वशुभमातुर्य्यं जनयन्तीत्यतो न केवलं शुभफलाः, न वा व्यस्ताः शुभाशुभफलाः परन्तु परस्परोपकारकाः परस्परं प्रकृतिः करणस्य करणञ्च प्रकृतेरित्येवमादि परस्परोकारं कुर्व्वन्तीति तान् प्रकृत्यादीनां विशेषान् प्रकृतेर्विशेषान् गुरुलाघवादीनां प्रत्येकं करणस्य विशेषान् तोयाग्न्यादिप्रत्येकेन गुणविशेषान् नानारूपान् । संयोगस्य विशेषान् मधुसर्पिषोः संयोग इत्येवमादि विरुद्धं तदितरम् अविरुद्धमित्येवमादीन् । राशेर्विशेषान् शरावप्रस्थादिकान् । देशस्य विशेषान् जाङ्गलानूपसाधारणो-

यदायत्तमोकसात्म्यमिति भोक्तृपुरुषापेक्षं ह्यभ्याससात्म्यं भवति । कस्यचिद्धि किञ्चिदेवाभ्यासात् पथ्यमपथ्यं वा सात्म्यं भवति । एषामित्यादौ शुभफला विशेषा अशुभफलाश्च परस्परोपकारका भवन्तीति

हितेप्सुः स्यात्। न च मोहात् प्रमादाद्वा प्रियमहितमसुखोदर्कम् उपसेव्यं किञ्चिदाहारजातमन्यद्वा ॥ १०।११ ॥

तत्रेदमाहारविधिविधानमरोगाणामातुराणाञ्च केषाञ्चित् काले प्रकृत्यैव हिततमं भुञ्जानानां भवति।

पत्यकादीन्। कालस्य विशेषान् हेमन्तादीन् ज्वरितलाघवस्थाश्रयांश्च। उपयोगसंस्थाया विशेषान् जीर्णाजीर्णलक्षणान् मण्डादिकांश्च उपयोक्तृविशेषान् प्राणाभिसरवैद्यप्रभेदान् बुभुत्सेत बोद्धुमिच्छेत्। तद्बुभुत्सया किं स्यादित्यतस्तत्र हेतुमाह—बुद्ध्वा चेत्यादि। हितेप्सुरेव स्यान्न च मोहात् प्रमादाद्वा, मोहोऽत्र प्रकृत्याद्यष्टकाज्ञानं, प्रमादोऽत्र प्रकृत्याद्यष्टकानवधानं तदन्यतरस्मात् प्रियम् आपाततः स्वादनादिना प्रियम्, असुखोदर्कम् औत्तरकालिकं फलमसुखं दुःखं यस्य तत् तथाभूतमहितमाहारजातमन्यद्वा विहारजातमुपसेव्यं, तेषां विशेषबुद्ध्या तत्प्रकृत्यादिषु मोहप्रमादसम्भवाभावात्। दोषादीनां मानविज्ञानहेतुत्वमष्टानां प्रकृत्यादीनां विमानत्वं बोध्यम् ॥ १०।११ ॥

<u>गङ्गाधरः</u>—नन्वाहारविधिरन्नपानचतुष्के उक्तः, उक्तान्यत्राहारविधिविशेषायतनानि कस्तत्र तावदाहारविधिविशेष इत्यत आह—तत्रेदमित्यादि। इदं वक्ष्यमाणमुष्णमित्यादिना आहारस्य विधेरन्नपानादिकोक्तगुरुलाघवादिविधिभिर्विधानं करणप्रकारोऽरोगाणां स्वस्थानामातुराणामपि व्याधितानाञ्च केषाञ्चित् सम्भवादसम्भवात् तु न सर्व्वेषामातुराणां स्वस्थानां वा काले आहारकाले प्रकृत्यैव स्वभावेनैव हिततमं हितातिशयम्।

ज्ञेयम्, तत्र प्रकृत्या लाघवादिः शुभफलो गुर्व्वादिश्चाशुभफलः। करणाद्यभिधेयोऽपि विशेषः शास्त्रोक्तः शुभो निषिद्धस्त्वशुभः। देशासात्म्यं निन्दितदेशजादेश्च द्रव्यस्याशुभं फलम्। एवं कालासात्म्यम् अशुभफलञ्चाजीर्णभोजनादि, तथा ओकसात्म्यञ्चाशुभफलमिति ज्ञेयम्, विपरीतन्तु शुभफलम्। मोहादित्यज्ञानतः, प्रमादादिति ज्ञात्वा रागादित्यर्थः। प्रियमिति तदात्वमात्रप्रियम्। अहितम् इत्यस्य विवरणम्—असुखोदर्कमिति असुखं दुःखरूपम् उदर्कमुत्तरकालीनं फलं यस्य स तथा। अन्यद्वेति भेषजविहारादि ॥ ९—११ ॥

<u>चक्रपाणिः</u>—तत्रेत्यादाविदमिति वक्ष्यमाणम्। आहारविधिर्विधीयते येनोष्णस्निग्धादिना वक्ष्यमाणेन तदाहारविधिविधानम्। आतुराणाञ्च केषाञ्चिदितिपदेन रक्तपित्तिनां शीतमेव, कफरोगिणामुष्णमेव हितमित्यादि विपर्य्ययं दर्शयति। केषाञ्चिद् भुञ्जानानामिदमाहारविधिविधानं

उष्णं स्निग्धं मात्रावज्जीर्णे वीर्य्याविरुद्धमिष्टे देशे इष्ट-सर्व्वोपकरणं नातिद्रुतं नातिविलम्बितमजल्पन्नहसंस्तन्मना भुञ्जीत आत्मानमभिसमीक्ष्य सम्यक्। तस्य च साद्‌गुण्यमुपदेक्ष्यामः ॥ १२ ॥

उष्णमश्नीयात्। उष्णं हि भुज्यमानं स्वदते भुक्तञ्चाग्निमनुदीर्णमुदीरयति क्षिप्रं जरां गच्छति वातञ्चानुलोमयति श्लेष्माणञ्च परिशोषयति*, तस्मात् उष्णमश्नीयात् ॥ १३ ॥

स्निग्धमश्नीयात्। स्निग्धं हि भुज्यमानं स्वदते भुक्तञ्चानुदीर्णम्† अग्निमुदीरयति क्षिप्रं जरां गच्छति वातमनुलोमयति दृढीकरोति शरीरोपचयं बलाभिवृद्धिञ्चोपजनयति वर्णप्रसादञ्चाभिनिर्वर्त्तयति। तस्मात् स्निग्धमश्नीयात् ॥ १४ ॥

कस्तावदन्नपानविध्युक्तविधिभिराहारस्य करणप्रकार इत्यत आह—उष्णमित्यादि। इष्टे स्वमनोऽनुकूले। वीर्य्याविरुद्धं संयोक्तुं यद्द्रव्यं यद्द्रव्यस्य वीर्य्येण स्ववीर्य्यतो न विपरीतं भवति, तेन द्रव्येण तद्द्रव्यं संयुक्तम्। तन्मनाः भोजनमनाः। एषामुष्णादीनामन्यतमैकादिकमन्तरेण न भुञ्जीत। भुङ्क्ते चेत् तदा किं स्यादित्यत आह—तस्येत्यादि। तस्याहारविधिविधानस्य साद्‌गुण्यं सद्‌गुणत्वं व्यतिरेकेणासद्‌गुणत्वञ्च बोध्यम् ॥ १२ ॥

गङ्गाधरः—सद्‌गुणमाह—उष्णमश्नीयादित्यादि। तत्र हेतुमाह—उष्णं हीत्यादि। उष्णं नात्युष्णम्, शीतञ्चात्युष्णञ्च भुज्यमानं न स्वदते भुक्तम्, अग्निमुदीर्य्यं नोदीरयति इत्येवमादि उन्नयेत् ॥ १३ ॥

गङ्गाधरः—स्निग्धमश्नीयादिति। स्निग्धं नातिस्निग्धम्। अतिस्निग्धमस्निग्धञ्च भुज्यमानं हि न स्वदते। भुक्तमित्येवमादि उन्नेयम् ॥ १४ ॥

हिततमं भवतीति योजना। प्रकृत्यैवेति स्वभावेनैव हिततमं वक्ष्याम इति भावः। उष्णमित्यादौ सम्यगिति च्छेदः। तस्येत्युष्णादिगुणयुक्तस्यान्नस्य। साद्‌गुण्यमिति प्रशस्तगुणयोगिताम्। परिह्रासयतीति भिन्नसङ्घातं करोति। दृढीकरोति शरीरोपचयमिति शरीरोपचयं स्थायिनं करोति ॥ १२—१४ ॥

* परिशोषयतीत्यत्र परिह्रासयतीति चक्रसम्मतः पाठः। † भुक्तमुदीर्य्यमित्यन्यः पाठः।

मात्रावदश्नीयात्। मात्रावद्धि भुक्तं वातपित्तकफानप्रपीड़यदायुरेव विवर्द्धयति केवलम्। सुखं गुदमनु पर्य्येति नोष्माणमुपहन्त्यव्यथश्च परिपाकमेति। तस्मान्मात्रावदश्नीयात्॥ १५॥

जीर्णेऽश्नीयात्। अजीर्णे हि भुञ्जानस्याभ्यवहृतमाहारजातं पूर्व्वस्याहारस्य रसमपरिणतमुत्तरेणाहाररसेनोपसृजत् सर्व्वान् दोषान् प्रकोपयत्याशु। जीर्णे भुञ्जानस्य स्वस्थानस्थेषु दोषेषु अग्नौ चोदीर्णे जातायाञ्च बुभुक्षायां विवृतेषु च स्रोतसां मुखेषूद्गारे विशुद्धे हृदये विशुद्धे वातानुलोम्ये विसृष्टेषु च वातमूत्रपुरीषवेगेषु अभ्यवहृतमाहारजातं सर्व्वशरीरधातून् अप्रदूषयदायुरेवाभिवर्द्धयति केवलम्। तस्माज्जीर्णेऽश्नीयात्॥१६॥

गङ्गाधरः—मात्रावदश्नीयादिति। मात्रावद् भुक्तं हि वातपित्तकफान् अप्रपीड़यत् न प्रपीड़यत् सदायुरेव केवलं कृत्स्नं विवर्द्धयति। सुखं यथा स्यात् तथा गुदमनुपर्य्येति सम्यक्पक्वं विड़्भूतं सुखे गुदमनु लक्ष्यीकृत्य पर्य्येति न चोष्माणं जाठराग्निम् उपहन्ति समश्चानुवर्त्तते। यतोऽव्यथं सुखं परिपाकमेति। अमात्रावद् भुक्तं वातादीन् प्रपीड़यदायुर्न वर्द्धयतीत्येवमादि उन्नयेत॥ १५॥

गङ्गाधरः—जीर्णेऽश्नीयादिति। अजीर्णे हीत्यादि। व्यतिरेकेण साद्‌गुण्यं मुक्तकण्ठेनोक्तम् अपरिणतम् ईषत्परिणतं सशेषं परिणतमित्यर्थः। अन्वयमुखेन साद्‌गुण्यमाह—जीर्णे इत्यादि। जीर्णे सत्याहारे स्वस्थानस्थदोषादीनि भवन्ति। तेषु सर्व्वेषु सत्सु क्षाते जीर्णे भुञ्जानस्य प्रकरणाद्धितं भुञ्जानस्य पुंसोऽभ्यवहृतं भुक्तं तावदाहारजातं सर्व्वशरीरधातून् वातादीन् मलधातून् रसादीन् प्रसादधातून् वसादीनुपधातूंश्चाप्रदूषयत् दूषितान् न कुर्व्वत्॥ १६॥

चक्रपाणिः—मात्रावदिति प्रशंसायां मतुप्, तेन प्रशस्तमात्रमित्यर्थः; अपीड़यदिति अमतिमात्रत्वेन स्वस्थानस्थितं सत् वातादीन् स्थानापीड़नादप्रकोपयत्। गुदमनु पर्य्येतीति परिणतं सदनुरूपतया निःसरतीत्यर्थः। उष्माणं वह्निम्॥ १५॥

चक्रपाणिः—पूर्व्वस्येति दिनान्तरकृतस्य, अपरिणतमित्यसम्यग्जातम्, आहाररसेनेत्याहार-

वीर्य्याविरुद्धमश्नीयात् । अविरुद्धवीर्य्यमश्नन् हि विरुद्ध-वीर्य्याहारजैर्विकारैर्नायमुपसृज्यते । तस्माद् वीर्य्याविरुद्धम् अश्नीयात् ॥ १७ ॥

इष्टे देशे चेष्टसर्व्वोपकरणञ्चाश्नीयात् । इष्टे हि देशे भुञ्जानो नानिष्टदेशजैर्मनोविघातकरैर्भावैर्मनोविघातं प्राप्नोति । तथेष्टैः सर्व्वोपकरणैस्तस्मादिष्टे देशे तथेष्टसर्व्वोपकरणञ्चाश्नीयात् ॥१८

नातिद्रुतमश्नीयात् । अतिद्रुतं हि भुञ्जानस्य तत्स्नेहन * स्वादनभोजनस्याप्रतिष्ठानं भोज्यदोषसाद्गुण्योपलब्धिश्च न नियता । तस्मान्नातिद्रुतमश्नीयात् ॥ १९ ॥

गङ्गाधरः—वीर्य्याविरुद्धमश्नीयादिति । अविरुद्धवीर्य्यमाहारं विरुद्धवीर्य्याहारजै रक्तपित्तादिभिः । विरुद्धवीर्य्यमश्नन् पुनस्तैरुपसृज्यतेऽयं पुरुष इति ॥१७

गङ्गाधरः—इष्टे देशेऽश्नीयादिति । मनोविघातकरैर्वीभत्सादिभिर्न मनोविघातं प्राप्नोति, अनिष्टदेशे तु प्राप्नोति । तथेष्टसर्व्वोपकरणमश्नीयादित्यत्रापि तथाशब्देन अनिष्टोपकरणजैर्मनोविघातं न प्राप्नोति अनिष्टसर्व्वोपकरणैस्तु प्राप्नोति इत्यर्थः ॥ १८ ॥

गङ्गाधरः—नातिद्रुतमश्नीयादिति । तत्स्नेहनस्य भुक्तद्रव्याणां स्वाभाविकस्नेहस्य स्वादस्य भोजनस्य च यथावस्थानं न भवति । अतिद्रुतं भुक्तमाहारजातं न यथावत् स्निह्यति न च यथावत् स्वदते न वा यथावत् प्रतितिष्ठते कोष्ठे । भोज्यानां द्रव्याणां दोषस्य तत्रासत्पाकजमन्दरसगन्धादिकस्य

परिणामगतेन मधुरादिना, किंवा आहारजेन रसेन । स्वस्थानस्थेषु दोषेषु इत्यादि जीर्णाहारस्य लक्षणम् । विरुद्धवीर्य्याहारजैरिति कुष्ठान्ध्यविसर्पादैरात्रेयभद्रकाप्यीयोक्तैः ॥ १६।१७ ॥

चक्रपाणिः—मनोविघातकरैर्भावैरिति त्रिविधकुक्षीये वक्ष्यमाणैः कामादिभिश्चित्तोपतापकरैः चित्तविकारैरित्यर्थः । तथेष्टैश्च सर्व्वोपकरणैर्भुञ्जानो मनोविघातं न प्राप्नोतीति योजना, अनिष्टभोजनादेर्मनोविघातो भवति ॥ १८ ॥

चक्रपाणिः—उत्स्नेहनमुन्मार्गगमनम्, अवसदनमवसादः, अप्रतिष्ठानं हृदयस्थत्वेन कोष्ठा-

* उत्स्नेहनेति चक्रधृतः पाठः ।

नातिविलम्बितमश्नीयात्। अतिविलम्बितं हि भुञ्जानो न तृप्तिमधिगच्छति बहु भुङ्क्ते शीतीभवत्याहारजातं विषमपाकञ्च भवति। तस्मान्नातिविलम्बितमश्नीयात्॥ २०॥

अजल्पन्नहसन् तन्मना भुञ्जीत। जल्पतो हसतोऽन्यमनसो वा भुञ्जानस्य त एव हि दोषा भवन्ति, य एवातिद्रुतमश्नतः। तस्मादजल्पन्नहसंस्तन्मना भुञ्जीत॥ २१॥

आत्मानमभिसमीक्ष्य भुञ्जीत सम्यक्। इदं ममोपशेते इदं

सादगुण्यमनिष्टभावरूपं नियतं नोपलभ्यते तदुपलब्ध्यनियमेन। असत्-पक्कमाहारजातं भुक्तं मन्दरसगन्धादिजन्यरोगान् जनयतीति भावः। नाति-द्रुतं भुञ्जानस्य भुक्तं यथावत् स्नेहयति स्वदते यथावदाशये च प्रति-तिष्ठते॥ १९॥

गङ्गाधरः—नातिविलम्बितमश्नीयादिति। कालप्रकर्षात् किञ्चित् पक्तुमार-भ्यते किञ्चिदाशयमापद्यते एवंविधमपाकत्वं स्यात्। नातिविलम्बितं भुञ्जानन्तु तृप्तिमधिगच्छति न बहु भुङ्क्ते न च शीतीभवत्याहारजातं समपाकञ्च भवति॥ २०॥

गङ्गाधरः—अजल्पन्नित्यादि। य एवातिद्रुतमश्नतो जल्पतो भुञ्जानस्य हसतो भुञ्जानस्य च अतन्मनसो भुञ्जानस्य चापि तत्स्नेहनास्वादन-भोजनस्याप्रतिष्ठानं न च नियता भोज्यदोषसाद्गुण्योपलब्धिरित्येते ये दोषास्त एव हि भवन्ति॥ २१॥

गङ्गाधरः—आत्मानमभिसमीक्ष्य भुञ्जीत सम्यगिति। इदं ममोपशेते इदं

प्रवेशः, भोज्यगतानां दोषाणां केशादीनां सादगुण्यस्य च स्वादुत्वादेरुपलब्धिर्न नियता भवति कदाचिदुपलभ्यते कदाचिन्नेति। तत्र दोषानुपलब्ध्या सदोषस्यैव भक्षणं, सादगुण्यानुपलब्ध्या च प्रीत्यभावः। विषमञ्च पच्यत इति चिरकालभोजनेनाग्निसम्बन्धस्य वैषम्यादिति भावः। ये हि द्रुतमश्नतो दोषा इति उत्स्नेहनादयः॥ १९—२१॥

नोपशेते इत्येव विदितं ह्यस्यात्मन आत्मसात्म्यं भवति। तस्मादात्मानमभिसमीक्ष्य भुञ्जीत सम्यगिति ॥ २२ ॥

भवति चात्र।

रसान् द्रव्याणि दोषांश्च विकारांश्च प्रभावतः।
वेद यो देशकालौ च शरीरञ्च स ना * भिषक् ॥ २३ ॥

तत्र श्लोकौ।

विमानार्थो रसद्रव्य-दोषरोगाः प्रभावतः।
द्रव्याणि नातिसेव्यानि त्रिविधं सात्म्यमेव च ॥

नोपशेते इति विदितमाहारजातं भुञ्जानस्यास्य पुंसस्तदाहारजातम् आत्मनः स्थूलदेहिनो यथायथं शरीरसत्त्वात्मनामात्मसात्म्यं स्वस्वसात्म्यं स्वेन स्वेन सहात्मतां सरूपतामितं भवति। इति आहारस्य विधिभिर्विधानस्य दोषभेषजादिमानज्ञाने हेतुत्वात् यथासम्भवं विमानत्वं बोध्यम्। इति ॥ २२ ॥

गङ्गाधरः—अथ रसद्रव्यदोषविकाराणां प्रभावज्ञानं प्रशंसति—भवतीत्यादि ॥ २३ ॥

गङ्गाधरः—अध्यायार्थमुपसंहरति—विमानार्थ इत्यादि। विमानार्थ इति इह खल्विस्यारभ्याग्निवेशेत्यन्तेन विमानार्थ उक्तः। तत्रेत्याहारस्य त्रीणीत्यस्मात् प्राक् रसद्रव्यदोषरोगाः प्रभावत उक्ताः। नातिसेव्यानि त्रीणि द्रव्याणि। अथ त्रीणीत्यारभ्योक्तानि ततस्तस्मात् तेषामित्यारभ्य सात्म्यमित्यन्तेन त्रिविधं सात्म्यमुक्तं सर्व्वरसमपि चेत्यारभ्य तत्रेदमित्यस्मात् पूर्व्वम्

चक्रपाणिः—नोपशेत इतीत्यत्र 'इति'शब्देन सात्म्यासात्म्यविधानोपदर्शकेन विचारफलम् ओकसात्म्यसेवनं दर्शयति। आत्मन इतिपदेनात्मनैवात्मसात्म्यं प्रतिपुरुषं ज्ञायते, न शास्त्रोपदेशेनेति दर्शयति ॥ २२ ॥

चक्रपाणिः—अध्यायोक्तरसप्रभावादिज्ञानं स्तौति—रसानित्यादि। स नो भिषगिति नोऽस्माकं सम्मत इत्यर्थः। दोषविकारौ च यद्यपि त्रिविधकुक्षीये प्रभावविस्तारेण वक्तव्यौ तथापीह

* स नः इति चक्रसम्मतः पाठः।

आहारायतनान्यष्टौ भोज्यसाद्गुण्यमेव च।
विमाने रससंख्याते सर्व्वमेतत् प्रकाशितम् ॥ २४ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते विमानस्थाने
रसविमानं नाम प्रथमोऽध्यायः ॥ १ ॥

आहारायतनान्यष्टौ उक्तानि। तत्रेदमित्यारभ्य यावदन्तं भोज्यसाद्गुण्यमुक्तम्। रससंख्याते रसाख्ये विमाने रसविमाने इत्यर्थः ॥ २४ ॥

अध्यायं समापयति—अग्नीत्यादि।

इति श्रीगङ्गाधरकविरत्नकविराजविरचिते चरकजल्पकल्पतरौ
तृतीयस्कन्धे विमानस्थानजल्पे रसविमानजल्पाख्या
प्रथमशाखा ॥ १ ॥

संक्षेपेणोक्तावेव। तेन, दोषविकारप्रभावावप्युक्ताविति यदुच्यते, तत् साधु। तैलादिद्रव्याश्रय-कथनञ्च द्रव्यप्रभाव इति कृत्वा न संग्रहे पठितम् ॥ २३।२४ ॥

इति चरकचतुरानन-श्रीमच्चक्रपाणिदत्तविरचितायाम् आयुर्व्वेददीपिकायां विमानस्थान-व्याख्यायां रसविमानं नाम प्रथमोऽध्यायः ॥ १ ॥

## द्वितीयोऽध्यायः ।

**अथातस्त्रिविधकुक्षीयं विमानं व्याख्यास्यामः, इतिह स्माह भगवानात्रेयः ॥ १ ॥**

**त्रिविधं कुक्षौ स्थापयेदवकाशांशमाहारस्याहारमुपयुञ्जानः । तद् यथा—एकमवकाशांशं मूर्त्तानामाहारविकाराणामेकं द्रवाणामेकं पुनर्वातपित्तश्लेष्मणाम् । एतावतीं ह्याहारमात्रामुपयुञ्जानो नामात्राहारजं किञ्चिदशुभं प्राप्नोति । न च केवलं**

गङ्गाधरः—अथाहारत्रिविधविधाने मात्रावदश्नीयादिति यदुक्तं, तदाहारमात्रामानविज्ञानार्थं त्रिविधकुक्षीयं विमानमारभते—अथात इत्यादि । अध्यायादौ त्रिविधं कुक्षौ स्थापयेदित्यादिवाक्यार्थमधिकृत्य त्रिविधकुक्षीयोऽध्यायः कृतः ॥ १ ॥

गङ्गाधरः—त्रिविधमित्यादि । कुक्षौ आमाशयेऽवकाशांशमाहारस्य सम्बन्धि त्रिविधं स्थापयेत् कल्पयेदाहारमुपयुञ्जानः पुरुषः । नन्वाहारस्य त्रिविध कुक्ष्यवकाशांशं कुतः स्थापयेदित्यत आह—तद् यथेत्यादि । मूर्त्तानामिति कठिनानां, द्रवाणामिति दध्यादीनाम् । वातादिसञ्चरणायैकमवकाशांशस्थापनं प्रयोजनं बोध्यम् । ननु मात्रावदाहारमात्रेणैव किमाहारफलसौष्ठवं भवति,

चक्रपाणिः—रसविमाने राशिरुक्तस्तस्य राशेर्मात्रात्वामात्रावत्त्वस्य । फलप्रपञ्चदोषविकारप्रपञ्चं दर्शयितुं त्रिविधकुक्षीयोऽभिधीयते । त्रिविधमिति त्रिप्रकारम् । अवकाशांशमिति कोष्ठावकाशभागम् । आहारस्येत्याहारनिमित्तमित्यर्थः । तेन, द्वाववकाशावाहारस्य वक्तव्यौ, एकस्तु दोषाणामिति त्रिविधं वक्ष्यमाणम् । उक्तं दोषावकाशस्थानं हि आहारोपकारकत्वादाहारस्येत्युच्यते, दोषावकाशस्थाने हि आहारः दोषैर्दूष्यत इति वक्तव्यम् । किंवा, आहारस्यावकाशांशमामाशयरूपं कुक्षौ वक्ष्यमाणविभागेन त्रिविधं स्थापयेदित्यर्थः । कुक्ष्यंशभागं यथा कर्त्तव्यमाह—तद् यथेत्यादि । मूर्त्तानामित्याशयखाद्यानाम्, द्रवाणामिति लेह्यपेयानाम् । इह चांशशब्दो न समविभागे वर्त्तते, किन्तु यथोचितविभागे । तेन मूर्त्तानां बहुभागो भवतीति ज्ञेयम् । वातपित्तश्लेष्मणां यद्यपि भिन्नानि स्थानानि, तदपि मूर्त्ताहारादिभागापेक्षया मिलितानां किञ्चित् स्थानं भवतीत्येकत्वेनाध्यारोप्यात्र "एकम्" इति कृतम् । ननु कुक्ष्यंशविभागेन कृतेऽप्याहारे प्रकृतिगुर्वादिदुष्टद्रव्यजन्यदोषो दृश्यत इत्याह—नामात्राहारजमिति । प्रकृत्यादिदोषकृतन्तु प्राप्नोत्येव

मात्रावत्त्वादेव आहारस्य कृत्स्नमाहारफलसौष्ठवमवाप्तुं शक्यम्। प्रकृत्यादीनाम् अष्टानामाहारविधिविशेषायतनानां प्रविभक्तफलकत्वात्। तत्रायं तावदाहारराशिमधिकृत्य मात्रामात्राफलविनिश्चयार्थः प्रकृतः। एतावानेव ह्याहारराशिविधिविकल्पो यावन्मात्रावत्त्वम् अमात्रावत्त्वञ्च ॥ २ ॥

तत्र मात्रावत्त्वं पूर्व्वमुद्दिष्टं कुक्ष्यंशविभागेन, तद् भूयो विस्तरेणानुव्याख्यास्यामः। तद् यथा—कुक्षेरप्रपीड़नम् आहारेण, हृदयस्यानवरोधः, पार्श्वयोरविपाटनम्, नातिगौरवम् उदरस्य, प्रीणनमिन्द्रियाणाम्, क्षुत्पिपासोपरमः, स्थानासनशयनगमनोच्छ्वास-*-हास्यसंकथासु सुखानुवृत्तिः, सायं प्रातश्च

इत्याकाङ्क्षायामाह—न चेत्यादि। विभक्तफलत्वात् विभिन्नफलत्वात् न त्वेकैकशः सर्व्वफलत्वात्। तत्र प्रकृत्यादिष्वष्टस्वाहारविधिविशेषायतनेषु मध्ये आहारस्य राशिमधिकृत्य मात्रामात्रयोः शुभाशुभफलविनिश्चयार्थोऽयं त्रिविधकुक्षीयावकाशांशस्थापनोपदेशः। प्रकृतः करणारम्भः प्रशब्दस्यारम्भार्थकत्वात्। ननु राशिः सर्व्वग्रहपरिग्रहावुक्तः कथं मात्रामात्रा चात्रोच्यते इत्यत आह एतावानेव इत्यादि। हि यस्मादाहारस्य राशिरूपविधेर्विकल्प एतावानेव मात्रावत्त्वम् अमात्रावत्त्वञ्चेति न त्वधिकः ॥ २ ॥

गङ्गाधरः—तत्रेत्यादि। तन्मात्रावत्त्वम् अप्रपीड़नमाहारेण कुक्षिपीड़नाभावः। स्थानं स्थितिरासनमुपवेशनं शयनं स्पष्टं संकथा संलापः सम्यग्बहु-

इत्यर्थः। तदेव स्फारयति—न चेत्यादि। सौष्ठवं सुष्ठुत्वं भाद्रक्यमित्यर्थः। विभक्तफलत्वादिति विभिन्नफलत्वात्। कुक्ष्यंशविभागेनेति "एकमवकाशांशं मूर्त्तानाम्" इत्यादिना। उद्दिष्टमिति सङ्क्षेपकथितम्। सायं प्रातश्चेति वचनात् सायं भोजने कृते यदि प्रातः, प्रातश्च

* प्रश्वासेत्यधिकः पाठः क्वचित्।

सुखेन परिणामनम्, बलवर्णोपचयकरत्वञ्चेति मात्रावतो लक्षणमाहारस्य भवति ॥ ३ ॥

अमात्रावत्त्वं पुनर्द्विविधमाचक्षते हीनमधिकञ्चेति। तत्र हीनमात्रमाहारराशिं बलवर्णोपचयक्षयकरम् अतृप्तिकरमुदावर्त्तकरम् अनायुष्यमवृष्यमनौजस्यं मनोबुद्धीन्द्रियोपघातकरं * सारविधमनमलक्ष्म्यावहम् अशीतेश्च वातजानां विकाराणामायतनमाचक्षते ॥ ४ ॥

अतिमात्रं पुनः सर्व्वदोषप्रकोपणमिच्छन्ति कुशलाः। यो हि मूर्त्तानामाहारजातानां सौहित्यं गत्वा द्रवैस्तृप्तिमापद्यते, भूयस्तस्यामाशयगता वातपित्तश्लेष्माणोऽभ्यवहारेणातिमात्रेणातिप्रपीड्यमानाः सर्व्वे युगपत् प्रकोपमापद्यन्ते। ते प्रकुपितास्तमेवाहारराशिम् अपरिणतमाविश्य कुक्ष्येकदेशमाश्रिताः विष्टम्भयन्तः

व्याख्यानं वा सुखानुवृत्तिर्न तु क्लेशः परिणमनं विण्मूत्रोत्सर्गानुमेय आहारस्य परिपाकः ॥ ३ ॥

गङ्गाधरः—अमात्रावत्त्वं व्याख्यातुमाह—अमात्रेत्यादि। सारविधमनं वक्ष्यमाणाष्टविधसारस्य समस्तस्य व्यस्तस्य वा विधमनं ह्रासकरम्, अलक्ष्म्यावहं लक्ष्म्या अनावहम् ॥ ४ ॥

गङ्गाधरः—अतिमात्रमित्याहारराशिमित्यनुवर्त्तमानेनान्वितम्। अतिमात्राया लक्षणमाह—यो हीत्यादि। सौहित्यमुदरपरिपूर्णतां तृप्तिमभ्यवहारायानिच्छां सर्व्वदोषप्रकोपणमिति यदुक्तं तद् विवृणोति—भूयस्तस्येत्यादि। ते अतिमात्राहारप्रपीड़िता वातपित्तश्लेष्माणः सञ्चरणायावकाशांशाभावात् कुक्षेरेकदेशमाविश्य तमेवातिमात्रं भुक्तमाहारराशिमपरिणतमपक्वं विष्टम्भयन्तः

कृते यदि सायं सुखेन परिणमनं तथा स्थानासनादिषु सुखानुवृत्तिर्भवति, तदा मात्रावद् भोजनं कृतमिति ज्ञेयम् ॥ १—३ ॥

चक्रपाणिः—सारविधमनमिति रोगभिषग्जितीये वक्ष्यमाणत्वक्सारादिविधमनम्। आहार-

* शरीरमनोबुद्धीन्द्रियोपघातकरमिति चक्रः।

सहसा वाप्युत्तराधराभ्यां मार्गाभ्यां प्रच्यावयन्तः पृथक् पृथगिमान् विकारान् अभिनिर्वर्त्तयन्त्यतिमात्रभोक्तुः। तत्र वातः शूला-नाहाङ्गमर्दमुखशोष-मूर्च्छाभ्रमाग्निवैषम्यसिराकुञ्चनसंस्तम्भनानि करोति, पित्तं पुनर्ज्वरातिसारान्तर्दाहतृष्णामदभ्रमप्रलपनानि, श्लेष्मा तु च्छर्द्यरोचकाविपाकशीतज्वरालस्यगात्रगौरवाणि ॥ ५

न खलु केवलमतिमात्रमेवाहारराशिमामप्रदोषकारण-मिच्छन्ति। अपि तु खलु गुरुरूक्षशीतशुष्क*विष्टम्भिविदाह्य-शुचिविरुद्धानाम् अकालेऽन्नपानानामुपसेवनम्, कामक्रोधलोभ-मोहेर्ष्याह्रीशोकमानोद्वेगभयोपतप्तमनसा वा यदन्नपानमुपयुज्यते तदप्याममेव प्रदूषयति ॥ ६ ॥

सहसा वापीत्यपिशब्दात् क्रमेण वा उत्तराधराभ्यां मार्गाभ्यां मुखगुदाभ्यां प्रच्यावयन्तः पृथक् पृथक् दोषा अतिभोक्तुः पुरुषस्य, इमान् वक्ष्यमाणान्। ननु को दोषः कं विकारमभिनिर्वर्त्तयतीत्यत आह—तत्रेत्यादि। तत्र त्रिषु दोषेषु मध्ये करोतीत्यस्य परत्रापि द्वाभ्यामन्वयः ॥ ५ ॥

गङ्गाधरः—ननु केवलमेवातिमात्राहारेणामप्रदोषो जन्यते किमथान्यैरपीत्यत आह—न खल्वित्यादि। आमप्रदोषेति आममभ्यवहृतमपक्वं तेन कृतः प्रदोष इत्यामप्रदोषः। तदप्याममेवान्नपानं कर्त्तृ प्रदूषयतीति, अनेनाति-मात्राहारं विनापि मात्रावदाहारजातमपि गुरुरूक्षादिरूपं वा कामक्रोधाद्युप-तप्तमनसा वोपयुक्तं पथ्यमपि न जीर्णं भूत्वा आममेव सत् प्रदूषयति देहमित्या-ख्यातम् ॥ ६ ॥

विकाराणामिति करणे सौहित्ययोगात् षष्ठी। द्रवैस्तृप्तिं 'भूयः'पदविशेषणात् अतितृप्तिम् इत्यर्थः। आमाशयगता इत्यनेन अग्निसहायसमानस्यैव वायोः कोपो भवति, न पक्वाशयगतस्य इति दर्शयति। कुक्ष्येकदेशमन्नाश्रिताः सह दूषितेनाहारेणेत्यर्थः ॥ ४।५ ॥

चक्रपाणिः—अतिमात्राशनजन्यत्वेनामप्रदोषे वक्तव्ये अन्यतश्च यत आमप्रदोषो भवति तमाह—न खल्वित्यादि। कामादिभिर्मनस उपघातः प्रभावादेवान्नं दूषयति। एवमशुच्यप्यन्नम् अशुचित्वेन ज्ञातं मनस उपघातकत्वादामदूषकं भवति। आमस्यापक्वस्याहारस्य प्रदोषः आम-

* इतः परं द्विष्टेति चक्रः पठति।

भवति चात्र ।

मात्रयाप्यभ्यवहृतं पथ्यञ्चान्नं न जीर्य्यति ।
चिन्ताशोकभयक्रोध-दुःखमोहप्रजागरैः ॥ ७ ॥

तं द्विविधमामप्रदोषमाचक्षते भिषजो विसूचिकामलसकञ्च । तत्र विसूचिकामूर्द्ध्वञ्चाधश्च प्रवृत्तामदोषां यथोक्तरूपां विद्यात् । अलसकमुपदेक्ष्यामः । दुर्ब्बलस्याल्पाग्नेर्बहुश्लेष्मणो वातमूत्र-पुरीषवेगविधारिणः स्थिरगुरुबहुरूक्षशीतशुष्कान्नसेविनः तदन्न-पानमनिलप्रपीड़ितं श्लेष्मणा च विबद्धमार्गमतिमात्र-प्रलीनम् अलसत्वान्न वहिर्म्मुखि भवति । ततश्छर्द्यतीसार-

गङ्गाधरः—तदेवार्थं श्लोकेनाह—भवति चात्रेत्यादि । मात्रयापीत्यपि-शब्दादमात्रया वा । पथ्यञ्चेति चकारेणापथ्यम् । तेनातिमात्रयाभ्यवहृतं पथ्यं न जीर्य्यति मात्रया चाभ्यवहृतमपथ्यमुक्तगुरुरुक्षादिकं न जीर्य्यति, पथ्यमप्यन्नमभ्यवहृतं चिन्ताशोकादिभिर्न जीर्य्यति । तमतिमात्राहारजं मात्रया च गुरुरूक्षाद्याहारजं चिन्तादिभिरजीर्णीभूतपथ्यान्नजञ्च ॥ ७ ॥

गङ्गाधरः—तं द्विविधमित्यादि । तमामप्रदोषम् । प्रवृत्त आममन्नं दोषो यत्र तां तथा । यथोक्तरूपां तत्र वातः शूलानाहाङ्गमर्द्देत्यादिभिरुक्तत्रिदोष-लिङ्गां विसूचिकां वायुना सूचीभिरिव तोदवती भवतीति विसूचिकासंज्ञां विद्यात् । सुश्रुते हि विसूचिकासंज्ञार्थ उक्तः—सूचीभिरिव गात्राणि तुदन् सन्तिष्ठतेऽनिलः । यस्याजीर्णेन सा वैद्यैर्विसूचीति निगद्यते ॥ इति । तदन्नपानं स्थिरगुर्व्वादिकमन्नपानम् अनिलप्रपीड़ितं विबद्धौ मार्गौ यस्य तत् तथा श्लेष्मणा बद्धमार्गत्वात् । अतिमात्रमलीनत्वाच्चालसत्वं तस्माच्च न वहिर्म्मुखि

प्रदोषः, आममेव प्रदूषयतीति अत्र कर्म्मकर्त्तृत्वे 'अच्' तेन दुष्टं भवतीत्यर्थः । किंवा, आमम् अपक्वं सद् दुष्टं दोषसम्पर्कात् शरीरं दूषयतीति ज्ञेयम् ॥ ६।७ ॥

चक्रपाणिः—द्विविधमित्यादौ अलसक एव दण्डालसकामविषयोरवरोधः । तयोरपि हि दोषो विबद्धमार्गत्वादलसीभूतो भवति "अलसकमुपदेक्ष्यामः" इत्यादिना पुनर्विशेषहेतुः प्रायोऽभि-निर्व्वर्त्तक उच्यते, सामान्येन त्वतिमात्राहाररूप उक्त एवेति ज्ञेयम् । अनिलप्रपीड़ितं श्लेष्मणा च विबद्धमार्गमिति दोषद्वयव्यापारवचनात् वातश्लेष्मणोरलसके प्राधान्यमुच्यते, पित्तन्तु सामान्य-

वर्ज्जान्यामप्रदोषलिङ्गानि * अभिसंदर्शयत्यतिमात्राणि। अतिमात्रप्रदुष्टाश्च दोषाः प्रदुष्टामबद्धमार्गास्तिर्य्यग् गच्छन्तः कदाचिदेव केवलमस्य शरीरं दण्डवत् स्तम्भयन्ति, अतस्तमलसकमसाध्यं ब्रुवते। विरुद्धाध्यशनाजीर्णाशनशीलिनः पुनरेवं दोषम्

ऊर्द्धमधो वा मार्गं न प्रवर्त्तते। इत्यतोऽलसकसंज्ञा। उक्तं ह्यन्यत्र—पीड़ितं मारुतेनान्नं श्लेष्मणा रुद्धमन्तरा। अलसं क्षोभितं दोषैः शल्यत्वेनैव संस्थितम्। शूलादीन् कुरुते तीव्रान् छर्द्दतीसारवर्ज्जितानिति। तन्त्रान्तरेऽपि—प्रयाति नोर्द्धं नाधस्तान्नाहारोऽपि विपच्यते। आमाशयेऽलसीभूतस्तेन सोऽलसकः स्मृतः, इति। अलसकलक्षणान्याह—तत्र इत्यादि। तत्र वातः शूलानाहाङ्गमर्देत्यादिनोक्तामप्रदोषलिङ्गानि तत्र कफलिङ्गं छर्द्दिं पित्तलिङ्गमतीसारं बर्ज्जयित्वा शेषाणि लिङ्गानि विमृच्यपेक्षयाऽतिमात्राणि दर्शयत्यलसकः। सुश्रुतेऽप्युक्तं—कुक्षिरानह्यतेऽत्यर्थं प्रताम्यति च कूजति। निरुद्धो मारुतश्चैव कुक्षावुपरि धावति। वातवर्चोनिरोधश्च यस्यात्यर्थं भवेदपि। तस्यालसकमाचष्टे हिक्कोद्गारौ च यस्य तु॥ इत्यलसकमुक्त्वा अलसकात् तीव्रशूलादिमत्त्वात् भेदमादायालसकतुल्यलक्षणामतीव्रशूलादिमत्त्वात् विलम्बिकापि अतिरिक्तैवोक्ता। तद् यथा—दुष्टन्तु भुक्तं कफमारुताभ्यां प्रवर्त्तते नोर्द्धमधश्च यस्य। विलम्बिकां तां भृशदुश्चिकित्स्यामाचक्षते शास्त्रविदः पुराणाः। यत्रस्थमामं विरुजेत् तमेव देशं विशेषेण विकारजातैः। दोषेण येनावततं शरीरं तल्लक्षणैरामसमुद्भवैश्च॥ इति। तन्त्रे तस्मिन् शूलादीनां तीव्रत्वातीव्रत्वयोर्दोषबलापेक्षत्वान्न ताभ्यां व्याध्यन्तरं विलम्बिकेति मनसि कृत्वा नोक्ता विलम्बिका। सा चालसकस्यैव नामान्तरमिति बोध्यम्।

अथालसकस्यासाध्यत्वमाह—अतिमात्रेत्यादि। केवलं कृत्स्नम्। अपरम् असाध्यत्वमाह—विरुद्धाध्यशनेत्यादि। एवं दोषमतिप्रदुष्टमदुष्टामविबद्धमार्ग-

वचनसिद्धमप्रधानम्‌ अस्त्येव तृष्णामदभ्रमादिलिङ्गमिति ज्ञेयम्। प्रदुष्टामबद्धमार्गा इत्यत्रापक्काहारोऽन्नरसो वा अपक्व आम उच्यते। केवलं कृत्स्नम्। विरुद्धाध्यशनाजीर्णाशनमिति—विरुद्धाशनम्, अध्यशनम्, अजीर्णाशनञ्च, अजीर्णस्यापक्वस्याशनमजीर्णाशनम्, अजीर्णे भोजनस्याध्यशनशब्देन

* यथोक्तानीत्यधिकः पाठः क्वचित्।

आमविषमित्याचक्षते भिषजो विषसदृशलिङ्गत्वात् । तत् परम् असाध्यमाशुकारित्वात् विरुद्धोपक्रमत्वाच्चेति ॥ ८ ॥

तत्र साध्यमामं प्रदुष्टमलसीभूतमुल्लेखयेदादौ पाययित्वा सलवणमुष्णं वारि । ततश्छेदन-*-वर्त्तिप्रणिधानाभ्यामुपाचरेत् उपवासयेच्चैनम् ॥ ९ ॥

विसूचिकायान्तु लङ्घनमेवाग्रे विरिक्तवच्चानुपूर्व्वी । आम-

तिर्य्यग्गतकृत्स्नदेहदण्डवत्स्तम्भकरदोषमलसकमामविषमाचक्षते ; विषसदृशमारकलिङ्गत्वादित्यर्थः । एषोऽन्नविषाख्य आमप्रदोषोऽलसकस्यैव प्रभेदो न त्वतिरिक्तः । तस्मादेव तत्तथाविधमलसकं परमुत्कृष्टमसाध्यमाशुकारित्वादाशुकारित्वं व्याधिस्वभावात् । विरुद्धोपक्रमत्वाच्च विरुद्धोपक्रमत्वमतिप्रदुष्टदोषाणां तिर्य्यग्गतत्वात् । सुश्रुते त्वसाध्यलक्षणान्तरमुक्तं—यः श्यावदन्तौष्ठनखोऽल्पसंज्ञो वम्यर्द्दितोऽभ्यन्तरयातनेत्रः । क्षामस्वरः सर्व्वविमुक्तसन्धिर्यायान्नरः सोऽपुनरागमाय । इति ॥ ८ ॥

गङ्गाधरः—तयोः क्रियासूत्राण्याह—तत्रेत्यादि । उल्लेखयेत् वामयेत् । ततो लवणोष्णोदकेन वमनानन्तरं छेदनं श्लेष्मच्छेदनीयरसकट्वादिना श्लेष्मच्छेदनं वर्त्तिरुदावर्त्तोक्तफलवर्त्तिस्तत्प्रणिधानं गुदे प्रवेशनं पूर्व्वमाभ्यां दोषनिर्हरणं कृत्वा तत उपवासयेच्च । एनमलसिनम् ॥ ९ ॥

गङ्गाधरः—विसूचिकायामित्यादि । लङ्घनमेवाग्रे ततो विरिक्तवदानुपूर्व्वी, तद् यथा विसूच्यान्तु लङ्घनमग्रे ततः परं विरेचनं ततः सायाह्ने परे वाह्नि सुखोदकपरिषेकं बुद्धा दोषगतिमातुरस्य विधाय पुराणानां लोहितशालितण्डुलानां

लब्धत्वात् । आमदोषमामविषमाचक्षत इत्यत्र विषसदृशलिङ्ग एवामदोषोऽभिप्रेतः । अत एव 'विषसदृशलिङ्गत्वात्' इत्युक्तम् । विरुद्धोपक्रमत्वादिति आमापेक्षया यदुष्णं क्रियते तद्विषविरुद्धम्, यच्च विषापेक्षया शीतं क्रियते तदामविरुद्धम् । विषसदृशता चामस्यामजननहेतुप्रभावाद् भवति मधुघृतयोग इव विषत्वम् । वर्त्तिः इति फलवर्त्तिः ॥ ८।९ ॥

चक्रपाणिः—आनुपूर्व्वीति पेयादिक्रम इत्यर्थः । जीर्णाहारमिति विसूचिकालसकयोरिव

* स्वेदनेति चक्रः ।

प्रदोषेषु त्वन्नकाले जीर्णाहारं पुनर्दोषावलिप्तामाशयं स्तिमितगुरुकोष्ठम् अनन्नाभिलाषिणमभिसमीक्ष्य पाययेद् दोषशेषपाचनार्थमौषधम् अग्निसन्धुक्षणार्थञ्च। न त्वेवाजीर्णाशनम्। आमप्रदोषदुर्ब्बलो ह्यग्निर्न युगपद्दोषमौषधमाहारजातञ्च शक्तः पक्तुम्। अपि च आमप्रदोषाहारौषधविभ्रमोऽतिबलत्वादुपरतकायाग्निं

स्ववक्लिन्नां मण्डपूर्व्वां सुखोष्णां यवागूं पाययेदग्निबलमभिसमीक्ष्य चैवं द्वितीये तृतीये चान्नकाले। चतुर्थे चान्नकाले तथाविधानामेव शालितण्डुलानाम् उत्स्विन्नां विलेपीमुष्णोदकद्वितीयामस्नेहलवणामल्पस्नेहलवणां वा भोजयेत्। एवं पञ्चमे षष्ठे चान्नकाले। सप्तमे त्वन्नकाले तथाविधानामेव शालितण्डुलानाम् द्विःप्रसृतं सुस्विन्नमोदनम् उष्णोदकानुपानं तनुना तनुस्नेहलवणोपपन्नेन मुद्गयूषेण भोजयेत्। एवमष्टमे नवमे चान्नकाले। दशमे त्वन्नकाले लावकपिञ्जलादीनाम् अन्यतममांसरसेनोदकलावणिकेनातिसारवता भोजयेदुष्णोदकानुपानम् एवमेकादशे द्वादशे चान्नकाले। अत ऊर्द्ध्वमन्नगुणान् क्रमेणोपयुञ्जानं सप्तरात्रेण प्रकृतिभोजनमागच्छेदिति। अत्रान्तरे पुनरामप्रदोषेषु सत्सु द्वितीयाद्यन्नकाले जीर्णाहारं विसूचिकार्त्तं पुरुषं दोषावलिप्तामाशयं स्तिमितगुरुकोष्ठमन्नाभिलाषरहितमभिसमीक्ष्य शेषदोषपाचनार्थमग्निसन्धुक्षणार्थञ्चौषधं पाययेत्। न तु अजीर्णाशनम् अजीर्णाहारम्। ननु कस्मादन्नकाले जीर्णाहारमेवं तं तादृशार्थम् औषधं पाययेदित्यत आह—आमप्रदोषदुर्ब्बल इत्यादि। अजीर्णे पूर्व्वाहारे सति यदि दोषशेषपाचनार्थमग्निसन्धुक्षणार्थञ्चौषधं पायितं भवति, तदा तं दोषशेषं तच्चौषधं तदेवाजीर्णीभूतमाहारजातञ्च युगपदेव पक्तुं न शक्तः स्यादामप्रदोषदुर्ब्बलाग्निस्तस्मादन्नकाले जीर्णाहारमेवौषधं पाययेत्। तदा हि शेषदोषं तत्पाचनार्थमग्निसन्धुक्षणार्थञ्चौषधं पक्तुं शक्तः स्याद् दुर्ब्बलोऽप्यग्निः। अजीर्णाहारे तु दोषशेषे च पीते च तदौषधे किं स्यादित्यत आह—अपि च

आहारस्याजीर्णतां दर्शयति। दोषावलिप्तामाशयस्य स्तिमितकोष्ठत्वादि पुरुषविशेषणमपि लक्षणं ज्ञेयम्। न त्वजीर्णाशनमिति पुनर्निषेधकरणेनाजीर्णाशनेन प्रमादादजीर्णप्रशमनाभिप्रायेण क्रियमाणभेषजस्य महात्ययतां "दुर्ब्बलो ह्यग्निः" इत्यादिना वक्ष्यमाणां दर्शयति। कृतापतर्पणानामित्यनेन दोषाणामामताक्षयं सूचयति। सम्यक्कृते ह्यपतर्पणे न आमानुबन्धोऽस्ति। ततश्च निरामदोषारब्धे

सहसैवातुरमबलमतिपातयेत्। आमप्रदोषजानां पुनर्विकाराणाम् अपतर्पणेनैवोपरमो भवति। सति त्वनुबन्धे कृतापतर्पणानां व्याधीनां निग्रहे निमित्तविपरीतमपास्यौषधमातङ्कविपरीत-मेवावचारयेद् यथास्वम्। सर्व्वविकाराणामपि च निग्रहे हेतु-व्याधिविपरीतमहौषधमिच्छन्ति कुशलास्तदर्थकारि वा। अनुद्रिक्तामप्रदोषस्य * पुनः परिपक्वदोषस्य दीप्ते चाग्नौ अभ्यञ्जनास्थापनानुवासनं विधिवत् स्नेहपानञ्च युक्त्या प्रयोज्यं

आमेत्यादि। आमप्रदोषस्याजीर्णाहारस्य तत्कालपीतौषधस्य च परस्परं मेलनेनावर्त्तनं विभ्रमः अतिबलत्वात् प्रबलत्वात् तेन च विभ्रमेणोपरतकायाग्निम् अबलञ्चातुरं सहसैवातिपातयेत्।

नन्वन्नकाले जीर्णाहारं दोषावलिप्तामाशयं पुरुषं न भोजयित्वा दोषशेषपाचनार्थमग्निसन्धुक्षणार्थञ्चौषधपाने तस्याभोजनेन देहक्षयः स्यादित्यत आह—आमप्रदोषजानामित्यादि। नन्वामदोषशालिनं सम्यग् लङ्घितं दोषावलिप्तामाशयं दोषशेषपाचनार्थमग्निसन्धुक्षणार्थञ्चौषधं पाययित्वा दोष-शेषे पक्वे सन्धुक्षिते चाग्नौ पुनश्चेत् तदामप्रदोषानुबन्धस्तिष्ठति तदा किमौषधं पाययेदित्यत आह—सति त्वित्यादि। अनुबन्धेऽर्थादामदोषस्यावशेषे सति कृतापतर्पणानां सम्यग् लङ्घितानां पुंसां व्याधिनिग्रहे व्याधिप्रशमने निमित्तविपरीतमतिमात्राहारविपरीतं तत्कुपितदोषविपरीतञ्चौषधमपास्य त्यक्त्वार्थान्न दत्त्वा यथास्वमातङ्कविपरीतं शूलाङ्गमर्दादिवातजाद्यातङ्कविपरीत-मेवौषधमवचारयेत् भक्षयेत्। प्राङ् नातिसञ्चितो हि तत्रासञ्चितो वा वातादि-दोषः।

ननु किमस्मिन्नेव विसूचिकारोगे एवमौषधं किमन्यस्मिन् सर्व्व-विकारे वेत्यत आह—सर्व्वेत्यादि। सर्व्वविकाराणामपि चेति प्रागेव दोष-सञ्चयात् जातानां दोषजानां व्याधीनाम्। तदर्थकारि वेति हेतुव्याधि-

विसूचिकालसकव्यवस्थितशूलज्वरादौ आतङ्कविपरीतं निरामशूलज्वरहरमेव युज्यते। यथास्वमिति यद् यस्य शूलादेरातङ्कविपरीतं तत् तत्र कार्य्यमित्यर्थः। आतङ्कविपरीतशब्देन च 'तदर्थकारि' गृहीतं मन्तव्यम्। अत एवोत्तरत्र "तदर्थकारि वा" इति सर्व्वविकारभेषजकथने उपपन्नं भवति।

* विमुक्तामप्रदोषस्येति पाठान्तरम्।

प्रसमीक्ष्य दोषदेशभेषजकालबलशरीराहारसात्म्यसत्त्वप्रकृति-वयसामवस्थान्तराणि विकारांश्च सम्यगिति ॥ १० ॥

भवति चात्र।

अशितं खादितं पीतं लीढञ्च क्व विपच्यते।
एतत् त्वां धीर पृच्छामस्तन्न आचक्ष्व बुद्धिमन् ॥
इत्यग्निवेशप्रमुखैः शिष्यैः पृष्टः पुनर्व्वसुः।
आचचक्षे ततस्तेभ्यो यत्राहारो विपच्यते ॥
नाभिस्तनान्तरं जन्तोरामाशय इति स्मृतः।
अशितं खादितं पीतं लीढञ्चात्र प्रपच्यते ॥
आमाशयगतः पाकमाहारः प्राप्य केवलम्।
पक्वः सर्व्वाशयं * पश्चाद् धमनीभिः प्रपद्यते ॥ ११ ॥

विपरीतार्थकारि वा औषधम्। अनुद्रिक्तामदोषस्याप्रबलामदोषस्य परिपक्वदोषस्य पक्वतावस्थायाम् ॥ १० ॥

गङ्गाधरः—अथामदोषप्रतिक्रियार्थं क्रियाक्रममुक्त्वाहारस्य पाकस्थानमाह—भवतीत्यादि। क्व कस्मिन् शारीरस्थाने, हे धीर पुनर्व्वसो गुरो, नोऽस्मान्। इतीत्यादि। इति अशितादिचतुर्व्विधाहारपाकस्थानम्, तेभ्यः शिष्येभ्यः। किम् आचचक्षे तदाह—नाभीत्यादि। अत्रामाशयेऽशितमित्यादिकं प्रपच्यते जाठराग्निना पक्तुमारभ्यते। ननु कथं तत्र विपच्यते इत्यत आह—आमाशयगत इत्यादि। आमाशयगत आहारः पाकं प्राप्य पक्तुमारब्धः सन् पश्चात् पच्यमानाशये केवलं कृत्स्नं परिसमाप्तं पाकं प्राप्य पश्चात् पक्वः किट्टमूत्रपुरीषयोः पृथग्भावेन पक्वाशये गमनात् पृथग् भूत्वा सारभूतो रसाख्यो द्रवरूपः सन् रसादिवाहिनीभिः धमनीभिः स्रोतोभिः पश्चात् सर्व्वाशयं रसरक्तादिधात्वाशयं प्रपद्यते ॥ ११ ॥

अन्यथा कथमिहानभिहितं 'तदर्थकारि' तत्राप्रस्तुतम् उच्यते। विमुक्तामदोषस्येत्यादिनाभ्यङ्गादिविधानं व्याधिजन्यातिदौर्ब्बल्यादिदोषप्रशमनार्थम् ॥ १० ॥

चक्रपाणिः—आमाशयप्रमाणोपदर्शनार्थञ्च पृच्छोत्तरग्रन्थमाह—अशितमित्यादि। सर्व्वाशयम्

* सर्व्वाश्रयमिति चक्रः पठति।

तत्र श्लोकौ ।

तस्य मात्रावतो लिङ्गं फलञ्चोक्तं यथायथम् ।
अमात्रस्य तथा लिङ्गं फलञ्चोक्तं विभागशः ॥
आहारविध्यायतनानि चाष्टौ सम्यक् परीक्ष्यात्महितं विदध्यात् ।
अन्यश्च यः कश्चिदिहास्ति मार्गो हितोपयोगेषु भजेत तञ्च ॥ १२

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते विमानस्थाने त्रिविध-
कुक्षीयविमानं नाम द्वितीयोऽध्यायः ॥ २ ॥

गङ्गाधरः—अध्यायार्थमाह—तस्येत्यादि । तस्येत्याहारस्य त्रिविधं कुक्षावित्यादिना कुक्षेरप्रपीड़नमाहारेणेत्यादिना च मात्रावत आहारस्य लिङ्गं तस्य च फलञ्च एतावतीम् आहारमात्रेत्यादिना उक्तम् । अमात्रस्य हीनमात्रस्यातिमात्रस्य च अमात्रावत्त्वमित्यादिना चिह्नं फलञ्चोक्तम् । विभागश इति । तत्रापि तत्र हीनमात्रमाहारराशिमित्यादिना फलरूपं लिङ्गं हीनमात्रस्याहारस्योक्तम् । अतिमात्रं पुनरित्यादिनातिमात्रस्याहारस्य प्रागभिहितं लिङ्गं फलञ्चेति विभागं विभागं कृत्वोक्तमिति । अध्यायार्थसंग्रहश्लोक एकः । प्रकृत्यादीनाम् अन्यश्च य इत्यनुक्तो यदि कश्चिद्धितोपयोगे मार्गो वर्त्तते तमपि मार्गं भजेतेति आहारविधिविशेषाणामुपसंहारः ॥ १२ ॥

अध्यायं समापयति—अग्नीत्यादि ।

इति श्रीगङ्गाधरकविरत्नकविराजविरचिते चरकजल्पकल्पतरौ तृतीय-
स्कन्धे विमानस्थानजल्पे त्रिविधकुक्षीयविमाननाम-
द्वितीयाध्यायजल्पाख्या द्वितीया शाखा ॥ २ ॥

इति सर्वशरीरम् । अनुक्तविध्युपग्रहार्थमाह—अन्यश्चेत्यादि । अन्यश्चेति, ग्रहण्यतिसारादिवक्ष्यमाणामदोषक्षयकरो भेषजरूपो मार्ग इहामप्रदोषे हित इति सम्बन्धः ॥ ११।१२ ॥

इति चरकचतुरानन-श्रीमच्चक्रपाणिदत्तविरचितायाम् आयुर्वेददीपिकायां विमानस्थान-
व्याख्यायां त्रिविधकुक्षीयविमानं नाम द्वितीयोऽध्यायः ॥ २ ॥

## तृतीयोऽध्यायः ।

अथातो जनपदोद्ध्वंसनीयं विमानं व्याख्यास्यामः,
इतिह स्माह भगवानात्रेयः ॥ १ ॥

जनपदमण्डले पञ्चालक्षेत्रे द्विजातिवराध्युषिते काम्पिल्य-राजधान्यां भगवान् पुनर्व्वसुरात्रेयोऽन्तेवासिगणपरिवृतः पश्चिमे घर्म्ममासे गङ्गातीरे वनविचारमनुविचरन् शिष्यमग्निवेशम् अब्रवीत् । दृश्यन्ते हि खलु सौम्य नक्षत्रग्रहगणचन्द्रसूर्य्या-निलानलानां दिशाञ्च प्रकृतिभूतानाम् * ऋतुवैकारिका भावाः ।

गङ्गाधरः—अथ विभिन्नप्रकृत्यादीनां विभिन्नरूपव्याधीनां क्रियाविधानार्थं रसविमानत्रिविधकुक्षीयविमाने उक्त्वा विभिन्नप्रकृत्यादीनां जनपदानामुद्-ध्वंसकराणामेकविधविकाराणां क्रियाविधानार्थं तेषाञ्च दोषभेषजादिमान-विज्ञानाय जनपदोद्ध्वंसनीयं विमानमाह—अथात इत्यादि। जनपदानां जनसमूहानामुद्ध्वंसनमधिकृत्य कृतं विमानं तं तथा। विमीयतेऽनेनेति विमानम्। रसादीनां मानज्ञानहेतुरिति तत्तद्विमानमरत्यस्मिन्नध्याये इत्य-ध्यायार्थे छस्य लुक् अध्यायानुवाकयोरिति ॥ १ ॥

गङ्गाधरः—जनपदेत्यादि। अन्तेवासिगणैः शिष्यगणैः परिवृतः। पश्चिमे घर्म्ममासे ग्रीष्मर्त्तुशेषमासे आषाढ़े, वनविचारं वनविहारं विचरन् विहरन्। किमब्रवीदित्यत आह—दृश्यन्ते हीत्यादि। सौम्य हे वत्स हि यस्मात् नक्षत्रादीनामृतुवैकारिका भावास्तत्तद्ग्रीष्मर्त्तुलक्षणविपरीतलक्षणसूचका भावा

चक्रपाणिः—द्विविधो हेतुर्व्याधिजनकः प्राणिनां भवति साधारणोऽसाधारणश्च । तत्र साधारणं प्रतिपुरुषनियतं वातादिजननमाहाराद्यभिधाय बहुजनसाधारणवातजलदेशकालरूपमसाधारणरोग-कारणमभिधातुं जनपदोद्ध्वंसनीयोऽभिधीयते ॥ १ ॥

चक्रपाणिः—जनपदोपलक्षितं मण्डलं जनपदमण्डलं, पञ्चालक्षेत्र इति तस्य विशेषणम्। द्विजातिभिरध्युषित इति वचनेन महाजनसेवितेऽपि देशे अधर्म्मवशाज्जनपदोद्ध्वंसो वक्ष्यमाणो भवतीति दर्शयति। पश्चिमे घर्म्ममास इति ज्यैष्ठे। वनविचारमनुविचरन्निति वनं विचर्य्य विचर्य्यानु-

* अप्रकृतिभूतानामिति चक्रः ।

अचिरादितो भूरपि न यथावद्रसवीर्य्यविपाकप्रभावमोषधीनां प्रतिविधास्यति, तद्वियोगाच्चातङ्कप्रायता नियता। तस्मात् प्रागुद्ध्वंसात् प्राक् च भूमेर्विरसीभावादुद्धर * सौम्य भैषज्यानि यावन्नोपहतरसवीर्य्यविपाकप्रभावाणि भवन्ति। वयञ्चैषां

अत्र ग्राह्यास्ते दृश्यन्ते। अचिरात् क्षिप्रमितो नक्षत्रादीनामृतुविकारकरभावाद् हेतोरियं भूरपीदं भूखण्डं तद्दोषदूषिता सती यथावद्रसवीर्य्यविपाकप्रभावं निधास्यति चकारात् तेन च भूरियं ओषधीनां तद्भूम्यां जातानां रसवीर्य्यादिकं यथावत् यस्या ओषधेर्यद्यद्रसादिकं प्रसिद्धं तत् तथाविधं न प्रतिविधास्यति न स्वानुरूपेण विधास्यति। ननु ततः किं स्यादित्यत आह—तद्वियोगाच्चेत्यादि। तेषाम् ओषधीनां स्वाभाविकरसादीनामोषधिषु वियोगाच्च यस्मादातङ्कप्रायता रोगबहुलता नियता अवधारिता, तस्मात नक्षत्रादीनामृतुवैकारिकभावैर्भूमेर्विरसीभावित्वे नौषधीनां यथावद्रसादेः स्वानुरूपेण विधानाभावेनातङ्कबहुलता भावितावधारणात्। प्रागुद्ध्वंसात् जनपदानामुद्ध्वंसात् पूर्व्वं भूमेश्च विरसीभावात् पूर्व्वञ्च भैषज्यानि उद्धर हे सौम्याग्निवेश। ननु कस्माद् भूमेर्विरसीभावात् पूर्व्वमित्यत आह—यावन्नोपेत्यादि। भैषज्यानि भूमेरुत्पत्त्याकरस्य विरसीभावादुपहतरसादीनि भवन्ति ततो यावन्नोपहतरसादीनि तावान् कालस्तु भूमेर्विरसीभावात् पूर्व्वकाल इति भावः। नन्वस्माकं किं प्रयोजनमोषधीनामुद्धरणमित्यत आह—

विचरन्तीत्यर्थः। ऋतुविकाराय भूता ऋतुवैकारिकाः। ऋतुविकारश्चोपलक्षणम्। तेन जनपददेशवातविकाराय भूता इति मन्तव्यम्। यतो भूम्यादीनामपि विकृतिं वक्ष्यति। किंवा, ऋत्वननुरूपा ऋतुवैकारिकाः। तेन ऋत्वननुरूपलक्षणमेव नक्षत्रादीनां विकृतिरित्युक्त भवति ;—ग्रीष्मे हि नक्षत्राणि निर्म्मलानि भवन्ति, तानि यदि तु तुषारच्छन्नानि ग्रीष्मे भवन्ति, तदा विकृतानि भवन्तीति मन्तव्यम्। भूरपि चेति 'अपि' वचनात् जलानिलौ च ग्राहयन्ति। तेन भूस्तावदोषधीनां प्रधानकारणम्, सा रसादीन् न प्रतिविधास्यति, जलवातावपि चौषधीनां रसादीन् न प्रतिविधास्यत इति वचनं भवति। प्रतिविधास्यतीति जनयिष्यति। उद्धरध्वमिति बहुवचनं बहून्तेवासियुक्ताग्निवेशाभिप्रायेण। अग्निवेशस्तु प्रधानत्वेनैक एव हि, 'अग्निवेश' इतिपदेन तथा 'सौम्य' इतिपदेन सम्बोध्यते। भेषजोद्धरणन्तु बहुभिरेव कर्त्तव्यमित्यभिप्रायेण बहुवचनम्। भवति हि प्रधानं सम्बोध्य गणसम्पाद्यक्रियायां बहुवचनम्। यथा—पत्ते!

* उद्धरध्वमिति चक्रः

रसवीर्य्यविपाकप्रभावानुपयोक्ष्यामहे। ये चास्माननुकाङ्क्षन्ति यांश्च वयमनुकाङ्क्षामः। न हि सम्यगुद्धृतेषु सौम्य भैषज्येषु सम्यग्विहितेषु सम्यक् चावचारितेषु जनपदोद्ध्वंसकराणां विकाराणां किञ्चित् प्रतीकारगौरवं भवति॥ २॥

एवंवादिनं भगवन्तमात्रेयमग्निवेश उवाच। उद्धृतानि खलु भगवन् भैषज्यानि सम्यग् विहितानि च सम्यगवचारितानि च।

वयञ्चैषामित्यादि। एषामत ऊर्द्ध्वं वक्ष्यमाणपुरुषाणाम्। के च ते पुरुषा इत्यत आह—ये चेत्यादि। ये च पुरुषा अस्मान् अनुकाङ्क्षन्ति अन्विच्छन्ति यांश्च पुरुषान् वयं अनुकाङ्क्षामोऽन्विच्छामः। तेषां पुरुषाणां रसादीनुपयोक्ष्यामहे। इति प्रजाहितैषित्वमात्रमात्मनः ख्यापितम्। नन्वेवमस्तु व्याध्युत्पत्तौ सत्यां प्रतिकारस्तेषां विधास्यतेऽस्माभिः, कस्मादधुना ओषधीनामुद्धरणं कार्य्यमित्यत आह—न हीत्यादि। हि यस्मात् सम्यक् भूमेर्विरसीभावात् यथाविधि चौषधिषूद्धारितासु सतीषु सम्यक् च जनपदोद्ध्वंसकररोगोत्पत्तेः पूर्व्वं सत्याश्चोत्पत्तौ तथाविधरसादिमत्सु भैषज्येषु विहितेषु सम्यक् चावचारितेषु आहारविधिना भक्षितेषु जनपदोद्ध्वंसकराणामेकविधानां विकाराणां ज्वरातीसारादीनां प्रतीकारगौरवं प्रतीकारभेषजबाहुल्योपयोगकर्त्तव्यता न भवति, स्वल्पेन प्रतीकारेण तेषां प्रशमो भविष्यतीति भावः॥ २॥

गङ्गाधरः—एवंवादिनमित्यादि। उद्धृतानीत्यादिनाग्निवेशेनात्मनस्तद्बोधः

युष्यध्वमिति। अन्ये तु 'सौम्य'पदं भेषजविशेषणं कुर्व्वन्ति। ये चास्माननुकाङ्क्षन्ति ये चास्मान् भिषजोऽनुकाङ्क्षन्तीत्यर्थः। यांश्च वयमनुकाङ्क्षामश्चिकित्स्यत्वेन। एतेन, ये वैद्यप्रियत्वेन साध्याः। असाध्या हि वैद्यद्विष उक्ताः। वैद्याश्च यानिच्छन्ति, ते साध्यरोगा एव। असाध्यान् हि वैद्या नेच्छन्ति। एतेन, येऽन्येऽपि भेषजसाध्या रोगास्ते आसामोषधीनां रसादीनुपयुञ्जन्तीत्यर्थः। यदि, ये अस्मद्गताः, यांश्च वयं प्रयोजनवशादनुगताः, ते उपयोक्ष्यन्तीति व्याख्यायते, तदा आत्रेयस्य पक्षरागित्वेनाप्तत्वं न सम्भवतीति "सर्व्वत्र प्रजानां पितृवत् शरण्यः" इतिवचनाच्चास्य नीरागत्वमुक्तम्॥ २॥

चक्रपाणिः—उद्धृतानीति वचनममूते भूतवच्चेति प्रयोगाद्बोद्धव्यम्, यथा,—अभिरक्षन्ते

अपि च खलु जनपदोद्ध्वंसनमेकेनैव व्याधिना युगपदसमानप्रकृत्याहारदेहबलसात्म्यसत्त्ववयसां मनुष्याणां कस्माद् भवतीति ॥ ३ ॥

तमुवाच भगवानात्रेयः । एवमसामान्यवतामप्येभिरग्निवेश प्रकृत्यादिभिर्भावैर्मनुष्याणां येऽन्ये भावाः सामान्यास्तद्वैगुण्यात् समानकालाः समानलिङ्गाश्च व्याधयोऽभिनिर्वर्त्तमाना जनपदम् उद्ध्वंसयन्ति । ते तु खल्विमे भावाः सामान्या जनपदेषु भवन्ति, तद् यथा—वायुरुदकं देशः काल इति ॥ ४ ॥

तत्र वातमेवंविधमनारोग्यकरं विद्यात् । तद् यथा—ऋतु-विषममतिस्तिमितमतिचलमतिपरुषमतिशीतमत्युष्णमति-

ख्यापितः । अत्रास्माभिरिति शेषः । स्वगतं जनपदोध्वंसनविषये प्रश्नमाह—अपि चेत्यादि । अन्यच्चेत्यर्थः ॥ ३ ॥

गङ्गाधरः—तमित्यादि । तमित्यग्निवेशम् । एवमित्यादि । एवमुक्तप्रकारेण प्रकृत्याद्यसामान्यवतां विभिन्नप्रकृत्यादिकानामपि एभिरुक्तैः प्रकृत्यादिभिः प्रकृत्याहारदेहबलसात्म्यसत्त्ववयोभिर्भावैरन्ये ये सामान्या मनुष्याणां भावाः तद्वैगुण्यात् तेषां सामान्यानां भावानां वैगुण्यात् समानकालाः क्षणमुहूर्त्तसंवत्सरादिरूपकालेन समानकालाः प्रायेण युगपदनेकजनमरणात् । ननु के ते प्रकृत्यादिभिन्नाः सामान्यरूपा भावा इत्यत आह—ते त्वित्यादि । वायुरिति वहिश्चरो वायुर्न तु शारीरः ॥ ४ ॥

गङ्गाधरः—तद् यथेत्यादि । अतिस्तिमितमत्यार्द्रमिव लक्ष्यते अतिशीतं वा

'कृतम्' इति वदन्ति । न हि वचनकाल एव ओषधीनामुद्धरणं सम्भवतीति । एकेनेत्येकजातीयेन । असमानप्रकृत्यादीनां समानकारणत्वाभावाच्च तुल्यरूपो व्याधिर्भवितुमर्हतीति प्रश्नार्थः ॥ ३ ॥

चक्रपाणिः—समानलिङ्गा इति तुल्यलिङ्गाः । यथर्त्तु विषममिति ऋत्वननुरूपम् । अपगत-

रुक्षमत्यभिष्यन्दिनमतिभैरवारावमतिप्रतिहत-परस्पर-गतिमति-कुण्डलिनमसात्म्यगन्धवाष्पसिकतापांशुधूमोपहतमिति ॥ ५ ॥

उदकन्तु खल्वत्यर्थविकृतगन्धवर्णरसस्पर्शवत् क्लेदबहुलम् अपक्रान्त-जलचरविहङ्गमुपक्षीणजलाशयमप्रीतिकरमपगत-गुणं विद्यात् ॥ ६ ॥

देशं पुनः प्रकृतिविकृतवर्णगन्धरसस्पर्शं क्लेदबहुलमुपसृष्टं सरीसृप-व्याल-मशक-शलभ-मक्षिका-मूषिकोलूक-श्माशानिक-शकुनिजम्बूकादिभिः तृणोलुपोपवनवन्तं प्रतानादिबहुलम् अपूर्ववदवपतितशुष्कनष्टशस्यं धूम्रपवनञ्च प्रध्मातपतत्रिगणम् उत्क्रुष्टश्वगणमुद्भ्रान्तव्यथितविविधमृगपक्षिसङ्घम् उत्सृष्ट-

अत्युष्णं वेति विकल्प उन्नेयः, अत्यभिष्यन्दिनं वहिर्द्रवाभिस्रावणेन लक्ष्यम्, अतिभैरवारावं झञ्झारूपत्वात् सुतरां तस्मादेवातिशयेन प्रतिहता प्राणिनां परस्परं गतिर्येन तं तथा, असात्म्यमनुपशयितं गन्धादिकं सिकतादिकञ्च तैरुपहतम् ॥ ५ ॥

गङ्गाधरः—उदकन्त्वित्यादि। अपक्रान्ता जलचरादयो यस्मात् तत् तथा। उपक्षीणं प्रायेण शुष्कालपजलाशयम् अपगतगुणम् अनारोग्यकरम् ॥ ६ ॥

गङ्गाधरः—देशं पुनरित्यादि। प्रकृतितो विकृता वर्णगन्धादयो यत्र तं तथा, सरीसृपादिभिरुपसृष्टमुपसर्गीकृतम्, श्माशानिकशकुनिगृध्रादिः, आदिना कुक्कुरादिभिश्च। तृण दूर्व्वादिकम् उलूपं उलुकम् उलुय इति ख्यातम्। प्रतानं लतातः प्रभवलतासमूहः, आदिना तत्पर्णादिग्रहणं तैर्बहुलम्। अपूर्ववत् पूर्व्वं यथा नावपतितं न शुष्कं न नष्टशस्यं यत्र तत्र पश्चात् तथावपतितं रोपितं शुष्कञ्च नष्टञ्च शस्यं भवतीति भावः। धूम्रवर्णइव पवन उपलक्ष्यते यत्र तं, तथा। प्रध्मातं निरन्तरं शब्दितः पतत्रिगणो यत्र तं तथा। उत्क्रुष्ट उच्चैः शब्दं कुर्व्वन् श्वगणः

गुणमिति "जीवनं पिपासाहरम्" इत्याद्युक्तगुणरहितम्। विकृता वर्णादयो यस्य देशस्य तं विकृतवर्णगन्धरसस्पर्शम्, श्माशानिकशकुनिर्गृध्रः। अपूर्ववदिति परिचितमप्युपहतत्वेनापूर्व्वमिव

नष्टधर्म्म-सत्य-लज्जाचारशीलगुण-जनपदं शश्वत्क्षुभितोदीर्ण-सलिलाशयं प्रततोल्कापातनिर्घातभूमिकम्पञ्च प्रतिभयावार-रूपम् * रुक्षताम्रारुणसिताभ्रजालावृतार्कचन्द्रतारकमभीक्ष्णं सम्भ्रमोद्वेगमिव सत्रासरुदितमिव सतमस्कमिव गुह्यकाचरितम् इवाक्रन्दितशब्दबहुलञ्च अहितं विद्यात् ॥ ७ ॥

कालन्तु खलु यथर्त्तुलिङ्गाद्विपरीतलिङ्गमतिलिङ्गं हीन-लिङ्गञ्चाहितमेव व्यवस्येत् ॥ ८ ॥

इमानेवंदोषयुक्तान् चतुरो भावान् जनपदोद्ध्वंस-करान् वदन्ति कुशलाः । अतोऽन्यथाभूतांस्तु हितानाचक्षते । विगुणेष्वपि तु खलु जनपदोद्ध्वंसकरेषु भावेषु भेषजेनैवोप-पाद्यमानानामभयं भवति रोगेभ्यः । इति ॥ ९ ॥

कुक्कुरगणो यत्र तं तथा । उद्भ्रान्त ऊर्द्ध देशे भ्रमणशीलो व्यथितश्च विविध-मृगादिसंघो यत्र तं, तथा । उत्सृष्टाश्च नष्टाश्च धर्म्मसत्यलज्जाचारशीलगुणा येन तदुत्सृष्टनष्टधर्म्मसत्यलज्जाचारशीलगुणं तादृशं जनपदं यत्र तं, तथा । शश्वत् निरन्तरं वातादिभिः क्षुभितं तरङ्गबहुलमुदीर्णं जलाशयं यत्र तं, तथा । निर्घातो वज्रादिपातः । प्रतिभयं भयङ्करमप्यवारं रूपं मूर्त्तिर्यत्र तं, तथा । रुक्षैस्ताम्रैर्वाऽरुणैर्वा सितैर्वाऽभ्रजालैर्मेघजालैः संवृता अर्कचन्द्रतारका यत्र तं, तथा । अभीक्ष्णं सम्भ्रमेण त्वरया व्यग्रतया लोकानामुद्वेगो यत्र तमिव लक्ष्यते । सत्रासं रुदिता लोका यत्र तमिव लक्षितं, सतमस्कम् अन्धकारयुक्त-मिव गुह्यकैराचरितमिव आक्रन्दितशब्दैर्बहुलमिव च ॥ ७ ॥

गङ्गाधरः—कालन्त्वित्यादि स्पष्टम् । इमानित्यादि । इमान् वायूदकदेश-कालान् । एवमुक्तप्रकारेण वैगुण्ययुक्तान् अतोऽन्यथाभूतानिति ऋतुसमास्तिमित-मित्यादिरूपान् वायूदकदेशकालान् । ननु पूर्व्वमुक्तं प्रागुद्ध्वंसात् प्राक् च भूमे-र्विरसीभावादुद्धर सौम्य भैषज्यानीत्यादि । वाय्वादिवैगुण्येन भूमेर्विरसत्वात्

दृश्यते, उत्सृष्टाश्च नष्टाश्च धर्म्मसत्यलज्जागुणा जनैर्यत्र स तथा, यत्र ये धर्म्मादियुक्तास्ते उत्सृजन्ति

* प्रतिभयाचारेति वा पाठः ।

भवन्ति चात्र।

**वैगुण्यमुपपन्नानां देशकालानिलाम्भसाम्।**
**गरीयस्त्वं विशेषेण हेतुमत्सु प्रचक्षते॥**
**वाताज्जलं जलाद् देशं देशात् कालं स्वभावतः।**
**विद्यादपरिहार्य्यत्वाद्गरीयः पर-*-मार्थवित्॥**

तत्रोद्भूतौषधीनामपि अयथावद्रसादित्वेन कार्य्याकरत्वात् वातादिवैगुण्ये जाते किं कर्त्तव्यमित्याकाङ्क्षायामाह—विगुणेष्वपीत्यादि॥ ८।९॥

गङ्गाधरः—एतदेव वक्तुमाह—भवन्तीत्यादि। स्वभावत इति स्वाभाविकादपरिहार्य्यत्वात्। ननु देशादिषु चतुर्षु कुतः कस्य कस्माद् हेतोर्गरीयस्त्वमित्यत आह—वाताज्जलमित्यादि। वाताज्जलम् अपरिहार्य्यत्वात् गरीयो विद्यात्। वायुर्हि निवातगृहेऽवस्थानात् परिहार्य्यः, जलन्तु जीवनं पानाशनादिविधौ प्रायेणापेक्ष्यते, तस्माद्वायुरिव न परिहर्तुं शक्यते जलमिति भावः। जलाद्देशमपरिहार्य्यत्वाद्गरीयांसं विद्यात्। उदकन्तु पानाशनादिविधाववश्यापेक्ष्यं पानाशनादिकं हित्वा दुग्धादिकं त्रपुषनारिकेलोदकादिकञ्च पीत्वा जीवितुमर्हति यतस्तेन पुंसाप्युदकं परिहर्त्तुं शक्यं यथा न तथा देशः परिहर्त्तुं शक्यते वासार्थं देशस्यावश्यापेक्ष्यत्वात्। तस्मादुदकादपरिहार्य्यत्वाद्देशो गरीयान्। देशात् कालमपरिहार्य्यत्वात् गरीयांसं विद्यात्। देशो ह्युक्तरूपः प्रकृतिविकृतवर्णगन्धादिर्न सर्व्वदेशः सम्भवति तेन यो देशो न तथाविधस्तद्देशे विगुणदेशं विहाय वासः सम्भवति, कालस्तु ऋतुरूपः स्वलक्षणविपरीतः प्रायेण बहुदेशे भवतीति देश इव न परिहार्य्यस्तस्माद् देशादपरिहार्य्यत्वात् कालो गरीयान्। गरीय इति नपुंसकनिर्द्देशः प्रथमतो वाताज्जलमित्यस्य नपुंसकजलशब्दस्यान्वयानुरोधात्,

धर्म्मोर्द्दानि, सर्व्वथा अज्ञा न धर्म्मोर्द्दान्याचरन्ति, तान् प्रति नष्टान्येव धर्म्मोर्द्दानि। गुह्यकाक्रान्तो हि देशो यथा क्रन्दनशब्दबहुलो भवति, तादृशम्॥ ४—९॥

चक्रपाणिः—वैगुण्यमित्यादिना दुष्टानां वातादीनां यस्य यदुत्कर्षो येन हेतुना तदाह। स्वभावतो विद्याद्दुष्परिहार्य्यत्वादिति स्वभावादेव वातापेक्षया जलं दुष्परिहरं भवति, जलाच्च देशः, देशाच्च कालः। वातो हि निवातदेशसेवया दुष्टः परिह्रियते, न तथा जलम्, तद्धि देहवृत्त्यर्थमवश्यं सेव्यम्। जलमपि च यदि महता प्रयत्नेन परिहर्त्तुं युज्यते, देशस्तु जलापेक्षया दुष्परिहरो

* गरीयस्तरमिति पाठान्तरम्।

वाय्वादिषु यथोक्तानां दोषाणान्तु विशेषवित्।
प्रतिकारस्य सौकर्य्ये विद्याल्लाघवलक्षणम्॥
चतुर्ष्वपि तु दुष्टेषु कालान्तेषु यदा नराः।
भेषजेनोपपाद्यन्ते न भवन्त्यातुरास्तदा॥
येषां न मृत्युसामान्यं सामान्यं न च कर्म्मणाम्।
कर्म्म पञ्चविधं तेषां भेषजं परमुच्यते॥

पश्चाल्लिङ्गविपरिणामेनान्वेतव्यम्। नन्वेवंरूपेण वातादेरुत्तरोत्तरतो गौरववचनेन किं प्रयोजनमित्यत आह—वाय्वादिष्वित्यादि। प्रतिकारस्य सौकर्य्ये सुकरत्वे गुरुलाघवलक्षणं विद्यात्। हेतुलाघवलक्षणविद्धि सुकरतया प्रतिकर्त्तुं क्षमः स्यादिति भावः। कालान्तेषु वायूदकदेशकालेषु। ननु केन भेषजेनोपपाद्यन्ते इत्यत आह—येषामित्यादि। मृत्युसामान्यं मृत्युजनकदैवसाम्यम्। ननु मृत्युसामान्यं केन ज्ञायते इत्यत आह—सामान्यं न च कर्म्मणामिति। कर्म्मणामिति दैवजनकसदसत्कर्म्मणां न तु पानाशनासनशयनजागरणविण्मूत्रोत्सर्ज्जनादिकानाम्, तेनापि च विधिनाविधिनासदसद्रूपलेऽपि कर्म्मत्वेन ग्रहणं बोध्यं; कर्म्म पञ्चविधं स्नेहस्वेदपूर्व्वकवमनविरेचना-

भवति, तद्व्यतिरेकेणावस्थातुमशक्यत्वात्। देशोऽपि यदि देशान्तरगमनेन परिहर्त्तुं युज्यते, कालस्तु सर्व्वथा त्यक्तुमशक्य इति सर्व्वेभ्योऽव गरीयान्। गरीयः परमिति पाठे, यद्यतः परम्, तत् ततो गरीयो विद्यादिति योजना। एतद्विपर्य्यये लाघवमाह—वाय्वादिष्वित्यादि। प्रतीकारस्य सौकर्य्यं इति यथोक्तविधया वातादिपरित्यागस्य सुकरत्वेनेत्यर्थः। येषां न मृत्युसामान्यमिति न मृत्युजनकदैवसाम्यं येषामस्तीत्यर्थः। सामान्यं न च कर्म्मणामिति न च मारककर्म्मसामान्यं येषामस्तीत्यर्थः। केचिद्धि सम्भूयैव जन्मान्तरे ग्रामदाहादि कुर्व्वते स्म, तत्कर्म्मबलात् संहतमृत्यव एव भवन्ति। किंवा, पृथगपि मारकं कर्म्म कृतं केषाञ्चिदेककालं विपच्यमानं भवति। तेऽपि समकालमृत्यवो भवन्ति। तत्र 'न मृत्युसामान्यम्', इत्यनेन नोत्पन्नरिष्टत्वादेव केचित् साध्या इति दर्शयति, 'न कर्म्मसामान्यम्' इत्यनेन केचिन्नाजातरिष्टा अपि नियतमारककर्म्मवशादसाध्या भवन्तीति दर्शयति। किंवा, 'न मृत्युसामान्यम्' इत्यनेन मारकव्याधिः साधारण उच्यते। 'न कर्म्मसामान्यम्' इत्यनेन च मारकव्याधिजनकं कर्म्मोच्यते।

रसायनानां विधिवच्चोपयोगः प्रशस्यते।
शस्यते देहवृत्तिश्च भेषजैः पूर्व्वमुद्धृतैः॥
सत्यं भूते दया दानं बलयो देवताच्चर्चनम्।
सद्वृत्तस्यानुवृत्तिश्च प्रशमो गुप्तिरात्मनः॥
हितं जनपदानाञ्च शिवानामुपसेवनम्।
सेवनं ब्रह्मचर्य्यस्य तथैव ब्रह्मचारिणाम्॥
संकथा धर्म्मशास्त्राणां महर्षीणां जितात्मनाम्।
धार्म्मिकैः सात्त्विकैर्नित्यं सहास्या वृद्धसम्मतैः॥
इत्येतद् भेषजं प्रोक्तमायुषः परिपालनम्।
येषामनियतो मृत्युस्तस्मिन् काले सुदारुणे॥ १०॥

स्थापनानुवासनशिरोविरेचनानीति पञ्चविधम्। ननु तादृशविगुणवाय्वादिके समये कर्म्मसामान्येनानुमितमृत्युसामान्यमस्ति येषां तेषां किं भेषजेन नोपपत्तिर्भवतीत्यत आह—रसायनानामित्यादि। देहवृत्तिर्भोजनादिना यापनम्। भेषजैः पूर्व्वमुद्धृतैः, भूमेर्विरसीभावात् पूर्व्वमुद्धृतैः शालिप्रभृतिकान्नमूपादियोनिद्रव्यैस्तथा वनजलतागुल्मादिकैरोषधिद्रव्यैश्च। बलयः पूजोपहाराः। सद्वृत्तस्य इन्द्रियोपक्रमोक्तस्यानुवृत्तिरुपसेवनम्, प्रशमः शान्तरसाश्रयणम्, आत्मनो गुप्तिर्देशान्तरे गमनं, शिवानां मङ्गलकराणां स्वस्त्ययनवृद्धसिद्धादिजनपदानां सङ्गादीनामुपसेवनमेतत् सर्व्वं जनपदानामुद्ध्वंसने हितं भवति। संकथा सम्यग् व्याख्यया परस्परमालापः। सहास्या सार्द्धमुपवेशनं वृद्धसम्मतैर्वृद्धानामपि मान्यैः सहास्या। केषामायुषः परिपालनमित्येतत् भेषजं प्रोक्तमित्यत आह—येषामित्यादि। दैवपुरुषकारयोर्दैवस्य पुरुषकारस्य वा प्राधान्याद् येषां पुरुषाणाम्। तस्मिन् विगुणवाय्वादिके सुदारुणे काले येषां मृत्युर्न नियतोऽस्ति तेषामायुषः परिपालनमित्येतद् भेषजं प्रोक्तमित्यर्थः॥१०॥

पूर्व्वमुद्धृतैरिति ध्यापत्तेः पूर्व्वं गृहीतैः। गुप्तिर्मन्त्रादिना रक्षा। अनियत इति वचनेन दुर्ब्बलकर्म्मारब्धोऽपि मृत्युः पार्य्यत एवैवं प्रतिकर्त्तुमिति दर्शयति॥ १०॥

इति श्रुत्वा जनपदोद्ध्वंसने कारणानि * पुनश्चापि भगवन्तम् आत्रेयमग्निवेश उवाच। अथ भगवन् कुतो मूलमेषां वाय्वादीनां वैगुण्यमुत्पद्यते येनोपपन्ना जनपदमुद्ध्वंसयन्तीति॥ ११

तमुवाच भगवानात्रेयः। सर्व्वेषामप्यग्निवेश वाय्वादीनां वैगुण्यम् उत्पद्यते यत्, तस्य मूलमधर्म्मः। तन्मूलञ्चासत् कर्म्म पूर्व्वकृतम्, तयोर्योनिः प्रज्ञापराध एव। तद् यथा—यदा वै देश-नगरनिगमजनपदप्रधाना धर्म्ममुत्क्रम्याधर्म्मेण प्रजां प्रवर्त्तयन्ति, तदाश्रितोपाश्रिताः पौरजनपदा व्यवहारोपजीविनश्च तम् अधर्म्मम् अभिवर्द्धयन्ति। ततः सोऽधर्म्मः प्रसभं धर्म्ममन्तर्द्धत्ते,

गङ्गाधरः—इति श्रुत्वेत्यादि स्पष्टम्। अथेत्यादि। हे भगवन् जनपदोद्ध्वंसने मूलं कारणमेषां वाय्वादीनां कुतो वैगुण्यमुत्पद्यते इत्यन्वयः। येन वैगुण्येनोपपन्ना वातादय इत्यर्थः॥ ११॥

गङ्गाधरः—तमुवाचेत्यादि। सर्व्वेषां वाय्वादीनाम्। तद् यथेत्यादि। देश-नगरनिगमेषु वासिनां जनपदानां मध्ये प्रधाना वेदादिशास्त्रोक्तविधिसद्-वृत्ताद्यनुशास्तारः प्रज्ञातियोगमिथ्यायोगायोगैर्धर्म्ममुत्क्रम्यातिक्रम्य प्रजाम् अधर्म्मेण वर्त्तयन्ति यदा, तदा आश्रितोपाश्रिताः आश्रिता भृत्यादयोऽधीनाः, उपाश्रिताः सामीप्येन वासिनोऽपि धर्म्मशासनेनाधीना ये पौरजनपदा नाधीनाः। किन्तु शास्त्रविज्ञानरहितत्वेन सतां व्यवहारानुरूपेण व्यवहरन्त उपजीवितुं शीलशालिनः। ततस्तस्माद् व्यवहारात् वर्द्धितोऽधर्म्मस्तेभ्यो जनपदेभ्यः

चक्रपाणिः—कुतोमूलं किंमूलमित्यर्थः। तस्य मूलमधर्म्म इति ऐहिकाधर्म्मं दर्शयति। तन्मूलं वेति तस्य वातादिवैगुण्यस्य मूलं पूर्व्वकृतं वा कर्म्म। तेन हि, कोऽप्यधर्म्मो जन्मान्तर-कृतो वातादिवैगुण्यस्य कारणमिति भ्रुवते। तद्—'यदा देश' इत्यादिना त्वैहिकमेवाधर्म्मं यद्वक्ष्यति। एतत्तया प्रत्यक्षत्वेन स्फुटसिद्धान्तार्थम्, न तु जन्मान्तरकृताधर्म्मस्याकारणत्वेनेति ज्ञेयम्। तयोरित्यैहिकजन्मान्तरीययोः। योनिरिति कारणम्। स्पृहयाभ्यवहार्य्यदोषादिति

* आत्रेयस्य भगवतः इत्यधिकः पाठः दृश्यते क्वचित्।

ततस्तेऽन्तर्हितधर्म्माणो देवताभिरपि त्यज्यन्ते। तेषां तथा-विधान्तर्हितधर्म्माणामधर्म्मप्रधानानामपक्रान्तदेवतानाम् ऋतवो व्यापद्यन्ते। तेनापो यथाकालं देवो वर्षति न वा वर्षति विकृतं वा वर्षति, वाता न सम्यगभिवान्ति, क्षितिर्व्यापद्यते, सलिलान्युपशुष्यन्ति, ओषधयः स्वभावं परिहायापद्यन्ते विकृतिं, तत उद्ध्वंसन्ते जनपदाः स्पर्शाभ्यवहार्य्यदोषात् ॥ १२ ॥

तथा शस्त्रप्रभवस्यापि जनपदोद्ध्वंसस्याधर्म्म एव हेतुर्भवति। येऽतिप्रवृद्धलोभरोषमानास्ते * दुर्ब्बलानवमत्यात्मस्वजनपरोप-घाताय शस्त्रेण परस्परमभिक्रामन्ति, परान् वाभिक्रामन्ति,

प्रसभं हठात् धर्म्ममन्तर्द्धत्ते धर्म्ममन्तर्द्धापयति, ततोऽधर्म्मात् ते जनपदा अन्तर्हितधर्म्माणः। तेषां जनपदानामन्तर्हितधर्म्मत्वादधर्म्मप्रधानत्वात् अपक्रान्त-देवताकत्वाच्च ऋतवो व्यापद्यन्ते। तेन ऋतुव्यापादेन धर्म्मान्तर्द्धानेनाधर्म्मस्य प्राधान्येन प्रजानां देवतात्यागेन च देवो जलानां देव इन्द्रादिरपो न यथाकालं वर्षति। स्पर्शाभ्यवहार्य्यदोषादिति ऋतोः स्पर्शदोषात् जलादेः स्पर्शाभ्यवहारदोषात् वातस्य क्षितेश्च स्पर्शदोषात् ओषधीनां स्पर्शाभ्यवहार-दोषात् ॥ १२ ॥

गङ्गाधरः—एवं वातादीनां वैगुण्यमुक्त्वा युद्धादिप्रवृत्तितोऽपि जनपदोद्-ध्वंसनं दर्शयति—तथेत्यादि। शस्त्राणां प्रभवनमस्मात् स शस्त्रप्रभवस्तत्र अयथावत् शस्त्रचारणप्रवृत्तिहेतुशरीरप्रवर्त्तनस्याप्यधर्म्म एव हेतुस्तस्याधर्म्मस्य मूलञ्चासत् कर्म्म पूर्व्वकृतं तयोर्योनिः प्रज्ञापराध एवेति। प्रज्ञापराधासत्कर्म्मा-धर्म्मतोऽतिप्रवृद्धलोभादयस्ते दुर्ब्बलानवमत्य अवज्ञाय परैर्वाभिक्रम्यन्ते

स्पृश्यस्य व्यजनादेरभ्यवहार्य्यस्य च कृत्स्नस्य दुष्टत्वात्। एतच्च प्राधान्येन ज्ञेयम्। तेन, दुष्टपवनगन्धदोषेऽपि ज्ञेयम्, असात्म्यगन्धोऽपि दुष्टवात उक्तः ॥ ११ । १२ ॥

चक्रपाणिः—शस्त्रप्रभवस्यापीति बहुजनमारकशस्त्रप्रभवस्येत्यर्थः। आत्मस्वजनपरोपघातायेति

* अतिप्रवृद्धलोभरोषमोहमाना इति पाठान्तरम्।

परैर्वाभिक्रम्यन्ते रक्षोगणादिभिर्वा । विविधभूतसंघैस्तमधर्म्म-मन्यद्वा वाप्यपचारान्तरमुपलभ्याभिहन्यन्ते ॥ १३ ॥

तथाभिशापप्रभवस्याप्यधर्म्म एव हेतुर्भवति । ये लुप्तधर्म्माणो धर्म्मादपेतास्ते गुरुवृद्धसिद्धर्षिपूज्यानवमत्याहितान्याचरन्ति । ततस्ताः प्रजा गुर्व्वादिभिरभिशप्ता भस्मतामुपयान्ति । प्रागप्यभूदनेकपुरुषकुलविनाशाय । नियतप्रत्ययोपलम्भान्नियताश्च परेऽनियतप्रत्ययोपलम्भादनियताश्च परे । प्रागपि चाधर्म्मादृते नाशुभोत्पत्तिरन्यतोऽभूत् ॥ १४ ॥

रक्षोगणादिभिरित्यन्तश्छेदः । भूतसंघैर्विविधैः कर्त्तृभिर्वा । अन्यद्वेति अशुच्यादि भावादिकं भूतोन्मादोक्तकारणमिति भूताभिघातेऽप्यधर्म्मासत्कर्म्मणोर्योनिः प्रज्ञापराधो हेतुः ॥ १३ ॥

गङ्गाधरः—एवमभिशापस्याप्याह—तथेत्यादि । अत्रापि अधर्म्मस्य मूलम् असत्कर्म्म पूर्व्वकृतं तयोर्योनिः प्रज्ञापराध एवेति बोध्यम्, ते जनपदाः लुप्तधर्म्माण इति धर्म्मादनिप्रत्ययो बाहुल्यात् । अकृतधर्म्माः धर्म्मादपेता धर्म्मेण त्यक्ताः । अभिशापेन प्राक्काले‌ऽपि पुरुषाणां कुलक्षये पुरावृत्तिमाह—प्रागेवेत्यादि । प्राक् अतः पूर्व्वकालमेवानेकपुरुषाणां कुलविनाशाय । नियताश्च परे केचित् नियतप्रत्ययेनोपलम्भात् । नियतकालायुषः कारणोपलब्धेस्तत्र जीवन्ति । अपरे केचिच्चानियतप्रत्ययोपलम्भादनियतायुषः कारणोपलब्धेर्म्रियन्ते । ननु किं धर्म्मस्यान्तर्द्धानं देवतानां प्रजात्यागः वाय्वादीनां वैगुण्यं शस्त्रादिप्रभवश्च रक्षोगणादिभूतानामभिघातः गुरुवृद्धसिद्धादीनामभिशापश्चेति सर्व्वमेवाधर्म्मादुपजायते किमन्यस्मादपि किमधुनैव न च पूर्व्वकालञ्चेत्यत आह—प्रागपीत्यादि ॥ १४ ॥

आत्मनः स्वजनस्य परस्य चोपघातो भवति प्राय इत्यर्थः । राक्षसाद्युत्सादोऽपि जनानामधर्म्मकृत एव भवतीत्याह—रक्षोगणेत्यादि । अन्यद्वेत्यधर्म्मकारणमशौचादीत्यर्थः ॥ १३ ॥

चक्रपाणिः—प्रागेवेति झटिति, अनेकपुरुषकुलविनाशायाभिशप्ता भस्मतां यान्तीत्यर्थः । नियतप्रत्ययोपलम्भादनियताश्चापरे भस्मतां यान्तीति योजना । अनियता अनिमित्ता इत्यर्थः ।

आदिकाले ह्यदितिसुतसमौजसोऽतिविमलविपुलप्रभावाः प्रत्यक्षदेवदेवर्षिधर्म्मयज्ञविधिविधानाः शैलसारसंहतस्थिरशरीराः प्रसन्नवर्णेन्द्रियाः पवनसमबलजवपराक्रमाः चारुस्फिचोऽभिरूपप्रमाणाकृतिप्रसादोपचयवन्तः सत्यार्ज्जवानृशंस्यदानदमनियमतप-उपवासब्रह्मचर्य्यव्रतपरा व्यपगतभयरागद्वेषमोहलोभक्रोधशोकमानरोगनिद्रातन्द्राश्रमक्लमालस्यपरिग्रहाश्च पुरुषा बभूवुः अमितायुषः। तेषामुदारसत्त्वगुणे कर्म्मणां धर्म्माणामचिन्त्यत्वात् * रसवीर्य्यविपाकप्रभावगुणसमुदितानि प्रादुर्ब्बभूवुः शस्यानि सर्व्वगुणसमुदितत्वात् पृथिव्यादीनां कृतयुगस्यादौ ॥ १५ ॥

गङ्गाधरः—ननु कदा कथं किमशुभमधर्म्माज्जातमित्यत आह—आदिकाले इत्यादि। हि यस्मादादिकाले कृतयुगेऽष्टचत्वारिंशच्छतदिव्यवर्षमाने कालस्वभावादधर्म्माभावाददितिसुताः शक्रादयो देवास्तत्समोजांसि येषां ते तथा। शैलः शैलेन्द्रः हिमवान् तस्यैव सारैस्त्वक्सारादिभिरष्टभिः संहतं दृढ़ीभूतं स्थिरं शरीरं येषां ते तथा। कथमीदृशा इत्यत आह—सत्येत्यादि। आनृशंस्यं लोकानामनिन्दा, परिग्रहः प्रतिग्रहः। एवंभूतत्वात् पुरुषाः कृतयुगे बभूवुः अमितायुषः। ननु तेषां कस्मादमितायुष्ट्वमित्यत आह—तेषामित्यादि। तेषामुदारसत्त्वगुणे कर्म्मधर्म्मयोरचिन्त्यत्वात् पृथिव्यादीनां सर्व्वगुणसमुदितत्वात् रसवीर्य्यादिसमुदितानि शस्यानि बभूवुः। कृतयुगस्यादौ एतेन तादृशसत्त्वगुणेऽचिन्त्यकर्म्मधर्म्मवत्त्वात् तादृशरसवीर्य्यादिमत्सम्यगाहाराच्चामितायुष्ट्वं पुरुषाणां कृतयुगे इति ख्यापितम् तदा चाधर्म्मो नासीत्। न च बभूव अशुभम् ॥ १५ ॥

प्रतिनियतपुरुषाभिशापात् प्रतिनियता एव भस्मतां यान्ति सर्व्वे जना इत्यर्थः। आद्याविर्भावे रोगाणामधर्म्म एव कारणमित्याह—प्रागपि चेत्यादि ॥ १४ ॥

चक्रपाणिः—यज्ञो यज्ञदेवता। विधिर्यज्ञविधायको वेदः, विधानं यज्ञकर्म्म, जवो वेगः। परिग्रहो ममता। अमितमिवातिबहुत्वेनायुर्येषां ते अमितायुषः। सत्ये हि चतुर्व्वर्षशतायुः। यदुक्तं भगवता

* उदारसत्त्वगुणकर्म्मणामचिन्त्यरस—इति पाठः चक्रसम्मतः।

भ्रश्यति तु कृतयुगे केषाञ्चिदत्यादानात् साम्पन्निकानां शरीरगौरवमासीत्। सत्त्वानां गौरवात् श्रमः, श्रमादालस्यम्, आलस्यात् सञ्चयः, सञ्चयात् परिग्रहः, परिग्रहाल्लोभः प्रादुरासीत् कृते। ततस्त्रेतायान्तु लोभादभिद्रोहोऽभिद्रोहादनृतवचनम् अनृतवचनात् कामक्रोधमानद्वेषपारुष्याभिघात-भयतापशोक-चिन्तोद्वेगादयः प्रवृत्ताः। ततस्त्रेतायां धर्म्मपादोऽन्तर्द्धानमगमत्। तस्यान्तर्द्धानाद् युगवर्षप्रमाणस्य पादह्रासः, पृथिव्यादेर्गुणपादप्रणाशोऽभूत्। तत्प्रणाशकृतश्च शस्यानां स्नेहवैमल्य-रसवीर्य्यविपाकप्रभावगुणपादभ्रंशः। ततस्तानि प्रजाशरीराणि हीनगुणपादैर्हीयमानगुणैश्चाहारविकारैरयथापूर्व्वमुपष्टभ्यमानान्य-

गङ्गाधरः—ननु कदा पुनरधर्म्मः कदा चाशुभमासीदित्यत आह—भ्रश्यति इत्यादि। कृतयुगे तु भ्रश्यति कियत्कालात्यये केषाञ्चित् पुंसां न सर्व्वेषाम्। अत्यादानेन साम्पन्निका भूत्वा केचिद् देहगौरवमापुः। सत्त्वानां देहरूपद्रव्याणां सञ्चयो धनानामालस्याददानात् परिग्रहः सर्व्वभावेण ग्रहणम् कृतयुगे गते गमनमात्रे ततः कृतयुगगमनानन्तरं त्रेतायां प्रवृत्तायां सत्याम्। अभिद्रोहो जिघांसा। ततस्त्रेतायाः प्रवर्त्तनादनन्तरं सम्यक्प्रवृत्तायां त्रेतायां धर्म्मपादो धर्म्मस्य चतुर्थांशः। तेन चाधर्म्मस्य पादप्रवर्त्तनमभूत् ततस्तु तस्य धर्म्मपादस्यान्तर्द्धानात् कृतयुगस्य तावद्वर्षप्रमाणस्य पादह्रासः षट्त्रिंशच्छतदिव्यवर्षमानमभूत् गुणानां रसादीनां पादस्य प्रणाशः। तस्य पृथिव्यादिगुणपादस्य प्रणाशेन कृतः। ततः शस्यानां स्नेहवैमल्यरसादिभ्रंशाच्चानन्तरं हीनगुणपादैः शस्यैः सुतरां तद्योनिकैराहारविकारैर्हीयमानगुणैरयथापूर्व्वं पूर्व्वं कृतयुगे यथा सम्पूर्ण-

व्यासेन—"पुरुषाः सर्व्वसिद्धाश्च चतुर्व्वर्षशतायुषः। कृते" इति। साम्पन्निकानामीश्वराणाम्। कृत इति कृतयुगस्य शेषे।

हीयमानगुणैश्चेति, यथा यथा त्रेतायाः क्षयो भवति, तथा तथा आहारविहारगुणपादह्रासो भवन्नास इति दर्शयति। विहारो हि धर्म्मवर्द्धीनगुणो भवति, तेन न यथावत् शरीरोपष्टम्भन करोति। उपष्टभ्यमानानीति धातुसाम्येन पाल्यमानानि।

मारुतपरीतानि * प्राग् व्याधिभिर्ज्वरादिभिः आक्रान्तान्यतः प्राणिनो ह्रासमवापुरायुषः क्रमश इति।

भवतश्चात्र।

युगे युगे धर्म्मपादः क्रमेणानेन हीयते।
गुणपादश्च भूतानामेवं लोकः प्रलीयते॥
संवत्सरशते पूर्णे याति संवत्सरः क्षयम्।
देहिनामायुषः काले यत्र यन्मानमिष्यते॥ १६॥

रसादिभिराहारविकारैः तानि प्रजाशरीराणि उपष्टभ्यमानाग्निमारुताभ्यां परीतानि न तथाविधानि भवन्ति प्राक् प्रथममेव। व्याधिभिरित्यादि स्पष्टम्।

इममर्थं श्लोकाभ्यामाह—भवतश्चात्रेत्यादि। युगे युगे प्रतियुगे। तेन कृते चतुष्पाद्धर्म्मः त्रेतायां त्रिपाद्धर्म्मः द्वापरेऽर्द्धं धर्म्मः कलौ पादधर्म्मः; एवंक्रमेण धर्म्मपादविनाशानुरूपेण भूतानां युगानां भूम्यादीनां मनुष्यादीनां शस्यादीनाञ्च गुणपादो हीयते। एवं कलियुगान्ते धर्म्मपादचतुष्टयनाशात् भूतानां गुणपादचतुष्टयक्षयाद्देहिनां निःशेषेणायुःक्षयाच्च लोको देही प्रलीयते प्रलयं याति।

कथं देहिनां निःशेषेणायुषः क्षयो भवतीत्यत उच्यते—संवत्सरेत्यादि। यत्र काले कृतत्रेताद्वापरकलियुगानां यस्मिन् युगे दिव्यमानेन नरमानेन वा यद्वर्षमानं युगानां देहिनामायुषश्च यद्यन्मानमिष्यते तस्य तस्य युगस्य तत्तत्परिमितानां संवत्सराणां शते शतकृत्वो विभक्तानामेकैकभागे सम्पूर्णे जाते तद्युगोत्पन्नानां देहिनां तत्तत्परिमितस्यायुष एकैकः संवत्सरः क्षयं याति। इत्येवं कलियुगावसाने देहिनामायुषो निःशेषेण परिमाणक्षयात् सर्व्वलोकः प्राणी प्रलीयते। एवं पुनःपुनश्चतुर्युगावसाने सर्व्वप्राणिप्रलयात् लोकः परमात्मलोकपर्य्यन्तः सर्व्वो लोकः प्रलीयते शक्तिब्रह्ममात्रमवशिष्यते। तद् यथा। कृतयुगस्य मानं स्वभावसिद्धं दिव्यसंवत्सराणामष्टशताधिक-

संवत्सरशते पूर्णे इति संवत्सरेण शततमेऽंशे पूर्णे। यत्र यन्मानमिष्यत इति यत्र युगे यन्मानमिष्यते, तत्र शततमेऽंशे पूर्णे वर्षं एकः क्षयं याति। तेन कलौ शतवर्षायुरिति। यदा शततमोऽंशो याति क्षयम्, तदा नवनवति परमायुर्भवतीत्याद्यनुसरणीयम्॥ १५।१६॥

* उपष्टभ्यमानान्यग्निमारुतपरीतानीत्यपरः पाठः।

चतुःसहस्रम्। देहिनामायुषश्च कालस्वभावसिद्धं नरमानेन संवत्सराणां चतुःशतम्। तत्र कृतयुगस्य संवत्सराणां दिव्यानामष्टशताधिकचतुःसहस्रमानस्य शतकृत्वो विभक्तस्यैकैकभागोऽष्टचत्वारिंशद्दिव्याः संवत्सरा भवन्ति। तदेकैकभागे सम्पूर्णे देहिनां चतुःशतसंवत्सरमितस्यायुषः संवत्सरः क्षयं याति। तेन तद्भागशते सम्पूर्णे देहिनां कृतयुगोत्पन्नानामायुषः संवत्सरशतं क्षयं याति इत्येवं कृतयुगावसाने। अथ प्रवर्त्तमानायां त्रेतायां धर्म्मपादक्षयात् कालस्वभावाच्च कृतयुगमानस्य पादक्षयो भवति। त्रेतायुगमानञ्च दिव्यषट्त्रिंशच्छतवर्षं भवति। भूम्यादीनां गुणपादक्षयश्च भवति, तेनायुषः शतवर्षक्षये देहिनाञ्च त्रेतायुगोत्पन्नानामायुषः प्रमाणं त्रिशतवर्षं भवति। तत्रापि क्रमेण धर्म्मक्षयात् त्रेतायुगमानस्य दिव्यषट्त्रिंशच्छतस्य संवत्सरस्य शतकृत्वो विभक्तस्यैकैको भागः खलु दिव्यसंवत्सरषट्त्रिंशद्भवति। तत्रैकैकस्मिन् भागे दिव्यषट्त्रिंशत्संवत्सरे पूर्णे जाते त्रेतायुगोत्पन्नानां तेषां देहिनां त्रिशतवर्षस्यायुषः एकैकसंवत्सरः क्षयं यातीत्येवं शतभागे पूर्णे संवत्सरशतमायुषः क्षयं याति त्रेतावसाने। अथ प्रवर्त्तमाने द्वापरे द्विपादधर्म्मक्षयात् कालस्वभावाच्च त्रेतायुगमानस्य दिव्यषट्त्रिंशच्छतवर्षस्य पादक्षयो भवति। ततो द्वापरयुगमानञ्च दिव्यचतुःशताधिकद्विसहस्रवर्षं भवति भूम्यादिगुणपादक्षयश्च भवति तेनायुषः शतवर्षक्षये देहिनाञ्च द्वापरयुगोत्पन्नानामायुषः प्रमाणं द्विशतवर्षं भवति। तत्रापि धर्म्मस्य क्रमशः क्षयात् कालस्वभावात् द्वापरयुगमानस्य दिव्यचतुर्व्विंशतिशतवर्षस्य शतकृत्वो विभक्तस्यैकैको भागः खलु दिव्यचतुर्व्विंशतिसंवत्सरो भवति। तदेकैकस्मिन् भागे दिव्यचतुर्व्विंशतिसंवत्सरे पूर्णे जाते तेषां द्वापरयुगोत्पन्नानां देहिनां द्विशतसंवत्सरस्यायुष एकैकसंवत्सरः क्षयं याति, इत्येवं शतभागे पूर्णे द्वापरयुगस्यावसाने देहिनामायुषः संवत्सरशतं क्षयं याति। ततः प्रवर्त्तमाने कलियुगे धर्म्मस्य पादत्रयक्षयात् कालस्वभावात् कृतयुगमानस्य त्रिपादक्षये द्वापरस्यार्द्धक्षयाद् द्वादशदिव्यवर्षशतं कलियुगस्य मानं भवति। भूम्यादिगुणपादत्रयक्षयश्च भवति, देहिनामायुषश्च त्रिपादक्षये कलियुगोत्पन्नानामायुषः प्रमाणं वर्षशतं भवति। तत्रापि धर्म्मपादस्य क्रमेण क्षयात् कालस्वभावाच्च कलियुगमानस्य दिव्यद्वादशवर्षशतस्य शतकृत्वो विभक्तस्यैकैको भागो द्वादश दिव्यसंवत्सरा भवन्ति। तस्मिन् एकैकस्मिन् भागे दिव्यद्वादशसंवत्सरे पूर्णे सति कलियुगोत्पन्नानां देहिनामायुषः शतवर्षस्यैकैकसंवत्सरः क्षयं याति, इत्येवं शतभागे पूर्णे कलियुगं संपूर्णं भवति।

तत्र देहिनां शतवर्षमायुर्निःशेषेण क्षयं याति। भूम्यादिगुणपादचतुष्टयस्य च क्षयो भवति, धर्म्मपादचतुष्टयक्षयश्च जायते, चतुर्युगस्य च क्षयो भवति, इत्येवं लोकः प्रलीयते। प्रलयस्तु चतुर्व्विध उक्त आग्नेयेऽग्निना वसिष्ठाय—नित्यो नैमित्तिकः प्राकृत आत्यन्तिकश्चेति। तद् यथा—चतुर्व्विधस्तु प्रलयो नित्यं यः प्राणिनां लयः। सदा विनाशो जातानां ब्राह्मो नैमित्तिको लयः। त्रिविधस्त्रिविधायान्तु प्राकृतः प्रकृतौ लयः। लयस्त्वात्यन्तिको ज्ञानादात्मनः परमात्मनि। नैमित्तिकस्य कल्पान्ते वक्ष्ये रूपं लयस्य ते। चतुर्युगसहस्रान्ते क्षीणप्राये महीतले। अनावृष्टिरतीवोग्रा जायते शतवार्षिकी। इत्यादिभिः नैमित्तिकः कल्पान्तप्रलयः उक्तः तत्र। आत्मानं वासुदेवाख्यं चिन्तयन् मधुसूदनः। कल्पं शेते प्रबुद्धोऽथ ब्रह्मरूपी सृजत्यपि। द्विपरार्द्धं ततोऽव्यक्ते प्रकृतौ लीयते द्विज। स्थानात् स्थानं दशगुणमेकस्माद्गुण्यते मुने। ततोऽष्टादशमे भागे परार्द्धमभिधीयते। परार्द्धद्विगुणं यत्र प्राकृतः स लयः स्मृतः। एकं दश शतञ्चैव सहस्रमयुतं तथा। लक्षञ्च नियुतञ्चैव कोटिरर्व्बुद एव च। खर्व्वश्चैव निखर्व्वश्च शङ्खपद्मौ च सागरः। अन्त्यं मध्यं परार्द्धञ्च दशवृद्ध्योत्तरोत्तरम्। अनावृष्ट्याग्निसम्पर्कात् कृत्स्ने संज्वलिते द्विज। महदादिविकारस्य विशेषान्तस्य संक्षये। आपो ग्रसन्ति वै पूर्व्वं भूमेर्गन्धादिकं गुणम्। इत्यादिना स्वस्वप्रकृतौ भूम्यादीनां लयमुक्त्वा उक्तं पुनर्महान्तश्च प्रकृतिर्ग्रसति द्विज। व्यक्ताव्यक्ता च प्रकृतिर्व्यक्तस्याव्यक्तके लयः। इत्येवं महाप्रलयाख्य एकविधः प्राकृतः प्रलय उक्तः। ततः परं निर्व्वाणाख्यः प्राकृतः प्रलय उक्तो यथा। पुमानेकोऽक्षरः शुद्धः सोऽप्यंशः परमात्मनः। प्रकृतिः पुरुषश्चैतौ लीयेते परमात्मनि। न तत्र सन्ति सर्व्वेषां नामजात्यादिकल्पनाः। इति प्रधानक्षेत्रज्ञादिवेदविद्यान्तानां परमात्मनि शिवे लयो निर्व्वाणाख्यः प्राकृतः प्रलय उक्तः। ततः परं महानिर्व्वाणाख्यः प्राकृतः प्रलय उक्तो यथा। सत्तामात्रात्मकेऽज्ञेये ज्ञानात्मन्यात्मनः परे। इति। आत्मन इति परमात्मनः परव्योमरूपस्य चतुष्पाद्ब्रह्मणश्चतुर्थपादगायत्रीसहितत्रिपात्पुरुषस्य शिवस्य सत्तामात्रात्मके ज्ञानात्मनि चेतनास्वरूपे परे ब्रह्मणि शक्तौ लय इति शक्तिमात्रब्रह्मणोऽवशेषो महानिर्व्वाणाख्यः प्राकृतः प्रलयस्तृतीयः। इति। विष्णुसंहितायाञ्चोक्तम्। यदुत्तरायणं तदहर्देवानां दक्षिणायनन्तु रात्रिः, संवत्सरोऽहोरात्रः, तत्त्रिंशता मासो, मासास्ते द्वादश वर्षम्। द्वादशवर्षशतानि दिव्यानि तु कलियुगम्, तद्द्विगुणानि द्वापरं, त्रिगुणानि त्रेता, चतुर्गुणानि तु

कृतयुगम्, द्वादश वर्षसहस्राणि दिव्यानि चतुर्युगं, चतुर्णां युगानामेकसप्ततिर्मन्वन्तरम्, चतुर्युगसहस्रश्च कल्पः, स च पितामहस्यैकमहस्तावती चास्य रात्रिः, ते च द्वे अस्याहोरात्रः, एवंविधेनाहोरात्रेण मासवर्षगणनया सर्व्वस्यैव हि ब्रह्मणो वर्षशतमेव खल्वायुः, ब्रह्मायुषा परिच्छिन्नः, कालः पौरुषो दिवसः, तस्यान्ते महाकल्पः, तावत्येव चास्य निशा, पौरुषाणामहोरात्राणामतीतानां सङ्ख्यैव नास्ति न च भविष्याणामनाद्यन्तता कालस्य, एवमस्मिन् निरालम्ब काले सततयायिनि। न तद्भूतं प्रपश्यामि स्थितिर्यस्य भवेद् ध्रुवा। गङ्गायाः सिकता धारास्तथा वर्षति वासवे। शक्या गणयितुं लोके न व्यतीताः पितामहाः। चतुर्द्दश विनश्यन्ति कल्पे कल्पे सुरेश्वराः। सर्व्वलोकप्रधानाश्च मनवश्च चतुर्द्दश। बहूनीन्द्रसहस्राणि दैत्येन्द्रनियुतानि च। विनष्टानीह कालेन मनुजेष्वथ का कथा। इति।

अस्य प्रलयस्य वादप्रतिवादाभ्यामक्षपादगौतमेन न्यायशासने स्थापना कृता। तद् यथा—अवयवावयविप्रसङ्गश्चैवमा प्रलयात्। न प्रलयोऽणुसद्भावात्। परं वा त्रुटेः। आकाशव्यतिभेदात् तदनुपपत्तिः। आकाशासर्व्वगतत्वं वा। अन्तर्व्वहिश्च कार्य्यस्य कारणान्तरवचनादकार्य्ये तदभावः। सर्व्वसंयोगशब्दविभवाच्च सर्व्वगतम्। अव्यूहाविष्टम्भविभुत्वानि चाकाशधर्म्माः। मूर्त्तिमताञ्च संस्थानोपपत्तेरवयवसद्भावः। संयोगोपपत्तेश्च। अनवस्थाकारित्वादनवस्थानुपपत्तेश्चाप्रतिषेधः। बुद्ध्या विवेचनात् तु भावानां याथात्म्यानुपलब्धेस्तन्त्वपकर्षणे पटसद्भावानुपपत्तेर्यदवशिष्यते। व्याहतत्वादहेतुः। तदाश्रयत्वादपृथग्ग्रहणम्। प्रमाणतश्चार्थप्रतिपत्तेः प्रमाणानुपपत्त्युपपत्तिभ्याम्।

इति षोड़शभिः सूत्रैः प्रलयस्थापना वार्त्तिकेन व्याख्याता। तद् यथा—अवयवावयविप्रसङ्गश्चैवमा प्रलयादिति। एवमुक्तप्रकारेणावयविसिद्धौ सत्याञ्चावयवावयविभावप्रसक्तिरा प्रलयात् प्रलयपर्य्यन्तं भवति। प्रलये तु तद्विनाशात्। चतुर्व्विधो हि प्रलयो नित्य-नैमित्तिक-त्रिविधप्राकृत-निर्व्वाणमोक्षभेदात्। तत्र प्राणिनस्त्वेते यदविरतमहरहर्म्रियन्ते स नित्यप्रलयः, सर्व्वदाविनाशः कल्पान्तो नैमित्तिकः, प्राकृतस्तु महाप्रलयो निर्व्वाणप्रलयो महानिर्व्वाणप्रलय इति त्रिविधो निर्व्वाणमोक्ष आत्यन्तिकप्रलयः। तत्र यावज्जीवति तावद् देवदत्तादिरवयवावयविभावापन्नो यदा म्रियते तदा नावयवी इति। १। तत्राह वादी। न प्रलयोऽणुसद्भावात्। २। आ प्रलयादवयवावयविभावप्रसङ्ग इति यदुक्तं तत्र प्रलयो नास्ति, अणुसद्भावात्। प्राणिनां मरणे

स्थूलदेहात्मसंयोगनाशे नित्यानुबन्धपञ्चमहाभूतसहित-सूक्ष्मशरीरि-पुरुष-सद्भाव एव। तस्मात् नित्यप्रलयो नास्तीति। तत्रोत्तरमाह प्रलयवादी। कृतादिषु चतुर्षु युगेषु क्रमेण धर्म्मपादक्षये भूम्यादीनां गुणपादक्षयस्ततः प्राणिनामायुःक्षयः कलिशेषे निःशेषेण भवति ततो न प्राणी जायते इत्येवं त्रुटिः स्यात् तस्मादस्ति प्रलयश्चतुर्युगान्ते पुनश्च कृतप्रवृत्तौ ब्रह्मा पूर्व्ववत् सम्पूर्णायुषं सर्व्वं सृजतीति। २। तत्राह वादी—परं वा त्रुटेः। ३। तथाविध-चतुर्युगान्ते प्राणिनां त्रुटेः परं वाणुसद्भावान्न प्रलयो न हि स्रष्टा सूक्ष्मशरीरिणं सृजति स च वर्त्तत एवेति। ३। तत्राह प्रलयवादी—आकाशव्यतिभेदात् तदनुपपत्तिः। ४। तस्याणोः सद्भावस्यानुपपत्तिराकाशव्यतिभेदात्। तेषामणूनाम् अन्तर्वहिश्चाकाशेन सम्प्रवेशाद्विनाशित्वात्। तेषामणूनामारम्भकाणामन्तर्वहिश्चाकाशोऽस्ति ततस्तेषामवयवानां विभागेन त्रुटिः स्यात् ततः प्रणाश इति। ४। यद्याकाशेनान्तर्वहिश्च व्यतिभेदः समावेशोऽणूनां नेष्यते तदा खलु।०। आकाशासर्व्वगतत्वं वा। ५। अणूनामन्तर्वहिराकाशाभावे ह्याकाशस्य असर्व्वगतत्वं वा प्रसज्यते। ५। तत्राह वादी—अन्तर्वहिश्च कार्य्यस्य कारणान्तर-वचनात् अकार्य्ये तदभावः। ६। कार्य्यद्रव्यस्य शरीरेन्द्रियविषयसंज्ञस्य कारणान्तरस्य पृथिव्यादिभूतवचनादन्तर्वहिश्चास्त्याकाशः। अकार्य्ये प्राण्यप्राणिनां कारण-भूते द्रव्ये पञ्चमहाभूतमनोदिक्कालात्मनि वहिरन्तश्चाकाशस्याभाव इति। ६। न चाकाशस्यासर्व्वगतत्वं ततो भवति, कथम् सर्व्वसंयोगशब्दविभवाच्च सर्व्वगतत्वम्। ७। सर्व्वगतञ्चाकाशं सर्व्वसंयोगशब्दविभवात्। परमाणुभिस्तत्कार्य्यैश्च सह संयोगा आकाशे विभवन्ति। यत्र क्वचिदुत्पन्नाश्च शब्दा आकाशे विभवन्ति तदाश्रयाश्च भवन्तीति। ७। अव्यूहाविष्टम्भविभुत्वानि चाकाशधर्म्माः। ८। अव्यूहादयश्चाकाशधर्म्माः। संयुतप्रतिघातिना द्रव्येणाकाशो न व्यूह्यते काष्ठेनेवोदकं निरवयवत्वात्। सर्व्वं प्रतिघातिद्रव्यञ्च नाकाशं विष्टभ्नाति नास्य क्रियाहेतु गुणं शब्दं प्रवध्नात्यस्पर्शत्वात्। अणववयवस्य अणुतरतमत्वप्रसङ्गादणोः कार्य्यत्वप्रतिषेधः। कार्य्यकारणद्रव्ययोः परिमाण-भेददर्शनात्। एवं तर्हि मरणोत्तरकालमणुसद्भावान्न प्रलयः इति। ८। तत्राह प्रलयवादी।—कार्य्यकारणद्रव्ययोः परिमाणभेदादेव। मूर्त्तिमताञ्च संस्थानोपपत्तेरवयवसद्भावः। ९। कार्य्यकारणद्रव्ययोः परिमाणभेदाद् व्याकृताव्याकृत-मूर्त्तिमतां त्रिकोणादिसंस्थानोपपत्तेरारम्भकावयवसद्भावः। त्रिकोणं चतुष्कोणं परिमण्डलमित्येवं संस्थीयते यत् तत् संस्थानं सोऽवयवसन्निवेशः। परि-

मण्डलाश्चाणवः। तर्हि चाणवः पारिमाण्डल्यात् कार्य्यं सावयवा हेतवः स्युस्ततः कार्य्याणां त्रिकोणादिसंस्थानदर्शनादवयवसद्भावः।९। कस्मात्?।०। संयोगोपपत्तेश्च।१०। बहूनामणूनां संयोगमन्तरेण नोत्पद्यते त्रिकोणादि-संस्थानं तस्मात् संयोगोपपत्तेश्चाणूनामवयवसद्भावः।१०। एवं तर्हि चावयव-संस्थानस्यानवस्था भवतीति। तत्राह—अनवस्थाकारित्वादनवस्थानुपपत्तेश्च अप्रतिषेधः।११। अनवस्थाकारित्वात् तेषामणूनां संयोगाप्रतिषेधः। यावत् मूर्त्तिमल्लोकेऽस्ति तावत् स्वणवः संयुज्यन्ते। अनवस्थानुपपत्तेश्चाणूनां संयोगस्याप्रतिषेधः। यावद्धि मूर्त्तिमत् प्रसिद्धं तावतोऽन्यन्नाभून्न क्वचिद् वा भावि।११। इत्येवं वदन्तं प्रलयवादिनं प्रति पुनराह वादी।०। एवमपि मरणोत्तर-कालं चतुर्युगान्तकाल इवाणुसद्भावान्न प्रलयोऽस्तीति। नव हि द्रव्याणि पृथिव्यप्तेजोवाय्वाकाशानि मनोदिक्कालात्मानश्चेति। रूपादीनि च सप्त-दश गुणा उत्क्षेपणादीनि पञ्चकर्म्माणि समवायश्चेति चतुष्कं नित्यं मरणादुत्तरं सूक्ष्मदेहेषु वर्त्तते। इति।०। तत्राप्युत्तरमाह प्रलयवादी।०। अवयवावयवि-प्रसङ्गश्चैवमा प्रलयात्। इति। यावत् कल्पान्तप्रलयं तावदेवावयवावयवि-प्रसक्तिरेवं भवति। पूर्णे हि कल्पान्तकाले तेषामणूनामसद्भाव आकाशव्यतिर भेदात्। तद् यथाग्निरुवाच वशिष्ठाय। नैमित्तिकस्य कल्पान्ते वक्ष्ये रूपं लयस्य ते। दैवयुगसहस्रान्ते क्षीणप्राये महीतले। अनावृष्टिरतीवोग्रा जायते शतवार्षिकी। ततः सत्त्वक्षयः स्याच्च ततो विष्णुर्जगत्पतिः। स्थिरो जलानि पिबति भानोः सप्तसु रश्मिषु। भूपातालसमुद्रादि-तोयं नयति संक्षयम्। ततस्तस्यानुभावेन तोयाहारोपबृंहिताः। त एव रश्मयः सप्त जायन्ते सप्त भास्कराः। दहन्त्यशेषं त्रैलोक्यं सपातालतलं द्विज। कूर्म्मपृष्ठसमा भूः स्यात् ततः कालाग्निरुद्रकः। शेषाहिश्वाससम्पातात् पातालानि दहत्यधः। पातालेभ्यः परं विष्णुर्भुवं स्वर्गं दहत्यतः। अशरीरमिवाभाति त्रैलोक्यमखिलं तथा। ततस्तापपरीतास्तु लोकद्वयनिवासिनः। गच्छन्ति च महर्लोकं महोर्लोकाज्जनं ततः। रुद्ररूपी जगत् दग्ध्वा मुखनिश्वासतो हरेः। उत्तिष्ठन्ति ततो मेघा नानारूपाः सविद्युतः। शतं वर्षाणि वर्षन्तः शमयन्त्यग्निमुत्थितम्। सप्तर्षिस्थानमाक्रम्य स्थितेऽम्भसि ततो मरुत्। अथ निश्वासजो विष्णोर्नाशं नयति तान् घनान्। वायुं पीत्वा हरिः शेते शेषे चैकार्णवे प्रभुः। ब्रह्म-रूपधरः सिद्धैर्जनस्थैर्मुनिभिस्ततः। आत्ममायामयीं दिव्यां योगनिद्रां समास्थितः। आत्मानं वासुदेवाख्यं चिन्तयन् मधुसूदनः। कल्पं शेते प्रबुद्धोऽपि ब्रह्मरूपी सृजत्यथ। इति। इत्येवं कल्पान्तप्रलयपर्य्यन्तमवयवावयविप्रसक्तिरिति।

तत्राह पुनर्वादी। न प्रलयोऽणुसद्भावात् ।०। तथाविधे विनाशेऽप्यणवो हि सन्ति यैः पुनः सृज्यते इति चेत् तत्राह प्रलयवादी। पूर्णे कल्पान्तकाले तेषामणूनां सद्भावानुपपत्तिराकाशव्यतिभेदात् । यदि तेषामन्तर्वहिश्चाकाशसमावेशो नास्ति तदाकाशस्यासर्व्वगतत्वं प्रसज्यते। आकाशव्यतिभेदात् तु तेषां विनाशित्वमतः प्रलयावसाने तेषां सूक्ष्मभूतानां पुनः सर्ग उक्तः। तद् यथा मनुना। अण्व्यो मात्रा विनाशिन्यो दशार्द्धानाञ्च याः स्मृताः । ताभिः सार्द्धमिदं सर्व्वं सम्भवत्यनुपूर्व्वशः । तस्य सोऽहर्निशस्यान्ते प्रसुप्तः प्रतिबुध्यते। प्रतिबुद्धश्च सृजति मनः सदसदात्मकम् । मनःसृष्टिं विकुरुते चोद्यमानं सिसृक्षया। आकाशं जायते तस्मात् तस्य शब्दं गुणं विदुः। आकाशात् तु विकुर्व्वाणात् सर्व्वगन्धवहः शुचिः। बलवान् जायते वायुः स वै स्पर्शगुणो मतः। वायोरपि विकुर्व्वाणाद् विरोचिष्णु तमोनुदम् । ज्योतिरुत्पद्यते भास्वत् तद्रूपगुणमुच्यते। ज्योतिषश्च विकुर्व्वाणादापो रसगुणाः स्मृताः। अद्भ्यो गन्धगुणा भूमिरित्येषा सृष्टिरादितः। इति। यथा पुनः लोकसर्गे पञ्चमहाभूतसर्गः कल्पान्ते तेषां नाशात् तथा पुरुषेऽपि पुनर्ज्जन्मनि पञ्चमहाभूतानां पुनः सर्गो वक्ष्यते शारीरे। यथा—प्रलयात्यये सिसृक्षुः भूतान्यक्षरभूतः पूर्व्वतरमाकाशं सृजति। ततः प्रव्यक्ततरगुणांश्चतुरो वाय्वादीन् भावान्। तथा देहग्रहणेऽपि सत्त्वकरणो गर्भाशयमनुप्रविश्य सत्त्वोपादानः पूर्व्वतरमाकाशं सृजति ततः प्रव्यक्ततरगुणान् वाय्वादींश्चतुरो भावानिति। कल्पान्तेऽणूनां त्रुटिर्भवति लोके मरणे तु पुरुषे च। तस्मादस्ति प्रलयः।०। तत्राह पुनर्वादी। परं वा त्रुटेरिति।०। कल्पान्ते पूर्व्वपूर्व्वानुप्रविष्टानां वाय्वादीनामणूनां त्रुटेः परश्चाकार्य्याणामणूनां गन्धतन्मात्रादीनां पृथिव्यादीनां सद्भावान्न प्रलयः।०। तत्राह प्रलयवादी। आकाशव्यतिभेदात् तदनुपपत्तिः आकाशासर्व्वगतत्वं वा। इति। तत्राप्याह वादी। अन्तर्वहिश्चाकाशः कार्य्यस्य कारणान्तरवचनादकार्य्ये तदभावः। नव हि द्रव्याणि गन्धमात्रादीनि।०। रूपादयः सप्तदश गुणाः पञ्च चोत्क्षेपणादीनि कर्म्माण्येतत् सर्व्वं सन्नित्यम् अद्रव्यवत् कारणं सामान्यविशेषवच्चेति नैषामन्तराकाशव्यतिभेदो वहिस्तु तत्राकाशं सर्व्वसंयोगशब्दविभवाच्च सर्व्वगतम्। अव्यूहाविष्टम्भविभुत्वानि चाकाशधर्म्माः। अणववयवस्यानुतरतमत्वप्रसङ्गादणोः कार्य्यत्वप्रतिषेधः। कार्य्यकारणद्रव्ययोः परिमाणभेददर्शनात्।०। तत्राह प्रलयवादी। कार्य्यद्रव्याणां कारणद्रव्यतः परिमाणभेददर्शनादेव। मूर्त्तिमत्ताश्च संस्थानोपपत्तेः कारण-

द्रव्यस्यावयवसद्भावः। स चावयवो व्याकृतोऽव्याकृतो वास्ति यमन्तरेण कार्य्यद्रव्याणामवयवारम्भो न सम्भवति। संयोगोपपत्तेश्च। बहूनामणूनां संयोगमन्तरेण कार्य्यद्रव्याणां त्रिकोणाद्यवयवादिसंस्थानं नोपपद्यते तस्मात् संयोगोपपत्तेरणूनामवयवसद्भावः। तथा चावयवसंस्थानस्यानवस्था। अनन्तं हि वस्तु तत्तद्वस्तुनश्चावयवसंस्थानमनन्तं प्रत्येकभेदात्। तथा चावयवानाम् अनवस्थाकारित्वादणूनामनवस्थानुपपत्तिस्ततस्तेषां संयोगप्रतिषेधो न भवतीत्यत उक्तं द्रव्यगुणकर्म्माणीति सर्व्वं सन्नित्यमद्रव्यवत् कार्य्यं कारणं सामान्यविशेषवच्चेति कार्य्यत्वादाकाशव्यतिभेदोऽस्ति। तस्मादस्ति प्रलय इति।

तत्राह वादी। सत्यं तावद् द्रव्यं गुणाः कर्म्माणीत्येतत् सर्व्वं सन्नित्यमद्रव्यवत् कार्य्यं कारणञ्चेति तत्राहङ्कारस्य कार्य्यं तत् सर्व्वमद्रव्यारब्धं ततो नित्यमिति तेषामणूनां सद्भावान्न प्रलय इति। ०। तत्राह प्रलयवादी च। अवयवावयविप्रसङ्गश्चैवमा प्रलयात्। इति। यावत् प्राकृतप्रलयं तदेवावयवावयविप्रसक्तिरेवंप्रकारेण भवति। प्राकृतप्रलये हि तेषां नवानां द्रव्याणां गुणानां कर्म्मणां विनाशात्। तद् यथा मनुनोक्तम्। युगपत् तु प्रलीयन्ते यदा तस्मिन् महात्मनि। तदायं सर्व्वभूतात्मा सुखं स्वपिति निर्वृतः। तमोऽयन्तु समाश्रित्य चिरं तिष्ठति सेन्द्रियः। न च स्वं कुरुते कर्म्म तदोत्क्रामति मूर्त्तितः। यदाणुमात्रिको भूत्वा वीजं स्थास्नु चरिष्णु च। समाविशति संसृष्टस्तदा मूर्त्तिं विमुञ्चति। इति। इत्येवं महाब्रह्मणि नारायणेऽस्मिन्नादित्ये स्थावरजङ्गमपरमाणुलये द्विपरार्द्धेऽयं नारायणो ब्रह्मादित्यो मूर्त्तिं मुञ्चति चतुर्म्मुखश्चतुर्भुजश्च पञ्चाननश्चेत्येवं यावती मूर्त्तिमती सर्व्वा मूर्त्तिं विमुञ्चति, तदा यथा भवति तदुक्तमग्निना वशिष्ठाय। द्विपरार्द्धे ततोऽव्यक्ते प्रकृतौ लीयते द्विज। परार्द्धद्विगुणं यत्र प्राकृतः स लयः स्मृतः। अनावृष्ट्याग्निसंपर्कात् कृते संज्वलिते द्विज। महदादिविकारस्य विशेषान्तस्य संक्षये। ईशेच्छाकारिते तस्मिन् सम्प्राप्ते प्रतिसञ्चरे। आपो ग्रसन्ति वै पूर्व्वं भूमेर्गन्धादिकं गुणम्। आत्तगन्धा ततो भूमिः प्रलयायैव कल्पते। रसात्मिकाश्च तिष्ठन्ति ह्यापस्तासां रसो गुणः। पीयते ज्योतिषा तासु नष्टास्वग्निश्च दीप्यते। ज्योतिषोऽपि गुणं रूपं वायुर्ग्रसति भास्वरम्। नष्टे ज्योतिषि वायुश्च बली दोधूयते महान्। वायोरपि गुणं स्पर्शमाकाशो ग्रसते ततः। वायौ नष्टे खस्य शब्दं भूतादिर्ग्रसते ततः। अभिमानात्मकं तच्च भूतादिं ग्रसते महान्। भूमिर्याति लयञ्चाप्सु आपो ज्योतिषि यान्ति तत्। वायौ वायुः खे च खञ्च

महङ्कारे लय स च। महत्तत्त्वं महान्तश्च प्रकृतिग्रसते द्विज। व्यक्ताव्यक्ता च प्रकृतिर्व्यक्तस्याव्यक्तके लयः। अव्यक्तं स्यात् तमोलीनं रजसि स्याद्रजस्ततः। सत्त्वे लीनमेवमेव गुणसाम्यात्मकन्तु तत्। अव्यक्तं स्यात् प्रधानाख्यं तत्रस्थाः पुरुषास्तदा। पुमानेकोऽक्षरः शब्दः सोऽप्यंशः परमात्मनः। इति। इत्येवं द्विपरार्द्धसंवत्सरेषु पूर्णेषु खल्वेतदाद्यव्यक्तात्मान्तं सर्व्वं प्रलीयते। तावत् कालं सर्व्वं तदव्याकृताव्याकृतावयवावयवितया प्रसज्यते। इति एष महाकल्पो महाप्रलयो नाम।

तत्राह वादी। न प्रलयोऽणुसद्भावात्। इत्येवं भूम्यादीनामव्यक्तान्तानां विनाशेऽपि प्रलयो न भवति तेषामणुसद्भावात्। नैवं गन्धमात्रादिलक्षणा हि भूम्यादयोऽव्यक्तान्ता अणवस्तेषां स्वस्वप्रकृतो लये त्रुटिभवति नैवाणवः सन्ति।०। तत्राह वादी। परं वा त्रुटेरिति। तथैव स्वस्वप्रकृतौ भूम्यादेर्लये त्रुटेः परं वाणुसद्भावान्न प्रलयः। यदुपादानं पुनरव्यक्तं भवति अव्यक्तान्महा-नित्यवमादि स्यात् तत्तदुपादानन्त्वणु वर्त्तत एव।०। तत्राह प्रलयवादी। आकाश-व्यतिभेदात् तदनुपपत्तिः। तेषामणूनां सद्भावस्यानुपपत्तिराकाशव्यतिभेदात् परमव्योम्नस्तेषामन्तर्वहिःसमावेशात् तेषां काले प्रलयात्। नैवञ्चेत् तदाका-शस्य असर्व्वगतत्वं वा स्यात्।०। तत्राह वादी। अन्तर्वहिश्च कार्य्यस्य कारणान्तर-वचनादकार्य्ये तदभावः। कार्य्यस्य वस्तुनो ह्यन्तश्च वहिश्चाकाशव्यतिभेदोऽस्ति कारणान्तरवचनात् बहूनामुपादानकारणानां वचनात्। बहुभिरारब्धे वस्तुनि ह्याकाशमन्तर्गतमाविशति। अकार्य्ये तु कथमाकाशमन्तरा विशेदतस्तु अकार्य्येऽन्तरावेशो नाकाशस्य। अव्यक्तादीनामुपादानमकार्य्यं तन्नित्यं न तदन्तराकाशसमावेशस्तस्मात् तत्सद्भावो न प्रलयः। न चाकाशस्यासर्व्वगतत्वम्। सर्व्वसंयोगशब्दविभावाच्च सर्व्वगतत्वम्। अप्यूहाविष्टम्भविभुत्वानि चाकाश-धर्म्माः। तथाण्ववयवस्याणुतरतमत्वप्रसक्तेरणोः कार्य्यत्वप्रतिषेधः।

तत्राह प्रलयवादी। अव्यक्तस्याप्युपादानं भूतो योऽणुस्तस्य मूर्त्तिमत्ताञ्च संस्थानोपपत्तेरवयवसद्भावः। यथा खल्वव्याकृतमूर्त्तिमदव्यक्तं यदणुभिरारब्धं सम्भवति तेषाम् अणूनामपि पृथक् पृथगव्याकृतमूर्त्तिमत्त्वेन संस्थानमुपपद्यते ततोऽवयवसद्भावः तदवयवावयविप्रसक्तिरा प्रलयात्। तदवयवसद्भावस्त संयोगोपपत्तेश्च। नान्तरेणानेकोपादानम् अवयवो भवति ततोऽनेकोपादानानां संयोगोपपत्तेश्चावयवसद्भावः। तेषामणूनामव्यक्तस्योपादानानां नैकविधा ह्यवस्था। तत्तत्पृथक्पृथमवस्था त्वनवस्था तत्कारित्वात् तदनवस्थानुपपत्तेश्च

तेषामणूनामवयवप्रतिषेधो न भवति इत्युक्तम्। अनवस्थाकारित्वात् अनवस्थानुपपत्तेश्चाप्रतिषेध इति। तस्मादस्ति प्रलयः। संवत्सराणां द्विपरार्द्धं प्राकृतसर्गस्थितिकालस्ततः परं प्राकृतप्रलयस्तावत्कालं वर्त्तते। इति संवत्सराणां चतुःपरार्द्धं प्रधानक्षेत्रज्ञपुरुषादीनामेकोऽहोरात्रस्तथाविधाहोरात्राणां षड्युत्तरत्रिशतमहोरात्राः संवत्सरस्तत्संवत्सरशतं तेषामायुरिति संवत्सरपरार्द्धानां चतुर्द्दश शतानि चत्वारिंशच्च परार्द्धानि वर्षमेकं भवति, तेषां वर्षाणां शतं संवत्सरापरार्द्धानां चतुश्चत्वारिंशत्सहस्राधिकलक्षमेकं भवति, तेन षट्त्रिंशत्सहस्राणि ब्रह्मणो भवन्ति। तावति काले सम्पूर्णे प्रकृतिपुरुषकालाश्चत्वारो वेदा विद्याश्चापराः पराविद्या च वेदान्तपुरुषः सदाशिवश्चेत्येते परमात्मनि परव्योम्नि व्योमकेशे शिवे लीयन्ते। स निर्व्वाणाख्यः प्राकृतः प्रलयः। तदुक्तमग्निना वशिष्ठाय। प्रकृतिः पुरुषश्चैतौ लीयेते परमात्मनि। न तत्र सन्ति सर्व्वेषां नामजात्यादिकल्पना। इति। श्वेताश्वतरोपनिषदि मन्त्रश्च। यदा तमस्तान्न दिवा न रात्रिः न सन्न चासच्छिव एव केवलः। तदक्षरं तत् सवितुर्वरेण्यं प्रज्ञा च तस्मात् प्रसृता पुराणी। इति।०। इत्यवयवावयविप्रसक्तिश्चैवमप्रलयादित्युक्तम्।

तत्राप्याह वादी। न प्रलयोऽणुसद्भावादिति। तत्र परमात्मनि सर्व्वेषां विनाशेऽपि न प्रलयो भवति तेषामारम्भकाणुसद्भावात्।०। नैवं ते ह्यणवस्तेषां विनाशे पार्थिवादिपरमाणुवदणुसद्भावाभावात्।०। तत्राह वादी। परं वा त्रुटेरिति। तेषां त्रुटेः परं वा तदुपादानानामणूनां सद्भावान्न प्रलय इति।०। तत्राह प्रलयवादी। आकाशव्यतिभेदात् तदनुपपत्तिः। प्रधानपुरुषादीनामुपादानभूता येऽणवस्तेषां सद्भावानुपपत्तिः परमाकाशव्यतिभेदात्। यदि परमाकाशसमावेशस्तेषामन्तर्वहिर्न स्यात् तदा आकाशासर्व्वगतत्वं वा।०। तत्राप्याह वादी। अन्तर्वहिश्च कार्य्यस्य कारणान्तरवचनादकार्य्ये तदभावः। कार्य्यस्य वस्तुनोऽनेककारणान्तरवचनात् तैः कारणान्तरैरारभ्यमाणे कार्य्ये त्वाकाशमन्तर्गतं वहिश्च भवति। न चैषां प्रधानपुरुषादीनामुपादानस्य कारणान्तरवचनमस्ति प्रसिद्धत्वादकार्य्यत्वं ततस्तदणूनामन्तराकाशं परव्योमापि नास्ति ततो न सद्भावानुपपत्तिः। परव्योम्नश्चाकाशस्य नासर्व्वगतत्वम्। सर्व्वसंयोगशब्दविभवाच्च सर्व्वगतम्। अव्यूहाविष्टम्भविभुत्वानि चाकाशधर्म्माः। अण्ववयवस्याणुतरतमत्वप्रसक्तेरणोः कार्य्यत्वप्रतिषेधः कार्य्यकारणवस्तुनोः परिमाणभेददर्शनात्। इति चेन्न कार्य्यकारणयोः परिमाणभेदादेव हि। मूर्त्तिमताञ्च संस्थानोपपत्तेरवयवासद्भावः। परमविद्यादिप्रधानान्तानामुपादानं गायत्री-

स्थानि तेजोऽबन्नानि तेषामव्याकृतमूर्त्तिमतां संस्थानस्य विभिन्नस्योपपत्तेरवयव-सद्भावः। संयोगोपपत्तेश्च। तेषां त्रयाणां संयोगश्चोपपद्यते ततस्तदवयव-सद्भावः। अनवस्थाकारित्वादनवस्थानुपपत्तेश्चाप्रतिषेधः। तैस्तेजोऽबन्नैस्त्रिवृत्-त्रिवृद्भूतैः परमविद्यादीनामवस्थाविभिन्नताकारित्वादन्यथा परमविद्यादीना-मवस्थाभेदानुपपत्तिः स्यात् तस्माच्च तेषां तेजोऽबन्नानां संयोगप्रतिषेधो न भवतीति। यावान् संवत्सराणां परार्द्धकालः प्रधानादिपरमविद्यान्तानामायुरुक्त-स्तावद्वर्षं परमात्मनः शिवस्यैकमहस्तावती रात्रिरित्येवमहोरात्राणां षष्ट्युत्तर-शतत्रयं वर्षमेकं तथाविधवर्षाणां शतमायुः परमात्मनः शिवस्य तावत्कालं शिवस्य परमव्योमलक्षणावयवावयविप्रसक्तिः शिवायाश्च गायत्र्या लोहितशुक्लकृष्ण-वल्लक्षणाया अवयवावयविप्रसक्तिरा प्रलयात्। महानिर्व्वाणाख्यप्राकृत-प्रलयपर्य्यन्तम्। पूर्णे च तथाविधवर्षशते पूर्व्वमेतदादिपरमविद्यासदाशिवान्तं परमात्मनि लीयते तत्परमात्मा शिवो गायत्र्यां शिवायां लीयते गायत्री-स्थानां तेजोऽबन्नानामन्नमप्सु लीयते आपस्तेजसि लीयन्ते तेजः परमाकाश-रूपायां शक्तौ ब्रह्मणि लीयते इति गायत्री तेजोऽबन्नलक्षणहीना शक्तिरूपा अवतिष्ठते। इति महानिर्व्वाणाख्यः प्राकृतः प्रलयः। इत्येतदुक्तं श्वेताश्वतरोप-निषदि मन्त्रे। यत्रकोऽवर्णो बहुधा शक्तियोगाद् वर्णाननेकान् विहितार्थो दधाति। विचैति चान्ते विश्वमादौ स देवः स नो बुद्ध्या शुभया संयुनक्तु। इति। अग्निना चोक्तं वशिष्ठाय। सत्तामात्रात्मकेऽज्ञेये ज्ञानात्मन्यात्मनः परे। आत्यन्तिकं लयं वक्ष्ये ज्ञानादात्यन्तिको लयः। इति। सत्तामात्रे ज्ञानात्मके परे ब्रह्मणि खल्वज्ञेये शक्तिमात्रे परमस्यात्मनः शिवगायत्र्यु-भयात्मकस्य लय इति प्रकरणात्। ज्ञानात् तत्त्वज्ञानादर्व्वागेभ्यः प्रलयेभ्यो निर्व्वाणमुक्तिरात्यन्तिकः प्रलयो भवतीति।

तत्राह वादी—न प्रलयोऽणुसद्भावात्। नैवं प्रलयो भवत्यणुसद्भावात्। एत-दादीनामणवो हि शक्तौ वर्त्तन्ते। इति।०। तत्राह प्रलयवादी। एतदादीनां येऽणवस्तेषां तदा त्रुटिः स्यात् ततो नाणुसद्भावः।०। तत्राह वादी। परं वा त्रुटे-रिति। तेषाम् अणूनां त्रुटेर्व्वापरमसद्रूपाणामणूनां सद्भावात्। तदुक्तं तैत्तिरी-योपनिषदि। असद् वा इदमग्र आसीदिति।०। तत्राह प्रलयवादी। आकाशव्यति-भेदात् तदनुपपत्तिः। परममहाकाशरूपायाः शक्तेस्तेषामणूनामन्तर्वहिश्च समा-वेशात् सद्भावानुपपत्तिः। आकाशासर्व्वगतत्वं वा।०। तत्राह वादी। अन्तर्वहिश्च कार्य्यस्य कारणान्तरवचनादकार्य्ये तदभावः। न हि तेऽसद्रूपा अणवः

**इति त्रिकाराणां प्रागुत्पत्तिहेतुरुक्तो भवति। एवंवादिनं भगवन्तमात्रेयमग्निवेश उवाच, किं नु खलु भगवन् नियतकाल-प्रमाणमायुः सर्व्वं न वेति ॥ १७ ॥**

कार्य्यास्तेषामन्तर्न शक्तिराकाशरूपास्ति। न चासर्व्वगतत्वं शक्तेराकाशरूपायाः। सर्व्वसंयोगशब्दविभवाच्च सर्व्वगतत्वम्। अव्यूहाविष्टम्भविभुत्वानि चाकाश-धर्म्मास्तेन तेषामणूनां कार्य्यत्वप्रतिषेधः।०। तत्राह प्रलयवादी। मूर्त्तिमताञ्च संस्थानोपपत्तेरवयवसद्भावः। तैरणुभिर्हि कार्य्ये मूर्त्तिरारभ्यते ततस्ते मूर्त्तिमन्तस्तस्मात् तेषामवयवाः सन्ति। संयोगोपपत्तेश्च। तैरनेकैर्मिलिता यतः कार्य्ये मूर्त्तिरारभ्यते ततः संयोग उपपद्यते तस्मात् तेषामवयवाः सन्ति। अनवस्थाकारित्वादनवस्थानुपपत्तेश्चाप्रतिषेधः। तेषां परस्परमेलनेन कार्य्येषु अवस्थाविभिन्नत्वकारित्वम्। न चेदवस्थाभेदस्य कार्य्येष्वनुपपत्तिस्तस्मात् संयोगस्य प्रतिषेधो न भवतीति प्रलयोऽस्त्येव न नास्तीति। ११।

तत्राप्याह वादी। बुद्ध्या विवेचनात् तु भावानां याथात्म्यानुपलब्धेस्तन्त्वप-कर्षणे पटसद्भावानुपलब्धिवत् तदनुपलब्धिः।१२। बुद्ध्या विवेचनात् तु गायत्र्यन्तानां प्रलये भावानां याथात्म्यस्यानुपलब्धिर्यदवशिष्यते। यथा—पटस्य तन्तूनामपकर्षणे पटस्य यदवशिष्यते तस्यानुपलब्धिः, परन्तु किमपि वर्त्तत एव। तस्मादणुसद्भावान्न प्रलयः। उक्तञ्च। असद् वा इदमग्र आसीदिति। तत्राह प्रलयवादी। व्याहतत्वादहेतुः। तन्त्वपकर्षणे पटसद्भावानुपलब्धिवदुक्त-रूपेण प्रलये यदवशिष्यते तस्यानुपलब्धिरित्यहेतुः। व्याहतत्वात्। पटस्य तन्त्वपकर्षणेऽवशेषाभावात् ततोऽवशिष्टं वर्त्तते इत्युक्तं व्याहतम्।१३। तदाश्रय-त्वादपृथग्ग्रहणम्।१४। कार्य्यं कारणाश्रितं तन्त्वाश्रितः पटस्तन्त्वपकर्षणे पटो नास्ति। यतः कार्य्यकारणयोर्न पृथग्ग्रहणम्। कस्मात्? प्रमाणतश्चार्थ-प्रतिपत्तेः।१५। प्रत्यक्षादिप्रमाणतो हि पटस्यासद्भावप्रतिपत्तिः। प्रमाणानुप-पत्त्युपपत्तिभ्याम्।१६। भावानामस्तित्वं नास्तित्वं प्रमाणैश्चोपपद्यते प्रमाणैश्च नोपपद्यते इति। इत्येवं महानिर्व्वाणे या शक्तिर्ब्रह्म वर्त्तते सा मूला प्रकृतिः। सा तु न सर्गावस्था। येषां सर्गस्तेषां प्रलय इति ॥ १६ ॥

गङ्गाधरः—इतीत्यादि। एवंवादिनं भगवन्तमात्रेयमग्निवेश उवाच—किन्नु खल्वित्यादि। नु भो भगवन् नियतकालप्रमाणमायुः किमनियतकाल-प्रमाणम्? इति संशयः ॥ १७ ॥

तं भगवानुवाच—

इहाग्निवेश भूतानामायुर्युक्तिमपेक्षते।
दैवे पुरुषकारे च स्थितं ह्यस्य बलाबलम्॥
दैवमात्मकृतं विद्यात् कर्म्म यत् पूर्व्वदैहिकम्।
स्मृतः पुरुषकारस्तु क्रियते यदिहापरम्॥
बलाबलविशेषोऽस्ति तयोरपि च कर्म्मणोः।
दृष्टं हि त्रिविधं कर्म्म हीनं मध्यममुत्तमम्॥

गङ्गाधरः—तं भगवानात्रेय उवाच—इहेत्यादि। इह कर्म्मक्षेत्रे भूर्लोके भूतानामायुर्युक्तिं तर्कमपेक्षते। यौक्तिककालप्रमाणमायुः। युक्तिमाह—दैव इत्यादि। दैवमिति पूर्व्वदैहिकं पूर्व्वजन्मनि देहवता खल्वात्मना यच्छुभमशुभं वा कर्म्म कृतं तत्फलं धर्म्माधर्म्मरूपं दैवम्। इह तु जन्मनि यच्च शुभमशुभं वा कर्म्म क्रियते तत्कर्म्मफलं धर्म्माधर्म्मरूपं पुरुषकारः स्मृतः। ननु दैवपुरुषकारौ सर्व्वे कुर्व्वन्ति न कथं सर्व्वेषां समानमायुः प्रमाणं भवतीत्यत आह—बलाबलेत्यादि। तयोः शुभाशुभरूपदैवपुरुषकारयोर्बलाबलविशेषोऽप्यस्ति। कुतो बलाबलमित्यत

चक्रपाणिः—युक्तिमपेक्षत इति दैवपुरुषकारयोर्युक्तिमपेक्षते नियतत्वेऽनियतत्वे वेत्यर्थः। बलञ्चाबलञ्च बलाबलम्, तत्रायुषो नियतत्वेन बलमनियतत्वेनाऽबलं ज्ञेयम्। यद्यपि पौर्व्वदैहिकं कर्म्मास्थिरत्वेन गतम्, तथापि तज्जनितादृष्टस्य विद्यमानत्वात्, तद्द्वारा तत् कर्म्म कारणं भवत्येवेहजन्मन्यपि। पुरुषकारस्त्विह जन्मन्यपि कृतं कर्म्म सामान्येनोच्यते। तत्र बलिमङ्गलादि अदृष्टजननत्वाद् व्याप्रियते, तथा भेषजादि रसरुधिरादिद्वारा। उदारयोरिति प्रशस्तत्वेनोत्तमयोः। दीर्घस्येति रसायनादिना शतादपि दीर्घस्य। सुखस्येति नीरोगत्वेन। नियतस्येति युगनियतस्य, कलौ वर्षशतप्रमाणस्येत्यर्थः। शतादर्व्वाङ् नियतमपीह नियतशब्देनोच्यते, तेन न तत्र तस्य दैवपुरुषकारजन्यत्वं घटते, तथापि, तस्याऽप्रशस्तदैवपुरुषकारजन्यत्वात् दैवपुरुषकारजन्यत्वं भवतीति युक्तम्; किञ्च अनियतायुष एव पुरुषा रसायनाधिकारिणो भवन्ति नियतायुषं प्रति रसायनस्याकिञ्चित्करत्वात्। रसायनादिकृतञ्चायुरनियतं प्रशस्तत्वेन प्रशस्तदैवपुरुषकारजन्यं भवतीति युक्तम्। किंवा, दीर्घत्वे सति नियतस्यायुषो हेतुरिति योजना। तेन, युगनियतञ्च शतवर्षम्, तथा तदधिकञ्चानियतं महता कर्म्मणैव क्रियते। पुरुषकारेण तु महतास्य सुखित्वं रोगोपघातात् क्रियते। रसायनेन च जरादिव्याधिप्रतिघातः क्रियते। रसायनलभ्यमप्यायुर्बलवत् कर्म्मनियतमेवेति भावः।

तयोरुदारयोर्युक्तिर्दीर्घस्य ससुखस्य च ।
नियतस्यायुषो हेतुर्विपरीतस्य चेतरा ॥
मध्यमा मध्यमस्येष्टा——————।
——————कारणं शृणु चापरम् ॥
दैवं पुरुषकारेण दुर्ब्बलं ह्युपहन्यते ॥
दैवेन चेतरत् कर्म्म विशिष्टेनोपहन्यते ।
दृष्ट्वा यदेके मन्यन्ते नियतं मानमायुषः ॥

आह—दृष्टमित्यादि। तयोश्च का युक्तिरित्यत आह—तयोरित्यादि। तयोर्दैवपुरुषकारयोरुत्तमयोर्धर्म्मयोर्दैवपुरुषकारयोर्युक्तिर्योगो दीर्घस्य सुखान्वितस्य नियतस्यहितस्य चायुषो हेतुर्भवति। धर्म्मो हि सर्व्वत्र शुभस्य हेतुरधर्म्मो नाशस्य चेति। यथाधर्म्मश्च वृद्धिह्रासावायुषः सर्व्वत्र। विपरीतस्य ह्रस्वस्य दुःखान्वितस्यानियतस्य चायुषो हेतुरितरा हीनयोर्दैवपुरुषकारयोः पुण्ययोः पापयोश्चोत्तमयोर्युक्तिर्योगः। एवं मध्यमस्यादीर्घाह्रस्वस्य सुखदुःखान्वितस्य नियतानियतस्य चायुषो हेतुर्मध्यमामध्यमयोर्दैवपुरुषकारयोः पुण्ययोर्युक्तिः पापयोश्च मध्यमयोः पुण्यहीनयोर्युक्तिस्तन्मध्यमादल्पमध्यमस्यायुषो हेतुरिति। ननु दैवपुरुषकारयोः पुण्यपापयोस्त्रिविधयोर्मिश्रणे कीदृशम् आयुः स्यादित्यत आह—कारणं शृणु चापरमिति। तद् यथा। दैवमित्यादि। दुर्ब्बलं दैवं पुण्यं पापं वा पुरुषकारेण प्रबलेन विरोधिना यत उपहन्यते। दुर्ब्बलं दैवं पुण्यं प्रबलेन पुरुषकारेण पापेनोपहन्यते पापञ्च दैवं दुर्ब्बलं प्रबलेन पुण्येन पुरुषकारेणोपहन्यते। तस्मादुभयं दृश्यते इति। इह जन्मनि पापकारी स्वल्पायुर्दुःखान्वितोऽनियतायुष्कश्च दुर्ब्बलदैवाख्यपुण्योपघातात्। इह जन्मनि पापकारी दीर्घायुश्च सुखान्वितश्च नियतायुष्कश्च दैवाख्यप्रबलपुण्येन दुर्ब्बलपुरुषकारपापोपघातादिति। एवं दैवेन विशिष्टेन प्रबलेन

विपरीतस्य दीर्घत्वेनानियतस्य तथा रोगयुक्तत्वेनासुखस्य। इतरेति हीनयोर्दैवपुरुषकारयोर्युक्तिः इत्यर्थः। मध्यमा मध्यमस्य दीर्घत्वेनादीर्घत्वेनानियतस्य, तथा सुखासुखत्वेनानियतस्यायुषो मध्यमयोः कर्म्मणोर्युक्तिरित्यर्थः। कारणमिति दैवपुरुषकारयोः परस्परबाधने उपपत्तिम् इत्यर्थः।

दैवमित्यादि। दुर्ब्बलमायुर्जननं दैवं बलवता मारकेण दृष्टाऽपथ्यभोजनादिना विपरीत-

कर्म्म किञ्चित् क्वचित् काले विपाके नियतं महत्।
किञ्चित्त्वकालनियतं प्रत्ययैः प्रतिबोध्यते ॥ १८ ॥

पुण्येन पापेन वा तदितरत् पुरुषकाराख्यं कर्म्म पापं पुण्यं वा विरोधिनोपहन्यते। तस्माच्चोभयं दृश्यते। इह जन्मनि विपुलपापकारी दीर्घायुः सुखान्वितो नियतायुष्कश्च। प्रबलदैवेन पुण्येनेह कर्म्मकृतपापोपघातात्। इह जन्मनि पुण्यकारी स्वल्पायुर्दुःखान्वितोऽनियतायुष्कश्च। प्रबलेन दैवेन पापेनेह जन्मनि कृतकर्म्मपुण्योपघातात् इति। अत्रापरमुनिमतमाह—दृष्ट्वेत्यादि। इत्येवमुक्तप्रकारां युक्तिं दृष्ट्वा खल्वेके मुनयो यदायुषो नियतं मानं मन्यन्ते, तत् खलु किञ्चित् किमपि कर्म्म महत् महाफलं क्वचित् काले विपाके परिणामे नियतं भवति। तस्मान्नियतमायुः स्यादिति। किञ्चित्तु महत् कर्म्म विपाके परिणामे अकालनियतं कालनियतं न भवति तस्मादनियतकालप्रमाणमायुरिति द्वयं प्रत्ययैः प्रतीतिहेतुभिरुपदेशप्रत्यक्षानुमानयुक्तिभिः प्रतिबोध्यते इति॥ १८ ॥

मरणकार्य्यजननादुपहन्यते। विशिष्टेन बलवता, इतरत् कर्म्म दृष्टं पुरुषकाराख्यम्, उपहन्यते पराभूयते। एतद्दैवकर्त्तृकदृष्टपराभवदर्शनाद् दैवनियतमेव सर्व्वमायुरिति केचिन्मन्यन्त इत्याह—दृष्ट्वेत्यादि। यदि दृष्टमायुः कारणं स्यात्, न तदा भेषजैः सम्यगुपपादितानां मृत्युः स्यात्। यतश्च सत्यपि चिकित्सिते कर्म्मवशात् तु मृत्युर्भवति। तेन यत्रापि चिकित्सा जीवयतीति मन्यन्ते, तत्रापि कर्म्मैवास्ति जीवनकारणमिति दृष्टशक्तित्वादवधारयाम इति भावः।

दैवपुरुषकारयोरुभयोरपि बाध्यत्वं दर्शयन्नेकान्तेन नियतायुःपक्षं व्युदस्यति—कर्म्मेत्यादि। न क्वचित् कर्म्म न भवति। यदुच्यते—"नाभुक्तं क्षीयते कर्म्म कल्पकोटिशतैरपि। अवश्यमेव भोक्तव्यं कृतं कर्म्म शुभाशुभम्॥" इति। किञ्चित्त्वकालनियतमिति, यथा—इदं मारकं कर्म्म न तु क्वचित् काले पञ्चविंशवर्षादौ नियतम्, तेन यस्मिन् काले पुरुषकाराख्यं दृष्टकर्म्मानुगुणं प्राप्नोति, तस्मिन् काले सहकारिसान्निध्योपबृंहितबलं मारयति, यदा तु दृष्टमपथ्यसेवादि न प्राप्नोति, न तदा मारयति। प्रत्ययैः प्रतिबोध्यत इति दृष्टकारणैरुद्रिक्तं क्रियते। ये तु ब्रुवते—किञ्चित् कर्म्म कालनियतम्, यदा पच्यते, तस्मिन् काले पच्यत एवेति कालनियमः। विपाकनियतन्तु—इदं कर्म्म विपच्यत एव, न तु विपच्यत इति न। कालविपाकनियतन्तु यथा—इदं कर्म्म अस्मिन्नेव काले विपच्यत एवेति। एतच्च कालविपाकनियतत्वात् बलवदुच्यते। एतदेव दृष्टाबाधनीयमिति। तेषां मते अभुक्तमपि क्षीयते दुर्व्वलकर्म्म प्रायश्चित्तादिनेति बोद्धव्यम्, परं विपर्य्ययेऽपि तदा किञ्चित्त्वकालविपाकनियतमिति वक्तव्यं स्यात्। किञ्चित्त्वकालनियतवचनात् तु अकालनियतमिति ॥ १७।१८ ॥

तस्मादुभयदृष्टत्वात् तदेकान्तग्रहणमसाधु, निदर्शनमपि चात्रोदाहरिष्यामः ।

यदि हि नियतकालप्रमाणमायुः सर्व्वं स्यात्, तदायुष्कामाणां न मन्त्रौषधिमणिमङ्गलबल्युपहारहोमनियमप्रायश्चित्तोपवासस्वस्त्ययनप्रणिपतनगमनाद्याः क्रिया इष्टयश्च प्रयुज्येरन् । नोद्भ्रान्तचण्डचपलगोगजोष्ट्रखरतुरङ्गमहिषादयः पवनादयश्च दुष्टाः परिहार्य्याः स्युः, न प्रपातगिरिविषमदुर्गाम्बुवेगास्तथा न प्रमत्तोन्मत्तोद्भ्रान्तचण्डचपलमोहलोभाकुलमतयः, नारयो न प्रवृद्धोऽग्निर्न च विविधविषाश्रयाः सरीसृपोरगादयः, न साहसम्, नादेशकालचर्य्या, न च नरेन्द्रप्रकोपः ; इत्येवमादयो भावा नाभावकराः स्युः, आयुषः सर्व्वस्य नियतकालप्रमाणत्वात् ।

गङ्गाधरः—अत्र नियतकालप्रमाणमायुरिति मतं दूषयितुमाह—तस्मादित्यादि । तस्मात् कस्यचित् कर्म्मणो महतो विपाके कचित् काले नियमात् । कस्यचिन्महतः कर्म्मणो विपाके कालानियमादुभयदृष्टत्वादुभयस्य नियतकालप्रमाणस्यानियतकालप्रमाणस्य चायुषो दृष्टत्वात् तदेकान्तग्रहणं तन्नियतकालप्रमाणमेवायुरित्यवधारणेन ग्रहणमसाधु । तदुभयस्यायुषो निदर्शनमपि चोदाहरिष्यामः ।

ननु कस्मादुभयथायुर्भवतीत्यत आह—यदि हीत्यादि । हि यस्माद् यदि नियतकालप्रमाणमेव सर्व्वमायुः स्यात् तदायुष्कामाणां सम्बन्धे मन्त्राद्याः क्रिया इष्टयश्च याज्ञिकादिभिर्न प्रयुज्येरन् । उद्भ्रान्तचण्डचपलगवादयश्च परिहार्य्या न स्युः । इत्येवमादयो भावा उद्भ्रान्तचण्डचपलगवादयो भावाः सन्निहितस्यापि पुरुषस्याभावकरा न स्युः, सर्व्वस्यैवायुषो नियतकालप्रमाणत्वात् ।

चक्रपाणिः—अतः परमुत्तरमुपसंहरति,—तस्मादित्यादि । उभयदृष्टत्वादिति दैवस्य पुरुषकारेण तथा पुरुषकारस्य दैवेन बाधदर्शनात् । एकान्तग्रहणमिति नियतमेवायुः सर्व्वमिति चेत्यर्थः । निदर्श्यतेऽभिमतः पक्षः साध्यतेऽनेनेति निदर्शनं युक्तिरित्यर्थः । अत्रेत्यनैकान्तिकपक्षे ; यदीत्यादिना प्रकरणेनायुर्जनकस्य दृष्टस्य हेतोः सेवा, तथा आयुर्व्विरोधकस्य हेतोरसेवा

न चानभ्यस्ताकालमरणभयनिवारकाणामकालमरणभयमागच्छेत् एव प्राणिनाम्। व्यर्थाश्चारम्भकथाप्रयोगबुद्धयः स्युः सर्व्वेषां महर्षीणां रसायनाधिकारे।

नापीन्द्रो नियतायुष्कं शत्रुं वज्रेणाभिहन्यान्नाश्विनावेनं भेषजेनोपचरेताम् *, न वर्षयो यथेष्टमायुस्तपसा प्राप्नुयुर्न च विदितवेदितव्या महर्षयः ससुरेशाः पश्येयुरुपदिशेयुराचरेयुर्वा,

अपरश्चाह—न चेत्यादि। यः पुरुषैरकालमरणभयनिवारकाः प्रयोगा नाभ्यस्तास्तेषामकालमरणभयं नागच्छत्। नैवागच्छेदिति चेत्, तदा महर्षीणां रसायनाधिकारे खल्वकालमरणवारणार्थं चिकित्सादिक्रियारम्भकथाप्रयोग-बुद्धयश्च व्यर्थाः स्युरिति।

नापीत्यादि स्पष्टार्थम्। व्यथा एव चेति चेत् तदोच्यते। इन्द्रोऽपि नियतायुष्कं वज्रेण नाभिहन्तुं शक्नुयान्नियतायुष्कत्वात् सर्व्वेषाम्। अश्विनौ चानियतायुष्कमायुर्वृद्ध्यर्थं भेषजेन नोपचरेताम्। ऋषयश्च तपसा यथेष्ट-मायुर्यदापुस्तन्नाप्नुयुः। विदितवेदितव्या महर्षयः सुरेशश्चायुर्वर्द्धनानि रसायना-दीनि विदित्वा सम्यक् दृष्ट्वा चोपदिश्योपचेरुर्न तानि सम्यक् पश्येयुरुप-दिशेयुराचरेयुर्वा इति। अत्र एके त्वाहुः। चतुष्पात् सकलो धर्म्मः सत्यञ्चैव कृते युगे। नाधर्म्मेणागमः कश्चित् पुरुषं प्रतिवर्त्तते। अरोगाः सर्व्व-सिद्धार्थाश्चतुर्वर्षशतायुषः। कृते त्रेतादिषु ह्येषामायुर्ह्रसति पादशः। इति मनुना प्रतियुगं धर्म्मपादह्रासाच्चतुर्वर्षशतायुषः पादपादह्रासः प्रतियुगमुक्त्वा नियतप्रमाणमायुरुक्तं, तत् पुनर्नियतानियतायुर्वचनेनानेन विरुध्यते इति। तत्रोच्यते मनुनापि प्रतियुगं धर्म्मपादह्रासादायुषश्च चतुर्वर्षशतस्य पादह्रासवचनेनैवानियतायुरुक्तं प्रतियुगमायुःप्रमाणभेदात्। तत्रापि प्रतियुगं य आयुषः प्रमाणनियमः स खलु धर्म्मपादनिबन्धन एव सामान्यत उक्तस्तेनैव यो यथा धर्म्माधर्म्मावाचरेत् तस्य तथायुर्भवेदिति च ज्ञापितमिति

सर्व्वप्रामाणिकजनानामविवादसिद्धत्वाद् दर्श्यते, सा च, यदि नियतमायुः स्यात्, तदा अकिञ्चित्करी स्यात् अनियते चायुषि किञ्चित्करी च स्यात्। तस्मादनियतमप्यायुर्भवतीति भावः। न च सर्व्वत्रैवादृष्टमेव कारणम्, दृष्टस्यापि तृप्तृतादेर्विरेकादिकर्तृत्वं व्यक्तमेव। अदृष्टस्यैव कारणत्वं

* नाश्विनावार्त्तं भेषजेनोपपादयेतामिति चक्रः।

अपि च सर्व्वचक्षुषामेतत् परं यद्दिव्यचक्षुः * इद-
ञ्चाप्यस्माकं तेन प्रत्यक्षम्। यथा पुरुषसहस्राणा-
मुत्थायोत्थायाहवं कुर्व्वतामकुर्व्वताञ्चातुल्यायुष्ट्वम्। तथा
जातमात्राणामप्रतिकारात् प्रतीकाराच्चाविषविषप्राणिनाञ्चापि
अतुल्यायुष्ट्वमेव। न च तुल्यो योगः क्षेमः उदपानघटानां
चित्रघटानाञ्चोत्सीदताम्। तस्माद्धितोपचारमूलं जीवितम्, अतो
विपर्य्ययान्मृत्युः। अपि च देशकालात्मगुणविपरीतानाञ्च कर्म्म-
णाम् † आहारविकाराणाञ्च क्रमोपयोगः सम्यक्। त्यागः सर्व्वस्य
चायोगमिथ्यायोगातियोगानां सन्धारणमनुदीर्णानामसन्धारणम्
उदीर्णानाञ्च गतिमताम्। साहसानाञ्च वर्ज्जनमारोग्यानुवृत्तौ
हेतुमुपलभामहे सम्यगुपदिशामः सम्यक् पश्यामश्चेति ॥ १६ ॥

न विरोध इति। न हीन्द्राश्विनमहर्षयो मन्वादयो वा नासम्यक् पश्यन्ति कस्मादित्यत आह—अपि चेत्यादि। सर्व्वचक्षुषां ज्ञानानां मध्ये यदिदं दिव्यं चक्षुर्योगसिद्धावाविर्भूतं दिवः परमव्योम्नः परमात्मतस्तत् तु परं चक्षुः तेन दिव्यचक्षुषेन्द्रादयो मन्वादयश्च दृष्ट्वा नियतानियतमायुरुपदिदिशुः। तथा-स्माकञ्च प्रत्यक्षमपीदमित्यादि स्पष्टार्थम्। न च तुल्ययोगः क्षेमः सर्व्वेषाम् उदपानघटानां यथोत्सीदतां योगः क्षेमो न तथा योगश्चित्रघटानां क्षेम इति। तस्मादित्यादि स्पष्टम् ॥ १९ ॥

दृष्टकार्य्यानुपपत्तेः कल्पनीयम्। तेनादृष्टस्य कारणत्वं दृष्टकारणमूलमित्यर्थः। तेन, न च दृष्टकारणोच्छेदः कल्पयितुमपि पार्य्यते। इष्टयो यज्ञाः। उरसा अत्यर्थसर्पणशीला उरगाः। आचरेयुर्भेषजमिति शेषः। चक्षुषां परमिति अत्यर्थाभ्रान्तत्वेन। अतुल्यायुष्ट्वमिति, ये आहवं कुर्व्वते, ते शस्त्रेण म्रियन्ते ये तु न कुर्व्वते, ते शस्त्रेण प्रायो न म्रियन्ते। प्रती-कारादप्रतीकाराच्चातुल्यायुष्ट्वमिति योजना। न च तुल्यमित्यादौ चित्रघटोऽयं चित्रित एव स्थाप्यते, स हि पानीयवहनादिप्रत्यवायहेत्वभावात् चिरं तिष्ठति। उदपानघटस्तु जलसम्बन्धात् तथा वहनसमये पतनादिना च शीघ्रमुत्सीदति। हितोपचारमूलमपि क्रियोपयोगं सम्यगिति योजना। सर्व्वातियोगसन्धारणं सर्व्वातियोगानां वर्ज्जनम् ॥ १९ ॥

---

* ऐन्द्रं चक्षुरिति पाठान्तरम्।

† आहारविहाराणाञ्च क्रियोपयोगं सम्यक् सर्व्वातियोगसन्धारणमसन्धारणमिति पाठश्चक्रसम्मतः।

अतः परमग्निवेश उवाच—एवं सत्यनियतकालप्रमाणायुषा भगवन् कथं कालमृत्युरकालमृत्युर्वा भवतीति॥ २०॥

अथ तमुवाच भगवानात्रेयः—श्रूयतामग्निवेश, यथा यान-

गङ्गाधरः—एवं गुरुणायुषो नियतकालप्रमाणत्वानियतकालप्रमाणत्वे द्वे स्थापिते श्रुत्वा अतः परं संशयानोऽग्निवेश उवाच—अतः परमित्यादि। एवं सतीति नियतकालप्रमाणायुषां कालसम्पूरणे मृत्युः कालमृत्युर्भवति अनियतकालप्रमाणायुषां कथं कालाकालमृत्युर्भवतीति॥ २०॥

गङ्गाधरः—तं पृष्टवन्तमुवाचात्रेयः—श्रूयतामित्यादि। अत्र शरीरविचयशारीरे वक्ष्यमाणं स्मर्त्तव्यम्। तद् यथा—यः कश्चित् म्रियते स सर्व्वः काल एव म्रियते। न हि कालच्छिद्रमस्तीत्येके भाषन्ते। तच्चासम्यक् न ह्यच्छिद्रता च्छिद्रता वा कालस्योपपद्यते, कालस्वलक्षणभावात्। तथाहुरपरे। यो यदा म्रियते, स तस्य नियतो मृत्युकालः। सर्व्वभूतानां हि कालः सत्यः समक्रियत्वादिति। तदपि चान्यथार्थग्रहणम्। न हि कश्चिन्न म्रियत इति समक्रियः कालस्त्वायुषः प्रमाणमधिकृत्योच्यते। यो यदा म्रियते स तस्य नियतो मृत्युकाल इति यस्येष्टं तस्य सर्व्वे भावा यथास्वं नियतकाला भविष्यन्ति, तच्च नोपपद्यते। प्रत्यक्षं ह्यकालाहारवचनकर्म्मणां फलमनिष्टं विपर्य्यये चेष्टम्। प्रत्यक्षतश्चोपलभ्यते खलु कालाकालयुक्तिस्तासु तास्ववस्थासु तं तमर्थमभिसमीक्ष्य। तद् यथा—कालोऽयमस्य व्याधेराहारस्यौषधस्य प्रतिकर्म्मणो विसर्गस्य चाकाले वा। लोकेऽप्येतद् भवति। काले देवो वर्षत्यकाले च वर्षति। काले शीतमकाले च शीतम्। काले तपत्यकाले च तपति। काले पुष्पफलमकाले च पुष्पफलमिति तस्माद् उभयमस्ति काले मृत्युरकाले च नैकान्तिकमत्र। यदि ह्यकालमृत्युर्न स्यान्नियतकालप्रमाणमायुः सर्व्वं स्यादेवं गते हिताहितज्ञानमकारणं स्यादित्युक्तम्।

चक्रपाणिः—एवं सतीत्यादि। यत् तावत् कालनियतम्, तस्याकाले मरणाभावादेव नाकालमृत्युरस्ति। यत्त्वकालनियतम्, तस्यानियतत्वात् कथं कालमृत्युः अकालमृत्युर्वा भवति? अनियते ह्यायुषि कालनियमो नास्ति, नियमाभावाच्चाक् अकालमृत्युरिति तु प्रश्नार्थः॥ २०॥

चक्रपाणिः—यश्चाकालमिति यावता कालेन प्रत्यवायशून्यः यस्याक्षस्य भयो भवति, तस्मिन्

समायुक्तोऽक्षः प्रकृत्यैवाक्षगुणैरुपेतः स्यात्, स च सर्व्वगुणोपपन्नो वाह्यमानो यथाकालं स्वप्रमाणक्षयादेवावसानं गच्छेत्, तथायुः शरीरोपगतं बलवत्प्रकृत्या यथावदुपचर्य्यमाणं स्वप्रमाणक्षयादेवावसानं गच्छति, स मृत्युः काले। यथा च स एवाक्षोऽतिभाराधिष्ठितत्वात् विषमपथादपथादक्षचक्रभङ्गाद् वाह्यवाहकदोषादणिमोक्षादनुपाङ्गात् पर्य्यासनात् * चान्तरावसानं गच्छति, तथायुरप्ययथाबलमारम्भाद् अयथाग्न्यभ्यवहाराद् विधार्य्यवेगाविधारणाद् † विषमशरीरन्यासात् असत्संश्रयाद् भूतविषवाय्वग्न्युपतापात् अभिघातात् आहारप्रतीकारवर्ज्जनाच्चान्तरा अवसानमेवापद्यते, स मृत्युरकाले। तथा ज्वरादीनप्यातङ्कान् मिथ्योपचरितान् अकालमृत्यून् पश्याम इति॥ २१॥

अथाग्निवेशः पप्रच्छ—किं नु खलु भगवन् ज्वरितेभ्यः

यथा हीत्यादि कालमृत्योर्दृष्टान्तः। अक्षो धुरीति लोके। प्रकृत्या स्फुटितत्रुटितक्रिमिभक्षणादिदोषाभावेन वर्त्तुलत्वदृढ़त्वादिभिरक्षगुणैः। यथा चेत्यादिना त्वकालमृत्योर्दृष्टान्तः। अणिमोक्षात् चक्रस्थापनकीलमोक्षात्। उपाङ्गानामङ्गसमीपस्थानामङ्गानाम्। पर्य्यासनाद्विपर्य्यासात्। अन्तरा त्वर्व्वाग् यथाकालात्॥ २१॥

गङ्गाधरः—अथ ज्वरादीनां मिथ्योपचारादकालमरणप्रसङ्गेन ज्वरितेभ्य

एवेत्यर्थः। स्वप्रमाणक्षयादेवेति युगानुरूपवर्षशतक्षयादित्यर्थः। अपथादिति सर्व्वथा अमार्गगमनात्। अणिमोक्षादिति कीलमोक्षात्। पर्य्यसनं परिक्षेपः, अनुपाङ्गादिति स्नेहादानात्। मिथ्योपचारितानित्यसम्यक्चिकित्सितान्। अकालमृत्यूनिति अकालमृत्युकरान्॥ २१॥

चक्रपाणिः—सम्प्रति मिथ्योपचारश्रुत्या उष्णतोयं ज्वरेऽप्याग्नेये मिथ्योपचारः स्यादिति

* पर्य्यसनादिति चक्रः।

† विषमाभ्यवहरणात् अतिमैथुनात् उदीर्णवेगविनिग्रहात् इत्यधिकपाठो दृश्यते ग्रन्थान्तरेषु।

पानीयमुष्णं प्रयच्छन्ति भिषजो भूयिष्ठं न तथा शीतम्? अस्ति च शीतसाध्योऽपि धातुर्ज्वरकर इति।

तमुवाच भगवानात्रेयः। ज्वरितस्य कायसमुत्थानदेशकालानभिसमीक्ष्य पाचनार्थं पानीयमुष्णं प्रयच्छन्ति भिषजः। ज्वरो ह्यामाशयसमुत्थः, प्रायशो भेषजानि चामाशयसमुत्थानां विकाराणां विरेचनवमनापतर्पणसंशमनान्येव * भवन्ति। पाचनार्थञ्च पानीयमुष्णं तस्मादेतज्ज्वरितेभ्यः प्रयच्छन्ति भिषजो भूयिष्ठम्। तद्धि तेषां पीतं वातमनुलोमयत्यग्निश्चानुदीर्य्यमुदीरयति क्षिप्रञ्च जरां गच्छति श्लेष्माणं परिशोषयति स्वल्पमपि च पीतं तृष्णाप्रशमनायोपकल्पते। तथा युक्तमपि चैतत् नात्यर्थोत्सन्नपित्ते ज्वरे सदाहभ्रमप्रलापातिसारे वा देयम्। उष्णेन हि दाहभ्रमप्रलापातिसारा भूयोऽभिवर्द्धन्ते, शीतेन चोपशाम्यन्तीति॥ २२॥

उष्णपानीयदानं मिथ्योपचारं संशयानः पप्रच्छ। तदाह—अथेत्यादि। यत् पप्रच्छ तद् यथा किं नु खल्वित्यादि।

तमुवाचेति तमग्निवेशम्। ज्वरितस्येत्यादि। ज्वरितस्य नवज्वरिणः। समुत्थानं निदानम्। पाचनार्थं रसदोषपाचनार्थम्। पानीयमुष्णं न तु शृतशीतम्। तद्धीत्यादि। तदुष्णं पानीयं पीतं तेषां नवज्वरिणाम्। तथायुक्तमित्यादि। तथा वातानुलोमनादिगुणयुक्तमप्येतदुष्णं पानीयमत्यर्थोत्सन्नपित्ते ज्वरे सदाहादिके वा न देयं भवति। कस्मात्? उष्णेन हीत्यादि। अत्यर्थोत्सन्नपित्त इति वचनादल्पोत्सन्नपित्ते देयम्, तेन दाहादयो न भूयोऽभिवर्द्धन्ते इति ख्यापितम्॥ २२॥

आशङ्कयाह—किं न्वित्यादि। शीतसाध्योऽपि धातुः पित्तमुष्णरूपमित्यर्थः। पानीयं यस्मात् सर्व्वज्वरेभ्यो दीयते। तस्मात् पानीयमेवात्र पृच्छति। उत्सन्नपित्ते प्रवृद्धपित्ते;

* पाचनवमनापतर्पणसमर्थानीति पाठान्तरम्।

भवति चात्र ।

शीतेनोष्णकृतान् रोगान् शमयन्ति भिषग्विदः ।
ये तु शीतकृता रोगास्तेषामुष्णं भिषग्जितम् ॥ २३ ॥

एवमितरेषामपि व्याधीनां निदानविपरीतं भेषजं भवति । यथापतर्पणनिमित्तानां व्याधीनां नान्तरेण पूरणमस्ति शान्तिः, तथा पूरणनिमित्तानां व्याधीनां नान्तरेणापतर्पणमिति । अपतर्पणमपि च त्रिविधं लङ्घनं लङ्घनपाचनं दोषावसेचनञ्चेति । तत्र लङ्घनमल्पबलदोषाणाम्, लङ्घनेन ह्यग्निमारुतवृद्ध्या वातातपपरीतमिवाल्पमुदकमल्पो दोषः प्रशोषमापद्यते । लङ्घनपाचनं तु मध्यबलदोषाणाम् लङ्घनपाचनाभ्यां हि सूर्य्यसन्तापमारुताभ्यां पांशुभस्मावकीर्णैरिव चानतिबहूदकं मध्यबलदोषः

गङ्गाधरः—भवतीत्यादि । शीतेनोष्णकृतानित्यादि । भिषग्विदो वैद्याः । उष्णकृतान् बाह्यहेतुना तूष्णेन कृतान् रोगान् शीतेन भेषजेन शमयन्ति । एवं शेषार्द्धं व्याख्येयम् ॥ २३ ॥

गङ्गाधरः—एतन्निदर्शनेन सर्व्वव्याधिमुपसंहरति—एवमितरेषामित्यादि । निदानविपरीतमसात्म्येन्द्रियार्थसंयोगप्रज्ञापराधपरिणामानां यस्मात् निदानाज्जायते यो व्याधिस्तस्य शान्त्यर्थं तन्निदानविपरीतं भेषजं भवति । तद् उदाहरति—तथापतर्पणेत्यादि । पूरणं सन्तर्पणम् । किं नु खल्वपतर्पणमित्यत आह—अपतर्पणमपीत्यादि । अल्पबलदोषाणां लङ्घनमपतर्पणम् । तत्र हेतुर्लङ्घनेनेत्यादि । लङ्घनपाचनन्त्विति मध्यबलदोषाणां लङ्घनपाचने अप-

न केवलं ज्वर एव शीतोष्णसमुत्थत्वभेदेन उष्णशीतोपचारः, किन्तु सर्व्वत्रैव व्याधावेवमित्याह—शीतेनेत्यादि । भिषजश्च ते ज्ञानवन्तश्चेति भिषग्विदः ॥ २२ । २३ ॥

चक्रपाणिः—न केवलं शीतोष्णसमुत्थयोरेव परं हेतुविपर्य्ययेण चिकित्सा, किन्त्वपतर्पणादिजेऽपि हेतुविपरीतेनेत्याह—एवमित्यादि । अपतर्पणसन्तर्पणाभ्याञ्च सर्व्वचिकित्सितं गृहीतम् । न ह्यपतर्पणसन्तर्पणाभ्यां विना अन्यद्विधानान्तरमस्ति चिकित्सायाः, येन सर्व्व एवोपक्रमाः सन्तर्पणापतर्पणभेदा एव । अत एव विशेषज्ञानार्थमपतर्पणभेदानाह—अपतर्पणमित्यादि । लङ्घनपाचनमितिवचनेन यत्र पाचनं क्रियते तत्रावश्यं स्तोकमात्रया लङ्घनं क्रियत इति दर्शयति,

प्रशोषमापद्यते। बहुदोषाणां पुनर्दोषावसेचनमेव कार्य्यं, न ह्यभिन्ने केदारसेतौ पल्वलाप्रसेकोऽस्ति तद्वद्दोषावसेचनम्॥ २४

दोषावसेचनन्त्वन्यद्वा भेषजं प्राप्तकालमप्यातुरस्य नैवंविधस्य कुर्य्यात्। तद् यथा अल्पवाद-*-प्रतिकारस्याधनस्यापरिचारकस्य वैद्यमानिनश्चण्डस्यासूयकस्य तीव्रधर्म्मारुचेरतिक्षीणबलमांसशोणितस्यासाध्यरोगोपहतस्य मुमूर्षुलिङ्गान्वितस्य

तर्पणम्। तत्र हेतुलङ्घनेत्यादि। बहुदोषाणामित्यादि बहुदोषाणां बलवद्-व्याधीनामपतर्पणं दोषावसेचनं वमनविरेचनादिकम्। तत्र हेतुर्न ह्यभिन्न इत्यादि। यथा हि भिन्ने केदारे पल्वलस्याल्पसरसः प्रसेको भवति न त्वभिन्ने, तद्वद्दोषावसेचनम्। वमनविरेचनादिना दोषे भिन्ने वहिर्निःसृते शेषः प्रशोषमापद्यते॥ २४॥

गङ्गाधरः—ननु तद्दोषावसेचनमन्यद् वा भेषजं सर्व्वेषां किं कुर्य्यादित्यत आह—दोषावसेचनन्त्वित्यादि। दोषावसेचनमन्यद् वा किमपि भेषजं प्राप्तकालमपि कर्त्तव्यकालप्राप्तमपि खल्वेवंविधस्य वक्ष्यमाणरूपस्यातुरस्य न कुर्य्यात्। कस्य कस्येत्यत आह—तद् यथेति। अल्पवादप्रतिकारस्य यो जनो जनैः सहाल्पवादे प्रतिकारानर्हः स्वभावात् तस्य प्रकारो यस्य स चेदातुरः स्यात् तदा तस्यौषधं दोषावसेचनमन्यद् वा न कुर्य्यात्। स हि चिकित्सायां छलं गृहीत्वा वैद्यस्यायशःकीर्त्तनं करोति। एवमधनस्य चापचारकस्य च वैद्यमानिनश्च। यः स्वयं चिकित्सकाभिमानी स वैद्यं प्रत्येवमाह—नेदं भेषजमत्रोपयुक्तं नेदं पथ्यमित्येवमादिदूषणवाक्यम्। तथा चण्डस्य क्रोधनस्वभावस्य च वैद्यानामसूयकस्य च तीव्रधर्म्मारुचिजनस्य। अतिक्षीणबलमांसादेश्च तथैवासाध्यरोगोपहतस्य मुमूर्षुलिङ्गान्वितस्य च

पाचनकाले हि यदि बृंहणं क्रियते तदा बृंहणेनाग्नेः प्रतिकूलेन पाचनं न स्यादित्यर्थः। अवकीर्णैरिवेत्यत्र 'इव'शब्दोऽनतिबहूदकमिवेत्येवंरूपो ज्ञेयः। अन्यद्वेति लङ्घनादि बृंहणादि च॥ २४

चक्रपाणिः—अनपवादप्रतीकारो वाच्यप्रतीकारः, अधनस्यानुपकरणत्वेन न चिकित्सा पार्य्यते कर्त्तुमित्यर्थः, वैद्यमानीत्यभिमानाद् वैद्योपदेशं न करोति; तीव्रधर्म्मारुचेः प्रतिक्रियायामधर्म्मो

* अनपवादेति वा पाठः।

चेति। एवंविधं ह्यातुरमुपचरन् भिषक् पापीयसाऽयशसा योगम् ऋच्छतीति ॥ २५ ॥

भवति चात्र । *

तदात्वे चानुबन्धे वा यस्य स्यादशुभं फलम् ।
कर्म्मणस्तन्न कर्त्तव्यमेतद् बुद्धिमतां मतम् ॥ २६ ॥

तत्र श्लोकाः ।

पूर्व्वरूपाणि सामान्या हेतवः सस्वलक्षणाः ।
देशोद्ध्वंसस्य भैषज्यं हेतूनां मूलमेव च ॥

भेषजं न कुर्य्यादिति। कस्मादिति? अत आह—एवंविधमित्यादि। हि यस्मात् एवंविधमल्पत्वादप्रतिकारस्वभावादिकमुक्तमातुरमुपचरन् चिकित्सन् भिषक् पापीयसा लोके निन्दाजनकेनायशसा युक्तो भवति ॥ २५ ॥

गङ्गाधरः—भवतीत्यादि। तदात्वे चेत्यादि। तदात्वे तत् कर्म्मकरणकाले। अथानुबन्धे उत्तरकालं वा यस्य कर्म्मणः फलमशुभं स्यात् तत् कर्म्म न कर्त्तव्यमिति बुद्धिमतां मतमिति ॥ २६ ॥

गङ्गाधरः—अध्यायार्थमुपसंहरति—तत्र श्लोका इति। पूर्व्वरूपाणीति प्रथमावध्युपक्रमं कृत्वा दृश्यन्ते हीत्यादिना जनपदोद्ध्वंसनस्य पूर्व्वरूपाणि। अपि त्वित्यारभ्य देशोद्ध्वंसस्य सामान्या हेतवस्तेषां लक्षणानि च। विगुणेष्वित्यारभ्य देशध्वंसस्य भेषजम्। अथ खल्वित्यादिना हेतूनां वाय्वादीनां

भवति, न च चिकित्सा सिध्यत्यधर्म्मप्रतिबन्धात् मुमूर्षुलिङ्गान्वितस्येति रिष्टयुक्तस्य, पापीयसेति पापहेतुना पापजनकेनायशसा ॥ २५ ॥

चक्रपाणिः—अनुबन्धे वेत्युत्तरकालम्। संग्रहे पूर्व्वरूपाणीति नक्षत्रादिविकारः, सस्वलक्षणाः

* अधिकमिदं श्लोकद्वयं चक्रपाणिसम्मतं यथा—

अल्पोदकद्रुमो यस्तु प्रवातः प्रचुरातपः ।
ज्ञेयः स जाङ्गलो देशः स्वल्परोगतमोऽपि च ॥
प्रचुरोदकवृक्षो यो निवातो दुर्लभातपः ।
अनूपो बहुदोषश्च समः साधारणो मतः ॥

चक्रपाणिकृता टीका यथा—केचिदल्पोदकद्रुमो यस्त्वित्यादिग्रन्थमत्र पठन्ति ।

प्रागविकारसमुत्पत्तिरायुषश्च क्षयक्रमः।
मरणं प्रति भूतानां कालाकालविनिश्चयः॥
यथा चाकालमरणं यथा युक्तञ्च भेषजम्।
सिद्धिं यात्यौषधं येषां न कुर्य्याद् येन हेतुना॥
तदात्रेयोऽग्निवेशाय निखिलं सर्व्वमुक्तवान्।
देशोद्ध्वंसनिमित्तीये विमाने मुनिसत्तमः॥ २७॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते विमानस्थाने जनपदोद्ध्वंसनीयविमानं नाम तृतीयोऽध्यायः॥ ३॥

मूलम्। प्रागेवानेकेत्यादिना सर्व्वविकाराणां प्रागुत्पत्तिरायुषः क्षयक्रमश्च। किं नु खल्वित्यादिना भूतानां मरणं प्रति कालाकालविनिश्चयः। ततः परमित्यादिना भूतानां कालाकालमरणम्। चकाराज्ज्वरे चोष्णजलं शीतेनोष्णेत्यादिना भेषजं यथायुक्तं सिद्धिं याति तत्प्रकारः। दोषावसेचनन्त्वित्यादिना येषां भेषजं न कुर्य्यात् तत्। एवंविधमित्यादिना येन हेतुना तेषां भेषजं न कुर्य्यात् तत्॥ २७॥

अध्यायं समापयति। अग्नीत्यादि।

इति श्रीगङ्गाधरकविरत्नकविराजविरचिते चरकजल्पकल्पतरौ तृतीयस्कन्धे विमानस्थानजल्पे जनपदोद्ध्वंसनीयविमानजल्पाख्या तृतीया शाखा॥ ३॥

सत्त्वविकृतिलक्षणाः, तच्च लक्षणम् "तत्र वातमेवंविधम्" इत्यादिना प्रोक्तम्। 'यथा युक्तञ्च भेषजं सिद्धिं याति' इत्यनेनोष्णपानीयदानोपपत्त्या सर्व्वं संगृहीतम्॥ २६।२७॥

इति चरकचतुरानन-श्रीमच्चक्रपाणिदत्तविरचितायाम् आयुर्व्वेददीपिकायां विमानस्थानव्याख्यायां जनपदोद्ध्वंसनीयविमानं नाम तृतीयोऽध्यायः॥ ३॥

## चतुर्थोऽध्यायः ।

अथातस्त्रिविधरोगविशेषविज्ञानीयं विमानं व्याख्यास्यामः इतिह स्माह भगवानात्रेयः ॥ १ ॥

त्रिविधं खलु रोगविशेषविज्ञानं भवति, तद् यथा—उपदेशः प्रत्यक्षमनुमानञ्चेति ॥ २ ॥

तत्रोपदेशो नामाप्तवचनम्। आप्ता ह्यवितर्कस्मृतिविभाग-

गङ्गाधरः—अथैवं रसादिविमानजनपदोद्ध्वंसविमाने उक्त्वा व्याधिज्ञान-हेतुप्रमाणरूपं त्रिविधं रोगविशेषविज्ञानीयं विमानमाह—अथेत्यादि। अध्यायस्य आदौ निर्दिष्टे त्रिविध रोगविशेषविज्ञानं भवतीति वाक्यार्थे त्रिविधं रोग-विशेषविज्ञानमित्यर्थमधिकृत्य कृतो विमानाध्यायः। इति ग्रन्थेऽर्थे छः ॥ १ ॥

गङ्गाधरः—त्रिविधमित्यादि। रोगेति विषमधातवो रोगास्तज्जाश्च ज्वरा-दयो देहादिकार्य्यद्रव्यवत्। रोगाणां ज्वरादीनां विशेषा वातादिजत्वादिना जातानां रूपाणि, तेषां विज्ञानं विशेषेण ज्ञायन्ते प्रमीयन्तेऽनेन तद्विज्ञानं प्रमाणम्। तत् द्विविधमप्राप्यार्थग्रहणलक्षणं प्राप्यार्थग्रहणलक्षणञ्चेति। तत्पुन-स्त्रिविधं तदाह तद् यथेति ॥ २ ॥

गङ्गाधरः—तत्रेति। आप्ता हीत्यादि। हि यस्मात्। अवितर्केण वितर्क ऊहापोहात्मकस्तं वितर्कं विना सदैवाविच्छेदेन युक्तज्ञानेन त्रैकालिकानां

चक्रपाणिः—जनपदोद्ध्वंसनीयेऽविशेषेण सर्व्वेऽपि रोगा उक्ताः, तेषां विशेषो यथा ज्ञायते। तदुपदेष्टुं त्रिविधरोगविशेषविज्ञानीयोऽभिधीयते ॥ १ ॥ सुख-

चक्रपाणिः—रोगाणां विशेषो यथा वक्ष्यमाणो ज्ञायते येन, तद्रोगविशेषविज्ञा आप्त-प्रत्यक्षानुमानरूपं प्रमाणत्रयम्। अत्र तु युक्तेरनुमानान्तर्गतत्वादेव न पृथक्करणम्। प्रमाणत्रयं क्वचिद्रोगे मिलितम्, क्वचिद्द्वयम् क्वचिदेकं परीक्षायां वर्त्तते। येन, मान्द्यादौ प्रत्यक्षमवश्यं व्याप्रियते ॥ २ ॥

चक्रपाणिः—तिस्रैषणीये प्रथममनुमानादिलक्षणान्युक्तानि, पुनरिह इत्यादिना आप्तोपदेशादिलक्षणाभिधानं प्रकरणागतत्वात् क्रियते। प्राकरणि

**विदो निष्प्रीत्युपतापदर्शिनः। तेषामेवंगुणयोगाद् यद्वचनं तत् प्रमाणम्, अप्रमाणं पुनर्मत्तोन्मत्तमूर्खवक्तृदुष्टादुष्टवचनमिति *।**

सर्व्वेषामेव भावानां तत्त्वेन स्मृत्या विभागं सदसद्रूपत्वं विदन्ति ये ते अवितर्क-स्मृतिविभागविद आप्ता इति चेत् तदा देवग्रहजुष्टा अप्यवितर्कस्मृतिविभाग-विदः किमाप्ता इत्यत आह—निष्प्रीत्युपतापदर्शिन इति। प्रीत्युपतापाभ्यां निर्गता निष्प्रीत्युपतापा ये द्रष्टुं शीलवन्तस्ते त्वाप्ताः। देवग्रहजुष्टा उपतप्ता देवग्रहेण यदुच्यते त्रैकालिकं ते तद्वदन्ति। ये चावितर्कस्मृतिभ्यां प्रीत्या वदन्ति ते च नाप्ताः। ईदृशास्तु पुरुषास्ते भवन्ति ये तपोज्ञानबलेन रज-स्तमोभ्यां निर्म्मुक्तास्त्रैकालिकाव्याहतनिर्म्मलज्ञानवन्तः स्युः। एवमुक्तरूप-गुणयोगात् तेषां वाङ्मनसाभ्यां त्रैकालिकार्थस्य प्राप्यग्रहणाद् यद्वचनं तत् प्रमाणमेव न त्वप्रमाणम्। रजस्तमोविनिर्म्मुक्तत्वेनानृतवक्तृत्वाभावात्। वाङ्मनसा-भ्याम् अलौकिकार्थस्याप्राप्यग्रहणादलौकिकार्थवचनमात्रमर्थप्राप्त्यभावात् सत्य-मपि न प्रमाणं लौकिकार्थोपदेशो हि प्रमाणम् अत ईश्वरादिरप्रमेय उक्तः। ननु कस्य वचनमप्रमाणमित्यत आह—अप्रमाणं पुनरित्यादि। मत्ता आसवमद्यादि-कृतमदाभिहताः। उन्मत्ता उन्मादादिव्याधिभिरुन्मत्ताः। मूर्खा वेदादिशास्त्रा-ध्ययनादिभिजनितावितर्कस्मृतिविभागज्ञानाद्धीनास्ते च ते वक्तारश्चेति ते मत्तोन्मत्तमूर्खवक्तारस्तेषां दृष्टादृष्टयोर्वस्तुनोर्विषये यद्वचनं तदप्रमाणं तेषां दृष्टविषये वचनमपि न प्रमाणं यद्धि तैर्दृष्टं तदुपदेशे तत्त्वतो वक्तुमशक्तत्वात् मत्तत्वादुन्मत्तत्वान्मूर्खत्वाच्च। एतच्चाप्तवचनमलौकिकार्थानामप्राप्यार्थग्रहण-न्यूना भवति। अवितर्केत्यादि। वितर्कः कथन्ताऽनिश्चितज्ञानमिति यावत्। स्मृतिः स्मरण-ज्ञानम्। विभाग एकदेशः। एतद्विपर्य्ययान्निश्चयेनानुभवेन च कार्त्स्न्येन च ये भावान् जानते, ते अवितर्कस्मृतिविभागविदः; वितर्कवेदी तु नाप्तः प्रतिपाद्यवस्त्वशेषविशेषाविज्ञानात्। स्मृति-

यद्यपि प्रमाणमूलमेव, तथापि वर्त्तमानलक्षणे स्मृतिज्ञानविषयार्थस्य नावश्यंविद्यमानतेति माणमिति भावः। किंवा, स्मृतिज्ञानं स्मृतिशास्त्रजं ज्ञानं गणितज्ञानञ्च। एतच्च साक्षादर्थादर्शकं दुरवबोधेन मिथ्याज्ञानत्वसम्भवादप्रमाणमपीति नोपादेयम्। अथ तोऽपि रागादिवशादन्यथा व्याहरन्तीत्याह—निष्प्रीत्युपतापदर्शिन इति, निष्प्रीत्या द्रष्टुं शीलं येषां ते तथा। एतेन यथार्थदर्शी निर्दोषश्चाप्तो भवतीति उक्तं तच्चाप्तत्वं कस्यचिद् ब्रह्मादेः सर्व्वत्रैव भवति। लौकिकस्य तु यस्मिन्नेव तु यति, तत्रैवोपदेशः प्रमाणमिति ज्ञेयम्। अप्रमाणं नावश्यं प्रमाणतयाऽव-

---

* मितीति चक्रसम्मतः पाठः।

**प्रत्यक्षन्तु नाम खलु तद् यत् स्वयमिन्द्रियैरात्मना * चोपलभ्यते।**

लक्षणमलौकिकेषु न प्रमाणम्। योगिभिर्हि योगे प्रज्ञया प्राप्यालौकिकार्थ उपदिश्यते वाग्भिरा प्यैव। तस्मादलौकिकार्थवचनं तेषां सत्यमपि न प्रमाणम्, प्राप्यार्थग्रहणलक्षणं हि ज्ञानं प्रमाणम्। लौकिकार्थानान्तु योगेन प्रज्ञया प्राप्य पुनर्वाङ्मनसाभ्याञ्च प्राप्य योगिभिर्वचनं प्रमाणमिति। अलौकिकार्थप्रत्यक्षन्तु योगजं प्रज्ञया प्राप्यैव तदलौकिकमप्रमाणमेवेति गौतमादिभिर्लौकिकप्रमाणवक्तृभिः प्रमाणेषु योगजप्रत्यक्षं नोक्तमिति। विस्तरेण तिस्रैषणीये व्याख्यातम्।

क्रमिकं प्रत्यक्षं लक्षयति—प्रत्यक्षन्त्वित्यादि। तिस्रैषणीये प्रागुक्तम्। आत्मेन्द्रियमनोऽर्थानां सन्निकर्षात् प्रवर्त्तते। व्यक्ता तदात्वे या बुद्धिः प्रत्यक्षं सा निरुच्यते॥ इति। तदिह व्याख्यानप्रसङ्गेन पुनरुच्यते। प्रत्यक्षन्तु खलु तद् यत् स्वयमिन्द्रियैरात्मना चोपलभ्यते। अत्र तु इन्द्रियैरिति पृथग्वचनात् ख्यापितं श्रवणादिपञ्चबुद्धीन्द्रियप्रत्यक्षं प्रमाणम् स्वतन्त्रे पञ्चबुद्धीन्द्रियाणीत्युक्तेः। आत्मनेति आत्मशब्देन बुद्धिः बुद्ध्याश्रयत्वान्मनश्चेति द्वयं विवक्षितम्। स्वयमितिपदेन त्रिधा आत्मा विवक्षितः। आत्मनो नित्यं बुद्धियोगाद् बुद्धिरपि त्रिविधा। यत्पदेन शब्दादयः पञ्चेन्द्रियार्थाश्चिन्त्य विचार्य्यौ ह्यधिकं मनोऽर्थः। बोद्धव्यं सुखादिकं बुद्धेरर्थश्चेति सर्व्वं विवक्षितम्। तत्र स्वयं खलु जागरितस्थानेन वैश्वानरेणात्मना स्वप्नस्थानेन तैजसेनात्मना सुषुप्तिस्थानेन प्राज्ञेनात्मना पञ्चभिरिन्द्रियैर्यत् सन्निकृष्टं वस्तूपलभ्यते मनसा यदुपलभ्यते बुद्ध्या च यदुपलभ्यते तदुपलब्धिर्ज्ञानं प्रत्यक्षम्। तेन सप्तविधं प्रत्यक्षं भवति। रोगभिषग्जितीयेऽपि वक्ष्यते। आत्मना चेन्द्रियैश्च यत् स्वयमुपलभ्यते तत् प्रत्यक्षं तत्रात्मप्रत्यक्षाः सुखदुःखेच्छादयः शब्दादयः पुनरिन्द्रियप्रत्यक्षा इति। कणादेनाप्युक्तम् आत्म-

धार्य्यते रागादिदुष्टत्वादित्यर्थः। दुष्टश्चायमदुष्टश्चेति दुष्टादुष्टः। तेन पिता हि पुत्रस्य दुष्टोऽपि अदुष्टत्वादाप्त एव भवति। किंवा दुष्टो वञ्चकः।

स्वयमिन्द्रियैर्मनसा चेत्यनेन यदात्मनेन्द्रियैश्चक्षुरादिभिरव्यवधानेन गृह्यते रूपादि, तत् प्रत्यक्षमिति वाह्यप्रत्यक्षं गृह्णाति। मनसा चेत्यनेन मनसाऽव्यवधानेन यदुपलभ्यते सुखादि,

* मनसेति वा पाठः।

गुणानां सुखादीनामात्मप्रत्यक्षं न मनःप्रत्यक्षम्। तद् यथा वैशेषिके सूत्रे द्वे। परत्र समवायात् प्रत्यक्षत्वाच्च नात्मगुणा मनसो गुणाः। अप्रत्यक्षत्वाच्च। व्याख्यातश्च। बुद्धीच्छादयो ये प्रत्यगात्मगुणा न ते मनसो गुणाः। कस्मात्? परत्र समवायात्। प्रत्यगात्मनः परत्र समवायात्। परस्याव्यक्ताख्यस्य क्षेत्रज्ञस्यात्मनो गुणा एव सुखादयः प्रत्यगात्मन्यभिव्यक्ताः करणानां बुद्धिमनः-प्रभृतीनां योगात् प्रत्यगात्मनः परत्राव्यक्ते समवायात्। अस्तु तर्हि मन आत्म-संयोगान्मनस एव गुणास्तेऽभिव्यज्यन्ते इति चेन्न प्रत्यक्षत्वाच्च। प्रत्यगात्म-प्रत्यक्षा हि बुद्धिसुखादय इति। अस्त्वेवं मनःप्रत्यक्षा बुद्धिसुखादय इति चेत् न, अप्रत्यक्षत्वात्। मनो हि बुद्ध्यादीन् गुणान् न जानातीति मनः-प्रत्यक्षत्वाभावान्नात्मगुणा मनसो गुणा इति। गौतमेनापि सुखादेरात्मप्रत्यक्षम् उक्तं फलपरीक्षायाम्। तत्र सूत्रम्। प्रीतेरात्माश्रयत्वादप्रतिषेध इति। तत्र वात्स्यायनभाष्यम्। प्रीतिरात्मप्रत्यक्षत्वादात्माश्रयेति। तस्मात् प्रीतेरात्म-गुणत्वाप्रतिषेध इति। तथा च। सुषुप्तिस्थान आत्मा प्रज्ञया बुद्ध्योपाहितः खल्वव्यक्ताख्यः स खलु स्वयं सुषुप्तौ समाधौ जीवन्मुक्तौ च प्रज्ञया शुद्ध-सत्त्वात्मकमहत्तत्त्वाख्यबुद्ध्या परमात्मानं तुरीयं शिवं रसं लब्धानन्दमुप-लभते। तदुपलब्धिस्तत्र तत्रात्मप्रत्यक्षम्। सा प्रज्ञा बुद्धिस्त्रिगुणात्मकस्तु महान् तस्यात्मनो मन उक्तं साङ्ख्ये कपिलेन। तन्मनः। इति सूत्रम्। तच्च न देवदत्तादिपुरुषाणां मनस्तस्मान्न मानसप्रत्यक्षम्। तेनोपलब्धिज्ञानेन प्रत्यक्षेण सा च प्रज्ञा प्रत्यक्षा भवति। एवं तदव्यक्तात्मना त्रिगुणात्मकेन महत्तत्त्वेन मनसाहमिति मन्यत इति तन्महान्तं विकुर्व्वाण आत्माहङ्कारम् अविद्याख्यां बुद्धिं सृजति। तस्मादहङ्काराज्जातानि महाभूतानि पञ्चानु-प्रविश्य तैजस आत्मांशेन भवति। तदाहङ्कारिकदशेन्द्रियमनोऽर्थपञ्चकपञ्च-प्राणयुक्तः स्वप्नस्थानः स्वप्ने सुखदुःखादिकमुपलभते तयाहङ्कारबुद्ध्या तदुप-लब्धिः स्वप्ने प्रत्यक्षम्। स चैव तैजस आत्मा देवनरादियोनिषु शुक्रशोणितादि-वीजसंयोगमुपेत्य पञ्चमहाभूतानि सृष्ट्वा तदुपाहितः सन् वैश्वानरो नाम जागरितस्थान आत्मा भवति तैर्भूतैराहङ्कारिकदशेन्द्रियानुप्रविष्टैरेकैकाधिकै-र्जातानि भौतिकानि गृहीत्वा तथा त्रीन् गुणान् सृष्ट्वाहङ्कारिकमनोऽनुप्रविष्ट-तत्त्रिगुणात्मकं सत्त्वगुणबहुलं स्थूलमनो गृहीत्वा तथार्थान् शब्दादीन् पञ्च स्थूलान् प्राणांश्च पञ्च गृहीत्वा चतुर्विंशतिको भवति। स तु जागरणावस्थायां

स्थूलान् विषयान् सुखादीन् स्थूलयाहङ्कारिक्या बुद्ध्यैवोपलभते। इत्यात्मप्रत्यक्षा बुद्धिसुखदुःखेच्छादयः। अत्रादिशब्दे मनःप्रत्यक्षाश्चिन्त्यादयोऽर्थाः। तत्र सुषुप्तिस्वप्नयोः सन्धौ ह्यात्मा महत्तत्त्वेन मनसा यच्चिन्तनीयं तर्क्यं विचार्य्यञ्चोपलभते, तन्मनःप्रत्यक्षम्। स्वप्नस्थानस्तैजसो यदाहङ्कारिकेण मनसोपलभते चिन्तनीयादिकं तन्मनःप्रत्यक्षम्। जागरितस्थानो वैश्वानरोऽप्यात्मा स्वयम् आत्मकृतसत्त्वादिगुणमयेन स्थूलमनसा यच्चिन्तनीयादिकमुपलभते तल्लोके मनःप्रत्यक्षमिति। स्वप्नसुषुप्त्योः सन्धौ चाहङ्कारिकपञ्चेन्द्रियपञ्चार्थाभावान्नास्ति चेन्द्रियप्रत्यक्षम्। अथ स्वप्नस्थानस्तैजसो यद्यदाहङ्कारिकेण श्रोत्रादिना स्वप्ने शब्दादीनुपलभते तदिन्द्रियप्रत्यक्षं स्वप्ने। जागरितस्थानो वैश्वानर आत्मा स्वयं बाह्ये लोके सन्निकृष्टं यच्छब्दादिकं भौतिकेन श्रोत्रादिनेन्द्रियेण उपलभते तदिन्द्रियप्रत्यक्षम्। तत्रेन्द्रियार्थयोः सन्निकर्ष उक्तस्तिस्रैषणीये। अतिविप्रकर्षातिसन्निकर्षमनोऽनवस्थानकरणदौर्ब्बल्यातिसौक्ष्म्याभिभवावरणसमानाभिहारवर्ज्जं सान्निध्यमिति। तत्र श्रोत्रेन्द्रियेण समानयोनिमर्थं शब्दं तद्विपरीतञ्च शब्दस्य निवृत्त्याख्यं गुणमुपलभते न तु शब्दवद्द्रव्यं तत्स्वभावात्। स्पर्शनेन्द्रियेणात्मा समानयोनिमर्थं स्पर्शं शीतोष्णस्निग्धरुक्षखरमसृणविशदपिच्छिलस्थूलसूक्ष्मसान्द्रद्रवमृदुकठिनादिकं तद्विपरीतञ्चास्पर्शमप्रतीघातमुपलभते तत् समवायात्तद्वच्च द्रव्यमाकाशादिकमिति। चक्षुरिन्द्रियेणात्मा स्वयं समानयोनिकमर्थं रूपं लोहितशुक्लकृष्णादिकं तद्विपरीतञ्चारूपमाकाशस्य तद्रूपारूपसमवायात् तद्वद्द्रव्यमरूपमाकाशमुपलभते न त्वरूपं वायुं तत्स्वभावात् इति। सङ्ख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वकर्म्माणि रूपवद्द्रव्यसमवायाच्चाक्षुषाणीति रूपहीनेष्वचाक्षुषाणीति कणादः। एवं रसनेन्द्रियेणात्मा स्वयं समानयोनिकमर्थं रसं मधुरादिकं सविपरीतमुपलभते, तत्समवायाच्च तद्वद्द्रव्यं घ्राणेन्द्रियेणात्मा स्वयं समानयोनिकमर्थं गन्धं सौरभादिकं सविपरीतमुपलभते, तत्समवायाच्च तद्वद्द्रव्यमिति साक्षात् परम्परया पञ्चेन्द्रियप्रत्यक्षं व्याख्यातं यत् प्रमाणमुच्यते। इत्येतदात्मप्रत्यक्षादिकं सप्तविधं प्रत्यक्षं प्राप्यार्थग्रहणलक्षणं द्विविधं क्षणिकं निश्चयात्मकञ्च। तत्र क्षणिकमप्रमाणं निश्चयात्मकन्तु प्रमाणम्। तत्र यत् पञ्चेन्द्रियार्थसन्निकर्षोत्पन्नमात्ममनःसंयोगजपूर्व्वकमव्यपदेश्यमव्यभिचारि व्यवसायात्मकं ज्ञानं प्रत्यक्षप्रमाणं पञ्चविधमिन्द्रियज्ञानम्। आत्मप्रत्यक्षन्तु यदप्राप्य ग्रहणमाप्तोपदेशाद् भवति तल्लौकिकप्रमाणमप्यलौकिकेषु न प्रमाणमप्राप्त्यर्थत्वात्। मानसप्रत्यक्षन्तु

अनुमानं खलु तर्को युक्त्यपेक्षः ।

त्रिविधेन खल्वनेन ज्ञानसमुदयेन पूर्व्वं परीक्ष्य रोगं सर्व्वथा सर्व्वमेवोत्तरकालमध्यवसानमदोषं भवति । न हि ज्ञानावयवेन कृत्स्ने ज्ञेये ज्ञानमुत्पद्यते । त्रिविधे त्वस्मिन् ज्ञान-समुदये पूर्व्वमाप्तोपदेशाद्धि ज्ञानम् । ततः प्रत्यक्षानुमानाभ्यां

सर्व्वं न प्रमाणं तस्माद् यत् प्रमाणं तस्य प्रत्यक्षसंज्ञामुत्सृज्यापवददत्यनुमान-संज्ञाम् ।

अनुमानं खल्वित्यादि । तत्रापवादविषये क्वचिदुत्सर्गोऽपि प्रवर्त्तते । तेन प्रत्यक्षपूर्व्वं त्रिविधं त्रिकालञ्चानुमीयत इत्यत्र प्रत्यक्षपदेन सर्व्वप्रमाणं विव-क्षितमिति । तदेवेह पुनः प्रकारान्तरेण भाष्यते । तर्को युक्त्यपेक्ष इति । युक्त्यपेक्षस्तर्कोऽनुमानं तर्कापेक्षस्तर्कस्तिस्रैषणीये युक्तिरेव तर्क उक्तः, बुद्धिः पश्यतीत्यादिना । गौतमेनाप्युक्तम् । अविज्ञाततत्त्वेऽर्थे कारणोपपत्तितः तत्त्वज्ञानार्थमूहस्तर्क इति । व्याख्यातञ्चैतत् पूर्व्वम् । तर्कापेक्षतर्कस्यानु-मानत्ववचनात् । केवलतर्कस्याप्तोपदेशे त्वाप्तस्यैवानुमानेनान्तरीयकत्वेन प्रामाण्ये सिद्धे प्रमाणान्तरत्वं न भवति न चाप्रामाण्यम् । उपमानसम्भवार्थापत्त्य-भावानामत्रानुमानेऽन्तर्भावान्नासमग्रवचनस्यैतिह्यस्याप्तोपदेशेऽन्तर्भावाच्च ।

ननु त्रिविधविज्ञानेनात्र रोगविशेषज्ञानं किमर्थमुक्तमुक्तञ्च निदानादिभि-र्यज्ज्ञानं ततो निर्व्वाहादित्यत आह—त्रिविधेनेत्यादि । ज्ञानसमुदयेन न त्वन्यतमव्यतिरेकेण । सर्व्वं गुरुमुखात् सर्व्वथा सर्व्वरोगं ज्ञात्वा कर्म्मकाले प्रत्यक्षानुमानाभ्यां सर्व्वथा सर्व्वं रोगं निदानादिभिः परीक्ष्य चरम-कालमध्यवसानमदोषं भवति । कस्मात् ? न हीत्यादि । किञ्चिदेव प्रत्यक्षेण किञ्चिदेवानुमानेन ज्ञायते न तु कृत्स्नमेकेन ज्ञातुं शक्यते । त्रिविधे तु ज्ञान-समुदये खलु कृत्स्नं साध्यत्वादिवातजत्वादिबलवदादिरूपेण ज्ञानं भवति, न तु प्रत्यक्षेणान्यैर्वा । आप्तोपदेशेन पूर्व्वं हि रोगतत्त्वं बुद्ध्वा ततः क्रियाकाले

तच्च मानसं प्रत्यक्षं गृह्णाति । तर्कोऽप्रत्यक्षज्ञानम् । युक्तिः सम्बन्धोऽविनाभाव इत्यर्थः । तेनाविनाभावजं परोक्षज्ञानमनुमानमित्यर्थः ।

ज्ञानसमुदायेनेति । ज्ञानसमुदायः प्रमाणसङ्घातस्तेन समुदायेन 'अयमेव रोगः' एवम्भूत-निश्चयोऽध्यवसानम् । त्रिविधे त्वित्यादि । ज्ञायतेऽनेनेति ज्ञानं प्रमाणम् । प्रथममाप्तोप-

परोक्षोपपद्यते। किं ह्यनुपदिष्टं * पूर्व्वं यत्तत् प्रत्यक्षानुमानाभ्यां परीक्षमाणो विद्यात् । तस्माद् द्विविधा परीक्षा ज्ञानवतां प्रत्यक्षम् अनुमानञ्च । त्रिविधां वा सहोपदेशेनेच्छन्ति बुद्धिमन्तः॥ ३ ॥

† रोगमेकैकमेवंप्रकोपणमेवंयोनिम् ‡ एवमात्मानमेवमधि-

पुनरातुरगतानां शब्दादीनां प्रत्यक्षेण रसानान्तु अनुमानेन जाठराग्न्यादीना-ञ्चानुमानेन परीक्षोपपद्यते, तत् कथमाप्तोपदेशादेकैकेन कृत्स्नज्ञानं भवतीति भावः। ननु कस्मादाप्तोपदेशस्य ज्ञानहेतुत्वं क्रियाकाले हि प्रत्यक्षानुमानाभ्यामेव परीक्ष्यते इत्यत आह—किमित्यादि। हि यस्मात् पूर्व्वमाप्तोपदेशेनानुपदिष्टं भावं ततः परं प्रत्यक्षानुमानाभ्यां किं विद्यादपि तु न विद्यात्। तस्मात् पूर्व्वम् आप्तोपदेशाज्ज्ञानं ततः प्रत्यक्षानुमानाभ्यां परीक्षोपपद्यते। तस्माद् द्विविधा परीक्षा क्रियाकाले आतुराणां व्याधिज्ञानवतां प्रत्यक्षमनुमानञ्च। तयोराप्तोपदेशपूर्व्वकत्वात् क्रियाकालिकत्वाच्च पृथगुपादानम्। आप्तोपदेशस्य तु तयोरादित्वात् क्रियाकाले स्मृतरूपत्वाच्च पृथगुपादानं त्रिविधा वेत्यादिना कृतम् ॥ ३

गङ्गाधरः—नन्वाप्तोपदेशात् कीदृशं ज्ञायते इत्यत आह—रोगमेकैकमित्यादि। एकैकं प्रत्येकं रोगं ज्वरादिकम् एवंप्रकोपणमित्येवं निदानम् एवंयोनिं वाताद्येकद्वित्र्यादिप्रकृतिम् एवमात्मानं शीतात्मकं चोष्णात्मकमेवमादि।

देशो व्याधिं बोधयति, ततश्चाप्तोपदिष्टं व्याधिं प्रत्यक्षानुमानाभ्यां यथोक्तलिङ्गादिपरीक्षा निश्चिनोति, आगमानुपदिष्टे च व्याधौ अन्ध इव न प्रत्यक्षेणानुमानेन च व्याधिमुपलभत इत्याह—किं ह्यनुपदिष्ट इत्यादि। एवं मन्यते—व्याधिविशेषास्तावद् दुरधिगमनीया नोपदेशमन्तरेण शक्या विज्ञातुम्। येन अधिगतवैद्यकशास्त्राः प्रतिपादयन्त्येव व्याधिविशेषान्। तस्मादागमेन ये व्याधीनां हेत्वादिविशेषाः प्रतिपादितास्तान् प्रत्यक्षानुमानाभ्यामुपलभमानो व्याधिं निश्चिनोति, अनुपदेशवांस्तानुपलभमानोऽपि हेत्वादिविशेषानशिक्षितवत् कुपरीक्षको यथा रत्नानां विशेषं पश्यन्नपि नावधारयति विशेषमिति भावः। ज्ञानवतामित्याप्तोपदेशवताम्। त्रिविधां वेत्यनेन, व्याधिपरीक्षासमये ह्याप्तोपदेशोऽपि व्याप्रियते तथा दुरधिगमस्थानसंश्रयादिप्रतिपत्तौ कोष्ठमृदुदारुणत्वादिपरीक्षायाञ्चातुरवचनरूपाप्तोपदेशोऽपि व्याप्रियत इति दर्शयति ॥ ३ ॥

चक्रपाणिः—तत्रेत्यादिना आप्तोपदेशमाह। प्रकोपणं वायो रुक्षत्वादिहेतुः। योनिर्व्वातादयः।

* अनुपदिष्टे इति वा पाठः।　　† तत्रेदमुपदिशन्तीत्यधिकः पाठः चक्रसम्मतः।

‡ एवमुत्थानमित्यधिकः पाठो दृश्यते क्वचित्।

ष्ठानमेवंवेदनमेवंसंस्थानम् एवंशब्दस्पर्शरूपरसगन्धमेवमुपद्रवमेवं वृद्धिस्थानक्षयान्वितमेवमुदर्कमेवंनामानमेवंयोगं विद्यात्। तस्मिन् इय प्रतीकारार्था प्रवृत्तिरथवा निवृत्तिरित्युपदेशाज्ज्ञायते ॥ ४ ॥

प्रत्यक्षन्तु खलु रोगतत्त्वं बुभुत्समानः सर्व्वैरिन्द्रियैः सर्व्वान् इन्द्रियार्थानातुरशरीरगतान् परीक्षेतान्यत्र रसज्ञानात्। तद्-यथा—अन्त्रकूजनं सन्धिस्फुटनमङ्गुलीपर्व्वणां स्वरविशेषांश्च ये चान्येऽपि केचिच्छरीरोपगताः शब्दाः स्युस्तान् श्रोत्रेणैव परीक्षेत।

वर्णसंस्थानप्रमाणच्छायाशरीरप्रकृतिविकारौ चक्षुर्वैषयिकाणि यानि चान्यानि कानि च, तानि चक्षुषैव परीक्षेत। रसन्तु खल्वातुरशरीरगतमिन्द्रियवैषयिकमप्यनुमानादवगच्छेत्। न ह्यस्य प्रत्यक्षेण ग्रहणमुपपद्यते। तस्मादातुरपरिप्रश्नेनैव आतुरमुखरसं विद्यात्। यूकोपसर्पणेन त्वस्य शरीरवैरस्यम्

एवमधिष्ठानं शारीरं वा मानसं वा तत्रापि शरीरावयवविशेषाधिष्ठानमेवं-स्थानं वाह। एवंशब्दादिकमेवमुदर्कमेवंविधोत्तरकालिकफलकम् एवंयोगम् एवंविधप्रयोगयोग्यम्। इत्याप्तवचनाज ज्ञानोपदर्शनम् ॥ ४ ॥

गङ्गाधरः—प्रत्यक्षन्त्वित्यादि। प्रत्यक्षं परीक्षेतेत्यन्वयः। वर्णेत्यादि। यद्यपि रूपमेव चक्षुरर्थस्तथापि वर्णाश्रितत्वेन तदुपलक्षितत्वात् संस्थानादीनाम् अपि चक्षुरर्थत्वं बोध्यम् एवं रसगन्धस्पर्शाश्रयाणामपि बोध्यम्। चक्षुषो बहु-विषयत्वात् प्राक स्पर्शनोपदेशादित उपदेशः। न ह्यस्य प्रत्यक्षग्रहणमुपपद्यते-ऽनौचित्यादिति शेषः। ननु कुतोऽनुमीयेत कस्य रस इत्यत आह—

आत्मा स्वभावः; यथा—रोहिण्या दारुणत्वं, सन्न्यासस्य शीघ्रोपक्रमणीयत्वादि। अधिष्ठानं शरीरमवयवा मनश्च। इयं प्रतीकारार्था प्रवृत्तिः; यथा—ज्वरे लङ्घनपाचनाद्यर्था प्रवृत्तिः। निवृत्तिः प्रतीकारार्था; यथा—नवज्वरे दिवास्वप्नस्नानादौ निवृत्तिरित्यादि मन्तव्यम् ॥ ४ ॥

चक्रपाणिः—अङ्गुलीपर्व्वणाञ्च स्फोटनमिति सम्बन्धः। अन्येऽपि चेति कासहिक्काशब्दादयः। 'यानि चान्यानि' इत्यनेन लक्षणप्रभादीनि गृह्यन्ते। यूकापसर्पणेन शरीरवैरस्यमिति, विरसाद्धि

मक्षिकोपसर्पणेन शरीरमाधुर्य्यम् लोहितपित्तसन्देहे तु किं धारिलोहितं लोहितपित्तं वेति, श्वकाकभक्षणाद्ध धारिलोहितम् अभक्षणाल्लोहितपित्तमित्यनुमातव्यम् । एवमन्यानप्यातुरशरीरगतान् रसाननुमिमीत । गन्धांस्तु खलु सर्व्वशरीरगतानातुरस्य प्रकृतिवैकारिकान् घ्राणेन परीक्षेत । स्पर्शञ्च पाणिना प्रकृतिविकृतियुक्तमिति प्रत्यक्षतश्चानुमानैकदेशतश्च परीक्षणमुक्तम् ॥५

इमे तु खल्वन्येऽप्येवमेव भूयश्चानुमानज्ञेया भवन्ति भावाः । तद् यथा—अग्निं जरणशक्त्या परीक्षेत बलं व्यायामशक्त्या श्रोत्रादीनि च शब्दाद्यर्थग्रहणेन मनोऽर्थाव्यभिचारेण विज्ञानं* व्यवसायेन रजः सङ्गेन मोहमविज्ञानेन क्रोधमभिद्रोहेण शोकं

तस्मादित्यादि । यूका वाह्यमलक्रिमिः । धारिलोहितमिति जीवितरक्तं येन रक्तेन जीव्यते लोकैः । अनुमानैकदेशत इति आतुरशरीरगतरसस्यानुमानतः ॥ ५ ॥

गङ्गाधरः—प्रत्यक्षतः परीक्षणमुपदर्श्यानुमानेन परीक्षणमुपदर्शयति—इमे त्वित्यादि । इमे इत्यत ऊर्द्ध्वं वक्ष्यमाणाः अन्येऽपीत्यनुक्ता अपि चात्र ज्वरादयः । अग्निं जरणशक्तेरति सर्व्वं वक्ष्यमाणं विद्यादित्यनेनान्वीयते । केश्चित् प्रागुक्तं परीक्षेतेत्यनेन । जरणशक्तिर्भुक्तजीर्णकरी शक्तिः । अर्थाव्यभिचारेणेति अव्यभिचारितस्मृत्यादिना व्यवसायेन शास्त्रादिषु विकल्पबुद्ध्या ।

शरीराद् यूका अपसर्पन्ति । एवं यूकाद्यनपसर्पणेन प्राकृतरसयुक्तशरीरमनुमातव्यम् । धारिलोहितमिति जीवनलोहितमित्यर्थः । श्वकाकभक्षणादिज्ञेयं यत्, तत् पित्तादुष्टत्वेनाविरसात् श्वादयो भक्षयन्ति, न तु पित्तदुष्टरक्तमिति भावः । अत्र शब्दस्पर्शरूपरसगन्धा इत्युपदेशं कृत्वा शब्दानन्तरं चक्षुर्ग्राह्यं रूपं दर्शयन् शब्दादिपरीक्षायाश्च क्रमनियमाभावं सूचयति ॥ ५ ॥

चक्रपाणिः—भूयोऽनुमानज्ञेया इत्यनेनानुमानगम्यतया वक्ष्यमाणाः केचिदग्निबलादय आतुरोपदेशगम्या भवन्तीति सूचयति । मनोऽर्थाव्यभिचरणेनेति सतीन्द्रियाणामर्थनिबन्धे यदिदं कदाचिच्छब्दं प्रत्येति, कदाचिद्रसमित्याद्ययौगपद्येन सर्व्वार्थान् प्रत्येति । तेन तु इन्द्रियार्थसंयोगानन्तरमिन्द्रियार्थग्राहकं मन इत्यनुमीयते । ज्ञानं व्यवसायेनेति व्यवसायः प्रवृत्तिः ।

* ज्ञानमिति वा पाठः ।

दैन्येन हर्षमामोदेन प्रीतिं तोषेण भयं विषादेन धैर्य्यम् अविषादेन वीर्य्यमुत्साहेन * अवस्थानमविभ्रमेण श्रद्धामभिप्रायेण मेधां ग्रहणेन संज्ञां नामग्रहणेन स्मृतिं स्मरणेन ह्रियम् अपत्रपेण शीलमनुशीलनेन द्वेषं प्रतिषेधेनोपाधि † मनुबन्धेन धृतिम् अलौल्येन वश्यतां विधेयतया वयोभक्तिसात्म्यव्याधिसमुत्थानानि कालदेशोपशयवेदनाविशेषेण गूढ़लिङ्गं व्याधिमुप-

सङ्गेन प्राप्तार्थे प्रीत्यसम्पूर्णत्वतदासक्त्यभयरूपेण। मोहमविज्ञानेनेति वचनेन तमो मोहेनेत्युक्तं भवति मोहस्य तमोजत्वात्। मेधां ग्रहणेन मनसा धारणेन। स्मृतिं स्मरणेन स्मृतार्थानां प्रकाशनेन। अपत्रपेण लज्जाजनकपरकीयव्यापारेण। शीलं तच्छीलता सतताभ्यसनमनुशीलनेन पश्चात् शीलनव्यापारेण। प्रतिषेधेन निषेधेन। उपाधिमनुबन्धेनेति उपाधिराधुनिकसङ्केतः सङ्केतकर्त्तृभिः कृतः. अनुबन्धेनोत्तरकालमनुवर्त्तनेन। धृतिर्नियमात्मिका बुद्धिः। अलौल्यमचञ्चलत्वम्। विधेयतया यद्यस्मिन्नाज्ञाप्यते तस्य तत्कर्त्तव्यत्वेन। वय इत्यादि वयः कालेन भक्तिं देशेन सात्म्यमुपशयेन सुखावहव्यापारेण व्याधिसमुत्थानं वेदनाविशेषेण इत्येवं यथाक्रमं नान्वयः. परन्तु यथायोगं

यथा—पेयजले पानार्थी प्रवृत्तिः। तेनानुमीयते जलज्ञानमस्य जातम्, कथमन्यथा ज्ञानकार्य्यार्थेक्रियायां प्रवर्त्तेत इति। रजः सङ्गेनेति नार्य्यादिसङ्गेन, तत्कारणरजोऽनुमीयते। अभिद्रोहः परपीड़ार्थप्रवृत्तिः। दैन्यं रोदनादि। आमोदो गीतवादित्रादुत्सवकरणम्। तोषो मुखनयनप्रसादादिः। तेन प्रीतिस्तोषमात्रम्, हर्षस्तु प्रीतिविशेषो मनउद्रेककारक इत्युक्तं भवति। धैर्य्यं विपद्यपि मनसोऽदैन्यम्। वीर्य्यमारब्धदुष्करकार्य्येष्वव्यावृत्तिर्मनसः। उत्थानेनेति क्रियारम्भेण। अवस्थानं स्थिरमतित्वम्। अविभ्रमेणेत्यभ्रान्त्या। श्रद्धामिच्छाम्। अभिप्रायेणेति अभ्यर्थनेन। ग्रहणेनेति ग्रन्थादिधारणेन। स्मृतिमिति स्मृतिजनकं संस्कारम्। स्मरणेनेति तत्कारणं संस्कारोऽनुमीयते। ह्रियमिति लज्जाम्। अपत्रपेणेति लज्जिताकारेण। शीलमिति सहजं वस्तुषु रागम्। अनुशीलनेनेति अनुशीलनं सततशीलनम्; तेन सततं यमर्थं सेवते तच्छीलोऽयमित्यनुमीयते। प्रतिषेधेनेति व्यावृत्त्या। उपेत्य धीयते इति उपधिः छद्म इत्यर्थः, अनुबन्धेनेत्युत्तरकालं हि भ्रात्रादिवधेन फलेन ज्ञायते,—यदयमुन्मत्तच्छद्मप्रचारी चन्द्रगुप्त इति। विधेयतयेति विधेयप्रचारेण। वयःप्रभृतीनि व्याधिसमुत्थानान्तानि चत्वारि यथासंख्यं कालादिविशेषेण ज्ञायन्ते। तत्र कालविशेषेण षोड़शवर्षादिना वयो बाल्यादि ज्ञायते।

* उत्थानेनेति पाठान्तरम्। † उपधिमिति चक्रः

शयानुपशयाभ्यां दोषप्रमाणविशेषमपचारविशेषेण। आयुषः क्षयमरिष्टैरुपस्थितश्रेयस्त्वं कल्याणाभिनिवेशेन अमलं सत्त्वम् अविकारेण। ग्रहण्यास्तु मृदुत्वं दारुणत्वञ्च स्वप्नदर्शनमभिप्रायं द्विष्टेष्टेष्वसुखसुखानि * चातुरपरिप्रश्नेनैव विद्यादिति॥ ६॥

व्यस्तसमस्तकालादिभिर्वयःप्रभृतीन् विद्यादित्यर्थः। अमलं सत्त्वं मनसो नैर्मल्यमविकारेण मनसो विकाराभावेन अद्वैधेनेत्यर्थः। आतुरस्य स्वप्नदर्शनं आतुरस्यैवाभिप्रायं आतुरस्यैव द्विष्टेषु चेष्टेषु चाभिमतेषु सुखदुःखानि। अत एव सुश्रुतेनाप्युक्तं विशिखानुप्रवेशनीयेऽध्याये। अधिगततन्त्रेणोपासित-तन्त्रार्थेन दृष्टकर्म्मणा कृतयोग्येन शास्त्रार्थं निगदता राज्ञानुज्ञातेन नीच-नखरोम्णा शुचिना शुक्लवस्त्रपरिहितेन छत्रवता दण्डहस्तेन सोपानोत्केन अनुद्धतवेशेन सुमनसा कल्याणाभिव्याहारेणाकुहकेन बन्धुभूतेन भूतानां सुसहायवता वैद्येन विशिखाऽनुप्रवेष्टव्या। ततो दूतनिमित्तशकुनमङ्गलानु-लोम्येनातुरगृहमभिगम्योपविश्यातुरमभिपश्येत् स्पृशेत् पृच्छेच्च। त्रिभिरेतै-र्विज्ञानोपायैः प्रायशो रोगा वेदितव्या इत्येके। तत्तु न सम्यक्। षड्विधो हि रोगाणां विज्ञानोपायः। तद् यथा—पञ्चभिः श्रोत्रादिभिः प्रश्नेन चेति। तत्र श्रोत्रेन्द्रियविज्ञेया विशेषा रोगेषु व्रणास्रावविज्ञानीयादिषु वक्ष्यन्ते सफेनं रक्तमीरयन्ननिलः सशब्दो निर्गच्छतीत्येवमादयः। स्पर्शनेन्द्रियविज्ञेयाः शीतोष्ण-श्लक्ष्णकर्कशमृदुकठिनत्वादयो स्पर्शविशेषा ज्वरशोफादिषु। चक्षुरिन्द्रियविज्ञेयाः शरीरोपचयापचयायुर्लक्षणबलवर्णविकारादयः। रसनेन्द्रियविज्ञेयाः प्रमेहा-

देशेन तु भक्तिरिच्छा ज्ञायते, यथा त्वयं मध्यदेशीयस्तेनास्य गौधूममाषादिषु इच्छानुमीयते। यस्माच्चेदमस्योपशेते, तेनेदमस्य सात्म्यमिति ज्ञायते, वेदनाविशेषेण व्याधिसमुत्थानं ज्ञायते, यथा—यस्मादयं सन्तापवेदनावान्, तस्मादस्य ज्वरव्याधिसमुत्थानं भूतमित्यादि ज्ञेयम्। गूढ-लिङ्गमिति विशेषेण गूढलिङ्गव्याधौ लिङ्गैरेवानवधारिते तु उपशयानुपशयाभ्यां परीक्षा करणीयेति दर्शयति। अपचारविशेषेणेति महतापचारेण भूरिदोषा भवन्ति, स्वल्पेन स्वल्प इति। कल्याणाभि-निवेशेनेति श्रेयस्करमार्गानुष्ठानेन ;—एतदाचरतो निःश्रेयस एव भवति। सत्त्वमिति सत्त्वगुणो-द्रेकमविकारेण। परिप्रश्नेन चेतिवचनेन, यद्यपि ग्रहणीमार्द्दवाद्यनुमानादपि पार्य्यते ज्ञातुम्, तथाप्यनुमानस्य बुद्धिप्रयासबहुत्वेनातुरपृच्छयैव सुखोपचाररूपतया विद्याद् ग्रहणीमार्द्दवादीनीति दर्शयति। स्वप्नमित्यादि। अभिप्रायो भोजनादीच्छा। द्विष्टेष्टशब्देन तु द्विष्टेप्सितप्रेष्यादिग्रहणम्॥६॥

* द्विष्टेष्टसुखदुःखानीति पाठान्तरम्।

भवन्ति चात्र।

आप्ततश्चोपदेशेन प्रत्यक्षकरणेन च।
अनुमानेन च व्याधीन् सम्यग्विद्याद्विचक्षणः।
सर्व्वथा सर्व्वमालोच्य यथासम्भवमर्थवित्॥
अथाध्यवस्येत् तत्त्वे च कार्य्ये च तदनन्तरम्।
कार्य्यतत्त्वविशेषज्ञः प्रतिपत्तौ न मुह्यति॥
अमूढ़ः फलमाप्नोति यदमोहनिमित्तजम्॥
ज्ञानबुद्धिप्रदीपेन यो नाविशति योगवित् *।
आतुरस्यान्तरात्मानं न स रोगांश्चिकित्सति॥७॥

दिषु रसविशेषाः। घ्राणेन्द्रियविज्ञेया अरिष्टलिङ्गादिषु व्रणानामव्रणानाञ्च गन्धविशेषाः। प्रश्नेन च विजानीयाद्देशं कालं जातिं सात्म्यमातङ्कसमुत्पत्तिं वेदनासमुच्छ्रायं बलं दीप्ताग्नितां वातमूत्रपुरीषरजसां प्रवृत्त्यप्रवृत्ती कालप्रकर्षादींश्च विशेषान्। आत्मसदृशेषु विज्ञानाभ्युपायेषु तत्स्थानीयैर्जानीयात्। भवति चात्र। मिथ्यादृष्टा विकारा हि दुराख्यातास्तथैव च। तथा दुष्परिमृष्टाश्च मोहयेयुश्चिकित्सकम्॥ इति। अत्र प्रश्नेनेत्युपलक्षणादनुमानमपि ज्ञापितं तथा रसनेन्द्रियविज्ञेयाः प्रमेहादिषु रसविशेषा मक्षिकापिपीलिकादिभिः इति शेषः। तेन न विरोधः॥६॥

गङ्गाधरः—अथैवं परीक्ष्य चिकित्सायां फलमाह—भवन्तीत्यादि। आप्तत इत्यादि। यथासम्भवमर्थविदित्यन्त एकश्छेदः सार्द्धश्लोकेन। न मुह्यतीति च्छेदो द्वितीयः। अमूढ़ो मोहाभाववान् अमोहनिमित्तजम् अज्ञानाभावजं सम्यग्-

यथासम्भवमित्यनेन सर्व्वत्र परीक्षणीये सर्व्वप्रमाणासम्भव इति दर्शयति—अथेत्यादि। अथ प्रत्येकशब्दादिविषयपरीक्षानन्तरम्। तत्त्वे व्याधितत्त्वे, तथा कार्य्ये च तत्र साध्ये व्याधौ कर्त्तव्यलक्षणे। तदनन्तरम् अध्यवस्येत्, यदुक्तम्—"तत्त्वं भवति यत्र कार्य्ये युक्तम्," तत्तावद्वयं निश्चयं कुर्य्यादित्यर्थः, अनन्तरमिति अविद्यमानान्तरयोग्यमित्यर्थः। कार्य्यतत्त्वविशेषाध्यवसायफलमाह—कार्य्येत्यादि। प्रतिपत्तिः कर्म्मणां यथार्हतयाऽनुष्ठानम्। अमूढ

* तत्त्वविदिति वा पाठः।

तत्र श्लोकौ ।

सर्व्वरोगविशेषाणां त्रिविधं ज्ञानसंग्रहम् ।
यथा चोपदिशन्त्याप्ताः प्रत्यक्षं गृह्यते यथा ॥
ये यथा चानुमानेन ज्ञेयास्तांश्चाप्युदारधीः ।
भावांस्त्रिरोगविज्ञाने विमाने मुनिरुक्तवान् ॥ ८ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते विमानस्थाने त्रिविधरोगविशेषविज्ञानीयं विमानं नाम चतुर्थोऽध्यायः ॥ ४ ॥

ज्ञानादेव जातम् इति तृतीयश्छेदः । अज्ञानजं फलमयशःप्रभृतिकं फल नाप्नोतीति भावार्थं व्याकरोति ज्ञानेत्यादि इति चतुर्थश्छेदः ॥ ७ ॥

गङ्गाधरः—अध्यायार्थमुपसंहरति—तत्र श्लोकावित्यादि । त्रिविधमित्यारभ्य बुद्धिमन्त इत्यन्तेन सर्व्वरोगविशेषाणां त्रिविधं ज्ञानसंग्रहम् । रोगमेकैकमित्यारभ्य ज्ञायते इत्यन्तेनाप्ता यथोपदिशन्ति तत्प्रकारम् । ततः प्रत्यक्षन्त्वित्यारभ्य परीक्षणमुक्तमित्यन्तेन यथा प्रत्यक्षं गृह्यते तत्प्रकारम् । इमेत्वित्यारभ्य चिकित्सतीत्यन्तेन ये यथानुमानेन ज्ञेयास्तान् भावान् उदारधीर्मुनिरात्रेयपुनर्वसुस्त्रिरोगविज्ञाने त्रिविधरोगविशेषविज्ञाने विमाने उक्तवानित्यर्थः ॥ ८ ॥

गङ्गाधरः—अध्यायं समापयति—अग्नीत्यादि ।

इति श्रीगङ्गाधरकविरत्नकविराजविरचिते चरकजल्पकल्पतरौ तृतीयस्कन्धे विमानस्थानजल्पे त्रिविधरोगविशेषविज्ञानीयजल्पाख्या चतुर्थी शाखा ॥ ४ ॥

इति प्रतिपत्तावमूढ इत्यर्थः । ज्ञानं शास्त्रं, तत्कृता बुद्धिर्ज्ञानबुद्धिः । आविशति बुद्ध्यावगाहत इत्यर्थः । अन्तरात्मानमिति वैद्यपक्षे अन्तःशरीरम् ॥ ७।८ ॥

इति चरकचतुरानन-श्रीमच्चक्रपाणिदत्तविरचितायाम् आयुर्व्वेददीपिकायां विमानस्थानव्याख्यायां त्रिविधरोगविशेषविज्ञानीयं विमानं नाम चतुर्थोऽध्यायः ॥ ४ ॥

## पञ्चमोऽध्यायः ।

### अथातः स्रोतसां विमानं व्याख्यास्यामः, इतिह स्माह भगवानात्रेयः ॥ १ ॥

**यावन्त एव पुरुषे मूर्त्तिमन्तो भावविशेषास्तावन्त एव अस्मिन् स्रोतसां प्रकारविशेषाः । सर्व्वभावा हि पुरुषे नान्तरेण स्रोतांस्यभिनिर्व्वर्त्तन्ते क्षयं वाप्यधिगच्छन्ति । स्रोतांसि खलु परिणाममापद्यमानानां धातूनामभिवाहीनि भवन्त्ययनार्थेन ।**

गङ्गाधरः—अथ शारीरभावाणां मानविज्ञानार्थं स्रोतोविमानमाह—अथात इत्यादि ॥ १ ॥

गङ्गाधरः—यावन्त इत्यादि मूर्त्तिमन्त इत्यनेन वातादिवहस्रोतसां प्रकारविशेषो नास्तीति ख्यापितं सर्व्वेषामेव हि स्रोतसां वाताकाशवहत्वात् । ननु कुतो यावन्तो मूर्त्तिमन्तो भावविशेषाः पुरुषे तावन्तः प्रकारविशेषाः स्रोतसामस्मिन् पुरुषे इत्यत आह—सर्व्वभावा हीत्यादि । पुरुषे हि यस्मात् स्रोतांसि अन्तरेण विना सर्व्वभावा मूर्त्तिमन्तः सर्व्वभावा रसरक्तादयः स्वेदादयः श्लेष्मपित्तपुरीषमूत्रादयश्च नाभिनिर्व्वर्त्तन्ते न वा क्षयमधिगच्छन्ति । ननु कुतो न सर्व्वभावाः पुरुषे स्रोतांसि विनाभिनिर्वर्त्तन्ते न वा क्षयन्तीत्यत आह—स्रोतांसीत्यादि । धातूनामिति रसादीनाम् अयनार्थेन गमनहेतुना । आहारपरिणामरसो हि स्रोतसां छिद्ररूपं पन्थानं विना गन्तुं न शक्नोति, न च स्रोतश्छिद्रपथेन गमनं विना तदुत्तरोत्तरधातुत्वेन परिणमति । उत्तरोत्तरधातवो हि विभिन्नरूपास्तस्माद्यावन्तो मूर्त्तिमन्तो भावाः पुरुषे तावन्तः स्रोतसामस्मिन् प्रकारविशेषा इति भावः ।

चक्रपाणिः—पूर्व्वस्मिन्नध्याये परीक्षामभिधाय तत्परीक्षणीयं शरीरं दृष्टादृष्टस्रोतोविभागेन वक्तुं स्रोतसां विमानमुच्यते ॥ १ ॥

चक्रपाणिः—मूर्त्तिमन्त इत्यसर्व्वगतद्रव्यपरिमाणवन्तः, असर्व्वगतपरिमाणं हि मूर्त्तिरुच्यते । भावविशेषा इत्युत्पत्तिमन्तो विशेषाः । अत्र हेतुमाह—स्रोतांसीत्यादि । खलुशब्दो हेतौ । परिणाममापद्यमानानामिति पूर्व्वपूर्व्वरसादिरूपतापरित्यागेनोत्तरोत्तरं रक्तादिरूपतामापद्यमानानाम् । अयनार्थेन' इतिवचनान्न स्थिराणां धातूनामभिवाहीनि भवन्ति स्रोतांसि, किन्तु देशान्तरप्रापणेन

अपि चैके महर्षयः स्रोतसामेव समुदयं पुरुषमिच्छन्ति सर्व्वगतत्वात् सर्व्वसरत्वाच्च दोषप्रकोपणप्रशमनानाम्। न त्वेतदेवम्। यस्य च हि स्रोतांसि यच्च वहन्ति यथा वहन्ति यत्र चावस्थितानि सर्व्वं तदन्यत् तेभ्यः ॥ २ ॥

अत्र मतभेदं दर्शयति—अपीत्यादि। एके मुनयः। स्रोतसामेव समुदायं पुरुषमिच्छन्ति दोषप्रकोपणप्रशमनानामाहारपरिणामेन रसरूपाणां सर्व्वगतत्वात् सर्व्वशरीरगतत्वात्, सर्व्वसरत्वाच्च दोषप्रकोपणप्रशमनानामित्यन्वयः। रसादिसर्व्वधातूपधातुमलधातुदुष्टिकराणां दोषाणां सर्व्वदेहसरणात्। आत्ममनोवहान्यपि स्रोतांसि सन्तीति स्रोतःसमुदायात्मकः पुरुष इति भावः। मतमेतद् दूषयति—न त्वेतदेवमित्यादि। एतदिति पुरुषलक्षणमेवं स्रोतसामेव समुदायः पुरुष इति न तु। कस्मादित्यत आह—यस्येत्यादि। हि यस्मात् यस्य च मूर्त्तिमतो भावस्य स्रोतांसि यानि यच्च वहन्ति तत् यथा वहन्ति तत्प्रकारः यत्र चावस्थितानि तच्च स्थानं तदेतत् सर्व्वं तेभ्यः

अभिवाहीनि भवन्ति। एवं मन्यते—रक्तस्य वृद्धिः शोणितरूपतया परिणमता रसेन मिलितेन कर्त्तव्या। स च स्थानान्तरस्थस्य रसस्य रुधिरेण समं मेलको न गमनमार्गं स्रोतःसंज्ञकमन्तरा भवति। एवं तावदभिनिर्व्वृत्तिः स्रोतःकारणिको धातूनां प्रायो रक्तस्योत्तरधातुपोषकभागपरिणामो भवति। तच्चाप्युत्तरधातुपोषणं नान्तरेण स्रोतो भवति। यश्च रक्ते न्यायः, स सर्व्वत्र शारीरे भावे। न चान्यस्रोतसा चान्यधातुपुष्टिः सम्भवति, सर्व्वपोष्याणां भिन्नदेशत्वात्। न ह्यभिन्नेन स्रोतसा भिन्नदेशवृक्षयोः सेचनमस्ति। मनस्तु यद्यपि नित्यत्वेन न पोष्यं, तथापि तस्येन्द्रियप्रदेशगमनार्थं स्रोतोऽस्त्येव। तच्च मनःप्रभृतीनामतीन्द्रियाणां कृत्स्नमेव शरीरं स्रोतोरूपं वक्ष्यति। दोषाणान्तु सर्व्वशरीरचरत्वेन यथास्थूलस्रोतोऽभिधानेऽपि सर्व्वस्रोतांस्येव गमनार्थं वक्ष्यन्ते। सूक्ष्मजिज्ञासायान्तु वातादीनामपि प्रधानभूताः धमन्यः सन्त्येव। यदुक्तं सुश्रुते—"तासां वातवाहिन्यो दश सिरा भवन्ति" इत्यादि। न च चरके सुश्रुत इव धमनीसिरास्रोतसां भेदो विवक्षितः।

सर्व्वगतत्वादिति स्रोतसां सर्व्वशरीरावयवगतत्वादित्यर्थः। सर्व्वसरत्वादित्युत्तरेण सम्बध्यते। दोषप्रकोपणमपथ्यं दोषप्रशमनं वा पथ्यं सर्व्वस्मिन् शरीरप्रदेशे दोषरूपं सत् तथा भेषजरूपं सद् गच्छति। तेन सर्व्वत्र स्रोतो विद्यते। तेन स्रोतोमयः पुरुष इति पूर्व्वपक्षं निषेधयति—न त्वित्यादि। यस्य हि स्रोतांसि यद्घटितानीत्यर्थः, यच्च वहन्तीति

अतिबहुत्वात् तु खलु केचिदपरिसंख्येयान्याचक्षते स्रोतांसि परिसंख्येयानीत्यन्ये। तेषान्तु खलु स्रोतसां यथास्थूलं कतिचित् प्रकारान् मूलतश्च प्रकोपविज्ञानतश्चानुव्याख्यास्यामः, ये भविष्यन्त्यलमनुक्तज्ञानाय ज्ञानवतां विज्ञानाय चाज्ञानवताम्। तद्-यथा—प्राणोदकान्नरसरुधिर-मांसमेदोऽस्थिमज्ज-शुक्रमूत्रपुरीष-स्वेदवहानि। वातपित्तश्लेष्मणां पुनः सर्व्वशरीरचराणां सर्व्वाणि स्रोतांस्ययनभूतानि। तत्तदतीन्द्रियाणां पुनः सत्त्वा-

स्रोतोभ्योऽन्यत् न तु स्रोतांस्येव तस्मात् न स्रोतःसमुदाय एव पुरुष इत्यर्थः ॥ २ ॥

गङ्गाधरः—मतान्तरमाह—अतिबहुत्वात् त्वित्यादि। मतान्तरमाह—परिसंख्येयानीत्यादि। तन्मतद्वयमप्रतिषिद्धत्वादनुमतम् कात्स्न्यादपरिसंख्येयानि स्थूलतः परिसङ्ख्येयानि इत्यभिप्रायात्। कतिचिदेव न तु सर्व्वान्। ननु के प्रकारा व्याख्यास्यन्ते इत्यत आह—तेषान्त्वित्यादि। स्रोतसां ये प्रकारा ज्ञानवतामनुक्तज्ञानाय पुनर्ज्ञानाय अज्ञानवतां स्रोतसां प्रकारा ज्ञानवतां विज्ञानाय चालं समर्था भवन्ति तान् कतिचित् तेषां स्रोतसां प्रकारान् यथास्थूलं तथा मूलतश्च तत्प्रकोपविज्ञानतश्चानुव्याख्यास्याम इत्यर्थः। तद्व्याख्यायते। तद् यथेत्यादि। प्राणोदकादिकानामसर्व्वशरीरचराणां वहानि सर्व्वस्रोतांसि अयनभूतानि सच्छिद्राणि पथिरूपत्वात् तथा सर्व्वशरीरचराणां वातपित्तश्लेष्मणां वहानि सर्व्वस्रोतांसि चायनभूतानि सच्छिद्राणि वर्त्मरूपत्वात्। न त्वधिष्ठानादिभूतानि। तत्तदतीन्द्रियाणामिन्द्रियागोचराणान्तु सत्त्वा-

यत्र पुष्यन्तीत्यर्थः, यत्र चावस्थितानीति यत्र मांसादौ सम्बद्धानीत्यर्थः, तत् सर्व्वं धमनीभ्योऽन्यत्। तस्मात्र स्रोतोरूप एव पुरुष इत्यर्थः ॥ २ ॥

चक्रपाणिः—प्रकोपविज्ञानतश्चेति यथा स्रोतसां प्रकोपो विज्ञायते तथा व्याख्यास्याम इति योजना। अनुक्तार्थज्ञानायेत्यनुक्तस्रोतोज्ञानाय। ज्ञानवतामित्यनुक्तार्थज्ञानसमर्थानाम्। ज्ञानवन्तो ह्यनुक्तमपि स्रोतोऽनुमीमते। विज्ञानाय चाज्ञानवतामिति यथोक्तमानज्ञानाय च मन्दबुद्धी-

दीनां केवलं चेतनावच्छरीरमयनभूतमधिष्ठानभूतञ्च । तदेतत् स्रोतसां प्रकृतिभूतत्वात् न विकारैरुपसृज्यते शरीरम् ॥ ३ ॥

तत्र प्राणवहानां स्रोतसां हृदयं मूलं महास्रोतश्च । प्रदुष्टानान्तु खल्वेषामिदं विशेषविज्ञानं भवति ; तद् यथा—अतिसृष्टं प्रतिबद्धं प्रकुपितमल्पाल्पमभीक्ष्णं वा सशब्दशूलमुच्छ्वसन्तं दृष्ट्वा प्राणवहानि स्रोतांस्यस्य प्रदुष्टानीति विद्यात् ।

उदकवहानाञ्च स्रोतसां तालु मूलं क्लोम च । प्रदुष्टानाञ्च

दीनां मन आत्मश्रोत्रस्पर्शननयनरसनघ्राणबुद्ध्यहङ्कारादीनां केवलं चेतनावत् सजीवं शरीरस्रोतः अयनभूतमधिष्ठानभूतञ्च । तदेतत् स्रोतसां तेषां प्राणादिवहानाम् एषां सत्त्वादीनामतीन्द्रियाणामभिवाहिस्रोतसां प्रकृतिभूतत्वाद्विकाराभावादिदं शरीरं विकारैर्वैषम्यैर्नोपसृज्यते । एतेन प्राणादिसत्त्वादिवहस्रोतसां विकृतिभूतत्वे शरीरं विकारैरुपसृज्यत इति ख्यापितम् । इति प्रकारव्याख्यानम् ॥ ३ ॥

गङ्गाधरः—मूलतो व्याख्यायते—तत्रेत्यादि । तत्र प्राणादिवहेषु स्रोतःसु मध्ये हृदयं वक्षः, महास्रोतश्च महासरणं महाच्छिद्रमित्यर्थः । प्राणवहानां स्रोतसां प्रकोपविज्ञानतस्तु व्याख्यानं करोति । प्रदुष्टानान्त्वित्यादि । एषां प्राणादिवहानाम् । तद् यथेत्यादि । अतिसृष्टमित्यादि । सर्व्वमुच्छ्वासक्रियाविशेषणम् । यः पुमानति आयत्या दीर्घमुच्छ्वसिति किंवा प्रतिबद्धमुच्छ्वसिति अथवा प्रकुपितं वृद्धमुच्छ्वसिति किंवा अल्पाल्पमुच्छ्वसिति किंवा अभीक्ष्णमुच्छ्वसिति किंवा सशब्दशूलमुच्छ्वसिति तादृशमुच्छ्वसन्तं पुरुषं दृष्ट्वा अस्य पुरुषस्य प्राणवहानि स्रोतांसि प्रदुष्टानीति विद्यात् अनुमीयेत । क्रमिकत्वादुदकवहस्रोतांसि मूलतश्च प्रकोपविज्ञानतश्च व्याख्यायन्ते । उदकवहानाञ्चेत्यादि । मूलं तालु क्लोम च । क्लोम कण्ठोरसोः सन्धिः । तेषां प्रकोपविज्ञानमाह—प्रदुष्टाना-

नाम् इत्यर्थः । तद्वदित्यादि । चेतनावच्छरीरमित्यनेनाचेतनकेशनखादिप्रदेशं सत्त्वादिगमने निषेधयति, दोषास्तु तत्रापि यान्तीति । अयनभूतमिति मार्गभूतम् । अधिष्ठानभूतमिति स्थानरूपम् ॥ ३ ॥

चक्रपाणिः—प्राणवहानामिति प्राणसंज्ञकवातवहानाम् । एतच्च प्राणाख्यविशिष्टस्य वायोः विशिष्टस्रोतः । सामान्येन तु वायोः सर्व्वा एव धमन्य इति न विरोधः । मूलमिति प्रभवस्थानम् ।

खल्वेषामिदं विशेषविज्ञानं भवति ; तद् यथा—जिह्वाताल्वोष्ठकण्ठक्लोमशोषं पिपासाञ्चातिप्रवृद्धां दृष्ट्वा भिषगुदकवहान्यस्य स्रोतांसि प्रदुष्टानीति विद्यात्।

अन्नवहानां स्रोतसामामाशयो मूलं वामञ्च पार्श्वम्। प्रदुष्टानान्तु खल्वेषामिदं विशेषविज्ञानं भवति ; तद् यथा—अनन्नाभिलषणमरोचकाविपाकौ च्छर्द्दिञ्च दृष्ट्वान्नवहान्यस्य स्रोतांसि प्रदुष्टानीति विद्यात्।

रसवहानां स्रोतसां हृदयं मूलं दश धमन्यश्च। शोणितवहानां स्रोतसां यकृन्मूलं प्लीहा च। मांसवहानां स्रोतसां स्नायुर्मूलं त्वक् च। मेदोवहानां स्रोतसां वुक्कौ मूलं वपावहनञ्च। अस्थिवहानां स्रोतसां मेदो मूलं जघनञ्च। मज्जवहानां स्रोतसामस्थीनि मूलं सन्धयश्च। शुक्रवहाणां स्रोतसां वृषणौ मूलं शेफश्च। प्रदुष्टानान्तु खल्वेषां रसादिवहस्रोतसां विज्ञानान्युक्तानि विविधाशीतपीतीये। यान्येव हि धातूनां प्रदोषविज्ञानानि, तान्येव हि यथास्वं दुष्टानां धातुस्रोतसाम्।

ञ्चेत्यादि। जिह्वेत्यादि स्पष्टम्। क्रमत्वादन्नवहानां व्याख्यानमाह—अन्नवहानामित्यादि। आमाशयो वामपार्श्वञ्च मूलमित्यर्थः। प्रकोपविज्ञानव्याख्यानन्तु स्पष्टम्। क्रमिकत्वाद्रसवहानि व्याख्यायन्ते। रसवहानाम् इत्यादि। हृदयं हृदयमूला दश धमन्यश्च मूलमिति यकृत् प्लीहा च मूलम्। स्नायुस्त्वक् च मूलम्। वुक्कौ अग्रमांसद्वयं वपावहनं वसावहनं मूलम्। मेदो जघनञ्च मूलम्। अस्थीनि सन्धयश्चास्थिवहानां मूलम्। वृषणावण्डकोषौ शेफः शिश्नश्चेति मूलम् शेफ इति पुरुषाभिप्रायेण पुंसः शुक्रप्रधानत्वात्। प्रकोपविज्ञानान्येषामाह—प्रदुष्टानामित्यादि। विविधाशितपीतीयोक्तलिङ्गतोऽधिकानि लिङ्गान्यस्य प्रकोपस्याह—यान्येव हीत्यादि। धातूनां प्रदोष-

मूत्रवहाणां स्रोतसां वस्तिर्मूलं वङ्क्षणौ च। प्रदुष्टानान्तु खल्वेषामिदं विशेषविज्ञानं भवति; तद् यथा—अतिसृष्टं प्रतिबद्धं वा कुपितमल्पाल्पमभीक्ष्णं वा बहलं सशूलं मूत्रयन्तं दृष्ट्वा मूत्रवहाण्यस्य स्रोतांसि प्रदुष्टानीति विद्यात्।

पुरीषवहाणां स्रोतसां पक्वाशयो मूलं स्थूलगुदश्च। प्रदुष्टानान्तु खल्वेषामिदं विशेषविज्ञानं भवति; तद् यथा—कृच्छ्रेणाल्पाल्पं सशब्दशूलमतिद्रवमतिग्रथितमतिबहु चोपविशन्तं दृष्ट्वा पुरीषवहाण्यस्य स्रोतांसि प्रदुष्टानीति विद्यात्।

स्वेदवहानां स्रोतसां मेदो मूलं लोमकूपाश्च। प्रदुष्टानान्तु खल्वेषामिदं विशेषविज्ञानं भवति; तद् यथा—अस्वेदमतिस्वेदनं वा पारुष्यमतिश्लक्ष्णतामङ्गस्य परिदाहं लोमहर्षञ्च दृष्ट्वा स्वेदवहान्यस्य स्रोतांसि प्रदुष्टानीति विद्यात्॥ ४॥

विज्ञानानि विविधाशितपीतीयोक्तानि। क्रमिकत्वान्मूत्रवहाणि व्याख्यायन्ते—मूत्रेत्यादि। वस्तिर्वङ्क्षणौ च मूलं प्रकोपविज्ञानमतिसृष्टमित्यादि। सर्व्वं मूत्रणक्रियाविशेषणम्। पुरीषेत्यादि स्पष्टम्। पक्वाशयो नाभेरधः स्थूलगुदं त्रिवलिरूपम्। प्रकोपविज्ञाने अल्पाल्पमित्यादि उपवेशक्रियाविशेषणम्।

"अतिसृष्टं वा अतिबद्धं वा" इति विकल्पेन बोद्धव्यम्, अतिसृष्टातिबद्धयोरेकत्रासम्भवात्। अल्पाल्पं वा तथाभीक्ष्णं वेति विकल्पः। क्लोम हृदयस्थपिपासास्थानम्। वपावहनं, वपा उदरस्था स्निग्धवर्त्तिका यामाहुर्जनाः "तैलवर्त्तिका" इति। सुश्रुते तु "मेदोवहानां मूलं वृक्कौ कटी च" इत्युक्तम्। तदत्रातीन्द्रियार्थदर्शिगम्ये नास्मद्विधानां बुद्धयः प्रभवन्ति। अस्थ्यपि द्रवरूपमस्थ्येव स्रोतोवाह्यम् इति कृत्वा 'अस्थिवहानाम्' इत्युक्तम्। यद्यपि विविधाशितपीतीये रसादीनां दुष्टिलक्षणमुक्तं न रसादिस्रोतसाम्, तथापि रसादिदुष्ट्या रसादिवहधमनीनामपि दुष्टेः साधारणत्वेनोक्तं—"रसादिस्रोतसां विज्ञानान्युक्तानि" इति। ये तु ब्रुवते—रसादिदुष्टिरभिन्नैव तद्वहधमनीदुष्टेरिति, तेषां मते, पृथग्धमनीदुष्ट्या धातुदुष्टिं वक्ष्यति "तेषां प्रकोपात् स्थानस्थाश्चैव" इत्यादिना; तदनुपपन्नम्, धमनीदुष्ट्या तु तद्वाह्यदुष्टिरवश्यं भवतीति कृत्वा धातुदुष्टिलक्षणैरेव इह धमनीदुष्टिरुक्ता, धातुदुष्ट्यनतिरिक्तन्तु धमनीदुष्टिलक्षणम् "अतिप्रवृत्तिः" इत्यादिनात्रैव वक्ष्यति।

स्रोतांसि सिरा धमन्यो रसायन्यो रसवाहिन्यो नाड्यः पन्थानो मार्गाः शरीरच्छिद्राणि संवृतासंवृतानि स्थानान्याशयाः क्षया निकेताश्चेति शरीरधात्ववकाशानां लक्ष्यालक्ष्याणां नामानि भवन्ति। तेषां प्रकोपात् स्थानस्थाश्चैव मार्गगाश्च शरीरधातवः प्रकोपमापद्यन्ते इतरेषाञ्च प्रकोपादितराणि च। स्रोतांसि च स्रोतांस्येव धातवश्च सर्व्वधातूनेव प्रदूषयन्ति च प्रदुष्टाः। तेषां

उपविशन्तं विड्विसृजन्तम्। स्वेदेत्यादि। मेदो लोमकूपाश्च स्वेदवहानां मूलम्। प्रकोपलक्षणं स्पष्टम्। अस्वेदमित्यादि॥ ४॥

गङ्गाधरः—वातादीनां स्रोतोमूलानि न सन्ति सर्व्वशरीरचरत्वात् उक्तानि वा। वायोः पक्वाशयः पित्तस्यामाशयः कफस्य हृदयं स्थानं तदेव तद्वह-स्रोतसां मूलं प्रदोषलक्षणानि च तेषां प्रकोपलक्षणानीत्यतस्तानि नोक्त्वा स्रोतसां पर्य्यायानाह—स्रोतांसीत्यादि। रसादिकत्वात् सर्व्वेषां रसायनीति रसवाहिनीति च संज्ञा संवृतासंवृतेत्येकं नाम। शरीरधात्ववकाशानां शरीरधातूनां प्राणादीनां चलनार्थमवकाशा आकाशाश्छिद्राणि च तेषां तथा। लक्ष्यालक्ष्याणामिति केचिद्धात्ववकाशा लक्ष्यन्ते केचिन्न लक्ष्यन्ते इति लक्ष्या-लक्ष्यास्तेषां तथा। नन्वेषां स्रोतसां प्रकोपात् किं स्यादित्यत आह—तेषा-मित्यादि। स्थानस्थाः स्वमानस्था मार्गगाः स्वस्रोतोगा अपि शरीरधातवः प्राणादयो रसादयश्च। इतरेषां प्राणाद्यन्यतमस्य स्रोतसां प्रकोपात् तदितरेषां स्रोतांसि प्रकुप्यन्ति। स्रोतांसि प्रकुपितानि स्रोतांस्येवान्यवहानि प्रदूषयन्ति, न तु तद्वाह्यान् धातून्। धातवश्च प्रकुपिताः सर्व्वधातूनेव दूषयन्ति न त्वन्यधातुवहानि

अस्वेदनादिकं स्वेदवहदुष्टिलक्षणं कुष्ठपूर्व्वरूपेऽप्यस्ति। तेन, यत्रान्यकुष्ठपूर्व्वरूप-दर्शनं भवति, तत्र कुष्ठपूर्व्वरूपता निश्चेतव्या, एतावन्मात्रलक्षणोदये तु स्वेदवहधमनीनाम्। इह मूलज्ञानं यद्यपि साक्षात्प्रयोजनं नोक्तं, तथापि मूलोपघाताद् वृक्षाणामिव धमनीनां महानुप-घातो भवतीति ज्ञेयम्, अत एव सुश्रुते स्रोतोमूलविद्धलक्षणान्युक्तानि॥ ४॥

चक्रपाणिः—स्रोतसां पर्य्यायानाह—स्रोतांसीत्यादि। संवृतासंवृतानीत्येका संज्ञा, तत्राग्रे संवृतानि, मूलेऽसंवृतानि। 'स्थानानि' पर्य्यायान् केचिद्धमनीमूलस्य पर्य्यायानाचक्षते। अन्ये तु एतानपि धमनीपर्य्यायानाहुः, धमन्योऽपि हि रसादिस्थानं भवन्त्येवेति कृत्वा। स्थानस्था इति आशयस्थाः। मार्गगाश्चैवेति धमनीभिर्गच्छन्तः, इतरेषाञ्चेत्यादिना विवृणोति। स्रोतांसि

सर्व्वेषामेव वातपित्तश्लेष्माणो दूषयितारो भवन्ति दोष-स्वभावादिति ॥ ५ ॥

भवन्ति चात्र।

क्षयात् सन्धारणाद्रौक्ष्याद् व्यायामात् क्षुधितस्य च।
प्राणवाहीनि दुष्यन्ति स्रोतांस्यन्यैश्च दारुणैः ॥
औष्ण्यादामाद्भयात् पानादतिशुष्कान्नसेवनात्।
अम्बुवाहीनि दुष्यन्ति तृष्णायाश्चातिपीड़नात् ॥
अतिमात्रस्य चाकाले चाहितस्य च भोजनात्।
अन्नवाहीनि दुष्यन्ति वैगुण्यात् पावकस्य च ॥
गुरुशीतमतिस्निग्धमतिमात्रं समश्नताम्।
रसवाहीनि दुष्यन्ति चिन्त्यानाञ्चातिचिन्तनात् ॥
विदाहीन्यन्नपानानि स्निग्धोष्णानि द्रवाणि च।
रक्तवाहीनि दुष्यन्ति भजताञ्चातपानलौ ॥

स्रोतांसि। ( ननु कस्कस्तेषां दूषयिता )। तेषामित्यादि। प्रदुष्टवातपित्तश्लेष्माणः तु तेषां स्रोतसां धातूनाञ्च सर्व्वेषामेव दूषयितारो भवन्ति, न तु स्रोतांसि धातूनां न वा धातवः स्रोतसामिति। कस्मादित्यत आह—दोषस्वभावात् इतीति ॥ ५ ॥

गङ्गाधरः—अथैषां दूषणे प्रकोपनिदानान्याह—भवन्तीत्यादि। अन्यैश्च दारुणैर्वातवर्द्धनैरित्यर्थः। औष्ण्यादित्यादि। अम्बुवहस्रोतःकोपनिदानम्। तत्र आममपक्वं भुक्तम्। अतिमात्रस्य भोजनात् अकाले च मात्रावद्भोजनात्। अहि-

धातवश्च दुष्टाः प्रत्यासन्नानि स्रोतांसि धात्वन्तराणि च स्वदोषसंक्रान्त्या दूषयन्तीत्यर्थः। दोष-स्वभावादिति दोषाणामेवायं स्वभावो यद् दूषकत्वं न धात्वन्तराणाम्। तेन, धातुना दुष्टिर्धातुदुष्टि-र्धातुगतदोषकृतैव ज्ञेया ॥ ५ ॥

चक्रपाणिः—यथाक्रमस्रोतसां दुष्टिकारणमाह—क्षयादित्यादि। दारुणैरित्यत्र कर्म्मभिरिति

अभिष्यन्दीनि भोज्यानि स्थूलानि च गुरूणि च।
मांसवाहीनि दुष्यन्ति भुक्त्वा च स्वपतां दिवा॥
अव्यायामाद्दिवास्वप्नान्मेध्यानाञ्चातिसेवनात्।
मेदोवाहीनि दुष्यन्ति वारुण्याश्चातिसेवनात्॥
व्यायामादतिसंक्षोभादस्थ्नामतिविघट्टनात्।
अस्थिवाहीनि दुष्यन्ति वातलानाञ्च सेवनात्॥
उत्पेषादत्यभिष्यन्दादभिघातात् प्रपीड़नात्।
मज्जवाहीनि दुष्यन्ति विरुद्धानाञ्च सेवनात्॥
अकालयोनिगमनान्निग्रहादतिमैथुनात्।
शुक्रवाहीणि दुष्यन्ति शस्त्रक्षाराग्निभिस्तथा॥
मूत्रितोदकभक्ष्यस्त्री-सेवनान्मूत्रनिग्रहात्।
मूत्रवाहीणि दुष्यन्ति क्षीणस्यातिकृशस्य * च॥
विधारणादत्यशनादजीर्णाध्यशनात् तथा।
वर्च्चोवाहीनि दुष्यन्ति दुर्ब्बलाग्नेः कृशस्य च॥
व्यायामादतिसंक्षोभाच्छीतोष्णाक्रमसेवनात्।
स्वेदवाहीनि दुष्यन्ति क्रोधशोकभयैस्तथा॥

तस्य यज्जःपुरुषीयोक्तस्य। मांसवहस्रोतःप्रकोपनिदाने स्थूलानि संहतानि लड्डुकादीनि। मेदोवहस्रोतःप्रकोपनिदाने मेध्यानां स्निग्धत्वात्। अकालयोनिगमनादिति रजस्वलागमनात्। निग्रहादिति शुक्रवेगनिग्रहात्। मूत्रितस्य मूत्रवेगवतः उदकभक्ष्यस्त्रीणां सेवनात्। विधारणादिति वर्च्चोवेगविधारणात्। दुर्ब्बलोऽग्निर्यस्य तस्य तथा। शीतोष्णाक्रमसेवनादिति अक्रमेण शीतोष्ण-

शेषः। गुरूणि च भजतामिति पूर्व्वोक्तेन सम्बन्धः। मेध्यानां मेदुराणाम्। अकालयोनिगमनादिति अहर्यकालगमनात् तथाऽनुचितयोनौ गमनात्। निग्रहादिति शुक्रवेगनिग्रहात्। मूत्रितेत्यादौ मूत्रवेगयुक्तस्य उदकादिसेवनादिति ज्ञेयम्।

* अभिक्षतस्य चेति चक्रधृतः पाठः।

आहारश्च विहारश्च यः स्याद् दोषगुणैः समः ।
ऋतुभि-*-र्विगुणश्चापि स्रोतसां स प्रदूषकः ॥ ६ ॥
अतिप्रवृत्तिः सङ्गो वा सिराणां ग्रन्थयोऽपि वा ।
विमार्गगमनञ्चापि स्रोतसां दुष्टिलक्षणम् ॥ ७ ॥
स्वधातुसमवर्णानि वृत्तस्थूलान्यणूनि च ।
स्रोतांसि दीर्घाण्याकृत्या प्रतानसदृशानि च ॥
प्राणोदकान्नवाहानां दुष्टानां श्वासिकी क्रिया ।
कार्य्या तृष्णोपशमनी तथैवामप्रदोषिकी ॥

सेवनात् । दोषगुणैर्वातादीनां रूक्षादिभिर्गुणैः । ऋतुभिर्विगुणश्चाहारो विहारश्च यस्मिन्नृतौ यद्विहितं तद्विपरीत आहारश्च विहारश्च ऋतुभिर्विगुणः स्यात् । स्रोतसामिति दोषवहाणां स आहारो विहारश्च ॥ ६ ॥

गङ्गाधरः—दोषस्रोतोदुष्टिलक्षणमाह—अतीत्यादि । सिराणामतिप्रवृत्तिर्वा सिराणां सङ्गो वा सिराणां ग्रन्थयोऽपि वा सिराणां विमार्गगमनञ्चापि । स्रोतसां वातादिदोषवहस्रोतसाम् ॥ ७ ॥

गङ्गाधरः—अथ स्रोतसामाकारमाह—स्वधात्वित्यादि । यानि स्रोतांसि यं धातुं वहन्ति स धातुस्तेषां स्रोतसां स्वधातुस्तस्य धातोर्यो वर्णस्तत्समवर्णानि तद्धातुवहानि तानि स्रोतांसि । वृत्तानि च तानि स्थूलानि चेति वृत्तस्थूलानि । अणूनि च वृत्तसूक्ष्माणि च । दीर्घाणि लम्बानि । लतानां प्रतानं अग्रलता तत् सदृशानि । स्रोतसां प्राणादिवहानां प्रकारमूलप्रकोपप्रकोपणाकारानुक्त्वा

आहारश्चेत्यादिना सामान्येन सर्व्वस्रोतोदुष्टिमाह । दोषगुणैः समं इत्यनेन दोषातिवर्द्धकं दर्शयति । क्षीणाश्च दोषा नान्यदुष्टिं कुर्व्वन्ति, किन्तु स्वयमेव क्षीणलिङ्गा भवन्ति इत्यादि वेदितव्यमेव । धातुभिर्विगुण इति धातुविगुणस्वभाव इत्यर्थः न तु विपरीतगुणो धातुविगुणः । दिवास्वप्नमेध्यावयो हि मेदसा सामान्यगुणा एव मेदोदूषका एवोक्ताः ॥ ६ ॥

चक्रपाणिः—अतिप्रवृत्तिरित्यादिना सामान्यस्रोतोदुष्टिलक्षणमाह । अतिप्रवृत्तिरिह स्रोतोवाह्यस्य रसादेर्वोद्धव्या । एवं सङ्गोऽपि रसादेर्विमार्गगमनञ्च, यथा—मूत्रवहाणां स्रोतसां वस्तिः मूलमित्यादौ ॥ ७ ॥

चक्रपाणिः—स्वधातुसमवर्णानीति वाह्यधातुतुल्यवर्णानि । प्रतानो लताप्रपञ्चः । प्राणोदक-

* धातुभिरिति चक्रसम्मतः पाठः ।

विविधाशितपीतीये रसादीनां यदौषधम्।
रसादिस्रोतसां कुर्य्यात् तद् यथास्वमुपक्रमम्॥
मूत्रविट्स्वेदवाहानां चिकित्सा मौत्रकृच्छ्रिकी।
तथातिसारिकी कार्य्या तथा ज्वरचिकित्सिकी॥ ८॥

तत्र श्लोकाः।

त्रयोदशानां मूलानि स्रोतसां दुष्टिलक्षणम्।
सामान्यं नामपर्य्यायाः कोपनानि परस्परम्॥
दोषहेतुः पृथक्त्वेन भेषजोद्देश एव च।
स्रोतोविमाने निर्द्दिष्टं तथा चादौ विनिश्चयः॥

तेषां दुष्टिप्रतिक्रियासूत्राण्याह—प्राणोदकेत्यादि। श्वासिकी श्वासरोगे विहिता या क्रिया सा कार्य्या। तथा तृष्णारोगोपशमनी या क्रिया विहिता तत्राध्याये सा कार्य्या। आमप्रदोषिकी विसूचिकालसकयोर्विहिता या च क्रिया सा च कार्य्येति प्राणोदकान्नवहस्रोतोदुष्टिप्रतिक्रिया बोध्या। विविधाशितपीतीयेऽध्याये यद्रसादीनामौषधमुक्तं रसादिवहस्रोतसामपि तदौषधं तञ्च यथास्वमुपक्रमं कुर्य्यात्। आदिपदेनात्र रक्तमांसमेदोऽस्थिमज्जशुक्राणां ग्रहणम्। मौत्रकृच्छ्रिकी मूत्रकृच्छ्राध्यायोक्ता क्रिया या, या चातिसारिकी अतीसाररोगे विहिता, तथा या क्रिया ज्वरचिकित्सिकी ज्वररोगे विहिता सा सा क्रिया मूत्रविट्स्वेदवहानां दुष्टौ कार्य्येत्यर्थः। वातादिवहस्रोतोदुष्टिप्रतिक्रिया तु निखिलेन तन्त्रेण वाच्या॥ ८॥

गङ्गाधरः—अध्यायार्थमुपसंहरति—तत्रेत्यादि। त्रयोदशानां प्राणो-

इत्यादिना चिकित्सामाह—प्राणवहानां श्वासिकी, उदकवहानां तृष्णोपशमनी, अन्नवहानामामप्रदोषिकी इति बोद्धव्यम्। मूत्रादिवहानामपि त्रयाणां मूत्रकृच्छ्रादयो यथासंख्यं तिस्रश्चिकित्सा ज्ञेयाः॥ ८॥

चक्रपाणिः—संग्रहे दुष्टिलक्षणं सामान्यं वाताद्यविशेषितं दुष्टिलक्षणमित्यर्थः। स्रोतोदुष्टिलक्षणानीह वातादिदोषभेदेन नोक्तानीत्यर्थः। वातादिविशेषेण चेह विस्तरभयाद् दुष्टिर्नोक्ता; तेन वातादिविशेषलिङ्गाधिक्यात् दुष्टिर्निर्णेतव्या। आदौ विनिश्चय इत्यध्यायादौ पुरुषस्य असमी-

केवलं विदितं यस्य शरीरं सर्व्वभावतः ।
शारीराः सर्व्वरोगाश्च स कर्म्मसु न मुह्यति ॥ ६ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते विमानस्थाने
स्रोतसां विमानं नाम पञ्चमोऽध्यायः ॥ ५ ॥

दकान्नादिवहानां प्रकारावच्छिन्नानाम् । स्रोतःप्रभृतिशारीरज्ञानफलमाह— केवलमित्यादि । केवलं कृत्स्नं शरीरं शरीरतत्त्वं शारीराः शरीरावयवाः सर्व्वरोगाश्च । एतत् केवलं कृत्स्नं यस्य विदितं, छन्दसि बहुलत्वात् षष्ठी, स कर्म्मसु चिकित्साक्रियासु न मुह्यति ॥ ९ ॥

अध्यायं समापयति—अग्नीत्यादि ।

इति श्रीगङ्गाधरकविरत्नकविराजविरचिते चरकजल्पकल्पतरौ तृतीय-
स्कन्धे विमानस्थानजल्पे स्रोतसांविमाननाम-
पञ्चमाध्यायजल्पाख्या पञ्चमी शाखा ॥ ५ ॥

मयत्वादिवादनिश्चय इत्यर्थः । केवलमित्यादिना अग्नोक्तभ्रमन्यादिभेदेन शरीरज्ञानस्योपादेयतामाह ॥ ९ ॥

इति चरकचतुरानन-श्रीमच्चक्रपाणिदत्तविरचितायाम् आयुर्व्वेददीपिकायां विमानस्थान-
व्याख्यायां स्रोतोविमानं नाम पञ्चमोऽध्यायः ॥ ५ ॥

अथातो रोगानीकं विमानं व्याख्यास्यामः, इति ह स्माह भगवानात्रेयः ॥ १ ॥

द्वे रोगानीके भवतः प्रभावभेदेन साध्यमसाध्यञ्च, द्वे रोगानीके बलभेदेन मृदु दारुणञ्च । द्वे रोगानीके अधिष्ठान-भेदेन मनोऽधिष्ठानं शरीराधिष्ठानञ्च, द्वे रोगानीके निमित्त-भेदेन धातुवैषम्यनिमित्तञ्चागन्तुजञ्च, द्वे रोगानीके आशय-भेदेन आमाशयसमुत्थञ्च पक्वाशयसमुत्थञ्च ॥ २ ॥

एवमेतत् प्रभावबलाधिष्ठाननिमित्ताशयभेदात् द्वैधं सद् भेद-प्रकृत्यन्तरेण भिद्यमानं वा सन्धीयमानं स्यादेकत्वं बहुत्वं वा ।

गङ्गाधरः—अथ रोगमानविज्ञानार्थं स्रोतोविमानानन्तरं रोगानीकं विमानम् आरभते—अथात इत्यादि । रोगाणामनीकं समूहस्तमधिकृत्य कृतं विमानम् इति रोगानीकं तत् तथा ॥ १ ॥

गङ्गाधरः—द्वे रोगानीके द्विविधं रोगानीकमित्यर्थः । प्रभावः प्रभवनं भवनमुत्पत्तिर्यद्रूपं यस्य तत्र येन भवनेन यत् द्रव्यं स्वकर्म्मणि प्रभुर्भवति तत् प्रभवनं प्रभावः। प्रभावं विवृणोति। साध्यमसाध्यञ्चेति। साध्यत्वमसाध्यत्वञ्चेति द्वे स्वप्रभावजे। मृदुत्वं दारुणत्वं द्वे बले । अकष्टकारित्वं मृदुत्वम् आशुकारित्वादि-रूपत्वं दारुणत्वम् ॥ २ ॥

गङ्गाधरः—नन्वेवमेव भेदो रोगानीकस्य न त्वधिकोऽस्तीत्यत आह—एव-मित्यादि । द्वैधं द्विविधं सत् भेदप्रकृत्यन्तरेण एभ्यः प्रभावादिभ्योऽप्यधि-

चक्रपाणिः—पूर्व्वाध्याये स्रोतोरूपाधिष्ठानभेदेन रोगानभिधाय प्रभावादिभेदेन रोगानभिधातुं रोगानीकं विमानमुच्यते । रोगानीकमिति रोगसमूहः । बलभेदेनेत्यत्र मृद्वल्पबलम्, दारुणन्तु महाबलं ज्ञेयम् । दारुणं किञ्चित्कालानुपातावेव बलवत्वान्मारयति । यदुक्तम्—"सन्ति ह्येवंविधा रोगाः साध्या दारुणसम्मताः । ये हन्युरनुपक्रान्ता मिथ्याचारेण वा पुनः ॥" इति । आमाशयसमुत्थत्वेन आमाशयाश्रयिकफपित्तजाः सर्व्वे गदा गृह्यन्ते । पक्वाशयसमुत्थग्रहणेन सर्व्वे वातजाः । एवं सर्व्वविकारावरोधः । द्वैधं सदिति द्वैविध्यं सत् । भेदप्रकृत्यन्तरेणेति

एकत्वं तावदेकमेव रोगानीकं रुक्सामान्याद् * बहुत्वन्तु दश रोगानीकानि प्रभावभेदादिना भवन्ति। बहुत्वमपि संख्येयं स्यादसंख्येयं वा स्यात्। तत्र संख्येयं तावद् यथोक्तमष्टोदरीये। अपरिसंख्येयं पुनर्यथा महारोगाध्याये—रुग्वर्णसमुत्थानादीनाम् अपरिसंख्येयत्वात्। न च संख्येयाग्रेषु भेदप्रकृत्यन्तरीयेषु विगीतिरित्यतो दोषवती स्यादत्र प्रतिज्ञा काचित्, न चाविगीतिः

काभिरपराभिर्भेदस्य प्रकृतिभिर्भेदकधर्म्मैर्भिद्यमानमपि सन्धीयमानं संक्षिप्यमाणमेकत्वं स्याद्रोगानीकस्य अथवा व्यस्यमानं बहुत्वं स्यात्। तत्र केन भेदप्रकृत्यन्तरेण भिद्यमानमपि सन्धीयमानमेकत्वं स्यादथवा व्यस्यमानं बहुत्वं स्यादित्यत आह—एकत्वमित्यादि। रुक्सामान्यात् रोगत्वसामान्यात्। प्रभावभेदादिनेति साध्यासाध्य-मृदुदारुण-मानसशारीर-धातुवैषम्यजागन्तुजामाशयसमुत्थपक्वाशयसमुत्थानीत्यर्थः। ननु बहुत्वं किं त्रित्वादिकमपरिसङ्ख्येयं वेत्यत आह—बहुत्वमपीत्यादि। द्विविधं बहुत्वं सङ्ख्येयमसङ्ख्येयञ्च। अष्टोदरीये अष्टावुदराणीत्यादिरूपेण संख्येयं बहुत्वमुक्तम्। महारोगाध्याये इति वातविकाराणामपरिसंख्येयानामाविष्कृततमत्वेनाशीतिर्वातविकारा व्याख्याता भवन्तीति वातविकारस्यैवमेव पित्तकफविकारयोश्चत्वारिंशत्त्वविंशतित्वे उक्त्वा अप्यपरिसंख्येयं बहुत्वमुक्तं रुग्वर्णादीनां भेदप्रकृत्यन्तराणामपरिसंख्येयत्वात्। न चेत्यादि। ननु संख्येयानां भेदकधर्म्मभेदैः परिसंख्यातुं विषयाणां रोगानीकस्यैकत्वादीनां संख्यानां मध्येऽग्रेषु श्रेष्ठेषु भेदकधर्म्मान्तरेणाग्नेयत्वसौम्यत्ववायव्यत्वराजसत्वतामसत्ववातिकत्वादिना कृतेषु रोगानीकस्यैकत्वादिष संख्यानेषु विगीतिर्विरुद्धा गीतिरैकान्तिकवचनं न भवतीत्यतो हेतोरत्र सर्व्वप्रतिज्ञा एकत्वादिरूपा दोषवती स्यात् भेदकधर्म्मास्थैर्य्यादित्येवं सर्व्वैव प्रतिज्ञा अत्रास्थिरतया न च व्यभिचार दोषवती स्यात्। कस्मादित्यतस्तद्दोषं परिहरति—

भेदकारणान्तरेण। तथापि सन्धीयमाने सति एकीक्रियमाणे एकबुद्धिकारकानुगतधर्म्मान्तरेणेति बोद्धव्यम्। दुःखसामान्यादिति दुःखकर्त्तृत्वेन सर्व्वरोगानुगतेन साधारणेन रूपेण सर्व्वरोगा एक-

* दुःखसामान्यादिति चक्रः।

इत्यतो दोषवती स्यात्, भेत्ता हि भेद्यमन्यथा भिनत्ति। अन्यथा पुरस्तात् * भिन्नं भेदप्रकृत्यन्तरेण भिन्दन् भेदसंख्याविशेषमापादयत्यनेकधा, न च पूर्व्वं भेदाग्रमुपहन्ति ॥ ३ ॥

न चाविगीतिरित्यादि। भेदकश्रेष्ठधर्म्मान्तरेण वायव्यत्वादिना रोगानीकस्य भेदानाञ्चाविगीतिरविरुद्धा गीतिरित्यतः काचिदपि द्वित्र्यादिप्रतिज्ञा न च दोषवती स्यात् सर्व्वा हि साध्वी प्रतिज्ञा। ननु कुतोऽसौ सर्व्वा प्रतिज्ञा साध्वीत्यत आह—भेत्ता हीत्यादि। हि यस्मात् भेत्ता भावानां भेदोपदेष्टा भेद्यं भेदविषयभावमन्यथा भिन्नमन्यप्रकारेण भिनत्ति। कथं भिनत्तीति भेदकरणं विवृणोति—अन्यथेति। पुरस्तात् पूर्व्वमन्यथा धर्म्मविशेषेण। पूर्व्वकृतभेदकधर्म्मातिरिक्तधर्म्मेण भिन्दन्नपरभेदं कुर्व्वन् भेदसंख्याविशेषं भेदेन सङ्ख्याविशेषं पूर्व्वकृतभेदादपरभेदेन सङ्ख्याप्रभेदं पूर्व्वसङ्ख्यातोऽपरसङ्ख्यामनेकधापादयति। न च पूर्व्वं कृतं भेदाग्रं भेदश्रेष्ठमुपहन्ति व्याहतं न करोति। एकानेकदोषभेदेन द्विधा राजसतामसभेदेन द्विधा शीतोष्णभेदेन द्वौ ज्वरावित्येवं

रूपा भवन्ति। बहुत्वमपरिस्युक्तं प्रभावभेदादिकृतत्वादपि बहुत्वमित्यर्थः। संख्येयत्वमष्टोदरीये "अष्टचत्वारिंशद्रोगाधिकरणान्यस्मिन् संग्रहे" इत्यादिनोक्तम्। असंख्येयत्वं महारोगाध्याये तु "तत्र तत्र वापरिसंख्येया भवन्ति रुजावर्णस्थानसंस्थाननामभिः" इत्यनेनोक्तम्।

ननु संख्येयत्वमसंख्येयत्वञ्च विरुद्धावेतौ धर्म्मौ, तथैकत्वमनेकत्वञ्चेति विरुद्धौ। तत् कथं विरुद्धत्वेन ख्यातौ धर्म्मावेकस्मिन् रोगे घटेतामित्याह—न चेत्यादि। संख्येयाग्रेष्विति संख्येयरोगपरिमाणेषु, अग्रशब्दः परिमाणे वर्त्तते। तथैकैकस्य भेदाग्रमपरिसंख्येयं भवति, भेदसंख्यारूपं परिमाणमित्यर्थः। भेदप्रकृत्यन्तरीयेष्विति भेदकारणान्तरभवेषु। विरुद्धा गीतिः विगीतिः, यथा—एकञ्चानेकञ्च तद् इत्यादिका विरुद्धा गीतिः। अत इति यथोक्तविगीतियोगात्, न दोषवती काचित् प्रतिज्ञा, यथा—'अनेकरूपा ह्यल्परूपा'। अत्रोक्ता स्यादिति योजना। विगीतौ दोषाभावं दर्शयित्वा भेदकारणान्तरकृतायामविगीतावपि दोषो भवतीति दर्शयन्नाह—न चाविगीतिरित्यादि। यदि ह्येकं रोगानीकं रुजासामान्यादित्यभिप्राय पुनरेकं रोगानीकं प्रभावभेदादित्यविरुद्धा एकताख्यायिकाऽविगीतिः क्रियते, तथापि सा विरुद्धैव स्यात्। यतो न प्रभावभेदेन रोगाणामेकत्वमुपपन्नम्, किन्तु द्वैधमेवेति भावः। विगीतौ दोषाभावे हेतुमाह—भेत्ता हीत्यादि। भेत्ता पुरुषः, भेद्यं रोगम्। अन्यथा त्वेकत्वादिना भिनत्ति, अन्यथा एकत्वेन पुरुषः तावत् भेद्यञ्च अन्यथा भिनत्तीति। अस्यार्थं व्याकरोति भेदप्रकृत्यन्तरेणेत्यादिना। अनेकधेति

* पुरुषास्तावदिति चक्रसम्मतः पाठः।

समानायामपि तु भेदप्रकृतौ प्रकृत्यनु*प्रयोगान्तरमपेक्ष्यम् । सन्ति ह्यर्थान्तराणि समानशब्दाभिहितानि, सन्ति चानर्थान्तराणि पर्य्यायशब्दाभिहितानि । समानो हि रोगशब्दो दोषेषु

द्वित्वमुक्तं पुनः प्रभावादिभेदेन द्वित्वं यत् कृतं तच्च तत्पूर्व्वकृतं तद्द्वित्वं न व्याहन्तीत्यर्थः ॥ ३ ॥

गङ्गाधरः—ननु द्वे रोगानीके इति प्रतिज्ञाय त्रीणि रोगानीकानीति पुनर्वचने प्रतिज्ञाहानिरेव भवति न चाविगीतिः स्यादित्यत आह—समानायामित्यादि । समानायामपि समानायामसमानायाञ्च भेदप्रकृतौ रोगादौ भिद्यमाने प्रकृतेरनुप्रयोगान्तरमपेक्ष्यं तदर्थबोधकानुप्रयोगोऽपेक्ष्यते । यथा द्वे रोगानीके प्रभावभेदेनेत्युक्त्वा पुनर्द्वे रोगानीके इत्युक्तौ त्रीणि रोगानीकानीत्युक्तौ च तद्भेदकधर्म्मस्य प्रकृतेरनुप्रयोगान्तरं मृदुदारुणबलभेदेन निजागन्तुमानसभेदेनेत्यनुप्रयोगापेक्षा स्यात् ।

ननु कुतः प्रकृत्यनुप्रयोगान्तरमपेक्ष्यमित्यत आह—सन्तीत्यादि । एकशब्दाभिहिता अनेकार्थाः सन्ति । सन्ति च एकविधार्था अनेकशब्दवाच्याः । उदाहरणमाह—समानो हीत्यादि । एको रोगशब्दो दोषवाचको व्याधिवाचक-

द्वे रोगानीके तथा दश रोगानीकानीत्यादि । न च पूर्व्वं भेदाग्रं भेदप्रमाणमुपहन्ति । एवं मन्यते—यद्धर्म्मयोगविवक्षया एकत्वमुक्तं, तद्धर्म्मयोगविवक्षयैव यदि बहुत्वमप्युच्यते रोगाणाम्, ततो विरोधो भवति । न हि तदेवैकञ्चानेकञ्चेत्युपपन्नम् । यदा तु धर्म्मान्तरयोगविवक्षया बहुत्वमुच्यते, न तदा विरोधः ; बहुत्वाभिधानकाले बहूनामेव रोगधर्म्माणां विवक्षितत्वात् । रोगाणामेकत्वमेकधर्म्मविषयम्, बहुत्वञ्च बहुधर्म्मविषयमिति न विरोधः । ननु यत्रासमानभेदकारणं तत्र कारणान्तरकृतत्वादुक्तन्यायेन विगीतिः साध्वी भवतु, यत्र तु दश रोगानीकानि प्रभावादिद्वैविध्यादुच्यन्ते, तत्र कथं द्वे रोगानीके इति द्वित्वं कृतम्, द्वैविध्यमभिधाय पुनर्द्विंत्वात् भेदेनैव दशत्वमुच्यते । सामान्यो ह्ययं द्विधाशब्दो द्वित्वे दशत्वे च रोगाणां हेतुरित्याह—समानायामपीति, समानशब्दाभिधेयत्वेनापाततः समानायामित्यर्थः । प्रकृतानुप्रयोगान्तरमपेक्ष्यमिति, प्रकृतस्य समानशब्देनाभिहितस्य यद्व्याख्यापकं पश्चात् प्रयोगान्तरम्, तदपेक्षणीयं विगीतिसमानार्थमित्यर्थः । एतेनैतद् दर्शयति—यद्यपि द्विशब्दो रोगप्रभावे तथा रोगबलादौ च समानः तथाप्येकत्र प्रभावभेदानुप्रयोगान्तरमपेक्ष्य प्रभावद्वैविध्ये वर्त्तते, तथा बलभेदानुप्रयोगान्तरमपेक्ष्य च द्विशब्दो बलद्वैविध्ये वर्त्तत इत्यादि । तदेवोपपादयति सन्तीत्यादिना । अर्थान्तराणि पर्य्याय-

* प्रकृतानुप्रयोगान्तरमिति पाठान्तरम् ।

च व्याधिषु च। दोषा ह्यपि रोगशब्दमातङ्कशब्दं यक्ष्मशब्दं दोषप्रकृतिशब्दं विकारशब्दञ्च लभन्ते। व्याधयश्च रोगशब्दमातङ्कशब्दं यक्ष्मशब्दं दोषप्रकृतिशब्दं विकारशब्दञ्च लभन्ते। तत्र दोषेषु च व्याधिषु च रोगशब्दः समानः शेषेषु तु विशेषवान्। तत्र व्याधयोऽपरिसंख्येया भवन्त्यतिबहुत्वात् दोषास्तु खलु परिसंख्येया भवन्त्यनतिबाहुल्यात्। तस्माद्द यथोचितं * विकारानुदाहरणार्थमनवशेषेण च दोषान् यथावदनुव्याख्यास्यामः ॥ ४ ॥

च्चेति रोगशब्दाभिहिता अनेकार्थाः। दोषा अपि रोगादिनानाशब्दाभिहिता अर्था इति। व्याधयश्चापि रोगादिनानाशब्दाभिहिता अर्थाः। तेन द्वे रोगानीके इत्युक्तौ ज्वरादिबोधने दोषबोधने च प्रकृत्यनुप्रयोगान्तरमपेक्षते। तत्रेत्यादि। शेषेषु ज्वरादिषु विशेषवानित्यसमान इति। तत्रेत्यादि। तत्र रोगशब्देन व्याधावभिधेये प्रकृतौ रोगा अपरिसङ्ख्या अतिबहुत्वात्। दोषेऽभिधेये रोगाः परिसङ्ख्याश्चानतिबहुत्वात् इति। प्रकृते रोगस्य पूर्व्वप्रयोगस्य प्रकृत्यनुप्रयोगान्तरं व्याधय इत्यादि। दोषास्त्वित्यादिकश्च। तस्माद्व्याधीनामपरिसङ्ख्यत्वात् दोषाणां परिसङ्ख्यत्वाच्च। उदाहरणार्थमिति विकाराणां यथोचितमुदाहरणार्थम्। यथोचितमिति प्रायोभाविनो रोगस्य। सशेषेणेति अनिःशेषेण कियदवशेषं विकाराननुव्याख्यास्यामः। दोषाणामुदाहरणार्थमनवशेषेण च निःशेषेण च दोषाननुव्याख्यास्याम इति प्रतिजानीते ॥ ४ ॥

शब्दानभिहिता अर्थाः। तत्रोदाहरणमाह—समानो हीत्यादि। दोषेषु व्याधिषु च समान उभयवाचकत्वेन तुल्यो रोगशब्दः, तेन रोगदोषसमानत्वेनाभिधेयसमानानां रोगातङ्कयक्ष्मादिशब्दानां सर्व्वेषामेव वक्ष्यमाणानां ग्रहणम्। शेषेष्विति हेत्वादिषु, विशेषवानित्यभिधानरूपविशेषवानित्यर्थः। तत्रापि रोगशब्दाभिधेयतासमानेऽपि दोषे तथा विकारे च परिसंख्येयाऽपरिसंख्येयरूपा विगीतिरस्त्यथ वादोष इत्यभिप्रायेणाह—तत्रेत्यादि। एकैकस्मिन् दोषे बहवो विकारा भवन्तीत्यभिप्रायेण विकारापेक्षया दोषाणामनतिबहुत्वं ज्ञेयम्। यथाचित्रमिति यथाविन्यासम्, तेन यानेव पूर्व्वाचार्य्या विकारानधिकतमत्वेनोक्तवन्तस्तानेव व्याख्यास्यामः, न तु

* यथाचित्रमिति चक्रः।

रजस्तमश्च मानसौ दोषौ, तयोर्विकाराः कामक्रोधलोभमोहमानमदशोकचिन्तोद्वेगभयहर्षादयः। वातपित्तश्लेष्माणस्तु खलु शारीरा दोषास्तेषामपि विकारा ज्वरातिसारशोथशोषश्वासमेहकुष्ठादय इति। दोषाः केवला व्याख्याता विकारैकदेशश्च। तत्र तु खल्वेषां द्वयानामपि दोषाणां त्रिविधं प्रकोपणम्। असात्म्येन्द्रियार्थसंयोगः प्रज्ञापराधः परिणामश्चेति। प्रकुपितास्तु खलु प्रकोपणविशेषाद्दूष्यविशेषाच्च विकारविशेषानभिनिर्व्वर्त्तयन्त्यपरिसंख्येयान्। ते खलु विकाराः परस्परमनुवर्त्तमानाः कदाचिदनुबध्नन्ति कामादयो ज्वरादयश्च। नियतस्त्वनुबन्धो

गङ्गाधरः—तत्रादौ प्रतिलोमतन्त्रयुक्त्या दोषान् निःशेषेण व्याख्यानयति—रजस्तमश्चेत्यादि। आदिना द्वेषादयश्च। वातेत्यादि आदिना कासादयश्च। दोषाः केवला इति कृत्स्नाः। तत्र त्वित्यादि। प्रकोपणमिति वैषम्यकारणम्। परिणामश्चेत्यतोऽनन्तरमुक्तं प्रागिति शेषस्तेन न पुनरुक्तम्। अनुवादोऽयं विकारापरिसंख्येयत्वकथने हेतूपदेशार्थम्। प्रकुपितास्त्विति दोषा इत्यनुवर्त्तते। अपरिसङ्ख्येयान् विकारविशेषानित्यन्वयः। ते च शारीरदोषजा ज्वरादयो विकारा मानसदोषजाः कामादयश्च विकारा अनुवर्त्तमाना जातोत्तरमधिककालं वर्त्तमानाः परस्परमनुबध्नन्ति कदाचिन्नैकान्ततः। नियतस्तु

सर्व्वान् अशक्यत्वात्। किंवा यथोचितमिति पाठः। अनवशेषेण च दोषा इत्यनेन दोषा अनतिबहुत्वेनानवशेषेणाप्यभिधातुं शक्यन्त इति प्रकाशयति ॥ १—४ ॥

चक्रपाणिः—तत्र मानसदोषविकारयोरनल्पवक्तव्यतयाऽग्रेऽभिधानम्। ननु परिमिताद्दोषरूपात् कारणात् कथमपरिमिता विकारा भवन्तीत्याह—प्रकुपितास्त्वित्यादि। हेतुविशेषदुष्टो हि स एव दोषो दूष्यान्तरगतश्च विभिन्नशक्तियोगाद् बहून् विकारान् करोतीति युक्तमेव। उक्तञ्च—"स एव कुपितो दोषः समुत्थानविशेषतः। स्थानान्तरगतश्चैव विकारान् कुरुते बहून् ॥" इति।

विकाराणां शारीरमानसानां परस्परं संसर्गमाह—ते खलु विकारा इत्यादि। अनुवर्त्तमाना इत्यनेन यदैव ज्वरादयः कामादयो वाऽबलत्वेन च चिरकालमनुवर्त्तन्ते, तदैवानुबध्नन्ति प्रायः। यदा तु स्तोककालावस्थायिनो भवन्ति, न तदा प्रायोऽनुबध्नन्तीत्यर्थः। किंवा अनु-

रजस्तमसोः परस्परम्, न ह्यरजस्कं तमः। प्रायः शारीरदोषाणाम् एकाधिष्ठानीयानां सन्निपातः संसर्गो वा समानगुणत्वात्।

ऐकान्तिकस्त्वनुबन्धः। रजस्तमसोर्मानसदोषयोः कुतो नियतोऽनुबन्धस्तयोरित्यत आह—न हीत्यादि। अरजस्कं रजो विना तमो वर्त्तते न, तमो विना रजो न वर्त्तते इत्यर्थात्। रागेण हि प्राप्त्याप्राप्त्या मोहो भवति तमसा च रागवृद्धिः स्यादिति। शारीरदोषाणां वातपित्तकफानामेकाधिष्ठानानां समानगुणत्वात् वातपित्तकफानां यावन्तो गुणाः समानास्तावद्गुणैः प्रायः सन्निपातस्त्रयाणां समवायः। प्रायः संसर्गो वा तेषामन्यतमयोर्द्वयोः। प्राय इति पदेन क्वचित् पृथक् दोषाणामप्यभिपातः स्यादिति सूचितं तेन च न रोगोऽप्येकदोषज इति मतमनादृतं कृतमिति। तथा हि ईषत्स्निग्धत्वेऽपि पित्तस्य यत्किञ्चिद्रौक्ष्यं वातस्य च रौक्ष्यं पित्तस्य मध्यलघुत्वं वातस्यातिलघुत्वं पित्तस्य च सूक्ष्मत्वं वातस्य च चलत्वं वातस्य पित्तस्य सरत्वं कटुत्वं पित्तस्य तेन रौक्ष्यं वातस्य सयोनिकं वातस्य दारुणत्वं पित्तस्य तीक्ष्णत्वं सयोनिकमिति पित्तगुणसामान्यं वातस्य। वातस्य शीतत्वं कफस्य च वातकफयोर्गुणसामान्यम्। पित्तस्येषत्स्निग्धत्वं कफस्य स्निग्धत्वं पित्तस्य मध्यगुरुत्वं कफस्य गुरुत्वं पित्तस्य द्रवत्वं कफस्य द्रवत्वं पित्तस्य किञ्चित् पैच्छिल्यं कफस्य पैच्छिल्यं पित्तस्याम्लत्वे मध्यस्निग्धत्वं कफस्य मधुरत्वेन स्निग्धत्वमिति पित्तकफयोर्गुणसामान्यमिति। ननु वातस्य शीतत्वं पित्तस्योष्णत्वं शीतविरोधि, वातस्य रुक्षत्वं पित्तस्येषत्स्निग्धत्वं रुक्षविरोधि, वातस्य लघुत्वं पित्तस्यावरलघुत्वम् अम्लत्वे मध्यलघुत्वं कटुत्वे ततो विदग्धपित्तस्य व्याधिकर्त्तृत्वेनाल्पलघुत्वमेवाल्पगुरुत्वं तल्लघुत्वविरोधिवातस्यामूर्त्तत्वं पित्तस्य द्रवमूर्त्तत्वममूर्त्तत्वविरोधि तत् कथं मिथो नोपघातः? तथा वातस्य रुक्षत्वं तद्विरोधि स्निग्धत्वं कफस्य, लघुत्वं वातस्य गुरुत्वं कफस्य सूक्ष्मत्वं वातस्य स्थूलत्वं सान्द्रत्वं कफस्य चलत्वं वातस्य स्थिरत्वं कफस्य वैशद्यं वातस्य पैच्छिल्यं कफस्य खरत्वं वातस्य

वर्त्तमानाः परस्परं बलमभिवर्द्धयन्तः। अत्र च परस्परशब्देन शारीराणां शारीरेण, मानसानां मानसेन, शारीराणां मानसेन, मानसानां शारीरेण चानुबन्धो ज्ञेयः।

विकारानुबन्धं दर्शयित्वा दोषानुबन्धमाह—नियतस्त्वित्यादि। शारीरदोषानुबन्धमाह—शारीरेत्यादि। एकाधिष्ठानीयानामित्यनेनैकशरीराधिष्ठानप्रत्यासत्त्या संसर्गो दोषाणां

दोषा हि दूषणैः समानाः। तत्रानुबन्ध्यानुबन्धकृतो विशेषः। स्वतन्त्रो व्यक्तलिङ्गो यथोक्तसमुत्थानप्रशमो भवत्यनुबन्ध्यः,

मसृणत्वं कफस्य दारुणत्वं वातस्य मृदुत्वं कफस्यामूर्त्तत्वं वातस्य द्रवमूर्त्तत्वं कफस्य नीरसत्वं वातस्य मधुरत्वं कफस्येति वातकफयोर्न कथं मिथो भवत्युपघातः। पित्तस्येषत्स्निग्धत्वेनैवेषद्रुक्षत्वं कफस्य स्निग्धत्वं पित्तस्योष्णत्वं कफस्य शीतत्वं पित्तस्य तीक्ष्णत्वं कफस्य मृदुत्वं पित्तस्याम्लत्वे हीनगुरुत्वं हीनलघुत्वं वा कटुत्वेन मध्यलघुत्वं कफस्य गुरुत्वं पित्तस्याम्लत्वं कटुत्वं वा कफस्य लवणत्वं मधुरत्वं वा पित्तस्य सरत्वं कफस्य,स्थिरत्वं पित्तस्येषत्पिच्छिलत्वेनेषद्वैशद्यं कफस्य पैच्छिल्यमिति तत् कथं पित्तकफयोर्न मिथो भवत्युपघात इत्याशङ्का दृढ़बलेन निरस्तव्या। विरुद्धैरपि न त्वेते गुणैर्घ्नन्ति परस्परम्। दोषाः सहजसात्मत्वाद्घोरं विषमहीनिवेति वचनेन सर्व्वथोच्छेदकत्वाभावार्थकेन। तद्वचनेन सर्व्वगुणतो दोषाणां सन्निपातसंसर्गासम्भवमाशङ्क्याह—दोषा हीत्यादि। वातपित्तकफास्त्रिशो दूषणैर्द्रव्यविशेषैः पाटलधान्यादिभिः स्वप्रभावात् त्रिदोषकरैस्तथा द्विशो निष्पावादिभिर्द्रव्यविशेषैः स्वप्रभावाद्वातपित्तादिद्विद्विदोषकरैः प्रकोपे सर्व्वगुणतः समाना इत्यर्थः, एतेन पूर्व्वाशङ्का निरस्ता। ननु तथाविधे सन्निपाते संसर्गे वा दोषाणां किं तुल्यबलत्वमतुल्यबलत्वं वेत्यत आह—तत्रानुबन्ध्येत्यादि। तत्र दोषाणां सन्निपाते संसर्गे वा। अनु अल्पबलेन येन यो बलवान् बध्यते सोऽल्पबलोऽनुबन्धः प्रबलस्त्वनुबन्ध्यस्ताभ्यां कृतो विशेषो वर्त्तते। ननु कस्त्वनुबन्ध्यः को वानुबन्ध इत्यत आह—स्वतन्त्र इत्यादि। त्रयाणां दोषाणां सन्निपाते तेषां मध्ये यो दोषः स्वतन्त्रः स्वेतरदोषयोः प्रयोजको न च प्रयुज्यः, सोऽनुबन्ध्यः। कुतोऽयं ज्ञायते इत्यत आह—

भवन्तीति दर्शयति। समानगुणत्वादिति हेतुं विवृणोति—दोषा हीत्यादि। दूषणैरिति हेतुभिः। प्रायो हि शारीराणां वातादीनां समानो हेतुर्भवति। तथा ह्यम्लं लवणं कटु च पित्तं कफं वातञ्च करोति, तत्राम्लं सकफं पित्तं करोति, लवणञ्च सपित्तं कफं करोति, कटु तु सवातं पित्तं करोति;—तथा वसन्तः श्लेष्मकारकोऽप्यादानत्वेन वातपित्ते च करोति, तथा वर्षास्वपि पित्तं चीयमानं शरदि प्रकुप्य कफानुगतमेव कुप्यति। तथा ग्रीष्मो वातचयं रुक्षत्वेन कुर्व्वन् उष्णत्वेन मनाक् पित्तचयमपि करोतीत्यनुसरणीयम्।

एवमेव दोषानुबन्धमनुबन्ध्यानुबन्धभेदेन दर्शयितुमनुबन्ध्यानुबन्धलक्षणमेवाह—तत्रेत्यादि। अनुबन्ध्यस्य अनुबन्धस्य च विशेषोऽनुबन्ध्यानुबन्धविशेषः। स्वतन्त्र इति

तद्विपरीतलक्षणश्चानुबन्धः। अनुबन्ध्यानुबन्धलक्षणसमन्विता * यदि तत्र दोषा भवन्ति तत् त्रिकं सन्निपातमाचक्षते द्वयं वा संसर्गम्। अनुबन्ध्यानुबन्धविशेषकृतस्तु बहुविधो दोषभेदः।

व्यक्तलिङ्ग इति। व्यक्तानि लिङ्गानि यस्य स व्यक्तलिङ्ग इति व्यक्तैर्लिङ्गैरनुमीयतेऽनुबन्ध्यः। तानि लिङ्गानि यदि गूढानि भवन्ति तदा कथं ज्ञायते इत्यत आह—यथोक्तसमुत्थानप्रशम इति। यस्य व्याधेर्यद्यत् समुत्थानमुत्पत्तिकारणमुक्तं यश्च यस्य व्याधेः प्रशमनहेतुरुपशय उक्तस्तत् समुत्थानं तदुपशयैः प्रशमश्च यस्य स यथोक्तसमुत्थानप्रशम इत्यर्थः। तद्विपरीतलक्षणः परतन्त्रोऽनुबन्ध्यसमुत्थानप्रशमाभ्यामेव समुत्थानप्रशमश्चानुबन्ध इति। नन्वेवं किं सन्निपातो बहुविधः संसर्गश्चानेकविधः स्यादित्यत आह—अनुबन्ध्येत्यादि। अनुबन्ध्यानुबन्धरूपत्रिदोषसमन्वये सन्निपातमाचक्षते न त्वनुबन्ध्यमात्ररूपत्रिदोषसन्निपाते, तत्र पुनर्यो यो दोषोऽनुबन्ध्यरूप एको भवति तदा एकदोषमाचक्षतेऽनुबन्धस्याप्राधान्येन तद्व्यपदेशाभावात्। पृथक् पृथगेकदोषाभिपाते तु एकदोषो न व्याहन्यते तेन। न च पूर्व्वं भेदाग्रमुपहन्तीति वचनात्। द्वयं वा संसर्गम् अनुबन्ध्यानुबन्धलक्षणौ द्वौ दोषौ यदि तत्र समन्वितौ भवतस्तदा तद् द्वयं वा संसर्गमाचक्षते इत्यर्थः। ननु तथाविधस्त्वेकदोषद्विदोषाश्च कतिधा भवन्तीत्यत आह—अनुबन्ध्यानुबन्धविशेषेत्यादि। बहुविधो दोषभेद इति वृद्धावस्थायां त्रयाणां सन्निपाते

यथोक्तो दोषो लक्षणीयः, स्वतन्त्र इत्यस्यैव विवरणम्—व्यक्तलिङ्ग इत्यादि। यथोक्तसमुत्थानप्रशम इति स्वहेतुसमुत्थितः स्वचिकित्सयैव प्रशमनीयः। किंवा, स्वतन्त्र इत्यनेनापि स्वविकारकरणे प्राधान्यमुच्यते, स्वतन्त्रो हि दोषः प्रकोपकाले विकारान् करोति। अस्वतन्त्रस्त्वप्रकोपकाल एव विकारं ज्वरातिसारादिरूपं तथाऽनुबन्ध्यानुबन्धाकारं प्रधानदोषेरितः सन् करोति। तद्विपरीतलक्षण इत्यनेनाव्यक्तलिङ्गोऽस्वहेतुप्रकुपितः परचिकित्साशमनीयश्चानुबन्ध इति लभ्यते, अनुबन्धो ह्यबलवत्त्वेन न लिङ्गं व्यक्तं करोति, तथा परहेतुना किञ्चिदनुगुणेन प्रकुपितः परचिकित्सयैव किञ्चिदनुगुणतया शाम्यति। यथा—शरदि श्लेष्मा पित्तहेतुना जलाद्यम्लविपाकेन जन्यते, स च पित्तचिकित्सयैव तिक्तसर्पिरादिकया कफोऽप्यनुगुणतया शाम्यति। द्वयं वानुगुणलक्षणं प्राप्तं संसर्गमाचक्षत इति योजना। अनुबन्ध्यशब्दश्चायं व्यक्तलिङ्गतादिधर्म्मयुक्ते दोषे वर्त्तते। तेनाप्रधानानुगमनीये सन्निपाते अनुबन्धाभावेऽप्यनुबन्ध इति व्यपदेशो

* अनुबन्ध्यलक्षणसमन्वितेति चक्रसम्मतः पाठः।

एवमेष संज्ञाप्रकृतो भिषजां दोषेषु चैव व्याधिषु च नाना-प्रकृतिविशेषाद् व्यूहः ॥ ५ ॥

अग्निषु तु शारीरेषु चतुर्व्विधो विशेषो बलभेदेन भवति। तद् यथा—तीक्ष्णो मन्दः समो विषमश्चेति। तत्र तीक्ष्णोऽग्निः

एकोल्वणास्त्रिविधा एकदोषा हीनमध्याधिकाः षड्विधा एकदोषाः द्विदोषसमन्वये षड् विधा एकदोषा इति पञ्चदशविधोऽनुबन्ध्यानुबन्धविशेषकृतो भेदः। तथा त्रिदोषवृद्धौ द्व्युल्वणा द्विकाः त्रिविधा इत्यनुबन्ध्यानुबन्धविशेषकृतस्त्रिविधो भेद इति अष्टादशविध एवानुबन्ध्यानुबन्धविशेषकृतो भेदः। द्विदोषाभिपाते त्रिविधाश्च द्विका अनुबन्ध्यरूपकृतो भेदस्त्रिविधः। पृथक् दोषाभिपाते एकदोषास्त्रय इति अनुबन्ध्यकृतस्त्रिविधो भेदः। समत्रिदोषसन्निपाते एकः सन्निपातः इत्यनुबन्ध्यकृत एकविधो भेद इति पञ्चविंशतिविधो वृद्ध्यवस्थायां भेदः। अनुबन्ध्यानुबन्धाभ्यां व्यपदिश्यते भेद इति। एवं क्षयावस्थायां पञ्चविंशतिविधो भेदः। क्षयस्थानवृद्ध्यवस्थायान्तु द्वादशविधो भेद इति द्विषष्टिविधेषु भेदेषु मध्ये द्वाचत्वारिंशद्विधो भेदोऽनुबन्ध्यानुबन्धविशेषकृतः, शेषास्तु अनुबन्ध्यकृता अष्टौ द्वादशधा च मिश्ररूपाः। उपसंहरति—एवमेष इत्यादि। एवं प्रकारेण दोषेषु चैव भिषजां एष बहुविधो भेदः संज्ञाप्रकृतः, न तु व्याधिषु। व्याधिषु च पुनः नानाप्रकृतिविशेषात् दोषागन्तुरूपनानाप्रकृतिप्रभेदात् भिषजां संज्ञा प्रकृतो व्यूहः समूह इत्यर्थः ॥ ५ ॥

गङ्गाधरः—अथ प्राणिनां कायाग्निजीवितत्वात् दोषप्रभवत्वाच्च कायाग्निषु भिषजां संज्ञाप्रकृतो भेदः कीदृश इत्यत आह—अग्निषु त्वित्यादि। शारीरेषु इत्यनेन भौताग्निधात्वग्नीनां निरासः। चतुर्व्विधो विशेषोऽग्निषु तु भिषजां संज्ञाप्रकृत इत्यन्वयः। बलभेदेनेति बलं समं विषमं तीक्ष्णं मन्दञ्चेति। तद्भेदेन कीदृशश्चतुर्व्विध इत्यत आह—सम इत्यादि। तत्र प्रतिलोमतन्त्रयुक्त्या लक्षयति

भवत्येव अनुबन्ध्यानुबन्धरूपसंसर्गविशेषेण कृतः। संज्ञाप्रकृत इत्यनुबन्ध्यानुबन्धसन्निपातसंसर्गज्वरातिसारादिसंज्ञाकृत इत्यर्थः। नानाप्रकृतिविशेषव्यूह इति यथोक्तनानाकारणविशेषकृतो ज्वरातिसारादिरूपो व्याधीनां दोषाणाञ्च समूह इत्यर्थः। भिषजामितिपदेन च वैद्यानामप्येवं समयसिद्धाऽनुबन्ध्यादिसंज्ञेति दर्शयति ॥ ५ ॥

चक्रपाणिः—दोषभेदविकारभेदमभिधाय शरीरस्थितेः प्रधानकारणस्याग्नेर्भेदमाह—अग्निषु इत्यादि। शारीरेष्विति सामान्यवचनेन सर्व्वशरीरगतानग्नीन् ग्राहयति, विवरणे तु जठराग्निः

**सर्व्वोपचारसहस्तद्विपरीतलक्षणस्तु मन्दः, समस्तु खल्वपचारतो विकृतिमापद्यते अनपचारतस्तु प्रकृतावेवावतिष्ठते। सम-लक्षणविपरीतलक्षणस्तु विषमः॥ ६॥**

अनुमानार्थं प्रागभिहितम् अग्निं जरणशक्त्येति। सर्व्वोपचारसहः सदसद्भोजन-मात्रामात्रातिशयसहः। एतेन प्रभूतमप्युपयुक्तमाहारं शीघ्रं पचतीति ख्यापितम्. स एवातिवर्द्धमानोऽत्यग्निराख्यायते इति परैः। स एव भस्मक इत्यन्यैराख्या-यते इति। तद्विपरीतलक्षणस्तु अल्पापचारस्याप्यसहः। समस्त्वित्यादि प्रकृतावेवावतिष्ठते। एतेन यथाकालं मात्रावदुपयुक्तमाहारं सम्यक् पचतीति ख्यापितम्। समलक्षणविपरीतलक्षणस्त्विति अपचारानपचाराभ्यां न वा प्रकृतिं न वा विकृतिं भजते, कदाचित् सम्यक् पचति कदाचिदाध्मानादिकं कृत्वा पचतीति भावः। सुश्रुतेऽप्युक्तम्—प्रागभिहितोऽग्निरन्नस्य पाचकः। स चतुर्व्विधो भवति, दोषानभिपन्न एको विक्रियामापन्नस्त्रिविधो भवति। विषमो वातेन, तीक्ष्णः पित्तेन, मन्दः श्लेष्मणा, चतुर्थः समः सर्व्वसाम्यादिति। तत्र यो यथाकालमन्नमुपयुक्तं सम्यक् पचति स समः समैर्दोषैः। यः कदाचित् सम्यक् पचति कदाचिदाध्मानशूलोदावर्त्तातिसारजठरगौरवान्त्र-कूजनप्रवाहणानि कृत्वा स विषमः। यः प्रभूतमप्युपयुक्तमन्नमाशु पचति स तीक्ष्णः, स एवाभिवर्द्धमानोऽत्यग्निरित्याभाष्यते; स मुहुर्मुहुः प्रभूतमप्युप युक्तमाशुतरं पचति, पाकान्ते च गलताल्वोष्ठशोषदाहसन्तापान् जनयति। यः स्वल्पमप्युपयुक्तमुदरशिरोगौरवकासश्वासप्रसेकच्छर्द्दिगात्रसदनानि कृत्वा महता कालेन पचति स मन्दः। विषमो वातजान् रोगान् तीक्ष्णः पित्त-निमित्तजान्। करोत्यग्निस्तथा मन्दो विकारान् कफसम्भवान्॥ इति। अत्र वातजानिति महारोगाध्याये उक्तानशीतिर्वातविकारान्। एवं चत्वारिंशतः पित्तविकारान् विंशतिं कफविकारान्। अन्यत्रातितीक्ष्णाग्निः पठितः। अतिमात्र-

एव "तीक्ष्णः सर्व्वोपचारसहः" इत्यादिना यच्चातुर्व्विध्यमुक्तम्, तज्जठराग्नितीक्ष्णतादिमूलत्वग-न्यादितीक्ष्णत्वादिरेवेति ज्ञेयम्। वचनं हि—"तन्मूलास्ते हि तद्वृद्धिक्षयवृद्धिक्षयात्मकाः" इति। यद्यपि समोऽग्निः शस्तत्वेनाग्रेऽभिधातुं युज्यते, तथापि समतश्च तीक्ष्णस्यैव प्राधान्योप-दर्शनार्थमिहाग्रेऽभिधानम्। समस्य हि प्राधान्यं निर्व्विकारत्वेनैव सुस्थितम्, तीक्ष्णः सर्व्वोप-चारसहत्वेन प्रधानम्। तेन तद्विपरीतलक्षणं सिध्यति,—स्वल्पापचारमपि यो न सहते, स मन्द इत्यर्थः। समलक्षणविपरीतलक्षण इति कदाचिद्विषमोऽपचारादपि न विक्रियते, कदाचिद

इत्येते चतुर्व्विधा भवन्त्यग्नयश्चतुर्व्विधानामेव पुरुषाणाम्। तत्र समवातपित्तश्लेष्मणां प्रकृतिस्थानां समा भवन्त्यग्नयः। वातलानान्तु वाताभिभूतेऽग्न्यधिष्ठाने विषमा भवन्त्यग्नयः। पित्तलानान्तु पित्ताभिभूते ह्यग्न्यधिष्ठाने तीक्ष्णा भवन्त्यग्नयः। श्लेष्मलानान्तु श्लेष्माभिभूते ह्यग्न्यधिष्ठाने मन्दा भवन्त्यग्नयः॥ ७॥

मजीर्णेऽपि गुरु चान्नमथाश्नतः। दिवापि स्वपतो यस्य पच्यते सोऽग्निरुत्तमः॥ इति। अस्यातिवृद्धौ भस्मकसंज्ञा तल्लक्षणञ्च तन्त्रान्तरेऽप्युक्तम्—नरे क्षीणकफे पित्तं कुपितं मारुतानुगम्। स्वोष्मणा पावकस्थाने बलमग्नेः प्रयच्छति। तदा लब्धबलो देहं विरूक्षेत् सानिलोऽनलः। अभिभूय पचत्यन्नं तैक्ष्ण्यादाशु मुहुर्म्मुहुः। पक्त्वान्नं सततो धातून् शोणितादीन् पचत्यपि। ततो दौर्ब्बल्यमातङ्कान् मृत्युश्चोपनयेन्नरम्। भुक्तेऽन्ने लभते शान्तिं जीर्णमात्रे प्रताम्यति। तृट्कासदाहमूर्च्छाः स्युर्व्याधयोऽत्यग्निसम्भवाः॥ इति। नैतावत्यग्निभस्मकौ विषमाग्न्यादिवत् सहजौ, किन्तु जातोत्तरकालं जातौ व्याधिविशेषौ॥ ६॥

गङ्गाधरः—नन्वेते चतुर्व्विधा अग्नयः केषां भवन्तीत्यत आह—इत्येत इत्यादि। ननु केषां चतुर्व्विधानामित्यत आह—तत्रेत्यादि। प्रकृतिस्थानां वातादीनां साम्ये समा भवन्त्यग्नय इति न कृत्वा समवातेत्यादिकरणात् प्रकृतिस्थानां गर्भात् प्रभृति येषां समा वातपित्तश्लेष्माणस्ते प्रकृतिस्थाः पुरुषाः, तेषां समा भवन्त्यग्नय इत्यर्थः। न तु गर्भारम्भे वृद्धा वा क्षीणा वा वातपित्तश्लेष्माणो येषां तेषां भवन्ति समा अग्नय इति विकृतत्वात्। गर्भात् प्रभृति वातादीनां समत्वं याद्रूप्येण तद्विस्तरेण समपित्तानिलकफा इत्यादि वचनव्याख्यानेनोक्तम्। वातलानान्त्विति गर्भात् प्रभृति वातबहुलानां अग्न्यधिष्ठाने ग्रहणीनाड्यां गर्भात् प्रभृति वाताभिभूतत्वात् वातलानां विषमा भवन्त्यग्नयः। एवं पित्तलानां श्लेष्मलानाञ्च व्याख्येयम्॥ ७॥

विक्रियते। समवातपित्तश्लेष्मणामित्युक्तेऽपि 'प्रकृतिस्थानाम्' इतिपदम्, वृद्धानां समवातपित्तश्लेष्मणां प्रतिषेधार्थम्। 'प्रकृति'शब्दस्य कारणाद्यनेकार्थताव्युदासार्थं समवातपित्तश्लेष्मणाम् इति कृतम्। वाताभिभूतेऽग्न्यधिष्ठान इतिवचनेन वातलानामपि यदेवाग्न्यधिष्ठानोपघातो वातेन क्रियते, तदेव वैषम्यं भवति। एवं पित्ताभिभूत इत्यादावपि व्याख्येयम्॥ ६।७॥

तत्र केचिदाहुर्न समवातपित्तश्लेष्माणो जन्तवः सन्ति विषमाहारोपयोगित्वान्मनुष्याणाम्। तस्माच्च वातप्रकृतयः केचित्, केचित् पित्तप्रकृतयः, केचित् पुनः श्लेष्मप्रकृतयश्च भवन्तीति। तच्चानुपपन्नम्, कस्मात् कारणात्? समवातपित्तश्लेष्माणं ह्यरोगम् इच्छन्ति भिषजः। यतः प्रकृतिश्चारोग्यमारोग्यार्था च भेषज-प्रवृत्तिः, सा चेष्टरूपा। तस्मात् सन्ति समवातपित्तश्लेष्मप्रकृतयः; न तु खलु सन्ति वातप्रकृतयः पित्तप्रकृतयः श्लेष्मप्रकृतयो वा। तस्य तस्य हि दोषस्याधिकभावात् सा सा दोषप्रकृतिः

गङ्गाधरः—मतान्तरमत्राह—तत्रेत्यादि। केचिन्मुनयस्तत्र चतुर्व्विधेषु अग्निषु इदमाहुः; तद् यथा—विषमाहाराणां समसर्व्वरसद्रव्याणामसम्भवाद् विषम-रसद्रव्याणामाहाराणामुपयोगशीलत्वात् गर्भात् प्रभृति समवातपित्तश्लेष्माणो जन्तवो न सन्ति। तस्मात् समा अग्नयोऽपि न सन्ति इति भावस्तस्माच्च वातप्रकृतिकादयस्त्रिविधा एव पुरुषाः सन्ति वह्नयश्च विषमास्तीक्ष्णा मन्दाश्चेति त्रिविधा इति भावः। अत्राप्येके वातादिप्रकृतय इव द्वन्द्वप्रकृतयस्त्रिधा अपि पुरुषा भवन्ति, वह्नयश्च तेषां दोषानुरूपाः, तद् यथा—वातपित्तप्रकृतीनां वह्नयोऽतितीक्ष्णा वातश्लेष्मप्रकृतीनां न विषमा न च मन्दा मन्दविषमाः। कदाचित् स्वल्पमपि भुक्तं न सम्यक् पचन्ति कदाचिदाध्मानादिकं कृत्वा स्वल्पं भुक्तं सम्यक् पचन्ति। पित्तश्लेष्मप्रकृतीनान्तु वह्नयो न तीक्ष्णा न मन्दाः, मध्यमा एव भवन्ति। मध्यममात्रमन्नं सुखं पचन्ति इति भाषन्ते। मतमेतत् सर्व्वतन्त्रेषु चतुर्व्विधाग्निव्यतिरेकेण दर्शनाभावादितरेषामग्नीनामस्वीकाराद् असलकत्वमभिप्रेत्य नोपन्यस्य वातादिप्रकृतिवादं दूषयति—तच्चेत्यादि। स्पष्टम्। तस्य तस्य हीत्यादि। हि यस्मात् तस्य तस्य दोषस्य वातप्रकृतिषु पुरुषेषु गर्भात् प्रभृति वातस्य पित्तप्रकृतिषु पित्तस्य कफ-प्रकृतिषु कफस्य दोषस्याधिकत्वादितरदोषापेक्षया मानाधिक्यात्। सा सा

चक्रपाणिः—विषमाहारोपयोगित्वादिति, नायं पुरुषस्तुलाधारधृतमिवाहारमुपयुङ्क्ते, तेना-वश्यमत्र वातादीनामन्यतमोऽपि दोषो विकृतो भवतीति भावः। "समवातपित्तश्लेष्माणम्" इत्यादिना, अस्ति तावदारोग्यं पुरुषेषु तच्चान्यव्यवहारसिद्धमिति दर्शयति। तेन याद्दगिदं दोषाणां

एवोच्यते मनुष्याणाम्। न च विकृतेषु दोषेषु प्रकृतिस्थत्वमुपपद्यते तस्मान्नैताः प्रकृतयः सन्ति। सन्ति तु खलु वातलाः पित्तलाः श्लेष्मलाश्चाप्रकृतिस्थास्तु ते ज्ञेयाः ॥ ८ ॥

तेषान्तु खलु चतुर्व्विधानां पुरुषाणां चत्वार्य्यनुप्रणिधानानि श्रेयस्कराणि भवन्ति। तत्र समसर्व्वधातूनां सर्व्वाकारसममधिकदोषाणान्तु त्रयाणां यथास्वं दोषाधिक्यमभिसमीक्ष्य

वातादिदोषस्याधिक्यरूपा विकृतिः प्रकृतिरुच्यते, उक्तश्च प्रागेतत्—दोषानुशयिता ह्येषां देहप्रकृतिरुच्यते। नन्वस्तु तथाविधा दोषविकृतिरूपैव प्रकृतिः का हानिस्तेनेत्यत आह—न चेत्यादि। गर्भात् प्रभृति विकारेण प्रकृतिस्थत्वं नोपपद्यते स्फुटितकरचरणादिविकारकत्वात्। समास्तु यथा यथा मानेन वातपित्तश्लेष्माणो येषां भवन्ति तथा तथा मानेन वृहन्मध्यह्रस्वादिरूपाः पुरुषाः सन्तस्तथा तथा बलवत्समाग्नयो भवन्तीति मानाधिक्याल्पलाभ्यां सममानत्वे वातादीनां न क्षतिरिति भावः। तस्मात् विकृतित्वेन प्रकृतिस्थत्वानुपपत्त्या एता वाताद्याधिक्यरूपा न प्रकृतयः सन्ति, सन्ति तु खलु वातला इत्यादि। ननु ते किं नारोगाः इत्यत आह—अप्रकृतिस्थास्तु ते ज्ञेयाः न तु स्वस्था ज्ञेयाः ॥ ८ ॥

गङ्गाधरः—नन्वेवञ्चेत् तदा उत्तरकालं तत्प्रतिक्रियया विषमा वा तीक्ष्ण वा मन्दा वाग्नयः किं समा न भवन्ति भवन्ति वा। समाश्च गर्भात् प्रभृति कि विषमा वा तीक्ष्णा वा मन्दा वा भवन्ति किं न वेत्यत आह—तेषान्तु खल्वित्यादि। अनुप्रणिधानानि अनु उत्तरकालं प्रकर्षेण प्रकृतिरूपेण निधीयन्ते वाताद्याधिक्यसाम्यानि यैस्तान्यनुप्रणिधानानि। तानि कीदृशानि इत्यत आह—तत्रेत्यादि। सर्व्वाकारसमं रसतो गुणतो वीर्य्यतो विपाकतः प्रभावतश्च मात्रातश्च कालतश्च देशतश्च सत्त्वतश्च सात्म्यतश्च समवातपित्तश्लेष्मभिः समं यत् प्रतिकर्म्म तद्विधानं श्रेयस्करम्। समाग्ने रक्षणकरम्। वातलाद्यननुप्रणिधानन्तु न श्रेयस्करं किन्तु वैषम्यादिकरमिति भावः। अधिक-

कलाकाष्ठादिवैषम्यं परित्यज्याविर्भूतविकाराकारित्वेनादूरान्तरं साम्यमिष्यते, तादृगेव प्रकृतावपि साम्यमस्त्येवेति भावः। अन्ये तु वैषम्यं नाद्रियन्त एव व्यपदेश्यरोगाजनकत्वात्। दोषप्रकृतिः

**दोषप्रतिकूलयोगीनि त्रीण्यनुप्रणिधानानि श्रेयस्कराणि भवन्ति, यावदग्नेः समीभावात्। समे तु सममेव कार्य्यम्, एवञ्चेष्टा भेषजप्रयोगाश्चापरे। तानि * विस्तरेणानुव्याख्यास्यामः ॥ ६ ॥**

दोषाणां त्रयाणां वातलानां पित्तलानां श्लेष्मलानाञ्च यथास्वं वातलस्य वाताधिक्यं पित्तलस्य पित्ताधिक्यं श्लेष्मलस्य श्लेष्माधिक्यमभिसमीक्ष्य। दोषप्रतिकूलयोगीनीति वातलस्य वातप्रतिकूलयोगीनि मधुराम्ललवणादीनि। पित्तलस्य पित्तप्रतिकूलयोगीनि मधुरतिक्तकषायादीनि। श्लेष्मलस्य श्लेष्मप्रतिकूलयोगीनि कटुतिक्तकषायादीनि। यावदग्नेः समीभावात् समत्वप्रादुर्भावपर्य्यन्तम्। ततस्तेन तेन समे तु वह्नौ सममेव समसर्व्वाकारमनुप्रणिधानं कार्य्यमित्यर्थः। ननु सुश्रुते—प्रकोपो वान्यथाभावः क्षयो वा नोपजायते। प्रकृतीनां स्वभावेन जायते तु गतायुषीति वचनं वचनेनानेन विरुध्यते वातलादीनां विषमाग्नीनां साम्यकरवचनेन। समाग्नेर्व्वातलाद्याहारादिना वैषम्याद्याशङ्कायां पालनवचनेन चेति चेन्न। अप्रकृतिभूतानां कालप्रकर्षेण वृद्धिक्षयान्यथाभावा यथा जायन्ते तथा गर्भात् प्रभृति प्रकृतिभूतानां कालेनापि न क्षयवृद्ध्यन्यथाभावा भवन्ति इत्यभिप्रायेण सुश्रुतवचनम्, न च कारणोपसेवनेन तु क्षयवृद्ध्यन्यथाभावास्तेन प्रतिषिद्धा इत्यविरोधात्। अथ वातलादीनां धातुसाम्यापादनेन विषमाग्नीनां सूत्ररूपेण समत्वकरणानुरक्षणोपायान् उक्त्वा निःशेषेण तदुपायं वक्तुमाह—एवञ्चेष्टा इत्यादि। एवञ्च वातलादीनां विषमाग्निसाम्यकरणार्थं दोषप्रतिकूलयोगीन्यनुप्रणिधानानि श्रेयस्कराणि निषेव्य समाग्निमापन्नस्य समसर्व्वरससात्म्यं श्रेयस्करं तथा परे च वातलादीनां विषमाग्निसाम्यकरणानन्तरं समाग्निपालका रसायनविशेषा भेषजप्रयोगा इष्टाः प्रभावात्। वातलादीनां विषमाग्निसाम्यकरणोपायं वक्तुमभिप्रेत्याह—तानीत्यादि। दोषप्रतिकूलयोगीनि त्रीण्यनुप्रणिधानानि ॥ ९ ॥

इति दुष्टदोषभाविता प्रकृतिरित्यर्थः। दोषे प्रवृद्धे प्रतिकूलतया योगीनि दोषप्रतिकूलयोगीनि त्रीणि वातपित्तश्लेष्मप्रतिकूलानि च। समे स्विति समतां गते वह्नौ। यथोचितविधानेन वातप्रकृत्यादीनां सममेवानुप्रणिधानं कर्त्तव्यम्। एवमित्यनेन प्रकारेण चेष्टाभेषजयोरपि प्रयोगा वातादीनां भवन्ति। ये तु एवमित्यनेन चतुर्व्विधेनोक्तेन प्रकारेणेति वदन्ति, ते समप्रकृतीनाञ्च

---

* तान् इति चक्रः।

त्रयः पुरुषा भवन्त्यातुरास्ते त्वनातुरास्तन्त्रान्तरीयाणां भिषजाम् । तद् यथा—वातलश्च पित्तलश्च श्लेष्मलश्चेति ॥१०

तेषामिदं विशेषविज्ञानम् । वातलस्य वातनिमित्ताः पित्तलस्य पित्तनिमित्ताः श्लेष्मलस्य श्लेष्मनिमित्ता व्याधयः स्युर्बलवन्तश्च । तत्र वातलस्य वातप्रकोपणोक्तान्यासेवमानस्य क्षिप्रं वातः प्रकोपमापद्यते । न तथेतरौ दोषौ । स तस्य प्रकोपमापन्नो यथोक्तैर्विकारैः शरीरमुपतपति । बलवर्णसुखायुषामुपघाताय । तस्यावजयनं स्नेहस्वेदौ विधियुक्तौ, मृदूनि च संशोधनानि स्नेहोष्णमधुराम्ललवणयुक्तानि । तद्वदभ्यवहार्य्याणि

गङ्गाधरः—त्रय इत्यादि । भिषजामिति मते इति शेषः ॥ १० ॥

गङ्गाधरः—विशेषस्य विज्ञानं लिङ्गम् । वातलस्येत्यादि बलवन्तश्च भवन्तीत्यन्तमेकं लिङ्गम्, अत एवोक्तं न दोषप्रकृतिर्भवेदिति सुखसाध्यलक्षणम् । तत्र वातलस्येत्यादिना द्वितीयं लिङ्गं वातलादीनां वातप्रकोपणोपसेवनेन क्षिप्रं वातादिप्रकोपवचनेन तत् दूषितं येन तु विषजातो यथा कीटो न विषेण विपद्यते । तद्वत् प्रकृतिभिर्देहस्तज्जातत्वान्न बाध्यते इति सुश्रुतवचनात् प्रकृतिरपथ्यसेवनेन नात्यर्थं बाधते इत्युक्तं तदयुक्तम् । सुश्रुतस्य कुपथ्यसेवनेनातिबाधकत्वाभावाभिप्रायाभावात् । परन्तु वाताद्याधिक्येऽपि प्रकृतिभूतदोषैरप्रकृतिभूतदोषाधिक्ये बाधावन्न बाधा भवतीत्यभिप्रायात् । न तथेतरौ दोषाविति अप्रकृतिभूतावपरौ द्वौ दोषौ तयोः प्रकोपणोपसेवनेन प्रकृतिभूतदोषवत् क्षिप्रं न प्रकुप्यत इति तृतीयलक्षणम् । स तस्येत्यादिना शरीरमुपतपतीत्यन्तेन चतुर्थं लिङ्गम्, यथोक्तैर्विकारैरशीतिविधादिवातविकारैः । बलादुपघातायेति पञ्चमं लिङ्गम् । तस्य वातलस्य वाताधिक्यावजयनं स्नेहादिकं मृदूनि स्नेहादियुक्तानि च संशोधनानि वमनविरेचनास्थापनशिरोविरेचनानीति चत्वारि । तद्वदिति स्नेहोष्ण-

समभ्यायामादिचेष्टा भेषजञ्च ऋतुचर्य्याविधेयं वमनादिकारकं सूच्यतेऽनेनेति व्याख्यानयन्ति ॥ ८—१० ॥

चक्रपाणिः—न तथेतरौ दोषाविति सत्यापि हेतुसेवयेत्यर्थः, अन्यथा वातप्रकोपणसेवया पित्त-

अभ्यज्यानुप्रपनाहोद्वेष्टनोन्मर्द्दन-परिषेकावगाह-संवाहनावपीड़न-वित्रासनविस्मापनविस्मारणानि च सुरासवविधानं स्नेहाश्चानेकयोनयो दीपनीयपाचनीयवातहरवैरेचनीयोपहिताः। तथा शतपाकाः सहस्रपाकाः सर्व्वशश्च प्रयोगार्था वस्तयो वस्तिनियमः सुखशीलता चेति॥ ११॥

पित्तलस्यापि पित्तप्रकोपणोक्तान्यासेवमानस्य पित्तं क्षिप्रं प्रकोपमापद्यते। न तथेतरौ दोषौ। तदस्य प्रकोपमापन्नं यथोक्तैर्विकारैः शरीरमुपतपति। बलवर्णसुखायुषामुपघाताय। तस्यावजयनं सर्पिष्पानं सर्पिषा च स्नेहनमधश्च दोषहरणं

मधुराम्ललवणयुक्तान्यभ्यवहार्य्याणि तथा स्नेहादियुक्तान्यभ्यज्यानि तैलादीनि। तथा स्नेहादियुक्तानुप्रपनाहादीनि स्नेहादियोगेन संवाहनवित्रासनयोर्वातहन्तृत्वं नानुपपन्नम्। स्नेहाश्चानेकयोनय इति स्थावरतिलसर्षपातसीकुसुम्भादियोनिका दुग्धसम्भवा एवं देहसम्भवा वसा अस्थिसम्भवो मज्जा च ते च स्नेहा दीपनीयादिद्रव्योपहिताः तथा शतपाकाः स्नेहाः सहस्रपाकाश्च स्नेहाः शतवारपाकैः संस्कृता इत्यर्थः। सर्व्वशश्च अप्रकृतिभूतानामविरोधेन प्रयोगार्था वस्तयोऽनुवासनवस्तयः। वस्तिनियमो दिनद्वयादिप्रतिनियमेन वस्तेः प्रयोगः। सुखशीलता प्रायेण सुखानुशीलनम्॥ ११॥

गङ्गाधरः—पित्तलस्यापीत्यादिकं पूर्व्ववत् व्याख्येयम्। तदस्येति तत् पित्तमस्य पित्तस्य यथोक्तैश्चत्वारिंशता पित्तविकारैः। सर्पिषा स्नेहनं स्नेहन-

श्लेष्मणोर्वृद्धिरेव नास्ति। वित्रासनादयो यद्यपि वातकारकास्तथापि वातजनितोन्मादविनाशकत्वेन चोक्ता इति ज्ञेयम्। उन्मादे हि वित्रासनादि भेषजमभिधायोक्तम्—"तेन याति शमं तस्य सर्व्वतो विप्लुतं मन इति। सर्व्वशः प्रयोगार्था इति पानाभ्यङ्गवस्त्यादिभिः प्रयोजनीया इत्यर्थः। वस्तिनियम इति वस्तौ यथोक्तनियमसेवेत्यर्थः। किंवा 'वस्तिनियम'शब्देन सिद्धौ वक्ष्यमाणकर्म्मकालयोगरूपं वस्तिसंख्यानियमं कर्त्तव्यतया दर्शयति। वक्ष्यति हि—' 'शम्मताः कर्म्मसु वस्तियोगाः कालास्ततोऽर्द्धेन" इति। सुखशीलता सततसुखसेवित्वम्॥ ११॥

मधुरतिक्तकषायशीतानामौषधाभ्यवहार्य्याणामुपयोगः । मृदु-मधुरसुरभिशीतहृद्यानां गन्धानाञ्चोपसेवा, मुक्तामणिहारा-वलीनाञ्च पवनशिशिरवारिसंस्थितानां धारणमुरसा, क्षणे क्षणे स्रक्चन्दन-*-प्रियङ्गुकालीयमृणालशीतवातवारिभिरुत्पलकुमुद-कोकनदसौगन्धिकपद्मानुगतैश्च वारिभिरभिप्रोक्षणम्, श्रुतिसुख-मृदुमधुरमनोऽनुगानाञ्च गीतवादित्राणां श्रवणं, श्रवणञ्चाभ्यु-दयानाम्, सुहृद्भिश्च संयोगः, संयोगश्चेष्टाभिः स्त्रीभिः शीतोपहितांशुकस्रग्दामहारधारिणीभिः, निशाकरांशुशीतलप्रवात-हर्म्म्यवासः शैलान्तरपुलिनशिशिरसदनवसनव्यजनपवनसेवा, रम्याणाञ्चोपवनानां सुखशिशिरसुरभिमारुतोपवातानामुपसेवनम्,

कम्म, न तु तैलादिना। अधश्चेति विरेचनेन। हारावली हारश्रेणिः। मुक्तादीनां विशेषणं पवनादिस्थितानामिति शैत्यार्थम्। धारणमुरसा वक्षसि धारणम् इत्यर्थः। क्षणे क्षणे प्रतिक्षणे स्रक्चन्दनादीनां योगेन शीतैर्वारिभिरभि-प्रोक्षणमभ्युक्षणमुत्पलाद्यनुगतैश्च वारिभिरभ्युक्षणम्। श्रुतिसुखानि श्रवणसुखानि मृदूनि मधुराणि हृदयङ्गमानि मनोऽनुगानि च न हि मधुरमपि सर्व्वेषां सर्व्वं मनोऽनुगमतोऽस्य मधुरस्य वारणाय मनोऽनुगेतिपदम्, स्वस्वमनोऽनुकूलानी-त्यर्थः। अभ्युदयानां परममङ्गल्यानां वेदादीनाम् इष्टाभिरभिमताभिः स्वमनो-ज्ञाभिः शीतोपहितानामंशुकादीनां धारिणीभिः, अंशुकं चीनवसनं स्रग्दाम मालाबाहुल्यम्। निशाकरांशुभिः शीतलं प्रवातञ्च वातप्रकृष्टञ्च हर्म्म्यं तत्र वासः। शैलान्तरं पुलिनं तोयोत्थवालुकामयद्वीपं शिशिरं सदनं शिशिरं वसनं शिशिरं व्यजनं शिशिरः पवनस्तेषां सेवा भजनम्। सुखानां सुखजनकानां शिशिराणाञ्च

* अगुरुचन्दनेति वा पाठः ।

सेवनञ्च पद्मोत्पलनलिनकुमुदसौगन्धिकपुण्डरीकशतपत्रहस्तानां सौम्यानां सर्व्वभावाणामिति ॥ १२ ॥

श्लेष्मलस्य श्लेष्मप्रकोपणोक्तान्यासेवमानस्य क्षिप्रं श्लेष्मा प्रकोपमापद्यते। न तथेतरौ दोषौ। स तु तस्य प्रकोपमापन्नो यथोक्तैर्विकारैः शरीरमुपतपति। बलवर्णसुखायुषाम् उपघाताय। तस्यावजयनं विधियुक्तानि * संशोधनानि रुक्षप्रायाणि चाभ्यवहार्य्याणि कटुतिक्तकषायोपहितानि। तथैव धावन-लङ्घनप्लवनपरिसरण-जागरण-युद्धव्यवाय-व्यायामोन्मर्द्दन-स्नानोत्सादनानि विशेषतस्तीक्ष्णानाञ्च दीर्घकालस्थितानां

सुरभीणाञ्च मारुते उपवातानाम् उपगतानाञ्चोपवनानां रम्याणां सेवनञ्च, सेवनञ्च पद्मादिहस्तानां पुरुषाणाम्, सौम्यानाम् उदकगुणबहुलानाम् ॥ १२ ॥

गङ्गाधरः—श्लेष्मलस्येत्यादि। पूर्व्ववद्व्याख्येयम्। यथोक्तैर्विंशत्या कफविकारैः। संशोधनानि चत्वारि रुक्षप्रायाणि तथा रुक्षबहुलानि चाभ्यवहार्य्याणि कट्वाद्युपहितानि चाभ्यवहार्य्याणि तथा कट्वाद्युपहितानि यथासम्भवं धावणादीनि। धावनं दोलाश्वादिभिः। प्लवनं जलेषु सन्तरणं परिसरणं

चक्रपाणिः—यथोक्तैरिति महारोगाध्यायोक्तैः। अधश्च दोषहरणमिति विरेचनादित्यर्थः। अग्र्यं चन्दनं धवलचन्दनम्। हस्तानामिति कलापानाम् ॥ १२ ॥

चक्रपाणिः—श्लेष्मविजयार्थं रुक्षस्यैव हितत्वेन रुक्षाणीति वक्तव्ये यद्रुक्षप्रायाणीति करोति, तेनात्यर्थरुक्षान्नस्य वातानुगुणत्वेन तथा धात्वपोषकत्वेन चासेव्यत्वं दर्शयति। उक्तं हि रसविमाने—"स्निग्धमश्नीयात् स्निग्धभुक्तं हि स्वदते भक्तश्चाग्निमुदीरयति" इत्यादि। लङ्घनमुत्प्लुत्य गमनम्। परिसरणं कुण्डलरूपभ्रमणम्। सर्व्वशश्चोपवास इति सर्व्वलङ्घनानि। यदुक्तम्—"चतुष्प्रकारा संशुद्धिः पिपासा मारुतातपौ। पाचनान्युपवासश्च व्यायामश्चेति लङ्घनम् ॥" इति।

* इतः परं तीक्ष्णोष्णानीत्यधिकः पाठः।

मद्यानामुपयोगः । सधूमपानः सर्व्वशश्चोपवासस्तथोष्णं वासः सुखप्रतिषेधश्च सुखार्थमेवेति ॥ १३ ॥

भवति चात्र ।

सर्व्वरोगविशेषज्ञः सर्व्वकार्य्यविशेषवित् ।
सर्व्वभेषजतत्त्वज्ञो राज्ञः प्राणपतिर्भवेत् ॥ १४ ॥

तत्र श्लोकाः ।

प्रकृत्यन्तरभेदेन रोगानीकविकल्पनम् ।
परस्पराविरोधश्च सामान्यं रोगदोषयोः ॥
दोषसंख्याविकाराणामेकदोषप्रकोपणम् ।
जरणं प्रति चिन्ता च देहाग्ने रक्षणानि च ॥

सर्व्वतोगमनम् । तीक्ष्णानां गवादिमूत्राणां पुराणानाम् । सधूमपान इति धूपपानञ्चेत्यर्थः । उष्णं वासो वस्त्रं सुखार्थमेव न दुःखार्थं सुखप्रतिषेधः । क्लेशकरश्रमादिकं नातिदुःखकरं यथा स्यात् तथा सेवेत ॥ १३ ॥

गङ्गाधरः—एतद्विज्ञानफलमाह—भवन्तीत्यादि । सर्व्वरोगेत्यादि ॥ १४ ॥

गङ्गाधरः—अध्यायार्थमुपसंहरति । तत्र श्लोका इत्यादि । द्वे रोगानीके भवत इत्यारभ्य दशप्रकृत्यन्तरभेदेन दशरोगानीकस्य विकल्पना । संख्येयाग्रं ष्वित्यारभ्य पूर्व्वप्रकृत्यन्तरेण परप्रकृत्यन्तरस्य परस्परमविरोधः । समानो हीत्यादिना रोगदोषयोः सामान्यं विशेषश्च । दोषसंख्या विकाराणाञ्च संख्या रजस्तमश्चेत्यादिना मानसदोषसंख्या । कामेत्यादिना मानसविकाराणां संख्या । वातपित्तेत्यादिना शारीरदोषसंख्या । ज्वरातिसारेत्यादिना शारीरविकाराणां संख्या । तत्र हीत्यादिना दोषप्रकोपणम् । अग्निष्वित्यादिना जरणं जाठराग्निं प्रति चिन्ता चतुर्व्विधबलेन । तेषान्त्वित्यादिना देहाग्ने रक्षणं समाग्निकरणं

उपवासशब्दो ह्यत्र लङ्घने वर्त्तते । सुखार्थमित्यायतिसुखार्थम् । सुखप्रतिषेधाद्धि श्लेष्मक्षये भूते श्लेष्मविकाराभावलक्षणं सुखं भवति ॥ १३ ॥

चक्रपाणिः—यथोक्ताध्यायज्ञानादेव स्वयं सर्व्वरोगाभिज्ञं स्तौति—सर्व्व इत्यादिना । प्राणान्

नराणां वातलादीनां प्रकृतिस्थापनानि च।
रोगानीकविमानेऽस्मिन् व्याहृतानि महर्षिणा ॥ १५ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते विमानस्थाने
रोगानीकं विमानं नाम षष्ठोऽध्यायः ॥ ६ ॥

रक्षणञ्चेति चकारात्। तानीत्यादिना वातलादीनां प्रकृतिस्थापनं विकृत्यात्मकप्रकृतिप्रशमनेन समवातपित्तश्लेष्मरूपप्रकृतिकरणम् ॥ १५ ॥

अध्यायं समापयति—अग्नीत्यादि।

इति श्रीगङ्गाधरकविरत्नकविराजविरचिते चरकजल्पकल्पतरौ तृतीय-
स्कन्धे विमानस्थानजल्पे रोगानीकविमाननामषष्ठाध्याय-
जल्पाख्या षष्ठी शाखा ॥ ६ ॥

पाति रक्षतीति प्राणपतिः। संग्रहे जरयतीति जरणो वह्निस्तं प्रति चिन्ता "अग्निषु" इत्यादिना कृता। प्रकृतिस्थापनानीति भेषजानि ॥ १४। १५ ॥

इति चरकचतुरानन-श्रीमच्चक्रपाणिदत्तविरचितायाम् आयुर्वेददीपिकायां विमानस्थान-
व्याख्यायां रोगानीकविमानं नाम षष्ठोऽध्यायः ॥ ६ ॥

## सप्तमोऽध्यायः ।

अथातो व्याधितरूपीयं विमानं व्याख्यास्यामः,

इतिह स्माह भगवानात्रेयः ॥ १ ॥

इह खलु द्वौ पुरुषौ व्याधितरूपौ भवतः, गुरुव्याधितो लघुव्याधितश्च। तत्र गुरुव्याधित एकः सत्त्वबलशरीरसम्पदुपेतत्वाल्लघुव्याधित इव दृश्यते। लघुव्याधितोऽपरः सत्त्वादीनामल्पत्वाद्-*-गुरुव्याधित इव दृश्यते। तयोरकुशलाः केवलं चक्षुषैव रूपं दृष्ट्वाध्यवस्यन्तो व्याधिगुरुलाघवे विप्रति-

गङ्गाधरः अथ पुरुषाणां प्रकृतिमानविज्ञानार्थं व्याधितरूपीयविमानमारभते—अथात इत्यादि। व्याधितरूपौ भवत इत्यस्यार्थं व्याधितरूपमधिकृत्य कृतं विमानम् तत् ॥ १ ॥

गङ्गाधरः—इहेत्यादि। व्याधितस्यान्योन्यस्येव रूपं ययोर्व्याधितयोस्तौ व्याधितरूपौ। तत्रेत्यादि। गुरुव्याधितस्तु वस्तुतः स च सत्त्वाद्युपेतत्वाल्लघुव्याधित इव दृश्यते इति। लघुव्याधितरूपो गुरुव्याधितः सत्त्वस्य मनसो बलं शरीरस्य सम्पत् ताभ्यामुपेतत्वात्। लघुव्याधितोऽपरो वास्तविकः, स च सत्त्वबलशरीरसम्पदभावाल्लघुव्याधितोऽपि गुरुव्याधित इव दृश्यते। इति गुरुव्याधितरूपो लघुव्याधितो द्वितीय इति द्वौ पुरुषौ व्याधितरूपौ। नन्वेवमुपदेशस्य किं प्रयोजनमित्यत आह—तयोरित्यादि। चक्षुषैवेति

चक्रपाणिः—पूर्व्वाध्याये व्याधिं प्रतिपाद्य व्याधितस्य पुरुषस्य भेदं चिकित्सोपयोगितया प्रतिपादयितुं तथा तत्प्रसङ्गाच्च क्रिमीन् प्रतिपादयितुं व्याधितरूपीयोऽभिधीयते। द्वावित्यादौ व्याधिरितो जातो यस्य स व्याधितस्तस्येव रूपं ययोस्तौ व्याधितरूपौ व्याधितसदृशावित्यर्थः। यो हि गुरुव्याधिः सम्पन्नसत्त्वादिना लघुव्याधिर्दृश्यते, नासावपि लघुना व्याधिना व्याधितः, किन्तु गुरुव्याधित एवासौ। तेन व्याधितरूपावित्यनेन लघुव्याधियुक्तसदृशो बोद्धव्यः, स तु गुरुणैव व्याधिना व्याधितो गुरुव्याधिरदूरदर्शिना लघुव्याधिरिव दृश्यते। एवं विपर्य्यासाल्लघुव्याधितोऽपर इत्यादावपि व्याख्येयम्। अधमत्वादिति अवरत्वादित्यर्थः। चक्षुषैवेति रूपज्ञानसाध-

* अधमत्वादिति चक्रः।

पद्यन्ते। न हि ज्ञानावयवेन कृत्स्ने ज्ञेये विज्ञानमुत्पद्यते। विप्रतिपन्नास्तु खलु रोगज्ञाने उपक्रमयुक्तिज्ञाने चापि विप्रतिपद्यन्ते। ते यदा गुरुव्याधितं लघुव्याधितरूपमासादयन्ति तमल्पदोषं मत्वा संशोधनकालेऽस्मै मृदुसंशोधनं प्रयच्छन्तो भूय एवास्य दोषानुदीरयन्ति। यदा तु लघुव्याधितं गुरुव्याधितरूपमासादयन्ति तं महादोषं मत्वा संशोधनकालेऽस्मै तीक्ष्णं संशोधनं प्रयच्छन्तो दोषानतिनिर्हृत्यैव * शरीरमस्य क्षिण्वन्ति। एवमवयवेन ज्ञानस्य कृत्स्ने ज्ञेये ज्ञानमभिमन्यमानाः परिस्खलन्ति। विदितवेदितव्यास्तु भिषजः सर्व्वं सर्व्वथा यथासम्भवं परीक्ष्यं परीक्ष्याध्यवस्यन्तो

रूपं पुरुषस्य गुरुव्याधितं लघुव्याधितवद्रूपं लघुव्याधितं गुरुव्याधितवद्रूपं केवलं चक्षुषैव दृष्ट्वा सत्त्वादिबलं न दृष्ट्वा व्याधेर्गौरवे लाघवे च विप्रतिपद्यन्ते प्रतिपत्तिं न लभन्ते। ननु चक्षुरादेरेकैकेनैव रोगज्ञानं भवति कथं विप्रतिपद्यन्ते इत्यत आह—न हीत्यादि। ज्ञानावयवेन प्रत्यक्षेणानुमानेन वा विना ज्ञानसमुदयेन कात्स्न्र्ये कृत्स्ने भावे विज्ञानं नोत्पद्यते। तस्मात् सत्त्वबलशरीरसम्पत्ती विज्ञातुमवश्यं भवत व्याधिगुरुलाघवज्ञानार्थमिति भावः। ननु किमर्थं व्याधिः कात्स्न्र्येन ज्ञातव्यः स्वरूपतो ज्ञानमात्रेणैव उपक्रान्तुमर्हति इत्यत आह— विप्रतिपन्नास्त्वित्यादि। रोगज्ञाने च विप्रतिपन्ना वैद्या रोगस्योपक्रमस्य युक्तिज्ञाने च विप्रतिपद्यन्ते प्रतिपत्तिं न लभन्ते। ननु तथाविप्रतिपत्तौ का क्षतिरित्यत आह—ते यदेत्यादि। स्पष्टम्। ज्ञानावयवतो ज्ञानवादिनं

[illegible]। नेन स्पर्शादिनापि विशेषानवगाहकेनेति बोद्धव्यम्। रूपमिति विरूपम्। [illegible] इति विशेषं कुर्वन्तः। गुरुलाघवे विप्रतिपद्यन्त इति गुरुलघुत्वे न प्रतिपद्यन्ते। [illegible] विरुद्धप्रतिपत्तौ हेतुमाह—न हीत्यादि। ज्ञानावयवेनेति एकदेशज्ञानेन। विप्रतिपत्तिमाह—विप्रतिपन्नास्त्वित्यादि। उपक्रमस्य भेषजप्रयोगस्य विकारेण समं योजना [illegible] तस्या ज्ञाने विरुद्धप्रतिपत्तिमन्तो भवन्ति। एतदेव व्याकरोति—ते यदेत्यादि। [illegible] कुर्वन्तो। उदीरयन्तीति प्रकोपयन्त्येव परं न स्वल्पबलत्वाद् हरन्तीत्यर्थः। अति- [illegible] पाठान्तरम्।

न कश्चिदपि विप्रतिपद्यन्ते, यथेष्टमर्थमभिनिर्वर्त्तयन्ति चेति॥ २॥

भवन्ति चात्र।

सत्त्वादीनां विकल्पेन व्याधीनां रूप-*-मातुरे।
दृष्ट्वा विप्रतिपद्यन्ते बाला व्याधिबलाबले॥
ते भेषजमयोगेन कुर्व्वन्त्यज्ञानमोहिताः।
व्याधितानां विनाशाय क्लेशाय महतेऽपि वा॥
प्राज्ञास्तु सर्व्वमाज्ञाय परीक्ष्यमिह सर्व्वथा।
न स्खलन्ति प्रयोगेषु भेषजानां कदाचन॥ ३॥

इति व्याधितरूपाधिकारे श्रुत्वा व्याधितरूपसंख्याग्रसम्भवं

दूषयति—एवमित्यादि। एवमनेन प्रकारेण। विदितेत्यादि। विदिताः सर्व्वथा विज्ञाता वेदितव्या ज्ञेया यैस्ते तथा—यथेष्टमर्थं अभिमतप्रयोजनम्॥ २॥

गङ्गाधरः—पूर्व्वोक्तमर्थं तद्विद्यव्यवसायार्थं पद्येनाह—भवन्ति चात्रेत्यादि। सत्त्वादीनामित्यादि श्लोकत्रयं स्पष्टम्॥ ३॥

गङ्गाधरः—अत ऊर्द्ध्वं क्रिम्युपदेशस्य सङ्गतिमाह—व्याधितरूपाधिकारे श्रुत्वेत्यादि। व्याधितरूपसंख्याग्रसम्भवमिति व्याधितरूपस्य पुरुषस्य संख्यायाः अग्रस्याधिक्यस्य गुरुव्याधिते लघुव्याधितरूपत्वं लघुव्याधितस्य गुरुव्याधितरूपत्वमिवान्यादृशव्याधितस्य तदन्यादृशव्याधितरूपत्वस्य सम्भवं श्रुत्वा। अग्रं पुरस्तादुपरि परिमाणं परस्य च। आलम्बने समूहे च प्रान्तरे स्यात् नपुंस-

हत्येति अतियोगेन हत्वेत्यर्थः। ज्ञानस्येति ज्ञानसाधनस्य। यथासम्भवमिति यानि यत्र ज्ञानसाधनानि भवन्ति, तैस्तत्र। परीक्ष्यं सत्त्वादि। न कश्चिदपीति गौरवलाघवादौ॥ १।२॥

चक्रपाणिः—एतदेव सुखग्रहणार्थं श्लोकेनाह—सत्त्वेत्यादि। व्याधिरूपमिति व्याधेर्गुरुरूपमित्यर्थः। व्याधितरूपमिति तु पाठः सुगमः। बाला इत्यल्पज्ञाः, अयोगेनात्यल्पयोगेन। तेनातियोगमिथ्यायोगयोर्ग्रहणं भवति॥ ३॥

चक्रपाणिः—सम्प्रति व्याधिगुरुलाघवस्य दुर्ज्ञेयताप्रसङ्गेन दुर्ज्ञेयक्रिमिव्यापकमपि प्रकरणमारभते—व्याधित इत्यादि। संख्याग्रसम्भवमिति संख्याप्रमाणसम्भवमित्यर्थः। अग्रशब्दो

* व्याधिरूपमिति चक्रधृतः पाठः।

व्याधितरूपहेतुविप्रतिपत्तौ कारणं सापवादं संप्रतिपत्तिकारणञ्च अनपवादं भगवन्तमात्रेयमग्निवेशोऽतःपरं सर्व्वक्रिमीणां पुरुष-संश्रयाणां समुत्थानस्थानसंस्थानवर्णनामप्रभावचिकित्सितविशे-षान् पप्रच्छोपसंगृह्य पादौ ॥ ४ ॥

अथास्मै प्रोवाच भगवानात्रेयः। इह खल्वग्निवेश, विंशतिविधाः क्रिमयः पूर्व्वमुद्दिष्टा नानाविधेन प्रविभागेनान्यत्र सहजेभ्यः। ते पुनः प्रकृतिभिर्विभज्यमानाश्चतुर्व्विधा भवन्ति। तद्‌ यथा—पुरीषजाः श्लेष्मजाः शोणितजा मलजाश्चेति। तत्र मलो वाह्यश्चाभ्यन्तरश्च। तत्र वाह्यमलजातान् मलजान

कम्। अधिके च प्रधाने च प्रथमे चाभिधेयवत्। अस्रकोणे कचे पुंसि क्लीब-मश्रुणि शोणिते। इत्यभिधानादधिकार्थेऽग्रशब्दः। एवं पूर्व्वपरस्मिंश्च व्याख्या-तम्। व्याधितरूपस्य हेतोर्विप्रतिपत्तौ प्रतिपत्त्यभावे कारणं ज्ञानावयवरूपं साप-वादं सदोषं श्रुत्वा व्याधितरूपस्य हेतोः सम्प्रतिपत्तिकारणं ज्ञानसमुदायमनपवादं निर्दोषं श्रुत्वा अग्निवेशोऽतः परं द्विविधव्याधितरूपस्योपदेशानन्तरं पुरुषाणां क्रिमिव्याधितानामक्रिमिव्याधितरूपत्वेन विज्ञानं सदोषं क्रिमिप्रतीकारकरणेन रोगानुच्छेदात् क्रिमिव्याधितहेतुज्ञानन्तु निरपवादं तत्प्रतिकारेण क्रिम्यु-च्छेदादतः पुरुषसंश्रयाणां सर्व्वक्रिमीणां समुत्थानादिविशेषान् पप्रच्छ ॥ ४ ॥

गङ्गाधरः—अथास्मा इत्यादि। इहेत्यादि उत्तरमाह—पूर्व्वमष्टोदरीये। नानाविधेन यूकादिनामभेदेन वाह्यमलजत्वेन द्विधा शोणितजत्वेन केशादादिनाम्ना षट्‌कफजत्वेनान्त्रादादिनाम्ना सप्त पुरीषजत्वेन ककेरुकादिनाम्ना पञ्चप्रविभागेन विंशतिः क्रिमिजातय उक्ता अत्र तन्त्रे सहजक्रिमिभ्योऽन्यत्र सहजाः क्रिमयस्तु तत्र नोक्ता अवैकारिकत्वात्। ते पुनश्चतुर्व्विधेति स्पष्टम्। तत्रेत्यादि। वाह्यमलः

परिमाणवाची। व्याधितरूपस्य हेतुः सत्त्वादिबलवत्त्वाबलवत्त्वे, तत्कृतो विप्रतिपत्तिर्व्याधितरूप-हेतुविप्रतिपत्तिस्तत्र। कारणं एकदेशेन ज्ञानम्। सापवादमिति सदोषम्। सम्यक् प्रतिपत्तिः संप्रतिपत्तिः ॥ ४ ॥

चक्रपाणिः—पूर्व्वमुद्दिष्टा इत्यष्टोदरीये संज्ञामात्रकथिताः। अन्यत्र सहजेभ्य इत्यनेन शरीर-सहजास्त्ववैकारिकाः क्रिमयो विंशतेरप्यधिका भवन्तीति दर्शयति। प्रकृतिभिरिति कारणैः। मलजा

ऽव्याचक्ष्महे। तेषां समुत्थानं मृजावर्ज्जनं स्थानं केशश्मश्रुलोम-पक्ष्मवासांसि। संस्थानमणवस्तिलाकृतयो बहुपादाश्च। वर्णास्तु कृष्णाः शुक्लाश्च। नामानि चैषां यूकाः पिपीलिकाश्च। प्रभावः कण्डूजननं कोठपिड़काभिनिर्वर्त्तनञ्च। चिकित्सितन्तु खल्वेषा-मपकर्षणं मलोपघातो मलकराणाञ्च भावानामनुपसेवन-मिति ॥ ५ ॥

शोणितजानान्तु कुष्ठैः समानं समुत्थानम्। स्थानं रक्त-वाहिन्यो धमन्यः। संस्थानम् अणवो वृत्ताश्चापादाश्च। सूक्ष्मत्वाच्चैके भवन्त्यदृश्याः। वर्णास्तेषां ताम्रः। नामानि केशादा लोमादा लोमद्वीपाः सौरसा औडुम्बरा जन्तुमातरश्चेति। प्रभावः केशश्मश्रुलोमपक्ष्मापध्वंसो व्रणगतानाञ्च हर्षकण्डूतोद-संसर्पणानि। अतिप्रवृद्धानाञ्च त्वक्सिरास्नायुमांसतरुणास्थि-भक्षणमिति। चिकित्सितमप्येषां कुष्ठैः समानम्, तदुत्तरकालम् उपदेक्ष्यामः ॥ ६ ॥

शरीरकेशादिस्थः, आभ्यन्तरः पुरीषादिः, मृजावर्ज्जनं गात्रमार्ज्जनाविधानम् स्थानं केशादि स्पष्टम्। संस्थानमाकारः। अणवः सूक्ष्माः। पिपीलिकास्त्वन्यै-र्लिक्ष्या उच्यन्ते। अपकर्षणमाकर्षणं कङ्कत्यादिभिः। मलोपघातो मलाप-हरणविधानम् ॥ ५ ॥

गङ्गाधरः—शोणितेत्यादि। कुष्ठैः समानं समुत्थानं निदानं कुष्ठाधिकारे कुष्ठानां यद्यन्निदानमुक्तं तत्तन्निदानं तत्कुष्ठकरक्रिमीणां निदानमित्यर्थः। संस्थानं शरीरस्याकारः। वृत्ता वर्त्तुलाः। सूक्ष्मत्वादेके भवन्त्यदृश्या इत्यनेनान्ये केचिद् दृश्याश्च भवन्त्यनतिसूक्ष्मत्वात्। नामानि स्पष्टानि। व्रणगतानां प्रभावो हर्षादीनि, अतिप्रवृद्धानाञ्च प्रभावस्त्वगादिभक्षणम्। कुष्ठैः समानं समुत्थान-

इति बाह्यमलजाः। पिपीलिकां लिक्षां केचिदाहुः। क्रिमीणां संज्ञा स्वशास्त्रव्यवहारसिद्धा देशान्तर-

श्लेष्मजाः क्षीरगुड़तिलमत्स्यानूपमांसपिष्टान्नपरमान्नकुसुम्भस्नेहाजीर्ण-पूति-क्लिन्न-संकीर्ण-विरुद्धासात्म्यभोजन-समुत्थानाः। तेषामामाशयः स्थानम्। प्रभावस्तु ते प्रवर्द्धमानास्तूर्द्ध्वमधो वा विसर्पन्त्युभयतो वा। संस्थानवर्णविशेषास्तु श्वेताः पृथुब्रध्नसंस्थानाः केचित्, केचिद् वृत्तपरिणाहा गण्डूपदाकृतयः श्वेतास्ताम्रावभासाश्च। केचिदणवो दीर्घास्तन्त्वाकृतयः श्वेताः, तेषां त्रिविधानां श्लेष्मनिमित्तानां क्रिमीणां नामानि—अन्त्रादा उदरादा हृदयचराश्चुरवो दर्भपुष्पाः सौगन्धिका महागुदाश्चेति। प्रभावो हृल्लास आस्यसंस्रवणमरोचकाविपाकौ ज्वरो मूर्च्छा जृम्भा क्षवथुरानाहोऽङ्गमर्दश्छर्दिः कार्श्यं पारुष्यम् इति ॥ ७ ॥

पुरीषजास्तुल्यसमुत्थानाः श्लेष्मजैः। तेषां पक्वाशय एव

मिति वचनेन एषां कुष्ठकरत्वं कुष्ठेष्वेव सद्भावश्च न पृथग्गतिः ख्यापितम्। कुष्ठैः समानं कुष्ठोक्तं चिकित्सितं तदुत्तरकालं कुष्ठाधिकारे उपदेक्ष्यामः ॥ ६ ॥

गङ्गाधरः—श्लेष्मजा इत्यादिना श्लेष्मजक्रिमीणां निदानम्। अजीर्णादिभिः प्रत्येकं भोजनेतिपदं योज्यम् वर्णोपदेशसहिताकृतिवचनात् पृथ्वाद्याकाराः श्वेता नान्ये वर्णाः। परीणाहेन वृत्ताश्च गण्डूपदाकृतयश्च ये. ते श्वेता एकदेशे ताम्रावभासा अपरदेशे। ये च केचित् तन्तुसमाकृतयः दीर्घा अणवश्च, ते श्वेता एवेति त्रिविधा आमाशये कफाद् भवन्ति। ते त्रिविधाः सप्तनामानः। उदरादा इत्यादि। उदरमदन्ति इत्युदरादा इत्येवमादिकर्म्मकत्वेन संज्ञा। प्रभाव इति प्रभावजकार्य्यमित्यर्थः कारणे कार्य्योपचारात् एवं पूर्व्वं परे च बोध्यम्। एषां चिकित्सितं वक्ष्यति ॥ ७ ॥

गङ्गाधरः—पुरीषजास्त्वित्यादि। पुरीषजास्तु तुल्यसमुत्थानाः श्लेष्मजैः

प्रसिद्धा च बोद्धव्या। प्रभावमिति स्वशक्तिसम्पाद्यमित्यर्थः। हर्षकण्ड्वादयो व्रणदेश एव ज्ञेयाः, परमान्नं पायसम्। संकीर्णभोजनं तृणाविषयमिश्रितद्रव्यभक्षणादिभोजनम्। ब्रध्नो मांसपेशी ॥ ७-७ ॥

स्थानम्। प्रभावस्तु प्रवर्द्धमानास्तेऽधो विसर्पन्ति, यस्य पुनरामाशयोन्मुखाश्च स्युर्यदन्तरम्, तदन्तरं तस्योद्गारनिश्वासाः पुरीषगन्धिनः स्युः। संस्थानवर्णविशेषास्तु सूक्ष्मवृत्तपरीणाहाः श्वेता दीर्घोर्णांशुसङ्काशाः *, केचित्, केचित् पुनः स्थूलवृत्तपरीणाहाः श्यावनीलहरितपीताः। तेषां नामानि—ककेरुका मकेरुका लेलिहाः सशूलकाः सौसुरादाश्चेति। प्रभावः पुरीषभेदः कार्श्यं पारुष्यं रोमहर्षाभिनिर्वर्त्तनञ्च। त एव चास्य गुदमुखं परितुदन्तः कण्डूञ्चोपजनयन्तो गुदमुखं पर्य्यासते। ते जातहर्षा गुदनिष्क्रमणमतिवेलं कुर्व्वन्ति। इत्येवमेष श्लेष्मजानां पुरीषजानाञ्च समुत्थानादिविशेषः॥ ८॥

इति। पक्काशयो नाभेरधः। प्रभाव इति पूर्व्ववत् प्रभावकार्य्यमित्यर्थः। यस्य पुनः प्रवर्द्धमानास्तु ते यदन्तरं यन्मध्ये आमाशयोन्मुखाः स्युस्तदन्तरं तस्य पुरुषस्य उद्गारनिश्वासाः। संस्थानेत्यादि। सूक्ष्मा वृत्ताः परीणाहाः चतुष्पार्श्वा येषां ते तथा। दीर्घोर्णांशुसङ्काशाः दीर्घमेषलोमसदृशाः। स्थूला वृत्ताः परीणाहा येषां ते तथा। श्यावनीलहरितपीता एकदेशे श्यावा अपरदेशे नीला अन्यदेशे हरिता इतरदेशे पीता इति चतुर्वर्णाः। तेषां द्विविधानां नामानि ककेरुकादीनि पञ्च प्रभावः प्रभावजं कार्श्यं पुरीषभेदादिकम्। त एव ककेरुकादयः पर्य्यासते परिवसन्ति। ते इति पुरीषजक्रिमयः गुदनिष्क्रमणं गुदनिःसरणमतिवेलमतिमात्रं समुत्थानादेः सम्प्राप्त्यादेर्विशेषो भेदः, न तु निदानादिविशेषः। सुश्रुते तु—असात्म्याध्यशनाजीर्णविरुद्धमलिनाशनैः। अव्यायामदिवास्वप्न-गुर्व्वतिस्निग्धशीतलैः। माषपिष्टान्नविदल-विसशालूककसेरुकैः। पर्णशाकसुराशुक्त-दधिक्षीरगुडेक्षुभिः। पललानूपपिशित-पिण्याकपृथुकादिभिः। स्वाद्वम्लद्रवपानैश्च श्लेष्मा पित्तञ्च कुप्यति। क्रिमीन् बहु-

चक्रपाणिः—यदन्तरमिति यस्मिन् काले, तदन्तरं तत्कालमेव। ऊर्णांशुसंकाशा इति मेषलोमतुल्याः। पर्य्यासत इति क्षिपन्ति किंवा गुदं परिवार्य्यासते। अतिवेलमिति पुनःपुनः॥ ८॥

* दीर्घा ऊर्णांशुसङ्काशा इति पाठान्तरम्।

चिकित्सितन्तु खल्वेषां समासेनोपदिश्य पश्चाद्विस्तरेण उपदेक्ष्यामः। तत्र क्रिमीणामपकर्षणमेवादितः कर्त्तव्यम्; ततः

विधाकारान् करोति त्रिविधाश्रयान्। आमपक्वाशये तेषां प्रसवः प्रायशः स्मृतः। विंशतेः क्रिमिजातीनां त्रिविधः सम्भवः स्मृतः। पुरीषकफरक्तानि तेषां वक्ष्यामि लक्षणम्। अथवा वियवाः किप्याश्चिप्या गण्डूपदास्तथा। चूरवो द्विमुखाश्चैव सप्तैवैते पुरीषजाः। श्वेताः सूक्ष्मास्तुदन्त्येते गुदं प्रति सरन्ति च। तेषामेवापरे पुच्छैः पृथवश्च भवन्ति हि। शूलाग्निमान्द्यपाण्डुत्व-विष्टम्भबल-संक्षयाः। प्रसेकारुचिहृद्रोग-विड्भेदास्तु पुरीषजैः। रक्ता गण्डूपदा दीर्घा गुद-कण्डूनिपातिनः। शूलाटोपशकृद्भेद-पक्तिनाशकराश्च ते। दर्भपुष्पाः महापुष्पाः प्रलूनाश्चिपिटास्तथा। पिपीलिका दारुणाश्च कफकोपसमुद्भवाः। रोमशा रोम-मूर्द्धानः सपुच्छाः श्यावमण्डलाः। रूढ़धान्याङ्कुराकाराः शुक्लास्ते तनवस्तथा। मज्जादा नेत्रलेढ़ारस्तालुश्रोत्रभुजस्तथा। शिरोहृद्रोगवमथु-प्रतिश्यायकराश्च ते। केशलोमनखादाश्च दन्तादाः किक्किशास्तथा। कुष्ठजाश्च परीसर्पा ज्ञेयाः शोणितसम्भवाः। ते सरक्ताश्च कृष्णाश्च स्निग्धाश्च पृथवस्तथा। रक्ताधिष्ठान-जान् प्रायो विकारान् जनयन्ति ते। माषपिष्टान्नलवण-गुड़शाकैः पुरीषजाः। मांसमाषगुड़क्षीर-दधिशुक्तैः कफोद्भवाः। विरुद्धाजीर्णशाकाद्यैः शोणितोत्था भवन्ति हि। ज्वरो विवर्णता शूलं हृद्रोगः सदनं भ्रमः। भक्तद्वेषोऽतिसारश्च सञ्जातक्रिमिलक्षणम्। इत्यास्त्रयोदशाद्यास्तु क्रिमीणां परिकीर्त्तिताः। केशा-दाद्यास्त्वदृश्यास्ते द्वावाद्यौ परिवर्ज्जयेत्॥ इति। अत्र पुरीषशब्देन मला उच्यन्ते। तत्र मला द्विविधा बाह्या आभ्यन्तराश्च चरकेणोक्ताः, तदाभ्यन्तरमलजास्तु पञ्च ककेरुकादय उक्ता बाह्यमलजा द्विविधा यूकाः पिपीलिकाश्चेति सप्त। सुश्रुते मलत्वसामान्येन पुरीषपदेन मलद्वयमभिप्रेत्य सप्त पुरीषजा उक्ता इत्यविरोधः। कफजास्तु सप्तान्त्रादादयश्चरकेणोक्ताः। सुश्रुते तु दर्भपुष्पादयः षट् कफजा उक्ताः परन्तु शोणितजाः सप्त चोक्ता मज्जादा नेत्रलेढ़ारः तालुश्रोत्रभुजः केश-लोमनखादा दन्तादाः किक्किशाः कुष्ठजाश्चेति। चरके तु षट् शोणितजाः केशादादयः उक्ता इति विंशतित्वव्याघातो नोभयमते किन्तु नामभेदः। अपि चैषां नामानि कानिचित् सान्वयानि कानिचिन्निरन्वयानि जानीयात्॥ ८॥

गङ्गाधरः—चिकित्सितमित्यादि। तत्र क्रिमीणामित्यादिना सूत्ररूपतया

प्रकृतिविघातोऽनन्तरं निदानोक्तानां भावानामनुपसेवनमिति। तत्रापकर्षणं हस्तेनाभिगृह्य विमृश्योपकरणवता वाप्यपनयनम् अनुपकरणवता वा। स्थानगतानान्तु क्रिमीणां भेषजेनापकर्षणम्। न्यायतस्तच्चतुर्विधम्; तद् यथा—शिरोविरेचनं वमनं विरेचनम् आस्थापनमित्यपकर्षणविधिः। प्रकृतिविघातस्त्वेषां कटुकतिक्त-कषायक्षारोष्णानां द्रव्याणामुपयोगः। यच्चान्यदपि किञ्चित् श्लेष्मपुरीषप्रत्यनीकभूतं तत् स्यादिति प्रकृतिविघातः। अनन्तरं निदानोक्तानां भावानामनुपसेवनं यदुक्तं निदानविधौ, तस्य वर्ज्जनं तथाविधप्रयोगाणाञ्चापरेषां द्रव्याणाम्। इति लक्षणतः चिकित्सितमनुव्याख्यातमेतदेव पुनर्विस्तरेणोपदेक्ष्यते ॥९॥

अथैनं क्रिमिकोष्ठमग्रे षड़्रात्रं सप्तरात्रं वा स्नेहस्वेदाभ्याम् उपपाद्य श्वोभूते एनं संशोधनं पाययितास्मीति क्षीरगुड़-

समासेन चिकित्सितम्। प्रकृतिविघात इति मलकफशोणितपुरीषाणां प्रकृतीनां निर्हरणादिना प्रतीकारः। तत्रापकर्षणमित्यादिना भाष्यरूपतया च सङ्क्षेप-चिकित्सितम्। हस्तेनेति ऊर्द्ध्वमधश्च किञ्चिन्निःसृताभिप्रायेण उपकरणं हस्त-लग्नवस्तुविशेष आहरणार्थं ग्रहणयोग्यः। स्थानगतानामिति मलादुरक्तस्वस्वस्थान-स्थितानाम्। न्यायत इति यथाविधितः। अपकर्षणं विवृणोति। तच्चेत्यादि। अनन्तरमिति अपकर्षणानन्तरं प्रकृतिविघातस्ततः परम्॥ ९॥

<u>गङ्गाधरः</u>—अथैनमित्यादि। षड़्रात्रं सप्तरात्रं वा स्नेहस्वेदाभ्यामुपपाद्या-

<u>चक्रपाणिः</u>—अपकर्षणं हस्तादि संशोधनानि च, प्रकृतेः कारणस्य श्लेष्मरूपस्य। विघातः प्रकृतेरित्यर्थः। उपकरणवतेति सन्दंशाद्युपकरणयुक्तेन। तत् स्यादिति विघातः स्यादिति योजना। निदानोक्तानां भावानामनुपसेवनमिति विवरणानुवादः। अस्य विवरणम्—'यदुक्तम्' इत्यादि। तथाप्रायाणामिति श्लेष्मजपुरीषजक्रिमिनिदानसदृशानामित्यर्थः। लक्षणत इति संक्षेपतः। संक्षेपो हि विस्तरस्य ग्राहकं लक्षणं भवति॥ ९॥

दधि-तिल-मत्स्यानूप-मांस-पिष्टान्नपरमान्नकुसुम्भस्नेहसंप्रयुक्तैः भोज्यैः सायं प्रातश्चोपपादयेत्, समुदीरणार्थञ्च क्रिमीणां कोष्ठाभिसरणार्थञ्च भिषक्। अथ व्युष्टायां रात्र्यां सुखोषितं सुप्रजीर्णभक्तञ्च विज्ञायास्थापनवमनविरेचनैस्तदहरेवोपपादयेत् उपपादनीयश्चेत् स्यात्, सर्व्वान् परीक्ष्य विशेषान् परीक्ष्य सम्यक् ॥ १० ॥

अथाहरेति ब्रूयात् मूलकसर्षपलशुनकरञ्जशिग्रुमधुशिग्रु-खरपुष्पाभूस्तृणसुमुखसुरसकुठेरकगण्डीरकालमालपर्णासक्षवक-फणिज्झकानि। सर्व्वाण्यथवा यथालाभं तान्याहृतान्यभि-समीक्ष्य खण्डशश्छेदयित्वा प्रक्षाल्य पानीयेन, सुप्रक्षालितायां स्थाल्यां समावाप्य गोमूत्रेणार्द्धोदकेनाभिषिच्य साधयेत्, सततम्

नन्तरमष्टमे दिने क्षीरगुड़ादिसंप्रयुक्तैर्भोज्यैः सायं प्रातरिति प्राह्णे चापराह्णे च तादृशानि भोज्यानि भोजयित्वा रात्र्यां व्युष्टायां वासं कारयित्वा ततो नवमे दिने सुप्रजीर्णभक्तं सुखोषितञ्च ज्ञात्वा सर्व्वानास्थापनादियोग्यत्वादिकान् सम्यक् परीक्ष्य विशेषान् सुकुमारत्वादीन् सम्यक् परीक्ष्य चेद् यदि स पुरुष आस्थापना-दिभिः उपपादयितुमर्हः स्यात्, तदास्थापनवमनविरेचनैस्तदहरेव तस्मिन् नवमं एव दिने उपपादयेदिति ॥ १० ॥

गङ्गाधरः— नन्वास्थापनादिकं कथमुपकल्पयेदित्यत आह—अथाहरेत्यादि। आहर आहरणं कुर्व्वित ब्रूयात्। कानीत्यत आह—मूलकेत्यादि। करञ्जो गोकरञ्जः, शिग्रुः शोभाञ्जनः, मधुशिग्रुः रक्तशोभाञ्जनः, खरपुष्पा यमानी, सुमुखः शाकभेदः, गण्डीरं दूर्व्वाभेदः। सर्व्वाणि यथालाभं वा मूलकादीनि कुट्टयित्वा

चक्रपाणिः—कोष्ठाभिसरणार्थमिति क्षीरगुड़ादिलोभेन देशान्तरं परित्यज्य कोष्ठगमनार्थम्। तदहरेवेत्येकस्मिन् दिने, एतच्चैकदिन एव भूरिकर्म्मकरणं व्याधिप्रभावाद् बोद्धव्यम्। एतच्चैकाहेन सर्व्वकरणं यदि शरीरबलादिसम्पद्युक्तः पुरुषो भवति, तदैवं परं कर्त्तव्यम्, नान्यथेत्याह—उपपादनीयश्चेत् स्यादित्यादिना ॥ १० ॥

चक्रपाणिः—मधुशिग्रुः शोभाञ्जनम्, अत्र क्वाथ्यद्रव्यजलादिमानं क्वाथपरिभाषया कर्त्तव्यम्।

अवघट्टयन् दर्व्या। तस्मिन् शीतीभूते तूपयुक्तभूयिष्ठेऽम्भसि गतरसेष्वौषधेषु स्थालीमवतार्य्य सुपरिपूतं कषायं सुखोष्णं मदनफलपिप्पलीविड़ङ्गकल्कतैलोपहितं स्वर्ज्जिकालवणितमभ्यासिच्य वस्तौ विधिवदास्थापयेदेनम्। तथार्कालर्ककुटजाढ़कीकुष्ठकैटर्य्यकषायेण वा, तथा शिग्रुपीलुकुस्तुम्बुरुकटुकासर्षपकषायेण, तथामलकशृङ्गवेरदारुहरिद्रापिचुमर्द्दकषायेण मदनफलादिसंयोगयोजितेन त्रिरात्रं सप्तरात्रं वा * स्थापयेत्। प्रत्यागते च पश्चिमे वस्तौ प्रत्याश्वस्तं तदहरेवोभयतोभागहरं

अष्टगुणेऽर्द्धोदकगोमूत्रे सततमेव दर्व्या घट्टयन् उत्तोलननिवारणाय पक्त्वा कल्केषु तेषु मूलकादिषु औषधेषु सत्सु उपयुक्तभूयिष्ठेऽम्भसि चतुर्थावशेषे तस्मिन् क्वाथेऽष्टांशशेषे वा सति स्थालीमवतार्य्य तं सुखोष्णं कषायं सुपूतं मदनफलबीजविड़ङ्गकल्कतैलयुक्तं स्वर्ज्जिकालवणयुक्तं वस्तौ अभ्यासिच्य पूरयित्वा आस्थापयेत् निरूहयेत्। एवं त्रिरात्रं सप्तरात्रं वास्थापयेत्। आस्थापनान्तरयोगमाह—तथार्केत्यादि। अर्को रक्तार्कः अलर्को धवलार्कः कैटर्य्यं कट्फलम्। एषां क्वाथो द्वितीयमास्थापनम्। तथा तृतीयास्थापनयोगमाह—तथा शिग्रित्यादि। चतुर्थास्थापनयोगमाह—तथामलकेत्यादि। मदनफलतण्डुलविड़ङ्गकल्कतैलस्वर्जिकालवणयुक्तेनैषामन्यतमेन क्वाथेन क्वाथविधिः पूर्ववत्। ननु त्रिरात्रं सप्तरात्रं वा यदैवमास्थापयेत् तदा तदहरेव न वमनविरेचनयोः उपयोगः सम्भवतीत्यत आह—प्रत्यागते च पश्चिमे वस्तावित्यादि। शेषदिने उपयोजितवस्तौ प्रत्यागते गुदतो निःसृते सति पुनस्तं पुरुषं प्रत्याश्वस्तं प्रत्याश्वासेन सम्पाद्य तदहरेव उभयतोऽधः ऊर्द्धञ्च भागहरं वमनविरेचनोभय-

उपयुक्तभूयिष्ठे प्रक्षीणभूयिष्ठे इत्यर्थः। गतरसेष्वौषधेष्विति जले संक्रान्तरसेषु। अनेन कषायसिद्धिलक्षणेन यावता जलेन पाकेन चौषधानि गतरसानि भवन्ति तावदेव जलं देयम्, तावांश्च पाकः कर्त्तव्यः, नावश्यं परिभाषया सर्व्वत्र क्रमं दर्शयति। परिपूतमिति वस्त्रगालितम्। वस्ती चरकादिमानं सिद्धौ वक्ष्यमाणेन ज्ञेयम्। अलर्को मन्दारः।

* त्रिरात्रं सप्तरात्रं वेत्यत्र त्रिवारमिति चक्रधृतः पाठः।

संशोधनं पाययेत् युक्त्या। तस्य विधिरुपदेक्ष्यते—मदनफल-पिप्पलीकषायस्यार्द्धाञ्जलिमात्रेण त्रिवृताकल्काक्षमात्रमालोड्य अनुपातुमस्मै प्रयच्छेत्, तदस्य दोषमुभयतो निर्हरति साधु। एवमेव कल्पोक्तानि वमनविरेचनानि प्रतिसंसृज्य पाययेदेनं बुद्ध्या सर्व्वविशेषानवेक्ष्यमाणो भिषक्॥ ११॥

अथैनं सम्यग्विरिक्तं विज्ञायापराह्णे शैखरिककषायेण सुखोष्णेन परिषेचयेत्। तेन चैव कषायेण बाह्याभ्यन्तरान् सर्व्वोदकार्थान् कारयेत् शश्वत्। तदभावे कटुतिक्तकषायाणामौषधानां काथैर्मूत्रक्षारैर्वा परिषेचयेत्। परिषिक्तञ्चैनं निर्वातमागारमनुप्रवेश्य पिप्पलीपिप्पलीमूलचव्यचित्रकशृङ्गवेरैः सह सिद्धेन यवाग्वादिना क्रमेणोपचरेत्। विलेप्याः क्रममागतञ्चैनमनुवासयेद्विडङ्गतैलेनैकान्तरं द्विस्त्रिर्वा। यदि पुनरस्याभिवृद्धान्

करमौषधं पाययेत्। उभयतोभागहरमौषधमाह—मदनफलेत्यादि। पिप्पलीशब्दो वीजवाची, न तु ऊषणावाची अत्र बोध्या। उभयतोभागहरणयोगकल्पनार्थं युक्तिं दर्शयित्वा शेषानुभयतोभागहरयोगान कल्पयितुमाह—एवमेवेत्यादि। प्रतिसंसृज्य संसृष्टानि कृत्वा॥ ११॥

<u>गङ्गाधरः</u>—अथेत्यादि। सम्यग्विरिक्तं वान्तञ्च विज्ञायेत्यर्थः। शैखरिकोऽपामार्गः। सर्व्वोदकार्थान् स्नानाचमनादिविधानायोदकार्थान्, न त्वन्यदुदकम्। तदभावे अपामार्गाभावे कट्वादिरसद्रव्याणां (काथैः)। मूत्रक्षारैरिति मूत्रमिश्रक्षारैः यवक्षारादैः। सह सिद्धेनेति पिप्पल्यादिकल्कसिद्धेन पेयादिना क्रमेणोपाचरणतस्तु विलेपीक्रमं प्राप्तमेनं विडङ्गतैलेनानुवासयेत्। एकान्तरं द्वौ वारौ त्रीन् वारान् वानुवासयेदित्यन्वयः। त्रिविधसंशोधनविषयमुक्त्वा शिरो-

पश्चिमे तृतीयपुटके। संसृज्येति मश्रीकृत्य। शैखरिककषायेणेति विडङ्गकषायेण, विडङ्गकषायो

शीर्षादान् क्रिमीन् मन्येत, शिरस्येवाभिसर्पतः कदाचित्, ततः स्नेहस्वेदाभ्यां शिर उपपाद्य विरेचयेदपामार्गतण्डुलादिना शिरोविरेचनेन ॥ १२ ॥

यस्त्वभ्यवहार्य्यो विधिः प्रकृतिविघातायोक्तः क्रिमीणाम्, अथ तमनुव्याख्यास्यामः। मूषिकपर्णीं * समूलाग्रप्रतानामाहृत्य खण्डशश्छेदयित्वा उदूखले क्षोदयित्वा पाणिभ्यां पीड़यित्वा रसं गृह्णीयात्। तेन रसेन लोहितशालितण्डुलपिष्टमालोड्य पूपलिकां कृत्वा विधूमेष्वङ्गारेषु विपाच्य † विड़ङ्गतैललवणोपहितां क्रिमिकोष्ठाय भक्षयितुं प्रयच्छेत्। तदनन्तरञ्चाम्लकाञ्जिकमुदश्वित् पिप्पल्यादिपञ्चवर्गसंसृष्टं सलवणमनुपाययेत्। तां खलु एतेन कल्पेन मार्कवार्कसहचरनीपनिर्गुण्डीसुमुखसुरसकुठेरकगण्डीरकालमालपर्णासक्षवकफणिज्भकवकुलकुटजसुवर्णक्षीरीस्वरसानामन्यतमे कारयेत्। तथा किणिहीकिराततिक्तसुवहा-

विरेचनविषयक्रिमिव्याधितमाह—यदीत्यादि। शीर्षादान् शिरोजातान् शिरोभक्षकान् स्नेहस्वेदाभ्यां शिर उपपाद्य शिरसि स्नेहस्वेदौ कृत्वा ॥ १२ ॥

गङ्गाधरः—आकर्षणमुक्त्वा ततोऽस्य प्रकृतिमलादिविघातायोक्तो यो विधिः तम्। अभ्यवहार्य्यमाह—मूषिकपर्णीमित्यादि। पूपलिकां शष्कुलीं निर्द्धूमेषु अङ्गाराग्निषु उदश्वित् अर्द्धोदकतक्रं (उदकीकृत्य उदकतया कल्पयित्वा) पिप्पल्यादिपञ्चवर्गसंसृष्टं पञ्चकोलचूर्णसंयुक्तं सलवणं ससैन्धवमनुपाययेत्। शेषं भक्ष्यविधिमाह—ताम् इत्यादि। एतेन उक्तेन। मार्कवं भृङ्गराजः, अर्कः श्वेतः, सुमुखः शाकविशेषः, कालमालः कासमर्द्दः। तथेत्यादिना शेषानाह—किणिहीत्यादि।

हि वैद्यकव्यवहारात् शैखरिककषाय उच्यते। विलेप्याः क्रमागतमिति कृतयवाग्वादिक्रममित्यर्थः। अपामार्गतण्डुलादिनेत्यपामार्गतण्डुलीयोक्तेन ॥ ११।१२ ॥

चक्रपाणिः—मूलकपर्णी शोभाञ्जनम्। उपकुड्येति पाचयित्वा, 'कुड दाहे' इति धातुः पठ्यते।

* मूलकपर्णीमिति चक्रः। † उपकुड्येति वा पाठः।

मलकहरीतकीविभीतकस्वरसेषु कारयेत् पूपलिकाः स्वरसांश्च एषामेकैकशो द्वन्द्वशः सर्व्वशो वा मधुविलुलितान्* प्रातरनन्नाय पातुं प्रयच्छेत् ॥ १३ ॥

अथाश्वशकृदाहृत्य महति किलिञ्जके प्रस्तीर्य्यातपे शोषयित्वोदूखले क्षोदयित्वा दृशदि पुनः सूक्ष्मचूर्णानि कारयित्वा विडङ्गकषायेण त्रिफलाकषायेण वाष्टकृत्वो दशकृत्वो वातपे सुपरिभावितानि दृशदि पुनः सूक्ष्मचूर्णानि कारयित्वा नवे कलसे समावाप्यानुगुप्तं निधापयेत्। तेषान्तु खलु चूर्णानां पाणितलं चूर्णं यावद्वा साधु मन्येत, तत् क्षौद्रेण संसृज्य क्रिमिकोष्ठिने लेढुं प्रयच्छेत्। तथा भल्लातकास्थीन्याहृत्य कलसप्रमाणेन चापोथ्य स्नेहभाविते दृढ़े कलसे सूक्ष्मानेकच्छिद्रब्रध्ने† मृदाव-

किणिही अपामार्गः, सुवहा शेफालिका, पूपलिका इति कारयेदिति पूर्व्वेणापि चान्वेतव्यम्। भक्ष्यविधिमुक्त्वा भक्षणविधिना औषधविधिमाह—स्वरसांश्चैषामित्यादि। एषां मूषकपर्ण्यादीनाम्, अनन्नाय अभुक्तवते शून्यकोष्ठायेत्यर्थः ॥१३

गङ्गाधरः—अथाश्वशकृदित्यादि। किलिञ्जकः पिटोटोकः, चुवड़ीति लोके। अष्टकृत्वोऽष्टवारान दशकृत्वो दशवारान वा आतपे सुपरिभावितानि यावता विडङ्गकषायेण त्रिफलाकषायेण वा तानि चूर्णान्यार्द्रीभूयैकतां व्रजेत् तावता तेन कषायेण भावयित्वा शुष्कीकृतानि पुनरार्द्रीकृत्य शोषणं भावना अनुगुप्तं तं कलसमुखमाच्छाद्य वातादीन निवार्य्य निधापयेत्। पाणितलं कर्षमात्रम्। यावद्वेति व्याध्यादिबलानुसारेणाल्पाधिकाभ्याम्। योगान्तरमाह—तथा भल्लातकेत्यादि। कलसप्रमाणेन द्वात्रिंशच्छरावमानेन आपोथ्य कुट्टयित्वा

पिप्पल्यादिपञ्चवर्गोऽत्रैव पेयादिक्रमोक्तपञ्चकोलम्। सहचरो झिण्टिकी। मधुविलिखितानिति मधुनालोडितान् ॥ १३ ॥

चक्रपाणिः—सुपरीत्यादि। यथा सुपरिभावितानि भवन्ति, तथा भावयित्वेत्यर्थः। अनुगुप्तमिति वातायननुगमनीयं कृतरक्षञ्च यथा भवति। ब्रध्नो गुदः, इह तु कलशाधोभागे। शरीरमुप-

* मधुविलिखितानिति वा पाठः। † शरीरमुपवेष्टेऽत्यधिकः पाठः क्वचित्।

लिप्ते समाश्रप्योडुपेन पिधाय भूमावाकण्ठं निखातस्य स्नेह-भावितस्यैवान्यस्य दृढ़स्य कुम्भस्योपरि समारोप्य समन्ताद् गोमयैरुपचित्य दाहयेत्। स यदा जानीयात् साधु दग्धानि गोमयानि, गलितस्नेहानि भल्लातकास्थीनि ततस्तं कुम्भम् उद्धरेत्। अथ तस्माद् द्वितीयादेव कुम्भात् तं स्नेहमादाय विड़ङ्गतण्डुलचूर्णैः स्नेहार्द्धमात्रैः प्रतिसंसृज्यातपे सर्व्वमहः स्थापयित्वा ततोऽस्मै मात्रां प्रयच्छेत् पानाय। तेन साधु विरिच्यते, विरिक्तस्य चानुपूर्व्वी यथोक्ता। एवमेव भद्रदारु-सरलकाष्ठस्नेहानुपकल्प्य पातुं प्रयच्छेत्॥ १४॥

अनुवासयेच्चैनमनुवासनकाले। अथाहरेति ब्रूयात् शारदान् नवांस्तिलान् सम्पदुपेतान् आहृत्य सुनिष्पूतान् * शोधयित्वा

उदूखले स्नेहभाविते तैलादिभाविते कलसे सूक्ष्माणि अनेकच्छिद्राणि ब्रध्ने गुददेशेऽर्थात् तलदेशे यस्य तस्मिन् तथा। मृदा सर्व्वतो लिप्ते तानि कुट्टितभल्लातकास्थीनि समारोप्य उडुपेन कदलीवृक्षपटलेन शरावाद्याच्छादनेन मुखमस्य पिधाय धूमो यथा न निर्गच्छेत्। भूमौ गर्त्तं कृत्वा स्नेहभावितदृढ़-कुम्भान्तरमाकण्ठं निखातीकृत्य तस्य कुम्भस्योपरि तं भल्लातकास्थिपूरित-कुम्भमारोप्य समन्तात् चतुर्दिक्षु गोमयैः कारीषैरुपचित्य आचितं कृत्वा दहेत्। द्वितीयादिति तलस्थकुम्भात्। स्नेहः स एव भल्लातकस्नेहोऽर्द्धमात्रं यत्र तैर्विड़ङ्ग-चूर्णैः विड़ङ्गचूर्णस्य द्वौ भागौ भल्लातकस्नेहस्य चैकभाग इत्येवं मिश्रयित्वा सर्व्वं चतुःप्रहरदिनं स्थापयित्वा यथोक्तेऽपि उपकल्पनीये विरेचनाधिकारोक्ता। योगान्तरमाह—एवमेवेत्यादि। स्पष्टम्॥ १४॥

गङ्गाधरः—अनुवासयेदित्यादि। शारदानित्यादिना योगान्तरम्। सम्पद्-उपेतान् जन्तुजग्धत्वादिदोषरहितान् निष्पूय धौतादिकं कृत्वा निस्तुषीकृत्य

वेष्टेयेति वेष्टयित्वा। उलुपः पिधानम्। स इति भल्लातकस्नेहसाधकः। द्वितीयादिति अधः-

* निष्पूय सुशुद्धानिति पाठान्तरं क्वचित् दृश्यते।

त्रिङ्गकषाये सुखोष्णे निर्वापयेदा दोषगमनात्। गतदोषानभिसमीक्ष्य सुप्रशूनान् प्रलुच्य पुनरेव निष्पूतान् शोधयित्वा विड़ङ्गकषायेण त्रिःसप्तकृत्वः सुभावितानातपे शोषयित्वोदूखले संक्षुद्य दृशदि पुनः श्लक्ष्णपिष्टान् कारयित्वा द्रोण्यामभ्यवधाय विड़ङ्गकषायेण मुहुर्म्मुहुरवसिञ्चन् पाणिमर्द्दमेव मर्द्दयेत्। तस्मिंस्तु खलु प्रपीड्यमाने यत् तैलमुदियात् तत् पाणिभ्यां पर्य्यादाय शुचौ दृढ़े कलसे न्यस्यानुगुप्तं निधापयेत्।

अथाहरेति ब्रूयात् तिल्वकोद्दालकयोर्द्वौ बिल्वमात्रौ पिण्डौ श्लक्ष्णपिष्टौ विड़ङ्गकषायेण तदर्द्धमात्रौ श्यामात्रिवृतयोरतोऽर्द्धमात्रौ दन्तीद्रवन्त्योरतोऽर्द्धमात्रौ चव्यचित्रकयोरित्येतं सम्भारं विड़ङ्गकषायस्याढ़कमात्रेण प्रतिसंसृज्य, तत्तैलप्रस्थं समावाप्य सर्व्वमालोड्य महति पर्य्यगे समासिच्याग्नावधिश्रित्य आसने सुखोपविष्टः सर्व्वतः स्नेहमवलोकयन्नजस्रं मृद्वग्निना साधयेत्

निर्व्वापितान् शीतीकृतान् आ दोषगमनात् तिलानां दोषगमनपर्य्यन्तं सुप्रशूनान् सुप्रस्फीतान् प्रलुच्य अपनीय त्रिःसप्तकृत्व एकविंशतिवारान्। एवंप्रकारेण निष्पन्नतिलतैलं प्रस्थमितम्। तिल्वकं लोध्रम् उद्दालको वहुवारः; अनयोः प्रत्येकं द्विपलं विड़ङ्गकषायेण पिष्टाविति तदर्द्धमात्रावित्यादौ सर्व्वत्र योज्यम्। तेन तिल्वकस्य पलद्वयम् उद्दालकस्य पलद्वयं श्याममूलत्रिवृन्मूलस्य पलम् अरुणमूलत्रिवृन्मूलस्य पलं दन्तीमूलस्यार्द्धपलं नागदन्तीमूलस्यार्द्धपलं चव्यस्य कर्षश्चित्रकमूलस्य कर्ष इत्येतत्सम्भारं कल्कं विड़ङ्गकषायेणार्द्धाढ़कमात्रेण प्रतिसंसृज्य पेषयित्वा तस्मिन् पूर्व्वोक्तविड़ङ्गक्वाथतिलसम्पीड़िते प्रस्थे तैले गर्भं दत्त्वा तद्विड़ङ्गकषायस्याष्टशरावैः प्रतिसंसृज्य समालोड्य सर्व्वं महति

स्थात् घटात्। निष्पूयेति मृत्तिकायवकरादिनिचित्य। शोधयित्वेति प्रक्षाल्य। आ दोषगमनादित्यत्र तिलदोषगमनं तिलत्वग्लग्नमलादिगमनं ज्ञेयम्। प्रलुच्य निस्तुषीकृत्य। अभ्यवधायेति आरोप्य। पाणिभ्यां पर्य्यादायेति पाणिलग्नं पुनःपुनर्गृहीत्वा।

उद्दालको बहुवारः। बिल्वमात्रौ पलप्रमाणौ। पर्य्यगः कटाहः। यथास्वमिति

दःव्र्या सततमवघट्टयन् । स यदा जानीयात् विरमति शब्दः प्रशाम्यति च फेनः प्रसादमापद्यते स्नेहो यथास्वञ्च गन्धवर्ण-रसोत्पत्तिः संवर्त्तते च भैषज्यमङ्गुलीभ्यां मृद्यमानमनतिमृद्वनति-दारुणमनङ्गुलिग्राहि चेति स कालस्तस्यावतारणाय । ततस्तम् अवहृत्य * शीतीभूतमहतेन वाससा परिपूय शुचौ दृढे कलसे समासिच्य पिधानेन पिधाय शुक्लेन वस्त्रपट्टेनाच्छाद्य सूत्रेण सुबद्धं सुनिगुप्तं निधापयेत् । ततोऽस्मै मात्रां प्रयच्छेत् पानाय, तेन साधु विरिच्यते । सम्यगपहृतदोषस्य चानुपूर्व्वी यथोक्ता । ततश्चैनमनुवासयेत् तु काले ।

एतेनैव च पाकविधिना सर्षपातसीकरञ्जकोषातकीस्नेहान् उपकल्प्य पाययेत् सर्व्वविशेषानवेक्षमाणस्तेनागदो भवति । एवं द्वयानां श्लेष्मपुरीषसम्भवानां क्रिमीणां समुत्थानसंस्थान-स्थानवर्णनामप्रभावचिकित्सितविशेषा व्याख्याताः सामान्यतः । विशेषतस्तु खल्वल्पमात्रमास्थापनानुवासनानुलोमहरणभूयिष्ठं तेष्वौषधेषु क्रिमीणां पुरीषसम्भवानां चिकित्सितं कार्य्यम् ।

कटाहे समासिच्य पचेत् । ततस्त्ववतारणार्थं स्नेहपाकसिद्धिविज्ञानमाह—विरमतीत्यादि । संवर्त्तते वर्त्तितो वर्त्तिः स्यात् । सम्यगपहृतदोषस्य तत्तैल-पानेन विरेकानन्तरं विरेचनोक्तानुपूर्व्वी विहाराहारयोरिति । ततो विरेकात् परमनुवासनस्य कालेऽनुवासयेत् ।

तिलतैलकल्पेन सर्षपादिस्नेहानतिदिशति—एतेनैवेत्यादि । तेनागदो निष्क्रिमिरोगो भवतीत्यर्थः । एवमित्यादि । समुत्थानं निदानं संस्थानमाकृतिः चिकित्सितं निदानोक्तानां भावानामनुपसेवनं प्रकृतिविघातश्च अपकर्ष-णादि । विशेषतस्त्वित्यादि । अल्पमात्रमित्यादि तेषूक्तेषु औषधेषु मध्ये

यावन्मात्रं यद्द्रव्यं तैलसंस्कारकम्, तदानुरूप्येण वर्णादिसम्पत्तिरित्यर्थः । संवर्त्तते इति

* अवतीर्णमिति चक्रः ।

मात्राधिकं पुनः शिरोविरेचनवमनोपशमनभूयिष्ठं तेष्वौषधेषु क्रिमीणां श्लेष्मजानां चिकित्सितं कार्य्यम्। इत्येष क्रिमिघ्नो भेषजविधिरनुव्याख्यातो भवति। तमनुतिष्ठता यथास्वं हेतु-वर्ज्जने प्रयतितव्यम्। यथोद्देशमेवमिदं क्रिमिकोष्ठचिकित्सितं यथावदनुव्याख्यातं भवतीति॥ १५॥

भवन्ति चात्र।

अपकर्षणमेवादौ क्रिमीणां भेषजं भवेत्।
ततो विघातः प्रकृतेर्निदानस्य च वर्ज्जनम्॥
एष एव विकाराणां सर्व्वेषामपि निग्रहे।
विधिर्दृष्टस्त्रिधा योऽयं क्रिमीनुद्दिश्य कीर्त्तितः॥
संशोधनं संशमनं निदानस्य च वर्ज्जनम्।
एतावद्भिषजा कार्य्यं रोगे रोगे यथाविधि॥ १६॥

यदौषधमास्थापनानुवासनानुलोमहरणभूयिष्ठं तदौषधमल्पमात्रमल्पपरिमाणं पुरीषजानां क्रिमीणां चिकित्सितं कार्य्यम्। तेषूक्तेषु औषधेषु मध्ये यदौषधं शिरोविरेचनवमनोपशमनभूयिष्ठं तदौषधम् अधिकमात्रमधिकमानं श्लेष्मजानां क्रिमीणां चिकित्सितं कार्य्यमिति पुरीषजश्लेष्मजयोश्चिकित्सि-तस्य विशेषः॥ १५॥

गङ्गाधरः—सूत्रार्थं व्यवसायाय श्लोकेनाह—भवन्तीत्यादि। अपकर्षण-मित्यादि। सर्व्वरोगाणामिदं चिकित्सितमतिदिशति। एष एवेत्यादि। भिषजां सङ्क्षेपेण कर्म्माण्याह—संशोधनमित्यादि। संशोधनमपकर्षणमेव व्याख्यातं चतुर्व्विधम्। संशमनन्तु, न शोधयति यद्दोषान् समान् नोदीरय-त्यपि। समीकरोति च क्रुद्धांस्तत् संशमनमुच्यते॥ स च प्रकृतिविघात एव। ननु संशोधनसंशमनाभ्यामेव रोगजयो भवति, व्याधीनामपुन-र्भवश्च कथं स्यादित्यत आह—निदानस्य च वर्ज्जनमिति। निदानवर्ज्जनस्य प्रयोजनद्वयं व्याधौ सति क्रियालाघवं विनष्टे चापुनर्भव इति॥ १६॥

वर्त्तिवत् भवति। अल्पमात्रमिति आस्थापनानुलोमहरणद्रव्यातिरिक्तं भेषजमल्पमात्रं कर्त्तव्यम्

तत्र श्लोकौ ।

व्याधितौ पुरुषौ ज्ञाज्ञौ भिषजौ सप्रयोजनौ ।
विंशतिः क्रिमयस्तेषां हेत्वादिः सप्तको गणः ॥
उक्तो व्याधितरूपीये विमाने परमर्षिणा ।
शिष्यसम्बोधनार्थाय व्याधिप्रशमनाय च ॥ १७ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते विमानस्थाने व्याधितरूपीयं विमानं नाम सप्तमोऽध्यायः ॥ ७ ॥

गङ्गाधरः—अध्यायार्थमुपसंहरति—तत्रेत्यादि । सप्तको गण इति सप्त योगाः ॥ १७ ॥

अध्यायं समापयति । अग्नीत्यादि ।

इति श्रीगङ्गाधरकविरत्नकविराजविरचिते चरकजल्पकल्पतरौ तृतीय-
स्कन्धे विमानस्थानजल्पे व्याधितरूपीयविमान-
जल्पाख्या सप्तमी शाखा ॥ ७ ॥

इत्यर्थः । एतदेवापकर्षणादित्रयं रोगान्तरे शब्दान्तरेणोच्यत इत्याह—अयमेवेत्यादि । अत्र संशोधनमपहरणम्, संशमनं विघातः । निदानवर्जनन्तु शब्देनापि समानम् ॥ १४—१७ ॥

इति चरकचतुरानन-श्रीमच्चक्रपाणिदत्तविरचितायाम् आयुर्वेददीपिकायां विमानस्थान-
व्याख्यायां व्याधितरूपीयविमानं नाम सप्तमोऽध्यायः ॥ ७ ॥

## अष्टमोऽध्यायः।

**अथातो रोगभिषग्जितीयं विमानं व्याख्यास्यामः, इतिह स्माह भगवानात्रेयः ॥ १ ॥**

**बुद्धिमानात्मनः कार्य्यगुरुलाघवे कर्म्मफलमनुबन्धं देशकालौ च विदित्वा युक्तिदर्शनाच्च भिषग्बुभूषुः शास्त्रमेवादितः**

गङ्गाधरः— अथ व्याधिविज्ञाने रसादिविमानानां दोषादिमानज्ञानहेतुत्वेऽपि विना भिषग्भावं न तैर्व्याधिविज्ञानं भवतीत्यतः शेषं रोगभिषग्जितीयं विमानमाह—अथात इत्यादि। रोगाणां भिषग्जितं भेषजं युक्तियुक्तं चतुष्पादमाह स्म। तत्र भिषक् प्रधानतया उक्त इत्यत एवात्र भिषग्जितशब्देन भिषगेवोच्यते तदधिकृत्य कृतं विमानमिति ॥ १ ॥

गङ्गाधरः—बुद्धिमानित्यादि। बुद्धिमान पुरुषः आत्मनः स्वस्य कार्य्याणां त्रिविधैषणीयानां गुरुलाघवे बह्वायासाल्पायासाभ्यां क्रियानिष्पत्तौ वृत्तिकरं लोकानां यद्यत् कर्म्म राजसेवादिकमस्ति तस्य तस्य कर्म्मणः फलनिष्पत्तिः किं बह्वायासतः किमल्पायासतः सिध्यतीति कार्य्यगुरुलाघवे विदित्वा तस्य च कर्म्मणः फलं किं धर्म्ममात्रं किमर्थमात्रं किं काममात्रं किं मुक्तिमात्रं किं द्विफलं त्रिफलं चतुःफलं वा तद्विदित्वा अनुबन्धं तस्य कर्म्मणः फलस्य उत्तरकालं कियन्तं सम्बन्धस्तञ्च विदित्वा देशकालौ च कस्मिन् देशे कस्मिन्

चक्रपाणिः—पूर्व्वाध्याये व्याधितरूपभ्रान्तिज्ञानमुक्तम्, तच्च बुद्धिदोषाद् भवति, तेन विशुद्धबुद्ध्युत्पादहेतूनामध्ययनाध्यापनतद्विद्यसम्भाषाणां रोगभिषग्जितीयोऽभिधीयते। रोगभिषग्जितं चिकित्सितमधिकृत्य कृतोऽध्यायो रोगभिषग्जितीयः। रोगचिकित्साकारित्वञ्चास्य, चिकित्सोपयुक्तस्य सम्यग्ज्ञानसाधनसाध्यस्याध्ययनविध्यादेः तथा करणकारणादेश्चाभिधानाद् ज्ञेयम् ॥ १ ॥

चक्रपाणिः— इहाध्ययनविध्यादिषु कर्त्तव्येषु यादृक् शास्त्रमध्येयम्, तदेवायुर्व्वेदार्थिपुरुषमुपदर्श्य दर्शयन्नाह—बुद्धिमानित्यादि। कार्य्यं कर्त्तव्यम्, तस्य गौरवञ्च बहुप्रयाससाध्यत्वेन लाघवं वा स्वल्पप्रयाससाध्यत्वेनेति कार्य्यगुरुलाघवम्। कर्म्मफलमिति कार्य्यफलम्, एतच्च तादात्विकं फलमीप्सितम्। अनुबन्धमिति कार्य्यस्यैवायतीयं फलम्। देशकालाविति कर्त्तव्यकार्य्यानुगुणौ देशकालावित्यर्थः। एतत् सर्व्वं विदित्वा। युक्तिदर्शनादुपपत्तिदर्शनात्। यदि भिषग्-

परीक्षेत। त्रिविधानि हि शास्त्राणि भिषजां प्रचरन्ति लोकेषु। तत्र यन्मन्येत महद्यशस्विधीरपुरुषासेवितमर्थबहुलमाप्तजन-पूजितं त्रिविधशिष्यबुद्धिहितमपगतपुनरुक्तदोषमार्षं सुप्रणीत-सूत्रभाष्यसंग्रहक्रमं स्वाधारमनवपतितशब्दमकष्टशब्दम्

काले च वृत्तिकरं किं कर्म्म युक्तं किं कर्म्म न युक्तं पूजितमपूजितं वा तद्विदित्वा युक्तिदर्शनात् यद्वृत्तेस्तद्देशकालोचितत्वेन श्रेष्ठतमत्वं मन्यते तद् दृष्ट्वा भिषग्-बुभूषुर्भिषग्भवितुमिच्छुः सन्नादितः शास्त्रमायुर्व्वेदीयेषु बहुषु तन्त्रेषु मध्ये किं तन्त्रमध्येतव्यं मयेति परीक्षेत। नन्वायुर्व्वेद एक एव तस्य कस्मात् हेतोः परीक्षा कार्य्येत्यत आह—त्रिविधानि हीत्यादि। भिषजां शास्त्राणि आयु-र्व्वेदीयानि। तत्र तेषु तन्त्रेषु मध्ये यत् तन्त्रं महदादिकं मन्येत तच्छास्त्रं तन्त्र-मभिप्रपद्येतेत्यर्थः। यशस्विभिर्धीरैः पुरुषैरासेवितमित्यनेन तत्तन्त्रसेविनां तत्पुरुषवद्यशस्वित्वादयः ख्यापिताः। अर्थबहुलमित्यनेनाल्पकालेनाध्येयत्वेन सम्पूर्णविद्याजनकत्वं ख्यापितम्। आप्तजनपूजितमित्यनेन निर्द्दोषं सिद्धान्त-वचनशालि च तत् तन्त्रमासेवितवतः श्रुतपर्य्यवदातता स्यादिति ख्यापितम्। त्रिविधशिष्यबुद्धिहितमित्यनेन सर्व्वजनाध्येयत्वमुक्तम्। अपगतपुनरुक्तदोष-मित्यनेनाध्ययने पुनरुक्तार्थाध्ययनाय यः श्रमस्तस्य वृथात्वं तस्याभावः ख्यापितः। आर्षमित्यनेनाध्ययनेऽपि धर्म्मादिफलं ख्यापितम्। सुप्रणीतं सुष्ठु रचितं सूत्रस्य भाष्यसंग्रहस्य च क्रमो यत्र तत् तथा। सूत्रं सङ्क्षेपेण

भवितुमिच्छुः स्यात, तदा शास्त्रं तावदादितः परीक्षेत। एवं मन्यते—य आयुर्व्वेदाध्ययन-लक्षणे कार्य्ये स्वशक्त्यपेक्षया गौरवं मन्यते, स न वर्त्तते, यश्चायुर्व्वेदफलेनारोग्यादिना अर्थी न भवति, स च, तथा यश्चानुपादेयायुर्व्वेदज्ञाने देशे स्थितः, स च, तथा यस्य च वपुषो वार्द्धक्य-लक्षणः कालः, स चायुर्व्वेदाध्ययनान्तगमनाशक्तत्वादेव यथोक्तानुपपत्तिदर्शनाद् भिषग्भवितुं नेच्छति। अतो न तान् प्रति आयुर्व्वेदशास्त्रपरीक्षा अप्युपदिशामः। यस्तु यथोक्तविपरीत-धर्म्मयोगी, स चायुर्व्वेदाध्ययनोपादानाद् भिषग्बुभूषुः शास्त्रं परीक्षेत। त्रिविधानीत्यगुणवन्ति। सुमहद् यशस्वि च धीरपुरुषासेवितञ्च। किंवा, सुमहद्यशस्विधीरपुरुषैरासेवितमिति विग्रहः। आप्तजनपूजितमिति बहुविधैराप्तैर्यथार्हमनुमतम्। उत्कृष्टमध्याल्पबुद्धयः त्रिविधाः शिष्याः। अनपगतपुनरुक्तमिति कर्त्तव्ये यद् दोषपाठं करोति, तेनाधिकरणवशप्राप्तं यत् करोति, तेनापि पुनरुक्तमदोषं भवति। वचनं हि—"अधिकरणवशाद् दीर्घाद् गुणदोषप्राप्तितोऽर्थसम्बन्धात्। स्तुत्यर्थं संशयतः शिष्यधियाप्यतिवृद्धग्रर्थञ्च। अल्पतोऽन्तरितत्वात् विशेषणेष्वपि च तन्त्रकृन्निरतु। यत्-

पुष्कलाभिधानं क्रमागतार्थमर्थतत्त्वविनिश्चयप्रधानं संगतार्थमसङ्कुलप्रकरणमाशुप्रबोधकं लक्षणवच्चोदाहरणवच्च तदभिप्रपद्येत शास्त्रम्। शास्त्रं ह्येवंविधममल इवादित्यस्तमो विधूय प्रकाशयति सर्व्वम्॥ २॥

तत्तदर्थानां ग्रन्थनं येन तत्। भाष्यं तेन सूत्रेण यत् अभिधेयं मुक्तकण्ठेन विस्तरेण पुनस्तद्वचनं भाष्यम्। तदपि संक्षेपेणातिविस्तरेण च कर्त्तुं सम्भवति। तत्र संग्रहेण यत् तद्भाष्यं भाष्यसंग्रहः तयोः क्रमः पूर्व्वं सूत्र ततः सङ्क्षेपेण भाष्यं न त्वतिविस्तरेण सुप्रणीतं यत्र तथाभूतं तन्त्रं सूत्रार्थस्यान्यथा व्याख्यानसामर्थ्यं व्याख्यातुः ख्यापितं येन फलापलापः स्यात्। स्वाधारं सुष्ठ्वधिकरणम् अधिकरणं तत्तदर्थाधिकारः परिच्छेद इत्यर्थः। एतेनान्योन्यमिश्रत्वाद्दुर्ब्बोधत्वं नास्तीति ख्यापितम्। अनवपतितशब्दमित्यनेनाधुनिकत्वाशङ्कानिरासः। अकष्टशब्दं कष्टशब्दं हि श्रुतकटूच्चारणाभ्यासकष्टम्। तदभावे तु बहुप्रकारशब्दरूपं श्रुतसुखत्वाभ्याससुखत्वार्थं भवति। तत्र चान्यादृशशब्दरूपत्ववारणायाह—पुष्कलाभिधानमिति। पुष्कलेन प्रायेण वर्णावृत्त्याभिधानम्। क्रमागतार्थं क्रमेण यदर्थादुत्तरं यदर्थं उद्दिष्टस्तदर्थादुत्तरमागतः प्राप्तस्तदर्थो यत्र तत् तथा। एतेन प्रकरणशृङ्खलया धारणसुखत्वं सूचितम्। अर्थतत्त्वविनिश्चयप्रधानमित्यनेन निःसन्दिग्धार्थतत्त्वविद्याजनकत्वं ख्यापितम्। सङ्गतार्थं पूर्व्वाध्यायव्याख्याने दर्शितषड्विधसङ्गत्या प्रणीतार्थमसङ्कुलप्रकरणम् अमिश्रितप्रकरणम्, एतेनाधिकारसौष्ठवेऽपि तत्र प्रकरणपार्थक्यं येनाप्यसन्देहार्थः स्यात्। आशुप्रबोधकं श्रुतमात्रमर्थबोधजनकशब्दवत्। लक्षणवच्चोदाहरणवच्च इत्यनेनाध्ययनसुगमत्वमर्थतत्त्वावबोधे ख्यापितम्। तथाविधतन्त्रं कुतो हेतोः प्रपद्येतेत्यत आह—शास्त्रं ह्येवमित्यादि॥ २॥

तन्त्रे स्यात् पुनरुक्तम् नेष्यते तद् विभाष्य विवरणम्।" स्वाधारमिति शोभनाभिधेयम्। अनवपतितमित्यग्राम्यशब्दम्। अकष्टशब्दमिति अकृच्छ्रोच्चार्य्यशब्दम्, किंवा अप्रसिद्धाभिधेयशब्दम्। पुष्कलाभिधानमिति सम्यगर्थसमर्पकवाक्यम्। क्रमागतार्थमिति पारिपाट्यागतार्थम्। सङ्गतार्थमिति प्रतिपादितार्थम्। असङ्कुलप्रकरणमिति मिश्रीभूतप्रकरणम्। लक्षणवदिति आयुर्वेदप्रधानार्थहेतुलिङ्गार्थासाधारणधर्म्मकथनवत्। किंवा प्रशस्तशास्त्रलक्षणवत्; उदाहरणवदिति दृष्टान्तवत्॥ २॥

ततोऽनन्तरमाचार्य्यं परीक्षेत । तद् यथा—पर्य्यवदातश्रुतं परिदृष्टकर्म्माणं दक्षं दक्षिणं शुचिं जितहस्तमुपकरणवन्तं सर्व्वेन्द्रियोपपन्नं प्रकृतिज्ञं प्रतिपत्तिज्ञमुपस्कृतविद्यम् * अनहङ्कृतम् अनसूयकमकोपनं क्लेशक्षमं शिष्यवत्सलमध्यापकं

गङ्गाधरः—तन्त्रपरीक्षानन्तरं तन्त्राध्ययननिमित्तमाचार्य्यपरीक्षणमाह—ततोऽनन्तरमित्यादि । पर्य्यवदातश्रुतमित्यादिकरूपेणाचार्य्यं जानीयात् । पर्य्यवदातश्रुतत्वादिका हि गुणा आयुर्व्वेदाचार्य्याभिप्रायेणोक्ताः प्रस्तुतत्वात्, न तु सर्व्ववेदाचार्य्याभिप्रायेण । यः पूर्व्वं गुरुतोऽधीतायुर्व्वेदीये तत्तन्त्रे पर्य्यवदातः शास्त्रार्थतत्त्वनिश्चये सन्देहशून्यः । परिदृष्टकर्म्माणं सर्व्वतोभावेन गुरोः कृतचिकित्साकर्म्म स्वकृतकर्म्म च फलाफलतो दृष्टवन्तम् । दक्षं वमनादिसर्व्वक्रियासु कुशलम् । दक्षिणमनुकूलस्वभावम् । शुचिम् । जितहस्तं हस्तेन यत् कर्म्म चिकित्सार्थं करोति तत् कर्म्म झटिति सिध्यतीति तं जितहस्तम् । उपकरणवन्तं वस्तिनेत्रशस्त्राद्युपकरणवन्तम् । सर्व्वेन्द्रियोपपन्नं न तु हीनेन्द्रियम् हीनेन्द्रियत्वे हि न परीक्षोपपद्यते न वाध्यापनमुपयुज्यते । प्रकृतिज्ञमिति व्याधितानां व्याधिप्रतिकारे स्वस्थानां वा स्वास्थ्यरक्षणे पुंसां प्रकृतिज्ञानमन्तरेण न क्रियोपयोगः सम्पद्यते । प्रकृतिर्हि स्वास्थ्ये पुंसां स्वभावः सत्त्वशरीरयोः सात्त्विकादिरूपा समवातपित्तकफात्मकत्वरूपा च । प्रतिपत्तिज्ञमिति यस्य स्वस्थस्यातुरस्य वा यादृशी प्रतिपत्तिः क्रियादिषु मन्त्रसिराहारविहारयोः तां हि न ज्ञात्वा चिकित्सितुं नोपयुज्यते पुमान् । उपस्कृतविद्यं तदायुर्व्वेदीयतन्त्रविद्या येन तदर्थपर्य्यवदातत्वेनोपार्जिता पुनरुपस्कृता शास्त्रान्तरसमूहाध्ययनेन संहतीकृता वा भूषणीकृता वा दृढ़तायां पुनःपुनः प्रतियतिता वा तर्कान्वितीकृता वा तत्राचार्य्यतयैवोरीकुर्य्यात् इत्युपस्कृतविद्यमाचार्य्यं विद्यात् । अनुपस्कृतविद्यमिति पाठे तु अविकृतीभूता यस्य विद्या तमाचार्य्यं विद्यात् । अनहंकृतमित्यमत्सरं मात्सर्य्यन्तु लोके गर्हितं शिष्याणामध्यापनेऽपि तुच्छत्वसम्भवात् । अनसूयकं परगुणेषु दोषारोपणेन

चक्रपाणिः—अध्येतव्यं शास्त्रं परीक्ष्य यस्मात् तत् शास्त्रमध्येतव्यम्, तस्याचार्य्यस्य परीक्षामाह—तत इत्यादि । दक्षमिति अवामबुद्धिम् उपकरणवन्तमित्यनेनानुपकरणे गुरौ चिकित्सा-

* अनुपस्कृतमिति चक्रः ।

ज्ञापनसमर्थश्च। इत्येवंगुणो ह्याचार्य्यः सुक्षेत्रमार्त्तवो मेघ इव शस्यगुणैराशु सुशिष्यं वैद्यगुणैः सम्पादयति। तमुपसृत्यारिराधयिषुरुपचरेदग्निवच्च देववच्च राजवच्च पितृवच्च भर्त्तृवच्चाप्रमत्तः। ततस्तत्प्रसादात् कृत्स्नं शास्त्रमवगम्य

सततशीलनं यस्य तं नाचार्य्यं विद्यात्। शिष्याणां गुणेष्वपि दोषारोपणसम्भवे तत्त्वार्थप्रवचनाकरणे तत्प्रवृत्तिसम्भवात्। अकोपनमिति कोपशीलस्य शिष्याणामध्यापने दुर्ब्बोधवाक्यप्रवचनार्थबहुवादप्रतिवादे कोपसम्भवे तदर्थप्रवचनाभावात्। क्लेशक्षमं शिष्याणामध्यापनं हि न क्लेशं विना भवतीति क्लेशक्षममाचार्य्यं विद्यात्। शिष्यवत्सलं शिष्येषु विना वात्सल्यं न गुरोर्विद्यातत्त्वं लभ्यते शिष्यैरिति। अध्यापकं प्रागध्यापककल्पं पश्चात् तु शिष्याणामध्यापनेनाध्यापकम्, न हि पूर्व्वमेवाध्यापकता सम्भवति। ज्ञापनसमर्थं शिष्याणां तदर्थज्ञापनेऽशेषविशेषेण व्याख्यानसामर्थ्ययुक्तम्। नन्वेवंविधैः आचार्य्यैः किं प्रयोजनमन्यादृशे चाचार्य्ये को दोष इत्यत आह—एवंगुणो ह्याचार्य्य इत्यादि। यथार्त्तवो मेघः सुक्षेत्रं शस्यगुणैः सम्पादयति तथा तथाविध आचार्य्यः शिष्यमाशु वैद्यगुणैः पर्य्यवदातश्रुततादिभिः सम्पादयति।

ननु तथाविधत्वेनाचार्य्यं परीक्ष्य किं कुर्य्यादित्यत आह—तमित्यादि। तमुपसृत्य उपगम्य तमाचार्य्यमाराधयितुमिच्छुराराद्धुमिच्छुरित्यर्थः। स्वार्थे णिच् छान्दसत्वात्। अग्निवदित्यनेन नित्यापेक्षित्वं सूचितम्। देववच्चेत्यनेन पूज्यतमत्वं सूचितम्। राजवच्चेत्यनेन शासितृत्वं ख्यापितम्, तच्छासने सभयं तिष्ठेदिति सूचितम्। पितृवच्चेत्यनेन वात्सल्यात् पितृवदपरिहार्य्यत्वं ख्यापितम्। भर्त्तृवच्चेत्यनेन यथा प्रतिपालकस्याधीनत्वं तद्वदधीनत्वमुररीकुर्य्यादित्यर्थः ख्यापितः। अप्रमत्तः प्रमादशून्यः सन्, न तु प्रमादेनान्यथा तमुपाचरेत्। तथा तदुपचरणेन किं स्यादित्यत आह—तत इत्यादि। तत्प्रसादात् तस्य गुरोः प्रसन्नत्वात्। कृत्स्नं निखिलं तत् शास्त्रमधिगम्येत्यनेन कृत्स्नतन्त्राधिगममात्रलाभः स्यादिति ख्यापितम्।

दृष्टयभावात् कर्म्मदर्शनं न भवति। अनुपस्कृतविद्यमिति शास्त्रान्तरज्ञानेन नास्त्येवोपस्कृता विद्या यस्य स तथा। यश्चायुर्व्वेदज्ञः सन् शास्त्रान्तरेणापि संस्कृतो भवति, स तु नितरामुपादेयः। आर्त्तव इति यथोचितकालभवः। अग्न्यादिवद्बहुदृष्टान्तदर्शनेन, येन येन भावेनाग्न्यादयः सेव्यन्ते,

शास्त्रस्य दृढ़तायामभिधानस्य सौष्ठवेऽर्थविज्ञाने वचनशक्तौ च भूयोभूयः प्रयतेत सम्यक् ॥ ३ ॥

तत्रोपायाननुव्याख्यास्यामः। अध्ययनमध्यापनं तद्विद्यसम्भाषेत्युपायाः ॥ ४ ॥

तत्रायमध्ययनविधिः—कल्यकृतक्षणः * प्रातरुत्थायोपव्युषं वा कृत्वाऽवश्यकमुपस्पृश्योदकं देवर्षिगोब्राह्मणगुरुसिद्धवृद्धाचार्य्येभ्यो नमस्कृत्य समे शुचौ देशे सुखोपविष्टो मनःपुरःसरीभिर्वाग्भिः सूत्रमनुपरिक्रामन् पुनःपुनरावर्त्तयेत्। बुद्ध्या सम्यगनुप्रविश्य

ननु कृत्स्नं तन्त्रमधिगम्य किं कुर्यादित्यत आह—तत्तन्त्रस्य दृढ़तायाम् अच्युतधारणे विषये अभिधानस्य प्रवचनस्य सौष्ठवे सौन्दर्य्ये अर्थविज्ञाने अध्ययनकाले संशयितार्थस्य निःसंशयविज्ञाने निःसंशयार्थस्य स्थिरतायाञ्च वचनशक्तौ अनर्गलवचने च ॥ ३ ॥

गङ्गाधरः—ननु कथं प्रयतेत इत्यत आह—तत्रोपायानित्यादि। तत्र भूयोभूयोऽधीतशास्त्रप्रयत्ने। उपायान् विवृणोति—अध्ययनमित्यादि ॥ ४ ॥

गङ्गाधरः—नन्वध्ययनादयस्तावन्तः कीदृशा इत्यतोऽध्ययनादींस्त्रीन् क्रमेण विवृणोति—तत्रायमित्यादि। कल्यः प्रातःकालस्तत्र कृतः नियतरूपः क्षणो येन स कल्यकृतक्षणः। प्रातररुणोदयकालमुपव्युषं तदुत्तरकालं वा उत्थाय आवश्यकं मलमूत्रोत्सर्गमुखधौतदन्तधावनादिकं कर्म्म कृत्वा उदकम् उपस्पृश्य स्नात्वा अशक्तौ वस्त्रं त्यक्त्वा पूतो भूत्वा चोदकेनाचम्य वा आचमनविधिः सद्वृत्तेपूक्तः। देवादिभ्यो नमस्कृत्य समे शुचौ देशे अनीचोच्चदेशे शुचिरूपे सुखेन उपविष्टो मनःपुरःसरीभिर्मनोयोगपूर्व्विकाभिः सूत्रमनुपरिक्रामन् सूत्रानुपूर्व्वीकक्रमेण पुनःपुनरावर्त्तयेत्। आवर्त्तनमभ्यासः शीलनं सततक्रियेति आत्रेयभद्रकाप्यीये प्रोक्तम्। मनःपुरःसरीभिरित्यनेन मनोयोगं विनावर्त्तनेन

तथा तथा गुहः सेव्यत इति दर्शयति। दृढ़तायामिति शास्त्रग्रहणस्य स्थैर्य्ये। अभिधानस्येति शास्त्राभिधानस्य। वचनशक्तौ अर्थकीर्त्तनसामर्थ्ये ॥ ३ ॥

चक्रपाणिः—तत्रेति शास्त्रदृढ़तादौ, तद्विद्यसम्भाषा तच्छास्त्राध्यायिना सह वादग्राहिका। कल्यो नीरोगः। कृतक्षण इत्यनन्यव्यापारत्वेनाध्ययनाय कृतकालपरिग्रहः। प्रातर्वा उत्थाय,

* कल्यः कृतक्षण इति चक्रसम्मतः पाठः।

अर्थतत्त्वं स्वदोषपरिहाराय परदोषप्रमाणार्थम्। एवं मध्यन्दिनेऽपराह्णे रात्रौ च शश्वदपरिहापयन्नध्ययनमभ्यस्येत्। इत्यध्ययनविधिः ॥ ५ ॥

अथाध्यापनविधिः—अध्यापने कृतबुद्धिराचार्य्यः शिष्यमेव आदितः परीक्षेत। तद्‌ यथा—प्रशान्तमार्य्यप्रकृतिकमक्षुद्रकर्म्माणम् ऋजुचक्षुर्मुखनासावंशं तनुरक्तविशदजिह्वमविकृतदन्तौष्ठम्

स्थिरतया धारणं न स्यादित्युक्तम्। ननु किं वर्णावलिवाक्योच्चारणत एवावर्त्तयेदुत किमन्यथेति? अत आह—बुद्धेरित्यादि। अर्थतत्त्वे बुद्ध्यानुप्रवेशपूर्व्वकावर्त्तनफलमाह—स्वदोषेत्यादि। ननु केवलं प्राह्णे एवाध्ययनं कुर्य्यात् न चात ऊर्द्ध्वमित्यत आह—एवं मध्यन्दिने इत्यादि। एवमनेन प्रकारेण मध्यन्दिनादौ चाध्ययनं शश्वन्नित्यमभ्यस्येत्। ननु तत् किं न प्राह्णे कदाचिदभ्यस्येदित्यत आह—अपरिहापयन्नध्ययनमिति। प्रातरादिकाले यदध्ययनमुक्तं तदध्ययनमपरिहापयन् न परित्यजन्। एतेन तत्कालमध्ययनं सर्व्वदैव, मध्यन्दिनादौ तु कदाचिदनध्ययनेऽपि न क्षतिरिति ख्यापितम् ॥ ५ ॥

गङ्गाधरः—अथ द्वितीयमुपायमध्यापनं विवृणोति—अथेत्यादि। अध्यापने इति। शिष्यचिह्नमाह—तद्‌ यथेत्यादि। प्रशान्तमचञ्चलरूपम्। आर्य्यप्रकृतिं ब्राह्मणक्षत्रियवैश्ययोनिं षड्‌जातिम्। अक्षुद्रकर्म्माणं नीचकर्म्माकर्त्तारम्। ऋजवः सरलाश्चक्षुषी च मुखञ्च नासावंशश्च ते यस्य तं तथा। तनुरस्थूला रक्तवर्णा च विशदा चापिच्छिला जिह्वा यस्य तं तथा। अविकृता यथावज्जाता दन्ता

उपव्युषं वा उत्थायेति योजना। उपव्युषमिति किञ्चिच्छेषायां रात्रौ। मनःपुरःसरीभिरिति एकाग्रमनःप्रणीताभिः। स्वदोषपरिहारपरदोषप्रमाणार्थमिति स्वकीयाध्ययनदोषपरिहारार्थं परकीयाध्ययनदोषप्रमाणार्थं परकीयाध्ययनदोषज्ञानार्थमित्यर्थः। प्रमीयतेऽनेनेति प्रमाणं ज्ञानमात्रमीप्सितम्। सम्यग् बुद्ध्वार्थतत्त्वं बुद्ध्वा चाधीयानो निर्द्दोषाध्ययनो भवति, सम्यगध्ययनज्ञानाच्च परस्य सदोषमध्ययनं प्रतिपद्यते। इत्यध्ययनविधिरिति पूर्व्वप्रतिज्ञाताध्ययनविधेरुपसंहरणम्। यथोक्तेन विधिनाध्ययनं क्रियमाणं सुसंगृहीतं भवति। दृष्टादृष्टसम्पत्त्याध्ययनकालवर्ज्जनम्, वेदाध्ययने निषिद्धमेवात्रापि तज्ज्ञेयम्, इति न विशेषेणोक्तम् ॥ ४।५ ॥

चक्रपाणिः—इह शिष्यगुणेषु ऋजुचक्षुर्मुखनासावंशत्वादयो गुणाः सहजलक्षणत्वेनोपादेयाः।

अमिन्मिणम् धृतिमन्तमलङ्कृतं मेधाविनं वितर्कस्मृतिसम्पन्नम् उदारसत्त्वं तद्विद्यकुलजमथवा तद्विद्यवृत्तं तत्त्वाभिनिवेशिनम् अव्यङ्गमव्यापन्नेन्द्रियं निभृतमनुद्धतमर्थतत्त्वभावकम् अव्यसनिनमकोपनम् शीलशौचाचारानुरागदाक्ष्यदाक्षिण्योपपन्नम् अध्ययनाभिकाममर्थविज्ञाने कर्म्मदर्शने चानन्यकार्य्यमलुब्धम् अनलसं सर्व्वभूतहितैषिणमाचार्य्यसर्व्वानुशिष्टिप्रतिपत्तिकरम् अनुरक्तम् एवंगुणसमुदितमध्याप्यमाहुः ॥ ६ ॥

ओष्ठौ च यस्य तं तथा। अमिन्मिणं सानुनासिकवाक्यवचनशीलरहितम्। धृतिमन्तं कार्य्ये मनोनियमात्मिका बुद्धिर्यस्य तम्। अलङ्कृतं भूषायुक्तम्। मेधाविनं धारणावती बुद्धिर्यस्य तम्। वितर्कस्मृतिसम्पन्नं ऊहापोहाभ्यां स्मृत्या च सम्पन्नम्। उदारसत्त्वं मनस औदार्य्यं महत्त्वं यस्य तम्। तद्विद्यकुलजं तदायुर्व्वेदीयतन्त्रव्यवसायिनां कुले जातम्। अथवा तद्विद्यवृत्तं तस्मिन् तन्त्रेऽधीते जायते या विद्या सा विद्या यस्य स तद्विद्यस्तेन वृत्तम् उपार्जितार्थेनावर्त्तत यस्तम्, तत्त्वाभिनिवेशिनं यथार्थेऽभिनिवेशो मृषार्थे त्वन्यथात्वं यस्य तं तथा। अव्यङ्गम् अङ्गेनाहीनम्। अव्यापन्नेन्द्रियम् इन्द्रियव्यापद्रहितं, सुष्ठु सर्व्वेन्द्रियमित्यर्थः। निभृतं गुप्तरूपम्। अनुद्धतमप्रगल्भरूपम्। अर्थतत्त्वभावकमर्थतत्त्वस्य स्वभावतश्चिन्ताशीलमव्यसनिनं द्यूतादिव्यवहाररहितम्। अकोपनम्। शीलं सच्चरितं दाक्षिण्यं सर्व्वत्रानुकूलशीलता। अथविज्ञाने अध्याप्यतन्त्रार्थविज्ञाने अन्यकार्य्यरहितम्, कर्म्मदर्शने चिकित्साक्रियादर्शनेऽन्यकार्य्यरहितञ्च। अलुब्धं भोजनादिष लोभहीनम् आचार्य्यसर्व्वानुशिष्टिप्रतिपत्तिकरम् आचार्य्येण यद्यदनुशिष्यते तत्तत् सर्व्वमनुशासनं प्रतिपन्नं करोति यस्तमित्यर्थः। अनुरक्तमाचार्य्यानुरक्तम्। एवंविधं शिष्यं परीक्षेत। नन्वेतद्गुणान्यतमगुणहीनं किं नाध्यापयेदित्यत आह—एवंगुणसमुदितमिति। अन्यतमगुणाभावे हि न

अतो विपरीतलक्षणो हि जड़ो भवति। तद्विद्यवृत्तमित्यायुर्व्वेदज्ञाचारम्। निभृतमिति विनीतम्। अनुद्धतमित्यनहङ्कृतम्। अनुरागशब्देनाध्ययनानुराग उच्यते। अनुरक्तमित्यनेन च गुरावनुरक्तत्वमुच्यते। दाक्ष्यं दर्शयित्वाप्यनलसमिति यत् करोति, तेन दाक्ष्यादारब्धेऽपि कार्य्ये बहुप्रयाससाध्येऽनलसमित्याह। अनुशिष्टिप्रतिकरमित्याज्ञाकरम् ॥ ६ ॥

एवंविधमध्ययनार्थिनमुपस्थितमारिराधयिषुमाचार्य्यश्चानुभाषेत। अथ उदगयने शुक्लपक्षे प्रशस्तेऽहनि तिष्यहस्तश्रवणाश्वयुजामन्यतमेन नक्षत्रेण योगमुपगते भगवति शशिनि कल्याणे कल्याणे च करणे मैत्रे मुहूर्त्ते मुण्डः कृतोपवासः स्नातः कषायवस्त्रसंवीतः सन् समिधोऽग्निमाज्यमुपलेपनमुदकुम्भांश्च सुगन्धिहस्तो माल्यदामदीपहिरण्यरजतमणिमुक्ताविद्रुमक्षौमपरिधींश्च कुशलाजसर्षपाक्षतांश्च शुक्लाश्च सुमनसो ग्रथिताग्रथिता मेध्यांश्च भक्ष्यान् गन्धांश्च घृष्टानादायोपतिष्ठस्व इति। अथ सोऽपि तथा कुर्य्यात् ॥ ७ ॥

तमुपस्थितमाज्ञाय समे शुचौ देशे प्राक्प्रवणे उदक्प्रवणे वा चतुष्किष्कुमात्रं चतुरश्रं स्थण्डिलं गोमयोदकोपलिप्तं

सर्व्वथा तत्तत्रविद्यालाभः स्याद् यथा यथा गुणः स्यात् तथा तथा विद्यालाभः स्यादिति तु हृदयम् ॥ ६ ॥

गङ्गाधरः—ननु किमेवम्भूतं शिष्यमन्विष्य परीक्ष्य स्वयमानीयाध्यापयेदित्यत आह—एवंविधमित्यादि। एवंविधं विद्यार्थिनं गुरुमारिराधयिषुं स्वयमुपस्थितमनुभाषेताचार्य्यः। किं भाषेतेत्यत आह—अथोदगयने इत्यादि। उदगयने उत्तरायणे माघादिषण्मासाभ्यन्तरे प्रशस्तेऽहनि ज्योतिःशास्त्रोक्ततिथियुक्तवारे शशिनि कल्याणे शुभे मुण्डः मुण्डितशिराः उपतिष्ठस्वेति अनुभाषेत इत्यन्वयः ॥ ७ ॥

गङ्गाधरः—तमित्यादि। चतुरश्रं चतुष्कोणं चतुष्किष्कुमात्रं तथा चैकैकदिशि

चक्रपाणिः—तिष्यः पुष्यानक्षत्रम्। अश्वयुगश्विनी। शशिनि कल्याण इति उक्तनक्षत्रेष्वध्ययनार्थिनो यतः शशी कल्याणकरो भवति, उदित एव शशिन्यध्ययनं कर्त्तव्यम्। मैत्रे मुहूर्त्ते इत्यनुकूले मुहूर्त्ते, मुहूर्त्तोदयश्च शिवभुजगादयः। मुण्डः कृतवापनः। गन्धेन हस्तः पञ्चाङ्गुलो गन्धहस्तः। हिरण्यशब्देनाघटितं हेम गृह्यते, हेमशब्देन च घटितम्। परिधयो हस्तप्रमाणा होमकुण्डचतुःपार्श्वे स्थाप्याः पालाशादिदण्डा उच्यन्ते। अत्र स्वोपार्जितवस्तुसान्निध्यमेव फलप्रमति ऋषिवचनादुन्नीयते, तेन अन्योपाहृतमपीष्टगन्धाद नोपस्थापनीयम् ॥ ७ ॥

कुशास्तीर्णं सूपविहितं * परिधिभिश्चतुर्द्दिशं यथोक्तचन्दनोद-कुम्भक्षौमहेमरजतमणिमुक्ताविद्रुमालङ्कृतम् मेध्यभक्ष्यगन्ध-शुक्लपुष्पलाजसर्षपाक्षतोपशोभितं कृत्वा तत्र पालाशीभिरैङ्गुदीभि-रौदुम्बरीभिर्माधूकीभिर्वा समिद्भिरग्निमुपसमाधाय प्राङ्मुखः शुचिरध्ययनविधिमनुविधाय मधुसर्पिर्भ्यां त्रिस्त्रिर्जुहुयात् अग्निम्, आशीःसंप्रयुक्तैर्मन्त्रैर्ब्रह्माणमग्निं धन्वन्तरिं प्रजापतिम् अश्विनाविन्द्रमृषींश्च सूत्रकारानभिमन्त्रयमाणः पूर्व्वं स्वाहेति।

हस्तमात्रं सूपविहितं सुष्ठुरूपेणोपविहितमुपस्कृतं भूषितम्। यथोक्तचन्दनादिभिः सज्जां विधाय तैश्चन्दनाभिर्गणेशादीन् देवान् पूजयित्वा विमान भिषजश्चोल्लिख्याभ्युक्ष्य च दक्षिणतो ब्राह्मणं स्थापयित्वा तत्र स्थण्डिले अध्ययनविधियुक्तं पश्चात् कर्त्तव्यतया विधायाग्निमुपसमाधाय पालाशाद्यन्यतम-काष्ठैरग्निं प्रज्वाल्य सुश्रुतसंवादात् खदिरदेवदारुविल्वन्यग्रोधाश्वत्थान्यतम-काष्ठैर्वाग्निं प्रज्वाल्य प्राङ्मुखः शुचिः सन्नाचार्य्यो ब्राह्मणो ब्राह्मण-मूर्द्धाभिषिक्तक्षत्रियादीन् उपनेतुं मूर्द्धाभिषिक्तो मूर्द्धाभिषिक्तक्षत्रियादीन् न तु ब्राह्मणं क्षत्रियोऽम्बष्ठक्षत्रियमाहिष्यवैश्यान् अम्बष्ठः क्षत्रियाम्बष्ठमाहिष्यवैश्यान् माहिष्यो माहिष्यवैश्यौ वैश्यो वैश्यामिति समानाधमानुपनेतुमर्हति। आपदि तु ब्राह्मणादुत्तमाभावेऽवरश्च द्विजो वरमुपनेतुमर्हति। पूर्व्वं दधिमधुघृताक्ताभिः पूर्व्वोक्ताभिः समिद्भिर्दार्व्वीहोमिकविधिना हुत्वा श्रुवेण मधुसर्पिर्भ्यां ॐ भूः स्वाहा इति मन्त्रेण त्रिर्जुहुयात्। ततः ॐ भुवः स्वाहेति त्रिर्जुहुयात् ततः ॐ स्वः स्वाहेति त्रिर्जुहुयात् इति। एवं व्याहृतिभिस्त्रिस्त्रिर्जुहुयात्। श्रुवेण त्रिस्त्रि-राज्याहुतिं वा दद्यात् तैर्मन्त्रैः। ततः परम् अग्निमाशीःसम्प्रयुक्तैर्मन्त्रैर्ब्रह्माण-मभिमन्त्रयमाणः स्वाहेति त्रिर्जुहुयात्। ततस्तैरेव मन्त्रैरग्निमभिमन्त्रयमाणः स्वाहेति त्रिर्जुहुयात्। ततो धन्वन्तरिं ततः प्रजापतिं ततोऽश्विनौ ततः

चक्रपाणिः—किष्कुरिह हस्तप्रमाणम्। सुपरिहितमिति सुवेष्टितम्। उपधायेत्यारोप्य। जुहुयादित्यध्यापक इत्यभिप्रायः। ब्रह्मादीन् स्वाहेति मन्त्रेण मन्त्रयमाण आचार्य्यः पूर्व्वमग्निं

* सुपरिहितमिति चक्रः।

शिष्यश्चैनमन्वालभेत । हुत्वा च प्रदक्षिणमग्निमनुपरिक्रामेत् । परिक्रम्य ब्राह्मणान् स्वस्ति वाचयेत् भिषजश्चाभिपूजयेत् ॥ ८ ॥

अथैनमग्निसकाशे ब्राह्मणसकाशे भिषक्सकाशे चानुशिष्यात्,—ब्रह्मचारिणा श्मश्रुधारिणा सत्यवादिना अमांसादेन मेध्यसेविना निर्म्मत्सरेणाशस्त्रधारिणा च ते भवितव्यम्। न च ते मद्वचनात् किञ्चिदकार्य्यं स्यादन्यत्र राजद्विष्टात् प्राणहराद् विपुलादधर्म्मादनर्थसंप्रयुक्ताद्वाप्यर्थात्। मदर्पणेन मत्प्रधानेन मदधीनेन मत्प्रियहितानुवर्त्तिना च त्वया शश्वद्भवितव्यम्। पुत्रवद्दासवदर्थिवच्चोपचरेतानुवस्तव्योऽहम् । अनुत्सुकेनावहितेनानन्यमनसा विनीतेनावेक्ष्यावेक्ष्यकारिणानसूयकेन चाभ्यनुज्ञातेन प्रविचरितव्यम् । अनुज्ञातेन चाननुज्ञातेन च प्रविचरता पूर्व्वं

सूत्रकारानात्रेयादीन् त्रिस्त्रिर्जुहुयात् । शिष्यश्च एनं होमं कुर्य्यात् । हुत्वा शिष्यस्तमग्निं प्रदक्षिणं दक्षिणभागे कृत्वा त्रिः परिक्रामेत् । परिक्रमानन्तरं ब्राह्मणान् स्वस्ति वाचयित्वा भिषजश्च पूजयित्वा ॥ ८ ॥

गङ्गाधरः—अथेत्यादि। ततः परमेनं वर्त्तमानं शिष्यमनुशिष्यात्। अनुशासनमाह—ब्रह्मचारिणेत्यादि । निर्म्मत्सरेण मात्सर्य्यरहितेन ते भवितव्यमिति कृद्योगेऽनभिहिते कर्त्तरि षष्ठी तु न सङ्गच्छते श्मश्रुधारिणेति तृतीयान्तविशेषणानुपपत्तेः। छन्दसि बहुलत्वात्तु त्वयेति। न चेति ते तव मद्वचनात् किञ्चित् अकार्य्यं न स्यात् । मद्वचनतः सर्व्वं कर्त्तव्यमेव तवेत्यर्थः। अन्यत्र राजद्विष्टादिभ्यः। राजद्विष्टादिषु मद्वचनतो न ते कार्य्यमकर्त्तव्यम्। मदर्पणेन यत् किञ्चित् प्राप्यं भिक्षया तत् पुनर्मह्यमर्पितुं शीलवता। अनुत्सुकेन औत्सुक्यवर्ज्जनेन।

जुहुयादिति योजना। तेन ब्रह्मादिभ्यऋग्भिराशीःप्रयुक्ताभिर्ग्रहणे स्वाहेत्यन्ताभिर्होमः कर्त्तव्यः। शिष्यश्चैनमन्वालभेतेति शिष्योऽपि गुरुहोमानन्तरमेव जुहुयादित्यर्थः ॥ ८ ॥

चक्रपाणिः—ते भवितव्यमिति त्वया भवितव्यम्। प्रविचरितव्यमिति चिकित्सार्थं व्यव-

गुर्व्वर्थोपान्वाहरणे यथाशक्ति प्रयतितव्यम् । कर्म्मसिद्धिमर्थसिद्धिं यशोलाभं प्रेत्य च स्वर्गमिच्छता भिषजा त्वया गोब्राह्मणमादौ कृत्वा सर्व्वप्राणभृतां शर्म्माशासितव्यम् अहरहरुत्तिष्ठता चोपविशता च। सर्व्वात्मना चातुराणामारोग्ये प्रयतितव्यम्, जीवितहेतोरपि चातुरेभ्यो नाभिद्रोग्धव्यम् । मनसापि च परस्त्रियो नैवाभिगमनीयास्तथा सर्व्वमेव परस्वम् । निभृतवेशपरिच्छदेन भवितव्यम् अशौण्डेनापापेनापापसहायेन च, श्लक्ष्णशुक्लधर्म्म्य-*-धन्यसत्यहितमितवचसा देशकालविचारिणा स्मृतिमता ज्ञानोत्थानोपकरणसम्पत्सु नित्यं यत्नवता । न च कदाचिद्‌ राजद्विष्टानां राजद्वेषिणां वा महाजनद्विष्टानां महाजनद्वेषिणां वा औषधमनुविधातव्यम् । एवं सर्व्वेषामत्यर्थविकृतदुष्टदुःखशीलाचारोपचाराणामल्पवाद-†-प्रतिकारा-

मदनुज्ञातेन त्वया मदननुज्ञातेन वा त्वया प्रविचरता पूर्व्वं गुरुणामर्थानामुपान्वाहरणे प्रयतितव्यं पश्चान्निजार्थोपान्वाहरणे । कर्म्मसिद्धिमिच्छतार्थसिद्धिमिच्छता यशोलाभमिच्छता प्रेत्य च मृत्वा च स्वर्गमिच्छता भिषजा त्वया भिषक्त्वं गतेन अहरहरुत्तिष्ठता चोपविशता च आदौ गोब्राह्मणं कृत्वा प्रथमतो गोब्राह्मणयोः शर्म्म सुखमाशासितव्यम्, ततः सर्व्वप्राणभृतां शर्म्म चाशासितव्यम् । सर्व्वात्मना सर्व्वांशेनातुराणां रोगिणाम् । अपि च जीवितहेतोरातुरेभ्यो मित्रेभ्यो वा शत्रुभ्यो वा नाभिद्रोग्धव्यं मनसापि चेति चकारात् वाचा कायेनापि इत्यर्थः । परस्वं परस्वामिकं वस्तु निभृतौ निश्चयेन भृतौ वेशपरिच्छदौ येन तेन तथा । अशौण्डेनामत्तेन । स्मृत्यादिषु नित्यं यत्नवता भवितव्यमिति पूर्व्वेणान्वयः । एवमित्यादौ च अल्पवादप्रतिकारादीनामिति जनपदोद्ध्वंसनीयाल्प-

हर्त्तव्यम् । गोब्राह्मणमादौ कृत्वेति प्रथमं गोब्राह्मणानाञ्च शर्म्माऽऽशासितव्यम्, ततश्चेतरषां प्राणिनाम् । उपविशता चेति च्छेदः । शुण्डा मद्यशाला, तत्प्रचारी शौण्डः । अशौण्डस्तु तदप्रचारी । शुक्लमिव शुक्लम्, निर्दोषत्वात्तेसद्वचनम् । यत्नवता भवितव्यमिति सम्बन्धः । राज्ञो

* श्लक्ष्णशुक्लधर्म्म्यशर्म्म्येति वा पाठः ।        † अनल्पवादेति चक्रः ।

दीनां मुमूर्षताञ्च तथैवासन्निहितेश्वराणां स्त्रीणामनध्यक्षाणां वा। न च कदाचित् स्त्रीदत्तमामिषम् आदातव्यमननुज्ञातञ्च भर्त्राथवाध्यक्षेण। आतुरकुलञ्चानुप्रविशता विदितेनानुमतप्रवेशिना सार्द्धं पुरुषेण सुसंवीतेन अवाक्शिरसा स्मृतिमता स्तिमितेनावेक्ष्यावेक्ष्य मनसा सर्व्वमाचरता सम्यगनुप्रवेष्टव्यम्। अनुप्रविश्य च वाङ्मनोबुद्धीन्द्रियाणि न क्वचित् प्रणिधातव्यानि, अन्यत्रातुरात् आतुरोपकारार्थाद्वा आतुरगतेष्वन्येषु वा भावेषु। न चातुरकुलप्रवृत्तयो वहिर्निश्चारयितव्याः। ह्रसितञ्चायुषः प्रमाणमातुरस्य जानतापि न त्वया तत्र च खलु वर्णयितव्यम्, यत्रोच्यमानमातुरस्य अन्यस्य चाप्युपघाताय सम्पद्यते। ज्ञानवतापि च नात्यर्थमात्मनो ज्ञानेन विकत्थितव्यम् आप्तादपि हि विकत्थमानादत्यर्थमुद्विजन्त्यनेके ॥ ६ ॥

वादप्रतिकारस्याधनस्येत्यादुक्तानां न चौषधमनुविधातव्यमित्यस्यान्वयः। न कदाचिदित्यादि। भिषग्भूते मांसादत्वप्रतिषेधाभावेन भर्त्राथवाध्यक्षेणाननुज्ञातञ्च स्त्रीदत्तमामिषं कदाचिन्नादातव्यं न ग्राह्यम्। आतुरकुलञ्चेत्यादिना विशिखानुप्रवेशः। आतुरकुलप्रवृत्तय इति आतुरपुरुषस्य कुलाचाराः सन्तो वाप्यसन्तो वा न वहिरन्यत्र न निश्चारयितव्याः गोपितव्या इत्यर्थः। ननु कुत्र न वर्णयितव्यमित्यत आह—तत्र न वर्णयितव्यं यत्रोच्यमानमातुरस्यायुषो-ह्रसितं प्रमाणमातुरस्यान्यस्य वाप्युपघाताय भवति। यत्र वर्णनेन न कस्योपघातः स्यात् तत्र तु वर्णनं न प्रतिषिध्यते। ज्ञानवतापि न चात्मनो ज्ञानवत्तयात्यर्थं श्लाघितव्यम्। कुतो नेत्यत आह—आप्तादपि हीत्यादि। आप्तपुरुषोऽपि

द्विष्टो राजद्विष्टः। यस्तु राजानं द्वेष्टि, स राजद्वेषी। आचारस्योपचरणमाचारोपचारः। अनध्यक्षाणां वा न प्रतिकर्त्तव्यमिति योजना। प्रवृत्तय इति वार्त्ताः। तत्रेति न वर्णयितव्यमिति सम्बध्यते। अन्यस्य आतुरपुत्रपित्रादेः। अन्यत्र उदासीने जीवितह्रासकथनं यशस्करमेव,

न चैव ह्यस्त्यायुर्व्वेदस्य पारम्, तस्मादप्रमत्तः शश्वदभियोगमस्मिन् गच्छेत् । एतच्चैवंकार्य्यमेवं भूयः प्रवृत्तस्य सौष्ठवम् अनसूयता परेभ्यो वाप्यागमयितव्यम् । कृत्स्नो हि लोको बुद्धिमतामाचार्य्यः, शत्रुश्चाबुद्धिमताम् अतश्चाभिसमीक्ष्य बुद्धिमताऽमित्रस्यापि धन्यं यशस्यमायुष्यं पौष्टिकं लौकिकम् अभ्युपदिशतो वचः श्रोतव्यमनुविधातव्यञ्चेति ॥ १० ॥

अतः परमिदं ब्रूयात् । देवताग्निद्विजगुरुवृद्धसिद्धाचार्य्येषु ते नित्यं सम्यग् वर्त्तितव्यम् । तेषु ते सम्यग्वर्त्तमानस्यायमग्निः

यद्यात्मश्लाघां करोति तदा तेन अनेके उद्विजन्ते सुतरामनाप्तपुरुषो नात्मश्लाघां कुर्य्यात् ॥ ९ ॥

गङ्गाधरः—ननु कुत आप्तोऽपि नात्मश्लाघां कुर्य्यात् इति ? अत आह—न चैव हीत्यादि । हि यस्मादायुर्व्वेदस्य पारं न चैवास्ति सुतरामाप्तोऽपि नात्मश्लाघां चिकित्सायां कर्त्तुं शक्नोतीति भावः । तस्मादायुर्व्वेदपाराभावादात्मज्ञानेन ज्ञानवत्तया श्लाघां न कृत्वा अप्रमत्तः प्रमत्तो न भूत्वा शश्वत् नित्यम् अप्रमादेनाभियोगमसर्व्ववित्तयास्मिन्नायुर्व्वेदे योगं गच्छेत् । एतच्च उक्तं यद्यदेवं कार्य्यमुक्तकार्य्यमुक्तरूपेण भूयः प्रवृत्तस्य परस्य सौष्ठवमनसूयता त्वया परेभ्यो वापि शिष्येभ्य आगमयितव्यमुपदेशो ग्रहीतव्यः । हि यस्मात् कृत्स्नो लोकः सर्व्वो जनो बुद्धिमतामाचार्य्यः । अबुद्धिमतान्तु सर्व्वो जनः शत्रुरित्यतो बुद्धिमता पुरुषेणामित्रस्य शत्रोरपि धन्यादिकं वचः श्रोतव्यमनुविधातव्यमिति ॥ १० ॥

गङ्गाधरः—अतः परमित्यादि । अनुशासनानन्तरम् । तेषु देवतादिषु

तत्र श्लाघा कर्त्तव्या । आप्तादपि हीत्यत्राप्तः सत्यवागुच्यते, अन्यत्रापि सत्यमेवाप्तं वक्ष्यति, यथाकालप्राप्तमेव ब्रूयादित्यर्थः ॥ ९ ॥

चक्रपाणिः—न चैव हीत्यादि । यस्मादायुर्व्वेदोऽपि ज्ञातुं न शक्यते प्रायस्तेनायुर्व्वेदज्ञानार्थमुद्यमं गच्छेत् । अस्मिन्निति दुस्तरे आयुर्व्वेदे । अनुक्तसद्वृत्तकरणार्थमाह—एतच्चेत्यादि । एतच्चेति "अथैनमग्निसकाशे" इत्यादिग्रन्थोक्तमनुष्ठेयम् । एवम्भूयश्च वृत्तसौष्ठवमिति उक्तसद्दशाञ्च साधुवृत्तमित्यर्थः । लौक्यं लोकानुमतम् । 'इति'शब्दोऽवधारणे । तेन

सर्व्वगन्धरसरत्नबीजानि यथेरिताश्च देवताः शिवाय स्युरतोऽन्यथा वर्त्तमानस्याशिवाय। इति।

एवं ब्रुवति चाचार्य्ये शिष्यस्तथेति ब्रूयात्। तद् यथोपदेशञ्च कुर्व्वन्नध्याप्योऽतोऽन्यथा त्वनध्याप्यः। अध्याप्यमध्यापयन् ह्याचार्य्यो यथोक्तैश्चाध्यापनफलैर्योगमवाप्नोत्यन्यैश्चानुक्तैः श्रेयस्करैर्गुणैः शिष्यमात्मानञ्च युनक्ति। इत्युक्तावध्ययनाध्यापनविधी॥ ११॥

ते तव अयमग्निरिति प्रत्यक्षं वर्त्तमानोऽयमग्निः। तथेति स्वीकारार्थे। यथोक्तैरध्यापनफलैः शास्त्रस्य दृढ़ता अभिधानसौष्ठवार्थं विज्ञानवचनशक्तिरूपैरन्यैर्धर्म्मादिभिश्च श्रेयस्करैः फलैः शिष्यमात्मानञ्च युनक्तीति। सुश्रुतेऽप्युक्तम्— इत्यष्टाङ्गमिदं तन्त्रमादिदेवप्रकाशितम्। विधिनाधीत्य युञ्जाना भवन्ति प्राणदा भुवि॥ एतदवश्यमध्येयमधीत्य च कर्म्माण्यवश्यमुपासितव्यमुभयज्ञो हि भिषग्राजार्हो भवति। भवन्ति चात्र। यस्तु केवलशास्त्रज्ञः कर्म्मस्वपरिनिष्ठितः। स मुह्यत्यातुरं प्राप्य प्राप्य भीरुरिवाहवम्। यस्तु कर्म्मसु निष्णातो धाष्ट्र्यात् शास्त्रवहिष्कृतः। स सत्सु पूजां नाप्नोति वधञ्चार्हति राजतः। उभावेतावनिपुणावसमर्थौ स्वकर्म्मणि। अर्द्धवेदधरावेतावेकपक्षाविव द्विजौ। यस्तूभयज्ञो मतिमान स समर्थोऽर्थसाधने। आहवे कर्म्म निर्व्वोढुं द्विचक्रः स्यन्दनो यथा। अत्रायमध्यापनविधिः सङ्क्षेपेण शिष्योपनयनारम्भविधिरुक्तः पूर्व्वं ब्राह्मणादिवर्णविशेषोक्तोपनयनानन्तरं सर्व्वेषामायुर्व्वेदाध्ययनसामर्थ्यं ततश्च अध्यापनप्रकारस्त्वन्यत्रोक्तस्तद्यथा मनुनोक्तम्। उपनीय गुरुः शिष्यं शिक्षयेच्छौचमादितः। आचारमग्निकार्य्यञ्च सन्ध्योपासनमेव च। अध्येष्यमाणस्त्वाचान्तो यथा शास्त्रमुदङ्मुखः। ब्रह्माञ्जलिकृतोऽध्याप्यो लघुवासा जितेन्द्रियः। ब्रह्मारम्भेऽवसाने तु पादौ ग्राह्यौ गुरोः सदा। संहत्य हस्तावध्येयं स हि ब्रह्माञ्जलिः स्मृतः। व्यत्यस्तपाणिना कार्य्यमुपसंग्रहणं गुरोः। सव्येन सव्यः स्प्रष्टव्यो दक्षिणेन च दक्षिणः। अध्येष्यमाणन्तु गुरुर्नित्यकालमतन्द्रितः। अधीष्व भो इति ब्रूयात् विरामोऽस्त्विति चारमेत्। ब्राह्मणः प्रणवं कुर्य्यात् आदावन्ते च सर्व्वदा। स्रवत्यनोङ्कृतं पूर्व्वं परस्ताच्च विशीर्य्यति। प्राक्

यदेवाऽमित्रस्य धर्म्मादिगुणयुक्तं वचस्तदेवानुविधातव्यं श्रोतव्यञ्च। यथोक्तैरिति शास्त्रान्तरेण, न ह्यखिलशास्त्रेऽध्ययनफलं साक्षात् कश्चिदुक्तम्॥ १०।११॥

सम्भाषाविधिमत ऊर्द्ध्वं व्याख्यास्यामः। भिषक् भिषजा सह

कुलान् पर्य्युपासीनः पवित्रैश्चैव पावितः। प्राणायामैस्त्रिभिः पूतस्तत ओङ्कारमर्हति। अकारश्चाप्युकारश्च मकारश्च प्रजापतिः। वेदत्रयात् निरदुहद्भूर्भुवः स्वरितीति च। त्रिभ्य एव तु वेदेभ्यः पादं पादमदूदुहत्। तदित्यृचोऽस्याः सावित्र्याः परमेष्ठी प्रजापतिः। एतदक्षरमेनाञ्च जपन् व्याहृतिपूर्व्विकाम्। सन्ध्ययोर्वेदविद्विप्रो वेदपुण्येन युज्यते। सहस्रकृत्वस्त्वभ्यस्य वहिरेतत् त्रिकं द्विजः। महतोऽप्येनसो मासात् त्वचेवाहिर्विमुच्यते। एतयर्च्चा विसंयुक्तः काले च क्रियया स्वया। ब्रह्मक्षत्रियविड्योनिर्गर्हणां याति साधुषु। ओङ्कारपूर्व्विकास्तिस्रो महाव्याहृतयोऽव्ययाः। त्रिपदा चैव सावित्री विज्ञेयं ब्रह्मणो मुखम्। योऽधीतेऽहन्यहन्येतां त्रीणि वर्षाण्यतन्द्रितः। स ब्रह्मपरमभ्येति वायुभूतः स्वभूतिमान्। एकाक्षरं परं ब्रह्म प्राणायामं परन्तपः। सावित्र्यास्तु परं नास्ति मौनात् सत्यं विशिष्यते। क्षरन्ति सर्व्वा वैदिक्यो जुहोति यजति क्रियाः। अक्षरन्त्वक्षरं ज्ञेयं ब्रह्म चैव प्रजापतिः। इत्यारभ्य बहून्युक्त्वा। अनेन क्रमयोगेण संस्कृतात्मा द्विजः शनैः। गुरौ वसन् सञ्चिनुयाद्ब्रह्माधिगमिकं तपः। तपोविशेषैर्व्विविधैर्व्रतैश्च विधिचोदितैः। वेदः कृत्स्नोऽधिगन्तव्यः सरहस्यो द्विजन्मना। वेदमेव सदाभ्यस्येत् तपस्तप्यन् द्विजोत्तमः। वेदाभ्यासो हि विप्रस्य तपः परमिहोच्यते। आहैव स नखाग्रेभ्यः परमं तप्यते तपः। यः स्रग्व्यपि द्विजोऽधीते स्वाध्यायं शक्तितोऽन्वहम्। योऽनधीत्य द्विजो वेदमन्यत्र कुरुते श्रमम्। स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः। इत्यादि। सुश्रुते च—अथ शुचये कृतोत्तरासङ्गायाव्याकुलायोपस्थितायाध्ययनकाले शिष्याय यथाशक्ति गुरुरुपदिशेत्। पदं पादं श्लोकं वा। ते च पदपादश्लोका भूयः क्रमेणानुसन्धेया एवमेकैकशो घटयेदात्मना चानुपठेत्। अद्रुतमविलम्बितमविशङ्कितमननुनासिकं व्यक्ताक्षरमपीड़ितवर्णमक्षिभ्रुवौष्ठहस्तैरनभिनीतं सुसंस्कृतं नात्युच्चैर्नातिनीचैश्च स्वरैः पठेन्न चान्तरेण कश्चिद्व्रजेत् तयोरधीयानयोः। भवतश्चात्र। शुचिर्गुरुपरो दक्षस्तन्द्रानिद्राविवर्ज्जितः। पठेदेतेन विधिना शिष्यः शास्त्रान्तमाप्नुयात्। वाक्सौष्ठवेऽर्थविज्ञाने प्रागल्भ्ये कर्म्मनैपुणे। तदभ्यासे च सिद्धौ च यतेताध्ययनान्तगः। इति उक्तावित्यादि ॥ ११ ॥

गङ्गाधरः—क्रमिकत्वादत ऊर्द्ध्वं सम्भाषाविधिर्व्याख्यायते—भिषगित्यादि।



सम्भाषेत ; तद्विद्यसम्भाषा हि ज्ञानाभियोगसंहर्षकरी भवति, वैशारद्यमपि चाभिनिर्व्वर्त्तयति, वचनशक्तिमपि चाधत्ते, यशश्चाभिदीपयति, पूर्व्वश्रुते च सन्देहवतः पुनःश्रवणात् संशयमपकर्षति, श्रुते चासन्देहवतो भूयोऽध्यवसायमभिनिर्व्वर्त्तयति अश्रुतमपि कञ्चिदर्थं श्रोत्रविषयमापादयति। यच्चाचार्य्यः शिष्याय शुश्रूषवे प्रसन्नः क्रमेणोपदिशति गुह्याभिमतमर्थजातम्। तत् परस्परेण सह जल्पन् पण्डेन * विजिगीषुराह संहर्षात् तस्मात् तद्विद्यसम्भाषामभिप्रशंसन्ति कुशलाः ॥ १२ ॥

सम्भाषेतेति परस्परं शास्त्रं भाषेत। भिषक् भिषजा सहेत्यनेन सम्भाषणमत्र तद्विद्यस्य तद्विदेन सहेति गम्यते। कस्माद्भिषक् भिषजा सह सम्भाषेत इत्यत आह—तद्विदेत्यादि। तद्विदेति यो येन सह सम्भाषते तस्य यस्मिन् शास्त्रे यस्मिन् तन्त्रे वा विद्या तस्मिन् शास्त्रे तन्त्रे वा विद्या यस्य स तद्विद्यः एकशास्त्रविद्य एकतन्त्रविद्यो वेति यावत्। तयोः सम्भाषा परस्परं तच्छास्त्रस्य तत्तन्त्रस्य वा वादः सम्भाषा। ज्ञानाभियोगः सर्व्वतोभावेन ज्ञानयोगः संहर्षश्च तौ कर्त्तुं शीलं यस्याः सा तथा। वैशारद्यं पाण्डित्यं तत्त्वाभिनिवेशः। वचनशक्तिः शब्दतश्चार्थतश्चोक्तौ सामर्थ्यम्। पूर्व्वश्रुते च अध्ययनकाले गुरुतः श्रुतेऽर्थे यदि सन्देहो वर्त्तते तर्हि पुनश्चापरस्मात् तस्य शब्दतश्चार्थतश्च श्रवणात् संशयमपकर्षति। श्रुते चार्थे शब्दतश्चार्थतश्च यदि सन्देहो न वर्त्तते तदा भूयोऽध्यवसायोऽधिकव्यवसायस्तं जनयति। अश्रुतं गुरुमुखादश्रुतम्। यश्चार्थं पण्डेन स्वपाण्डित्यप्रकाशनेन विजिगीषुर्विजेतुमिच्छुराह, विजयो हि संहर्षकर इत्यत आह संहर्षात्। तस्मात् ज्ञानाभियोगादिफलकत्वात् ॥ १२ ॥

चक्रपाणिः—संहर्षः स्पर्द्धा। ज्ञानार्थमभियोगसंहर्षौ करोतीति ज्ञानाभियोगसंहर्षकरी। वैशारद्यमिति परवचनाभिभवपाण्डित्यम्, एतच्च सभायामभ्यासाद् भवति। भूयोऽध्यवसायमिति दृढनिश्चयम्। अथ कथं श्रुतत्वमपि कस्यचिद् गुह्यस्यार्थस्य स्यात् तदाह—जल्पन् पिण्डेनेति। पिण्डेनेति सारोद्धारेण। ननु गुह्यश्चेत् सारतस्तत् कथमयं विजिगीषुस्समाहेत्याह—संहर्षादिति, स्पर्द्धया तु गुह्योऽप्यर्थो विजयार्थमभिधीयत इति भावः ॥ १२ ॥

* पिण्डेनेति चक्रः।

द्विविधा तु खलु तद्विद्यसम्भाषा भवति। सन्धाय-सम्भाषा विगृह्य-सम्भाषा च। तत्र ज्ञानविज्ञानवचनप्रतिवचनशक्तिसम्पन्ने-नाकोपने-नानुपस्कृतविद्येन-नानसूयके-नानुनेये-नानुनयकोविदेन क्लेशक्षमेण प्रियसम्भाषणेन च सह सन्धाय सम्भाषा विधीयते। तथाविधेन सह संकथयन् विस्रब्धः कथयेत् पृच्छेदपि च विस्रब्धः,

गङ्गाधरः—ननु केन प्रकारेण सम्भाषत इत्यत आह—द्विविधेत्यादि। सन्धाय सन्धिं कृत्वा सम्भाषा सन्धाय-सम्भाषा, विगृह्य विग्रहं कृत्वा सम्भाषा विगृह्य-सम्भाषा। तत्र द्वयोः सम्भाषयोर्मध्ये ज्ञानविज्ञानादिमता या सम्भाषा विधीयते परेण सह सा सम्भाषा सन्धायसम्भाषा। ज्ञानं शास्त्रार्थज्ञानं विज्ञानं तदर्थनिश्चयस्ताभ्यां वचनं पूर्व्वपक्षोक्तिः प्रतिवचनमुत्तरोक्तिस्तयोर्द्वयोः शक्त्या सम्पन्नोऽक्रोधी यः पुमान तेन सम्भाषा च विगृह्यापि सम्भाव्यते इति तद्वारणायाहाकोपनेनेति। अकोप-शालिना इत्यर्थः। ज्ञानविज्ञानवचनप्रतिवचनशक्तिसम्पन्नस्त्वकोपनश्च यः पण्डितः स यदि विकृतविद्यो विस्मृतिसंशयादिभिर्भवति तदा सुतरां विग्रहं कर्त्तुं न समर्थः स्यादित्यकोपनोऽपि कोपमापद्यते इति तादृशेन सह विगृह्य-सम्भाषावारणायानुपस्कृतविद्येनेति। भ्रमसंशयादिविरहेण स्मृत्यादिभिर्न भूषितीकृता विद्या येन तेन। तथा ज्ञानादिसम्पन्नश्चाकोपनश्चानुपस्कृतविद्य-श्चासूयां कृत्वा यः सम्भाषते तत्सम्भाषावारणायानसूयकेनेति। अनुनेयेनेति यो हि सम्भाष्यस्तेन ज्ञानविज्ञानादितस्तस्य निजस्य विद्यया बुद्ध्यादिभिश्च तुला-तुलाभ्यामनुमेयेन। अनुनये विनये पण्डितस्तेन इति केचिद् व्याख्यानयन्ति तन्न, सन्धायसम्भाषाया हि नेदं लक्षणं, परन्तु येन सह सन्धायसम्भाषा कर्त्तव्या विगृह्यसम्भाषा चाकर्त्तव्या तदुपदेशोऽयमिति। तथा च यस्तु ज्ञानं विज्ञानं वचनं प्रतिवचनशक्तिश्चेत्येताभिः सम्पन्नस्तथा च अकोपनः स्मृत्या-दिभिर्भूषितविद्यश्च न चासूयकः अनुनेतुमर्हश्चानुनये कोविदश्च क्लेशं सम्भाषासु कटुवचनादिजनितं धैर्य्यगाम्भीर्य्यादिगुणैः क्षमितुं शीलं यस्य स क्लेशक्षमः प्रियसम्भाषणश्च भवति तादृशेन महाजनेन सह सन्धायसम्भाषा विधीयते कुशलेन न तु विगृह्यसम्भाषा कर्त्तव्या। ननु तेन सह केन प्रकारेण सन्धाय-

चक्रपाणिः—सन्धायसम्भाषा, नये 'वादः' इत्युच्यते। विगृह्यसम्भाषा तुल्यव्यक्तिजल्प-

पृच्छंश्चास्मै विस्रब्धाय विशदार्थजातं ब्रूयात्। न च निग्रह-भयादुद्विजेत। निगृह्य चैनं न हृष्येत्, न च परेषु विकत्थेत। न च मोहादेकान्तग्राही स्यान्न चानुविदितमर्थमनुवर्णयेत्। सम्यक् चानुनयेनानुनीयेत। अनुनयाच्च परं तत्र चावहितः स्यादित्यनु-लोमसम्भाषाविधिः॥ १३॥

अत ऊर्द्ध्वमितरेण सह विगृह्य सम्भाषेत श्रेयसा योगम्

सम्भाषा कार्य्येत्यतः सन्धायसम्भाषाप्रकारमुपदिशति—तथाविधेनेत्यादि। तथाविधेन निरुक्तेन ज्ञानादिसम्पन्नादिना महाजनेन सह संकथयन् शास्त्रार्थं संल्पन् पुरुषः विस्रब्धो विश्वस्तः सन् कथयेत् विस्रब्धश्च सन् शास्त्रार्थं पृच्छेत्। अथास्मै ज्ञानादिसम्पन्नादिमहाजनाय विस्रब्धाय विश्वस्ताय पृच्छंश्च सम्भाषमाणः पुरुषो विशदार्थजातं ब्रूयात् न त्वविशदार्थम्। न च निग्रहभयादुद्विजेत। अयं महाजनो यदि मां स्खलितार्थवचनेन निगृह्णीया-दित्युद्वेगं न कुर्य्यात् तन्महाजनकर्त्तृकनिग्रहे हि नायश इति भावः। अयं महाजनो यदि कथञ्चित् स्मृत्यादिविरहेण निग्रहमापद्यमानः स्यात् तथाप्येनं निगृह्य न च हृष्येत्। महाजनो हि प्रथितविद्याकीर्त्तिपौरुषादिः कथञ्चित् स्मृत्याद्यभावेन न निग्रहीतुमर्हति तन्निग्रहं कर्त्तुमशक्तेन विद्यादिभिरल्पेन कथञ्चिन्निग्रहेऽपि तस्य विद्याद्यतिशयित्वेनायशः प्रतिपद्यते। अत एव परेषु अन्यत्र न विकत्थेत न श्लाघेतेति। मोहादेकान्तग्राही न च स्यात् एकान्तं निरन्तरं तदुत्तराशक्यविषये पुनः पुनर्ग्रहणं न कुर्य्यात्। अनुविदितमुत्तर-कालं विदितमर्थं नानुवर्णयेत्॥ १३॥

गङ्गाधरः—विगृह्यसम्भाषाविधिमाह—अत ऊर्द्ध्वमित्यादि। इतरेण ज्ञान-

वितण्डारूपा ज्ञेया। तत्रेत्यादिना सन्धायसम्भाषाविधिमाह—विस्रब्धः कथयेदिति जल्पवितण्डोक्त-निग्रहाभीतः। कथयेदिति ब्रूयात्। निगृह्य चैनं न हृष्येदिति अनुलोमसम्भाषारूपवादे च यानि सम्भवन्ति निग्रहस्थानानि तत्त्वविघातीनि हेत्वाभासापसिद्धान्तानि न्यूनाधिकरूपाणि, तैरपि निगृह्य न हृष्येत्। जल्पोक्तनिग्रहस्थानानि त्वत्र ग्राह्याण्येव। अविदितमिति प्रतिवादिनो-ऽविदितम्। अनुनयेच्च सम्यगनुनयेनेति सम्बन्धः। तेन चात्र च्छलजातिप्रयोगो न कर्त्तव्य इति शिक्षयति। तत्र चावहितः स्यादिति सम्यगनुनयेऽवधानं कुर्य्यात्॥ १३॥

चक्रपाणिः—इतरेणेति अविशिष्टेन। वादी तु विशिष्टो गुरुर्ब्रह्मचारी चाधिकृतः, उक्त

आत्मनः पश्यन्। प्रागेव च जल्पाज्जल्पान्तरं परावरान्तरं परिषद्विशेषांश्च परीक्षेत सम्यक्। परीक्षा हि बुद्धिमतां कार्य्यप्रवृत्तिनिवृत्तिकालौ शंसति। तस्मात् परीक्षामभिप्रशंसन्ति कुशलाः। परीक्षमाणस्तु खलु परावरान्तरमिमान् जल्पक-गुणान् श्रेयस्करान् दोषवतश्च परीक्षेत सम्यक्। तद्यथा—श्रुतं विज्ञानं धारणं प्रतिभानं वचनशक्तिरित्येतान् गुणान् श्रेयस्करान् आहुः। इमान् पुनर्दोषवतः। तद् यथा—कोपनत्वमवैशारद्यं

विज्ञानवचनप्रतिवचनशक्तिभिरसम्पन्नेन कोपनेन उपस्कृतविद्येनासूयकेन अननुनेयेनानुनयमूर्खेण क्लेशासहिष्णुना चाप्रियसम्भाषणेन सह विगृह्य सम्भाषेत विगृह्यसम्भाषां विदध्यादिति। आत्मनः श्रेयसा परस्मादुत्कृष्टविद्या-बुद्ध्यादिना योगं पश्यन् कुशलः। अश्रेयसा योगं पश्यंस्तु न विगृह्य सम्भाषेतेत्यर्थः। कथं श्रेयसा योगायोगौ दृश्यौ स्यातामित्यत आह—श्रेयसा योगप्रकारम्। प्रागेवेत्यादि। स्वेन सह सम्भाष्यपुरुषस्य जल्पात् पूर्व्वमेव विगृह्य सम्भाष्यपुरुषस्य जल्पान्तरमपरेण सह जल्पस्तेन परस्य विगृह्य सम्भाष्यस्यावान्तरं श्रेष्ठत्वमवरत्वं समत्वं निजात् तेषामन्यतमं परीक्षेत। परिषदां सभानां विशेषांश्च पण्डितसभादिरूपान् परीक्षेत सम्यक्। ननु कस्मात् परीक्षेतेत्यत आह—परीक्षा हीत्यादि। परीक्षा हि यस्मात् बुद्धिमतां कार्य्येषु प्रवृत्तौ अयमेव कालः श्रेयस्करः अयमेव कालस्त्वश्रेयस्कर इत्यतस्तेषु कार्य्येषु निवृत्तौ स कालः श्रेयस्कर इति शंसति व्यनक्ति। ननु केन प्रकारेण तद्द्वयं परीक्षेतेत्यत आह—परीक्षमाणस्त्वित्यादि। परावरान्तरं परीक्षमाणस्तु जल्पके सम्भाष्यपुरुषे इमान् वक्ष्यमाणान् दोषवतः सदोषान्। परीक्षाप्रकारमाह—श्रुतमित्यादि। श्रुतमध्ययनं विज्ञानं विज्ञत्वं धारणं शब्दतः शास्त्राभ्यासः प्रतिभानं बुद्धिप्रकाशः परोक्तौ द्रुतावबोधशक्तिः वचन-शक्तिर्वाचनाशक्तिः। दोषवतो गुणांस्तु कोपनत्वमित्यादिकान्। अधारणत्वं

हि न्याये—"तं शिष्यगुरुसब्रह्मचारिविशिष्टश्रेयोऽर्थिभिरनसूयिभिरभ्युपेयाद्" इति। सम्भाषेति प्रवृत्तकथोपलक्षणम्। तेन सा वितण्डेति च ज्ञेयम्। परावरान्तरमिति प्रतिवादिन आत्मनश्च

भीरुत्वमधारणात्वमनवहितत्वमिति। एतान् द्वयानपि गुणान् गुरुलाघवतः परस्य चैवात्मनश्च तुलयेत् ॥ १४ ॥

तत्र त्रिविधः परः सम्पद्यते, प्रवरः प्रत्यवरः समो वा गुणविनिक्षेपतः, न त्वेवं कार्त्स्न्येन। परिषत् तु खलु द्विविधा, ज्ञानवती मूढ़ा परिषच्च। सैव द्विविधा सती त्रिविधा पुनरनेन कारणविभागेन। सुहृत्परिषदुदासीनपरिषत् प्रतिनिविष्टपरिषच्चेति ॥ १५।१६ ॥

तत्र प्रतिनिविष्टायां परिषदि ज्ञानविज्ञानवचनप्रतिवचनशक्तिसम्पन्नायां मूढ़ायां वा न कथञ्चित् केनचित् सह जल्पो

शब्दतोऽभ्यासविरहः। अनवहितत्वमवधानविरहः। एतानित्यादि। परस्य सम्भाष्यस्य आत्मनो निजस्य तुलयेत् तौलं कुर्य्यात् ॥ १४ ॥

गङ्गाधरः—प्रवरः श्रेष्ठः प्रत्यवरः कनिष्ठः। गुणविक्षेपतः परस्य श्रेयस्करसदोषान्यतरेषु गुणेषु स्वगुणविनिक्षेपतः श्रुतत्वादीनां केषाञ्चिदाधिक्यन्यूनत्वाभ्यां न पुनरेवंगुणानां कार्त्स्न्येन। परिषत् त्वित्यादिना सैव परिषत् ज्ञानवती मूढ़ेति द्विधा सती त्रिविधा पुनर्भवति प्रत्येकम्। अनेककारणभेदात्। तथा च विवृणोति—सुहृदित्यादि। ज्ञानवती सुहृत्परिषत्, ज्ञानवती उदासीनपरिषत्, ज्ञानवती प्रतिनिविष्टपरिषच्चेति त्रिधा ज्ञानवती सभा। मूढ़ा सुहृत्परिषत्, मूढ़ोदासीनपरिषत्, मूढ़ा प्रतिनिविष्टपरिषच्चेति त्रिधा मूढ़परिषदित्येकीभूय षोढ़ा परिषत्। अत्र उदासीना न सुहृन्न च शत्रुर्यत्र सा प्रतिनिविष्टा स्वसौहार्द्दाभावेन सभ्या निविष्टा यत्र सा तथा ॥ १५।१६ ॥

गङ्गाधरः—तत्र कस्यां सभायां कथं सम्भाषेतेत्यत आह—तत्रेत्यादि। तत्र षट्सु परिषत्सु मध्ये ज्ञानविज्ञानवचनप्रतिवचनशक्तिसम्पन्नायां प्रति-

प्रतिभादिविशेषमित्यर्थः। जल्पान्तरमिति सामयिकसर्व्वार्थादिविशेषितं जल्पविशेषमित्यर्थः ॥ १४ ॥

चक्रपाणिः—गुणविनिक्षेपत इति उत्कृष्टगुणत्वेन प्रवर इत्यर्थः, प्रत्यवरो हीनगुणः, समगुणः समो वाद्यपेक्षयेत्यर्थः। न त्वेव कार्त्स्न्येनेति न कुलशीलधर्म्मादिनापि प्रवरादिरिहाभिप्रेत इत्यर्थः। मूढ़परिषदित्यत्र मूढ़ेव मूढ़ा किञ्चित्कृत्थे, सर्व्वथा मूढ़ायान्तु न कश्चिद् ब्रूते। न

विधीयते। मूढ़ायान्तु सुहृत्परिषदि वोदासीनायां वा ज्ञान-विज्ञानवचनप्रतिवचनशक्तीरन्तरेणापि दीप्तयशसा * महाजन-विद्विष्टेनापि सह जल्पो विधीयते। तथाविधेन च सह कथयता त्वाविद्धदीर्घसूत्रसङ्कुलैर्वाक्यदण्डकैः कथयितव्यम्। अतिहृष्टं मुहुर्मुहुरुपहसता परं निरूपयता च परिषदमाकारैर्ब्रुवतश्चास्य वाक्यावकाशो न देयः। कष्टं शब्दञ्च ब्रुवता वक्तव्यो नोच्यते

निविष्टायां परिषदि। मूढ़ायां वा प्रतिनिविष्टायां परिषदि कथञ्चित् केनापि प्रकारेण केनचित् सम्भ्येन सह न जल्पो विधीयते न कार्य्य इत्यर्थः। प्रति-निविष्टत्वेन सुजल्पितमपि सदोषं वर्णयित्वा पराजयकरणस्य सम्भवात्। मूढ़ायां सुहृत्परिषदि मूढ़ायामुदासीनपरिषदि वा स्वस्य ज्ञानविज्ञानादिकं विनापि अपिकारात् ज्ञानादिसद्भावे किं वचनं दीप्तयशसा महाजनविद्विष्टेनापि दुरात्मना सह जल्पो विधीयते। सदात्मना तु किं वचनं विग्रहे का कथा। ननु केन प्रकारेण दीप्तयशसा महाजनविद्विष्टेन दुरात्मना सह सम्भाषेतेति तदुपदिशति—तथाविधेनेत्यादि। तथाविधेन मूढ़ायां सुहृत्परिषदि मूढ़ाया-मुदासीनपरिषदि वा निविष्टेन दीप्तयशसा महाजनविद्विष्टेन दुरात्मना सह कथयता सम्भाषमाणेन पुंसा तु आविद्धदीर्घसूत्रसङ्कुलैरितरेण ईषद्-विद्धं दीर्घं सूत्रं यत् तेन सङ्कुला मिश्रिता ये वाक्यांशका दण्डास्तैः कथयि-तव्यम्। आकारैराकृतिभिर्मुहुर्मुहुरतिहृष्टं यथा स्यात् तथा परिषदम् उपहसता परमुत्कृष्टं यथा स्यात् तथा परिषदं निरूपयता च ब्रुवतश्चास्य परस्य वाक्यावकाशो न देय इत्यन्वयः। छेदेनाविद्धदीर्घसूत्रसङ्कुलैर्वाक्यदण्डकैः कथयि-तव्यमित्यर्थः। कष्टशब्दञ्च वाक्यावकाशाभावेऽप्यवान्तरं कष्टशब्दात्मकं वाक्यं

केनचिदिति नाधमेनापीत्यर्थः। आविद्धं वक्रम्। कथयितव्यमिति वक्तव्यम्। उपहसता परमाकारैरिति योजना। तथा परिषदं रूपयता आकारैरिति सम्बन्धः। कष्टशब्दमिति नाति-प्रसिद्धार्थम्। नोच्यत इत्येवं नोच्यत इति वक्तव्यम्। कष्टशब्दस्य ह्यर्थं मूढ़परिषत् न जानात्येव। ततश्च कष्टशब्दस्यानर्थकतायाः परिषदं प्राप्य सुखसाध्यत्वमिति भावः। तथा कष्टशब्दं वदंस्त्वेवं

* अदीप्तयशसेति चक्रः।

अथवा पुनर्हीना ते प्रतिज्ञेति। पुनश्चाह्वयमानः प्रतिवक्तव्यः परिसंवत्सरो भवान् शिक्षस्व तावद्गुरुमुपासितो नूनम्। अथवा पर्य्याप्तमेतावत् ते। सकृदेव हि परिक्षेपिकं निहतं निहतमाहुरिति न्यासयोगः * कर्त्तव्यः कथञ्चित्। एवमेव श्रेयसा सह विगृह्य वक्तव्यमित्याहुरेके। न त्वेवं ज्यायसा सह विग्रहश्च प्रशंसन्ति कुशलाः॥ १७॥

प्रत्यवरेण तु सह समानाभिमतेन वा विगृह्य जल्पता सुहृत्परिषदि कथयितव्यम्। अथवाप्युदासीनपरिषद्यवधान-श्रवणज्ञानविज्ञानोपधारणवचनप्रतिवचनशक्तिसम्पन्नायां कथयता

ब्रुवता परः सम्भाष्यमाणः भो भवता नोच्यत इति वक्तव्यः। अथवा पुनश्चाह्वयमानः भोः पुरुषेत्याह्वयमानः आह्वयमानः स भोः ते तव प्रतिज्ञा हीनेति प्रतिवक्तव्यः। अथवा परिसंवत्सरः संवत्सरं परिप्राप्तस्तावत् गुरुमुपासितो नूनं शिक्षस्वेति वक्तव्यः। अथवा ते तव एतत् सर्व्वं मयि पर्य्याप्तं परिगतम्। सकृदेकवारमेव हि निश्चितम्। परिक्षेपिकमुद्रिक्तसत्त्वगुणेन शान्तो भूत्वा जल्पजन्यक्लेशसाधनात् विरतः सन् आनन्दसाधनेषु भावेषु निरतिविक्षेपः स एव परिक्षेपः तदीयं यद्यत् कर्म्म तत् तत् परिक्षेपिकं निहतं निहतं तव मतमित्याहुरेवं कचिन्मौनं कचिद्धास्यमित्येवमादि न्यासयोगः कथञ्चिदपि कर्त्तव्यः। एवमित्यादि। एवं श्रेयसा श्रेष्ठेन ज्यायसा ज्येष्ठेन। अप्रतिषिद्धत्वादनुमतमेकेषां मतम्॥ १७॥

गङ्गाधरः—प्रत्यवरेणेत्यादि। सुहृत्परिषदीति। ज्ञानवत्यां मूढायां वा प्रत्यवरेण समेन वा सह विगृह्य जल्पता कथयितव्यमुक्तरूपेण। अथवेत्यादि। अवधानादिसम्पन्नायामर्थात् ज्ञानवत्याम् उदासीनपरिषदि परस्परं सम्भाष्य

वाच्यम्—हीना ते प्रतिज्ञेति। परिसंवत्सरोऽध्ययनं स्वयमुपसंस्कृत्य पुनरध्येता पर्य्याप्तमेतावत् ते इति पक्षावसादार्थेति शेषः। परिक्षेपिकमिति प्रतिक्षेपिकशब्दम्। नास्य योगः कर्त्तव्य इति न सकृत् पराभूतस्य पक्षस्य पुनः प्रतिक्षेपकहेतुना योगः कर्त्तव्य इत्यर्थः। कथञ्चिदित्यादिना श्रेयसा समं विगृह्य सम्भाषायामेकीयमतमाह, न त्वेवेत्यादिना आत्ममतमाह॥ १५—१७॥

* नास्य योग इति वा पाठः।

चावहितेन परस्परसाद्गुण्यदोषबलमवेक्षितव्यम्। समवेक्ष्य च यत्रैनं श्रेष्ठं मन्येत, नास्य तत्र जल्पं योजयेदनाविष्कृतमयोगं कुर्व्वन्। यत्र त्वेनमवरं मन्येत, तत्रैवैनमाशु निगृह्णीयात्॥१८॥

तत्र खल्विमे प्रत्यवराणामाशुनिग्रहे भवन्त्युपायाः। तद् यथा—श्रुतहीनं महता सूत्रपाठेनाभिभवेत्, विज्ञानहीनं पुनः कष्टशब्देन वाक्येन, वाक्यधारणाहीनमाविद्धदीर्घसूत्रसङ्कुलैः वाक्यदण्डकैः, प्रतिभाहीनं पुनर्वचनेनानेकविधेनानेकार्थवाचिना, वचनशक्तिहीनमर्द्धोक्तस्य वाक्यस्याक्षेपणेन, अवि-

पुरुषस्यात्मनश्च साद्गुण्यं दोषश्च तयोर्बलम्। श्रेष्ठं साद्गुण्येन श्रेष्ठम् न तु दोषबलेन। यत्र तु एनं सम्भाष्यं पुरुषमनाविष्कृतं जल्पेनालपितमप्रशंसितम् अयोगं कुर्व्वन् अवरं मन्येत, तस्य जल्पेनानुनिग्रहं कुर्य्यात्॥ १८॥

गङ्गाधरः—तत्रेत्यादि स्पष्टम्। तद् यथेत्यादि। श्रुतहीनं तच्छास्त्रेऽनधीतम्। विज्ञानहीनं तच्छास्त्रार्थतत्त्वज्ञानहीनं कष्टशब्देन दुर्व्वोधार्थकशब्दात्मकेन वाक्येन। वाक्यधारणाहीनमल्पमेधसमाविद्धदीर्घसूत्रसङ्कुलैः। प्रतिभाहीनं श्रुतमात्रमर्थबोधः प्रतिभा। अनेकविधेन नानार्थकशब्दात्मकवचनेन। अर्द्धोक्तवाक्यस्याक्षेपेण व्यङ्ग्यार्थकशब्दात्मकेन वाक्येन। अविशारदं पाण्डित्यहीनम्,

चक्रपाणिः—साद्गुण्यस्य विद्यमानगुणतायास्तथा दोषस्य बलं साद्गुण्यदोषबलम्। श्रेष्ठं मन्येतेति यत्र वादविषये प्रतिवादिनमधिकं पश्येदित्यर्थः, तत्र परस्य पुरःसरवादविषये तथा वादो निवर्त्तनीयः, यथा आविष्कृतः प्रकटीकृतः सभाया नायोगः। तत्र वादो निवृत्तलक्षणो न स्यात्। अनभीष्टविषये तथा वादनिवृत्तिः कर्त्तव्या यथा कोऽपि न जानात्येवं तत्र वक्तुमक्षममित्यर्थः। तत्रैवेति तत्रैव हीनपक्षे प्रवृत्तं निगृह्णीयादिति योजना। महता सूत्रपाठेनेति श्रुतहीनो ह्यपरिचयाद्दीर्घसूत्रपाठं कर्त्तुमक्षमः, विज्ञानहीनमिति अज्ञातार्थम्। नानार्थवाचिनेत्यनेकार्थवाचिना। एकविधेनेत्येकविधेन शब्देन प्रतिभाहीनो ह्यनेकार्थं नावधारयति—यत्—केनाभिप्रायेणायं प्रयुक्तोऽनेन शब्द इति। वचनशक्तिहीनोऽर्द्धोक्तवाक्याक्षेपान्न पुनर्वक्तुं क्षमो भवतीति दृष्टम्। अवि-

शारदमपत्रपणेन *, कोपनमायासेन, भीरुं वित्रासनेन, अनवहितं नियमनेनेति। एवमेतैरुपायैरवरमभिभवेत् ॥ १६ ॥

तत्र श्लोकौ।

विगृह्य कथयेद् युक्त्या युक्तश्च न निवारयेत्।
विगृह्य भाषा तीव्रं हि केषाञ्चिद् द्रोहमावहेत् ॥
नाकार्य्यमस्ति क्रुद्धस्य नावाच्यमपि विद्यते।
कुशला नाभिनन्दन्ति कलहं समितौ सताम् ॥ २० ॥

एवं प्रवृत्ते तु वादे †। प्रागेव कार्य्याद्वादात् तावदिदं कर्त्तुं यतेत। सन्धाय परिषदाऽयनभूतमात्मनः प्रकरणमादेशयि-

अपत्रपणेन लज्जाजनकवचनेन। कोपनमायासेन क्लेशजनकवचनेन। भीरुं वित्रासनेन त्रासजनकवचनेन। अनवहितमवधानहीनं नियमनेन नियतवचनेन। परं प्रतिपक्षम्। अवरमधमम् ॥ १९ ॥

गङ्गाधरः—श्लोकेनेममर्थमाह—तत्र श्लोकावित्यादि। विगृह्येत्यादि। उक्तप्रकारेण युक्त्या विगृह्य अवरं कथयेत् जल्पेत्। युक्तं श्रेष्ठं परं विगृह्य न निवारयेत्। ननु कुतो युक्तं न विगृह्य निवारयेदित्यत आह—विगृह्येत्यादि। यतः केषाञ्चिद् विगृह्यसम्भाषा तीव्रं द्रोहमावहेत्। तत् केषामित्यत आह—नाकार्य्यमित्यादि। क्रुद्धस्य किञ्चिदपि अभिशापकलहादिकमकार्य्यं नास्ति। सर्व्वमेव क्रुद्धस्य कार्य्यं भवति तथा क्रुद्धस्य किञ्चिदप्यवाच्यं मातापित्रादीनां दुर्व्वचनेन कलहादिवचनादिकं न वर्त्तते, अपि तु सर्व्वमेव वाच्यं भवति। तस्मात् कुशलाः सज्जनाः पण्डिताः सतां संहिताः कलहं नाभिनन्दन्ति तस्माद् युक्तं विगृह्य न निवारयेत् ॥ २०

गङ्गाधरः—एवं कर्त्तव्ये वादे पूर्व्वं यत् कर्त्तव्यं तदाह—एवमित्यादि। कार्य्यादिति वादादित्यन्वयः। इदं वक्ष्यमाणं परिषदा पारिषदेन सह सन्धाय

शारदमित्यदृष्टसभम्। अदृष्टसभो हि ह्रेपणेनातीव लज्जितः सन् न किञ्चित् प्रतिपद्यते। एवमिति "तद् यथा श्रुतहीनम्" इत्यादिग्रन्थोक्तम्। प्रवृत्ते वादे कुर्य्यादिति च्छेदः।

तथाऽप्रवृत्ते वादे किं कुर्य्यादित्याह—प्रागेवेत्यादि। अयनभूतमिति अभ्यासात्

* अपह्रेपणेनेति वा पाठः। † कुर्य्यात्। इत्यधिकः पाठः क्वचित्।

तव्यम्। यद्वा परस्य भृशदुर्गं स्यात् पक्षं परस्य वा भृशं विमुखम् आनयेत्। परिषदि चोपसंहितायामशक्यमस्माभिर्वक्तुम्, एषैव ते परिषत् यथेष्टं यथायोगं यथाभिप्रायं वादं वाद-मर्य्यादाश्च स्थापयिष्यतीत्युक्त्वा तूष्णीमासीत ॥ २१ ॥

तत्रेदं वादमर्य्यादालक्षणं भवति। इदं वाच्यमिदमवाच्यम् एवं सति पराजितो भवतीति। इमानि तु पदानि खलु भिषग्भि-र्वादमार्गज्ञानार्थमधिगन्तव्यानि भवन्ति। तद् यथा—वादो

सन्धिं कृत्वात्मनो निजस्यायनभूतं परस्य जयार्थं यत् प्रकरणं तत्स्वरूपं भवति, तत् सम्भाषणात् पूर्व्वमादेशयितव्यमादेशेन ज्ञातव्यम्। यः पक्षः परस्य सम्भाष्यस्य दुर्गः स्यात् तं वा पक्षं वादात् पूर्व्वं आनयेत्। पूर्व्वपक्षेण कौशलेन वा उपस्थापयेत्। अथवा परस्य यदतिशयविमुखजनककर्म्म तद्वा कर्म्मानयेत्। परिषदि सभायामुपसंहितायां सन्निकृष्टायां त्वया सहास्माभिः वक्तुं न शक्यमिति काल्पनिकवचसा तूष्णीमासीत, एष ते इत्यादुक्त्वा च तूष्णीमासीत ॥ २१ ॥

गङ्गाधरः—तत्रेदमित्यादि। वादमर्य्यादा वादस्य सीमा तस्या लक्षणम्। ननु वादे कर्त्तव्ये कः पन्थाः कुतो वा वादस्य वर्त्म ज्ञायते इत्यत आह—इमानीत्यादि। पदान्यथयन्ति वर्णात्मकाः शब्दाः अधिगन्तव्यानि अर्थतो विधितश्च ज्ञातव्यानि। ननु कानि पदानि इत्यत आह तद् यथेत्यादि।

मार्गीभूतमिव अभ्यस्तमित्यर्थः। परस्य भृशदुर्गमिति प्रतिवादिनोऽविदिततत्त्वेन दुर्गमिव दुर्गम्, तत् पूर्व्वं सन्धिततया परिषदादेशयेत्। पक्षान्तरमाह—पक्षमथवेत्यादि। परस्य प्रति-वादिनः पक्षं भृशमत्यर्थं सभायां यथा विमुखं भवति, तथा वादं प्रवर्त्तयेत्। एतेन नास्ति पर-लोकः, नास्ति कर्म्मफलमित्यादि यदि परस्य पक्षे भवति, तदैतस्य पक्षस्य स्वाभाविकद्विष्टत्वेन यत्किञ्चित् स्वपक्षसाधनमुच्यते, तदेव परिषदपि गृह्णातीत्युक्तं भवति। उपसंहितायामिति संहितादियुक्तायां तूष्णीमासीतेति योजना। उपसंहिता हि परिषत् परोक्षेणाभिमतत्वेन उप-दर्शितमेव सर्व्वं करिष्यति, तदलमिहात्यर्थवचनेन माहात्म्यखण्डकेनेति भावः ॥ १८—२१ ॥

चक्रपाणिः—वादमर्य्यादालक्षणमाह—तत्रेदमित्यादि। वादशब्देन चेह विगृह्य पक्षप्रति-पक्षवचनमात्रमुच्यते। सन्धायसम्भाषयैव तत्त्वबुभुत्सोर्वाद उक्तः।

द्रव्यं गुणाः कर्म्म सामान्यं विशेषः समवायः प्रतिज्ञा स्थापना प्रतिष्ठापना हेतुर्दृष्टान्त उपनयो निगमनमुत्तरं सिद्धान्तः शब्दः प्रत्यक्षमनुमानमैतिह्यम् औपम्यं संशयः प्रयोजनं सव्यभिचारं जिज्ञासा व्यवसायोऽर्थप्राप्तिः सम्भवोऽनुयोज्यम् अननुयोज्यमनुयोगः प्रत्यनुयोगो वाक्यदोषो वाक्यप्रशंसा

वाद इत्यादि। निग्रहस्थानमितीत्यन्तेन चतुश्चत्वारिंशत्पदानि। गोतमेन षोड़शपदान्युक्तानि। तद् यथा—प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानानां तत्त्वज्ञानान्निःश्रेयसाधिगम इति। तत्र प्रमाणशब्देन चतुश्चत्वारिंशत्पदानां मध्ये प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानीति सूत्रेण प्रत्यक्षानुमानोपमानैतिह्याप्तोपदेशार्थापत्तिसम्भवानां संग्रहः कृतः, प्रमेयशब्देनात्मशरीरेन्द्रियार्थबुद्धिमनःप्रवृत्तिदोषप्रेत्यभावफलदुःखापवर्गास्तु प्रमेयमिति सूत्रेण द्रव्यगुणकर्म्मसामान्यविशेषसमवायानां संग्रहः कृतस्तत्रोक्तशरीरस्य चेष्टेन्द्रियार्थाश्रयः शरीरम्। घ्राणरसनचक्षुस्त्वक्श्रोत्राणीन्द्रियाणि भूतेभ्यः पृथिव्यप्तेजोवाय्वाकाशमिति भूतानि। गन्धरसरूपस्पर्शशब्दाः पृथिव्यादिगुणास्तदर्था इत्येतैः सूत्रैर्विवृतत्वात् तेनैवेति। अवयवपदेन प्रतिज्ञाहेतूदाहरणोपनयनिगमनानां संग्रहः कृतः। परस्परं हि वादे स्वस्वपक्षं स्थापयितुमेव प्रतिज्ञायते। तेन प्रतिज्ञावचनेनैव स्थापनाप्रतिष्ठापनयोः संग्रहः ख्यापितः पृथङ्नोक्तेः। गौतमेनावयवेषूदाहरणोपदेशार्थं दृष्टान्तः पृथगुक्त इह च तथैवेति। शब्दस्याप्तोपदेशैतिह्यप्रमाणवचनस्याप्रमाणवचनस्य च सर्व्वस्यैव वादमार्गज्ञानहेतुत्वेन ग्रहणं कृतम्। गौतमेन तु वेदादिशास्त्रात्मकाप्तोपदेशवचनस्य लौकिकैतिह्यवचनस्य च शब्दस्य दृष्टादृष्टार्थस्य सत्यार्थस्य च संग्रहः कृतो नानृतार्थशब्दस्याप्रामाण्यात् निःश्रेयसाधिगमहेतुत्वाभावाच्च। व्यवसायस्य निर्णयशब्देन गौतमेनोपादानं कृतम्। निग्रहस्थानपदेनाननुयोज्यानुयोगादीनां ग्रहणञ्च कृतम्। तत्र गौतमेन निरनुयोज्यानुयोगशब्देनाननुयोज्यानुयोगः संगृहीतः। तत्राननुयोज्यस्य नान्तरीयकत्वेन सिद्धत्वान्न पृथग्वचनं कृतम्। एवं पर्य्यनुयोज्याक्षेपणशब्देनानुयोज्याननुयोगस्य संग्रहः। स हि प्रत्यनुयोग उच्यते। तत्र चावान्तरीयकत्वादनु-

सम्प्रति वादमार्गज्ञानार्थं वादाभिक्षेयानि द्रव्यगुणादीन्युपदर्शयन्नाह—इमानीत्यादि। भिषजां

च्छलम् अहेतुरतीतकालमुपालम्भः परिहारः प्रतिज्ञाहानिरभ्यनुज्ञा हेत्वन्तरमर्थान्तरं निग्रहस्थानमिति ॥ २२ ॥

तत्र तु वादो नाम स यत् परः परेण सह शास्त्रपूर्व्वकं विगृह्य कथयति। स च द्विविधः—संग्रहेण जल्पो वितण्डा च,

योऽयस्य न पृथगवचनं कृतमिति। तन्त्रेऽस्मिन् वाक्यदोषनाम्ना न्यूनाधिकानर्थकापार्थकविरुद्धानां पञ्चानामुक्त्या गौतमोक्तानां न्यूनाधिकपुनरुक्तनिरर्थकापार्थकाप्राप्तकालापसिद्धान्तानां हेत्वाभासान्तर्गतविरुद्धस्य च संग्रहः कृतः। गौतमेन तु हेत्वाभासशब्देन सव्यभिचारविरुद्धप्रकरणसमसाध्यसमातीतकालानामुक्त्या प्रकरणसमवर्ण्यसमसंशयसमानामहेतूनां त्रयाणामतीतकालस्य सव्यभिचारस्यात्र संग्रहः कृतः। अभ्यनुज्ञाया मतानुज्ञाशब्देन गौतमेन संग्रहः कृतः। अविज्ञातार्थाप्रतिभाननुभाषणाज्ञानविक्षेपाणामत्रोक्तनिग्रहस्थाननाम्ना संग्रहः कृतः। वाक्यदोषाणां निरर्थकादीनां ग्रहणेन वाक्यप्रशंसा नाम न्यूनाधिकार्थवदनपार्थकविदितार्थानां लाभान्न पृथगुक्तिः गौतमेन कृता। कृतश्चार्थापत्तिसम्भवयोरनुमानेऽन्तर्भावः। जिज्ञासामन्तरेण वादप्रवृत्तिर्न स्यादित्यतो जिज्ञासा च न पृथगुक्ता तेन। उपालम्भपरिहारयोः गौतमेन जातिशब्देन संग्रहः कृतः ॥ २२ ॥

गङ्गाधरः—अथोद्दिष्टानां वादादीनां मध्ये वादस्वरूपज्ञानमन्तरेण न वादमार्गज्ञानं सम्भवतीति प्रथमतो वादस्योक्तस्य स्वरूपलक्षणमाह—तत्र वादो नामेत्यादि। तत्र वादादिषु मध्ये स वादो नाम यत् परः परेण सह विगृह्य कथयतीति विगृह्यसम्भाषाया वादविशेषस्य लक्षणम्, न तु वादस्य सामान्यलक्षणम्। तत् तु सम्भाषाशब्देनान्वर्थकेन परस्परं प्रमाणतः स्थापना प्रतिषेधाभ्यां पक्षप्रतिपक्षपरिग्रहो वाद इति ख्यापितम्। सा सम्भाषा द्विधा सन्धायसम्भाषा विगृह्यसम्भाषा चेत्युक्तम्। गौतमेन तु वादलक्षणमुक्तम्। तद् यथा—प्रमाणतर्कसाधनोपालम्भः सिद्धान्ताविरुद्धः पञ्चावयवोपपन्नः पक्षप्रतिपक्षपरिग्रहो वाद इति। व्याख्यातञ्चैतद्वात्स्यायनेन तत् प्रतिसंस्कृत्य प्रदर्श्यते।

वादमार्गो भिषग्वादमार्गः। वादादयः स्वयमेवाचार्य्येणाग्रे विव्रियन्त इति नेह संज्ञाकथने विव्रियन्ते ॥ २२ ॥

चक्रपाणिः—तत्रेत्यादिना वादलक्षणम्। इह 'वाद'शब्देन विगृह्य वादोऽभिप्रेतः, तत्र

प्रत्यक्षादिप्रमाणेष्वनुमानघटकत्वेन प्रामाण्यसिद्धावपि तर्कस्य प्रमाणोपसंगृहीतत्वाद्गौतमेन प्रमाणान्तरत्वाभावाच्च प्रमाणानामनुग्राहकत्वात् तु पृथगुक्तिः कृता। तेन प्रमाणैस्तर्केण च यत्र पक्षप्रतिपक्षपरिग्रहे साधनोपालम्भौ क्रियेते स प्रमाणतर्कसाधनोपालम्भः पक्षप्रतिपक्षपरिग्रहः सिद्धान्ताविरुद्धः स्वतन्त्रप्रतितन्त्राधिकरणाभ्युपगमसिद्धान्तैरविरुद्धः सिद्धान्तमभ्युपेत्य तद्विरोधी विरुद्धो न चेद्भवति। पञ्चावयवोपपन्नश्च भवति तदा स वाद उच्यते। तत्र सिद्धान्ताविरुद्ध इति वचनेन हेत्वाभासनिग्रहस्थानानामभावो वादे ज्ञापितः। पक्षप्रतिपक्षयोः परिग्रहो ह्यभ्युपगमव्यवस्था। पक्षः प्रतिज्ञा। वादिनोर्द्वयोः पक्षयोरेकाधिकरणयोर्धर्म्मयोः परस्परोपघातिभावे प्रतिपक्षता। तौ च द्वौ पक्षौ परस्परं प्रतिपक्षौ। तत्र यः पूर्व्वः पक्षः स खलु वादप्रवर्त्तकत्वात् पक्ष उच्यते, परस्तु पक्षस्तद्विरोधित्वात् प्रतिपक्ष उच्यते। यथा पूर्व्वमेकः प्रतिजानीते। वह्निरुष्ण इति। अपरः प्रतिजानीते वह्निरनुष्ण इति। इत्येवं पक्षप्रतिपक्षयोः परिग्रहे प्रमाणेन तर्केण च साधनं स्वपक्षस्थापनापरपक्षस्योपालम्भः प्रतिषेध एवं ताभ्यां विधीयते। तद् यथा—सिद्धान्ताविरोधेन पञ्चभिरवयवैश्च न न्यूनाधिकैः पञ्चभ्योऽवयवेभ्यः। तत्र पूर्व्वपक्षं वह्निरुष्ण इति स्वप्रतिज्ञातं वादी हेतूदाहरणोपनयनिगमनैः स्थापयति सिद्धान्तचतुष्टयाविरोधेन। तत्र वह्निरुष्ण इत्यत्राह प्रतिवादी—कस्मात्? तत्राह वादी—दहनात्। क इवेत्याह प्रतिवादी। तत्राह वादी—आतपवत्। कथमित्याह प्रतिवादी। तत्राह वादी यथातप उष्णः स च दहति—तथा वह्निर्दहति; तस्मादुष्णो वह्निरिति प्रत्यक्षेण प्रमाणेन तर्केण च स्वपक्षसाधनमतोऽनुष्णत्वप्रतिषेधो लभ्यते। इत्येवं पक्षपरिग्रहः सर्व्वसिद्धान्ताविरुद्धः पञ्चावयवोपपन्नश्च। प्रतिवादी तु तत्प्रतिषिध्य स्वपक्षं स्थापयति। न वह्निरुष्ण इति प्रतिषिध्याह वह्निरनुष्णः। तत्राह वादी कस्मादिति। रूपमात्रलिङ्गत्वादित्याह प्रतिवादी। तत्राह वादी क इवेति। तत्र प्रतिवादी चाह यथा वायुः। कथमित्याह वादी। प्रतिवादी चाह वायुर्यथा स्पर्शमात्रलिङ्गः स चानुष्णस्तथा वह्निश्च रूपमात्रलिङ्गः, तस्मादनुष्ण इति। आप्तोपदेशप्रमाणेन तर्केण च वह्नेः रूपमात्रलिङ्गत्वं सर्व्वसिद्धान्तसिद्धं निर्णीयानुष्णत्वमनुमानेन तर्केण च स्थापयित्वा प्रतिषिद्धमुष्णत्वं वह्नेः प्रतिवादिनेति प्रतिपक्षपरिग्रहोऽपि सर्व्वसिद्धान्ताविरुद्धः

बुभुत्सुवादस्तु सन्धायसम्भाषयैवोक्तः। शास्त्रपूर्व्वकमित्यनेनार्थादिकलहवादं निषेधयति। तत्र वादे विगृह्य सम्भाषारूपत्वादेव च्छलजातिनिग्रहस्थानानां विजिगीषाप्रवृत्तानां प्रयोगो लभ्यते।

**तत्र पक्षाश्रितयोर्वचनं जल्पः, जल्पविपर्य्ययो वितण्डा।**

पञ्चावयवोपपन्नः। नावयवैर्हीनोऽधिको वेति। परस्परमप्रतिघातिनौ स्वैकाधिकरणौ धर्म्मौ न प्रतिपक्षौ। तौ हि पक्षौ न प्रमाणतर्काभ्यां परस्परं स्थापनाप्रतिषेधवन्तौ पञ्चावयवोपपत्तावपि। यथा पूर्व्वमेकः प्रतिजानीते वह्निरद्रव इति। अपरः प्रतिजानीते वह्निरुष्ण इति। पक्षप्रतिपक्षवचनेन उक्तिप्रत्युक्तिमत्संकथाया वादत्वनिरासः। यथा भो घटमानयेत्युक्त आह—घटमानयामीति। अथैकः प्रतिजानीते वह्निर्द्रव इति। अपरः प्रतिजानीते वह्निरद्रव इति। तौ हि पक्षौ परस्परमुपघातिभावात् प्रतिपक्षौ ततः पक्षप्रतिपक्षभावेऽपि प्रमाणतर्काभ्यां पञ्चावयवैः सिद्धान्ताविरोधेन स्थापनाया अभावान्न तयोः परिग्रहो वाद इति। इत्येवं वादस्य सामान्यलक्षणमन्वर्थसम्भाषाशब्देन ख्यापयित्वा विगृह्यसम्भाषालक्षणमुक्तम्। तत्र वादो नामेत्यादि। वादो वादविशेषो विगृह्यसम्भाषा नाम स यत् परः परेण सह विगृह्य कथयति। अत्र विग्रहो वाग्युद्धं छलजातिनिग्रहस्थानैः प्रकरणात् तद्विद्यायाम्। पर एकः पुरुषस्तद्विद्यः परेणान्येन तद्विदेन पुरुषेण सह विगृह्य तद्विद्यायां योधयित्वा प्रमाणतः स्वपक्षं हेत्वादिभिः स्थापयित्वा परपक्षं दूषयित्वा स्वपक्षं न स्थापयित्वा परपक्षं दूषयित्वैव वा यत् कथयति अभ्युपगम्य व्यवस्थापयति तत्कथनं वादः, वादविशेषो विगृह्यसम्भाषाभिधीयते।

तं विभजते—स चेत्यादि। स च विगृह्य वादः संग्रहेण सङ्क्षेपेण द्विविधो भेदप्रकृत्यन्तरबाहुल्येऽपि जल्पत्ववितण्डात्वभेदात् जल्पश्च वितण्डा चेति। जल्पं लक्षयति—तत्रेत्यादि। तत्र जल्पवितण्डयोर्मध्ये पक्षाश्रितयोर्जल्प इति। परस्परमुपघातिनौ खल्वेकाधिकरणौ धर्म्मौ पक्षौ द्वावाश्रितयोर्वादिप्रतिवादिनोर्वादः प्रमाणतः स्थापनाप्रतिषेधवत् सिद्धान्ताविरुद्धं हेतुदृष्टान्तोपनयनिगमनैरन्यनानधिकैरुपपन्नं छलजातिनिग्रहस्थानैर्विगृह्य स्थापनाप्रतिषेधकथनं जल्पः। न तु च्छलजातिनिग्रहस्थानसाधनोपालम्भो जल्पः। न हि च्छलजातिनिग्रहस्थानैः कस्यचिदर्थस्य साधनं सम्भवति। प्रतिषेधो ह्यर्थस्यैषां सामान्यलक्षणैः श्रूयते। वचनविघातोऽर्थविकल्पोपपत्त्या च्छलमिति साधर्म्म्यवैधर्म्म्याभ्यां प्रत्यवस्थानं जातिः। विप्रतिपत्तिरप्रतिपत्तिश्च निग्रहस्थानम् इति। तस्मात् प्रमाणतः साधनोपालम्भवत्सिद्धान्ताविरुद्धं हेत्वादिभिः

पक्षाश्रितयोरिति पक्षं साधयतोरित्यर्थः। तेन वितण्डायामभ्युत्तरवादिनः परपक्षदूषणलक्षणस्य

यथैकस्य पक्षः पुनर्भवोऽस्ति, नास्तीत्यपरस्य। तौ च स्वस्वपक्ष-हेतुभिः स्वस्वपक्षं स्थापयतः परपक्षमुद्भावयतः, एष जल्पस्तद्-

अन्यूनानधिकैरुपपन्नं पक्षप्रतिपक्षाश्रितयोश्छलजातिनिग्रहस्थानैर्विगृह्य स्वस्व-पक्षस्य स्थापनापूर्व्वकं परपक्षदूषणकथनं जल्पः। जल्पस्याङ्गानि विग्रहे छलजातिनिग्रहस्थानानि। तैर्हि परपक्षं विहत्य स्वपक्षं स्थापयति। प्रति-पक्षप्रतिषेधश्च छलजातिनिग्रहस्थानैः परप्रतिषेधविघातेन स्वपक्षं यत् रक्षति तत्र सहकारीणि भवन्ति छलजातिनिग्रहस्थानानीति जल्पे विग्रहस्याङ्गानि छलजातिनिग्रहस्थानानि भवन्ति, न तु स्वातन्त्र्येण साधनानि भवन्ति। गौतमेनाप्येवमुक्तम्। यथोक्तोपपन्नश्छलजातिनिग्रहस्थानसाधनोपालम्भो जल्पः। यथोक्तोपपन्न इति वादलक्षणोक्तोपपन्नः। प्रमाणतर्कसाधनोपालम्भः सिद्धान्ताविरुद्धः पञ्चावयवोपपन्नः पक्षप्रतिपक्षपरिग्रहश्छलजातिनिग्रहस्थान-साधनोपालम्भो जल्प इति। छलजातिनिग्रहस्थानैः साधनं स्थापना उपालम्भः प्रतिषेधः एतौ यत्र क्रियेते स छलजातिनिग्रहस्थानसाधनोपालम्भ इति। न तु छलजातिनिग्रहस्थानोपालम्भो यथोक्तोपपन्न इति, तथाविधा तु वितण्डा इति। अवयवेषु प्रमाणतर्कान्तर्भावेऽपि यत् पुनः प्रमाणतर्कयोः पृथग्ग्रहणं तत् साधनोपालम्भव्यतिषङ्गज्ञापनार्थम्। अन्यथोभाववां पक्षौ स्थापनाहेतुना प्रवृत्तौ वादः स्यादिह जल्पः स्याच्च। अवयवसम्बन्धमन्तरेणापि प्रमाणान्यर्थं साधयन्तीति दृष्टम्। प्रमाणतर्कसाधनोपालम्भो वाद एवेति प्रतिषेधार्थं छलजातिनिग्रहस्थानसाधनोपालम्भ एव जल्प इति प्रतिषेधार्थश्च पृथक् प्रमाणतर्कग्रहणमिति। एवं निग्रहो जल्प इति प्रतिषेधार्थं छलजाति-निग्रहस्थानसाधनोपालम्भ इति वचनमिति वात्स्यायनव्याख्यानम्।

जल्पमुदाहरति स्वयम्। यथैकस्येति। पुनर्भवोऽस्तीत्येकस्य पक्षः, नास्ति पुनर्भव इत्यपरस्य पक्षः। तौ च वादिप्रतिवादिनौ पुनर्भवोऽस्तीति वादी पुनर्भवो नास्तीति प्रतिवादी स्वस्वपक्षहेतुभिर्हेतुदृष्टान्तोपनयनिगमनैः स्वस्वपक्षं स्थापयतः परपक्षमुद्भावयतः प्रतिषेधयत एष जल्पः। तद् यथा— अस्ति पुनर्भव इति वादी ब्रूते। अस्ति पुनर्भव आत्मनित्यत्वात्। तिस्रैषणीये खल्वात्मनो नित्यत्वं प्रत्यक्षानुमानयुक्तिभिराप्तोपदेशेन च स्थाप-

पक्षोऽस्त्येव, परं स्वमतं न साधयतीति भेदः। यथैकस्येत्यादि जल्पोदाहरणम्। परपक्ष

विपर्य्ययो वितण्डा। वितण्डा नाम परपक्षदोषवचनमात्र-मेव ॥ २३ ॥

यित्वा नास्ति पुनर्भव इति पक्षप्रतिषेधः कृतः। तत्र दृष्टान्तः। यथापवर्गोऽप्राणी घटादिर्वा। यथा कर्म्मफलानुबन्धाभावादात्मा दुःखजन्मतो मुच्यते न पुनर्भवति तथा पुनर्भवहेतुकर्म्मफलानुबन्धादात्मा पुनर्भवति न दुःखजन्मनो मुच्यते। यथात्महीनो घटादिर्न पुनर्भवति न तथा सात्मकः पुरुषो न पुनर्भवति। तस्मादस्ति पुनर्भव इति, न तु नास्ति पुनर्भव इति। अथ नास्ति पुनर्भव इति, वादी ब्रूते नास्ति पुनर्भव इति। कस्मादिति? तत्राह प्रत्यक्षमात्रप्रमाण-वादी, परोक्षत्वात् पुनर्भवस्य। यथा नास्ति मोक्ष इति। अस्ति पुनर्भव आत्मनित्यत्वात्। प्रतिवादी चाह नास्ति पुनर्भवोऽनित्यत्वादात्मनः। तत्र वादी चाह—अस्ति पुनर्भवो नित्यत्वादात्मनः, आत्मा हि कर्म्मफलेन नित्यानु-बन्धः। पुनः प्रतिवादी चाह। नास्ति कर्म्मफलमतो नात्मा कर्म्मफलानुबन्धः तस्मान्नास्ति पुनर्भवः। तत्र पुनर्वादी ब्रूते। अस्ति कर्म्मफलम्, नास्ति हि तत् कर्म्म यस्य फलं नास्ति। तस्मात् कर्म्मफलानुबन्धादात्मनः पुनर्भवो-ऽस्तीत्येवं जल्पः। इति।

वितण्डां लक्षयति। जल्पविपर्य्ययो वितण्डेति। एतामुदाहरति। तद्विपर्य्ययो वितण्डा। तर्हि किं स्वस्वपक्षस्थापनामात्रं परपक्षाप्रतिषेधेन यत् कथयति सा वितण्डेत्यत आह—वितण्डा नामेत्यादि। परपक्ष-दोषवचनमेव वितण्डा नाम स्वपक्षस्थापनाहीनमिति। तथा चोक्तं गौतमेन। सप्रतिपक्षस्थापनाहीनो वितण्डा। व्याख्यातमिदं वात्स्यायनेन। पक्षः पक्ष इति प्रतिपक्षं यौ हि समानाधिकरणौ विरुद्धौ धर्म्मौ पक्षप्रतिपक्षावुक्तौ तयोरेकतरपक्षस्थापनाहीनो जल्पो वितण्डा। तथा च। प्रमाणतर्कोपालम्भः सिद्धान्ताविरुद्धः पञ्चावयवोपपन्नः पक्षप्रतिपक्षपरिग्रहश्छलजातिनिग्रहस्थानो-पालम्भो वितण्डेति पर्य्यवसीयते। वैतण्डिको हि स्वपक्षं न स्थापयति परपक्ष-प्रतिषेधेनैव प्रवर्त्तते। इति। अस्त्वेवं यद्द तत्परपक्षप्रतिषेधवचनं तदेव वैतण्डि-कस्य पक्ष इति न त्वसौ कञ्चिदर्थं साध्यं निर्दिश्य स्थापयतीति बोध्यमिति ॥२३

दोषवचनमात्रमित्यनेन न स्वपक्षसाधनवचनं वैतण्डिकस्येति दर्शयति। 'पूर्व्वमुक्ता वीर्य-भीतिरिये ॥ २३ ॥

द्रव्यगुणकर्म्मसामान्यविशेषसमवायाः स्वलक्षणैः श्लोकस्थाने पूर्व्वमुक्ताः ॥ २४ ॥

गङ्गाधरः—वादमुक्त्वा वाद्यानाह—द्रव्येत्यादि। द्रव्यगुणकर्म्मसामान्यविशेषसमवायाः स्वलक्षणैः श्लोकस्थाने प्रथमाध्याये पूर्व्वमुक्ता इति व्याख्यातास्ते विस्तरेण तत्रैव। शिष्याणां व्यवसायार्थं स्मरणार्थञ्चात्र पुनर्द्रव्यादयः स्वलक्षणैः सङ्क्षेपेण व्याख्यायन्ते। तद् यथा—पूर्व्वमुक्तं द्रव्यगुणकर्म्मणां लक्षणम्। यत्राश्रिताः कर्म्मगुणाः कारणं समवायि तत्। तद् द्रव्यं समवायी तु निश्चेष्टः कारणं गुणः। संयोगे च विभागे च कारणं द्रव्यमाश्रितम्। कर्त्तव्यस्य क्रिया कर्म्म कर्म्म नान्यदपेक्षते। इति। कारणमित्युक्तया कार्य्यस्येत्युक्तं यस्य कार्य्यस्यारम्भे यत्समवायिकारणं विक्रियमाणं कार्य्यं वर्त्ति तत्र विक्रियमाणे यत्र कारणे कार्य्यत्वमापद्यमाने कर्म्मगुणा आश्रिताः स्युस्तदेव तस्य कार्य्यस्य समवायिकारणं तस्य कार्य्यस्य द्रव्यं भवति। यत्र तु कारणे कार्य्यारम्भे कर्म्मगुणा आश्रिता न भवन्ति तद्यत् कारणं कार्य्ये समवायिकार्य्यरूपेण परिणमद् एकीभवति तत् कारणं तस्य कार्य्यस्य न द्रव्यमिति। तद् यथा—पृथिव्यापस्तेजोवायुर्मनश्चेति पञ्च सक्रियाणि स्वरूपतः। स्वरूपतश्च निष्क्रियाणि चत्वारि आत्मा कालो दिगाकाशश्चेति। तत्र कतिधापुरुषीये शारीरे वक्ष्यते। आत्मा निष्क्रियस्तत्र प्रश्नः। निष्क्रियस्य क्रिया तस्य भगवन् विद्यते कथमिति। तत्रोत्तरमुक्तम्। अचेतनं क्रियावच्च चेतश्चेतयिता परः। युक्तस्य मनसा तस्य निर्द्दिश्यन्ते विभोः क्रियाः॥ इति। कार्य्यारम्भे पृथिव्यादिभिः सक्रियैः इतरैश्चाक्रियैः सह संयोगेऽन्योन्यानुप्रवेशादन्योन्यानुग्रहात् पुनःपुनः संयोगविभागाभ्यामावर्त्तनादन्योन्यस्य क्रियागुणमेलनाद्विक्रियमाणान् क्रियागुणान् आश्रित्यात्मकालदिगाकाशवायुतेजोऽम्बुपृथिव्यः कार्य्यं समवयन्तीति क्रियागुणवत् समवायिकारणान्यात्मादीनि नवैव द्रव्याण्युच्यन्ते। तत्र च तदानीं तेषां क्रियागुणाश्च विक्रियमाणाः क्रियागुणान् विशेषरूपेण जायमानान् गुरुत्वादीन् गन्धादींश्च नाश्रित्यैव समवयन्तीति क्रियागुणाश्रयत्वाभावान्न द्रव्याण्युच्यन्ते। तदा हि सङ्ख्यापरिमाणपृथक्त्वगुणाश्रयः सन् समवाय्यपि रूपरसादिर्भावो निश्चेष्टः क्रियाहीन एव रूपरसाद्यन्तरारम्भे कारणं रूपरसाद्यन्तरमारभमाणः समवैति कार्य्ये इति निश्चेष्टः समवायी सन् कारणं भवति स गुण उच्यते, न द्रव्यं द्रव्यस्य लक्षणे कर्म्मगुणा इति कर्म्मपदोपादानात्। महाभूतेषु पृथि-

व्यादिषु पूर्व्वं गुरुत्वादयो विंशतिर्गुणा अनभिव्यक्ताः पञ्चभूतस्थाः कार्य्यकाले संयोगात् तेभ्योऽभिव्यज्यन्ते । तद्गुणाश्रयः सन् रूपरसादिन कार्य्ये समवायी भवति सङ्ख्याविशेषपरिमाणविशेषपृथक्त्वाश्रयः संस्तु कार्य्ये समवायी स्यादिति ज्ञापनार्थं निश्चेष्ट इत्युक्तं न निर्गुण इत्युक्तम् । कर्म्माणि च पृथिव्यादिष्ववक्षेपणोत्क्षेपणप्रसारणादीनि तत्कार्य्यारम्भे पुनःपुनः संयोगविभागे नवानां द्रव्याणां कृत्वा तानि द्रव्याणि तांश्च गुणान् परिणमय्य परिणम्यमानान्येकीभूय स्वस्वविरोधीनि कर्म्माणि भूत्वा तत्र तत्र कर्म्मणि समवयन्तीति विकृतिभूतकर्म्माश्रया कर्त्तव्यस्य क्रिया तषां कर्म्मणां कर्म्म यतोऽन्यत् कर्म्म कर्त्तव्यस्य क्रिया नापेक्षते स्वप्रकृतिकर्म्मभ्य एव जायते क्रियाहेतुकर्म्म कर्म्मवन्न तु तदा गुणवत्तया जायते । एकत्वपृथक्त्वपरिमाणगुणाः प्रकृतिभूता एव सर्व्वत्र वर्त्तन्ते न कार्य्यकाले विक्रियमाणाः कर्म्मण्याश्रितास्तस्माच्च द्रव्यम् । न च गुणः सचेष्टत्वादिति । एतदभिप्रायेण कणादेनाप्युक्तं वैशेषिकशास्त्रे । क्रियागुणवत्समवायकारणमिति द्रव्यलक्षणम् । द्रव्याश्रय्यगुणवान् संयोगविभागेष्वकारणमन्यापेक्षो गुण इति । इह समवायिकारणमित्यनुवर्त्तते । उभयत्र गुणशब्देन कार्य्यकाले जायमानगुणो विवक्षित इति ज्ञापनार्थं पुनरुक्तं गुणोऽपि विभाव्यते गुणेनापीति । तेन षड़् रसास्त्रीणि रूपाणि पञ्च कर्म्माणि । दुग्धादिक्षोमधुरोऽधिकः । आम्रस्य रूपात् पृथग्रसः । इत्येवमादि । कर्म्म पुनर्द्रव्याणां संयोगविभागेषु कार्य्यकाले कर्म्मान्तरमनपेक्ष्यैव कारणं सद् यद्द्रव्याश्रयि चागुणवत्समवायिकारणं तत् कर्म्म । तथा चोत्क्षेपणादीनि पञ्चकर्म्माणि तेजःप्रभृतिद्रव्याश्रयीणि । न च गुरुत्वादिगुणवन्ति न भूमिकार्य्ये समवायीनि भवन्ति सङ्ख्यापरिमाणपृथक्त्वानि चाश्रित्यैवेति । त्रिवृतो विरेचनात् कर्म्मणो राजवृक्षस्य विरेचनं कर्म्म न्यूनमिति मृदुविरेचनमुच्यते राजवृक्षस्य मृदुत्वात् । स्नुहीक्षीरस्य विरेचनमधिकमिति तीक्ष्णं विरेचनमुच्यते स्नुह्यास्तीक्ष्णत्वात् । एवं त्रिवृतो विरेचनात् पृथक् स्नुहीक्षीरविरेचनमिति । एतदर्थकं कर्म्मलक्षणमिह तन्त्रे पूर्व्वमुक्तम् । संयोगे च विभागे च कारणं द्रव्यमाश्रितम् । कर्त्तव्यस्य क्रिया कर्म्म कर्म्म नान्यदपेक्षते ॥ इति । कर्त्तव्यस्य कार्य्यस्य द्रव्यमाश्रितं खल्वन्यत् कर्म्म नापेक्ष्य कार्य्यारम्भे द्रव्याणां संयोगे च विभागे च कारणं या क्रिया समवायिकारणं भवति तत् कर्म्म । इति । भ्रान्तास्त्वाहुर्गुणकर्म्मणी न समवायिकारणे भवतस्ते चासमवायिकारणे इति तदनार्षमयौक्तिकञ्च । द्रव्याणि हि सजातीयं

द्रव्यान्तरमारभन्ते गुणाश्च गुणान्तरं न विजातीयम्। कर्म्म तु न कर्म्मसाध्यं विद्यते। क्वचित् सजातीयं क्वचिद्विजातीयं स्वविरोधि कर्म्म यदारभते तत्कारणभूतकर्म्मप्रकृतिकमेव कार्य्यभूतं कर्म्म स्यात्। तत्र प्रकृतिभूतं कर्म्मैव समवेत्य कार्य्यभूतकर्म्मतया निष्पद्यते तथा प्रकृतिभूतद्रव्यस्था गुणाश्च प्रकृतिभूताः समवेत्य कार्य्यभूतसजातीयगुणान्तररूपेण निष्पद्यन्त इति कथमसमवायिकारणे गुणकर्म्मणी भवत इत्यतस्तदयौक्तिकमनार्षञ्चासाधु इति। सामान्यविशेषौ च पूर्व्वमुक्तौ। सर्व्वदा सर्व्वभावाणां सामान्यं वृद्धिकारणम्। ह्रासहेतुर्विशेषश्च प्रवृत्तिरुभयस्य तु। सामान्यमेकत्वकरं विशेषश्च पृथक्त्वकृत्। तुल्यार्थता हि सामान्यं विशेषस्तु विपर्य्यय इति। परस्परतुल्यार्थता सामान्यं तद्विपर्य्ययः परस्परमतुल्यार्थता विशेष इति सामान्यविशेषौ परस्परबुद्ध्यपेक्षौ। सामान्यबुद्ध्यपेक्षो विशेषो विशेषबुद्ध्यपेक्ष्यं सामान्यम्। तच्च द्रव्यत्वं गुणत्वं कर्म्मत्वञ्च सामान्यञ्च विशेषश्चान्यत्रान्त्येभ्यो विशेषेभ्य इति। कार्य्येषु च द्रव्येषु द्रव्यारब्धेषु द्रव्यञ्च सामान्यं गुणश्च सामान्यं कर्म्म च सामान्यं विशेषश्च द्रव्यं गुणश्च कर्म्म चेति। सत्ता चास्ति द्रव्यगुणकर्म्मसु सामान्यञ्च विशेषश्च। सदिति यतः सा सत्ता द्रव्यगुणकर्म्मसु न समवाये। सत्ता हि भावो भावानामनुवृत्तेरेव हेतुत्वात्। भावानाम् आरम्भकद्रव्यसंयोगे यावदारम्भकद्रव्यगुणकर्म्मणां कार्य्यरूपेण परिणमतां सर्व्वेषां मेलनेनैकत्वकरोऽपृथग्भावः समवायः खलु भावानां भावः सत्ता ततो ह्यनुवर्त्तते कार्य्यभूतो भावः। यावन्तं कालं स च समवायो वर्त्तते, तावन्तं कालमनुत्तरं कालं द्रव्यं गुणः कर्म्म च वर्त्तते। समवायस्य तु वर्त्तनं यत् कार्य्ये तदपि स्वरूपेणैव न तु समवायेनेति समवायस्य सत्ता नास्ति। स्वयं हि सत्ता तस्मात् सामान्यविशेषौ न द्रव्यगुणकर्म्मसमवायेभ्योऽतिरिक्तौ। यैस्त्वनृषिभिरतिरिक्तौ सामान्यविशेषावुच्येते कथं तैर्द्रव्यगुणकर्म्मस्वेव सत्तास्ति न समवायेऽस्तीत्युच्यते। सदिति यतः सा सत्तेति चेत् तदा समवायोऽप्यस्तीति सदिति कुतश्चिदपि कारणाद्भवति सैव समवायस्यापि सत्ता सम्भवति। कथं द्रव्यगुणकर्म्मस्वेव सत्ता न समवायेऽस्तीति वक्तुमर्हन्ति। तस्मात् समवायः सत्ताद्रव्यगुणकर्म्मसु न समवाये, समवाये समवायाभावात्। इति। समवायस्तूक्तः समवायोऽपृथग्भाव इति। द्रव्यगुणकर्म्मणामारम्भकाणामपृथक्त्वं समवायस्तदपृथक्त्वकृच्च सामान्यं पृथक्त्वकृत् तु विशेषः। द्रव्यसामान्यं गुणसामान्यं कर्म्मसामान्यञ्च तेषां

अथ प्रतिज्ञा। प्रतिज्ञा नाम साध्यवचनं, यथा—नित्यः पुरुष इति ॥ २५ ॥

मेलनं तु समवायः करोतीति सामान्यमेकत्वकरमित्युक्तम्। तत्रैकत्वमपृथक्त्वं, पृथक्त्वं स्यादसंयोगो वैलक्षण्यमनेकता न त्वेकता। इति। तथा च समवायो नित्यश्चानित्यश्च। नित्ये द्रव्ये भूम्यादौ भूत गुणस्य समवायो नित्यः, द्रव्यारब्धद्रव्ये त्वनित्यो देवनरादौ। तत्र समानानेकेषु सत्ता सामान्यं यथा गोत्वादिकं तत्तदेकैकेषु सत्ता जन्म सत्ता विशेषः। तत्राकृतिग्रहणा सत्ता जातिः। तत्तदेकैकस्मिन् जन्म। तदुक्तं—जातिः सामान्यजन्मनोरिति। अनाकृतिग्रहणा तु सत्ता न जातिसंज्ञया व्यवह्रियते, सत्तैवोच्यते सामान्यविशेषरूपेनि तत्त्वम् ॥ २४ ॥

गङ्गाधरः—इति वादेन वाद्यानुक्त्वा यैर्वादः कर्त्तव्यस्तान् वक्तु' प्रथमं प्रतिज्ञामाह—अथ प्रतिज्ञे ति। वादे कर्त्तव्ये प्रथमं प्रतिज्ञायते। सा प्रतिज्ञाऽभिधीयते। प्रतिज्ञा नाम साध्यवचनमिति। वादिनः प्रज्ञापनीयेन धर्म्मेण विशिष्टस्य धर्म्मिणः साध्यस्य परिग्रहवचनं साध्यनिर्द्देशः प्रतिज्ञा नामोच्यते। गौतमेनाप्युक्तम्। साध्यनिर्द्देशः प्रतिज्ञा इति। वात्स्यायनेन व्याख्यातमिदम्। प्रज्ञापनीयेन धर्म्मेण धर्म्मिणो विशिष्टस्य परिग्रहवचनं प्रतिज्ञा साध्यनिर्द्देशः। अनित्यः शब्द इति। स्वयञ्चोदाहरति। यथा नित्यः पुरुष इति। अत्र नित्यत्वेन प्रज्ञापनीयेन धर्म्मेण विशिष्टस्य धर्म्मिण आत्मनः परिग्रहोऽभ्युपगम्य व्यवस्थोक्तिः प्रतिज्ञा। न च निगमनं साध्यवचनम्। यतो हेत्वपदेशात् प्रतिज्ञायाः पुनर्व्वचनं निगमनम्। प्रथमं साध्यवचनं प्रतिज्ञे ति। भ्रान्तास्तु व्याचक्षते—पक्षतावच्छेदकधर्म्मविशिष्टे पक्षे साध्यतावच्छेदकधर्म्मविशिष्टस्य वैशिष्ट्यबोधकः शब्दः प्रतिज्ञे ति। अत्र निगमनस्य प्रतिज्ञात्वप्रसङ्गवारणाय साध्यांशे साध्यतावच्छेदकातिरिक्तप्रकारकत्वं वक्तव्यम्। तेन साध्यतावच्छेदकप्रकारताविलक्षणप्रकारताशून्यसाध्यनिर्द्देशः प्रतिज्ञा। इति पर्य्यवसितम्। तेन पुरुषः प्रमेयवानित्यादौ पुरुषे साध्यस्य प्रमेयस्य द्रव्यगुणादेरवच्छेदकद्रव्यत्वगुणत्वादिप्रकारतातो विलक्षणनीलादिप्रकारता शून्यत्वेन निर्द्देशाभावप्रसिद्धिः। उदासीनवाक्यस्य प्रतिज्ञात्ववारणाय न्यायान्तर्गतत्वे सतीति विशेषणीयम्। न्यायस्तु पञ्चावयववाक्यात्मकत्वम्। तथा च। न्यायान्तर्गतत्वे सति प्रकृत-पक्षतावच्छेदकावच्छिन्न-पक्षक-प्रकृत-साध्यतावच्छेदकावच्छिन्न-साध्यविधेयता

**अथ स्थापना। स्थापना नाम तस्या एव प्रतिज्ञाया हेतु-दृष्टान्तोपनयनिगमनैः स्थापना। पूर्व्वं हि लोके प्रतिज्ञा, पश्चात्**

विलक्षणविषयताववोधाजनकत्वे च सति प्रकृतपक्षकप्रकृतसाध्यबोधजनकत्वं प्रतिज्ञात्वम्। तच्च प्रतिज्ञात्वमवयवत्वञ्च परिभाषाविशेषविषयत्वरूपं तद्व्यक्तित्व-रूपं वेति। तदसाधु। प्रवृत्ते हि वादे वादिनोरन्यतरः पुमान् खल्वेकः पूर्व्वं प्रतिजानीते, न त्वप्रवृत्ते वादे प्रतिज्ञा भवति। ततो वादे प्रतिज्ञास्थापना-वाक्यस्यावयवत्वेन प्रतिज्ञाया लाभे कथमुदासीनवाक्यस्य प्रतिज्ञात्वं प्रसज्यते। निगमनञ्च न साध्यनिर्द्देशः परन्तु हेत्वपदेशात् प्रतिज्ञायाः पुनर्व्वचनमिति। एवं साध्यस्य निर्द्देशो वर्णात्मकेन वाक्येन क्रियते इति तद्वाक्यं न प्रतिज्ञा, तत् कथं तथाविधः शब्दः प्रतिज्ञा भवति। प्रतिज्ञेति पुनरन्वर्थसंज्ञा। प्रति इत्थम्भावेन जानीते यत् सा प्रतिज्ञा। पक्षश्च वात्स्यायनेनोक्तः। वादिनोः पक्षप्रतिपक्षौ समानाधिकरणौ विरुद्धौ धर्म्मौ तयोरन्यतरः पक्षः स च किञ्चित् वस्तुनिष्ठः प्रज्ञापनीयो धर्म्म एव न तु तद्धर्म्मविशिष्टो धर्म्मी। अनित्यः पुरुष इत्येकस्य पक्षः। अपरस्य नित्यः पुरुष इति। उभयोः पक्षः किं पुरुषः। नैवं, प्रज्ञापनीयधर्म्मविशिष्टः पुरुष इति। तर्हि नित्यत्वधर्म्मविशिष्टस्य पुरुषस्य वादिपक्षस्यावच्छेदको धर्म्मः किं नित्यत्वमथवा पुरुषत्वमनित्यत्वधर्म्मविशिष्टस्य तस्यैव पुरुषस्य प्रतिवादिपक्षस्यावच्छेदको धर्म्मः किमनित्यत्वमथवा पुरुषत्वम्? तत्र पुरुषत्वमात्रं चेत् पक्षतावच्छेदको धर्म्मस्तदोभौ पक्षौ तुल्यौ भवतो न पक्ष-प्रतिपक्षौ भवत इति। यदि नित्यत्वं पुरुषस्य पक्षतावच्छेदकमनित्यत्वं प्रति-वादिपक्षस्य पक्षतावच्छेदकं तदा तन्नित्यत्वानित्यत्वावच्छेदकधर्म्मविशिष्टे पक्षे पुरुषे साध्यतावच्छेदकधर्म्मविशिष्टं किं पुरुषे नित्यत्वं वादिपक्षे, प्रति-वादिपक्षे त्वनित्यम्; तत्र नित्यत्वस्यानित्यत्वस्य चावच्छेदको धर्म्मः को भवति। यद्धर्म्मविशिष्टस्य पक्षे पुरुषावच्छिन्ने वैशिष्ट्यं बोधयेच्छब्दः। इति। नित्यत्व-स्यानित्यत्वस्यावच्छेदकधर्म्मस्याप्रसिद्धत्वात्तल्लक्षणमसाधु। न ह्यनार्षं सर्व्वं साधु भवति। तथा च तद्व्याख्यानं भ्रान्तकृतमसाधुत्वादग्राह्यम्॥ २५॥

गङ्गाधरः—वादी प्रतिज्ञाय किं कुर्य्यादित्यत उक्तम्—अथ स्थापनेति। वादिना प्रतिज्ञाय स्थापना कार्य्या। का पुनः स्थापनेत्यत आह—स्थापना नामेत्यादि। तस्या एव पूर्व्वकृताया एव प्रतिज्ञाया हेतुदृष्टान्तोपनयनिगमनैः

चक्रपाणिः—स्थापयति सिद्धमर्थं परं प्रति साधयतीति स्थापना। तत्र साध्यं परं प्रति

**स्थापना, किं ह्यप्रतिज्ञातं स्थापयिष्यति ? यथा—नित्यः पुरुष इति प्रतिज्ञा, हेतुः—अकृतकत्वादिति । दृष्टान्तो यथाकाशमिति । उपनयो यथा चाकृतकमाकाशं तथा पुरुष इति, निगमनं तस्मान्नित्य इति ॥ २६ ॥**

स्थापना स्थिरीकरणं स्थापना नामेहोच्यते । सा द्विधा, दृष्टान्तसाधर्म्म्येण हेतुना वैधर्म्म्येण च हेतुना । तत्र तस्या एव पूर्व्वकृतायाः प्रतिज्ञायाः प्रज्ञापनेन खलूपलब्धिकारणेन प्रत्यक्ष्यानुमानैतिह्यौपम्यान्यतमेन दृष्टान्तसामान्यात् साधयित्वा तत्प्रतिज्ञातार्थसामान्याच्च दृष्टान्तमुदाहृत्य तद्दृष्टान्तापेक्षेण तथेत्युपसंहारेणोपनीय हेत्वपदेशात् तत्प्रतिज्ञायाः पुनरुक्तिकरणं दृष्टान्तसाधर्म्म्योपदर्शनं स्थापना । एवं तस्या एव च प्रतिज्ञायाः प्रज्ञापनेनोपलब्धिकारणेन प्रत्यक्षानुमानैतिह्यौपम्यान्यतमेन दृष्टान्तविधर्म्मणा साधयित्वा साध्यवैधर्म्म्येण दृष्टान्तमुदाहृत्य तद्दृष्टान्तापेक्षेण साध्यस्य न तथेत्युपसंहारेणोपनीयहेत्वपदेशात् तस्या एव प्रतिज्ञायाः पुनरुक्तिकरणं दृष्टान्तवैधर्म्म्योपदर्शनं स्थापना । कस्मादेवं स्थापयेदित्यत आह—पूर्व्वं हीत्यादि । हि यस्माल्लोके पूर्व्वं प्रतिज्ञा क्रियते पश्चात् तस्याः प्रतिज्ञायाः स्थापना क्रियते, अन्यथा प्रतिज्ञाभ्रंशेन निग्रहस्थाने पतेत् । तर्हि प्रतिज्ञां कृत्वैव स्थापयेत् । न चेत् स्थापयितुं शक्नोति निग्रहस्थाने च पतेदित्यत आह—किं हीत्यादि । हि यस्मात् । किमप्रतिज्ञातं स्थापयिष्यतीति परन्तु प्रतिज्ञातमेवार्थं स्थापयतीति । तत् स्थापनां दर्शयति—यथेत्यादि । नित्यः पुरुष इति वादिनः प्रतिज्ञा । तत्र हेतुरकृतकत्वात् । अकृतकत्वं पुरुषस्य मातापितृकृतत्वेन दृष्टत्वेऽप्यैतिह्यप्रमाणेन प्रज्ञापितम् । य एष एष पुरुषो देवनरादियोनिषु जायते स न केनापि कृत इत्याप्ता उपदिशन्ति । एष हेतुर्दृष्टान्तसाधर्म्म्यात् पुरुषनित्यत्वसाधकः । कः पुनरिह दृष्टान्त इत्यत आह—दृष्टान्त इत्यादि । यथाकाशमिति । आकाशसमानधर्म्मवत्त्वेन पुरुषस्य नित्यत्वसाधकोऽकृतकत्वमिति हेतुः । इति दृष्टान्तसाधर्म्म्यादकृतकत्वेन हेतुना पुरुषस्य नित्यत्वं साधयित्वाकाशेन दृष्टान्तेन उदाहृत्य तदुपनयति—तत्रोपनय इति । दृष्टान्तापेक्षं साध्यसाधर्म्म्ययुक्ते दृष्टान्ते तदनुसारेण तथेत्युपसंहारो यथा । यथा चाकृतकमाकाशं नित्यं

हेत्वादिभिश्चतुर्भिः क्रियते, प्रतिज्ञापि परं प्रति स्थापना भवति । यतः पञ्चावयवमेवानुमानं

**अथ प्रतिष्ठापना। प्रतिष्ठापना नाम तस्या एव प्रतिज्ञायाः प्रति विपरीतार्थस्थापना। यथा—अनित्यः पुरुष इति विपरीतार्थप्रतिज्ञा, हेतुरैन्द्रियकत्वादिति। दृष्टान्तो यथा—घट इति, उपनयो यथा—घट ऐन्द्रियकः स चानित्यस्तथा चायमिति, निगमनं तस्मादनित्य इति॥ २७॥**

तथा पुरुषोऽकृतक इत्युपसंहारः। ततः किमित्यत आह—निगमनमिति। तत्र निगमनं हेतोरपदेशेनानेन कारणेनैवमित्येवमपदेशेन प्रतिज्ञायाः पुनरुक्तिस्तस्मान्नित्य इति। तस्मादकृतकत्वहेत्वाकाशदृष्टान्ततदुपनया इति समुदायात् कारणान्नित्यः पुरुष इति स्थापना दृष्टान्तसाधर्म्म्योपदर्शना। दृष्टान्तवैधर्म्म्योपदर्शनस्थापना तु प्रदर्श्यते। नित्यः पुरुषोऽकृतकत्वाद्, यथा घटः सकृतकोऽनित्यः इति दृष्टान्तवैधर्म्म्येणाकृतकत्वमिति हेतुः। तद्घटदृष्टान्तापेक्ष उपसंहारस्तूपनय इह। यथा घटः कृतकः स चानित्यो न तथा पुरुषः कृतकः तस्मान्नित्यः पुरुष इति निगमनं हेत्वपदेशात् प्रतिज्ञायाः पुनरुक्तिरिति। इति स्थापना दर्शिता॥ २६॥

गङ्गाधरः—अथ प्रतिष्ठापनेति यदुक्तं तद् दर्श्यते—अथ प्रतिष्ठापनेति। एवंवादिना प्रतिज्ञास्थापनायाः कृताया अनन्तरं प्रतिवादिनः प्रतिष्ठापना कार्य्या। का पुनः प्रतिष्ठापनेत्यत आह—प्रतिष्ठापना नामेत्यादि। तस्याः पूर्व्वकृताया एव वादिनः प्रतिज्ञायाः प्रतीति विपरीतार्थस्य प्रतिवादिना स्थापना प्रतिष्ठापना नामोच्यते। सापि पूर्व्ववद् द्विधा। तदुदाहरति—यथेत्यादि। अनित्यः पुरुष इति वादिकृताया नित्यः पुरुष इति प्रतिज्ञाया विपरीतार्थोऽनित्यः पुरुष इति प्रतिज्ञा प्रतिवादिनः। तस्याः स्थापना यथा हेत्वादिभिः क्रियते तदाह—हेतुरैन्द्रियकत्वादिति। ऐन्द्रियकत्वमिन्द्रियग्राह्यत्वमिति हेतुर्दृष्टान्तसाधर्म्म्यात्। प्रत्यक्षः पुरुषानित्यत्वसाधकः। कः पुनरिह तथाविधो दृष्टान्त इत्यत आह—दृष्टान्त इति। यथा घट इति। अनित्यपुरुषस्य साध्यस्य साधर्म्म्यात् तदनित्यत्वधर्म्मभावी दृष्टान्तो घटश्चैन्द्रियक इत्युदाहरण-

करोति, सा त्विह स्थाप्यत्वेनैव लब्धेति न स्थापनायामिहोदाहृता। 'प्रतिष्ठापना'पदं प्रथमं सम्प्रत्यवसरप्राप्त्या प्रतिष्ठापना इति दर्शयति, द्वितीयन्तु प्रतिष्ठापना नामेति तस्या एव इत्यादिना वक्ष्यमाणस्य लक्षणस्योपदर्शनार्थम्। एवं स्थापना नामेत्यादावपि पुनरुक्तस्य प्रयोजनं

अथ हेतुः । हेतुर्नामोपलब्धिकारणं, तत्प्रत्यक्षमनुमानम् ऐतिह्यमौपम्यमित्येभिर्हेतुभिर्यदुपलभ्यते तत् तत्त्वम् ॥ २८ ॥

साधर्म्म्यण पुरुषानित्यत्वस्य साधकमैन्द्रियकत्वमिति। कथं साध्यस्य दृष्टान्तसाधर्म्म्यमित्यत आह—उपनय इत्यादि। यथा घट ऐन्द्रियकः स चानित्यस्तथा चायं पुरुष इति। दृष्टान्तापेक्षस्तथेत्युपसंहारः पुरुषानित्यत्वस्योपनयः। ततः किमित्यत आह—निगमनमिति। किं निगमनमित्यत आह—तस्मादनित्यः पुरुष इति निगमनम्। तस्मादिति हेत्वपदेशात् ऐन्द्रियकत्वादिति हेतोरनेन कारणेनैवमिति यथा घट इति दृष्टान्तेन यथा घट ऐन्द्रियकः स चानित्यस्तथा पुरुष ऐन्द्रियक इत्येवमपदेशात् तस्या एव प्रतिज्ञाया अनित्यस्य पुरुषस्य पुनरुक्तिरिति। इति दृष्टान्ते साध्यसाधर्म्म्योपदर्शनप्रतिष्ठापना। साध्यवैधर्म्म्योपदर्शनप्रतिष्ठापना तु दर्श्यते। अनित्यः पुरुष ऐन्द्रियकत्वात् यथा परमाणुरनैन्द्रियकः स च नित्यः; यथा च परमाणुरनैन्द्रियकः स च नित्यो, न तथा पुरुषस्तस्मादनित्यः पुरुष इति। तर्हि तत्रकर्त्तुः किं न्यूनतेति नाशङ्कयम्। दृष्टान्तो हि द्विविधः साध्यसाधर्म्म्यवैधर्म्म्याभ्यां तद्धर्म्मभाववान्। इति वक्ष्यते॥ २७॥

गङ्गाधरः—ननु हेतुदृष्टान्तोपनयनिगमनैस्तस्या एव प्रतिज्ञायाः स्थापना स्थापनेति यदुक्तम्, तत्र को हेतुः को वा दृष्टान्तः क उपनयः किं निगमनम् इत्यतोऽभिहितं हेतुर्दृष्टान्त उपनयो निगमनमिति यत् तत् क्रमेणाह—अथ हेतुरिति। अत्र स्थापनायां हेतुः। हेतुर्नामोपलब्धिकारणमिति प्रतिज्ञाया उपलब्धिकारणं हेतुर्नामोच्यते न तूत्पत्तिकारणम्। किं किं पुनरुपलब्धिकारणमित्यत आह—तत्प्रत्यक्षमित्यादि। अनुमाने तर्कार्थापत्तिसम्भवाभावानामन्तर्भावः कृतः। ऐतिह्यं लोके वेदे च पारम्पर्य्योपदेशः। औपम्यम् उपमा। प्रतिज्ञास्थापनायामुपनय-रूपावयव-विशेषत्वेनोपलब्धि-हेतुत्वादिह वादप्रकरणे पृथगुक्तम्। ननु किमेषामुपलब्धिकारणत्वमिति तदाह—एभिर्हेतुभिर्यदुपलभ्यते तत् तत्त्वमिति। यदिति उपलब्धिक्रियाविशेषणम्।

वाच्यम्। 'प्रतिष्ठापना' पदगतस्य 'प्रति'शब्दस्यार्थं व्याकरोति—विपरीतार्थस्थापनेति 'प्रति'शब्दोऽयं विपरीतार्थ इत्यर्थः। इयञ्च प्रतिष्ठापना आन्वीक्षिक्यां प्रकरणसमाख्यं हेतुदूषणम्॥ २४—२७॥

चक्रपाणिः—हेतुश्चाविनाभावलिङ्गवचनं यद्यपि तथापीह लिङ्गप्रग्राहकाणि प्रत्यक्षादिप्रमाणान्येव यथोक्तहेतुमूलत्वेन 'हेतु'शब्देनाहेति बोद्धव्यम्, अन्यथा पुनः प्रत्यक्षाद्यभिधानं पुनरुक्तं

अथ दृष्टान्तः। दृष्टान्तो नाम स यत्र मूर्खविदुषां बुद्धिसाम्यं तेनैव यो वर्ण्यं वर्णयतीति। यथाग्निरुष्णो द्रवमुदकं स्थिरा

उपलभेरथस्तु प्रमाबुद्ध्यनुकूलगुणदोषविचारादिव्यापारः। हानोपादानोपेक्षा बुद्धिः प्रमा, फलं तदुपलब्धिकारणं व्यवसायात्मिका निश्चयबुद्धिः प्रत्यक्षादिः। तस्या निश्चयात्मिकाया बुद्धेर्व्यापारो वस्तूनां व्यवसातव्यानां गुणतो दोषतो विचारस्तद्व्यापारवत्त्वात् प्रत्यक्षादिव्यवसायात्मकबुद्धीनां करणत्वं तदेव व्यापारवत्त्वं प्रत्यक्षादीनामुपलब्धिकारणत्वमिति। तद्विचारादिजनकव्यापार-वत्त्वादात्मा कर्त्ता। न तु प्रत्यक्षाद्यन्यतमत्वमुपलब्धिकारणत्वं प्रमाणत्वम्। सर्व्वप्रमाणेष्वसत्त्वात् सामान्यं हि तन्न भवति, प्रमाणत्वं हि सर्व्वप्रमाणनिष्ठं सामान्यं न तु विशेषः, प्रत्यक्षाद्यन्यतमत्वन्तु विशेष इति। यथा—वह्निमान् पर्व्वतो धूमादिति प्रत्यक्षो हेतुर्धूमः। अयमातुरो मन्दाग्नित्वादिति जरण-शक्त्यानुमितो मन्दाग्निर्हेतुः। नित्यः पुरुषोऽकृतकत्वादित्यैतिह्यो हेतुरकृतकत्वम्। अस्य मुखं कान्ततमं चन्द्रोपमत्वादित्यौपम्येन हेतुरिति। एतदुपलब्धि-कारणचतुष्टयं दृष्टान्तसाधर्म्म्यवैधर्म्म्याभ्यां साध्यसाधनमिति। तच्च गौत-मेनाप्युक्तम्। उदाहरणसाधर्म्म्यात् साध्यसाधनं हेतुस्तथा वैधर्म्म्यात्। व्याख्यातञ्च वात्स्यायनेन। उदाहरणेन सामान्यात् साध्यस्य धर्म्मस्य साधनं प्रज्ञापनं हेतुः। साध्ये प्रतिसन्धाय धर्म्ममुदाहरणे च प्रतिसन्धाय तस्य साधनतावचनं हेतुः। अनित्यः शब्द उत्पत्तिधर्म्मकत्वादिति। उत्पत्ति-धर्म्मकमनित्यं दृष्टमिति। किमेतावद्धेतुलक्षणमिति नेत्युच्यते। किं तर्हि तथा वैधर्म्म्यात्। उदाहरणवैधर्म्म्याच्च साध्यसाधनं हेतुः। कथम्। अनित्यः शब्द उत्पत्तिधर्म्मकत्वात्। अनुत्पत्तिधर्म्मकं नित्यं यथात्मादिद्रव्य-मिति ॥ २८ ॥

गङ्गाधरः—अथ क्रमिकत्वाद् दृष्टान्तं लक्षयति। अथ दृष्टान्त इत्यादि। यत्र मूर्खविदुषां बुद्धिसाम्यं यो वर्ण्यं वर्णयति स दृष्टान्तो नामोच्यते। यत्र

स्यात्। उपलब्धिकारणमिति व्यापकस्य साध्यस्योपलब्धिकारणम्। तत्तत्त्वमिति तल्लिङ्ग-मित्यर्थः ॥ २८ ॥

चक्रपाणिः—मूर्खविदुषां बुद्धिसाम्यमित्यनेन लौकिकानां पण्डितानाञ्च योऽर्थोऽविवाद-सिद्धः, स दृष्टान्तो भवति, न पण्डितमात्रसिद्धः। योऽपि लोकप्रसिद्धो दृष्टान्त उच्यते, स यावन्न प्रतिपाद्यपुरुषं प्रति साध्यते, न तावत् दृष्टान्ततामासादयतीति

**पृथिवी आदित्यः प्रकाशक इति, यथा आदित्यः प्रकाशकस्तथा साङ्ख्यं ज्ञानं प्रकाशकमिति ॥ २६ ॥**

वर्णनीयेऽर्थे मूर्खा लोकसाम्यमनतीता नैसर्गिकं वैनयिकं बुद्ध्यतिशयमप्राप्ता लौकिका उच्यन्ते तद्विपरीताः परीक्षकाः प्रमाणैरर्थं परीक्षितुं प्रभवन्ति। ते तु विद्वांसः समं बुध्यन्ते तथाविधं वर्ण्य यो वर्णयति स दृष्टान्तः सर्व्वत्र गृह्यते। तत्र यो दृष्टान्तः साध्यसाधर्म्म्यवैधर्म्म्याभ्यां तद्धर्म्मभावी स इह स्थापनाप्रतिष्ठापनयोर्ग्राह्यः। तत्र च यः साध्यसाधर्म्म्यात् तद्धर्म्मभावी स ...न्तो, यस्तु साध्यवैधर्म्म्यात् तद्धर्म्मभावी स व्यतिरेकी दृष्टान्त इति द्विविध ... दर्शितः। स्थापनाप्रतिष्ठापनाभ्यामन्यत्र यथा दृष्टान्तस्तमुदाहरति। ...थाग्निरुष्णः। द्रवमुदकम्। स्थिरा पृथिवी। आदित्यः प्रकाशक इति मूर्खाश्च बुध्यन्ते विद्वांसश्च बुध्यन्ते। तत्र यथादित्यः प्रकाशकस्तथा साङ्ख्यं ज्ञानमिति। आदित्य इति मूर्खविदुषां बुद्धिसाम्यविशिष्टं वर्ण्य साङ्ख्यं ज्ञानं प्रकाशकमिति वर्णयतीति दृष्टान्त उच्यते। गौतमेनाप्युक्तम्। लौकिक-परीक्षकाणां यस्मिन्नर्थे बुद्धिसाम्यं स दृष्टान्तः। इति। व्याख्यातञ्च वात्स्यायनेन। लोकसाम्यमनतीतालौकिकानैसर्गिकं वैनयिकं बुद्ध्यतिशयम् अप्राप्तास्तद्विपरीताः परीक्षकास्तर्केण प्रमाणैरर्थं परीक्षितुमर्हन्तीति। यथायमर्थं लौकिका बुध्यन्ते तथा तं परीक्षका अपि। सोऽर्थो दृष्टान्तः। दृष्टान्त-विरोधेन हि प्रतिपक्षाः प्रतिषेद्धव्या भवन्तीति। दृष्टान्तसमाधिना च स्वपक्षाः स्थापनीया भवन्तीति। अवयवेषु चोदाहरणाय कल्पते इति। स यथोदा-हरणायावयवेषु कल्पते तथोक्तं पुनस्तत्रैव। साध्यसाधर्म्म्यात् तद्धर्म्मभावी दृष्टान्त उदाहरणम् तद्विपर्य्ययाद्वा विपरीतम्। व्याख्यातञ्चैतद्वात्स्यायनेन। साध्येन साधर्म्म्यं समानधर्म्मता। साध्यसाधर्म्म्यात् कारणात् तद्धर्म्म-भावी दृष्टान्त इति। तस्य धर्म्मस्तद्धर्म्मः तस्य साध्यस्य। साध्यञ्च द्विविधम्। धर्म्मिविशिष्टो वा धर्म्मो यथा शब्दस्यानित्यत्वम्। धर्म्मविशिष्टो वा धर्म्मी, यथा अनित्यः शब्द इति। इहोत्तरं तद्ग्रहणे न गृह्यते। कस्मात्? पृथग्धर्म्मवचनात्। तस्य धर्म्मस्तद्धर्म्मस्तस्य भावस्तद्भावः, स यस्मिन् दृष्टान्ते वर्त्तते स दृष्टान्तः साध्यसाधर्म्म्यात् तद्धर्म्मभावी भवति; स चोदाहरणम्

भावः। अथ बुद्धिसाम्यमात्रे न साध्यसाधर्म्मग्रभावादिष्टत्वात् दृष्टान्तो भवतीत्याह—यो वर्ण्यं वर्णयति यः साध्यं साधयतीत्यर्थः। प्रसिद्धसाध्यसाधनसम्बन्धश्च दृष्टान्तः साध्यं साधयतीति भावः।

उपनयो निगमनश्चोक्तं स्थापनाप्रतिष्ठापनाव्याख्यायाम् ॥३०

इष्यते। तत्र यदुत्पद्यते तदुत्पत्तिधर्म्मकम्। तच्च भूत्वा न भवति, आत्मानं जहाति निरुध्यते इत्यनित्यम्। एवमुत्पत्तिधर्म्मकं साधनम्, अनित्यत्वं साध्यम्। सोऽयमेकस्मिन् द्वयोर्धर्म्मयोः साध्यसाधनभावः साधर्म्म्याद्व्यवस्थितम् उपलभ्यते। तं दृष्टान्ते उपलभमानः शब्देऽप्यनुमिनोति। शब्दोऽप्युत्पत्तिधर्म्मकत्वादनित्यः, स्थाल्यादिवदित्युदाह्रियते। तेन धर्म्मयोः साध्यसाधनभाव इति। उदाहरणं तद्विपर्य्ययाद्वा विपरीतम्। उदाहरणमिति प्रकृतम्। साध्यवैधर्म्म्यात् तद्धर्म्मभावी दृष्टान्तो वा विपरीतमुदाहरणमिति। अनित्यः शब्दः, उत्पत्तिधर्म्मकत्वात्। यथाऽनुत्पत्तिधर्म्मकं नित्यमात्मादि। सोऽयम् आत्मादिदृष्टान्तः साध्यवैधर्म्म्यादनुत्पत्तिधर्म्मकत्वात् तद्धर्म्मभावी। योऽसौ साध्यस्य धर्म्मोऽनित्यत्वं शब्दस्य स तस्मिन् भवतीति। अत्रात्मादौ दृष्टान्ते उत्पत्तिधर्म्मकत्वस्याभावादनित्यत्वं न भवतीत्युपलभमानः शब्दे विपर्य्यय अनुमिनोति। उत्पत्तिधर्म्मकत्वस्य भावादनित्यः शब्द इत्युदाहरणसाधर्म्म्योक्तस्य हेतोः साध्यसाधर्म्म्यात् तद्धर्म्मभावी दृष्टान्त उदाहरणम्। उदाहरणवैधर्म्म्योक्तस्य हेतोः साध्यवैधर्म्म्याच्च तद्धर्म्मभावी दृष्टान्त उदाहरणम् पूर्व्वस्मिन् दृष्टान्ते यौ धर्म्म्यौ साध्यसाधनभूतौ पश्यति, साध्येऽपि तयो साध्यसाधनभावमनुमिनोति। उत्तरस्मिन् दृष्टान्ते ययोर्धर्म्मयोरेकस्याभावादितरस्याभावं पश्यति, तयोरेकस्याभावादितरस्याभावं साध्येऽप्यनुमिनोति, तदेतद्धेत्वाभासेषु न सम्भवतीति। अहेतवो हेत्वाभासास्तदिदं हेतूदाहरणयोः सामर्थ्यं परमसूक्ष्मं दुःखबोधं पण्डितैरुपवेदनीयमिति ॥ २९ ॥

गङ्गाधरः—क्रमिकत्वादुपनयनिगमने आह—उपनय इत्यादि। स्थापनाव्याख्यायामुपनयो निगमनश्चोक्तम्। यथा नित्यः पुरुषोऽकृतकत्वात्, यथाकाशम्। उपनयो यथा चाकृतकमाकाशं तच्च नित्यं तथा पुरुष इति। निगमनं तस्मान्नित्य इति। प्रतिष्ठापनाव्याख्यायाञ्चोपनयो निगमनश्चोक्तम्। यथा अनित्यः पुरुष ऐन्द्रियकत्वात्। दृष्टान्तो यथा घटः। उपनयो यथा घट ऐन्द्रियकः, स चानित्यस्तथाचायमिति। निगमनं तस्मादनित्य इति। इत्येवं व्याख्यानेन ज्ञापितमिदं साध्यसाधर्म्म्यात् तद्धर्म्मभाविदृष्टान्तापेक्षस्तथेत्युपसंहारः साध्यस्य

अन्नादयश्च लोकप्रसिद्धत्वेनोदाहृताः। तेन एतेषामपि साध्यसाधनोदाहरणमादित्यादिवत् कश्चिद् ब्रूयाद् ऽयमयमिवेति दर्शयति ॥ २९।३० ॥

उपनयः। साध्यवैधर्म्म्यात् तद्धर्म्मभाविदृष्टान्तापेक्षो न तथेत्युपसंहारश्च साध्यस्योपनय इति। गौतमेनाप्युक्तम्। उदाहरणापेक्षस्तथेत्युपसंहारो न तथेति वा साध्यस्योपनय इति व्याख्यातश्च वात्स्यायनेन। उदारणापेक्ष उदाहरणतन्त्र उदाहरणवशः। वशः सामर्थ्यम्। साध्यसाधर्म्म्ययुक्ते खलूदाहरण स्थाल्यादिद्रव्यम् उत्पत्तिधर्म्मकत्वमनित्यत्वञ्च दृष्टम्। तथा शब्द उत्पत्तिधर्म्मक इति साध्यस्य शब्दस्योत्पत्तिधर्म्मकत्वमुपसंह्रियते। साध्यवैधर्म्म्ययुक्त पुनरुदाहरणे आत्मादिद्रव्येऽनुत्पत्तिधर्म्मकत्वम्। नित्यत्वञ्च दृष्टम्। न च तथा शब्द इति अनुत्पत्तिधर्म्मकत्वस्य प्रतिषेधेनोत्पत्तिधर्म्मकत्वमुपसंह्रियते। तदिदमुपसंहारद्वैतमुदाहरणद्वैतं भवति। उपसंह्रियतेऽनेनेत्युपसंहारो वेदितव्य इति। द्विविधस्य हेतोर्द्विविधस्योदाहरणस्योपसंहारद्वैतञ्च समानमिति। अथ निगमनञ्चोक्तं यत् तस्मान्नित्य इति स्थापनायां तस्मादनित्य इति प्रतिष्ठापनायां ताभ्यामेवं ज्ञापितम्। यद्धेत्वपदेशात् प्रतिज्ञायाः पुनर्व्वचनं तन्निगमनमिति। गौतमेनाप्येवमुक्तम्। हेत्वपदेशात् प्रतिज्ञायाः पुनर्व्वचनं निगमनमिति। व्याख्यातञ्च वात्स्यायनेन। साधर्म्म्योक्ते वैधर्म्म्योक्ते वा यथोदाहरणमुपसंह्रियते। तस्मादुत्पत्तिधर्म्मकत्वादनित्यः शब्द इति निगमनम्। निगम्यन्तेऽनेनेति प्रतिज्ञाहेतूदाहरणोपनया एकत्रेति निगमनमिति। निगम्यन्ते समर्थ्यन्ते संबध्यन्ते। तत्र साधर्म्म्योक्ते तावद्धेतौ वाक्यम्। अनित्यः शब्दः इति प्रतिज्ञा। उत्पत्तिधर्म्मकत्वादिति हेतुः। उत्पत्तिधर्म्मकं स्थाल्यादिद्रव्यमित्युदाहरणम्। तथा चोत्पत्तिधर्म्मकः शब्द इत्युपनयः। तस्मादुत्पत्तिधर्म्मकत्वादनित्यः शब्द इति निगमनम्। वैधर्म्म्योक्तेऽपि अनित्यः शब्द उत्पत्तिधर्म्मकत्वात्। अनुत्पत्तिधर्म्मकमात्मादिद्रव्यं नित्यं दृष्टं, न च तथानुत्पत्तिधर्म्मकः शब्द इत्युपनयः तस्मादुत्पत्तिधर्म्मकत्वादनित्यः शब्द इति। अवयवसमुदाये च वाक्ये सम्भूयेतरेतराभिसम्बन्धात् प्रमाणान्यर्थं साधयन्तीति। सम्भवस्तावत् शब्दविषया प्रतिज्ञा। आप्तोपदेशस्य प्रत्यक्षानुमानाभ्यां प्रतिसन्धानात्। अनृषेश्च स्वातन्त्र्यानुपपत्तेः अनुमानं हेतुः उदाहरणे सादृश्यप्रतिपत्तेः। तत्रोदाहरणं भाष्ये व्याख्यातम्। प्रत्यक्षविषयमुदाहणम्, दृष्टेनादृष्टसिद्धेः। उपमानमुपनयस्तथेत्युपसंहारात्. न च तथेत्युपमानधर्म्मप्रतिषेधे विपरीतधर्म्मोपसंहारसिद्धेः। सर्व्वेषामेकार्थप्रतिपत्तौ सामर्थ्यप्रदर्शनं निगमनमिति। इतरेतराभिसम्बन्धोऽपि। असत्यां हि प्रतिज्ञायामनाश्रया हेत्वादयो न प्रवर्त्तेरन्। असति हेतौ कस्य साधनभावः प्रदर्श्यते। उदाहरणे साध्ये च कस्योपसंहारः

स्यात्। कस्य चापदेशात् प्रतिज्ञायाः पुनर्व्वचनं निगमनं स्यादिति। असत्युदाहरणे केन साधर्म्म्यं वैधर्म्म्यं वा साध्यसाधनमुपादीयेत। कस्य वा साधर्म्म्यवैधर्म्म्यवशादुपसंहारः प्रवर्त्तेत। उपनयश्चान्तरेण साध्येऽनुपसंहृतः साधको धर्म्मो नार्थं साधयेत्। निगमनाभावे चानभिव्यक्तसन्धानानां प्रतिज्ञादीनामेकार्थेन प्रवर्त्तनम्। तथेति प्रतिपादनं कस्येति। अथावयवार्थः साध्यस्य धर्म्मस्य धर्म्मिणा सम्बन्धोपादानं प्रतिज्ञार्थः। उदाहरणेन समानस्य विपरीतस्य वा धर्म्मस्य साधकभाववचनं हेत्वर्थः। धर्म्मयोः साध्यसाधनभावप्रदर्शनमेकत्र उदाहरणार्थः। साधनभूतस्य धर्म्मस्य साध्येन धर्म्मेण सामानाधिकरण्योपपादनमुपनयार्थः। उदाहरणस्थयोर्धर्म्मयोः साध्यसाधनभावोपपत्तौ साध्ये विपरीतप्रसङ्गप्रतिषेधार्थं निगमनम्। न चैतस्यां हेतूदाहरणविशुद्धौ सत्यां साधर्म्म्यवैधर्म्म्याभ्यां प्रत्यवस्थानस्य विकल्पाच्च। इति निग्रहस्थानबहुलं प्रक्रमते। अव्यवस्थाप्य खलु साध्यसाधनभावमुदाहरणे जातिवादी प्रत्यवतिष्ठते। व्यवस्थिते तु खलु धर्म्मयोः साध्यसाधनभावे दृष्टान्तस्थे गृह्यमाणे साधनभूतस्य धर्म्मस्य हेतुत्वेनोपमानं न साधर्म्म्यमात्रस्य न वैधर्म्म्यमात्रस्य वेति। प्रतिज्ञासाध्यवचनमित्युक्त्वा अथ स्थापना, स्थापना नाम तस्या एव प्रतिज्ञाया हेतुदृष्टान्तोपनयनिगमनैः स्थापनेति वचनेन ज्ञापितं वादिनोर्वादवाक्यस्य प्रतिज्ञादयः पञ्चैवावयवा न त्वधिका इति। तत्रैके त्वाहुर्वादिनोर्वादवाक्यस्य ते च प्रतिज्ञादयः पञ्च पञ्च चापरे जिज्ञासासंशयशक्यप्राप्तिप्रयोजनसंशयव्युदासा दशैतेऽवयवा भवन्ति। जिज्ञासा ह्यप्रतीयमानेऽर्थे संशयिते च प्रवर्त्तिका योऽर्थस्त्वप्रतीयमानः संशयितो वा तमर्थं ज्ञातुमिच्छति तत्त्वतो हि ज्ञात्वा तमर्थं हास्यति वोपादास्यति वोपेक्षिष्यते वेति। हानोपादानोपेक्षान्यतमा बुद्धिः तत्त्वज्ञानाद्भवति। तदर्थं जिज्ञासते। संशयश्च जिज्ञासाधिष्ठानम्। यत्रार्थे संशयः स्यात् तमर्थं जिज्ञासते। शक्यप्राप्तिश्च प्रमातुः प्रमेयार्थाधिगमार्थं प्रमाणानि। प्रयोजनं तत्त्वावधारणमधारणतो हि हेयं जहाति वोपादेयमुपादत्ते वोपेक्ष्यं वोपेक्षते। संशयव्युदासः प्रतिपक्षोपवर्णनं तत् प्रतिषेधार्थं भवति। इति। अत्र सिद्धान्त उक्तो वात्स्यायनेन। प्रतिज्ञादयः पञ्चैवार्थसाधकत्वाद् वादिनोर्वादे साधकवाक्यस्यावयवा भागा एकदेशा इत्यनर्थान्तरम्। न तु जिज्ञासादयः साधकवाक्यस्यावयवाः अर्थसाधकत्वाभावात्। जिज्ञासा ह्यप्रतीयमानस्यार्थस्य संशयितस्य च पदार्थस्य प्रत्ययार्थं प्रवर्त्तिका न तु साधिका। तस्मात् साधकवाक्यस्य नावयवः। संशयोऽपि व्याहतधर्म्मोपघातार्थं तत्त्व-

अथोत्तरम् । उत्तरं नाम साधर्म्म्योपदिष्टे हेतौ वैधर्म्म्यवचनम्, वैधर्म्म्योपदिष्टे वा हेतौ साधर्म्म्यवचनम् । यथा हेतुसधर्म्माणो विकाराः, शीतकस्य हि व्याधेर्हेतुभिः साधर्म्म्यं हिमशिशिरवात-संस्पर्शा इति ब्रुवतः परो ब्रूयात्—हेतुविधर्म्माणो विकाराः;

ज्ञाने प्रत्यासन्नो न त्वर्थस्य साधक इति तस्मान्नावयवः । शक्यप्राप्तिः प्रमाणानि प्रमातुः प्रमेयाधिगमार्थं न तु वादिनोर्वादे साधकस्य वाक्यस्य भागरूपेण युज्यते प्रतिज्ञादिवदिति तस्मात् शक्यप्राप्तिर्नावयवः । प्रयोजनञ्च तत्त्वाव-धारणमर्थसाधकस्य वाक्यस्य फलं नैकदेशस्तस्मात् साधकवाक्यस्य नावयव इति । संशयव्युदासश्च प्रतिपक्षोपवर्णनं वादिना तत्प्रतिषेधेन तत्त्वज्ञानाभ्य-नुज्ञाकरणार्थं न तु साधकवाक्यार्थसाधनार्थं तस्मान्न साधकवाक्यस्यैकदेश इत्यतः पञ्चैव प्रतिज्ञाहेतूदाहरणोपनयनिगमनान्यवयवा इति गौतमेनोक्त-मिति । इति स्थापना प्रतिष्ठापना च व्याख्याता भवति ॥ ३० ॥

गङ्गाधरः—नन्वेवं वादिप्रतिवादिभ्यां हेत्वादिभिः स्वस्वप्रतिज्ञायां स्थापि-तायां सत्यां किं कार्य्यमित्यत उक्तम् उत्तरमिति यत् तदुच्यते—अथोत्तर-मिति । वादिप्रतिवादिभ्यां स्वस्वपक्षं हेत्वादिभिः स्थापयित्वा पुनरुत्तरं कार्य्यम् । तत् कीदृशमित्यत आह—उत्तरं नामेत्यादि । प्रतिवादिना साधर्म्म्योपदिष्टे हेतौ कार्य्यस्य साधर्म्म्येणोपदिष्टे हेतौ सति वैधर्म्म्यवचनं कार्य्यवैधर्म्म्येण हेतोर्वचनमुत्तरं नाम । तथा वैधर्म्म्योपदिष्टे वा हेतौ कार्य्यस्य वैधर्म्म्येणोपदिष्टे हेतौ सति साधर्म्म्यवचनं कार्य्यस्य साधर्म्म्येण हेतोर्वचनमुत्तरं नामोच्यते । उदाहरति—यथेत्यादि । हेतुसधर्म्माणो विकारा इति वादिना साधर्म्म्योक्तो हेतुः प्रदर्श्यते । शीतकस्येत्यादि । हि यस्मात् । शीतकस्य शीतनिमित्तजस्य व्याधेः शीतलैर्हेतुभिः समानधर्म्मा हिमशिशिर-वातसंस्पर्शा वृद्धिहेतव इति ब्रुवता वादिनः परः प्रतिवादी ब्रूयात्

चक्रपाणिः—उत्तरमित्यादि । 'उत्तर'शब्देनेह जात्युत्तरमुत्तराभासमीप्सितम् । यतो-ऽसाधकसाधर्म्म्यमात्रप्रत्यवस्थानमेवोत्तरविवरणे दर्शयिष्यति । उक्तञ्च न्याये—"साधर्म्म्यवैधर्म्म्याभ्यां प्रत्यवस्थानं जातिः" इति, एतच्च साधर्म्म्यवैधर्म्म्योदाहरणार्थम् । तेन न्यायोक्ता जात्युत्तरा उत्कर्षाप-कर्षसमुदया अप्यनुक्ता इहैवानुबोद्धव्याः । हेतुसधर्म्माण इति हेतुसदृशाः । शीतकः शीतम्, हिमशिशिरवातगताः संस्पर्शाः । शीतस्य हेतुभिः साधर्म्म्यमिति कृत्वा योजना । तेन हिमादीनां

यथा शरीरावयवानां दाहौष्ण्यकोथप्रपचने हेतुभिर्वैधर्म्म्यं हिम-शिशिरवातसंस्पर्शा इत्येतत् सविपर्य्ययमुत्तरम् ॥ ३१ ॥

अथ सिद्धान्तः। सिद्धान्तो नाम स यः परीक्षकैर्बहुविधं परीक्ष्य हेतुभिः साधयित्वा स्थाप्यते निर्णयः। स तु चतुर्व्विधः;

हेतुविधर्म्माणो विकारा इति। कथमित्यत आह—यथेत्यादि। शरीरावयवानां दाहौष्ण्यादौ ये हेतवस्तैर्हेतुभिर्वैधर्म्म्यमुष्णनिमित्तस्य व्याधेर्वृद्धेः प्रशमनहेतवो हिमशिशिरवातसंस्पर्शा इति। साधर्म्म्योक्ते हेतावुदाहृत्योत्तरं वैधर्म्म्योक्ते हेतावुत्तरमुदाहरति। एतत् सविपर्य्ययमुत्तरमिति। हेतुविधर्म्माणो विकारा इत्युक्ते हेतुसधर्म्माणो विकारा इत्युत्तरं सविपर्य्ययमिति। तथा च वादे। नित्यः पुरुषोऽकृतकत्वादित्युक्ते वादिना परो ब्रूयात् यथा घटः। यथा घटः कृतकः स चानित्यो न तथा पुरुषस्तस्मान्नित्य इति ॥ ३१ ॥

गङ्गाधरः—इत्येवमुत्तरे प्रोक्ते वादिभ्यां किं कार्य्यमित्यत उक्तम्—सिद्धान्त इति यत् तत् प्रोच्यते—अथ 'सिद्धान्त इति। उत्तरानन्तरं सिद्धान्तः कार्य्य इति। कः पुनः सिद्धान्त इत्यत आह—सिद्धान्तो नामेत्यादि। परीक्षकैर्हेतुभिर्बहुविधं वाधमर्थं परीक्ष्य साधयितुं यो निर्णयः स्थाप्यते स सिद्धान्तो नामोच्यते। निर्णयश्चोक्तो गौतमेन। विमृश्य पक्षप्रतिपक्षाभ्याम् अर्थावधारणं निर्णयः इति। स्थापनाप्रतिषेधौ यौ तौ साधनोपालम्भा-वुच्येते तौ पक्षप्रतिपक्षाश्रयौ व्यतिषक्तौ परस्परसंसक्तौ खल्वनुबन्धेन प्रवर्त्तमानौ पक्षप्रतिपक्षावुच्येते। ताभ्यामर्थावधारणं तयोरेकतरस्य निवृत्ति-र्हेतुप्रदर्शनेनैकतरस्यावस्थानं यस्यावश्यम्भावि स्यादवस्थानं स निर्णय इति।

हेतूनां ये शीतस्पर्शास्ते शीतकेऽपीति, संस्पर्शाः साधर्म्म्यं हेतुविकारयोरिति। परो ब्रूयादिति प्रतिवादी वदेत्। दाहौष्ण्यकोथप्रपचने विकारे इति शेषः, हेतुवैसादृश्यं हेतुवैधर्म्म्यम्। हिमादि-संस्पर्शाः हिमादिजन्यशरीरावयवदाहादिविकारस्पर्शे उष्णे विसदृशा इति वाक्यार्थः। एवं तावत् वैधर्म्म्योक्ते हेतौ विपर्य्ययाद् यदा हेतुसाम्यमुत्तरं क्रियते, तदा विपर्य्ययो भवति। एवमेवोदाहरण-द्वयं सविपर्य्ययं सम्पूर्णमुत्तरं भवतीत्यर्थः ॥ ३१ ॥

चक्रपाणिः—साध्यसाधनोदाहरणेन बहुविधं परीक्षितं हेतुभिः साधयित्वा स्थाप्यत इत्यत्र विवरणम्—निर्णय इति। निर्णीयत इति निर्णयः। एतच्च सिद्धान्तलक्षणमभ्युपगमसिद्धान्ते नास्ति। तेन तत्र युक्तिव्यवस्थितत्वेन चोक्तं सिद्धान्तं बोध्यम्। सिद्धान्तं विभजते—स चेत्यादि।

नन्वेवं तर्हि कथं निर्णयः स्यात् । एको हि स्वमतिज्ञातार्थं हेत्वादितः स्थापयति परप्रतिषिद्धञ्चोद्धरति । तथैव प्रतिवादी च स्वमतिज्ञातमर्थं हेत्वादिभिः स्थापयति वादिप्रतिषिद्धञ्चोद्धरतीति । तत्राह—विमृश्येति विमर्शं कृत्वा पक्षप्रतिपक्षाभ्यामर्थावधारणं यद्भवति द्वयोरेकतरस्य निवृत्तिरन्यतरस्याव- स्थानमथवोभयस्यावस्थानमथवोभयस्य निवृत्तिः स निर्णयः । तत्रेयं युक्तिः । एकस्य सम्भवोऽपरस्यासम्भवः प्रमाणैर्य उपपद्यते तौ सम्भवासम्भवौ विमर्शं निवर्त्तयतः । सम्भवपक्षोऽवतिष्ठते, असम्भवपक्षो निवर्त्तते, इति भवति स च सिद्धान्तः । यत्रोभयस्य सम्भवोऽसम्भवो वा तत्र विमर्शो न निवर्त्तते । तत्र पुनर्विमर्शः पक्षप्रतिपक्षाभ्यां द्योत्यं न्याय्यं पुनः प्रवर्त्तयतीति तथा विमर्शेन धर्म्मिसामान्यगतौ विरुद्धौ धर्म्मौ यथा पुरुषो नित्यश्चानित्यश्च हेतुतः सम्भवति । यः खलु पुरुषो जायते देवनरादिरूपेण स नित्यः । यश्च देवनरादिरूपः पुरुषः सोऽनित्य इति तत्र समुच्चयः । नित्यश्चानित्यश्च पुरुष इति निर्णयः सिद्धान्तः । यत्रैकधर्म्मिस्थौ विरुद्धौ धर्म्मौ सम्भवा- सम्भवौ यथा कश्चिदाह घटो नित्यस्तद्रूप्येण सिद्धत्वादिति । परश्चाह अनित्यो घटस्तत्तद्रूपेण जातत्वात् । तत्र विमर्शेन पक्षप्रतिपक्षाभ्यामवधार्य्यते, योऽयं घटो जायते स पुनर्न जनिष्यते नश्यति च तस्मादनित्यो न नित्य इति । एव- मेकस्य निवृत्तिरपरस्यावस्थितिर्निर्णयः सिद्धान्तः । एवं क्रियावद् द्रव्यमिति लक्षणवचने कणादोक्ते क्रियागुणवत्समवायिकारणमिति द्रव्यलक्षणमिति वचने । यस्य द्रव्यस्य स्वभावसिद्धस्य पृथिव्यप्तेजोवायुमनसः क्रियायोगो हेतुतः सम्भवति तत् क्रियावद्भवति । यस्यात्मकालदिगाकाशस्य न सम्भवति क्रियायोगस्तदक्रियमिति द्रव्याख्यैकधर्म्मिस्थयोर्विरुद्धयोः सक्रियत्वनिष्क्रिय- त्वयोः अयुगपद्भाविनोः कालविकल्पः । स्वरूपः प्रसिद्धिकाले नवसु द्रव्येषु मनः- पृथिव्यादिपञ्चकं सक्रियमात्मादिचतुष्कमक्रियम् । कार्य्यारम्भकाले तु पञ्चानां सक्रियाणां चतुर्भिरक्रियैः सह संयोगे तेषां क्रियाभिः पुनःपुनः संयोग- विभागाभ्यां नवानामेव पञ्चानां भूतानामन्योन्यानुप्रवेशादन्योन्यानुग्रहादाकाशः सक्रियः स्यात् । नित्यमनोऽनुबन्ध आत्मा मनसः क्रिययोपचरितो रथो गच्छ- तीतिवत् सक्रियः स्यात् । दिक्कालौ च भूतानुप्रविष्टौ तेषां क्रियाभिरुपचरितौ सक्रियौ भवत इति क्रियागुणवत्समवायिकारणं नवैव द्रव्याणि सम्भवन्तीति कालो विकल्प्यते । अथैक आहुः—वह्निर्मधुरः पाञ्चभौतिकत्वात्, यथेक्षुः । यथेक्षुः पाञ्चभौतिको मधुरश्च तथा वह्निः पाञ्चभौतिकस्तस्मान्मधुर इति ।

सर्व्वतन्त्रसिद्धान्तः प्रतितन्त्रसिद्धान्तोऽधिकरणसिद्धान्तोऽभ्युपगमसिद्धान्त इति।

तत्र सर्व्वतन्त्रसिद्धान्तो नाम तस्मिंस्तस्मिन् सर्व्वस्मिंस्तन्त्रे प्रसिद्धम्। सन्ति निदानानि, सन्ति व्याधयः, सन्ति सिद्धुपायाः

अपरस्त्वाह—वह्निरम्लस्तेजोऽम्बुबहुलपञ्चभूतात्मकत्वात्, यथा तिन्तिड़ी। यथा च तिन्तिड़ी तेजोऽम्बुबहुलपञ्चभूतात्मिका सा चाम्ला तथा वह्निस्तेजोऽम्बुबहुलपञ्चभूतात्मकस्तस्मादम्ल इति। इत्युभाभ्यां पक्षाभ्यां प्रमाणैर्विमृश्यावधार्य्यते वह्निर्न मधुरो नाम्लः इति स निर्णयः सिद्धान्तः। अत्रेदमवधातव्यं प्रत्यक्षेऽर्थावधारणं निर्णयः परीक्षाविषये तु विमृश्य पक्षप्रतिपक्षाभ्यामर्थावधारणं निर्णयः। शास्त्रवादे च विमर्शवर्ज्जं पक्षप्रतिपक्षाभ्यामर्थावधारणं निर्णय इति। सिद्धान्तः कतिविध इत्यत आह—स तु चतुर्व्विध इत्यादि। चातुर्व्विध्यं सिद्धान्तस्याह—सर्व्वेत्यादि। सर्व्वतन्त्रसिद्धान्तः प्रतितन्त्रसिद्धान्तोऽधिकरणसिद्धान्तोऽभ्युपगमसिद्धान्त इतीति। गौतमेनाप्युक्तम्—तन्त्राधिकरणाभ्युपगमसंस्थितिः सिद्धान्त इति। वात्स्यायनेन व्याख्यातञ्च। इदमित्थम्भूतञ्चेत्यभ्यनुज्ञायमानमर्थजातं सिद्धम्, सिद्धस्य संस्थितिः सिद्धान्तः संस्थितिरित्थम्भावव्यवस्था धर्म्मनियमः, स च पक्षप्रतिपक्षाभ्यामवधारणं स खल्वयं तन्त्राधिकरणाभ्युपगमसंस्थितिः सिद्धान्तः। तन्त्रार्थसंस्थितिस्तन्त्रसंस्थितिः। तन्त्रमितरेतराभिसम्बद्धस्यार्थसमूहस्योपदेशः शास्त्रम्। अधिकरणानुषक्तार्थसंस्थितिरधिकरणसंस्थितिः। अभ्युपगमसंस्थितिरनवधारितार्थपरिग्रहस्तद्विशेषपरीक्षणायाभ्युपगमसिद्धान्तः। तन्त्रभेदात् तु स खलु चतुर्व्विधः। सर्व्वतन्त्रप्रतितन्त्राधिकरणाभ्युपगमसंस्थित्यर्थान्तराभावात् इति। तत्रैताश्चतस्रः संस्थितयोऽनर्थान्तरभूता इति।

अथ क्रमेण तानाह—तत्र सर्व्वतन्त्रसिद्धान्तो नामेत्यादि। तस्मिंस्तस्मिन् सर्व्वस्मिंस्तन्त्रे तत् तत् प्रसिद्धं यद् यत् स सर्व्वतन्त्रसिद्धान्तो न तु एकैकस्मिन् प्रसिद्धं यद् यदिति। गौतमेनाप्युक्तम्। सर्व्वतन्त्राविरुद्धस्तन्त्रेऽधिकृतोऽर्थः सर्व्वतन्त्रसिद्धान्त इति। व्याख्यातं वात्स्यायनेन। यथा घ्राणादीनीन्द्रियाणि गन्धादय इन्द्रियार्थाः पृथिव्यादीनि भूतानि प्रमाणैरर्थस्य ग्रहणमिति। स्वयमुदाहरति। सन्तीत्यादि। सन्ति निदानानि। इत्येवमादिः

साध्यानां व्याधीनामिति। प्रतितन्त्रसिद्धान्तो नाम तस्मिन् तस्मिन्नैकैकस्मिंस्तन्त्रे तत्तत् प्रसिद्धम्। यथा अन्यत्राष्टौ रसाः षड़त्र रसाः, पञ्चेन्द्रियाण्यत्र अन्यत्र षड़िन्द्रियाणि तन्त्रे। वातादिकृताः सर्व्वे विकारा यथात्रान्यत्र वातादिकृता भूतकृताश्च प्रसिद्धाः। अधिकरणसिद्धान्तो नाम स यस्मिन्नधिकरणे प्रस्तूयमाने सिद्धान्यन्यान्यपि अधिकरणानि भवन्ति। यथा न

सर्व्वस्मिन्नायुर्व्वेदतन्त्रे प्रसिद्धः। इति सर्व्वतन्त्रसिद्धान्तः। प्रतितन्त्रसिद्धान्तो नामेत्यादि। तस्मिंस्तस्मिन्नेकैकस्मिंस्तन्त्रे यद् यत् प्रसिद्धं तत् तत् प्रतितन्त्र-सिद्धान्तः। तदुदाहरति। अन्यत्रायुर्व्वेदतन्त्रेऽष्टौ रसा मधुराम्ललवणकटुतिक्त-कषायाव्यक्तक्षारा इति तत्र सिद्धाः। अत्र तन्त्रे षड़् रसा मधुराम्ललवण-कटुतिक्तकषाया इति सिद्धाः। गौतमेनाप्युक्तम्—समानतन्त्रसिद्धः पर-तन्त्रासिद्धः प्रतितन्त्रसिद्धान्त इति। व्याख्यातश्च वात्स्यायनेन। यथा नासत आत्मलाभः। न सत आत्महानम् निरतिशयाश्चेतनाः। देहेन्द्रियमनःसु विषयेषु तत्तत्कारणेषु च विशेषा इति साङ्ख्यानाम्। पुरुषकर्म्मनिमित्तो भूतसर्गः, कर्म्महेतवो दोषाः प्रवृत्तिश्च स्वगुणविशिष्टाश्चेतना असदुत्पद्यते उत्पन्नं निरुध्यते इति योगिनामिति। एतच्चरकतन्त्रसमानतन्त्रसिद्धाः षड़् रसाः पञ्चेन्द्रियाणि वातादिकृताः सर्व्वे रोगाः प्रसिद्धाः। परतन्त्रासिद्धास्तत्र तत्र परतन्त्रेऽष्टौ रसाः षड़िन्द्रियाणि वातादिकृता भूतकृताश्च सर्व्वे रोगा इति प्रतितन्त्रसिद्धान्तः। अथाधिकरणसिद्धान्तो नामेत्यादि। यस्मिन्नधिकरणे प्रस्तूयमानेऽन्यान्यप्य-धिकरणानि सिद्धानि भवन्ति, सोऽधिकरणसिद्धान्तः। गौतमेनोक्तश्च—यत्-सिद्धावन्यप्रकरणसिद्धिः सोऽधिकरणसिद्धान्त इति। व्याख्यातश्च वात्-स्यायनेन। यस्यार्थस्य सिद्धावन्येऽर्था अनुषज्यन्ते, न तैर्विना सोऽर्थः सिध्यति, तेऽर्था यदधिष्ठानाः सोऽधिकरणसिद्धान्तः। यथा देहेन्द्रियव्यतिरिक्तो ज्ञाता दर्शनस्पर्शनाभ्यामेकार्थग्रहणादिति। अत्रानुषङ्गिणोऽर्था इन्द्रियनानात्वं नियत-विषयाणीन्द्रियाणि स्वविषयग्रहणलिङ्गानि ज्ञातुर्ज्ञानसाधनानि। गन्धादि-गुणव्यतिरिक्तं द्रव्यं गुणाधिकरणम् नियतविषयाश्चेतना इति पूर्व्वार्थसिद्धावेते-

प्रतितन्त्रसिद्धान्ते षड़् रसा अष्टौ रसा इति परस्परविरुद्धेऽपि वादे स्वयुक्तिव्यवस्थापनबलात् तु सिद्धान्तत्वं ज्ञेयम्। यस्मिन्नित्यादौ अधिकरणे इत्यभिधेयप्रधानत्वे। अन्यान्यपीति साक्षादन-

मुक्तः कर्म्मानुबन्धिकं कुरुते निःस्पृहत्वादिति प्रस्तुते सिद्धाः कर्म्मफलमोक्षपुरुषप्रेत्यभावाः स्युः। अभ्युपगमसिद्धान्तो नाम स यमर्थमसिद्धमपरीक्षितमनुपदिष्टमहेतुकं वा वादकालेऽभ्युपगच्छन्ति भिषजः। तद् यथा—द्रव्यं प्रधानमिति कृत्वा वक्ष्यामः। गुणाः प्रधानमिति कृत्वा वक्ष्यामः, कर्म्म प्रधानमिति कृत्वा वक्ष्यामः, इत्येवमादिश्चतुर्व्विधः सिद्धान्तः॥ ३२॥

ऽर्थाः सिध्यन्ति। न तैर्विना सोऽर्थः सिध्यतीति। स्वयञ्चोदाहरति। यथेत्यादि। मुक्त आनुबन्धिकं कर्म्म न कुरुते निःस्पृहत्वादिति पूर्व्वं प्रस्तुते अर्थेऽनुषङ्गिण एते कर्म्मफलमोक्षपुरुषप्रेत्यभावाः सिद्धा भवन्ति। न चैतैर्विना मुक्त आनुबन्धिकं कर्म्म न कुरुते इत्येषोऽर्थो न सिध्यतीत्यस्त्यधिकरणसिद्धान्तः। अथाभ्युपगमसिद्धान्तो नामेत्यादि। यमर्थमसिद्धमपरीक्षितमनुपदिष्टं गुरुणाऽथाहेतुकं वा वादकालेऽभ्युपगच्छन्ति भिषजः सोऽर्थोऽभ्युपगमसिद्धान्तः। तद्यथेत्यादिनोदाहरति। द्रव्यं प्रधानं कृत्वा वक्ष्याम इत्यादि। गौतमेनाप्युक्तम्—अपरीक्षिताभ्युपगमात् तद्विशेषपरीक्षणमभ्युपगमसिद्धान्तः। इति। व्याख्यातश्च वात्स्यायनेन। यत्र किञ्चिदर्थजातमभ्युपगम्यते, अस्तु द्रव्यं शब्दः। स तु नित्योऽथानित्य इति। द्रव्यस्य सतो नित्यतानित्यता वा तद्विशेषः परीक्ष्यते। सोऽभ्युपगमसिद्धान्तः। स्वबुद्ध्यतिशयचिख्यापयिषया परबुद्ध्यवज्ञानाच्च वादिना यदश्रुतादिकं तद्वक्तुं प्रवर्त्तते इति। इति चतुर्व्विधः सिद्धान्त उक्तः॥ ३२॥

भिधीयमानान्यपि। अनुबध्नातीति अनुबन्धिकं जन्मान्तरेऽप्यनुगामीत्यर्थः। मुक्त इति प्रत्यासन्नमुक्तिः, सर्व्वथा मुक्तस्त्वशरीरत्वात् कर्म्म न करोति। किंवा अनुबन्धिकं विशेषेणेति। सिद्धा इत्यादि। यदीह कर्म्मफलं न स्यात, तदा मुमुक्षुणापि क्रियते कर्म्मफलोदविघ्नो ह्ययं न तत् कर्म्म करोति। यदि च मोक्षो न स्यात तदा 'मुक्तः' इति वचनं न स्यात्, तथा यदि च पुरुषो न स्यात्, तदा कस्य वा बन्धः कस्य वा मोक्षः स्यात्, तदा कर्म्मणो जन्मान्तरानुबन्धित्वमनुपपन्नं स्यादिति न युक्तमिति वदता अधिकरणबलादेव सिद्धाः सिद्धान्तत्वेन कर्म्मफलादयः स्वीकृता भवन्ति। असिद्धमित्यस्य विवरणम्—अपरीक्षितमित्यादि॥ ३२॥

अथ शब्दः । शब्दो नाम वर्णसमाम्नायः, स चतुर्विधः,

गङ्गाधरः—ननु सिद्धान्ते सति वादिनोः किं कार्य्यमित्यतो वादो हि शब्दात्मकेन वाक्येन क्रियते शब्दस्तर्हि ज्ञातव्य इत्यतः शब्द इति यदुक्त तदाह—अथ शब्द इति। अथ वाक्यज्ञानार्थं शब्दो ज्ञातव्यस्तत्र कः पुनः शब्दो ध्वन्यात्मको वर्णात्मको वेत्यत आह—शब्दो नाम वर्णसमाम्नाय इति। शब्दस्तु कणादेनोक्तः। श्रोत्रग्रहणो योऽर्थः स शब्दः। अनित्यश्चायं कारणतः। अभिव्यक्तौ दोषादिति। अपरे त्वाहुः। नित्यः शब्दोऽनादित्वात् भावस्वभावनित्यत्वात् स्वभावसंसिद्धलक्षणत्वात् इति। तद्यथा—प्राक् सर्गादिदमसदेवासीदेकमेवाद्वितीयम् स खलु सप्रभावगुणनिगूढ़ा शक्तिरेव मूलं ब्रह्म। अतिपरमसूक्ष्मातिसूक्ष्मध्वनिप्रभावादतिपरमसूक्ष्मातिसूक्ष्मव्योमरूपा शक्तिः स्वगुणप्रभावं परिणम्य तेजोऽबन्नानि लोहितशुक्लकृष्णवदाभासानि सृष्ट्वा लोहितशुक्लकृष्णवद्भासमाना इति सूक्ष्मध्वन्यवरुद्धातिपरमसूक्ष्मव्योमरूपा वाक् सम्बभूव, सा गायत्री भगवती दुर्गा। गायति च त्रायते चेति गायत्री, सा विद्याशान्तिनिवृत्तिप्रतिष्ठेति चतस्रः शक्तयो भूत्वा मिलित्वैकीभूयानन्तशक्तिमान् परव्योमरूपः परमात्मा परः पुरुषः शिवो बभूव। स त्रिपात् पुरुषस्तस्य ज्योतिःस्वरूपा सा स्वयमजा स सविता नामादिः पुरुषस्तस्य प्रकाशनार्था सा सावित्री तस्यात्मा तुरीयः पाद इति चतुष्पाद्ब्रह्मगायत्रीदानीं सर्गे। सैव गायत्री तेनात्मना जीवेन शिवेन तेजोऽबन्नान्यनुप्रविश्य सर्व्वं ससर्ज्ज। तत्रादौ तेजोऽबन्नानि परिणम्य किञ्चित्स्थूलमतिसूक्ष्ममतीन्द्रियं शब्दं सृजमाना तद्विशिष्टा सती परमा विद्या बभूव ओंकारध्वनिरूपा। तस्माच्चाकारादयो मातृकावर्णा अतिपरमसूक्ष्मा अतीन्द्रिया बभूवुः सा परमा विद्या तद्विशिष्टः परव्योमैव सदाशिवाख्यः प्रथमो ब्रह्मपुरुषः। ब्रह्मविद्या शास्त्रमयः। ततस्तन्मातृकावर्णानाम् अनन्तयोगात् ऋग्यजुःसामाथर्व्वात्मिका माया नाम कलाविद्या बभूव सैवाविद्या विद्याविपर्य्ययविद्या। तद्विशिष्टा ऋग्वेदयजुर्व्वेदसामवेदाथर्व्ववेदाश्चत्वारो ब्रह्मपुरुषा अविद्या शास्त्रमया बभूवुः। तत्र सामविद्या तालरागमयध्वनिरूपा तालरागोपाहितवाक्यमयध्वनिरूपा च बभूव तद्विशिष्टः सामवेदः। स द्विविधः शब्दो नित्योऽनादित्वात् स्वभावसंसिद्धलक्षणत्वाद्भाव-

चक्रपाणिः—'शब्द'शब्देनेह सङ्केतबलादर्थप्रतीकारवर्णमालोच्यते। आप्तोपदेशशब्दस्तु द्विविधः—परमाप्तब्रह्मादिप्रणीतस्तथा लौकिकाप्तप्रणीतश्च। 'ऐतिह्य'शब्देन परमाप्तप्रणीतो-

स्वभावनित्यत्वात्। स एव द्विविधः शब्दः क्रमेण स्थूलो भूत्वा खल्वव्यक्ते त्रिगुणसाम्यलक्षणेऽनभिव्यक्तरूपे स्थितः। अव्यक्तान्महत्तत्त्वे विद्यात्मक एव द्विविधो व्यवर्त्तत। ततोऽहङ्कारे जायमानेऽविद्यात्मको द्विविध एव स्थितः। ततोऽहङ्काराज्जायमाने त्वाकाशे स एव द्विविधः शब्दोऽनभिव्यक्त एव स्थितः सहजरूपेण स एवाकाशस्यात्मा तद्वियोगादाकाशो नश्यति आकाशस्य नित्यत्वं तत्स्थशब्दस्य तदात्मनो नित्यत्वादिति नित्यः शब्दः। तच्छब्दवदाकाशस्यैकादशांशैकांशस्य स्पर्शमात्रे वायावनुप्रवेशादाकाशवाय्वात्मको द्व्यात्मको वायुः शब्दस्पर्शयोर्यो निर्वातकलाकलीये प्रोक्तः। यस्त्वाकाशस्यात्मा शब्दस्तस्याकाशतो निःसरणस्वभावाभावाद्वाय्वनुप्रविष्टस्य वायुतो निःसरणस्वभावात्। ततो वाय्वादीनां तेजोऽम्बुभूमिषु क्रमेण पूर्व्वपूर्व्वस्यानुप्रवेशे स द्विविधः शब्दः क्रमेण स्थूलोऽप्यनभिव्यक्तरूपेण स्थितः। ततः पञ्चभिस्तैर्भूतैरारब्धेषु द्रव्येष्वभिघातप्रयुक्ताभिव्यक्तिस्वभावः स्थूलः शब्दो वर्त्तते। स एव द्विविधः शब्दस्तन्त्रीवीणाङ्गुष्ठाङ्गुल्याद्यभिघातकण्ठताल्वाद्यभिघातात् कारणतो वाय्वादिभूतेभ्य एव जायते न त्वाकाशाज्जायत इत्यतस्त्वनित्यः श्रोत्रेणेन्द्रियेण च गृह्यते इत्येवमभिघातात् कारणादाकाशादभिव्यक्तावाकाशस्यानित्यत्वनश्वरत्वदोषात्। अथवा शब्दस्याभिव्यक्तिमते वक्ष्यमाणदोषात्। इति कणादादीनां सर्व्वेषामभिप्रायः। अत एवाभिप्रायाद् गौतमेनापि शब्दः परीक्षितः। विमर्शहेत्वनुयोगे च विप्रतिपत्तेः संशयः। आदिमत्त्वादैन्द्रियकत्वात् कृतकवदुपचाराच्च। न घटाभावसामान्यनित्यत्वान्नित्येष्वप्यनित्यवदुपचाराच्च। तत्त्वभाक्तयोर्नानात्वविभागादव्यभिचारः। सन्तानानुमानविशेषणात्। कारणद्रव्यस्य प्रदेशशब्देनाभिधानान्नित्येष्वप्यव्यभिचार इति। व्याख्यातश्च वात्स्यायनेनैतत् सर्व्वं तद् यथा। आप्तोपदेशः शब्द इति प्रमाणभावे विशेषणमुक्त्वा तं प्रमाणशब्दम्; स च द्विविधो दृष्टार्थोऽदृष्टार्थश्चेति विभज्य पुनः शब्दो नानाप्रकार इति ज्ञाप्यते। तस्मिन् नानाप्रकारे सत्यानृतदृष्टार्थादृष्टार्थे सामान्येन विचारः क्रियते। शब्दः किं नित्योऽथानित्य इति। विमर्शहेत्वनुयोगे च विप्रतिपत्तेः संशयः। आकाशगुणः शब्दोऽनभिव्यक्तोऽभिव्यक्तिधर्म्मक इत्येके। गन्धादिसहवृत्तिर्द्रव्येषु सन्निविष्टो गन्धादिवदवस्थितोऽभिव्यक्तिधर्म्मक इत्यपरे शब्दस्य नित्यत्ववादिनः। आकाशगुणः शब्द उत्पत्तिनिरोधधर्म्मको

ऽवच्छः, लौकिकाप्तप्रणीतश्च शब्दैकदेशरूपः सत्यप्रकारविहितो ज्ञेयः। वर्णसमाम्नाय इति

बुद्धिवदित्यपरे शब्दस्यानित्यत्ववादिनः। महाभूतसंक्षोभजः शब्दोऽनाश्रित उत्पत्तिधर्म्मको निरोधधर्म्मक इत्यन्ये चानित्यत्ववादिन आहुः। अतो विमर्श-हेतोर्विरुद्धसमालोचनहेतोरनुयोगे च विप्रतिपत्तेर्विभिन्नप्रतिपत्तितः संशयः किं नित्यः शब्दोऽथानित्य इति। किमत्र तत्त्वमिति। तत्रोत्तरमनित्यः शब्द इति। कुतः? आदिमत्त्वादैन्द्रियकत्वात् कृतकवदुपचाराच्च। आदिर्योनिः कारणम्। आदीयते यस्मादिति कारणवदनित्यं दृष्टम्। संयोगविभागजश्च शब्दः कारणवत्त्वादनित्यः। का पुनरियमर्थदेशना कारणवदिति। उत्पत्ति-धर्म्मकत्वादनित्यः शब्द इत्यर्थदेशना। भूत्वा न भवति विनाशधर्म्मक इति। सांशयिकमेतत्। किमुत्पत्तिकारणं संयोगविभागौ शब्दस्य किमभिव्यक्ति-कारणमिति। अत आह ऐन्द्रियकत्वादिति। इन्द्रियप्रत्यासत्तिग्राह्य ऐन्द्रियकः। किमयं व्यञ्जकेन समानदेशोऽभिव्यज्यते रूपादिवत्। अथ संयोगजाच्छब्दाच्छब्दसन्ताने सति श्रोत्रप्रत्यासन्नो गृह्यते इति। संयोग-निवृत्तौ दूरेऽपि शब्दग्रहणान्न व्यञ्जकेन समानदेशस्य ग्रहणं शब्दस्येति। दारुव्रश्चने दारुपरशुसंयोगनिवृत्तौ दूरस्थेन शब्दो गृह्यते। न च व्यञ्जकाभावे व्यङ्ग्यस्य ग्रहणं भवति। तस्मान्न व्यञ्जकः संयोगः। उत्पादके तु संयोगे संयोगजाच्छब्दाच्छब्दसन्ताने सति श्रोत्रप्रत्यासन्नस्य शब्दस्य ग्रहणमिति युक्तं संयोगनिवृत्तौ शब्दस्य दूरस्थेन ग्रहणमिति। इतश्च शब्द उत्पद्यते नाभि-व्यज्यते। कृतकवदुपचारात्। तीव्रं मन्दमिति कृतकमुपचर्य्यते। तीव्रं सुखं मन्दं सुखं तीव्रं दुःखं मन्दं दुःखमिति तीव्रत्वादेरुपचारो यथा सुखादौ तथोपचर्य्यते, तीव्रः शब्दो मन्दः शब्द इति शब्दे तीव्रत्वादुपचारः। अथ व्यञ्जकस्य तथाभावाद् ग्रहणस्य तीव्रमन्दतारूपत्वदिति चेन्न। अभिभवोप-पत्तेः। संयोगस्य व्यञ्जकस्य तीव्रमन्दतया शब्दग्रहणस्य तीव्रमन्दता भवति। न तु शब्दो भिद्यते। यथा प्रकाशस्य तीव्रमन्दतया रूपग्रहणस्येति। तच्च नैवमभिभवोपपत्तेः। तीव्रो भेरीशब्दो मन्दं तन्त्रीशब्दमभिभवति न मन्द-स्तीव्रम्। न च शब्दग्रहणमभिभावकं शब्दश्च न भिद्यते। शब्दे तु भिद्यमाने युक्तोऽभिभवः। तस्मादुत्पद्यते शब्दो नाभिव्यज्यते। अप्राप्तेऽभिभव इति चेत् शब्दमात्राभिभवप्रसङ्गः। अथ मन्यते, असत्यां प्राप्तावभिभवो भवतीति। एवं

वर्णमेलक इत्यर्थः। वर्णानां यद्यपि अत्र सहस्थायिनां मेलको नास्ति, तथाप्येकस्मृतिसमान-रूपित्वेन। किंवा, पूर्व्वपूर्व्वानुभवजनितसंस्कारसहितान्त्यवर्णानुभवारोहेण मेलको ज्ञेयः।

सति यथा भेरीशब्दः कश्चित् तन्त्रीशब्दमभिभवति। एवमन्तिकस्थोपादानमिव किं दवीयःस्थोपादानमपि तन्त्रीस्वनं नाभिभवेत्। अप्राप्तत्वविशेषात्। तत्र कैश्चिदेव भेर्य्यां प्रणादितायां सर्व्वलोकेषु समानकालास्तन्त्रीस्वना न श्रूयेरन्निति। नानाभूतेषु शब्दसन्तानेषु सत्सु श्रोत्रप्रत्यासत्तिभावेन कस्यचिच्छब्दस्य तीव्रत्वेन मन्दस्याभिभवो युक्त इति। कः पुनरयमभिभवो नाम। ग्राह्यसमानजातीयग्रहणकृतमग्रहणमभिभवः। यथोल्काप्रकाशस्य ग्रहणार्हस्य आदित्यप्रकाशेनेति। तत्राह वादी। न घटाभावसामान्यनित्यत्वान्नित्येष्वप्यनित्यवदुपचाराच्च। न खल्वादिमत्त्वादनित्यः शब्दः। कस्मात्? व्यभिचारात्। आदिमतः खलु घटाभावस्य दृष्टं नित्यत्वम्। कथमादिमान्। कारणविभागेभ्यो हि घटो न भवति। कथमस्य नित्यत्वम्? योऽसौ शब्दकारणविभागेभ्यो न भवति तस्याभावो न कदाचिद्भावेन निवर्त्त्यते इति। यदप्यैन्द्रियकत्वात् तदपि व्यभिचरति। ऐन्द्रियकत्वं सामान्यं नित्यञ्चेति। यदपि कृतकवदुपचारादिति तदपि व्यभिचरति। नित्येष्वप्यनित्यवदुपचारो दृष्टः। यथा हि भवति वृक्षस्य प्रदेशः कम्बलस्य प्रदेश एवमाकाशस्य प्रदेश आत्मनः प्रदेश इति भवतीति। तत्र नित्यवादिनं प्रत्याह। तत्त्वभाक्तयोर्नानात्वविभागादव्यभिचारः। नित्यः शब्द इति तत्र नित्यत्वमित्यत्र किं तावन्नित्यत्वम्। आत्मान्तरस्यानुत्पत्तिधर्म्मकस्यात्महानानुपपत्तिर्नित्यत्वम्। तच्चाभावे नोपपद्यते। भाक्तन्तु भवति। यत् तत्रात्मा न महानासीत्। यद्भूत्वा न भवति न जातु तत् पुनर्भवति। तत्रानित्य इव नित्यो घटाभाव इत्ययं पदार्थः। तत्र यथाजातीयः शब्दो न तथाजातीयकं कार्य्यं किञ्चित् दृश्यते इति व्यभिचारः। यदपि सामान्यनित्यत्वादिति इन्द्रियप्रत्यासत्तिग्राह्यमैन्द्रियकमिति सन्तानानुमानविशेषणात्। नित्ये व्यभिचार इति प्रकृतम्। नेन्द्रियग्रहणसामर्थ्याच्छब्दस्यानित्यत्वं किं तर्हि? इन्द्रियप्रत्यासत्तिग्राह्यत्वात् सन्तानानुमानम्, तेनानित्यत्वमिति। यदपि नित्येष्वप्यनित्यत्ववदुपचारादिति, न। कारणद्रव्यस्य प्रदेशशब्देनाभिधानान्नित्येष्वप्यव्यभिचार इति। एवमाकाशस्य प्रदेश आत्मनः प्रदेश इति नात्राकाशात्मनोः कारणद्रव्यमभिधीयते यथा कृतकस्य। कथं ह्यविद्यमानमभिधीयते। अविद्यमानत्वञ्च प्रमाणतोऽनुपलब्धेः। किं तर्हि तत्राभिधीयते। संयोगस्याव्याप्यवृत्तित्वम्। परिच्छिन्नेन द्रव्येणाकाशस्य संयोगो नाकाशं व्याप्नोति। अव्याप्य हि वर्त्तते इति। तदस्य कृतकेन द्रव्येण सामान्यम्। न ह्यामलकयोः संयोगः

आश्रयं व्याप्नोति। सामान्यकृता च भक्तिराकाशस्य प्रकाश इति। अनेनात्मप्रदेशो व्याख्यातः। संयोगवच्च शब्दबुद्ध्यादीनामव्याप्यवृत्तित्वमिति। एवमैन्द्रियकशब्दस्यानित्यत्वे सिद्धे पुनर्वादी भाषते। अथ तर्हि निरुपादानकः शब्दः। कस्मात् ? प्रागुत्पत्तेरनुपलब्धेः। शब्दस्योत्पत्तेः पूर्वमुपलब्ध्यभावात् निरुपादानकत्वप्रसङ्गः। नावरणादिभ्यः। आवरणादिभ्यः कारणेभ्यो न प्रागुत्पत्तेरुपलब्धिः। नैवम्, तेषामनुपलब्धेः। आवरणादीनामनुपलब्धिकारणानामुपलब्धेर्नावरणादिभ्योऽनुपलब्धिः। आवरणसन्निकर्षव्यवधानादिकं शब्दानुपलब्धिकारणं नोपलभ्यते। तस्मात् प्राक् शब्दोत्पत्तेः शब्दारम्भकः शब्दो नास्ति। न हि विजातीयगुणेन विजातीयगुण आरभ्यते। तस्मादयं शब्दो निरुपादानक इति। तत्रोत्तरम्। तदनुपलब्धेरनुपलम्भादावरणोपपत्तिः। यदि शब्दस्यानुपलब्धिकारणानामावरणादीनामनुपलम्भान्नास्तित्वम् आवरणाद्यनुपलब्धिरप्यनुपलम्भात् तर्हि नास्तीति। आवरणोपलब्ध्यभावप्रतिषेधादस्त्यावरणादिकं शब्दानुपलब्धिकारणमिति। तत्राह पुनर्वादी। अनुपलम्भादप्यनुपलब्धिसद्भाववन्नावरणानुपपत्तिरनुपलम्भात्। आवरणानुपलब्धिरनुपलभ्यमानापि यथास्ति तथानुपलभ्यमानमप्यावरणमस्तीति यद्यभ्यनुजानाति भवान् तदानुपलभ्यमानाप्यावरणानुपलब्धिरस्ति। तस्मान्नास्त्यावरणमनुपलम्भादिति। तर्हि च। अनुपलम्भात्मकत्वादनुपलब्धेरहेतुः। यदुपलभ्यते तदस्ति यन्नोपलभ्यते तन्नास्तीति। अनुपलम्भात्मकमसदिति व्यवस्थितम्। उपलब्ध्यभावश्चानुपलब्धिः, सा पुनरभावत्वान्नोपलभ्यते। सच्च खल्वावरणं तस्योपलब्ध्या भवितव्यम्। न चोपलभ्यते तदावरणमित्यतो नास्तीति तच्च यदुक्तं नावरणानुपपत्तिरनुपलम्भादिति तदयुक्तम्। तस्माद् अस्त्यस्य शब्दस्योपादानं नित्यः शब्दः। कस्मात् ? अस्पर्शत्वात्। यथा आकाशम्। यथा चाकाशमस्पर्शं तच्च नित्यं तस्मान्नित्य इति। न कर्म्मानित्यत्वात्। अस्पर्शत्वादाकाशवन्न शब्दोऽस्य शब्दस्योपादानं नित्यः (शब्दः)। कस्मात् ? कर्म्मानित्यत्वात्। कर्म्म चास्पर्शमनित्यम्। दृष्टं स्पर्शवांश्चाणुर्नित्य इत्युभयतः सव्यभिचारो हेतुश्च दृष्टान्तश्चेति साधर्म्म्येण दृष्टान्तो न साधुः। साध्यवैधर्म्म्येण दृष्टान्तश्च। नाणुनित्यत्वात्। नित्यः शब्दोऽस्पर्शत्वात्। यथा घटः। यथा च घटः स्पृश्यः स चानित्यो न तथास्पृश्यः शब्दस्तस्मान्नित्य इति साध्यवैधर्म्म्येण दृष्टान्तोऽपि न भवति। कस्मात् ? अणुनित्यत्वात्। अणुर्हि स्पृश्यः स च नित्यः सर्व्वो हि स्पृश्यो

नानित्यो न नित्य इति व्यभिचारादिति। एतेनोक्तं भवति। योऽसावस्य शब्दस्योपादानभूतः शब्दोऽनभिव्यक्त आकाशेऽस्मिन्नणुः नित्य इति, स एव वाय्वादिष्वनुप्रविश्य क्रमेण स्थूलः सन्नपि नेन्द्रियग्राह्यः स सोऽपि नित्यः। पाञ्चभौतिके द्रव्ये त्वभिव्यज्यते स इत्यत उत्पद्यते इत्युच्यते ततो नानुपादानो न नित्यः परन्त्वनित्य इति स्थिरत्वादिति नास्थिरः शब्दो वर्णात्मको हि शब्दः स्थिरः। कस्मात्? सम्प्रदानात्। अध्यापकोऽध्याप्यमानाय शिष्याय यदध्ययनं ददाति तस्मात् वर्णात्मकः शब्दः स्थिरो न त्वस्थिरः। तत्रोच्यते। तदन्तरालानुपलब्धेरहेतुः। सम्प्रदानादित्ययं हेतुर्न हेतुः। अध्यापनाध्ययनयोरन्तराले शब्दोपलब्ध्यभावात्। तत्राह स्थिरत्ववादी। अध्यापनादप्रतिषेधः। असति सम्प्रदानेऽध्यापनं न स्यात् तदध्यापनलिङ्गेन तयोरध्यापनाध्ययनयोरन्तरालेऽवस्थानमुपलभ्यते। सम्प्रदातुः सम्प्रदीयमानो ह्यवस्थितः। तस्मात् स्थिरत्वस्याप्रतिषेधः। तत्राह प्रतिवादी। उभयोः पक्षयोरन्यतरस्याध्यापनादप्रतिषेधः। अध्यापकस्थः शब्दः शिष्यं प्रपद्यते यत् तदध्यापनम्? अथ नृत्यस्योपदेशवत्। नृत्यशिक्षको यथा नृत्यति तथानुकरोति नर्त्तक इत्येवमध्यापकोच्चारितशब्दानुकरणमध्यापनमित्येतयोरुभयोः पक्षयोरन्यतरस्याध्यापनत्वादन्तरालेऽनुपलब्धेरस्थिरत्वप्रतिषेधाभावः शब्दस्यास्थिरत्वमेव। अथाह—स्थिरः शब्दो नास्थिरः। अभ्यासात्। अभ्यस्यमानो हि शब्दः स्थिरो दृश्यते। पञ्चकृत्वः पठति दशकृत्वः पठतीति तद्रूप एवावस्थितो दृश्यते। तस्मादवस्थितस्य शब्दस्य पुनः-पुनरुच्चारणमभ्यास इति। तत्राह—नान्यत्वेऽप्यभ्यासस्योपचारात्। अवस्थितादन्यत्वेऽपि खल्वनवस्थितेऽभ्यासाभिधानान्न स्थिरत्वं शब्दस्य। यथा द्विर्नृत्यतु भवान् त्रिर्नृत्यतु भवान् त्रिरनृत्यद्द्विरनृत्यदिति भविष्यदतीतयोर्नर्त्तनयोरनवस्थितयोरावृत्त्यभिधानमिति। तत्राप्याह—अन्यदन्यस्मादनन्यत्वादनन्यदित्यन्यथाभावः। यदिदमेकस्मादन्यदित्युच्यते तत् पुनः स्वस्मादनन्यत्वादन्यन्न भवति। एवमन्यताया अभावः। तत्र यदुक्तमन्यत्वेऽप्यभ्यासस्योपचारादिति तदयुक्तमिति। तत्राह प्रतिवादी—तदभावेनास्त्यनन्यता तयोरितरेतरापेक्षसिद्धेः। अनन्यदिति। न अन्यदित्यनन्यत्। तत्रानन्यदिति कस्मात्? अन्यशब्दस्य प्रतिषेधार्थकनञा सह समासः। यदि चात्रोत्तरपदं नास्ति कस्यायं प्रतिषेधेन सह समासः। यस्मादन्यो यः स खलु तदभावस्तत्रानन्यता नास्ति। तयोर्द्वयोः परस्परापेक्षान्यतायाः सिद्धेः। यो यस्मादन्यस्तस्मादन्यः स इति भवत्यनन्यः।

न तु या यस्मादन्यः सोऽनन्य इति। अत्रायमभिसन्धिः, एकस्माद्यस्मादन्योऽपरस्तस्मादपरस्मादन्यः स एकः। यथा घटशब्दादन्यः पटशब्दः पटशब्दादन्यो घटशब्दः खल्वनन्य इति चेत् तदाभ्यासो न स्यात्। घटो घटो घट इत्येवं हि भवत्यभ्यासस्तत्र पूर्व्वो यो घटशब्दः स द्वितीयादेरन्यो द्वितीयादिस्तस्मादन्य इत्यनन्य इत्यत्रान्यत्वं तावत् किमुच्यते। तत् तदानुपूर्व्वीकत्वेन तदनन्यत्वं न त्वन्यत्वं तर्हि किं द्वितीयकालादुच्चरितत्वम्। तथात्वे च येनैकविधगायत्र्यादिमन्त्रेण पूर्व्वोच्चरितेनाचार्य्येण दीक्षितस्तस्य गायत्र्यादेर्मन्त्रस्य तथैव पुनरुच्चरितस्यान्यत्वे शिक्षितत्वदीक्षितत्वाभावप्रसङ्गः स्यात् स्वरवर्णव्यतिक्रमे तु न तत् तन्मन्त्रत्वं यथा स्यात् तथा तादृप्येणापि तन्मन्त्रत्वं न स्यादिति न मातृकावर्णव्यतिरिक्तानां वर्णानामुत्पादनेन शब्दान्तरं कथं कुर्य्यात् तस्मात् स्थिरो वर्णात्मकः शब्दोऽभिव्यक्तिनिरोधधर्म्मकः। कारणादभिव्यज्यते कारणात् तिरोधत्ते। न च कारणान्नश्यति। कस्मात्? विनाशकारणानुपलब्धेः। यदनित्यं तस्य विनाशः कारणाद् भवति तच्चोपलभ्यते। यथा लोष्टस्य कारणद्रव्यविभागाद्विनाशः स च विभाग उपलभ्यते शब्दश्चेदनित्यस्तदा तस्य विनाशो यस्मात् कारणाद्भवति तदुपलभ्येत न च पुनरुपलभ्यते तस्मान्नित्यः शब्द इति। तत्राह—अश्रवणकारणानुपलब्धेः सततश्रवणप्रसङ्गः। यथा विनाशकारणानुपलब्धेरविनाशान्नित्यस्तथा खल्वश्रवणकारणानुपलब्धेः सततश्रवणप्रसङ्गो न च सततं श्रूयते शब्द इति। व्यञ्जकाभावादश्रवणमिति चेत् प्रसिद्धं व्यञ्जकम्। अथ विद्यमानस्य शब्दस्य निर्निमित्तमश्रवणमिति विद्यमानस्य निर्निमित्तो विनाशश्चेति समानश्च दृष्टविरोधो निमित्तमन्तरेण विनाशे चाश्रवणे चेति। उपलभ्यमाने चानुपलब्धेरसत्त्वादपदेशः। अनुमानाच्चोपलभ्यमाने शब्दस्य विनाशकारणे विनाशकारणानुपलब्धेरसत्त्वादित्यनपदेशः। अनेन कारणेनैवमित्यपदेशः। अथ यस्मादविषाणी तस्मादश्व इति किमनुमानमिति चेत् सन्तानोपपत्तिः। उपपादितः शब्दसन्तानः। संयोगविभागजाच्छब्दाच्छब्दान्तरं जायते ततोऽप्यन्यत् ततोऽप्यन्यदित्येवं हि शब्दसन्तानस्तेनानुमानमिति। तत्र कार्य्यशब्दः कारणशब्दं निरुणद्धि। प्रतिघातिद्रव्यसंयोगस्त्वन्तिकस्य शब्दस्य निरोधकः। दृष्टं हि तिरःप्रतिकुड्यमन्तिकस्थेनाप्यश्रवणं शब्दस्य श्रवणं दूरस्थेनाप्यसति व्यवधाने इति। घण्टायामभिहन्यमानायां तारस्तारतरो मन्दो मन्दतर इति श्रुतिभेदान्नानाशब्दसन्तानोऽविच्छेदेन श्रूयते तन्न नित्ये

शब्दे। घण्टास्थमन्यगतं वा अवस्थितं सन्ताननिवृत्तौ कारणं वाच्यम्। येन श्रुतिसन्तानो भवतीति। शब्दभेदश्च सति श्रुतिभेदे उपपादयितव्य इति। अनित्ये तु शब्दे घण्टास्थं सन्ताननिवृत्तिसंयोगसहकारिकारणान्तरं संस्कारभूतं प्रतिघातजवेगाख्यं पटुमन्दमनुवर्त्तते। तस्यानुवृत्त्या शब्दसन्तानानुवृत्तिः पटुमन्दभावाच्च तीव्रमन्दता शब्दस्य तत्कृतश्च श्रुतिभेद इति। न वै निमित्तान्तरं संस्कार उपलभ्यते। अनुपलब्धेर्हेतोर्निमित्तान्तरं नास्तीति। तत्राह— पाणिनिमित्तप्रश्लेषाच्छब्दाभावेनानुपलब्धिः। पाणिकर्म्मणा पाणिप्रश्लेषो भवति। तस्मिंश्च सति शब्दसन्तानो नोपलभ्यते। ततः श्रवणानुपपत्तिः। तत्प्रतिघातिद्रव्यसंयोगः शब्दस्य निमित्तान्तरं संस्कारभूतं प्रतिघातजवेगाख्यं निरुणद्धीत्यतोऽनुमीयते। तस्य च निरोधाच्छब्दसन्तानो नोत्पद्यते। अनुत्पत्तौ श्रुतिविच्छेदः। यथा प्रतिघातिद्रव्यसंयोगादिषोः क्रियाहेतौ संस्कारे निरुद्धे गमनाभाव इति। कम्पसन्तानस्य स्पर्शनेन्द्रियग्राह्यस्य चोपरमः। कांस्यपात्रादिषु पाणिसंश्लेषो लिङ्गं संस्कारसन्तानस्येति। तस्मान्निमित्तान्तरस्य संस्कारभूतस्य प्रतिघातजवेगस्य नानुपलब्धिरिति। विनाशकारणानुपलब्धेश्चावस्थाने तन्नित्यत्वप्रसङ्गः। यदि यस्य विनाशकारणं नोपलभ्यते तदवतिष्ठते, अवस्थानाच्च तस्य नित्यत्वं प्रसज्यते। एवं यानि खल्विमानि शब्दश्रवणानि शब्दाभिव्यक्तय इति मतं न तेषां विनाशकारणं भवतोपलभ्यते। अनुपपादनादवस्थानमवस्थानान्नित्यत्वं प्रसज्यते। इति। अथ नैवं, तर्हि विनाशकारणानुपलब्धेः शब्दस्यावस्थानान्नित्यत्वमिति। कम्पसमानाश्रयस्य नादस्य पाणिप्रश्लेषात् कम्पवत्कारणोपरमादभावः। वैयधिकरण्ये हि प्रतिघातिद्रव्यप्रश्लेषादसमानाधिकरणस्यैवोपरमः स्यादिति। अस्पर्शत्वादप्रतिषेधः। आकाशगुणः शब्द इतीदं यत् प्रतिषिध्यते अयमनुपपन्नः प्रतिषेधः। अस्पर्शत्वाच्छब्दाश्रयस्य। रूपादिसमानदेशस्य ग्रहणे शब्दसन्तानोपपत्तेः। स्पर्शव्यापिद्रव्याश्रयः शब्द इति ज्ञायते न च कम्पसमानाश्रय इति। प्रतिद्रव्यं रूपादिभिः सह सन्निविष्टः शब्दः समानदेशो व्यज्यत इति नोपपद्यते इति। कथम्? विभक्त्यन्तरोपपत्तेश्च समासे। सन्तानोपपत्तेश्चेति चार्थः। तद्व्याख्यातम्। यदि रूपादयः शब्दश्च प्रतिद्रव्यं समस्ताः समुदितास्तस्मिन् समासे समुदाये यो यथाजातीयकः सन्निविष्टः तस्य तथाजातीयस्यैव ग्रहणं न भवितव्यं शब्दे रूपादिवत्। अत्र योऽयं विभागः एकद्रव्ये नानारूपा भिन्नश्रुतयो विधर्म्माणः शब्दा अभिव्यज्यमानाः

दृष्टार्थश्चादृष्टार्थश्च सत्यश्चानृतश्चेति । तत्र दृष्टार्थो नाम त्रिभिर्हेतुभिर्दोषाः प्रकोपमापद्यन्ते *, षड्भिरुपक्रमैरुपशाम्यन्ति,

श्रूयन्ते। यच्च विभागान्तरं सरूपाः समानश्रुतयः सधर्म्माणः शब्दास्तीव्रमन्दधर्म्मतया भिन्नाः श्रूयन्ते तदुभयं नोपपद्यते। नानाभूतानामुत्पद्यमानानामयं धर्म्मो नैकस्य व्यज्यमानस्येति। अस्ति चायं विभागो विभागान्तरञ्च। तेन विभागोपपत्तेर्मन्यामहे। न प्रतिद्रव्यं रूपादिभिः सह शब्दः सन्निविष्टो व्यज्यत इति। द्विविधश्चायं शब्दो वर्णात्मको ध्वनिमात्रश्च। तत्र वर्ण एव शब्दः किं वर्णोपाहितः शब्दो वर्णात्मकः ? आद्ये वर्णस्यानित्यत्वप्रसङ्गः। वर्णोपाधिको ध्वनिश्चेच्छब्दस्तर्हि च वर्णः किं नित्योऽनित्यो वा ? न तावद्ध्वनिवदनित्यः अक्षराभिधानात्; यन्न क्षरति तदक्षरं वर्णमित्यनर्थान्तरम्। न चाक्षरमित्ययं शब्दः परिभाषितोऽकारादिषु। मातृकावर्णेभ्योऽतिरिक्ता वर्णा न मातृकावर्णेभ्यो जायन्ते शब्दाच्छब्दान्तरवत्। कण्ठताल्वाद्यभिघातादिप्रयत्नविशेषेण ध्वनिरेव सिद्धवर्णेनोपाहितः प्रव्यज्यतेऽकारादिरूपेण श्रूयते। तदकारोपाहितध्वनिरेव प्लुतरूपेण श्रूयते, स खल्वकारोपाहितध्वनिसन्तानो न त्वकारसन्तानः। ढक्कादिध्वनिवत्र प्लुतादधिकोऽकारादिध्वनिसन्तानश्च श्रूयते। न च मातृकावर्णादधिकाश्च श्रूयन्ते तस्माद्वर्णो नित्यः। तर्हि किं मातृकावर्णसमसङ्ख्यक एव वर्णात्मकः शब्दो नाधिक इत्यत आह—शब्दो नाम वर्णसमाम्नाय इति। म्ना अभ्यासे। वर्णानां समानासमानानाम् आ सम्यङ् म्नाय इति वर्णसमाम्नायः इति। सम्यगभ्यासो वर्णानां समानासमानानामनन्तयोगादनन्तः। स चैकः संपूर्यते वाक्यरूपेण। अकारादेरेकैकवर्णस्तु न वाक्यरूपेण पूर्य्यते, तस्माद्वाक्यघटकानां पदानां पदघटकानां प्रकृतिप्रत्ययागमानाञ्च वर्णानां ध्वनिरूपेणाभिव्यक्तानां शब्दत्वेऽपि खल्विह वादमार्गपदतया विवक्षाप्रवर्त्तमाने हि वादे वादिनोरुक्तिप्रत्युक्तिभ्यामर्थबोधकत्वाभावात्। न ह्येकेन पदेन तद्घटकधातुप्रातिपदिकादिमात्रेण वा विवक्षितोऽर्थो वादिना शक्यते ज्ञापयितुम् इति, तस्माद्वाक्यमेवार्थस्फोटः। इति ज्ञापयितुमाह—स चतुर्व्विध इति। तं विभजते। दृष्टार्थश्चेत्यादि। यस्यार्थ इह दृश्यते स दृष्टार्थो दृष्टफलः शब्दः। स दृष्टार्थो नाम यथा।

तदुदाहरति—तत्रेत्यादि। त्रिभिर्हेतुभिर्दोषाः प्रकोपमापद्यन्ते। इत्येकं

* प्रकुप्यन्तीति बहुग्रन्थेषु पठ्यते।

सति श्रोत्रादिसद्भावे शब्दादिग्रहणमिति । अदृष्टार्थः पुनरस्ति प्रेत्यभावोऽस्ति मोक्ष इति । सत्यो नाम यथार्थभूतः । सन्त्यायुर्वेदोपदेशाः, सन्ति सिद्ध्युपायाः साध्यानां व्याधीनाम्, सन्त्यारम्भफलानीति । सत्यविपर्य्ययाच्चानृतः ॥३३॥

वाक्यं दृष्टफलम् । असात्म्येन्द्रियार्थसंयोगादिभिस्त्रिभिर्हेतुभिः सर्व्वे वातादयो दोषाः प्रकुप्यन्तीति दृश्यते । एवमुदाहरणान्तरं शिष्यहितार्थं दर्शयति । षड्भिरुपक्रमैरुपशाम्यन्ति । लङ्घनबृंहणीयादिभिः सर्व्वे कुपिता दोषाः प्रशाम्यन्तीति दृश्यते । अपरमुदाहरणमाह—श्रोत्रादिसम्भवे शब्दादिग्रहणमिति । एष हि प्रमाणशब्दः । अथादृष्टार्थमाह—अदृष्टार्थः पुनरस्ति प्रेत्यभावोऽस्ति मोक्ष इति । यस्यार्थ इह न दृश्यते सोऽदृष्टार्थः शब्दः, स खल्वदृष्टफलं वाक्यम् । अस्ति प्रेत्यभाव इत्येकमपरमस्ति मोक्ष इति । एषोऽपि प्रमाणशब्दः । यद्यपि दृष्टार्थादृष्टार्थौ शब्दौ सत्यार्थौ यथार्थभूतत्वात् तथापि दृष्टार्थादृष्टार्थव्यतिरिक्तोऽपि सत्यः शब्दोऽस्तीति पृथगुच्यते सत्यो नाम यथार्थभूत इति । स च यथार्थो द्विविधः—अलोके सत्यो लोके सत्यश्चानृत इति । अव्यक्तादूर्द्ध्वं प्रधानं क्षेत्रज्ञः कालो विद्याविद्याविशिष्टपञ्च ब्रह्म पुरुषा ऋग्वेदादयः सत्याः परमार्थतः । लोके पुनरव्यक्तात्मादयश्चतुर्विंशतिस्तत्त्वानि तन्मयदेवनरादयश्च सङ्घाताः सत्यानृताः परमार्थेऽनृतत्वात् लोके सत्यत्वाच्च । तदुदाहरति—सन्त्यायुर्व्वेदोपदेशाः । इति परमार्थसत्यत्वात् सत्यशब्दः ; सन्ति सिद्ध्युपायाः साध्यानां विकाराणामिति लोके सत्यः परमार्थेऽनृत इति सत्यानृतार्थः सत्यशब्दः । एवं सन्त्यारम्भफलानीति सत्यानृतार्थशब्दः । एषोऽपि प्रमाणशब्दः । अथानृतशब्दमाह—सत्यविपर्य्ययाच्चानृत इति । यथा नास्तीश्वरः नास्त्यात्मा नास्ति कर्म्मफलं नास्ति पुनर्भवः, एवं यावन्मिथ्यावाक्यमिति । मिथ्यार्थशब्दस्यापि वादे प्रयोगादुपदेश इति ।

वर्णसमाम्नायो वाक्यन्तु वशिष्ठाय अग्निनोक्तमाग्नेयपुराणेऽलङ्कारे । सङ्क्षेपाद्वाक्यमिष्टार्थव्यवच्छिन्ना पदावली । तत्र च वर्णवृन्दं स्यात् पदं सुप्तिङ्प्रभेदवत् । सङ्क्षेपात् समासत इष्टार्थव्यवच्छिन्ना पदावली वाक्यं

दृष्टार्थ इति प्रमाणान्तरोपलब्धियोग्यार्थः । त्रिभिर्हेतुभिरिति प्रज्ञापराधादिभिः । षडुपक्रमा लङ्घनादयो लङ्घनबृंहणीयोक्ताः । एतेषां वाक्यानामिहैव दृश्यतेऽर्थ इति दृष्टार्थत्वम् । सत्यिपर्य्ययः—'न सन्त्यायुर्व्वेदोपदेशाः' इत्यादिर्ज्ञेयः ॥ ३३ ॥

भवति । इष्टार्थेन व्यवच्छिन्ना पदावली सम्भवति नानार्थकवाक्यं यत्रार्थे विवक्षा प्रयोक्तुर्वर्त्तते तत्रार्थे यावत्पदाभिधानेन विवक्षणीयार्थसमाप्ति-स्तावदर्थोऽपीष्टः। सा पदावली वाक्यं न त्वविवक्षितेन अर्थेन। यथा हरिर्धावति वेगेन जिघांसन्नरिकुञ्जरमिति। येनार्थेन व्यवच्छिद्यते स एवार्थ इह पदावल्यभिधीयते। हरिर्विष्णुर्वा सिंहो वान्यो वेति तदन्याथ तु न वाक्यम्। तत्र पदं वर्णवृन्दं यत् सुबन्तं तिङन्तञ्च तत् पदम्। सुबन्तं देवो देवीत्यादि, तिङन्तं भवति गच्छतीत्यादि। ननु तत्र भवतीति भूधातुः ततस्तिप् शप् भुव उकारस्य गुण ओकारः संहितायामोकारस्याव् ततः सिध्यति इति। गच्छतीति गमेर्गच्छादेशे सिध्यतीति वर्णो विकारी किमादेशीति? तत्रोक्तं गौतमेन। विकारादेशोपदेशात् संशयः। दध्यत्रेति केचिदिकार इत्वं हित्वा यत्वमापद्यते इति वर्णस्य विकारं मन्यन्ते, केचित् तत्र पुनरिकारस्य प्रयोगे विषये यदिकारस्य स्थानमिकारस्तत्स्थानं जहाति यकारस्तत्स्थान-मापद्यते इत्यादेशं ब्रुवते; उभयमिदमुपदिश्यते, तत्र न ज्ञायते किं तत्त्वमिति संशयः। न तावद्वर्णविकाराः सन्ति, प्रकृतिविवृद्धौ विकारवृद्धेः; न सन्ति वर्णविकाराः प्रकृतिविवृद्धौ हि विकारो विवर्द्धते। द्रव्यविकारेषु प्रकृत्यनु-विधानं दृष्टम्। दध्यत्रेति यकारे वृद्धिदीर्घविधानं नास्ति प्रकृतौ पुनरिकारे वृद्धिश्च दीर्घश्च विधीयते। वैकारिक इत्यादौ वृद्धिः, वीसर्प इत्यादौ दीर्घः। तदनुविधानाभावान्नानुमेयो वर्णविकार इति। तत्राह विकारवादी। न्यूनसमाधिकोपलब्धेर्विकाराणामहेतुः। वर्णविकारप्रतिषेधे प्रकृतिविवृद्धौ विकारविवृद्धेरिति हेतुरहेतुः। कस्मात्? विकाराणां न्यूनसमाधिकोप-लब्धेरिति। द्रव्यविकारः प्रकृतेर्न्यूनाश्च समाश्चाधिकाश्च दृश्यन्ते। द्रव्यविकार-दृष्टान्तश्च। नातुल्यप्रकृतीनां विकारविकल्पात्। अतुल्यानां द्रव्याणां प्रकृतिभावो हि विकल्प्यते विकारश्च प्रकृतीरनुविधीयते। न त्विवर्णमनु-विधीयते यकारस्तस्माद् द्रव्यविकारो न दृष्टान्तः। तत्राह। द्रव्यविकार-वैषम्यवद्वर्णविकारः। यथा द्रव्यत्वेन तुल्यायाः प्रकृतेर्विकारवैषम्यं पृथिवी-विकार एकविधो जलविकारस्त्वन्यविधस्तथा वर्णत्वेन तुल्यायाः प्रकृतेर्विकार-विकल्पः। इकारस्य यकारो यकारस्य पुनरिकार इति। न विकारधर्म्मा-नुपपत्तेः। नैवं सामान्येन विकारविकल्पः। विकारधर्म्मानुपपत्तेः। अयं हि विकारधर्म्मो द्रव्यसामान्येऽपि यदात्मकं द्रव्यं मृद्वा सुवर्णं वा तस्यात्मनो-ऽन्वये पूर्व्वव्यूहो निवर्त्तते व्यूहान्तरञ्चोपजायते, तं विकारमाचक्ष्महे।

यथा सुवर्णं कुण्डलं भवति, मृत्तिका घटो भवति, न तथा इकारो यकारो यकारो वा इकारः। तदात्मान्वयाभावात्। विकाराभावे हेत्वन्तरञ्चाह। विकारप्राप्तानामपुनरावृत्तेः। न वर्णविकाराः सन्ति विकारप्राप्तानाम् अपुनरावृत्तेः। यथा काष्ठस्य भस्मत्वे पुनर्न काष्ठरूपेणावृत्तिरिकारस्य यत्वे पुनर्यकारस्येत्वं दृश्यते। दध्यत्र, विव्यथे, अथैषः। सुवर्णादीनां पुनरावृत्तेरहेतुः। विकारप्राप्तानाम् अपुनरावृत्तेरिति हेतुरहेतुः। सुवर्णादीनां पुनरावृत्तेः। कटकः सुवर्णात्मकः कुण्डलं जायते कुण्डलत्वं विहाय पुनः कटकत्वं प्राप्नोति। कथं पुनरावृत्तिः? तद्विकाराणां सुवर्णभावाव्यतिरेकात्। सुवर्णादीनां विकाराणां सुवर्णभावेनैव प्रकृत्यनुच्छेदेनैव विकारप्राप्तानां पुनः आवृत्तेः। विकारप्राप्तानामपुनरावृत्तेरिति हेतुरहेतुः। नन्ववस्थितं सुवर्णं हीयमानेन कुण्डलत्वेन चोपजायमानेन च धर्म्मेण धर्म्मि भवति। नैवं कश्चिद्वर्ण इति। तस्मात् सुवर्णदृष्टान्तो नोपपद्यते। तत्राह विकारवादी। वर्णत्वाव्यतिरेकाद् वर्णविकाराणामप्रतिषेधः। वर्णत्वेनावस्थित इकारादिः हीयमानेन खलु इकारत्वधर्म्मेणोपजायमानेन च यत्वधर्म्मेण धर्म्मी भवति, तस्माद्वर्णविकाराः सन्ति न तेषां प्रतिषेधः। तत्राह प्रतिषेधवादी। सामान्यवतो धर्म्मयोगो न सामान्यस्य। सुवर्णत्वसामान्यवतो हि सुवर्णस्य कुण्डलत्वकटकत्वधर्म्मयोगो न सुवर्णत्वस्य सामान्यस्य। न तथा वर्णत्वसामान्यवतो वर्णस्य निखिलस्य इकारत्वयकारत्वधर्म्मयोगः। न वा वर्णत्वस्य सामान्यस्य तद्धर्म्मयोग इति न वर्णविकाराः सन्ति। इतश्च वर्णविकारानुपपत्तिः। नित्यत्वे विकारात् अनित्यत्वे चानवस्थानात्। नित्या वर्णा इति पक्षे इकारयकारौ वर्णौ तदुभयोनित्यत्वे विकारानुपपत्तिरनित्यत्वे च विनाशित्वात् कः कस्य विकार इति। अनित्या वर्णा इति पक्षेऽनवस्थानं वर्णानाम्। स चोत्पत्तिनिरोधः। उत्पद्यनिरुद्धे इकारे यकार उत्पद्यते। यकारे चोत्पद्यनिरुद्धे इकार उत्पद्यते। इति कः कस्य विकारः? तदेतदवगृह्य सन्धाने सन्धाय चावग्रहे ज्ञयमिति। नास्ति च सुवर्णस्य स्वरूपं किमपि रूपं यद्रूपं सदुत्पद्यते तदेव विकारभूतं तदेव कटकः स्यात् कटकः पुनः कुण्डलं कुण्डलं पुनः कटक इति। एवं वर्णेऽपि, स्वरूपं किमपि रूपं नास्ति यदिकारादिरूपेणोत्पद्यते स च विकारभूतस्तस्य विकारो यकारस्तस्य पुनरिकार इति समाधिः। नित्यत्वपक्षे च समाधिः।

नित्यानाम् अतीन्द्रियत्वात् तद्धर्म्मविकल्पाच्च वर्णविकाराणामप्रतिषेधः। नित्या वर्णा न विक्रियन्ते इति प्रतिषेधो युक्तः। कस्मात्? नित्यानामतीन्द्रिय-

त्वात् तद्धर्म्मविकल्पाच्च, नित्यानां सर्व्वषामतीन्द्रियत्वात्। तत्र सर्व्वषां नित्यानाम् अतीन्द्रियत्वेऽपि द्वौ धर्म्मौ विकल्प्येते, परिणामी चैकोऽंशोऽपरिणामी चापरोऽंशस्तयोः अपरिणामी योऽंशः स मुख्यः, परिणामी तु योऽंशस्तदंशे कारणतः प्रव्यक्तः सन् कार्य्यरूपेण जायते, स तस्य विकारः। अन्यथा सन्नित्यमद्रव्यवत् कार्य्यं कारणं सामान्यविशेषवदिति द्रव्यगुणकर्म्मणामविशेषः कथमुपपद्यते, यन्नित्यं तत् कथं कारणं स्यात्? परिणाम्यंशो यदि न वर्त्तते परिणम्य हि कार्य्यमारभते। द्रव्यगुणयोः सजातीयारम्भकत्वञ्च कथं स्यात्? आकाशः आकाशान्तरमारभते तथात्मात्मानं कालः कालान्तरं दिग्दिगन्तरं मनो मनोऽन्तरमिति। तस्मादेवं परिणामापरिणामौ द्वौ धर्म्मौ विकल्प्येते। तद्विकल्पान्न दोषः। अन्यथाविकल्पे तु दोषः स्यात्। तद्यथा। नित्यं किञ्चिदतीन्द्रियं किञ्चिदैन्द्रियकम्। किञ्चिद्विक्रियते किञ्चिन्न विक्रियते, इत्येवं विकल्पो विरुद्धो हेत्वाभासो भवति। ऐन्द्रियकं चेन्नित्यं स्याद्विकारो न स्याद् विकारश्चेन्नित्यं न स्यादिति। तस्मान्नैवं विकल्प्यते।

अनित्यत्वपक्षे तु समाधीयते। अनवस्थायित्वे वर्णोपलब्धिवद्विकारोपपत्तिः। यथाऽनवस्थायिनां वर्णानां श्रवणं भवति, एवमेषां विकारो भवति। इत्यसम्बन्धादसमर्था। अर्थप्रतिपादिका वर्णोपलब्धिः न विकारेण सम्बन्धादसमर्था, या गृह्यमाणा वर्णं विकारमुपपादयेदिति। तत्र यादृगियं गन्धगुणा पृथिवी एवं शब्दस्पर्शादिगुणापि। तादृगेतद्भवतीति। न च वर्णोपलब्धिर्वर्णनिवृत्तौ वर्णान्तरप्रयोगस्य निवर्त्तिका योऽयमिवर्णनिवृत्तौ यकारस्य प्रयोगः यद्ययं वर्णोपलब्ध्या निवर्त्तते तदा तत्रोपलभ्यमान इवर्णो यत्वमापद्यत इति गृह्यते। तस्माद्वर्णोपलब्धिरहेतुर्वर्णविकारस्येति। तत्राह—विकारधर्म्मित्वे नित्यत्वाभावात् कालान्तरे विकारोपपत्तेश्च अप्रतिषेधः। तद्धर्म्मविकल्पादिति न युक्तः प्रतिषेधः। न खलु विकारधर्म्मकं किञ्चिन्नित्यमुपलभ्यते। इति वर्णोपलब्धिवत् इति न युक्तः प्रतिषेधः। वर्णविघाते हि दधि अत्रेति प्रयुज्य चिरं स्थित्वा ततः संहितायां प्रयुङ्क्ते दध्यत्रेति चिरनिवृत्ते चायमिवर्णे यकारः प्रयुज्यमानः कस्य विकार इति प्रतीयते। कारणाभावात् कार्य्याभाव इत्यनुयोगः प्रसज्यते इति। इतश्च वर्णविकारानुपपत्तिः। प्रकृत्यनियमाद्वर्णविकाराणाम्। वर्णविकाराभावप्रतिषेधो न युक्तः। वर्णविकाराणां प्रकृत्यनियमात्। इकारस्थाने यकारः श्रूयते यकारस्थाने चेकारो विधीयते। दृष्टो हि विकारधर्म्मित्वे प्रकृतिनियमः। अनियमे नियमाच्चानियमः। योऽयं प्रकृतेरनियम उक्तः स नियतो यथाविषयं

व्यवस्थितः। नियतत्वान्नियम इति भवति। एवं सत्यनियमो नास्ति। तत्र यदुक्तं प्रकृत्यनियमादित्ययुक्तमिति। नियमानियमविरोधादनियमे नियमाच्चाप्रतिषेधः। नियम इत्यत्राभ्यनुज्ञा। अनियम इति तस्य प्रतिषेधः। अनुज्ञातनिषिद्धयोश्च व्याघातादनर्थान्तरत्वं न भवति। अनियमश्च नियतत्वात् नियमो न भवतीति। यद्येवं परिणामात् कार्य्यकारणभावाद्वा वर्णविकारोपपत्तिर्भवति तर्हि किं स्थान्यादेशभावात् प्रयोगे विकारशब्दप्रयोग इति ; स च भिद्यते। गुणान्तरापत्त्युपमर्द्दह्रासवृद्धिलेशश्लेषेभ्यस्तु विकारोपपत्तेर्वर्णविकारः। गुणान्तरापत्तिरुदात्तस्यानुदात्त इत्येवमादिः, उपमर्द्दो नाम एकरूपनिवृत्तौ रूपान्तरोत्पत्तिः, ह्रासो दीर्घस्य ह्रस्वः, वृद्धिर्ह्रस्वस्य दीर्घः, गुणवृद्धिप्लुता वा तयोः, लेशो लाघवम्, अस्तेः स्त इति, श्लेष आगमः प्रकृतेः प्रत्ययस्य वा। एत एव विशेषा विकाराः, एत एवादेशा इति। एते चेद्विकारा उपपद्यन्ते तर्हि वर्णविकारा इति। ते विभक्तयन्ताः पदम्। यथादर्शनं विकृता वर्णा विभक्त्यन्ताः पदसंज्ञा भवन्ति। विभक्तिर्द्वयी सुप् च तिङ् च। सुप्नामिकी तिङाख्यातिकी। उपसर्गनिपाताव्ययास्तर्हि न पदसंज्ञाः स्युः ? नैवम्, अव्ययाल्लोप इति शिष्यते। पदसंज्ञाप्रयोजनं पदेनार्थसम्प्रत्ययः। ननु धातुनाम्नां प्रत्यययोगेन पदं भवति तेन एकेन पदेन कथमर्थसम्प्रत्ययो भवति, धातुनामप्रत्ययेभ्य एवार्थसम्प्रत्ययो भवति। यथा पचतीति पदम्। तत्र डु पच ष् पाके लः कर्त्तरीति। वर्त्तमाने लडिति लटस्तिप्। नाम्नि प्रथमो युष्मदि मध्यमोऽस्मदुत्तम इति, एकस्मिन् एकवचनमिति नाम्न्येकस्मिन्नेकवचनं तिप्। तथा च एकाश्रयो वर्त्तमानः पाक इति पचतीति पदार्थो न भवति, पचेः पाकार्थस्तिप् एकार्थो नाम योगी धातुयोगी तु वर्त्तमानोऽर्थः इति। वर्ण एवार्थस्फोट इति चेन्न। न ह्यन्तरेण पदावयवभावं प्रकृतिप्रत्ययौ मिथोऽन्वयमापद्येते न चानापन्नान्वयौ स्वस्वार्थं सम्प्रत्याययतः। सर्व्वादेशाश्च वस्मसादयो न प्रकृतिप्रत्ययविभागनिर्द्देशाः सन्ति। तस्मात् पदमेवार्थस्फोट इति। नैवं ; पदमपि नान्तरेण वाक्यावयवभावं सम्पूर्णार्थं प्रत्याययति नान्तरेण च पदान्तरार्थसान्निध्यं सम्पूर्णार्थप्रत्यायने मिथोऽन्वयमापद्यते। न च पचतेऽयं ब्रूतेऽसावित्यादिषु यमिति साविति च पदम्। तत्र इदमदसोरर्थसम्प्रत्ययेनान्तरेण विहितसंहिताप्रतिसन्धानं पदज्ञानं भवति, न च वाक्यज्ञानमन्तरेण तथाविधपदज्ञानं भवतीति वाक्यमेवार्थस्फोटः। तद्धि परस्परमन्वितानां स्वावयवभूतानां पदानामर्थसमुदायं स्फोटयति वर्णानामानुपूर्व्या वाक्यस्य श्रवणेन तदवयवस्मृत्या तत्तदवयवार्थबोधात् ततः

पदानां सर्व्वेषामथान्वयं योग्यतयावधार्य्य सर्व्वार्थानामेकपिण्डेन बोधो वाक्याद् भवति । तत्रान्वयो द्विविधः । प्रयोक्तुरन्वितार्थपदप्रयोगे कर्त्तव्येऽन्वितार्थाभिधानं पदानां वाक्यार्थबोद्धः पदाभिहितार्थान्वय इति । वाक्यञ्च उक्तम्, संक्षेपाद् वाक्यमिष्टार्थ-व्यवच्छिन्ना पदावलीति । इष्टो ह्यर्थः स भवति नानार्थानां योऽर्थो विवक्षितो यावद्भिः पदानामर्थैश्च समाप्यतेऽभीष्टार्थ-ज्ञापनं तदिष्टार्थेन व्यवच्छिद्यते भिद्यते या पदानामावलिः स इष्टार्थव्यवच्छिन्ना पदावलिर्वाक्यं सङ्क्षेपात् सामान्याद्भवति । तस्य वाक्यस्य तद्वाक्यावयवानां पदानां तत्तत्पदावयवानाञ्च धातुप्रातिपदिकप्रत्ययानामर्थाभिधाने सामर्थ्य-मुक्तमग्निपुराणेऽलङ्कारप्रकरणेऽग्निना वशिष्ठाय । तद् यथा—शब्दार्थाभयालङ्कारेषु प्रशस्तिकान्त्यौचित्यसंक्षेपयावदर्थताभिव्यक्तिभेदेन षड् विधेषु मध्येऽभिव्यक्तिर्नाम योऽलङ्कारस्तल्लक्षणमुक्तम् । प्रकटत्वमभिव्यक्तिः श्रुतिराक्षेप इत्यपि । तस्या भेदौ श्रुतिस्तत्र शाब्दं स्वार्थसमर्पणम् । भवेन्नैमित्तिकी पारि-भाषिकी द्विविधैव सा । निमित्तं त्रिविधं तत्र स्यात् तु जातिर्गुणः क्रिया । सङ्केतः परिभाषेति ततः स्यात् पारिभाषिकी । मुख्यौपचारिकी चेति सा च सा च द्विधा द्विधा । स्वाभिधेयस्खलद्वृत्तिरमुख्यार्थस्य वाचकः । यया शब्दो निमित्तेन केनचित् सौपचारिकी । सा च लाक्षणिकी गौणी लक्षणागुणयोगतः । अभिधेयाविनाभूत-प्रतीतिर्लक्षणोच्यते । अभिधेयेन सम्बन्धात् सामीप्यात् समवायतः । वैपरीत्यात् क्रियायोगाल्लक्षणा पञ्चधा मता । गौणी गुणानामानन्त्यादनन्ता तद्विवक्षया । अन्यधर्म्मस्ततोऽन्यत्र लोकसीमानुरोधिना । सम्यगाधीयते यत्र स समाधिरिह स्मृतः । श्रुतेरलभ्यमानोऽर्थो यस्माद्भाति सचेतनः । स आक्षेपो ध्वनिः स्याच्च ध्वनिना व्यज्यते यतः । शब्देनार्थेन यत्रार्थः कृत्वा स्वयमुपार्ज्जनम् । प्रतिषेध इवेष्टस्य यो विशेषोऽभिधित्सया । तमाक्षेपं ब्रुवन्त्यत्र स्तुतं स्तोत्रमिदं पुनः । अधिकारादपेतस्य वस्तुनोऽन्यस्य या स्तुतिः । यत्रोक्तं गम्यते नार्थस्तत्-समानविशेषणम् । सा समासोक्तिरुदिता सङ्क्षेपार्थतया बुधैः । अपह्नुतिरपह्नुत्य किञ्चिदन्यार्थसूचनम् । पर्य्यायोक्तं यदन्येन प्रकारेणाभिधीयते । एषामेकत्र संज्ञा च समाख्या ध्वनिरित्यतः । इति । व्याख्यातञ्चैतत् सर्व्वं तिस्रैषणीये सङ्क्षेपेण पुनरिह विस्तरेण व्याख्यायते ।

तद् यथा—प्रकटत्वमभिव्यक्तिः श्रुतिराक्षेप इत्यपि । तस्या भेदौ श्रुतिस्तत्र शाब्दं स्वार्थसमर्पणमिति । प्रकटत्वं स्फुटत्वमर्थस्य प्रव्यक्तीकरणसामर्थ्यमभि-

व्यक्तिरुच्यते। तस्या अभिव्यक्तेः द्वौ भेदौ श्रुतिराक्षेप इत्यपि। तत्र तयोर्मध्ये श्रुतिर्नामाभिव्यक्तिः शाब्दं शब्दकृतं स्वस्यार्थस्य समर्पणमुच्यते। शब्देन योऽर्थः समर्प्यते तदर्थसमर्पणं श्रुतिर्नामाभिव्यक्तिरुच्यते। तत्-श्रुतिग्रहस्तु व्याकरणादिभ्यः स्यात्। तदुक्तम्। शक्तिग्रहं व्याकरणोपमानकोषाप्तवाक्याद् व्यवहारतश्च। वाक्यस्य शेषाद् विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः। इति। तत्र नानाश्रुतीनामर्थभेदग्रहणमर्थादिभ्यो भवति। तदुक्तम्। अर्थात् प्रकरणाल्लिङ्गात् औचित्याद् देशकालतः। शब्दार्थास्तु विभिद्यन्ते न रूपादेव केवलमिति। शब्दानां शक्तिर्व्याकरणाद् गृह्यते। डु पच ष् पाके। पचेः पाके श्रुतिः। लः कर्म्मणि च भावे चाकर्म्मकेभ्य इत्यादिना तिङां कर्त्तरि कर्म्मणि भावे च श्रुतिः तद्विशेषग्रहणं शप्श्यनादि-यगादिभ्यः स्यादिति।०। उपमानात्। गौरिव गवय इति गोसादृश्याद् गवयज्ञानम्।०। कोषात्। अस्त्री पङ्कं पुमान् पाप्मा पापं किल्विषकल्मषमित्यादि।०। आप्तवाक्यादाप्तवचनात्। लोके यथायं घटोऽयं पट इत्येवमादिः।०। व्यवहारतस्तु। यवशब्देन याज्ञिका याज्ञिकदेशे शूकधान्यविशेषं व्यवहरन्ति। म्लेच्छाः कङ्गुम्।०। वाक्यशेषात्। विभक्त्यन्तं पदमिति वाक्ये विभक्तिशब्दस्य सुप्तिङ्विभक्तिरिति शेषवचनात्।०। विवृतेर्यथा। इहव श्रुतिस्तत्र शाब्दं स्वार्थसमर्पणमिति, तस्मान्नेह श्रुतिर्वेदः।०। सिद्धपदसान्निध्यात्। रामलक्ष्मणौ पश्येति लक्ष्मणसान्निध्याद् दाशरथौ रामशब्दग्रहः। रामकृष्णौ पश्येति कृष्णपदसान्निध्याद् वासुदेवे रामशब्दग्रहः। इति। तथा शब्दार्थसंशये विशेषो गृह्यतेऽर्थात्।०। द्रव्याणां शक्तिरित्यत्रार्थात् सामर्थ्यं न तु शक्तिर्देवता।०। प्रकरणात्। रामायणे रामशब्दो दाशरथौ।०। लिङ्गात्। मित्रं नास्ति ममात्र तु। इह क्लीवाद् बान्धवे, मित्रो भातीति पुंलिङ्गात् सूर्य्ये।०। औचित्यात्। कृष्णो नमति देवकीमित्यत्र वासुदेवे कृष्णशब्दो न पाराशर्य्ये।०। देशाद् यथा। गर्त्ते रौति हरिरिति भेके हरिशब्दः।०। कालतः। वर्षासु रौति हरिः इति भेके हरिशब्दग्रहः। इति।

तां श्रुतिं विभजते—भवेन्नैमित्तिकी पारि-भाषिकी द्विविधैव सा। इति। निमित्तेन विशिष्टे श्रुतिर्नैमित्तिकी, परिभाषया श्रुतिः पारिभाषिकी, इति द्विधा श्रुतिः। तत्र निमित्तमाह—निमित्तं त्रिविधं तत्र स्यात् तु जातिर्गुणः क्रियेति। जातिः गुणश्च क्रिया चेति त्रिविधं शब्दार्थश्रुतौ निमित्तम्। प्राक्सर्गे यस्य वस्तुनो यन्नाम परमेश्वरेण बुद्धिशक्त्याध्यवस्य यदृच्छया शक्त्या नियमितम्, तत्र तत्र वस्तुनि तस्य तस्य शब्दस्य प्रवृत्तिनिमित्तं प्रसिद्धमिति। तत्र कस्यचित्

शब्दस्य जातौ कस्यचिद् गुणे कस्यचित् क्रियायां प्रसिद्धप्रवृत्तेर्जातिशब्दो गौरित्यादिः, गुणशब्दो नील इत्यादिः, क्रियाशब्दश्चल इत्यादिः। पारिभाषिकीमाह—सङ्केतः परिभाषेति ततः स्यात् पारिभाषिकी। नामकृद्भिः कृतः सङ्केतः परिभाषा। इत्यतः परिभाषया शब्दस्य प्रवृत्तिः पारिभाषिकी नाम श्रुतिः। यथा शिवदुर्गाहरिप्रभृतिषु शिवादयः शब्दाः यदृच्छासङ्केताद् यादृच्छिका इति।

पातञ्जलभाष्ये चोक्तम्। जातिशब्दो गुणशब्दः क्रियाशब्दो यदृच्छाशब्दश्चतुर्थः। गौः शुक्लश्चलो डित्थ इति शब्दानां चतुष्टयी प्रवृत्तिरिति। सङ्केतस्तु द्विविधः—प्राक् प्रसिद्ध आधुनिकश्च। पित्रादिभिर्नामकरणं शास्त्रकारेण संज्ञाकरणं प्रसिद्धः शिवादिः। ते द्वे विभजते। मुख्यौपचारिकी चेति सा च सा च द्विधा द्विधा। इति। मुख्या चौपचारिकी चेति सा श्रुतिः पुनर्द्विधा। सा च नैमित्तिकी सा च पारिभाषिकी द्विधा द्विधा भवति। मुख्या चौपचारिकी चेति। मुख्या नैमित्तिकी औपचारिकी नैमित्तिकी, मुख्या पारिभाषिकी औपचारिकी च पारिभाषिकीति। मुख्या प्रसिद्धा, यस्य योऽर्थः तस्यैवाभिधोच्यते। इति। लोके वेदे च यस्य योऽर्थस्तस्य तस्मिन्नर्थेऽभिधानाम श्रुतिर्मुख्या प्रसिद्धा। यथा गौः शुक्लश्चल इत्यादिः। नैमित्तिकी। शिवदुर्गादिः पारिभाषिकी च इति मुख्या।

अथौपचारिकीं लक्षयति। स्वाभिधेयस्खलद्वृत्तिरमुख्यार्थस्य वाचकः। यया शब्दो निमित्तेन केनचित् सौपचारिकीति। शब्दः केनचिन्निमित्तेन स्वाभिधेयादर्थात् स्खलन्ती वृत्तिर्यस्य स स्वाभिधेयस्खलद्वृत्तिः सन् अमुख्यार्थस्य वाचको यया श्रुत्या स्यात् सा श्रुतिः औपचारिकी नैमित्तिकी पारिभाषिकी च। नैमित्तिकी यथा। नदीषु वसतां श्रेष्ठो गङ्गावासी नरः स्मृतः। गङ्गावासीति गङ्गासमीपे वासी लक्षणात्र पारिभाषिकी। गौर्महिषीति गौणी नैमित्तिकी, यमुना गङ्गा गङ्गेवेति पारिभाषिकी गौणीति द्विधा औपचारिकी। औपचारिकीं विभजते। सा च लाक्षणिकी गौणी लक्षणागुणयोगतः। इति। सा नैमित्तिकी पारिभाषिकी चौपचारिकी द्विधा, लाक्षणिकी च गौणी च। तत्र लाक्षणिकी लक्षणायोगतः, गौणी गुणयोगतः स्यात्। तत्र लक्षणां लक्षयति। अभिधेयाविनाभूत-प्रतीतिर्लक्षणोच्यते। अभिधेयोऽभिधया योऽर्थः शब्देनाभिधीयते तस्याभिधेयस्यार्थस्याविनाभूतस्तदर्थस्यापरित्यागेनामुख्यो योऽर्थस्तस्य प्रतीतिर्यया स्यात् सा लक्षणोच्यते इति। तत्राभिधेयार्थाविनाभावो यथा स्यात् तद्वचनेन

लक्षणां विभजते। अभिधेयेन सम्बन्धात् सामीप्यात् समवायतः। वैपरीत्यात् क्रियायोगाल्लक्षणा पञ्चधा मता। इति। अभिधेयेन सम्बन्धादेका लक्षणा—कुन्ताः प्रविशन्ति, पुण्यतम आयुर्व्वेदः। अभिधेयेन सामीप्याद् द्वितीया लक्षणा—नद्यां ग्रामः, गङ्गायां घोषः। समवायतस्तृतीया—इमाः क्षत्रियजातयो वृषलत्वं गताः। इति। क्षत्रियजातिशब्दस्य तज्जातिमद्व्यक्तिषु लक्षणा। तच्छ्वेतः शङ्ख इति वैपरीत्यात्। असमवायतः यथा—मधुरो गुरुः स्निग्धः शीतश्च। मधुरे स्निग्धत्वादीनामसमवायात्। मधुरद्रव्ये लक्षणा चतुर्थी। क्रियायोगात् स्वाभिधेयाविनाभूतार्थप्रतीतिहेतुः पञ्चमी लक्षणा। अम्लो रुचिकृत्, रुचिजननक्रियायोगादम्लशब्दस्याम्लद्रव्ये लक्षणेति। समवायस्य सम्बन्धरूपत्वेऽपि पृथग्वचनं तद्वैपरीत्याल्लक्षणाकरणार्थं सम्बन्धसामान्यवैपरीत्याल्लक्षणाप्रतिषेधार्थञ्चेति। तेनाभिधेयार्थसम्बन्धादेव ये लक्षणां वदन्ति तन्निरस्तम्।

लक्षणां विभज्य गौणीं विभजते। गौणी गुणानामानन्त्यादनन्ता तद्विवक्षया। गौणी नामौपचारिकी नैमित्तिकपारिभाषिकार्थाविनाभूतार्थप्रतीतिहेतुरनन्ता गुणानामानन्त्यात्। तत्तद्गुणविवक्षया तत्तद्गौणी नामौपचारिकी। यथाग्निर्माणवक इत्यग्निवज्ज्योतिष्मत्त्वादग्निः, पुरुषः सिंह इति सिंहवद्विक्रमगुणवत्त्वात् सिंहः, पुरुषोऽयं गर्द्दभ इति गर्द्दभवदल्पबुद्ध्यादिगुणयोगाद् गर्द्दभ इत्येवमादिः। अस्य संज्ञान्तरमाह—अन्यधर्म्मस्ततोऽन्यत्र लोके साम्यानुरोधिना। सम्यगाधीयते यत्र स समाधिरिति स्मृतः। इति। अन्यस्यैकस्य धर्म्मो यत् ततोऽन्यत्र यत्र लोके साम्यानुरोधिना पुंसा सम्यगाधीयते स समाधिरुच्यते। अग्निर्माणवक इत्यग्निगुणसमाधानान्माणवकः समाधिरिति। अथात्र जिज्ञास्यम्।—जातिनिमित्तेन यया श्रुत्यार्थे शब्दः प्रवर्त्तत सा श्रुतिर्नैमित्तिकीति, यथा गौरिति यदुक्तं तत्र कः पुनर्गोपदार्थः? किं गोत्वं गवाकृतिर्वा गोव्यक्तिर्वेति संशयान आह—यत् तद् गौतमेनोक्तम्। तदर्थे व्यक्त्याकृतिजातिसन्निधावुपचारात् संशय इति। व्याख्यातं वात्स्यायनेन।—अविनाभाववृत्तिः सन्निधिः। अविनाभावेन वर्त्तमानासु व्यक्त्याकृतिजातिषु गौरिति प्रयुज्यते। तत्र न ज्ञायतेऽन्यतमः पदार्थः किम्, उत सर्व्व इति। शब्दस्य प्रयोगसामर्थ्यात् पदार्थावधारणम्। तस्मात्—या-शब्दसमूहत्यागपरिग्रह-सङ्ख्यावृद्ध्यपचयापचयवर्णसमासानुबन्धानां व्यक्तावुपचाराद् व्यक्तिः। व्यक्तिः पदार्थः। कस्मात्? याशब्दप्रभृतीनां व्यक्तावुपचारात् उपचारतः प्रयोगः। या गौस्तिष्ठति या गौर्निषण्णेति।

नेदं वाक्यं जातेरभिधायकम् अभेदाद्, भेदात् तु द्रव्याभिधायकम्। गवां समूह इति भेदाद् द्रव्याभिधायकम्। न जातेरभेदात्। गोत्वजातिर्हि नानेका—वैप्राय गां ददातीति द्रव्यस्य त्यागो न जातेरमूर्त्तत्वात् प्रतिक्रमानुक्रमानुपपत्तेश्च। दाने ग्रहीतुर्यः क्रमः स प्रतिक्रमः, दातुर्यो दानेतिकर्त्तव्यताक्रमः सोऽनुक्रमः। परिग्रहः स्वत्वेनाभिसम्बन्धः। कौण्डिन्यस्य गौर्ब्राह्मणस्य गौरिति। द्रव्याभिधाने द्रव्यभेदात् सम्बन्धभेदः। कौण्डिन्यस्य या गौर्ब्राह्मणस्यान्यस्यापरा गौर्न सा गौरिति परिग्रहे भवत्युपपन्नः। जातिस्त्वभिन्ना। या कौण्डिन्यस्य गौः सान्यस्य ब्राह्मणस्य गौरिति। सङ्ख्या दश गावो विंशतिर्गाव इति भिन्नं द्रव्यं सङ्ख्यायते न जातिरभेदादिति। वृद्धिः कारणतो द्रव्यस्योपचयः। अवर्द्धत गौरिति। निरवयवा तु जातिर्न वर्द्धते। एतेनापचयो व्याख्यातः। वर्णः शुक्ला गौः कपिला गौरिति, द्रव्यस्य गुणयोगो न सामान्यस्य जातेः। समासः गोहितं गोसुखमिति द्रव्यस्य हितसुखादियोगो न जातेरिति। अनुबन्धः सरूपप्रजननसन्तानः। गौर्गां जनयतीति तदुत्पत्तिधर्म्मत्वाद् द्रव्ये युक्तं न जातौ विपर्य्ययादिति।

द्रव्यं व्यक्तिरिति ह्यनर्थान्तरम्। अस्य प्रतिषेधः। न तदनवस्थानात्। न व्यक्तिः पदार्थः। कस्मात्? अनवस्थानात्। याशब्दप्रभृतिभिर्यो विशिष्यते स गोपदार्थः। या गौस्तिष्ठति या निषण्णेति न द्रव्यमात्रमविशिष्टं जात्या विनाऽभिधीयते। किं तर्हि? जातिविशिष्टं, तस्मान्न व्यक्तिः पदार्थः। एवं समूहादिषु द्रष्टव्यम्।०। यदि न व्यक्तिः पदार्थः, कथं तर्हि व्यक्तावुपचारः इति। निमित्तादतद्भावे तदुपचारो दृश्यते खलु। सहचरणस्थानतादर्थ्यवृत्तमानधारणसामीप्ययोगसाधनाधिपत्येभ्यो ब्राह्मणपुरुषवीरणराजसक्तुचन्दनदेशशाटकान्नपुरुषेष्वतद्भावेऽपि तदुपचारः। अतद्भावेऽपि तदुपचार इति, अतच्छब्दस्य तेन शब्देनाभिधानमिति। सहचरणात्। यष्टिकां भोजयेति यष्टिकासहचरितो ब्राह्मणोऽभिधीयते। स्थानात्। मञ्चाः क्रोशन्तीति मञ्चस्थाः पुरुषा अभिधीयन्ते। तादर्थ्यात्। कटार्थं व्यूह्यमानेषु वीरणेषु कटं करोतीति। वृत्तात्। यमो राजा कुवेरो राजेति तद्वद् वर्त्तते इति राजशब्दे राजवद्वृत्तोऽभिधीयते। मानात्। आढ़केन मिताः सक्तव इत्याढ़कसक्तवः। धारणात्। तुलया धृतं चन्दनं तुलाचन्दनमिति। सामीप्यात्। गङ्गायां गावश्चरन्तीति देशोऽभिधीयते सन्निकृष्ट इति। योगात्। कृष्णेन रागेण युक्तः शाटकः कृष्ण इति। साधनात्। अन्नं प्राणा इति। आधिपत्यात्।

अयं पुरुषः कुलम्, अयं गोत्रमिति। इत्येवं व्यक्तौ तूपचारदर्शनाद् व्यक्तिः पदार्थः।

तत्राह वादी—तत्रायं सहचरणाद् योगाद् वा जातिशब्दो व्यक्तावुपचारात् प्रयुज्यते इति। तत्र चोत्तरमाह—यदि गौरित्यस्यार्थो न व्यक्तिरस्तु तर्हि—आकृतिस्तदपेक्षत्वात् सत्त्वव्यवस्थानसिद्धेः। यदि व्यक्तिर्नास्तु पदार्थस्तर्हि चाकृतिः पदार्थः। कस्मात्? तदपेक्षत्वात् सत्त्वव्यवस्थानसिद्धेः। सत्त्वावयवानां हस्तादीनां तदवयवानाञ्च नियतो व्यूह आकृतिः। तस्यां गृह्यमाणायां सत्त्वस्य द्रव्यस्य व्यवस्थानं सिध्यति। इयं गौरयमश्व इति। नागृह्यमाणायाम्। यस्य ग्रहणात् सत्त्वव्यवस्थानं सिध्यति, तं शब्दोऽभिधातुमर्हति, सोऽस्यार्थः। नैतदुपपद्यते। यस्य जात्या योगस्तदत्र जातिविशिष्टमभिधीयते गौरिति। न चावयवव्यूहस्य जात्या योगः। कस्य तर्हि जात्या योगः? नियतावयवस्य व्यूहस्य द्रव्यस्य जात्या योगः। तस्मान्नाकृतिः पदार्थः। अस्तु तर्हि जातिः पदार्थः। तत्राह—व्यक्त्याकृतियुक्ते मृद्गवकेऽपि जातिरस्ति सा किं तर्हि गोपदार्थ इति? तत्राह। व्यक्त्याकृतियुक्तेऽप्यप्रसङ्गात् प्रोक्षणादीनां मृद्गवकेऽजातेः। जातिः पदार्थः। कस्मात्? व्यक्त्याकृतियुक्तेऽपि मृद्गवके प्रोक्षणादीनामप्रसङ्गादिति। गां प्रोक्षय गामानय गां देहीत्येतानि न मृद्गवके प्रयुज्यन्ते। कस्मात्? अजातेरिति जातेः अभावात्। अस्ति हि तत्र व्यक्तिरस्त्याकृतिर्यदभावात् तत्रासम्प्रत्ययः स पदार्थस्तस्माज्जातिः पदार्थ इति। तत्राह—नाकृतिव्यक्त्यपेक्षत्वाज्जात्यभिव्यक्तेः। न जातिः पदार्थः। जातेर्ह्यभिव्यक्तिराकृतिव्यक्ती अपेक्षते। नागृह्यमाणायामाकृतौ व्यक्तौ च शुद्धं जातिमात्रं गृह्यते। आकृतिग्रहणा हि जातिस्तस्मान्न जातिः पदार्थ इति। न वै चेदासु पदार्थेन भवितुं शक्यम् इति कस्तर्हीदानीं पदार्थ इत्यत आह—व्यक्ताकृतिजातयस्तु पदार्थः। तु-शब्दो विशेषणार्थः। किं विशिष्यते? प्रधानाङ्गभावस्यानियमेन पदार्थत्वम् इति। यदा हि भेदविवक्षा विशेषगतिश्च तदा प्रधानं व्यक्तिः, अङ्गन्तु जात्याकृती। यदा तु न भेदो विवक्षितः सामान्यगतिश्च तदा जातिः प्रधानमङ्गन्तु व्यक्त्याकृती स्वीकृते। तदेतद्बहुलं प्रयोगेषु। आकृतेस्तु प्रधानभाव उत्प्रेक्षितव्य इति। यथा सरूपाणामेकशेषे गावौ गाव इत्यादौ द्रव्यं प्रधानमङ्गं जात्याकृती। जातिवचनात् स्त्रियां ङीप् ब्राह्मणी महिषीत्येवमादिः सामान्यगतेर्भेदाविवक्षया जातिः प्रधानमङ्गन्तु व्यक्त्याकृती। जात्याख्यायामेकस्मिन्

बहुवचनमन्यतरस्यामिति सम्पन्ना यवाः सम्पन्नो यव इत्याकृतिर्जात्याख्या प्रधानं जातिव्यक्ती तु अङ्गमिति। अथ कथं विज्ञायते नानाव्यक्त्याकृतिजातय इति ? लक्षणभेदात्। तत्र तावत्। व्यक्तिगुणविशेषाश्रयो मूर्त्तिः। व्यज्यत इति व्यक्तिः इन्द्रियग्राह्या, इति न सर्व्वं द्रव्यं व्यक्तिम् स्पर्शाभावात्। यो गुणविशेषाणां गन्धरसरूपस्पर्शशब्दानां गुरुत्वलघुत्वादीनामव्यापिनश्च परिमाणस्याश्रयो यथासम्भवं तद् द्रव्यम्, मूर्त्तिः मूर्च्छितावयवत्वात्। एतेन द्रव्यगुणकर्म्मणां लिङ्गस्य च संग्रहः कृतः। तत्र क्वचिद् द्रव्यं प्रधानम्, यथा डित्थो देवदत्तः शिवो दुर्गेत्यादिः। क्वचिद् गुणः प्रधानम्। उतो गुणवचनात् स्त्रियां ङीप्। पट्वी पटुः, मृद्वी मृदुः, गुर्व्वी गुरुः, लघ्वी लघुरिति। क्वचित् कर्म्म प्रधानम्; करिष्ठः पुमान्। क्वचित् लिङ्गं प्रधानम्, कोरकः पुमान्। स्त्रियामप्सरसः। अस्त्री पङ्कमित्येवमादिः। क्वचित् परिमाणं प्रधानम्; द्रोणः पयसः, आढ़को व्रीहेरित्यादि। क्वचित् सङ्ख्या प्रधानम्; द्वौ ब्राह्मणौ, ब्राह्मणानां पञ्च। क्वचित् कर्त्रादिकारकं प्रधानम्; गां नयति गोपः, गौर्गच्छतीत्येवमादिः। क्वचित् शब्दस्य स्वरूपमपि पदार्थः। सान्तमहतोर्दीर्घो नुमि, महानित्येवमादि।

अथाकृतिलक्षणमाह—आकृतिर्जातिलिङ्गाख्या। जातिलिङ्गे आख्यायेते यया सा जातिलिङ्गाख्या। यया जातिश्च जातिलिङ्गानि च प्रख्यायन्ते तामाकृतिं विद्यात्। सा च नानासत्त्वानां तदवयवानाञ्च नियताद् व्यूहादिति। नियतावयवव्यूहाः खलु सत्त्वावयवा जातिलिङ्गम्। शिरसा पदेन गामनुमिन्वन्ति, नियते च सत्त्वावयवानां व्यूहे सति गोत्वं प्रख्यायते इति। अनाकृतिव्यङ्ग्यायां जातौ मृत् सुवर्ण रजतमित्येवमादिष्वाकृतिर्निवर्त्तते। जहाति पदार्थत्वमिति। समानप्रसवात्मिका जातिः। या समानां बुद्धिं जनयति भिन्नेष्वधिकरणेषु, यया बहूनीतरेतरतो न व्यावर्त्तन्ते, योऽर्थोऽनेकार्थप्रत्ययानुवृत्तिनिमित्तं तत् सामान्यम्; यच्च केषाञ्चिद् भेदं करोति तत् सामान्यविशेषो जातिरिति।

अथ श्रुतिमभिव्यक्तिं निरूप्याक्षेपो नामाभिव्यक्तिर्निरूप्यते। श्रुतेरलभ्यमानोऽर्थो यस्माद् भाति स चेतरः। य आक्षेपो ध्वनिः स्याच्च ध्वनिना व्यज्यते यतः। इति। श्रुतिर्निरुक्ता या मुख्या नैमित्तिकी मुख्या पारिभाषिकी, औपचारिकी नैमित्तिकी औपचारिकी पारिभाषिकी, लाक्षणिकी गौणी च नैमित्तिकी लाक्षणिकी गौणी च पारिभाषिकी; ततः श्रुतितोऽभिव्यक्तितो न लभ्यते योऽर्थः स श्रुतेरलभ्यमानोऽर्थो यस्माद् भाति प्रकाशते स तदर्थप्रकाशहेतुः श्रुतेरितर आक्षेपो नामाभिव्यक्तिर्भवति। सा व्यञ्जना नाम वृत्तिः, स

चाक्षेपो ध्वनिश्च उच्यते। कस्मात्? यतो ध्वनिना वर्णात्मकेन शब्देनाभिव्यज्यते ध्वनिव्यङ्ग्यत्वाद् ध्वनिः। तया व्यञ्जनया योऽर्थोऽभिव्यज्यते स व्यङ्ग्यार्थः श्रोत्योऽर्थ एव भवति। ननु श्रूयते हि भू सत्तायामित्यादिरर्थो मुख्यया श्रुत्या धातूनाम्, कर्त्तरि कर्म्मणि भावे च लः श्रूयते, वर्त्तमानादिषु लड़ादयः श्रूयन्ते, तिबादीनि त्रीणि त्रीणि चैकादिषु श्रूयन्ते, तत्र प्रथममध्यमोत्तमानि त्रीणि त्रीणि नामयुष्मदस्मदन्वयीनि। तथा च पचति गच्छतीत्युक्ते, एकः कर्त्ता वर्त्तमानः पाकः, एकः कर्त्ता वर्त्तमानं गमनमिति श्रुतितो लभ्यते। कर्त्ता क्रियाश्रयः। एकाश्रयेण सह वर्त्तमानपाकस्याभेदः किमाक्षेपेण व्यज्यते? नैवं; स हि पदस्यार्थः श्रुतितो लभ्यते। देवदत्तः पचतीति देवदत्तो नाम पुरुषः श्रुत्या लभ्यते पारिभाषिक्या, सु-विभक्त्या तिङर्थकसङ्ख्यान्वयो बोध्यते। तत्रैकसङ्ख्यकदेवदत्तपाकाश्रययोरभेदः कस्यार्थः? एकदेवदत्ताभिन्नाश्रय इति बोधात्। सोऽभेदोऽर्थः किमाक्षेपेण लभ्यते इति? नैवं; स हि पदस्यार्थः। कथं तद्विज्ञानम्? उच्यते। अर्थवदधातुरप्रत्ययः प्रातिपदिकमित्यनेन ज्ञापितम्। धातुरर्थवान् प्रत्ययश्चार्थवान् प्रातिपदिकञ्चार्थवदिति। तर्हि विभक्त्यन्तं पदं नार्थवत्? नैवम्, उक्तं हि। प्रत्ययः। पर इत्यनेन प्रकृत्युत्तरमन्तरेण प्रत्ययस्यासम्भवात्। प्रत्ययान्तावयवभूतः प्रत्ययोऽर्थवानिति ख्यापितम्। तथापि नार्थवत् पदं ज्ञापितं भवति? नैवं, प्रकृतेः परो यः प्रत्ययो विहितः स न निरन्वयेन विहितः प्रकृत्यर्थान्वयेनैव हि विहितस्ततो यः प्रत्ययार्थो येन सम्बन्धेनान्वयी भवितुमर्हति तत्सम्बन्धेनान्वयितया स प्रत्ययस्तस्याः प्रकृतेः परो विहित इति प्रकृत्यर्थप्रत्ययार्थौ परस्परान्वितौ प्रकृतिप्रत्ययौ ब्रूतः। तत्र प्रत्ययान्तेषु सुबन्तं तिङन्तञ्च प्रत्ययान्तं पदम् अप्रत्यय इति विशेषणेन व्यावृत्तप्रातिपदिकसंज्ञं भवतु। तत् प्रकृतिप्रत्ययार्थयोः सम्बन्धश्च पदस्यार्थो भवतु। कृत्तद्धितसमासानां यः प्रकृतिप्रत्ययार्थयोः सम्बन्धः स कस्यार्थः पदत्वाभावान्न पदस्यार्थो न वा प्रातिपदिकार्थो न धात्वर्थो न प्रत्ययार्थ इति; उच्यते, स प्रातिपदिकार्थः। कथं विज्ञायते? कृत्तद्धितसमासश्चेति प्रातिपदिकसंज्ञाविधानेन विज्ञायते। प्रत्ययान्तावयवप्रत्ययवर्ज्जनात्। कृत्तद्धितसमासानां प्रातिपदिकत्वप्रतिषेधे प्राप्ते पुनः समुदायैकार्थवत्त्वात् समुदायस्य प्रातिपदिकसंज्ञाविधानात्। अन्यथा नीलोत्पलादीनामसमासान्तप्रत्ययानां प्रातिपदिकसंज्ञायां पृथग्ग्रहणानर्थक्यात् समासावयवभूतानां पदानामर्थवत्त्वेन समुदायस्य धातुप्रत्ययवर्ज्जत्वादर्थवत्त्वाभावाच्च प्रातिपदिकसंज्ञाप्राप्तिर्न स्यात्

तस्मात् समासग्रहणं कृतमाचार्य्येण सूत्रे। नन्वेवं चेत् तर्हि काष्ठैः स्थाल्यां तण्डुलान् देवदत्तः पचतीत्यादिषु काष्ठाभिन्नकरणं स्थाल्यभिन्नाधिकरणं तण्डुलाभिन्नं कर्म्म देवदत्ताभिन्नाश्रयः वर्त्तमानाभिन्नपाक इत्येवं बोधो भवति न च परस्परमन्वय एषां श्रुतितो लभ्यते, तत्र तत्र यो यः सम्बन्धः स स क्रियाक्षेपेण व्यज्यते। भवत्याक्षिप्योऽर्थ इति चेन्न। स हि वाक्यार्थः। कथं विज्ञायते? उच्यते। कारके इति सूत्रेण ज्ञापितम्। कथं ज्ञापितम्? उच्यते, महाभाष्ये तत् सूत्रं व्याख्यातम्। करोतीति कारकं, तच्च क्रियासाधकं क्रियैव। द्विधा हि धात्वर्थः, फलञ्च तत्साधको व्यापारश्चेति। धात्वर्थ-व्यापारः कारकं, स च व्यापारः षड़्विधः। षड़्विधव्यापाराश्रयाः षट् च कारकाणि भवन्ति, एतदभिप्रायेण महाभाष्ये प्रोक्तम्। अथवा कारक इति यावद्वक्ष्यति तावत् क्रियायामिति। ततो ध्रुवमपायेऽपादानमित्यादिषु वक्ष्य-माणेषु कारकेऽपाये यद्ध्रुवं तदपादानं नाम कारकमित्येवं व्याख्यानं, तेन क्रियात्मकेषु षड़्विधेषु व्यापारेषु यथायथमन्वये षट् कारकाणि विहितानि अपादानादीनि। तस्मात् स्वस्वव्यापारे कारकाणामन्वयो येन येन सम्बन्धेन भवति स स सम्बन्धो वाक्यार्थः श्रुत्यैव मुख्ययाऽभिव्यक्तया भवतीति। नाक्षेपेण स सोऽर्थो व्यज्यते। तर्हि श्रुतेरलभ्यमानः कोऽर्थ आक्षेपात् प्रकाशत इति। उच्यते, स चाक्षेपः स्तुतं स्तोत्रं समासोक्तिरपह्नुतिः। पर्य्यायोक्तं समाख्या च षड़्विधो ज्ञापितोऽग्निना। तद् यथा—शब्देनार्थेन यत्रार्थं कृत्वा स्वयमुपार्ज्जनम्। प्रतिषेध इवेष्टस्य यो विशेषाभिधित्सया। तमाक्षेपं ब्रुवन्त्यत्र स्तुतं स्तोत्रमिदं पुनः। अधिकारादपेतस्य वस्तुनोऽन्यस्य या स्तुतिरिति। यत्राक्षेपे शब्देन स्वयं मुख्ययाभिधया श्रुत्यार्थेन द्वाराऽर्थमुपार्ज्जनं कृत्वा खल्विष्टस्याभिमतस्यार्थस्य विशेषमभिधातुं वक्तुमिच्छया प्रतिषेध इव क्रियते, तमाक्षेपमत्र स्तुतं ब्रुवन्ति। यथा—निःशेषच्युतचन्दनं स्तनतटं निर्म्मृष्टरागोऽधरो नेत्रे दूरमनञ्जने पुलकिता तन्वी तवेयं तनुः। मिथ्यावादिनि दूति बान्धवजनस्याज्ञातपीड़ागमे वापीं स्नातुमितो गतासि न पुनस्तस्या-धमस्यान्तिकमिति इह तावच्छब्दे मुख्यया श्रुत्या प्रत्येकशब्दार्थैः समुदाय-श्लोकार्थमुपार्ज्जनं कृत्वा स्वकान्तस्यानयनार्थं प्रेषितां दूतीं प्रति स्वाभी-ष्टस्य सम्भोगार्थं कान्तानयनार्थं कान्तसन्निधाने गमनस्य विशेषं तस्य स्वकान्तस्य दूत्या सह सम्भोगमभिधातुमिच्छया सम्भोगचिह्नानि स्नानचिह्नतया दर्शयित्वा वापीं स्नातुमितो गतासि न पुनस्तस्याधमस्यान्तिकमित्यनेन स्वेष्टस्य

कान्तनिकटे गमनस्य कृतस्यापि प्रतिषेध इव क्रियते इति स्तुतम्। एतेनेदं व्यञ्जितम्। रे दूति कान्तसम्भोगार्थिन्या मया मत्कान्तसमीपे आनयनार्थं प्रेषिता त्वमेव तेन सम्भुक्ता बान्धवजनस्य मम पीड़ां न जानासि त्वां किं ब्रुवे स हि पुरुषोऽधम इति।०। अथ स्तोत्रं लक्षयति। स्तोत्रमिदं पुनः। अधिकारादपेतस्य वस्तुनोऽन्यस्य या स्तुतिः। इति। इदन्तु स्तोत्रं नामाक्षेपः। यत्राक्षेपेऽधिकारादपेतस्य व्यपगतस्यान्यस्य वस्तुनो या स्तुतिः वर्त्तते तत्स्तुतिकरणमाक्षेपः स्तोत्रमिति। यथा—धन्यासि या कथयसि प्रिय-सङ्गमेषु विस्रब्धचाटुकशतानि रतान्तरेषु। नीवीं प्रति प्रणिहिते तु करे प्रियेण सख्यः शपामि यदि किञ्चिदपि स्मरामि॥ इति। इह सुरतविद्याधिकारादपेताया अन्यस्या नार्य्याः स्तुतिरियं धन्यासीत्यादि। एतेनाक्षिप्यते ; सुरतविद्या-हीनासि न तत्सुखानुभवनिपुणासि यतः प्रियसङ्गमेषु रतान्तरेषु तत्सुखानु-भवभङ्गहेतुचाटुकशतानि कथयसि, नैवमहमस्मि, यतः किञ्चिदपि न स्मरामि मनो नान्यत्र निवेशयामि, तस्मात् त्वमधन्याहं धन्येति व्यज्यते।०। अथ समासोक्तिं लक्षयति। यत्रोक्ते गम्यतेऽन्योऽर्थस्तत्समानविशेषणः। सा समासोक्ति-रुदिता सङ्क्षेपार्थतया बुधैरिति। यत्रार्थे खलूक्ते सति यदि तत् समानविशेषणो-ऽन्योऽर्थो गम्यते तदा सङ्क्षेपार्थतया स आक्षेपो बुधैः समासोक्तिरुदिता। यथा—क्षिप्तो हस्तावलग्नः प्रसभमभिहतोऽप्याददानोंऽशुकान्तं गृह्णन् केशे-ष्वपास्तश्चरणनिपतितो नेक्षितः सम्भ्रमेण। आलिङ्गन् योऽवधूतस्त्रिपुरयुवतिभिः साश्रुनेत्रोत्पलाभिः कामीवार्द्रापराधः स दहतु दुरितं शाम्भवो वः शराग्निरिति। इह कामीवार्द्रापराध इति शाम्भवशराग्निसमानविशेषणः क्षिप्तोहस्तावलग्न इत्यादिरूपः इति समासोक्तिराक्षेपः।०। अथापह्नुतिमाक्षेपं लक्षयति। अपह्नुतिरपह्नुत्य किञ्चिदन्यार्थसूचनम्। यत्राक्षेपे किञ्चित् वस्तु अपह्नुत्य चोरयित्वा अन्यार्थसूचनं क्रियते स आक्षेपोऽपह्नुतिर्नामोच्यते। तद् यथा—कस्य न वा रोषः स्यात् सव्रणमधरं प्रियायाः समीक्ष्य। 'सभृङ्गपद्माघ्रायिणि वारितवामेऽधुना सहस्व। इति। अत्र नायकान्तरेणाधरदंशनमपह्नुत्य सभ्रमरपद्माघ्राणे तद्भ्रमरकृतदंशोऽधरे दृश्यते इति सूचितं कयाचित् सख्या। इत्यपह्नुतिः।०। अथ पर्य्यायोक्तं लक्षयति। पर्य्यायोक्तं यदन्येन प्रकारेणाभि-धीयते। यत्राक्षेपे एकविधेऽर्थे प्रस्तुतेऽन्येन प्रकारेणान्योऽर्थोऽभिधीयते स आक्षेपः पर्य्यायोक्ताख्य उच्यते। यथा—कान्ते कत्यपि वासराणि गमय त्वं मीलयित्वा दृशौ, स्वस्ति स्वस्ति निमीलयामि नयने यावन्न शून्या दिशः।

**अथ प्रत्यक्षम्। प्रत्यक्षं नाम तद् यदात्मना चेन्द्रियैश्च**

आयाता वयमागमिष्यथ सुहृद्वर्गस्य भाग्योदये, सन्देशो वद कस्तवाभिलषितस्तीर्थेषु तोयाञ्जलिरिति। भर्त्रा प्रवासं गच्छता यद्यदुक्तं तस्य तस्योत्तरमन्येन प्रकारेणोक्तं प्रियया। इति विपर्य्ययोक्तं पर्य्यायोक्तम् उच्यते।०। अथ समाख्यामाक्षेपं लक्षयति। एषामेकत्र सङ्ग च समाख्या ध्वनिरित्यतः। यत्राक्षेपे खल्वेषां पञ्चानां स्तुतस्तोत्रसमासोक्त्यपह्नुतिपर्य्यायोक्तानामेकत्र सङ्गः स्यात् तत्र सङ्गे सति स ध्वनिराक्षेपः, इत्यतः सर्व्वध्वनिसङ्गत्वात् समाख्यानामोच्यते। यथा—हन्तालि सन्तापनिवृत्तयेऽस्याः किं तालवृन्तं तरलीकरोषि। सन्ताप एषोऽन्तरदाहहेतुर्नतभ्रु वो नव्यजनोपनोद्य इति। इह वैदेग्न स्वेष्टस्य कामिन्याः कामजसन्तापकथनस्य तद्विशेषं विजने विज्ञापनीय इति विवक्षणा किं तालवृन्तं तरलीकरोषीति प्रतिषेध इव कृत इति स्तुतम्। कामिन्याः शान्त्यधिकारादपेतस्य कामोत्कण्ठितचित्तस्य स्तुतिः सन्ताप एषोऽन्तरदाहहेतुरिति वचनेन कृता, तत् एतत् स्तोत्रमाक्षेपः, न व्यजनोपनोद्य इति समासोक्तिः। व्यजनोपनोद्यो नैष सन्ताप इति नत्समानविशेषणोऽन्योऽर्थो नव्यजनोपनोद्यो युवजनेनोपनोद्य इति गम्यते, इति समासोक्तिः। अपह्नुतिश्चात्र कामजसनोव्याकुलतां कामिन्या अपह्नुत्य अन्तरदाहज एष सन्ताप इति सूचितः। इत्यपह्नुतिराक्षेपः। पर्य्यायोक्तश्चात्र एकविधोऽत्र प्रस्तुतः कोऽयमस्या व्याधिस्तत्रान्यप्रकारेण अन्तरदाहजसन्तापाभिधानमिति विपर्य्ययेणोक्तिः पर्य्यायोक्तिः। इत्येषां पञ्चानाम् एकत्र सङ्गत्वात् समाख्या नामाक्षेप इति। इत्येष षड्विध आक्षेपः खलु शब्दस्याभिव्यक्तिस्तयाक्षिप्योऽर्थः शाब्दोऽपि तद्बोधश्चेदुपदेशाद्भवति तथापि नैष उपदेश आप्तोपदेशो नाम प्रमाणं वेदलोकयोरुपदेशरूपाभावात्। यस्तु वेदे स च नायं यश्च लोके पारम्पर्य्योपदेश ऐतिह्यं तच्च नैष उपदेशस्तस्मादेष आक्षेपणोपदेशोऽर्थापत्तिरनुमानेऽन्तर्भूतो गौतमादिभिः कृतः। तदर्थापत्तिव्याख्याने दर्शयिष्यते। इति शब्दो व्याख्यातः ॥ ३३ ॥

गङ्गाधरः—अथोद्देशक्रमात् प्रत्यक्षं लक्षयति। वादे शब्दत उक्तिप्रत्युक्तिवाक्यानन्तरं प्रत्यक्षेणोपलब्धिः कार्य्येत्यत आह, अथ प्रत्यक्षमिति। तच्च लक्षयति—प्रत्यक्षं नाम तदित्यादि। आत्मनेति सर्व्वत्रैवात्मानमन्तरेण

चक्रपाणिः—आत्मनेति मनसा, तेन, अनेन मानसप्रत्यक्षसुखाद्यमवरुध्यते, इन्द्रियैश्चेत्यनेन

**स्वयमुपलभ्यते। तत्रात्मप्रत्यक्षाः सुखदुःखेच्छाद्वेषादयः, शब्दादयस्त्विन्द्रियप्रत्यक्षाः ॥ ३४ ॥**

कोऽपि नेन्द्रियाणामन्यतमो भावः स्वस्वार्थे प्रवर्त्तने प्रभवति, तेनात्मनः साधारणहेतुत्वेन हेतूपदेशे प्रायो नाचार्य्येणात्मा निर्दिश्यते, तस्मादत्रात्मशब्दोपादानेनात्मभवत्वेऽपि बुद्धेः सुखादीनाञ्चात्मनैव प्रत्यक्षं न मानसप्रत्यक्षं मनसा जाताया बुद्धेर्मनोबुद्धिग्राह्यत्वाभावादात्मप्रत्यक्षमिति ज्ञापितम्। त्रिविधं-रोगविशेषविज्ञानीयेऽप्यात्मना चेन्द्रियैरित्युक्तेः। इन्द्रियैरिति श्रोत्रादिभिः पञ्चभिर्बुद्धीन्द्रियैर्बुद्ध्यपदेशे तेषां हेतुत्वात्; न तु कर्म्मेन्द्रियैः पञ्चभिः। परतन्त्रसिद्धमतीन्द्रियं मनश्चेन्द्रियमनुमतं न प्रतिषिद्धम्। तेन मनश्चेन्द्रियं स्वयं जागरितस्थानस्वप्नस्थानश्चात्मा। मनसा च युक्तैः पञ्चभिः श्रोत्रादिभिः इन्द्रियैरात्मना यदुपलभ्यते तत् प्रत्यक्षं षड्विधं मानसञ्चैन्द्रियकञ्च। तन्त्रेऽस्मिन् पञ्चेन्द्रियाणीत्यादि पञ्चपञ्चकमुक्तं प्रमाणभूतप्रत्यक्षाभिप्रायेण। परमतसिद्धञ्चातीन्द्रियं सत्त्वसंज्ञकं मनोऽप्यप्रतिषेधात् अनुमतं मानसप्रत्यक्षम्। आत्मप्रत्यक्षञ्चेह प्रत्यक्षमात्रस्योपदेशार्थमुक्तं ततो न पूर्व्वेण विरोधः। विस्तरेण पूर्व्वं व्याख्यातम्। तान्युदाहरति—तत्रात्मेत्यादि। आत्मप्रत्यक्षा इति प्रत्यगात्मप्रत्यक्षज्ञानविषयाः सुखादयः। शब्दादयः पञ्च शब्दस्पर्शरूपरसगन्धचिन्त्यानीति पुनरिन्द्रियप्रत्यक्षज्ञानविषया इति। स्वयम् आत्मा बुद्ध्या युक्तेन स्वेन यदुपलभते तत् स्वप्रत्यक्षमात्मप्रत्यक्षं मनोयुक्तैरिन्द्रियैः यदुपलभते तदिन्द्रियप्रत्यक्षं तत्रात्मा केवलेन मनसा यत्किञ्चिदुपलभते तन्मानसप्रत्यक्षमुच्यते। भ्रान्ता आत्मप्रत्यक्षं न विदन्ति। वैशेषिके च कणादेनोक्तम्। परत्र समवायात् प्रत्यक्षत्वाच्च नात्मगुणा मनसो गुणाः। अप्रत्यक्षत्वात् इति। आत्मगुणा बुद्धीच्छाद्वेषसुखदुःखप्रयत्नाः। परत्र समवायात्। परस्मिन् अव्यक्तात्मनि च समवायात् प्रत्यगात्मनि जागरितस्थानादौ तदात्मगुणानां तेषामभिव्यक्तेः प्रत्यगात्मजागरितस्थानादेः प्रत्यक्षत्वाच्च। न तु मनसो गुणाः। अप्रत्यक्षत्वात्। मनसः प्रत्यक्षाभावाद् बुद्ध्यादीनामिति। गौतमेनाप्युक्तं फलपरीक्षायाम् प्रीतेरात्माश्रयत्वादप्रतिषेध इति। सूत्रमिदं वात्स्यायनेन व्याख्यातं प्रीतिरात्मप्रत्यक्षत्वादात्माश्रयेति ॥ ३४ ॥

बाह्यं प्रत्यक्षं गृह्यते। स्वयमुपलभ्यत इति साक्षादुपलभ्यते इति चेन्द्रियव्यापारे सत्यपि यदनुमानविज्ञानम्, तदसाक्षात्कारित्वान्न प्रत्यक्षमिति दर्शयति ॥ ३४ ॥

अथानुमानम्। अनुमानं नाम तर्को युक्त्यपेक्षः। यथोक्तम् अग्निं जरणशक्त्या, बलं व्यायामशक्त्या, श्रोत्रादीनि शब्दादिग्रहणेनेति ॥ ३५ ॥

अथैतिह्यम्। ऐतिह्यं नाम आप्तोपदेशो वेदादिः ॥ ३६ ॥

गङ्गाधरः—अत्रात्मप्रत्यक्षस्य तावन्मानसज्ञानत्वे यदि प्रामाण्यं तर्हि किमेकमेव प्रत्यक्षं प्रमाणं, नान्तरेण मनो न किमपि ज्ञानमुत्पद्यते तत्रापि निर्देशार्थमिन्द्रियार्थसन्निकर्षजं पञ्चविधं ज्ञानमिति भेदकरणार्थमिन्द्रियार्थसन्निकर्षाधीनत्वज्ञापनार्थञ्च पृथक् पञ्चविधं प्रत्यक्षमुक्तमित्याशयेन मानसेषु ज्ञानेषु यस्य यस्य प्रामाण्यं तदुपदेशार्थं मानसं पञ्चेन्द्रियज्ञानं प्रत्यक्षं प्रमाणमुक्त्वा शेषं यद् यन्मानसं ज्ञानं प्रमाणं तत्तन्नामान्तरेणाह—अथानुमानम्। प्रत्यक्षानन्तरम् अनुमानं लोके भवति। तद् यथा। अनुमानं नामेत्यादि। युक्त्यपेक्षस्तर्को नाम युक्तिरेवानुमानं नामोच्यते। युक्तिः पूर्व्वमुक्ता। बुद्धिः पश्यति या भावान् बहुकारणयोगजान्। युक्तिस्त्रिकाला सा ज्ञेया त्रिवर्गः साध्यते ययेति। सैव युक्तिस्तर्क उक्तो गौतमेन। अविज्ञाततत्त्वेऽर्थे कारणोपपत्तितस्तत्त्वज्ञानार्थमूहस्तर्क इति। तथा च तर्कापेक्षस्तर्कोऽनुमानम्। तर्कस्यानुमानाविनाभावित्वाद्-... वान्तरीयकत्वादाप्तस्येव प्रामाण्यं न तु प्रमाणान्तरत्वमिति। व्याख्यातं विस्तरेण तिस्रैषणीये। उदाहरति—यथेत्यादि। इहैव स्थाने पूर्व्वमुक्तं यथा अग्निं जरणशक्त्या बलं व्यायामशक्त्येत्येवमादि। इत्येवमनुमानमेकं मानसं प्रत्यक्षज्ञानं प्रमाणम् ॥ ३५ ॥

गङ्गाधरः—तत्र कः पुनरग्निः का जरणशक्तिरित्येवमादिविज्ञानं नान्तरेणोपदेशं भवतीत्युक्तमैतिह्यमिति यत् तदाह—अथैतिह्यमिति। अनन्तरमैतिह्यं वादप्रवृत्तौ ज्ञेयम्। किं पुनरैतिह्यमित्यत आह—ऐतिह्यं नामाप्तोपदेशो वेदादिः। इहादिपदेन वेदार्थाविपरीतः परीक्षकैः प्रणीतः परीक्षकैश्च परीक्षितो यः कश्चिच्छास्त्रवादः सोऽप्याप्तोपदेशः। एवं लोकेऽपि यः कश्चित् पारम्पर्य्योपदेशः सोऽप्याप्तोपदेशः। बालो यथा जानाति—एष ते पिता माता चैषा

चक्रपाणिः—तर्को युक्त्यपेक्ष इत्यनुमानलक्षणं त्रिविधरोगविज्ञानीय एव व्याकृतम्। अनुमानोदाहरणमाह—'अग्निं जरणशक्त्या' इत्यादिना। अलौकिकाप्तोपदेश 'ऐतिह्य'पदेनोच्यत इत्याह—वेदादिरिति ॥ ३५।३६ ॥

**अथौपम्यम्। औपम्यं नाम तद् यदन्येनान्यस्य सादृश्यमधिकृत्य प्रकाशनम्। यथा दण्डेन दण्डकस्य, धनुषा धनुःस्तम्भस्य, इष्वासिनारोग्यदस्येति॥ ३७॥**

त्वमेतद्गोत्र एतत्प्रवर एतद्वंशज इत्येवमादिनोपदेशेन बुध्यते इति। एतत अत्रान्तरीयकत्वेनाप्तोऽपि प्रमाणमिति द्वितीयं मानसं ज्ञानं प्रमाणमाप्तोपदेशः। यदाप्तेनोपदिश्यते वाक्येन स एवमिदमिदं नैवमित्येतद्रूपस्तदभिधायकवाक्यं श्रवणप्रत्यक्षं तद्वाक्यार्थादवगम्यते यत् तदवगमनं ज्ञानमेव मानसं न तु श्रावणम् इति प्रत्यक्षादन्य आप्तोपदेश इति॥ ३६॥

गङ्गाधरः—अथोद्दिष्टमौपम्यमिति यत् तदाह—अथौपम्यमिति। वादे प्रतिज्ञास्थापनायां दृष्टान्तकरणार्थमनन्तरमौपम्यं ज्ञेयमित्यतस्त्वनुमानेऽन्तर्भूतमपि केनचिद्विशेषेण पृथगिह वादमार्गपदज्ञाने प्रोच्यते। तच्चौपम्यं लक्षयति—औपम्यं नामेत्यादि। यदन्येन वस्तुनान्यस्य वस्तुनः सादृश्यं साधर्म्म्यं प्रत्यक्षानुमानाप्तोपदेशैः प्रमाणैः पूर्व्वं प्रमाय यत् प्रकाशते तत् प्रकाशनमौपम्यं नामोच्यते। यथा कश्चिद्भिषक् कञ्च पुरुषं दण्डसमस्तब्धगात्रं पश्यन् मनसा तर्कयति दण्डतुल्यस्तब्धगात्रत्वादस्य दण्डको नाम वातव्याधिः, धनुस्तुल्यस्तब्धगात्रं पश्यन् मनसा तर्कयति धनुःस्तम्भोऽस्य वातव्याधिः। प्राणाभिसरं वैद्यं पश्यन् मनसा तर्कयति यथा खल्विष्वासी धनुरादायेषुं संयोज्य स्थूलेऽनतिविप्रकृष्टेऽनतिसन्निकृष्टे लक्ष्ये क्षिपन् कार्य्यं साधयति तथायं भिषक् साध्यरोगार्थमात्मवन्तं सोपचारकं सद्द्रव्यं चिकित्सन् तस्यारोग्यदो भवतीति मानसज्ञानविशेष औपम्यमनुमानविशेषः ततोऽनन्तरं तदनुव्यवस्यति। दण्डमिव गात्रं स्तम्भयतीत्ययं दण्डकः। धनुर्वन्नमयेद् यद् गात्रं स धनुःस्तम्भसंज्ञित इत्येवमादि। परीक्षितमिदं गौतमेन लक्षणमुक्त्वा, तद् यथा—प्रसिद्धसाधर्म्म्यात् साध्यसाधनमुपमानम्। अत्यन्तप्रायैकदेशसाधर्म्म्यादुपमानासिद्धिः। प्रसिद्धसाधर्म्म्यादुपमानसिद्धेः यथोक्तदोषानुपपत्तिः। प्रत्यक्षेणाप्रत्यक्षसिद्धेः। नाप्रत्यक्षे गवये प्रमाणार्थम् उपमानस्य पश्याम इति। तथेत्युपसंहारादुपमानसिद्धेर्नाविशेषः। इति। व्याख्यातञ्चैतत् सर्व्वं वात्स्यायनेन। प्रसिद्धसाधर्म्म्यात् साध्यसाधनम्

चक्रपाणिः—यदन्येनेत्यादौ अन्येनेति प्रसिद्धेन। अन्यस्येत्यप्रसिद्धस्य। सादृश्यमधिकृत्येति सादृश्यं प्रतिपाद्य संज्ञासंज्ञिसम्बन्धं प्रति कारणतया अधिकृत्य, यदा तु भट्टनयेन

उपमानमिति। प्रज्ञातेन सामान्यात् प्रज्ञापनीयस्य प्रज्ञापनमुपमानमिति। यथा गौरेवं गवय इति। किं पुनरत्रोपमानेन क्रियते? यदा खल्वयं गवा समानधर्म्मं प्रतिपद्यते, तदा प्रत्यक्षतस्तमर्थं प्रतिपद्यत इति। समाख्यासम्बन्धप्रतिपत्तिरुपमानार्थ इत्याह, यथा गौरेवं गवय इत्युपमाने प्रयुक्ते गवा समानधर्म्मम् अर्थमिन्द्रियार्थसन्निकर्षादुपलभमानोऽस्य गवयशब्दः संज्ञेति संज्ञासंज्ञिसम्बन्धं प्रतिपद्यत इति। यथा मुद्गस्तथा मुद्गपर्णी, यथा माषस्तथा माषपर्णी इत्युपमाने प्रयुक्ते उपमानात् संज्ञासंज्ञिसम्बन्धं प्रतिपद्यमानस्तामोषधिं भैषज्याय आहरति। एवमन्योऽप्युपमानस्य लोके विषयो बुभुत्सितव्य इति।

तत्राह वादी। अत्यन्तप्रायैकदेशसाधर्म्म्यादुपमानासिद्धिरिति, अत्यन्तसाधर्म्म्यादुपमानं न सिध्यति। न चैवं भवति यथा गौरेवं गौरिति। प्रायसाधर्म्म्यादुपमानं न सिध्यति। न हि भवति यथानड्डानेवं महिष इति। एकदेशसाधर्म्म्यादुपमानं न सिध्यति। न हि सर्व्वेण सर्व्वमुपमीयते इति सर्व्वमेव हि खल्वेकदेशसाधर्म्म्ययुक्तं भवति सर्व्वत्र सर्व्वमुपमानं भवतु न हि तथा भवतीति, तस्मादुपमानासिद्धिरिति। तत्र सिद्धान्तमाह। प्रसिद्धसाधर्म्म्यादुपमानसिद्धेः यथोक्तदोषानुपपत्तिरिति। न साध्यस्य कृत्स्नप्रायाल्पभावमाश्रित्योपमानं प्रवर्त्तते। किं तर्हि? प्रसिद्धसाधर्म्म्यात् साध्यसाधनभावमाश्रित्य प्रवर्त्तते। यत्र चैतदस्ति न तत्रोपमानं प्रतिषेद्धुं शक्यम्। तस्माद् यथोक्तदोषो नोपपद्यते इति। एवमुपमानसिद्धौ पुनराह वादी। अस्तु तर्ह्युपमानं परन्तु तदनुमानं नातिरिक्तमिति। कस्मात्? प्रत्यक्षेणाप्रत्यक्षसिद्धेः। यथा धूमेन प्रत्यक्षेणाप्रत्यक्षस्य वह्नेर्ग्रहणमनुमानमेवं गवा प्रत्यक्षेणाप्रत्यक्षस्य गवयस्य ग्रहणमिति नेदमनुमानाद्विशिष्यते। तत्राह सिद्धान्तम्। अनुमानाद्विशिष्यते उपमानं यथा युक्त्या। नाप्रत्यक्षे गवये प्रमाणार्थमुपमानस्य पश्याम इति। यदा ह्ययमुपयुक्तोपमानो गोदर्शी गवयं समानमर्थं पश्यति तदायं गवय इत्यस्य संज्ञाशब्दस्य व्यवस्थां प्रतिपद्यते। न चैवमनुमानमिति परार्थञ्चोपमानम्। यस्य ह्युपमानमप्रसिद्धं तदर्थं प्रसिद्धोभयेन क्रियते इति। परार्थमुपमानमिति चेन्न स्वयमध्यवसायात्? भवति च भोः स्वयमध्यवसायः। यथा गौरेवं गवय इति। नाध्यवसायः प्रतिषिध्यते। उपमाने तु तन्न भवति प्रसिद्धसाधर्म्म्यात् साध्यसाधनमुपमानमिति। न च यस्योभयं प्रसिद्धं तं प्रति साध्यसाधनभावो

उपमानं व्याख्येयम्, तदा सादृश्यं प्रतिपाद्यतया अधिकृत्येति योजनीयम्, तेषां 'सादृश्यप्रतिपत्तिः' उपमानार्थः। न्याये च 'संज्ञासंज्ञिसम्बन्धप्रतीतिः' उपमानफलम्, तच्च प्रथमव्याख्यानाद् भवति,

विद्यते। यथा बलिवासवयोर्युद्धं बलिवासवयोरिवेति। एवमनुमानेऽन्तर्भूतमपि विशेषान्तरमस्ति तदाह। तथेत्युपसंहारादुपमानसिद्धेर्नाविशेषः। इति। वादे प्रतिज्ञास्थापनायां दृष्टान्ते तथेत्युपसंहारात् तथेति शब्देन समानधर्म्मोपसंहारादुपमानं सिध्यति नानुमानम्, अयञ्चानयोर्विशेष इति। गौतममतेन कपिलपतञ्जलिप्रभृतीनामुपमानस्यानुमानेऽन्तर्भावमतं न विरुद्धम् अभिप्रायभेदात् प्रामाण्यन्तूपमानस्य सर्व्वेषां सम्मतमिति।

अथौपम्यमिदं न सादृश्यमात्रमग्निपुराणेऽग्निनार्थालङ्कारे प्रोक्तम्—सादृश्यं धर्म्मसामान्यमुपमा रूपकं तथा। सहोक्त्यर्थान्तरन्यासाविति स्यात् तच्चतुर्व्विधमिति। तच्च विवृतं तत्रैव। उपमा नाम सा या स्यादुपमानोपमेययोः। सद्भावान्तरसामान्य-योगित्वेऽपि विवक्षितम्। सद्भावान्तरसामान्याभावाद् यथा गौस्तथा गौरिति न स्यात्। स्यात् तु तव गौरिव मम गौरिति, तावकत्वमामकत्वसद्भावान्तरवत्त्वात्—किञ्चिदादाय सारूप्यं लोकयात्रा प्रवर्त्तते। समासेनासमासेन सा द्विधा प्रतियोगिनः। प्रतियोगिन उपमेयस्य समासेनासमासेन सा द्विधा। विग्रहादभिधानस्य स समासोऽन्यथोत्तरा। उपमाद्योतकपदेनोपमेयपदेन च। ताभ्याञ्च विग्रहात् त्रधा सा समासान्तिमा त्रिधा इति। यथा चन्द्रतुल्यमुखमिति। उपमाद्योतकेन पदेन सह समासः। चन्द्रेण समकान्ति तवाननमित्युपमेयेन सह समासः चन्द्रसमानकान्ति। इहोभाभ्यां सह समास इति त्रिधा। चन्द्रेण तुल्यं मुखमिति, चन्द्रतुल्यं मुखमिति, चन्द्रेण तुल्यमुखमिति द्वयोः समासत्वमसमासत्वञ्च इति। अथ धर्म्मभेदेनोपमा चाष्टादशधा। विशेष्यमाणा उपमा भवन्त्यष्टादश स्फुटाः। यत्र साधारणो धर्म्मः कथ्यते गम्यतेऽपि वा। ते धर्म्मवस्तुप्राधान्याधर्म्मयोस्तूपमे उभे। इति धर्म्मप्रधाना वस्तुप्रधाना चेति द्वे धर्म्मोपमे भवतः। सत्यं वचोऽमृतमिव। इति धर्म्मोपमा धर्म्मप्रधाना। राजीवमिव ते वक्त्रमिति वस्तुप्रधाना धर्म्मोपमा।०। अथ परस्परोपमा। तुल्यमेवोपमीयेते यथान्योन्येन धर्म्मिणौ। परस्परोपमा सा स्यात् प्रसिद्धेरन्यथा तयोः। विपरीतोपमा यस्माद्व्यावृत्तेर्नियमोपमा। अन्यत्राप्यनुवृत्तेस्तु भवेच्च नियमोपमा। तवाननमिवाम्भोजमम्भोजमिव ते मुखम्। इति परस्परोपमा। तवाननमिवोन्निद्रमरविन्दमभूदिदमिति विपरीतोपमा। पद्मं सर्व्वत्रोप-

उक्तं हि तत्र—"प्रसिद्धसाधर्म्म्यात् साध्यसाधनमुपमानम्" इति। दृण्डेन दण्डकस्येति दृण्डेन प्रसिद्धेनाप्रसिद्धस्य दण्डकस्य साधर्म्म्यमासाद्य श्रुतवान् कुम्भकारकदण्डवद् विकारदर्शने सत्ययम्

मानमिह तूपमेयमिति विपरीतम्। अन्यस्माद्व्यावृत्तेर्नियमोपमा यथा। स्तनौ बिल्वफलसमौ स्थूलौ सुकठिनौ तव। न तु तालफलसमौ न पद्मकोरकोपमाविति काठिन्याभावात्। अन्यत्राप्यनुवृत्तेश्च भवेच्च नियमोपमा। यथा— कमलेनैव तुल्यं ते मुखं तुल्यौ स्तनौ मम। इति नियमोपमा द्विधा।०। असमुच्चयोपमा। समुच्चयोपमाऽतोऽन्य-धर्म्मबाहुल्यकीर्त्तनात्। स्तनावम्भोज-सदृशौ मालूरफलसन्निभौ इति।०। व्यतिरेकोपमा यथा। रहोधर्म्मस्य साम्येऽपि वैलक्षण्यं विवक्षता। यदुच्यतेऽतिरिक्तत्वं व्यतिरेकोपमा तु सा। आहुर्मुखं चन्द्रसममन्ये नाहं शशी क्षयात् इति।०। अथ बहूपमा। यत्रोपमा स्याद् बहुभिः सदृशैः सा बहूपमा। धर्म्माः प्रत्युपमानं चेदन्ये मालोपमैव सा। चन्दनोदक-शीतांशु-चन्द्रकान्तादिभिः समा। स्पर्शेन त्वं सरोजाक्षि वीणाकोकिलभाषिणि। इति बहूपमा।०। प्रत्युपमानं चेदन्ये धर्म्मास्तदा सा मालोपमा। कुचौ लकुच-सन्निभौ रुचिरबिल्वतुल्यौ शुभौ सुदाड़िमफलाकृती ज्वलयतो मनः कामिनाम् इति।०। अथ विक्रियोपमा। उपमानविकारेण तुलना विक्रियोपमा। यथा। पक्वबिम्बफलाभासावोष्ठौ ताम्बूलवर्ज्जितौ। इति।०। अथाद्भुतोपमा। त्रैकाल्या-सम्भवि किमप्यारोप्य प्रतियोगिनि। कविनोपमीयते या प्रथ्यते साद्भुतोपमा। यथा—राकाचन्द्रमसो विधिः प्रतिदिनं कान्तां कलामुद्धरन्नैकैकां तव वक्त्र-चाव्वेवयवान् संघट्य संनिर्म्ममौ। इति।०। अथ मोहोपमा। प्रतियोगिन-मारोप्य तदभेदेन कीर्त्तनम्। उपमेयस्य सा मोहोपमाऽसौ भ्रान्तिमद्वचः। यथा—पूर्णचन्द्रानने पूर्ण-चन्द्रं बुद्ध्वा तवाननम्। चकोराः परिधावन्ति युवानः कामरूपिण इति।०। अथ संशयोपमा। उभयोर्धर्म्मिणोस्तथ्यानिश्चयात् संशयोपमा। यथा—कर्णिकालग्नभृङ्गं किं चञ्चलेन्दीवरद्वयम्। किमीक्षणद्वयं लोलं तव वक्त्रसरोवरे। इति।०। अथ निश्चयोपमा। उपमेयस्य संशय्य निश्चयान्निश्चयोपमा। यथा—पद्ममेव विधुम्लानं फुल्लं कान्तोदये दिने। वितनोति तनोर्लक्ष्मीं लीनभृङ्गयुगं मुखमिति।०। अथ वाक्यार्थोपमा। वाक्यार्थे-नैव वाक्यार्थोपमाऽन्यस्योपमा मता। वाक्यार्थेनान्यस्योपमा वाक्यार्थोपमा। यथा—नैकस्मिन् कमले भृङ्ग-द्वयं पिबति माक्षिकम्। खञ्जरीटद्वयं नूनं नृत्यतीह स्मितानने। इति।०। अथात्मोपमा। स्वात्मनोपमात्मोपमा साधा-

असौ दण्डसंज्ञो विकार इति प्रत्येति। किंवा भक्तनयेन, प्रसिद्धं दण्डगतं साधर्म्म्यमप्रसिद्धदण्ड-काल्यविकारसम्बन्धितया प्रत्येतीत्येवमन्यत्राप्युदाहरणे ज्ञेयम्। इष्वासिनेति इषुमोक्षकेण, यथा इषुमोक्षकेण लक्ष्येऽनतिविप्रकृष्टे नापराध्यते, तथाऽरोग्यदेन वैद्येन वैद्यगुणैरातुरं साधयता ॥ ३७ ॥

रणातिशायिनी। यथा—रामरावणयोर्युद्धं रामरावणयोरिवेति।०। अथान्योपमा। उपमेयं यदन्यस्य तदन्यस्योपमा मता। यथा—दिवाकरेण संफुल्लमिव पद्मं मुखं तव। इति।०। अथ गमनोपमा। यदुत्तरोत्तरं याति तदासौ गमनोपमा। यथा—नखानि विधुशङ्कया विरहिणी करेणावृणोत् ततः किशलयभ्रमात् करमतोऽक्षिपद् दूरतः। ततो वलयशिञ्जितं भ्रमरगुञ्जितं शङ्कया उहूरिति कुहूकुहूध्वनिभियापतन्मूर्च्छिता। इति।०। इत्यष्टादशधा स्फुटोपमा व्याख्याताः।

अथ स्फुटास्फुटपञ्चविधोपमामाह—प्रशंसा चैव निन्दा च कल्पिता सदृशी तथा। किञ्चिच्च सदृशी ज्ञेया उपमा पञ्चधा पुनः। अन्यस्य प्रशंसया यदुपमीयते सा प्रशंसोपमा। मृणालाङ्कुरमत्तुं यन्न त्यजन्ति सरो मृगाः। तत्राब्जकुसुमायार्थी गत्वा न स्यात् प्रवञ्चितः।०। एवमन्यस्य निन्दया यदुपमीयते सा निन्दोपमा। पद्मं बहुरजश्चन्द्र-क्षयवृद्धी दिने दिने। ताभ्यां समं तव मुखं न तत् तत्त्वविदो विदुरिति।०। कविना या तूपमा कल्प्यते सा कल्पितोपमा। मुखाब्जं दन्तकिञ्जल्कमोष्ठच्छदमलीक्षणम्। सौरभेणाकर्षति ते यूनां चित्तमलिं द्रुतमिति।०। उपमानस्य सर्व्वधर्म्मेण यदुपमेये सादृश्यं सा सदृश्युपमा। यथा—पद्मात्मिके तवाम्भोज-समं स्तनयुगं मुखम्। करद्वयं पादयुगं नेत्रयुग्मं मनोहरम्। इति। एषा पूर्णोपमा, परैरुच्यते। या तूपमा उपमानगतानां धर्म्माणां किञ्चिद्धर्म्मेण सादृश्यं स्यात् सा किञ्चित्सदृशी उपमा परैस्त्वेषा लुप्तोपमाभिधीयते। कान्त्या चन्द्रमसं धाम्ना सूर्य्यं धैर्य्येण वारिधिम्। राजन्ननुकरोषि त्वं जवेन मनसा ध्रुवमिति। किञ्चिदंशेन सादृश्यात् किञ्चित्सदृशीति। एषा त्रयोविंशतिधाग्निनोपमा प्रोक्ता। तेनान्योपमा नास्ति। यत्र कचिदन्या चोक्ता साऽनार्षत्वादग्राह्या। आभ्य उपमाभ्यो भिन्नं सादृश्यं रूपकादित्रयं नौपम्यमिति। तदुक्तञ्च। उपमानेन यत् तत्त्वमुपमेयस्य रूप्यते। गुणानां समतां दृष्ट्वा रूपकं नाम तद् विदुः। यथा—ताम्राङ्गुलिदलश्रेणि नखदीधीतिकेशरम्। ध्रियते मूर्द्ध्नि भूपालैर्भवच्चरणपङ्कजमिति। उपमैव तिरोभूतभेदा रूपकमेव वा। उपमानोपमेययोर्जातिमात्रभेदे गुणक्रियाभ्यामभेद इति तिरोभूतभेदा तूपमैव रूपकमिति तुल्यं लक्षणद्वयम्। सहोक्तिस्तु सादृश्यम्। सहोक्तिः सहभावेन कथनं तुल्यधर्म्मिणामिति। यथा—उभौ मध्वासवक्षीरावुभौ चन्दनरूषिताविति, कृष्णार्ज्जुनयोः समधर्म्मिणोः सहभावेन कथनं सहोक्तिः। अथ अर्थान्तरन्यासः सादृश्यम्। भवेदर्थान्तरन्यासः सादृश्ये-

**अथ संशयः। संशयो नाम* सन्दिग्धेष्वर्थेष्वनिश्चयः। यथा**

नोत्तरेण सः। इति। किंरूपाद् विशिष्टं कार्य्यं तत्राह—कारणसदृशं कार्य्यमिति। इति व्याख्यातमौपम्यमिति ॥ ३७ ॥

गङ्गाधरः—एवं वादे प्रवर्त्तिते यः संशेते इति संशय उद्दिष्टस्तमाह—अथ संशय इति। कः पुनः संशयो नामोच्यत इत्यत आह—संशयो नामेत्यादि। सन्दिग्धेषु समानानेकधर्म्मोपपत्तेर्विप्रतिपत्तेरुपलब्ध्यनुपलब्ध्यव्यवस्थातश्च विमृष्टेष्वर्थेषु अनिश्चयो विशेषापेक्षो विमर्शः संशयो नामाभिधीयते। उक्तञ्चैतद् गौतमेन। समानेकधर्म्मोपपत्तेर्विप्रतिपत्तेरुपलब्ध्यनुपलब्ध्यव्यवस्थातश्च विशेषापेक्षो विमर्शः संशय इति। व्याख्यातञ्चैतद् वात्स्यायनेन। समानधर्म्मोपपत्तेर्विशेषापेक्षो विमर्शः संशय इति स्थाणुपुरुषयोः समानं धर्म्ममारोहपरिणाहौ पश्यन् पूर्व्वदृष्टञ्च तयोर्विशेषं बुभुत्समानः किंस्विदित्यन्यतरन्नावधारयति। तदनवधारणं ज्ञानं संशयः। समानमनयोर्धर्म्मम् उपलभे, विशेषमन्यतरस्य नोपलभे; इत्येषा बुद्धिरपेक्ष्या संशयस्य प्रवर्त्तिका वर्त्तते। तेन विशेषापेक्षो विमर्शः संशयः। अनेकधर्म्मोपपत्तेरिति समानजातीयमसमानजातीयञ्चानेकम्, तस्यानेकस्य धर्म्मस्योपपत्तेर्विशेषस्योभयथा दृष्टत्वात्। समानजातीयेभ्योऽसमानजातीयेभ्यश्चार्था विशिष्यन्ते। गन्धवत्त्वात् पृथिवी अबादिभ्यो विशिष्यते, गुणकर्म्मभ्यश्च। अस्ति च शब्दे विभागजे खलु संयोगजे त्वविशेषस्तस्मिन् द्रव्यं गुणः कर्म्म वेति सन्देहः। न हि शब्दो वैशेषिके नवसु द्रव्येषु विभक्तः कृतो न रूपादिषु सप्तदशसु गुणेषु न पञ्चसु उत्क्षेपणादिषु कर्म्मसु। विशेषस्य चोभयथा दृष्टत्वात्। किं द्रव्यस्य सतो गुणकर्म्मभ्यो विशेषः? आहोस्विद् गुणस्य सत इति, अथ कर्म्मणः सतः? इति विशेषापेक्षान्यतमस्य व्यवस्थापकं धर्म्मं नोपलभे इति बुद्धिरपेक्ष्या संशयस्य। विप्रतिपत्तेरिति। व्याहतमेकार्थदर्शनं विप्रतिपत्तिः। व्याघातो विरोधोऽसहभाव इति। अस्त्यात्मेत्येकं दर्शनम् नास्त्यात्मेत्यपरं, न च सद्भावाभावौ सहैकत्र सम्भवतः। न चान्यतरसाधको हेतुरुपलभ्यते। तत्र तत्त्वानव-

चक्रपाणिः—सन्देहलक्षणानुसन्दिग्धेष्वर्थेष्वित्यनेन सन्देहयोग्यं विषयं दर्शयति, अनेन च, न्यायोक्तात् "समानानेकधर्म्मोपपत्तेः" इति वचनात् विषयं संशयस्य च दर्शयति। संशय-

* सन्देहलक्षणानुसन्दिग्धेष्विति चक्रधृतः पाठः।

धारणं संशयः। इति। उपलब्ध्यव्यवस्थातः खल्वपि सच्चोदकमुपलभ्यते तड़ागादिषु मरीचिषु वा अविद्यमानमुदकमिति। ततः क्वचिदुपलभ्यमाने तत्त्वव्यवस्थापकस्य प्रमाणस्यानुपलब्धेः किं सदुपलभ्यते उत असदिति संशयो भवति। अनुपलब्ध्यव्यवस्थातः सच्च नोपलभ्यते मूलकीलकोदकादि। असच्चानुपपन्नं विरुद्धं वा। ततः क्वचिदनुपलभ्यमाने तत्त्वव्यवस्थापकस्य प्रमाणस्यानुपलब्धेः किं सन्नोपलभ्यते उतासदिति संशयो भवति। विशेषापेक्षा अत्र पूर्व्ववत्। पूर्व्वः समानोऽनेकश्च धर्म्मो ज्ञेयस्थः। उपलब्ध्यनुपलब्धी पुनर्ज्ञातस्थे। एतावता विशेषेण पुनर्व्वचनम्। समानधर्म्माधिगमात् समानधर्म्मोपपत्तेर्विशेषस्मृत्यपेक्षो विमर्श इति। लक्षणमिदं परीक्षितं स्वयमेव। तद् यथा—समानानेकधर्म्माध्यवसायादन्यतरधर्म्माध्यवसायाद् वा न संशयः। विप्रतिपत्त्यव्यवस्थाध्यवसायाच्च। विप्रतिपत्तौ च सम्प्रतिपत्तेः। अव्यवस्थात्मनि व्यवस्थितत्वाच्चाव्यवस्थायाः। तथात्यन्तसंशयस्तद्धर्म्मसातत्योपपत्तेः। यथोक्ताध्यवसायादेव तद्विशेषापेक्षात् संशयेनासंशयो नात्यन्तसंशयो वा। यत्र संशयस्तत्रैवोत्तरोत्तरप्रसङ्ग इति। व्याख्यातञ्चैतत् सर्व्वं वात्स्यायनेन। तद् यथा—समानानेकधर्म्माध्यवसायादन्यतरधर्म्माध्यवसायाद् वा न संशय इति। समानस्य धर्म्मस्याध्यवसायात् संशयः स्यात् न धर्म्ममात्रात्। अथवा समानमनयोर्यद् धर्म्ममुपलभते इति धर्म्मधर्म्मिग्रहणे संशयाभावः। इति। अथवा समानधर्म्माध्यवसायादर्थान्तरभूते धर्म्मिणि संशयोऽनुपपन्न इति। न जातु रूपस्यार्थान्तरभूतस्याध्यवसायादर्थान्तरभूते स्पर्शे संशय इति। अथवा नाध्यवसायादर्थावधारणादनवधारणज्ञानं संशय उपपद्यते, कार्य्यकारणयोः सारूप्याभावादिति। एतेनानेकधर्म्माध्यवसायादिति व्याख्यातम्। अन्यतरधर्म्माध्यवसायाच्च संशयो न भवति। ततो ह्यन्यतरावधारणमेवेति। विप्रतिपत्त्यव्यवस्थाध्यवसायाच्च न संशयः। विप्रतिपत्तिमात्रादव्यवस्थामात्राद् वा न संशयो भवति। किं तर्हि, विप्रतिपत्तिमुपलभमानस्य संशयः। एवमव्यवस्थायामपीति। अथवाऽस्त्यात्मेत्येके नास्त्यात्मेत्यपरे मन्यन्त इत्युपलब्धेः कथं संशयः स्यादिति। तथोपलब्धिः अव्यवस्थिताऽनुपलब्धिश्चाव्यवस्थितेति विभागेनाध्यवसिते संशयोऽतो नोपपद्यत इति। विप्रतिपत्तौ च सम्प्रतिपत्तेः। याञ्च विप्रतिपत्तिं भवान् संशयहेतुं मन्यते, सा सम्प्रतिपत्तिः। सा हि द्वयोः प्रत्यनीकधर्म्मविषया, तत्र यदि

लक्षणम्—'अनिश्चयः' इति ज्ञेयम्। अनिश्चयः पाक्षिकविरुद्धधर्म्मावमर्षकं ज्ञानम्, यथा—

विप्रतिपत्तेः संशयः, सम्प्रतिपत्तेरेव संशय इति। अव्यवस्थात्मनि व्यवस्थितत्वाच्चाव्यवस्थायाः न संशयः। यदि तावदियमव्यवस्थात्मन्येव व्यवस्थिता, व्यवस्थानादव्यवस्था न भवतीत्यनुपपन्नः संशय इति। अथ अव्यवस्थात्मनि न व्यवस्थिता। एवमतादात्म्यादव्यवस्था न भवतीति संशयाभाव इति। तथात्यन्तसंशयस्तद्धर्म्मसातत्योपपत्तेः। येन कल्पेन भवान् समानधर्म्मोपपत्तेः संशय इति मन्यते, तेन खल्वत्यन्तसंशयः प्रसज्यते। समानधर्म्मोपपत्तेरनुच्छेदात् संशयानुच्छेदः। नायमतद्धर्म्मा धर्म्मी विमृश्यमानो गृह्यते। सततन्तु तद्धर्म्मा भवतीति।०। अस्य प्रतिषेधप्रपञ्चस्य सङ्क्षेपेणोद्धारः। यथोक्ताध्यवसायादेव तद्विशेषापेक्षात् संशये नासंशयो नात्यन्तसंशयो वा। संशयानुपपत्तिः संशयानुच्छेदश्च न प्रसज्यते। कथम्? यत् तावत् समानधर्म्माध्यवसायः संशयहेतुर्न समानधर्म्ममात्रमिति। एवमेतत्। कस्मादेवं नोच्यते इति? विशेषापेक्ष इति वचनात् सिद्धेः। विशेषस्यापेक्षाकाङ्क्षा, सा चानुपलभ्यमाने विशेषे समर्था। न चोक्तं समानधर्म्मापेक्ष इति। समाने च धर्म्मे कथमाकाङ्क्षा न भवेत्। यद्ययं प्रत्यक्षः स्यात्। एतेन सामर्थ्येन ज्ञायते समानधर्म्माध्यवसायादिति। उपपत्तिवचनाद् वा समानधर्म्मोपपत्तेः इत्युच्यते। न चान्या सद्भावसंवेदनादृते समानधर्म्मोपपत्तिरस्ति। अनुपलभ्यमानसद्भावो हि विशेषो धर्म्मोऽविद्यमानवद् भवतीति। विषयशब्देन वा विषयिणः प्रत्ययस्याभिधानम्। यथा लोके धूमेनाग्निरनुमीयते इत्युक्ते धूमदर्शनेनाग्निरनुमीयते इति ज्ञायते। कथम्? दृष्ट्वा हि धूममग्निमनुमिनोति नादृष्ट्वा। न च वाक्ये दर्शनशब्दः श्रूयते। अनुजानाति च वाक्यार्थप्रत्यायकत्वम्। तेन मन्यामहे विषयशब्देन विषयिणः प्रत्ययाभिधानं बोद्धानुजानाति। एवमिहापि समानधर्म्मशब्देन समानधर्म्माध्यवसायम् आहेति। यदुक्तम् समानमनयोर्धर्म्ममुपलभत इति धर्म्मधर्म्मिग्रहणे संशयाभाव इति। पूर्व्वदृष्टविषयमेतत्। यावहमर्थौ पूर्व्वमद्राक्षं तयोः समानं धर्म्ममुपलभे, विशेषं नोपलभे इति। कथन्तु विशेषं पश्येयं येनान्यतरमवधारयेयमिति। न चैतत् समानधर्म्मोपलब्धौ धर्म्मधर्म्मिग्रहणमात्रेण निवर्त्तेत इति। यच्चोक्तं नार्थान्तराध्यवसायादन्यत्र संशय इति। यो ह्यर्थान्तराध्यवसायमात्रं संशयहेतुमुपाददीत स एवं वाच्य इति। यत् पुनरेतत् कार्य्यकारणयोः सारूप्याभावादिति। कारणस्य भावाभावयोः कार्य्यस्य भावाभावौ कार्य्यकारणयोः सारूप्यम्। यस्योत्पादाद् यदुत्पद्यते यस्य चानुत्पादाद् यन्नोत्पद्यते

किमकालमृत्युरस्ति नास्तीति। दृष्टाश्चायुष्मल्लक्षणैरुपेताश्च

तत् कारणं, कार्य्यमितरत् इत्येतत् सारूप्यम्। अस्ति च संशयकारणे संशये चैतत् इति। एतेनानेकधर्म्माध्यवसायादिति प्रतिषेधः परिहृत इति। यत् पुनरेतत् उक्तं विप्रतिपत्त्यव्यवस्थाध्यवसायाच्च न संशय इति। पृथक्प्रवादयोर्व्याहतम् अर्थमुपलभे विशेषश्च नोपलभे येनान्यतरमवधारयेयमिति। तत् कोऽत्र विशेषः स्याद् येनैकतरमवधारयेयमिति। संशयो विप्रतिपत्तिजनितोऽयं न शक्यो विप्रतिपत्तिसम्प्रतिपत्तिमात्रेण निवर्त्तयितुमिति। एवमुपलब्ध्यनुपलब्ध्यव्यवस्थाकृते वेदितव्यमिति। यत् पुनरेतत् विप्रतिपत्ताविति। विप्रतिपत्तिशब्दस्य योऽर्थस्तदध्यवसायो विशेषापेक्षः संशयहेतुस्तस्य च समाख्यान्तरेण न निवृत्तिः। समानेऽधिकरणे व्याहतार्थौ प्रवादौ विप्रतिपत्तिशब्दस्यार्थः। तदध्यवसायश्च विशेषापेक्षः संशयहेतुर्न चास्य सम्प्रतिपत्तिशब्दे समाख्यान्तरे योज्यमाने संशयहेतुत्वं निवर्त्तते। तदिदमकृतबुद्धिसम्मोहनमिति। यत् पुनरव्यवस्थात्मनि व्यवस्थितत्वाच्चाव्यवस्थाया इति। संशयहेतोरर्थस्य अप्रतिषेधादव्यवस्थाभ्यनुज्ञानाच्च निमित्तान्तरेण शब्दान्तरकल्पना व्यर्था। अव्यवस्था खलु व्यवस्था न भवति। अव्यवस्थात्मनि व्यवस्थितत्वादिति न। अनयोरुपलब्ध्यनुपलब्ध्योः सदसद्विषयत्वं विशेषापेक्षं संशयहेतुर्न भवतीति प्रतिषिध्यते। यावता चाव्यवस्थात्मनि व्यवस्थिता न तावदात्मानं जहाति। तावता ह्यनुज्ञाता भवत्यव्यवस्था। एवमियं क्रियमाणापि शब्दान्तरकल्पना नार्थान्तरं साधयतीति। यत् पुनरेतत्। तथात्यन्तसंशयस्तद्धर्म्मसातत्योपपत्तेरिति। नायं समानधर्म्मादिभ्य एव संशयः। किं तर्हि ? तत्तद्विषयाध्यवसायाद् विशेषस्मृतिसंहितादित्यतो नात्यन्तसंशय इति। अन्यतरधर्म्माध्यवसायाद्वा न संशय इति, यदुक्तं विशेषापेक्षो विमर्शः संशय इति वचनात्। विशेषश्चान्यतरधर्म्मः, न च तस्मिन्नध्यवसीयमाने विशेषापेक्षा सम्भवतीति। यत्र संशयस्तत्रैवमुत्तरोत्तरप्रसङ्गः। यत्र यत्र संशयपूर्व्विका परीक्षा शास्त्रे कथायां वा, तत्र तत्रैवं संशये परेण प्रतिषिद्धे समाधिर्वाच्यः इति। इति सर्व्वपरीक्षाव्यापित्वात् संशयः परीक्षित इति। स्वयमुदाहरति—यथेत्यादि। अकालमृत्युरस्ति किं नास्तीति संशयः। कथमित्यत आह—

" स्थाणुर्वा पुरुषो वा" इति। दृष्टा हीत्यादिना संशयोत्पत्तिसामग्रीमाह, तत्रायुष्मल्लक्षणोपेतानाम्

अनुपेताश्च तथाक्रियाः सक्रियाश्च पुरुषाः शीघ्रभङ्गाश्चिरजीविनश्च। तदुभयदृष्टत्वात् संशयः किमस्ति खल्वकालमृत्युरुत नास्तीति ॥ ३८ ॥

अथ प्रयोजनम्। प्रयोजनं नाम यदर्थमारभ्यन्ते आरम्भाः। तद् यथा यद्यकालमृत्युरस्ति ततोऽहमात्मानमायुष्यैरुपचरिष्यामि, अनायुष्याणि च परिहरिष्यामि, कथं माम् अकालमृत्युः प्रसहेतेति प्रयोजनम् ॥ ३९ ॥

अथ सव्यभिचारम्। सव्यभिचारं नाम यद् व्यभि-

क्षणाश्चेत्यादि। तदुभयदृष्टत्वात् विप्रतिपत्तितोऽयं संशयः किमस्तीत्यादि ॥ ३८ ॥

गङ्गाधरः—अथ संशये सति वादे प्रवर्त्तते न चासंशयवानित्यतः पुनर्जयाद्यर्थं चासंशयवानपि वादे प्रवर्त्तते ततः प्रयोजनमित्युक्तं यत् तदाह—अथ प्रयोजनम्। वादे प्रवृत्तौ संशयवदपरमपि प्रयोजनमस्तीति तत् किमित्यत आह—प्रयोजनं नामेत्यादि। यदर्थं यत्फलायारम्भाः क्रिया आरभ्यन्ते तत् फलं प्रयोजनं नामोच्यते, तदुदाहरति—यद्यकालमृत्युरित्यादि। गौतमेनाप्युक्तम्। यमर्थमधिकृत्य प्रवर्त्तते तत् प्रयोजनमिति। व्याख्यातञ्च वात्स्यायनेन। यमर्थमाप्तव्यं हातव्यं वाध्यवसाय तदाप्तिहानोपायमनुतिष्ठति तत् प्रयोजनं वेदितव्यम्, प्रवृत्तिहेतुत्वात्। इममर्थमाप्स्यामि हास्यामि वेति व्यवसायोऽर्थस्याधिकारः। एवं व्यवसीयमानोऽर्थोऽधिक्रियते इति ॥ ३९ ॥

गङ्गाधरः—अथ वादे प्रवर्त्तमाने यद् वाक्यं तस्य दोषविशेषात् सव्यभिचारं ज्ञेयं भवतीत्युद्दिष्टं सव्यभिचारमिति यत् तदाह—अथ सव्यभिचारमिति। अनन्तरं सव्यभिचारं यत् किं नु खलु तदुच्यते इत्यत आह—सव्यभिचारं

अक्रियाणां शीघ्रभङ्गे तथा सक्रियाणाञ्च चिरजीवने दृष्टे अकालमृत्युरस्तीति बुद्धिः, एतद्विपर्य्यये चाकाले मृत्युर्नास्तीति बुद्धिः ॥ ३८ ॥

चक्रपाणिः—यदर्थमिति यन्निमित्तम्। प्रसहेतेति मारयेदित्यर्थः। सव्यभिचारमित्यनैकान्तिकम्

चरणम्। यथा भवेदिदमौषधं तस्मिन् व्याधौ यौगिकमथवा नेति ॥ ४० ॥

अथ जिज्ञासा। जिज्ञासा नाम परीक्षा। यथा भेषज-परीक्षोत्तरकालमुपदेक्ष्यते ॥ ४१ ॥

नामेत्यादि। यद्व्यभिचरणमनेकान्तवचनं कचित् तथा कचिदन्यथेति तत् सव्यभिचारं व्यभिचारेण सहितं वर्त्तमानम्। गौतमेनोक्तञ्च। अनैकान्तिकः सव्यभिचारः। व्याख्यातञ्चैतत् व्यभिचार एकत्राव्यवस्था, सह व्यभिचारेण वर्त्तते इति सव्यभिचारः। नित्यः शब्दोऽस्पर्शत्वात्, स्पर्शवान् कुम्भोऽनित्यो दृष्टः। न च तथा स्पर्शवान् शब्दस्तस्मादस्पर्शत्वान्नित्यः शब्द इति दृष्टान्ते स्पर्शवत्त्वमनित्यत्वञ्च धर्म्मौ न साध्यसाधनभूतौ दृश्येते स्पर्शवांश्चाणुर्नित्यश्चेति। सव्यभिचारस्त्वस्पर्शत्वनित्यत्वे। आत्मादौ च दृष्टान्ते उदाहरणसाधर्म्म्यात् साध्यसाधनं हेतुरिति। अस्पर्शत्वादिति हेतुर्व्यभिचरति। अस्पर्शा बुद्धिरनित्या चेति। एवं द्विविधेऽपि दृष्टान्ते व्यभिचारात् साध्यसाधनभावो नास्तीति ते तु लक्षणलक्ष्यत्वाभावादहेतुरिति। नित्यत्वमप्येकोऽन्त इत्येकान्तः। अनित्यत्वमप्यनेकोऽन्तः। एकस्मिन्नन्ते विद्यते इत्यैकान्तिकः। विपर्य्ययादनैकान्तिकः उभयान्तव्यापकत्वादिति। हेतोर्दोषतया गौतमेन हेत्वाभासेषूक्तः। इह तन्त्रे हेतुदोषत्वेऽपि हेतुमात्रदोषत्वाभावात् हेतुदोषत्ववदन्यस्यापि दोष इत्यभिप्रायेण पृथगुक्त इति ख्यापनायोदाहरणं दर्शयति। यथेत्यादि। तस्मिन् व्याधौ ज्वरादौ खल्विदमौषधं भवेदथ न वा भवेदिति त्वेकान्तत्वाभावादनेकान्तमिति ॥ ४० ॥

गङ्गाधरः—सव्यभिचारज्ञानमुक्त्वा वादे कर्त्तव्ये जिज्ञासा कर्त्तव्येति पूर्व्वमुद्दिष्टं जिज्ञासेति, तामाह—अथ जिज्ञासेति। अनन्तरं जिज्ञासा वादे कर्त्तव्या का पुनः सा जिज्ञासा इत्यत आह—जिज्ञासा नामेत्यादि। परीक्षा तु जिज्ञासाभिधीयते। न हि प्रश्नमात्रे जिज्ञासा भवति प्रश्ने कृतेऽकृते वा प्रमाणैस्तदुत्तरं सदसद्रूपेण ज्ञातुमिच्छा परीक्षैव जिज्ञासा-शब्दस्यार्थः। यथा भेषजपरीक्षोत्तरकालमुपदेक्ष्यते इति ॥ ४१ ॥

इत्यर्थः। अथवा नेति न भवति। अनैकान्तिकञ्चात्रौषधं यौगिकत्वायौगिकत्वाभ्यां संशय-जनकमेव। तेन, संशयेन सममेकता न शङ्कनीयाऽनैकान्तिकस्य। उत्तरकालमिति इहैव परीक्षा-

अथ व्यवसायः । व्यवसायो नाम निश्चयः । यथा वातिक एवायं व्याधिरिदमेवात्र भेषजञ्च ॥ ४२ ॥

अथार्थप्राप्तिः । अर्थप्राप्तिर्नाम यत्रैकेनार्थेनोक्तेनापरस्य चार्थस्यानुक्तस्य सिद्धिः । यथा नायं सन्तर्पणसाध्यो व्याधिरित्युक्ते भवत्यर्थप्राप्तिरपतर्पणसाध्योऽयमिति । नानेन दिवा भोक्तव्यम् इत्युक्ते भवत्यर्थप्राप्तिर्निशि भोक्तव्यमिति ॥ ४३ ॥

गङ्गाधरः—परीक्षानन्तरं व्यवसायः कार्य्य इत्यत उद्दिष्टं व्यवसाय इति । स उच्यते—अथ व्यवसाय इति । गुणतो दोषतो ज्ञातुमिच्छताऽनन्तरं व्यवसायः कर्त्तव्यः । कः पुनर्व्यवसाय इत्यत आह—व्यवसायो नाम निश्चय इति । गुणतो दोषतोऽर्थो निश्चीयते येन ज्ञानेन तन्निश्चयो ज्ञानम्, तेन हि ज्ञानेन बोधपूर्व्वकं कर्त्तुं वक्तुं वा पुमान् व्यवस्यतीति सा व्यवसायात्मिका बुद्धिः । यथा—वातिक एवायं व्याधिरिति निश्चयः, इह तु व्याधाविदमेव भेषजमिति निश्चयो व्यवसायः ॥ ४२ ॥

गङ्गाधरः—अथैष निश्चयः प्रत्यक्षानुमानैतिह्यौपम्यैरेव किं स्यादित्यत उक्तम्—अर्थप्राप्तिरिति । न खलु प्रत्यक्षानुमानैतिह्यौपम्यमात्रेण निश्चयः स्यादर्थप्राप्तितश्च स्यात् तस्मादाह—अथार्थप्राप्तिरिति । अथानन्तरमर्थप्राप्तिः । सा च कीदृशीत्यत आह—अर्थप्राप्तिर्नामेत्यादि । यत्र वाक्ये खल्वेकेनार्थेन उक्तेनापरस्यानुक्तस्य श्रुतिभिरनभिहितस्यार्थस्य सिद्धिर्भवति यया साऽर्थप्राप्तिर्नाम । तदुदाहरति—यथेत्यादि । तिस्रैषणीये विस्तरेण व्याख्यातेयमर्थप्राप्तिरर्थापत्तिरित्युच्यतेऽन्यैरिति ॥ ४३ ॥

प्रकरणे । किंवा रसायने "भेषजं द्विविधम्" इत्यादिना । अर्थप्राप्तिरित्यर्थापत्तिरित्यर्थः । इह 'उक्तेन' इति वचनात् श्रुतार्थापत्तिरेव विवक्षिता, दृष्टार्थापत्तिरपि तु एतत्सामान्यत्वेनैव ज्ञेया । इयञ्चार्थापत्तिरन्यथोपपत्त्या न प्रमाणमिति न प्रमाणप्रकरणे पठिता, या तु दोषरहिता साऽनुमानान्तर्गतैवेति भावः । यो ह्यपतर्पणसाध्योऽपि न स्यात्, तं प्रति 'नायं सन्तर्पणसाध्यः' इति वचनमेवासमर्थविशेषणतया न स्यादित्यर्थापत्तिर्नेत्यभिप्रायः, उभयासाध्यो हि 'असाध्यः' इत्येतावदेव वक्तव्यं स्यात् । एवमन्यत्राप्युदाहरणे ज्ञेयम् ॥ ३९—४३ ॥

अथ सम्भवः। सम्भवो नाम यो यतः सम्भवति, स तस्य सम्भवः। यथा षड् धातवो हि गर्भस्य, व्याधेरहितम्, हितमारोग्यस्य ॥ ४४ ॥

अथानुयोज्यम्। अनुयोज्यं नाम यद् वाक्यं वाक्यदोषयुक्तं तदनुयोज्यमित्युच्यते। सामान्यव्याहृतेष्वर्थेषु वा विशेषग्रहणार्थं

गङ्गाधरः—ननु तर्हि प्रत्यक्षानुमानैतिह्यौपम्यार्थप्राप्तिभिरेव किं निश्चयः स्यादित्याकाङ्क्षायामुद्दिष्टं सम्भव इति। न खलु प्रत्यक्षादिभिरेव केवलैः निश्चयः स्यात् सम्भवेनापि निश्चयो भवतीत्यत आह—अथ सम्भव इति। कः पुनः सम्भव इत्यत आह—सम्भवो नामेत्यादि। यो यतः सम्भवति स तस्य सम्भव उत्पत्त्यादिषु सम्भावनाहेतुरिति। अविनाभाववृत्त्या संबद्धयोः समुदायसमुदायिनोः समुदायेनेतरस्य ग्रहणं सम्भवस्तदप्यनुमानमेव। यथा द्रोणस्य सम्भावना प्रस्थादिमन्तरेण न स्यादिति प्रस्थादिमानं द्रोणस्य सम्भवः। एवमेवाभिप्रेत्य स्वयमुदाहरति। यथा षड् धातवो गर्भस्य, व्याधेरहितं हितमारोग्यस्येति। षड्धातुः पुरुषः इह न केवलो गर्भस्य सम्भावनाहेतुः अदुष्टशुक्रशोणितगर्भाशयपुष्पकालाश्च हेतव इत्यतः षड् धातव इति बहुवचनान्तमुक्तम्। इदं गर्भस्योत्पत्तिसम्भावनाहेतुसम्भवोदाहरणम्। अहिताचरणं व्याधिसम्भावनाहेतुर्हितसेवनमारोग्यसम्भावनाहेतुः तिस्रैषणीयेऽस्य प्रामाण्यं व्याख्यातं विस्तरेण ॥ ४४ ॥

गङ्गाधरः—इत्येवं प्रत्यक्षादिभिः प्रमाणैः कृते निश्चये वादे यद्वाक्यं दुष्टं तदाह। अनुयोज्यमित्युद्दिष्टं यत् तदाह—अथानुयोज्यमिति। वादे यद्वाक्यमनुयोज्यं तज्ज्ञेयमित्यत आह—अनुयोज्यं नामेत्यादि। यद्वाक्यं वाक्यदोषयुक्तं तद्वाक्यमनुयोज्यमनुयोक्तुमर्हति शक्यते च वादिना। अनुयोगो हि दूषणवचनम्। वाक्यदोषा इहैव वक्ष्यन्ते न्यूनादयः। उदाहरिष्यन्ते च। द्वितीयमनुयोज्यमाह—सामान्येत्यादि। सामान्येनोक्तेषु खल्वर्थेषु

चक्रपाणिः—सम्भवति विद्यते अस्मिन्निति सम्भवः, कारणं हि अव्यक्तस्वजन्मकार्य्यमुक्तम्। यथा—सम्भवति खार्य्यां द्रोण इत्यादि, तत्समानमेतदप्युदाहरणं भवति ॥ ४४ ॥

चक्रपाणिः—अनुयोज्यान्तरमाह—सामान्येनेत्यादि। अननुयोज्यमाह अतो विपर्य्ययेणेति।

तद्वाक्यमनुयोज्यम्। यथा संशोधनसाध्योऽयं व्याधिरित्युक्ते किं वमनसाध्योऽयं किं विरेचनसाध्य इत्यनुयुज्यते ॥ ४५ ॥

अथाननुयोज्यम्। अननुयोज्यं नाम अतो विपर्य्ययेण। यथा अयमसाध्यः ॥ ४६ ॥

अथानुयोगः। अनुयोगो नाम स यत् तद्विद्यानां तद्विद्यैरेव सार्द्धं तन्त्रे तन्त्रैकदेशे वा प्रश्नः प्रश्नैकदेशो वा ज्ञानविज्ञान-वचनप्रतिवचनपरीक्षार्थमादिश्यते। अथवा नित्यः पुरुष इति प्रतिज्ञाते, परो यत् को हेतुरित्याह सोऽनुयोगः ॥ ४७ ॥

यद्वाक्यं विशेषार्थग्रहणार्थं तद्वाक्यमनुयोज्यमनुयोगार्हं भवति, तद् यथा—संशोधनसाध्योऽयं व्याधिरिति वाक्यं सामान्येन संशोधनेनोक्तं तदनुयोज्यं भवति। किमयं व्याधिर्वमनसाध्योऽथवा विरेचनसाध्य इति विशेषग्रहणार्थमनुयुज्यते। इति ॥ ४५ ॥

गङ्गाधरः—तर्हि कीदृशवाक्यमननुयोज्यमित्यत उद्दिष्टमननुयोज्यं दर्शयति, अथाननुयोज्यमिति। अननुयोज्यं नामेत्यादि। अतोऽनुयोज्याद् वाक्याद् विपर्य्ययेण न्यूनादिदोषाभावेन सविशेषवचनेन युक्तं यद् वाक्यं तदननुयोज्यं नाम। अनुयोगार्हं न भवति। यथा वमनसाध्योऽयं व्याधिरिति। वाक्य-प्रशंसायाम् अननुयोज्यं दर्शयिष्यते ॥ ४६ ॥

गङ्गाधरः—तर्हि कः पुनरनुयोग इत्यत उद्दिष्टमनुयोगमाह—अथानुयोग इति। अनुयोगः कीदृश इत्यत आह—अनुयोगो नामेत्यादि। तद्विद्यानां तत्तच्छास्त्रं विद्वांसो ये तेषां विदुषां तद्विद्यैरेव सार्द्धं तस्मिंस्तन्त्रे कृत्स्ने प्रश्नः। अथवा तत्तन्त्रैकदेशे कुत्रचित् स्थाने प्रश्नैकदेशो ज्ञानार्थं विज्ञानार्थं वचनप्रतिवचनार्थं परीक्षार्थं वा यः पूर्व्वमादिश्यते स प्रश्नादेशः प्रश्नैकदेशस्या-देशोऽनुयोगः। तत्रोत्तरं यद्वाक्यं न्यूनादिदोषयुक्तं सामान्योक्तं वा तत्र च यः प्रश्नः प्रश्नैकदेशो वादिश्यते सोऽप्यनुयोग इति। अथवा परेणोक्ते यत्परेण तत्र हेतुः पृच्छ्यते सोऽप्यनुयोगः। यथा नित्यः पुरुष इत्युक्ते परः पृच्छति को हेतुरिति ॥ ४७ ॥

यथोक्तानुयोज्यप्रकरणस्योदाहरणविपर्य्ययेण ज्ञेयम्। अनुयोगमाह—प्रश्न इति, 'प्रश्नः'इतिशब्देन

अथ प्रत्यनुयोगः। प्रत्यनुयोगो नाम अनुयोगस्यानुयोगः। यथा अस्यानुयोगस्य पुनः को हेतुरिति ॥ ४८ ॥

अथ वाक्यदोषः। वाक्यदोषो नाम यथा खल्वस्मिन्नर्थे न्यूनमधिकमनर्थकमपार्थकं विरुद्धञ्च। नतानि विना प्रकृतोऽर्थः प्रणश्येत् ॥ ४६ ॥

तत्र न्यूनम्। प्रतिज्ञाहेतूदाहरणोपनयनिगमनानाम् अन्यतमेनापि न्यूनं न्यूनं भवतीति। यद्वा बहूपदिष्टहेतुकमेकेन हेतुना साध्यते तच्च न्यूनम् ॥ ५० ॥

गङ्गाधरः—एवमनुयोक्ता यदि दुष्टं वाक्यं सामान्यार्थवाक्यं वा ब्रूते तदा पूर्व्वपक्षवादी किं कुर्य्यादित्यत उद्दिष्टं प्रत्यनुयोगमाह—अथ प्रत्यनुयोग इति। कः प्रत्यनुयोग इत्यत आह—प्रत्यनुयोगो नामेत्यादि। अनुयोगस्य अनुयोगः प्रत्यनुयोग उच्यते। यथास्यानुयोगस्य नित्यः पुरुष इति प्रतिज्ञातेऽनुयोगः को हेतुरिति प्रश्नः। तत्र पुनः को हेतुरिति वचनं प्रति विपरीतप्रश्नः प्रत्यनुयोगः। पुरुषनित्यत्वप्रतिज्ञायां यो भवान् पृच्छति को हेतुस्तत्प्रश्ने किं कारणं भवत इति ॥ ४८ ॥

गङ्गाधरः—ननु तत्र के वाक्यदोषा इत्यत उद्दिष्टो वाक्यदोष उच्यते—अथ वाक्यदोष इति। वाक्यदोषो नामेत्यादि। स वाक्यदोषो नाम यथा यत् वाक्यमस्मिन्नर्थे न्यूनमस्मिन्नर्थेऽधिकमस्मिन्नर्थेऽनर्थकमस्मिन्नर्थेऽपार्थकमस्मिन्नर्थ विरुद्धमित्येतन्न्यूनत्वादयो दोषाः। कस्मादेते दोषा इत्यत आह—नैतानीत्यादि। हि यस्मादेतानि न्यूनत्वादीनि अन्तरेण वाक्यस्य प्रकृतोऽर्थो न प्रणश्येदेतैः प्रकृतार्थप्रणाशादेते वाक्यस्य दोषा उच्यन्ते ॥ ४९ ॥

गङ्गाधरः—तत्र किं न्यूनमित्यत आह—प्रतिज्ञेत्यादि। प्रतिज्ञादीनां पञ्चानां वाक्यावयवानामन्यतमेनापि न्यूनं वाक्यं न्यूनं भवति। गौतमेन

यथोक्तशास्त्रेण पूर्णप्रश्नो गृह्यते, यथा अत्रैव "तत्र चेद् भिषक् भिषजं पृच्छेद्" इत्यादिना यावदुक्तम्, तत् संपूर्णं ज्ञेयम्, अत्रैव चैकदेशोऽपि प्रश्नस्य ज्ञेयः ॥ ४१—४८ ॥

चक्रपाणिः—वाक्यदोषानुदाहरति—वाक्येत्यादि। 'अस्मिन्नर्थे' इति वचनेन छलहेत्वाभासादिपदगृहीतानपि वाक्यदोषत्वेन दर्शयति। छलादयो हि वाक्यदोषा एव, परं पृथग्गृहीत-

अथाधिकम्। अधिकं नाम न्यूनविपरीतम्। यद्वायुर्वेदे भाष्यमाणे वार्हस्पत्यमौशनसमन्यद्वा यत्किञ्चिदप्रतिसम्बद्धार्थमुच्यते। यद्वा प्रतिसम्बद्धार्थमपि द्विरभिधीयते, तत् पुनरुक्तत्वादधिकम्। तच्च पुनरुक्तं द्विविधम्; अर्थपुनरुक्तं शब्दपुनरुक्तञ्च। तत्रार्थपुनरुक्तं यथा भेषजमौषधं साधनमिति। शब्दपुनरुक्तञ्च भेषजं भेषजमिति॥ ५१॥

नोक्तम्। हीनमन्यतमेनाप्यवयवेन न्यूनमिति। प्रतिज्ञादीनामवयवानामन्यतमेन हीनं न्यूनं निग्रहस्थानं साधनाभावे साध्यासिद्धेरिति। अपरश्चाह— यद्वेत्यादि। बहूपदिष्टहेतुकमर्थं यदेकेन हेतुना साध्यते तदपि न्यूनमिति॥ ५०॥

गङ्गाधरः—अथाधिकं नाम न्यूनविपरीतमधिकम्, समन्तु प्रकृतमदोषं ततो न न्यूनपर्य्यायेण गृह्यते साम्यमिति। गौतमेन चोक्तम्। हेतूदाहरणाधिकमधिकमिति। एकेन कृतकत्वादित्यनेन हेतुना सिद्धो पुनरनित्यः पुरुषः कृतकत्वादुत्पत्तिधर्म्मकत्वात् इत्यादिषु द्वितीयहेत्वादेरानर्थक्यमिति। एवं यद्वक्तव्यं तत्राप्रतिसम्बद्धार्थवचनं प्रतिसम्बद्धार्थस्य वा द्विरभिधानं तदप्यधिकमिति त्रिविधमधिकम्। तदुदाहरति—यद्वायुर्व्वेदे भाष्यमाणे तदप्रतिसम्बद्धार्थं वार्हस्पत्यमौशनसं वा शास्त्रोक्तमुच्यते तदधिकम्। यच्चायुर्व्वेदे भाष्यमाणे यत् तत्र प्रतिसम्बद्धार्थं द्विरुच्यते तत्। पुनरुक्तं द्विविधम्। अर्थपुनरुक्तं शब्दपुनरुक्तञ्च। तत्रार्थपुनरुक्तं भेषजमौषधं साधनमिति, शब्दपुनरुक्तञ्च भेषजं भेषजमिति। एतच्चानुवादादन्यत्र दोषाख्यं भवति। गौतमेनोक्तमिदम्

त्वादिह नोच्यन्ते तथा शास्त्रान्तरोक्ताश्चापसिद्धान्तादयोऽनया भाषया सूच्यन्ते वाक्यदोषाः। यद्वेत्यादौ यदा पुरुषस्य नित्यत्वेऽपि हेतव उक्ता अनादित्वादकृतकत्वान्निर्व्विकारत्वादिति च, तेषु यदि सकलहेत्वभिधानं प्रतिज्ञाय एकं हेतुं ब्रूते, तदा प्रतिज्ञातार्थस्य न्यूनार्थत्वात् न्यूनं भवतीति ज्ञेयम्, यदा हेतुर्वक्तव्यः, तदा एक एव वक्तव्यो युज्यते, एकस्यापि हेतोः साध्यसाधनसम्बन्धात्। तेन, तत्र बहुहेतुकथनमेवाधिकत्वाद् दोष एव भवतीति। प्रकृत इति साध्यत्वेन प्रतिज्ञातः। वार्हस्पत्यमौशनसञ्च नीतिशास्त्रम्। अप्रतिसम्बद्धार्थमित्यनेन, वार्हस्पत्यमपि यदि धनैषणाभिधानप्रसङ्गेन प्रसङ्गागतं भवति, तदा श्लोकक्रमेणोच्यमानमायुर्व्वेदोपकारकत्वेन नाधिकमिति दर्शयति। पुनरुक्तदोषादिति दोषवतः पुनरुक्तादित्यर्थः। दोषवत्त्वञ्च यथा पुनरुक्तस्य, तथोक्तमेव।

अथानर्थकम्। अनर्थकं नाम यद्वचनमक्षरग्राममात्रमेव स्यात् पञ्चवर्गवन्न चार्थतो गृह्यते ॥ ५२ ॥

अथापार्थकम्। अपार्थकं नाम यदर्थवच्च परस्परेण असंयुज्यमानार्थकम्। यथा तक्रचक्रवंशरक्तनिशाकरा इति ॥५३

अधिकात् पृथक्। शब्दार्थयोः पुनर्व्वचनं पुनरुक्तमन्यत्रानुवादात्। इति व्याख्यातञ्चैतत्। अन्यत्रानुवादात् शब्दपुनरुक्तमर्थपुनरुक्तं वा, नित्यः शब्दो नित्यः शब्द इति शब्दपुनरुक्तम्। अर्थपुनरुक्तन्तु अनित्यः शब्दो निरुद्धधर्म्मको ध्वान इति। अनुवादे त्वपुनरुक्तं शब्दाभ्यासादर्थविशेषोपपत्तेः। यथा हेत्वपदेशात् प्रतिज्ञायाः पुनर्व्वचनं निगमनमिति। अर्थादापन्नस्य स्वशब्देन पुनर्व्वचनम् पुनरुक्तम्। उत्पत्तिधर्म्मकत्वादनित्यमनुत्पत्तिधर्म्मकं नित्यमिति। इहोत्पत्तिधर्म्मकत्वादनित्य इत्युक्त्यार्थादापद्यतेऽनुत्पत्तिधर्म्मकं नित्यमिति तस्यार्थादापन्नस्यार्थस्याभिधायको योऽनुत्पत्तिधर्म्मकं नित्यमिति शब्दस्तेन स्वेन शब्देन पुनस्तदर्थस्य वचनमनुत्पत्तिधर्म्मकं नित्यमिति तच्च पुनरुक्तम्। अर्थसम्प्रत्ययार्थं शब्दप्रयोगे स ह्यर्थोऽर्थापत्त्या प्रतीत इति ॥ ५१ ॥

गङ्गाधरः—अनर्थकन्तु वाक्यदोषमाह—अथानर्थकमिति। तदनर्थकं नाम वाक्यं यद् वाक्यं पञ्चवर्गवदक्षरग्राममात्रमेव स्यात्। कखगघङा इत्याद्यक्षरग्राममात्रमेव यथानर्थकं नार्थतो गृह्यते तथा भद कद सद लिद् निदेत्येवमादिवाक्यमनर्थकं न चार्थतो गृह्यते। इति। गौतमेनाप्युक्तम्। वर्णक्रमनिर्देशवन्निरर्थकम्। यथा नित्यः शब्दः कचटतपा जड़गवदशत्वात् झभञ-घढधष्वदिति। एवंप्रकारं निरर्थकम्। अभिधानाभिधेयानुपपत्तावर्थावगतेरभावाद् वर्णा एव क्रमेण निर्दिश्यन्त इति ॥ ५२ ॥

गङ्गाधरः—अपार्थकञ्च वाक्यदोषमाह—अथापार्थकमिति। अपार्थकं नामेत्यादि। तद् वाक्यमपार्थकं नाम यद् वाक्यमर्थवच्च परस्परेणासंयुज्यमानार्थकम्, परस्परेणान्वयहीनार्थकपदम्। यथा—तक्रचक्रवंशरक्तनिशाकरा इति। गौतमेनाप्युक्तम्। पौर्व्वापर्य्यायोगादप्रतिसम्बद्धार्थमपार्थकम्। यत्रानेकस्य पदस्य

पञ्चवर्गवदिति क ख ग घ ङादिवर्णसमुदयवत्, अत्र त्वभिधेयोऽर्थो न प्रतिभाति। अर्थवदिति प्रत्येकं पदरूपतया प्रसिद्धार्थम्। परस्परेणासंयुज्यमानमिति वाक्यरूपतयाऽर्थाप्रत्यायिकम्। चक्र॰

अथ विरुद्धम्। विरुद्धं नाम यद् दृष्टान्तसिद्धान्तसमयै-र्विरुद्धम्। तत्र पूर्व्वं दृष्टान्तसिद्धान्तावुक्तौ। समयः पुनस्त्रिधा भवति। यथायुर्वैदिकसमयो याज्ञिकसमयो मोक्षशास्त्रिकसमय

वाक्यस्य वा पौर्व्वापर्य्यणान्वययोगो नास्तीत्यसम्बद्धार्थत्वं गृह्यते तत्-समुदायोऽर्थस्यापायादपार्थकमिति। यथा दशदाड़िमं षड़पूपाः कुण्डमजिनं पललं पिण्डः। अथवा उरुकमेतत् कुमार्य्याः पार्य्यं तस्याः पिता अप्रतिशील इति॥ ५३॥

गङ्गाधरः—विरुद्धञ्च वाक्यमाह—अथ विरुद्धम्। विरुद्धं नामेत्यादि। तद्विरुद्धं नाम वाक्यं यद् वाक्यं दृष्टान्तसिद्धान्तसमयैर्विरुद्धं भवति। दृष्टान्त-विरुद्धं सिद्धान्तविरुद्धं समयविरुद्धञ्चेति त्रिविधं विरुद्धवाक्यम्। तत्रेत्यादि। तत्र तेषु मध्ये दृष्टान्तसिद्धान्तावुक्ताविति इहैव पूर्व्वमुक्तौ यथा मूर्खविदुषां बुद्धिसाम्यं यो वर्ण्यं वर्णयति स दृष्टान्तः। यथाग्निरुष्ण इत्यादि। तद्-दृष्टान्तविपरीतमुच्यमानं वाक्यं दृष्टान्तविरुद्धम्। यथा वह्निरुष्णः सलिल-वदिति दृष्टान्तविरुद्धम्। सिद्धान्तश्चोक्तः—यः परीक्षकैर्बहुविधं परीक्ष्य हेतुभिः साधयित्वा स्थाप्यते निर्णयः स सिद्धान्तश्चतुर्व्विधः। सर्व्वतन्त्र-सिद्धान्तः प्रतितन्त्रसिद्धान्तोऽधिकरणसिद्धान्तोऽभ्युपगमसिद्धान्तश्चेति। तच्चतुर्व्विधसिद्धान्तविपरीतवचनं यद् वाक्यं तत् सिद्धान्तविरुद्धं वाक्यमिति। यथा नास्ति निदानं व्याधीनामिति सर्व्वतन्त्रविरुद्धं वाक्यम्। सप्तेन्द्रियाणीति प्रतितन्त्रसिद्धान्तविरुद्धं न क्वापि तन्त्रे सप्तेन्द्रियाण्युक्तानि। यद्यपि सर्व्व-तन्त्रविरुद्धं तथापि क्वचित् पञ्चेन्द्रियाणि क्वचित् षड़िन्द्रियाणि तत्र तत्र स्वे स्वे तन्त्रे सिद्धानि न विरुद्धानि, सप्तेन्द्रियाणि न क्वापि प्रतितन्त्र सिद्धानि तस्मात् प्रतितन्त्रसिद्धान्तविरुद्धत्वेनेष्यते तद्वाक्यमेवं नास्ति निदानं व्याधीनामित्यपि बोध्यम्। आनुबन्धिकं कर्म्म मुक्तः कुरुते इति अधिकरण-सिद्धान्तविरुद्धम्। कार्य्यद्रव्यं प्रधानमिति वाक्यमभ्युपगमसिद्धान्तविरुद्धम्। अथ समयविरुद्धमाह—समयः पुनरित्यादि। समयो नियमकरणम्। स च शास्त्रार्थवादे त्रिधा भवति। यथा आयुर्व्वैदिकादिभेदात्। तत्रायुर्व्वैदिकसमयो

इत्यादयो हि शब्दाः क्रियां विना वाक्यरूपार्थानभिधायका इत्यर्थः। विरुद्धे दृष्टान्तविरुद्धं यथा—

इति। तत्रायुर्वैदिकसमयश्चतुष्पादं भेषजमिति। याज्ञिकसमयः आलभ्या यजमानैः पशव इति। मोक्षशास्त्रिकसमयः सर्व्वभूतेष्वहिंसेति। तत्र स्वसमयविपरीतमुच्यमानं विरुद्धं भवति। इति वाक्यदोषाः ॥ ५४ ॥

यथा चतुष्पादं भेषजमिति। तत्राह दैवयुक्तिव्यपाश्रयमेव भेषजमिति। आयुर्व्वेदिकसमयविरुद्धं यद्यप्यत्रापि पूर्व्वमुक्तम्—प्रशाम्यत्यौषधैः पूर्व्वो दैवयुक्तिव्यपाश्रयैरिति तन्न, कृत्स्नभेषजवचनं वातादिशारीरदोषप्रशमनौषधवचनत्वात्। याज्ञिकसमयः—आलभ्याः पशव इति, तद्विरुद्धन्तु न यज्ञे पशव आलभ्या इति। मोक्षशास्त्रिकसमयस्तु सर्व्वभूतेष्वहिंसेति तत्र विरुद्धं यज्ञेषु हिंसा कार्य्येति। स्वर्गादिसाधनत्वेन बन्धहेतुत्वात् इति। तत्र तत्र स्वसमयविपरीतमुच्यमानं समयविरुद्धं भवतीति। साधारणविरुद्धमिहोक्तं गोतमेन विरुद्धत्वं हेतुदोष उक्तः स चाभ्युपगमसिद्धान्तविरुद्धः। तद् यथा—सिद्धान्तमभ्युपेत्य तद्विरोधी विरुद्धः। इति यो हेतुः सिद्धान्तमभ्युपेत्य तं सिद्धान्तं विरुणद्धि स तद्विरोधी हेतुर्विरुद्ध उच्यते। अभ्युपेतं हि सिद्धान्तं व्याहन्तीति। यथा—सोऽयं विकारो व्यक्तेरपैति नित्यत्वप्रतिषेधात्। अपेतोऽप्यस्ति विनाशप्रतिषेधात् न नित्यो विकार इत्युपपद्यते। इत्येवं हेतुर्व्यक्तेरपेतोऽपि विकारोऽस्तीत्यनेन स्वसिद्धान्तेन विरुध्यते। कथम्? व्यक्तिरात्मलाभः। अपायः प्रच्युतिः। यद्यात्मलाभात् प्रच्युतो विकारोऽस्ति, नित्यत्वप्रतिषेधो नोपपद्यते। यद्व्यक्तेरपेतस्यापि विकारस्यास्तित्वं तत् खलु नित्यत्वमिति। नित्यत्वप्रतिषेधो नाम विकारस्यात्मलाभात् प्रच्युतेरुपपत्तिः। यदात्मलाभात् प्रच्यवते तदनित्यं दृष्टम्। यदस्ति न तदात्मलाभात् प्रच्यवते। अस्तित्वञ्चात्मलाभात् प्रच्युतिरिति विरुद्धावेतौ सह सम्भवतः। इति। सोऽयं हेतुर्यत्सिद्धान्तमाश्रित्य प्रवर्त्तते, तमेव व्याहन्तीति विरुद्धो हेतुरिति। नैतद्विरुद्धलक्षणं साधारणविषयं केवलहेतुविषयतयैव हेत्वाभासे गौतमेनोक्तमिति। इति वाक्यदोषा व्याख्याताः ॥ ५४ ॥

यथा शीतं जलं तापकं तथा ज्वरोऽपीति। सिद्धान्तविरुद्धं यथा—वैद्यो ब्रूते—न च भेषजं रोगहरमिति। तथा यद्यप्यायुर्व्वेदे चतुष्पादमेव भेषजमिति सिद्धान्त एव, तथापि 'चतुष्पाद'-

अथ वाक्यप्रशंसा। वाक्यप्रशंसा नाम यथा खल्वस्मिन्नर्थे त्वनूनमनधिकमर्थवदनपार्थकमविरुद्धमधिगतपदार्थञ्चेति यत् तद्वाक्यमननुयोज्यमिति प्रशस्यते ॥ ५५ ॥

अथ च्छलम्। छलं नाम परिशठमर्थाभासमनर्थकं* वाग्वस्तुमात्रमेव। तद् द्विविधं वाक्छलं सामान्यच्छलञ्च। तत्र

गङ्गाधरः—अथ वाक्यं कीदृशमदुष्टमित्यत आह—अथ वाक्यप्रशंसेति। वाक्यप्रशंसा नामेत्यादि। अस्मिन्नर्थे खल्विदं वाक्यमन्यनं निरुक्तन्यूनत्वदोषरहितमस्मिन्नेवार्थेऽनधिकमधिकत्वदोषहीनम् अस्मिन्नेवार्थेऽर्थवदानर्थक्यहीनम् तथास्मिन्नेवार्थेऽनपार्थकमपार्थकत्वदोषहीनम्। तथैवास्मिन्नर्थेऽविरुद्धं दृष्टान्तविरुद्धादिविरुद्धदोषरहितम्। न त्वेतावन्मात्रं वाक्यं प्रशंसन्ति पण्डिताः। तर्हि कीदृशं वाक्यमित्यत आह—अधिगतपदार्थञ्चेति। अधिगताः सम्यग्ज्ञातुमर्हाः पदार्था यत्र वाक्ये तत्। वाक्यमननुयोज्यमित्यस्मात् प्रशस्यते कुशलैर्न त्वन्यूनादिकमपि गूढ़ार्थकं वाक्यमननुयोज्यमपि प्रशस्यते दुर्ब्बोधत्वात् ॥ ५५ ॥

गङ्गाधरः—तथा सति प्रशस्तवाक्येऽपि वादी च्छलं करोतीत्यतश्छलमुद्दिष्टं यत् तदाह—अथ च्छलमिति। किं पुनश्छलमुच्यते इत्यत आह—छलं नामेत्यादि। छलं नाम तद् यत् परिशठमर्थाभासमनर्थकं वाग्वस्तुमात्रमेवेत्येतैः शब्दैर्योऽर्थोऽभिधीयते। उक्तञ्च गौतमेन। वचनविघातोऽर्थविकल्पोपपत्त्या च्छलमिति। व्याख्यातञ्च वात्स्यायनेन—न सामान्यलक्षणे च्छलं शक्यमुदाहर्त्तुम्, विभागे तूदाहरणानि भवन्ति। विभागश्च। तत् त्रिविधं वाक्च्छलं सामान्यच्छलमुपचारच्छलञ्चेति। तेषां मध्ये—अविशेषाभिहितेऽर्थे वक्तुरभिप्रायादर्थान्तरकल्पना वाक्छलम्। तद् यथेहापि विभज्योदाहरति। तद् द्विविधमिति। वाक्छलं सामान्यच्छलञ्चेति। वाक्छले ह्युपचारच्छलस्य अविशेषाद् द्विविधं छलं वाक्छलं सामान्यच्छलञ्चेति। तत्र गौतमेनोक्तं

संज्ञा समयकृता ज्ञेया। एवं याज्ञिकानाम् 'आलभ्य'संज्ञा समयकृता, तत्र यदि स्वसमयविपरीतमभिदधाति तदा समयविरुद्धो भवति। अननुयोज्यमिति नानुयोगार्हम् ॥ ४९—५५ ॥

चक्रपाणिः—छलमित्यादि। परिशठमिति वञ्चनाप्रवृत्तम्। अर्थवदिवाभासोऽर्थाभासः। एतदेव विवृणोति—अपार्थकमित्यादि। अपगतसमीचीनार्थत्वेन वाग्वस्तुमात्रमित्यर्थः। छल

* अनर्थकमित्यत्र अपार्थकमिति चक्रः।

वाक्छलं नाम यथा कश्चिद् ब्रूयान्नवतन्त्रोऽयं भिषगिति। अथ भिषक् ब्रूयान्नाहं नवतन्त्र एकतन्त्रोऽहमिति। परो ब्रूयान्नाहं ब्रवीमि नव तन्त्राणि तवेति, अपि तु नवाभ्यस्तं ते तन्त्रमिति।

वाक्छलमेवोपचारच्छलं तदविशेषात्। इति। न वाक्छलादुपचारच्छलं भिद्यते, तस्या अप्यर्थान्तरकल्पनाया अविशेषात्। यतः, धर्म्मविकल्पनिर्द्देशेऽर्थसद्भावप्रतिषेध उपचारच्छलम्। अभिधानस्य धर्म्मो यथार्थप्रयोगः। धर्म्मविकल्पोऽन्यत्र दृष्टस्य धर्म्मस्यान्यत्र प्रयोगः। तस्य निर्द्देशे धर्म्मविकल्पनिर्द्देशेऽर्थसद्भावप्रतिषेध उपचारच्छलम्। यथा मञ्चाः क्रोशन्तीति मञ्चस्थेषु पुरुषेषूपचारस्तेनार्थसद्भावेन प्रतिषेधः क्रियते। मञ्चस्थाः पुरुषाः क्रोशन्ति न मञ्चा इति। का पुनरत्रार्थविकल्पोपपत्तिः? अन्यथाप्रयुक्तस्यान्यथार्थकल्पनं भक्त्या खलु लक्षणया प्रयोगे मञ्चाः क्रोशन्तीत्यत्र प्रधानेन मुख्यया वृत्त्याभिधया शक्त्या कल्पनं न मञ्चाः क्रोशन्ति मञ्चस्थाः पुरुषास्तु क्रोशन्तीति। उपचारविषयं छलमुपचारच्छलमुपचारान्नीतार्थः। सहचरणादिनिमित्तेनातद्भावे तद्वदभिधानमुपचार इति। इहापि खल्वविशेषाभिहितेऽर्थे वक्तुरभिप्रायादर्थान्तरकल्पना भवतीति वाक्छलमेव। मञ्चाः क्रोशन्तीत्युक्ते वक्तुरभिप्रेतोऽर्थो मञ्चस्थाः पुरुषाः क्रोशन्तीत्युपचारात्। तदविशेषेण पदेन मञ्चा इत्यनेनाभिहितेऽर्थे वक्तुरभिप्रायविषयमञ्चस्थपुरुषात् अर्थान्तरकल्पना मुख्यार्थमञ्चकल्पना वाक्छलमेव भवतीत्युपचारच्छलं वाक्छलमेव नातिरिक्तमिति।

तत्र वाक्छलमुदाहरति—तत्र वाक्छलं नामेत्यादि। कश्चिद् ब्रूयान्नवतन्त्रोऽयं भिषगिति। तत्र नवतन्त्र इति पदेन नवाभ्यस्तं तन्त्रं यस्येति वक्तुरभिप्रायविषयार्थादर्थान्तरं कल्पयित्वा भिषग् ब्रूयात्—नाहं नवतन्त्रः, एकतन्त्रोऽहमिति। एकमेव तन्त्रं ममेति। तत्रापि परः स्पष्टं तदर्थं ब्रूयात्। नाहं ब्रवीमि नव तन्त्राणि तवेति, अपि तु नवाभ्यस्तं ते तन्त्रमित्यब्रवम्। तत्रापि भिषक् अभिप्रेतादर्थादन्यार्थं कल्पयित्वा ब्रूयात्, न मया नवाभ्यस्तं

अभिप्रेतादर्थादर्थान्तरं परिकल्प्य परवचनोपघाताय प्रतिकल्प्यते। यदुक्तं न्याये—"वचनविघातोऽर्थविकल्प उपचारच्छलम्" इति। अत्र वाक्छलमेवोपचारच्छलं न्यायोक्तं सम्भवति। सामान्यशब्दोक्ते ह्यर्थे वक्तुरभिप्रायादर्थान्तरकल्पना वाक्छलं, तेन, मञ्चाः क्रोशन्तीति अत्रापि 'मञ्च'-

भिषग् ब्रूयान्न मया नवाभ्यस्तं तन्त्रम्, अनेकधाभ्यस्तं तन्त्रम्। इति वाक्छलम्। सामान्यच्छलं नाम यथा—व्याधि-प्रशमनायौषधमित्युक्ते परो ब्रूयात् सत् सत्प्रशमनायेति किं नु भवानाह? सद्रोगः सदौषधं यदि च सत् सत्प्रशमनाय भवति तत्र सत्कासः सत्क्षयः सत्सामान्यात् कासः क्षयप्रशमनाय भविष्यतीति। एतत् सामान्यच्छलम्॥ ५६॥

तन्त्रमनेकधाभ्यस्तं तन्त्रम्। इति वाक्छलम्। अत्र समासेन नार्थविशेषो विग्रहे तु भवति विशेषः। नवाभ्यस्ते उपचारो नवशब्दस्य, तेन नवं नूतनमभ्यस्तं तन्त्रं यस्येति विग्रहः। तत्रोपचरितेऽर्थेऽर्थान्तरकल्पना मुख्यया वृत्त्या नवशब्देन नवसङ्ख्या। तत आह—एकतन्त्रोऽहम्। इत्युपचारच्छलं वाक्छलमेवोदाहरणेनानेन ज्ञापितम्। तत्राप्युपचरितार्थे नवाभ्यस्ते नवशब्दस्यार्थान्तरं कल्पयित्वा भिषगब्रवीत्। न नवाभ्यस्तं मे तन्त्रमपि त्वनेकधाभ्यस्तमिति वाक्छलमविशेषे शब्दे वाचि च्छलं वाक्छलमिति। एवमिह विनोपचारादपि वाक्छलं विद्यते। नवतन्त्रोऽयं भिषगिति नूतनतन्त्रोऽयमिति वक्तुरभिप्रायार्थः। तत्र भिषगर्थान्तरं कल्पयित्वाह नाहं नवतन्त्र एकतन्त्रोऽहमेकसंहितामधीतवान्। तत्र परो ब्रूयात् नाहं नव ते तन्त्राणीत्यब्रवं नूतनतन्त्रो भवानिति त्वब्रवम् इति। तत्रापि भिषगर्थान्तरं कल्पयित्वाह—न मे तन्त्रं नूतनं परन्त्वार्षं प्राचीनम्। इति वाक्छलम्।

अथ सामान्यच्छलमाह—सामान्यच्छलं नामेत्यादि। सम्भवदर्थस्याति-सामान्ययोगादसम्भूतार्थकल्पना। तद् यथा—यथेत्यादि। व्याधिप्रशम-नायौषधमित्युक्ते परः सम्भवदर्थस्यातिसामान्ययोगादसम्भूतार्थं कल्पयित्वा ब्रूयात् सत्सत्प्रशमनायेति भवानाहेति। सर्वं खलु सत् सत्तावत्त्वादित्यति-सामान्यं सत्ता तत्र सत्पदार्थः सम्भवति व्याधिषु चौषधेषु च। तदाह—सद्रोगः सदौषधमिति, तथाविधोऽर्थः खलु सत्प्रशमनाय सदित्येष चेदिष्ट-स्तदा सत्कासः सत्क्षयः सत्सामान्यात्। तर्हि किं कासस्ते क्षयप्रशमाय

शब्दो मुख्यः सन् मञ्चे वर्त्तते, उपचारात् तु मञ्चस्थेषु पुरुषेषु, 'मञ्च'शब्दप्रयोगे सति कथमचेतना मञ्चाः क्रोशन्तीति आक्षेपो वाक्छल एव प्रविशतीति भावः। अत्र वाक्छलमित्यादि वाक्यं सामान्यच्छललक्षणसंयुक्तं न्यायोक्तलक्षणमेव ज्ञेयम्, यथासम्भवं सामान्यशब्दोक्तेऽर्थे ह्यर्थान्तरस्यापि

**अथ अहेतुः। अहेतुर्नाम प्रकरणसमः संशयसमो वर्ण्यसमः**

भविष्यतीत्यसम्भूतार्थकल्पना सामान्यच्छलमिति। गौतमेनाप्युक्तम्। सम्भवतोऽर्थस्यातिसामान्ययोगादसम्भूतार्थकल्पना सामान्यच्छलमिति। व्याख्यातञ्चैतद् वात्स्यायनेन। अहो खल्वसौ ब्राह्मणो विद्याचरणसम्पन्न इत्युक्ते कश्चिदाह—सम्भवति हि ब्राह्मणे साधारणे विद्याचरणसम्पत् इत्यस्य वचनस्य विघातोऽर्थविकल्पोपपत्त्या असम्भूतार्थकल्पनया क्रियते। यदि ब्राह्मणे विद्याचरणसम्पत् सम्भवति तदा व्रात्येऽपि सम्भवेत्; व्रात्योऽपि ब्राह्मणो ब्राह्मणत्वस्यातिसामान्यस्य योगात्। ततो व्रात्योऽप्यस्त विद्याचरणसम्पन्न इति। यद्विवक्षितमर्थमाप्नोति चातिशयमेति च तदपि सामान्यम्। यथा ब्राह्मणत्वं विद्याचरणसम्पदं क्वचिदाप्नोति क्वचिदतिशयञ्चैति, तस्मात् सामान्यनिमित्तं छलं सामान्यच्छलमिति। एषां परिहारेण प्रत्यवस्थानमुन्नेयमिति। इति च्छलं व्याख्यातम् ॥ ५६ ॥

गङ्गाधरः—एवं वादे च्छलवचने हेतुरप्यहेतुर्भवति ततोऽहेतुर्विज्ञेय इत्यत उद्दिष्टमहेतुरिति यत् तदाह—अथाहेतुरिति। अहेतुर्नामेत्यादि। हेतुलक्षणाभावात् हेतुसामान्यात् हेतुवदाभासमानो हेतुरहेतुरुच्यते। स च भिद्यते। अहेतुर्नामेत्यादि। प्रकरणसमः संशयसमो वर्ण्यसम इति त्रिविधोऽहेतुर्नाम। गौतमेन तु पञ्चविधो हेत्वाभास उक्तः। सव्यभिचारविरुद्धप्रकरणसमसाध्यसमातीतकाला हेत्वाभासाः इति। तेषां सव्यभिचारस्य हेतुदोषत्ववदन्यत्र च दोषत्वाद्धेतुमात्रदोषत्वाभावाच्च तथा विरुद्धस्य चातीतकालस्य च साधारणदोषत्वात् पृथगिहोक्तिः। वर्ण्यसमस्तु साध्यसम एव। इहोक्तः संशयसमस्तु न गौतमेनोक्त इति विरोधो नाशङ्क्यः प्रतिषेधहेतुषु जातिसंज्ञेषु चतुर्व्विंशतौ संशयसमवर्ण्यसमयोर्गौतमेनाप्युक्तत्वात्। वात्स्यायनस्तु प्रकरणसमव्याख्याने प्रोवाच। यत्र समानो धर्म्मः संशयकारणं हेतुत्वेनोपादीयते स संशयसमः सव्यभिचार एवेति ततो न विरोधः। सर्व्वं तद्व्याख्यातमुत्तरव्याख्याने। ०।

---

सामान्ययोगादर्थान्तरकल्पना सामान्यच्छलमिति। सत्सत्प्रशमायेति सता सतः प्रशमः क्रियते इति। त इति तव मत इति कृत्वा वादी पूर्व्वपक्षं करोति, तेन, अविवक्षितेन सत्त्वसामान्येन प्रत्यवस्थानात् सामान्यच्छलं भवति ॥ ५६ ॥

चक्रपाणिः—अहेतुरसाधकहेतुरित्यर्थः। प्रक्रियते साध्यत्वेनाधिक्रियत इति व्युत्पत्त्या प्रकरणं

इति । तत्र प्रकरणसमो नामाहेतुः, यथान्यः शरीरादात्मा नित्य इति । परो ब्रूयाद् यस्मादन्यः शरीरादात्मा तस्मान्नित्यः । शरीरं ह्यनित्यमतो विधर्म्मिणा चानेन भवितव्यमित्येष चाहेतुः, न हि य एव पक्षः स एव हेतुरिति । संशयसमो नामाहेतुः पुनर्य एव संशयहेतुः स एव संशयच्छेदहेतुः । यथाऽयमायुर्वेदैकदेशम्

अथ प्रकरणसमं हेतुं दर्शयति । तत्र प्रकरणसमो नामाहेतुरिति । यस्माद्धेतुतः प्रकरणं चिन्त्यते निर्णयार्थमनेन कारणेनैवमिदमित्युपदिश्यते, हेतुः स प्रकरणसमो हेतुरहेतुरुच्यते साधकत्वाभावात् । उक्तञ्च गौतमेन । यस्मात् प्रकरणचिन्ता स निर्णयार्थमपदिष्टः प्रकरणसमः इति । व्याख्यातञ्च वात्स्यायनेन । विमर्शाधिष्ठानौ पक्षप्रतिपक्षावनवसितौ प्रकरणम् । तस्य चिन्ता विमर्शात् प्रभृति प्राङ्निर्णयात् यत् समीक्षणं सा जिज्ञासा यत्कृते स निर्णयार्थं प्रयुक्त उभयसाम्यात् प्रकरणमतिवर्त्तमानः प्रकरणसमो निर्णयाय न प्रकल्पते । प्रज्ञानन्तु अनित्यः शब्दो नित्यधर्म्मानुपलब्धेरिति । अत्रानुपलभ्यमाननित्यधर्म्मकमनित्यं दृष्टं स्थाल्यादि । या तु विमर्शस्य विशेषापेक्षिता । उभयाविशेषानुपलब्धिश्च सा न प्रकरणं प्रवर्त्तयति । कथं ? विपर्य्यये हि प्रकरणनिवृत्तेः । यदि नित्यधर्म्मः शब्दे गृह्येत न स्यात् प्रकरणसमम् । यदि वानित्यधर्म्मो गृह्येत एवमपि निवर्त्तेत प्रकरणसमम् । सोऽयं हेतुरुभौ पक्षौ प्रवर्त्तयन्नन्यतरस्य निर्णयाय न प्रकल्पते । इति । इह तूदाहरति—यथेत्यादि । अन्यः शरीरादात्मा नित्य इति पक्षे परो ब्रूयात् । इह खलु अस्मात् प्रकरणं चिन्त्यते । यस्मादित्यादि । शरीरादन्यत्वान्नित्य आत्मा । तत्र प्रकरणमिदं शरीरं ह्यनित्यमतः शरीराद् वैधर्म्म्येणानन्य इति शरीरान्यत्वं नित्यत्वेन ततः प्रकरणसमो हेतुर्न हेतुर्भवति । कस्मादित्यत आह—न हीत्यादि । हि यतो य एव पक्षः स एव हेतुर्भवति । आत्मनित्यत्वं पक्षस्तदेव शरीरान्यत्वं हेतुरिति स्वस्य स्थापनायां स्वस्य कारणत्वं न भवतीति । ० । अथ संशयसममाह—संशयसमो नामाहेतुरिति । य एव संशयहेतुः स एव संशयच्छेद-

पक्षः, तेन समः प्रकरणसमः । अन्यः शरीरादात्मा नित्य इति प्रतिज्ञायां शरीरादन्यत्वं बोध्यम्, अतो विधर्म्मिणेति शरीरादनित्याद् विधर्म्मिणा नित्येनेत्यर्थः । य एव पक्ष इत्यनेनान्यत्वञ्च शरीरादात्मन इति सिद्धमिति दर्शयति, सति हि नित्यत्वे चेतनाधारस्य शरीरादन्यत्वमपि

**आह, किं न्वयं चिकित्सकः स्यान्न वेति संशये परो ब्रूयात् यस्मादयमायुर्व्वेदैकदेशमाह तस्माच्चिकित्सकोऽयमिति, न च संशयच्छेदहेतुं * विशेषयति। एष चाहेतुर्न हि य एव संशयहेतुः स एव संशयच्छेदहेतुर्भवति। स वर्ण्यसमो नामाहेतुर्यो हेतुर्वर्ण्याविशिष्टः, यथा कश्चिद् ब्रूयादस्पर्शत्वाद् बुद्धिरनित्या शब्दवदिति।**

हेतुरिति समानधर्म्म एव हेतुत्वेन यत्र गृह्यते स संशयसमो हेतुरहेतुर्भवति। तदुदाहरति—यथेत्यादि। कश्चिद्वदति अयमायुर्व्वेदैकदेशमाह किं न्वयं चिकित्सकः स्यान्न वेति संशयः। कस्मात्? कोऽप्यचिकित्सक आयुर्व्वेदैकदेशं कियन्तमंशमायुर्व्वेदस्य जानाति चिकित्सकोऽपि जानातीत्यतः संशयः। तत्र परो ब्रूयात् यस्मादित्यादि। आयुर्व्वेदैकदेशवक्तृत्वादयं चिकित्सक इति। एवं ब्रुवाणः परस्तु संशयच्छेदहेतुं न विशेषयति विशेषाभावात् संशयो नापैति। तस्मादेष हेतुरहेतुः। कस्मादित्यत आह—न हीत्यादि। गौतमेनाप्युक्तं जातिषु। सामान्यदृष्टान्तयोरैन्द्रियकत्वे समाने नित्यानित्यसाधर्म्म्यात् संशयसमः इति। व्याख्यातञ्च वात्स्यायनेन। अनित्यः शब्दः प्रयत्नानन्तरीयकत्वात् घटवदित्युक्ते हेतौ संशये न प्रत्यवतिष्ठते। सति प्रयत्नानन्तरीयकत्वे अस्त्येवास्य नित्येन सामान्येन साधर्म्म्यम् ऐन्द्रियकत्वमस्ति च घटेनानित्येन। अतो नित्यानित्यसाधर्म्म्यादनिवृत्तः संशय इति संशयसमस्योदाहरणं गौतमेन दर्शितं न तु संशयसमस्य लक्षणमिदम् उक्तम्। तस्मादिहोक्तोदाहरणेन सह विरोधो नाशङ्क्यः। एवं बहून्युदाहरणानि द्रष्टव्यानि समानानेकधर्म्मोपपत्त्यादिहेतुभ्यः संशये। इति।०। नन्वन्यः शरीरादात्मा नित्य इति प्रकरणसमो हेतुः साध्यसम एव कथं पृथक् उक्त इत्यत आह—स वर्ण्यसमो नामाहेतुरित्यादि। यो हेतुर्वर्ण्याविशिष्टः

सिध्यति। चार्व्वाकपक्षे तु शरीरमेव चेतनमनित्यञ्चेति, तं प्रत्युभयमपि साध्यम्, न साध्यं साधनं भवति, असिद्धत्वादिति भावः। अयमायुर्व्वेदैकदेशमाहेति आयुर्व्वेदैकदेशाभिधानं चिकित्सकाचिकित्सकगमकत्वेन संशयहेतुः, एकदेशकथनं हि शास्त्रानभ्यासेऽपि कुतश्चित् श्रवणादपि भवतीति भावः। न विशेषयतीति न संशयच्छेदहेतुं विशिष्टं दर्शयतीत्यर्थः, एष चाहेतुरिति यथोक्तो हेतुरहेतुः संशयाच्छेदक इत्यर्थः। वर्ण्येन साध्येन दृष्टान्तोऽप्यसिद्धत्वेन सम इति वर्ण्य-

---

* संशयहेतुमिति चक्रः।

तत्र वर्ण्यः शब्दो बुद्धिरपि वर्ण्या, तदुभयवर्ण्याविशिष्टत्वाद्वर्ण्यसमोऽप्यहेतुः ॥ ५७ ॥

अथातीतकालम्। अतीतकालं नाम यत् पूर्व्वं वाच्यं तत् पश्चात् उच्यते, तत्कालातीतत्वादग्राह्यं भवतीति। परं वा निग्रहप्राप्तमनिगृह्य परिगृह्य पक्षान्तरितं पश्चान्निगृह्णीते तत् तस्यातीतकालत्वान्निग्रहवचनमसमर्थं भवतीति ॥ ५८ ॥

स वर्ण्यसमा नामाहेतुः। वर्ण्यस्तु साध्यधर्म्मेण धर्म्मी दृष्टान्तश्च तयोरविशेषो हेतुर्वर्ण्यसमो हेतुरहेतुर्भवति। तदुदाहरति—यथेत्यादि। अस्पर्शत्वात् बुद्धिरनित्या शब्दवदिति। इहानित्यत्वधर्म्मेण वर्ण्यो दृष्टान्तः शब्दस्तथा नित्यत्वेनैव धर्म्मेण वर्ण्या बुद्धिश्च तदुभयवर्ण्याविशिष्टत्वात् खल्वस्पर्शत्वं हेतुः वर्ण्यसमः। अस्पर्शत्वमप्यनित्यमिति। गौतमेनाप्युक्तम्। साध्यदृष्टान्तयोः साधर्म्म्याद् वर्ण्यसम इति। साध्यसमश्चोक्तः। हेत्वाद्यवयवसामर्थ्ययोगी धर्म्मः साध्यः। तं दृष्टान्ते प्रसजतः साध्यसमः इति जातिषु, हेत्वाभासेषु च साध्याविशिष्टः साध्यत्वात् साध्यसमः। द्रव्यं छायेति साध्यम्। गतिमत्त्वादिति हेतुः। साध्येनाविशिष्टः साधनीयत्वात् साध्यसमः। अयमप्यसिद्धत्वात् साध्यवत् प्रज्ञापयितव्यः। साध्यं तावदेतत् किं पुरुषवच्छायापि गच्छति आहोस्विदावरकद्रव्ये संसर्पति? आवरणसन्तानादसन्निधिसन्तानोऽयं तेजसो गृह्यते इति सर्पता खलु द्रव्येण यो यस्तेजोभाग आव्रियते तस्य तस्य सन्निधिरेवावच्छिन्नो गृह्यते इति। आवरणन्तु प्राप्तिप्रतिषेध इति। एष साध्यसमोऽपि वर्ण्यसम इत्यविरोधः। इति त्रयोऽहेतव एव हेतुमात्रदोषत्वात् हेत्वाभासा इष्यन्ते एभ्यस्त्वपरे दोषा न हेतुमात्रस्येति पृथगुच्यते ॥ ५७ ॥

गङ्गाधरः—अतीतकालमित्युद्दिष्टं यत् तदाह—अथातीतकालमिति। अतीतकालं नाम तत् यत् पूर्व्वं वाच्यं तत्पश्चादुच्यते। तदुक्तं कालातीतत्वादग्राह्यं भवतीति साधारणदोषः। एवं परं वा प्रतिवादिनं वादिनं वा निग्रहप्राप्तं

साध्यः, वर्ण्यः शब्द इति अस्पर्शत्वयोगादनित्यत्वेन शब्दोऽपि साध्यः। न च साध्यो दृष्टान्तो भवति। उभयवर्ण्याविशिष्टत्वादित्युभयत्र दृष्टान्ते वर्ण्ये च वर्ण्यस्य साध्यस्य साध्यत्वेनाविशिष्टत्वादित्यर्थः ॥ ५७ ॥

चक्रपाणिः—यत् पूर्व्वं वाच्यं तत् पश्चादुच्यते इति, यथा—निगमनमभिधाय पश्चात् प्रतिज्ञा

**अथोपालम्भः। उपालम्भो नाम हेतोर्दोषवचनम्। यथा पूर्व्वमहेतवो हेत्वाभासा व्याख्याताः ॥ ५६ ॥**

निग्रहस्थानमप्राप्तं न निगृह्य पक्षान्तरितं परिगृह्य पश्चान्निगृहीते तस्मिन् परे तस्य कालातीतत्वात् तत् निग्रहवचनं न समर्थं भवतीति। गौतमेनाप्युक्तं हेत्वाभासेषु। कालात्ययापदिष्टः कालातीतः। इति। व्याख्यातञ्चैतद् वात्स्यायनेन। कालात्ययेन युक्तो यस्यार्थस्यैकदेशोऽपदिश्यमानस्य स कालात्ययापदिष्टः कालातीत उच्यते। निदर्शनञ्च। नित्यः शब्दः संयोगव्यङ्ग्यत्वात् रूपवत्। प्रागूर्द्ध्वञ्च व्यक्तेरवस्थितं रूपं प्रदीपघटसंयोगेन व्यज्यते। तथा च शब्दोऽप्यवस्थितो वीणादण्डसंयोगेन व्यज्यते, दारुपरशुसंयोगेन वा। तस्मात् संयोगव्यङ्ग्यत्वान्नित्यः शब्द इत्ययमहेतुः, कालात्ययापदेशात्। व्यञ्जकस्य संयोगस्य कालं न व्यङ्ग्यस्य रूपस्य व्यक्तिरत्येति। सति प्रदीपघटसंयोगे रूपस्य ग्रहणं भवति। न निवृत्ते संयोगे रूपं गृह्यते। निवृत्ते दारुपरशुसंयोगे दूरस्थेन शब्दः श्रूयते। विभागकाले सेयं शब्दव्यक्तिः, संयोगकालमत्येति। न च संयोगनिमित्ता भवति। कस्मात्? कारणाभावाद्धि कार्य्याभाव इति। एवमुदाहरणसाधर्म्म्यस्याभावादसाधनमयं हेतुर्हेत्वाभास इति। अवयवविपर्य्यासवचनं न सूत्रार्थः। कस्मात्? विपर्य्यासेनोक्तो हेतुरुदाहरणसाधर्म्म्यात् तथा वैधर्म्म्यात् साधनं हेतुलक्षणं न जहाति। अजहद्धेतुलक्षणं न हेत्वाभासो भवति। अवयवविपर्य्यासवचनमप्राप्तकालमिति निग्रहस्थानमुक्तम्। तदेवेदं किं पुनरुच्यते। इत्यतस्तन्न सूत्रार्थः। इति। हेतुमात्रविषयो यः कालातीतः स एवेह हेत्वाभासेऽभिहितः। साधारणविषयस्तु तन्त्रेऽस्मिन् पृथगुक्तं कालातीतमिति न विरोधः ॥ ५८ ॥

गङ्गाधरः—एवं कालातीतानन्तरमुपालम्भो ज्ञेय इति तदुद्देशः कृतः उपालम्भः। अथोपालम्भ इति। उपालम्भो नाम स यद्यत् खलु हेतोर्दोषवचनं प्रत्यक्षादिर्हेतुरुपलब्धिकारणमुक्तं हेतुदृष्टान्तोपनयनिगमनानि स्थापनायां यश्चावर्ण्यसमश्च विकल्पसमश्च साध्यसमश्च स चोपालम्भो बहुविधः। तद् यथा—प्रकरणसमश्च संशयसमश्च वर्ण्यसमश्चावर्ण्यसमश्चोत्कर्षसमश्चापकर्षसमश्च

उच्यते। निग्रहप्राप्तमिति निग्रहणीयं ज्ञातम्। हेतोर्दोषवचनमित्यनेन कालात्ययापदिष्टासिद्धयोरपीहानुक्तयोर्ग्रहणं कर्त्तव्यम्। उदाहरणार्थन्तु अहेतव उक्ताः। हेतुवदाभासन्त इति

**अथ परिहारः। परिहारो नाम तस्यैव दोषवचनस्य परिहरणम्। यथा नित्यमात्मनि शरीरस्थे जीवलिङ्गान्युपलभ्यन्ते तस्यापगमान्नोपलभ्यन्ते तस्मादन्यः शरीरादात्मा नित्यश्च ॥६०॥**

विकल्पसमश्च साध्यसमश्च साधर्म्म्यसमश्च वैधर्म्म्यसमश्च प्राप्तिसमश्चाप्राप्तिसमश्च प्रसङ्गसमश्च प्रतिदृष्टान्तसमश्चानुत्पत्तिसमश्चाहेतुसमश्चार्थापत्तिसमश्चाविशेषसमश्चोपपत्तिसमश्चोपलब्धिसमश्चानुपलब्धिसमश्च नित्यसमश्चानित्यसमश्च कार्य्यसमश्चेति। तत्र यथा—पूर्व्वं हेत्वाभासा अहेतवस्त्रयो व्याख्यातास्त इहोदाहर्त्तव्या अपरे च ॥ ५९ ॥

गङ्गाधरः—तेषां दोषाणाञ्च परिहारः कर्त्तव्य इति तदनन्तरं परिहारप्रविष्टस्तमाह—अथ परिहार इति। परिहारो नामेति। तस्यैव दोषवचनस्य परिहरणमुद्धारः प्रत्यवस्थानमित्यनर्थान्तरमिति। इत्युपालम्भपरिहारौ जातिशब्देन गौतमेनोक्तौ। तत्र परिहारश्चोत्तरविशेषः। तद् यथा—गौतमोक्ता जातिः। साधर्म्म्यवैधर्म्म्याभ्यां प्रत्यवस्थानं जातिरिति। प्रयुक्ते हि हेतौ यः प्रसङ्गो जायते सा जातिः। स च प्रसङ्गः। साधर्म्म्यवैधर्म्म्याभ्यां प्रत्यवस्थानम् उपालम्भः प्रतिषेधश्चेति द्वयी जातिः। उदाहरणसाधर्म्म्यात् साध्यसाधनं हेतुरित्यस्योदाहरणसाधर्म्म्येण प्रत्यवस्थानम्। यत्रोदाहरणवैधर्म्म्यात् साध्यसाधनं हेतुस्तस्योदाहरणवैधर्म्म्येण प्रत्यवस्थानम्। प्रत्यनीकभावाज्जायमानोऽर्थ इत्यतो जातिरित्युच्यते। तद्विकल्पाज्जातिबहुत्वम्। तस्य साधर्म्म्यवैधर्म्म्याभ्यां प्रत्यवस्थानस्य विकल्पाज्जातिबहुत्वम्। तद् विभज्यते। साधर्म्म्यवैधर्म्म्योत्कर्षापकर्षवर्ण्यावर्ण्यविकल्पसाध्यप्राप्त्यप्राप्तिप्रसङ्गप्रतिदृष्टान्तानुत्पत्तिसंशय-प्रकरणहेत्वर्थापत्त्यविशेषोपपत्त्युपलब्ध्यनुपलब्धिनित्यानित्यकार्य्यसमाः। ताः खल्विमा जातयः स्थापनाहेतौ प्रयुक्ते चतुर्व्विंशतिः प्रतिषेधहेतव उपालम्भाः। एषां क्रमेण लक्षणान्युक्तानि गौतमेन तानि प्रकरणसमादिक्रमेण दर्श्यन्ते। तद् यथा—उभयसाधर्म्म्यात् प्रक्रियासिद्धेः प्रकरणसमो हेतुरुपालभ्यते। उभयस्य पक्षद्वयस्य साधर्म्म्यात् पक्षप्रतिपक्षयोः प्रवृत्तौ प्रक्रियासिद्धेः प्रकरणसमो हेतुः। यथा पूर्व्वपक्षवादी भाषते। अन्यः शरीरादात्मा नित्य इति। तत्र प्रक्रिया यस्मादन्यः शरीरादात्मा तस्मान्नित्यः। शरीरं ह्यनित्यम्

हेत्वाभासाः। यथा—'नित्यमात्मनि' इत्यादिना प्रकरणसमत्वेनोक्तहेतौ दोषमुद्धरति। नित्यम् इति सर्व्वदा। जीवलिङ्गानि प्रतिसन्धानस्मरणादीनि। तस्यापगमान्नोपलभ्यन्त इत्यनेन

अतो विधर्म्मणा चानेन भवितव्यमित्येष प्रकरणसमहेतुरिति हेतौ दूषणवचनमाह प्रतिपक्षवादी। तत्र तं दोषं परिहरति पूर्व्वपक्षवादी। यथेत्यादि। नित्यं शरीरस्थे सत्यात्मनि जीवलिङ्गानि प्राणापानादीन्युपलभ्यन्ते। तस्यात्मनः शरीरादपगमान्न जीवलिङ्गान्युपलभ्यन्ते तस्माच्छरीरादन्य आत्मा नित्य इति, न तु यस्मादन्यः शरीरादात्मा तस्मान्नित्य इति प्रकरणसमत्वदोषो हेतोः परिहृतः। इति। वात्स्यायनेनोदाहृतम्। उभयस्य पक्षद्वयस्य साधर्म्म्यात् पक्षप्रतिपक्षयोः प्रवृत्तौ प्रक्रिया। अनित्यः शब्दः प्रयत्नानन्तरीयकत्वाद् घटवदिति पूर्व्वपक्षवादी स्वपक्षं प्रवर्त्तयति। द्वितीयस्तु तत्राह अनित्यः शब्दः प्रयत्नानन्तरीयकत्वादिति प्रयत्नानन्तरीयकत्वं कण्ठाद्यभिघातप्रयत्नानन्तरमभिव्यक्तत्वं शब्दस्य यस्य प्रयत्नानन्तरीयत्वाभावः स नित्यः। नित्यवैधर्म्म्यात् अनित्य इति प्रकरणानतिवृत्त्या प्रत्यवस्थानम्। समानश्चैतद्वैधर्म्म्येऽपि उभयपक्षे साधर्म्म्यादनित्यत्वसाधनप्रक्रियासिद्धेः प्रकरणसम इति। तत्र पूर्व्वपक्षवादी तं दोषं परिहरति। प्रतिपक्षात् प्रकरणसिद्धेः प्रतिषेधानुपपत्तिः प्रतिपक्षोपपत्तेः। उभयसाधर्म्म्यात् प्रक्रियासिद्धिं ब्रुवता प्रतिपक्षात् प्रक्रियासिद्धिरुक्ता भवति। यदुभयसाधर्म्म्यं तत्रैकतरः प्रतिपक्षः इत्येवं सत्युपपन्नः प्रतिपक्षो भवति। प्रतिपक्षोपपत्तेरनुपपन्नः प्रतिषेधो यतः प्रतिपक्षोपपत्तिः प्रतिषेधोपपत्तिश्चेति विप्रतिषिद्धमिति। तत्त्वानवधारणाच्च प्रक्रियासिद्धिर्विपर्य्यये प्रकरणावसानात्। तत्त्वावधारणे ह्यवसितं प्रकरणं भवतीति परिहार उक्तः। अथ संशयसमस्तु पूर्व्वं यो दर्शितः। अयमायुर्व्वेदैकदेशमाह किं न्वयं चिकित्सको न वेति संशये परो ब्रूयात्—यस्मात् अयमायुर्व्वेदैकदेशमाह तस्माच्चिकित्सक इति। अत्र हेतौ दूषणवचनमुक्तं न हि य एव संशयहेतुः स एव संशयच्छेदहेतुर्भवतीति संशयसम इति। तत्रायं परिहारः उक्तो गौतमेन। साधर्म्म्यात् संशये न संशयो वैधर्म्म्यादुभयथा वा संशयोऽत्यन्तसंशयप्रसङ्गो नित्यत्वानभ्युपगमाच्च सामान्यस्याप्रतिषेध इति। विशेषाद्वैधर्म्म्यादवधार्य्यमाणेऽर्थे पुरुष इति न स्थाणुपुरुषसाधर्म्म्यात् संशयोऽवकाशं लभते। एवं वैधर्म्म्याद्विशेषात् अनित्यः शब्दः प्रयत्नानन्तरीयकत्वात् अवधार्य्यमाणे शब्दस्यानित्यत्वे नित्यानित्यसाधर्म्म्यात् संशयोऽवकाशं न लभते। यदि वै लभेत, ततः स्थाणुपुरुषसाधर्म्म्यानुच्छेदादत्यन्तं संशयः प्रसज्यते। गृह्यमाणे च विशेषे नित्यसाधर्म्म्यं संशयहेतुरिति नाभ्युपगम्यते। न हि गृह्यमाणे पुरुषस्य विशेषे स्थाणुपुरुषसाधर्म्म्यं संशयहेतुर्भवतीति

वात्स्यायनेन व्याख्यातमिति। तथैवात्र यस्मादायुर्व्वेदैकदशमाह तस्मादयं चिकित्सक इति संशयसमो हेतुर्न भवति। नाचिकित्सको ह्यायुर्व्वेदैकदेशमाह यश्चापरः कश्चिदेकश्लोकादिकमाह स चायुर्व्वेदैकदेशोऽपि नाशेषविशेषेण तेन व्याख्यातुं शक्यते, तस्मात् स आयुर्व्वेदैकदेशमाहेति नेष्यते। यस्मादयमायुर्व्वेदैकदेशमशेषविशेषण व्याख्यायाह तस्मादयमायुर्व्वेदैकदेशमाहेनीष्यते तस्मादयं चिचित्सक इति नास्त्यत्र संशय इति कथं संशयसमः स्याद्धेतुरिति परिहारः। अथ वर्ण्यसमस्तु यो दर्शितः। अनित्या बुद्धिः अस्पर्शत्वाच्छब्दवदिति। वर्ण्यः शब्दोऽस्पर्शा बुद्धिश्च वर्ण्या तयोः सम एव हेतुरिति वर्ण्यसमो हेतुरहेतुस्तत्रायमुपालम्भ उक्तो गौतमेन। साध्यदृष्टान्तयोः धर्म्मविकल्पादुभयसाध्यत्वाच्चोत्कर्षापकर्षवर्ण्यावर्ण्यविकल्पसाध्यसमा इति। तत्र स्थापनीयो वर्ण्यो विपर्य्ययादवर्ण्यः। तावेतौ साध्यदृष्टान्तधर्म्मौ विपर्य्ययस्य च तौ वर्ण्यावर्ण्यसमौ भवत इति अनित्या बुद्धिरिति बुद्धिर्वर्ण्या तस्यास्तु धर्म्मोऽस्पर्शत्वं दृष्टान्तश्च शब्दो वर्ण्यस्तस्य धर्म्मोऽप्यस्पर्शत्वं तयोर्वर्ण्ययोः समो हेतुरस्पर्शत्वधर्म्मकमस्पर्शत्वमिति वर्ण्याभ्यां समत्वाद्वर्ण्यसम इति। तत्र परिहारश्चायमुक्तो गौतमेन। किञ्चित् साधर्म्म्यादुपसंहारसिद्धेर्वैधर्म्म्यादप्रतिषेधः। इति। अनित्या बुद्धिरस्पर्शत्वाद् यथा शब्द इत्यत्र यथा शब्दः स्पर्शाभावरूपेण स्पर्शनेन्द्रियग्राह्योऽप्यस्पर्शो न तथा स्पर्शनेन्द्रियग्राह्या चास्पर्शा बुद्धिरित्यतस्त्वस्पर्शत्वमात्रसाधर्म्म्याद्वैधर्म्म्यादुपसंहारसिद्धेर्न वर्ण्यसमतया प्रतिषेधः स्यात्। किञ्चित् साधर्म्म्याद्रूपमानं यथा शब्द इति। अथावर्ण्यसमश्च असाध्यदृष्टान्तयोर्धर्म्मविकल्पादुभयसाध्यत्वाच्च भवति। यथा अनित्या बुद्धिः अस्पर्शत्वाद् यथा शब्द इति। अत्र बुद्धिरनित्यत्त्वेन वर्ण्या शब्दश्चानित्यत्वेन वर्ण्यः। तदुभयमस्पर्शमस्पर्शत्वञ्चास्पर्शमिति वर्ण्यासमः। गन्धादिरिहावर्ण्यश्चास्पर्शश्च तथाचास्पर्शत्वमप्यस्पर्शं दृष्टान्तश्चास्पर्शो रस इति। तदुभयसाध्यत्वादवर्ण्यसमो हेतुरस्पर्शत्वादिति। तस्य परिहारश्च। किञ्चित्साधर्म्म्यादुपमानाद्वैधर्म्म्यादुपसंहारसिद्धेरप्रतिषेध इति। अवर्ण्यस्तु गन्धादिगुणस्तत्र दृष्टान्तो रसः केवलस्पर्शगुणाभावेन किञ्चिद्धर्म्मेणोपमानं तत्र वैधर्म्म्यादुपसंहारः। रसो रसनेन्द्रियग्राह्योऽस्पर्शो न तथा गन्ध इति सिध्यति

मृतशरीरे चेतनाद्यभावादन्यदेव तत्कारणमुन्नीयते, यदपगमाच्च चेतयते मृतशरीरम्। तस्मात् अन्यत्वमात्मनः सिद्धम्। ततश्च शरीरादन्यत्वात् शरीरविधर्म्मत्वेन पूर्व्वव्युत्पादितेन नित्यत्वमपि सिध्यतीत्याह—नित्यश्चेति ॥ ५८ - ६१ ॥

तस्मान्नावर्ण्यसम इति। अथोत्कर्षसमस्तु साध्यदृष्टान्तयोर्धर्म्मविकल्पादुभय-साध्यत्वाच्च भवति। दृष्टान्तधर्म्मं साध्येन समासक्तं कुर्व्वन् हेतुरुत्कर्षसमो भवति। यथा क्रियावानात्मा क्रियाहेतुगुणयोगाल्लोष्ट्रवदिति। लोष्ट्रवदेव स्पर्शवानपि भवति। अथ न स्पर्शवानात्मा लोष्ट्रवत्। क्रियावानपि लोष्ट्रवत् स्पर्शं न प्राप्नोतीति विपर्य्यये वा विशेषो वक्तव्यः। इत्युत्कर्षसमे क्रियाहेतु-गुणयोगन्तु दृष्टान्तस्य लोष्ट्रस्यापकर्षगुणगुरुत्वादिधर्म्मं क्रियावदात्मना साध्येन सह समासक्तं कुर्व्वन् द्वयोः क्रियाहेतुगुणेष्वात्मगुणश्चैतन्यमुत्कर्षस्तद् योगसम इति। तस्य परिहारश्च किञ्चित्साधर्म्म्यादुपमाने वैधर्म्म्यादुपसंहारसिद्धेन प्रतिषेध इति क्रियाहेतुगुणयोगे दृष्टान्तो लोष्ट्रवदिति किञ्चित्साधर्म्म्यात्। पाञ्चभौतिकं हि लोष्ट्रं तत्र वाय्वादीनि सक्रियाणि तद्वत्त्वात् सक्रियम्। आत्मा च सक्रियो मनसा सक्रियेण सह योगादिति वैधर्म्म्याद् यथा लोष्ट्रं क्रियाहेतुगुणयुक्तं न तथात्मेति उपसंहारसिद्धेरुत्कर्षसमतया हेतोः प्रतिषेधो न युक्त इति। अथापकर्षसमश्च साध्यदृष्टान्तयोर्धर्म्मविकल्पादुभयसाध्यत्वाच्च भवति। साध्ये हि धर्म्माभावं दृष्टान्तात् प्रसक्तं कुर्व्वन् हेतुरपकर्षसमो भवति। क्रियावान् आत्मा क्रियाहेतुगुणयोगाल्लोष्ट्रवदिति लोष्ट्रः क्रियावान् न तु विभुर्दृष्टान्तः। आत्मा तु क्रियावान् विभुश्चाविभुर्भवतु। अपकर्षो ह्यविभुत्वं लोष्ट्रस्येति साध्ये क्रियावत्यात्मनि विभुत्वधर्म्माभावं दृष्टान्ताल्लोष्ट्रात् प्रसक्तं करोति क्रियाहेतुगुणयोग इत्येष हेतुस्तस्मादपकर्षसमः। तस्य परिहारश्च किञ्चित् साधर्म्म्यादुपमाने वैधर्म्म्यादुपसंहारसिद्धेरप्रतिषेध इति। आत्मनः क्रियावत्त्वे किञ्चित्साधर्म्म्याल्लोष्ट्र उपमानं सिध्यति गुरुत्वादिभिर्गुणैर्लोष्ट्रः क्लेदमवर्द्धनादिकर्म्मकृत्। आत्मा च चैतन्यादिगुणयोगाच्चेतनत्वादिकर्म्मकृदिति साधर्म्म्यादुपमानात्। वैधर्म्म्यादविभुत्वविभुत्वाद् यथा लोष्ट्रो न विभुर्न तथात्मा भवत्यविभुरित्युपसंहारसिद्धेरपकर्षसमतया हेतोः प्रतिषेधो न युक्त इति। अथ विकल्पसमोऽपि साध्यदृष्टान्तयोर्धर्म्मविकल्पादुभयसाध्यत्वाच्च भवतीति। यथा—साधनधर्म्मयुक्ते दृष्टान्ते धर्म्मान्तरविकल्पात् साध्यधर्म्म-विकल्पं प्रसक्तं कुर्व्वन् हेतुर्विकल्पसमो भवति। यथा क्रियावानात्मा क्रिया-हेतुगुणयोगाल्लोष्ट्रवदिति। क्रियाहेतुगुणयुक्तं किञ्चिद् गुरुद्रव्यं यथा लोष्ट्रः। किञ्चिच्च लघुद्रव्यं यथा वायुः। एवं क्रियाहेतुगुणयुक्तं किञ्चित् क्रियावत् यथा लोष्ट्रः। किञ्चिदक्रियं यथात्मा। इति विकल्पसमत्वपरिहारे विशेषो वाच्यः। किञ्चित् साधर्म्म्यादुपमाने वैधर्म्म्यादुपसंहारसिद्धेरप्रतिषेध इति।

किञ्चित्साधर्म्म्यादुपमाने वैधर्म्म्यादुपसंहारसिद्धेरप्रतिषेध इति। क्रियावानात्मा क्रियाहेतुगुणयोगाल्लोष्ट्रवदिति। लोष्ट्रो गुरुः क्रियाहेतुगुणवान् वायुर्लघुः क्रियाहेतुगुणवान् भवतु। आत्मा मनसा युक्तत्वेन सक्रियस्तदंशे लोष्ट्रस्य गुरुत्वादिगुणयोगेन साधर्म्म्यादुपमानत्वे सिद्धे यथा लोष्ट्रो यद्गुणेन क्रियावान् न तथा तद्गुणेन क्रियावानात्मेति वैधर्म्म्यादुपसंहारसिद्धेर्विकल्पसमतया हेतोः प्रतिषेधो न युक्त इति परिहारः। एवं साध्यसमोऽपि साध्यदृष्टान्तयोर्धर्म्मविकल्पादुभयसाध्यत्वाच्च भवति। हेत्वाद्यवयवसामर्थ्ययोगी धर्म्मः साध्यः। तं साध्यं दृष्टान्ते प्रसजन् हेतुः साध्यसमो भवति। यथा क्रियावानात्मा क्रियाहेतुगुणयोगाल्लोष्ट्रवदित्यत्र यदि यथा लोष्ट्रस्तथा प्राप्तस्तर्हि यथात्मा तथा लोष्ट्र इति। साध्यश्चायं क्रियावानिति लोष्ट्रोऽपि साध्य इति। अथ नैवम्। न तर्हि यथा लोष्ट्रस्तथात्मेति साध्यसमो हेतुः। तत्र परिहारः। किञ्चित्साधर्म्म्यादुपमाने वैधर्म्म्यादुपसंहारसिद्धेः अप्रतिषेधः। साध्यातिदेशाच्च दृष्टान्तोपपत्तेः। यथा लोष्ट्र इति किञ्चित्साधर्म्म्यादुपमानं क्रियाहेतुगुरुत्वादिगुणवत्त्वेन क्रियावत्त्वात्। न तथा आत्मा गुरुत्वादिगुणयोगात् क्रियावान् परन्तु मनसा संयुक्तत्वात् क्रियावानिति वैधर्म्म्यादुपसंहारसिद्धेः। एवं यथा लोष्ट्रस्तथात्मेति साध्यातिदेशेन यथात्मा तथा लोष्ट्र इत्यनेन दृष्टान्तेऽप्युपपद्यमाने साध्यत्वमनुपपन्नं लोष्ट्रस्य प्रतिज्ञाभावादित्यतो न साध्यसमत्वं दोषो हेतोरिति। साधर्म्म्यवैधर्म्म्याभ्यामुपसंहारे तद्धर्म्मविपर्य्ययोपपत्तेः साधर्म्म्यवैधर्म्म्यसमौ। साधर्म्म्येणोपसंहारे साध्यधर्म्मविपर्य्ययोपपत्तेः साधर्म्म्येणैव प्रत्यवस्थानमविशेष्यमाणं स्थापनाहेतुतः साधर्म्म्यसमो हेतुः प्रतिषेधः। यथा—क्रियावानात्मा क्रियाहेतुगुणयोगाल्लोष्ट्रवत्। क्रियाहेतुगुणयुक्तो लोष्ट्रो यथा क्रियावान् तथा चात्मा तस्मात् क्रियावान्। एवमुपसंहृते परः साधर्म्म्येणैव प्रत्यवतिष्ठते। निष्क्रिय आत्मा विभुनो द्रव्यस्य निष्क्रियत्वात्। यथाकाशम्। यथा विभु चाकाशं निष्क्रियञ्च तथा चात्मा विभुस्तस्मान्निष्क्रियः। न चास्ति विशेषहेतुः। क्रियावत् साधर्म्म्यात् क्रियावता भवितव्यम्, न पुनरक्रियसाधर्म्म्यान्निष्क्रियेण भवितव्यमिति विशेषहेत्वभावात् साधर्म्म्यसमो हेतुः प्रतिषेधः उपालम्भः। इति। एवं वैधर्म्म्येणोपसंहारे साध्यधर्म्मविपर्य्ययोपपत्तेर्वैधर्म्म्येणैव प्रत्यवस्थानमविशेष्यमाणं प्रतिष्ठापनाहेतुतो वैधर्म्म्यसमः प्रतिषेध उपालम्भः। यथा—क्रियावानात्मा क्रियाहेतुगुणयोगाल्लोष्ट्रवदिति। इह क्रियाहेतु-

गुणयुक्तो लोष्टः परिच्छिन्नो दृष्टः, न च तथात्मा परिच्छिन्नः क्रियाहेतुगुणयुक्तस्तस्मान्न लोष्ट्रवत् क्रियावानिति। न चास्ति विशेषो हेतुः। क्रियावत्साधर्म्म्यात् क्रियावता भवितव्यं, न क्रियावद्वैधर्म्म्येण निष्क्रियेण भवितव्यं विशेषहेत्त्वभावाद्वैधर्म्म्यसमः। वैधर्म्म्येण चोपसंहारे निष्क्रिय आत्मा विभुत्वात्। यथा लोष्ट्रः। क्रियावद् द्रव्यमविभु दृष्टम् न च तथात्मा भवत्यविभुस्तस्मान्निष्क्रिय इति वैधर्म्म्येण प्रत्यवस्थानम्। निष्क्रियं द्रव्यम् आकाशं क्रियाहेतुगुणरहितं दृष्टं तथात्मा तस्मान्निष्क्रिय इति। न चास्ति विशेषहेतुः। क्रियावद्वैधर्म्म्येण निष्क्रियेण भवितव्यम्, न पुनरक्रियवैधर्म्म्येण क्रियावता भवितव्यमात्मनेति विशेषहेत्वभावाद्वैधर्म्म्यसमः। अनयोः परिहारः। गोत्वाद् गोसिद्धिवत् तत्सिद्धिः। साधर्म्म्यमात्रेण वैधर्म्म्यमात्रेण च साध्यसाधने प्रतिज्ञायमाने स्यादव्यवस्था सा तु धर्म्मविशेषेणोपपद्यते। गोसाधर्म्म्याद् गोत्वाज्जातिविशेषाद् गौः सिध्यति न तु सास्नादिसम्बन्धात्। ततो न साधर्म्म्यसमो हेतुरिति, न च वैधर्म्म्यसमोऽपि। निष्क्रिय आत्मा विभुत्वात् क्रियावद् द्रव्यमविभु दृष्टं यथा लोष्ट्र इति वैधर्म्म्यमात्रेण साध्यसाधने प्रतिज्ञायमाने स्यादव्यवस्था सा तु धर्म्मविशेषेणोपपद्यते गोत्वाद् गोसिद्धिवत्। अश्वादिवैधर्म्म्याद् गोत्वादेव गोसिद्धिः, न तु गुणादिभेदात्। इति।

अथ प्राप्त्यप्राप्तिसमौ। प्राप्य साध्यमप्राप्य वा हेतोः प्राप्त्या अविशिष्टत्वादप्राप्त्या असाधकत्वाच्च प्राप्त्यप्राप्तिसमौ। हेतुः प्राप्य वा साध्यं साधयेदप्राप्य वा साधयेदिति। न तावत् साध्यं प्राप्य साधयेत्। हेतोः प्राप्त्यामविशिष्टत्वादसाधकः स्यात्। द्वयोर्विद्यमानयोः प्राप्तौ सत्यां किं कस्य साधकं साध्यं वा भवति। अथाप्राप्य साध्यं साधको न भवति नाप्राप्तः प्रदीपः प्रकाशयतीति। प्राप्त्याः प्रत्यवस्थानं प्राप्तिसमः। अप्राप्त्याः प्रत्यवस्थानमप्राप्तिसमः। यथायं ज्वरः सन्तापादिति। सन्तापो हेतुर्ज्वरं प्राप्य न साधको भवति द्वयोरविशिष्टत्वात्। द्वावपि हि वर्त्तमानत्वेनाविशिष्टौ किं ज्वरः साध्यः सन्तापः साधकः किं सन्तापः साध्यो ज्वरः साधकः। अयं सन्तापो ज्वरत्वादयं ज्वरो वा सन्तापादिति प्राप्तिसमः। अप्राप्तिसमस्तु पूर्व्वरूपेण ज्वरो भविष्यतीति साध्यते। तत्र ज्वरमप्राप्य पूर्व्वरूपाणि कथं भाविज्वरं साधयन्ति। न ह्यप्राप्तो दीपस्तमो हन्ति। ततोऽप्राप्तिसमो हेतुर्ज्वरो भविष्यति श्रमारतिप्रभृतिभ्य इति। अथानयोः परिहारः।

घटादिनिष्पत्तिदर्शनात् पीड़ने चाभिचारादप्रतिषेधः। हेतुदूषणमुभयथा न युक्तम्। कर्त्तृकरणाधिकरणानि प्राप्य मृदं घटादिकार्य्यं निष्पादयन्ति। तथा हेतुः साध्यं प्राप्य साधयति। तस्मात् प्राप्तिसमतया हेतोर्दूषणमसाधु। एवमप्राप्य साधकत्वेऽपि दूषणमसाधु। आभिचारिककर्म्मणा पीड़ने सति दृष्टमप्राप्य साधकत्वमिति तस्मादप्राप्तिसमतया हेतोर्दूषणमसाधु। अथ प्रसङ्गसमप्रतिदृष्टान्तसमौ तु। दृष्टान्तस्य कारणानपदेशात् प्रत्यवस्थानाच्च प्रतिदृष्टान्तेन प्रसङ्गप्रतिदृष्टान्तसमौ। साधनस्यापि साधनं वक्तव्यमिति प्रसङ्गे प्रत्यवस्थानं हेतौ दूषणं प्रसङ्गसमः। क्रियाहेतुगुणयोगी क्रियावान् लोष्ट्र इति हेतुर्नोपदिश्यते। अनेन कारणेनैवमिति नोपदिश्यते। इति दृष्टान्तस्य कारणानपदेशात् प्रसक्तिसमो हेतुः। न च हेतुमन्तरेण सिद्धिरस्तीति।०। प्रतिदृष्टान्तेन प्रत्यवस्थानाच्च प्रतिदृष्टान्तसमः। क्रियावानात्मा क्रियाहेतुगुणयोगात् लोष्ट्रवदित्युक्ते प्रतिदृष्टान्त उपादीयते। क्रियाहेतुगुणयुक्तमाकाशं निष्क्रियम् इति। कः पुनराकाशस्य क्रियाहेतुगुणः। वायुना संयोगः संस्कारापेक्षः। वायुवनस्पतिसंयोगवदिति प्रतिदृष्टान्तसमः।०। तत्राद्यस्य परिहारः। प्रदीपादानप्रसङ्गनिवृत्तिवत् तद्विनिवृत्तिः। तयोः प्रसङ्गसम-प्रतिदृष्टान्तसमयोर्विनिवृत्तिः प्रदीपादानप्रसङ्गनिवृत्तिवत्। अथ के प्रदीपमुपाददते किमर्थं वेति पृष्टः खल्वयं वक्तुम् अर्हति। दिदृक्षमाणाः प्रदीपमुपाददते दृश्यदर्शनार्थमिति। कस्मात् ते प्रदीपान्तरं नोपाददते अन्तरेणापि प्रदीपान्तरं दृश्यते प्रदीपः। तत्र यथा प्रदीपदर्शनार्थं प्रदीपान्तरग्रहणं निरर्थकं तथा क्रियाहेतुगुणयोगी क्रियावान् लोष्ट्र इत्यत्र दृष्टान्तस्य कारणापदेशो व्यर्थः। इति।०। अथ दृष्टान्तः किमर्थमुच्यते। अप्रज्ञातस्य ज्ञापनार्थमिति। अथ दृष्टान्ते कारणापदेशः किमर्थं दृश्यते। यदि प्रज्ञापनार्थं प्रज्ञातो दृष्टान्तः स खलु लौकिकपरीक्षकाणां यस्मिन्नर्थे बुद्धिसाम्यं स दृष्टान्त इति। तस्य प्रज्ञापनार्थः कारणापदेशो निरर्थक इति प्रसङ्गसमतया हेतुदूषणमयुक्तमिति।०। प्रतिदृष्टान्तसमस्य परिहारोऽयम्। प्रतिदृष्टान्तहेतुत्वे च नाहेतुर्दृष्टान्तः। प्रतिदृष्टान्तं ब्रुवता न विशेषहेतुरुपदिश्यते। अनेन प्रकारेण प्रतिदृष्टान्तः साधको न दृष्टान्त इति। एवं प्रतिदृष्टान्तहेतुत्वे सति नाहेतुर्दृष्टान्त इत्युपपद्यते। स च कथमहेतुर्न स्यात्? यद्यप्रतिषिद्धः साधकः स्यादिति। इति प्रतिदृष्टान्तसमतया हेतुदूषणमयुक्तम्।०। अथानुत्पत्तिसमः। प्रागुत्पत्तेः कारणाभावादनुत्पत्तिसम इति। उत्पत्तेः पूर्व्वं कारणाभावादनुत्पत्तिसमः। अनित्यः शब्दः प्रयत्नानन्तरीयकत्वात् घटवदित्युक्तेऽपर आह—प्रागुत्पत्तेः

अनुत्पन्ने शब्दे प्रयत्नानन्तरीयकत्वमनित्यत्वे कारणं नास्ति। तदभावान्नित्यत्वं प्राप्तं नित्यस्य चोत्पत्तिर्नास्ति। इत्यनुत्पत्त्या प्रत्यवस्थानं हेतोर्दोषवचनम् उपालम्भोऽनुत्पत्तिसम इति।०। अस्य परिहारस्तु। तथाभावादुत्पन्नस्य कारणोपपत्तेर्न कारणप्रतिषेध इति। तथाभावादुत्पन्नस्येति। उत्पन्नः खल्वयं शब्द इति भवति। प्रागुत्पत्तेः शब्द एव नास्ति। उत्पन्नस्य शब्दभावात्, शब्दस्य सतः प्रयत्नानन्तरीयकत्वमनित्यत्वकारणमुपपद्यते कारणोपपत्तेश्चायुक्तोऽयं दोषः, प्रागुत्पत्तेः कारणाभावादिति।०। अथाहेतुसमः। त्रैकाल्यासिद्धेर्हेतोरहेतुसमः। इति। हेतुः साधनं, तत् साध्यात् पूर्व्वं पश्चात् सह वा भवेत्; यदि पूर्व्वं साधनम् असति साध्ये कस्य साधनं स्यात्, अथ पश्चात् तदा चासति साधने कस्येदं साध्यमिति, अथ युगपत् साध्यसाधने द्वयोर्विद्यमानयोः किं कस्य साधनं किं कस्य साध्यमिति हेतुना न विशिष्यते। अहेतुना साधर्म्म्यात् प्रत्यवस्थानमुपालम्भः खलु हेतोर्दोषवचनमिदमहेतुसमाख्यं भवति। अस्य परिहारः। न हेतुतः साध्यसिद्धेस्त्रैकाल्यासिद्धिः। इति। न त्रैकाल्यासिद्धिः, कस्मात्? हेतुतः साध्यसिद्धेरिति। निर्व्वर्त्तनीयस्य निर्व्वृत्तिः। विज्ञेयस्य विज्ञानम्। उभयं कारणतो दृश्यते। सोऽयं महान् प्रत्यक्षविषय इति। हेतुतो हि साध्यसिद्धिर्न हि हेतुमन्तरेण किमपि सिध्यति। यत्सिद्धौ यस्य साधनयोग्यता यस्य साध्ययोग्यता तत्तस्य साधनेन तत्साध्यं साध्यते। यदा येन यत् साध्यते तदा तत् तस्य साध्यमुच्यते तत् तस्य साधनञ्च। द्वयन्तु विद्यमानमपि स्वरूपेणैव वर्त्तते। न तु प्राक् साधनारम्भात् साध्यसाधनरूपेण द्वयं गृह्यते। यदा साधयितुमारभते तदा यत् साध्यते तत् साध्यत्वेन गृह्यते येन साध्यते तत् साधनत्वेन गृह्यते, इति हेतुतः साध्यसिद्धिस्ततस्त्रैकाल्यासिद्धेः प्रतिषेधानुपपत्तिरिति। यत् तु खलूक्तमसति साध्ये किं कस्य साधनमिति। यत् तु निर्व्वर्त्तते यच्च विज्ञायते तस्येति। प्रतिषेधानुपपत्तेश्च प्रतिषेद्धव्याप्रतिषेधः। पूर्व्वं पश्चाद् युगपद्वा प्रतिषेध इति नोपपद्यते। प्रतिषेधानुपपत्तेः स्थापनाहेतुः सिद्ध इति।०। अथार्थापत्तिसमः। अर्थापत्तितः प्रतिपक्षसिद्धेः अर्थापत्तिसम इति। अनित्यः शब्दः प्रयत्नानन्तरीयकत्वाद् घटवदिति स्थापिते पक्षे अर्थापत्त्या प्रतिपक्षं साधयतोऽर्थापत्तिसमः स्यात्। यदि प्रयत्नानन्तरीयकत्वादनित्यसाधर्म्म्यादनित्यः शब्द इति, अत्रार्थादापद्यते नित्यसाधर्म्म्यात् नित्य इति। अस्ति ह्यस्य नित्येन साधर्म्म्यमस्पर्शत्वमिति। अथास्य परिहारः। अनुक्तस्यार्थापत्तेः पक्षहानेरुपपत्तिरनुक्तत्वादनैकान्तिकत्वाच्चार्था-

पत्तेः। इति। अनुपपाद्यसामर्थ्यमनुक्तमर्थादापद्यते इति ब्रुवतः पक्षहानेः उपपत्तिरनुक्तत्वात्। अनित्यपक्षसिद्धावर्थादापन्नस्य नित्यपक्षस्य हानिरिति। अनैकान्तिकत्वाच्चार्थापत्तेः, उभयपक्षसमा चेयमर्थापत्तिः। यदि नित्यसाधर्म्म्यात् अस्पर्शत्वादाकाशवच्च नित्यः शब्दः अर्थादापन्नमनित्यसाधर्म्म्यात् प्रयत्नानन्तरीयकत्वादनित्य इति। न चेयं विपर्य्ययमात्रादेकान्तेनार्थापत्तिः। न खलु वै घनस्य ग्राव्णः पतनमित्यर्थादापद्यते द्रवाणामपां पतनाभाव इति।०।

अथाविशेषसमः। एकधर्म्मोपपत्तेरविशेषे सर्व्वाविशेषप्रसङ्गात् सद्भावोपपत्तेरविशेषसम इति। एको धर्म्मः प्रयत्नान्तरीयकत्वं शब्दघटयोरुपपद्यते। इत्यविशेषे उभयोरनित्यत्वे सर्व्वस्याविशेषः प्रसज्यते। कथम्? सद्भावोपपत्तेः। एको धर्म्मः सद्भावः सर्व्वस्योपपद्यते, सद्भावोपपत्तेः सर्व्वस्याविशेषप्रसङ्गात् प्रत्यवस्थानमविशेषसमः। इत्युपालम्भः। तस्य परिहारः। क्वचित् धर्म्मानुपपत्तेः क्वचिच्चोपपत्तेः प्रतिषेधाभावः। इति। यथा साध्यदृष्टान्तयोः एकधर्म्मस्य प्रयत्नानन्तरीयकत्वस्योपपत्तेरनित्यत्वधर्म्मान्तरमविशेषः, एवं सर्व्वभावाणां सद्भावोपपत्तिनिमित्तधर्म्मान्तरमस्ति येनाविशेषः स्यात्। तथा अनित्यत्वमेव धर्म्मान्तरं सद्भावोपपत्तिनिमित्तं भावानां सर्व्वत्र स्यादित्येवं खल्वेव कल्प्यमाने अनित्याः सर्व्वे भावाः सद्भावोपपत्तेरिति पक्षः प्राप्नोति। तत्र प्रतिज्ञार्थव्यतिरिक्तमन्यदुदाहरणं नास्ति, अनुदाहरणश्च हेतुर्नास्ति इति प्रतिज्ञैकदेशस्योदाहरणत्वमुपपन्नम्। न हि साध्यमुदाहरणं भवति। ततश्च नित्यानित्यभावादनित्यत्वानुपपत्तिः। तस्मात् सद्भावोपपत्तेः सर्व्वाविशेषप्रसङ्ग इति निरभिधेयमेतद्वाक्यमिति। सर्व्वभावाणां सद्भावोपपत्तेरनित्यत्वमिति ब्रुवताऽनुज्ञातं शब्दस्यानित्यत्वं तत्रानुपपन्नप्रतिषेध उपालम्भ इति।०।

अथोपपत्तिसमः। उभयकारणोपपत्तेरुपपत्तिसमः। यद्यनित्यत्वकारणत्वं प्रयत्नानन्तरीयकत्वमुपपद्यते शब्दस्येत्यनित्यः शब्द इति, नित्यत्वकारणमप्युपपद्यतेऽस्यास्पर्शत्वमिति नित्यः शब्द इत्युपपद्यते। उभयस्य अनित्यत्वनित्यत्वस्य कारणोपपत्त्या प्रत्यवस्थानं दूषणवचनमुपपत्तिसम इति। तस्य परिहारः। उपपत्तिकारणाभ्यनुज्ञानादप्रतिषेधः। इति। उभयकारणोपपत्तेरिति ब्रुवता नानित्यत्वकारणोपपत्तेरनित्यत्वं प्रतिषिध्यते। यदि प्रतिषिध्यते, नोभयकारणोपपत्तिः स्यात्। उभयकारणोपपत्तिवचनादनित्यत्वकारणोपपत्तिरभ्यनुज्ञायते। तदभ्यनुज्ञानादनुपपन्नः प्रतिषेधः। व्याघातात् प्रतिषेध इति चेत्? समानो व्याघातः। एकस्य नित्यत्वानित्यत्वप्रसङ्गं व्याहतं

ब्रुवतोक्तः प्रतिषेध इति चेत् स्वपक्षपरपक्षयोः समानो व्याघातः। स च नैकतरस्य साधक इति ।०। अथोपलब्धिसमः। निर्दिष्टकारणाभावेऽप्युपलम्भादुपलब्धिसमः। इति। निर्दिष्टस्य प्रयत्नानन्तरीयकत्वस्यानित्यत्वकारणस्याभावेऽपि वायुनोदनाद् वृक्षशाखाभङ्गजस्य शब्दस्यानित्यत्वमुपलभ्यते; निर्दिष्टस्य साधनस्याभावेऽपि साध्यधर्म्मोपलब्ध्या प्रत्यवस्थानमुपालम्भ उपलब्धिसमः इति। तस्य परिहारः। कारणान्तरादपि तद्धर्म्मोपपत्तेरप्रतिषेध इति। प्रयत्नानन्तरीयकत्वादिति ब्रुवता कारणत उपपत्तिरभिधीयते। न कार्य्यस्य कारणनियमः। यदि च कारणान्तरादप्युपपद्यमानस्य शब्दस्य तदनित्यत्वमुपपद्यते। किमत्र प्रतिषिध्यते? न प्रागुच्चारणाद् विद्यमानस्य शब्दस्यानुपलब्धिः। कस्मात्? आवरणाद्यनुपलब्धेः। यथा विद्यमानस्योदकादेरर्थस्यावरणादेरनुपलब्धिः। नैवं शब्दस्याग्रहणकारणेनावरणादिनानुपलब्धिः। गृह्यते चैतदस्याग्रहणकारणमुदकादिवन्न गृह्यते। तस्मादुदकादिविपरीतः शब्दोऽनुपलभ्यमान इति ।०। अथानुपलब्धिसमः। तदनुपलब्धेरनुपलम्भाद् अभावसिद्धौ तद्विपरीतोपपत्तेरनुपलब्धिसमः इति। तेषामावरणादीनामनुपलब्धिर्नोपलभ्यते। अनुपलम्भान्नास्तीत्यभावोऽस्याः सिध्यति। अभावसिद्धौ हेत्वभावात् तद्विपरीतमस्तित्वमावरणादीनामवधार्य्यते। तद्विपरीतोपपत्तेर्यत् प्रतिज्ञातं न प्रागुच्चारणाद् विद्यमानस्य शब्दस्यानुपलब्धिरित्येतन्न सिध्यति। सोऽयं हेतुरावरणानुपलब्धेरित्यावरणादिषु चावरणाद्यनुपलब्धौ च समयानुपलब्ध्या प्रत्यवस्थितोऽनुपलब्धिसमो भवति। तस्य परिहारः। अनुपलम्भात्मकत्वादनुपलब्धेरहेतुः। आवरणाद्यनुपलब्धेरुपलब्धिर्नास्ति, अनुपलम्भादित्यहेतुः। कस्मात्? अनुपलम्भात्मकत्वादनुपलब्धेः। उपलम्भाभावमात्रत्वादनुपलब्धेः। यदस्ति तदुपलब्धेर्विषयः। अनुपलभ्यमानं नास्तीति प्रतिज्ञायते। सोऽयमावरणाद्यनुपलब्धेरुपलम्भाभावोऽनुपलब्धौ स्वविषये प्रवर्त्तमानो न स्वविषयं प्रतिषेधति। अप्रतिषिद्धा चावरणाद्यनुपलब्धिर्हेतुत्वाय कल्प्यते। आवरणादीनि तु विद्यमानत्वादुपलब्धेर्विषयास्तेषामुपलब्ध्या भवितव्यमिति। यत् तानि नोपलभ्यन्ते तदुपलब्धेः स्वविषयप्रतिपादिकाया अभावादनुपलम्भादनुपलब्धेर्विषयो गम्यते। न सन्त्यावरणादीनि शब्दस्य अग्रहणकारणानि। इति अनुपलम्भादनुपलब्धिः सिध्यति, विषयः स तस्येति। कथं तर्ह्यवस्तु स्याद्विषय इति? ज्ञानविकल्पानाञ्च भावाभावसंवेदनादध्यात्मम्। अहेतुरित्यनुवर्त्तते। शारीरे शरीरिणां ज्ञानविकल्पानां भावाभावौ संवेदनीयौ।

अस्ति मे संशयज्ञानं नास्ति मे संशयज्ञानमिति । एवं प्रत्यक्षानुमानागमस्मृतिज्ञानेषु सेयमावरणाद्यनुपलब्धिरुपलब्ध्यभावः स्वसंवेद्यः, नास्ति मे शब्दस्य आवरणादुपलब्धिरिति नोपलभ्यन्ते शब्दस्याग्रहणकारणान्यावरणादीनीति। तत्र यदुक्तं तदुपलब्धेरनुपलम्भादभावसिद्धिरिति, एतन्नोपपद्यते। इति ।०। अथ नित्यसमः । नित्यमनित्यभावादनित्ये नित्यत्वोपपत्तेर्नित्यसमः । अनित्यः शब्द इति प्रतिज्ञायते । तदनित्यत्वं किं शब्दे नित्यम् अथानित्यम् ? यदि तावत् सदा भवति धर्म्मस्य सदाभावाद्धर्म्मिणोऽपि सदाभाव इति नित्यः स्याच्छब्द इति । अथ न सर्व्वदा भवति, अनित्यत्वस्याभावान्नित्यः शब्दः । एवं नित्यत्वेन प्रत्यवस्थानान्नित्यसम इति। तस्य परिहारः। प्रतिषेध्ये नित्यमनित्यभावादनित्येऽनित्यत्वोपपत्तेः प्रतिषेधाभावः। इति। प्रतिषेध्ये शब्दे नित्यम् अनित्यभावादित्युच्यमानेऽनुज्ञातं शब्दस्यानित्यत्वम्। अनित्ये चानित्यत्वोपपत्तेश्च नानित्यः शब्द इति प्रतिषेधो नोपपद्यते। अथ नाभ्युपगम्यते। नित्यमनित्यभावादिति हेतुर्न भवति। इति हेत्वभावात् प्रतिषेधानुपपत्तिरिति। उत्पन्नस्य निरोधादभावः शब्दस्यानित्यत्वं तत्र परिप्रश्नानुपपत्तिः। सोऽयं प्रश्नः—तदा नित्यत्वं किं शब्दे सर्व्वदा भवति अथ न ? इत्यनुपपन्नः। कस्मात्? उत्पन्नस्य यो निरोधादभावः शब्दस्य तदनित्यत्वम्। एवं सत्यधिकरणाधेयविभागो व्याघातान्नास्तीत्यभावो वस्तुभूतः। नित्यमिति विरोधाच्चानित्यत्वम् अनित्यतात्वञ्चैकस्य धर्म्मिणो धर्म्मौ विरुध्येते। न सम्भवतः। तत्र यदुक्तं नित्यमनित्यभावान्नित्य एव, तदवर्त्तमानार्थमुक्तमिति ।०। अथानित्यसमः। साधर्म्म्यात् तुल्यधर्म्मोपपत्तेः सर्व्वानित्यत्वप्रसङ्गादनित्यसम इति। अनित्येन घटेन साधर्म्म्यादनित्यः शब्द इति ब्रुवतोऽस्ति घटेनानित्येन सर्व्वभावाणां साधर्म्म्यमिति सर्व्वस्यानित्यत्वमनिष्टं सम्पद्यते। सोऽयमनित्येन प्रत्यवस्थानादुपलम्भादनित्यसम इति। तस्य परिहारः। साधर्म्म्यादसिद्धेः प्रतिषेधासिद्धिः प्रतिषेध्यसाधर्म्म्यात्। इति। प्रतिज्ञाद्यवयवयुक्तं वाक्यं पक्षनिर्व्वर्त्तकम्। प्रतिपक्षलक्षणः प्रतिषेधः। तस्य पक्षेण प्रतिषेध्येन साधर्म्म्य प्रतिज्ञायोगः। तत् यद्यनित्यसाधर्म्म्यादनित्यत्वस्यासिद्धिः, साधर्म्म्यादसिद्धेः। प्रतिषेधस्याप्यसिद्धिः प्रतिषेध्येन साधर्म्म्यादिति। दृष्टान्ते च साध्यसाधनभावेन प्रज्ञातस्य धर्म्मस्य हेतुत्वात् तस्य चोभयथाभावान्नाविशेषः इति। दृष्टान्ते यः खलु धर्म्मः साध्यसाधनभावेन प्रज्ञायते, स हेतुत्वेनाभिधीयते ; स चोभयथा भवति। केनचित् समानः कुतश्चिद्विशिष्टः। सामान्यात् साधर्म्म्य विशेषाच्च

वैधर्म्म्यम्। एवं साधर्म्म्याविशेषो हेतुर्नाविशेषेण साधर्म्म्यमात्रं वैधर्म्म्यमात्रं वा, साधर्म्म्यमात्रं वैधर्म्म्यमात्रञ्चाश्रित्य भवानाह—साधर्म्म्यात् तुल्यधर्म्मोपपत्तेः सर्व्वावित्यत्र प्रसङ्गादनित्यसमः इति। एतदयुक्तमिति। अविशेषसमप्रतिषेधे च यदुक्तं तदपि वेदितव्यमिति।०। अथ कार्य्यसमः। प्रयत्नकार्य्यानेकत्वात् कार्य्यसमः इति। प्रयत्नानन्तरीयकत्वादनित्यः शब्द इति, यस्य प्रयत्नानन्तरम् आत्मलाभस्तत् खल्वभूत्वा भवति। यथा—घटादिकार्य्यम्, अनित्यमिति न भूत्वा भवतीत्येतद् विज्ञायते। एवं व्यवस्थिते प्रयत्नकार्य्यानेकत्वादिति प्रतिषेध उच्यते। प्रयत्नानन्तरमात्मलाभश्च दृष्टो घटादीनाम्। व्यवधानापोहाच्चाभिव्यक्तिः व्यवहितानाम्। तत् किं प्रयत्नानन्तरमात्मलाभः शब्दस्याहो अभिव्यक्तिः ? इति विशेषो नास्ति। कार्य्याविशेषेण प्रत्यवस्थानमुपालम्भः कार्य्यसम इति। तस्य परिहारः। कार्य्यान्यत्वे प्रयत्नाहेतुत्वमनुपलब्धिकारणोपलब्धेः। सति कार्य्यान्यत्वे अनुपलब्धिकारणोपपत्तेः प्रयत्नस्याहेतुत्वं शब्दस्याभिव्यक्तौ। यत्र प्रयत्नानन्तरमभिव्यक्तिस्तत्रानुपलब्धेः कारणं व्यवधानमुपपद्यते, व्यवधानापोहाच्च प्रयत्नानन्तरभाविणोऽर्थस्योपलब्धिलक्षणाभिव्यक्तिर्भवतीति। न तु शब्दस्यानुपलब्धिकारणं किञ्चिदुपपद्यते। यस्य प्रयत्नानन्तरं व्यवधानापोहाच्छब्दस्योपलब्धिलक्षणाभिव्यक्तिर्भवतीति, तस्मादुत्पद्यते शब्दो नाभिव्यज्यते। हेतोश्चेदनैकान्तिकत्वमुपपद्यते अनैकान्तिकत्वादसाधकः स्यादिति। यदि चानैकान्तिकत्वादसाधकम्, प्रतिषेधेऽपि समानो दोषः। प्रतिषेधोऽप्यनैकान्तिकः, किञ्चित् प्रतिषेधति किञ्चिन्न प्रतिषेधति। तदनैकान्तिकत्वान्न साधकः प्रतिषेधः। अथवा शब्दस्यानित्यत्वपक्षे प्रयत्नानन्तरमुत्पादः, नाभिव्यक्तिरिति विशेषहेत्वभावः। नित्यत्वपक्षेऽपि प्रयत्नानन्तरमभिव्यक्तिः, नोत्पाद इति विशेषहेत्वभावः। सोऽयमुभयपक्षसमो विशेषहेत्वभाव इत्युभयमप्यनैकान्तिकमिति। सर्व्वत्रैवम्। सर्व्वत्र प्रकरणसमादिषु प्रतिषेधहेतुषु यत्राविशेषो दृश्यते तत्रोभयोः पक्षयोः समः प्रसज्यते इति। प्रतिषेधविप्रतिषेधे प्रतिषेधदोषवद् दोषः। योऽयं प्रतिषेधेऽपि समानो दोषोऽनैकान्तिकत्वमापद्यते, सोऽयं विप्रतिषेधे प्रतिषेधस्य प्रतिषेधे प्रतिषेधवत् समानो दोषोऽनैकान्तिकत्वमापद्यते। तत्रानित्यः शब्दः प्रयत्नान्तरीयकत्वादिति साधनवादिनः स्थापना प्रथमः पक्षः। प्रयत्नकार्य्यानेककार्य्यत्वात् कार्य्यसम इति दूषणवादिनः प्रतिषेधहेतुना द्वितीयः पक्षः, स च प्रतिषेध इत्युच्यते। तस्मिन् प्रतिषेधे पुनस्तस्य प्रतिषेधेऽपि समानो दोषोऽनैकान्तिकत्वं

**अथ प्रतिज्ञाहानिः । प्रतिज्ञाहानिर्नाम सा प्राक् परिगृहीतां प्रतिज्ञां पर्य्यनुयुक्तो यत् परित्यजति । यथा प्राक् प्रतिज्ञां कृत्वा नित्यः पुरुष इति, पर्य्यनुयुक्तस्त्वाह अनित्य इति ॥ ६१ ॥**

तृतीयः पक्ष इति । एषा मतानुज्ञा वक्ष्यते । इति चतुर्व्विंशतिधा सपरिहारा उपालम्भा व्याख्याताः ॥ ६० ॥

गङ्गाधरः—नन्वेवं वादे वर्त्तमाने कस्य जयः कस्य पराजयो वा कथं भवतीत्यत आह—अथ प्रतिज्ञाहानिरित्यादि। यस्य प्रतिज्ञाहान्यादयो भवन्ति स पराजितो भवन् निग्रहं प्राप्नोतीति प्रतिज्ञाहान्यादीनि निग्रहस्थानानि भवन्ति। तानि बहून्यपि कतिचित् प्रतिज्ञाहान्यादीनि निर्दिश्य शेषाणि निग्रहस्थान-पदेनोच्यन्ते। तत्र का पुनः प्रतिज्ञाहानिरित्यत उच्यते—प्रतिज्ञाहानिः नामेत्यादि। यत् पूर्व्वं परिगृहीतां प्रतिज्ञां साध्यवचनं पर्य्यनुयुक्तः खलु प्रत्यनुयुक्तः स्वानुयुक्तेन वादिना पुनरनुयुक्तः सन् परित्यजति स पूर्व्व-प्रतिज्ञातार्थपरित्यागः प्रतिज्ञाहानिर्नाम भवति। तामुदाहरति—यथेत्यादि। प्राक् प्रतिज्ञा कृता नित्यः पुरुष इति। तस्याः स्थापनायां वादिना पर्य्यनु-योगेनानुत्तरसमर्थः संस्तां प्रतिज्ञां परित्यजन्नाहानित्यः पुरुष इति। इति पूर्व्वप्रतिज्ञात्यागात् विरोधिप्रतिज्ञान्तरप्रदर्शनेन ज्ञापितम्। प्रतिज्ञाहानिरेव चतुर्द्धेति—प्रतिज्ञाहानिः प्रतिज्ञान्तरं प्रतिज्ञाविरोधः प्रतिज्ञासंन्यासश्चेति। उक्तञ्च गौतमेन। प्रतिदृष्टान्तधर्म्माभ्यनुज्ञा स्वदृष्टान्ते प्रतिज्ञाहानिरिति। साध्यधर्म्मप्रत्यनीकेन धर्म्मेण प्रत्यवस्थिते खलूपालम्भे सति प्रतिदृष्टान्तधर्म्मं स्वदृष्टान्तेऽभ्यनुजानन् प्रतिज्ञां जहातीति प्रतिज्ञाहानिः। यथा—ऐन्द्रियक-त्वादनित्यः शब्दो घटवदिति प्रतिज्ञातेऽथापर आह—दृष्टमैन्द्रियकत्वं नित्ये सामान्ये त्वाकृतौ, कस्माच्छब्दो न नित्यः स्यादिति प्रत्यवस्थिते पूर्व्ववादी पुनराह, यदि नित्यं सामान्यमैन्द्रियकं तदस्तु घटो नित्य इति प्रतिदृष्टान्त-धर्म्मं नित्यसामान्यस्य नित्यत्वं स्वदृष्टान्ते घटेऽभ्यनुज्ञां कृत्वा साधकस्य दृष्टान्तस्य नित्यत्वं प्रसक्तं कुर्व्वन्ननित्यः शब्द ऐन्द्रियकत्वात् यथा घटः। यथा घट ऐन्द्रियकस्तथा शब्दस्तस्मादनित्य इत्यन्तं पक्षं जहत् प्रतिज्ञां जहातीति प्रतिज्ञाहानिमात्रमुच्यते पक्षस्य प्रतिज्ञाश्रयत्वात्।०। स एवं प्रतिज्ञां हित्वा यद्यपरां प्रतिज्ञां करोति तदा प्रतिज्ञान्तरमुच्यते। तदुक्तं गौतमेन।

**अथाभ्यनुज्ञा। अभ्यनुज्ञा नाम सा य इष्टानिष्टाभ्युपगमः॥ ६२॥**

प्रतिज्ञातार्थप्रतिषेधे धर्म्मविकल्पात् तदर्थनिर्देशः प्रतिज्ञान्तरमिति। प्रतिज्ञातार्थोऽनित्यः शब्द ऐन्द्रियकत्वाद् घटवदिति। तत्र यः प्रतिषेधः प्रतिदृष्टान्तेन हेतुव्यभिचारो यथा—सामान्यं नित्यमैन्द्रियकमिति तस्मिंश्च प्रतिज्ञातार्थे प्रतिषिद्धे धर्म्मविकल्पादिति दृष्टान्तप्रतिदृष्टान्तयोः साधर्म्म्ययोगे धर्म्मभेदात् सामान्यमैन्द्रियकं सर्व्वगतम्, ऐन्द्रियकस्त्वसर्व्वगतो घट इति धर्म्मविकल्पात्। तदर्थं निर्देश इति साध्यसिद्ध्यर्थम्। यथा घटोऽसर्व्वगत एवं शब्दोऽप्यसर्व्वगतो घटवदेवानित्य इति; तत्रानित्यः शब्द इति पूर्व्वप्रतिज्ञा। असर्व्वगत इति द्वितीया प्रतिज्ञा प्रतिज्ञान्तरमेतदपि प्रतिज्ञाहानिर्विशेषः। अनित्यः शब्द इतिमात्रप्रतिज्ञात्यागो हि शब्दोऽसर्व्वगतोऽनित्य इत्युक्तं भवति। तर्हि कथं निग्रहस्थानमिदं प्रतिज्ञान्तरमिति? प्रतिज्ञायाः साधनं न प्रतिज्ञान्तरं, किन्तु हेतुदृष्टान्तौ प्रतिज्ञायाः साधनम्। तदेतदसाधनोपादानमनर्थकमित्यानर्थक्यान्निग्रहस्थानमिति। अथ हेतुप्रतिज्ञयोर्विरोधे सति प्रतिज्ञायाः स्थापना न भवतीति तां प्रतिज्ञां जहातीति प्रतिज्ञाविरोधोऽपि प्रतिज्ञाहानिविशेषः। उक्तञ्च गोतमेन। प्रतिज्ञाहेत्वोर्विरोधः प्रतिज्ञाविरोध इति। गुणव्यतिरिक्तं द्रव्यमिति प्रतिज्ञा। रूपादितोऽर्थान्तरस्य अनुपलब्धेरिति हेतुः। द्वयोः परस्परं विरोधः। गुणव्यतिरिक्तं द्रव्यं तच्चोपलभ्यते कथं रूपादिव्यतिरिक्तस्यानुपलब्धेरिति रूपादिगुणव्यतिरिक्तस्यानुपलब्धिश्चेत् तर्हि कथं गुणव्यतिरिक्तं द्रव्यं भवतीति विरोधाद् गुणव्यतिरिक्तं द्रव्यमिति प्रतिज्ञां जहातीति प्रतिज्ञाहानिविशेष एव। तत्र यदि प्रतिज्ञातार्थं निह्नुते तदा प्रतिज्ञानिह्नवात् प्रतिज्ञात्यागो भवतीति प्रतिज्ञासन्न्यास उच्यते। उक्तञ्च गोतमेन। पक्षप्रतिषेधे प्रतिज्ञातार्थापनयनं प्रतिज्ञासंन्यास इति। अनित्यः शब्द ऐन्द्रियकत्वादित्युक्ते परो ब्रूयात् सामान्यमैन्द्रियकं न चानित्यम्, एवं शब्दोऽप्यैन्द्रियको न चानित्य इत्येवं प्रतिषिद्धेऽनित्यत्वपक्षे यदि ब्रूयात् कः खल्वाहानित्यः शब्द इति। सोऽयं प्रतिज्ञातार्थनिह्नवः। प्रतिज्ञासंन्यास इति प्रतिज्ञात्यागविशेषः प्रतिज्ञाहानिरेवेति न विरोधः॥ ६१॥

<u>गङ्गाधरः</u>—नन्वेवं वादः क उच्यते इत्यत उद्दिष्टमभ्यनुज्ञेति। अथाभ्यनुज्ञेत्यादि। का पुनरभ्यनुज्ञेत्यत आह—अभ्यनुज्ञा नाम सेत्यादि। य

**अथ हेत्वन्तरम्। हेत्वन्तरं नाम प्रकृतिहेतौ वक्तव्ये यद्विकृतिहेतुमाह ॥ ६३ ॥**

इष्टानिष्टाभ्युपगमः साभ्यनुज्ञा नामोच्यते। य इष्टं स्वपक्षं परेण प्रदर्शितदोषत्वादनिष्टं कृत्वा परमतमभ्युपगच्छति साभ्यनुज्ञा मतानुज्ञा। तदुक्तं गौतमेन। स्वपक्षदोषाभ्युपगमात् परपक्षदोषप्रसङ्गो मतानुज्ञा। प्रतिषेधं सदोषमभ्युपेत्य प्रतिषेधप्रतिषेधे समानो दोषप्रसङ्गो मतानुज्ञा। यः परेण चोदितं दोषं स्वपक्षेऽभ्युपगम्य नोद्धृत्य वदति भवत्पक्षे समानो दोष इति, स स्वपक्षदोषाभ्युपगमात् परपक्षदोषं प्रसक्तं कुर्व्वन् परमतमनुजानातीति मतानुज्ञा नाम निग्रहस्थानमापद्यते इति ॥ ६२ ॥

गङ्गाधरः—ततो हेत्वन्तरमाश्रयेदित्युक्तम्। हेत्वन्तरमिति तत् कीदृशमित्यत आह—अथ हेत्वन्तरमिति। हेत्वन्तरं नामेत्यादि। प्रकृतिहेतौ वाच्ये यद्विकृतिहेतुमाह तद्धेत्वन्तरं नामोच्यते। उक्तञ्च गौतमेन। अविशेषोक्त हेतौ प्रतिषिद्धे विशेषमिच्छतो हेत्वन्तरमिति। एकप्रकृतीदं व्यक्तमिति प्रतिज्ञा। कस्मात्? एकप्रकृतीनां विकाराणां परिमाणात्, मृत्पूर्व्वकाणां शरावादीनां दृष्टं परिमाणं यावान् प्रकृतेर्व्यूहो भवति तावान् विकार इति। दृष्टञ्च प्रतिविकारं परिमाणम्। अस्ति चेदं परिमाणं प्रव्यक्तम्। तदेकप्रकृतीनां विकाराणां परिमाणात् पश्यामो व्यक्तमिदमेकप्रकृतीति। अस्य व्यभिचारेण परिहारः। नानाप्रकृतीनामेकप्रकृतीनाञ्च विकाराणां दृष्टं परिमाणमिति ; एवं प्रत्यवस्थिते स आह एकप्रकृतिसमन्वये सति शरावादिविकाराणां परिमाणदर्शनात्। सुखदुःखमोहसमन्वितं हीदं व्यक्तं परिमितं गृह्यते। तत्र प्रकृत्यन्तरसमन्वयाभावे सत्येकप्रकृतित्वमिति। तदिदमविशेषोक्ते हेतौ प्रतिषिद्धे विशेषं ब्रुवतो हेत्वन्तरं भवतीति। सति च हेत्वन्तराभावे पूर्व्वस्य हेतोरसाधकत्वान्निग्रहस्थानम्। हेत्वन्तरवचने सति यदि हेत्वर्थनिदर्शनो दृष्टान्त उपादीयते, नेदं व्यक्तमेकप्रकृतिकं भवति प्रकृत्यन्तरोपादानात्। अथ नोपादीयते हेत्वर्थस्यानिदर्शितस्य साधकभावानुपपत्तेरानर्थक्याद्धेतोरनिवृत्तं निग्रहस्थानमिति ॥ ६३ ॥

चक्रपाणिः—इष्टानिष्टाभ्युपगमः, यथा—भवान् चौर इत्युक्त्वा दोषं न परिहृत्य; भवानपि

अथार्थान्तरम्। अर्थान्तरं नाम एकस्मिन् वक्तव्येऽपरं यदाह। यथा ज्वरलक्षणे वाच्ये प्रमेहलक्षणमाह ॥ ६४ ॥

अथ निग्रहस्थानम्। निग्रहस्थानं नाम पराजयप्राप्तिः, तच्च त्रिरुक्तस्य वाक्यस्याविज्ञानं परिषदि विज्ञान-

गङ्गाधरः—अर्थान्तरमुद्दिष्टं तदाह—अथार्थान्तरमिति। अर्थान्तरं नाम इत्यादि। एकस्मिन् वक्तव्येऽपरं यदाह तदर्थान्तरम्। यथा ज्वरलक्षणे वाच्ये प्रमेहलक्षणमाहेति। गौतमेनाप्युक्तम्। प्रकृतादर्थादप्रतिसम्बद्धार्थमर्थान्तरम् इति। यथोक्तलक्षणे पक्षप्रतिपक्षपरिग्रहे हेतुतः साध्यसिद्धौ प्रकृतायां ब्रूयात्। नित्यः शब्दोऽस्पर्शत्वादिति हेतुः। हेतुर्नाम हिनोतेर्धातोस्तुनिप्रत्यये कृदन्तपदम्। पदञ्च नामाख्यातोपसर्गनिपाताः। अभिधेयस्य क्रियान्तरयोगाद्विशिष्यमाणरूपः शब्दो नाम क्रियाकारकसमुदायः, कारकसङ्ख्याविशिष्टक्रियाकालयोगाभिधायि आख्यातम्। धात्वर्थमात्रञ्च कालाभिधानविशिष्टम्। योगेष्वर्थादभिद्यमानरूपा निपाताः। उपसृज्यमानाः क्रियावद्योतका उपसर्गा इत्येवमादि यत्, तदर्थान्तरं वेदितव्यमिति ॥ ६४ ॥

गङ्गाधरः—यदुद्दिष्टं निग्रहस्थानं तदाह—अथ निग्रहस्थानमिति। किं पुनर्निग्रहस्थानमुच्यते तत् आह—निग्रहस्थानं नामेत्यादि। पराजयः प्राप्यते येन सा पराजयप्राप्तिर्निग्रहस्थानं नामोच्यते। तस्य विभागोऽविज्ञातार्थादिकम्। तदन्वाह त्रिरुक्तस्येत्यादि। उक्तश्च गौतमेन सामान्यलक्षणम्। विप्रतिपत्तिरप्रतिपत्तिश्च निग्रहस्थानमिति। विपरीता वा कुत्सिता वा प्रतिपत्तिर्विप्रतिपत्तिः। विप्रतिपद्यमानः पराजयमाप्नोति, निग्रहस्थानं खलु पराजयप्राप्तिः। अप्रतिपत्तिस्त्वारम्भविषये न प्रारम्भः। परेण स्थापितं वा न प्रतिषेधति, प्रतिषेधं वा नोद्धरति। असमासाच्च नैता एव निग्रहस्थाने इति ।०। तद्विकल्पान्निग्रहस्थानबहुलमिति। तयोर्विप्रतिपत्त्यप्रतिपत्त्योः विकल्पान्निग्रहस्थानबहुलमिति। नानाकल्पो विकल्पो विविधो वा कल्पो

चौर इति। एतद्धि वचनं स्वीयमनिष्टचौरत्वं परस्य चेष्टचौरत्वमप्यभ्यनुजानाति। तदेवं वचनं न्याये 'मतानुज्ञा'शब्देनोच्यते ॥ ६१—६४ ॥

चक्रपाणिः—निग्रहस्याभिभवस्य स्थानमिव स्थानं कारणमिति निग्रहस्थानम्, परिषदि विज्ञान-

त्याम् । यद्वा अननुयोज्यस्यानुयोगोऽनुयोज्यस्य चाननुयोगः । प्रतिज्ञाहानिरभ्यनुज्ञा कालातीतवचनमहेतुर्न्यूनमधिकं व्यर्थम् अनर्थकं पुनरुक्तं विरुद्धं हेत्वन्तरमर्थान्तरं निग्रहस्थानम् ।

विकल्प इति। तत्राविज्ञानमननुभाषणमप्रतिभाविक्षेपो मतानुज्ञा पर्य्यनुयोज्योपेक्षणमित्येतदप्रतिपत्तिर्निग्रहस्थानम् । शेषस्तु विप्रतिपत्तिरिति ।

तद् विप्रतिपत्तिविकल्पान्निग्रहस्थानप्रविभागोऽयं त्रिरुक्तस्येत्यादिकमर्थान्तरान्तम् । तत्र त्रिरुक्तस्येति । विज्ञानवत्यां परिषदि न तु मूढ़ायां वादे प्रवर्त्तमानयोर्द्वयोरेकेण वादिना पारिषदेन वा श्लिष्टशब्दगूढ़ार्थशब्दाप्रतीतप्रयोगदुर्व्वोधार्थातिद्रुतोच्चारितादिशब्दैस्त्रिरुक्तस्य वाक्यस्यार्थतोऽपरस्य वादिनो यन्न विज्ञानं भवति तत् खल्वविज्ञातार्थमुच्यते निग्रहस्थानम्। गौतमेन चोक्तम् । परिषत्प्रतिवादिभ्यां त्रिरभिहितमप्यविज्ञातमविज्ञातार्थमिति । यद्वाक्यं परिषदा प्रतिवादिना च त्रिरभिहितमपि न विज्ञायते, श्लिष्टशब्दमप्रतीतप्रयोगमतिद्रुतोच्चारितमित्येवमादिना कारणेन, तदविज्ञातमविज्ञातार्थमसामर्थ्यसंवरणाय प्रयुक्तमिति निग्रहस्थानमिति। अन्यच्चाह—यद्वेत्यादि। अननुयोज्यानुयोगः । प्रागुक्तं यद्वाक्यं वाक्यदोषयुक्तं तदनुयोज्यमननुयोज्यं नामातो विपर्य्ययेण तस्यानुयोगस्तद्विदैः सह दोषवत्तया भाषणमित्यननुयोज्यानुयोगः । गौतमेन चोक्तम् । निरनुयोज्यानुयोग इति । अनिग्रहस्थाने निग्रहस्थानाभियोगो निरनुयोज्यानुयोग इति । निग्रहस्थानलक्षणस्य मिथ्या अध्यवसायादनिग्रहस्थाने निगृहीतोऽसीति परो ब्रुवन् निरनुयोज्यानुयोगात् निगृहीतो वेदितव्य इति। अनुयोज्यस्याननुयोगः । सदोषवाक्यं ब्रुवन्ननुयोज्यो यो भवति तस्याननुयोगो दोषवद्वाक्यवादितयानुयोगोपेक्षाकरणं तत्कर्त्ता निग्राह्यो भवति । गौतमेन चोक्तम् । निग्रहस्थानप्राप्तस्यानिग्रहः पर्य्यनुयोज्योपेक्षणमिति । पर्य्यनुयोज्यो नाम निग्रहोपपत्त्या चोदनीयः, तस्य उपेक्षणं निग्रहस्थानं प्राप्तोऽसीति अननुयोगः। एतच्च कस्य पराजयः? इत्यनुयुक्तया परिषदा वचनीयमिति ।०। प्रतिज्ञाहानिश्चतुर्व्विधा व्याख्याता। कालातीतवचनं व्याख्यातम् । अहेतवो हेत्वाभासा व्याख्याताः । न्यूनादयः

वत्यामित्यनेन, यदि परिषत् तस्य त्रिरभिहितस्यार्थं विजानाति, प्रतिवादी च न जानाति, तदा तस्य निग्रहस्थानं भवति। अन्यानप्युक्तानेव निग्रहस्थानत्वेनाह—अननुयोज्यस्यानुयोग इत्यादि । एते च व्याकृता एव । अत्र चाप्रतिभादयो न्यायोक्ता अन्तर्भावनीया बुद्धिमद्भिः, आयुर्व्वेदे

षड् दोषा वाक्यस्य व्याख्याताः। हेत्वन्तरं व्याख्यातमर्थान्तरञ्च। निग्रहस्थानमिति। शेषञ्च निग्रहस्थानं वेदितव्यम्। तद् यथा। अप्राप्तकालमपसिद्धान्तोऽननुभाषणमज्ञानमप्रतिभाविक्षेपो मतानुज्ञा चेति। तत्राप्राप्तकालादिकमुक्तं गोतमेन। अवयवविपर्य्यासवचनमप्राप्तकालमिति। प्रतिज्ञादीनाम् अवयवानां यथालक्षणमर्थवशात् क्रमः। तत्रावयवविपर्य्यासेन व्यतिक्रमेण वचनमप्राप्तकालम्। असम्बद्धार्थकालं निग्रहस्थानमिति। सिद्धान्तमभ्युपेत्यानियमात् कथाप्रसङ्गोऽपसिद्धान्तः। कस्यचिदर्थस्य तथाभावं प्रतिज्ञाय प्रतिज्ञातार्थविपर्य्ययादनियमात् कथां प्रसञ्जयतोऽपसिद्धान्तो वेदितव्यः। यथा न सदात्मानं जहाति न सतो विनाशो नासदात्मानं लभते नासत् उत्पद्यत इति सिद्धान्तमभ्युपेत्य स्वपक्षं व्यवस्थापयति। इति। अथाननुभाषणमिति। विज्ञातस्य परिषदा त्रिरभिहितस्याप्यनुच्चारणमननुभाषणमिति। विज्ञातस्य वाक्यार्थस्य परिषदा प्रतिवादिना च त्रिरभिहितस्य यदप्रत्युच्चारणं तदननुभाषणं नाम निग्रहस्थानम्। अप्रत्युच्चारयन् किमाश्रयं परपक्षप्रतिषेधं ब्रूयात्। इति। अविज्ञातञ्चाज्ञानम्। विज्ञातार्थस्य परिषदा प्रतिवादिना च त्रिरभिहितस्य यदविज्ञानं तदज्ञानं निग्रहस्थानमिति, यन्न विज्ञातं तस्य प्रतिषेधं कथं कुर्य्यादिति। इत्यननुभाषणञ्चाज्ञानञ्चाविज्ञातार्थञ्चेति त्रयं त्रिरुक्तस्येत्यादिना प्रथमोक्तं निग्रहस्थाने न संगृहीतं बोध्यम्।०। उत्तरस्याप्रतिपत्तिः अप्रतिभा इति। प्रतिपक्षप्रतिषेध उत्तरम्। तद् यदा न प्रतिपद्यते तदा न गृहीतो भवति। मतानुज्ञा चोक्ताभ्यनुज्ञा नाम। इति निग्रहस्थानम्। विक्षेपश्च। कार्य्यव्यासङ्गात् कथाविच्छेदो विक्षेप इति। यत्र कर्त्तव्यं व्यासज्य कथां व्यवच्छिनत्ति—इदं मे करणीयं विद्यात् तस्मिन्नवसिते करिष्यामीति विक्षेपो नाम निग्रहस्थानम्। एकनिग्रहावसानायां कथायां स्वयमेव कथान्तरं प्रतिपद्यत इति।०। अयं वादस्तद्विद्यसम्भाषा नाम गोतमेन चोक्ता। ज्ञानग्रहणाभ्यासस्तद्विद्यैः सह संवादः इति। तदर्थमिति। प्रकृतं ज्ञायतेऽनेन इति ज्ञानमात्मविद्याशास्त्रं, तस्य ग्रहणमध्ययनधारणे, अभ्यासः सततक्रिया अध्ययनश्रवणचिन्तनानि। तद्विद्यैश्च सह संवाद इति प्रज्ञापरिपाकार्थम्। परिपाकस्तु संशयच्छेदनमविज्ञातार्थावबोधोऽध्यवसिताभ्यनुज्ञानमिति। सन्धाय वादः संवादः। तद्विद्यैः सह यैः संलापः काम्यस्तदुच्यते। तं शिष्यगुरुसब्रह्मचारिविशिष्टश्रेयोऽर्थिभिरनसूयिभिरभ्युपेयात्। एतन्निगदेनैव नीतार्थम् इति। एष संवादः सन्धायसम्भाषा प्रागिहैवाध्याये व्याख्याता। यदिदं

इति वादमार्गपदानि यथोद्देशमभि निर्द्दिष्टानि भवन्ति॥६५॥

वादस्तु खलु भिषजां वर्त्तमानो वर्त्ततायुर्व्वेद एव न त्वन्यत्र। तत्र हि वाक्यप्रतिवाक्यविस्तराः केवलाश्चोपपत्तयः सर्व्वाधिकरणेषु च। ताः सर्व्वाः सम्यगवेक्ष्यावेक्ष्य सर्व्वं वाक्यं ब्रूयात्। नाप्रकृतकमशास्त्रमपरीक्षितमसाधकमाकुलमज्ञापकं * वा। सर्व्वञ्च हेतुमद् ब्रूयात्, हेतुमन्तो ह्यकलुषाः सर्व्व एव

मन्येत। पक्षप्रतिपक्षपरिग्रहः प्रतिकूलः परस्येति। तत्राह। प्रतिपक्षहीनमपि वा प्रयोजनार्थमर्थिते इति। तमभ्युपेयादित्यनुवर्त्तते। परतः प्रज्ञामुपादित्समानस्तत्त्वबुभुत्साप्रकाशनेन स्वपक्षमनवस्थापयन् स्वदर्शनं परिशोधयेदिति। अन्योन्यप्रत्यनीकानि च प्रावादुकानां दर्शनानि, स्वपक्षरागेण चैके न्यायमतिवर्त्तन्ते। तत्र। तत्त्वाध्यवसायसंरक्षणार्थं जल्पवितण्डे वीजप्ररोहसंरक्षणार्थं कण्टकशाखावरणवत् इति। अनुत्पन्नतत्त्वज्ञानानामप्रहीणदोषाणां तदर्थं घटमानानामेतदिति। विद्यानिर्वेदादिभिश्च परेणाविज्ञायमानस्य ताभ्यां विगृह्य कथनम्। विगृह्येति विजिगीषया न तत्त्वबुभुत्सयेति। तदेतत् विद्यापालनार्थं, न लाभपूजाख्यात्यर्थमिति। उद्दिष्टानां व्याख्यानं समापयति। इति वादमार्गपदानि यथोद्दिष्टमभि लक्षीकृत्य निर्द्दिष्टानि भवन्तीति॥ ६५॥

गङ्गाधरः—ननु य एव वाद उक्तः स खलु भिषजां किं सर्व्वस्मिन्नेव शास्त्रे वर्त्तते न वेति, तत्राह—वादस्त्वित्यादि। भिषजामायुर्व्वेदशास्त्र एव वर्त्तमानो वर्त्तेत नान्यत्र वर्त्ततेति। कस्मात्? तत्र हीत्यादि। तत्रायुर्व्वेदे भिषजां चिकित्साक्रियासिद्धिप्रयोजनाय वाक्यप्रतिवाक्यविस्तरा वादमार्गपदार्थैः कृत्स्नाश्चोपपत्तयो भवन्ति न चान्यत्र शास्त्रे। कुतः? सर्व्वाधिकरणेष्वायुर्व्वेदज्ञो भिषक्। ताः सर्व्वाः प्रतिपत्तीः समीक्ष्य वाक्यं ब्रूयात्। न चाप्रकृतम् अशास्त्रमपरीक्षितमसाधकमाकुलमज्ञापकं वा ब्रूयादिति। सर्व्वञ्च हेतुमद् ब्रूयात्।

तथाविधोपकारकत्वाभावात् तत्प्रपञ्चविषयमपि न प्रपञ्चितम्, न्यायविदान्तु एतदनुक्तमपि सुगममेव, तत्त्ववेदिनाञ्च मनाक् प्रपञ्चोक्तमपि नालं ज्ञानायेत्यलं प्रपञ्चेनेति॥ ६५॥

चक्रपाणिः—इदानीं यथोक्तवाद एवायुर्व्वेद आयुर्व्वेदाध्यायिभिः कर्त्तव्यः, एवम्भूतस्यैव वादस्य विवक्षितत्वं सम्यग्ज्ञानजनकत्वादित्याह—वाद इत्यादि। अथ किमत्र वादविषयाः सन्तीत्याह—

* अज्ञापकमिति चक्रसम्मतः पाठः।

वादविग्रहाश्चिकित्सिते कारणभूताः, प्रशस्तबुद्धिवर्द्धकत्वात् सर्व्वारम्भसिद्धिं ह्यावहत्यनुपहता बुद्धिः ॥ ६६।६७ ॥

इमानि खलु तावदिह कानिचित् प्रकरणानि भिषजां ज्ञानार्थमुपदेक्ष्यामः। ज्ञानपूर्व्वकं कर्म्मणां समारम्भं प्रशंसन्ति कुशलाः। ज्ञात्वा हि कारणकरणकार्य्ययोनिकार्य्यकार्य्यफलानुबन्धदेशकालप्रवृत्त्युपायान् सम्यगभिनिर्वर्त्तमानः कार्य्याभिनिर्वृत्ताविष्टफलानुबन्धं कार्य्यमभिनिर्वर्त्तयत्यनतिमहता यत्नेन कर्त्ता ॥ ६८।६९ ॥

हेतुमन्तो ह्यकलुषा विशदाः। चिकित्सिते सर्व्व एव वादविग्रहाः कारणभूताः। सर्व्वारम्भसिद्धिमित्यादि। हि यस्मादनुपहता प्रशस्ता बुद्धिः सर्व्वारम्भसिद्धिमावहति तस्मात् प्रशस्तबुद्धिवर्द्धकत्वाद् हेतुमन्तोऽकलुषा वादविग्रहाश्चिकित्सिते कारणभूता भवन्तीत्यर्थः। इति तद्विद्यसम्भाषा प्रदर्शिता ॥ ६६।६७ ॥

गङ्गाधरः—अथानुपहतबुद्धेः सर्व्वारम्भसिद्धिहेतुत्वप्रसङ्गात् ज्ञानपूर्व्वककर्म्मारम्भार्थं प्रकरणमाह—इमानीत्यादि। खलु पुनरिमानि तावदिह कानिचित् कारणादीनां ज्ञानप्रकरणानि कर्म्मणां चिकित्सादीनां सर्व्वेषामेव ज्ञानपूर्व्वकं समारम्भं कुशलाः प्रशंसन्ति। कुत इत्यत आह—ज्ञात्वा हीत्यादि। हि यस्मात् कर्त्ता कारणादीन् ज्ञात्वा सम्यगभिनिर्वर्त्तमानः कार्य्याभिनिर्वृत्तौ सम्यक्क्रियमाणकार्य्यनिष्पत्तौ इष्टफलानुबन्धं कार्य्यमनतिमहता मध्यमा-

अत्र हीत्यादि। सर्व्वाधिकरणेषु सन्तीति शेषः। अध्यापकं ब्रूयादिति पूर्व्वेण सम्बन्धः। वादो विग्रहः शरीरमेव येषां ते वादविग्रहाः जल्पभेदा वितण्डाभेदाश्च। प्रशस्तबुद्धिकर्त्तृत्वेन कथं वादश्चिकित्सायां भवतीत्याह—सर्व्वेत्यादिना। न केवलं चिकित्सासिद्धिं करोत्यनुपहता बुद्धिः, किन्तु सर्व्वारम्भसिद्धिं करोतीत्यर्थः ॥ ६६।६७ ॥

चक्रपाणिः—सम्प्रति बुद्धेर्वर्द्धनकारणतद्विद्यसम्भाषाविध्यभिधानप्रसङ्गेनायुर्व्वेदोपयुक्तकारणकरणाद्यभिधायकान्यपि प्रकरणानि बुद्धिवर्द्धनान्यभिधातुं प्रतिजानीते—इमानीत्यादि। ज्ञानपूर्व्वकमिति कर्त्तृकार्य्यानुगुणपदार्थज्ञानपूर्व्वकमित्यर्थः। यानि ज्ञात्वा क्रियमाणं कार्य्यं साधु भवति, तान्याह—ज्ञात्वेति। अभिनिवर्त्तमान इत्याभिमुख्येन वर्त्तमानः। इष्टमतादात्विकं फलमनुबन्धश्च यस्य तदिष्टफलानुबन्धम् ॥ ६८।६९ ॥

**तत्र कारणं नाम तद् यः * करोति, स एव हेतुः स कर्त्ता।**

ऽल्पान्यतरेण प्रयत्नेनाभिनिर्व्वर्त्तयति सम्पादयति, तस्मात् ज्ञानपूर्व्वकं कर्म्मणां समारम्भं प्रशंसन्ति कुशलाः॥ ६८।६९॥

गङ्गाधरः—ननु कारणादिकं किं तावदित्यत आह—तत्रेत्यादि। तत्र कारणादिषु मध्ये कारणं नाम तत् यः करोति, स एव हेतुः स कर्त्तेति पर्य्यायः। कारकं प्रयोजक इत्यपि पर्य्यायान्तरं वाच्यम्। भगवान् पाणिनिरप्युवाच—कारके स्वतन्त्रः कर्त्ता प्रयोजको हेतुश्चेति। करोतीति तत्-क्रियां फलरूपां निष्पादयति या क्रिया तत् कारकं, तदाश्रयो मुख्यं यत् तत् कारणं, स एव हेतुः स कर्त्ता। क्रिया पुनः प्रयोजनहेतवः फलं व्यापारश्च प्रयोजनं मुख्यं चरमफलं तच्च न धातुनोच्यते गम्यमानत्वात्। फलन्तु प्रयोजनहेतुर्व्यापारनिष्पाद्यं धातुनोच्यते। व्यापारस्तु प्रयत्नजनिता चेष्टा, सा च धातुनोच्यते पञ्चविधा सम्भवत्यतो न हि सर्व्वेण धातुना पञ्चधा व्यापारोऽभिधातुं सम्भाव्यते। पञ्चधातिरिक्तस्तु व्यापारो नास्ति। चेतने तु प्रयत्नोऽपि व्यापारेणोपलक्ष्यते। उक्तं हि—आत्मजन्या भवेदिच्छा इच्छाजन्या भवेत् कृतिः। कृतिजन्या भवेच्चेष्टा चेष्टाजन्यं भवेत् फलमिति। तदा प्रयत्नश्चेच्छाप्युपलक्ष्यते व्यापारपदेन, तस्मात् साधारणत्वादिच्छाप्रयत्नौ न धातुना अभिधातुमिष्येते परन्तु कारणत्वात् गम्येते। तथा च एषिता यदिच्छन् क्रियायां प्रवर्त्तते तदीप्सिततमं कर्म्म, तच्च व्यापारनिष्पाद्यं, पचनादौ विक्लित्यादि, फलं तदाश्रयः। एषिता प्रयतमानस्तत्क्रियायां प्रवर्त्तमानस्तत्फलमव्यवधानेन येन व्यापारेण साधयति तत् साधकतमं करणं, पाकादौ काष्ठाग्न्यादिव्यापारः। यस्तु तत्क्रियैषितृप्रयतमानप्रवर्त्तमानकर्त्तृकर्म्मादिक येन व्यापारेण आधारयति व्यापारवान् स आधारोऽधिकरणम्, पाकादौ स्थाल्यादिस्तण्डुलादेः धारणाव्यापारेणाधारः। एषिता प्रयतमानस्तत्क्रियाकर्म्मणा यद्व्यापारेण यमभिप्रैति तदनुमतिप्रकाशस्वीकारादिव्यापारवत् सम्प्रदानम्, दानादौ विप्रादेरनुमतिप्रकाशस्वीकारादिव्यापारः। यद्यद्व्यापारेण ध्रुवमपाये तद्व्यापारवत् तदपादानम्, पतनादौ पर्णादेर्वृक्षादिरवधित्वव्यापारवानपादानम्।

चक्रपाणिः—उक्तानि कारणादीनि व्याकरोति तत्रेत्यादिना। 'यद्' इति 'कारण'प्रत्यवमर्षात् नपुंसकं, भवतीति करोति। तेन इह 'कारण'शब्देन स्वतन्त्रकारणं 'कर्त्तृ'लक्षणं ब्रुवते।

* 'यत्' इति चक्रः।

करणं पुनस्तद् यदुपकरणायोपकल्पते कर्त्तुः कार्य्याभिनिर्वृत्तौ प्रयतमानस्य।

कार्य्ययोनिस्तु सा या विक्रियमाणा कार्य्यत्वमेवापद्यते।

कार्य्यन्तु तद् यस्याभिनिर्वृत्तिं कर्त्ताभिसन्धाय प्रवर्त्तते।

इत्येवमुक्तफलादिपञ्चविधधात्वर्थविशिष्टव्यापारवान् कर्त्तृसंज्ञ एव नान्यसंज्ञः। एतेन निष्पत्तिमात्रे कर्त्तृत्वं सर्व्वत्रैवास्ति कारके—व्यापारभेदापेक्षायां करणत्वादिसम्भवः—इति ख्यापितम्। इति कारणषट्कमपि करणादेः पृथग्ग्रहणादत्र कारणं कर्त्तैव न करणादिकम्।

क्रमिकं करणं लक्षयति—करणं पुनस्तदित्यादि। कार्य्याभिनिर्वृत्तौ प्रयतमानस्य कर्त्तुस्तत्कार्य्याभिनिर्वृत्तौ यदुपकरणाय उपकाराय कल्पते तत् करणं साधकतमम्। वातादावुपयुक्तस्य मधुराद्यचेतनद्रव्यस्य वातादिहरणे सद्द्रव्यसम्पत्तिरुपकरणायोपकल्पते तस्याः करणत्ववारणाय प्रयतमानस्येति। प्रयत्नस्तु चेतनाधातुलिङ्गं नाचेतने वर्त्तते, तेन भिषगादेः कर्त्तुश्चिकित्साभिनिर्वृत्तौ प्रयतमानस्य भेषजशस्त्रादिकमुपकरणायोपकल्पते, इति भेषजशस्त्रादिकं करणम्।

क्रमिकत्वात् कार्य्ययोनिं लक्षयति—कार्य्ययोनिस्त्वित्यादि। या विक्रियमाणा विकृतिमापद्यमाना कार्य्यत्वमापद्यते सा कार्य्ययोनिः। यथा—मधुरादिरसद्रव्याणि भुक्तानि पक्वानि रसरक्तादिरूपमापद्यन्ते, इति रसरक्तादिकार्य्याणां योनिर्मधुरादिः। एवं वातादिर्ज्वरादिकार्य्याणां योनिः इत्येवमादि।

क्रमिकं कार्य्यमाह—कार्य्यन्तु तदित्यादि। यस्याभिनिर्वृत्तिमुत्पत्तिं बुद्ध्यादिसमन्वितप्रयोगैरभिसन्धाय कर्त्ता प्रवर्त्तते, वाचा मनसा वा

करणं विवृणोति—करणं पुनरित्यादि। उपकरणायेति कर्त्तुः सम्पाद्यकार्य्ये सन्निहितं सहकारितया व्याप्रियते। कार्य्याभिनिर्वृत्ताविति कार्य्यनिर्वृत्तिमुद्दिश्य। यतमानस्येति यत्नं कुर्व्वतः। एतेन यः कार्य्ये कारणान्तरप्रेरकः, स चात्र कर्त्ता 'कारण'शब्देनोच्यते, यत् तु कर्त्त्रधीनव्यापारं साधकतमम्, तत् करणम्। कर्त्तृत्वञ्च वै तस्यैव मुख्यम्, यो हि बुद्धिप्रयत्नयुक्तत्वादितरकारणप्रेरको भवति, अचेतने तु कर्त्तृत्वव्यपदेशः स्वातन्त्र्यविवक्षया भाक्तः।

कार्य्यस्य योनिः समवायिकारणं कार्य्ययोनिः। येत्यादि। या योनिः कारणत्वेऽपि विक्रिय-

शरीरेण वा चेष्टते तत् कार्य्यम्, कर्त्तुरीप्सिततमम्। यथा तण्डलान् ओदनं पचति देवदत्त इत्यादि। अत्र तण्डुलाः कार्य्ययोनय ओदनस्तु कार्य्यं तस्य ह्यभिनिर्व्वृत्तिमवयवशैथिल्यरूपामभिसन्धाय देवदत्तः काष्ठाग्निस्थाल्यारोपणादिषु प्रवर्त्तते। ननु ग्रामं गच्छति देवदत्त इत्यादौ न ग्रामो विक्रियमाणः किञ्चित् कार्य्यत्वमापद्यते तेन न कार्य्ययोनिः न वा ग्रामस्याभिनिर्व्वृत्तिमभिसन्धाय देवदत्तः पादस्पन्दनादौ प्रवर्त्तते तेन ग्रामः कार्य्यं नास्तु, कार्य्यं हि कर्म्मकारकम्, तत्र द्वितीया स्यात्; तत् कथं ग्रामस्य कर्म्मत्वमिति चेन्न देवदत्तो हि पूर्व्वदेशसंयोगध्वंसपूर्व्वकोत्तरदेशसंयोगस्याभिनिर्व्वृत्तिमभिसन्धाय पादस्पन्दनादौ प्रवर्त्तते, इति स ग्रामसंयोगः कार्य्यं तदाश्रयत्वात् तु ग्रामस्य कर्म्मत्वमिति। पथि तु यः संयोगस्तस्याभिनिर्व्वृत्तावपि सिद्धायां तदाश्रयत्वान्न पथः कर्म्मत्वं न ह्यभिसन्धिर्देवदत्तस्य पथिसंयोगे परन्तु ग्रामसंयोगे एव; अभिसन्धिर्हि प्रयोजनसिद्धौ चरमहेतुतया तद्वस्तुज्ञानम्। तण्डुलानोदनं पचति देवदत्त इत्यादौ तु तण्डुलानां शिथिलावयवरूपस्यौदनस्याभिनिर्व्वृत्तिम् अवयवशैथिल्यस्य चाभिनिर्व्वृत्तिमभिसन्धाय कर्त्ता पचने प्रवर्त्तते इत्योदनः कार्य्यमवयवशैथिल्यञ्च कार्य्यमिति कार्य्यद्वयं तेन शिथिलावयवत्वात् तु तण्डुलानां कर्म्मत्वमवयवशैथिल्यवत्त्वादोदनस्य च कर्म्मत्वमिति कार्य्यद्वयं बोध्यम्। विकार्य्यस्थले विकृतिर्द्विधा। प्रकृत्युच्छेदसम्भवरूपान्तरं गुणान्तरोत्पत्तिनिमित्तरूपान्तरञ्च। यथा—काष्ठं भस्म करोति। सुवर्णं कुण्डलं करोति। निर्व्वर्त्त्ये चैकमेव कार्य्यं यथा पुत्रं प्रसूते। तेन रूपान्तरत्वं विकार्य्यत्वं धातुवैषम्यं विकार इति च स्वयमुक्तम्। निर्व्वर्त्त्यन्तु तद् यन्निर्व्वर्त्तते पूर्व्वमसज्जन्मना च प्रकाशते यत् तदित्यर्थः। आभ्यां परं प्राप्यं ग्रामं गच्छति चन्द्रं पश्यतीत्यादि। न च निर्व्वर्त्त्यप्राप्ययोः कार्य्ययोर्योनिरस्ति विकार्य्यत्वाभावात्। परन्तु विकार्य्यस्यैव कार्य्यस्य योनिरस्तीति निष्कर्षः। ननु पयसान्नं भुङ्क्ते इत्यादौ पयसोऽपि गलाधःकरणरूपामभिनिर्व्वृत्तिमभिसन्धाय कर्त्ता जिह्वादिस्पन्दनाधःकरणजनकाकर्षणादिव्यापारे प्रवर्त्तते कथं पयसो न कार्य्यत्वमिति चेन्न कर्त्तुर्हि तदन्नाधःकरणस्याभिनिर्व्वृत्तावभिसन्धिर्न पयोऽधःकरणाभिनिर्व्वृत्तौ परन्त्वन्नाधःकरणाभिनिर्व्वृत्त्युपकरणायोपकल्पते पयःसाहित्यमिति पयः करणमिति।

माणा रूपान्तरमापद्यमाना कार्य्यत्वमापद्यते कार्य्यरूपा भवतीत्यर्थः। तत्र घटस्य मृत्तिका कार्य्ययोनिः मृदेव ह्यवस्थान्तरप्राप्त्या घटो भवति।

कार्य्यफलं पुनस्तद् यत्प्रयोजनकार्य्याभिनिर्वृत्तिरिष्यते ।

क्रमिकत्वात् कार्य्यफलमाह—कार्य्यफलमित्यादि । यत्प्रयोजनकार्य्याभिनिर्वृत्तिः। यत् प्रयोजनं यस्य तत् यत्प्रयोजनम्। यत् प्रयोजनञ्च तत् कार्य्यञ्चेति, यत्प्रयोजनकार्य्यं तस्याभिनिर्वृत्तिः यत्प्रयोजनकार्य्याभिनिर्वृत्तिरिष्यते कर्त्रा तत्प्रयोजनन्तु तत् कार्य्यफलम्। प्रयोजनन्तु स्वयमुक्तमग्रे। यथा कार्य्यं धातुसाम्यं तस्य फलं सुखावाप्तिः प्रयोजनम्। एतदुदाहरणप्रदर्शनमात्रं न तु कृत्स्नफलनिर्देशः। तेन शुभकार्य्यं बुद्धयादिसमयोगनिमित्तसमप्रवृत्तिजनितं धातुसाम्यं धर्म्मश्च शुभम् एवमशुभकार्य्यं बुद्ध्यादिविषमयोगनिमित्तविषमप्रवृत्तिजनितं धातुवैषम्यमधर्म्मश्चाशुभमिति। प्रयोजनन्तु तयोः फलं सुखदुःखावाप्तिः। उक्तञ्च गौतमेन। प्रवृत्तिदोषजनितोऽर्थः फलमिति। सुखदुःखसंवेदनं फलं, सुखविपाकं कर्म्म दुःखविपाकञ्च कर्म्म। तत् पुनर्देहेन्द्रियविषयबुद्धिषु सतीषु भवति ततो देहादिभिः सहानुबद्धं फलं भवति। तथा हि प्रवृत्तिदोषजनितोऽर्थः फलमेतत् सर्व्वं भवति। तदेतत् फलमुपात्तं हेयं त्यक्तमुपादेयमिति। नास्याहानोपादानयोर्निष्ठापर्य्यवसानं वास्ति। न खल्वयं फलस्य हानोपादानस्रोतसो ह्यन्ते लोकोऽस्ति। तदात्वेऽपवर्गप्राप्तेरिति। तदेतत् सुखदुःखं दुःखसंज्ञयैव मन्यमान आह—बाधनालक्षणं दुःखमिति। बाधना पीड़ा ताप इति। तयानुविद्धमनुषक्तमविनिर्भागेण वर्त्तमानं दुःखयोगाद् दुःखं जन्म। सोऽयं जन्मवान् सर्व्वं लोकं दुःखेनानुविद्धं गृहन्तमिति पश्यन् दुःखं जिहासुः जन्मनि दुःखदर्शी निर्व्विद्यते, निर्व्विण्णो विरज्यते, विरक्तो विमुच्यते। इति। प्रवृत्तिर्वाग्बुद्धिशरीरारम्भः। मनोऽत्र बुद्धिरित्यभिप्रेतं, बुध्यतेऽनेनेति बुद्धिः। सोऽयमारम्भः शरीरेण वाचा मनसा च पुण्यः पापश्च दशविधः। सेयं प्रवृत्तिः कर्म्मोच्यते। तदुक्तं तिस्रैषणीये। कर्म्म वाङ्मनःशरीरप्रवृत्तिरिति। तस्या हेतवस्तु प्रवर्त्तनालक्षणा दोषाः। प्रवर्त्तना प्रवृत्तिहेतुत्वम्। ज्ञातारं हि रागादयः प्रवर्त्तयन्ति पुण्ये पापे वा यत्र मिथ्या। तत् त्रैराश्यं रागद्वेषमोहार्थान्तरभावात्। तेषां दोषाणां त्रयो राशयः, त्रयः पक्षाः रागो रजोगुणात्मकस्तस्य पक्षाः कामो मत्सरः स्पृहा लोभ इति। द्वेषश्च रजोगुणात्मकस्तस्य पक्षाः क्रोध ईर्ष्यासूया द्रोहोऽमर्ष इति। मोहस्तमोगुणात्मकस्तस्य पक्षा मिथ्याज्ञानं

* अभिनिर्वृत्तिमभिसन्धायेति कर्त्तव्यताबुद्धिं स्थिरीकृत्य। 'कार्य्यफल'शब्देनेह तावात्त्विकं

विचिकित्सा मानः प्रमाद इति त्रैराश्यान्नोपसङ्ख्यायन्ते। लक्षणस्य तद्भेदात् त्रित्वमनुपपन्नं, नानुपपन्नं रागद्वेषमोहार्थान्तरभावात्। आसक्तिलक्षणो रागः, अमर्षलक्षणो द्वेषः, मिथ्याप्रवृत्तिलक्षणो मोह इत्यर्थान्तरत्वात्। यत्र रागद्वेषमोहास्तत्र कामादय उपनिपतन्ति तस्मान्नोपसंङ्ख्यायन्ते।

तत्राह वादी। नैकप्रत्यनीकभावात्। न खल्वर्थान्तरं रागादिकम्। कस्मात्? एकप्रत्यनीकभावात्। तत्त्वज्ञानं सम्यङ्मतिरार्य्यप्रज्ञा सम्बोध इत्येकमिदं त्रयाणां प्रत्यनीकं स्यात्। तत्रोत्तरम्। व्यभिचारादहेतुः। सति ह्यर्थान्तरभावे पृथिव्यां श्यामलोहितादय एकप्रत्यनीका एकेनैवाग्निसंयोगेन रूपैकयोनयः पाकजा इति व्यभिचारदर्शनादेकप्रत्यनीकभावादित्यहेतुः।०। तेषां मोहः पापीयान् नामूढस्येतरोत्पत्तेरिति। मोहः पापः पापतरो वेति द्वावभिप्रेत्य पापीयानित्युक्तम्। कस्मात्? नामूढस्येतरोत्पत्तेः। अमूढस्य रागद्वेषौ नोत्पद्येते। मूढस्य यथासङ्कल्पं तयोरुत्पत्तिः। विषयेषु रञ्जनीयाः सङ्कल्पा रागहेतवः। कोपनीयाः सङ्कल्पा द्वेषहेतवः। उभये च सङ्कल्पा न मिथ्याप्रतिपत्तिलक्षणत्वान्मोहादन्ये। ताविमौ मोहयोनी रागद्वेषाविति। तत्त्वज्ञानाच्च मोहनिवृत्तौ रागद्वेषानुत्पत्तिरित्येकप्रत्यनीकभावानुपपत्तिः। एवं कृत्वा तत्त्वज्ञानाद् दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदन्तरापायादपवर्ग इति गौतमेनोक्तं व्याख्यातमिति। प्राप्तस्तर्हि निमित्तनैमित्तिकभावादर्थान्तरभावो दोषेभ्य इति। अन्यच्च निमित्तम् अन्यच्च नैमित्तिकमिति दोषनिमित्तत्वाददोषो मोह इति प्राप्यते। न दोषलक्षणावरोधान्मोहस्य। प्रवर्त्तनालक्षणा दोषा इत्यनेन दोषलक्षणेनावरुध्यते दोषेषु मोहः। मृन्निमित्तो घटो मार्त्तिके मृदेवेतिवत्, तस्मान्नादोषो मोह इति। निमित्तनैमित्तिकोपपत्तेश्च तुल्यजातीयानामप्रतिषेधः। द्रव्याणां गुणानां वा अनेकविधविकल्पो निमित्तनैमित्तिकभावे तुल्यजातीयानां दृष्ट इति। तत्र तत्त्वज्ञानं तस्मिंस्तज्ज्ञानम्। तच्च द्विविधं सत्यं सत्यानृतञ्च। तत्र सत्यं सर्व्वं सदनुप्रविष्टत्वात् सत्यमपि तदेकं सदेव सत् सर्व्वमिदमसदिति ज्ञानं सत्यं तत्त्वज्ञानम्। अव्यक्ताख्यात्मादेरतदन्तं प्रमेयं सर्व्वं सत्यञ्चानृतञ्चेति सत्यानृतं तत्त्वज्ञानम् अपि मिथ्याज्ञानं चरमफले मिथ्यात्वात्। आत्मन्यात्मबुद्धिर्घटे घटबुद्धिरित्येवमादिबुद्धिस्तत्त्वबुद्धिर्लोके न तु परमार्थतः। एतल्लोकविषये तत्त्वज्ञानस्य कारणं रजोऽनुबन्धं सत्त्वम्। तथाविधा बुद्धिर्विषये समयोगेन प्रवर्त्तयति मनः शरीरं वाचञ्च। तया लौकिकतत्त्वबुद्ध्या प्रवर्त्तमानं मनः सुमयोगात्

श्रद्धां दयामस्पृहाञ्चाशुभे कुर्व्वत् सद्वृत्ते पुरुषं प्रवर्त्तयति। वाक् च प्रवर्त्तमाना समयोगात् सत्यं हितं प्रियं स्वाध्यायञ्च कुर्व्वती तथाविधं वाक्यं प्रवर्त्तयति वक्तुं पुरुषमिति। शरीरञ्च तया समयोगयुक्तया प्रवर्त्तमानं दानं परित्राणं तीर्थादिपरिचरणादिकं करोति। इत्येवं वाङ्मनःशरीरप्रवृत्तिभिर्यजनयाजनादिभिः सद्वृत्तकर्म्मभिर्धातुसाम्यमुत्पद्यते धर्म्मश्च। सत्त्वानुवन्धमन्तरेण या बुद्धिस्तामसी राजसी वा भवति सा मिथ्याबुद्धिरतत्त्वज्ञानं अतस्मिंस्तद्बुद्धिः। स्थाणौ पुरुषः शुक्तौ रजतं रज्ज्वां सर्प इत्येवमादिस्तया बुद्ध्या मिथ्यायोगायोगातियोगयुक्तया वाङ्मनःशरीराणि मिथ्यायोगायोगातियोगैः प्रवर्त्तन्ते कार्य्येषु। ततस्तु मनः परद्रोहं परद्रव्याभिलाषं नास्तिक्यञ्च एवमादीनि कार्य्याणि करोति। वाक् च परुषानृतसूचनासम्वन्धवचनादीनि करोति। शरीरं हिंसास्तेयप्रतिषिद्धमैथुनादीनि करोति इत्येवमसद्वृत्तकर्म्मभिर्धातुवैषम्यमधर्म्मश्चोत्पद्यते। तदिदं शुभञ्च धातुसाम्यं पुण्यञ्च अशुभं पुनर्धातुवैषम्यं पापञ्चेति द्विविधं द्वयमभिसन्धाय कर्त्ता तदभिनिर्वृत्तये वाङ्मनःशरीरैः प्रवर्त्तेत इत्यस्मात् कार्य्यं तदुभयं द्विविधमुच्यते। एतद्द्वयं द्विविधं प्रवृत्तिरूपक्रियानिष्पन्नयज्ञादिकार्य्यजातधर्म्माधर्म्मजनितं फलमुवाच गौतमः। प्रवृत्तिदोषजनितोऽर्थः फलमिति। इह तु तत् कार्य्यमुच्यते। तत् तु वाङ्मनःशरीरप्रवृत्तिनिमित्तं शुभञ्चाशुभञ्च कर्म्म द्विविधं—सद्यःफलं कालान्तरफलञ्च। तत्र सद्यःफलं शुभं पानाशनं क्षुत्पिपासाहरं स्वस्थस्य धातुसाम्यकरं परिणामेन, न तत् कालान्तरमुच्यते। अशुभन्तु शस्त्रास्त्राद्यभिघातादिकं कर्म्म सद्यःफलं धातुवैषम्यकरं सद्य एव धातुवैषम्यं भवतीति। तथा यागादिकं प्रवृत्तिनिमित्तं कर्म्म शुभं कालान्तरेण धर्म्मं फलति। दुष्प्रवृत्तिनिमित्तं नित्यनैमित्तिककाम्यक्रियात्यागादवैधकर्म्म कालान्तरेण पापं फलतीति व्यवस्थितौ। गौतम उवाच। सद्यः कालान्तरे च फलनिष्पत्तेः संशयः। पचति दोग्धीति सद्यःफले ओदनपयसी। कर्षति वपतीति कालान्तरफलं शस्याधिगम इति। अस्ति चेयं क्रिया अग्निहोत्रं जुहुयात् स्वर्गकाम इति। एतस्याः फले संशयः। किं सद्यः फलति कालान्तरे वेति? तत्रोत्तरम्। न सद्यः, कालान्तरोपभोग्यत्वात्। अग्निहोत्रादिकार्य्यं न सद्यः फलति, कालान्तरोपभोग्यत्वात्। स्वर्गः फलं श्रूयते, तच्चास्मिन् देहे भिन्ने देहभेदादुत्पद्यते इति, न सद्यः फलति। ग्रामादिकामानामारम्भफलमिवेति। तत्राह वादी। कालान्तरेणानिष्पत्तिहेतुनाशात्। ध्वस्तायां प्रवृत्तौ प्रवृत्तेः फलं न कारणम्

अन्तरेणोत्पत्तुमर्हति। न खलु वै विनष्टात् कारणात् किञ्चिदुत्पद्यत इति। तत्रोत्तरम्। प्राङ्निष्पत्तेर्वृक्षफलवत् तत् स्यात्। यथा फलार्थिना वृक्षमूले सेकादिपरिकर्म्म क्रियते, तस्मिंश्च प्रध्वस्ते पृथिवीधातुरब्धातुना संगृहीत आभ्यन्तरेण तेजसा पच्यमानो रसद्रव्यं निर्व्वर्त्तयति। स द्रव्यभूतो रसो वृक्षानुगतः पाकविशिष्टो व्यूहविशेषण सन्निविशमानः पर्णादिफलं निर्व्वर्त्तयति। एवं परिषेकादिकर्म्म चार्थवत्। न च विनष्टात् फलनिष्पत्तिः। तथा प्रवृत्त्या संस्कारो धर्म्माधर्म्मलक्षणो जन्यते। स जातो निमित्तान्तरानुसंगृहीतः कालान्तरे फलं सुखदुःखं निष्पादयतीति। उक्तञ्चैतत् पूर्व्वकृतफलानुबन्धात् तदुत्पत्तिरिति। तथा च पचतीत्यादौ व्यापाररूपपाकेण विक्लित्तिमानोदनः फलं निष्पाद्यते तत्रौदनस्थविक्लेदः फलरूपः पाकः पाककार्य्यः। तथा यागादौ तत्तदितिकर्त्तव्यतारूपव्यापारेण जन्यते परमपुरुषाराधनं स्वेष्टफल-साधिनी सिद्धिः पुरुषदेहे संस्कारविशेषो धर्म्मो वैधक्रियाफलं कार्य्याख्यं धात्वर्थः फलमवैधक्रियाफलमपि परमपुरुषानाराधनमनिष्टसाधिनी सिद्धिः पुरुषदेहे संस्कारविशेष एवाधर्म्मः कार्य्याख्यं धात्वर्थः फलमिति तद्वर्त्तत एव विक्लित्तिवदोदने यजमानदेहे। तत् फलरूपं कार्य्यं कालान्तरे सुखदुःखं प्रकृतं फलं परलोके जनयति। यथा खल्वोदनस्था विक्लित्तिरोदनभोक्तुस्तृप्तिं जनयति सुख-रूपाम्। एवमुक्तं पुष्पदन्तेन—क्व कर्म्म प्रध्वस्तं फलति पुरुषाराधनमृते इति पुरुषा-राधनमेव स्वर्गादिसुखासुखं फलति न तु प्रध्वस्तं कर्म्मेति। अत्र जिज्ञास्यम्। तदिदं धर्म्माधर्म्माख्यं फलं प्राङ्निष्पत्तेर्निष्पद्यमानं किमसदेव निष्पद्यतेऽथ प्राक् सत्? तदेव निष्पद्यतेऽथवा प्राक् सदसत्। तदेव निष्पद्यते प्रवृत्तित इत्यत उक्तं गौतमेन। नासन्न सन्न सदसत् सदसतोर्वैधर्म्म्यादिति। प्राङ्निष्पत्तेर्निष्पत्तिधर्म्मकं धर्म्माधर्म्मरूपेण यत्तन्नासत्; उपादाननियमात्। कस्यचिदप्युत्पत्तये किञ्चिदेवोपादेयं नानुपादाय किञ्चित्। न वा सर्व्वं सर्व्वस्येति। प्रागसद्भावे नियमो नोपपद्यते। न ह्युपादानमनुपसृत्य प्रादुर्भावः कस्यचिद्भवति। तर्हि किं सत्? न सत्, प्रागुत्पत्तेर्विद्यमानस्योत्पत्तिः अनुपपन्ना। तद्भावस्यैवेति। तर्हि प्रागुत्पत्तेः सदसत्? न सदसत्, सदसतो-र्वैधर्म्म्यात्। सदित्यर्थाभ्यनुज्ञा। असदित्यर्थप्रतिषेधः। एतयोर्व्याघातो वैधर्म्म्यं यदस्ति तन्नास्तीति विभिन्नधर्म्मं तस्माद्व्याघाताद्व्यतिरेकानुपपत्ति-रेकभावासम्भव इति। तर्हि किमित्यत आह—उत्पादव्ययदर्शनादबुद्धि-सिद्धन्तु तदसत्। इति। यत् खलूक्तं प्रागुत्पत्तेः कार्य्यं नासदुपादाननियमात्

इति तस्मादुपादानभूतं किमप्यस्ति प्रागुत्पत्तेः कार्य्यस्योत्पादव्ययदर्शनात्। तर्हि तत् किं सदित्यत उक्तं—बुद्धिसिद्धन्तु तदसदिति। इदमस्योत्पत्तौ समर्थं न सर्व्वमिति प्रागुत्पत्तेर्नियतकारणं कार्य्यं बुद्ध्या सिद्धमुत्पत्तिनियमदर्शनात्। तस्मादुपादाननियमस्योपपत्तिः। तस्मादुपादानं यद् यस्य तत् प्राक् कार्य्योत्पत्तेः स्वेन रूपेण सदपि कार्य्यरूपेणासदिति भाष्यते तत्तत्कार्य्यीयक्रियागुणव्यपदेशाभावात्। यथा मृदेव घटो भवति प्राग् घटोत्पत्तेर्घटीयक्रियागुणव्यपदेशाभावान्मृदः। सती च मृन्मृद्रूपेण घटरूपेणासदिति। तच्च धर्म्माधर्म्मरूपेण वेदा एव नियतिवैधावधकर्म्मभिर्निष्पद्यते। भाग्यं हि तस्मान्नियतिरुच्यते। इति। तत्राह वादी। आश्रयव्यतिरेकाद् वृक्षफलोत्पत्तिवदित्यहेतुः इति। वृक्षस्य मूलसेकादिपरिकर्म्म तज्जातश्च रसरूपद्रव्यं तत्कार्य्यफलं पत्रादिकमित्युभयमेव वृक्षाश्रयम्। कर्म्म चेह शरीरे फलञ्च स्वर्गादिकममुत्रेत्याश्रयस्य व्यतिरेकाद् भेदादहेतुर्दृष्टान्त इति। तत्राह सिद्धान्तम्। प्रीतेरात्माश्रयत्वादप्रतिषेध इति। प्रीतिरात्मप्रत्यक्षत्वाद् आत्माश्रया तदाश्रयमेव कर्म्म धर्म्माधर्म्मसंज्ञकं धर्म्माधर्म्मस्यात्मगुणत्वात् तस्मादाश्रयव्यतिरेकानुपपत्तिरिति। अत्रेदं प्रतिसन्धेयं यदिहात्माश्रया प्रीतिरुक्ता तदात्माश्रयमेव कर्म्म धर्म्माधर्म्मसंज्ञितमुक्तं स खल्वात्मा न खलु केवलः क्षेत्रज्ञः क्षेत्रज्ञाधिष्ठितमव्यक्तं वा महदुपाहितं प्रज्ञाख्यं सुषुप्तिस्थानं वा स्वप्नस्थानं वा सूक्ष्मपञ्चमहाभूतोपाहितस्तैजसाख्यः। स्थूलपञ्चभूतोपाहितो वा वैश्वानराख्यः। बृहदारण्यके च्छान्दोग्योपनिषदि च खल्विष्टापूर्त्तादिकर्म्म कृतवतो मृतस्य शरीराद्विष्टपुरुषस्य भास्वररूपेणोत्थाय धूमादिक्रमेण सोमलोके सोमभावापन्नत्वश्रुतेः शरीराश्रयत्वाद्धर्म्माधर्म्मस्य। तस्मादात्मान्नमयः स्थूलपुरुष इष्यते। प्रीतिश्च स्थूलपुरुषे धर्म्माधर्म्मरूपं कर्म्म च स्थूलपुरुषे। सूक्ष्मशरीरी हि पुरुषो म्रियमाणो देहान्तरमातिवाहिकमादाय शरीरमिदं त्यक्त्वा परलोकं गच्छति। तदुक्तं शारीरे। सूक्ष्मैस्तैर्भूतैः सहितः स आत्मा मनोजवो देहमुपैति देहादिति। ततः पूर्व्वदेहवद्देहं प्राप्य तथैव स्थूलदेही भूत्वा परलोके सुखं वा दुःखं वा भुङ्क्ते। तत्रास्ति सोमलोकस्थस्य दिष्टस्य सम्बन्धप्रवाहः ज्योतिर्वत्। पुत्रादिषु सम्बन्धवत्। स्थूले हि पुरुषे सर्व्वं प्रतिष्ठितमुक्तमग्रे। शक्तिर्ब्रह्म गायत्रीरूपेण तथा परमपुरुषः परमात्मा पञ्च ब्रह्मपुरुषा विद्याविद्यारूपेण धर्म्माधर्म्मरूपेण परिणामिनियतिरूपेण कालश्च परिणामरूपेण क्षेत्रज्ञाव्यक्त्यादिपञ्चविंशतिस्तत्त्वानि च सर्व्वमतो वैधावधकर्म्मणा सैव शरीरस्थान-

भिव्यक्ता नियतिर्दैवसंज्ञकदिष्टरूपेणाभिनिर्व्वर्त्तते शरीर इति नानुपादानो धर्म्माधर्म्माविति। ननु तर्हि कार्य्यस्य धातुसाम्यस्य फलं सुखावाप्तिरारोग्यम्, धातुवैषम्यस्य फलं दुःखावाप्तिरनारोग्यं विकारः। तदुक्तं प्राक्। विकारो धातुवैषम्यं साम्यं प्रकृतिरुच्यते। सुखसंज्ञकमारोग्यं विकारो दुःखमेव तु। इति। एवं वैधकर्म्मजकार्य्यस्य धर्म्मस्य फलं स्वर्गादिसुखावाप्तिः। अवैधकर्म्मजकार्य्यस्याधर्म्मस्य फलं दुःखावाप्तिः। कथं तर्हि धर्म्माधर्म्मकृतपुत्रादिधनबान्धवादैश्वर्य्यानैश्वर्य्यशोकादिलाभः स्यादिति। तत्राहानुबन्धस्त्वित्यादि। यो भावः कार्य्यनिमित्त एव कार्य्यवशात् कार्य्यादुत्तरकालम् अवश्यम्भावितया तत्कार्य्यस्य कर्त्तारमनुबध्नाति शुभो वाप्यशुभो वा सोऽनुबन्धः। उदाहरिष्यते। अनुबन्धस्तु खल्वायुरिति। धातुसाम्यस्य कार्य्यस्य फलं सुखावाप्तिस्तत्फलानुबन्धस्तद्धातुसाम्यनिमित्तमेव धातुसाम्यादुत्तरकालम् अवश्यम्भावितया तं पुरुषं दीर्घायुरनुबध्नाति। तथा धातुवैषम्यस्य कार्य्यस्य फलं दुःखावाप्तिस्तत्फलानुबन्धस्तु तद्धातुवैषम्यनिमित्तमेव धातुवैषम्यात् उत्तरकालमवश्यम्भावितया तं पुरुषमयथावदायुरनुबध्नातीत्यनुबन्ध आयुः शुभं दीर्घं सुखञ्च। अशुभमयथावत्प्रमाणमायुर्दुःखञ्चेति। तथेह कृतकर्म्मजनितधर्म्माधर्म्मस्य कार्य्यस्य फलं परलोके सुखदुःखावाप्तिस्तदुत्तरकालमवश्यम्भावितया तद्धर्म्माधर्म्मनिमित्तानि शुभपुत्रदारादैश्वर्य्याद्यशुभपुत्रदाराद्यनैश्वर्य्यादीनि भवन्त्यनुबन्धा इति। एतदुक्तं गौतमेन। आश्रयव्यतिरेकाद् वृक्षफलवदिति दृष्टान्तोऽहेतुरिति प्रतिषेधो न भवति प्रीतेरात्माश्रयत्वादिति यदुक्तं तत्। न पुत्रशत्रुस्त्रीपरिच्छदहिरण्यान्नादिफलनिर्द्देशादिति। स्वर्गादिप्रीतिवत् पुत्रादिकामनया यागादिकरणे स्वर्गादिवत् फलनिर्द्देशात् आश्रयत्वाभावात् फलस्य तन्न युक्तमिति। तत्राह सिद्धान्तम्। तत्सम्बन्धात् फलनिष्पत्तेस्तेषु फलवदुपचार इति। पुत्रादिसम्बन्धात् फलं प्रीत्यप्रीतिलक्षणमुत्पद्यते ततः पुत्रादिषु फलवदुपचारः। यथान्ने प्राणशब्दोऽन्नं वै प्राणा इति। तद्धर्म्माधर्म्मनिमित्तमेव प्रवरावरमध्यजातिकुलादिषु पुनर्ज्जन्म सदसत्पुत्रशत्रुदारादैश्वर्य्यानैश्वर्य्यादिफलाभादिकञ्च फलवदुपचारः फलानुबन्ध उक्तः। पूर्व्वकृतफलानुबन्धात् तदुत्पत्तिरिति—पूर्व्वकृतधर्म्माधर्म्मनिमित्तात् तत्फलसुखदुःखयोरनुबन्धात् तदुत्पत्तिरित्यनुबन्ध एव पुत्रादिफलमुच्यते इति।

अनुबन्धः खलु सः, यः कर्त्तारमवश्यमनुबध्नाति कार्य्या-दुत्तरकालं कार्य्यनिमित्तः शुभो वाप्यशुभो वा भावः।

देशस्त्वधिष्ठानम्।

कालः पुनः परिणामः।

प्रवृत्तिस्तु खलु चेष्टा कार्य्यार्था, सैव क्रिया कर्म्म यत्नः कार्य्यसमारम्भश्च।

तथा च कः पुनरनुबन्ध इत्यत आह—अनुबन्धः खल्वित्यादि। दृष्टार्थ-कर्म्मणः कार्य्यस्य फलमिह लोके भोग्यमनुबन्धश्चेह लोके भोग्यः, अदृष्टार्थ-कर्म्मणस्तु कार्य्यस्य फलं परलोके भोगावसानमनुबन्धस्तु जन्मान्तरभोग्यः। अथ वैद्यानां व्यावृत्त्यर्थमृत्विगादीनाञ्च व्यावृत्त्यर्थं कर्त्तारमिति पदम्। व्यभिचारप्रतिषेधार्थमवश्यमिति पदम्। कार्य्यादुत्तरकालमित्यनेनावैगुण्येन समाप्तस्य कार्य्यस्येत्यर्थात्। व्यभिचारिकारणं व्यवच्छिन्नम्। अबलीयांसो निदानादयो यदि परस्परमप्रकर्षादनुबध्नन्ति न तदा विकाराभिनिर्वृत्तिः भवतीत्युक्तेः। कार्य्यनिमित्त इत्यनेन कार्य्यजन्यो फलानुबन्धाविति ज्ञापितम्, न तु फलजन्योऽनुबन्ध इति।

देशं निरूपयति—देशस्त्वित्यादि। अधिष्ठानमिति। अधितिष्ठत्यस्मिन् इत्यर्थेऽधिष्ठीयते यत् तदधिष्ठानं स देशः कर्म्मणि ल्युट्। स चातुर आतुर-शरीरप्रदेशमनोरूपः। भूमिश्च। सा चानूपजाङ्गलसाधारणभेदात् त्रिधा।

क्रमिकं कालमाह—कालः पुनः परिणामः। परिणामो व्याख्यात-स्त्रिस्रैषणीये।

क्रमिकत्वात् प्रवृत्तिं लक्षयति—प्रवृत्तिरित्यादि। चेष्टेति वाङ्मनः-शरीराणां प्रवर्त्तनम्। कार्य्यार्थेति कार्य्यमर्थः फलं यस्याः सा कार्य्यार्था।

कार्य्यफलं ज्ञेयम्, यथा—कुम्भकारस्य घटकरणे तन्मूल्यप्राप्तिः। अनुबन्धस्त्वायतीयं फलम्, यथा—घटमूल्येन विनियोगः कुटुम्बपोषणादौ। अनुबध्नातीत्युत्तरकालं कर्त्तारमुपतिष्ठते शुभो वाप्यशुभो वेति, शुभस्य कार्य्यस्य शुभः, अशुभस्य कार्य्यस्याशुभः।

देशस्त्वधिष्ठानमिति कार्य्यानुगुणोऽननुगुणो वा आधाररूपो देशः। परिणाम इति परिणामी ऋत्वादिरूपः कालः। तेन नित्यगं कालं निरस्यति, अस्य पूर्व्वमसाधारणं कार्य्यं प्रत्यनपेक्षणीय-त्वात्। प्रवृत्तेश्चेष्टादिशब्दाः पर्य्याया एव लक्षणम्।

उपायः पुनस्त्रयाणां कारणादीनां सौष्ठवमभिसन्धानञ्च * सम्यक् कार्य्यकार्य्यफलानुबन्धोपायवर्ज्जानां तेषां। तद्धि

कार्य्यमुक्तम्। सैव क्रियेति भावकृदन्तत्वात् करणम्, कर्म्मेति च भावकृदन्तत्वात्। उक्तञ्च पूर्व्वाध्याये संयोगे च विभागे चेत्यादिना। यत्न इति यतनं न प्रयत्नः। स इच्छासमयोगान्मनस्यात्मप्रवृत्तिरूपः, तस्य समयोगात् तु वाङ्मनःशरीरप्रवृत्तिरूपोऽयं यत्नः। अतएवोक्तं पूर्व्वाध्याये। प्रयत्नादि कर्म्म चेष्टितमुच्यते इति। कार्य्यसमारम्भश्चेति कार्य्याणां समारम्भः। गौतमेनाप्युक्तम्। प्रवृत्तिर्वागबुद्धिशरीरारम्भः इति। व्याख्यातञ्चेदम्।

क्रमिकत्वादुपायं लक्षयति—उपायः पुनरित्यादि। कारणादीनां कारणकरणकार्य्ययोनीनां सौष्ठवं सुष्ठुत्वं साधुत्वमित्यर्थः। तेषामभिसन्धानञ्च। ननु कुत एतद्द्वयमुपाय उच्यते इत्यत आह—कार्य्येत्यादि। कारणादीनां कार्य्यकार्य्यफलानुबन्धोपायवर्ज्जानां सौष्ठवं सम्यगभिसन्धानञ्च। कार्य्याणां धातुसाम्यानां सम्यगभिनिर्व्वर्त्तक इत्यतोऽपि। कार्य्यस्य सम्यगभिनिर्व्वर्त्तकत्वादुपाय उच्यते। कारणं हि भिषग् धातुसाम्यं कार्य्यमभिनिर्व्वर्त्तयति न सर्व्वं। यस्य तु सौष्ठवं स्वगुणसम्पत्तिर्नास्ति स कथं व्याधिं सम्यक् प्रशमयेत्। इति भिषजः सौष्ठवमुपायः। एवंसम्पदुपेतो भिषग् यद्यभिसन्धानं न कुरुते व्याधिप्रशमनाय, तत् कथं सुष्ठु वैद्योऽपि धातुसाम्यं कुर्य्यादिति भिषजस्तत्तत्कर्म्मकरणेऽभिसन्धानमुपायः। करणन्तु भेषजं शस्त्रादिकम्। तच्च कार्य्यं कार्य्यफलमनुबन्धञ्च। धातुसाम्यं सुखावाप्तिं जीवितञ्च निर्व्वर्त्तयति। यदि तु तत् सौष्ठवं स्वगुणसम्पत्तिन वर्त्तते तदा कथमातुरस्याक्लेशपूर्व्वकं धातुसाम्यादिकं कुर्य्यात्। यथा शस्त्रस्य सुधारत्वाभावे च्छेदनसुखाभावः सुधारत्वे च्छेदनसुखमित्येवमादि। एवं भेषजानामभिसन्धानं बोध्यम्। वातादिवैषम्याणां कार्य्याणां योनिश्चायोगातियोगमिथ्यायोगयुक्तकट्वादिः, ज्वरादीनां कार्य्याणां योनिर्धातुवैषम्यम्, धातुसाम्यादि-

उपायमाह—उपायः पुनरित्यादि। सौष्ठवमिति सुष्ठुत्वं कर्त्रादीनां कार्य्यानुगुणयोगित्वमित्यर्थः। अभिविधानञ्च सम्यगिति कारणादीनां कार्य्यानुगुण्येनावस्थानम्, यथा—भेषजस्य शिरोविरेचनकारकस्य, तस्य पुनर्नसि च दानं कस्यचित्, कस्यचित् पुनः शिरसि च दानमित्यादि, यथा च—पटकारणानां तन्त्वादीनां पटवापनयोग्यतयावस्थानम्। एतच्चोपायरूपं सौष्ठवमभिविधानञ्च कार्य्यादित्रिकरहिता-

* अभिविधानञ्चेति चक्रः।

**कार्य्याणामभिनिर्व्वर्त्तकमित्यतस्तूपायः। कृते नोपायार्थोऽस्ति, न च विद्यते तदात्वे, कृताच्चोत्तरकालं फलम्, फलाच्चानुबन्ध इति।**

कार्य्यादिकं नाभिनिर्व्वर्त्तयति। धातुवैषम्यस्य सौष्ठवमदारुणत्वादिकं तदभिसन्धानञ्च। सुखसाध्यत्वेन व्याधेः प्रशमने कर्त्तव्ये तथात्वेनाभिसन्धानमुपायः तच्च भिषगादीनामभिसन्धानं भिषजा कार्य्यं न कार्य्ययोनेः। चिकित्सायान्तु भिषजां कार्य्यस्य धातुसाम्यस्य योनिर्हेतुसाम्यं तस्य सौष्ठवं तदभिसन्धानञ्च। तद्व्याधेर्हेतुविपरीतसेवनम्, स्वस्थवृत्तसेवनञ्च धातुसाम्यादिकमभिनिर्व्वर्त्तयति। इति कार्य्यस्य धातुसाम्यस्य सौष्ठवं विकारप्रशान्त्यादि। कार्य्यफलस्य सुखावाप्तेः सौष्ठवं मनोबुद्ध्यादितुष्टिः। अनुबन्धस्यायुषः सौष्ठवं प्राणसंयोग इत्यतोऽप्युपायः। अनुबन्धस्यायुषः सौष्ठवमभिसन्धानञ्च। चिरव्याधेश्चिरचिकित्सया शान्तिं निर्व्वर्त्तयतीत्यायुषः सौष्ठवमभिसन्धानञ्चोपायः। एवं देशकालक्रियाणां सौष्ठवं तदभिसन्धानञ्च सुखेनारोग्यमभिनिर्व्वर्त्तयतीत्युपायः। उपायानामपि सौष्ठवमभिसन्धानञ्चारोग्यसुखमभिनिर्व्वर्त्तयति। न नोपायसौष्ठवस्योपायत्वेन तत्सौष्ठवरूपस्योपायस्यापि सौष्ठवमुपायः स्यात्। तथा तत्सौष्ठवमप्युपायः स्यादित्येवमनवस्थानं वाच्यम्। सर्व्वत्र सर्व्वोपायसौष्ठवस्यानुपायत्वात्। यथासम्भवं हि कारणादीनां सौष्ठवाभिसन्धानयोरुपायत्वमिति ज्ञेयम्। ननु उपायविषयः क इत्यत आह—कृत इत्यादि। कृते निष्पादिते सति नोपायार्थं उपायस्य प्रयोजनं नास्ति। ननु तदात्वे क उपायोऽस्तीत्यत आह—न च विद्यते तदात्वे इति। तदात्वे तत्क्रियानिष्पत्त्यत्ययकाले तु नोपायार्थो विद्यते। निष्पद्यते हि क्रिया तदुपायपूर्व्वकमेव। ननु कृते सति कुतो नोपायार्थोऽस्ति? कृतादुत्तरकालं फलमभिनिर्व्वृत्तं भवति, वर्त्तते चानुबन्धद्वयमुपायार्थो हि दृश्यते सिद्ध इत्यत आह—कृताच्चोत्तरकालमित्यादि। कृताच्चोत्तरकालं फलञ्चानुबन्धश्चोपायार्थौ विद्यते। कार्य्यकार्य्यफलानुबन्धवर्ज्जानां कारणादीनां त्रयाणां कार्य्याभिनिर्व्वर्त्तकभावो ह्युपायः, कार्य्यफलानुबन्धाभिनिर्व्वर्त्तकानि कारणादीनि न तूपाय इति। ननु कार्य्यफलानुबन्धयोः सौष्ठवमभिसन्धानञ्च

चाञ्च कारणादीनां ज्ञेयमित्याह—कार्य्येत्यादि। उपायस्य स्वरूपान्तरमाह—कार्य्याणामभिनिर्व्वर्त्तक इत्यतस्तूपाय इति। असत्युपाये कारणादीनि कार्य्यं न कुर्व्वन्तीत्यर्थः। अथ कथं कार्य्यादिषु उपायत्वं न सम्भवतीत्याह—कृत इत्यादि। उपायो हि कार्य्यकारकः, तत्र कृते कार्य्ये उत्पन्ने नोपायार्थो-

एतद्दशविधमग्रे परीक्ष्यं परीक्ष्य, ततोऽनन्तरं कार्य्यार्था प्रवृत्तिरिष्टा। तस्माद्भिषक् कार्य्यं चिकीर्षुः प्राक् कार्य्य-समारम्भात् परीक्षया केवलं परीक्ष्यम् परीक्ष्य कर्म्म समारभेत कर्त्तुम् ॥ ७० ॥

उपाय उक्तस्तत् कथं कृते सति नोपायार्थोऽस्तीति चेन्न कार्य्यफलानुबन्धयोः सौष्ठवाभिसन्धाने हि पुनर्भवाभावरूपं कार्य्यमभिनिर्व्वर्त्तयतस्ते च कृते सति कार्य्ये न वर्त्तते, वर्त्तते च कर्त्तव्यात् पूर्व्वमेव, प्रयोगकाले हि यदि प्रवृत्तिसौष्ठवं भवति तदैव कार्य्यफलानुबन्धयोः सौष्ठवं भवतीति क्रियायाः पूर्व्वमेवोपायार्थ इति ख्यापितम्। ज्ञात्वा हीत्यादि सूत्रार्थं कारणादिकमुपदिश्य तेषां ज्ञानपूर्व्वकक्रियाकर्त्तव्यतायां सम्यगभिनिर्व्वर्त्तमानकार्य्याभिनिर्वृत्तौ चेष्ट-फलानुबन्धं कार्य्यमभिनिर्व्वर्त्तयत्यनतिमहता प्रयत्नेन कर्त्तेत्युक्तम्।

यत् फलमुक्तं तथा कर्त्तव्यतां व्याकरोति—एतद्दशविधेत्यादि इष्टेत्यन्तं यावत्—शास्त्रीयकर्म्मकरणविषयमिदं वचनम्। तथाविधा प्रवृत्तिस्त्विष्टा। सम्यगभिनिर्व्वर्त्त्यमानकार्य्याभिनिर्वृत्तौ कर्त्तुरनतिमहता प्रयत्नेनेष्टफलानु-बन्धकार्य्याभिनिर्व्वर्त्तकत्वात्। तत्रायुर्व्वेदीयकर्म्मकरणे विधिमाह—तस्मा-दित्यादि। तस्मादुक्तप्रकारेण प्रवृत्तेरिष्टत्वात्। कार्य्यं चिकित्सार्थं वमनादि-कार्य्यं चिकीर्षुः कर्त्तुमिच्छुर्भिषक् कार्य्यसमारम्भात् तद्वमनादिकार्य्य-समारम्भात् पूर्व्वं परीक्षया आप्तोपदेशेन प्रत्यक्षानुमानाभ्यां केवलं कृत्स्नं परीक्ष्यं परीक्षणीयं भावं परीक्ष्याथानन्तरं कर्म्म वमनादिकार्य्यनिष्पादन-व्यापारं कर्त्तुं समारभेतेति ॥ ७० ॥

ऽस्ति, न हि कृतं पुनः क्रियते, तेन कार्य्यगतमप्युपायत्वं न पुनः कार्य्योत्पादे स्वीकुर्म्मः। तथा अनुत्पन्ने कार्य्ये नोपायरूपता भविष्यतीत्याह—न च विद्यते तदात्वे इति, तदात्वे कार्य्यमिति शेषः, तदात्वे कार्य्योत्पत्तेः पूर्व्वं कार्य्यमेव नास्ति, तेन न तदात्वेऽप्युपायत्वं कार्य्यस्यास्ति इति। यदा च कार्य्य एवोपायत्वम् उपायेऽपि उत्तरकालीनत्वेन नास्ति, तदा कार्य्योत्तरकालजयोः फलानुबन्धयोरपि उपायार्थो नास्तीत्याह—कृताच्चोत्तरकालमित्यादि। उपसंहरति—एतदि-त्यादि ॥ ७० ॥

तत्र चेद्भिषग् अभिषग् वा भिषजं कश्चिदेवं खलु पृच्छेत्। वमनविरेचनास्थापनानुवासनशिरोविरेचनानि प्रयोक्तुकामेन भिषजा कतिविधया परीक्षया कतिविधमेव परीक्ष्यम्; कश्चात्र परीक्ष्यविशेषः, कथञ्च परीक्षितव्यं, किंप्रयोजना च परीक्षा, क च वमनादीनां प्रवृत्तिः, क च निवृत्तिः, प्रवृत्तिनिवृत्तिसंयोगेन * च किं नैष्ठिकं, कानि च वमनादीनां भेषजद्रव्याण्युपयोगं गच्छन्तीति।

स एवं पृष्टो यदि मोहयितुमिच्छेत्, ब्रूयादेनं बहुविधा हि परीक्षा तथा परीक्ष्यविधिभेदः। कतमेन विधि-

गङ्गाधरः—परीक्षया केवलं परीक्ष्यं परीक्ष्येति यदुक्तं तत्र प्रष्टव्यान्याह—तत्रेत्यादि। तत्रेत्युक्तविधौ, चेद् यदि। वमनादीनि कायचिकित्सादि-साधारणत्वादुक्तानि। शल्यादिषु प्राङ्नियतकर्म्माणि त्वनया दिशैव उन्नेयानि। परीक्ष्यविशेषः परीक्षणीयानां प्रभेदः। कथञ्च केन प्रकारेण परीक्ष्यं परीक्षितव्यं परीक्ष्येत। किंप्रयोजना किं प्रयोजनमस्याः सा परीक्षायाः किं प्रयोजनमित्यर्थः। क च कस्मिन् वस्तुनि वमनादीनां प्रवृत्तिः कर्त्तव्यता। क च वमनादीनां निवृत्तिरकर्त्तव्यता। वमनादीनां प्रवृत्तिनिवृत्ति-संयोगेन वमनादीनां क च कर्त्तव्यता चाकर्त्तव्यता चेति। तत्र किं नैष्ठिकं किं कर्त्तव्यं व्यवस्थितं स्यात्। कानि च वमनादीनां भेषजद्रव्याणि उपयोगञ्च गच्छन्तीति चेद्भिषक् अभिषग् वा भिषजं पृच्छेत् तदा।

स एवमित्यादि—एवमुक्तप्रकारेण पृष्टः स भिषक् यदि प्रष्टारं मोहयितुं मुग्धं कर्त्तुमिच्छेत्, तदेनं प्रष्टारं ब्रूयात्। किं ब्रूयादित्यत आह—बहुविधे-त्यादि। तथेति बहुविधः परीक्ष्यभेदः। भवानाख्यायमानं मां कतमेन विधिभेद-

चक्रपाणिः—सम्प्रत्युक्तं कारणादिदशकं वैद्योपयुक्तं भिषगादिदृष्टान्तेन दर्शयितुं 'तत्र चेद्' इत्यादि प्रकरणमारभते। अभिषग्वेति किञ्चिद्भिषगित्यर्थः। कतिविधं परीक्ष्यमिति कति-प्रकारं परीक्षणीयम्। प्रवृत्तिनिवृत्तिलक्षणसंयोग इति प्रवृत्त्यनुगुणनिवृत्त्यनुगुणयोर्लक्षणयो-रेकत्र मेलके। नैष्ठिकमिति निष्ठा निश्चयस्तद्भवं नैष्ठिकं निश्चयेन कर्त्तव्यमित्यर्थः।

* प्रवृत्तिनिवृत्तिलक्षणसंयोगे इति चक्रधृतः पाठः।

भेदप्रकृत्यन्तरेण भिन्नया परीक्ष्य केन वा विधिभेदप्रकृत्यन्तरेण परीक्ष्यस्य भिन्नस्य भेदाग्रं वा पृच्छति भवान्, आख्यायमानम्। नेदानीं * भवतोऽन्येन विधिभेदप्रकृत्यन्तरेण भिन्नया परीक्षया अन्येन वा विधिभेदप्रकृत्यन्तरेण परीक्ष्यस्य भिन्नस्याभिलषितमर्थं श्रोतुरहमन्येन परीक्षाविधिभेदेनान्येन वा विधिभेदप्रकृत्यन्तरेण परीक्ष्य भित्त्वार्थमाचक्षाण इच्छाञ्च प्रपूरयेयमिति। स यदुत्तरं

प्रकृत्यन्तरेण प्रकारविशेषाणां प्रकृतिविशेषेण भिन्नस्य खलु परीक्ष्यस्य भेदाग्रं पृच्छति, केन वा प्रकारभेदानां प्रकृत्यन्तरेण भेदकधर्म्मान्तरेण भिन्नस्य परीक्ष्यस्य भेदाग्रं भेदसङ्ख्यापरिच्छेदं पृच्छति। इदानीं वा अन्येन एकप्रकारेण विधिभेदप्रकृत्यन्तरेण प्रकारविशेषाणां योनिविशेषेण भिन्नया परीक्षया परीक्ष्यस्याभिलषितमर्थं श्रोतुर्भवतोऽहमिच्छां पूरयेयमिति। अन्येन वा अपरेण वा विधिभेदप्रकृत्यन्तरेण प्रकारविशेषाणां योनिविशेषेण भिन्नस्य परीक्ष्यस्य वस्तुनोऽभिलषितमर्थं श्रोतुर्भवत इच्छामहं पूरयेयमिति। अथवान्येन तद्भिन्नेन एकेन परीक्षाविधिभेदेन परीक्षाप्रकारविशेषाणां योनिविशेषेण अन्येन वा भवदीयां अपरप्रकारेण विपरीतेनापरेण वा विधिभेदप्रकृत्यन्तरेण प्रकारविशेषाणां योनिविशेषेण परीक्ष्यं वस्तु भित्त्वा भेदं कृत्वार्थं परीक्ष्यस्यार्थम् आचक्षाणो ब्रुवन् भवत इच्छाञ्च पूरयेयमिति ब्रूयादेनमिति पूर्व्वेण सम्बन्धः।

यदि मोहयितुमिच्छेदिति यदि विगृह्यसम्भाषाप्रवृत्तत्वेन मोहयितुमिच्छेदित्यर्थः। तथेति बहुविध इत्यर्थः। विधिरूपो भेदो विधिभेदः, तस्य प्रकृत्यन्तरमिति कारणान्तरम्। भेदाग्रमिति भेदपरिमाणम्। भेदपरिमाणञ्चेति भेदसंख्यापरिच्छेद एव ज्ञेयः। आख्यायमानम् इति च्छेदः। किमर्थं पुनः पृच्छतीत्याकाङ्क्षायामाह—नेदानीमित्यादि। भवतोऽन्यथा श्रोतुम् अभिलषितमर्थमहमन्यथाचक्षाणो न भवत इच्छां पूरयेयम्। तेन त्वमेव तावत् विशेषयित्वा पृच्छेति वाक्यार्थः। यदा तु 'वेदानीं न पूरयेयम्' इति च पाठः, तदा वेदानीमित्यग्रे आचक्षाण इच्छां न पूरयेयमिति योजना। किंवा वेति पूर्व्वेण युज्यते। तेन कतमेन विधिभेदप्रकृत्यन्तरेणाख्यायमानं भवानिच्छति, केन वा विधिभेदप्रकृत्यन्तरेणाख्यायमानमिच्छतीति योज्यम्। इदानीमित्यादि तु पूर्व्ववदाशङ्कायां वचनम्, एतद्विशेषप्रच्छकोऽधिकव्याकुलो भवतीति

* नेदानीमिति वा पाठः।

ब्रूयात् तत् परीक्ष्योत्तरं वाच्यं स्याद् यथोक्तञ्च प्रतिवचनविधि-मवेक्ष्य सम्यक्। यदि तु न चैनं मोहयितुमिच्छेत् प्राप्तन्तु वचनकालं मन्येत काममस्मै ब्रूयादाप्तमेव निखिलेन॥ ७१॥

द्विविधा तु खलु परीक्षा ज्ञानवतां प्रत्यक्षमनुमानञ्च। एतत् तु खलु द्वयमुपदेशश्च परीक्षा स्यात् एवमेषा द्विविधा परीक्षा, त्रिविधा वा सहोपदेशेन। दशविधन्तु परीक्ष्यं, कारणादि यदुक्तमग्रे,

एवं मोहवचनेनोक्तः स प्रष्टा यदुत्तरं ब्रूयात् तदुत्तरं वाक्यं परीक्ष्य यथोक्तञ्च प्रतिवचनविधिं प्रत्युत्तरप्रकारं सम्यगवेक्ष्य विविच्य उत्तरं वाच्यं स्यात् भिषजा। यदीत्यादि—यदि तु भिषक् तथापूर्वं पृष्ट एनं प्रष्टारं मोहयितुं न चेच्छेत्। वचनकालमुत्तरवचनकालन्तु प्राप्तं यदि च मन्येत तदा कामं यथाभिलषितं पृष्टार्थमाप्तमेवाप्तवचनमेवाखिलेन कृत्स्नेनास्मै प्रष्ट्रे भिषजे वाप्य भिषजे ब्रूयात् स्पष्टम्॥ ७१॥

गङ्गाधरः—तत्रोक्तप्रश्नस्योत्तरमाप्तमेव निखिलेन दर्शयितुमाह द्विविधेत्यादि। कतिविधया परीक्षया कतिविधं परीक्ष्यमित्यन्तर्गततया भाषितं कतिविधा परीक्षेत्येतं प्रश्नमुत्तरयति—द्विविधा तु खलु परीक्षा। ननु किं द्वैविध्यमित्यत आह—ज्ञानवतामित्यादि। ज्ञानवतामाप्तोपदेशेन वस्तुषु ज्ञानवतां प्रत्यक्षमनुमानं वा। कस्यचित् प्रत्यक्षं कस्यचिदनुमानमुपमानादीनामनयोरन्तर्भावात्। तद्दर्शितं तिस्रैषणीये। ननु अज्ञानवतां कतिधा परीक्षेत्यत आह—एतत् त्वित्यादि। एतत् तु द्वयमिति प्रत्यक्षमनुमानमुपदेशश्च इति परीक्षात्रयम्। एवमनेन प्रकारेण एषा द्विविधा परीक्षा सहोपदेशेन त्रिविधा

भावः। परीक्ष्यस्यार्थं भवतः श्रोतुमभिलषितमन्यथा आचक्षाण इति योजना। तत् समीक्ष्येति तद् वचनं समीक्ष्य यद्यौपाधिकं भवति, तद् यथोक्तं प्रतिवचनमित्यत्रैवाध्याये विगृह्य सम्भाषाविधावुक्तम्। अत्रेक्ष्योत्तरं वाक्यं पक्षान्तरवाक्यम्। पक्षान्तरमाह—सम्यगित्यादि। सम्यग् यदि तु ब्रूयादिति यदि सन्यायसम्भाषां ब्रूयात्। प्राप्तमित्युचितम्, अनुचिते तु वचनकाले सन्न्यादौ न वक्तव्यमेव। आप्तमेवेति यथार्थमेवेत्यर्थः॥ ७१॥

चक्रपाणिः—तदेव यथार्थमुत्तरं पूर्वश्लेषेण यथाक्रमेणाह—द्विविधेत्यादि। ज्ञानवतामित्याप्तोपदेशरूपशास्त्रजनितज्ञानवताम्। पक्षान्तरं परीक्षात्रैविध्यमाह—एतद्धीत्यादि। एतच्च परीक्षाया द्वैविध्यं त्रैविध्यञ्च त्रिविधरोगविशेषविज्ञानीय एव व्याख्यातम्।

तदिह भिषगादिषु संसार्य्य सन्दर्शयिष्यामः। इह कार्य्यप्राप्तौ कारणं भिषक्, करणं पुनर्भेषजं, कार्य्ययोनिर्धातुवैषम्यम्, कार्य्यं धातुसाम्यम्, कार्य्यफलं सुखावाप्तिः, अनुबन्धस्तु खल्वायुः, देशो

वा परीक्षा। इति कतिविधा परीक्षेत्यस्य प्रश्नस्योत्तरम्। ०। कतिविधं परीक्ष्यमिति प्रश्नस्योत्तरमाह—दशविधन्तु परीक्ष्यमिति। वमनादिकं प्रयोक्तु-कामस्य दशविधं परीक्ष्यं न तु जगति दशविधमेवेति। ननु चिकित्सायां किं किं तद्दशविधं परीक्ष्यमित्यतस्तत् दर्शयितुमाह—कारणादीत्यादि। कारणकरणकार्य्ययोनिकार्य्यकार्य्यफलानुबन्धदेशकालप्रवृत्त्युपाया इति दशकं यदग्रे उक्तं जगति सार्व्वशास्त्रिककार्य्यारम्भेऽभिहितं तद् दशविधं परीक्ष्यम्। ननु तद् दशविधमायुर्व्वेदे चिकित्सायां किंवा किं भवतीत्याकाङ्क्षायामाह—तदिहेत्यादि। तत् कारणादिदशकं इहायुर्व्वेदशास्त्रे चिकित्सासमारम्भे भिषगादिषु संसार्य्य संसरणं कृत्वा सन्दर्शयिष्यामः। इहेत्यादि। इहायुर्व्वेद-शास्त्रे कार्य्यप्राप्तौ चिकित्स्यप्राप्तौ कारणं चिकित्साकर्त्ता भिषक्, करणं पुनर्भेषजमिति युक्तियुक्तं गुणवच्चतुष्पादं भेषजं यद्यप्युक्तं तथाप्यत्र भिषजः कारणत्वेन पृथगुक्त्या भिषगितरद् द्रव्यातुरोपस्थातार इति गुणवत् त्रिपादम्। कार्य्ययोनिरिह धातुवैषम्यम्, ज्वरादीनां कार्य्याणां योनित्वात्। वातादि-धातुवैषम्यं हि कार्य्यत्वं ज्वरादित्वमापद्यते। सर्व्वत्रैव हेतुवैषम्यं कार्य्य-योनिः। कालबुद्धीन्द्रियार्थानां वैषम्यमयोगातियोगमिथ्यायोगास्तैर्वातादि-वैषम्यं कार्य्यं भवति। धातुसाम्यकरणन्तु ज्वरादिषु चिकित्सायाः कार्य्यम्। सुखावाप्तिः फलं कार्य्यस्य धातुसाम्यस्य निष्पाद्यं फलं सुखावाप्तिः। स्वस्थस्य धातुसाम्यमेव कार्य्यस्य रक्षणस्य योनिः कार्य्यं धातुसाम्यरक्षणं फलं सुखानुवृत्तिः। कार्य्यस्य धातुसाम्यरक्षणस्य फलं निष्पाद्यं सुखस्यानुवर्त्तनम् इति। अनुबन्धस्तु खल्वायुर्जीवितमित्यर्थः। भूमिरानूपादिरूपा आतुरः

भिषगादिषु संसार्य्येति भिषगादीनि चोपयुक्तान्युदाहरणानि कृत्वा। धातुवैषम्यमिति, विषमतां गता धातव एव हि विषमामवस्थां परित्यज्य समावस्थामापद्यमाना आरोग्याख्यस्य धातुसाम्यस्य समवायिकारणतया कार्य्ययोनितामापद्यन्ते। सुखावाप्तिरित्यारोग्यावाप्तिः। उक्तञ्च—"सुखसंज्ञकमारोग्यम्" इति। आयुश्चानुबन्धरूपम्। यद्यप्येतद् रोगिगतम् न वैद्यगतम्, तथापि वैद्येन काङ्क्षितत्वाद् वैद्यगतमेव तद्विज्ञेयम्। तेनानुबन्धलक्षणं कर्त्तारमभिप्रैतीति

भूमिरातुरश्च, कालः पुनः संवत्सरश्चातुरावस्था च, प्रवृत्तिः प्रतिकर्म्मसमारम्भः, उपायस्तु भिषगादीनां सौष्ठवमभिसन्धानञ्च सम्यक्। इहाप्यस्योपायस्य विषयः पूर्व्वेणैवोपायविषयेण व्याख्यातः। इति कारणादीनि दशसु भिषगादिषु संसार्य्य सन्दर्शितानि, तथैवानुपूर्व्व्या। एतद्दशविधं परीक्ष्यमुक्तञ्च ॥ ७२

चेति व्याधितः स्वस्थश्च पुरुषः। संवत्सर इत्यनेन तदन्तर्गतक्षणमुहूर्त्तदिनपक्षमासर्त्तूनां ग्रहणं बोध्यम्। आतुरावस्था चेति। आतुरस्यावस्था नानाविधा, स्वाभाविकी वैकारिकी च। तत्र स्वाभाविकी शैशवबाल्यपौगण्डकैशोरयौवनमध्यमस्थाविर्य्यातिस्थाविर्य्यरूपा। तत्रापि स्वाभाविकी दौर्ब्बल्यादौर्ब्बल्यसत्त्वबहुलरजोबहुलतमोबहुलब्राह्मसत्त्वादिवातलादिसमवातादित्वरूपा च, वैकारिकी तु साध्यासाध्यकृच्छ्रसाध्यदारुणातुर्य्यबलमांसादिक्षयादिरूपा प्रवृत्तिः। प्रतिकर्म्मसमारम्भ इति तत्तद्व्याधिप्रतिकारारम्भो भिषजः। उपायं दर्शयति—उपाय इत्यादि। भिषगादीनां सौष्ठवं सुष्ठुत्वं सम्यगभिसन्धानञ्च। ननूपायस्य भिषगादीनां सौष्ठवस्य सम्यगभिसन्धानस्य च वमनादिकार्य्यप्राप्तौ विषयः क इत्यत आह—इहाप्यस्येत्यादि। इह वमनादिकार्य्यप्राप्तौ अस्य भिषगादीनां सौष्ठवस्याभिसन्धानस्य चोपायस्य विषयः पूर्व्वेणैवोपायविषयेण कार्य्यकार्य्यफलानुबन्धेत्यादिना व्याख्यातः। तथा च धातुसाम्ये कार्य्ये कृतवमनादौ कर्म्मणि नोपायार्थोऽस्ति वमनादिकर्म्मकरणकालेऽपि नोपायार्थोऽस्ति। कृताच्च वमनादित उत्तरकालं सुखावाप्तिः आयुश्च नोपायार्थोऽस्ति परन्तु कर्त्तव्ये सति वमनादिकर्म्मणि भिषगादीनां सौष्ठवं सम्यगभिसन्धिश्चास्ति इति कर्म्मणः प्राक्कालो विषय इत्यर्थः। उपसंहरति। इति कारणादीनीत्यादि। तथैवानुपूर्व्व्येति कारणाद्यानुपूर्व्व्या। परीक्ष्यं समापयति—एतदित्यादि। इति कतिविधं परीक्ष्यमिति प्रश्नस्योत्तरम् ॥ ७२ ॥

यदुक्तम्, तदुपपन्नम्। कर्त्ता ह्यत्र भिषक्। तेनातुरगतमप्यायुर्भिषगपेक्षितत्वेन भिषज एव फलमिति ज्ञेयम्। प्रतिकर्म्म चिकित्सा। इहाप्यस्य इत्यादि, अत्रापि कार्य्यफलानुबन्धव्यतिरिक्तानां सौष्ठवमभिविधानञ्च यथोक्तन्यायेनोपाय इति दर्शयति ॥ ७२ ॥

तस्य यो यः परीक्ष्यविशेषो यथा यथा च परीक्षितव्यः, स तथा तथा च व्याख्यास्यते ।

कारणं भिषगित्युक्तमग्रे, तस्य परीक्षा, भिषङ् नाम स यो भिषति यः सूत्रार्थप्रयोगकुशलो यस्य चायुः सर्व्वथा विदितं यथावत् । स च सर्व्वधातुसाम्यं चिकीर्षन्

गङ्गाधरः—अथ कश्चात्र परीक्षाविशेषः कथञ्च परीक्षितव्य इति प्रश्नद्वयस्योत्तरं दर्शयितुमाह—तस्येत्यादि । तस्य दशविधस्य परीक्ष्यस्य यो यः कारणादिः प्रत्येकं परीक्ष्यविशेषः स व्याख्यास्यतेऽत ऊर्द्ध्वं तस्य च यो यः कारणादिर्यथा यथा परीक्षितव्यः स तथा तथा च व्याख्यास्यते । यागादौ चेदं दशविधं यथा—यजमानः कर्त्ता कारणम् । करणमृत्विग् याज्ञिकद्रव्यादिकम् । कार्य्ययोनिर्यजमानशरीरस्थनियतिरूपः परमात्मा पुरुषः । कार्य्यं धर्म्मः । नियतिरूपः पुरुष एव यागादिक्रियाभिर्विक्रियमाणो धर्म्मरूपेण निष्पद्यते । धर्म्मस्य कार्य्यस्य फलं स्वर्गप्राप्तिः । अनुबन्धः पुनर्जन्मपुत्रदारधनबान्धवादिप्राप्तिः । देशो याज्ञिकदेशः । कालः स स तत्तद् यागादिक्रियारम्भः । उपायस्तु यजमानादीनां सौष्ठवं तदभिसन्धानञ्चेति । एवं वैधेतरकर्म्मणि चाधर्म्मकार्य्यं काम्यकर्म्मफलत्यागो मोक्षः इति ।

कारणमित्यादिना भिषगादीनां परीक्षा । भिषङ्नामेत्यादि । यो भेषतीति भिषग्जये सौत्रधातुरौणादिकप्रत्ययेन व्युत्पन्नार्थः यः सूत्रार्थप्रयोगकुशलः प्रकरणात् आयुर्व्वेदीयसूत्रार्थप्रयोगयोर्दक्षः यस्य चायुर्यथावत् सर्व्वथा विदितं, पूर्व्वत्रासिद्धीयविधेरनित्यत्वात् क्तान्तप्रयोगेऽपि कर्त्तरि षष्ठी, स भिषक् नाम भवति । स च भिषक् चिकित्साकार्य्यप्राप्तौ कारणं सति धातुवैषम्ये सर्व्वधातुसाम्यं

चक्रपाणिः—कश्च परीक्ष्यविशेषः कथञ्च परीक्षितव्य इति प्रश्नद्वयोत्तरं दातुमाह—तस्येत्यादि । यो यो विशेष इति कारणादीनां यो यः कर्त्तृत्वादिः सजातीयाद्धेत्वादेः तथा विजातीयाच्च भेषजादेर्विशेष इत्यर्थः । यथा परीक्षितव्य इत्यस्योदाहरणम्, "कच्चिदहमस्य" इत्येवंग्रन्थवक्ष्यमाणं ज्ञेयम् । भिषज्यति चिकित्सति । सर्व्वथेति हिताहितसुखदुःखतया । यथावत् सर्व्वधातुसाम्यमित्यादिना, धातुसाम्यस्य चात्र कारणं भिषक् न केवलं परेण परीक्षणीयः, किन्त्वात्मना

आत्मानमेवादितः परीक्षेत। तद् यथा—गुणिषु * गुणतः कार्य्याभिनिर्वृत्तिं पश्यन् कच्चिदहमस्य कार्य्यस्याभिनिर्व्वर्त्तने समर्थोऽस्मि न वेति। तत्रैते भिषग्गुणाः, यैरुपपन्नो भिषग् धातुसाम्याभिनिर्व्वर्त्तने समर्थो भवति। तद् यथा—पर्य्यवदातश्रुतता परिदृष्टकर्म्मता दाक्ष्यं शौचं जितहस्तता उपकरणवत्ता सर्व्वेन्द्रियोपपन्नता प्रकृतिज्ञता प्रतिपत्त्यभिज्ञता चेति ॥ ७३ ॥

करणं पुनर्भेषजम्। भेषजं नाम तद् यदुपकरणायोपकल्प्यते,

चिकीर्षन् कर्त्तुमिच्छन् आदितः प्रथमत आत्मानं स्वं परीक्षेत। ननु कथं भिषगात्मानं परीक्षेतेत्यतस्तद् यथेत्युक्त्वाह—गुणिष्विति। गुणिषु पुरुषेषु धातुवैषम्यव्याधिषु साम्यरक्षणेषु वा वैद्यः स्वस्य गुणतः कार्य्याभिनिर्वृत्तावस्य कार्य्यस्य व्याधिनिवृत्तिरूपस्याभिनिर्व्वर्त्तने कच्चिदहं समर्थो भविष्यामि न वेत्येवं पश्यन्नात्मानमादौ परीक्षेत। एतदातुरीयैतद्व्याधिरूपधातुवैषम्यनिवृत्तिरूपस्य कार्य्यस्याभिनिर्व्वर्त्तनेऽहं समर्थो भवामि वा न वेति रूपेण स्वं परीक्षेत। ननु के वैद्यगुणा इत्यत आह—तत्रेत्यादि। यैरिति गुणैः। एतेन वक्ष्यमाणगुणवत्तायां भिषजोऽवश्यं साध्यव्याधिनिवृत्तिकरणे सामर्थ्यमिति ख्यापितम्। गुणानाह—तद् यथेत्यादि। पर्य्यवदातश्रुततादयो गुणा दशप्राणायतनिके व्याख्याताः ॥ ७३ ॥

गङ्गाधरः—चिकित्सायां करणस्य भेषजस्य परीक्ष्यविशेषस्य यथा परीक्षितव्यत्वं तदुक्त्वा करणं भेषजं लक्षयति—करणमित्यादि। करणं पुनर्भेषजमित्यत्र इत्युक्तमग्रे तस्य परीक्षेति पूर्व्ववचनस्यान्वयः। एवं परत्रापि सर्व्वत्र बोध्यम्। भेषजं नाम तदित्यादि। यत् विषमधातूनां धातुसाम्याभिनिर्वृत्तौ प्रयतमानस्य भिषज उपकरणायोपकल्प्यते तद् भेषजं नाम। न चात्र युक्ति-

प्यात्मानं स च परीक्षयेदिति दर्शयति। अथ कथमात्मानं परीक्षयेदित्याह—गुणेष्विति, आत्मानं गुणयोगतया परीक्षयेदित्यर्थः। गुणत इति हेतौ पञ्चमी। कच्चिदितीच्छाप्रकाशने। प्रतिपत्तिरूपत्रायामापदि झटिति कर्त्तव्यकरणम् ॥ ७३ ॥

चक्रपाणिः—विशेषतश्चोपायान्तेभ्य इत्यनेन, कार्य्ययोनिप्रवृत्तिदेशकालोपायेभ्योऽन्यत् यद् यत्

* गुणेष्विति चक्रः।

भिषजो धातुसाम्याभिनिर्वृत्तौ प्रयतमानस्य विशेषतश्चोपाया-न्तेभ्यः । तद्द्विविधं व्यपाश्रयभेदात्, दैवव्यपाश्रयं युक्तिव्यपाश्रयञ्चेति । तत्र दैवव्यपाश्रयं मन्त्रौषधिमणिमङ्गलवल्युपहारहोमनियमप्रायश्चित्तोपवासदानस्वस्त्ययनप्रणिपातगमनादि । युक्तिव्यपाश्रयं संशोधनोपशमने चेष्टाश्च दृष्टफलाः । एतच्चैव भेषजमङ्गभेदादपि द्विविधमेव भवति, अद्रव्यभूतं द्रव्यभूतं

युक्तं षोड़शगुणं चतुष्पादं भेषजमिति यदुक्तं तत् । भिषजः कर्त्तृत्वेन पृथगुक्तावपि स्वस्य सामर्थ्यासामर्थ्याभ्यामनुपकरणत्वात् । ननु योन्यादिभ्यो भेदाच्च यद्भिषजः कार्य्याभिनिर्वृत्तौ प्रयतमानस्योपकरणायोपकल्प्यते तद् भेषजं नामेति कारणादीनां सौष्ठवं सम्यगभिसन्धानञ्चेति भिषज उपकरणायोपकल्प्यते तेनोपायान्ता अपि करणं भवन्विति मनसि कृत्वाह—विशेषतश्चेत्यादि । उपायान्तेभ्यो विशेषतश्च । उपायान्तेभ्योऽष्टभ्यः कार्य्यकर्त्तु र्यदुपकरणायोपपद्यते तत् पुनर्भेषजं करणमभिधीयते । कार्य्ययोनिर्हि कार्य्यत्वेनाभिनिर्वर्त्तते, तेन कार्य्याभिनिर्वृत्ताविति कार्य्यपदेन व्यवच्छिद्यते । कार्य्यफलमपि च कार्य्यमेव कार्य्यानुबन्धश्च कार्य्यजन्यः शुभाशुभरूपः कार्य्यान्तर एवेति । तद्भेषजं विभजते—तदित्यादि स्फुटम् चेष्टाश्च दृष्टफला इत्यनेनादृष्टफलं चेष्टा दैवव्यपाश्रयरूपा । एतच्चैवेत्यादि । एतच्छब्देन संशोधनोपशमनचेष्टानां परामर्शवारणायाह—भेषजमिति । तेन एतद्दैवयुक्तिव्यपाश्रयं द्विविधं भेषजमङ्गभेदादपि द्विविधमेव । तद्विवृणोति—अद्रव्यभूतमित्यादि । सूचीकटाहन्यायेनाल्पत्वात्

कर्त्तु रुपकरणं भवतीति तत् करणम् इति दर्शयति । कार्य्ययोनिर्हि लोके विचार्य्यं कर्म्मतया साधकतमात् करणात् पृथगुच्यते । प्रवृत्त्युपाययोश्च कर्त्तृकरणादिधर्म्मत्वेन न करणसंज्ञा । देशकालौ तु न साधकतमौ । तेन उपायान्तेभ्यो यथोक्तविशेषेण यत् कर्त्तु रुपकरणं भवति, तत् करणम् । अत्र व्यपाश्रयद्वैविध्ये च सत्वावजयोऽपि भेषजमवरुद्धं ज्ञेयम्—सत्त्वावजयो हि दृष्टद्वारोपकारी युक्तिव्यपाश्रये, तथा अदृष्टद्वारोपकारी तु दैवव्यपाश्रये प्रविशति । अत एवोक्तं युक्तिव्यपाश्रयव्याकरणे—"चेष्टाश्च दृष्टफलाः" इति । चेष्टाशब्देन मनश्चेष्टापि सत्त्वावजयलक्षणा गृह्यते । पुनरौषधस्य प्रकारान्तरद्वैविध्यमाह—अङ्गभेदादित्यादि । अङ्गं शरीररूपं स्वरूपमिति यावत् । तेन स्वरूपभेदादित्यर्थः । द्रव्यभूतं द्रव्यरूपम्, एवमद्रव्यरूपम् । उपायाभि-

चेति। तत्र अद्रव्यभूतं तद् यदुपायाभिप्लुतम्। उपायो नाम भयदर्शनविस्मापनक्षोभणहर्षणभर्त्सन-बन्धनस्वप्नसंवाहनादिः अमर्त्त्यो * भावविशेषो यथोक्ताः सिद्ध्युपायाश्चेति। यत् तु द्रव्यभूतं वमनादिषु योगमुपैति तस्याप्येषा परीक्षा। इदमेवं-प्रकृति एवंगुणमेवंप्रभावमस्मिन् देशे जातमस्मिन् ऋतावेवं-

प्रतिलोमतन्त्रयुक्त्या त्वद्रव्यभूतं लक्षयति। तत्रेत्यादि। यदुपायाभिप्लुतम् उपायोपेतं यत् तदद्रव्यभूतम्। यथा लङ्घनादिकं भयप्रदर्शनाद्यर्थम्। दण्डोत्तोलनादिकरणादिकं कर्म्म। प्रसङ्गसङ्गत्यात्रैवोपायं निर्दिशति। लक्षणन्तु पूर्व्वमुक्तम् उपायो नामेत्यादि। अमर्त्त्योऽमानुषिको व्यापारः। यथोक्ता यस्मिन व्याधौ ये सिद्ध्युपायास्ते च इति एतदुपायाभिप्लुतं भयप्रदर्शनादिनिमित्तं दण्डोत्तोलनादिकं कर्म्म अद्रव्यभूतं भेषजं भवति, तस्य च परीक्षा नोपपद्यते इत्यतः प्रागद्रव्यभूतादिदं निर्द्दिष्टमल्पत्वात्।०। परीक्ष्यत्वाद् द्रव्यभूतमाह— यत् त्वित्यादि। तस्य संशमनस्य द्रव्यभूतस्यापिशब्दात् वमनादिषु यौगिकस्य द्रव्यभूतस्य च एषातः परं वक्ष्यमाणा परीक्षा। का परीक्षेत्यत आह—इदमेवमित्यादि। एवंप्रकृति ईदृशयोनिकम्। एवंप्रभावमीदृशाचिन्त्यक्रियम्।

प्लुतमिति उपायव्याप्तम् उपायग्रहणगृहीतमिति यावत्। एवमन्ये भयादयोऽमूर्त्तभावा न साक्षादारोग्यकारणानि भवन्ति, किं तर्हि शरीरस्थितानेव वातादीन् तथा कुर्व्वन्ति समत्वेनोत्पाद्यमानान्। न ह्यमूर्त्तानि मूर्त्तानां शरीरधातूनामुत्पत्तौ समवायिकारणानि भवन्ति, भेषजन्तु द्रव्यभूतं समशरीरोत्पादे समवायिकारणं भवत्येव। तेन द्रव्यस्यारोग्यं प्रति साधकतमत्वं साधु, अमूर्त्तानाम् उपायादीनां न भेषजवत् साधकतमत्वमिति कृत्वा द्रव्यजन्य एव धातुसाम्ये तेषामुपायत्वं युक्तम्। एवं सूक्ष्मया बुद्ध्या भयादीनामुपायत्वम्, स्थूलया तु बुद्ध्या भेषजव्यवहारश्च आचार्य्याभिमतो द्विविधभेषजेऽर्थेऽद्रव्यभूतभयादिग्रहणादुन्नीयते। न केवलमद्रव्यभूतं भेषजमुपायव्याप्तम्, किन्तु अन्येऽपि परिचारकग्रहणगृहीता एवेत्याह—यथोक्ताः सिद्ध्युपायाश्चेति। यथोक्ताः सिद्ध्युपायाश्च परिचारकादयोऽत्र दशविधपरीक्ष्ये तु साक्षादनुक्ता उपायाभिप्लुता एवेत्यर्थः। किंवा उपायाभिप्लुतमिति उपायमिश्रितम्। तत्र भयाद्यमूर्त्तभेषज एव यथोक्ताश्चोपायाः कारणादिसौष्ठवसम्यगभिविधानरूपा अद्रव्यभूतभेषजपक्षगृहीता इत्यर्थः। तेन भयादिषु च तथा उपायशब्दाभिधेयेषु च अद्रव्यभूतभेषजशब्दप्रयोगो भवतीति दर्शयति। ये तु, उपायान्ताभिप्लुतम् इति पठन्ति, ते देशकालावेव अद्रव्यभूतभेषजम् इति वदन्ति। वदन्ति च—द्रव्य-

* अमूर्त्त इति चक्रः।

गृहीतमेवं निहितमेवमुपस्कृतमनया च मात्रया युक्तमस्मिन् व्याधावेवंविधस्य च पुरुषस्यैतावन्तं दोषमपकर्षत्युपशमयति वा। यदन्यदपि चैवंविधं भेषजं भवेत् तच्चानेनान्येन वा विशेषेण युक्तमिति ॥ ७४ ॥

कार्य्ययोनिर्धातुवैषम्यम्, तस्य लक्षणं विकारागमः, परीक्षा त्वस्य विकारप्रकृतेश्चोनातिरिक्तलिङ्गावेक्षणं विकारस्य च साध्यासाध्यमृदुदारुणलिङ्गविशेषावेक्षणमिति ॥ ७५ ॥

एवं निहितम् ईदृशरूपेण ईदृशस्थाने स्थापितम्। एवमुपस्कृतमीदृशप्रयत्नेन भूषितम्। वमनाद्युपयोगगतसंशमनोपगतभेषजेभ्योऽन्येषां परीक्षार्थमाह— यदन्यदपीत्यादि। शस्त्रक्षारादिकं यदन्यदपि भेषजं तदनेनोक्तेनान्येन क्षुधारदुर्धारत्वादिरूपेण वा एषा भेषजपरीक्षा ॥ ७४ ॥

गङ्गाधरः—क्रमिकत्वात् कार्य्ययोनिपरीक्षार्थमाह—कार्य्ययोनिर्धातुवैषम्यम्, अत्रापि इत्युक्तमग्रे इत्यस्यान्वयः। तस्य धातुवैषम्यस्य विकारागम इति विकारो धातुवैषम्यमिति यदुक्तं तदत्र न विवक्षितं, परन्तु तस्य कार्य्यं ज्वरादिरूपं तस्यागम उत्पत्तिः। परीक्षेत्यादि। अस्य धातुवैषम्यतो विकारागमस्य परीक्षा तु विकारस्य ज्वरादेः प्रकृतेर्योनेर्वातादिशारीरमलस्य रसादिधातूपधातोश्च रजस्तमसोर्मानसमलयोः सत्त्वस्य च दूष्यस्य ऊनातिरिक्तलिङ्गावेक्षणम्। ऊनलक्षणावेक्षणेन धातूनां ह्रासतो व्याधिजन्म, अतिरिक्तलक्षणावेक्षणेन धातूनां वृद्धितो व्याध्यागमोऽनुमीयते। विकारस्य च धातुवैषम्यजनितस्य ज्वरादेः साध्यत्वादिलिङ्गविशेषावेक्षणञ्चेति प्रकारेण कार्य्ययोनिपरीक्षा कार्य्या ॥ ७५ ॥

शब्देन क्काथकल्कादुरपयोजनीयं द्रव्यं 'द्रव्यम्' उच्यते इति। एतच्च मनोहारि। अनेन चान्येनेति साधनभूतेन च एवंप्रकृत्या इत्यादिनोक्तेन तथा साध्येन च एवंविधस्य पुरुषस्य इत्यादिनोक्तेन विशेषेण युक्तमभूदित्यर्थः ॥ ७४ ॥

चक्रपाणिः—तस्य लक्षणं धातुवैषम्यं प्रत्युपपन्नमित्यर्थः। विकारप्रकृतेरिति विकारस्य प्रकृतेर्दोषस्येत्यर्थः ॥ ७५ ॥

कार्य्यं धातुसाम्यं, तस्य लक्षणं विकारोपशमः, परीक्षा त्वस्य रुगुपशमनं स्वरवर्णयोगः शरीरोपचयो बलवृद्धिरभ्यवहार्य्याभिलाषो रुचिराहारकाले कालेऽभ्यवहृतस्य चाहारस्य सम्यग्जरणं, निद्रालाभो यथाकालं वैकारिकाणां स्वप्नानाम् अदर्शनं सुखेन च प्रबोधनं वातमूत्रपुरीषरेतसां मुक्तिः सर्व्वाकारैर्मनोबुद्धीन्द्रियाणाञ्चाव्यापत्तिरिति ॥ ७६ ॥

कार्य्यफलं सुखावाप्तिः, तस्य लक्षणं मनोबुद्धीन्द्रियशरीर-तुष्टिः ॥ ७७ ॥

अनुबन्धस्तु खल्वायुः, तस्य लक्षणं प्राणैः सह संयोगः ॥ ७८ ॥

गङ्गाधरः—कार्य्यमित्यादि । कर्त्तुः कार्य्यमत्र धातुसाम्यमिति यदुक्तमग्रे तस्य लक्षणं विकारोपशमः ज्वराद्युपशमः । तस्य ज्वरादिविकारोपशमस्य परीक्षा तु रुगुपशमनमित्यादि रुगुपशमनं यातनोपशमनं, यातनोपशमनादिना ज्वराद्युपशमोऽनुमीयते, ज्वराद्युपशमनेन धातुसाम्यं धातुवैषम्याभावोऽनु-मीयते । सुखेन प्रबोधनं ज्ञेयेष्वर्थेषु सुखेन ज्ञानं भवति सुखेन च वातादीनाम् अधोवातादीनां मुक्तिस्त्यागः । अव्यापत्तिः सम्पत् । इत्येवं प्रकारेण कार्य्यपरीक्षा कार्य्या ॥ ७६ ॥

गङ्गाधरः—परीक्ष्यविशेषश्च कार्य्यफलं कथं परीक्षितव्यमित्यत आह—कार्य्य-फलमित्यादि । इत्युक्तमग्रे इत्यप्यत्र योज्यम् । तस्याः सुखावाप्तेर्लक्षणम् अनुमान-करणं मनसश्च बुद्धीन्द्रियाणाञ्च शरीरस्य च तुष्टिः परितोषः । शरीरान्तर्गतत्वेन कर्म्मेन्द्रियाणामनुपादानान्न न्यूनता । इत्थं कार्य्यफलं परीक्षितव्यम् ॥ ७७ ॥

गङ्गाधरः—नन्वनुबन्धः कथं परीक्षितव्य इत्यत आह—अनुबन्ध इत्यादि । अत्रापि इत्युक्तमग्रे इति योज्यम् । तस्यायुषो लक्षणं प्राणैः संयोगः । प्राणाः

चक्रपाणिः—सर्व्वाकारैरिति सर्व्वशुभलक्षणैः । सुखावाप्तिरित्यात्मगुणसुखप्राप्तिः । प्राणैः सह संयोग इति प्राणलक्षणवायुना योग इत्यर्थः । तेन प्राणशब्दस्यायुषो भिन्नार्थत्वाल्लक्ष्यलक्षणयो-र्भेदः ॥ ७६—७८ ॥

देशो भूमिरातुरश्च। तत्र भूमिपरीक्षा आतुरपरिज्ञानहेतोर्वा स्यात् औषधपरिज्ञानहेतोर्वा। तत्र तावदियं खलु आतुरपरिज्ञानहेतोः। तद् यथा—अयं कस्मिन् भूमिदेशे जातः संवृद्धो * व्याधितो वा, तस्मिंश्च भूमिदेशे मनुष्याणामिदमाहारजातमिदं विहारजातमिदमाचारजातमेतावच्च बलमेवंविधं सत्त्वमेवंविधं सात्म्यम् एवंविधो दोषः भक्तिरियमिमे व्याधयो हितमिदमहितमिदमिति †। औषधपरिज्ञानहेतोस्तु कल्पेषु भूमिपरीक्षा वक्ष्यते॥ ७९॥

पञ्च प्राणाख्यादयो वायवस्तैः सह संयोगस्तस्य लिङ्गं श्वासोच्छ्वासस्पन्दनवचनादिकं श्वासादिना प्राणैः संयोगोऽनुमीयते तेन चायुरनुमीयते। आयुषोऽभावमात्रं हि म्रियते मृत्युश्च प्राणवियोगेनानुमीयते प्राणवियोगश्च श्वासाद्यभावेनानुमीयते इत्थमायुः परीक्षितव्यम्॥ ७८॥

गङ्गाधरः—ननु परीक्ष्यविशेषश्च देशः कः कथञ्च परीक्षितव्य इत्यत आह—देश इत्यादि। ननु भूमिस्तु देशः किमर्थं परीक्ष्यते इत्यत आह—तत्रेत्यादि। तत्र भूम्यातुरयोर्मध्ये भूमिपरीक्षा आतुरपरिज्ञानहेतोः स्यात्। औषधपरिज्ञानहेतोश्च स्यात्। वा-द्वयं प्रत्येकप्राधान्यार्थम्। नन्वातुरपरिज्ञानहेतोर्भूमिपरीक्षा कथं कार्य्या इत्यत आह—तत्रेत्यादि। आतुरपरिज्ञानहेतोर्भूमिपरीक्षेत्यर्थो-लभ्यते। परीक्षा परीक्षणचिह्नम्। तद् यथेत्यादि। अयमातुरो योऽयं दृश्यते कस्मिन्नित्यस्य संवृद्ध इत्यनेन व्याधित इत्यनेन च सम्बन्धः। आहारादिज्ञानेन रोगाणां कारणज्ञानं व्याधितानां क्रियासहत्वासहत्वादिपरिज्ञानञ्च भवति। विहारः परिस्पन्दनव्यापारः। आचारो वैधावैधक्रियाहेतूप-

चक्रपाणिः—क्रमप्राप्तं देशमाह—देश इत्यादि।—आतुरशब्देनेह शङ्क्यमानातुर्य्यतया स्वस्थवृत्तोपदर्शनीयः स्वस्थोऽपि ग्राह्यः। सोऽपि हि परीक्ष्यत एव स्वस्थवृत्तप्रयोगार्थम्। परिशब्दो विशेषार्थः। तेन आतुरस्य सकलदेशकृतविशेषेण ज्ञानमातुरपरिज्ञानम्। एवं भेषजपरिज्ञानेऽपि देशकृतविशेषज्ञानं परिज्ञानं बोद्धव्यम्। समृद्ध इति वर्द्धितः। एवंविधं सात्म्यमित्योकसात्म्यमित्यर्थः। इदं हितमित्यनेन च देशापेक्षया विपरीतगुणसात्म्यं ब्रूते। प्रायो-

* समृद्ध इति चक्रः।　　† इतः परं "प्रायोग्रहणेन" इति चक्रेणाधिकं पठ्यते।

आतुरस्तु खलु कार्य्यदेशः, तस्य परीक्षा आयुषः प्रमाणज्ञानहेतोर्वा भवति बलदोषप्रमाणज्ञानहेतोर्वा। तत्र तावदियं बलदोषप्रमाणज्ञानहेतोः, दोषप्रमाणानुरूपो हि भैषज्य-प्रमाणविशेषो बलप्रमाणविशेषापेक्षो भवति। सहसा ह्यति-

श्वासादिव्यापारः। भक्तिरियं भजनशीलता। इत्यातुरपरिज्ञानहेतोर्भूमि-परीक्षा। शेषस्याह—औषधेत्यादि। कल्पेषु कल्पस्थानेषु॥ ७९॥

गङ्गाधरः—इति भूमिदेशपरीक्षामुक्त्वातुरदेशपरीक्षामाह—आतुरस्त्वित्यादि। नन्वातुरः कथं देशो भवति, कस्य देशत्वादित्यत आह—कार्य्यदेश इति। कार्य्यस्य धातुसाम्यस्य देशः स्थानं तस्मादातुरो देश उच्यते। आतुरस्य परीक्षापि द्विधा, तदाह—तस्येत्यादि। तस्यातुरस्य परीक्षा एका आयुषः प्रमाणज्ञानहेतोः स्यात्, द्वितीया आतुरस्य बलदोषप्रमाणज्ञानहेतोः स्यात्। वा-द्वयं प्रत्येकप्राधान्यार्थम्। प्रतिलोमतन्त्रयुक्त्यातुरस्य बलदोषप्रमाणज्ञानहेतोः परीक्षामाह—तत्र तावत् इत्यादि। बलदोषप्रमाणज्ञानहेतोरातुरस्य परीक्षेत्यर्थात् लभ्यते। ननु कुतो हेतोरातुरस्य बलदोषप्रमाणं ज्ञायते इत्यत आह—दोषेत्यादि। हि यस्मात् कर्त्तु-भिषजः कार्य्याभिनिर्वृत्तौ भैषज्ये प्रयोक्तव्ये भैषज्यस्य प्रमाणविशेषो दोष-प्रमाणानुरूप आतुरबलप्रमाणापेक्ष एव युक्तः कार्य्याभिनिर्वृत्तिकरो भवति न तु दोषाननुरूपो व्याधितस्य बलानपेक्षो वा। कुत इत्यत आह—सहसेत्यादि। हि

ग्रहणेनेति च्छेदः, प्रायोग्रहणेन न एकान्ततः परीक्षेत इति योजना, प्रायःशब्देन च, देशेनाहाराद्यनु-मानं निश्चितं किन्तु प्रायो भवतीति दर्शयति। कल्पेष्विति मदनादिकल्पेषु, तत्र यद्यपि प्रथम एव तु कल्पे भूमिपरीक्षा वक्तव्या, तथाप्यत्र कल्पेष्विति यद्व्यतिदेशेन कथनात् बहुवचनं कृतम्, तदुत्तरकल्पवक्तव्यान्यपि हि द्रव्याण्यपि यथोक्त एव देशे ग्राह्याणीति दर्शनार्थम्॥ ७९॥

चक्रपाणिः—भूमिरूपं देशमभिधायातुरमाह—आतुरस्तु खल्वित्यादि। कार्य्यदेश इति कर्त्तव्यधातुसाम्याधार इत्यर्थः, बलस्य दोषस्य च प्रमाणं बलदोषप्रमाणम्। इयमित्यग्रे "तस्मादातुरं परीक्षेत," इत्यादिग्रन्थवक्ष्यमाणा। अथ किमर्थं बलदोषपरीक्षा शरीरस्य कर्त्तव्येति प्रकरणार्थः। बलप्रमाणविशेषापेक्ष इति ;—यदि बलवच्छरीरं भवति, तदैव दोषप्रमाणापेक्षया

बलमौषधमपरीक्षकप्रयुक्तमल्पबलमातुरमतिपातयेत्। न हि अतिबलान्याग्नेयसौम्यवायवीयान्यौषधान्यग्निक्षारशस्त्रकर्म्माणि वा शक्यन्तेऽल्पबलैः सोढ़ुम्, असह्यातितीक्ष्णवेगित्वाद्धि सद्यःप्राणहराणि स्युः। एतच्चैव कारणमवेक्षमाणा हीनबलमातुरमविषादकरैः मृदुसुकुमारप्रायैरुत्तरोत्तरगुरुभिरविभ्रमैरनात्ययिकैश्चोपचरन्ति

यस्मात् अतिबलमातुरस्य बलमतिक्रान्तमतिशयबलवदौषधमपरीक्षकप्रयुक्तम् आतुरस्य बलं न परीक्ष्य भिषजा मूढ़ेन प्रयुक्तमल्पबलमातुरमतिपातयेत् मारयेद वा मृतकल्पं वा कारयेत्। अल्पबलमौषधन्त्वतिबलमातुरं न पातयेत् न वा व्याधिसाधकं भवति इत्यतोऽनात्ययिकत्वात् तन्नादावुदाहृत्याचार्य्य आदौ आत्ययिकत्वात् तु अतिबलभेषजस्याल्पबलातुरे प्रयोगदोषं प्रदर्शितवान्। नन्वाग्नेयः पुरुषोऽल्पबलोऽपि सौम्यमौषधमतिबलमपि सोढ़ुं शक्नोतीति कुतोऽल्पबलमातुरम् अतिबलमौषधमतिपातयेदित्यत अतिबलौषधस्याल्पबलातुरे प्रयोगोदाहरणमाह—न हीत्यादि। हि यस्मात् आग्नेयानि वा सौम्यानि वा वायवीयानि वाप्यौषधानि यद्यतिबलानि भवन्ति तदा तानि कानिचिदप्यतिबलान्यौषधानि नाल्पबलैः पुरुषैः सोढ़ुं शक्यन्ते, न चाग्निक्षारशस्त्रकर्म्माणि वाल्पबलैः सोढ़ुं शक्यन्ते। अल्पबलानाम् अग्न्याद्यसहत्वप्रदर्शनन्तु प्रसङ्गात् शिष्यज्ञानार्थं बोद्धव्यं न तेनासङ्गतम्। ननु तानि कानिचिदपि कुतो न सोढ़ुं शक्यन्ते अल्पबलैरित्यत आह—असह्यातीत्यादि। असह्यत्वादतिबलान्यौषधानि अल्पबलेषूपयोजितानि तेषां सद्यःप्राणहराणि स्युरतितीक्ष्णवेगित्वादग्निक्षारशस्त्रकर्म्माणि चाल्पबलेषूपयुक्तानि तेषां सद्यःप्राणहराणि स्युरित्यर्थः। तस्मादातुरस्य बलदोषप्रमाणं ज्ञातव्यम्। आतुरस्य बलदोषप्रमाणज्ञानफलमाह—एतच्चैवेत्यादि। एतच्चैव उक्तं तावत् कारणमवेक्षमाणा भिषजः हीनबलमातुरं तदातुराणाम् अविषादकरैर्मृदुसुकुमारप्रायैर्मृदुवीर्य्यसेवनसौख्यबाहुल्यैश्च पूर्व्वं वीर्य्यतः सौकु-

महौषधप्रमाणं भवति। विपर्य्ययेण व्याकरोति—अल्पबले रोगिणि अपरीक्षकप्रयुक्तमेवातिमात्रं भवतीत्युक्तम्, न तु परीक्षकप्रयुक्तम्। प्राणहराणि स्युरिति अल्पबल इत्यर्थः। अविषादकरं शरीरमनसोरग्लानिकरम्, उत्तरोत्तरं प्रमाणलक्षणगुरुत्वं येषां तैः। तेन दुर्ब्बले यदि महादोषः, स च भूममात्रभेषजसाध्यस्तथापि तदात्वव्यापत्तिभयान्न सहसा भेषजभूयस्त्वं कर्त्तव्यम्, किन्तूत्तरोत्तरमभ्यासवशाद बलमपेक्ष्य भेषजभूयस्त्वं कर्त्तव्यमिति दर्शयति। अविभ्रमैरिति

औषधैः, विशेषतश्च नारीः; ता ह्यनवस्थितमृदुविवृत*विक्लव-हृदयाः प्रायः सुकुमारा अबलाः परमसंस्तभ्याश्च†। तथा बलवति बलवद्व्याधिपरिगते स्वल्पबलमौषधमपरीक्षकप्रयुक्तमसाधकमेव भवति। तस्मादातुरं परीक्षेत प्रकृतितश्च विकृतितश्च सारतश्च

माद्य्यतश्च लघुभिरारभ्योत्तरोत्तरं गुरुभिर्वीर्य्यतः सौकुमार्य्यतश्च गुरुभिरविभ्रमैः देहमनसोर्विशिष्टभ्रमकरत्वाभावैरनात्ययिकैरत्ययकरत्वाभावैश्चौषधैः उपचरन्ति, न त्वतिबलैराग्नेयादिभिरौषधैरग्निक्षारशस्त्रकर्म्मभिश्च। अल्पबलेषु अविषादकराद्यौषधोपचरणप्रसङ्गात् जातिमात्रेणाल्पबलत्वाद्वा स्त्रीणां तदौषधोपचरणमाह—विशेषतश्चेत्यादि। विशेषतो नारीश्चाविषादकरैर्मृदुसुकुमारप्रायैरुत्तरोत्तरं गुरुभिरविभ्रमैरनात्ययिकैश्चौषधैरुपचरन्त्येतच्चैव कारणमवेक्षमाणा भिषजः। कुत इत्यत आह—ता इत्यादि। हि यस्मात् ता नार्य्योऽनवस्थितमृदुविवृतविक्लवहृदयाः अनवस्थितं न क्षणमप्येकरूपेणावस्थितं मृदु च विवृतं न संवृतं गोपनबुद्ध्या नावृतं विक्लवं विशिष्टभयशीलं हृदयं षडङ्गाङ्गविज्ञानेन्द्रियतदर्थसगुणात्ममनसां स्थानं यासां तास्तथा। क्लव ष् भये इति क्लव्धातो रूपं विक्लवम्। प्रायः बाहुल्येन सुकुमाराः प्रायोऽबलाश्च अल्पबलाः परमसंस्तभ्याः परमस्तम्भनीयाः न तु संशोधनीयास्तस्मादबलास्तु नारीः विशेषतोऽविषादकराद्यौषधैरुपचरन्ति एतत् कारणमवेक्षमाणा भिषज इति। ननु हीनबलं बलवदौषधं प्रयुक्तमेवं व्यापत्तिं करोतु बलवन्तश्चाल्पबलमौषधं किं युक्तं न वेत्यत आह—तथेत्यादि। बलवति पुरुषेऽल्पबलव्याधिमति बलवद्व्याधिपरिगते चाल्पबले वा असाधकं व्याधिनिवृत्तेरसाधकम्। तस्मात् उक्तकारणात् आतुरं बलदोषप्रमाणज्ञानहेतोः प्रकृतितश्चेत्यादितो

पाककालेऽप्यविकारिकैः। अनात्ययिकैरिति न महाविपत्तिकरैः। यथोक्तगुणभेषजं विशेषेण स्त्रीणां कर्त्तव्यमित्याह—विशेषत इत्यादि। हृदयशब्देन हृदयस्थं मन इति ज्ञेयम्। मृदुवृत्तम् अगम्भीरम्। विक्लवं स्तोकक्लेशाभिभवनीयम्। अनेन च दुर्व्वलचेतस्त्वमुक्तम्। परसंस्तम्भ्याः न स्वयमात्मानं सद्वचनात् स्तम्भयन्ति। तथेत्यादिनाऽल्पप्रमाणभेषजदोषमाह—बलवद्व्याधिपरिगते इति वचनेनाःय एव बलवान् व्याधिर्बलवतः, स एवाल्पभेषजासाध्यः, यस्तु बलवतोऽप्यबलः, सोऽल्पभेषजसाध्य एव परीक्षाहेतुमभिधाय यथा शरीरं परीक्षणीयं तदाह—

* वृत्तेति चक्रः। † परसंस्तभ्याश्च इति चक्रः।

संहननतश्च प्रमाणतश्च सात्म्यतश्च सत्त्वतश्चाहारशक्तितश्च व्यायामशक्तितश्च वयस्तश्चेति बलप्रमाणविशेषग्रहणहेतोः ॥ ८० ॥

तत्रेमान् प्रकृत्यादीन् भावाननुव्याख्यास्यामः। तद् यथा—शुक्रशोणितप्रकृतिं कालगर्भाशयप्रकृतिं मातुराहारविहारप्रकृतिं महाभूतविकारप्रकृतिञ्च गर्भशरीरमपेक्षते। एता

दशकतः परीक्षेत। प्रकृत्यादिज्ञानेनातुरस्य बलप्रमाणज्ञानं भवति, बलदोषप्रमाणज्ञानेनातुरबलप्रमाणापेक्षो दोषप्रमाणानुरूपो भेषजप्रमाणविशेषः कल्पयितुं शक्यते भिषजेति बोध्यम् ॥ ८० ॥

गङ्गाधरः—ननु प्रकृत्यादयः कीदृशा इत्यत आह—तत्रेमानित्यादि। तत्रादौ पुरुषाणां प्रकृतिं विवृणोति—तद् यथेत्यादि। शुक्रेत्यादि। मनुष्याणामित्यर्थात् बोध्यम्। तेन मनुष्याणां गर्भशरीरं शुक्रशोणितप्रकृतिं यादृशपुरुषस्य यादृशशुक्रं यादृशनार्य्या यादृशशोणितं तयोर्या प्रकृतिः। मातुः कालगर्भाशयप्रकृतिं मातुः कैशोरयौवनतारुण्यप्रौढ्याद्यावस्थिककाले गर्भाशयस्य या प्रकृतिः। मातुराहारविहारप्रकृतिं गर्भाधाने सति मातुर्यद्यदाहारोऽभ्यवहरणं यथा यथा च विहारस्तयोर्या प्रकृतिः। महाभूतविकाराः शौक्रा आर्त्तवा आहारद्रव्यरसजा आत्मजाश्च वातादयश्चत्वारश्चतुर्व्विधास्तेषामाकाशस्य च या या प्रकृतिः, तां तां प्रकृतिमपेक्षते। यथाशुक्रं यथार्त्तवं यथाकालगर्भाशयानुरूपं मातुराहारविहारानुरूपञ्च महाभूतविकारानुरूपञ्च गर्भशरीरम्

तस्मादित्यादि। बलप्रमाणविशेषग्रहणहेतोरित्यत्र देहबलं दोषबलञ्च सामान्येन गृह्यते। येन विकृतितः शरीरज्ञानं दोषबलज्ञानहेतोर्भवति, तदेव "प्रकृत्यादीनां विकृतिवर्ज्जानाम्" इत्यादिना वक्ष्यति। किंवा बलं शारीरं बलमेवोच्यते, तत्र च विकृतिबलेनापि शरीरबलं बुध्यत इति कृत्वा इह सामान्येनोक्तम्, उत्तरत्र तु विकृत्या दोषप्रमाणं प्रायो विज्ञायत इति कृत्वा "विकृतिबलत्रैविध्येन दोषबलत्रैविध्यमनुमीयते" इत्युक्तम्। प्रकृतिमिति स्वभावम्। एतानि तु शुक्रादीनि शुक्रशोणिते वा। यादृगवस्थो दोषस्तादृगगर्भे प्रकृतिर्भवति, यथा शुक्रशोणितमेलककाले यो दोष उत्कटो भवति स प्रकृतिमारभते, एवं गर्भाशयस्थश्च दोषः। मातुराहारविहारौ तत्कालीनौ यद्दोषकरणस्वभावौ, सा च प्रकृतिर्गर्भशरीरे भवति। एषु च प्रकृत्यारम्भकेषु कारणेषु यद्बलवद्भवति कारणान्तरवृंहितञ्च, तदेव प्रकृत्यारम्भकं भवति। कालादयश्च शुक्रशोणितमेव कुर्व्वन्तः प्रकृतिजनका

हि येन येन दोषेण एकेन अधिकेन समेन वा अनुबध्यन्ते तेन तेन दोषेण गर्भोऽनुबध्यते। सा सा दोषप्रकृतिरुच्यते सर्व्वमनुष्याणां गर्भादिप्रवृत्ता। तस्मात् श्लेष्मलाः प्रकृत्या केचित् पित्तलाः केचिद्वातलाः केचित् समधातवः केचिद् भवन्ति। तेषां लक्षणानि व्याख्यास्यामः॥ ८१॥

श्लेष्मा हि स्निग्धश्लक्ष्णमृदुमधुरसारसान्द्रमन्दस्तिमितगुरुशीतविज्जलाच्छः। तस्य स्नेहात् श्लेष्मलाः स्निग्धाङ्गाः, श्लक्ष्णत्वात् श्लक्ष्णाङ्गाः, मृदुत्वाद् दृष्टिसुखसुकुमारावदाताङ्गाः,

अपेक्षते। हि यस्मात् गर्भशरीरापेक्षणीयास्तु एताः शुक्रशोणितप्रकृतिकालगर्भाशयप्रकृतिमात्राहारविहारप्रकृतिमहाभूतविकारप्रकृतयो भवन्ति। येन येन एकेनाधिकेन समेन वा दोषेण वातपित्तकफरूपेणानुबध्यन्ते, तेन तेनैकेनाधिकेन समेन वा दोषेण गर्भोऽनुबध्यते तदारब्धत्वात् तदाकरत्वाच्च। तस्मात् स्वप्रकृतिशुक्रशोणिताद्यनुबन्धकदोषानुबन्धत्वात् सा सा स्वप्रकृतिशुक्रशोणिताद्यनुबन्धकदोषप्रकृतिमनुष्याणां गर्भादिप्रवृत्ता उच्यते, तस्मात् तेन तेन दोषेण प्रकृतिव्यपदेशात् केचित् प्रकृत्या श्लेष्मलाः केचित् प्रकृत्या पित्तलाः केचित् प्रकृत्या वातलाः केचित् समधातवः प्रकृत्या भवन्ति। एषां स्वस्थत्वम् आतुरत्वञ्च स्वास्थ्यचतुष्के व्याख्यातं तथा रोगानीकविमाने व्याख्यातम् ॥८१

गङ्गाधरः—श्लेष्मा हीत्यादि। सारं प्रसादरूपं, विज्जलः पिच्छिलः, अच्छः नैर्मल्यवान्। श्लेष्मणः प्रतिगुणतः श्लेष्मलानां लक्षणान्याह—तस्य स्नेहादित्यादि। तस्य श्लेष्मणः। तस्येत्यस्य सर्व्वत्रैवान्वयः। श्लक्ष्णाङ्गा अकर्कशाङ्गाः, दृष्टिसुखसुकुमारावदाताङ्गाः दर्शने सुखजनकं सुकुमारं मृदुभूतमवदातं

भवन्तीति। तन्त्रान्तरे शुक्रशोणितगतदोषेणैव प्रकृत्युत्पादो दर्शितः। गर्भादिप्रवृत्तेति गर्भस्यादिमेलके प्रवृत्ता। समैर्दोषैर्वृद्धैर्गर्भजन्मैव न भवति इति विकृतदोषत्रयं प्रकृतेरारम्भकमिति ज्ञेयम्। प्रकृतिविकारश्च सूत्रस्थान एव व्याकृतः॥ ८०।८१॥

चक्रपाणिः—मृदुत्वं जलकृतम्, जलञ्चावदातमिति मृदुत्वादेवावदातत्वम्। अशीघ्रशब्दः

माधुर्य्यात् प्रभूतशुक्रव्यवायापत्याः, सारत्वात् सारसंहत-स्थिरशरीराः, सान्द्रत्वादुपचितपरिपूर्णसर्व्वाङ्गाः, मन्दत्वान्मन्द-चेष्टाहारव्याहाराः, स्तैमित्यादशीघ्रारम्भक्षोभविकाराः, गुरु-त्वात् साराधिष्ठितगतयः, शैत्यादल्पक्षुत्तृष्णासन्तापस्वेददोषाः, विज्जलत्वात् सुश्लिष्टसारसन्धिबन्धनाः, तथाच्छत्वात् प्रसन्न-दर्शनाननाः प्रसन्नस्निग्धवर्णस्वराश्च भवन्ति। त एवंगुण-योगात् श्लेष्मला बलवन्तो वसुमन्तो विद्यावन्त ओजस्विनः शान्ता आयुष्मन्तश्च भवन्ति ॥ ८२ ॥

निर्म्मलमङ्गं येषां ते तथा। प्रभूतानि बहूनि शुक्रव्यवायापत्यानि येषां ते तथा। सारसंहतस्थिरशरीराः सारं बहुसारात्मकं संहतं निविड़ं स्थिरम् अचलं शरीरं येषां ते तथा। उपचितपरिपूर्णसर्व्वाङ्गाः उपचितानि समृद्धानि परिपूर्णानि अहीनानि सर्व्वाणि अङ्गानि येषां ते तथा। मन्दचेष्टाहारव्याहाराः मन्दा अल्पाश्चेष्टा क्रियाश्चाहाराश्च व्याहाराः वाचश्च येषां ते तथा। अशीघ्रारम्भक्षोभविकाराः अशीघ्रं चिरेण कालेन आरम्भः शरीर-वाङ्मनःप्रवृत्तिः क्षोभो मनसोऽकस्मात् क्षुब्धता विकारो मनसो वा शरीरस्य वा वैषम्यं येषां ते तथा। साराधिष्ठितगतयः सारेणाधिष्ठिताः प्रमत्त-गजेन्द्राणामिव गतयो येषां ते तथा। अल्पक्षुत्तृष्णासन्तापस्वेददोषा इति दोषपदेन दोषजव्याधावपि तृष्णादीनामल्पत्वमिति ख्यापितम्। विज्जल-त्वात् पैच्छिल्यात्। सुश्लिष्टसारसन्धिबन्धनाः सुष्ठु श्लिष्टानि संयुक्तानि सार-रूपेण सन्धीनां बन्धनानि येषां ते तथा। प्रसन्नदर्शनाननाः प्रसादरूपेण दर्शनं वस्तूनां दृष्टिराननञ्च येषां ते तथा। प्रसन्नस्निग्धवर्णस्वराः प्रसन्नौ च स्निग्धौ वर्णस्वरौ येषां ते तथा। वर्णप्रसादः स्निग्धवर्णत्वं प्रसन्नस्वरता श्रुत-मधुरस्वरता चेत्यर्थः। त एवंगुणयोगादिति ते श्लेष्मलाः पुरुषा एवमुक्त-गुणयोगात्। बलवन्त इति बलं विपुलतया वर्त्तते येषां ते बलवन्तः।

आरम्भादिभिः प्रत्येकमभिसम्बध्यते। सारगतयो न स्खलन्ति, अधिष्ठितगतयः सर्व्वेण पादेन महीमाक्रमन्ति। अवस्थितगतयः अवस्थितत्वेन पादगतिर्भवति। प्रसन्ने दर्शनानने यस्य स तथा। वसुमत्त्वादि प्रकृतिरूपं यद भवति, तत् प्रकृतिमात्राज ज्ञेयम् ॥ ८२ ॥

पित्तमुष्णं तीक्ष्णं द्रुतं विस्रमम्लं कटुकञ्च। तस्यौष्ण्यात् पित्तला भवन्त्युष्णासहाः, शुष्कसुकुमारावदातगात्राः, प्रभूत-पिप्लुव्यङ्गतिलकपिड़काः, क्षुत्पिपासावन्तः, क्षिप्रवलिपलित-खालित्यदोषाः, प्रायो मृदुकपिलाल्पश्मश्रुलोमकेशाः; तैक्ष्ण्यात् तीक्ष्णपराक्रमास्तीक्ष्णाग्नयः प्रभूताशनपानाः क्लेशासहिष्णवः दन्दशूकाः; द्रवत्वाच्छिथिलमृदुसन्धिवन्धमांसाः प्रभूतसृष्ट-स्वेदमूत्रपुरीषाः; विस्रत्वात् प्रभूतपूति-*-कक्षास्यशिरःशरीर-गन्धाः; कट्वम्लत्वादल्पशुक्रव्यवायापत्याः। त एवंगुणयोगात् पित्तला मध्यबला मध्यायुषो मध्यज्ञानविज्ञानवित्तोपकरणवन्तश्च भवन्ति ॥ ८३ ॥

ओजस्विन इति ओजो बलहेतुधातुविशेषस्तद्वन्तः। आयुष्मन्त इति दीर्घायुष्मन्तः, एतेनायुःप्रमाणज्ञानहेतोरातुरपरीक्षायामातुरस्य बलदोषप्रमाण-ज्ञानेषु प्रकृतितः परीक्षापेक्षत्वात् पूर्व्वं बलदोषप्रमाणज्ञानहेतोरातुरपरीक्षा उच्यते इति ज्ञापितम् ॥ ८२ ॥

गङ्गाधरः—पित्तप्रकृतिकानां लक्षणार्थमाह—पित्तमित्यादि। द्रुतं द्रवम्-विस्रमामगन्धि। तस्येति पित्तस्य, उष्णासहाः उष्णं सोढुमशक्ताः, शुष्क-सुकुमारावदातगात्राः शुष्कं निःस्नेहमथच सुकुमारमवदातञ्च निर्म्मलं गात्रं येषां ते तथा। प्रभूतपिप्लुव्यङ्गतिलकपिड़काः प्रभूता बहुलाः मुखव्यङ्गाः पिप्लवः शरीरदेशे व्यङ्गास्तिलकास्तिलकालकाः पिड़काश्च येषां ते तथा। क्षुत्पिपासावन्तः अधिकक्षुत्तृष्णावन्तः। तैक्ष्ण्यादित्यादि स्पष्टम्। द्रवत्वाद् इत्यादि च स्पष्टम्। विस्रत्वादित्यादि। प्रभूतपूतयो दुष्टाः कक्षादीनां गन्धा येषां ते तथा। कट्वम्लत्वादित्यादि स्पष्टम्। त एवमित्यादि मध्यानि ज्ञानं शास्त्रज्ञानं विज्ञानं तदर्थनिश्चयः वित्तं धनम् उपकरणं दोलाश्वगजादि, तानि सन्ति येषां तेषाम् ॥ ८३ ॥

चक्रपाणिः—दंदशूकाः पुनःपुनर्भक्षणशीलाः; प्रभूताशनस्तु बहुभक्षणत्वेन। पूतिवक्षः-

---

* प्रभूतपूतिवक्षःकक्षेत्यादि पाठः चक्रसम्मतः।

वातस्तु खलु रूक्षलघुचलबहुशीघ्रशीतपरुषविशदः। तस्य रौक्ष्याद्वातला रूक्षापचिताल्पशरीराः प्रततरूक्षक्षामभिन्न*सक्त-जर्ज्जरस्वरा जागरूकाश्च भवन्ति। लघुत्वाल्लघुचपलगतिचेष्टाहार-विहाराः, चलत्वादनवस्थितसन्ध्यक्षिभ्रूहन्वोष्ठजिह्वाशिरःस्कन्ध-पाणिपादाः, बहुत्वाद् बहुप्रलापकण्डराशिराप्रतानाः, शीघ्रत्वात् शीघ्रसमारम्भक्षोभविकाराः शीघ्रत्रासरागविरागाः श्रुतग्राहिणः अल्पस्मृतयश्च, शीतत्वाच्छीतासहिष्णवः प्रततशीतकोद्वेपक-स्तम्भाः, पारुष्यात् परुषकेशश्मश्रुलोमनखदन्तवदनपाणि-पादाः, वैशद्यात् स्फुटिताङ्गावयवाः सततसन्धिशब्दगामिनश्च भवन्ति। त एवंगुणयोगाद्वातलाः प्रायोऽल्पबलाश्चाल्पायुष-श्चाल्पापत्याश्चाल्पसाधनाश्चाल्पधनाश्च भवन्ति॥ ८४॥

गङ्गाधरः—वातप्रकृतिलक्षणार्थमाह—वातस्त्वित्यादि। रूक्षादिविशदान्तो द्वन्द्वस्ततः परं मत्वर्थीयोऽच्प्रत्ययः। तस्येति वातस्य। रूक्षमपचितं कृशमल्पं ह्रस्वं शरीरं येषां ते तथा। प्रततेत्यादि। प्रततं निरन्तरं विस्तरेण वा रूक्षः कर्कशः क्षामः क्षीणः भिन्नो भङ्गरूपः सक्तोऽव्यक्तः जर्ज्जरः असंहतः स्वरो येषां ते तथा, जागरूकाश्च भवन्ति। लघुत्वात् लाघवात् लघु शीघ्रं चपला चञ्चलरूपा गतिश्च चेष्टा चाहारश्च विहारश्च येषां ते तथा, लघुचपलयोः सर्व्वत्रान्वयः। अनवस्थिताः अस्थिराः सन्ध्यादयो येषां ते तथा, बहुत्वादिति विच्छेदस्वभावात्, शीघ्रत्वात् शीघ्रकरत्वात् शीघ्रसमारम्भादयः अचिरात् समारम्भादयस्त्रासादयश्च, श्रुत-ग्राहिणः श्रुतमात्रं ग्रहीतुं धारयितुं शीलं येषां ते तथा, अल्पस्मृतयश्चेत्यचिर-स्थायिस्मृतयः, शीतासहिष्णवः शीतं सोढुमशीलाः, प्रततं शीतकं शैत्यम् उद्वेपक उत्कम्पता स्तम्भश्च येषां ते तथा, परुषाः निःस्नेहत्वेन खराः केशादयो येषां ते तथा, स्फुटिताः पाटिता अङ्गावयवा येषां ते तथा, सततं गमने

प्रभृतिषु गन्धो येषां ते तथा। प्रततः प्रसृतः। भिन्नो भग्नपात्रध्वनिसमः। मन्दो हीनः। सक्तो बद्धः। सततसन्धिशब्दगामिन इति सन्धिस्फुटनशब्दवन्तः॥ ८३।८४॥

* इतः परं मन्द इत्यधिका पाठः क्वचित्।

संसर्गात् संसृष्टलक्षणाः, सर्व्वगुणसमुदितास्तु समधातवः। इत्येवं प्रकृतितः परीक्षेत ॥ ८५ ॥

विकृतितश्चेति। विकृतिरुच्यते विकारः। तत्र विकारं हेतु-दोषदूष्यप्रकृतिदेशकालबलविशेषैर्लिङ्गतश्च परीक्षेत। न ह्यन्तरेण हेत्वादीनां बलविशेषं व्याधिबलविशेषोपलब्धिः। यस्य हि व्याधे-र्दोषदूष्यप्रकृतिदेशकाल*साम्यं भवति महच्च हेतुलिङ्गबलम्, स व्याधिर्बलवान्। तद्विपर्य्ययश्चाल्पबलः, मध्यबलस्तु दोषदूष्या-दीनामन्यतमसामान्याद्धेतुलिङ्गमध्यबलत्वाच्चोपलभ्यते ॥ ८६ ॥

सन्धयः शब्दायन्ते येषां तथाविधं गन्तुं शीलं येषां ते सततसन्धिशब्दगामिनः, प्रायेणाल्पबलाः क्वचिन्मध्यमबला अपि भवन्ति। शेषमेवं स्पष्टम् ॥ ८४ ॥

गङ्गाधरः—संसृष्टत्वात् कफादीनां द्विकाः संसर्गात् संसृष्टलक्षणा उक्त-कफादीनां लक्षणानां तत्तद्दोषप्राकृतलक्षणाः। सर्व्वगुणसमुदितास्तु सर्व्वेषां वातपित्तकफानां प्रकृतिस्थानां सर्व्वे गुणाः समुदिता येषां ते तथा ॥ ८५ ॥

गङ्गाधरः—क्रमिकत्वात् विकृतितश्चातुरस्य परीक्षां दर्शयति—विकृतित-श्चेत्यादि। विकृतिरुच्यते विकार इति। विकारोऽत्र धातुवैषम्यनिमित्तो ज्वरादिः। न तु धातुवैषम्यं ज्वरादितोऽनुमेयत्वेनाप्रत्यक्षत्वात्। हेतुना दोषेण दूष्येण प्रकृत्या देशेन कालेन बलेन लिङ्गतश्च परीक्षेत। कुतो हेत्वादिविशेषैः लिङ्गतश्च परीक्षेत विकृतिमिति? अत आह—न हीत्यादि। हेत्वादीनां बलविशेषमन्तरेण यस्माद्व्याधिबलविशेषोपलब्धिर्न भवति। कुत इत्यत आह—यस्येत्यादि। तद्विपर्य्ययः दोषदूष्यादीनामसाम्यम्। दोषदूष्यादीनामन्यतम-सामान्याद्धेतुलिङ्गमध्यबलत्वाच्च। हेतुरसात्म्येन्द्रियार्थसंयोगादिः ॥ ८६ ॥

चक्रपाणिः—सर्व्वगुणसमुदिता इति सर्व्वप्रकृतियुक्ताः प्रशस्तगुणयुक्ताः,—यदुक्तं वागभटे—"समधातुः समस्तासु श्रेष्ठः" इति। यदि च प्रशस्तगुणता न स्यात्, न तदा श्रेष्ठत्वं स्यात्। साम्यस्थितास्च दोषाः साम्यप्रभावादेव गुणान् परान् कुर्व्वते, न दोषान् इति ज्ञेयम्। साम्यं भवतीति परस्परतुल्यगुणता भवति। महच्च हेतुलिङ्गबलमिति हेतवो लिङ्गानि च बलवन्ति

* बल इत्यधिकः पाठः क्वचिद् दृश्यते।

सारतश्चेति। साराण्यष्टौ पुरुषाणां बलमानविशेषज्ञानार्थम् उपदिश्यन्ते त्वगरक्तमांसमेदोऽस्थिमज्जशुक्रसत्त्वानीति।

तत्र स्निग्धश्लक्ष्णमृदुप्रसन्नसूक्ष्माल्पगम्भीरसुकुमारलोमा सप्रभेव च त्वक् त्वक्साराणाम्। सा सारता सुखसौभाग्यैश्वर्य्योपभोगबुद्धिविद्यारोग्यप्रहर्षणान्यायुश्चानित्वरमाचष्टे ॥ ८७ ॥

कर्णाक्षिमुख-जिह्वानासौष्ठपाणिपादतल-नख-ललाट-मेहनं स्निग्धरक्तवर्णं श्रीमद् भ्राजिष्णु रक्तसाराणाम्। सा सारता सुखमुद्धतां मेधां मनस्वित्वं सौकुमार्य्यमनतिबलमुष्णासहिष्णुतां चाचष्टे ॥ ८८ ॥

शङ्खललाटकृकाटिकाक्षिगण्डहनुग्रीवास्कन्धोदर-कक्ष-वक्षः-पाणिपादसन्धयस्तु स्थिरगुरुशुभमांसोपचिता मांससाराणाम्। सा सारता क्षमां धृतिमलौल्यं वित्तं विद्यां सुखमार्ज्जवं बलमारोग्यमायुश्च दीर्घमाचष्टे ॥ ८६ ॥

गङ्गाधरः—सारतः परीक्षामाह—सारतश्चेत्यादि। सत्त्वं मनः, न तु सत्त्वगुणः तदाश्रयत्वात्। तत्रेत्यादि स्पष्टम्। सा सारतेत्यादि स्पष्टार्थम्। आयुश्चानित्वरम् अगत्वरमायुश्चाचष्टे व्यनक्ति ॥ ८७ ॥

गङ्गाधरः—रक्तसाराणां पुंसां स्निग्धरक्तं श्रीमद् भ्राजिष्णु च कर्णादिकम्। उद्धतां विपुलां मेधाम्। अनतिबलं मध्यबलम् ॥ ८८ ॥

गङ्गाधरः—शङ्खो ललाटैकदेशः, ललाटो ललाटस्य मध्यमदेशः। कृकाटिका घाटा। एते शङ्खादयः स्थिरा गुरवश्च शुभाश्च मांसोपचिताश्च भवन्ति। बलं दीर्घम् अतुलम्, आयुश्च दीर्घम् ॥ ८९ ॥

भूयांसि च। अन्यतमसामान्यादिति दोषादीनां सामान्ये केनचित् केनचिदसामान्ये सति इत्यर्थः ॥ ८५।८६ ॥

चक्रपाणिः—सारतश्चेत्यादौ सारशब्देन विशुद्धतरो धातुरुच्यते। सप्रभेति प्रभायुक्ता। त्वक्साराणामिति च्छेदः। तथेयं सारता किं करोतीत्याह—सा सारतेत्यादि। एवमन्यत्रापि सारतेति व्याख्यातव्यम् ॥ ८७ ॥

वर्णस्वरनेत्रकेशलोमनखदन्तौष्ठमूत्रपुरीषेषु विशेषेण स्नेहः मेदःसाराणाम् सा सारता वित्तैश्वर्य्यसुखोपभोगदैन्यार्ज्जवं सुकुमारोपचारताञ्चाचष्टे ॥ ९० ॥

पार्ष्णिगुल्फजान्वरत्निजत्रुचिवुकशिरःपर्व्वस्थूलाः स्थूलास्थि-नखदन्ताश्चास्थिसाराः । ते महोत्साहाः क्रियावन्तः क्लेशसहाः सारस्थिरशरीरा भवन्त्यायुष्मन्तश्च ॥ ९१ ॥

मृद्वङ्गा बलवन्तश्च स्निग्धवर्णस्वराः स्थूलदीर्घवृत्तसन्धयश्च मज्जसाराः । ते दीर्घायुषो बलवन्तः श्रुतविज्ञानवित्तापत्य-सम्मानभाजश्च भवन्ति ॥ ९२ ॥

सौम्याः सौम्यप्रेक्षिणः क्षीरपूर्णलोचना इव प्रहर्षबहुलाः स्निग्धवृत्तसारसमसंहतशिखरदशनाः प्रसन्नस्निग्धवर्णस्वराः भ्राजिष्णवो महास्फिचश्च शुक्रसाराः । ते स्त्रीप्रियाः प्रियोपभोगाः* बलवन्तः सुखारोग्यवित्तैश्वर्य्यसम्मानापत्यभाजश्च भवन्ति ॥९३॥

गङ्गाधरः—मेदःसाराणां वर्णादिषु स्नेहः, वित्तं धनादि, ऐश्वर्य्यं प्रभुता ॥ ९० ॥

गङ्गाधरः—अस्थिसाराः स्थूलपार्ष्ण्यादयः स्थूलास्थिदन्ताश्च । तेऽस्थि-सारा महोत्साहादिमदादयः सारस्थिरशरीराः साररूपेण स्थिरमचलं शरीरं येषां ते तथा ॥ ९१ ॥

गङ्गाधरः—मज्जसारास्तु मृद्वङ्गादयः । स्थूलाश्च दीर्घाश्च वृत्ताश्च सन्धयो येषां ते तथा । ते मज्जसाराः श्रुतमधीतं विज्ञानादिकञ्च भजन्ते ॥ ९२ ॥

गङ्गाधरः—शुक्रसारास्तु सौम्या इत्यादयः । प्रहर्षबहुला मैथुनबहुलाः । स्निग्धाश्च वृत्ताश्च सारभूताश्च समाश्च संहताश्च शिखरदशना येषां ते तथा । स्त्रीप्रियाः स्त्रीणां प्रियाः ॥ ९३ ॥

चक्रपाणिः—श्रीमदिति शोभायुक्तम् । अरत्निः कफोणिका । शिखरदशना शोभनदशनाः ।

* स्त्रीप्रियोपभोगा इति चक्रः ।

स्मृतिमन्तो भक्तिमन्तः कृतज्ञाः प्राज्ञाः शुचयो महोत्साहा दक्षा धीराः समरविक्रान्तयोधिनस्त्यक्तविषादाः सुव्यवस्थितगति-गम्भीरबुद्धिचेष्टाः कल्पनाभिनिवेशिनश्च * सत्त्वसाराः, तेषां स्वलक्षणैर्गुणा व्याख्याताः ॥ ९४ ॥

तत्र सर्व्वैः सारैरुपेताः पुरुषा भवन्त्यतिबलाः परमसुख-युक्ताः क्लेशसहाः सर्व्वारम्भेष्वात्मनि जातप्रत्ययाः कल्याणाभि-निवेशिनः स्थिरसमाहितशरीराः सुसमाहितगतयः सानुनाद-स्निग्धगम्भीरमहानिस्वनाः सुखैश्वर्य्यवित्तोपभोगसम्मानभाजो मन्दजरसो मन्दविकाराः प्रायस्तुल्यगुणविस्तीर्णापत्याश्चिर-जीविनश्च ॥ ९५ ॥

गङ्गाधरः—स्मृतिमन्त इत्यादि। समरविक्रान्तयोधिनः समरे मल्लयुद्धे वा शस्त्रास्त्रयुद्धे वा वाग्युद्धे वा व्यवहारयुद्धे वा विक्रान्ताः सन्तो योद्धुं शीलं येषां ते तथा। सुव्यवस्थिता गतिर्गम्भीरा बुद्धिश्चेष्टा च येषां ते सुव्यवस्थित-गतिगम्भीरबुद्धिचेष्टाः। कल्पनाभिनिवेशिनः कल्पनायां क्लृप्तीकरणेऽभि-निवेशशीलाः। तेषां स्वलक्षणैः स्मृतिमत्तादिभिर्गुणाः कर्म्माणि व्याख्याताः। स्मृतिमत्तादिकार्य्याणि स्मृत्यादीनि भवन्तीत्यर्थः ॥ ९४ ॥

गङ्गाधरः—एतैः सारैर्बलभेदान् दर्शयति—तत्रेत्यादि। सर्व्वारम्भेषु सर्व्वासु क्रियासु समर्थत्वेनात्मनि प्रत्ययशालिनः। कल्याणे शुभेऽभि-निवेशिनः। स्थिरं समाहितं संहतं शरीरं येषां ते तथा। सुसमाहितगतयः सुष्ठु समाहिता गतिर्येषां ते तथा। सानुनादस्निग्धगम्भीरमहानिस्वनाः अनुनादेन सह वर्त्तमानः स्निग्धो गम्भीरश्च महान् निस्वनो येषां ते तथा, प्रतिध्वनिजनक-स्निग्धगम्भीरमहानादा इत्यर्थः। मन्दा अल्पा जरा येषां ते तथा। मन्द-विकारा अल्परोगवन्तः। प्रायस्तुल्यगुणा विस्तीर्णा येषां तान्यपत्यानि येषां ते तथा ॥ ९५ ॥

श्रीप्रिय उपभोगः संभोगो येषां ते तथा। समरे विक्रम्य योधयन्तीति समरविक्रान्तयोधिनः। अवस्थिता इति परिस्थिताः। तुल्यगुणविस्तीर्णापत्या इति जनितात्मसदृशापत्याः। प्रायः

* कल्याणाभिनिवेशिनश्च इति पाठान्तरम्।

अतो विपरीतास्त्वसाराः। मध्यानां मध्यैः सारविशेषैर्गुणविशेषा व्याख्याताः। इति साराण्यष्टौ पुरुषाणां बलप्रमाणविशेषज्ञानार्थमुपदिष्टानि भवन्ति ॥ ९६ ॥

कथं नु शरीरमात्रदर्शनादेव भिषगत्र मुह्येदयमुपचितत्वाद् बलवानयमल्पबलः कृशत्वादयं महाबलवान् महाशरीरत्वादयमल्पशरीरत्वाद् दुर्ब्बल इति। दृश्यन्ते ह्यल्पशरीराः कृशाश्चैके बलवन्तः, तत्र पिपीलिकाभारवहनवत् सिद्धिः। अतश्च सारतः परीक्षा इत्युक्तमेव ॥ ९७ ॥

संहननतश्चेति। संहननं संहतिः * संयोजनमित्येकोऽर्थः। तत्र समसुविभक्तास्थि सुबद्धसन्धि सुनिविष्टमांसशोणितं सुसंहतं

गङ्गाधरः—अतोऽष्टसारेभ्यो विपरीता भिन्नलक्षणयुक्ता असाराः। मध्यैः सारविशेषैरेकद्विसारलक्षणेतरसारलक्षणैर्मध्यानां मध्यसाराणां गुणविशेषाः तदेकद्विसारगुणेतरगुणविशेषा व्याख्याताः। एतेन असारा अल्पबला अल्पायुषश्च भवन्ति। मध्यसारा मध्यबला मध्यायुषश्च भवन्ति इति बोध्यम् ॥ ९६ ॥

गङ्गाधरः—एतदष्टसारादीनामतिबलादिवचने संशयमाह—कथमित्यादि। बलवानिति उपचितबलवान्, महाबलोऽतिशयबलवान्, दुर्ब्बलः क्षीणबलः, अल्पबलस्तु स्वाभाविकाल्पत्वात् भेदः। मोहं दर्शयितुमुत्तरमाह—दृश्यन्ते ह्यल्पेत्यादि। अतश्च शरीरमात्रदर्शनादेवातिबलादीनां ज्ञानाभावात् सिद्धिर्भवति सारतः परीक्षा इत्युक्तम्। सारतः परीक्षां विना पिपीलिकाभारवहनं न हि शरीरमात्रदर्शनात् महाबलज्ञानेन भवति ॥ ९७ ॥

गङ्गाधरः—अथ संहननतश्चातुरपरीक्षामाह—संहननतश्चेत्यादि। संहननं विवरीतुं तत्पर्य्यायमाह—संहननमिति। समसुविभक्तेत्यादि। समं यथायोग्यं सुष्ठु विभक्तमस्थि यत्र तत्, सुष्ठु बद्धाः सन्धयो यत्र तत्, सुष्ठु निविष्टे

शब्देन नियमनं निषेधयति। मध्यानामिति स्तोकसाराणाम्। मध्यैः सारविशेषैरिति ये यत्र सम्भवन्ति सारास्तथा सारभूतैरित्यर्थः। उपचितत्वादिति स्थूलत्वात्। महाशरीरत्वादिति

* सङ्घात इति वा पाठः।

शरीरमित्युच्यते। तत्र सुसंहतशरीराः पुरुषा बलवन्तो विपर्य्ययेणाल्पबलाः प्रवरावरमध्यत्वात् संहननस्य मध्यबला भवन्ति ॥ ९८ ॥

प्रमाणतश्चेति। शरीरप्रमाणं पुनर्यथास्वेनाङ्गुलिप्रमाणेन उपदिश्यते, उत्सेधविस्तारायामैर्यथाक्रमम्। तत्र पादौ चतुर्द्दशाङ्गुलौ, जङ्घे त्वष्टादशाङ्गुले षोड़शाङ्गुलिपरिक्षेपे च, जानुनी चतुरङ्गुले षोड़शाङ्गुलिपरिक्षेपे च, त्रिंदशङ्गुलिपरिक्षेपावष्टा-

मांसशोणिते यत्र तत् सुसंहतं शरीरम्। सुसंहतशरीरगुणमाह—तत्रेत्यादि। बलवन्त इति अल्पमध्यबलभिन्नबलाः। विपर्य्ययेण असुसंहतशरीरा असुसंहननन्तु सुसंहननभिन्नरूपं किञ्चित्संहतशरीरत्वात्। प्रवरावरमध्यत्वात् संहननस्य प्रवरः सुसंहननलक्षणवत्ता, अवरस्तद्विपर्य्ययलक्षणवत्ता न सुसंहननलक्षणवत्ता नासुसंहननलक्षणवत्ता ताभ्याञ्च मध्यत्वात् मध्यमबला भवन्ति इति युक्तिः ॥ ९८ ॥

गङ्गाधरः—अथ प्रमाणतः परीक्षामाह—प्रमाणतश्चेत्यादि। यथास्वेन स्वस्वाङ्गुलिप्रमाणेन। उत्सेध इत्युच्चतः, विस्तार इति विस्तीर्णत्वात्, आयाम इति दैर्घ्यात्। स्वेन स्वेनाङ्गुलीमानेन पादौ चतुर्द्दशाङ्गुलौ। सुश्रुते तु स्वैरङ्गुलमानैः पादाङ्गुष्ठप्रदेशिन्यौ द्व्यङ्गुलायते। प्रदेशिन्यास्तु मध्यमानामिकाकनिष्ठाः यथोत्तरं पञ्चमभागहीनाः। चतुरङ्गलायते पञ्चाङ्गुलविस्तृते प्रपदपादतले। पञ्चचतुरङ्ग लायतविस्तृता पार्ष्णिश्चतुर्द्दशाङ्गुलायतः पाद इति सुश्रुतः। जङ्घे त्वष्टादशाङ्गुले, षोड़शाङ्गलिपरिक्षिपे षोड़शाङ्गुलिपरिणाहे। अष्टादशाङ्गुला जङ्घा इति सुश्रुतः। किन्तु चतुर्द्दशाङ्गलपरिणाहानि पादगुल्फजङ्घाजानुमध्यानीति वचनेन विरोधेऽपि दीर्घायुष्ट्वव्याघाताभावो बोध्यः। जानुनी चतुरङ्गुले

अतिप्रमाणशरीरत्वात्। पिपीलिकाभारहरणवदिति स्वल्पा पिपीलिका यथा सारशरीरत्वेन महान्तं भारं नयन्ति, तथान्ये कृशशरीराश्चेत्यर्थः। सङ्घात इति निविड़सन्धान इत्यर्थः ॥ ८८—९८ ॥

चक्रपाणिः—प्रमाणतश्चेत्यादिना प्रशस्तं प्रमाणमङ्गावयवानामित्याह। पादौ उत्सेधेन चत्वारि, विस्तारेण षट, दैर्घ्येण चतुर्द्दशाङ्गुलानीति यथाक्रमं भवतः। जङ्घा जान्वध उच्यते।

दशाङ्गुलावूरू, षडङ्गुलिदीर्घौ वृषणावष्टाङ्गुलिपरिणाहौ, शेफः षडङ्गुलिदीर्घं पञ्चाङ्गुलिपरिणाहम्, द्वादशाङ्गुलिपरिणाहो भगः, षोड़शाङ्गुलिविस्तारा कटी, दशाङ्गुलं वस्तिशिरः, द्वादशाङ्गुलमुदरं दशाङ्गुलिविस्तीर्णञ्च, दशाङ्गुलिविस्तीर्णे द्वादशाङ्गुलायामे पार्श्वे, द्वादशाङ्गुलं स्तनान्तरम्, द्व्यङ्गुलं स्तनपर्य्यन्तम्, चतुर्व्विंशत्यङ्गुलविशालं द्वादशाङ्गुलोत्सेधमुरः, त्र्यङ्गुलं * हृदयम्, अष्टाङ्गुलौ स्कन्धौ, षडङ्गुलावंसौ, षोड़शाङ्गुलौ बाहू, पञ्चदशा-

षोड़शाङ्गुलपरिणाहे। त्रिंशदङ्गुलिपरिक्षिपौ त्रिंशदङ्गुलिपरिणाहौ ऊरू, अष्टादशाङ्गुलौ दैर्घ्ये ऊरू भवतः। द्वात्रिंशदङ्गुलपरिणाहावूरू इति सुश्रुतो मिलितोरुद्वयाभिप्रायेण जङ्घायामसमावूरू इति सुश्रुतः। षड़ङ्गुलिदीर्घौ वृषणौ अष्टाङ्गुलपरिणाहौ। द्व्यङ्गुलानि वृषणचिवुकदशननासापुटभगकर्णमूलनयनान्तराणि। शेफः षड़ङ्गुलिदीर्घं पञ्चाङ्गुलिपरिणाहम्। शेफः शिश्नः। चतुरङ्गुलानि मेहनवदनान्तरनासाकर्णललाटग्रीवोच्छ्रायदृष्ट्यन्तराणि इति सुश्रुतः। द्वादशाङ्गुलिपरिणाहो भगः। भग इति स्त्रीलिङ्गम्। द्वादशाङ्गुलानि भगविस्तारमेहननाभिहृदयग्रीवास्तनान्तरमुखायाममणिवन्धकोष्ठस्थौल्यानीति सुश्रुतः। षोड़शाङ्गुलिविस्तारा कटी, (अष्टादशाङ्गुलमाना) तत्प्रमाणा स्त्रीश्रोणिरिति। दशाङ्गुलं वस्तिशिरः। वस्तिशिर इन्द्रवस्तिः। इन्द्रवस्तिपरिणाहांसपीठकूर्पान्तरायामः षोड़शाङ्गुल इति सुश्रुतः। द्वादशाङ्गुलमुदरं दशाङ्गुलिविस्तारम्। दशाङ्गुलिविस्तीर्णे द्वादशाङ्गुलायामे पार्श्वे। पार्श्वे इति द्वे पार्श्वे प्रतिपार्श्वम् उक्तमानं बोध्यम्। द्वादशाङ्गुलं स्तनान्तरम्। स्तनान्तरं स्तनतटम्। द्व्यङ्गुलं स्तनपर्य्यन्तम् स्तनान्तदेशः। चतुर्व्विंशत्यङ्गुलविशालं द्वादशाङ्गुलोत्सेधमुर इति वक्षः। तत्र त्र्यङ्गुलं हृदयम्, हृदयं जीवात्मधारणस्थानम्। सुश्रुतश्च अष्टादशाङ्गुलविस्तीर्णमुर इत्याह। अष्टाङ्गुलौ स्कन्धौ। प्रतिस्कन्धमष्टाङ्गुलम्।

परिक्षेपः परिणाहः। जानुजङ्घोरुसन्धिपरिणाहपरिमाणञ्च यदुच्यते, तन्मध्यस्थानस्य, तेन सह परिणाहमानेषु जङ्घादिषु मध्यस्थानमेतत् ज्ञेयम्। कट्या उत्सेधपरिमाणं नोक्तम्, तस्या उत्सेधस्य ऊर्व्वादिसन्धित्वेन तस्याः पृथगुत्सेधप्रमाणस्य अविद्यमानत्वात्। प्रबाहुरंसादर्व्वाक् कफोणि-

* द्व्यङ्गुलमिति चक्रः।

ङ्गुलौ पाणी, हस्तौ द्वादशाङ्गुलौ*, कक्षावष्टाङ्गुलौ, त्रिकं द्वादशाङ्गुलोत्सेधम्, अष्टादशाङ्गुलोत्सेधं पृष्ठम्, चतुरङ्गुलोत्सेधा द्वाविंशत्यङ्गुलिपरिणाहा शिरोधरा, चतुर्विंशत्यङ्गुलिपरिणाहमाननम्, पञ्चाङ्गुलमास्यम्, चिबुकौष्ठकर्णाक्षिमध्यनासिकाललाटं चतुरङ्गुलम्, षडङ्गुलोत्सेधं † द्वात्रिंशदङ्गुलपरिणाहं शिर इति पृथक्त्वेनाङ्गावयवमानमुक्तम् ।

षडङ्गुलावंसौ । अंसो भुजस्योपरिभागः, स च प्रत्येकं षडङ्गुलः । षोड़शाङ्गुलौ बाहू । प्रतिबाहु षोड़शाङ्गुलमानम्, तेन द्वात्रिंशदङ्गुलिमानौ भुजाविति सुश्रुतो द्विबाहुमानं मिलितं लिखितवान् । पञ्चदशाङ्गुलौ पाणी । पाण्योः प्रत्येकं पञ्चदशाङ्गुलिमानम् । हस्तौ द्वादशाङ्गुलौ । पाणिं वर्ज्जयित्वा हस्तः द्वादशाङ्गुल इति सपाणिः सप्तविंशत्यङ्गुलः, स च सबाहुस्त्रयश्चत्वारिंशदङ्गुलः । सुश्रुतस्तु सपाणिहस्ताभिप्रायेण चतुर्विंशत्यङ्गुलो हस्त इत्युक्त्वा तत्र मणिबन्धकूर्परान्तरं षोड़शाङ्गुलम् । तलं षड़ङ्गुलदीर्घं चतुरङ्गुलविस्तारम् । अर्द्धपञ्चाङ्गुले प्रदेशिन्यनामिके । इति मध्यमावधितलदेशतोऽधस्तात् अर्द्धाङ्गुलावधि प्रदेशिनीति प्रदेशिनीदेशे तलमर्द्धषड़ङ्गुलं अङ्गुष्ठान्मूलप्रदेशिन्यन्तरालं द्विपञ्चाङ्गुलमङ्गुष्ठमूलञ्च मणिबन्धादूर्द्ध मर्द्धाङ्गुलमिति प्रदेशिन्यग्रपर्य्यन्तं कूर्परावधिहस्तश्चतुर्विंशत्यङ्गुल इति सुश्रुताभिप्रायः । तत्र सार्द्धत्र्यङ्गुलौ कनिष्ठाङ्गुष्ठौ । मध्यमाङ्गुली पञ्चाङ्गुलेति चोक्तम् । कक्षावष्टाङ्गुलौ । प्रतिकक्षमष्टाङ्गुलमानम् । कक्षोऽंसाधोभागः । त्रिकं द्वादशाङ्गुलोत्सेधम् । त्रिकं कट्यधस्त्र्यस्थिकस्थानम् । अष्टादशाङ्गुलोत्सेधं पृष्ठम् । चतुरङ्गुलोत्सेधा द्वाविंशत्यङ्गुलिपरिणाहा शिरोधरा । अत्र शिरोधरा ग्रीवा । चतुर्विंशत्यङ्गुलिविस्तारपरिणाहं मुखग्रीवमिति सुश्रुतः । अतएव चतुर्विंशत्यङ्गुलिविस्तारपरिणाहमाननमिति बोध्यम् । तत्र पञ्चाङ्गुलमास्यम् । चिबुकेत्यादि । चिबुकं चतुरङ्गुलम्, ओष्ठौ चतुश्चतुरङ्गुलौ, कर्णौ चतुश्चतुरङ्गुलौ, अक्षिमध्यदेशौ चतुश्चतुरङ्गुलौ, नासिका चतुरङ्गुला, ललाटं चतुरङ्गुलमित्यर्थः । तत्र

पर्य्यन्तः । प्रपाणिः कफोण्यधस्तात् । त्रिकमिति गुदस्फिक्कटीकपालार्द्धपर्य्यन्तम् । चिबुकञ्च ओष्ठश्च कर्णौ च अक्षिमध्यञ्च नासिका च ललाटञ्च प्रति प्रति चतुरङ्गुलम् । षड़ङ्गुलोत्सेधं शिर

* दशाङ्गुलावित्यन्यः पाठः ।  † षोड़शाङ्गुलोत्सेधमिति चक्रः ।

केवलं पुनः शरीरमङ्गुलिपर्व्वाणि चतुरशीतिस्तदायाम-विस्तारसमं सममुच्यते । तत्रायुर्बलमोजःसुखमैश्वर्य्यं वित्तानीष्टाश्चापरे भावा भवन्त्यायत्ताः प्रमाणवति शरीरे, विपर्य्ययस्त्वतो हीनेऽधिके वा ॥ ६६ ॥

श्रवणापाङ्गान्तरं पञ्चाङ्गुलम् । त्रिभागाङ्गुलिविस्तारा नासापुटमर्य्यादा । नयन-त्रिभागपरिणाहा तारका । नवमस्तारकांशो दृष्टिः । षडङ्गुलोत्सेधं द्वात्रिंशदङ्गुल-परिणाहं शिरः । तत्र सुश्रुत उवाच । केशान्तमस्तकान्तरमेकादशाङ्गुलम् । मस्तकादवटुकेशान्तो दशाङ्गुलः । कर्णावट्वन्तरं चतुर्दशाङ्गुलमिति ।

अङ्गप्रमाणमुपसंहरति—केवलं पुनरिति। एकीकृत्य कृत्स्नं शरीरं पुनरङ्गुलिपर्व्वाणि चतुरशीतिः । सुश्रुते तु सविंशमङ्गुलिशतं पुरुषायाम इतीति । तत्राङ्गुलितोऽत्र पर्व्वणो दैर्घ्याद्भेदोऽस्तीति न विरोधः । तदायाम-विस्तारसममिति तच्चतुरशीतिपर्व्वमितं शरीरमायामविस्ताराभ्यां समं तुल्यं सममुच्यते, दैर्घ्ये च चतुरशीतिपर्व्वमितं प्रसारे च चतुरशीतिपर्व्वमितमिति भावः । तत्र प्रमाणवति समसंज्ञे शरीरे आयुर्दीर्घायुः इष्टाश्चापरेऽशोकादयो भावा आयत्ता अधीना भवन्तीत्यर्थः । विपर्य्ययस्तु हीने उक्तप्रत्यङ्गप्रमाणतो हीनप्रमाणे अधिकप्रमाणे च शरीरेऽल्पायुरादयो भवन्ति । प्रत्यङ्गप्रमाणं यस्य नोक्तरूपं किन्तु केषाञ्चिदङ्गानामुक्तमानं केषाञ्चिदङ्गानां नोक्तमानं हीनमधिकं वा तादृशशरीरे मध्यायुरादयः स्युः । सुश्रुतेऽप्युक्तं—पञ्चविंशे ततो वर्षे पुमान् नारी तु षोड़शे । समत्वागतवीर्य्यौ तौ जानीयात् कुशलो भिषक् । देहः स्वैरङ्गुलैरेव यथावदनुकीर्त्तितः । युक्तः प्रमाणेनानेन पुमान् वा यदि वाङ्गना । दीर्घमायुरवाप्नोति वित्तञ्च महदृच्छति । मध्यमं मध्यमैरायुर्व्वित्तं हीनैस्तथावरम् । इति । अत्र हीनैरिति उक्तप्रमाणत्यागैर्न्यूनैरधिकैर्वेत्यर्थो लभ्यते । एवम्

इति पृष्ठमनु ग्रीवाया उपरि ज्ञेयम् । केवलमिति पादतलात् प्रभृति शिरःपर्य्यन्तं चतुरशीत्यङ्गुलं भवति, एवं सार्द्धत्रिहस्तप्रमाणशरीरत्वं स्वहस्तेन शरीरस्य भवति । अत्र च प्रत्यवयवोत्सेधेन चतुरशीत्यङ्गुलादधिकं यत् शरीरं भवति, तदवयवानामवयवान्तरदैर्घ्यानुप्रविष्टानां ग्रहणात् । तेन प्रत्यवयवदैर्घ्यमानेन न चतुरशीत्यङ्गुलं गणनीयं किन्तु समुदितमेव शरीरम् । तत्र पादस्याङ्गुलानि चत्वारि, जङ्घाया अष्टादश, जानुनश्चत्वारि, शिरसः षट्, एवं चतुरशीत्यङ्गुलानि घटन्ते । सुश्रुतेन समं योऽत्र मानविरोधः, सोऽत्राङ्गुलिमानभेदात् शमयितव्यः । तत्र हि सविंशमङ्गुलिशतं पुरुषायाममुक्तम् । तेन तत्राङ्गुलिमानमेवाल्पं ज्ञेयम् । आयामविस्तारसममिति यथोक्तप्रत्यवयवायाम-

सात्म्यतश्चेति। सात्म्यं नाम तद् यत् सातत्येनोपयुज्य-मानमुपशेते। तत्र ये घृतक्षीरतैलमांसरससात्म्याः सर्व्वरस-सात्म्याश्च, ते बलवन्तः क्लेशसहाश्चिरजीविनश्च भवन्ति।

अन्यदप्यायुष्मतां लक्षणमुक्तं सुश्रुतेन। तद् यथा। महापाणिपादपार्श्व-पृष्ठस्तनाग्रदशनवदनस्कन्धललाटं दीर्घाङ्गुलिपर्व्वोच्छ्वासप्रेक्षणबाहुं विस्तीर्ण-भ्रूस्तनान्तरोरस्कं ह्रस्वजङ्घामेढ्रग्रीवं गम्भीरसत्त्वस्वरनाभिमनुच्चैर्बद्धस्तन-मुपचितमहारोमशकर्णं पश्चान्मस्तिष्कं स्नातानुलिप्तं मूर्द्धानुपूर्व्व्या विशुष्यमाण-शरीरं पश्चाच्च विशुष्यमाणहृदयं पुरुषं जानीयाद् दीर्घायुः खल्वयमिति। तमेकान्तेनोपक्रमेत। एभिर्लक्षणैर्विपरीतैरल्पायुर्मिश्रैर्मध्यमायुरिति। भवन्ति चात्र। गूढ़सन्धिसिरास्नायुः संहताङ्गः स्थिरेन्द्रियः। उत्तरोत्तरसुक्षेत्रो यः स दीर्घायुरुच्यते॥ गर्भात् प्रभृत्यरोगो यः शनैः समुपचीयते। शरीरज्ञान-विज्ञानैः स दीर्घायुः समासतः॥ मध्यमस्यायुषो ज्ञानमत ऊर्द्ध निबोध मे। अधस्तादक्षयोर्यस्य लेखाः स्युर्व्यक्तमायताः। द्वे वा तिस्रोऽधिका वापि पादौ कर्णौ च मांसलौ। नासाग्रमूर्द्ध्वञ्च भवेदूर्द्ध्वं लेखाश्च पृष्ठतः। यस्य स्युस्तस्य परममायुर्भवति सप्ततिः॥ जघन्यस्यायुषो ज्ञानमत ऊर्द्ध्वं निबोध मे। ह्रस्वानि यस्य पर्व्वाणि सुमहच्चापि मेहनम्। तथोरस्यवलीढ़ानि न च स्यात् पृष्ठ-मायतम्। ऊर्द्ध्वञ्च श्रवणे स्थानान्नासा चोच्चा शरीरिणः। हसतो जल्पतो वापि दन्तमांसं प्रदृश्यते। प्रक्षते यश्च विभ्रान्तं स जीवेत् पञ्चविंशतिम्॥ इति। एतानि च लक्षणानि न चानेनाचार्य्येणोक्तानि अङ्गप्रमाणतः परीक्षा-प्रकरणत्वात्॥ ९९॥

<u>गङ्गाधरः</u>—क्रमिकत्वात् परीक्षामाह—सात्म्यतश्चेत्यादि। सात्म्यं नाम-त्यादि। सातत्येन सततोपयोगेन यदुपशेते उत्तरकालानुबन्धेन सुखमावहति तत् सात्म्यम्। द्रव्यविशेषसात्म्यात् बलविशेषं दर्शयति—तत्रेत्यादि। घृतादि-सात्म्याः पुरुषाः सात्म्यनिमित्तत इति वक्ष्यमाणेनान्वयात् बलवन्त इत्यादयो

विस्तारयुक्तम्। किंवा, यावदायामेन चतुरशीत्यङ्गुलम्, तावद् यदि विस्तृतबाहुद्वयप्रमाणेन विस्तारेण च शरीरं भवति, तदा आयामविस्तारसमं भवति। तत्रेति यथोक्तप्रमाणवति शरीर इति योजनीयम्। हीन इति हीनप्रमाणे। एवमधिक इति अधिकप्रमाणे॥ ९९॥

चक्रपाणिः—सात्म्यतश्चेत्यत्र 'सात्म्य'शब्देन औकिकसात्म्यमुच्यते, प्रकृतिसात्म्यादीनां

रुक्षसात्म्याः पुनरेकरससात्म्याश्च ते प्रायेणाल्पबलाश्चाक्लेश-सहाश्चाल्पायुषोऽल्पसाधनाश्च भवन्ति। व्यामिश्रसात्म्याश्च ये, ते मध्यबलाः सात्म्यनिमित्ततो भवन्ति॥ १००॥

सत्त्वतश्चेति। सत्त्वमुच्यते मनः। तच्छरीरस्य तन्त्रकमात्म-संयोगात्। तत् त्रिविधं बलभेदेन प्रवरं मध्यममवरमिति। अतश्च प्रवरमध्यावरसत्त्वाश्च पुरुषा भवन्ति। तत्र प्रवरसत्त्वाः सत्त्वसाराः सारेषूपदिष्टाः; स्वल्पशरीरा ह्यपि ते निजागन्तुनिमित्तासु

भवन्ति इत्यर्थः। सात्म्यनिमित्तत इत्यनेन संहननादिनिमित्ततो बलं व्यव-च्छिद्यते। रुक्षसात्म्याः पुनरित्यनेन ये इत्यनुवर्त्तते। ये रुक्षसात्म्या ये चैकरससात्म्यास्ते प्रायेणाल्पबलादयः स्युः, सात्म्यनिमित्तत इत्यप्यत्र योज्यम्। प्रायेणेत्यनेन कदाचिदपि मध्यबलादयोऽपि भवन्ति, अल्पसाधना अल्पक्रिया-निर्व्वाहकाः सुतरामल्पबलादित्वात्। व्यामिश्रसात्म्याश्चेति च-शब्दः पुनरर्थे। व्यामिश्रसात्म्याः मिश्रितघृताद्यन्यतमसात्म्या रुक्षसात्म्याश्चैकरससात्म्या वा ते मध्यबला मध्यक्लेशसहा मध्यायुषो मध्यसाधना इत्यर्थादेव ज्ञेयम्॥ १००॥

गङ्गाधरः—क्रमिकत्वात् सत्त्वतश्चातुरपरीक्षां दर्शयति—सत्त्वतश्चेत्यादि। सत्त्वमुच्यते मन इत्यादि। तदिति मनः शरीरस्य तन्त्रकं नियामकं, कुत इत्यत आह—आत्मसंयोगात्, आत्मना सह मनसो नित्यसंयोगात्। तन्मनस्त्रिविधं बलभेदेनेति। बलभेदमाह—प्रवरमित्यादि। प्रवरबलं मनः, मध्यमबलं मनः, अवरबलं मन इति त्रिविधम्। अतः प्रवरादिमनस्तः प्रवरसत्त्वा मध्यसत्त्वा अवर-सत्त्वाश्च पुरुषा भवन्ति। प्रवरसत्त्वादीन् क्रमेण लक्षयति—तत्रेत्यादि। प्रवर-सत्त्वाः प्रवरं प्रवरबलं सत्त्वं येषां ते तथा, ते सत्त्वसाराः सारेष्वष्टसु मध्ये स्मृति-मन्तः इत्यादिनोपदिष्टाः। ननु ते ज्ञायन्ते च कैः कर्म्मभिरित्यत आह—स्वल्पे-त्यादि। हि यस्मात् स्वल्पशरीरा अपि ते प्रवरसत्त्वाः पुरुषा महतीष्वपि पीडासु

भेषजादिपरीक्षयैव परीक्षितत्वादिति ज्ञेयम्। अल्पसाधना इत्यल्पभेषजाः; एकरससात्म्यानां पञ्च रसा असात्म्यत्वेनापथ्या इति भावः॥ १००॥

चक्रपाणिः—तन्त्रकमिति प्रेरकं धारकञ्च। ते सारेषूपदिष्टा इति—य एव सत्त्वसारास्त एव

महतीष्वपि पीड़ास्वव्यथा दृश्यन्ते सत्त्वगुणवैशेष्यात्। मध्यसत्त्वास्तु अपरानात्मन्युपनिधाय * उपष्टम्भयन्त्यात्मनात्मानं परैर्वापि संस्तभ्यन्ते। हीनसत्त्वास्तु नात्मना न च परैः सत्त्वबलं प्रतिगृह्यन्ते उपष्टम्भयितुम्। महाशरीरा ह्यपि ते स्वल्पानामपि वेदनानामसहा दृश्यन्ते, सन्निहितभयशोकलोभमोहमाना रौद्रभैरवद्विष्टबीभत्सविकृतसंकथास्वपि च पशुमानुषमांसशोणितानि चावेक्ष्य विषादवैवर्ण्यमूर्च्छोन्मादभ्रमप्रपतनानामन्यतममवाप्नुवन्त्यथवा मरणमिति ॥ १०१ ॥

अव्यथा नातिपीड़ावन्तो दृश्यन्ते। निजागन्तुनिमित्तास्वितिपदेन मानसपीड़ासु सव्यथा दृश्यन्ते इति ख्यापितम्। ननु कुतस्तथा दृश्यन्ते इत्यत आह—सत्त्वगुणवैशेष्यादिति। सत्त्वस्य मनसः सारत्वे गुणविशेषवत्त्वात्। अन्यथा तत्सारत्वं न स्यात्। मध्यसत्त्वानां लक्षणान्याह—मध्यसत्त्वास्त्वित्यादि। अपरान् स्वेतरान् पुरुषान् आत्मनि स्वस्मिन् उपनिधाय आत्मीकृत्यात्मना मनसात्मानं स्वमुपष्टम्भयन्ति अवरोधयन्ति मध्यसत्त्वाः पुरुषा अथवा परैः स्वेतरैः पुरुषैस्तदात्मनि उपनिधायात्मीभूय वा संस्तभ्यन्ते अवरुध्यन्ते। हीनसत्त्वास्तु पुरुषा आत्मना न स्वेनापि न वा परैरर्थात् स्वमनःकल्पितप्रबोधनव्यापारैः प्रबोधनव्यापारवद्भिः परैर्वा सह बलं मनोबलम् उपष्टम्भयितुमात्मन्यवरोद्धुं न प्रतिगृह्यन्ते प्रबोधदानेन न स्वीकार्य्यन्ते। ननु कैस्ते ज्ञायन्ते इत्यत आह—महाशरीरा ह्यपीत्यादि। हि यस्मात् महाशरीरा अपि हीनसत्त्वाः पुरुषास्तास्वपि निजागन्तुनिमित्तास्वल्पासु पीड़ासु च मध्ये अल्पानामपि वेदनानामसहा असहनशीला दृश्यन्ते, तथा हीनसत्त्वाः पुरुषाः सन्निहितभयादयः स्युः। तथा रौद्रभैरवादिषु विषादाद्यन्यतममवाप्नुवन्ति। तथा पशुमानुषाणां मांसशोणितानि चावेक्ष्य विषादाद्यन्यतममवाप्नुवन्ति; अथवा रौद्रादिषु मरणं पशुमानुषमांसाद्यवेक्ष्य च मरणं प्राप्नुवन्ति। ननु सत्त्वसारतः

प्रवरा इति ज्ञेया इत्यर्थः। सत्त्वगुणवैशेष्यादिति सत्त्वगुणेन संस्तम्भितवेदनाविकारत्वादव्यथा इव दृश्यन्त इत्यर्थः। परात्मन्युपनिधायेति परं वेदनासहं दृष्ट्वा, 'चेदयं वेदनासहस्तदाहमपि

* परात्मनि उपनिधाय इति चक्रसम्मतः पाठः।

आहारशक्तितश्चेति। आहारशक्तिरभ्यवहरणशक्त्या जरणशक्त्या च परीक्ष्या, बलायुषी ह्याहारायत्ते ॥ १०२ ॥

व्यायामशक्तितश्चेति। व्यायामशक्तिरपि कर्मशक्त्या परीक्ष्या, कर्म्मशक्त्या ह्यनुमीयते बलं त्रिविधम् ॥ १०३ ॥

वयस्तश्चेति। कालप्रमाणापेक्षिणी* हि शरीरावस्था वयोऽभिधीयते। तद्वयो यथावस्थानभेदेन त्रिविधम्—बालं मध्यं

एवातुरपरीक्षया सत्त्वसाराभावे सत्त्वसारलक्षणाल्पत्वेन मध्यमसत्त्वत्वे सत्त्वतः परीक्षा सिध्यति कथं पुनः सत्त्वतः परीक्षा विहिता इति चेन्न सत्त्वस्य सहजप्रवरावरमध्यत्वानां सारवचनेनैव लाभेऽपि जातोत्तरकाल प्रवरावरमध्यमबलत्वज्ञानस्यापि बलदोषप्रमाणज्ञानहेतुत्वलाभायोक्तश्च। इति सत्त्वतः परीक्षा व्याधितस्य ॥ १०१ ॥

गङ्गाधरः—अथ क्रमिकत्वादाहारशक्तित आतुरपरीक्षामाह—आहारशक्तितश्चेति। आहारशक्तिरभ्यवहरणशक्तिर्भोजनशक्तिस्तया, जरणशक्त्या च परीक्ष्या परीक्षितव्यानुमेया तथा चाधिकाभ्यवहरणशक्त्याधिकबलायुषी अनुमेये, मध्यमाभ्यवहारशक्त्या मध्यमबलायुषी अनुमेये, अल्पाहारशक्त्या अल्पबलायुषी चानुमेये भवतः ; इत्यभिप्रायेणाह—बलायुषी इत्यादि। बलं त्रिविधं प्रवरं मध्यममवरञ्च, आयुश्च त्रिविधं दीर्घं मध्यममल्पञ्च बोध्यम् ॥ १०२ ॥

गङ्गाधरः—क्रमिकत्वाद् व्यायामशक्तितश्चातुरपरीक्षामाह—व्यायामशक्तितश्चेति। कर्म्मशक्त्या क्रियानिष्पादनव्यापारेण व्यायामशक्तिरपि परीक्ष्या, कर्म्मशक्त्या हि यस्मात् त्रिविधं प्रवरमध्यमावरभेदेन त्रिविधं बलमनुमीयते न त्वायुरादिकमिति मन्तव्यम् ॥ १०३ ॥

गङ्गाधरः—क्रमिकत्वाद्वयस्तश्चातुरपरीक्षामाह—वयस्तश्चेत्यादि। शरीरावस्था वयोऽभिधीयते चेत् तदातुर्य्यावस्थापि वयो भवतीति तद्वारणायाह

वेदनासहो भवामि' इति कृत्वा वेदनां सहत इत्यर्थः। जरणशक्त्या च इतिवचनात्, यो बहु भुङ्क्ते परिणमति च, असावाहारशक्तिमानिहोच्यते, न तु गुणपरिमाणोऽत्र गृहीतः। कर्म्म भारवहनादि, तत्र शक्तिः कर्म्मशक्तिः ॥ १०१—१०३ ॥

चक्रपाणिः—वयःस्वरूपमाह—कालेत्यादि। कालप्रमाणविशेषापेक्षिणीति कालप्रमाणविशेषेण

* कालप्रमाणापेक्षिणी इत्यत्र कालप्रमाणविशेषापेक्षिणी इति चक्रः।

जीर्णमिति । तत्र बालमपरिपक्कधातुमजातव्यञ्जनं सुकुमारम् अक्लेशसहमसम्पूर्णबलं श्लेष्मधातुप्रायमाषोड़शवर्षं, विवर्द्धमानधातुगुणं पुनः प्रायेणानवस्थितसत्त्वमात्रिंशद्वर्षमुपदिष्टम् । मध्यं पुनः समत्वागतबलवीर्य्यपौरुषपराक्रमग्रहणधारणस्मरणवचनविज्ञानसर्व्वधातुगुणं बलस्थितमवस्थितसत्त्वमविशीर्य्यमाणधातुगुणं पित्तधातुप्रायमाषष्टिवर्षमुपदिष्टम् । अतः परं हीयमानधात्विन्द्रियबलवीर्य्य-पौरुषपराक्रमग्रहणधारणा-स्मरणवचनविज्ञानं भ्रश्यमानधातुगुणं वातधातुप्रायं क्रमेण जीर्णमुच्यते आवर्ष-

कालप्रमाणापेक्षिणीति विशेषणम् । त्रिविधं व्याकरोति—बालमित्यादि । तत्र बालं वयो द्विविधमित्यभिप्रायेणाह—तत्रेत्यादि । अपरिपक्कधातुं सर्व्वतोभावेन अपक्करसरक्तमांसादिधातुं तथा अजातव्यञ्जनं जातोत्तरकालजव्यञ्जनानि श्मश्रुप्रभृतीनि न जातानि यत्र तदजातव्यञ्जनम् । सुकुमारं सुष्ठुकौमार्य्यशालि । श्लेष्मधातुप्रायं श्लेष्मप्रधानशरीरम् । ईदृशमाषोड़शवर्षं बालं वय एकं, ततः षोड़शाब्दमारभ्य त्रिंशद्वर्षपर्य्यन्तं विवर्द्धमानधातुगुणं प्रायेणानवस्थितसत्त्वं बालं वयस्तरुणं यौवनमुपदिष्टम् । तच्च न श्लेष्मप्रायं न वा पित्तप्रायम् । मध्यवय आह—मध्यमित्यादि । समत्वागतं विवर्द्धमानबलादिधातुगुणपरित्यागेन समत्वं स्थिरत्वमागता बलादयो यत्र तत् तथा । ग्रहणमर्थतो ग्रहणं, धारणं शब्दतः, बलस्थितं बलेन स्थितं न हीयमानबलम् । अवस्थितसत्त्वं न त्वनवस्थितं मनः । अविशीर्य्यमाणधातुगुणम् अक्षीयमाणधातुगुणं पित्तधातुप्रायं पित्तबहुलम् एवंभूतं त्रिंशद्वर्षादूर्द्धं षष्टिवत्सरपर्य्यन्तं मध्यं वय उपदिष्टम् । अतः परं षष्टिवर्षत ऊर्द्धं हीयमाना धात्वादयो यत्र तत् तथा । भ्रश्यमानधातुगुणं धातूनां क्रमेण वर्द्धमानबलादित्वादयो गुणा भ्रश्यमाना भवद्भ्रंशा यत्र तत् तथा । धातवः क्षीयन्ते विवर्द्धमानगुणैर्हीनाश्च भवन्तीति हीय-

या गतिर्भवतीत्यर्थः । यथास्थूलभेदेनेतिवचनात् बालबालतराद्यवस्थाभेदादधिकमपि वयो भवतीति दर्शयति । बालो द्विविधः—अपरिपक्कधातुः आ षोड़शवर्षात्, तथा वर्द्धमानधातुः आ त्रिंशत्तमात् । तदेतयोर्बालयोरुपयुक्तत्वेन भेदमाह—तत्रेत्यादि । षोड़शवर्षीयबालोऽल्पभेषजमृदुभेषजत्वादिना शास्त्रे वक्तव्यः, तदूर्द्धं बालोऽपि नाल्पभेषजत्वादिना तथोपचर्य्यते । क्रमेणेति

शतम्। वर्षशतं खल्वायुषः प्रमाणमेतस्मिन् काले सन्ति चाधिकोनवर्षशतजीविनो मनुष्याः। तेषां विकृतिवर्ज्जैः प्रकृत्यादिबलविशेषैरायुषो लक्षणतश्च प्रमाणमुपलभ्य वयस्त्रित्वं

मानधात्वित्यनेन न पौनरुक्त्यम्। वायुप्रायं वायुबहुलं क्रमेण जीर्णं वय उच्यते आवर्षशतम्। ननु वर्षशतादूर्द्धं किं न वय इत्यत आह—वर्षशतमित्यादि। आयुषः प्रमाणं खलु वर्षशतमेवास्मिन् काले कलियुगे इत्यन्ये तन्न शतायुर्वै पुरुषः, शतायुषः पुत्रपौत्रान् वृणीष्वेत्यादिश्रुतीनां सर्व्वयुगायुर्विषयत्वात्। अस्मिन् काले इत्यस्मिन् कल्पे, कालोऽल्परूपः इत्यपरे। वस्तुतस्तु आयुषः प्रमाणं खलु वर्षशतम्। तस्य प्रत्यक्षतः प्रमाणमाह—अस्मिन् काले सन्तीत्यादि। अस्मिन् काले चरकाधिष्ठितकालो यस्तस्मिन् कालेऽधिका वर्षशतजीविनो मनुष्याः सन्तीति चरकस्य प्रत्यक्षदृष्टं प्रमाणं बोध्यम्। विस्तरेण सद्वृत्तफलव्याख्यानेनैतद् व्याख्यातम्। ननु येषां न वर्षशतमायुस्तेषां वयसस्त्रैविध्यं कथं विभक्तव्यमित्यत आह—तेषामित्यादि। तेषां परीक्ष्याणां मनुष्याणां विकृतिवर्ज्जैः प्रकृत्यादिबलविशेषैः प्रकृतिसारसंहननप्रमाणसात्म्यसत्त्वाहारशक्तिव्यायामशक्तिवयोभिः पूर्व्वोक्तैर्बलविशेषैरायुषः प्रमाणमुपलभ्य लक्षणतश्च जातिसूत्रीयोक्तलक्षणतश्चायुषः प्रमाणं यस्य यत् तदुपलभ्य वयस्त्रित्वं वयसः

नैकदैव षष्टिवर्षादूर्द्ध्वं धात्वादिहानिरिति दर्शयति। अस्मिन् काल इति कलौ। अथाधिकवर्षजीविनां कथं वयस्त्रित्वं विभक्तव्यमित्याह—तेषामित्यादि। प्रकृत्याद्या दश परीक्ष्या अत्रैव "प्रकृतिसार" इत्यादिनोक्ताः। तत्र "विकृतिवर्ज्जैः" इत्यनेन विकृतेः परित्यागः कृतः। तेन प्रकृतिसारादीनां बलविशेषैः प्रवरावरमध्यभेदभिन्नप्रकृत्यादिभेदेन कृतैः प्रवरावरमध्यरूपैरायुषः प्रमाणं प्रवरावरादुपलभ्य वयस्त्रित्वं विभजनीयम्। एतेन यस्य प्रकृतिबलमुत्तमं श्लेष्मप्रकृतेः समप्रकृतेर्वा, तस्यायुर्दीर्घं भवति, हीने तु प्रकृतिबले हीनम्। एवं सारादावपि ज्ञेयम्। एवञ्च यः प्रकृत्यादीनां सर्व्वेषामेवोत्तमेन बलेन युक्तः, स शताधिकं जीवति। तेन तस्य विंशतिवर्षाधिकं शतं यद्यायुरुपलभ्यते, तदा पूर्व्वोक्तवयोविभागानुमानात् षट्त्रिंशद्वर्षाणि स बालो भवति, द्विसप्ततिवर्षश्च स मध्यः, शेषे तु वृद्धः। यस्तु प्रकृत्यादीनां मध्यमत्वेनाल्पायुरशीतिवर्षोऽवधार्य्यते, स पञ्चविंशतिवर्षाणि बालः, पञ्चाशतं मध्यः, अतो वृद्ध इत्यादि विभजनीयम्। न केवलं प्रकृत्यादिना आयुरवधार्य्यम्, किन्तु आयुर्लक्षणैरपि शरीरप्रतिबद्धैः शारीरे वक्तव्यैरित्याह—आयुषो लक्षणतश्चेति। आयुर्लक्षणेनापि वयोऽवधार्य्य बाल्यादिविभागः कर्त्तव्यः इत्यर्थः,

विभजेत् । एवं प्रकृत्यादीनां विकृतिवर्ज्जानां भावानां प्रवरावरमध्यविभागेन बलविशेषं विभजेत् । विकृतिबलत्रैविध्येन दोषबलं त्रिविधमनुमिमीते । ततो भैषज्यस्य तीक्ष्णमृदुमध्यविभागेन त्रैविध्यमेव विभज्य यथादोषं भैषज्यमवचारयेत् । आयुषः प्रमाणज्ञानहेतोः पुनरिन्द्रियस्थाने जातिसूत्रीये च लक्षणान्युपदेक्ष्यन्ते ॥ १०४ ॥

त्रैविध्यं विभजेत् । विकृत्या तु नायुषः प्रमाणमुपलभ्यते स्वाभाविकं, परन्त्वरिष्टलक्षणेनासाध्यत्वमुपलभ्यते । एवंप्रकारेण वयस्तश्चातुरं परीक्ष्यातुरस्य बलप्रमाणविज्ञानं दर्शयति—एवमित्यादि । एवमुक्तप्रकारेण विकृतिवर्ज्जानां प्रकृत्यादीनां प्रकृतिसारसंहननप्रमाणसात्म्ये सत्त्वाहारशक्तिव्यायामशक्तिवयसां भावानां प्रवरावरमध्यविभागेनातुरस्य बलविशेषं प्रवरावरमध्यरूपं बलं विभजेत् । इत्यातुरस्य बलप्रमाणविज्ञानहेतोः परीक्षा दर्शिता ।०। दोषप्रमाणविज्ञानहेतोरातुरपरीक्षां दर्शयति—विकृतीत्यादि। विकृतेर्विकारस्य धातुवैषम्यनिमित्तस्य ज्वरादेर्बलत्रैविध्येन त्रिविधबलेन तत्र विकारं हेतुदोषदूष्यत्यादौ पूर्व्वोक्तेन यस्य हीत्यादिनोक्तेन त्रिविधं प्रवरावरमध्यभेदेन त्रिधा दोषबलं वातपित्तकफानां प्रवरावरमध्यबलमनुमिमीते भिषगिति शेषः । ततो दोषाणां प्रवरावरमध्यबलानुमानात् भेषजस्य तीक्ष्णमृदुमध्यविभागेन त्रैविध्यं विभज्य यथादोषं प्रवरबलदोषे तीक्ष्णभैषज्यम् अवरबलदोषे मृदुभैषज्यं मध्यबलदोषे मध्यभैषज्यमवचारयेत् । इत्यातुरस्य बलदोषप्रमाणविज्ञानहेतोः परीक्षा दर्शिता ।०। अथातुरस्यायुःप्रमाणविज्ञानहेतोः परीक्षां दर्शयति—आयुष इत्यादि । अत्रातुरस्य परीक्षेत्यनुवर्त्तते । तेनायुषः प्रमाणविज्ञानहेतोरातुरस्य

अयञ्च स्तोकन्यूनाधिकशतायुषां बाल्यादिविभागः कर्त्तव्यः । येषान्तु विंशतिवर्षादि परमायुषो मानम्, न तेषां तदनुमानेन वयोभेदः, ते ह्यप्राप्तमध्यावस्था एव म्रियन्ते । प्रकृत्यादित्रिभागेन शरीरबलपरीक्षामुक्तामुपसंहरति—एवमित्यादि । दोषबलन्तु यथा शरीररूपदेशपरीक्षया परीक्ष्यम्, तदाह—विकृतिबलेत्यादि । शरीरबलदोषबलपरीक्षार्थं शरीरपरीक्षां प्रति ज्ञानमभिधाय पुनरायुःप्रमाणज्ञानार्थं शरीरपरीक्षामतिदिशति—आयुष इत्यादि । इन्द्रियेष्विति इन्द्रियस्थानाध्यायेषु । तत्रेन्द्रिये वर्णादिविकृत्या रिष्टरूपहसितमायुर्ज्ञातव्यम्, जातिसूत्रीये शारीरे च जन्मप्रतिबद्धैः लक्षणैर्दीर्घायुष्ट्वं ज्ञातव्यम् ॥ १०४ ॥

कालः पुनः संवत्सरश्चातुरावस्था च द्विधा। तत्र संवत्सरो द्विधा त्रिधा षोढ़ा द्वादशधा। भूयश्चातः प्रविभज्यते तत्तत्-कार्य्यमभिसमीक्ष्य। तत्र खलु तावत् षोढ़ा प्रविभज्य कार्य्यमुप-देक्ष्यते। हेमन्तो ग्रीष्मो वर्षाश्चेति शीतोष्णवर्षलक्षणास्त्रय ऋतवो भवन्ति। तेषामन्तरेष्वितरे साधारणलक्षणास्त्रयः ऋतवः प्रावृट् शरद्वसन्ता इति। प्रावृडिति प्रथमः प्रवृष्टेः काल-

परीक्षा पुनरिन्द्रियेषु इन्द्रियस्थानेऽरिष्टेषु जातिसूत्रीये चाध्याये लक्षणान्युप-देक्ष्यन्ते। इत्यातुरस्य परीक्ष्यविशेषस्य यथा परीक्षितव्यस्तं तदुक्तं भवति॥१०४

गङ्गाधरः—अथ कारणादिषु परीक्ष्येषु मध्ये देशानन्तर्य्यात् परीक्ष्यविशेष-कालो यथा परीक्षितव्यस्तदाह—कालः पुनरित्यादि। चशब्दः समुच्चये। द्विधेति अयनभेदात्। तयोः प्रयोजनाभावात् तस्याशितीये चोक्तत्वात् प्रति-नियतफलोक्तत्वाच्चात्र द्विविधत्वं न विवृत्य त्रिधात्वादिकं विवृणोति—भूयश्चात इत्यादि। भूय इति तस्याशितीये सर्व्वमुक्तं भूयो बहुलश्चात्र प्रविभज्यते। त्रिधादिप्रतिनियतकार्य्यं वक्ष्यमाणं षोढ़ात्वप्रविभागे। त्रिधा धर्म्मस्यावान्तरत्वात् साधारणत्वाद् वा त्रिधात्वं दर्शयति—हेमन्त इत्यादि। हेमन्तादयस्त्रयो योग-रूढ़ाः, यौगिकत्वं दर्शयति—शीतोष्णेत्यादि। अत्र क्रमान्वयो बोध्यः। शीत-लक्षणो हेमन्तः उष्णलक्षणो ग्रीष्मः वर्षलक्षणा वर्षा इति त्रयः ऋतवः। तेषां हेमन्तग्रीष्मवर्षाणामन्तरेष्वभ्यन्तरेषु—इतरे संज्ञान्तराः साधारणलक्षणा मन्दशीतलक्षणा शरत्, मन्दोष्णलक्षणो वसन्तः, मन्दवर्षलक्षणा प्रावृट् इति त्रय ऋतव इति। त्रिषु च मन्दशीतोष्णवर्षलक्षणत्वम्। ननु ते के इत्यतः प्रतिलोमतन्त्रयुक्त्याह—प्रावृट्शरद्वसन्ता इति। एतेन कार्त्तिकादय-श्चत्वारो मासा हेमन्तः शीतलक्षणः। फाल्गुनादयश्चत्वारो मासा ग्रीष्म उष्णलक्षणः। आषाढ़ादयश्चत्वारो मासा वर्षा वर्षलक्षणाः। तेषामन्तर्गता साधारणलक्षणा नातिशीतनात्युष्णरूपा हेमन्तान्तर्गता शरत् कार्त्तिका-

चक्रपाणिः—देशपरीक्षां समाप्य कालपरीक्षामाह—काल इत्यादि। संवत्सरोऽयनभेदेन द्विविधः, शीतोष्णवर्षभेदेन त्रिविधः, ऋतुभेदेन षोढ़ा, मासभेदेन द्वादशधा, पक्षभेदाच्चतुर्व्विंशति-तिधा, प्रहरादिनाऽनेकधेति ज्ञेयम्। तत्तत् कार्य्यमित्ययनादिना सम्पाद्यं कार्य्यमित्यर्थः।

स्तस्यानुबन्धो हि वर्षाः। एवमेते संशोधनमधिकृत्य षड्

ग्रहायणौ द्वौ मासौ मन्दशीतोष्णौ। एवं साधारणलक्षणो नातिशीतनात्युष्ण-रूपो ग्रीष्मान्तर्गतो वसन्तः फाल्गुनचैत्रमासौ मन्दोष्णशीतलक्षणौ। एवं नाति-शीतनात्युष्णरूपा वर्षान्तर्गता प्रावृट् आषाढ़श्रावणौ द्वौ मासौ मन्दवर्षलक्षणौ। तदितरे च द्विशो मासा हेमन्तग्रीष्मवर्षसंज्ञा एव न त्वन्यसंज्ञाः। तेषामन्तरेष्विति वचनेन कार्त्तिकाग्रहायणयोर्हेमन्तसंज्ञावत् शरत्संज्ञा, फाल्गुनचैत्रयोर्ग्रीष्म-संज्ञावद् वसन्तसंज्ञा, आषाढ़श्रावणयोर्वर्षसंज्ञावत् प्रावृट्संज्ञा, न तु शरदादि-संज्ञैव न हेमन्तादिसंज्ञेति शरदादिसंज्ञया हेमन्तादिसंज्ञानां बाधितत्व-वचनाभावात्। ननु कथं प्रावृडुच्यते इत्यत आह—प्रावृडितीत्यादि। प्राक् वृट् वृष्टेः काल इति पृषोदरादित्वात् प्रावृट् इत्यभिप्रायेणाह प्रथम इति; अथवा प्रः प्रकृष्टो वृष्टेः काल इति पृषोदरादित्वात् आकारागमेऽपि प्रावृट्; इत्यभिप्रायेणाह प्रवृष्टेः काल इति। नन्वत्र प्रावृषि साधारणत्वं किमित्यत आह—तस्येत्यादि। तस्य प्रवृष्टेः कालस्यानुबन्धोऽनु-रूपेण बन्धो वर्षा इति। नातिशीतनात्युष्णत्वात् साधारणत्वं ख्यापितम्। ननु तस्याशितीये पूर्व्वमुक्तं हेमन्तशिशिरवसन्तग्रीष्मवर्षाशरद इति, षड्तव उक्ता अत्र त्वन्यथा कथमुच्यते इत्यत आह—एवमेते इत्यादि। एवमनयोक्त-रीत्या एते शरद्धेमन्तवसन्तग्रीष्मप्रावृड्वर्षाख्या ये षड्तवो विभज्यन्ते ते संशोधनमधिकृत्यैव न तु चर्य्यामधिकृत्य; चर्य्यामधिकृत्य पुनरुक्तास्तस्याशितीये हिमशिशिरादयः षडिति भावः। ननु संशोधनं यदोक्तमुक्तेषु षट्स्वेवर्त्तुषु विधीयते तदा तदात्मकत्वादेव हिमशिशिरादिरूपेण विभक्तेष्वपि तत् संशोधनं सम्पद्यते न ह्येवं विभक्ताः षड्तवस्तथाविभक्तषड्त्वातिरिक्तः कालो हि न

साधारण इति अनतिशीतोष्णवर्षः। प्रावृषं विभजते—प्रावृडित्यादि। 'प्रथमप्रवृष्टः' शब्देन आषाढ़श्रावणावुच्येते। एतच्च द्विमासत्वमृतुभेदकमादि कृत्वा शेषमासद्विकेन वर्षादयो यथाक्रमं ज्ञेयाः। अयञ्च ऋतुक्रमो न रसोत्पत्त्यादौ, किन्तु शरीरशोधने प्रवृत्तावेवेति दर्शयता 'संशोधन-मधिकृत्य' इत्युक्तम्, एवमेव च क्रमं सिद्धौ वक्ष्यति—"प्रावृट् शुक्रनभौ ज्ञेयौ शरदूर्ज्जसहौ पुनः। तपस्यश्च मधुश्चैव वसन्तः शोधनं प्रति"। अस्मिन्नृतुक्रमे शिशिरो नास्ति। ये तु ब्रुवते—गङ्गाया दक्षिणे कूले वर्षा बहु भवति, तेन, तत्र प्रावृडादिक्रमः। गङ्गोत्तरकूले शीतं बहु भवति, तेन, तत्र हेमन्तशिशिरौ भवतः। उक्तं हि काश्यपेन—यत्—"भूयो वर्षति पर्ज्जन्यो गङ्गाया दक्षिणे जलम्। तेन प्रावृड्-वर्षाख्यौ ऋतू तेषां प्रकल्पितौ। गङ्गाया उत्तरकूले हिमवद्गुसङ्गमे। भूयः शीतमतस्तेषां वसन्तशिशिरावृतू" इति। एतच्च न, अत्र 'संशोधनमधिकृत्य' इति वचनात्।

विभज्यन्ते ऋतवः। तत्र साधारणलक्षणेष्वृतुषु वमनादीनां प्रवृत्तिर्विधीयते निवृत्तिरितरेषु च। साधारणलक्षणा हि मन्द-शीतोष्णवर्षत्वात् सुखतमाश्च भवन्ति अविकल्पकाश्च शरीरौषधानाम्। इतरे पुनरत्यर्थशीतोष्णवर्षत्वाद् दुःखतमाश्च भवन्ति विकल्पकाश्च शरीरौषधानाम् ॥ १०५ ॥

संवत्सरातिरिक्तोऽस्तीति चेन्न तेषु षट्सु ऋतुषु न संशोधनविधिरेव चर्य्या-विधिनिषेधौ तु सम्भवतः। ननु किं हेमन्तशिशिरादितया विभक्तेषु संशोधन-विधिनिषेधौ न सम्भवत इत्यत आह—तत्रेत्यादि। साधारणलक्षणेष्वृतुषु अर्थात् त्रिषु शरद्वसन्तप्रावृट्संज्ञकेषु इतरेषु हेमन्तमात्रसंज्ञग्रीष्ममात्रसंज्ञवर्षामात्र-संज्ञकेषु निवृत्तिर्निषेधो विधीयते इत्यन्वयः। एतौ तु न हेमन्तशिशिरादितया विभक्तेषु त्रिषु त्रिषु सम्पद्येते। तथा विभागो हि सहःसहस्यौ हेमन्तः, तप-स्तपस्यौ शिशिरः, मधुमाधवौ वसन्तः स्यात्; शुक्रशुची तु ग्रीष्मः, नभोनभस्यौ वर्षाः, अश्वयुक्कार्त्तिकौ शरदिति त्वयनदिनावधि बोध्यम्। तथा विभक्ताना-मन्त्यान्त्यानामृतूनामादिमादिममास-सहितादिमादिमस्त्वन्तिमान्तिम-मासरूप-द्विमासात्मको ह्येवं विभक्त ऋतुरिति। ननु कथं साधारणलक्षणेषु वमना-दीनां प्रवृत्तिर्विधीयते निवृत्तिस्त्वितरेष्वित्यत आह—साधारणेत्यादि। मन्दे-त्यादि। मन्दशब्दोऽल्पवचनः, शीतादिषु प्रत्येकमन्वीयते। सुखतमाः सुख-जनकतमाः प्राणिनां सम्बन्धे भवन्ति। शरीरौषधानां प्राणिनां शरीराणाम् अविकल्पका भावान्तराकल्पकाः औषधानाञ्चाविकल्पकाः संशोधनार्थं कृतौषधानां गुणान्तराकल्पकाः। हि यस्मात् तस्मात् साधारणलक्षणेषु वमनादीनां प्रवृत्तिर्विधीयते। इतरे पुनरिति हेमन्तमात्रादिसंज्ञकास्तु त्रय ऋतवोऽत्यर्थशीतोष्णवर्षत्वात्। पौषमाघात्मकहेमन्तोऽत्यर्थशीतत्वाद् दुःखतमः, वैशाखज्यैष्ठरूपो ग्रीष्मस्त्वत्यर्थोष्णत्वाद् दुःखतमः, भाद्राश्विनरूपास्तु वर्षा अतिवर्षत्वाद् दुःखतमा भवन्तीति। तथात्वाच्च शरीरौषधानां विकल्पकाश्च ते भवन्ति। प्राणिनां शरीराणां भावान्तरकल्पकाः औषधानां संशोधनार्थं

यदि देशकृतोऽयं भेदः स्यात्, तदा तमेव भेदकं ब्रूयात्, न संशोधनम्। तेन, काश्यपोक्तदेश-भेदेन प्रावृडादिक्रमो न तावदिहाभिमतः। अविकल्पकाश्च शरीरौषधानामिति, न शरीरस्य कृत्रिमता आपतितगुणेन भेदकास्तथौषधस्य च न प्रमाणोत्कर्षापकर्षभेदकारका इत्यर्थः, विकल्पकाश्च

तत्र हेमन्ते ह्यतिमात्रशीतोपहतत्वाच्छरीरमसुखोपपन्नं भवत्यतिशीतवाताध्मातमतिदारुणीभूतमवबद्धदोषञ्च *। भेषजं पुनः संशोधनार्थमुष्णस्वभावमतिशीतोपहतत्वान्मन्दवीर्य्यत्वम् आपद्यते। तस्मात् तयोः संयोगे संशोधनमयोगायोपपद्यते शरीरमपि च वातोपद्रवाय ॥ १०६ ॥

ग्रीष्मे पुनर्भृशोष्णोपहतत्वाच्छरीरमसुखोपपन्नं भवत्युष्ण-

कृतौषधानां गुणान्तरकल्पकाश्च भवन्तीति यस्मात् तस्माद्वमनादीनां निवृत्तिरितरेषु विधीयते इति ॥ १०५ ॥

गङ्गाधरः—ननु कथं हेमन्तादयो दुःखतमा विकल्पकाश्च शरीरौषधानां भवन्तीत्यत आह—तत्रेत्यादि। तेषु हेमन्तग्रीष्मवर्षाख्येषु त्रिषु ऋतुषु मध्ये हेमन्ते पौषमाघरूपे हि यस्मात् शरीरमतिमात्रशीतोपहतत्वात् असुखोपपन्नम् अतिशीतवाताध्मातमतिमात्रशीतवाताभ्यां युतम् अतिदारुणीभूतमतिरौक्ष्यकर्कशादिमत्तया कठिनीभूतम् अवरुद्धदोषम् अवरुद्धवातकफादिकं भवति इत्यतिमात्रशीतोपहतत्वादिकं शरीरविकल्पकत्वोपदर्शनं तैश्चासुखोपपन्नत्वं दुःखतमत्वोपदर्शनम्। औषधानां विकल्पकत्वं दर्शयति—भेषजं पुनरित्यादि। संशोधनार्थमित्यनेन संशमनार्थमपि भेषजम् अतिशीतोपहतं मन्दवीर्य्यं स्यादिति सूच्यते। न तु तत् प्रतिपिध्यते। ननु मन्दवीर्य्यत्वे त्वौषधानां का हानिरित्यत आह—तस्मादित्यादि। तस्मात् शरीरस्य शीतवाताध्मातत्वातिदारुणीभूतत्वावरुद्धदोषत्वादौषधस्य शीतोपहतत्वेन मन्दवीर्य्यत्वापन्नत्वाच्च तयोः प्राणिनां शरीरौषधयोः संयोगे उपसेवनेन संयोगे संशोधनं वमनादिक्रिया अयोगाय अप्रवृत्तये उपपद्यते। नन्वयोगे का हानिरित्यत आह—शरीरमपि चेत्यादि। वातोपद्रवो वातजनित उपद्रवः ॥ १०६ ॥

गङ्गाधरः—हैमन्तिकसंशोधने दोषं दर्शयित्वा ग्रैष्मिकसंशोधने दोषं दर्शयति—ग्रीष्मे पुनरित्यादि। भृशोष्णत्वोपहतत्वात्। शरीरं ग्रीष्मात्मका-

शरीरौषधानामिति यदात्ययिकत्वेनावश्यकर्त्तव्या भवन्ति वमनादयः, तदौषधस्य कृत्रिमगुणोपधानेन यथावक्ष्यमाणेन, तथा शरीरस्य च विकल्पका भवन्ति ॥ १०५ ॥

चक्रपाणिः—यथा हेमन्तादषु दुःखमत्वं भवति, तदाह—तत्र हेमन्त इत्यादि। आबद्ध-

* आबद्धदोषमिति चक्रसम्मतः पाठः।

वातातपाध्मातमतिशिथिलमत्यर्थप्रविलीनदोषम्। भेषजं पुनः संशोधनार्थमुष्णस्वभावमेवात्युष्णानुगमनात् तीक्ष्णतरत्वम् आपद्यते। तस्मात् तयोः संयोगे संशोधनमतियोगायोपपद्यते शरीरमपि पिपासोपद्रवाय ॥ १०७ ॥

वर्षासु तु मेघजालावतते गूढार्कचन्द्रतारे धाराकुले वियति भूमौ पङ्कजलपटलसंवृतायामत्यर्थोपक्लिन्नशरीरेषु भूतेषु विहतस्वभावेषु च केवलेष्वौषधग्रामेषु तोयानुगतमारुतोपहतेषु

ऽसुखोपपन्नम् उष्णवातातपाध्मातम् उष्णाभ्यां वाता भ्य युक्तम् अतिशिथिलम् अत्यर्थं प्रविलीनदोषं प्रकर्षेण विलयनवन्तो द्रवाभावमापन्ना दोषा यत्र तत् तथा भवति। इति ग्रीष्मस्यासुखतमत्वप्रदर्शनं शरीरविकल्पकत्वोपदर्शनञ्च। भेषजविकल्पकत्वं दर्शयति— भेषजं पुनरित्यादि। संशोधनार्थमित्यनेन संशमनार्थश्चोक्तमौषधं तीक्ष्णं भवतीति बोध्यम्। ननु कुतः इत्यत आह—उष्णस्वभावमिति। संशोधनार्थं भेषजमुष्णस्वभावं न हि तत्स्वभावं विना संशोधनसमर्थं भवति तस्मात् तीक्ष्णतरत्वमुष्णानुगमनादापद्यते उष्णं तद्भेषजमिति भावः। तीक्ष्णतरत्वापन्नत्वे भेषजात् का हानिरित्यत आह— तस्मादित्यादि। तस्मात् ग्रीष्मे उष्णाधिकस्वभावे शरीरस्योष्णवातातपाध्मातत्वातिशैथिल्यात्यर्थप्रविलीनदोषत्वात् उष्णस्वभावेन संशोधनार्थभेषजस्य तदुष्णानुगमनेन तीक्ष्णतरत्वापन्नत्वाच्च। तयोः शरीरसंशोधनार्थौषधयोः संयोगे उपसेवनेन संयोगे संशोधनं वमनादिक्रिया अतियोगायातिप्रवृत्तये उपपद्यते। नन्वतियोगात् का हानिरित्यत आह— शरीरमपीत्यादि। पिपासया सहोपद्रवो वक्ष्यमाणस्तस्मै उपपद्यते इत्यन्वयः ॥ १०७ ॥

गङ्गाधरः— पारिशेष्यात् वर्षासु संशोधनदोषमाह— वर्षासु त्वित्यादि। मेघानां जालैः समूहैरवतते व्याप्ते अत एव गूढा अव्यक्ता दिवाकरो निशि चन्द्रस्ताराश्च यत्र तस्मिन् धाराकुले मेघवर्षेण जलानां धाराभिराकुले व्याप्ते च वियति नभोमण्डले सति सत्याञ्च भूमौ पङ्कजलानां पटलैः संवृतायां सुतरां तत एव सत्सु च भूतेषु प्राणिषु अत्यर्थोपक्लिन्नशरीरेषु विहतस्वभावेषु च।

ऽल्पमिति अतिबद्धदोषम्। ऽयोरिति यथोक्तग्रीष्मशरीरभेषजयोः। तोयस्य तोयदानुगतमारुतस्य

संसर्गाद्‌ गुरुप्रवृत्तानि * वमनादीनि भवन्ति गुरुसमुत्थानतमानि च शरीराणि। तस्माद्वमनादीनां निवृत्तिर्विधीयते वर्षान्तेष्वृतुषु न चेदात्ययिके कर्म्म ॥ १०८ ॥

आत्ययिके पुनः कर्म्मणि काममृतुं विकल्प्य कृत्रिमगुणोपधानेन यथर्त्तुगुणविपरीतेन भेषजं संयोगसंस्कारप्रमाण-

केवलेषु कृत्स्नेषु औषधग्रामेष औषधसमूहेषु तोयानुगतमारुतोपहतेषु मेघैर्वृष्टं तोयमनुगतेन मारुतेन उपहतेषु सत्सु संसर्गादुपसेवनन तथाभूतप्राणिशरीरे तथाभूतौषधसंयोगात् गुरुप्रवृत्तानि वमनाद्यौषधानि भवन्ति तेषां शरीरलाघवकरी प्रवृत्तिन भवति वमनादीनामिति भावः। तेन तु का हानिरित्यत आह—गुरुसमुत्थानतमानि चेत्यादि। गुरोर्गौरवगुणस्य समुत्थानं यत्र तद्‌ गुरुसमुत्थानम् अतिशयेन तदिति गुरुसमुत्थानतमानि शरीराणि। तस्मादुक्तात् ऋतुत्रये दोषात् वर्षाभागान्तेषु वर्षासु पूर्व्वभागं प्रावृट्कालं विहायोत्तरभागरूपवर्षान्तेषु त्रिष्वृतुषु तेन हेमन्तमात्रग्रीष्ममात्रवर्षामात्रेषु ऋतुषु त्रिषु वमनादीनां निवृत्तिर्विधीयते। नन्वेतेषु वर्षाभागान्तेष्वृतुषु त्रिषु यत्रात्ययिको व्याधिरुत्पद्यते संशोधनसाध्यश्च भवति तत्र तदापि किं वमनादिप्रवृत्तिर्न विधीयते इत्यत आह—न चेदात्ययिके कर्म्मेति। आत्ययिके हठादत्ययकरे अलसकादिके चेद्‌ यदि वमनादिकर्म्म न स्यात् तदा तेषु त्रिषु वर्षान्तेषु ऋतुषु वमनादीनां निवृत्तिर्विधीयते॥ १०८ ॥

गङ्गाधरः—ननु तर्हि यत्रात्ययिके व्याधौ वमनादिकर्म्म विधीयते तेषु त्रिष्वप्यृतुषु तदा तत्तदृतुषु प्रवृत्तवमनादीनामयोगादयो दोषा भवन्तु तैश्च वातोपद्रवादियुक्तं शरीरं भवतु इत्याशङ्कायामाह—आत्ययिके पुनरित्यादि। आत्ययिके तु कर्म्मण्यपि वर्षाभागान्तेषु त्रिष्वृतुषु न साधारणलक्षणेषु त्रिष्वृतुष्विव संशोधनार्थं भेषजं प्रयोजयेत्। परन्तु वर्षाभागान्तं तं तमात्ययिककर्म्मोत्पन्नम् ऋतुं कामं यथाभिलाषं यत् संशोधनमभिमतं युक्तत्वेन भवति तथाविधरूपेण विकल्प्य विशेषेण तदातुरव्याधिबलदेहबलाद्यनुसारेण विविच्य संशोधनार्थं प्रयोक्तव्यं भेषजं तद्घटकद्रव्याणां संयोगस्य संस्कारस्य च

च संसर्गः। तस्माद् गुरुप्रवृत्तीनीति गुरोर्यथा न सुखकारिणी प्रवृत्तिर्भवति, तथात्रापीत्यर्थः

* तोयतोयदानुगतमारुतसंसर्गाद् गुरुप्रवृत्तीनीति चक्रसम्मतः पाठः।

विकल्पेनोपपाद्य प्रमाणवीर्य्यसमं कृत्वा ततः प्रयोजयेदुत्तमेन यत्नेनावहितः ॥ १०६ ॥

आतुरावस्थास्वपि च कार्य्याकार्य्यं प्रति कालाकालसंज्ञा, तद् यथा—अस्यामवस्थायामस्य भेषजस्याकालः कालः पुनरस्य इति। एतदपि हि भवत्यवस्थाविशेषेण, तस्मादातुरावस्थास्वपि कालाकालसंज्ञा। तस्य परीक्षा मुहुर्म्मुहुरातुरस्य सर्व्वावस्था-

प्रमाणस्य च विशेषतो यथर्त्तु गुणविपरीतेन हेमन्ते उष्णगुणेन ग्रीष्मे शीतगुणेन वर्षासु लाघवगुणेन कृत्रिमगुणोपाधानेन कल्पनेन उपपाद्य निर्म्माय प्रमाणवीर्यसमं तदौषधं तत्तदृतुना सह प्रमाणवीर्य्याभ्यां समं कृत्वाऽवहितोऽवधानवान् भिषक् उत्तमेन यत्नेन न त्ववहेलया प्रयोजयेत्। इत्येवंप्रकारेणातुरस्य परीक्षा संवत्सरकालतः कार्य्या ॥ १०९ ॥

गङ्गाधरः—अथातुराणामवस्था च काल इति यदुक्तं ततश्चातुरपरीक्षां दर्शयति—आतुरावस्थास्वपीत्यादि। आतुरस्यावस्थासु ज्वरादौ सामत्वनिरामत्वजीर्णत्ववैषम्याद्याख्यासु कार्य्यं प्रति भेषजविशेषस्य कालाकालसंज्ञा अकार्य्यं प्रति च कालाकालसंज्ञा। तां तां विवृणोति—तद् यथेत्यादि। अस्यामवस्थायां यथा ज्वरादौ व्याधौ सामत्वावस्थायाम् अस्य भेषजस्य मुख्यभेषजस्याकालः, कालः पुनरस्य तोयपेयादिसंस्कारकतया गौणभेषजस्य। इत्येवं चिकित्सितादिषु यस्यां यस्यामवस्थायां यद् यद् भैषज्यं विधातव्यं तस्यां तस्यामवस्थायां तस्य तस्य भेषजस्य कालोऽकालस्तु तदितरेषाम् इत्युन्नेयम्। निगमयति प्रतिज्ञां—तस्मादित्यादि। तस्य कालाकालस्य परीक्षा।

किंवा बहुप्रतिविधेयप्रवृत्तानि गुरुप्रवृत्तानि। गुरुसमुत्थानानीति संशोधनक्लिष्टानि शरीराणि। तदा महता प्रयत्नेन चिरेण कालेन प्रकृतिं प्राप्नुवन्तीत्यर्थः। वर्षाभागान्तेष्विति हेमन्तग्रीष्मवर्षासु। हेमन्तादिष्वप्यात्ययिकव्याधौ संशोधनं दर्शयन्नाह—न चेदित्यादि। विकल्प्येति अल्पगुणयुक्तं कृत्वा। कृत्रिमगुणोपधानं यथा—शीते शीतप्रतीकारार्थमुष्णकरणम्। उक्तञ्च अन्यत्र—"शीते शीतप्रतीकारमुष्णे चोष्णनिवारणम्। कृत्वा कुर्य्यात् क्रियां प्राप्तां क्रियाकालं न हापयेत्"। ऋतौ प्रतीकारं दर्शयित्वा भेषजप्रतीकारमाह—भेषजमित्यादि। संयोगविकल्पः यथा—शीते त्रिवृताया उष्णेन गोमूत्रेणालोडनम्। प्रमाणविकल्पः यथा—अयोगप्रतीकारार्थम् अतिमात्रत्रिवृद्दानमित्यादिकः। अत्र च प्रमाणविकल्पस्तथा कर्त्तव्यः यथा विरुद्धप्रमाणभेषज-

विशेषावेक्षणं यथावद्भेषजप्रयोगार्थम् । न ह्यतिपतितकाल-मप्राप्तकालं वौषधमुपयुज्यमानं यौगिकं भवति । कालो हि भैषज्यप्रयोगपर्य्याप्तिमभिनिर्व्वर्त्तयत्येव ॥ ११० ॥

प्रवृत्तिस्तु प्रतिकर्म्मसमारम्भः । तस्य लक्षणं भिषगौषधातुरपरिचारकाणां क्रियासमायोगः ॥ १११ ॥

मुहुर्म्मुहुरित्यादि स्पष्टम् । कुत आतुरस्य सर्व्वावस्थावेक्षणं यथावद्भेषजप्रयोगार्थम् । मुहुर्म्मुहुः कार्य्यं तदवेक्षणं विनापि किं भेषजप्रयोगो यथावन्न युज्यते इत्यत आह—न ह्यतीत्यादि । अतिपतितकालमतीतकालमप्राप्तकालं वा भेषजमुपयुज्यमानं न यस्माद् यौगिकं सम्यग् योगाय भवति परन्तु कालात्ययेऽप्राप्तकाले वा उपयोगाद्भेषजप्रयोगातियोगमिथ्यायोगेभ्यो भवतीति भावः । ननु कस्मात् कालात्ययेऽप्राप्तकाले वाप्युपयुज्यमानं भेषजं न यौगिकं भवतीत्यत आह—कालो हीत्यादि । भैषज्येत्युपलक्षणमायुर्व्वेदशास्त्रत्वात् तेन सर्व्वेषामपि प्रयोगस्य पर्य्याप्तिं सर्व्वतोभावेनाप्तिं योगमभिनिर्व्वर्त्तयति जनयति युक्त्या भूतानां परिणामकारणत्वादित्युन्नेयम् । इति कालपरीक्षा दर्शिता ॥ ११० ॥

गङ्गाधरः—अथ कारणादिषु दशसु परीक्ष्यविशेषेषु कालानन्तर्य्यात् परीक्ष्यविशेषः प्रदर्श्यते । प्रवृत्तिर्यथा परीक्षितव्या तथा दर्शयति—प्रवृत्तिस्त्वित्यादि । प्रतिकर्म्मणो व्याधिप्रतिकारस्य लङ्घनाद्युपक्रमादेः समारम्भः सम्यक् वाङ्मनःशरीराणां प्रवृत्तिभिरुपक्रमः । तस्य विज्ञानार्थमाह—तस्य लक्षणमित्यादि । भिषगादीनां चतुर्णां पादानां क्रियाणां समायोगः समवायः । भिषगाद्यन्यतमक्रियायोगाभावे प्रवृत्तिहानिः इत्यवगम्यते चतुष्पादोपादानेन । इत्युक्तं यथा परीक्ष्यविशेषः प्रवृत्तिः परीक्षितव्या तत् ॥ १११ ॥

मेलकः कालः स्यात्, तथा, संयोगविकल्पश्च कर्त्तव्यः, यथा विरुद्धवीर्य्यभेषजमेलकः कालः स्यादिति दर्शयन्नाह—प्रमाणवीर्य्यसमं कृत्वेति । आतुरावस्थालक्षणकालमाह—आतुरेत्यादि । तत्रोदाहरणम्—नवज्वरे न कषायकालः, अतिक्रान्तषड़हे च कषायकाल इत्यादि । भैषज्यप्रयोगपर्य्याप्तिमिति भेषजप्रयोगसाध्यसिद्धिमित्यर्थः ॥ १०६—११० ॥

चक्रपाणिः—कालमभिधाय क्रमेण प्राप्तां प्रवृत्तिमाह—प्रवृत्तिस्त्वित्यादि । प्रतिकर्म्म चिकित्सा ॥ १११ ॥

उपायस्तु भिषगादीनां सौष्ठवमभिसन्धानञ्च सम्यक्। तस्य लक्षणं भिषगादीनां यथोक्तगुणसम्पद्भिर्देशकालप्रमाणसात्म्यक्रियादिभिश्च सिद्धिकारणैः सम्यगुपपादितस्यौषधस्यावचारणमिति ॥ ११२ ॥

एवमेते दश परीक्ष्यविशेषाः पृथक् पृथक् परीक्षितव्या भवन्ति। परीक्षायास्तु खलु प्रयोजनं प्रतिपत्तिज्ञानम्। प्रतिपत्तिर्नाम यस्तु विकारो यथा प्रतिपत्तव्यस्तस्य तथानुष्ठानज्ञानम्।

गङ्गाधरः—अथ परीक्ष्यविशेषश्चोपायो यथा परीक्षितव्यस्तथा दर्शयति—उपायस्त्वित्यादि। भिषगादीनां कारणादीनां चतुर्णाम्। तस्येत्यादि। भिषगादीनां भिषगौषधातुरपरिचारकाणां यथोक्तगुणसम्पद्भिः खुड्डाकचतुष्पादोक्तानां गुणानां सम्पद्भिः। आदिपदेन प्रकृत्यादिपरीक्षणानां ग्रहणम्। सम्यगुपपादितस्य सम्यगुपकल्पितस्योपयुज्यमानस्य चौषधस्यावचारणमुपसेवनम्। तेन चानुमीयते भिषगादीनां सौष्ठवमभिसन्धानञ्चेति ॥ ११२ ॥

गङ्गाधरः—अथ कश्चात्र परीक्ष्यविशेषः कथञ्च परीक्षितव्य इति प्रश्नद्वयस्य उत्तरार्थं कृतां, तस्य यो यः परीक्ष्यविशेषो यथा यथा परीक्षितव्यः स तथा तथा व्याख्यास्यते इति प्रतिज्ञां, समाप्तुमुपसंहरति—एवमित्यादि। एते दश कारणादिरूपा भिषगादयो दश परीक्ष्यविशेषाः, इति कश्चात्र परीक्ष्यविशेष इति प्रश्नस्योत्तरसमाप्तिवचनम्। पृथक् पृथक् परीक्षितव्या इति कथञ्च परीक्षितव्या इति प्रश्नस्योत्तरवचनसमाप्तिवचनमिति। ०। अथ किंप्रयोजना च परीक्षेति प्रश्नस्योत्तरमाह—परीक्षायास्त्वित्यादि। प्रतिपत्तिज्ञानमिति। ननु का प्रतिपत्तिरित्यत आह—प्रतिपत्तिर्नामेत्यादि। प्रतिपद्यतेऽनेनेति प्रतिपत्तिः शास्त्रं, तदिह विवक्ष्यते—य इत्यादि। यो विकारो यथा प्रतिपत्तव्यः शास्त्रतो वा प्रत्यक्षानुमानाभ्यां विज्ञातव्यस्तस्य विकारस्य तथानुष्ठानं तदुपयोगिभिरुपक्रमादिभिरुपाचरणं ज्ञायतेऽनेनेति तथानुष्ठानज्ञानं शास्त्रं, तच्छास्त्रस्य ज्ञानं प्रयोजनं संशोधनं कामयमाना भिषजः परीक्ष्य परीक्षायामिति यद्व्याख्यानं

चक्रपाणिः—परिशिष्टमुपायमाह—उपाय इत्यादि। यथोक्तगुणसम्पद्भिरित्यनेन सौष्ठवमुक्तम् ॥ ११२ ॥

चक्रपाणिः—दशेत्यादिना तु सम्यगभिविधानं ब्रूते। किम्प्रयोजना परीक्षेत्यस्योत्तरम्—

**यत्र खलु वमनादीनां प्रवृत्तिर्यत्र च निवृत्तिस्तद्व्यासतः सिद्धिषु उत्तरकालमुपदेक्ष्यते सर्व्वम्। प्रवृत्तिनिवृत्तिलक्षणसंयोगे खलु गुरुलाघवं संप्रधार्य्य सम्यगध्यवस्येदन्यतरनिष्ठायाम्। सन्ति हि व्याधयः शास्त्रेषूत्सर्गापवादैरुपक्रमं प्रति निर्द्दिष्टाः। तस्माद् गुरुलाघवं सम्प्रधार्य्य सम्यगध्यवस्येदित्युक्तम्॥ ११३**

तत्र यौक्तिकं तच्छास्त्रज्ञानेन हि संशोधनकाले यदि कारणादीनां ज्ञानं न फलति तदा कथं संशोधयेदिति। तस्मात् कर्म्मणि कृता प्रतिपाद्यप्रतिपत्तिः प्रतिपत्तव्योऽर्थस्तस्य ज्ञानं तदिह प्रसङ्गात् आयुर्व्वेदे यो विकारो यथा प्रतिपत्तव्यस्तस्य व्याधेस्तथानुष्ठानस्य ज्ञानं प्रतिपत्तिज्ञानमिति किंप्रयोजना परीक्षेति प्रश्नस्योत्तरम्।

अथ क्व च वमनादीनां प्रवृत्तिः क्व च निवृत्तिरिति प्रश्नद्वयस्योत्तरमाह—यत्र खल्वित्यादि। सिद्धिषु सिद्धिस्थाने। इति क्व च वमनादीनां प्रवृत्तिः क्व च निवृत्तिरिति प्रश्नद्वयस्योत्तरम्।०। अथ प्रवृत्तिनिवृत्तिसंयोगेन किं नैष्ठिकमिति प्रश्नस्य उत्तरमाह—प्रवृत्तीत्यादि। एकस्मिन् पुरुषे वमनादीनां प्रवृत्तिलक्षणं वमनादिसाध्यरोगो निवर्त्तते वर्त्तते चापरो वमनानर्हरोगोऽतस्तु वमनादीनां तत्र प्रवृत्तिनिवृत्त्योर्लक्षणयोः संयोगो मिश्रस्तदा तत्र गुरुलाघवं प्रवृत्तिलक्षणस्य किं गौरवं निवृत्तिलक्षणस्य लाघवम्, किं निवृत्तिलक्षणस्य गौरवं प्रवृत्तिलक्षणस्य लाघवमिति सम्प्रधार्य्य प्रवृत्तिलक्षणस्य गौरवं निवृत्तिलक्षणस्य लाघवं यदि सम्प्रधार्य्यते तदा, यदि वा निवृत्तिलक्षणस्य गौरवं प्रवृत्तिलक्षणस्य लाघवं सम्प्रधार्य्यते तदा, तदन्यतरनिष्ठायां गुरुलक्षणस्यैकस्य निश्चये सम्यग् लघुलक्षणार्हां प्रवृत्तिमुत्सृज्य गुरुलक्षणार्हां प्रवृत्तिमवधार्य्य व्यवस्येत्। ननु लघुलक्षणार्हां प्रवृत्तिं यदुत्सृजेत् तत् कथं विज्ञेयं तत आह—सन्ति हीत्यादि। हि यस्मात् शास्त्रेषु व्याधय उपक्रमं प्रति उत्सर्गापवादैस्त्यागोपादानैर्निर्द्दिष्टाः। सम्प्रधार्य्येत्यादिवाक्यार्थं द्रढ़यति तस्मादित्यादि॥ ११३॥

परीक्षायास्त्वित्यादि। प्रतिपत्तिशब्दार्थं विभजते—यथेत्यादि। प्रतिपत्तव्य इत्यनुष्ठानेन योजयितव्यः। 'क्व च वमनादीनां प्रवृत्तिः, क्व च निवृत्तिः' इत्यस्योत्तरमतिदेशेनाह—यत्र खल्वित्यादि। 'प्रवृत्तिनिवृत्तिलक्षणसंयोगे किं नैष्ठिकम्' इत्यस्योत्तरम्—प्रवृत्तीत्यादि। अध्यवस्येदित्यध्यवसायं कुर्य्यादित्यर्थः। अन्यतरनिष्ठायाम् इत्यन्यतररूपावस्थायाम्। अत्र गुरुलाघवे ज्ञाते गुरुप्रतिक्रियानिश्चयो-

यानि तु खलु वमनादिषु भेषजद्रव्याण्युपयोगं गच्छन्ति तान्यनुव्याख्यास्यामः। तद् यथा—फलजीमूतकेक्ष्वाकुधामार्गव-कुटजकृतवेधनफलानि, फलजीमूतकेक्ष्वाकुधामार्गवपुष्पपत्राणि, आरग्वध-वृक्षक-मदन-स्वादुकण्टकपाठा-पाटला-शार्ङ्गेष्टा-मूर्व्वा-सप्तपर्ण-नक्तमालपिचुमर्द्दपटोल-सुषवीगुडूची-चित्रकसोमवल्क-शतावरीद्वीपिशिग्रुमूलकषायैश्च, मधुकमधूककोविदारकर्व्वुदार-नीप-निचुलविम्बीशणपुष्पीप्रत्यक्पुष्पी-सदापुष्पीकषायैश्च।

गङ्गाधरः—कानि च वमनादीनां भेषजद्रव्याणि उपयोगं गच्छन्तीति प्रश्नस्योत्तरमाह—यानि त्वित्यादि। फलेत्यादि। फलं मदनफलम्। जीमूतकं घोषकभेदः। इक्ष्वाकुस्तिक्तालाबुः। धामार्गवः पीतघोषकभेदो वामकत्वान्नेहापामार्गः। कुटजः स्वनामप्रसिद्धः। कृतवेधनं ज्योत्स्निका श्वेतघोषकस्तेषां फलानि। फलं मदनं। जीमूतकः क्षुद्रघोषकः। इक्ष्वाकुस्तिक्तालाबुः। धामार्गवो घोषकः पीत एषां पुष्पपत्राणि। एतेन फलजीमूतकेक्ष्वाकुधामार्गवाणां फलपुष्पपत्राणि, कुटजकृतवेधनयोः फलानि। आरग्वधः शोनालुः। वृक्षकः कुटजः। मदनं मदनवृक्षः। स्वादुकण्टकः वैकङ्कतः। पाठा आकनादिः। पाटला पाटलिमूलम्। शार्ङ्गेष्टा रक्तगुञ्जा। मूर्व्वा मूर्चिमुखी। सप्तपर्णः सप्तच्छदः। नक्तमालो नाटाकरञ्जः। पिचुमर्द्दो निम्बः। पटोलम्। सुषवी पर्णासभेदः। गुडूची छिन्नरुहा। चित्रकं स्वनामख्यातम्। सोमवल्कः श्वेतखदिरः। शतावरी शतमूली। द्वीपि व्याघ्री। शिग्रुः शोभाञ्जनस्तस्य मूलम्। एषां कषायैः तानि। मधुकं यष्टीमधु। मधूकं गुड़पुष्पम्। कोविदारः श्वेतकाञ्चनः। कर्व्वुदारो रक्तकाञ्चनः। नीपः कदम्बः। निचुल इज्जलः। विम्बी विम्बफलम् ओष्ठोपमाफलमिति यावत्। शणपुष्पी घण्टारवा। प्रत्यक्पुष्पी अपामार्गः।

ऽप्युक्तोऽपि ज्ञायते। तेन शास्त्रान्तरे गुरुव्याधिप्रतीकारनिष्ठायामध्यवसायं कुर्य्यादिति साक्षान्न कृतः। एतमेव गुरुव्याधिप्रतीकारं लघुव्याधिव्युत्पादकवचनभङ्ग्यन्तरेणाह—सन्ति हीत्यादि। सम्यगध्यवस्येदिति, उत्सर्गलघुं परित्यज्यापवादगुरुमुपक्रम्यतथाध्यवस्येत्। "बलवन्तमुपद्रवम्" इत्यादिना हि दुर्ब्बलं परित्यज्य बलवच्चिकित्सामभिधास्यति ॥ ११२ ॥

चक्रपाणिः—सम्प्रति कानि च वमनादिषु भेषजद्रव्याणि संयोगं गच्छन्तीत्यस्योत्तरं—यानीत्यादि। शार्ङ्गेष्टा गुञ्जा। सोमवल्कः खदिरः। द्वीपी कण्टकारी, द्वीपिशत्रुरिति पाठे

एलाहरेणुप्रियङ्गु-पृथ्वीकाकुस्तुम्बुरुतगरनलदह्रीवेरतालीशोशीर-कषायैश्च, इक्षुकाण्डेक्षुवालिकादर्भपोटगलतगरकालकृत *-कषायैश्च, सुमनासौमनस्यायनीहरिद्रादारुहरिद्रावृश्चीरपुनर्नवा-महासहाक्षुद्रसहाकषायैश्च, शाल्मलीशाल्मलकभद्रपर्ण्यैरापर्ण्युपोदिकोद्दाल-धन्वन-राजादनोपचित्रागोपी-शृङ्गाटिका-कषायैश्च, पिप्पली-पिप्पलीमूलचव्यचित्रकशृङ्गवेरसर्षप-फाणित-क्षीर-क्षार-लवणोदकैश्च, यथालाभं यथेष्टं वाप्युपसंस्कृत्य वर्त्तिक्रियाचूर्णावलेह-स्नेहकषायमांसरसयवागूयूषकाम्बलिकक्षीरोपधेयान् मोदकान्

सदापुष्पी रक्तार्कः। एला स्थूलैला। हरेणुः रेणुका। प्रियङ्गुः स्वनामा। पृथ्वीका सूक्ष्मैला। कुस्तुम्बुरुः स्वनामख्यातस्तदभावे धनीयकम्। तगरं तगरपादिकम्। नलदं जटामांसी। ह्रीवेरं वालकम्। तालीशं तालीशपत्रम्। उशीरं वीरणमूलम्। एषां कषायैश्च। इक्षुकाण्डं काण्डेक्षुर्नटा इति लोके। इक्षुवालिका खागड़िका। दर्भ उलूयामूलम्। पोटगलो होगलः। तगरं तगरपादुका। कालः कृष्णागुरु। एतैः कृतकषायैः। एषां यथालाभं कषायैश्च। सुमना मालतीपुष्पम्। हरिद्रा। दारु-हरिद्रा। वृश्चीरः श्वेतपुनर्नवा। पुनर्नवा रक्तपुनर्नवा। महासहा माषपर्णी। क्षुद्रसहा मुद्गपर्णी। एषां यथालाभं कषायैश्च। शाल्मली शाल्मलवृक्षः। भद्रपर्णी गाम्भारी। ऐरापर्णी हस्तिपर्णी हस्तिकर्णपलाश इति लोके। उपोदिका कलम्बी। उद्दालः काश्चनः। धन्वनः धाउनीवृक्षः। राजादनं पियाल-भेदः। उपचित्रा भाण्डी दन्ती वा। गोपी श्यामालता। शृङ्गाटिका शिङ्गड़ा। एषां कषायैश्च। पिप्पल्यादीनामुदकैश्च यथालाभं यथेष्टं यथाभिलषितं वा एतैः कषायैः फलजीमूतकादीनां फलपुष्पपत्राणि कुटजकृतवेधनयोः फलानि च उपसंस्कृत्य भावयित्वा पक्त्वा वा वर्त्तिक्रियां चूर्णं वा अवलेहं वा स्नेहं वा घृतादिकं कषायं वा मांसरसं वा यवागूं वा यूषं वा काम्बलिकं वा क्षीरोपधेयं वा

शतावरी देया। विदुलो वेतसः, शणपुष्पी घण्टारवा, सदापुष्पी रक्तार्कः। कालकृतो कासमर्दः। पोटगलो होगलः। सुषवी कारवेल्लकः। सुमना जाती। सौमनस्यायनी जातिकलिका जाति-कोषो वा। शाल्मलिको रोहड़कः, स्वल्पशाल्मलिर्वा। भद्रपर्णी भाद्राली। एलापर्णी रास्ना।

* कालकृत इति चक्रः।

अन्यांश्च भक्ष्यप्रकाराननुविधाय यथार्हं वमनार्हाय दद्याद्विधिवद्वमनम्। इति कल्पसंग्रहो वमनद्रव्याणाम्। कल्पस्त्वेषां विस्तरेणोत्तरकालमुपदेक्ष्यते ॥ ११४ ॥

विरेचनद्रव्याणि तु श्यामात्रिवृच्चतुरङ्गुलतिल्वकमहावृक्षसप्तलाशङ्खिनीदन्तीद्रवन्तीनां क्षीरमूलत्वक्पत्रपुष्पफलानि यथायोगं तैस्तैः क्षीरमूलत्वक्पत्रपुष्पफलैर्विक्लिप्ताविक्लिप्तैः, अज-गन्धाश्व-गन्धाजशृङ्गी-क्षीरिणी-नीलिनी-क्लीतक-कषायैश्च, प्रकीर्य्योदकीर्य्यामसूरविदलाकम्पिल्लकविडङ्ग-गवाक्षीकषायैश्च, पीलुपियालमृद्वीका-काश्मर्य्यपरूषबदर-दाड़िमामलक-हरीतकी-

मोदकान् वा अन्यांश्च भक्ष्यविशेषपूपादिप्रकारान् अनुविधाय। कल्पसंग्रहः वर्त्तिक्रियादिरूपाणां कल्पानां संग्रहः संक्षेपः। उत्तरकालं कल्पस्थाने ॥ ११४ ॥

गङ्गाधरः—वमनानन्तर्य्याद्विरेचनद्रव्याणि यानि उपयोगं यान्ति तान्याह—विरेचनेत्यादि। श्यामा श्याममूला त्रिवृत्। त्रिवृत् रक्तमूला त्रिवृत्। चतुरङ्गुलः शोनालुः। तिल्वको लोध्रः। महावृक्षः स्नुही। सप्तला शङ्खिनीभेदः। शङ्खिनी शङ्खपुष्पी। दन्ती नागदन्ती। द्रवन्ती क्षुद्रदन्ती। एषां क्षीरमूलादीनि यथायोगं तैस्तैरजगन्धादिकषायैस्त्रिवृदादीनां क्षीरमूलादिषु विक्लिप्ताविक्लिप्तैर्यस्य यत् क्लिप्तं यच्चाक्लिप्तं कल्पनेनायुक्तं तैरुपसंस्कृत्य वर्त्तिक्रियादीन् विविधान् योगान् यथार्हमनुविधाय विरेचनार्हाय विरेचनं दद्यादिति पिण्डार्थः। तत्र विक्लिप्तानाह—अजगन्धेत्यादि। अजगन्धा यमानी। अश्वगन्धा स्वनामख्याता। अजशृङ्गी मेषशृङ्गी। क्षीरिणी स्वनामख्यातवृक्षः। नीलिनी नीलवुह्ना। क्लीतकं यष्टीमधु। एषां यथालाभं कषायैः। प्रकीर्य्या नाटाकरञ्जः। उदकीर्य्या करञ्जः। मसूरविदला श्याममूला त्रिवृत्। कम्पिल्लकः कमलागुड़ीति लोके। विडङ्गं क्रिमिशत्रुः। गवाक्षी गोरक्षकर्कटी। एषां कषायैर्यथालाभम्। पीलुपियालेत्यादि। वृश्चीरः श्वेतपुनर्नवा। पुनर्नवा

उद्दालो बहुवारः। गोपी शारिवा। वर्त्तिक्रिया वर्त्तिरूपदीर्घभक्ष्यकरणम्। तत्र 'आरग्वधादि' 'मध्वादि' पृथग्वर्गकरणं प्रायः समानगुणतां विच्छेदपाठेन दर्शयितुं कृतम्। कल्पनं कल्पः प्रयोग इत्यर्थः। उत्तरकालमिति कल्पस्थाने ॥ ११४ ॥

चक्रपाणिः—विक्लिप्तिर्द्रव्यान्तरसंयोगः। अविक्लिप्तिः केवलप्रयोगः। तेन विक्लिप्ताविक्लिप्तैः

विभीतकवृश्चीरपुनर्नवाविदारिगन्धादिकषायैश्च, सीधुसुरा-सौवीरक-तुषोदक-मैरेयमेदकमदिरामधुमधूलकधान्याम्लकुवल-बदरखर्ज्जूरककर्कन्धुभिश्च, दधिदधिमण्डोदश्विद्भिश्च, गोमहिष्यजावीनाञ्च क्षीरमूत्रैर्यथालाभं यथेष्टं वाप्युसंस्कृत्य वर्त्तिक्रिया-चूर्णावलेहस्नेह-कषाय-मांसरसयूषकाम्बलिकयवागूक्षीरोपधेयान् मोदकानन्यांश्च भक्ष्यविकारान् विविधांश्च योगाननुविधाय यथार्हं विरेचनार्हाय दद्याद् विरेचनम्। इति कल्पसंग्रहो विरेचन-द्रव्याणाम्। कल्पस्त्वेषां विस्तरेणोत्तरकालमुपदेक्ष्यते ॥ ११५ ॥

आस्थापनेषु तु भूयिष्ठकल्पानि द्रव्याणि यानि योगमुपयान्ति तेषु तैष्ववस्थान्तरेष्वातुराणां तानि द्रव्याणि नामतो विस्तरेणोपदिश्यमानान्यपरिसङ्ख्येयानि भवन्त्यतिबहुत्वात्, इष्टश्चानतिसंक्षेपविस्तरोपदेशस्तन्त्रे, तत्रैवेष्टश्च केवलं ज्ञानम्, तस्माद्रसत एव तान्यनुव्याख्यास्यामः ॥ ११६ ॥

क्ता। विदारिगन्धादिर्दशकः। एषां कषायैर्यथालाभम्। सीधुसुरेत्यादि। कुवलं बृहद्बदरम् । इति विरेचनद्रव्याणां कल्पसंग्रहः। उत्तरकालं कल्पस्थाने ॥११५॥

गङ्गाधरः—अथ क्रमिकत्वादास्थापनस्य यानि द्रव्याण्युपयोगमृच्छन्ति तान्याह—आस्थापनेष्वित्यादि स्पष्टम्। ननु नामतो विस्तरेणोपदेशेऽपरिसंख्येयानि भवन्त्यास्थापनद्रव्याणि तेन किमित्यत आह—इष्टश्चेत्यादि। अनतिसंक्षेपविस्तरोपदेशो हि सर्व्वाभीष्टः। नामतो विस्तरेणास्थापनद्रव्याणां यौगिकानामुपदेशेऽतिविस्तरोपदेशः स्यादिति भावः। नन्वतिविस्तरेण किं भयम्, ज्ञानार्थो ह्युपदेशः स चानतिसंक्षेपविस्तरतश्चेत्तदा कथं कृत्स्नं ज्ञानं स्यादित्यत

इति संयुक्तायुक्तैरित्यर्थः। क्षीरिणी दुग्धिका। क्लीतकं यष्टीमधु। मसूरविदला श्यामलता। प्रथमन्तु श्यामा श्याममूला त्रिवृदेवोक्ता ॥ ११५ ॥

चक्रपाणिः—भूयिष्ठकल्पानीति बहुप्रयोगाण्यभिप्रायप्रयोज्यानि च। इष्टश्चानतिसंक्षेपविस्तरोपदेश इत्यनतिसङ्क्षेपविस्तरतः शास्त्रे कथनमिष्टम्, इष्टश्च केवलं ज्ञानमनतिसंक्षेपविस्ताराभिधानेऽपि, यदुक्तम्—"तस्यापि यथा सामान्येनावस्थाज्ञानं भवति, तदपीष्टम्" ग्रन्थकर्त्तुः श्रोतुश्च

रससंसर्गसमवायविकल्पविस्तरो ह्येषामपरिसङ्ख्येयः, समवेतानां रसानामंशांशबलविकल्पातिबहुत्वात्। तस्माद् द्रव्याणाञ्चैकदेशसमुदाहरणार्थं रसेष्वनुविभज्य रसैकैकत्वेन * च नामलक्षणार्थं षड़ास्थापनस्कन्धा रसतोऽनुविभज्य व्याख्यास्यन्ते। यतः

आह—तत्रैवेत्यादि। तत्र नामतो विस्तरोपदेशे इष्टं केवलं कृत्स्नं ज्ञानमास्थापनीययौगिकद्रव्यज्ञानम्, तदेवानतिसंक्षेपविस्तरोपदेशेनापि यथा भवति तथोपदेशे का हानिः इत्यभिप्रेत्याह—तस्मादित्यादि। नामतो विस्तरोपदेशेऽतिबहुत्वेनास्थापन-द्रव्याणामपरिसंख्येयतयातिविस्तरोपदेशस्यानभीष्टत्वाद्रसत एव तदातिविस्तरोपदेशफलकृत्स्नास्थापनद्रव्यज्ञानजनकरसोपदेशादेव तानि आस्थापने यौगिकानि कृत्स्नानि द्रव्याण्यनुव्याख्यास्यामः॥ ११६॥

गङ्गाधरः—रससंसर्गसमवायेत्यादि। तत्रापि हि यस्मात् तेषां द्रव्याणां रससंसर्गसमवायविकल्पविस्तरोऽपरिसंख्येयः समवेतानां संसृष्टानां रसानाम् अंशांशानां हीनहीनतरहीनतममध्यममध्यतरमध्यतमाधिकाधिकतराधिकतमादंशतो बलविकल्पेनातिबहुत्वात्। तस्मात् रससंसर्गसमवायविकल्पविस्तरस्याप्यपरिसंख्येयत्वाद् द्रव्याणाञ्चैकदेशसमुदाहरणार्थं यौगिकास्थापनीयकृत्स्नद्रव्याणां ज्ञानजनककतिचिद्द्रव्योदाहरणार्थं रसेषु मधुरादिषु षट्स्वनुविभज्य अनुरसं विभज्य रसैकैकत्वेन प्रधानतमैकेन रसेन नामलक्षणार्थं नामार्थं लक्षणार्थञ्च षड़ास्थापनस्कन्धा रसत आस्थापनस्य वृक्षस्येव स्कन्धा वृहच्छाखाः षड्रसास्ततस्तेभ्योऽनुविभज्य व्याख्यास्यन्तेऽर्थात् आस्थापनोपयोगीनि इत्यर्थः। तस्माद्रसत एवेति रसं प्राधान्येनोद्दिश्य रसाश्रयद्रव्यस्यानतिसंक्षेपविस्तारोपदेशेन इत्यर्थः। तानीत्यास्थापनोपयोगीनि द्रव्याणि। अत्र च रसद्वारा निर्देशेऽपि रससंसर्गस्यातिबहुत्वेन च कृत्स्नद्रव्यनिर्देशवद् रससंक्षेपता स्यादिति कृत्वा षड्भी रसैर्निर्देशः कर्त्तव्यः॥ ११६॥

चक्रपाणिः—आस्थापनोपयोगीनि द्रव्याणि दर्शयन्नाह—रसेत्यादि। उदाहरणार्थमिति मधुरादिरसस्याधारभूतस्य द्रव्यस्योदाहरणार्थम्, रसेष्वनुविभज्येति रसेषु मधुरादिषु द्रव्याणामेकदेशमाधारतयोपदिश्येत्यर्थः। रसकैवल्येनेति रससंसर्गत्वेन। नामलक्षणार्थं षड़ास्थापनस्कन्धा इति साक्षादुक्तानां जीवकादीनां नामार्थम्, तथा अनुक्तानां मधुरादिद्रव्याणां तज्जातीयत्वेन लक्षणेनास्थापनयोगिद्रव्यसमूहा व्याख्यास्यन्त इति। किंवा नामलक्षणार्थमिति नामज्ञानार्थम्। समूहरसतोऽनुविभज्येति अनुक्तञ्च मधुरादिरसतया निर्दिश्येत्यर्थः।

* रसकैवल्येन इति चक्रसम्मतः पाठः।

षड्विधमास्थापनमेकरसमित्याचक्षते भिषजस्तद् दुर्लभतमं संसृष्टरसभूयिष्ठत्वाद् द्रव्याणाम्। तस्मान्मधुराणि मधुरप्रायाणि मधुरप्रभावप्रायाण्यपि च मधुरस्कन्धे मधुराण्येव कृत्वोपदेक्ष्यन्ते। तथेतराणि द्रव्याण्यपि। तद् यथा—जीवकर्षभकौ जीवन्ती वीरा तामलकी काकोली क्षीरकाकोली * मुद्गपर्णी माषपर्णी

द्रव्याणि। ननु कुतस्तथा व्याख्यास्यन्ते इत्यत आह—यत इत्यादि। एको रसो यत्र तदेकरसम्। नन्विति एकरसमास्थापनं दुर्लभतमं कुत इत्यत आह—संसृष्टेत्यादि। तस्मादित्यादि। तस्मात् द्रव्याणां संसृष्टरसभूयिष्ठत्वेन एकरसद्रव्याणां दुर्लभतमत्वेन एकरसास्थापनस्य दुर्लभतमत्वात्। मधुराणि यानि द्रव्याणि मधुरप्रायाणि च यानि द्रव्याणि मधुरप्रभावप्रायाण्यपि च यानि द्रव्याणि तानि सर्व्वाणि मधुराणि कृत्वा मधुरस्कन्धे आस्थापने उपदेक्ष्यन्ते। तथेतराणि अम्लादीनि द्रव्याणि उपदेक्ष्यन्ते, अम्लानि च यानि द्रव्याणि अम्लबहुलानि च यानि द्रव्याणि अम्लप्रभावप्रायाण्यपि च यानि द्रव्याणि तानि सर्व्वाणि द्रव्याणि अम्लानि कृत्वा अम्लस्कन्धे आस्थापने उपदेक्ष्यन्ते। एवं लवणानि लवणबहुलानि लवणप्रभावप्रायाणि लवणस्कन्धे लवणानि कृत्वा, कटुकानि कटुकबहुलानि कटुकप्रभावबहुलानि च कटुकस्कन्धे कटुकानि कृत्वा, तिक्तानि तिक्तबहुलानि तिक्तप्रभावबहुलानि तिक्तस्कन्धे तिक्तानि कृत्वा, कषायाणि कषायबहुलानि कषायप्रभावबहुलानि कषायस्कन्धे कषायाणि कृत्वोपदेक्ष्यन्ते इति प्रतिज्ञा। ०। तथोपदिशति—तद् यथेत्यादि। जीवकर्षभकावित्यादि। वीरा क्षीरकाकोली।

अयञ्च मधुरादिरसेन द्रव्यगणनिर्देशः—मधुरादिरसेन मधुरादिरसद्रव्यगणनिर्देशो मधुराद्येक-रसस्यैव द्रव्यस्य संग्रहो यथा परैराख्यायते, तथास्माभिरपीष्यते, किन्तु यदपि रसान्तरे सत्यपि मधुरादिप्रधानम्, यद् वा द्रव्यं मधुरादिकार्य्यकारि विपाकप्रभावात्, तदपि मधुरादिगण एवास्माभिः पठनीयमिति दर्शयन्नाह—यत् त्वित्यादि। आस्थाप्यतेऽनेनेति आस्थापनं जीवकादि द्रव्यम्। एकरसमिति शुद्धैकरसम्। मधुरप्रायाणीत्युत्कृष्टमधुररसानीति। एव-मम्लस्कन्धादिष्वम्लादीन्यपि बोध्यानीति 'तथेतराणि' इतिपदेन दर्शयति। भीरु जालान्धरं

* इतः परं भीरु इत्यधिकः पाठः।

शालपर्णी पृश्निपर्णी शणपर्णी * मेदा महामेदा कर्कटशृङ्गी शृङ्गाटिका छिन्नरुहा छत्रातिच्छत्रा श्रावणी महाश्रावणी सहदेवा विश्वदेवा शुक्ला क्षीरशुक्ला बलातिबला विदारी क्षीरविदारी महासहा क्षुद्रसहर्ष्यगन्धा अश्वगन्धा पयस्या वृश्चीरपुनर्नवाबृहती-कण्टकारिकैरण्डमोरटश्वदंष्ट्रासंहर्षाशतावरीशतपुष्पामधूकपुष्पी-यष्टीमधुमधूलिकाः, मृद्वीका-खर्ज्जूरपरूषकात्मगुप्ता-पुष्करबीज-कशेरुकराजकशेरुकराजादन-कतककाश्मर्य्यशीतपाक्योदनपाकी-तालखर्ज्जूरमस्तकेक्षिक्षुबालिकादर्भकुशकाशशालिगुन्द्रेत्कटक-शरमूल-राजक्षवकर्ष्यप्रोक्ताः, द्वारदा भारद्वाजी वनत्रपुष्यभीरुपत्री

कर्कटीशृङ्गी काँकड़ाशृङ्गी। शृङ्गाटिका शृङ्गाटकः। छत्रातिच्छत्रे प्रसिद्धे, शताह्वा-मधुरिके इति परे। श्रावणी श्वेतमुण्डेरी। महाश्रावणी रक्त-मुण्डेरी। सहदेवा पीतपुष्पदण्डोत्पला। विश्वदेवाऽरुणपुष्पदण्डोत्पला। शुक्ला शुक्लवर्णा निःक्षीरा विदारी। क्षीरशुक्ला स्वल्पक्षीरा विदारी। बला श्वेतबला। अतिबला गोरक्षतण्डुला। विदारी निःक्षीरभूमिकुष्माण्डः। क्षीरविदारी बहु-क्षीरभूमिकुष्माण्डः। महासहा श्वेतकुरुवकः। क्षुद्रसहा रक्तकुरुवकः। ऋष्यगन्धा वृद्धदारकः ऋषिजाङ्गलिकी वा। अश्वगन्धा स्वनामख्याता। पयस्या अर्कपुष्पी। वृश्चीरः श्वेतपुनर्नवा। पुनर्नवा रक्तपुनर्नवा। मोरटः कर्णमोरटः। संहर्षा वन्दाकः। मधूकपुष्पी मधूकभेदः। मधूलिका मर्कटहस्ततृण इति ख्यातः। कशेरुकश्चिञ्चा-ड्कः। राजकशेरुः कशेरुरेव। राजादनं पियालः। कतको निर्म्मलः। शीतपाकी काकोलीप्रभेदः। ओदनपाकी नीलझिण्टी। तालमस्तकं खर्ज्जूरमस्तकञ्च इत्यन्वयः। दर्भ उलुमूलम्। शालिः हैमन्तिकधान्यमूलम्। गुन्द्रा गुडूची। राजक्षवकः क्षवृक्षः। ऋष्यप्रोक्ता पीतबला। द्वारदा पालङ्कशाकः। भारद्वाजी

शाकम्। असनपर्णी अपराजिता। मधुपर्णी विकङ्कतम्। छत्रा कोकिलाक्षः। अतिच्छत्रा अरुणकोकिलाक्षः। महाश्रावण्यलम्बुषा। शुक्ला शर्करा। क्षीरशुक्ला त्रिवृत्। क्षुद्रसहा कुमारी। ऋष्यगन्धा ऋष्यजाङ्गलकी, बलाभेदो वा। मोरटं मूर्व्वा। संहर्षा वन्दाकः। मधूक-पुष्पी मधूकभेदः। मधूलिका मर्कटहस्ततृणम्। राजादनं घेञ्चुलिकीति ख्यातम्। कशेरुः चिञ्चोड़कः। राजकशेरुः कशेरुभेदः। शीतपाकी शीतला। ओदनपाकी नीलझिण्टी। ऋष्य-

* शणपर्णीत्यत्र असनपर्णीति, ततः परं मधुपर्णीति, दारु च, इत्यधिकं क्वचित् दृश्यते।

हंसपादी काकनासिका कुलिङ्गाक्षी क्षीरवल्ली * कपोतवल्ली गोपवल्ली मधुवल्ली सोमवल्ली चेति । एषामेवंविधानाञ्चान्येषां मधुरवर्गपरिसंख्यातानामौषधद्रव्याणां छेद्यानि खण्डशश्छेदयित्वा भेद्यानि चाणुशो भेदयित्वा प्रक्षाल्य पानीयेन सुप्रक्षालितायां स्थाल्यां समावाप्य पयसार्द्धोदकेनाभ्यासच्य साधयेद् दर्व्या सततमवघट्टयेत् । तदुपयुक्तं भूयिष्ठम्भसि गतरसेष्वौषधेषु पयसि चानुपदग्धे स्थालीमपहृत्य परिस्रुतं पूतं पयः सुखोष्णं घृततैलवसामज्जलवणफाणितोपहितं वस्तिं वातविकारिणे विधिज्ञो विधिवद् दद्यात् । सुशीतन्तु मधुसर्पिर्भ्यामुपसंस्कृत्य पित्तविकारिणे दद्यात् । इति मधुरस्कन्धः ॥ ११७ ॥

वनकार्पासी । वनत्रपुषी वन्यस्वल्पत्रपुषः । अभीरुपत्री स्वल्पशतावरी । हंसपादी थुलकुड़ी । काकनासा केउठुटी । कुलिङ्गाक्षी पेटिका । क्षीरवल्ली क्षीरलता । कपोतवल्ली सूक्ष्मैला । गोपवल्ली अनन्तमूलम् । मधुवल्ली यष्टीमधुभेदः । सोमवल्ली सोमलता । एषामेवंविधानामन्येषाञ्च मधुरवर्गपरिसंख्यातानाम् आस्थापनस्यौषधस्य द्रव्याणां मध्ये यानि च्छेद्यानि च्छेत्तमर्हाणि तानि खण्डशश्छेदयित्वा । भेद्यानि यानि च भेत्तुमर्हाणि तानि अणुशो भेदयित्वा पानीयेन प्रक्षाल्यार्द्धोदकेन पयसाष्टगुणेन क्वाथत्वादासिच्य साधयेत् पचेत् । गतरसेषु औषधेषु— चतुर्भागावशिष्टे तु द्रव्यं गतरसं भवेत्— इति चतुर्थावशेषे पयसि गतजलदुग्धे चानुपदग्धे तदुपयुक्तं स्थालीमपहृत्य सुपरिस्रुतं वस्त्रेण पूतं तत् सुखोष्णं पयो दुग्धं घृतादिभिरनुरूपैरुपहितं वस्तिं वस्तिमध्ये पूरयित्वा वातविकारिणे दद्यात् । सुशीतन्तु तद् दुग्धं घृताद्युपहितं न कृत्वा मधुसर्पिर्भ्यामुपसंस्कृत्य पित्तविकारिणे वस्तिं दद्यात् । इति मधुरस्कन्ध आस्थापनवस्तिः ॥११७

ऋोका बलाभेदः । द्वारदा शाकतरुः । भारद्वाजी वनकार्पासी । वनत्रपुषी वृहत्फला गोडुम्बा । अभीरुपत्री शतावरीभेदः । कुलिङ्गाक्षी पेटिका, कुलिङ्गापाठपक्षे उच्चटा । क्षीरवल्ली क्षीरलता । कपोलवल्ली कवङ्कमंजु इति ख्याता । कपोतवल्ली सूक्ष्मैला । सोमवल्ली सोमलता । गोपवल्ली अनन्तमूलम् । मधुवल्ली यष्टीमधुभेदः ॥ ११७ ॥

* कपोलवल्लीत्यधिकः पाठः क्वचित् ।

आम्राम्रातकलकुचकरमर्द्दवृक्षाम्लाम्लवेतसकुवलवदरदाड़िम-मातुलुङ्गकरीरका-*-मलक † तिन्तिड़ीकशीतकदन्तशठैरावतक-कोशाम्रधन्वनानां फलानि, पत्राणि चाश्मन्तकचाङ्गेरीणां चतुर्व्विधानाञ्च अम्लिकानां द्वयोश्च कोलयोश्चामशुष्कयोर्द्वयोश्च शुष्काम्लिकयोर्ग्राम्यारण्ययोः। आसवद्रव्याणि च सुरासौवीरक-तुषोदकमैरेय-मेदकमदिरामधुशुक्त-सीधुदधिमण्डोदश्विद्धान्याम्लादीनि च। एषामेवंविधानाञ्चान्येषामम्लवर्गपरिसङ्ख्यातानाम् औषधद्रव्याणां छेद्यानि खण्डशश्छेदयित्वा भेद्यानि चाणुशो भेदयित्वा द्रवैः स्थितानि ‡ अवसिच्य साधयित्वोपसंस्कृत्य यथावत् तैलवसा-§-मज्जलवणफाणितोपहितं सुखोष्णं वस्तिं वातविकारिणे विधिज्ञो विधिवद् दद्यात्। इत्यम्लस्कन्धः ॥११८

गङ्गाधरः—अथ क्रमिकत्वादम्लस्कन्धास्थापनद्रव्याण्याह—आम्रेत्यादि। वृक्षाम्लं किञ्चिन्मधुरमांसलफलं तिन्तिड़ीकम्। करीरो मरुजद्रुमः। तिन्तिड़ीकमम्लाधिकं तिन्तिड़ीकम्। शीतकं चालितफलम्। दन्तशठो जम्बीरः। ऐरावतकः अम्लनागरङ्गः। कोशाम्रः उड़िआम्रः। धन्वनः धन्वनवृक्षः। एषां फलानि। अश्मान्तकानां चाङ्गेरीणां पत्राणि चतुर्व्विधानामम्लिकानाञ्च पत्राणि द्वयोश्च कोलयोः शुष्कयोर्द्वयोश्च शुष्काम्लिकयोर्ग्राम्यारण्ययोः पत्राणि। आसवद्रव्याणि च सुरादीनि यान्युक्तानि। एषामेवंविधानामन्येषाञ्चाम्लवर्गपरिसंख्यातानामौषधद्रव्याणां मध्ये च्छेद्यानि खण्डशश्छेदयित्वा भेद्यान्यणुशो भेदयित्वा सुरादिषु द्रवेषु स्थितानि तैः सुरादिभिर्द्रवैः साधयित्वा पक्त्वा

चक्रपाणिः—अम्लस्कन्धे नन्दीतकः कर्परनन्दी। शीतकोऽम्बुलोठकः। ऐरावतो नागरङ्गम्। अम्लिका कन्दप्रधाना कामरूपे प्रसिद्धा, अम्लिकाभेद एवेत्याहुः। द्वयोश्चेत्यादि। द्रवैः स्थिराणीति द्रवमज्जनात् स्थिरभूतानीत्यर्थः ॥ ११८ ॥

---

* करीरक इत्यत्र गण्डीर इत्यन्यः पाठः।

† इतः परं नन्दीतक इत्यधिकः पाठः केषुचिद् ग्रन्थेषु दृश्यते।

‡ स्थिराणीति चक्रः।

§ इतः परं मस्तु इत्यधिकः पाठः क्वचित्।

सैन्धवसौवर्च्चलकालविड़पाक्य*कुप्यवालकैलमौलकसामुद्ररौमकौद्भिदौषरपाटेयकपांशुजान्येवंप्रकाराणि चान्यानि लवणवर्गपरिसंख्यातानि। एतान्यम्लोपहितान्युष्णोदकोपहितानि वा स्नेहवन्ति सुखोष्णां वस्तिं वातविकारिणे विधिज्ञो विधिवद् दद्यात्। इति लवणस्कन्धः॥ ११६॥

पिप्पलीपिप्पलीमूलहस्तिपिप्पलीचव्यचित्रकशृङ्गवेरमरिचाजमोदार्द्रकविड़ङ्गकुस्तुम्बुरुपीलुतेजस्विन्येलाकुष्ठभल्लातकास्थिहिङ्गुकिलिममूलकसर्षपाणाम्, लसुनकरञ्जशिग्रु शिग्रुकखरपुष्पभूस्तृण-सुमुखसुरसार्ज्जककाण्डीरकालमालकपर्णासक्षवकफणिज्झकक्षारमूत्रपित्तानाञ्च। एवंविधानाञ्चान्येषां कटुकचतुर्भागशिष्टमुपसंस्कृत्य यथावद् यथायोग्यं तैलादुपहितं सुखोष्णं वस्तिं वातविकारिणे दद्यात्। इत्यम्लस्कन्ध आस्थापनवस्तिः॥ ११८॥

गङ्गाधरः—अथ क्रमिकत्वाल्लवणस्कन्धास्थापनद्रव्याण्याह—सैन्धवेत्यादि। सैन्धवादीनि लवणानि देशविशेषे प्रसिद्धानि एतानि एवंविधान्यन्यानि लवणवर्गपरिसंख्यातानि अम्लोपहितानि उष्णोदकोपहितानि वा स्नेहवन्ति घृततैलादियुक्तानि सुखोष्णं तद्द्रवरूपं वस्तिं वातविकारिणे दद्यात्। इति लवणस्कन्ध आस्थापनवस्तिः॥ ११९॥

गङ्गाधरः—अथ क्रमिकत्वात् कटुकस्कन्धास्थापनद्रव्याण्याह—पिप्पलीत्यादि। शृङ्गवेरं शुष्कं शुण्ठीति यावत्, आर्द्रकस्य पुनः पाठात्। तेजस्विनी तेजिनी। टकिलिमो देवदारुः। मूलकं सर्षपं सर्षपद्वयं शिग्रुत्रयम्। खरपुष्पं खराशिनी अपामार्गो वा। भूस्तृणं गन्धतृणम्। सुमुखः पर्णासभेदः। सुरसस्तुलसीभेदः। अर्ज्जकः श्वेततुलसी। काण्डीरः मञ्जिष्ठा। कालमालः कृष्णतुलसी। पर्णासः क्षुद्रपर्णासः। क्षवको राजक्षवकः। फणिज्झको गन्धपर्णासः। क्षारो दग्धभस्मकृतः क्षारः। मूत्रं गवादिमूत्रम्। पित्तं मत्स्यादिपित्तम्। एषामेवं-

चक्रपाणिः—कूप्यादयो लवणभेदा देशान्तरप्रसिद्धाः। तेन देशान्तरीयात् तदर्थो ज्ञातव्याः।

* पाक्येत्यनन्तरम् आनूप इत्यधिकः पाठः।

वर्गपरिसङ्ख्यातानामौषधद्रव्याणां छेद्यानि खण्डशश्छेदयित्वा भेद्यानि चाणुशो भेदयित्वा गोमूत्रेण साधयित्वोपसंस्कृत्य यथावन्मधुतैललवणोपहितं सुखोष्णं वस्तिं श्लेष्मविकारिणे विधिज्ञो विधिवद् दद्यात्। इति कटुकस्कन्धः॥ १२०॥

चन्दननलद-कृतमालनक्तमाल-निम्बतुम्बुरु-कुटजहरिद्रा-दारुहरिद्रामुस्त-मूर्व्वाकिराततिक्तक-कटुरोहिणी-त्रायमाणाकरीराणाम्, करवीरकेवुककठिल्लकवृषमधुपर्णीकर्कोटकवार्त्ताकुकर्कश-काकमाचीकारवेल्लकाकोडुम्बरिकासुषव्यतिविषा-पटोल-कूणक-पाठागुडूची-वेत्राग्रवेतसविकङ्कत-वकुल- सोमवल्कसप्तपर्णसुमनो-ऽर्कावल्गुजवरा-*-तगरागुरुह्रीवेरोशीराणाम्। एवंविधानाञ्चान्येषां

विधानाञ्चान्येषां कटुकवर्गपरिसङ्ख्यातानाम् अष्टगुणेन क्वाथत्वात् गोमूत्रेण साधयित्वा चतुर्भागशिष्टं क्वाथं मधुतैलसैन्धवोपहितं सुखोष्णं वस्तिं श्लेष्मविकारिणे दद्यात्। इति कटुकस्कन्ध आस्थापनवस्तिः॥ १२०॥

गङ्गाधरः क्रमिकत्वात् तिक्तकस्कन्धास्थापनद्रव्याण्याह चन्दनेत्यादि। चन्दनं रक्तचन्दनम्। नलदमुशीरं जटामांसीत्यन्ये। कृतमालः शोनालुः। नक्तमालो नाटाकरञ्जः। तुम्बुरु स्वनामख्यातं तदभावे धन्याकम्। करीरो मरुजद्रुमः। केवुकः केँउ इति लोके। कठिल्लकः कारवेल्लः। मधुपर्णी लतापुटकी गुडूची वा। कर्कोटकः काँकरोल इति लोके। वार्त्ताकुः स्वनामख्यातः। कर्कशः कम्पिल्लः। काकमाची स्वनामख्याता। कारवेल्ल इति वृहत्कारवेल्लः। काकोडुम्बरिका कोठोडुम्बरः। सुषवी वन्यकारवेल्लः। अतिविषा आतइष इति लोके। पटोलं दीर्घपटोलम्। कूणकं पटोलम्। पाठा अम्बष्ठा। वेतसः स्वनामा। विकङ्कतः वैँइच इति लोके। वकुलं स्वनाम। सोमवल्कः श्वेतखदिरः। सुमनो मालती। अर्कः। अवल्गुजः सोमराजी। वरा त्रिफला। एषामेवंविधानाञ्च

सैमिका हमानदीभवा। (कटुकवर्ग) तेजस्विनी तेजोवती। किलिमं देवदारु। तिक्तवर्गे कर्कशः

* वचेति पाठान्तरम्।

तिक्तवर्गपरिसङ्ख्यातानामौषधद्रव्याणां छेद्यानि च खण्डशः छेदयित्वा भेद्यानि चाणुशो भेदयित्वा प्रक्षाल्य पानीयेनाभ्यासिच्य साधयित्वोसंस्कृत्य यथावन्मधुतैललवणोपहितं सुखोष्णं वस्तिं श्लेष्मविकारिणे विधिज्ञो विधिवद् दद्यात्। शीतन्तु मधुसर्पिर्भ्यामुपसंसृज्य पित्तविकारिणे विधिज्ञो विधिवद् दद्यात्। इति तिक्तस्कन्धः ॥ १२१ ॥

प्रियङ्ग्वनन्ताम्रास्थ्यम्बष्ठकीकट्वङ्गलोध्रमोचरससमङ्गाधातकीपुष्पपद्मा*पद्मकेशरजम्ब्वाम्रप्लक्षवटकपीतनोदुम्बराश्वत्थभल्लातकास्थ्यश्मन्तकशिरीष†शिंशपासोमवल्कतिन्दुकानाम्, पियालबदरखदिर-सप्तपर्णाश्वकर्णस्यन्दनार्ज्जुनासनारिमेदैलवालुकपरिपेलवकदम्ब-शल्लकीजिङ्गिनीकाशकशेरुकाराजकशेरुकाकट्फलवंशपद्मकाशोकानाम्, शालधवसर्ज्जभूर्ज्जासनखरपुष्पाशम-

अन्येषां तिक्तवर्गपरिसङ्ख्यातानाम्। पानीयेनेति अष्टगुणेन साधयित्वा चतुर्भागावशिष्टं मधुतैलसैन्धवोपहितं सुखोष्णं कफविकारिणे, शीतन्तु मधुसर्पिर्भ्यां युक्तं पित्तविकारिणे वस्तिं दद्यात्। इति तिक्तस्कन्ध आस्थापनवस्तिः ॥ १२१ ॥

गङ्गाधरः—अथ क्रमिकत्वात् पारिशेष्याच्च कषायस्कन्धास्थापनद्रव्याण्याह—प्रियङ्ग्वित्यादि। प्रियङ्ग्वनन्तमूलम्। आम्रफलास्थि। अम्बष्ठकी पाठा। कट्वङ्गं श्योनाकः। धातकीपुष्पम्। पद्मा पद्मचारिणी ब्राह्मणयष्टी। पद्मकेशरं पद्मकिञ्जल्कः। अश्वकर्णो लताशालः। स्यन्दनो नेमिस्तिनिश इति ख्यातः। असनः पीतशालः। अरिमेदो विट्खदिरः। एलवालुकः तेजवलः। परिपेलवः कैवर्त्तमुस्तकः। शल्लकी शल्लकीवृक्षः। जिङ्गिनी मञ्जिष्ठा। काशः। कशेरुश्चिञ्चया। राजकशेरुः कशेरुरेव। कट्फलम्। वंशो वेणुः। पद्मकं पद्मकाष्ठं। अशोकः

पटोलभेदः। कषायवर्गे सप्तपर्णः पियालसालः। परिपेलवं कैवर्त्तमुस्तकम्। जिङ्गिनी स्वनामख्याता।

* पद्मा इत्यत्र पद्मेति चक्रः। † शिरीषपुष्पेति चक्रः।

माठीकवरकतुङ्गाजकर्णाश्वकर्णस्फूर्ज्जकविभीतककुम्भीक-पुष्कर-बीजबिसमृणालतालखर्ज्जूरतरुणी-*-नाम्। एवंविधानाञ्चान्येषां कषायवर्गपरिसङ्ख्यातानामौषधद्रव्याणां छेद्यानि च खण्डशश्छेद-यित्वा भेद्यानि चाणुशो भेदयित्वा प्रक्षाल्य पानीयेनाभ्यासिच्य साधयित्वोपसंस्कृत्य यथावन्मधुतैललवणोपहितं सुखोष्णं वस्तिं श्लेष्मविकारिणे विधिज्ञो विधिवद् दद्यात्। शीतन्तु मधुसर्पिर्भ्यामुपसंसृज्य पित्तविकारिणे विधिवत् दद्यात्। इति कषायस्कन्धः॥ १२२॥

तत्र श्लोकाः।

षड् वर्गाः परिसङ्ख्याता य एते रसभेदतः।
आस्थापनमभिप्रेत्य तान् विद्यात् सार्व्वयौगिकान्॥

स्वनामख्यातः। शालः शालकाष्ठम्। धवः। सर्ज्जो धूनकः। भूर्ज्जो भूर्ज्ज-ग्रन्थिः। असनः कृष्णासनः। खरपुष्पा खरमञ्जरी अपामार्ग इति ख्यातः। शमी शाँइकाँटा। माठीको देवदारुः। वरको वोरधान्यम्। तुङ्गः पुन्नागवृक्षः। अजकर्णोऽसनभेदः। अश्वकर्णो वृहच्छालकाष्ठम्। स्फूर्ज्जकस्तिन्दुकः। कुम्भीकः कट्फलः। तरुणी घृतकुमारी। एषामेवंविधानामन्येषाञ्च कषायवर्ग-परिसङ्ख्यातानाम्। इति कषायस्कन्ध आस्थापनवस्तिः॥ १२२॥

गङ्गाधरः—उपसंहरति—तत्र श्लोका इत्यादि। षड् वर्गा इति। सार्व्व-

माठीको देवदारुः। अजकर्णः शालभेदः। कुम्भी कुम्भीक इति ख्याता। बिसं करहाटः। मृणालं मृणालनाड़िका। तालखर्ज्जूरतरूणामिति तालखर्ज्जूरवृक्षाणामित्यर्थः। तत्र च स्कन्धेषु यद् द्रव्यं स्कन्धद्वये पठ्यते, तदुभययुक्तत्वेन उभयत्रापि योगीति ज्ञेयम्॥ ११९—१२२॥

चक्रपाणिः—सार्व्वयौगिकानिति सर्व्वेष्वास्थापनसाध्येषु रोगेषु वातव्याधिज्वरगुल्मादिषु

* तरुणीत्यत्र तरुः इति पठ्यते चक्रेण।

सर्व्वशो हि प्रणिहिताः सर्व्वरोगेषु जानता ।
सर्व्वान् रोगान् नियच्छन्ति येभ्य आस्थापनं हितम् ॥
येषां येषां प्रशान्त्यर्थं ये ये न परिकीर्त्तिताः ।
द्रव्यवर्गा विकाराणां तेषां ते परिकोपकाः ॥

इत्येते षड़ास्थापनस्कन्धा रसेनानुविभज्य व्याख्याता भवन्ति ॥ १२२ ॥

एभ्यो भिषग् बुद्धिमान् परिसङ्ख्यातमपि यद् द्रव्यम् अयौगिकं मन्येत, तत्तदपकर्षयेच्च। यद् यच्चानुक्तमपि च यौगिकं

यौगिकान् सर्व्वरोगहरास्थापनयोगोपगान्। ननु कुतः सार्व्वयौगिकांस्तान् विद्यादित्यत आह—सर्व्वशो हीत्यादि। येभ्यो रोगेभ्य आस्थापनं हितं हि यस्मात् तान् सर्व्वान् रोगान् जानता वैद्येन सर्व्वरोगेषु सर्व्वशः सर्व्वे सर्व्वे एते षड्वर्गाः प्रणिहिता नियच्छन्ति, तस्मात् तान् षड्वर्गानास्थापनम् अभिप्रेत्य सार्व्वयौगिकान् विद्यात्। मधुरादिस्कन्धादीनां वातादिविकारेषु यद्विधानमुक्तं तदितरेष्वविधिमाह—येषां येषामित्यादि। इत्येते षडित्युपसंहारः ॥ १२२ ॥

<u>गङ्गाधरः</u>—अथ परिसङ्ख्यातमधुरादिवर्गाणां मध्ये यद् द्रव्यं यद्रोगविशेषे

यथोक्तदोषसम्बन्धे सति यौगिकानित्यर्थः। एतदेव विवृणोति—सर्व्वशो हीत्यादि। सर्व्वश इति समस्तवर्गेणार्द्धवर्गेण यथालाभेन वा। इदानीं सर्व्ववर्गाणां सर्व्वास्थापनसाध्यरोगेषु यौगिकत्वं यदुक्तम्, तत्र ज्वरे कटुकवर्गेणास्थापनं पित्तकरत्वात् ज्वरं वर्द्धयति, कफमेव हरति। तेन दोषविशेषेणास्थापनविशेषार्थं सर्व्वगणानां यौगिकत्वमेतदुक्तम्, किन्तु सामान्येन सर्व्वास्थापनरोगहितत्वम्, दोषविशेषेषु तु तत्राननुगुणवर्गस्य प्रयोगस्य निषेध एवेति दर्शयन्नाह—येषामित्यादि। येषामिति वातादिविकाराणामुक्तानामिह। तत्र वातहरस्कन्धः न कफप्रशान्त्यर्थमुक्तः, तेन कफवर्द्धकः। एवमम्लादिवर्गेष्वपि ज्ञेयम्। किंवा सार्व्वयौगिकानित्यनेनोक्तानां वर्गाणां समासव्यासयोगेन सकलास्थापनसाध्यरोगहरत्वमुच्यते, न प्रत्येकम्। प्रत्येकन्तु वर्गाणां साध्यत्वेन अनुक्तरोगकर्म्मत्वमुच्यते 'तेषाम्' इत्यादिना ॥ १२२ ॥

<u>चक्रपाणिः</u>—सम्प्रत्युक्तवर्गेषु व्याध्यादिपर्य्यालोचनया यौगिकत्वमपेक्ष्य यौगिकप्रक्षेपमयौगिकोद्धरणञ्च दर्शयन्नाह—तेभ्य इत्यादि। 'बुद्धिमान्' इति पदेन, बुद्धिमतैव प्रक्षेपोद्धारौ गणे कर्त्तव्यौ,

मन्येत, तत् तद् दद्याद्। वर्गमपि वर्गेणोपसंसृजेदेकमेकेनानेकेन वा युक्तिं प्रमाणीकृत्य। प्रचरणमिव भिक्षुकस्य वीजमिव च कर्षकस्य सूत्रं बुद्धिमतामल्पमपि चानल्पज्ञानाय भवति। तस्माद् बुद्धिमतामूहापोहवितर्काः, मन्दबुद्धेस्तु यथोक्तानुगमनमेव श्रेयः। यथोक्तं हि मार्गमनुगच्छन् भिषक् संसाधयति कार्य्यमनतिमहत्त्वात् * अनतिह्रस्वत्वादुदाहरणस्येति ॥१२३॥

यौगिकं न भवति, तद्वर्ज्जनमपरिसङ्ख्यानामन्येषाञ्च यौगिकानामुपादानं वर्गान्तरस्य तत्तद्रोगयौगिकत्वे वर्गान्तरसंसर्ज्जनञ्च विधातुमाह—एभ्य इत्यादि। बुद्धिमतां सूत्रानुसारेणोहस्तर्कः अपोहस्तर्केणैकं निश्चित्यान्यस्य वर्ज्जनमाभ्यां वितर्क इदं युक्तमिदमयुक्तमिति तत्त्वातरवबुद्धिः। एते श्रेय इत्यस्य वचनविपरिणामेन श्रेयांस इत्यर्थः। मन्दबुद्धेस्तु यथोक्तानुगमनमेव श्रेय इत्यन्वयः। कुतस्ते श्रेयांसस्तच्च श्रेय इत्यत आह—यथोक्तं हीत्यादि। हि यस्मात् यथोक्तं मार्गं भिषगनुगच्छन् उदाहरणस्यानतिमहत्त्वादनतिह्रस्वत्वात् कार्य्यं संसाधयति ॥ १२३ ॥

नाल्पबुद्धीनां तदूहापोहकरणे सामर्थ्यमिति दर्शयति। युक्तिं प्रमाणीकृत्येति ऊहं प्रमाणीकृत्येत्यर्थः। प्रचरणं भिक्षामूलं तण्डुलादि पात्रस्थम्। ननु मन्दबुद्धेः कथं यथोक्तानुगमनम्? यथोक्तम् अयौगिकमूहेन बुद्धिमन्तः प्रपद्यन्ते, तत्रैव तन्मन्दधीः प्रयुञ्जानो न कथमनर्थमावहेदित्याह—यथोक्तं हीत्यादि। अनतिमहत्त्वाद् वा निपातयतीत्यनेन, मन्दबुद्धिर्यथोक्तमाचरति ऊहं विना न चातिव्यापद् भवतीति दर्शयति। यतः शास्त्रे हि यो विधिर्यत्रोक्तः, स प्रायो यौगिक एव भवति, तत्र तत्रापि शरीरादिभेदेन यौगिकः, तत्रापि स्तोकमात्रेण यौगिक इत्यर्थः। अनतिह्रस्वत्वादुदाहरणस्येति शास्त्रे उदाहरणस्य विधेरनतिसङ्क्षेपादित्यर्थः। एतेन स्तोकं रोगसाधनोदाहरणं स्यात्, ऊह्यमेव वा भवतु, तदा मन्दबुद्धिः साक्षादुदाहरणविषयाज्ञानात् स्वयम् ऊहाक्षमत्वाच्च न रोगशान्तिलक्षणं कार्य्यं कर्त्तुं क्षमः स्यात्। यतो ह्युदाहरणानि बहूनि। तेन तैरेवोदाहरणात्मकप्रयोगैस्तत्साध्यत्वेनोक्तव्याधीन् साधयतीति युक्तम्। इमौ चावापोद्धारौ गणेषु मध्ये गणोक्तद्रव्ये प्रायो ज्ञेयौ। यदुक्तं सुश्रुते—"गणोक्तमपि यद् द्रव्यं भवेद् व्याधावयौगिकम्। तदुद्धरेत् प्रक्षिपेत् तु यन्मन्येद् यौगिकन्तु तद्" इति। ये तु संयोगमहिम्ना कार्य्यकारकाः प्रयोगा अगस्त्यहरीतक्यादयः, तेष्वावापोद्धारौ न कर्त्तव्यौ। एवमेव चार्थमभिप्रेत्योक्तं सुश्रुते—"पृथगागमसिद्धत्वात् तथैव फलदर्शनात्। मन्त्रवत् संप्रयोक्तव्यो न मीमांस्यः कथञ्चन" ॥ १२३ ॥

* अनतिमहत्त्वाद्वा निपातयतीति चक्रधृतः पाठः।

अतः परमनुवासनद्रव्याण्यनुव्याख्यास्यन्ते। तच्चानुवासनन्तु स्नेह एव। स्नेहस्तु द्विविधः, स्थावरात्मको जङ्गमात्मकश्च। तत्र स्थावरस्नेहस्तैलमतैलञ्च। तद्द्वयं तैलमेव कृत्वोपदेक्ष्यते सर्व्वं तैलप्राधान्यात्। जङ्गमात्मकस्तु वसा मज्जा सर्पिरिति। तेषां तैलवसामज्जसर्पिषाञ्च यथापूर्व्वं श्रेष्ठम्। वातश्लेष्मविकारेष्वनुवासनीयेषु, यथोत्तरं पित्तविकारेषु, सर्व्वं एव वा सर्व्वेष्वपि च योगमायान्ति संस्कारविधिविशेषादिति ॥ १२४ ॥

शिरोविरेचनद्रव्याणि पुनरपामार्गपिप्पलीमरिचविडङ्ग-शिग्रु-शिरीषकुस्तुम्बुरु-विल्वाजमोदावार्त्ताकीपृथ्वीकैलाहरेणुकाफलानि च, सुरससुमुखकुठेरकगण्डीरककालमालकपर्णासक्षवकफणिज्झकहरिद्राशृङ्गवेरमूलकलसुनतर्कारीसर्षपपत्राणि च, अर्कालर्ककुष्ठ-नागदन्तीवचापामार्ग-श्वेता-ज्योतिष्मती-गवाक्षी-

गङ्गाधरः—अथ क्रमिकत्वादनुवासनस्य यानि द्रव्याणि योगमृच्छन्ति तान्याह—अतः परमित्यादि। तैलं तिलप्रभवस्नेहः। अतैलं सर्षपादिप्रभवः स्नेहः। तत्र तैलातैले स्नेहद्वये उपदेष्टव्ये सर्व्वं तैलमतैलञ्च तैलप्राधान्यात् तैलमेव कृत्वोपदेक्ष्यते। सर्व्वं स्पष्टम् ॥ १२४ ॥

गङ्गाधरः—पारिशेष्यात् शिरोविरेचनस्य यानि द्रव्याणि योगमृच्छन्ति तान्याह—शिरोविरेचनेत्यादि। गण्डीरः समठः। तर्कारी जयन्ती। अलर्कः

चक्रपाणिः—क्रमप्राप्तमनुवासनद्रव्यमाह—अतः परमित्यादि। तत्र तैलमिति तैलभूतं सर्षपस्नेहादि। तैलप्राधान्यादिति स्थावरस्नेहेषु तिलतैलस्यैव प्राधान्यात्। एतेन तैले यो विधिः, स सार्षपादौ बोद्धव्यः, 'तैल'शब्देन तु सार्षपादीनामिह ग्रहणम्। तिलभवस्नेहस्य प्राधान्यप्रख्यापनार्थं 'तैल'शब्देन सार्षपादीनां ग्रहणं भवत्येव। यदुक्तं सुश्रुते—"निष्पत्तेस्तद्गुणत्वाच्च तैलत्वमितरेष्वपि" इति ॥ १२४ ॥

चक्रपाणिः—पारिशेष्याच्छिरोविरेचनान्याह—शिरोविरेचनेत्यादि। फलानि चेति 'च'कारेण तदुक्तं द्रव्यमङ्गोपयोगञ्च दर्शयति। तेन शिग्रोर्वक्ष्यमाणे त्वगुपयोगश्च भवति। एवमन्यत्रापि

गण्डीरावाक्पुष्पीवृश्चिकालीवयःस्थातिविषामूलानि च, हरिद्राशृङ्गवेरमूलकलशुनकन्दाः, लोध्रमदनसप्तपर्णनिम्बार्कपुष्पाणि च, देवदार्व्वगुरु-सरल-शल्लकी-जिङ्गिन्यसन-हिङ्गु-निर्य्यासाश्च, तेजस्विनीवराङ्गेङ्गुदीशोभाञ्जनवृहतीकण्टकारिकात्वगिति। शिरोविरेचनं सप्तविधं फलपत्रमूलकन्दपुष्पनिर्य्यासत्वगाश्रयभेदात्। लवणकटुतिक्तकषायाणि चेन्द्रियोपशयानि तथापराण्यनुक्तान्यपि द्रव्याणि यथायोगविहितानि शिरोविरेचनार्थमुपदिशन्ति इति ॥ १२५ ॥

तत्र श्लोकाः।

लक्षणाचार्य्यशिष्याणां परीक्षाकारणञ्च यत्।
अध्येयाध्यापनविधिः सम्भाषाविधिरेव च ॥

श्वेतार्कः। श्वेता श्वेतापराजिता। ज्योतिष्मती घोषकः। गण्डीरपुष्पी वृहत्समठः। वृश्चिकाली विछातिः। हरिद्राशृङ्गवेरमूलकलसुनानां मूलवत् कन्दाश्चेति पुनरुक्तम्। लोध्रादीनां पुष्पाणि देवदार्व्वादीनां निर्य्यासश्च. तेजस्विनी लतापुटकी इत्यादीनां त्वक्। इति फलपत्रमूलकन्दपुष्पनिर्य्यासत्वगाश्रयभेदतः सप्तविधं शिरोविरेचनं लवणादीनि चत्वारि न मधुराम्लानि इन्द्रियोपशयानि ॥ १२५ ॥

गङ्गाधरः—अध्यायार्थमुपसंहरति—तत्र श्लोका इत्यादि। लक्षणं तन्त्रं, बुद्धिमानित्यादिना तन्त्रपरीक्षाकारणं चिह्नम्। ततोऽनन्तरमाचार्य्यं

उदाहार्य्यम्। सुमुखादयः पर्णासभेदाः। गण्डीरपुष्पी शमठः। वयःस्था ब्राह्मी। वराङ्गं गुडत्वक्। इन्द्रियोपशयानीत्यनेन यानि लवणादीनि नेन्द्रियोपघातकानि, तान्येव शिरोविरेचने योज्यानि। तथापराणीति मधुराम्लकषायाणि शिरोविरेचने यौगिकानि ॥ १२५ ॥

चक्रपाणिः—संग्रहे लक्षणाचार्य्यशिष्याणामिति शास्त्राचार्य्यशिष्याणां परीक्षा। लक्षणं हि शास्त्रमुच्यते। कारणञ्च यदिति शास्त्रादिपरीक्षाकारणञ्च यदित्यर्थः,—"एतदेवम्भूतं शास्त्रम्

पड़ नानि च पञ्चाशद् वादमार्गपदानि च ।
पदानि दश चान्यानि कारणादीनि तत्त्वतः ॥
सम्प्रश्नश्च परीक्षादेर्नवको वमनादिषु ।
भिषग्जितीये रोगाणामध्याये सम्प्रकीर्त्तितः ॥ १२६ ॥

बहुविधमिदमुक्तमर्थजातं बहुविधवाक्यविचित्रमर्थकान्तम् ।
बहुविधशुभशब्दसन्धियुक्तं बहुविधवादनिषूदनं परेषाम् ॥
इमां मतिं बहुविधहेतुसंश्रयां विजज्ञिवान् परमतवादसूदनीम् ।
निलीयते परवचनावमर्द्दने न शक्यते परवचनैश्च मर्द्दितुम् ॥

परीक्षेतेत्यादिनाचार्य्यपरीक्षाकारणम् । अध्यापने कृतबुद्धिरित्यादिनाध्यापनविध्यन्तर्गतं शिष्याणां परीक्षाकारणम् । तत्रायमध्ययनविधिरित्यादिना अध्येयस्याध्ययनस्य विधिः । भावे कृत् । अथाध्यापनविधिरित्यादिनादौ शिष्यपरीक्षावचनानन्तरमेवंविधमध्ययार्थिनमित्यादिनाध्यापनविधिः । सम्भाषाविधिमत ऊर्द्ध मित्यादिना सम्भाषाविधिः । इमानि तु खल्वित्यादिना षड़ नानि पञ्चाशत्, चतुश्चत्वारिंशद्वादमार्गपदानि । कारणादीनि दशपदानि तत्त्वतः । वमनादिषु परीक्ष्यादेर्नवकः संप्रश्नश्च ॥ १२६ ॥

गङ्गाधरः—अध्यायं प्रशंसति । बहुविधमित्यादि । इदमेतदध्यायार्थतया यद्बहुविधमर्थजातमुक्तं तद्बहुविधवाक्यविचित्रम् । अर्थकान्तमर्थतो मनोरमम् । बहुविधशुभशब्दसन्धियुक्तं परेषां बहुविधवादनिसूदनं किं फलमित्यत आह—इमामित्यादि । इमामेतदध्यायार्थस्याध्ययनतो जातां मतिं बहुविधहेतुसंश्रयां परमतवादसूदनीं विजज्ञिवान् भिषक् परवचनावमर्द्दने निलीयते । परवचनैश्च

अमल इवादित्यः" इत्यादि शास्त्रपरीक्षाकारणम् । आचार्य्यपरीक्षाकारणम् "एवंविधो ह्याचार्य्यः" इत्यादि ; शिष्यपरीक्षाकारणन्तु "अध्याप्यमध्यापयन् ह्याचार्य्यः" इत्यादि । अध्येयमध्येतव्यम्, तस्य विधिरध्ययनविधिरेव ॥ १२६ ॥

चक्रपाणिः—इदमुक्तमर्थजातमिति लक्षणाचार्य्यशिष्यपरीक्षारूपमर्थजातमुक्तम् । अर्थकान्तमिति यथासम्बद्धार्थतादिना गुणेन कमनीयार्थं भवति तथोक्तमित्यर्थः । शब्दस्य वाक्ययोजनं

दोषादीनान्तु भावानां सर्व्वेषामेव हेतुना *।
मानात् समस्तमानानि निरुक्तानि विभागशः ॥ १२७ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते रोगभिषग्-
जितीयं विमानं नामाष्टमोऽध्यायः ॥ ८ ॥

मर्दितुं न शक्यते इति। अध्यायं प्रशस्य स्थानार्थमाह। दोषार्थमाह—दोषादीनामित्यादि ॥ १२७ ॥

अध्यायं समापयति—अग्निवेशेत्यादि। विमानस्थानग्रन्थसङ्ख्या त्रयोविंशत्यधिकं श्लोकानां सहस्रम्। ०।

इति श्रीगङ्गाधरकविरत्नकविराजविरचिते चरकजल्पकल्पतरौ
तृतीयस्कन्धे विमानस्थानजल्पे रोगभिषग्जितीय-
विमानजल्पाख्याष्टमी शाखा ॥ ८ ॥

शब्दसन्धिः। दोषादीनामित्यादिना विमानस्थानार्थसंग्रहं करोति। हेतुमदित्युपपत्तिमत् यथा भवति, तथा दोषादिमानादित्यर्थः, निरुक्तानीति निरुक्त्योक्तानि। निरुक्तिश्च—दोषादयो विशेषेण मीयन्त एभिरिति विमानानि ॥ १२७ ॥

इति चरकचतुराननश्रीमच्चक्रपाणिदत्तप्रणीतायुर्व्वेददीपिकायां चरकतात्पर्य्यटीकायां
रोगभिषग्जितीयविमानव्याख्या नाम अष्टमोऽध्यायः ॥ ८ ॥

## समाप्तमिदं विमानस्थानम्।

॥ श्रीः ॥

* हेतुना इत्यत्र हेतुमत् तथा समस्तमानानीत्यत्र सम्यग्विमानानी चक्रसम्मतः पाठः।

# चरक-संहिता।

## शारीरस्थानम्।

### प्रथमोऽध्यायः।

अथातः कतिधापुरुषीयं शारीरं व्याख्यास्यामः,
इतिह स्माह भगवानात्रेयः ॥ १ ॥

गङ्गाधरः—अथ खलु हेतुलिङ्गौषधज्ञानं स्वस्थातुरपरायणमायुर्व्वेदं धातुवैषम्यनिवृत्तिधातुसाम्यरक्षणार्थमुक्तवान्। तत्र धातुवैषम्यज्ञानार्थं निदानस्थानं धातुवैषम्यनिवृत्तिधातुसाम्यरक्षणार्थं विमानस्थानं रसादिविमानज्ञानार्थमुक्त्वा चिकित्साधिकरणशरीरीयतावद्भावज्ञानस्य तत्र हेतुत्वात् तावत् शरीरीयभावज्ञानार्थमधुना शारीरस्थानमारभते। तत्र वेदाधिकरणतया पूर्व्वाध्याये पुरुष उक्तः सत्त्वमात्मेत्यादिना। तस्य पुरुषस्य सर्व्वभावप्रतिष्ठानस्य शारीरमानसोभयव्याधिचिकित्साविषयत्वेन शारीरेषु भावेषु प्राधान्यात् प्रथमतस्तद्भेदादिज्ञानहेतुं कतिधापुरुषीयं शारीरमध्यायमाह—

चक्रपाणिः—निदानस्थाने ज्ञातहेत्वादिना तथा विमाने प्रतीतरसदोषमानेन कर्त्तव्यचिकित्साधिकरणं शरीरं ज्ञातव्यं भवति। यतोऽप्रतिपन्नेऽशेषविशेषतः शरीरे न शरीरविज्ञानाधीना चिकित्सा साध्वी भवति, अतः शरीरं कारणोत्पत्तिस्थितिवृद्ध्यादिविशेषैः प्रतिपादयितुं शारीरं स्थानम् उच्यते। अत्रापि चात्यन्तदुःखोपरममोक्षकारणचिकित्सोपयुक्तपुरुषभेदादिप्रतिपादकतया प्रधानत्वेन

कतिधा पुरुषो धीमन् धातुभेदेन भिद्यते।
पुरुषः कारणं कस्मात् प्रभवः पुरुषस्य कः॥
किमज्ञो ज्ञः स नित्यः किं किमनित्यो निदर्शितः।
प्रकृतिः का विकाराः के किं लिङ्गं पुरुषस्य च॥
निष्क्रियश्च स्वतन्त्रश्च वशिनं सर्व्वगं विभुम्।
वदन्त्यात्मानमात्मज्ञाः क्षेत्रज्ञं साक्षिणं तथा॥
निष्क्रियस्य क्रिया तस्य भगवन् विद्यते कथम्।
स्वतन्त्रश्चेदनिष्टासु कथं योनिषु जायते॥
वशी यद्यसुखैः कस्माद् भावैराक्रम्यते बलात्।
सर्व्वाः सर्व्वगतत्वाच्च वेदनाः किं न वेत्ति सः॥
न पश्यति विभुः कस्माच्छैलकुड्यतिरस्कृतम्।
क्षेत्रज्ञः क्षेत्रमथवा किं पूर्व्वमिति संशयः॥

अथात इत्यादि। अथात इत्येतयोः पूर्व्वोक्तं व्याख्यानं ज्ञेयम्। कतिधापुरुषीयमिति। एतदध्यायादौ कतिधा पुरुषो धीमन्नित्यादिवाक्यस्थकतिधा पुरुष इत्यर्थमधिकृत्य कृतोऽध्याय इति, तं कतिधापुरुषीयमध्यायम्। शारीरमिति। शरीरं पञ्चमहाभूतविकारसमुदायात्मकं चेतनाधिष्ठानभूतमुक्तं तस्य इदमिति शारीरं, शरीरवृत्तं यावद्वस्तु तदेवाधीयते यत्रेत्यध्यायत्वेन व्यपदिश्यते। अत्र षष्ठी आधाराधेयतासम्बन्धे समवायसम्बन्धे वा। आत्मादिसत्त्वेतत्त्वसमवायोऽपि पुरुष इति सर्व्वेषां परस्परं तत्त्वानां समवायात्॥ १॥

कतिधापुरुषीयोऽध्यायोऽभिधीयते। कतिधेति कतिप्रकारः। पुरुष इत्यनेन चाविशेषेण पुरुषशब्दाभिधेयोऽर्थोऽभिधीयते। यतः खादयश्चेतनाषष्ठाः इत्यादिना, तथा चतुर्व्विंशतिकभेदभिन्नश्च कर्म्मपुरुष एव शरीरी वाच्यः। चेतनाधातुरप्येकः स्मृतः पुरुषसंज्ञकः इत्यनेनात्मैव शरीररहितः पुरुषशब्दार्थत्वेन वाच्यः। पुरुषधारणाद्धातुः। तेन, धातुभेदेनेति पुरुषधारणार्थभेदेन। धीमन्निति विशेषेण य एव धीमान् स एव पुरुषभेदादिकमिमं वक्ष्यमाणं सुसूक्ष्मं वक्तुं समर्थ इति दर्शयति। पुरुषः कारणं कस्मादिति कस्माद्धेतोः पुरुषः संसारे प्रधानं स्याधिकारणम् इत्यर्थः। प्रभवस्यस्मादिति प्रभवः कारणम्। योनिष्विति जातिषु। सर्व्वा इति परपुरुष-

ज्ञेयात् क्षेत्राद् * विना पूर्व्वं क्षेत्रज्ञो हि न युज्यते।
क्षेत्रञ्च यदि पूर्व्वं स्यात् क्षेत्रज्ञः स्यादशाश्वतः॥
साक्षिभूतश्च कस्यायं कर्त्ता ह्यन्यो न विद्यते।
स्यात् कथं वा विकारस्य विशेषो वेदनाकृतः॥
अथ चार्त्तस्य भगवंस्तिसृणां कां चिकित्सति।
अतीतां वेदनां वैद्यो वर्त्तमानां भविष्यतीम्॥
भविष्यन्त्या असम्प्राप्तिरतीताया अनागमः।
साम्प्रतिक्या अपि स्थानं नास्त्यर्त्तेः संशयो ह्यतः॥
कारणं वेदनानां किं किमधिष्ठानमुच्यते।
क्व चैता वेदनाः सर्व्वा निवृत्तिं यान्त्यशेषतः॥
सर्व्ववित् सर्व्वसन्न्यासी सर्व्वसंयोगनिःसृतः।
एकः प्रशान्तो भूतात्मा कैर्लिङ्गैरुपलभ्यते॥ २॥
इत्यग्निवेशस्य वचः श्रुत्वा मतिमतां वरः।
सर्व्वं यथावत् प्रोवाच प्रशान्तात्मा पुनर्व्वसुः॥ ३॥

गङ्गाधरः—तत्र प्रश्नाः। कतिधा पुरुष इत्यादयस्त्रयोविंशतिः प्रश्ना यथास्वम् उत्तरवचनव्याख्यानात् प्राक् व्याख्यास्यन्ते॥ २॥

गङ्गाधरः—इतीत्यादि। इति त्रयोविंशतिप्रश्नबोधकमग्निवेशस्य शिष्यवरस्य वचः श्रुत्वा मतिमतां वरः प्रशान्तात्मा शान्तमना जीवन्मुक्तः पुनर्व्वसुर्नाम मुनिगुरुः सर्व्वं त्रयोविंशतिकं प्रश्नं यथावत् यथाविधि याथार्थ्येन प्रोवाच उत्तरवचनेन व्याख्यातवान्॥ ३॥

गता अपि। क्षेत्रज्ञ आत्मा। क्षेत्रमव्यक्तवर्ज्जितं सर्व्वं वक्ष्यमाणम्। ज्ञेयमित्यादि—असति क्षेत्रे क्षेत्रज्ञानाभावान्न क्षेत्रज्ञत्वमुपपद्यते इति भावः। साक्षिभूत इति साक्षिसदृशः। विशेषो वेदनाकृत इति पुत्रादिज्ञानरूपवेदनाजनितो हर्षादिविशेष इत्यर्थः। तिसृणामिति अतीतानागतवर्त्तमानानां दुःखरूपाणां मध्ये कां चिकित्सति। अतीतामित्यादौ 'किं' शब्दोऽध्याहार्य्यः। तेन किमतीतां चिकित्सति, किं वर्त्तमानाम्, किंवा भविष्यन्तीमिति योज्यम्। स्थानं नास्तीति

* ज्ञेयं क्षेत्रमिति चक्रः।

खादयश्चेतनाधातु-षष्ठास्तु पुरुषः * स्मृतः।
चेतनाधातुरप्येकः स्मृतः पुरुषसंज्ञकः॥

गङ्गाधरः—ननु कस्य प्रश्नस्योत्तरतया किं व्याख्यातव्यानित्यतः प्रथमप्रश्नस्योत्तरमाह—खादय इत्यादि। अत्राग्निवेशः प्रथमाध्याये सर्व्वाधिष्ठानतया सर्व्वक्रियाधिकरणतया च पुरुष उक्तः स खलु धातुभेदेन कतिधा भवतीत्यभिप्रेत्य प्रथममिदं पृष्टवान्। कतिधा पुरुषो धीमन् धातुभेदेन भिद्यत इति अस्यार्थः;—हे धीमन् गुरो महर्षे! पुरुषः कतिधा भिद्यते एतावन्मात्रप्रश्ने पुरि शरीरे वासित्वादात्मा पुरुषः कतिधा धातुभेदेन भिद्यते इत्येवं गम्यते। तथा पूर्व्वाध्यायोक्तः—सत्त्वमात्मा शरीरञ्च त्रयमेतत् त्रिदण्डवत्। लोकस्तिष्ठति संयोगात् तत्र सर्व्वं प्रतिष्ठितम्॥ स पुमांश्चेतनं तच्च तच्चाधिकरणं स्मृतम्। वेदस्यास्येत्यनेन—यः पुरुषः स धातुभेदेन कतिधा भिद्यते इत्यपि गम्यते। तत्र कतिधा पुरुष एतावन्मात्रप्रश्ने नरसुरासुरपशुपक्षिकीटपतङ्गवृक्षतृणाद्यशीतिलक्षयोनिप्राणिनां प्रत्येकशो विधा प्रश्नः स्यात् तद्वारणायोक्तं धातुभेदेनेति। एतादृशप्रश्ने ह्येकैकपुरुषस्य धातुभेदेन कतिधात्वमिति ज्ञापितम्। अथात्र धातुर्धारणपोषणोपादानहेतुरारम्भकोऽर्थः। पुरीषमूत्रवातादयो धारणहेतवो धातवः। रसादयः पोषणहेतवो धातवः। ओजःप्रभृतयो धारणपोषणयोर्हेतवो धातवः, सर्व्वे ते चोभयार्थकराः परस्परान्वयादिति धातवः सर्व्वेषामिति न तत्प्रश्नः। मिथः संयुक्तसत्त्वात्मशरीरसमुदायात्मकः पुरुषो धातुभेदेन कतिधेति प्रश्नमभिप्रेत्योत्तरयति—खादय इत्यादि। षड्धातुक एकधातुकश्चतुर्व्विंशतिधातुकश्चेति धातुभेदेन त्रिविधः पुरुषो भवतीति ज्ञापयितुं प्रथमं षड्धातुकं विवृणोति। खादयश्चेतनाधातु-षष्ठास्तु पुरुषः स्मृत इति, षड्धातुक एकविधः पुरुषः। खमाकाशं शब्दतन्मात्ररूपं तदादियेषां वाय्वादीनां स्पर्शतन्मात्रादिरूपाणां न पूर्व्वपूर्व्वभूतानुप्रविष्टरूपाणाञ्च ते

क्षणिकत्वेन चिकित्सायाः प्रवृत्तियोग्यकालावस्थानं नास्ति। वेदनानां कारणमधिष्ठानञ्च यद्यपि दीर्घञ्जीवितीयेऽप्युक्तम्, तथापीह प्रकरणवशाद्विशेषप्रतीत्याकाङ्क्षया च विशिष्टाः पुनः प्रश्नाः। प्रश्नार्थाश्चामी उत्तरतन्त्रेणाचार्य्येण प्रपञ्चनीया इति तत्रैव व्याकरणीयाः॥ १—२॥

चक्रपाणिः—खादय इत्यादि। खादयः खं वायुरग्निरापः क्षितिस्तथा इति वक्ष्यमाणाः। चेतनाषष्ठा इत्यत्रैव चेतनाशब्देन चेतनाधारः समनस्क आत्मा गृह्यते। खादिग्रहणेन

* चेतनाषष्ठा धातवः इति पाठान्तरम्।

खादयः किं पञ्च खं वायुर्ज्योतिरापो भूरिति किं वा खादीनि नव द्रव्याणीत्यत उक्तं चेतनाधातुषष्ठा इति तद्विशेषणं षष्ठेतिपदम्। चेतनाधातुः षष्ठो यत्र ते तथा चेतनाधातुषष्ठाः खादयः समस्तरूपेण स्मृतो न तु व्यस्तरूपेणेति षड्धातुक एकविधः पुरुषः। चेतना खलु सा महानिर्व्वाणाख्यप्रलये यदवशिष्यते शक्तिब्रह्म। सा चेतनाशक्तिर्मूलप्रकृतिः सर्व्वात्मा चैतन्यकारिणी तच्चेतनाधातुरव्यक्ताख्य आत्मा, खादयः पञ्च महाभूतानि, शब्दमात्राकाशः स्पर्शमात्रवायू रूपमात्रज्योती रसमात्रा आपो गन्धमात्रा पृथिवीति षड्धातुकः पुरुषो लोके विश्वरूपः सप्ताङ्ग एकोनविंशतिमुखः प्राणिनामन्तरात्मा स्वप्नस्थानः। उक्तं मुण्डकोपनिषदि। अग्निर्मूर्द्धा चक्षुषी चन्द्रसूर्य्यौ दिशः श्रोत्रे वाग्विवृताश्च वेदाः। वायुः प्राणो हृदयं विश्वमस्य पद्भ्यां पृथिवी ह्येष सर्व्वभूतान्तरात्मा। इति। एष सूक्ष्मरूपः सर्व्वभूतानां स्वप्नस्थानो भूतात्मा लोके। बृहन्माण्डूक्योपनिषदि चोक्तः। तद् यथा—स्वप्नस्थानोऽन्तःप्रज्ञः सप्ताङ्ग एकोनविंशतिमुखः प्रविविक्तभुक् तैजसो द्वितीयः पादः। इति। अस्य सप्ताङ्गानि पञ्चमहाभूतानि तेजो द्विधाभूतमेकं मूर्द्धापरं चक्षुः श्रोत्रमाकाशं वायुः प्राण आपो वस्तिः पृथिवी देह आत्मा चाव्यक्तं स्वप्ने प्रविविक्तभोगे चास्य खल्वेकोनविंशतिर्मुखानि। तद् यथा—पञ्च प्राणाः पञ्च बुद्धीन्द्रियाणि सूक्ष्माणि श्रोत्रादीनि पञ्च कर्म्मेन्द्रियाणि च सूक्ष्माणि पाय्वादीनि। सूक्ष्मश्च मनोऽहङ्कारो महांश्चित्तञ्चेति। एतत्समुदायात्मकः षड्धातुकः पुरुषः प्राणिनां स्वप्नस्थानस्तैजसो नाम भूतात्मा। नन्वेते षड् धातवः किं प्रसिद्धा एवानुपादाना एतत्षड्धातुक एवैकविधः किं पुरुषो नान्योऽस्तीत्यत आह— चेतनाधातुरप्येकः स्मृतः पुरुषसंज्ञकः। इति। यस्य धारणपोषणोपादानहेतुर्यः स तस्य धातुः। चेतना सर्व्वचैतन्यहेतुरचिन्त्यानन्तप्रभाववती मूलप्रकृतिः शक्तिः ब्रह्म, या महानिर्व्वाणेऽवशिष्यते। तच्चेतनाशक्त्युपादानः चेतनाधातुर्य एकः खल्वद्वितीयः सोऽपि पुरुषसंज्ञकः स्मृतः। पुरि व्याकृताव्याकृतशरीरे वसतीति वसेरौणादिकः कच्प्रत्ययः पुरुषः। कथमेनं चेतनाशक्तिरुपाददाविति चेत् तदुक्तं तैत्तिरीयोपनिषदि। असद् वा इदमग्र आसीत् ततो वै सदजायत। तदात्मानं स्वयमकुरुत तस्मात् तत् सुकृतमुच्यते॥ इति।

चेन्द्रियाणि खादिमयान्यवरुद्धानि। अयञ्च वैशेषिकदर्शनपरिगृहीतः चिकित्साशास्त्रविषयः पुरुषः। अयमेव पञ्चमहाभूतशरीरिसमवायः पुरुषः इत्यनेन सुश्रुतेनाप्युक्तः। स्मृत इति परिभाषया पूर्व्वाचार्य्याणामप्ययं पुरुषशब्दवाच्योऽभिप्रेतो नास्मत्कल्पित इति दर्शयति। पुरि

अस्य मन्त्रस्यानुवाकः । यद् वै तत्सुकृतं रसो वै सः । रसं ह्येवायं लब्ध्वानन्दी भवति ॥ ॐ सोऽकामयत बहु स्यां प्रजायेयेति, स तपोऽतप्यत । स तपस्तप्त्वेदं सर्व्वमसृजत यदिदं किञ्च । तत् सृष्ट्वा तदेवानुप्राविशत् तदनुप्रविश्य सच्च त्यच्चाभवत् ॥ ( यदिदं किञ्च ) निरुक्तञ्चानिरुक्तञ्च निलयनञ्चानिलयनञ्च विज्ञानञ्चाविज्ञानञ्च सत्यञ्च अनृतञ्च । सत्यमभवत् । यदिदं किञ्च तत् सर्व्वं सत्यमित्याचक्षते ॥ इति । अस्य ब्राह्मणश्छान्दोग्योपनिषदि । तद् यथा— असदेवेदमग्र आसीत् तत् सदासीत् तत् सदभवदित्युक्त्वा चाब्रवीत् । सदेव सौम्येदमग्र आसीदेकमेवाद्वितीयं तद्धैक आहुः ॥ असदेव सौम्येदमग्र आसीदेकमेवाद्वितीयं तस्मादसतः सज्जायेतेति कुतस्तु खलु सौम्यैवं स्यात् ॥ इति होवाच कथमसतः सदजायेतेति सत् त्वेव सौम्येदमग्र आसीदेकमेवाद्वितीयम् इति । तदैक्षत बहु स्यां प्रजायेयेति तत् तेजोऽसृजत तत् तेज ऐक्षत बहु स्यां प्रजायेयेति तदपोऽसृज्यत ॥ तस्माद् यत्र क्व च शोचति स्विद्यति च पुरुषस्तेजस एव तदध्यापो जायन्ते ॥ ता आप ऐक्षन्त बहु स्याम प्रजायेमहीति ता अन्नमसृजन्त ॥ तस्माद् यत्र क्व च वर्षति तदेव भूयिष्ठमन्नं भवत्यद्भ्य एव तदध्यन्नाद्यं जायते ॥ सेयं देवतैक्षत हन्ताहमिमास्तिस्रो देवता अनेन जीवेन आत्मनानुप्रविश्य नामरूपे व्याकरवाणीति ॥ तासां त्रिवृतं त्रिवृतमेकैकां करवाणीति सेयं देवतेमास्तिस्रो देवता अनेन जीवेनात्मनानुप्रविश्य ॥ नामरूपे व्याकरोत् तासां त्रिवृतं त्रिवृतमेकैकामप्यकरोत् ॥ इति । अत्रासद्वा इदमग्र आसीत् ततो वै सदजायतेति यदुक्तं तत्रासत्पदेन सदेवोक्तं छान्दोग्योपनिषदि । तत्र प्रावादुका विप्रतिपद्यन्ते । असद्वा इदमित्यसत्पदेनासदेव शून्यमेव तस्मादसतः सज्जायेतेति कथमसत्पदेन सदुच्यते इति । तत्र सिद्धान्त उक्तश्छान्दोग्योपनिषदि । कुतस्तु खलु सौम्यैवं स्यात् । कथमसतः शून्यतः खल्ववस्तुतः सद्वस्तु जायेतेति । न हि खपुष्पात् फलं जायते इति । एतच्च कपिलेन साङ्ख्ये परीक्षितम् । तद् यथा । शून्यं तत्त्वं भावो विनश्यति । विनाशस्य वस्तुधर्म्मत्वादिति, तदपवादमात्रमबुद्धानाम् । असद् वै शून्यं तत्त्वं यथार्थं न तु सत् । स हि भावो विनश्यति विनाशस्य वस्तुधर्म्मत्वात् । तस्मात् अवस्तु खल्वसत् तन्न विनश्यति न हि ब्रह्म विनाशीति यदुच्यते तदबुद्धानामपवादमात्रमिति । तत्राहुः प्रावादुकाः । उभयपक्षसमानक्षेमत्वादयमपीति । सत्

शरीरे शेते इति व्युत्पत्त्या य आत्मा पुरुषशब्देनोच्यते, तमाह—चेतनेत्यादि । अत्र पुरुषः इति कर्त्तव्ये यत् पुरुषसंज्ञकः इति करोति, तेन चेतनाधातुरूपः पुरुषश्चिकित्सायामनभिप्रेतः,

एवाग्र आसीदिति पक्षे तत् सद् ब्रह्मज्ञाने प्रयोजनं निर्व्वाणं मुक्तिः प्रदीपनिर्व्वाणवदसद्भावः क्षेमः। असदेवाग्र आसीदिति पक्षेऽपि तथेति समानक्षेमत्वादयम् अप्यसत्पक्षोऽस्माकं कथमबुद्धानामपवादमात्रमिति। तत्राह सद्वादी। अपुरुषार्थत्वमुभयथा। सत्पक्षे यदि निर्व्वाणं मुक्तिर्दीपनिर्व्वाणमिष्यते तदा न पुरुषार्थो भवति। अर्थो हि वस्तु। तथैवासत्पक्षेऽपि। तथा निर्व्वाणं मुक्तिः अपुरुषार्थो भवतीत्युभयथा न निर्व्वाणं पुरुषार्थो भवति। पुरुषस्य मुख्यः प्रयोजनीभूतोऽर्थो वस्तु पुरुषार्थो न त्ववस्तु पुरुषार्थो भवतीति। प्रकृतवस्तुरूपेणाभिनिष्पत्तिर्निर्व्वाणम्। तस्माद् यदि शून्यमसदेव तत्त्वं भवति तस्मात् अवस्तुतो न वस्तुसिद्धिः स्यात्, असतः खल्ववस्तुतः सदजायतेति न सिध्यति॥ भावे तद्योगेन तत्सिद्धिरभावे तदभावात् कुतस्तरां तत्सिद्धिः। भावे खलु सद्ब्रह्मणि वस्तुनि तद्योगेन वस्तुसिद्धिर्यथा मृद्योगेन घटादिनिष्पत्तिः। अभावे खल्वसति ब्रह्मण्यवस्तुनि तद्योगाभावात् कुतस्तरां वस्तुनिष्पत्तिः स्यात् उपादाननियमादिति कपिलः।

अक्षपादेनाप्युक्तम्। अभावाद् भावोत्पत्तिर्नाऽनुपमृद्य प्रादुर्भावात्। असतः सदुत्पत्तिर्न भवति अनुपमृद्य कारणं प्रादुर्भावप्रसङ्गात्। उपमृद्यैव बीजमङ्कुर उत्पद्यते। ननु नष्टाद्बीजादङ्कुरो जायते तस्मान्न सतः सदुत्पत्तिरिति। तत्र सिद्धान्तः—क्रमनिर्द्देशादप्रतिषेध इति। नष्टाद् बीजादङ्कुरो जायत इति हेतोः सतः सदुत्पत्तेः प्रतिषेधो न। कस्मात्? क्रमनिर्द्देशात्। उपमर्द्दप्रादुर्भावयोः पौर्व्वापर्य्यनियमः क्रमः। तन्निर्द्देशाद् अभावाद् भावानामुत्पत्तिरेव तत्प्रतिषेधो न भवति। क्रमश्चायम्। व्याहतव्यूहानाम् अवयवानां पूर्व्वनिवृत्तौ व्यूहान्तराद् द्रव्यनिष्पत्तिर्नाभावात्। बीजावयवाः कुतश्चिन्निमित्तात् प्रादुर्भूतक्रियाः पूर्व्वव्यूहं जहति व्यूहान्तरञ्चापद्यन्ते। इति व्यूहान्तरादङ्कुर उत्पद्यते। इति। तत्राहुः भाववादुकाः। असदिति अस्तीति सत् न सदसदिति वस्तूनामभाव एव प्रतिपद्यते। नासदभावः सद्भवतीति। तत्राह गौतमः—सर्व्वमभावो भावेष्वितरेतराभावसिद्धेरिति। गोरभावोऽश्वो भावः तथाश्वाभावो गोभाव इति भावेषु मध्येऽन्योन्याभावसिद्धेः सर्व्वं वस्तु ह्यभावः। न चावस्तुरूपोऽभाव उपपद्यते। भावादन्य इत्यभाव इति चेत् तत्रापि अन्यशब्देन भावादन्यत्वाश्रयः खलु भावमन्तरेण न सम्भवति न ह्यवस्तु भावादन्यत्वं नाम पृथक्त्वं गुणमाश्रयितुमर्हति।

किन्तु शास्त्रान्तरव्यवहारानुरोधादिहाप्ययं पुरुषशब्देन संज्ञित इति दर्शयति, चिकित्साविषयस्तु षड्धातुक एव पुरुषः। अत एव तत्र 'संज्ञित'ग्रहणं न कृतम्। अयञ्च पुरुषशब्दो

एवञ्च भावानामसत्ता यद्यभाव उच्यते तदपि भावावत्तनमवस्तु चाभाव इत्यभिप्रायेणोक्तमभावाद् भावोत्पत्तिर्नेति गौतमेन। तत्र ह्यवस्तुन्यभावशब्दप्रयोगः कृत इति। तथा च द्विविधो भवति अभावो वस्तुभूतश्चावस्तुभूतश्च। तत्रासत्-पदस्थनञा नावस्तुभूताभाव उच्यते उपादानोपमर्द्दनासम्भवेन सदुत्पत्त्यनुपपत्तेः। तस्मात् वस्तुभूत एव अभाव इह नञा प्रतिपद्यते।

तत्रोक्तं कणादेन वैशेषिके शास्त्रे असद्वा इदमग्र आसीदिति स्मृत्वा। क्रियागुणव्यपदेशाभावात् प्रागसत्। सदसत्। सतः क्रियागुण-व्यपदेशाभावादर्थान्तरभावात्। सच्चासत्। यच्चान्यदसदतः तदसदिति पूर्व्वाध्याये दर्शितं व्याख्यातञ्च। तस्मात् तेजोऽबन्नादिभ्यः सद्भ्यो-ऽन्यदसदिति। वस्तुविशेषः। तद् यथोक्तं श्वेताश्वतरोपनिषदि। कालः स्वभावो नियतिर्यदृच्छा भूतानि योनिः पुरुषेति चिन्ता। संयोग एषां न तु आत्मभावादात्माप्यनीशः सुखदुःखहेतोरिति। कालादीनामेकैकस्मादेषां जन्माद्यभावान्न कालादन्यतमं ब्रह्मेति चिन्ता, तथैषां संयोगः संघातो न ब्रह्म। आत्मभावात्। आत्मा हि नेशः सुखदुःखहेतोरिति। तर्हि किं कारणं ब्रह्मेत्यत उक्तम्। ते ध्यानयोगानुगता अपश्यन् देवात्मशक्तिं स्वगुणैर्निगूढ़ाम्। यः कारणानि निखिलानि तानि कालात्मयुक्तान्यधितिष्ठत्येक इति। ते ब्रह्मवादिनो ध्यानयोगानुगता देवस्यात्मा या शक्तिः प्राक् सर्गात् स्वगुणः प्रभावैः निगूढ़ा क्रियागुणव्यपदेशरहिता आसीत् तां ब्रह्म अपश्यन्। तस्या ह्येकस्या एव सर्व्वेषां जन्मजीवनप्रतिष्ठानाधिष्ठानसुखासुखवर्त्तनानि भवन्ति नान्यस्मात् एकस्मात् कस्माच्चिदपीति। देवस्तु स यः एकः कालादीनि कारणान्यधि-तिष्ठति तस्य देवस्यात्मा शक्तिर्ब्रह्म। नान्यदेवस्य न वा तस्य देवस्यात्मनः स्वस्य शक्तिर्ब्रह्म। ज्ञानबलक्रियाशक्त्यादिव्यवच्छेदार्थमात्मेति। तस्माद् देवस्य शक्तिरिति नोक्तम्। वायुरिव प्रभावाख्या शक्तिस्तद्विशिष्टाऽतिसूक्ष्मपरम-व्योमरूपा शक्तिश्चेति द्वयमपि शक्तिरूपेणैकमेवासीत् न तु विजातीयद्वैतं वह्न्यादेः आलोककृत् प्रभावस्तद्विशिष्टरूपञ्चेति द्वयं यथा रूपत्वेनैकमेव वस्तु न तु विजातीयद्वैतं न हि रूपादन्य आलोककृत् प्रभावस्तथा शक्तेर्न पृथक् प्रभावाख्या शक्तिरित्यत उक्तमेकमेवाद्वितीयमिति। तदद्वितीयमेकमसत् क्षीरवत्। क्षीरं यथा स्नेहांशे भवत्यपरिणामि चाविकारि स्नेहातिरिक्तद्रवांशे

गवादावपि षड्धातुसमुदाये यद्यपि वर्त्तते, तथापि सर्व्वप्रधाने नर एव विशेषेण वर्त्तते। तेन नातिप्रसिद्धो गवादौ पुरुषशब्दः।

तु परिणामि तत् विक्रियमाण दधितक्रादि भवति स्नेहस्तु घृतनवनीतरूप एव वर्त्तते न तु विवर्त्तते, तद्वदतिसूक्ष्मपरमव्योमरूपा मुख्यांशशक्तिर्न परिणामिनी न च विक्रियते। प्रभावाख्या तु गुणांशभूता शक्तिः परिणामिनी ततो विक्रियते। इत्येवमेका शक्तिरेव सत् खल्वसद्ब्रह्म। ततो वै सदजायतेति।

यथा तदसत एव सतः सदजायत तदुक्तं छान्दोग्योपनिषदि। तदैक्षत बहु स्यां प्रजायेयेति तत् तेजोऽसृजतेत्यादि। तत् सदेवासद्ब्रह्म खलु शक्तिः सर्व्वकाल-नया प्रभावाख्यया शक्त्या महानिर्व्वाणाख्यं प्रलयं कृत्वैकैवाद्वितीया स्वप्रभाव-गुणनिगूढ़ा सती क्रियागुणव्यपदेशरहितैव प्रसुप्तेवासीत्। तन्महानिर्व्वाणे सर्व्वकालनाशक्तेश्चक्रवद् भ्रमणस्वरूपत्वात् क्रमेण तदत्यये सर्व्वसर्ज्जनाशक्त्युद्रेके प्रथमतो रञ्जनाशक्तिरुद्रिक्ता भवति यदा तदा निशावसाने प्रसुप्तोत्थितपुरुष इव सा शक्तिर्ब्रह्म प्रसुप्तोत्थितेव सती अहं बहु स्याम्। कथमिति प्रजायेयाहं प्रजाः प्रसूयेयेति ऐक्षतालोचयत। तथालोच्य रञ्जनाशक्तिपरिणामरूपं तेजो-ऽसृजत। लोहितमिवाभासमानं लोहितवर्णस्याकररूपं न तु लोहितं तेजः सर्व्वेषां ज्योतिषामाकररूपं ज्योतिश्चक्षुरिव चक्षुरसृजत। अथ तत् तेज ऐक्षत बहु स्यां प्रजायेयेति। तदपोऽसृजतेति। तत् तेजोऽहं बहु स्यां प्रजायेयेत्यालोच्य स्वस्यैकादशांशैकांशं विकुर्व्वदपोऽसृजत। ता आपः शुक्ला इवाभासाः शुक्लवर्णस्य आकररूपा न तु शुक्लाः। तथा रसरूपाः सर्व्वरसानामाकररूपा अमृतरूपा आप इवापः सर्व्वासामपामाकररूपा न त्वापः। तत्रेयं युक्तिः। तस्मात् इत्यादि। यस्मात् तेजस एवादौ जाता आपस्तस्मादिदानीं यत्रकुत्रचित् पुरुषः शोचति शोकात् तेज उद्रिक्तं भवति। तदुद्रेकात् पुरुषः स्विद्यति घर्म्मवान् भवतीति तेजस एवापोऽधिजायन्त इति। अथ ता आप ऐक्षन्त बहु स्याम प्रजायेमहीति। तदन्नमसृजन्तेति ता आपो वयं बहु स्याम प्रजायेमहीत्यालोच्य स्वैकादशांशैकांशं विकुर्व्वत्योऽन्नमसृजन्त। तदन्नं कृष्णमिवाभासं कृष्णवर्णस्याकरभूतं न तु कृष्णवर्णं गन्धवदाभासं सर्व्वगन्धाकरभूतं न तु गन्धवती पृथिवी। तच्चाद्यमाद्यमिवाद्यानां सर्व्वेषामाकररूपं न त्वाद्यमिति। तेषामेषां तेजोऽबन्नानां मेलने सति लोहित-शुक्लकृष्णवदाभासमाना हिरण्यवर्णवदाभासा सैवाजा शक्तिर्ब्रह्मातिपरमसूक्ष्म-ध्वनिमती परमसूक्ष्मव्योमरूपा गायत्री वागेव देवताविरभूत्। सा शक्ति-प्रभावतेजोऽबन्नानीति पञ्चात्मिकाऽनन्ताचिन्त्यप्रभाववती। एवमुक्तं वायवीये। शक्तिः प्रथमसम्भूता गायत्री सा पदोत्तमेति। इत्येतत् तेजोऽबन्नतन्मय-

गायत्रीति चतुष्कं सदजायत तस्मादसत एव सतः शक्तिब्रह्मतः। इत्येतत् तु यत् सत् गायत्र्याख्यं तदात्मानं स्वयमकुरुतेत्यतः स्वयम्भूर्नामेपः ; सुष्ठु अयः शुभावहो विधिर्यस्मात् स स्वयः, तत् स्वयं तस्मात् स्वयत्वात् सुकृतं पुण्यमुच्यते। अत एव शिव इत्याख्यायते। यथैनं परमात्मानमकुरुत तत् सत् छान्दोग्येऽप्युक्तम्। गायत्री वा इदं सर्व्वं भूतं यदिदं किञ्च। वाग् वै गायत्री। वाग् वै सर्व्वं भूतं गायति च त्रायते चेति। तद् व्याख्यानं कूर्म्मरूपिणा भगवता विष्णुना नारदादिभिः पृष्टेन। तद् यथा—या सा माहेश्वरी शक्तिर्ज्ञानरूपातिलालसा। अनन्या निष्कले तत्त्वे संस्थिता तु स्वतेजसा। व्योमसंज्ञा परा काष्ठा सेयं हैमवती सती। शिवा सर्व्वगताऽनन्ता गुणातीता सुनिष्कला। एकानेकविभागस्था ज्ञानरूपातिलालसा। स्वाभाविकी च तन्मूला प्रभा भानोरिवामला। सेयं करोति सकलं तस्याः कार्य्यमिदं जगत्। चतस्रः शक्तयो देव्या स्वरूपत्वेन निर्म्मिताः। शान्तिर्विद्या प्रतिष्ठा च निवृत्तिरिति ताः स्मृताः। चतुर्व्यूहस्ततो देवः प्रोच्यते परमेश्वरः॥ इति। एवं परमव्योमरूपं चतुर्व्यूहं परमात्मानं शिवं कृत्वा यथा बभूव तदुक्तमुपमन्युना। तच्छिवस्य शिवायाश्च साम्यञ्चैतत् स्वभावतः। यथा शिवस्तथा देवी यथा देवी तथा शिवः। नानयोरन्तरं विद्याच्चन्द्रचन्द्रिकयोर्यथा। चन्द्रो न खलु भात्येष यथा चन्द्रिकया विना। न भाति विद्यमानोऽपि तथा शक्त्या विना शिवः। शक्तो यया शिवो नित्यं शक्तो मुक्तौ च देहिनाम्। आद्या सैका परा शक्तिश्चिन्मयी शिवसंश्रया। यामाहुरखिलैस्तस्य तैस्तैरनुगुणैर्गुणैः। समानधर्म्मिणीमेव शिवस्य परमात्मनः। शिवेच्छया परा शक्तिः शिवतत्त्वैकतां गता। ततः परिस्फुरत्यादौ सर्गे तैलतिलादिवत्॥ इति। इत्येवं हिरण्यवदाभासमानया गायत्र्या सहैकीभावादेष परमव्योमपरमात्मा स्वयः सुकृतं शिवो हिरण्मयकोषः पुरुषः। गायत्री ह्यस्य ज्योतीरूपेण भाति तथास्य हृदये परव्योमरूपे पञ्च देवसुषयः सन्ति। पूर्व्वदक्षिणपश्चिमोत्तरोर्द्ध्वदेशे तदभ्यन्तरे हृदये चात्मा भूत्वा वर्त्तते॥ तदुक्तं मुण्डकोपनिषदि। हिरण्मये परे कोषे विरजं ब्रह्म निष्कलम्। तच्छुभ्रं ज्योतिषां ज्योतिस्तद् यदात्मविदो विदुरिति। आपो हि रसस्तद्वत्त्वाद् गायत्री च रसस्तदेकीभावाच्च शिवोऽपि रसस्तदाह—यद्वैतत् सुकृतं रसो वै स इत्यादि। यदेव सुकृताख्य एष आत्मा स्वयः पुरुषः स गायत्र्याख्यरसवत्त्वाद्रस उच्यते। रसत्वेन किं करोति, तदाह—रसं ह्येवायमित्यादि। लोके योगी सुषुप्तश्चायं पुरुषः समाधौ सुषुप्तौ च सर्व्वेषां पृथिव्यादीनां

मनसि लये मनसश्च विज्ञान आत्मनि लये शुद्धसत्त्वरूपेण महत्तत्त्वेन चेतसा विशिष्ट आत्मा खल्वेनं रसं तुरीयं परमात्मानं शिवं लब्ध्वानन्दी भवति।

अत्र जिज्ञासा। को ह्येवान्यात् कः प्राण्यादानन्दो न स्याद् यदेष आकाश इति। रस एक आनन्दीभवत्यपर इति द्वयोर्मध्ये क एवान्यात् प्रीतः स्यात् कः प्रीणनः स्यादिति, यद् यस्मादेष रस आकाशः परमव्योम तत्र प्रीत्यसम्भवादानन्दो न स्यादिति। तत्रोत्तरम्। एष ह्येवानन्दयतीति आनन्दहेतुत्वस्य प्रयोजकत्वस्य व्यपदेशादानन्दो रस एव परमात्मा परव्योम ब्रह्मेति व्यजानादित्युक्तमिति। इत्येष परमात्मा हिरण्मयकोष आत्मपङ्क आदिपुरुषो ब्रह्मयोनित्वाद् ब्रह्म चेतनाधातुरेकः पुरुषस्त्रिपात्। तत्र शिरोग्रीवं दशाङ्गुलं स्वः पादः, तज्जातानां पञ्चब्रह्मपुरुषमहाविष्णुक्षेत्रज्ञप्रधानानां चेतनाधातूनाञ्चानेकेषां पुरुषाणां निलयनं कण्ठादधस्ताच्चतुर्व्विंशत्यङ्गुलं परव्योम ब्रह्म भुवर्लोको द्वितीयः पादः। ततोऽधस्तात् पञ्चाशदङ्गुलपरव्योम्नि तेषां मेलनेनैकीभूतः संहतरूपश्चेतनाधातुरव्यक्तनामापि पुरुषसंज्ञकः स्मृतः इति। सर्व्वभूतमयस्तृतीयः पादो भूर्लोकः। ननु के तेऽनेके चेतनाधातुकाः पुरुषाः कथमुदपद्यन्तेति? उच्यते। उक्तं छान्दोग्योपनिषदि। यद्दर्शितं सेयं देवतैक्षत हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणीति। तासां त्रिवृतं त्रिवृतमेकैकां करवाणीति। इति सा तदसदेव सद्ब्रह्मशक्तिरियं तेजोऽन्नोपाहिता गायत्रीदेवता। हन्त खल्विमास्तेजोऽन्नाख्यास्तिस्रो देवता अनेन परव्योम्ना परमात्मना जीवेन पुरुषेणाहम् अनुप्रविश्य सर्व्वेषां नामरूपे व्याकरवाणीत्यैक्षत। कथमिति चेत्? तदोच्यते। तासां तेजोऽन्नाख्यानां तिसृणां देवतानामेकैकां देवतां ताभिस्तिसृभिर्देवताभिः मिलिताभिर्न्यूनादंशतस्त्रिवृतां त्रिवृतां त्र्यात्मिकां त्र्यात्मिकाञ्च करवाणीति चैक्षत आलोचयत्। ततस्तथा चकार। यथा चकार तदुक्तं तैत्तिरीयोपनिषदि। उ सोऽकामयत बहु स्यां प्रजायेयेति। स तपोऽतप्यत। स तपस्तप्त्वा इदं सर्व्वमसृजत यदिदं किञ्च। तत् सृष्ट्वा तदेवानुप्राविशत्। तदनुप्रविश्य सच्च त्यच्चाभवत्। निरुक्तञ्चानिरुक्तञ्च निलयनञ्चानिलयनञ्च विज्ञानञ्चाविज्ञानञ्च सत्यञ्चानृतञ्च। सत्यमभवत्। यदिदं किञ्च तत् सत्यम् इत्याचक्षत इति। उभौ य आत्मा स्वयः सुकृतं रस आकाश आनन्द इत्येतैर्नामभिर्य उक्तः परमव्योमपुरुषः शिवः शिवया परमया शक्त्यैकीभूतः

सोऽहं बहु स्यां प्रजायेयेत्यकामयत। तथा कामयित्वा तपोऽतप्यत। ज्ञानमयं तपोऽकुरुत। स तपस्तप्त्वा सर्व्वमिदमसृजत्। कथम्? यदिदं किञ्च भूर्भुवर्लोकस्थं तत्सृष्ट्वा परावरं सृज्यमानस्त्वनुप्राविशत्। तच्च सृज्यमानं सर्व्वमनुप्रविश्य सच्च त्यच्चाभवत्। सत् कल्याणं वस्तु, त्यत् कल्याण-विपरीतं, कल्याणमेव तदिति द्विविधमभवत्। तत् सच्च त्यच्च निरुक्ताऽनिरुक्तादिद्वन्द्वरूपम्। एतदुक्तं मुण्डकोपनिषदि। यः सर्व्वज्ञः सर्व्वविद् यस्य ज्ञानमयं तपः। तस्मादेतद् ब्रह्म नामरूपमन्नञ्च जायत इति। यः स परमव्योम परमात्मा स सर्व्वज्ञः सर्व्वं ह वै जानाति, स सर्व्ववित् सर्व्वविद्यावान्। तस्य ज्ञानं सा परा गायत्री तन्मयमेव तपः। तत् तपः कुर्व्वतस्तस्मात् परमात्मन एतत् पञ्चब्रह्म सर्व्वेषां नाम च रूपञ्चान्नञ्चादंत्र जायते। तद् यथा निरुक्तादिकमभवत् तद् व्याख्यातमुपमन्युना वायवीये; श्वेताश्वतरोपनिषदुक्तम्। न तस्य कार्य्यं करणञ्च विद्यते न तत्समश्चाप्यधिकश्च दृश्यते। परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया चेति मन्त्रं स्मृत्वा, तद् यथा—ज्ञानक्रियाचिकिर्षाभिस्तिसृभिः स्वीयशक्तिभिः। शक्तिमानीश्वरः शश्वद्विश्वं व्याप्यावतिष्ठते। ज्ञानशक्तिस्तु कार्य्यं तत्कारणं करणं तथा। प्रयोजनञ्च तत्त्वेन बुद्धिरूपाध्यवस्यति। इदमित्थमिदं नेत्थं भवेदित्यभिमानिका। इच्छाशक्तिर्महेशस्य नित्या कार्य्यनियामिका। अथेच्छया क्रियाशक्तिर्यथाध्यवसितं धिया। कल्पयत्यखिलं कार्य्यं क्षणात् सङ्कल्परूपिणी। यया शक्तिसमुत्थाना शक्तिः प्रसवधर्म्मिणी। शक्त्या परमया नित्या प्रसूते सकलं जगत्। एवं शक्तिसमायोगाच्छक्तिमानुच्यते शिवः। शक्तिशक्तिमदुत्थन्तु शाक्तं शैवमिदं जगत्। यथा न जायते पुत्रः पितरं मातरं विना। तथा भवं भवानीञ्च विना नैव चराचरम्। परमात्मा शिवः प्रोक्तः शिवा चैव प्रकीर्त्तिता। पिता महेश्वरो ज्ञेयः शिवा मातेति कीर्त्त्यते। तस्माच्छक्तिमयं सर्व्वं जगत् स्थावरजङ्गमम्। शिवाद्यवनिपर्य्यन्तं यया ततमिदं जगत्। ततः शिवाख्या या शक्तिः शक्त्या शक्तिसमुत्थया। तस्यां वै क्षोभ्यमाणायामादौ नादः समुद्गतः। नादाद् विनिःसृतो विन्दुर्विन्दोरोमित्यभूद् ध्वनिः। सा तु माहेश्वरी जाता शुद्धविद्या महोदया। सा वाचामीश्वरी शक्तिर्वागीशाख्या तु शूलिनः। या सा वर्ण-स्वरूपेण मातृकेति विजृम्भते। तस्माद्वर्णमयो देवो बभूवादौ सदाशिवः। अथानन्तसमायोगात् कलां मायामथासृजत्। नियतिञ्च कलाविद्याकालञ्च

गुणपूरुषौ । मायातः पुनरेवाभूदव्यक्तं त्रिगुणात्मकम् । त्रिगुणावृततोऽव्यक्ताद् विविक्ताः स्युस्त्रयो गुणाः । सत्त्वं रजस्तमश्चेति यैर्व्याप्तमखिलं जगत् । गुणेभ्यः क्षोभ्यमाणेभ्यो गुणेशात् तु त्रिशूलिनः । अभवन् महदादीनि तत्त्वानि च यथाक्रमम् । तेभ्यः स्युरण्डपिण्डानि ह्यसङ्ख्यानि शिवाज्ञयेति ॥

व्याख्यानम् इदञ्चानुव्याख्यातम् । योऽसौ स्वयः सुकृतमानन्दः परमव्योम परमात्मा शिवः स्वयम्भूर्ब्रह्मयोनिः स ईश्वरस्तिसृभिर्ज्ञानशक्ति-श्चिकीर्षाशक्तिर्नाम यदिच्छाशक्तिः क्रियाशक्तिरित्येताभिः शक्तिभिर्विशिष्टः शश्वच्छक्तिमान् ताभिः विश्वं व्याप्यावतिष्ठते । कथमित्यत आह—ज्ञानशक्ति-स्त्वित्यादि । तस्य ज्ञानशक्तिः सा या यत्कार्य्यमिदं निखिलं कर्त्तव्यं यावन्निर्व्वाणाख्यं प्रलयमस्मिन् सर्गे भविष्यत् तत् सर्व्वं तथा तत्प्रयोजनं यत् तथा तस्य यत् कारणं तथा तस्य यत् करणं तत् सर्व्वमेकदैवाध्यवस्यतीत्यध्यवसाया-त्मकबुद्धिरूपा । न च सा पुनःपुनरिदं सर्व्वमध्यवस्यति ; तस्मात् सा नित्या । नेयं गुणरूपा सत्त्वादिगुणयोगाभावात् । १ । अथास्य महेशस्य सा चिकीर्षा-शक्तिर्या खल्विदमित्थं भवेदिदं नेत्थं भवेदित्येवमभिमानिका कार्य्यनियामिकै-वेच्छाशक्तिरेकदैवैवं नियमयति न पुनःपुनरित्यतो नित्या नैषा गुणविशेषः सत्त्वादिगुणयोगाभावादिति । अथास्य महेशस्य सा क्रियाशक्तिर्या खलु धिया तया ज्ञानशक्त्या यद् यथाऽध्यवसितं तदेवेच्छया शक्त्या यथा नियमितं तत् कार्य्य-मखिलं क्षणात् कल्पयति निष्पादयतीति सङ्कल्परूपिणीति । क्षणात् कल्पयति न तु पुनःपुनस्तस्मात् नित्या । नेयं क्रियाख्यः पदार्थो रजोयोगाभावात् प्रवृत्तेः । रजो हि लोके प्रवर्त्तयति । यया परमया शक्त्या गायत्र्या खलु तद्गायत्रीशक्ति-समुत्थाना नित्या क्रियाशक्तिः प्रसवधर्म्मिणी सकलं जगत् प्रसूते सा परमाशक्तिः नित्यैवोच्यते । एवंप्रकारेण शक्तिसमायोगाच्छिवः परमात्मा शक्तिमानुच्यते न तु क्रियावान् । तस्मात् तच्छक्तिशक्तिमदीश्वरसमुत्थमिदं जगत् शाक्तश्च शैवश्चोच्यते । मातापितरौ विना यथा पुत्रो न जायते तथा भवं भवानीञ्च विना चराचरं न भवतीति । शिवश्च सर्व्वेषामात्मनामात्मेति परमात्मा-भिधीयते शिवा चैव सर्व्वेषामात्मनामात्मा परमात्मनश्चात्मेति परमात्मा प्रकीर्त्तिता । निखिलस्य पिता महेश्वरो ज्ञेयः, शिवा तु मातेति कीर्त्त्यते । तस्मात् स्थावरजङ्गमं सर्व्वं जगच्छक्तिमयम्, यतः शिवाद्यवनिपर्य्यन्तमिदं जगत् यया शक्त्या ततं व्याप्तम्, नास्ति हि जगति किञ्चिच्छक्तिहीनमिति । एवं तिसृभिः शक्तिभिर्यथा सूयते जगत् तदाह—ततः शिवाख्येत्यादि । या शिवाख्या

गायत्री नाम परमाशक्तिस्तेजोऽबन्नोपाहिता तस्यां गायत्र्यां तद्गायत्री-समुत्थया क्रियाशक्त्या तेजोऽबन्नांशेन क्षोभ्यमाणायां सञ्चाल्यमानायां सत्यां तद्गायत्रीस्थानि तेजोऽबन्नानि परस्परं प्रवेश्यमानानि त्रिवृन्ति त्रिवृन्ति भूत्वा गायत्र्याः परमव्योमरूपायाः कियदंशे स्थितानि परमसूक्ष्मध्वनिरूपाण्यभि-व्यक्तानि भूत्वा किञ्चित् स्थूलो नादो ध्वनिरादौ समुद्गतोऽभूत्। ततस्तया शक्तिसमुत्थयैव क्रियाशक्त्या क्षोभ्यमाणान्नादात् परिणमतस्तु बिन्दुरेक-बिन्दुरूपो नादो विनिःसृतोऽभूत्। इति नादः सद्बिन्दुस्त्यत्। तच्च द्वय-मनिरुक्तं निर्व्वचनरहितम्। ततस्तयैव क्रियाशक्त्या क्षोभ्यमाणाद्बिन्दोः परिणमत ॐमिति ध्वनिरभूत्। तत् सत्। निरुक्तञ्चाकारोकारमकारै-र्योगाद्बिन्दुनादाभ्यां युक्तम्। सा खल्वियं नादबिन्दुयुक्ताकारादिवर्णत्रय-ध्वनिरूपा माहेश्वरी शिवसम्बन्धिनी महोदया शुद्धविद्या परमा विद्या ब्रह्म-विद्या नाम जाता। सा च शूलिनः शिवस्य परमात्मनो वागीशाख्या शक्ति-र्यतो वाचामीश्वरी। सा या पुनरकारादिवर्णस्वरूपेण मातृकेति विजृम्भते अभिव्यज्यत इति। तन्मातृकावर्णं सर्व्वं त्यदेवानिरुक्तञ्च निर्व्वचनाभावात्। इत्येवमेषा शुद्धविद्या वागीश्वरी देवी लोके नारायणस्य दक्षिणपार्श्वाच्चतु-र्म्मुखेन ब्रह्मणा सह मूर्त्तिमती सरस्वती नाम्नाविर्बभूव। तथा चाभिधीयते। पञ्चाशल्लिपिभिर्विभक्तमुखदोःपन्मध्यवक्षःस्थलाम्, भास्वन्मौलिनिबद्धचन्द्र-शकलामापीनवक्षोरुहाम्। मुद्रामक्षगुणं सुधाढ्यकलसं विद्याञ्च हस्ताम्बुजै-र्बिभ्राणां विशदप्रभां त्रिनयनां वाग्देवतामाश्रये॥ इति। इत्येतत् परमविद्याद्य-वनिपर्य्यन्तानां निरुक्तानामनिरुक्तानाञ्च निलयनञ्चानिलयनञ्च तस्यैव परमव्योम्नः परमात्मनश्चतुरशीतिभागकल्पनया त्रिधा भागः कल्पितः क्रिया-शक्त्या। तत्रोर्द्ध्वं दशभागा मध्यं चतुर्व्विंशतिर्भागा अधस्तात् पञ्चाशद्भागा इति। तत्रोर्द्ध्वं दशभागं शिरोग्रीवमनुत्तमतमः स्वर्लोको निरुपाधिप्रसिद्धः केवल-ज्योतिः स्वरूपस्य परमामृतस्य गायत्र्या निलयनमितरेषामनिलयनं वल्गुं प्रसिद्धं तद्दशभागतोऽधस्तादेतत् परमविद्याद्यवनिपर्य्यन्तानां निलयनं क्रिया-शक्त्या कल्पितमनिलयनञ्च यस्य यदिति। तत्र परमव्योम्नि दशभागादधस्ताद् हृदयरूपे पञ्चदेवसुषयो ये सन्ति तेषामूर्द्ध्वं सुषिद्वाराद्बहिस्तत्परमविद्याविशिष्टं परमव्योम सदाशिवो नाम प्रसिद्धः प्रथमो ब्रह्मपुरुषः। तद्विज्ञानं नाम सत्। ततः सा शुद्धविद्या क्रियाशक्त्या क्षोभ्यमाणा तेजोऽबन्नविकारपरिणामेन तत् परमविद्याविपरीता त्वविद्या नाम कला माया विद्या तदकारादिवर्णसंयोगात्

ऋग्विद्या धातुप्रातिपदिकप्रत्ययागमादिरूपध्वनिरूपा बभूवेति, सा परमा विद्या कलां मायामविद्यामवासृजदित्युच्यते। तदाश्रयश्च परमव्योम पूर्व्वसुषिद्वाराद्बहिरृग्वेदो नामाभूदिति द्वितीयो ब्रह्मपुरुषः। ततः सुप्तिङन्तपदरूपध्वनिर्यजुर्विद्या बभूव। तद्विद्याश्रयः परमव्योमैव यजुर्व्वेदो नाम दक्षिणसुषिद्वाराद्बहिर्बभूव, स तृतीयो ब्रह्मपुरुषः। ततः सङ्गीतभूतवाक्यरूपध्वनिः सामविद्या बभूव, तदाश्रयश्च परमव्योम पश्चिमसुषिद्वाराद्बहिः सामवेदो नाम चतुर्थो ब्रह्मपुरुषो बभूव। ततो वाक्यभूतध्वनिरूपाऽथर्व्वविद्या सेतिहासपुराणा बभूव। तदाश्रयश्च परमव्योमैवोत्तरसुषिद्वाराद्बहिः सेतिहासपुराणोऽथर्व्ववेदो बभूव, स पञ्चमो ब्रह्मपुरुष इति। इत्येते चत्वार ऋग्वेदादयस्त्वविद्या ब्रह्मपुरुषा अविद्यैव विधिभिर्नियमकरणान्नियतिनामानः सह षड्भिरङ्गैरुच्यन्ते। एतत् साङ्गचतुर्व्वेदविद्या त्वविद्या तदाश्रयाश्चत्वारो वेदाश्च विज्ञानविपरीतविज्ञानरूपा अविज्ञानमुच्यन्ते। तच्च त्यदेवाभिधीयते। इति कलाविद्या माया नियतिञ्चावासृजदित्युक्तम्। इत्येवं परमामृतरूपं तेजोऽन्नमेलनेन मधुररसवदाभासमानं रसमाश्रिता गायत्री विद्याविद्यावाचो बभूव। तद्विद्याविद्यावागाश्रयाः पञ्च ब्रह्मपुरुषा ये, तेषां य ऊर्द्ध्वसुषिद्वारपालः सदाशिवः सोऽस्य शिवस्य परमात्मन उदानो नाम प्राणः। स एव लोके त्रिगुणविशेषयोगादेष आकाशोऽभूदयञ्च वायुरभूत्। पुरुषेऽपि यद्धृदयं तस्योर्द्ध्वसुषिद्वारे उदानो नाम प्राणोऽभूदिति। पूर्व्वसुषिद्वारपालोऽस्य प्राणः। लोके स एष आदित्यः। पुरुषे च स प्राणश्च चक्षुश्च। दक्षिणसुषिद्वारपालो यजुर्व्वेदः शिवस्य व्यानो नाम प्राणः, स लोके चन्द्रमाः पुरुषे व्यानश्च श्रोत्रञ्चेति। अथ पश्चिमसुषिद्वारपालः सामवेदः शिवस्यापानो नाम प्राणः। स लोकेऽग्निः पुरुषेऽपानश्च वाक्चेति। अथोत्तरसुषिद्वारपालोऽथर्व्ववेदः शिवस्य समानो नाम प्राणः। लोके पर्ज्जन्यः पुरुषे समानश्च मनश्चेति। अथैषामेवं वीर्य्यादीनि यथाभवंस्तद्यथा— छान्दोग्योपनिषदि मधुब्राह्मणे। असौ वा आदित्यो देवमधु इत्यादिनोक्तं तत् प्रतिसंस्कृत्य लिख्यते। असौ परमात्मा शिव आदिभूतत्वादादित्यः खलु देवानां साध्यवसुरुद्रादित्यमरुद्गणानामुपजीव्यपश्चामृतमयार्कमण्डलाकरामृतरूपरसाश्रय इत्यतो देवमधु। तस्य परमव्योम्नः परमात्मनः शिवस्य ऊर्द्ध्वाङ्गं शिरोग्रीवं दशाङ्गुलं द्यौरनुत्तमतमः स्वर्लोक एव मधुकोषालम्बनतिर्य्यग्भूतो वंशः। तस्मादधस्ताच्चतुर्व्विंशत्यङ्गुलिमितं परमव्योमैवान्तरीक्षं

भुवर्लोकस्त्वपूपाकारो मधुकोषः पञ्चच्छिद्रवत्त्वात्। तस्य मरीचयस्तु पुत्राः पञ्च ब्रह्मपुरुषास्तत्र पञ्चदिश्या रश्मयो मधुक्षरणार्थं नाड्यः। तेषां पञ्चानां ब्रह्मपुरुषाणां यशस्तेज इन्द्रियवीर्य्यान्नानि खल्वेवं बभूवुः। तत्र। ये ते ऊर्द्धा रश्मयस्ता एवास्योर्द्धा मधुनाड्यः। गुह्या एवादेशा विद्याद्याः शक्तयो मधुकर्य्यः। ब्रह्मैव सदाशिवः पुष्पम्। ता गायत्रीस्था आपोऽमृता रसः। ता वात्र ते गुह्या आदेशभूता एतद्ब्रह्म सदाशिवमभिलक्ष्यीकृत्यातपन्। अभितप्तस्य तस्य सदाशिवस्य यशस्तेज इन्द्रियं वीर्य्यमभवत्। अद्भ्यश्च रसः परिणमन्नम्ल इव रसोऽन्नमाद्यमजायत। तद् यदूर्द्धं मधुनाड़ीभिव्र्यक्षरत् तत् तदादित्यं शिवमभितोऽश्रयत् मण्डलरूपेणावृणोत् तद्वात्र तत्। यदेतद् आदित्यस्य मण्डलमध्ये समत्रिगुणयोगात् क्षोभत इव लक्ष्यते इति। १। एवं येऽस्य प्राञ्चो रश्मयस्ता एवास्य प्राच्यो मधुक्षरणनाड्यः। ऋचो मधुकर्य्य ऋग्वेद एव पुष्पम्, ता गायत्रीस्थास्तेजोऽन्नान्तर्गता आपोऽमृता रस एव पुष्पस्य रसः। ता एवैता ऋचो मधुकर्य्य एतमृग्वेदमभि लक्ष्यीकृत्यातपन्। अभितप्तस्य तस्य ऋग्वेदस्य यशस्तेज इन्द्रियं वीर्य्यमभवत्। रसश्च परिणमन् लवण इवान्नमाद्यमजायत। तद् यत् प्राचीभिर्नाड़ीभिरक्षरत् तत्तदादित्यं शिवमभितो मण्डलरूपेणाश्रयत्। तदेतदादित्यस्य मण्डले रजोगुणयोगाल्लोहितं रूपं सद् वर्त्तते। २। एवं येऽस्य दक्षिणा रश्मयस्ता एवास्य दक्षिणा मधुक्षरण-नाड्यः। यजूंष्येव मधुकर्य्यो यजुर्व्वेद एव पुष्पम्, ता अमृता आपः। तान्येव यजूंष्येत यजर्व्वेदमभि लक्ष्यीकृत्यातपन्। अभितप्तस्य तस्य यजुर्व्वेदस्य यशस्तेज इन्द्रियं वीर्य्यमभवत्। रसश्चापां परिणमन् कटुक इवान्नमाद्यम् अजायत। तद् यद्दक्षिणमधुनाड़ीभिरक्षरत् तत्तदादित्यं शिवमभितो मण्डल-रूपेणाश्रयत्। तदेव सत्त्वगुणयोगाच्छूक्लं रूपं सत् एतदादित्यस्य मण्डले वर्त्तते इति। ३। अथ येऽस्य प्रत्यञ्चो रश्मयस्ता एवास्य प्रतीच्यो मधुक्षरणनाड्यः। सामान्येव मधुकर्य्यः सामवेदः पुष्पम्। ता अमृता आपः। तान्येवैतानि सामानि, एतं सामवेदमभि लक्ष्यीकृत्यातपन्। अभितप्तस्य तस्य सामवेदस्य यशस्तेज इन्द्रियं वीर्य्यमभवदपाञ्च रसः परिणमन् तिक्त रस इवान्नमाद्यम् अजायत। तद् यत् प्रतीचीभिर्नाड़ीभिरक्षरत् तत्तदादित्यं शिवमभितोऽश्रयत्। तदेवैतदादित्यस्य मण्डले तमोगुणबहुलरजोगुणयोगाच्छ्यामरूपं सद्वर्त्तते। ४। अथ येऽस्योदञ्चो रश्मयस्ता एवास्योदीच्यो मधुक्षरणनाड्यः। अथर्व्वाङ्गि-रसा मधुकर्य्य इतिहासपुराणं पुष्पम्। ता अमृता आपः। ते वा एते-

ऽथर्व्वाङ्गिरसा एतदितिहासपुराणमभि लक्ष्यीकृत्यातपन्। अभितप्तस्य तस्येतिहासपुराणस्य यशस्तेज इन्द्रियं वीर्य्यमभवदपाश्च रसः परिणमन् कषाय इवान्नमाद्यमजायत। तद् यदुदीचीभिर्नाड़ीभिरक्षरत् तत्तदादित्यं शिवमभितो मण्डलरूपेणाश्रयत्। तदेतदादित्यस्य मण्डले तमोगुणयोगात् परमकृष्णरूपं सद् वर्त्तत इति। ५। पञ्चामृतज्योतिर्म्मयमण्डलं तस्य स्वयम्भुवः परमात्मन आद्यस्यादित्यस्य।

एवं सदाशिवाख्यमहाभूतादीन् पञ्च ब्रह्मपुरुषान् सृष्ट्वासौ स्वयम्भूः परमात्मा वृत्तौजाः सन् महानिर्व्वाणप्रलये यत्तमस्तत्तमोनुदोऽभूत्। तदुक्तं मनुना। ततः स्वयम्भूर्भगवान् अव्यक्तो व्यञ्जयन्निदम्। महाभूतादिवृत्तौजाः प्रादुरासीत् तमोनुद इति। परमव्योम्नः शिवस्य दशभागादधस्ताच्चतुर्व्विंशतिभागमध्ये त्वेवंप्रकारेण मण्डलवानसावादिरादित्योऽनुत्तमतमो भुवर्लोक उच्यते। ततस्तदधस्तात् पञ्चाशद्भागे सत्यञ्चानृतञ्च सत्यम् अभवदिति। तद्व्याख्यातं वायवीये। कलाविद्या कालञ्च गुणपुरुषाविति। कलाविद्या माया न तु महामाया। कालं महाविष्णुम्। गुणं प्रधानाख्यं ब्रह्माणं पुरुषं क्षेत्रज्ञं विष्णुं कलाविद्याऽवासृजत्। तद् यथा। तत्परमव्योम्नोऽधस्तात् परमव्योम्नि विद्याविद्यामयपञ्चब्रह्मपुरुषावृते सा क्रियाशक्तिरेषां पञ्चब्रह्मपुरुषाणां परमविद्या पुरुष त्रिधा कृत्वा ऋग्यजुःसामवेदेषु प्रवेशयाश्चक्रे तथाथर्व्ववेदस्य शान्तिपौष्टिकाभिचारिकानंशान् क्रमेण। ततस्त्रयी बभूव। ततस्त्रयी चैकीभूय सदेकं बभूव। सच्चार्द्धेन महाविष्णुर्नाम कालो बभूवापरार्द्धेन चिद्बभूव। स खलु चेततीति चेतनावान् स च प्रसादांशेन क्षेत्रज्ञ आत्मा विष्णुर्बभूव स चानन्दतीत्यानन्द इत्यादौ सत् ततः चित् तत आनन्द इति सच्चिदानन्दो विष्णुः क्षेत्रज्ञः परमव्योम्नोऽधोऽक्षे जातत्वात् अधोक्षजः। चित्प्रसादो गुणांशस्तु प्रधानं नाम ब्रह्मा। एवमेतत् सत्यं नाम सत्। इति पञ्चब्रह्मपुरुषादिसत्यान्तं न चेतनाधातुपरमपुरुषादतिरिच्यते तात्स्थ्यादेष भुवर्लोको द्वितीयः पादः। इत्यस्मादधस्तात् पञ्चाशदङ्गुलपरव्योमात्मकश्चेतनाधातुस्तत् प्रधानं क्षेत्रज्ञाधिष्ठितं कालेन संक्षोभ्य सञ्चाल्य सङ्कोच्य परिणमयन् सत्त्वरजस्तमोगुणान् पृथक् कृत्वानुप्रविश्य समसत्त्वरजस्तम इति लक्षणमव्यक्तं नाम बभूव। तच्च चेतनाधातुपुरुषानुप्रविष्टत्वाच्चेतनाधातुरुच्यते। क्षेत्रज्ञाधिष्ठितत्वाच्च क्षेत्रज्ञ उच्यते। एतस्माच्च सप्ताङ्ग एकोनविंशतिमुखः षड्धातुकः पुरुषो विश्वरूपो बभूव। यज्जःपुरुषीये प्राग् दर्शितम्।

गुणेभ्यः क्षोभ्यमाणेभ्यो गुणेशात् तु त्रिशूलिनः। अभवन् महदादीनि तत्त्वानि च यथाक्रमम्॥ इति। तद् यथा—त्रिगुणलक्षणादव्यक्तान्महान् महतोऽहङ्कारोऽहङ्काराद् भूतादेस्तामसात् क्रमेण शब्दतन्मात्रं स्पर्शतन्मात्रं रूपतन्मात्रं रसतन्मात्रं गन्धतन्मात्रञ्च महाभूतं बभूव। एते शब्दमात्रखादयः पञ्च धातवश्चेतना षष्ठधातुरिति षड्धातुः पुरुषस्तस्य मुखानि राजसादहङ्कारात् तैजसाख्याद् दशेन्द्रियाण्युत्पद्यन्ते। सात्त्विकादहङ्काराद्वैकारिकाख्यान्मनोऽजायताधिदैवताश्चैषामित्येवञ्चाकाशः कियदंशो दिकालयुक्तः स्थूलो बभूव। तस्य स्पर्शमात्रे वायावनुप्रवेशाद् द्विगुणो वायुर्बभूव। शब्दश्च शीतस्पर्शश्च। तस्य द्विगुणस्य वायो रूपमात्रे तेजस्यनुप्रवेशात् तेजस्त्रिगुणं बभूव। तस्य रूपञ्च लोहितम्। स्पर्शश्चोष्णोऽभूत्। अथ तत् तेजो रसतन्मात्रमनुप्राविशत्, तेनापः शब्दशीतस्पर्शशुक्लवर्णद्रवरसगुणा जाताः। ता आपो गन्धतन्मात्रं प्राविशन्। तेन शब्दखरस्पर्शकृष्णवर्णसाधारणरसगन्धगुणा पृथिवी बभूव। इति पञ्चभूतानि स्थूलानि दशेन्द्रियाणि मनोऽहङ्कारो महांश्चित्तञ्चेत्येकोनविंशतिमुखानि। उक्तञ्च मनुना। योऽसावतीन्द्रियग्राह्यः सूक्ष्मोऽव्यक्तः सनातनः। सर्व्वभूतमयोऽचिन्त्यः स एव स्वयमुद्बभौ॥ इति। एष चतुर्व्विंशतितत्त्वमयलोकात्मकः षड्धातुः पुरुषः पुनर्लोके द्विविधः शरीरी पुरुषो बभूव समस्तश्च व्यस्तश्च। तत्र समस्तो नारायणो महाब्रह्मा व्यस्ताः सूक्ष्मशरीरिणोऽपरिसङ्ख्येयाः। तदुक्तं मनुना। सोऽभिध्याय शरीरात् स्वात् सिसृक्षुर्विविधाः प्रजाः। अप एव ससर्ज्जादौ तासु वीजमवासृजत्। तदण्डमभवद्धैमं सहस्रांशुसमप्रभम्। तस्मिन् जज्ञे स्वयं ब्रह्मा सर्व्वलोकपितामहः। आपो नारा इति प्रोक्ता आपो वै नरसूनवः। ता यदस्यायनं पूर्व्वं तेन नारायणः स्मृतः। यत् तत् कारणमव्यक्तं नित्यं सदसदात्मकम्। तद्विसृष्टः स पुरुषो लोके ब्रह्मेति कीर्त्त्यते। तस्मिन्नण्डे स भगवानुषित्वा परिवत्सरम्। स्वयमेवात्मनो ध्यानात् तदण्डमकरोद् द्विधा। ताभ्यां स शकलाभ्याञ्च दिवं भूमिञ्च निर्म्ममे। मध्ये व्योम दिशश्चाष्टावपां स्थानञ्च शाश्वतम्। उद्ववर्हात्मनश्चैव मनः सदसदात्मकम्। मनसश्चाप्यहङ्कारमभिमन्तारमीश्वरम्। महान्तमपि चात्मानं सर्व्वाणि त्रिगुणानि च। विषयाणां ग्रहीतॄणि शनैः पञ्चेन्द्रियाणि च। तेषान्त्ववयवान् सूक्ष्मान् षण्णामप्यमितौजसाम्। सन्निवेश्यात्ममात्रासु सर्व्वभूतानि निर्म्ममे। यन्मूर्त्त्यवयवाः सूक्ष्मास्तस्येमान्याश्रयन्ति षट्। तस्माच्छरीरमित्याहुस्तस्य मूर्त्तिं

मनीषिणः । तदाविशन्ति भूतानि महान्ति सह कर्म्मभिः । मनश्चावयवैः सूक्ष्मैः सर्व्वभूतकृदव्ययम् । तेषामिदन्तु सप्तानां पुरुषाणां महौजसाम् । सूक्ष्माभ्यो मूर्त्तिमात्राभ्यः सम्भवत्यव्ययाद् व्ययम् । आद्याद्यस्य गुणन्त्वेषामवाप्नोति परः परः । यो यो यावतिथश्चैषां स स तावद्गुणः स्मृतः । सर्व्वेषान्तु स नामानि कर्म्माणि च पृथक् पृथक् । वेदशब्देभ्य एवादौ पृथक् संस्थाश्च निर्म्ममे । कर्म्मात्मनाञ्च देवानां सोऽसृजत् प्राणिनां प्रभुः । साध्यानाञ्च गणं सूक्ष्मं यज्ञञ्चैव सनातनम् । अग्निवायुरविभ्यस्तु त्रयं ब्रह्म सनातनम् । दुदोह यज्ञसिद्ध्यर्थमृग्यजुःसामलक्षणम् । कालं कालविभक्तीश्च नक्षत्राणि ग्रहांस्तथा । सरितः सागरान् शैलान् समानि विषमाणि च । तपो वाचं रतिञ्चैव कामांश्च क्रोधमेव च । सृष्टिं चकार चैवेमां स्रष्टुमिच्छन्निमाः प्रजाः । कर्म्मणाञ्च विवेकार्थं धर्म्माधर्म्मौ व्यवेचयत् । द्वन्द्वैरयोजयच्चेमाः सुखदुःखादिभिः प्रजाः । अण्व्यो मात्रा विनाशिन्यो दशार्द्धानान्तु याः स्मृताः । ताभिः सार्द्धमिदं सर्व्वं सम्भवत्यनुपूर्व्वशः । यन्तु कर्म्मणि यस्मिन् स न्ययुङ्क्त प्रथमं प्रभुः । स तदेव स्वयं भेजे सृज्यमानः पुनःपुनः । हिंस्राहिंस्रे मृदुक्रूरे धर्म्माधर्म्मावृतानृते । यद् यस्य सोऽदधात् सर्गे तत् तस्य स्वयमाविशत् । यथर्त्तुलिङ्गान्यृतवः स्वयमेवर्त्तुपर्य्यये । स्वानि स्वान्यभिपद्यन्ते तथा कर्म्माणि देहिनः । लोकानान्तु विवृद्ध्यर्थं मुखबाहूरुपादतः । ब्राह्मणं क्षत्रियं वैश्यं शूद्रञ्च निरवर्त्तयत् ।०। इत्येवं सूक्ष्मसर्गं कृत्वा स्थूलसर्गं यथा कृतवांस्तथा दर्शयिष्यते । इति गायत्र्यादेरतत्पञ्चात्मकपृथिव्यन्तं चतुष्पाद् ब्रह्म ।

तत्र परमव्योमपरमात्मादेरतत्पञ्चात्मकपृथिव्यन्तः पुरुषस्त्रिपात् । तत्रैतत्पञ्चात्मकपृथिव्यादिमहाविष्णुलोकान्तोऽष्टलोकी अनुत्तमतमा भूः प्रथमः पादः । तत्र भूर्भुवःस्वर्महजनतपःसत्या इति सप्त लोकाः । तत्र द्विविधः सत्यलोकः—अनृतसत्यः ऋतसत्यश्च । तत्रैतत्तपोलोकादूर्द्ध्वं ब्रह्मलोकवैकुण्ठकैलासाद्यव्यक्तात्मलोकपर्य्यन्तः सत्यलोकोऽनृतसत्यलोकः प्राकृतप्रलयनाशात् । तत ऊर्द्ध्वं प्रधानक्षेत्रज्ञकालानां लोक ऋतसत्यः प्राकृतप्रलये स्थायित्वात् इत्येवमभिप्रायेण लिङ्गपुराणेऽष्टलोकी भूपाद उक्तः । भूर्लोकः प्रथमे पादे भुवर्लोकस्ततः परम् । स्वर्लोकश्च महज्जनतपःसत्यास्ततः परम् । विष्णुलोकस्ततश्चोर्द्ध्वं पुनरावृत्तिदुर्लभः । ऊर्द्ध्वं कौमारलोकश्च सर्व्वऋद्धिसमन्वितः । रुद्रलोकस्ततश्चोर्द्ध्वं कैवल्यस्थानमुत्तमम् । इति विष्णुलोकादूर्द्ध्वं पञ्चब्रह्मपुरुषस्थानं कौमारलोकोऽनुत्तमतमो भुवर्लोको

**ततश्च धातुभेदेन चतुर्व्विंशतिकः स्मृतः।**
**मनो दशेन्द्रियाण्यर्थाः प्रकृतिश्चाष्टधातुकी ॥ ४ ॥**

द्वितीयः पादः। ततो रुद्रलोकोऽनुत्तमतमः स्वर्लोक इति महाव्याहृतिवाच्यः त्रिपात् पुरुषः। सहस्रशीर्षः सहस्राक्षः सहस्रपात्। तस्य स्वाङ्गुलीमानेन चतुरशीत्यङ्गुलं परमव्योमरूपमव्याकृतं वपुरधस्तात् पञ्चाशदङ्गुलिमितभूमिलोकसहितं तत ऊर्द्धं चतुर्व्विंशत्यङ्गुलिमितभुवर्लोकं सर्व्वतोऽध ऊर्द्धं पूर्व्वतो दक्षिणतः पश्चिमत उत्तरतोऽभ्यन्तरतो वाह्यतश्चावृत्य तत ऊर्द्धं दशाङ्गुलं स्वर्लोकः शिरोग्रीवमत्यतिष्ठदतिशयेनावरणाभावेन केवलरूपतया श्रेष्ठत्वेन अतिष्ठदिति। एतावांश्चतुरशीत्यङ्गुलिमात्रं महिमा महत्त्वं ततो ज्यायान् सदाशिवादेस्तदन्तेभ्यः सर्व्वेभ्यो बृहत्तया वृद्धतमः। यतोऽस्य त्रिपादस्य पुरुषस्य द्वौ पादौ विश्वा भूतानि भूभुर्वर्लोकौ स्वयं स्वर्लोकरूपे तृतीयपादे अमृतमयी गायत्री ज्योतिःस्वरूपा चतुर्थः पाद इति। श्वेताश्वतरोपनिषदि पुरुषसूक्ते चोक्तम्। सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्। स भूमिं सर्व्वतो वृत्वा अत्यतिष्ठद्दशाङ्गुलम्। एतावानस्य महिमा ततो ज्यायांश्च पूरुषः। पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवीति। अथास्य नारायणस्य दक्षिणपार्श्वाद् रजोगुणमाश्रित्य प्रधानं चतुर्म्मुखो ब्रह्मा भूत्वा सरस्वत्या सहाविरभूत्। वामपार्श्वात् तु क्षेत्रज्ञः पुरुषः सत्त्वगुणमाश्रित्य चतुर्भुजो विष्णुर्भूत्वा लक्ष्म्या सहाविरभूत्।

नन्विमे यावन्तः स्थूलशरीरिणो दृश्यन्ते किमेते न पुरुषा इत्यत आह—ततश्चेत्यादि। यो योऽसौ षड्धातुकः सूक्ष्मशरीरी पुरुषस्ततः षड्धातुकात् सूक्ष्मशरीरिपुरुषाच्चतुर्व्विंशतितत्त्वमयात् तच्चतुर्व्विंशतिधातुभेदेन चतुर्व्विंशतिकः चतुर्व्विंशत्या तत्त्वैर्निर्वृत्तः पुरुषः स्मृतः। स चतुर्व्विधो जरायुजोऽण्डजः स्वेदज उद्भिज्जश्चेति, ते पुनस्त्रिविधा देवनरतिर्य्यग्योनिजभेदात्। तेषां सर्गे उक्तो मनुना। द्विधा कृत्वात्मनो देहमर्द्धेन पुरुषोऽभवत्। अर्द्धेन नारी तस्यां स विराजमसृजत् प्रभुः। तपस्तप्त्वाऽसृजद् यन्तु स स्वयं पुरुषो विराट्। तं मां वित्तास्य सर्व्वस्य स्रष्टारं द्विजसत्तमाः। इत्यादिना देवनरतिर्य्यग्योनिजस्थूल-

षड्धातुरूपमेव पुरुषं पुनः सांख्यदर्शनभेदाच्चतुर्व्विंशतिकभेदेनाह—पुनश्चेत्यादि। चतुर्व्विंशतिकमेव विभजते—मन इत्यादि। यद्यपि पञ्चविंशतितत्त्वमयोऽयं पुरुषः सांख्यैरुच्यते, यदाह— "मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त। षोड़शकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुषः" इति। तथापीह प्रकृतिव्यतिरिक्तञ्चोदासीनं पुरुषमव्यक्तत्वसाधर्म्म्यात् अव्यक्तायां प्रकृतावेव

**लक्षणं मनसो ज्ञानस्याभावो भाव एव च।**
**सति ह्यात्मेन्द्रियार्थानां सन्निकर्षे न वर्त्तते ॥**

शरीरिप्रजासर्ग उक्तः। इति त्रिविधः पुरुषः स्मृतः। कानि तानि चतुर्व्विंशतितत्त्वानीत्यत आह—मनो दशेन्द्रियाण्यर्थाः प्रकृतिश्चाष्टधातुकीति। तत्सूक्ष्मदेहे यदाहङ्कारिकं मनो यान्याहङ्कारिकाणि दशेन्द्रियाणि ये च खादिगुणाः पञ्च शब्दादयः पञ्चभूताहङ्कारमहदव्यक्तानीत्यष्टौ चेति चतुर्व्विंशतिनिष्पन्नस्थूलदेही पुरुषः। तत्र क्रमेण मनःप्रभृतीनां लक्षणानि—लक्षणं मनस इत्यादिभिर्वक्ष्यन्ते। अष्टधातुकीति अष्टभिर्धातुभिः निष्पन्ना प्रकृतिरष्टधातुकी। वक्ष्यते चात्रैव। खादीनि बुद्धिरव्यक्तमहङ्कारस्तथाष्टमः। भूतप्रकृतिरुद्दिष्टा विकाराश्चैव षोड़शेति ॥ ४ ॥

गङ्गाधरः—तत्र क्रमेण मनःप्रभृतीनि लक्षयति—लक्षणं मनस इत्यादि। पूर्व्वमिन्द्रियोपक्रमणीये यदुक्तम्। तत्रातीन्द्रियं पुनर्मनः सत्त्वसंज्ञकं चेत इत्याहुरेके तदर्थात्मसम्पदायत्तचेष्टं चेष्टाप्रत्ययभूतमिन्द्रियाणामिति। तत् पुनरदृश्यमतोऽनुमानार्थं लिङ्गमाह—लक्षणमिति। लक्षणमनुमितिकरणम्। च-शब्दो यौगपद्यार्थम्। युगपज्ज्ञानस्याभावो भाव एव मनसो लक्षणम्। तेन ह्यात्मना स्वाभिमतार्थं ग्रहीतुं प्रवर्त्तितं मनस्तदर्थग्रहणार्थं तदर्थग्राहकम् इन्द्रियं यदानुधावति तदा तदिन्द्रियं मनोयुक्तं तदर्थं गृह्णाति न चेतरार्थं ग्रहीतुमिन्द्रियान्तरं प्रवर्त्तते। इति तदितरेन्द्रियार्थजज्ञानस्याभावस्तदैव भवतीति मनसो युगपज्ज्ञानस्याभावो भावश्च लिङ्गम्। यदि ज्ञानस्याभावो मनसो लक्षणं नोच्यते तदा चाक्षुषज्ञानसद्भावकाले यथा मनोऽस्तीत्यनुमीयते तथा तदैव मनो नास्तीत्यनुमितिप्रसङ्गः श्रावणादिज्ञानानां तदैवाभावात्। इति। यदि ज्ञानस्य भावो मनसो लक्षणं नोच्यते तदा मनो नास्तीत्येव सदानुमितिः स्यात्। ज्ञानस्य भावाभावयोर्युगपद्भावे मनोऽस्तीति सदैवानुमितिः सिध्यति। नन्वात्मेन्द्रियार्थसन्निकर्षं विना न तथा ज्ञानमुत्पद्यते मनो-

प्रक्षिप्य अव्यक्तशब्देनैव गृह्णाति। तेन चतुर्व्विंशतिकपुरुष इत्यविरुद्धम्। उदासीनस्य हि सूक्ष्मस्य तदप्रतिपादनमिहानतिप्रयोजनमिति न कृतम्। दशेन्द्रियाणीति पञ्च बुद्धीन्द्रियाणि पञ्च कर्म्मेन्द्रियाणि। अष्टधातुकीति खादिपञ्चकबुद्ध्यव्यक्ताहङ्काररूपा। वक्ष्यति हि—खादीनि बुद्धिरव्यक्तमहङ्कारस्तथाऽष्टमः। इति ॥ ४ ॥

चक्रपाणिः—अत्र चतुर्व्विंशतिके प्रथमोद्दिष्टं मनो लक्षयितुमाह—लक्षणमित्यादि। यथा

वैभृत्यात् * मनसो ज्ञानं सान्निध्यात् तु प्रवर्त्तते।
अणुत्वमथ चैकत्वं द्वौ गुणौ मनसः स्मृतौ॥

मात्रात्, कथं ज्ञानस्याभावो भाव एव च मनसो लक्षणं भवतीत्यत आह—सतीत्यादि। हि यस्मादात्मेन्द्रियार्थसन्निकर्षे सति मनसो वैभृत्याद् व्यासक्तीभावान्न ज्ञानं प्रवर्त्तते मनसः सान्निध्यात् तु ज्ञानं प्रवर्त्तते तस्मात्त ज्ञानस्याभावो भाव एव च मनसो लक्षणमिति। नन्वस्ति मनः सन्ति चेन्द्रियाणि पञ्च सन्ति च पञ्चार्था एषां सान्निध्येऽपि तान् पञ्चैवार्थान् यद्यात्मा लिप्सति न कथं पञ्चैवेन्द्रियाणि युगपत् तान् गृह्णन्तीत्यत आह—अणुत्वमित्यादि। मनसोऽणुत्वेऽप्यनेकत्वं चेत् तदा युगपन्मनःपुरःसराणीन्द्रियाण्यर्थान् पञ्च ग्रहीतुं प्रभवन्ति, यथा सुमनःपरमाणवो बहुषु पतन्तो युगपत् सौरभं कुर्व्वन्ति तद्वदित्यत आह—अथ चैकत्वमिति। अणुत्वं सूक्ष्मत्वं परिमाणमेकत्वं सङ्ख्येति द्वौ गुणौ मनसः प्रसिद्धौ स्मृतौ। द्वाभ्यामाभ्यां गुणाभ्यां मनसोऽनेकेन्द्रियेषु युगपत् प्रवृत्तिर्न सम्भवति। महदेकन्तु युगपदनेकेषु सूर्य्य इव प्रवर्त्तितुं प्रभवति न चाणु चैकमिति। सर्व्वमिदमुक्तमिन्द्रियोपक्रमणीये पूर्व्वम्—न चानेकत्वं, नाप्येकं ह्येककालमनेकेषु प्रवर्त्तते, तस्मान्नैककाला सर्व्वेन्द्रियप्रवृत्तिरिति। ननूक्तं तिस्रैषणीये—तत्रैकं स्पर्शनेन्द्रियं सर्व्वेन्द्रियाणामिन्द्रियव्यापकं चेतःसमवायि, स्पर्शनव्याप्तेर्व्यापकमपि चेत इति। तत् कथं न पञ्चस्विन्द्रियेषु युगपत् प्रवर्त्तते मन इति चेन्न, तद्धि व्यापकत्वं मनसोऽणुत्वैकत्वाभ्यां क्रमेण सर्व्वगामित्वं न यौगपद्येन। तस्मात् न ज्ञाना॰

ज्ञानस्याभावो ज्ञानस्य भावश्च मनोगमको भवति, तदाह—सतीत्यादि। वैवृत्त्यान्मनस इति इन्द्रियेण संयोगात्, सान्निध्यादिति इन्द्रियेण मनसः सम्बन्धात्। एवं मन्यते—यदा युगपदिन्द्रियार्था इन्द्रियैः संयुज्यन्ते तदा क्वचिदिन्द्रियार्थे ज्ञानं भवति, क्वचिन्न भवतीति दृष्टम्। तेन, इमौ ज्ञानभावाभावौ ज्ञानकारणान्तरं दर्शयतः, यच्च तत्कारणान्तरम्, तन्मनः। तत्कारणं मनोरूपं यद्यात्मवद् युगपत् सर्व्वेन्द्रियव्यापकं स्वीक्रियते, किंवा, अनेकसंख्यमिन्द्रियवत् स्वीक्रियते, तदा पुनरपि युगपदिन्द्रियार्थसम्बन्धे पञ्चभिर्ज्ञानैर्भवितव्यं विभुना वा मनसा, अनेकैर्वा मनोभिर्युगपदधिष्ठितत्वादिन्द्रियाणाम्। न च भवन्ति युगपज्ज्ञानानि। तस्माद् युगपज्ज्ञानानुदयाल्लिङ्गान्मनोऽणुरूपमेकञ्च सिध्यतीत्याह— अणुत्वमित्यादि।

* वैवृत्त्यादिति चक्रः।

चिन्त्यं विचार्य्यमूह्यञ्च ध्येयं सङ्कल्प्यमेव च ।
यत्किञ्चिन्मनसो ज्ञेयं तत् सर्व्वं ह्यर्थसंज्ञकम् ॥
इन्द्रियाभिग्रहः कर्म्म मनसस्त्वस्य * निग्रहः ।
ऊहो विचारश्च ततः परं बुद्धिः प्रवर्त्तते ॥

युगपद् भवन्ति। नन्वात्मा शब्दादीन् पञ्चैवार्थान् न चेल्लिप्सति, तर्हि मनस इन्द्रियेषु प्रवृत्त्यभावाज् ज्ञानं किं न प्रवर्त्तेत इत्यत आह—चिन्त्यमित्यादि। चिन्तया यज् ज्ञायते तच्चिन्त्यम्। विचार्य्यं विचारेण विविधतर्केण यज् ज्ञायते तद्विचार्य्यं वितर्क्यम्। ऊहेन तर्केण यज् ज्ञायते तदूह्यं तर्क्यम्। ध्येयमर्थेभ्यो बहिरिन्द्रियाणि निवर्त्त्य मनो यच्चिन्तयति तत् ध्येयं ध्यानीयं। चिन्त्यन्तु सेन्द्रियेण मनसा ध्येयम्। सङ्कल्प्यं मनो यत् सम्यक् कलयति विचारेण तत् सङ्कल्प्यम्। एवमन्यत् यत्किञ्चिदिन्द्रियानपेक्षं मनसो ज्ञेयं सुखदुःखेच्छाद्वेषप्रयत्नज्ञानचेतनाधृतिस्मृत्यहङ्कारभिन्नं तत् सर्व्वं मनसोऽर्थसंज्ञकं न तु केवलमर्थसंज्ञकमिति शब्दादीनां तत्संज्ञत्वात्। ननु च कथं मनसोत्पद्यते ज्ञानमित्यत आह—इन्द्रियाभिग्रह इत्यादि। इन्द्रियाभिग्रह इन्द्रियमभिमुखीभूय तदिन्द्रियग्रहणम् आत्मना बुद्ध्याध्यवसितमभीप्सितमर्थं ग्राहयितुं प्रेरितस्य मनसस्तदर्थग्राहकमिन्द्रियमभिमुखीभूय यद् ग्रहणं तदिन्द्रियस्य तदेकं मनसः कर्म्म।

मनोगुणमभिधाय मनोविषयमाह—चिन्त्यमित्यादि। चिन्त्यं कर्त्तव्यतया अकर्त्तव्यतया यन्मनसा चिन्त्यते। विचार्य्यमुपपत्त्यनुपपत्तिभ्यां यद् विमृश्यते। ऊह्यञ्च यत् सम्भावनया ऊह्यते 'एवमेतद् भवति' इति। ध्येयं भावनाज्ञानविषयम्। सङ्कल्प्यं गुणवत्तया दोषवत्तया वावधारणविषयम्। यत्किञ्चिदित्यनेन सुखाद्यनुक्तविषयावरोधः। मनसो ज्ञेयमिति इन्द्रियनिरपेक्षमनोग्राह्यम्। एते च मनोऽर्थाः शब्दादिरूपा एव। तेन पञ्चार्थकल्पनया न चतुर्व्विंशतिसंख्यातिरेकः, सुखादयस्तु शब्दादिव्यतिरिक्ता मनोऽर्था बुद्धिभेदग्रहणेनैव ग्राह्याः। मनोविषयमभिधाय मनःकर्म्माह—इन्द्रियेत्यादि। इन्द्रियाभिग्रह इन्द्रियाधिष्ठानं मनसः कर्म्म, तथा स्वस्य निग्रहो मनसः कर्म्म। मनो ह्यनिष्टविषयप्रसृतं मनसैव नियाम्यते। मनश्च गुणान्तरयुक्तं सद् विषयान्तरान्नियमयतीत्याहुरेके। यदुक्तम्—'विषयप्रवणं चित्तं धृतिभ्रंशान्न शक्यते। नियन्तुमहितादर्थाद् धृतिर्हि नियमात्मिका॥'' इति। तेन धृत्या कारणभूतया मन आत्मानं नियमयतीति न स्वात्मनि क्रियाविरोधः। मनःकर्म्मान्तरमाह—ऊहो विचारश्चेति। अत्रोह आलोचनज्ञानं निर्व्विकल्पम्, विचारः सङ्कल्पनं हेयोपादेयतया विकल्पनम्। चतुर्व्विधं हि विकल्पकारणं सांख्या मन्यन्ते। तत्र बाह्यमिन्द्रियरूपम्, आभ्यन्तरन्तु मनोऽहङ्कारो बुद्धिश्चेति

* मनसः स्वस्येति चक्रः।

इन्द्रियेणेन्द्रियार्थो हि समनस्केन गृह्यते।
कल्प्यते मनसाप्यूर्द्धं गुणतो दोषतो यथा॥
जायते विषये तत्र या बुद्धिर्निश्चयात्मिका।
व्यवस्यते तया वक्तुं कर्त्तुं वा बुद्धिपूर्व्वकम्॥ ५॥

ततोऽर्थं गृहीत्वा तस्य तदर्थग्रहणान्निवृत्तिर्निग्रहः कर्म्म। ततोऽनन्तरमात्मना कृतो मनसैवोह इदमिदं वाऽथ नेदं वा भवतीत्येवं वितर्कः। ततोऽनन्तरं तदर्थस्य विचारः। यदेवं स्यात् तदेदं स्यान्नेदमेवम्, यत इदमेवं तत इदन्त्विदमित्येवं विचारात् परं बुद्धिः प्रवर्त्ततेऽयं खलु घट इति। कथमिन्द्रियाभिग्रहः स्यादित्यत आह—इन्द्रियेणेत्यादि। हि यस्मात् समनस्केनात्मप्रेरितमनसा सहैवेन्द्रियेण तदिन्द्रियार्थो गृह्यतेऽतः स इन्द्रियाभिग्रहः न तु मनोऽनपेक्षेण। ऊर्द्धं तदर्थग्रहादूर्द्धं ततो निवृत्य स एवार्थो गुणतो दोषतो वा यत् कल्प्यते ऊहपूर्व्वकविचारः क्रियते। इदमेवमिदं ग्राह्यमिदं नैवमतो हेयमिदन्त्वेवमित्यत उपेक्ष्यमित्येवं कल्पयित्वा विचार्य्यानन्तरं यो निश्चयः स्यादिदं ग्राह्यमिदं हेयमिदमुपेक्ष्यमित्येवं निश्चयलक्षणा या बुद्धिर्जायते सा निश्चयात्मिका बुद्धिरुच्यते। येयं तत्र विषये निश्चयात्मिका बुद्धिर्जायते, तया बुद्ध्या वक्तुं वा कर्त्तुं वा यद् व्यवस्यते गृह्यते वा त्यज्यते वाप्युपेक्ष्यते वा तद् बुद्धिपूर्व्वकं व्यवस्यते इति निश्चयात्मकबुद्धिपूर्व्वकव्यवसायकरणबुद्धिः निश्चयबुद्धेः फलं प्रमाबुद्धिस्तद्व्यवसायकरणबुद्धिलक्षणं यस्याः सा बुद्धिः

त्रितयम्। तत्रेन्द्रियाण्यालोचयन्ति निर्व्विकल्पेन गृह्णन्तीत्यर्थः, मनस्तु सङ्कल्पयति हेयोपादेयतया सङ्कल्पयतीत्यर्थः, अहङ्कारोऽभिमन्यते 'ममेदमहमत्राधिकृतः' इति मन्यत इत्यर्थः, बुद्धिः अध्यवस्यति त्यजाम्येनं दोषवन्तमुपाददाम्येनं गुणवन्तमित्यध्यवसायं करोतीत्यर्थः। ऊहस्तु यद्यपि बाह्यचक्षुरादिकर्म्म, तथापि मनोऽधिष्ठानमस्तीति मनःकर्म्मतयोक्तः। वचनं हि "सान्तःकरणा बुद्धिः सर्व्वं विषयमवगाहते यस्मात्। तस्मात् त्रिविधं करणं द्वारि द्वाराणि शेषाणि"॥ इति। ततः परं बुद्धिः प्रवर्त्तत इति ऊहविचारानन्तरं बुद्धिरध्यवसायं करोतीत्यर्थः। अहङ्कारव्यापारश्च अभिमननमिहानुक्तोऽपि बुद्धिव्यापारेणैव सूचितो ज्ञेयः। बुद्धिर्हि त्यजाम्येनमुपाददामीति वाध्यवसायं कुर्व्वती अहङ्काराभिमत एव विषये भवति। तेन बुद्धिव्यापारेणैव अहङ्कारव्यापारो गृह्यते। बुद्धौ हि सर्व्वकरणव्यापारार्पणं भवति। यदुक्तम्—"एते प्रदीपकल्पाः परस्परविलक्षणा गुणविशेषाः। कृत्स्नं पुरुषार्थं प्रकाश्य बुद्धौ प्रयच्छन्ति॥"

एतदेवोहविचारपूर्व्वकत्वं बुद्धेर्विवृणोति—इन्द्रियेणेत्यादि। गृह्यते इति ऊहमात्रेण निर्व्विकल्पेन गृह्यते। गुणत इत्युपादेयतया, दोषत इति हेयतया। बुद्ध्याध्यवसायं

व्यवसायात्मिका प्रमाणमुच्यते। इत्येव ज्ञानस्य भाव एतद्विपर्य्ययेण ज्ञानस्य अभाव एव च मनसो लक्षणं तेनानुमेयं मन एकम्। ननु येयं बुद्धिरात्मेन्द्रियार्थ-मनःसन्निकर्षादुत्पद्यते सा किमुपादाना मनश्चेदं किमुपादानमिति चेत् सत्यम्। योऽसौ षड्धातुः पुरुष उक्तः स खल्वेवमुक्तः। यदव्यक्तं नामात्मा महान् नाम जीवश्चाहङ्कारश्च तत् सात्त्विकाहङ्काराद्वैकारिकाभिधानाज्जातं मनस्तैज-साख्यराजसाहङ्कारसहायात् सात्त्विकाच्चाहङ्काराज्जातानि दशेन्द्रियाणि भूतादिनामतामसाहङ्कारजानि शब्दतन्मात्राकाश-स्पर्शतन्मात्रवायु-रूपतन्मात्र-तेजो-रसतन्मात्रजल-गन्धतन्मात्रभूमय इत्येतानि महाभूतानि पञ्चेत्येतदहङ्का-रादिसप्तदशकं महांश्चेत्यष्टादशतत्त्वविशिष्टोऽव्यक्ताख्य आत्मा चेतनाधातुस्तत्र च दिक्कालाभ्यां विशिष्ट आकाशस्तदाकाशानुप्रविष्टवायुर्वाय्वनुप्रविष्टतेजस्तत्-तेजोऽनुप्रविष्टजलं तज्जलानुप्रविष्टभूमिरिति खादयः पञ्च चेति षड्धातवः, एकीभूतः षड्धातुः पुरुषः प्रत्यगात्मा भूतात्मा चोच्यते। सूक्ष्मदेही वीजधर्म्मा स एव परलोकादवक्रम्य गर्भाशयगतं शुक्रशोणितसंयोगं प्राप्याव्यक्तात् आत्मनः सत्त्वादिगुणान् विकुर्व्वाण आत्मान्तरं सृजतीत्यव्यक्तमात्मात्मान्तर-मारभते। तथा महान् स्वगतसत्त्वादीन् विकुर्व्वाणो निश्चयात्मिकां बुद्धिमार-भते। अहङ्कारश्च स्वगतसत्त्वादीन् विकुर्व्वाणोऽविद्याबुद्धिमारभते। आकाशादयश्च पञ्च पञ्चाकाशादीनारभन्ते। इत्यष्टप्रकृतिधातुभ्योऽष्टौ जायन्ते। तथा मनः स्वारम्भकसत्त्वादीन् गुणान् विकुर्व्वाणं विशिष्टमपरं सत्त्वगुणबहुलत्रिगुणं सत्त्वसंज्ञकं मन आरभते। आहङ्कारिकाणि पञ्च बुद्धीन्द्रियाणि तान्यात्म-कृतान्येकैकाधिकपञ्चभूतान्यनुप्रविश्य पञ्च श्रोत्रादीनि बुद्धीन्द्रियाण्यारभन्ते। तानि पञ्च कर्म्मेन्द्रियाणि चात्मकृतानि पञ्चाकाशादीन्यनुप्रविश्य पञ्च कर्म्मेन्द्रियाणि हस्तादीन्यारभन्ते। पञ्चार्थाश्च शब्दादयः शब्दादीनारभन्ते। इत्येवं चतुर्व्विंशत्या धातुभिर्निष्पन्नः पुरुषोऽन्नमयो देवनरादियोनिषु जायत इति। तदिदं मनःप्रकृतिकं मनो ह्यभौतिकं चिन्त्याद्यनियतविषयं भौतिकानीन्द्रियाणि शब्दादिनियतविषयाणि। हस्तपादादिशरीरञ्च भौतिक-मिति दशेन्द्रियाणि शरीरञ्च खादिषु पञ्चसु द्रव्येषु संगृहीतानि तत् सेन्द्रिय शरीरं शरीरमुक्तं मनस्तु पृथक् द्रव्यमुक्तं सूक्ष्मदेही त्वात्मा द्रव्यमुक्तमिति सत्त्वमात्मा शरीरञ्चेति त्रयं संयुक्तं पुरुषश्चतुर्व्विंशतिक उक्तः क्रियाधिकरणश्च इति।

विवृणोति—जायत इत्यादि। विषये तत्रेति मनसा कल्पिते विषये। निश्चयात्मिकेति स्थिर-

ननु द्रव्यगुणकर्म्मसमवायसामान्यविशेषा इति षड़ेव पदार्था उक्ताः, के पुनः पदार्था महदहङ्काराहङ्कारिकदशेन्द्रियाणीति चेत् ? सत्यम्। द्रव्यादयस्तु ये षट् पदार्था उक्ताः, न ते षड़ेव पदार्थाः न त्वन्ये पदार्थाः सन्तीत्येवं नियमेनोक्ताः, तज्ज्ञात्वा तन्त्रोक्तविधिमाश्रिता इत्येतन्मात्रमुक्तं शास्त्रोक्तलौकिकविध्याश्रयणं तत्षट्पदार्थज्ञानेन भवतीति च ख्यापितम्। वैशेषिके कणादेन च तत्षट्पदार्थतत्त्वज्ञानान्निःश्रेयसमुक्तमन्य पदार्था न सन्तीति नोक्तम्। निःश्रेयसवचनेनाप्रमेयपदार्थाः सन्तीति ज्ञापितम्। गोतमेनाक्षपादेनापि प्रमाणादिषोड़शपदार्थतत्त्वज्ञानात् निःश्रेयसाधिगमवचनेन अप्रमेयपदार्थाश्च सन्तीत्येतज्ज्ञापितं, न तु प्रमाणादिभ्योऽन्य पदार्था न सन्तीत्युक्तमत एव कपिलेन साङ्ख्ये चोक्तं न षट्पदार्थनियमस्तद्बोधाच्च मुक्तिः। षोड़शादिष्वप्येवम्। न वयं वैशेषिकादिवत् षट्पदार्थवादिन इत्यवमुक्तमिति प्रमेयातिरिक्ता अप्रमेयपदार्था अपि सन्तीति तत्त्वम्। ननु तर्हि किं महदादिकमप्रमेयमिति चेन्न। षट्सु यन्नवद्रव्यमुक्तं तत्कारणभूतम्, कारणभूतद्रव्यग्रहणेन कार्य्यभूतस्यापि देहेन्द्रियविषयात्मकादेर्ग्रहणम्, तत्रात्मा कारणभूतः कार्य्यभूतश्च। कारणभूतमव्यक्तमात्मा, कार्य्यभूतः सूक्ष्मदेहो। तत्राव्यक्तं सूक्ष्मदेहिनः परम इति परात्मा ततः प्रत्यगात्मा सूक्ष्मदेही तद्ग्रहणेन महदादीनां ग्रहणात् प्रमेयत्वं न त्वप्रमेयत्वमुक्तम्। अव्यक्तात् परमस्त्वात्मषट्कः परमव्योमपुरुषः सर्व्वपरमात्मा। तथा चोक्तं कठोपनिषदि। इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः। मनसश्च परा बुद्धिर्बुद्धेरात्मा महान् परः। महतः परमव्यक्तमव्यक्तात् पुरुषः परः। पुरुषान्न परं किञ्चित् सा काष्ठा सा परा गतिरिति। मनस्तु गोतमेनाप्युक्तम्। युगपज्ज्ञानानुत्पत्तिः मनसो लिङ्गमिति। व्याख्यातञ्च वात्स्यायनेन। मनसः स्मृत्यादिषु लिङ्गेषु सत्सु खल्विदं युगपज्ज्ञानानुत्पत्तिलिङ्गं भवति। अतीन्द्रियनिमित्ताः स्मृत्यादयः करणान्तरनिमित्ता भवितुमर्हन्तीति। युगपच्च खलु घ्राणादीनामिन्द्रियाणां गन्धादीनाञ्चार्थानामात्मनश्च सन्निकर्षेषु सत्सु युगपज्ज्ञानानि नोत्पद्यन्ते। तेनानुमीयते, अस्ति तदिन्द्रियसंयोगिसहकारिनिमित्तान्तरमव्यापि। यस्यासन्निधेर्नोत्पद्यते ज्ञानं, सन्निधेश्चोत्पद्यत इति। मनःसंयोगानपेक्षस्य हीन्द्रियार्थसन्निकर्षस्य ज्ञानहेतुत्वे युगपदुत्पद्येरन्

स्वरूपा अध्यवसायरूपेत्यर्थः। व्यवस्यतीत्यनुष्ठानं करोति उद्युक्तो भवतीत्यर्थः, बुद्ध्याऽध्यवसितमर्थं वक्तुं कर्त्तुं वाऽनुतिष्ठतीति यावत्। बुद्धिपूर्व्वकमित्यनेन, यदैव बुद्धिपूर्व्वकमनुष्ठानम्, तदैवैवंविधं भवति, नोन्मत्ताद्यनुष्ठानमिति दर्शयति ॥ ५ ॥

ज्ञानानीति। इदञ्च भाष्यं व्याचक्ष्महे। अतीन्द्रियाणि मनोबुद्ध्यादीनि। तन्निमित्ताः स्मृत्यादयः स्मृतिधृतिप्रभृतय उत्पद्यन्ते। तस्मात् मनोव्यतिरिक्त-करणान्तरबुद्धिनिमित्ता अपि सम्भवन्ति तस्मात् तत्रातिप्रसङ्गवारणाय युगपदिति लक्षणमिति। न हि युगपज्ज्ञानोत्पत्त्यनुत्पत्ति करणान्तरनिमित्तं सम्भवति, सम्भवति च मनस एवेति। कथमिति चेत् तद् दर्शयति—युगपत् चेत्यादि। चकारः पुनरर्थे। तेन घ्राणादीनां पञ्चानामिन्द्रियाणां गन्धादीनाञ्च पञ्चानां तेषां ग्राह्याणामर्थानाञ्च युगपत् तु सन्निकर्षेषु सान्निध्येषु सत्सु अपि युगपदेककालं घ्राणजरासनचाक्षुषत्वाचश्रावणानि ज्ञानानि नोत्पद्यन्ते, तेन युगपत्पञ्चविधज्ञानानुत्पादेनानुमीयते। तत्तद्घ्राणादीन्द्रियसंयोगि तत्तदिन्द्रियाणां स्वस्वार्थग्रहणे स्वस्वार्थं प्रति धावने च सहकारि किमपि नियन्तृ वस्तु खल्वेकमणु च सर्व्वेन्द्रियव्यापकस्पर्शनेन्द्रियसमवेतत्वेन व्यापकमपि युगपत् पञ्चस्वव्यापकं निमित्तान्तरमस्तीति खल्वनुमीयत इत्यन्वयः। कथमनुमीयत इत्यत आह—यस्येत्यादि। यस्य निमित्तान्तरस्यासन्निधानात् तत्तदिन्द्रियार्थ-सन्निकर्षेऽपि सति तत्तदिन्द्रियजं तत्तदर्थज्ञानं नोत्पद्यते। यस्यैव निमित्तान्तरस्य सन्निधानात् तु तत्तदिन्द्रियार्थसन्निकर्षे च सति तत्तदिन्द्रियजं तदर्थज्ञानमुत्पद्यते। तदेवकमणुपरिमाणञ्च तदिन्द्रियसंयोगि सहकारि नियन्तृ चाव्यापि च निमित्तान्तरं मन एवोच्यते। कस्मादेवमित्यतो हेतुं दर्शयति—मनःसंयोगेत्यादि। यदि तु तथाविधं तदिन्द्रियसंयोगि मनो नावर्त्तिष्यत मनःसंयोगानपेक्षमेवेन्द्रियमग्रहीष्यदर्थं ग्रहीतुञ्चाधाविष्यदिति तदिन्द्रियार्थ-सन्निकर्षो मनःसंयोगानपेक्ष एव तत्तदर्थज्ञानमजनयिष्यदिति ज्ञानस्य हेतुः तत्तदिन्द्रियसन्निकर्षो न मनःसंयोगापेक्ष इति चेत् तदा युगपदुत्पद्येरन् ज्ञानानि पञ्चेति। तस्मात् तदिन्द्रियसंयोगिसहकारिनिमित्तान्तरं तत्तदिन्द्रियाणां तत्तदर्थे धावनग्रहणयोर्नियन्तृप्रेरकमणुपरिमाणमेकमेवासर्व्वव्यापि सर्व्वत्रगामि मनोऽस्तीत्यनुमीयते। तस्य खलु मनस एकत्वाणुत्वाभ्यां युगपदनेकेषु गन्तुमसामर्थ्यादव्यापित्वात् इन्द्रियाणां युगपदर्थेषु धावनग्रहणे च सहकारितया संयोगि-प्रयोजकाभावान्न युगपदिन्द्रियाणां सन्निधाने सत्स्वप्यर्थेषु धावनार्थं ग्रहणाय च प्रवृत्तिर्भवति। तस्मान्न युगपज्ज्ञानोत्पत्तिर्भवतीति ज्ञानयौगपद्यानुत्पत्ति-र्मनसो लिङ्गं भवति। नैवं बुद्ध्या सम्भवति निष्क्रियत्वात् तदिन्द्रियसंयोगाय गन्तुमसामर्थ्यात्। न चात्मतश्चैवं भवति मनःक्रिययोपचरितक्रियया स्पर्शने-न्द्रियं गन्तुमात्मनोऽसम्भवात्। यत्र ह्यात्मा वर्त्तते तत्र तु नास्ति स्पर्शनेन्द्रिय-

स्थानं त्वक् खलु मनःपर्य्यन्तमेवास्ति। त्वगिति मनोमयकोषे हि मनो मनोऽभ्यन्तरे विज्ञानमयः कोषस्तत्र विज्ञानं तन्मध्ये त्वानन्दमय आत्मा क्षेत्रज्ञाधिष्ठिनाऽव्यक्ताख्यः। इति वात्स्यायनव्याख्या।

चरकवचनैकवाक्यत्वेनापरो व्याचष्टे। ज्ञानं ज्ञानोत्पत्तिरनुत्पत्तिर्ज्ञानानुत्पत्तिर्द्वयमेतद् युगपदिति युगपज्ज्ञानस्याभावभावौ मनसो लिङ्गमिति। अस्मिन् सूत्रे स्वयमक्षपादो मनसः परीक्षार्थं सूत्राण्युवाच। ज्ञानायौगपद्यादेकं मनः। न युगपदनेकक्रियोपलब्धेः। अलातचक्रदर्शनवत् तदुपलब्धिराशुसञ्चारात्। यथोक्तहेतुत्वाच्चाणु। इति। व्याख्यातानि च वात्स्यायनेन। अस्ति खलु ज्ञानायौगपद्यमेकैकस्येन्द्रियस्य यथाविषयं करणस्यैकप्रत्ययनिर्वृत्तौ सामर्थ्यान्न तदेकत्वे मनसो लिङ्गम्। यत् तु खल्विदमिन्द्रियान्तराणां विषयान्तरेषु ज्ञानायौगपद्यमिति तल्लिङ्गम्। कस्मात्? सम्भवति खलु वै बहुषु मनःसु इन्द्रियमनःसंयोगयौगपद्यमिति ज्ञानयौगपद्यं स्यात्, न तद्भवति। तस्माद्विषयप्रत्ययपर्य्यायादेकं मन इति।

तत्राह वादी—न युगपदनेकक्रियोपलब्धेरिति। अयं खल्वध्यापकोऽधीते व्रजति कमण्डलुं धारयति पन्थानं पश्यति शृणोत्यरण्यजान् शब्दान् बिभ्यद् व्याललिङ्गानि बुभुत्सते स्मरति च गन्तव्यं स्थानीयमिति क्रमस्याग्रहणाद् युगपदेताः क्रिया इति प्राप्तं मनोबहुत्वमिति। तत्रोत्तरम्। अलातचक्रदर्शनवत् तदुपलब्धिराशुसञ्चारादिति। आशुसञ्चारादलातचक्रस्य सम्भ्रमतो विद्यमानक्रमो न गृह्यते। क्रमस्याग्रहणादविच्छेदबुद्ध्या चक्रवद्बुद्धिर्भवति। तथा बुद्धीनां क्रियाणाञ्चाशुवृत्तित्वाद् विद्यमानक्रमो न गृह्यते, क्रमस्याग्रहणाद् युगपत् क्रिया भवन्तीत्यभिमानो भवति। किं नु क्रमस्याग्रहणाद् युगपत् क्रियाभिमानः? किमथ युगपद्भावादेव युगपदनेकक्रियोपलब्धिरिति? नात्र विशेषप्रतिपत्तेः कारणमुच्यते। इत्युक्तमिन्द्रियान्तराणां विषयान्तरेषु पर्य्यायेण बुद्धयो भवन्तीति, तच्चाप्रत्याख्येयमात्मप्रत्यक्षत्वात्। अथापि दृष्टश्रुतार्थान् चिन्तयतां क्रमेण बुद्धयो वर्त्तन्ते न युगपत्, अनेनानुमातव्यमिति। वर्णपदवाक्यबुद्धीनां तदर्थबुद्धीनाञ्चाशुवृत्तित्वात् क्रमस्याग्रहणम्। कथम्? वाक्यस्थेषु वर्णेषु खलूच्चार्य्यमाणेषु प्रतिवर्णं तावच्छ्रवणं भवति। श्रुतं वर्णमेकमनेकं वा पदभावेन स प्रतिसन्धत्ते, प्रतिसन्धाय पदं व्यवस्यति, पदव्यवसायेन स्मृत्वा पदार्थं प्रतिपद्यते, पदसमूहप्रतिसन्धानाच्च वाक्यं व्यवस्यति, सम्बन्धांश्च पदार्थान् गृहीत्वा वाक्यार्थं प्रतिपद्यते, न चासां क्रमेण वर्त्तमानानां

बुद्धीनामाशुवृत्तित्वात् क्रमो गृह्यते। तदेतदनुमानमतन्त्रं बुद्धिक्रियायौगपद्याभिमानस्येति। न चास्ति मुक्तसंशया युगपदुत्पत्तिर्बुद्धीनाम्, यया मनसो बहुत्वमेकशरीरेऽनुमीयेतेति।

एकञ्च महदेकदा बहून् व्याप्तुमर्हति सूर्य्यवदिति। तत्राह—यथोक्तहेतुत्वाच्चाणु। इति। अणु मन एकञ्चेति धर्म्मसमुच्चयो ज्ञानायौगपद्यात्। महत्त्वे मनसः सर्व्वेन्द्रियसंयोगाद् युगपद्विषयग्रहणं स्यात् तस्मादेकमणु च मन इति तत्त्वम्। कणादेनापि वैशेषिकन्याये प्रोक्तम्। आत्मेन्द्रियार्थसन्निकर्षे ज्ञानस्य भावोऽभावश्च मनसो लिङ्गम्। सत्यप्यात्मेन्द्रियार्थानां सन्निकर्षे यस्य संयोगाद् इन्द्रियेण ज्ञानस्य भाव उत्पत्तिः स्याद् यस्य वियोगादिन्द्रियेण ज्ञानस्याभावोऽनुत्पत्तिः स्यात्, तन्मन इति, आत्मेन्द्रियार्थसन्निकर्षसद्भावसमकाले ज्ञानोत्पत्त्यनुत्पत्ती मनसो लक्षणमित्यर्थः।

नन्वेवंलिङ्गं मनः कथं द्रव्यं भवति, तन्नित्यमनित्यं वेत्यत आह—तस्य द्रव्यत्वनित्यत्वे वायुना व्याख्याते। वायुर्यथा व्याख्यातः खल्वाहङ्कारिकत्वाद् द्रव्यवत्त्वेन द्रव्यं क्रियावत्त्वाद् गुणवत्त्वाच्च सूक्ष्मस्तथाहङ्कारिकत्वान्मनोऽप्यद्रव्यवत्त्वेन क्रियागुणवत्त्वाच्च द्रव्यं सूक्ष्मञ्च व्याख्यातम्। एवं वायोर्यथा चाद्रव्यवत्त्वेन नित्यत्वं व्याख्यातं तथा मनसोऽप्यद्रव्यवत्त्वान्नित्यत्वं व्याख्यातमिति। गुणक्रियावत्समवायिकारणं द्रव्यमिति ह्युक्तं तद्द्रव्यवदनित्यं तत्कार्य्यमिदं मनः। तद् द्रव्यरहितत्वं नित्यत्वम्। क्रियागुणवत्समवायिकारणाभावान्नित्यं मन इत्यर्थः। अणुत्वं प्रसिद्धमाशुसञ्चारात्। ननु मनो द्रव्यं नित्यमणु च भवतु प्रतिक्षणं सात्त्विकादिविभिन्नरूपदर्शनात् किमेकैकस्मिन् पुरुषेऽनेकमित्यत आह—प्रयत्नायौगपद्याज् ज्ञानायौगपद्याच्चैकम्। मन एकैकस्मिन् पुरुष खल्वेकमेव भवति। कस्मात्? प्रयत्नायौगपद्याज ज्ञानायौगपद्याच्च। ननु एकं चेन्मनः स्यात् तथापि युगपदेव तस्य बहवः प्रयत्नाः सम्भवन्ति। यथार्क एक एव सर्व्वं यदा प्रकाशयति तदैव तापयति तदैव जगतः स्नेहान् शोषयति। तथा किञ्चिद्वस्तु स्मरतु किञ्चिज्जानातु कञ्चिन्मुह्यतु चेति। इत्यत आह—तदभावादणु मनः, तस्य मनसो विभुत्वेऽपि अणत्वं सूक्ष्मत्वं, कस्मात्? तदभावात्। प्रयत्नज्ञानयोः यौगपद्याभावात्। यदि प्रयत्नयौगपद्यं ज्ञानयौगपद्यं वा प्रत्यक्षमज्ञायिष्यत तदा महन्मनोऽभविष्यत् इति।०। कपिलेनाप्युक्तं साङ्ख्यसंहितायाम्। उभयात्मकञ्च मनः। बुद्धिकर्म्मोभयात्मकमेकं मनः स्याद् बुद्धीन्द्रियञ्च कर्म्मेन्द्रियञ्चेति। तत्रायं संशयः। किं नु खलु मन एकमनेकं वेति? तत्राह—गुणपरिणाम-

भेदान्नानात्वमवस्थावत्। अस्मिन्नेकैकस्मिन् खलु पुरुषे प्रयत्नज्ञानयोरयौगपद्यान्मनस एकत्वेऽपि गुणपरिणामभेदात् सत्त्वादिगुणानां परिणामविशेषेणैकैकस्य नानात्वेन नानात्वमवस्थावत्। प्रतिक्षणं ह्यस्मिन्नस्मिन् पुरुषेऽवस्था यथा परिणमति तदवस्थाभेदेन स स एकैकः पुरुषस्तत्तदावस्थिको नाना भवति; यथा बालपौगण्डयुवकिशोरमध्यस्थविररूपः। तथा प्रतिक्षणं मनः सत्त्वादिपरिणामे सात्त्विकं ब्राह्मसत्त्वं देवसत्त्वमार्षसत्त्वमित्येवमादिकं, राजसञ्च तामसञ्चैवं बोध्यम्।

ननु ज्ञानक्रिययोरयौगपद्यान्मनस एकत्वं नानुमीयते व्यभिचारात्; एकं ह्यपि महद् बहूनि वस्तूनि व्याप्नोति यथार्कः; एवमेवैकमपि मनोऽनेकेष्विन्द्रियेषु व्याप्य प्रवर्त्तितुं प्रसज्यत इत्यत आह—न व्यापकत्वं मनसः करणत्वादिन्द्रियत्वा वा। मनसो न व्यापकत्वं सर्व्वेन्द्रियव्यापकस्पर्शनेन्द्रियसमवायेन चेतरतु व्यापकमपि क्रमेण स्पर्शनेन्द्रियवर्त्मना सर्व्वदेहगाम्यपि न युगपत् सर्व्वदेहगामि व्यापकम्। कस्मात्? करणत्वात्। करणं हि कर्त्रधीनं नानेककर्म्म युगपत् कर्त्तुमेकं प्रभवति, कर्त्तुरेकत्वात्। नन्वेकोऽपि कर्त्ता दीर्घदण्डेनानेकान् युगपत् कर्त्तुं प्रभवत्येवेत्यत आह—इन्द्रियत्वाद्वा। इन्द्र लिङ्गमित्यर्थे निपातनादिन्द्रियम्। इन्द्रस्यात्मनो लिङ्गमित्यतो मनो न व्यापकम्। तेन सर्व्वेन्द्रियव्यापकत्वेऽपि स्पर्शनेन्द्रियस्य तत्समवायेन मनसो न सर्व्वव्यापकत्वमिति। एतेनैवं ज्ञापितम्—अणुत्वादेकत्वाच्च मनो न व्यापकं, न ह्यणु चैकमेककालमनेकेषु प्रवर्त्तितुं प्रभवतीति भावः। ननु मनोऽभ्यन्तरेन्द्रियं कथमस्य वहिरिन्द्रियेषु योगः स्यादित्यत आह—सक्रियत्वाद्गतिश्रुतेः। अव्यापकमपि मनः सर्व्वेन्द्रियव्यापकस्पर्शनेन्द्रियसमवायेन सर्व्वेष्विन्द्रियेषु स्वाभिमतार्थग्रहणायात्मना प्रेरितं गन्तुं प्रभवति सक्रियत्वात्। मनसः सक्रियत्वञ्च गतिश्रुतेः। छान्दोग्योपनिषदि ह्युक्तम्। उद्दालको ह्यारुणिः श्वेतकेतुं पुत्रमुवाच। स्वप्नान्तं मे सौम्य विजानीहि। यत्रैतत् पुरुषः स्वपिति नाम स सौम्य तदा सम्पन्नो भवति स्वमपीतो भवति तस्मादेनं स्वपितीत्याचक्षते। स्वं ह्यपीतो भवति। स यथा शकुनिः सूत्रेण प्रबद्धो दिशं दिशं पतित्वान्यत्र नायतनं लब्ध्वा बन्धनमेवोपश्रयते। एवमेव खलु सौम्य तन्मनो दिशं दिशं पतित्वान्यत्रायतनमलब्ध्वा प्राणमेवोपश्रयते प्राणबन्धनं हि सौम्य मन इति। पतित्वेत्युक्तया गतिर्मनसः श्रूयते। ननु मनसोऽणुत्वेन सक्रियत्वं कथमुपपद्यते? क्रिया ह्यवयविनां दृश्यते मनस्त्वणु

निरवयवत्वमित्यत आह—न निर्भागत्वं तद्योगाद् घटवत् । मनसो निर्भागत्वं निरवयवत्वं नास्ति । कस्मात् ? घटवत् तद्योगात् । यथा खल्वेकस्या एव मृत्तिकायाः कपालमालाद्वययोगान्न निर्भागत्वं तथा मनसोऽप्येकस्याहङ्कारस्य तैजससहितसात्त्विकाहङ्कारस्याणुद्वयस्य योगात् तदुभयात्मकत्वेन न निर्भागत्वम्, अणुत्वञ्च सक्रियत्वञ्च वर्त्तत एव । नन्वेवमहङ्कारभेदद्वययोगाद् यदि सावयवाणुत्वं तदा नित्यत्वं नास्तीत्यत आह—नाणुनित्यता तत्कार्य्यत्वश्रुतेः । अणुपरिमाणस्य परमाणुयोगान्न नित्यता तत्कार्य्यत्वश्रुतेः । परमाणुद्वय-कार्य्यं ह्यण शास्त्रे श्रूयते । तत्र वादी—न निर्भागत्वं कार्य्यत्वात् । परमाण-कार्य्यत्वादणुपरिमितस्य न निर्भागत्वमपि सभागत्वमेव । अणुपरिमितस्य अनित्यतायामुपपत्त्यन्तरमाह - तद्रूपनिबन्धनात् प्रत्यक्षनिगमः । तेषामणूनां परमाणुघटितानां रूपनिबन्धनं हि प्रत्यक्षं भवति न हि परमाणुघटिताणु-परिमितरूपं विना प्रत्यक्षं भवति, परमाणुरूपस्य प्रत्यक्षयोग्यत्वाभावात् । ननु न भवतु परमाणुपरिमाणं चतुर्व्विधपरिमाणमध्ये तदभावादित्यत आह—न परिमाणचातुर्व्विध्यं द्वाभ्यां तद्योगात् । अणु दीर्घं महत् ह्रस्वमिति चतुर्व्विधं परिमाणं न । द्वाभ्यां परमाणुभ्यां योगात् तदणु भवति । तच्च परमाणुपरिमाणमधिकं परिमण्डलम् । तद्द्वययोगादणु च दीर्घञ्च महच्च ह्रस्वञ्चेति पञ्चविधं मानम् । नन्वणुपरिमितस्य चेदनित्यता स्यात् तदा स्थिरत्वाभावात् कथं प्रत्यभिज्ञानं भवतीत्यत आह—अनित्यत्वेऽपि स्थिरता-योगात् प्रत्यभिज्ञानं सामान्यस्य । पार्थिवाद्यणूनामनित्यत्वेऽपि कतिकालं स्थिरत्वयोगात् सामान्यस्य घटाद्यारम्भकस्य पार्थिवाद्यणोः प्रत्यभिज्ञानं भवति । यो योऽसौ तत्र मार्त्तिकघटारम्भकः परमाणुद्वयरूपोऽणुः स स एवायं मार्त्तिक-घटारम्भकः पार्थिवः परमाणुरिति सामान्यस्य प्रत्यभिज्ञानं भवति । नन्वेवं कतिकालस्थिरतायामणूनां परमाणुद्वयप्रत्यभिज्ञानं शब्दप्रत्यभिज्ञानवदपलपितं भवति वस्तुतोऽस्थिरत्वात् इत्यत आह—न तदपलापस्तस्मात् । तस्मात् इत्यनित्यत्वेऽप्यणूनां कतिकालावस्थानाद् वस्तुतोऽस्थिरत्वेऽपि चिरस्थिरत्व-योगात् तत्प्रत्यभिज्ञानस्यापलापो न भवति । ननु प्रत्यभिज्ञा खलु तादात्म्य-रूपेण भवति कथं सामान्यस्य प्रत्यभिज्ञा स्यात् ? यो हि पूर्व्वानुभूतः स एवान्यस्मिन् काले तद्रूपेण प्रत्यभिज्ञायत इति ? तत्राह—नान्यनिवृत्तिरूपत्वं भावप्रतीतेः । सामान्यन्तु तत्तद्भिन्नस्य तद्गतधर्म्मरूपं न तत्रान्यनिवृत्तिरूपत्वं तदभिन्नरूपत्वं न सामान्यम् । कस्मात् ? भावप्रतीतेः । तस्य भावेन धर्म्मेणान्यस्य

प्रत्ययात्। यैः पार्थिवपरमाणुभिरारब्धाणुभिरारब्धस्तव घटस्तैः पार्थिवपरमाणुभिरारब्धाणुभिरारब्धोऽयं घट इति द्विपरमाणुरूपस्य सामान्यस्य धर्म्मस्याभिन्नस्यैव प्रत्ययादन्यानिवृत्तिरूपत्वं सामान्यं नेति बोध्यम्। ननु यदि सामान्यं समानत्वं तदा भेदाभावादेकस्य तद्घटादेः प्रत्यभिज्ञानं नास्तु, यथा सोऽयं घट इति सादृश्यञ्च न सामान्यं भवतु; योऽसौ चन्द्रस्तदिदं मुखम् इति प्रत्यभिज्ञानापत्तेरित्याकाङ्क्षायामाह—न तत्त्वान्तरं सादृश्यं प्रत्यक्षोपलब्धेः। तत्त्वान्तरं सादृश्यं न सामान्यम्। तद्भावस्तत्त्वं तत्त्वान्तरं तद्धर्म्मान्तरं यत् सादृश्यं तन्न सामान्यम्। कस्मात्? प्रत्यक्षोपलब्धेः। दृश्यते हि प्रत्यक्षं न गोगजयोः सादृश्यं, सादृश्यं पुनर्गोगवययोरिति। तद्धर्म्मान्तरं गोत्वगवयत्व भिन्नं तदाकाररूपं धर्म्मान्तरमिह सादृश्यं न सामान्यम्। तच्च न प्रत्यभिज्ञायत इति। योऽसौ चन्द्रस्तदिदं मुखमित्येवं प्रत्यभिज्ञानं न भवति, सोऽयं घट इत्येवं प्रत्यभिज्ञानन्तु भवत्येवेति। अथ निजशक्त्यभिव्यक्तिर्वा वैशिष्ट्यात् तदुपलब्धेः। न सामान्यमित्यनुवर्त्तते। निजशक्त्यभिव्यक्तिर्वा सामान्यं नाभिधीयते किन्तु तद्भिन्नस्य तद्गतधर्म्मवत्त्वमिति। निजस्य स्वस्य स्वस्य गुणकर्म्मप्रभावरूपायाः फलसाधनहेतुभूतायाः शक्तेरभिव्यक्तिर्न सामान्यम्। शक्त्या हि कार्य्यत्वमापद्यते। यथा घटाद्यारम्भकद्व्यणुकैः स्वस्वशक्त्या घटादित्वेन परिणम्यते। न तु शक्तिं विनेति शक्त्यभिव्यक्तिर्न सामान्यम्। कस्मात्? तद्वैशिष्ट्यात् तदुपलम्भात्। स्वस्वशक्तेर्विशिष्टरूपतयैव कार्य्येष्वभिव्यक्तेरुपलम्भात् कार्य्येषु घटादिषु न स्वरूपेण शक्तिरुपलभ्यते। ननु तर्हि प्रत्यभिज्ञानं किं संज्ञासंज्ञिसम्बन्धरूपस्य सामान्यस्य भवतीत्याशङ्कायामाह—न संज्ञासंज्ञिसम्बन्धोऽपि। यत् सामान्यस्य प्रत्यभिज्ञानमुक्तं तत् सामान्यं संज्ञासंज्ञिसम्बन्धोऽपि न। कस्मात्? अपिशब्दात् पूर्व्वहेतोः। वैशिष्ट्यात् तदुपलब्धेरिति। घटादिः संज्ञा तद्वाच्यघटादिवस्तुसंज्ञितयोः सम्बन्धो वाच्यवाचकभावः। स च न प्रत्यभिज्ञायां सामान्यम्। घटाद्यारम्भकाणां परमाणुसमारब्धद्व्यणुकानां विशेषरूपेण घटादिसंज्ञाया उपलम्भात्। ननु घटादिसंज्ञानां घटादिवस्तुवाचित्वसम्बन्धो नित्य एव ततः सोऽयं घट इति प्रत्यभिज्ञानं भवति कथं न संज्ञासंज्ञिसम्बन्धस्य सामान्यस्य प्रत्यभिज्ञानं स्यादित्यत आह—न सम्बन्धनित्यतोभयानित्यत्वात्। संज्ञया सह संज्ञिनः सम्बन्धस्य वाच्यवाचकभावस्य न नित्यतास्ति कस्मादित्यत आह—उभयानित्यत्वात्। उभयं हि संज्ञा च संज्ञि च न नित्यं कथं तयोः

सम्बन्धो नित्यः स्यात् ? किन्तु यत्पदेन यद्वाच्यं तद्वाच्यवाचकत्वं प्रसिद्धं यावत् सर्गस्थितिः पुनः सर्गेऽपि तथैव वाच्यवाचकत्वं भविष्यतीत्येवं नित्यत्वेऽपि महाप्रलये वाच्यासद्भावाद् वाचकस्य चासद्भावात् तयोः सम्बन्धस्यापि नाशात्। एवं सम्बन्धानित्यत्वे सम्बन्धस्य सामान्यस्य न प्रत्यभिज्ञानं स्यादिति-आह—नातः सम्बन्धो धर्म्मिग्राहकमानाभावात्। अतः संज्ञासंज्ञ्युभयानित्यत्वेन संज्ञासंज्ञिनोः सम्बन्धस्यानित्यत्वात् संज्ञासंज्ञिसम्बन्धो न प्रत्यभिज्ञायां सामान्यम्। कस्मात्? धर्म्मिग्राहकमानाभावात्। सम्बन्धस्य धर्म्मिवाचकत्वे तद्ग्राहकमानाभावात्। न हि घटादिपदवाच्यघटादिवस्तुनो घटत्वादिधर्म्मवाचकः सम्बन्धः प्रमाणसिद्ध इति। ननु यद्यत्परमाणुसमारब्धद्व्यणुकैर्यद्यद्घटादिकं वस्तु समारभ्यते तत्समवायिकारणसंयोगात् समवाय एव स आरम्भ उच्यते। सैव समानप्रसवात्मिका जातिः सामान्यम्, असमानप्रसवात्मिका जातिश्चोच्यते विशेष इति धर्म्मिणो घटादेर्धर्म्मवाचक एव सम्बन्धोऽस्तीत्यत आह—न समवायोऽस्ति प्रमाणाभावात्। वस्तूनां समवायिकारणसंयोगात् कार्य्यत्वमापद्यमानत्वे योऽवयवावयविभावः समवायः सा जातिः समानप्रसवात्मिका चासमानप्रसवात्मिका चेति द्विधा, जन्म सामान्यं विशेषश्चास्ति न च स समवायः, संज्ञासंज्ञिनोर्वाच्यवाचकभावः समवायः सम्बन्धोऽस्ति। कस्मात्? प्रमाणाभावात्। नन्वस्ति प्रत्यक्षम् अनुमानञ्च प्रमाणमित्यत आह—उभयत्राप्यन्यथासिद्धेन प्रत्यक्षमनुमानं वा। वह्निरिति शब्दे तद्वाच्यवस्तु न दृश्यते। न वा वह्निशब्दे दहनादिलिङ्गेन वह्निरनुमीयते, इत्युभयथाप्यन्यथासिद्धेः प्रकारान्तरेण संज्ञासंज्ञिनोः समवायासिद्धेर्न प्रत्यक्षं नानुमानञ्च नाप्तोपदेशश्च। बोधस्तु तत्र सामयिकः। इत्युक्तम्। ननु भो देवदत्त इत्युक्ते स एवाभिमुखीभूय प्रत्युत्तरं दत्त इत्यतोऽनुमीयते समवायेन स शब्दस्तत्रास्तीत्यत आह—नानुमेयत्वमेव क्रियया नेदिष्ठस्य तत्तद्वतोरेवापरोक्षप्रतीतेः। भो देवदत्त इत्युक्ते प्रत्युत्तरदातृपुरुषे देवदत्तशब्दोऽस्तीति तस्य नानुमेयत्वमेव। कस्मात्? नेदिष्ठस्यान्तिकस्थस्य तज्जन्यस्य क्रियया तत्तद्वतोर्घटादिपदतत्पदवद्वस्तुनोरपरोक्षप्रतीतेः प्रत्यक्षप्रतीतेः। घटादिवस्तुनि च घटादिपददर्शनाभावात्। प्रत्येकमपि नास्ति। इत्यतो मनसो निर्भागत्वं नास्ति। वैकारिकाहङ्कारारब्धद्व्यणुकमानात् तु सभागत्वेऽपि न तद्भागद्वयविश्लेषोऽस्ति यावत् प्राकृतप्रलयं तयोर्विश्लेषे परमाणुमाने द्व्यणुकनाशः स्यादित्यतस्तदाहङ्कारिकं मनो नित्यमिति कणादकपिलाभ्याम् आहङ्कारिकं कारणभूतं मनः परीक्षितं नित्यमेकमणु च मन इति।

द्रव्येषु यन्मनः कणादेनोक्तं तत्कारणद्रव्याणामुद्देशे न तु कार्य्यद्रव्येषु। तद्द्रव्याणां सजातीयारम्भकत्वञ्चोक्तं तेन तदाहङ्कारिकमनसः कार्य्यमिदं मन इह तन्त्रे पुनर्व्वसुनात्रेयेणोपदिष्टं चतुर्व्विंशतिके पुरुषे। तदुत्पत्त्युपदेशे खुड्डीकागर्भावक्रान्तिशारीरे वक्ष्यते। आत्मजानि यानि तानि यथा—तासु तासु योनिषूत्पत्तिरायुरात्मज्ञानं मन इन्द्रियाणि प्राणापानावित्यादि। तत्रात्मा षड्धातुः पुरुषस्तस्माज्जातं मन इदं तत्स्थमाहङ्कारिकं मनः शुक्रशोणितसंयोगं गर्भाशयगतमवक्रम्य तेन षड्धातुकेनात्मना प्रथमं यानि पञ्च महाभूतानि सृज्यन्ते तत्र या पृथिवी गन्धमात्रा तस्या अणिष्ठभागेनैकीभूय मन इदमारभते। ततो भौतिकं किन्तु भूतांशत आहङ्कारिकमनोऽंशबाहुल्याच्च मनःसंज्ञं द्रव्यम्। तदुक्तं छान्दोग्योपनिषदि। त्रिवृत्करणश्रुतौ। अन्नमशितं त्रेधा विधीयते। तस्य यः स्थविष्ठो धातुस्तत् पुरीषं भवति यो मध्यमस्तन्मांसं योऽणिष्ठस्तन्मन इति अन्नमयं हि सौम्यं मन इति। ( तन्न भूतात् पृथग् द्रव्यवचनात्। त्रिवृत्करणश्रुतौ ह्युक्तम् येनान्नमशितं तस्य मनो जातोत्तरकालमन्नेन पुष्यति न तु गर्भस्य जायमानस्य मन आरभ्यते इति। गर्भारम्भे ह्यात्मा गर्भाशयमवक्रम्य शुक्रशोणितसंयोगमनुप्रविश्य सत्त्वकरणो मनो विकुर्व्वाणो यथा पञ्च महाभूतानि सृजति तथा सत्त्वरजस्तमांसि तांस्त्रीन् सत्त्वबहुलान् गुणांस्त्वाहङ्कारिकमनोऽनुप्रविश्येदं स्थूलं मनः सृजति इत्यात्मजं मनः। ) सत्त्वं तदिदं मनोऽपि मनसारब्धत्वान्मनोमयत्वान्मनःसंज्ञमुक्तं कार्य्यद्रव्यं देहेन्द्रियविषयरूपपृथिव्यादिकार्य्यद्रव्यवत्। ( वक्ष्यते ह्यतुल्यगोत्रीये। रूपाद्धिरूपप्रभवः प्रसिद्धः कर्म्मात्मकानां मनसो मनस्त इति। ) तथैकमण्वानित्यं ज्ञानायौगपद्यलिङ्गं न तु नित्यं मृतस्य बुद्धिमनइन्द्रियादीनां नाशात् पञ्चानामात्मस्थानां भूतानामवशेषत्वात्। तद्वक्ष्यति चातुल्यगोत्रीये। भूतानि चत्वारि च कर्म्मजानि यान्यात्मलीनानि विशन्ति गर्भम्। स बीजधर्म्मा ह्यपरापराणि देहान्तराण्यात्मनि याति याति। इति। तथात्रापि वक्ष्यते। शरीरं हि गते तस्मिन् शून्यागारमचेतनम्। पञ्चभूतावशेषत्वात् पञ्चत्वं गतमुच्यते। इति। ये तु मनो नित्यमाहुस्ते सूक्ष्मदेहिस्थमाहङ्कारिकमनोऽभिप्रेत्य ये चानित्यमाहुस्ते तन्मनोजातं चतुर्व्विंशतिकपुरुषस्थं मनोऽभिप्रेत्यैवेत्येवं न विदित्वा प्रमत्ता विवदन्ते। इति। उभयमेवेदं मन एकमणु च ज्ञानायौगपद्यलिङ्गमभौतिकञ्च। गौतमेनाक्षपादेनोक्तं प्रथमसूत्रस्य भाष्ये वात्स्यायनेन व्याख्यातम्। इन्द्रियस्य वै सतो मनस इन्द्रियेभ्यः पृथगुपदेशो

एकैकाधिकयुक्तानि खादीनामिन्द्रियाणि तु ।
पञ्च कर्म्मानुमेयानि येभ्यो बुद्धिः प्रवर्त्तते ॥

धर्म्मभेदात् । भौतिकानीन्द्रियाणि नियतविषयाणि सगुणानाञ्चैषामिन्द्रियभाव इति मनस्त्वभौतिकं सर्व्वविषयञ्च नास्य सगुणस्येन्द्रियभाव इति। सति चेन्द्रियार्थसन्निकर्षे सन्निधिमसन्निधिञ्चास्य युगपज्ज्ञानानुत्पत्तिकारणमिति। परीक्षितञ्च पूर्व्वमुपदर्शितम् ॥ ५ ॥

गङ्गाधरः—ननु मनो दशेन्द्रियाणीति यदुक्तं तत्र मन इदमुक्तं, दशेन्द्रियाणि पुनः कानीत्यत आह—एकैकाधिकयुक्तानीत्यादि। येभ्य इन्द्रियेभ्यः पञ्चभ्यो बुद्धिः प्रवर्त्तते तान्याहङ्कारिकाणि चेतनाधातुपुरुषस्थानि पञ्च बुद्धेरिन्द्रियाणि खादीनामात्मजानामाकाशादीनामेकैकभूताधिकपञ्चभूतयुक्तानि भूतप्राधान्याद्भौतिकानि चतुर्व्विंशतिके पुरुषे भवन्ति। तान्यप्रत्यक्षाणि कर्म्मानुमेयानि स्वस्वकर्म्मणा शब्दग्रहणादिनाऽनुमेयानि भवन्ति। यतः शब्दं शृणोमि श्रोत्रेण शब्दं गृह्णन्नित्यतोऽनुमीयतेऽस्ति मे श्रवणेन्द्रियमित्येवमादिरूपेणानुमेयानि। एकैकाधिकयुक्तानीति वचनेन षड्धातुपुरुषस्थानामाहङ्कारिकाणां पञ्चानां बुद्धीन्द्रियाणां चतुर्व्विंशतिके पुरुषे त्वात्मजाकाशादेरेकैकाधिकपञ्चभूतयोगेन विशिष्टापूर्व्वपाञ्चभौतिकत्वमुक्तं तेन पञ्चानां सक्रियत्वमुपपन्नमात्मजाकाशादेरेकैकभूतयुक्तत्वे हि श्रोत्रस्य निष्क्रियत्वं प्रसज्यते। खादीनामित्यात्मजानामिति मनइन्द्रियादीनामात्मजत्ववचनात्। न तु पितृजमातृजरसजानामिति। तथात्वे हि शरीरावयवानां पितृजादीनामिव श्रोत्रेन्द्रियादीनां स्वस्वकर्म्मबुद्ध्यनुपपत्तिप्रसङ्गः स्यात्। यच्च साङ्ख्ये कपिलेनोक्तम्—न भौतिकानीन्द्रियाण्याहङ्कारिकत्वश्रुतेरिति, तत्षड्धातुपुरुषस्थानामिन्द्रियाणां भौतिकत्वसंशयमभिप्रेत्योक्तं न तु चतुर्व्विंशतिकराशिपुरुषस्थेन्द्रियाण्यभिप्रेत्य। चतुर्व्विंशतिकपुरुषस्येन्द्रियाभिप्रायेण तु पुनरुक्तम्। न भूतप्रकृतित्वमिन्द्रियाणामाहङ्कारिकत्वश्रुतेः। श्रुतिर्हि—एतस्माज्जायते प्राणो मनः सर्व्वेन्द्रियाणि च। खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणीति। तद्रूपनिबन्धनात् प्रत्यक्षनियमः। तदाहङ्कारिकेन्द्रियाणां

चक्रपाणिः—मनोऽभिधायेन्द्रियाण्यभिधत्ते, अत्रापि ज्यायस्त्वाद् बुद्धीन्द्रियाणि प्रागाह—एकैकेत्यादि। खादीनां मध्ये एकैकेन भूतेन युक्तानीन्द्रियाणि पञ्च चक्षुरादीनि। एकैकाधिक-

श्रोत्रादीनां रूपनिबन्धनाद् आकाशादेकैकाधिकपञ्चभूतमयरूपनिबन्धनात् प्रत्यक्षनियमः, श्रवणेन शब्दप्रत्यक्षं त्वचा स्पर्शप्रत्यक्षं चक्षुषा रूपप्रत्यक्षं रसनेन रसप्रत्यक्षं घ्राणेन गन्धप्रत्यक्षं नत्वन्येनान्यस्येति नियमः। इति। न तेजोऽपसर्पणात्तैजसं चक्षुर्वृत्तितस्तत्सिद्धेरिति। प्राप्तार्थप्रकाशलिङ्गाद् वृत्तिसिद्धिः। भागगुणाभ्यां तत्तान्तरवृत्तिः किन्तु तत्ता तदेकशोभूता सम्बद्धार्थं सर्पतीति। नक्तञ्चराणां रात्रौ चक्षुषस्तेजोऽपसर्पणात् तैजसं चक्षुर्न भवति वृत्तितो रूपग्रहणात् तत्सिद्धेस्तैजसत्वसिद्धेः। वृत्तिसिद्धिस्तु प्राप्तार्थप्रकाशलिङ्गात् न त्वप्राप्तार्थस्य। चक्षुर्हि रूपं प्राप्तं प्रकाशयति न रसं गन्धं वान्यमिति। कथमेवं वृत्तिः? भागगुणाभ्यां तत्तान्तरवृत्तिः। आरम्भकाणां भूतानां भागेनैकैकाधिकेन तद्गुणेनापरेषां गुणाभिभवाच्च तद्भूतगुणेन तत्तान्तरवृत्तिः पृथक् पृथगर्थो वृत्तिः। किन्तु तत्ता तस्य भावस्तदेकशोभूता तत्तदेकैकभूताधिकपञ्चभूतारब्धतासम्बन्धार्थं यो गुणो यस्मिन्निन्द्रिये सम्बन्धस्तं गुणमर्थं ग्रहीतुं सर्पतीति। इति साङ्ख्यमतेन तुल्यम्। सुश्रुतेऽपि। भौतिकानि चेन्द्रियाण्यायुर्वेदे वर्ण्यन्ते तथेन्द्रियार्थाः। भवति चात्र। इन्द्रियेणेन्द्रियार्थन्तु स्वं स्वं गृह्णाति मानवः। नियमात् तुल्ययोनित्वान्नान्ये नान्यमिति स्थितिः॥ इति। गौतमेनाप्युक्तम्। घ्राणरसनचक्षुस्त्वक्श्रोत्राणीन्द्रियाणि भूतेभ्यः। पृथिव्यापस्तेजो वायुराकाशमिति भूतानीति। व्याख्यातञ्च वात्स्यायनेन। जिघ्रत्यनेनेति घ्राणं गन्धं गृह्णातीति। रसयत्यनेनेति रसनं रसं गृह्णातीति। चष्टेऽनेनेति चक्षुः रूपं गृह्णातीति। स्पृशत्यनेनेति स्पर्शनं त्वक् तदुपचारः स्थानादिति। शृणोत्यनेनेति श्रोत्रं शब्दं गृह्णातीति। एवं समाख्यानिर्व्वचनसामर्थ्याद् बोध्यं स्वविषयग्रहणलक्षणानीन्द्रियाणीति। भूतेभ्य इति। नानाप्रकृतीनामेषां सतां विषयनियमो नैकप्रकृतीनाम्। सति च विषयनियमे स्वविषयग्रहणलक्षणत्वं भवति। कानि पुनरिन्द्रियकारणानि भूतानीति? पृथिव्यापस्तेजो वायुराकाशमिति भूतानीति संज्ञाशब्दैः पृथगुपदेशो भूतानां सुवचं कार्य्यं भविष्यति। इति। तत्र। कृष्णसारे सत्युपलम्भाद् व्यतिरिच्य चोपलम्भात् संशयः। किमाव्यक्तिकानीन्द्रियाणि आहोस्विद्भौतिकानीति? कृष्णसारं हि भौतिकं तस्मिन्ननुपहते रूपोपलब्धिर्व्यतिरिच्य चोप-

---

पदेन, पञ्चापि पाञ्चभौतिकानि, परन्तु चक्षुषि तेजोऽधिकमित्याद्युक्तं सूचयति। कर्म्मानुमेयानीति कार्य्यानुमेयानि। कार्य्यं चक्षुर्बुद्ध्यादि। येभ्यो बुद्धिः प्रवर्त्तते इति, यानि बुद्धीन्द्रियाणि,

लब्धिर्नरिति। व्यतिरिच्य कृष्णसारमवस्थितस्य विषयस्योपालम्भो न कृष्ण-सारप्राप्तस्य। न चाप्राप्यकारित्वमिन्द्रियाणामिति। तदिदमभौतिकत्वे विभुत्वात् सम्भवति। एवमुभयधर्म्मोपलब्धेः संशयः। तत्राभौतिकानीन्द्रिया-णीत्याह। कस्मात्? महदणुग्रहणात्। महदिति महत्तरं महत्तमञ्चोपलभ्यते; यथा न्यग्रोधपर्व्वतादि। अण्वित्यणुतरमणुतमञ्च गृह्यते; यथा— सूच्यग्रधानादि। तदुभयमुपलभ्यमानं चक्षुषो भौतिकत्वं बाधते। भौतिकं हि यावत् तावद् व्याप्नोति। अभौतिकन्तु विभुत्वात् सर्व्वव्यापकमिति। न महदणुग्रहणमात्राद् अभौतिकत्वं विभुत्वञ्चेन्द्रियाणां शक्यं प्रतिपत्तुम्। इदं खलु—रश्म्यर्थ-सन्निकर्षात् तद्ग्रहणम्। तयोर्महदण्वोर्ग्रहणम् चक्षूरश्मेरर्थस्य च सन्नि-कर्षविशेषाद् भवति; यथा प्रदीपरश्मेरर्थस्य चेति। रश्म्यर्थसन्निकर्षश्चाना-वरणलिङ्गः। चाक्षुषो हि रश्मिः कुड्यादिभिरावृतमर्थं न प्रकाशयति; यथा प्रदीपरश्मिरिति। अनावरणानुमेयत्वे सतीदमाह। तदनुपलब्धेरहेतुः। रूपस्पर्शशब्दवद्धि तेजो महत्त्वादनेकद्रव्यवत्त्वाद् रूपवत्त्वाच्च तदुपलब्धिरिति। प्रदीपवत् प्रत्यक्षत उपलभ्येत; चक्षुषो रश्मिर्यदि स्यादिति। नानुमीय-मानस्य प्रत्यक्षतोऽनुपलब्धिरभावहेतुः। सन्निकर्षप्रतिषेधार्थेनावरणेन लिङ्गे-नानुमीयमानस्य रश्मेर्या प्रत्यक्षतोऽनुपलब्धिः नासावभावं प्रतिपादयति; यथा चन्द्रमसः परभागस्य, पृथिव्याश्चाधोभागस्येति। द्रव्यगुणधर्म्मभेदात् चोपलब्धिनियमः। भिन्नः खल्वयं द्रव्यधर्म्मो गुणधर्म्मश्च। महदनेकद्रव्य-वच्च विभक्तावयवमाप्यं द्रव्यं प्रत्यक्षतो नोपलभ्यते, स्पर्शस्तु शीतो गृह्यते। तस्य द्रव्यस्यानुबन्धात् हेमन्तशिशिरौ कल्प्येते। तथाविधमेव च तैजसं द्रव्य-मनुद्भूतरूपं सह रूपेण नोपलभ्यते, स्पर्शस्त्वस्योष्मा चोपलभ्यते, तस्य द्रव्यस्यानुबन्धात् ग्रीष्मवसन्तौ कल्प्येते। यत्र त्वेषा भवति। अनेक-द्रव्यसमवायाद् रूपविशेषाच्च रूपोपलब्धिः। यत्र रूपश्च द्रव्यञ्च तदाश्रयः प्रत्यक्षत उपलभ्यते रूपविशेषस्तु यद्भावात् कचिद्रूपोपलब्धिः यद-भावाच्च द्रव्यस्य कचिदनुपलब्धिः, स रूपधर्म्मोऽयमुद्भवानुद्भवः समाख्यात इति। अनुद्भूतरूपश्चायं नायनो रश्मिः, तस्मात् प्रत्यक्षतो नोपलभ्यत इति।

तेजसो धर्म्मभेदः। उद्भूतरूपस्पर्शवत् प्रत्यक्षं तेजः, यथा आदित्यरश्मयः।

तानीमानि पञ्चेति दर्शयति। यद्यपि च सांख्ये आहङ्कारिकाणीन्द्रियाणि, यदुक्तम्—"सात्त्विक एकादशकः प्रवर्त्तते वैकृतादहङ्कारात्" इति, तथापि मतभेदाद भौतिकत्वमिन्द्रियाणां ज्ञेयम्।

उद्भूतरूपमनुद्भूतस्पर्शञ्च प्रत्यक्षम्। यथा प्रदीपरश्मय इति। उद्भूतस्पर्शमनुद्भूतरूपमप्रत्यक्षं यथा अबादिसंयुक्तं तेजः। अनुद्भूतरूपस्पर्शोऽप्रत्यक्षश्चाक्षुषो रश्मिरिति। कर्म्मकारितश्चेन्द्रियाणां व्यूहः पुरुषार्थतन्त्रः। यथा चेतनस्यार्थो विषयोपलब्धिभूतः सुखदुःखोपलब्धिभूतश्च कल्प्यते, तथेन्द्रियाणि व्यूढानि। विषयप्राप्त्यर्थश्च रश्मेश्चाक्षुषस्य व्यूहः। रूपस्पर्शानभिव्यक्तिश्च व्यवहारप्रक्लृप्त्यर्था। द्रव्यविशेषे च प्रतिघातादावरणोपपत्तिर्व्यवहारार्था। सर्व्वद्रव्याणां विश्वरूपो व्यूहः। इन्द्रियवत् कर्म्मकारितः पुरुषार्थतन्त्रः। कर्म्म तु धर्म्माधर्म्मभूतं चेतनस्योपभोगार्थमिति। अव्यभिचाराच्च प्रतीघातो भौतिकधर्म्मः। यश्चावरणोपलम्भादिन्द्रियस्य द्रव्यविशेषे प्रतीघातः, स भौतिकधर्म्मो न भूतानि व्यभिचरति। नाभौतिकं प्रतिघातधर्म्मकं दृष्टमिति। अप्रतिघातस्तु व्यभिचारी। भौतिकाभौतिकयोः समानत्वादिति। यदपि मन्यते प्रतिघाताद्भौतिकानीन्द्रियाण्यप्रतिघातादभौतिकानीति प्राप्तम्। दृष्टश्चाप्रतिघातः काचाभ्रपटलस्फटिकान्तरितोपलब्धेः। तन्न युक्तम्, कस्मात्? यस्माद् भौतिकमपि न प्रतिहन्यते। काचाभ्रपटलस्फटिकान्तरितप्रकाशात् प्रदीपरश्मीनाम्। स्थाल्यादिषु पाचकस्य तेजसोऽप्रतिघातः। उपपद्यते चानुपलब्धिः कारणभेदादिति।०। मध्यन्दिनोल्काप्रकाशानुपलब्धिवत् तदनुपलब्धिः। इति। यथानेकद्रव्येण समवायाद् रूपविशेषाच्च रूपोपलब्धिरिति, सत्यप्युपलब्धिकारणे मध्यन्दिनोल्काप्रकाशो नोपलभ्यते आदित्यप्रकाशेनाभिभूतः। एवं महदनेकद्रव्यवत्त्वाद् रूपविशेषाच्चोपलब्धिरिति, सत्यप्युपलब्धिकारणे चाक्षुषो रश्मिर्नोपलभ्यते निमित्तान्तरतः। तच्च व्याख्यातम् अनुद्भूतरूपस्पर्शद्रव्यस्य प्रत्यक्षतोऽनुपलब्धिरिति। अत्यन्तानुपलब्धिश्चाभावकारणात्।

यो हि ब्रवीति—लोष्ट्रप्रकाशो मध्यन्दिन आदित्यप्रकाशाभिभवान्नोपलभ्येतेति तस्यैतत् स्यात्। न रात्रावप्यनुपलब्धेः। अप्यनुमानतोऽनुपलब्धिरिति। एवमत्यन्तानुपलब्धेर्लोष्ट्रप्रकाशो नास्ति, न त्वेवं चक्षुषो रश्मिरिति। उपपन्नरूपा चेयम् वाह्यप्रकाशानुग्रहाद्विषयोपलब्धेः अनभिव्यक्तितोऽनुपलब्धिः। वाह्येन प्रकाशेनानुगृहीतं चक्षुर्विषयग्राहकम्, तदभावेऽनुप-

किंवा औपचारिकमेतद भौतिकत्वमिन्द्रियाणां ज्ञेयम्। उपचारबीजञ्च यद्गुणभूयिष्ठं यदिन्द्रियं गृह्णाति, तत्तद्भूयिष्ठमुच्यते। चक्षुस्तेजो गृह्णाति, तेन तैजसमुच्यते इत्यादि ज्ञेयम्।

हस्तपादं गुदोपस्थं * जिह्वेन्द्रियमथापि च ।
कर्म्मेन्द्रियाणि पञ्चैव पादौ गमनकर्म्मणि ॥

लब्धिः। सति च वाह्यप्रकाशानुग्रहे शीतस्पर्शोपलब्धौ च सत्यां तदाश्रयस्य द्रव्यस्य चक्षुषा न ग्रहणं रूपस्यानुद्भूतत्वात्। सेयं रूपानभिव्यक्तितो रूपाश्रयस्य द्रव्यस्यानुपलब्धिर्दृष्टा। तत्र यदुक्तं तदनुपलब्धेरहेतुरिति, तदयुक्तम्, कस्मात्? पुनरभिभवोऽनुपलब्धिकारणं चाक्षुषस्य रश्मेर्नोच्यते इति। अनभिव्यक्तौ चाभिभवात्। वाह्यप्रकाशानुग्रहनिरपेक्षायाञ्चेति चार्थः। यद्रूपमभिव्यक्तमुद्भूतं वाह्यप्रकाशानुग्रहञ्च नापेक्षते तद्विषयोऽभिभवः, विपर्य्ययेऽभिभवाभावात् अनुद्भूतरूपत्वाच्चानुपलभ्यमानं वाह्यप्रकाशानुग्रहाच्चोपलभ्यमानं नाभिभूयत इति। एवमुपपन्नश्चास्ति चाक्षुषो रश्मिरिति। नक्तं नक्तञ्चरनयनरश्मिदर्शनात्। दृश्यन्ते हि नक्तं नयनरश्मयो नक्तञ्चराणां वृषदंशप्रभृतीनाम्, तेन शेषस्यानुमानमिति। जातिभेदवदिन्द्रियभेद इति चेत्? धर्म्ममात्रञ्चानुपपन्नम्, आवरणस्यार्थप्राप्तिप्रतिषेधार्थस्य दर्शनादिति। प्राप्तार्थग्रहणमप्राप्यग्रहणनिरासश्च पूर्व्वमिन्द्रियोपक्रमणीये दर्शितमिति। भौतिकत्वमिन्द्रियाणां स्थूलशरीरे सर्व्वसम्मतं दर्शितमिति।

नन्वेवं भवन्तु पञ्च बुद्धीन्द्रियाणि कानि पुनरपराणि पञ्च यत उक्तं दशेन्द्रियाणीति; तत आह—हस्तपादमित्यादि। हस्तपादगुदोपस्थजिह्वमिति पञ्च कर्म्मेन्द्रियाणि। एवशब्देन वाह्यतो दृष्टानां हस्तपदादीनाम् अनेकत्वं व्यावृत्तम्। हस्तादीनि हि पञ्चैवाहङ्कारिकाणीन्द्रियाणि तेषामेकैकमेव स्थूलशरीरारम्भे प्रथमत आत्मकृतानि पञ्चभूतांशविशेषमनुप्रविश्यैकैकहस्तपादादिकं भवदेव शुक्रशोणितादिकारणान्तरसहयोगेन योनिविशेषधर्म्मनियमाद् द्विपाणिपादादिरूपेणैवाङ्गविशेषो जायते तस्मात् पञ्चैव कर्म्मेन्द्रियाणि न त्वतिरिक्तानि। वक्ष्यन्ते चात्रात्मकार्य्याणि तासु तासु योनिषु उत्पत्तिरायुरात्मज्ञानं मन इन्द्रियाणि प्राणापानावित्यादीनि। तत्रापि धर्म्माधर्म्मनिमित्तं हस्तादीनां वाह्यतोऽभिव्यक्त्यनभिव्यक्ती देवनरादिदेहे भवत इति। प्राण्यङ्गत्वादेकवचनं हस्तपादं गुदोपस्थमिति। उपस्थस्त्वनियतलिङ्गसामान्यरूपः, न तु पुंलिङ्गं स्त्रीलिङ्गं क्लीवलिङ्गं वा रूपादिवत्। शुक्रादि-

अथ कर्म्मेन्द्रियाण्याह—हस्तावित्यादि। हस्तावेकं पादौ चैकमिन्द्रियमेकरूपकर्म्मकर्त्तृतया।

---

* हस्तौ पादौ गुदोपस्थे इति चक्रधृतः पाठः।

पायूपस्थौ विसर्गार्थौ हस्तौ ग्रहणधारणे।
जिह्वा वागिन्द्रियं वाक् च सत्या ज्योतिस्तमोऽनृता ॥ ६ ॥
महाभूतानि खं वायुरग्निरापः क्षितिस्तथा।
शब्दः स्पर्शश्च रूपञ्च रसो गन्धश्च तद्गुणाः ॥

बीजाभिक्र्यादिनिमित्ततो बहिःशरीरे शिश्नादिरूपेणाभिव्यज्यते। अन्यथा प्राग् व्यक्तीभावात् पुंसवनेन पुत्रजननानुपपत्तिः; सूक्ष्मदेही तु न स्त्री न पुमान् न नपुंसकमिति। कर्म्माणि चैषामाह—पादावित्यादि। गमनकर्म्मणि पादौ वर्त्तेते इति प्राधान्यान्मनुष्याभिप्रायेण। विसर्गार्थे पुरीषस्य विसर्गकर्म्मणि पायुः। मूत्ररेतसोर्विसर्गकर्म्मण्युपस्थो वर्त्तते। हस्तौ ग्रहणधारणे कर्म्मणि। जिह्वा तात्स्थ्यात् जिह्वास्थमिन्द्रियं वाचि कर्म्मणि वर्त्तते। वाक् च द्विधा सत्या अनृता च, तत्र सत्या ज्योतिः प्रकाशकत्वात्। अनृता तमो मोहजनकत्वात्। यद्यपि तेजोमयी वाक् तथापि सत्त्वतमोयोगात् सत्यानृता भवति। इतीन्द्रियाणि दशोपदिष्टानि भवन्ति ॥ ६ ॥

गङ्गाधरः—अथैषामर्थानाञ्च प्रकृतीराह—महाभूतानीत्यादि। यानि भूतादितस्तामसादहङ्कारादादौ भूतानि तेषामितरेभ्यः कार्य्येभ्यो भूतेभ्यो महत्त्वान्महाभूतेतिसंज्ञा। तानि कीदृशानीत्यत आह—शब्द इत्यादि। तद्गुणाः क्रमेण तेषां खादीनां गुणाः शब्दादय एव पञ्च। शब्दमात्रगुण आकाशः स्पर्शमात्रगुणो वायु, रूपमात्रगुणोऽग्निस्तेजः रसमात्रगुणा आपो गन्धमात्रगुणा क्षितिरिति। तयानभिव्यक्तः शब्द इहोपदिष्टः, सगुणमेव द्रव्यमुत्पद्यते न तु निर्गुणमिति ख्यापितं, तेनाकाशादुत्पत्तिकालेऽनभिव्यक्ता आकाशादीनां मृदुलघु-सूक्ष्म-श्लक्ष्ण-शीत-रूक्ष-खरविशदतीक्ष्णोष्ण-द्रवस्निग्ध-मन्दसरसान्द्रपिच्छिलगुरु-कठिनस्थिरस्थूला विंशतिर्गुणाः शब्दस्पर्शरूपरसगन्धसहचरिता नोपदिष्टाः शब्दादिसाहित्येनानभिव्यक्ताः सन्तीति ख्यापनार्थं पूर्व्वाध्यायेऽभिहितम्। सार्था गुर्व्वादय इति न त्वर्था गुर्व्वादय इत्युक्तम्। खादीन्येतानि पञ्च प्राणा उच्यन्ते। इत्याहङ्कारिकाणि मनो दशेन्द्रियाणि चेत्येकादश सात्त्विकात्

गुदोपस्थे चैकैकम्। वाच उपादानहानार्थं भेदमाह--वाक् चेत्यादि। ज्योतिरिव ज्योतिर्धर्म्मकर्त्तृत्वेन उभयलोकप्रकाशकारित्वात्। एतद्विपर्य्ययेण तमः, अनृता सत्यविपर्य्ययेणेति ॥ ६ ॥

चक्रपाणिः—सम्प्रति उद्देशक्रमानुरोधादभिधातव्यार्थानां प्रकृतिग्रहणगृहीतपञ्चभूतपञ्चगुण-तया पराधीनत्वादष्टधातुप्रकृतिगृहीतादिभूतान्येव तावदाह—महाभूतानीत्यादि। शब्दादयो यथा-

तेषामेकगुणः पूर्व्वो गुणवृद्धिः परे परे।
पूर्व्वः पूर्व्वगुणश्चैव क्रमशो गुणिषु स्मृतः ॥ ७ ॥

वैकारिकात् अहङ्कारान्मनोऽभूत्, तैजसाद्राजसाद् वैकारिकसहायात् तु दशेन्द्रियाणि बभूवुः, ततः खादिभ्यः पञ्चार्थाः शब्दादयः पूर्व्वपूर्व्वभूतानुप्रवेशाच्च पञ्च भूतानि बभूवुः इति। तदुक्तं मुण्डकोपनिषदि। दिव्यो ह्यमूर्त्तः पुरुषः स बाह्याभ्यन्तरो ह्यजः। अप्राणो ह्यमनाः शुभ्रो ह्यक्षरः परतः परः। एतस्माज्जायते प्राणो मनः सर्व्वेन्द्रियाणि च। खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणीति। एतदेवाभिप्रेत्याह—तेषामित्यादि। तेषां खादीनां मध्ये पूर्व्वः खनामा धातुः दिक्कालसंयोगात् किञ्चित् स्थूलो भूत्वा किञ्चिदभिव्यक्तशब्द एको गुणो यस्य स एकगुणः। किञ्चिदभिव्यक्तशब्दैकगुण आकाशोपादानाकाशः शुद्ध एव न मिश्रः। परे परे धातौ वाय्वादौ गुणवृद्धिः। खापेक्षया वायौ गुणवृद्धिर्वाय्वपेक्षया तैजसि गुणवृद्धिस्तेजोऽपेक्षयाप्सु गुणवृद्धिर्जलापेक्षया क्षितौ गुणवृद्धिः। ननु परे परे धातौ खाद्यपेक्षया कथं गुणवृद्धिः स्यात् कियद् गुणवृद्धिर्वा स्यादित्यत आह—पूर्व्व इत्यादि। गुणिषु खापेक्षया परपरगुणिषु स्पर्शादिमत्सु वाय्वादिषु पूर्व्वः पूर्व्वपूर्व्वः खादिः धातुः क्रमशः स्मृतः अनुप्रविष्टत्वेन स्मृतः। ननु किं पूर्व्वपूर्व्वधातुः स्वस्वगुणं विहाय स्वरूपांशमात्रेणानुप्रविष्टः किमथ सगुण एवेत्यत आह—पूर्व्वगुणश्चैवेति। निरुक्तः शब्दादिर्यो यो यस्य यस्य पूर्व्वस्य पूर्व्वस्य गुणः स स चैव क्रमशो गुणिषु तत्र तत्र परे परे स्पर्शादिगुणमात्रजातादौ धातौ अनुप्रविष्टत्वेन स्मृतः। एतत्कारेण खादीनां पूर्व्वपूर्व्वधातूनामनभिव्यक्तगुणाभिव्यक्तिव्यवच्छेदः। खं हि पूर्व्वं न परं वाय्वादिश्च पूर्व्वपूर्व्वापेक्षया परः परपरापेक्षया तु पूर्व्व इति। तथा च खं शब्दैकगुणं शुद्धं भूतमस्ति। वायुः शब्दस्पर्शगुणस्तेन द्विगुणो

मत्यं खादीनां नैसर्गिका गुणाः ज्ञेयाः। यस्तु गुणोत्कर्षोऽभिधातव्यः, स हि अनुप्रविष्टभूतसम्बन्धादेव। तेन पृथिव्यां चतुर्णां तत्प्रवेशात् पञ्चगुणत्वम्। एवं जलादावपि चतुर्गुणत्वादि ज्ञेयम्।

नैसर्गिकं गुणमभिधाय भूतान्तरप्रवेशकृतं गुणमाह—तेषामित्यादि। एकगुणः पूर्व्व इति पूर्व्वो धातुस्वरूपः शब्दैकगुणः। पुंलिङ्गता च खादीनां धातुरूपताबुद्धिस्थीकृतत्वात्, उक्तं हि—खादयश्चेतनाषष्ठा धातवः इति। यथा यथा च परत्वम् तथा तथा च गुणवृद्धिः यथासंख्यम्। ननु एतावताप्येकगुणत्वद्विगुणत्वादि न नियमेन ज्ञायते, को गुणः क्व भूत

मिश्रो भवति। ज्योतिः शब्दस्पर्शरूपगुणं तेन त्रिगुणं मिश्रं भूतं भवति। आपः शब्दस्पर्शरूपरसगुणास्तेन चतुर्गुणाः मिश्राश्च भवन्ति। क्षितिः शब्दादि-पञ्चगुणा मिश्रा च भवति। इत्येवं पञ्चभूतान्यव्यक्ताज्जात आत्मा महांस्तद्-विशेषश्चित्तमहङ्कारश्चेति त्रयस्तथाहङ्कारिकाणि मनोदशेन्द्रियाणीत्येकोनविंशति-मुखः शब्दमात्राद्यात्मकानि पञ्च भूतानि सप्तधा चाङ्गानीति सप्ताङ्गोऽन्तःप्रज्ञः प्रविविक्तभुक् स्वप्नस्थानोऽन्तरात्मा तैजसो नाम षड्धातुः पुरुषः। तत्रा-व्यक्ताख्यश्चेतनाधातुः शेषाणि पञ्च महाभूतानीति षड्धातव इति। मनुनापि अनुप्रवेशेन पूर्व्वपूर्व्वस्य परपरधातौ मिश्रत्वमुक्तम्। तद् यथा—मनः सृष्टिं प्रकुरुते चोद्यमानं सिसृक्षया। आकाशं जायते तस्मात् तस्य शब्दगुणं विदुः। आकाशात् तु विकुर्व्वाणात् सर्व्वगन्धवहः शुचिः। बलवान् जायते वायुः स वै स्पर्शगुणो मतः। वायोरपि विकुर्व्वाणाद् विरोचिष्णु तमोनुदम्। ज्योति-रुत्पद्यते भास्वत् तद्रूपगुणमुच्यते। ज्योतिषश्च विकुर्व्वाणादापो रसगुणाः स्मृताः। ताभ्यो गन्धगुणा भूमिरित्येषा सृष्टिरादितः। इत्यस्मात् पूर्व्वमुक्तम्। आद्याद्यस्य गुणांस्त्वेषामवाप्नोति परः परः। यो यो यावतिथश्चैषां स स तावद्-गुणः स्मृतः॥ इत्युक्तम्। एवं मुण्डककाठकोपनिषदि च—एतस्माज्जायते प्राणो मनोबुद्धीन्द्रियाणि च। खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी। इत्युक्तम्। एषां शब्दगुणस्यानभिव्यक्तत्वात् तद्गुणस्याकाशस्यानुप्रवेशेऽपि शब्दस्याभि-व्यक्त्यभावाद् द्व्यात्मकादिवाय्वादिषु द्वित्रिचतुःपञ्चगुणा उक्ताः, कणादेन वैशेषिके तु नोक्ताः। स्पर्शवान् वायुश्चलः, तेजो रूपस्पर्शवत्, रूपरसस्पर्शवत्य आपो द्रवाः, रूपरसगन्धस्पर्शवती पृथिवीति। तथा स्पर्शश्च वायोर्लिङ्गम्, तेजसो रूपम्, अपां रसः, पृथिव्या गन्ध इति। द्व्यात्मकादिषु शब्दानभिव्यक्त-त्वान्न कणादेनोक्तम्। मन्वादिभिस्तु नागुणं द्रव्यमुत्पद्यते इति ज्ञापनार्थं शब्दगुण आकाश उपदिष्ट इति न विरोध इति॥ ७॥

इत्याह—पूर्व्वं इत्यादि। गुणिषु खादिषु धातुषु पूर्व्वो गुणः क्रमेण यथासंख्यं वर्त्तते, न केवलं पूर्व्वः, किन्तु पूर्व्वस्यापि यो गुणः, स च पूर्व्वगुण उत्तरे भूते वर्त्तते। तेन खे पूर्व्वपूर्व्वः शब्द-गुणो वर्त्तते, वायौ तु स्पर्शः क्रमप्राप्तः पूर्व्वो भवति, पूर्व्वगुणश्च शब्द इति द्विगुणत्वम्। एवमन्यादौ च ज्ञेयम्। गन्धस्तूत्तरगुणान्तराभावात् न पूर्व्वो भवति, तथापि "गन्धश्च तद्गुणाः" इति ग्रन्थे तद्गुणाः इतिपदापेक्षया गन्धस्य पूर्व्वत्वं कल्पनीयम्। किंवा पूर्व्वं इति च्छत्रिणो गच्छन्तीति-न्यायेनोक्तम्, तेन, अपूर्व्वोऽपि गन्धः क्रमागतः पृथिव्यां ज्ञेयः॥ ७॥

खरद्रवचलोष्णत्वं भूजलानिलतेजसाम् ।
आकाशस्याप्रतीघातो दृष्टं लिङ्गं यथाक्रमम् ॥
लक्षणं सर्व्वमेवैतत् स्पर्शनेन्द्रियगोचरः * ।
स्पर्शनेन्द्रियविज्ञेयः स्पर्शो हि सविपर्य्ययः ॥ ८ ॥

गङ्गाधरः—एवं पूर्व्वपूर्व्वानुप्रवेशे द्विगुणादित्वेऽपि यो योऽपरगुणोऽभिव्यज्यते तज्ज्ञापनार्थमाह—खरेत्यादि। पूर्व्वपूर्व्वानुप्रविष्टानां भूजलानिलतेजसां खरत्वादिकं क्रमेण लिङ्गमनुमानकरणमसाधारणम्। आकाशस्य सर्व्वथैवामिश्रस्याप्रतीघातोऽप्रतिहननमस्पर्शनमिति यावत् लिङ्गं दृष्टम्। न गुणान्तरमभिव्यक्तमाकाशस्येति पृथगत्र वचनमिदं सर्व्वदाप्यमिश्रभूतत्वख्यापनार्थम्। अमिश्राणान्तु भूजलानिलतेजसां खरद्रवचलोष्णत्वानि गुणा अनभिव्यक्तत्वेन सन्तोऽप्यनभिव्यक्तत्वान्न लिङ्गानि, मिश्रत्वे त्वभिव्यक्तत्वात् लिङ्गानि। अप्रतीघातस्त्वाकाशस्य सूक्ष्मत्वाच्छब्दस्यानैन्द्रियकत्वेऽपि ऐन्द्रियकत्वेन लिङ्गम्। अमिश्राणां खादीनां शब्दादयो गुणा अनैन्द्रियका आप्तोपदेशगम्यत्वेन लिङ्गानि भवन्त्यपि ऐन्द्रियकलिङ्गेनानुमानं शिष्याणां सर्व्वेषाञ्च सुगममित्यतः शब्दादीनां लिङ्गत्वाभिधानं न कृत्वा खरत्वादीनां मिश्रभूम्यादीनाम् अमिश्राकाशाद्यनुमानार्थं लिङ्गत्वमुपदिष्टमिति। स्थूलभूतैः सूक्ष्मभूतानां कार्य्यैरनुमानं भवति। साङ्ख्येऽप्युक्तम्। अचाक्षुषाणामनुमानेन बोधः, स्थूलात् पञ्चतन्मात्रस्येति।

ननु खरत्वादीनां कस्येन्द्रियस्य ग्राह्यत्वमित्यत आह—लक्षणमित्यादि। एतत् खरद्रवचलोष्णत्वाप्रतीघातं सर्व्वं भूजलानिलतेजोगुणानां लक्षणं स्पर्शनेन्द्रियगोचरः। ननूक्तं यद्‌-यदात्मकमिन्द्रियं तत्तदात्मकमेवार्थं विशेषादनुधावतीति। तेन खरद्रवचलोष्णत्वानि स्पर्शविशेषान् स्पर्शनेन्द्रियं गृह्णातु आकाशस्याप्रतीघातस्तु न स्पर्शभेदः स च कथं गृह्णीयात्? न च स्पर्शविशेषोऽप्रतीघातो वक्तुं शक्यते शुद्धे गगने तदसत्त्वात् न वामिश्रम्

चक्रपाणिः—भूतानामसाधारणं लक्षणमाह—खरेत्यादि। अप्रतीघातोऽप्रतिहननं अस्पर्शत्वमिति यावत्, स्पर्शवद्धि गतिविघातकं भवति, नाकाशः, अस्पर्शवत्त्वात्। सर्व्वमेवैतदिति खरत्वादि। स्पर्शनेन्द्रियगोचरमिति स्पर्शनेन्द्रियज्ञेयम्। कथमेतत् सर्व्वं स्पर्शनेन्द्रियज्ञेयमित्याह—स्पर्शनेत्यादि। सविपर्य्यय इति संस्पर्शाभाव इत्यर्थः। यदिन्द्रियं यद्

* स्पर्शनेन्द्रियगोचरम् इति चक्रपाणिः।

आकाशं वाय्वादिवदस्ति इत्याशङ्क्य आह—स्पर्शनेन्द्रियविज्ञेय इति। विपर्य्ययः स्पर्शविपर्य्ययः स चास्पर्शोऽप्रतीघात एव सोऽपि स्पृश्यानां स्पर्शानुपलब्ध्या स्पर्शनेन्द्रियेण विज्ञायते। यथा गृहे यदस्ति तत् दृश्यते, यन्न दृश्यते तन्नास्तीति उच्यते इति। नन्वेवमस्त्वाकाशीयः शब्दोऽपि स्पर्शनेन्द्रियविज्ञेयोऽस्त्विति चेन्न, आकाशीयो हि शब्दो न खरद्रवादिस्पर्शविपर्य्ययः। स्वार्थविपर्य्ययो हि इन्द्रियेण गृह्यते न सर्व्व इति, सुतरां स्पर्शनेन्द्रियेणापि न गृह्यते। वायव्यस्तु शब्दोऽनुप्रविष्टाकाशस्याव्यक्तशब्दत्वेनाव्यक्त एव तस्मान्न श्रोत्रेण न वा स्पर्शनेन गृह्यते। तैजसाप्यपार्थिवास्तु शब्दा द्व्यणुकवदनुप्रविष्टवायोस्तेजसि प्रवेशेन त्रसरेणुवत् तैजसः शब्दोऽथ तत्तेजोऽनुप्रवेशादपां शब्दस्तज्जलानुप्रवेशाच्च भौमशब्दश्च न तेजोऽम्बुभूमिष्वभिव्यज्यते तेन न श्रोत्रेण गृह्यन्ते न वा स्पर्शनेन्द्रियेण। श्रोत्रं हि गगनाधिकपञ्चभूतमयं स्थूलं स्थूलेऽभिव्यक्त शब्दं गृह्णाति न त्वनभिव्यक्तं यद्यद्रूपं तत्तादृरूप्येणाथ गृह्णातीति नियमात्। स्पर्शनेन्द्रियस्तु स्पर्शं गृह्णाति न शब्दमिति। एवं चक्षुरादिकं पूर्व्वपूर्व्वभूतगुणं न गृह्णातीति। अथ अनभिव्यक्तशब्दमात्रगुणमाकाशमप्रतिहननीयामूर्त्तिमन्निर्गमनप्रवेशलक्षणम्। स्पर्शमात्रगुणः प्रतिहननलक्षणो वायुः, रूपमात्रगुणं प्रतिहननीयमूर्त्तिमत् तेजः, रसमात्रगुणाः प्रतिघातयोग्यमूर्त्तिमत्य आपः, गन्धमात्रगुणा प्रतिघातयोग्यमूर्त्तिमती क्षितिरिति। तत्र दिक्कालयोगाद् विशेषरूप एषोऽप्रतिघातलक्षण आकाशो निष्क्रमणप्रवेशलक्षणो भवति। तस्य वायावनुप्रवेशादाकाशवायुयोगाद् द्व्यात्मको वायुर्यदा भवति, तदा तत्र शब्दः पूर्व्वतस्तु विशिष्टोऽनभिव्यक्त एव वर्त्तते स्पर्शश्च शीतश्लक्ष्ण भवति। तस्य च द्व्यात्मकस्य वायोस्तेजस्यनुप्रवेशाद् वायुज्योतिःसंयोगाद् यदा त्र्यात्मकं तेजो भवति, तदा तत्राकाशवायुशब्दाभ्यां विशेषश्चानभिव्यक्तश्चैव शब्दो भवति, स्पर्शश्चोष्णो भवति रूपश्च लोहितमिति। तस्य च त्र्यात्मकस्य तेजसोऽप्सु अनुप्रवेशात् खवायुज्योतिर्जलानां संयोगाच्चतुरात्मकं जलं यदा भवति, तदा तत्र खवायुज्योतिषां शब्दतो विशिष्टश्चानभिव्यक्त एव शब्दो भवति, स्पर्शश्च

गृह्णाति, तत् तस्याभावमपि गृह्णाति। तेन आकाशस्यास्पर्शत्वं स्पर्शेन्द्रियग्राह्यमिति युक्तम्। द्रवत्वं चलत्वञ्च सांख्यमते स्पर्शनग्राह्यत्वात्, स्थूलभूतवातधर्म्मः स्पर्श एव। यच्च स्पर्शनेन गृह्यते तत् सर्व्वं स्पर्शो महाभूतवातपरिणाम एव। एतानि खादीनि च सूक्ष्माणि तन्मात्ररूपाणि ज्ञेयानि। स्थूलभूतानि तु खादीनि तत्र विशेषतया सूक्ष्मरूपाणि च तन्मात्राणि अविशेषतयोक्तानि। वचनं हि—"तन्मात्राण्यविशेषास्तेभ्यो भूतानि पञ्च पञ्चभ्यः। एते स्मृता॥

**गुणाः शरीरे गुणिनां निर्दिष्टाश्चिह्नमेव च ।**
**अर्थाः शब्दादयो ज्ञेया गोचरा विषया गुणाः ॥ ६ ॥**

शीतो द्रवत्वञ्चाभिव्यज्यते, रूपञ्च शुक्लं भवति। रसश्च साधारणरूपश्चाव्यक्त एव। तस्य च चतुरात्मकस्य जलस्य भूमावनुप्रवेशात् पञ्चानां खादीनां संयोगेन पञ्चात्मिका भूमिर्यदा भवति, तदा तत्र खवायुज्योतिर्जलानां शब्दतो विशिष्टश्चाव्यक्तश्चैव शब्दो भवति, स्पर्शश्च खरः, कृष्णञ्च रूपं, रसश्च जलरसाद्विशिष्टश्चाव्यक्तश्च भवति, गन्धश्च साधारण एव किञ्चित्स्थूलो भवति ॥ ८ ॥

गङ्गाधरः—गुरुत्वादयस्तु गुणाः केषां कुतो वा जायन्ते इत्यत आह—गुणाः शरीर इत्यादि। शरीरे पञ्चभूतविकारसमुदाये तच्छरीरारम्भकाणां गुणिनाम् आकाशादीनां गुणा एव गुर्व्वादयश्चिह्नं निर्दिष्टा आत्रेयभद्रकाप्यीये पार्थिवादिक्रमेण पृथगुक्ताः, शरीरविचयशारीरे च वक्ष्यन्ते। तत्रेमे शरीरधातुगुणाः संख्यासामर्थ्यकराः। तद् यथा। गुरुलघुशीतोष्णस्निग्धरुक्षमन्दतीक्ष्ण-स्थिरसर-मृदुकठिन-विशदपिच्छिलश्लक्ष्णखरसूक्ष्मस्थूलसान्द्रद्रवा इति। आत्रेयभद्रकाप्यीये चोक्ताः। तद् यथा। सर्व्वं द्रव्यं पाञ्चभौतिकमिति कृत्वा तत्र द्रव्याणि गुरुखरकठिनमन्दस्थिरविशदसान्द्रस्थूलगन्धगुणबहुलानि पार्थिवानीति। १। तेन पार्थिवद्रव्यारम्भकभूमेः पञ्चात्मिकाया गुरुकठिनमन्दस्थिरविशदसान्द्रस्थूला इति सप्त गुणाः शेषचतुर्भूतसंसर्गतः कार्य्यगुणा अभिव्यज्यन्ते ये प्रागनभिव्यक्ता आसन्। शब्दखरस्पर्शकृष्णरूपास्फुटरसाः पूर्व्वभूतसंसर्गजाः, गन्धश्चाव्यक्तो यो नैसर्गिकः स पूर्व्वतो विशिष्टश्चाव्यक्त एव साधारणः पार्थिवे पाञ्चभौतिके ते शब्दादय उदात्तादिदशविधशब्दविविधस्पर्शरूपरसगन्धा व्यज्यन्ते। ततस्ते गुणा भूमेश्चिह्नम्। द्रवस्निग्धशीतमन्दसरसान्द्रमृदुपिच्छिलरसगुणबहुलान्याप्यानीत्यनेनोक्ताः अपां स्निग्धमन्दसरसान्द्रमृदुपिच्छिलाः षड् गुणाः शेषभूतसंसर्गात् पाञ्चभौतिकेऽभिव्यज्यन्ते। ये प्रागनभिव्यक्ता अप्स्वासन्। शब्दस्पर्शरूपगुणास्तु पूर्व्वभूतसंसर्गजा विशेषेण

विशेषाः शान्ता घोराश्च मूढाश्च" इति। तेन इहापि खादीनि 'तन्मात्र'शब्देनोक्तानि सूक्ष्मत्वेन बोद्धव्यानि ॥ ८ ॥

चक्रपाणिः—भूतानां सूक्ष्माणां शरीरस्थानां लिङ्गान्तराण्याह—गुणा इत्यादि। गुणाः शब्दादयः। गुणिनामिति सूक्ष्मरूपभूतानामेव। गुणग्रहणात् शब्दादयश्च व्यक्ताः सूक्ष्माणां

उदात्तादिशब्दविविधस्पर्शरूपरसविशेषाः कार्य्यगुणा जायन्ते। ततस्ते गुणा अपां चिह्नमेव। २। एवमुष्णतीक्ष्णसूक्ष्मलघुरुक्षविशदरूपगुणबहुलान्याग्नेयानि इत्यनेनोक्तास्तैजसद्रव्यारम्भे तेजसस्तीक्ष्णसूक्ष्मलघुरुक्षविशदगुणाः शेषभूतसंसर्गादभिव्यज्यन्ते, पाञ्चभौतिके तैजसे द्रव्ये ये प्रागनभिव्यक्तास्तेजस्यासन्। शब्दोष्णस्पर्शौ तु पूर्व्वभूतसंसर्गजौ, तत्र शब्दो नानाविधोऽभिव्यज्यते तथोष्णश्च। रूपञ्च नैसर्गिकं लोहितं पूर्व्वभूतसंसर्गजं श्वेतादिनानाविधं जायते। ततस्ते तेजसो लिङ्गम्। ३। तथा लघुशीतरुक्षखरविशदसूक्ष्मस्पर्शगुणबहुलानि वायव्यानीत्यनेनोक्ताः पाञ्चभौतिकवायव्यद्रव्यारम्भे वायोर्लघुशीतरुक्षखरविशदसूक्ष्माः षड् गुणाः शेषभूतसंसर्गादभिव्यज्यन्ते ये प्राग् अनभिव्यक्ता वायावासन्। स्पर्शस्तु नैसर्गिकः पूर्व्वभूतसंसर्गाच्छीतश्चलश्च जायते पुनर्विविध एव जायते। शब्दश्चाव्यक्तः पूर्व्वभूतसंसर्गजः पुनर्विविध एव जायते। ततस्ते गुणा वायोश्चिह्नमिति। ४। एवं मृदुलघुसूक्ष्मश्लक्ष्णशब्दगुणबहुलान्यान्तरीक्ष्याणीत्यनेनोक्ताः पाञ्चभौतिकान्तरीक्ष्यद्रव्यारम्भेऽन्तरीक्षादेव मृदुलघुसूक्ष्मश्लक्ष्णाः शेषभूतसंसर्गादभिव्यज्यन्ते ये प्रागनभिव्यक्ता अन्तरीक्ष आसन्। शब्दो नैसर्गिकः कार्य्यभूतो दशविध एव जायते इति, ततस्ते गुणा आकाशस्य चिह्नमिति। ५। नैते गुणा इन्द्रियारम्भकेषु आत्मजखादिषु वर्त्तन्ते। न चैकैकाधिकपञ्चखाद्यारम्भेऽपीन्द्रियेषु नान्ये गुणाः संसर्गतोऽभिव्यज्यन्ते यथा द्व्यात्मकादिषु परस्परानुप्रवेशाभावात्। परस्परसंयोगान्तु परस्परानुग्रहाद् भूयसाल्पगुणावजयाच्च खादेरेकैकगुणशब्दादिरेव श्रोत्रादिषु स्थूलरूपेण जायते। तस्मान्नान्ये गुणा इन्द्रियाणामर्था भवन्ति।

के पुनरर्था इत्यत आह—अर्था इत्यादि। यथा पञ्चमहाभूतारब्धेष्विन्द्रियेषु पाञ्चभौतिकशब्दादयः सन्ति तथा पाञ्चभौतिकेषु द्रव्येष्वान्तरीक्ष्यवायव्यतैजसाप्यपार्थिवेषु ये शब्दादयः कार्य्यभूता विशेषास्तेऽर्था इन्द्रियाणां विषया गोचराश्च उच्यन्ते न तु महाभूतस्था एकद्व्याद्यात्मकभूतस्था वा, इन्द्रियाणां तथाभावाभावात्। तस्मान्न ते शब्दादय इन्द्रियैर्ग्रहीतुं शक्यन्ते। अत एव कार्य्यभूतशब्दादीनामिन्द्रियार्थत्वं न कारणभूतशब्दादीनां, तस्मादतीन्द्रियत्वं तेषाम्। अत एवोक्तम् रसनार्थो रस इति पूर्व्वाध्याये, तथात्रेयभद्रकाप्यीये च—यं पुनः पञ्चानामिन्द्रियार्थानां जिह्वावैषयिकं भावमाचक्षते इति। कणादेनापि

शरीरस्थानां भूतानां लक्षणं भवन्तीति वाक्यार्थः। अर्थानाह—अर्था इत्यादि। अर्थशब्देन तु ये शब्दादयो विशेषास्ते स्थूलत्वादिरूपा एव ज्ञेयाः। तेन आकाशपरिणाम एव शब्दः, वातपरिणामः

वशेषिके कारणगुणनिर्देशे रूपरसगन्धस्पर्शा इत्यादिसूत्रे शब्दो न निर्दिश्य कार्य्यस्य शब्दस्य परीक्षायाम् श्रवणेन्द्रियग्राह्यो योऽर्थः स शब्द इति । एवं स्पर्शनार्थः स्पर्शश्चक्षुरर्थो रूपं घ्राणार्थो गन्ध इति । गौतमेनाक्षपादेनाप्युक्तम् । घ्राणरसनचक्षुस्त्वक्छ्रोत्राणीन्द्रियाणीति भूतेभ्यः । पृथिव्यापस्तेजो वायुराकाशमिति भूतानि । गन्धरसरूपस्पर्शशब्दाः पृथिव्यादिगुणास्तदर्थाः । इति । तत्र भूतगुणविशेषोपलब्धेस्तादात्म्यमिति व्याख्यातं वात्स्यायनेन । दृष्टो हि वाय्वादीनां भूतानां गुणविशेषोऽभिव्यक्तिनियमः । वायुः स्पर्शव्यञ्जकः, तेजो रूपव्यञ्जकम्, आपो रसव्यञ्जिकाः, पार्थिवं किञ्चिद्द्रव्यं कस्यचिद् द्रव्यस्य गन्धव्यञ्जकम् । अस्ति चायमिन्द्रियाणां भूतगुणविशेषोपलब्धिनियमः । तेन भूतगुणविशेषोपलब्धेर्मन्यामहे भूतप्रकृतिकानीन्द्रियाणि, नाव्यक्तप्रकृतीनीति । गन्धादयः पृथिव्यादिगुणास्तदर्थो इत्युपदिष्टम् । उद्देशश्च पृथिव्यादीनां सर्व्वगुणत्वे समान इत्यत आह—गन्धरसरूपस्पर्शशब्दानां स्पर्शपर्य्यन्ताः पृथिव्यप्तेजोवायूनां पूर्व्वं पूर्व्वमपोह्य चाकाशस्योत्तरः । वात्स्यायनेन व्याख्यातम् । न स्पर्शपर्य्यन्तानामिति विभक्तिविपरिणामः । गन्धादीनां स्पर्शपर्य्यन्ताः पृथिव्यप्तेजोवायूनां यथाक्रमं गुणाः—पृथिव्या गन्धोऽपां रसस्तेजसो रूपं वायोः स्पर्शः आकाशस्योत्तरशब्दः, इत्येवं पञ्चमहाभूतानां पञ्च गुणाः । तेषां गन्धरसरूपस्पर्शशब्दानां पूर्व्वं पूर्व्वमपोह्य च पृथिव्यप्तेजोवायूनां गुणाः, पृथिव्या रसरूपस्पर्शशब्दाश्च, अपां रूपस्पर्शशब्दाश्च गुणास्तेजसः स्पर्शशब्दौ, वायोः शब्दश्चेति । पञ्चगुणा पृथिवी, चतुर्गुणा आपः, त्रिगुणं तेजः, द्विगुणो वायुरेकगुण आकाशः । इति । न सर्व्वगुणानुपलब्धेः । नायं पञ्चचतुस्त्रिद्व्येकगुणनियोगः साधुः पृथिव्यादीनाम् । कस्मात्? सर्व्वगुणाऽनुपलब्धेः । यस्य भूतस्य ये गुणा न ते तदात्मकेनेन्द्रियेण सर्व्वे उपलभ्यन्ते । पार्थिवेन हि घ्राणेन न शब्दपर्य्यन्ता गृह्यन्ते । गन्ध एवैको गृह्यते । एवं शेषेष्वपीति । कथं तर्हीमे गुणा नियोक्तव्या इति । एकैकश्येनोत्तरोत्तरगुणसद्भावादुत्तरोत्तराणां तदनुपलब्धिः । गन्धादीनामेकैको यथाक्रमं पृथिव्यादीनामेकैकस्य गुणः । अतस्तदनुपलब्धिः । तेषां तयोस्तस्य चानुप-

स्पर्श इत्यादि ज्ञेयम् । शब्दादिग्रहणे आकाशादिग्रहणं यत्, तत् आकाशादिपरिणाम एव शब्दादय इत्युक्तमेव । एतेन यच्छ्रोत्रग्राह्यम्, तत् सर्व्वमाकाशं शब्दश्च । यत् स्पर्शेन गृह्यते, तत् सर्व्वं वायुः स्पर्शश्चेत्यादि ज्ञेयम् ॥ ९ ॥

लब्धिररिति, घ्राणेन पार्थिवेन न रसरूपस्पर्शशब्दानां, रसनेन रूपस्पर्शशब्दानां, चक्षुषा स्पर्शशब्दयोः, त्वचा शब्दस्येति। एकैकभूताधिकपाञ्चभूतात्मकत्वात् इन्द्रियाणाम्। कथं तर्हि अनेकगुणानि भूतानि गृह्णन्त इति—संसर्गाच्चानेक-गुणग्रहणम्। अबादिसंसर्गाच्च पृथिव्यादिषु रसादयो गृह्णन्ते। एवं सति नियमस्तर्हि न प्राप्नोति, संसर्गस्यानियमात्। चतुर्गुणा पृथिवी त्रिगुणा आपो द्विगुणं तेज एकगुणो वायुरेवं नियमश्चोपपद्यते। कथम्? अनुप्रविष्टं ह्यपरं परेण। पृथिव्यादीनां पूर्व्वं पूर्व्वमुत्तरोत्तरेणानुप्रविष्टम्, अतः संसर्गनियम इति। तच्चैतद्भूतसृष्टौ वेदितव्यम्। तथा चोक्तमाकाशानुप्रवेशाद्वायुर्नैसर्गिक-स्पर्शगुणः पुनः शब्दैकगुण इति द्विगुणः, एवं नैसर्गिकरूपगुणं तेजो द्विगुण-वायोः अनुप्रवेशात् सांसर्गिकद्विगुणमिति त्रिगुणं, तथा नैसर्गिकरसगुणा आपः त्रिगुणतेजोऽनुप्रवेशात् सांसर्गिकत्रिगुणा इति चतुर्गुणा आपः, एवं नैसर्गिकगन्धगुणा पृथिवी चतुर्गुणाऽबनुप्रवेशात् नैसर्गिकचतुर्गुणा इति पञ्चगुणा पृथिवीति। इदं त्रिसूत्री प्रतिपादितं प्रत्याचष्टे। न पार्थिवाप्ययोः प्रत्यक्षत्वात्। उक्तरूपेण भूतानां गुणनियमो न, कस्मात्? पार्थिवस्य द्रव्यस्य आप्यस्य च प्रत्यक्षत्वात्। महत्त्वानेकद्रव्यत्वाद् रूपाच्चोपलब्धिररिति। तैजसमेव द्रव्यं प्रत्यक्षं स्यात् न पार्थिवमाप्यं वा रूपाभावात्। तैजसवत् तु पार्थिवाप्ययोः प्रत्यक्षत्वान्न संसर्गादनेकगुणग्रहणं भूतानाम्। इति। भूतान्तररूपकृतञ्च पार्थिवाप्ययोः प्रत्यक्षत्वं ब्रुवतः प्रत्यक्षो वायुः प्रसज्येत। नियमे वा कारण-मुच्यतामिति। रसयोर्वा पार्थिवाप्ययोः प्रत्यक्षत्वात्। पार्थिवे रसः षड्-विधः, आप्ये मधुर एवेति। न चैतत् संसर्गाद्भवितुमर्हति। रूपयोर्वा पार्थिवा-प्ययोः प्रत्यक्षत्वात् तैजसरूपानुगृहीतयोः, संसर्गे हि व्यञ्जकमेव रूपम्। न व्यङ्ग्यमस्ति। इति। एकानेकविधत्वे च पार्थिवाप्ययोः प्रत्यक्षत्वाद्रूपयोः, पार्थिवं हरितलोहितपीताद्यनेकविधं रूपम्, आप्यन्तु शुक्लमप्रकाशकम्, न चैतदेक-गुणानां संसर्गे सत्युपलभ्यत इति। उदाहरणमात्रञ्चैतत्, अतः परं प्रपञ्चः। स्पर्शयोर्वा पार्थिवतैजसयोः प्रत्यक्षत्वात् पार्थिवोऽनुष्णाशीतः स्पर्शः, उष्णस्तेजसः प्रत्यक्षः; न चैतदेकगुणानामनुष्णाशीतस्पर्शेन वा वायुना संसर्गेणोपपद्यते। इति। अथवा पार्थिवाप्ययोर्द्रव्ययोर्व्यवस्थितगुणयोः प्रत्यक्षत्वात् चतुर्गुणं पार्थिवं द्रव्यं त्रिगुणमाप्यं प्रत्यक्षम्; तेन तत्कारणमनुमीयते। तथाभूतं भूतमिति। तस्य कार्य्यं लिङ्गं कारणभावाद्धि कार्य्यभाव इति। एवं तैजसवायव्ययोर्द्रव्ययोः प्रत्यक्षत्वात् गुणव्यवस्थायास्तत्कारणे द्रव्ये व्यवस्थानुमानमिति। [दृष्टश्च

विवेकः। पार्थिवाप्ययोः प्रत्यक्षत्वात् पार्थिवं द्रव्यमबादिभियुक्तं प्रत्यक्षतो गृह्यते। आप्यञ्च त्रिभिः। पराभ्यां तैजसम्। वायव्यमाकाशेन। न चैकैकगुणं गृह्यते इति। निरनुमानन्त्वनुप्रविष्टं ह्यपरं परेणेत्येतदिति। नात्र लिङ्गमनुमापकं गृह्यत इति। येनैतदेवं प्रतिपद्येमहि। यच्चोक्तम् अनुप्रविष्टं ह्यपरं परेणेति। भूतसृष्टौ वेदितव्यं न साम्प्रतमिति नियमकारणाभावाव अयुक्तम्। दृष्टन्तु साम्प्रतमप्यपरं परेणानुप्रविष्टमिति, वायुनानुप्रविष्टं तेज इति। अनुप्रविष्टत्वं योगः। स च द्वयोः समानो वायुनानुप्रविष्टत्वात् स्पर्शवत् तेजः, न च तेजसानुप्रविष्टत्वाद् रूपवान् वायुरिति नियमकारणं नास्तीति। दृष्टञ्च तैजसेन स्पर्शेन वायव्यस्पर्शस्याभिभवाद् ग्रहणमिति। न च तेनैव तस्याभिभव इति। तदेवं न्यायविरुद्धं प्रवादं प्रतिषिध्य सर्व्वगुणानुपलब्धेरिति चोदितं समाधीयते। पूर्व्वपूर्व्वगुणोत्कर्षात् तु तत् तत्प्रधानम्। अस्मान्न सर्व्वगुणोपलब्धिः। घ्राणादीनां पूर्व्वपूर्व्वगुणोत्कर्षात् तत्तत्प्रधानम्। का प्रधानता? विषयग्राहकत्वम्। को गुणोत्कर्षः? अभिव्यक्तौ समर्थत्वम्। यथा वाह्यानां पार्थिवाप्यतैजसानां द्रव्याणां पञ्चगुणचतुर्गुणत्रिगुणानां न सर्व्वगुणव्यञ्जकत्वम्, गन्धरसरूपोत्कर्षात् तु यथाक्रमं गन्धरसरूपव्यञ्जकत्वम्, एवं घ्राणरसनचक्षुषां न सर्व्वगुणग्राहकत्वम्। गन्धरसरूपोत्कर्षात् तु यथाक्रमं गन्धरसरूपग्राहकत्वम्। तस्माद् घ्राणादिभिर्न सर्व्वेषां गुणानामुपलब्धिरिति। यस्तु प्रतिजानीते गन्धगुणत्वाद् घ्राणं गन्धं गृह्णाति एवं रसनादिष्वपीति। तस्य यथागुणयोगं घ्राणादिभिर्गुणग्रहणं न प्रसज्यते इति किं कृतं पुनर्व्यवस्थानम्? किञ्चित् पार्थिवमिन्द्रियं न सर्व्वाणि। कानिचिदाप्यतैजसवायव्यान्तरीक्ष्याणीन्द्रियाणि, न सर्व्वाणि। तद्व्यवस्थानन्तु भूयस्त्वात्। अथ निर्व्वृत्तिसमर्थस्य प्रविभक्तस्य द्रव्यस्य संसर्गे पुरुषसंस्कारिते भूयस्त्वम्। दृष्टो हि प्रकर्षे भूयस्त्वशब्दः। प्रकृष्टो यथा विषयो भूयानित्युच्यते। यथा पृथगर्थक्रियासमर्थानि पुरुषसंस्कारवशाद्विषौषधिमणिप्रभृतीनि द्रव्याणि निर्व्वर्त्तन्ते, न सर्व्वं सर्व्वार्थम्। एवं पृथग्विषयग्रहणसमर्थानि घ्राणादीनि निर्व्वर्त्तन्ते न सर्व्वविषयग्रहणसमर्थानीति। भूयस्त्वं हि शरीरारम्भाय भूतैः पञ्चभिः इन्द्रियाण्यारभ्यन्ते तेषां भूतानामेकैकस्य भूतस्य भूयस्त्वात् तद्व्यवस्थानं नियतविषयग्रहणव्यवस्थानं भूम्यधिकपञ्चभूतारब्धं घ्राणं भूमिगुणेन शेषगुणाभिभवाद् गन्धमेव गृह्णाति, एवमेवाधिकपञ्चभूतारब्धरसनमबगुणेनाधिकेन शेषगुणपरिभवाद् रसमेव गृह्णाति नान्यमर्थम्। तथा तेजोऽधिकपञ्चभूतारब्धं

या यदिन्द्रियमाश्रित्य जन्तोर्बुद्धिः प्रवर्त्तते ;
याति सा तेन निर्द्देशं मनसा च मनोभवा ॥

चक्षुस्तेजोगुणेनाधिकेन शेषभूतगुणाभिभवाद् रूपमेव गृह्णाति नेतरमर्थम्। वाय्वधिकपञ्चभूतारब्धं स्पर्शनं वायुगुणेनाधिकेन शेषभूतगुणावजयात् स्पर्शमेव गृह्णाति नेतरमर्थम्। तथाकाशाधिकपञ्चभूतारब्धं श्रोत्रमाकाशगुणेन भूयसा अशेषभूतगुणावजयात् शब्दमेव गृह्णाति नान्यमर्थमिति तदारम्भकद्रव्याणां भूयस्त्वात् तद्विषयग्रहणनियमव्यवस्थानं विरुद्धगुणसमवाये भूयसाल्पमवजीयते इति। तर्हि कथं तत्तद्भूतारब्धद्रव्यग्रहणे नियमः। अस्तु तदारम्भकभूतानामेकैकस्य भूतस्य भूयस्त्वात् तु। तेषां गुणानां ग्रहणे तु कथं नियमः स्यादिति। सगुणानामिन्द्रियभावात्। येषां भूतानामेकैकभूताधिकानामिन्द्रियरूपेणाभिनिर्व्वृत्तिः स्यात् तेषां सगुणानामेव भूतानामिन्द्रियभावः स्यात् न तु निर्गुणानां, ते हि गुणाः कार्य्यनिर्व्वाहे शक्तिरूपाः। तेन घ्राणं स्वेन गन्धेन शक्तिभूतेन समानार्थकारिणा सह बाह्यं गन्धं गृह्णातीति। एवं शेषाणामपि। तेन च स्वस्वगुणान् घ्राणादीनि गन्धादीन् न गृह्णन्ति। स्वगुणेन स्वगुणसहयोगाभावात् तु तेनैव तस्याग्रहणाच्च। स्वगुणेन स्वगुणस्य ग्रहणाभावाच्च। सगुणानामिन्द्रियभावः।

तत्राह वादी—न शब्दगुणोपलब्धेः। स्वगुणान्नोपलभन्त इन्द्रियाणीति न। शब्दगुणोपलब्धेः। उपलभ्यते हि शब्दः स्वगुणः श्रोत्रेणेति। तत्रोत्तरम्। तदुपलब्धिरितरेतरद्रव्यगुणवैधर्म्म्यात्। येन शब्देन गुणेन सहितमाकाशं श्रोत्रमिन्द्रियं भवति न स शब्द उपलभ्यते श्रोत्रेण। कर्णाविपिधाय यज्ज्वालाशब्दं शृणोति तत्पाणिपिधानेन ब्रह्मस्थशब्दश्रोत्रयोरितरेतरवैधर्म्म्यात् तदुपलब्धिरिति। यच्चक्षुर्निपीड़ने ज्योतिर्दृश्यते तच्चक्षुर्ज्योतिर्न चक्षुषो रूपमिति। न स्वगुणग्रहणमिन्द्रियाणामस्तीति ॥ ९ ॥

गङ्गाधरः—अथ शरीरे ये गुणास्ते यदि गुणिनां चिह्नं निर्द्दिष्टा अपरे बुद्ध्यादयस्तु गुणा न शरीरे कस्य गुणास्ते चिह्नानि वा भवन्ति ? उच्यते। प्रकृतिश्चाष्टधातुकीत्युक्तम्। तत्र षड्धातुपुरुषस्था ये खादयः पञ्च गुणाः पञ्च धातवस्तत्प्रकृतिका आत्मजाः पञ्च ये खादयः शरीरे तेषां विकारा दशेन्द्रियाणि

चक्रपाणिः—सम्प्रति प्रकृतिगणसंविष्टायाः बुद्धेरुपदर्शनार्थं तस्या बुद्धेर्वृत्तिभेदात् ज्ञानविशेषरूपाण्याह—येत्यादि। यदिन्द्रियमाश्रित्य इति यदिन्द्रियप्रणालिकामाश्रित्य महच्छब्दाख्यस्य

**भेदात् कार्य्येन्द्रियार्थानां बह्व्यो वै बुद्धयः स्मृताः ।**
**आत्मेन्द्रियमनोऽर्थानामेकैकसन्निकर्षजाः ॥**

अर्थाश्च पञ्च दर्शिताः। शरीरस्य प्रकृतयः पञ्च पितृजादीनि त्रिधा भूतानि वक्ष्यन्ते चतुर्विंशतिकपुरुषे प्रकृतय इहोपदेष्टव्यास्तत्र षष्ठधातुर्यश्चेतनाधातुः अव्यक्ताख्यस्तस्य महदादिगन्धमात्रपृथिव्यन्तैकोनविंशतिमुखानि, तत्र यदाहङ्कारिकं मनस्तस्मान्मनोऽन्तरं यज्जायते तद् दर्शितं मनो दशेन्द्रियाणीत्यनेन। यः पुनस्तत्राव्यक्तमात्मा स पुनरात्मकृतानि पञ्च भूतान्यादाय सप्ताङ्गमात्मान्तरमारभते। जागरितस्थानं वहिःप्रज्ञं वैश्वानराख्यं भूतात्मानम्। तथा तत्षड्धातुस्थषष्ठचेतनाधातुस्थो यो महान् स त्रिधाबुद्धिमारभते, धीधृतिस्मृतिभेदेन। यश्चाहङ्कारः स पुनरभिमानलक्षणमहङ्कारं गन्धर्वाख्यमज्ञानमारभते। इति षड्धातुपुरुषस्थाष्टधातुनिष्पन्ना प्रकृतिरष्टधा पञ्च खादय आत्मकृतास्तद्भूतोपाधिक आत्मा त्रिधाबुद्धिरहङ्कारश्चेति। तत्र बुद्धिश्चाहङ्कारश्च बुद्धिरुच्यते। सा पुनर्वाह्याभ्यन्तरे षड्विधरूपेण प्रवर्त्तते तदुक्तं प्राक् पञ्चेन्द्रियबुद्धयश्चक्षुर्बुद्ध्यादिकास्ताः पुनरिन्द्रियेन्द्रियार्थसत्त्वात्मसन्निकर्षजाः क्षणिका निश्चयात्मिकाश्चेति, इह चोक्ता मनोऽर्थसन्निकर्षजा षष्ठी बुद्धिस्तासां यथा निर्देशो लोके सिद्धस्तदाह—या यदिन्द्रियमित्यादि। जन्तोर्या प्रत्यगात्मस्था बुद्धिः सा बुद्धिर्यदिन्द्रियमाश्रित्य व्यक्ता सती प्रवर्त्तते, सा बुद्धिस्तेनेन्द्रियेण निर्देशं याति। यथा चक्षुर्बुद्धिः श्रवणबुद्धिः स्पर्शनबुद्धी रसनबुद्धिर्घ्राणबुद्धिरिति। इह पञ्चेन्द्रियाणीत्युक्तेरिन्द्रियपदेन मनोऽनभिधानादाह—मनसा चेति। मनोभवा आत्ममनोऽर्थसन्निकर्षजा या बुद्धिः सा मनसा निर्देशं याति; मानसबुद्धिरित्युच्यते। मूलभूता तु बुद्धिः प्रत्यगात्मस्थेति सप्त बुद्धयः। आसां षण्णां बुद्धीनां कार्य्येन्द्रियार्थानां कार्य्याणामिन्द्रियार्थानां घटपटादिस्थानां शब्दस्पर्शादीनां भेदादात्मेन्द्रियमनोऽर्थानामेकैकसन्निकर्षजाः श्रवणबुद्ध्यादिकास्ता बुद्धयो बह्व्य एव स्मृताः।

...न्तरस्य वृत्तिविशेषरूपाणि ज्ञानानीन्द्रियप्रणालिकया भवन्ति, तदिन्द्रियजन्यत्वेनैव तानि ...दिश्यन्ते—चक्षुर्बुद्धिः श्रोत्रबुद्धिरित्यादीनि। मनोभवा च बुद्धिश्चिन्त्यादिविषया मनसा निर्दिश्यते मनोबुद्धिरिति व्यपदिश्यत इति।

इन्द्रियमनोभेदेन षट्त्वं बुद्धीनां प्रतिपाद्य बुद्धिबहुत्वं प्राह—भेदादित्यादि। कार्य्यस्य इन्द्रियार्थस्य च भेदात् तत्सम्बन्धेन भिद्यमाना बह्व्यो बुद्धयो भवन्ति, कार्य्यं सुखदुःखभेदाः।

अङ्गुल्यङ्गुष्ठतलजस्तन्त्रीवीणानखोद्भवः।
दृष्टः शब्दो यथा बुद्धिर्दृष्टा संयोगजा तथा॥
बुद्धीन्द्रियमनोऽर्थानां विद्याद् योगधरं परम्।
चतुर्व्विंशतिको ह्येष मतः पुरुषसंज्ञकः॥ १०॥

घटीयशब्दश्रवणबुद्धिः घटीयस्पर्शस्पर्शनबुद्धिरित्येवमादयोऽपरिसङ्ख्येयाः स्मृताः। तत्रात्मेन्द्रियमनोऽर्थानां सन्निकर्षो द्विविधः समविषमयोगभेदात्। यदाहङ्कारबुद्ध्याभिभूयते धीधृतिस्मृतिबुद्धिस्तदा बुद्धेरयोगातियोगमिथ्यायोगात् अर्थसन्निकर्षो भवति। यदा नाभिभूयते तदा समयोगादर्थसन्निकर्षो भवति। ततो वाङ्मनःशरीरप्रवृत्तेरयोगातियोगमिथ्यायोगसमयोगा भवन्तीति। आसां बहुत्वे दृष्टान्तमाह—अङ्गुल्यङ्गुष्ठेत्यादि। अङ्गुष्ठग्रहणं प्राधान्यात् तद्ग्रहणेन शेषा अङ्गुलिशब्देनोच्यन्ते। तन्त्रीवीणानखोद्भवः शब्द एको यथाङ्गुल्यङ्गुष्ठतलजो बहुविधो दृष्टः श्रुतस्तथा संयोगजा आत्मेन्द्रियमनोर्थाना-मेकैकसन्निकर्षजा बुद्धिः कार्य्येन्द्रियार्थानां भेदाद् बहुविधा दृष्टा भवति। कुत एवं स्यादित्यत आह—बुद्धीत्यादि। बुद्धेरिन्द्रियाणां मनसोऽर्थानाञ्च योगधरं स्वभावं विद्यात्। बुद्धेर्यथाविधेनेन्द्रियेण मनसार्थेन च योगो भवति तथाविधरूपेण प्रवृत्तिर्भवति। इत्येषा चतुर्व्विंशतिकपुरुषस्था द्विविधा बुद्धिरनित्या उत्पत्तिधर्म्मकत्वात्। षड्धातुपुरुषस्था महदाख्याहङ्काराख्या च नित्या यावन्निर्व्वाणं स्थायित्वात्। एवं चतुर्व्विंशतिकः पुरुषोऽप्यनित्य उत्पत्तिधर्म्मकत्वात्। उत्पत्तिधर्म्मकत्वं पुनःपुनरिह जन्मशीलत्वम्। न चास्ति तत्षड्धातुपुरुषस्य पुनःपुनरुत्पत्तिधर्म्मकत्वं नारायणादेव प्राक् सकृदेवोत्पत्तेः। तस्मात् षड्धातुः पुरुषो नित्यः निर्व्वाणपर्य्यन्तस्थायित्वात्। पुन-

सुखदुःखप्रपञ्चेन हि तत्कार्य्येण कारणं ज्ञानमपि बहु भवति। इदानीं सर्व्वबाह्यज्ञानसाधनमाह—आत्मेत्यादि। आत्मा अव्यक्तम्। एकैकेति प्रत्येकम्। बुद्धेरनेकात्मादिमेलकजन्यत्वे दृष्टान्तमाह—अङ्गुलीत्यादि। तेन दृष्टान्तेन शब्दद्वयमाह—अङ्गुल्यङ्गुष्ठतलजशब्द एकः। अयञ्चाङ्गुष्ठयन्त्रित-मध्यमाङ्गुल्याः करेण संयोगाद् जायमानशब्द उच्यते, तन्त्री वीणाशब्द एकः। अन्ये त्वेकमेवाङ्गुल्या-दिजं वीणाशब्दं वर्णयन्ति। एतेन यथा शब्दो अङ्गुलाद्यन्यतमवैकल्येऽपि न भवति, तथा बुद्धि-रप्यात्मादीनामन्यतमवैकल्येऽपि न भवतीति दर्शयति। अत्र च बुद्धिवृत्तीनां ज्ञानानां कथनेनाह-ङ्कारोऽपि सूचित एव। यतः, अहङ्कारोपजनितैवात्मादिसम्बलितेयं बुद्धिः 'अहं पश्यामि' इत्यादि-रूपा भवति। तेन बुद्धेः अहङ्कारस्य चोक्तत्वात् परमव्यक्तं कार्य्यद्वारा स्वीक्रियते। बुद्धीत्यादि—

र्थस्थापनायां तद्दर्शितम्। ये त्वेवं न विदन्ति ते केचिद् बुद्धिर्नित्येति वदन्तः केचिद् बुद्धिरनित्येति वदन्तो विवदन्ते। तथा केचित् पुरुषो नित्य इति वदन्तः केचिदनित्यः पुरुष इति वदन्तो विवदन्ते इति। तद्द्वयमसम्यक्। परीक्षिता हि बुद्धिर्गौतमेन। तद् यथा—बुद्धिरुपलब्धिर्ज्ञानमित्यनर्थान्तरम्। कर्म्माकाशसाधर्म्म्यात् संशयः। विषयप्रत्यभिज्ञानात्। साध्यसमत्वादहेतुः। न युगपद्ग्रहणात्। प्रत्यभिज्ञाने च विनाशप्रसङ्गः। क्रमवृत्तित्वाद् युगपद्ग्रहणम्। अनभिज्ञानञ्च विषयान्तरव्यासङ्गात्। न गत्यभावात्। इति। व्याख्यातञ्च वात्स्यायनेन सर्व्वम्। तद् यथा—कर्म्माकाशसाधर्म्म्यात् बुद्धिः किमनित्या नित्या वेति संशयः। अस्पर्शवत्त्वं ताभ्यां ताभ्यां समानो धर्म्म उपलभ्यते बुद्धौ विशेषश्चोपजनापायधर्म्मवत्त्वं विपर्य्ययश्च यथास्वमनित्यनित्ययोस्तस्यां बुद्धौ नोपलभ्यते। तेन संशयः। इति। अनुपपन्नरूपः खल्वयं संशयः। सर्व्वशरीरिणां हि प्रत्यात्मवेदनीयाऽनित्या बुद्धिः सुखादिवत्। भवति च संवित्तिर्ज्ञास्यामि जानामि अज्ञासिषमिति। न चोपजनापायावन्तरेण त्रैकाल्यव्यक्तिः। ततश्च त्रैकाल्यव्यक्तेरनित्या बुद्धिरित्येतत् सिद्धम्। प्रमाणसिद्धञ्चेदम्। शास्त्रेऽप्युक्तम्—इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानम्। युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गमित्येवमादि। तस्मात् संशयप्रक्रियानुपपत्तिरिति। दृष्टिप्रवादोपालम्भार्थन्तु प्रकरणम्। एवं हि पश्यन्तः प्रवदन्ति साङ्ख्याः पुरुषस्यान्तःकरणभूता बुद्धिर्नित्येति। साधनं प्रचक्षते। विषयप्रत्यभिज्ञानात्। पुरुषस्यान्तःकरणभूता बुद्धिर्नित्या। विषयप्रत्यभिज्ञानात्। किं पुनरिदं प्रत्यभिज्ञानम्? यं पूर्व्वमज्ञासिषमर्थं तमिमं जानामीति ज्ञानयोः समानेऽर्थे प्रतिसन्धिज्ञानं प्रत्यभिज्ञानम्। एतच्चावस्थितताया बुद्धेरुपपन्नम्। नानात्वे तु बुद्धिभेदेषूत्पन्नापवर्गिषु प्रत्यभिज्ञानानुपपत्तिः। नान्यज्ञातमन्यः प्रत्यभिजानातीति। साध्यसमत्वादहेतुः। इति। यथा खलु नित्यत्वं बुद्धेः साध्यम् एवं प्रत्यभिज्ञानस्यापीति। किं कारणम्? चेतनधर्म्मस्य करणेऽनुपपत्तिः। पुरुषधर्म्मः खल्वयं ज्ञानं दर्शनमुपलब्धिर्बोधः प्रत्ययोऽध्यवसाय इति। चेतनो हि पूर्व्वज्ञातमर्थं प्रत्यभिजानातीति। तस्यैतस्मात् हेतोर्नित्यत्वं युक्तमिति। करणचैतन्याभ्युपगमे तु चेतनस्वरूपं वचनीयम्। नानिर्द्दिष्टस्वरूपमात्मान्तरं

परमित्यव्यक्तम्, बुद्ध्यादीनां योगं मेलकं धरतीति योगधरम्। अव्यक्तं हि प्रकृतिरूपपुरुषार्थप्रवृत्तम्, बुद्ध्यादिमेलकं भोगसम्पादकं सृजति। एवं व्युत्पादितं चतुर्व्विंशतिकमुपसंहरति—चतुर्व्विंशक इत्यादि। यदि वा कर्म्मेन्द्रियाण्यभिधाय, महाभूतानि इत्यादिना अर्थं एवाश्रयभूत-

शक्यमस्तीति प्रतिपत्तुम्। ज्ञानञ्चेन् बुद्धेरन्तःकरणस्याभ्युपगम्यते, चेतनस्येदानीं किं स्वरूपं को धर्म्मः किं तत्त्वम्। ज्ञानेन बुद्धौ वर्त्तमानेनायं चेतनः किं करोतीति। चेतयत इति चेन्न ज्ञानाद्ध्यर्थान्तरवचनम्। पुरुषश्चेतयते बुद्धिर्जानातीति नेदं ज्ञानादर्थान्तरमुच्यते। चेतयते जानीते बुध्यते उपलभते पश्यतीत्येकोऽयमर्थ इति। बुद्धिर्ज्ञापयतीति चेत्, अद्धा जानीते पुरुषो बुद्धिर्ज्ञापयतीति सत्यमेतत्। एवञ्चाभ्युपगमे ज्ञानं पुरुषस्येति सिद्धं भवति, न बुद्धेरन्तःकरणस्येति। प्रतिपुरुषञ्च शब्दान्तरव्यवस्थाप्रतिज्ञाने प्रतिषेधहेतुवचनम्। यश्च प्रतिजानीते, कश्चित् पुरुषश्चेतयते कश्चिद् बुध्यते कश्चिदुपलभते कश्चित् पश्यतीति पुरुषान्तराणि खल्विमानि चेतनो बोद्धोपलब्धा द्रष्टेति, नैकस्यैते धर्म्मा इति। अत्र कः प्रतिषेधहेतुर्वाच्य इति। अर्थस्याभेद इति चेत् समानमभिन्नार्था एते शब्दा इति। तत्र व्यवस्थानुपपत्तिरित्येवं चेत् मन्यते, समानं भवति ; पुरुषश्चेतयते बुद्धिर्जानीते इत्यत्राप्यर्थो न विभिद्यते। तत्रोभयोश्चेतनत्वादन्यतरल्लोप इति। यदि पुनर्बुध्यतेऽनेनेति बोधनं बुद्धिर्मन एवोच्यते, तच्च नित्यम्। अस्तु एतदेवं, न तु मनसो विषयप्रत्यभिज्ञानान्नित्यत्वम्। दृष्टं हि करणभेदे ज्ञातुरेकत्वात् प्रत्यभिज्ञानम्। सव्यदृष्टस्येतरेण प्रत्यभिज्ञानमिति चक्षुर्व्वत्। प्रदीपवच्च प्रदीपान्तरदृष्टस्य प्रदीपान्तरेण प्रत्यभिज्ञानमिति, तस्माज् ज्ञातुरयं नित्यत्वे हेतुरिति। यश्च मन्यते बुद्धेरवस्थिताया यथाविषयं वृत्तयो ज्ञानानि निश्चरन्ति, वृत्तिश्च वृत्तिमतो नान्येति। न युगपद्ग्रहणात्। वृत्तिवृत्तिमतोरनन्यत्वे वृत्तिमतोऽवस्थानाद् वृत्तीनामवस्थानमिति। यानीमानि विषयग्रहणानि, तान्यवतिष्ठन्ते इति बुद्धिर्नित्या विषयप्रत्यभिज्ञानादिति हेतुः साध्यसमत्वादहेतुर्न भवति युगपद्ग्रहणात्। वृत्तिमद्वृत्त्योर्युगपद्ग्रहणाभावात्। इति। तत्राह—वृत्तिवृत्तिमतोरनन्यत्वे वृत्तिमतोऽवस्थानात् वृत्तीनामवस्थानमिति यानीमानि विषयग्रहणानि तान्यप्यवतिष्ठन्त इति युगपद्विषयग्रहणं प्रसज्यत इति। प्रत्यभिज्ञाने च विनाशप्रसङ्ग इति। अतीते प्रत्यभिज्ञाने वृत्तिमानप्यतीत इत्यन्तःकरणस्य विनाशः प्रसज्यते, विपर्य्यये च नानात्वमिति। अविभु चैकं मनः पर्य्यायेणेन्द्रियैः संयुज्यते इति। क्रमवृत्तित्वान् युगपद्ग्रहणम्। इन्द्रियार्थानां वृत्तिवृत्तिमतोर्नानात्वमिति मनस

कथनेनोच्यते। "या यदिन्द्रियमाश्रित्य" इत्यादिना तु स्फुटोपलभ्यमाना बुद्धिवृत्तिभेदा उच्यन्ते ; बुद्ध्यहङ्कारतन्मात्राण्यव्यक्तानि तु सूक्ष्माणि नोक्तानि, तानि सर्व्वाण्येव "बुद्धीन्द्रियमनोऽर्थानाम्" इत्यादि ग्रन्थे 'पर'शब्देनोच्यन्ते। तेन योगधरं परमित्यनेन मूलप्रकृतिस्तथा प्रकृतिविकृतयश्च

रजस्तमोभ्यां युक्तस्य संयोगोऽयमनन्तवान् ।
ताभ्यां निराकृताभ्यान्तु सत्त्ववृद्ध्या * निवर्त्तते ॥

एकत्वाविभुत्वाभ्यां क्रमेण तत्तदिन्द्रिये वृत्तित्वादयुगपद्ग्रहणमिति। एकत्वे प्रादुर्भावतिरोभावयोरभाव इति। अनभिज्ञानञ्च विषयान्तरव्यासङ्गात्। अनभिज्ञानमनुपलब्धिः। अनुपलब्धिश्च कस्यचिदर्थस्य विषयान्तरव्यासक्ते-र्मनस्युपपद्यते वृत्तिवृत्तिमतोर्नानात्वात्। एकत्वे ह्यनर्थको व्यासङ्गः इति। विभुत्वे चान्तःकरणस्य पर्य्यायेणेन्द्रियैः संयोगः, न गत्यभावात्। विभुत्वेन इन्द्रियाणि सर्व्वाणि प्राप्तान्यन्तःकरणेनेति प्राप्तस्यार्थस्य गमनाभावः। तत्र क्रमवृत्तित्वाभावादयुगपदग्रहणानुपपत्तिरिति। गत्यभावाच्चैकत्वप्रतिषेधस्तस्मान्न बुद्धिर्न नित्या येयं चाक्षुषादिबुद्धिरूपेण प्रवर्त्तते, परन्तु स्थिरा। सुवर्ण-कुण्डलवत्। सुवर्णं कुण्डलरूपेण प्रवर्त्तते, कुण्डलविनाशे सुवर्णमवतिष्ठते। तथा बुद्धिरात्ममनइन्द्रियार्थसन्निकर्षात् प्रवर्त्तते सन्निकर्षाभावे बुद्धिरवतिष्ठते इति।

एवञ्च चतुर्व्विंशतिं भावानुक्त्वा चतुर्व्विंशतिकमुपसंहरति—चतुर्व्विंशतिक इत्यादि। हि यस्मादेष षड्धातुपुरुषजनितमनोदशेन्द्रियपञ्चार्थभूतात्मा बुद्ध्यहङ्कारपञ्चभूतानीति चतुर्व्विंशत्या निष्पन्नः पुरुषसंज्ञको मतः, पुरि ह्यन्नमयेऽस्मिञ्छरीरे वासात्। एष वहिःप्रज्ञो जागरितस्थानः सप्ताङ्ग एकोनविंशतिमुखः स्थूलभुग् वैश्वानरः प्रथमः पाद आत्मा माण्डूक्योप-निषदुक्तस्तस्य पञ्च भूतान्यात्मस्थितानि सप्ताङ्गानि। छान्दोग्योपनिषदि चोक्तानि तेजोद्विधाग्निर्नामादित्यश्च। तत्राग्निर्मूर्द्धा सुतेजो नाम। आदित्य-श्चक्षुर्विश्वरूपो नाम। वायुः प्राणः पृथग्वर्त्मा नाम। आकाशः सन्दोहो बहुलो नाम। आपो बस्ती रयिर्नाम। पृथिवी पादौ प्रतिष्ठा नाम। उरो वेदिरिति। मनो दशेन्द्रियाणि पञ्च प्राणाश्चित्तं बुद्धिरहङ्कार इत्येकोनविंशतिर्मुखानि, एभिर्वहिः स्थूलान् विषयान् भुङ्क्ते। मृतस्यैष नश्यति। परलोके चैवमेवोत्पद्यते पुनश्चेह खल्वेवमेवरूपेण जायते, इति। तस्मात् केचिन्नित्यमाहुरपरे चानित्यमाहुः॥१०॥

गङ्गाधरः—तत्राग्निवेशः प्रपच्छ, पुरुषः कारणं कस्मादिति। तत्रोत्तरमाह—

महदादयः सप्तोच्यन्ते। एवं चतुर्व्विंशतिको राशिर्भवति। परत्वञ्च विकारापेक्षया प्रकृतीनामुप-पन्नमेव ॥ १० ॥

चक्रपाणिः—सम्प्रत्येवंपुरुषस्य सकारणं संसरणं मोक्षहेतुञ्चाह—रज इत्यादि। संयोगोऽयम्

* सत्त्ववृद्धया इति पाठान्तरम्।

रजस्तमोभ्यामित्यादि। रजस्तमोभ्यां संयुक्तस्यास्य चतुर्व्विंशतिकस्य पुरुषस्यायमेतद्रूपेण संयोगोऽनन्तवान् न त्वन्तवान्। तर्हि किमस्य संयोगोऽयं नित्य इत्यत आह—ताभ्यामित्यादि। ताभ्यां रजस्तमोभ्यां निराकृताभ्यां निःशेषेण निरस्ताभ्यां सत्त्वोद्रेके सति सत्त्वबुद्ध्या तत्त्वज्ञानेनायं संयोगोऽस्मात् पुरुषान्निवर्त्तते। ननु सति च कारणे षड्धातुपुरुषे कथं निवर्त्तते इति चेत्, तदोच्यते। न खलु कारणे सति कार्य्यनाशः स्यात् तस्मात् कार्य्यनाशादनुमीयते कारणमपि षड्धातुपुरुषस्य षड्धातुसंयोगोऽपि सत्त्वबुद्ध्या निवर्त्तते। सोऽपि सति कारण न नश्यति तस्मादनुमीयते, षड्धातुसंयोगस्य कारणं चेतनाधातुसंयोगो नश्यति सत्त्वबुद्ध्यैव। चेतनाधातूनां संयोगनाशे निःशेषेण निवर्त्तते न पुनरावर्त्तते। रजस्तमोनिराकरणेन धर्म्माधर्म्मविनाशात्। इति। अस्य भूतात्मनश्च कारणं षड्धातुः पुरुषो भूतात्मैव स्वप्नस्थानोऽन्तःप्रज्ञः सप्ताङ्ग एकोनविंशतिमुखः प्रविविक्तभुक् तैजसो द्वितीयः पाद उक्तो माण्डूक्योपनिषदि। तस्यापि सप्ताङ्गानि—यानि शब्दतन्मात्रादीनि पञ्चमहाभूतानि तानि हि तेजोद्विधाग्निश्चन्द्रसूर्य्यरूपश्चैकः। तदुक्तं मुण्डकोपनिषदि। अग्निर्मूर्द्धा चक्षुषी चन्द्रसूर्य्यौ दिशः श्रोत्रे वाग्विवृताश्च वेदाः। वायुः प्राणो हृदयं विश्वमस्य पद्भ्यां पृथिवी ह्येष सर्व्वभूतान्तरात्मा। इति लोके। पुरुषे तु मुखान्येकोनविंशतिश्च—पञ्चतन्मात्राणामेकैकाद्यधिकानि पञ्चमहाभूतात्मकानि प्राणाः पञ्च मनो दशेन्द्रियाणि त्वाहङ्कारकाणि चेतोऽहङ्कारमहान्तश्चेति। स्वप्ने प्रविविक्ते विषयान् भुङ्क्ते इति। अस्य कारणं चेतनाधातुरव्यक्तं नाम जीवोपाधिः सुषुप्तिस्थानः प्राज्ञः। यत्र सुप्तो न कञ्चन कामं कामयते न च कञ्चन स्वप्नं पश्यति तत्सुषुप्तिस्थानमेकीभूतः प्रज्ञानघन आनन्दमयश्चेतोमुख आनन्दभुक् प्राज्ञस्तृतीयः पाद आत्मा इत्युक्तो माण्डूक्योपनिषदि। सुषुप्तौ सर्व्वाणि मनसि लीयन्ते मनः प्रज्ञाने आत्मनि तामसे महत्तत्त्वे तामसस्तु राजसे महत्तत्त्वे राजसस्तु सात्त्विके महति। सात्त्विकस्तु महांश्चेत उच्यते, सा प्रज्ञा प्रज्ञावान् प्राज्ञो ह्ययमात्मा परेऽक्षरे परमात्मनि शिवे तुरीयपादे संप्रतितिष्ठते। रसो वै स रसं ह्येवायं लब्ध्वानन्दी भवतीति। चतुष्पाद अयमात्मा ब्रह्मेत्युक्तम्। माण्डूक्योपनिषदि। नान्तःप्रज्ञं न वहिःप्रज्ञं

इति चतुर्व्विंशतिराशिरूपो मेलकः। ताभ्यामिति रजस्तमोभ्याम्। सत्त्वबुद्ध्या कारणभूतया रजस्तमोनिवृत्त्या पुरुषरूपः संयोगो निवर्त्तते मोक्षो भवतीत्यर्थः। सत्त्वं बुद्धं विशुद्धज्ञानजननात् रजस्तमसी संसारकारणे विजित्य प्रकृतिपुरुषविवेकज्ञानान् मोक्षमावहति।

अत्र कर्म्म फलञ्चात्र ज्ञानञ्चात्र प्रतिष्ठितम् ।
अत्र मोहः सुखं दुःखं जीवितं मरणं स्वता ॥
एवं यो वेद तत्त्वेन स वेद प्रलयोदयौ ।
पारम्पर्य्यं चिकित्सा च ज्ञातव्यं यच्च किञ्चन ॥

ोभयतःप्रज्ञं न प्रज्ञं नाप्रज्ञं न प्रज्ञानघनमव्यपदेश्यम् अव्यवहार्य्यमेकात्मप्रत्ययसारं शान्तं शिवमद्वैतं चतुर्थं मन्यन्त इति। मनुनाप्युक्तम्। योऽस्यात्मनः कारयिता तं क्षेत्रज्ञं प्रचक्षते। यः करोति तु कर्म्माणि स भूतात्मोच्यते बुधैः। जीवसंज्ञोऽन्तरात्मान्यः सहजः सर्व्वदेहिनाम्। येन वेदयते सर्व्वं सुखं दुःखञ्च जन्मसु। तावुभौ भूतसम्पृक्तौ महान् क्षेत्रज्ञ एव च। उच्चावचेषु भूतेषु स्थितं तं व्याप्य तिष्ठतः। प्रशासितारं सर्व्वेषामणीयांसमणोरपि। रुक्माभं स्वप्नधीगम्यं विद्यात् तं पुरुषं परम्। एतमेके वदन्त्यग्निं मनुमन्ये प्रजापतिम्। इन्द्रमेके परे प्राणमपरे ब्रह्म शाश्वतम्। एष सर्व्वाणि भूतानि पञ्चभिर्व्याप्य मूर्त्तिभिः। जन्मवृद्धिक्षयैर्नित्यं संसारयति चक्रवत्। इति।अत्र भूतात्मा जागरितस्थानः स्वप्नस्थानश्चेति द्विविध एव विवक्षितः इति।

अथैवं त्रिविधे पुरुषे कः पुरुषो म्रियते, मृत्वा च कः परलोकं याति, तत्र च सुखं वा दुःखं वा को भुङ्क्ते, कश्च पुनरिह जायते, इत्याशङ्क्याह— अत्रेत्यादि। यदुक्तं पूर्व्वाध्याये। सत्त्वमात्मा शरीरञ्च त्रयमेतत् त्रिदण्डवत्। लोकस्तिष्ठति संयोगात् तत्र सर्व्वं प्रतिष्ठितम्। स पुमांश्चेतनं तच्च तच्चाधिकरणं स्मृतम्। वेदस्यास्य—इत्यनेनोक्तं तत्र सर्व्वं प्रतिष्ठितमिति यदुक्तं तदेवम्। अत्र चतुर्व्विंशतिके पुरुषे कर्म्म कर्म्मफलादिकं प्रतिष्ठितमित्येवं यो जनो वेद स लोकानां प्रलयोदयौ जीवनमरणे वेद को जीवति को म्रियते तद् वेत्ति। एष हि म्रियमाणे नरादौ षड्धातुके लीयते पुनश्च परलोके भुक्त्वा भोगमिह

पुनश्चतुर्व्विंशतिकरूपे पुरुषे कर्म्मफलानि दर्शयन् दोषवर्जिते पुरुषे कर्म्मफलाद्यभावमर्थाद् दर्शयति—अत्रेत्यादि। अत्रेति यथोक्तसमुदायपुरुषे। कर्म्मेत्यदृष्टम्। फलमित्यदृष्टफलम्। स्वता ममताज्ञानम्। यद्यपि चतुर्व्विंशतिकतत्त्वातिरिक्तस्योदासीनस्यैव चेतना, तथापि तच्चेतनया प्रकृतिरपि चेतनामापन्ना चेतनैव भवतीति युक्तमत्र ज्ञानम् इति। वचनं हि—"तस्मात् तत्संयोगादचेतनं चेतनावदिव लिङ्गम्।" प्रलयोदयाविति जीवितमरणे। पारम्पर्य्यमिति शरीरपरम्पराम्। चिकित्सा चेति नैष्ठिकी आत्यन्तिकदुःखेषु चिकित्सा मोक्षसाधना ज्ञातव्या। किञ्चनेत्यनेनानुक्तमपि कृत्स्नं ज्ञेयमत्रगृह्यते।

भास्तमः सत्यमनृतं वेदः कर्म्म शुभाशुभम्।
न स्यात् कर्त्ता वेदिता च पुरुषो न भवेद्ध यदि ॥
नाश्रयो न सुखं नार्त्तिर्न गतिर्नागतिर्न वाक्।
न विज्ञानं न शास्त्राणि न जन्म मरणं न च ॥

जायमानेऽप्येष एवोदेतीति। तत्रापि—शरीरं सत्त्वसंज्ञञ्च व्याधीनामाश्रयो मतः। तथा सुखानामिति यत् सुखदुःखाश्रयो मनः शरीरञ्चोक्तं कथं तर्हि चात्र मोहः सुखं दुःखमिति संगच्छत इति चेत् तदोच्यते। सत्त्वयात्मा शरीरञ्चेत्यत्रात्मा चेतनाधातुः पुरुषोऽव्यक्तं नाम मनः स्थूलपुरुषे यत् तत् सत्त्वं महदादिकं शेषं सर्व्वं शरीरं, तदुक्तं पञ्चमहाभूतविकारसमुदायात्मकं चेतनाधिष्ठानभूतं शरीरमिति। तदव्यक्ताख्यस्यात्मनो भोगायतनमिदं सर्व्वं यच्छरीरं तदेव चतुर्व्विंशतिकः पुरुषस्तस्मादत्र सर्व्वं सुखदुःखादिकं प्रतिष्ठितम् इति नासङ्गतमुक्तम्। तत्रापि पृच्छति—यद्यव्यक्ताख्य एवात्मा सर्व्वकारणम्, तर्हि सत्त्वात्मशरीरसमुदाय एष पुरुषः कस्मात् कारणं भवतीति; तत्रोत्तरमाह—पारम्पर्य्यमित्यादि। पारम्पर्य्यं परम्पराभावो भावानां लोकेऽतिवृहति यच्च किञ्चन ज्ञातव्यं भाः प्रकाशो दिनादिरूपस्तमो रात्र्यादिरूपं सत्यानृतादिकञ्चेत्येतानि न स्युर्यदि स आत्मा चेतनाधातुरेवंभूतचतुर्व्विंशतिकः पुरुषो न भवेत्। सर्व्वं ह्यस्मिन् पुरुषे प्रतिष्ठितं यच्च किञ्च लोकेऽस्ति। तस्मादेतत् पुरुषतत्त्वविज्ञानेन लौकिकं सर्व्वं ज्ञातं भवति। वृहदारण्यकोपनिषदि चैवमुक्तं याज्ञवल्क्येन मैत्रेयीं भार्य्यां प्रति। आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यो मैत्रेयि। आत्मनो हि दर्शनेन श्रवणेन मत्या विज्ञानेन सर्व्वं विदितं भवतीति। न वा अरे पत्युः कामाय पतिः प्रियो भवति आत्मनस्तु कामाय पतिः प्रियो भवतीति। आत्मा वा अरे द्रष्टव्य इत्याद्युक्तेस्तत्रायमात्मशब्देनोक्तो न त्वव्यक्तमात्मा नापि परमात्मा। पत्यादिभिस्तत्प्रियत्वाभावात्। यस्मादत्रैव मोहसुखदुःखजीवितमरणस्वतादिकं प्रतिष्ठितं न त्वव्यक्ते तस्मादयं चतुर्व्विंशतिकः पुरुषो यदि न भवेत्, तदा नाश्रयो न शरीरं स्यात् न सुखं स्यान्नास्तिदुःखं स्यात् नास्मात् परलोके गतिः स्यान्न

"पुरुषः कारणं कस्माद्" इति प्रश्नस्योत्तरं—भास्तम इत्यादि। भाः प्रतिभा। तमो मोहः। पुरुष इह प्रकरणे आत्माभिप्रेतः। आश्रयः शरीरम्। गतिश्च प्रयोजनानुसन्धानाद् भवति। एवमागतेरपि। कारणं पुरुषस्तस्मादिति भास्तमआदौ कारणं पुरुष इत्यर्थः।

न बन्धो न च मोक्षः स्यात् पुरुषो न भवेद् यदि।
कारणं पुरुषस्तस्मात् कारणज्ञैरुदाहृतः॥ ११॥
न च कारणमात्मा स्यात् खादयः * स्युरहेतुकाः।
न चैषु सम्भवेज्ज्ञानं न च तैः स्यात् प्रयोजनम्॥

तत आगतिः स्यात्। न च वाग् यदिदं वक्ति विज्ञापनार्थमुच्यते यथा। वागभावे विज्ञानं न स्यादुपदेशासामर्थ्यात्। न च शास्त्राणि वेदादीनि स्युः। न जन्म स्यात् कः पुनर्जायेत, न च ततो मरणञ्च स्यादजातस्य मरणाभावात्। न च संसारे प्रधानादिभिः पाशैर्बन्धो वा भवेत् तत्त्वज्ञानान्मोक्षो वा स्याद् यत्र मोक्षे स्वता परमात्मरूपता स्यात्। तस्मादेष चतुर्व्विंशतिकः पुरुषः कारणं कारणज्ञैर्महर्षिभिरुदाहृतः॥ ११॥

गङ्गाधरः—अथेदं तर्हि भवतु तदाह—न चेत्यादि। यः खल्वव्यक्ताख्यश्चेतनाधातुरात्मा स तु तर्हि कारणं न स्याद् यद्येष चतुर्व्विंशतिकः पुरुषः कारणं स्यात्। कैर्भावैस्तदायं स्यात् पञ्चभिर्भूतैरेवायं राशिः पुरुषः स्यात्। खादयः पञ्च मनो दशेन्द्रियाण्यर्थाः पञ्च बुद्ध्यहङ्काराविति त्रयोविंशतिक एव पुरुषो भवति। नास्त्यात्मेति चेत् तर्हि चाकाशादयः कस्माज्जायन्ते इति चेदुच्यते, तत्राह—खादयः स्युरहेतुका इति। ते खादयस्त्रयोविंशतिर्भावा अहेतुका नित्या एव सन्ति इति, तत्रोत्तरम्—न चैषु सम्भवेदित्यादि। एषु त्रयोविंशतौ भावेष्वचेत-

एतदेव भा-आदिकारणत्वमात्मन इत्याह—न चेदित्यादि। एवं मन्यते—आत्मनसी धर्म्माधर्म्मजन्ये, धर्म्माधर्म्मौ चासत्यात्मनि निराश्रयौ न भवितुमर्हतः। तथा सत्यं धर्म्मजनकतया उपादेयम्, अनृतञ्चाधर्म्मजनकतयानुपादेयम्। एतच्चात्मनि स्थिरेऽसति धर्म्माधर्म्मजनकत्वं नास्ति। ततश्च सत्यासत्यभेदोऽप्यकिञ्चित्करत्वान्नास्ति। एवं शुभाशुभकर्म्मण्यपि वाच्यम्, तथा कर्त्ता च कारणप्रतिसन्धाता न भवति, प्रतिसन्धातुरात्मनोऽभावादित्यर्थः, तथा बोद्धा च पूर्व्वापरावस्थाप्रतिसन्धातैव भवति। शरीरञ्चात्मनो भोगायतनं नात्मानं विना भवति। एवं सुखादावप्यात्मनः कारणत्वमुन्नेयम्। विज्ञानं शास्त्रार्थज्ञानम्, शास्त्राणि प्रतिसन्धात्रा आत्मनैव कृतानि। न चैषु सम्भवेज्ज्ञानमिति—आत्मानं ज्ञातारं विना न भा-आदिष्वज्ञानेषु ज्ञानं भवेत्, ज्ञातुरात्मनोऽभावादित्यर्थः। न च तैः स्यात् प्रयोजनमिति, भा-आदीनामात्मार्थत्वेनासत्यात्मनि भा-आद्युत्पत्तेः प्रयोजनं न स्यात्, प्रयोजनाभावाच्चोत्पादो न स्यात्, सर्व्वेषामेव हि भावानामात्मार्थौ

* न चेत् कारणमात्मा स्यात् भादयः इति चक्रः।

मृद्दण्डचक्रैश्च कृतं कुम्भकारादृते घटम्।
कृतं मृत्तृणकाष्ठैश्च गृहकाराद्विना गृहम्॥
यो वदेत् स वदेद्देहं सम्भूयकरणैः कृतम्।
विना कर्त्तारमज्ञानाद्युक्त्यागमवहिष्कृतः॥
कारणं पुरुषः सर्व्वैः प्रमाणैरुपलभ्यते।
येभ्यः प्रमेयं सर्व्वेभ्य आगमेभ्यः प्रतीयते *॥ १२॥

नेष मध्ये कस्मादपि भावादस्य देवनरादिपुरुषस्य चैतन्यादिज्ञानं न सम्भवेत्। सत्त्वभूतगुणेन्द्रियैर्युक्तस्त्वात्मा खल्वव्यक्ताख्यश्चैतन्ये कारणं चेतनत्वात्, तत् सर्व्वं विस्तरेण पूर्व्वाध्याये—निर्व्विकारः परस्त्वात्मेति वचनव्याख्याने दर्शितम्। ज्ञानाभावे सति न च पुरुषस्य धर्म्मार्थकाममोक्षात्मकं प्रयोजनं स्यात्। त्रयोविंशतिसंघाते चैतन्यादिज्ञानं भवेदित्यादिवादवचनञ्च पूर्व्वाध्याये विस्तरेण दर्शितम्। तत्रापि युक्तिबाधादाह—मृद्दण्डेत्यादि। यस्तु कर्त्तुः कुम्भकारादृते मृद्दण्डचक्रैः सम्भूय कृतं घटं वदेत्, एवं गृहकर्त्तुर्गृहकाराद् विना मृत्तृणकाष्ठैः सम्भूय कृतं गृहं यो वा वदेत्, स खलु युक्त्यागम-वहिष्कृत एवाज्ञानादप्रमाणात् देवनरादिसर्गस्य कर्त्तारमात्मानं विना करणै-स्त्रयोविंशत्या भावैः सम्भूय कृतं देहं पुरुषं वदेन्न तु चतुर्व्विंशतिकं षड्धातुकञ्च पुरुषं वदेत्। पुरुषस्तु खल्वव्यक्ताख्य आत्मा चेतनाधातुः कारणं षड्-धातुचतुर्व्विंशतिकयोः कर्त्तारं सर्व्वैः प्रमाणैस्तैरुपलभ्यते। येभ्य आगमादिभ्य आप्तोपदेशादिभ्यः प्रमाणेभ्यः प्रमेयं द्रव्यगुणकर्म्मसमवायाः सामान्यविशेषभूता इति सर्व्वं प्रतीयते नत्वप्रमेयमितोऽधिकम्। आगमेभ्य इत्यत्रादिशब्दलोपः। तिस्रैषणीये पूर्व्वाध्याये च विस्तरेण दर्शितम्॥ १२॥

धर्म्माधर्म्मौ पुरुषभोगोत्पादकौ, असति भोक्तरि भोग्येनापि न भवितव्यं कारणाभावात्। आत्मानं विना शरीरानुत्पादे दृष्टान्तद्वयं प्रमेयगौरवादाह—कृतं मृद्दण्डेत्यादि। सम्भूय-करणैः कृतमित्यात्मनिरपेक्षैर्भूतैः कृतमित्यर्थः। युक्त्या अनुमानरूपया आगमेन च रहितो युक्त्यागमवहिष्कृतः। प्रत्यक्षञ्चात्र नोक्तम्, तस्यात्मानं प्रति प्रायोऽयोग्यत्वात्। सर्व्वैः प्रमाणैरिति प्रत्यक्षादिभिः। येभ्य इति करण एवापादानविवक्षया पञ्चमी। आगमयन्ति बोधयन्तीति आगमाः प्रमाणान्येव। अन्ये त्वागमप्रमाणाभ्यां शास्त्राण्येव ब्रुवते॥ ११।१२॥

* क्वचित् प्रमीयते इति पाठः।

न ते तत्सदृशास्त्वन्ये पारम्पर्य्यसमुत्थिताः ।
सारूप्याद् ये त एवेति निर्द्दिश्यन्ते नरान्नराः ॥
भावास्तेषां समुदयो निरीशः सत्त्वसंज्ञकः ।
कर्त्ता भोक्ता न स पुमानिति केचिद् व्यवस्थिताः ॥
तेषामन्यैः कृतस्यान्ये भावैर्भावा नराः फलम् ।
भुञ्जते सदृशाः प्राप्तं यैरात्मा नोपदिश्यते ॥

गङ्गाधरः—तत्राह पुनः—न ते तदित्यादि। आदिपुरुषः सिद्ध एव चेतनस्तस्मात् तु ये सारूप्यात् समानरूपत्वेन चेतनाच्चेतना इत्येवं समधर्म्माणो जायन्ते ते तस्मादन्ये तत्सदृशाः पारम्पर्य्यसमुत्थिता न ते त एवेति निर्द्दिश्यन्ते। निर्द्दिश्यन्ते यथा नरान्नरा जायन्ते गोगौरश्वादश्व इत्येवमादयो भावाः सारूप्यात् पारम्पर्य्यसमुत्थितास्तत्सदृशा अन्ये। न तु त एवेति। तेषां निरीशोऽव्यक्ताख्यात्महीनसमुदायस्त्रयोविंशतिकः सत्त्वसंज्ञकः पुरुष उच्यते। सोऽव्यक्ताख्यः पुमान् न कर्त्ता न च भोक्ता भवतीति केचिदृषयो व्यवस्थिता इति। तेन चैतन्यादिज्ञानादिकमव्यक्तस्यैव तत्पारम्पर्य्यसमुत्थितानाञ्च सिद्धमिति। तत्रोत्तरमाह—तेषामित्यादि। यैरेवं सदृशरूपेण पारम्पर्य्यसमुत्थानाद्भावानां चेतनजातत्वाच्चेतनत्वं सिद्धं नित्यश्चात्मा चेतनो नास्ति समुदायस्तु पुरुषः कर्त्ता भोक्ता भवति, तेषां मते अन्यैर्भावैः कृतस्य

चक्रपाणिः—निरात्मवादिमतमुत्थापयति—न ते इत्यादि। अस्मिन् शरीरे त क एव पृथिवीजलादयो भावाः, ये त एवेति व्यपदिश्यन्ते। ते न भवन्ति पूर्व्वानुभूता नानु भवन्तीत्यर्थः। यदि ते न भवन्ति, कथं तर्हि 'ते' इत्यभिधानमित्याह—तत्सदृशास्त्वन्ये पूर्व्वसदृशा इत्यर्थः। पारम्पर्य्यसमुत्थिता इति सदृशसन्तानव्यवस्थिताः। सारूप्यादिति सदृशरूपत्वात्। तेषां समुदय इति क्षणभङ्गिनां मेलक इत्यर्थः। निरीश इति स्थाय्यात्मरहितः। सत्त्वसंज्ञक इति प्राणिसंज्ञकः। केचिदिति बौद्धाः। बौद्धा हि निरात्मकं क्षणिकज्ञानादिसमुदायमात्रं शरीरमिच्छन्ति। अभिसन्धानञ्च क्षणिकानामपि ज्ञानानां कार्य्यकारणभावाच्चैव सन्ततामिच्छन्ति। एतद् दूषयति—तेषामित्यादि। तेषां ज्ञानसन्तानवादिनाम्, अन्येन कृतस्यौदनपाकादेः फलमशनादि अन्ये भुञ्जत इति प्राप्नोति। एतच्चासङ्गतम्। यतः फलं भोक्ष्यामीति कृत्वा भाविफलप्रत्याशया प्रवृत्तिर्युक्ता, न त्वन्यस्य भोग्यतां फलस्य पश्यन् कश्चित् प्रवर्त्तते, योऽपि सूपकारादिः परार्थं प्रवर्त्तते, सोऽपि परार्थेन स्वार्थं साधयितुकाम एवेति भावः।

कारणान्यान्यता * दृष्टा कर्त्ता भोक्ता स एव तु।
कर्त्ता हि करणैर्युक्तः कारणं सर्व्वकर्म्मणाम्॥
निमेषकालाद् भावानां कालः शीघ्रतरोऽत्यये।
भग्नानाञ्च पुनर्भावे † कृतं नान्यमुपैति च॥

कर्म्मणः फलं प्राप्तमन्ये सदृशा भावा नरा भुञ्जते। यदि मनोबुद्ध्यहङ्कार-दशेन्द्रियपञ्चभूतानां स्वस्वकृतस्य कर्म्मणः फलं प्राप्तं तत्समुदायः पुरुषो भुङ्क्ते न तु मनःप्रभृतिः स्वस्वकृतकर्म्मफलं भुङ्क्ते, तर्हि देवदत्तादि-नराज्जाताः पुत्रपौत्रादयः पारम्पर्य्यसमुत्था अनित्या यावज्जीवन्ति तावन्तं कालं प्राप्तं तत्तत्कालपरिणतस्वस्वकृतकर्म्मफलं भुञ्जते स्वस्वायुषो-ऽधिककालपरिणम्यकर्म्मफलन्तु न प्राप्तं न च तद् भुञ्जते न च तत् समुदायोऽस्ति कोऽप्येको नित्यो भावो यो ह्यप्राप्य फलं भुङ्क्ष्यते। तर्हि तत्कृतकर्म्मणः परिणम्यमानस्य फलमन्ये नरा भुञ्जते इति। अस्तु चैव-मिति चेत् तदाह—कारणेत्यादि। कर्त्तुः क्रियानिष्पत्तौ कारणानामन्यान्यता भिन्नभिन्नता दृष्टा यथा कर्त्ता मनसा मनुते बुद्ध्या बुध्यते चक्षुषा पश्यति श्रोत्रेण शृणोतीत्येवं कारणानां भिन्नभिन्नता दृष्टा, भोक्ता तु स एव कर्त्ता। कस्मात्? कर्त्ता हीत्यादि। हि यस्मात् कर्त्ता करणैर्युक्तः सन् सर्व्वकर्म्मणां कारणं नित्यत्वात्। ननु तर्हि यत्करणेन यत् करोति तत्फलमन्येन किं न प्राप्नोतीत्यत आह—निमिषेत्यादि। भावानाम् अत्यये कालस्तु निमेषकाला-दपि शीघ्रतरः। निमेषकालो यथा शीघ्रं गच्छति ततोऽपि शीघ्रं भावानामत्ययं कालः करोति तथातिशीघ्रं भग्नानां तेषां पुनर्भावे कालो

परमतं दूषयित्वा स्वमतमाह—करणेत्यादि। करणस्य शरीरस्य परिणामिनोऽन्यान्यता दृष्टा। कर्त्ता चात्मा, स एव न विनाशीत्यर्थः। अत्रैव दृष्टान्तमाह—कर्त्ता हीत्यादि। यथानेक-शिल्पवित् कर्त्ता करणैर्वासी-आयसीसंज्ञकयन्त्रादिभिः काष्ठपाटन-लौहघटनादि करोति, तथात्मापि इह इत्यर्थः। अथायमात्मसद्भावः स्थिरोऽस्तु, शरीरारम्भकाणां का गतिरित्याह—निमेषेत्यादि। भावानामिति शरीरादिभावानाम्। अत्यय इति विनाशे, शरीरस्य स्वाग्निपच्यमानस्य निमेष-कालादपि शीघ्रं विनाशो भवतीत्यर्थः। अमीषाञ्च भावानां भग्नानां न पुनर्भावः पुनरागमनं नास्तीति। तेन, येन शरीरेण यत् कृतम्, तच्छरीरं तत्फलं न प्राप्नोतीत्युक्तं भवति। अथ

* करणान्यान्यता इति चक्रः। † भग्नानां न पुनर्भावः इति पाठान्तरम्।

मतं तत्त्वविदामेतद् यस्मात् तस्मात् स कारणम् ।
क्रियोपभोगे भूतानां नित्यः पुरुषसंज्ञकः ॥
अहङ्कारः फलं कर्म्म देहान्तरगतिः स्मृतिः ।
विद्यते सति भूतानां कारणे देहमन्तरा ॥ १३ ॥
प्रभवो न ह्यनादित्वाद् विद्यते परमात्मनः ।
पुरुषो राशिसंज्ञस्तु मोहेच्छाद्वेषकर्म्मजः ॥ १४ ॥

निमेषकालाच्छीघ्रतरः सन् कृतमेव भग्नं तमेवोपैति न त्वन्यम्, तथा पुरुषो येन कारणेन यत् कर्म्म कुरुते तत्फलं तेनैव कर्त्ता प्राप्नोति न त्वन्यमुपैति। इति तत्त्वविदां मतं, यस्मात् स कर्त्ता तस्मात् भूतानां क्रियोपभोगे नित्यः पुरुषसंज्ञकः कारणम्। भूतानां प्राणिनां देहमन्तरा देहमध्ये तस्मिन् पुरुषसंज्ञके कारणे सति वर्त्तमानेऽहङ्कारः कर्म्मणः फलं धर्म्माधर्म्मरूपं तज्जनकं कर्म्म च देहान्तरगतिर्मरणं स्मृतिश्च जातिस्मरणं विद्यते न त्वसति पुरुषे सर्व्वमेतद् वर्त्तते। इति द्वितीयप्रश्नस्योत्तरमिति ॥ १३ ॥

गङ्गाधरः—अत्राग्निवेशः पप्रच्छ, प्रभवः पुरुषस्य क इति। एष त्रिविधः पुरुषः कस्मात् प्रभवति उत्पद्यते उत्पत्तिकारणं क इत्यस्य प्रश्नस्योत्तरमाह—प्रभवो नेत्यादि। परमात्मन इति महतः परमव्यक्तमिति कठोपनिषदि श्रवणादिह जागरितस्थानात् स्वप्नस्थानाच्चात्मनः परमः श्रेष्ठ आत्मा परमात्मा नेह तुरीय आत्मा परमात्मा। त्रिविधपुरुषप्रभवप्रश्नस्योत्तरप्रस्तावादिति चेन्नानादित्वादिति हेतोरसम्भवात्। श्वेताश्वतरोपनिषदि चाव्यक्तस्य त्रिगुणलक्षणस्य प्रभवश्रवणाच्च। तद् यथा। स विश्वकृद् विश्वविदात्मयोनिज्ञः कालकारो गुणी

मा भवत्वेवम्। ततः किमित्याह—कृतं कर्म्म यागादि न फलरूपतयाऽन्यमुपैति। एवं सति देवदत्तेन कृतेन शुभकर्म्मणा न यज्ञदत्तादयोऽपि सुखभाजः स्युः, तस्मात् क्षणभङ्गिशरीरादतिरिक्तः कर्म्मकर्त्ता तत्फलभोक्ता चास्तीति भावः। क्रियोपभोग इति क्रियायां तत्फलभोगेऽपि। भूतानामिति प्राणिनाम्। आत्मसद्भावे हेत्वन्तरमाह—अहङ्कार इत्यादि। एतेऽहङ्कारादयः स्थिर एव परमात्मनि सन्ति पूर्व्वापरकालावस्थायिवस्तुधर्म्मत्वादिति भावः। देहमन्तरेति देहं विना देहातिरिक्तकालेऽप्यहङ्कारो भवतीत्यर्थः ॥ १३ ॥

चक्रपाणिः—"प्रभवः पुरुषस्य कः" इत्यस्योत्तरम्। अनादीत्यादि। प्रभवः कारणम्। राशिसंज्ञक इति षड्धातुरूपसमुदायश्चतुर्व्विंशतिराशिरूपः। मोहेच्छाद्वेषजनितकर्म्मजः मोहेच्छाद्वेष-

**आत्मा ज्ञः करणैर्योगाज् ज्ञानं तस्य प्रवर्त्तते ।**
**करणानामवैमल्यादयोगाद् वा न वर्त्तते ॥**

सर्व्वविद् यः। प्रधानक्षेत्रज्ञपतिर्गुणेशः संसारमोक्षस्थितिबन्धहेतुरिति। न च पुरुषप्रभवप्रश्नेऽप्यप्रस्तुतः परमात्मप्रभवप्रश्नः। चेतनाधातुरप्येकः स्मृतः पुरुषसंज्ञक इत्यत्र चेतनाधातुत्वेन परमात्मनोऽवरोधात्। तस्मात् परमात्मन आत्मयोनेः स्वयम्भुवः प्रभव उत्पत्तिकारणं न विद्यते। कस्मात्? अनादित्वादकारणत्वात्। न हि परमात्मनः परमव्योम्नः प्रभवकारणम् अस्ति। शक्तिर्हि मूलं ब्रह्म सर्गकाले तेजोऽबन्नानि सृष्ट्वा तदुपाहिता सती गायत्री भूत्वा स्वयमेव शान्तिविद्या प्रतिष्ठा निवृत्तिश्चेति चतस्रः शक्तयो भूत्वा चतुर्व्यूहः परमव्योमरूपः परमात्मा शिवो बभूवेति तस्यानादित्वात् प्रभवकारणं किमपि नास्तीति। स एव परमात्मा पुनरेवं क्षेत्रज्ञप्राज्ञतैजस-वैश्वानररूपश्च स्वयं बभूवेति संहतरूपचेतनाधातुपुरुषस्य षड्धातुपुरुषस्य प्रभवं केचित् परमात्मानमाहुरपरे प्रभवं नाहुः। राशिसंज्ञस्तु पुरुषो मृतस्य षड्धातुपुरुषे लीयते परलोकञ्च याति ततः पुनर्मोहेच्छाद्वेषकृतकर्म्मफल-धर्म्माधर्म्माज्जायते तासु तासु योनिषु तैस्तैर्वीजैरिति मोहेच्छाद्वेषकर्म्मज उच्यते। इति तृतीयप्रश्नोत्तरम् ॥ १४ ॥

गङ्गाधरः—तत्राग्निवेशः पप्रच्छ, किमज्ञो ज्ञः स इति। स पुरुषः किमज्ञोऽथ ज्ञ इति। तत्रोत्तरमाह—आत्मा ज्ञ इत्यादि। इहात्मा जागरितस्थानः चतुर्व्विंशतिकः पुरुषः। स तु ज्ञः। न परमात्मा। कस्मात्? मूलभूतज्ञो हि परमात्मा ज्ञानशक्तिमत्त्वाज् ज्ञानाख्यगुणवत्त्वात्। तस्य त्रिगुणजातगुणाभावेन निर्गुणत्व-वचनात्। ज्ञः कालकारो गुणीति ह्युक्तम्। क्रमेण तदनुप्रवेशात् पञ्चब्रह्म-पुरुषकालक्षेत्रज्ञप्रधानाख्याः तत्समुदायरूपमव्यक्तञ्च चेतनाधातुः पुरुषो ज्ञः। तदव्यक्तानुप्रवेशाच्च प्रज्ञया विशिष्टत्वात् प्राज्ञः सुषुप्तिस्थानोऽपि ज्ञस्त्रिगुण-जातज्ञानरूपमहत्तत्त्वविशिष्टत्वात्। तत्प्रज्ञारब्धश्च षड्धातुः पुरुषः स्वप्नस्थानो महदहङ्कारज्ञानवत्त्वेनान्तःप्रज्ञत्वाज् ज्ञः। तत्षड्धातुपुरुषारब्धस्तु चतु-र्व्विंशतिकः पुरुष आत्मा जागरितस्थानोऽपि ज्ञः। महदहङ्कारसम्भव-

कर्म्मजः। मोहादि भावेषु इच्छा द्वेषश्च भवति, ततः प्रवृत्तिः, प्रवृत्तेर्धर्म्माधर्म्मौ, तौ च शरीरं जनयतो भोगार्थम् ॥ १४ ॥

चक्रपाणिः—"किमज्ञो ज्ञः" इत्यस्योत्तरम्—आत्मेत्यादि। करणानीह मनोबुद्धीन्द्रियाणि।

पश्यतोऽपि यथादर्शे संक्लिष्टे नास्ति दर्शनम्।
तद्वज्जले * वा कलुषे चेतस्युपहते तथा॥
करणानि मनो बुद्धिर्बुद्धिकर्म्मेन्द्रियाणि च।
कर्त्तुः संयोगजं कर्म्म वेदना बुद्धिरेव च॥

धीधृतिस्मृतिरूपज्ञानवत्त्वेन बहिःप्रज्ञत्वात् ज्ञः। तस्य ज्ञानं चेतनाधीधृतिस्मृत्यहङ्काररूपं करणैर्योगात् प्रवर्त्तते बहिर्नानारूपेणाभिव्यज्यते ज्ञत्वेऽपि करणानामवैमल्यादनैर्म्मल्यादयोगाद् वा न तज् ज्ञानं बहिः प्रवर्त्तते।

कस्मात्? तत्राह—पश्यतोऽपीत्यादि। हि यस्मादादर्शे संक्लिष्टे मलिने स्वं पश्यतो जनस्य दर्शनं प्रतिमूर्त्तेर्न भवति, यथा यद्वत् कलुषे चाविले जले स्वं पश्यतो जनस्य प्रतिमूर्त्तेर्दर्शनं नास्ति, तथा चेतसि मनस्युपहते ज्ञस्य ज्ञानस्य प्रवृत्तिर्नास्ति। मनो हि सर्व्वकरणानां प्रयोजकत्वात् प्रधानं तस्मिन्नुपहते हि शेषाणि करणानि न स्वातन्त्र्येणार्थेषु प्रवर्त्तितुं प्रभवन्ति। इन्द्रियार्थभूतमनसां न ज्ञानं तत् पूर्व्वाध्याये निर्व्विकारः परस्त्वात्मेति श्लोकव्याख्याने दर्शितम्। कानि पुनः करणानि ज्ञानसाधने भवन्तीत्यत आह—करणानीत्यादि। इह चतुर्व्विंशतिकादित्रिविधपुरुषस्य जागरितस्थानादेः प्रत्यगात्मनः प्रकरणात् तच्चतुर्व्विंशतिभावान्तर्गतमनोबुद्धिभौतिकदशेन्द्रियाणि करणानि, तत्र बुद्धिपदेन सुषुप्तिस्थानस्य प्राज्ञस्य प्रज्ञा तज्जाताहङ्काराख्या बुद्धिः स्वप्नस्थानस्य तैजसस्यात्मनः इति द्विधा बुद्धिरवरुद्धा। तत्र जागरितस्थानस्य वैश्वानरस्यात्मनो विद्याबुद्धिमहत्तत्त्वजातबुद्धिस्त्रिधा धीः धृतिः स्मृतिश्चाहङ्कारजाता बुद्धिरभिमानलक्षणा। गर्व्वबुद्धिर्याहङ्कारबुद्धिः अयोगादिजातबुद्धिः। महतो जातो योऽहङ्कारस्तस्य पर्य्यायः—अज्ञानमविद्याहम्मतिरभिमन्ता च। तज्जातो योऽहङ्कारस्तस्य पर्य्यायः—गर्व्वोऽभिमानोऽहङ्कार इति। एतच्चतुर्व्विधबुद्धिरात्मेन्द्रियमनोऽर्थसन्निकर्षाद् बहुविधा प्रवर्त्तते। तदुक्तं प्राक्। भेदात्

न वर्त्तते ज्ञानमिति योजना। ननु यद्ययमात्मा ज्ञः, तत् किमित्यस्य सर्व्वज्ञानं न भवतीत्याह—पश्यतोऽपीति चक्षुष्मतोऽपीत्यर्थः। तत्त्वमिति दर्शनविशेषणम्। तेन, म्लाने दर्पणे जले वा दर्शनं भवदप्ययथार्थग्राहितया न तत्त्वरूपं भवतीत्यर्थः। चेतसीत्युपलक्षणम्। तेन चक्षुरादावप्युपहत इति ज्ञेयम्।

प्रकरणप्रस्तावात् ज्ञाने कर्म्मणि वेदनायाञ्च यावत्करणमात्मनस्तदाह—करणानीत्यादि।

* तत्त्वं जले इति चक्रः।

नैकः प्रवर्त्तते कर्त्तुं भूतात्मा नाश्नुते फलम्।
संयोगाद् वर्त्तते सर्व्वं तमृते नास्ति किञ्चन॥
न ह्येको वर्त्तते भावो वर्त्तते नाप्यहेतुकः।
शीघ्रगत्वात् स्वभावात् तु भावो * न व्यतिवर्त्तते॥ १५॥

कार्य्येन्द्रियार्थानां बहवो वै बुद्धयः स्मृताः। आत्मेन्द्रियमनोऽर्थानामेकैक-सन्निकर्षजाः इति। कुत एषां करणसंज्ञेत्यत आह—कर्त्तुरित्यादि। कर्त्तुः करणैरेभिः सह संयोगजं कर्म्म भवति हस्तपादादीनां पञ्चानां कर्म्माण्युक्तानि ग्रहणादीनि, श्रोत्रादीनां कर्म्माणि शब्दादिग्रहणानि। मनसः कर्म्म दशेन्द्रियाभिगमनचिन्तातर्कविचारादीनि। बुद्धिकर्म्म तु हानोपादानो-पेक्षान्यतमावधारणादिकं समयोगादितः। वेदना सुखदुःखसंवेदनम्। बुद्धिः बहुविधा—श्रावणी त्वाची चाक्षुषी चेत्येवमादिः। कर्त्तुश्चतुर्व्विंशतिकपुरुषस्य करणैर्मनोबुद्ध्यादिभिः सह संयोगजेति लिङ्गविपरिणामाद् योजना।

ननु कर्त्तुरेव कर्म्म किं न स्यादित्यत आह—नैक इत्यादि। एको भूतात्मा खल्वात्मकृतपञ्चभूतोपाधिरव्यक्ताख्यात्मारब्धप्रत्यगात्मपुरुषो न कर्त्तुं क्रियां न निष्पादयितुं प्रवर्त्तते फलञ्च नाश्नुते नाप्नोति विना करणैः तथा स्वभावात्। करणैः सह संयोगात् तु भूतात्मनः सर्व्वं कर्म्मवेदनाबुद्धिश्चेत्येतत् सर्व्वं वर्त्तते। कस्मान्नैकः प्रवर्त्तत इत्यत आह—न ह्येक इत्यादि। हि यस्मादिह सर्गावस्थायामेकः केवल एको भावो न वर्त्तते विनान्यसंयोगं, नाप्यहेतुकोऽपि भावो वर्त्तते। सर्व्वो हि भावो ह्यनेकभावमेलनेनैकरूपो हेतुजश्च वर्त्तते। न च शीघ्रगत्वात् स्वभावाद् व्यतिवर्त्तते। शीघ्रगत्वस्वभावं

संयोगजमिति कर्म्मणा वेदनया बुद्ध्या च योज्यम्। नाश्नुते फलमेक इति योज्यम्। एक इति निष्करणः। संयोगाद् वर्त्तत इति करणसमुदायादुत्पद्यते। तमृत इति संयोगं विना।

अत्रैव सामग्रीजन्यत्वे सर्व्वकार्य्याणामुपपत्तिमाह—न ह्येक इत्यादि। एको भावः कारणरूपः सहकारिकारणान्तररहितो न कार्य्यकरणे वर्त्तत इत्यर्थः। एवं तावदेककारणं कार्य्यं न वर्त्तते। कार्य्यञ्च हेतुं विना न भवतीत्याह—वर्त्तते नाप्यहेतुक इति। हेतुं विना उत्पत्तिधर्म्मो न वर्त्तते न भवतीत्यर्थः। तेन, करणमुक्तात्मजन्यं कार्य्यं न केवलादात्मनो हेतु-रूपाद् भवतीत्युक्तं भवति। अथ हेतुं विना चेद्भावो न भवतीति, तत् किमभावेऽपि शारीराणां भावानां हेत्वपेक्षा, न वेत्याह—शीघ्रगेत्यादि। शीघ्रगत्वात् स्वभावात् लक्षितोऽभावो न स्वभावं

* स्वभाव इति वा पाठः।

अनादिः पुरुषो नित्यो विपरीतस्तु हेतुजः ।
सदकारणवन्नित्यं दृष्टं हेतुमदन्यथा ॥

व्यतिक्रम्य न वर्त्तते। शीघ्रगत्वस्वभावो हि नैकस्य भवति विनान्यसंयोगम्। तस्मात् कर्त्तुः करणसंयोगात् सर्व्वं कर्म्मादिकं वर्त्तते तत् तु संयोगमृते किमपि कर्म्मादिकं नास्तीति। इति चतुर्थप्रश्नोत्तरम् ॥ १५ ॥

गङ्गाधरः—अथ तत्राग्निवेशः पप्रच्छ। स नित्यः किं किमनित्यो निदर्शित इति। यदिदानीं सर्गावस्थायां न हेतुको वर्त्तते भावो वर्त्तते नाप्यहेतुकः। शीघ्रगत्वात् स्वभावात् तु भावो न व्यतिवर्त्तते, तर्हि स पुरुषः किं नित्योऽथ किमनित्यो निदर्शित इति। एवं पृष्टो गुरुराह—अनादिरित्यादि। यः पुरुषोऽनादिरहेतुकः आदिर्हेतुभूत आदिः पुरुष एव नास्ति यस्य सोऽनादिः पुरुषो नित्यः। विपरीतस्तु हेतुज इति हेतुर्हेतुभूतपुरुषजः पुरुषो विपरीतोऽनित्य इति। तत्र यथा सदकारणवन्नित्यमिति—असद्वा इदमग्र आसीत् ततो वै सदजायत। तदात्मानं स्वयमकुरुत तस्मात् तत् सुकृतमुच्यते, इति य आत्मषट्क आदिः परमः पुरुष उक्तस्तद्ब्रह्म तत् सदकारणवदनादिः पुरुषस्तत्सन्नित्यं दृष्टम्। विपरीतस्तु हेतुजो यथा—हेतुमदन्यथा। तदादिपुरुषहेतुकं यद्यत्तदन्यथा न नित्यम् इति। अथवा अनादिरादिहेतुः पुरुषो यस्य नास्ति स आत्मषट्कः परमपुरुषः परमात्मा नित्यः। यतः सदकारणवन्नित्यं यद् यत् सद्वस्तु अकारण तत् सर्व्वं नित्यम्। असदेवासन् प्राक् सर्गाद् यदासीत् तन्नित्यम्। सर्गे सैव शक्तिर्नाम सत् तेजोऽभवदापोऽभवदन्नञ्चाभवत् तत् सदपि चाकारणं, तत् त्रयोपाधिर्गायत्री च सदकारणं, तस्मान्नित्यं सैव स्वयं परमात्मात्मषट्कः पुरुषोऽभवत् अनादिरेव तस्मान्नित्यः। विपरीतस्तु हेतुजः। यो यो हेतुजः पञ्चब्रह्मपुरुषादिः स स विपरीतोऽनित्यः। यतो दृष्टं हेतुमदन्यथा। यत् सत् हेतुमत् तत्

व्यतिवर्त्तते 'शीघ्रगत्व'स्वभावं न त्यजतीत्यर्थः। तेन, अहेतुक एवाभावो भवति, भावस्तु सहेतुकः। उक्तं हि—"उत्पत्तिहेतुर्भावानां न निरोधेऽस्ति कारणम्" इति। किंवा, शीघ्रगत्वादस्थिरत्वादभावो नावस्थान्तरमात्मनाशं प्रति गच्छतीति ग्रन्थार्थः ॥ १५ ॥

चक्रपाणिः—"स नित्यः किमनित्यः" इत्यस्योत्तरम्—अनादिरित्यादि। अनादिः पुरुषोऽव्यक्तरूपत्वादात्मशब्दाभिधेयः। विपरीत इत्यादिमान् राशिरूपः पुरुष इत्यर्थः। अत्रैवानादेर्नित्यत्वे शास्त्रान्तरसम्मतिमप्याह—सदित्यादि। सदिति त्रिविधसमग्रे प्रमाणगम्यभावरूपम्। एतेन, प्रागभावस्याकारणवतोऽप्यभावरूपतयाऽनित्यत्वं न व्यभिचारकम्। हेतुजमन्यदपि भावरूपमिति योजनीयम्। तेन, हेतुजत्वेऽपि प्रध्वंसस्य विनाशित्वं परिहृतं भवति।

तदेव भावादग्राह्यं नित्यत्वान्न * कुतश्चन।
भावाज् ज्ञेयं तदव्यक्तमचिन्त्यं व्यक्तमन्यथा॥
अव्यक्तमात्मा क्षेत्रज्ञः शाश्वतो विभुरव्ययः।
तस्माद् यदन्यत् तद्व्यक्तं वक्ष्यते चापरं द्वयम्॥
व्यक्तमैन्द्रियकञ्चैव गृह्यते तद् यदिन्द्रियैः।
अतोऽन्यत् पुनरव्यक्तं लिङ्गं ग्राह्यमतीन्द्रियम्॥ १६॥

अन्यथा नित्यतोऽन्यथाऽनित्यं दृष्टम्। तत् सत् किमनुमानग्राह्यमित्यत आह—तदेव भावादग्राह्यमिति। तत् सत् खलु भावादग्राह्यम्। किमिदमग्राह्यमित्यत आह—नित्यत्वादित्यादि। तत् सदकारणवत् कुतश्च भावान्न ज्ञेयं नित्यत्वात् इत्युच्यते भावादग्राह्यमिति। तदव्यक्तमचिन्त्यं मनसा चिन्तितुमशक्यम्। अन्यथा व्यक्तं यद्भावाज् ज्ञेयं चिन्तितुं शक्यं तद् व्यक्तमिति। तथाचात्मषट्कः परमात्मा सदाशिवर्ग्वेदादयः पञ्च ब्रह्मपुरुषाः कालो नाम महाविष्णुः क्षेत्रज्ञो नाम विष्णुः प्रधानं नाम ब्रह्मा चेत्येते पुरुषाश्चेतनाधातुकाः कुतश्चन भावान्न ज्ञेया अचिन्त्याश्च, तस्मादव्यक्ताख्याः साङ्ख्ययोगाधिगम्याः। ततोऽन्यथा तु सर्व्वं व्यक्तम्।

तत् किं तावदित्यत आह—अव्यक्तमित्यादि। परमात्मादि-प्रधानान्त समुदायोऽव्यक्तं नामात्मा च क्षेत्रज्ञाधिष्ठितत्वात् क्षेत्रज्ञश्च शश्वद्वर्त्तते इति शाश्वतो विभवात् सर्व्वगतत्वात् विभुः अव्ययत्वादव्ययश्चेत्येकोऽर्थः। ननु कुतश्च भावाज् ज्ञेयं चिन्त्यं यत् तद्व्यक्तं कथमव्यक्तं भवति? अनुमानगम्यत्वात् तु व्यक्तमेवेत्यत आह—तस्मादित्यादि। तस्मात् क्षेत्रज्ञाधिष्ठितात् क्षेत्रज्ञादन्यद् यद्व्यक्तमित्यस्मात् तद्भावाज् ज्ञेयत्वेन व्यक्तमप्यव्यक्तम् उच्यते। तदप्यव्यक्तं व्यक्तमपरं द्वयं वक्ष्यते—व्यक्तमित्यादि। ऐन्द्रियकञ्चैव व्यक्तं, किं नु खल्वैन्द्रियकम्? गृह्यते तद् यदिन्द्रियैरिति। इन्द्रियैर्यद् गृह्यते

अथ किं तन्नित्यत्वमित्याह—तदेवेत्यादि। भावादुत्पत्तिधर्म्मकात्। तन्निरवयवं न कुतोऽपि भावाद् भवति। नित्यत्वं हि न कुतोऽपि भवति। ततश्चात्मनो भावं प्रति निरपेक्षत्वात् सर्व्वेभ्यो भावेभ्योऽप्यग्रे नित्यत्वं सदेव। तदेवम्भूतं नित्यमव्यक्तं ज्ञेयम्। अचिन्त्यम् इत्यव्यक्तविशेषणम्। अव्यक्तञ्च मूलप्रकृतिः। व्यक्तमन्यथेति प्रकृतेरन्यत्समकार्य्यं महदादिकम् अनित्यम्। आकाशमपि विकाररूपतयाऽनित्यमेव। उदासीनपुरुषस्तु नित्य एवाव्यक्तशब्देनैव कथित इत्युक्तमेव। पुनः प्रकारान्तरेण व्यक्ताव्यक्तार्थमाह—वक्ष्यत इत्यादि। अपरं द्वयमिति

* नित्यत्वं न इति चक्रः।

नद्वैन्द्रियकमुच्यते, तद्व्यक्तम्। अतोऽन्यत् पुनरनैन्द्रियकमव्यक्तम्। अनैन्द्रियकन्तु लिङ्गग्राह्यमतीन्द्रियं क्षेत्रज्ञो नामात्मा हि लिङ्गग्राह्योऽतीन्द्रियश्च। पृथक् प्रधानादि-परमात्मान्तं सर्व्वमतीन्द्रियं न लिङ्गग्राह्यमित्यत एवंविधम् अव्यक्तं न तत् सर्व्वं सुषुप्तिस्थानश्चात्मा प्राज्ञो लिङ्गग्राह्योऽतीन्द्रियश्चाव्यक्तम् उच्यते। उक्तन्तु प्रश्नोपनिषदि —यथा सौम्य सौर्य्यायण वयांसि वासोवृक्षं संप्रतितिष्ठन्ते। एवं ह वै सर्व्वं परमात्मनि सम्प्रतितिष्ठते। पृथिवी च पृथिवीमात्रा चापश्चाम्मात्रा च तेजश्च तेजोमात्रा च वायुश्च वायुमात्रा चाकाशश्चाकाशमात्रा च चक्षुश्च द्रष्टव्यञ्च श्रोत्रञ्च श्रोतव्यञ्च घ्राणञ्च घ्रातव्यञ्च रसश्च रसयितव्यञ्च त्वक् च स्पर्शयितव्यञ्च हस्तौ चादातव्यञ्चोपस्थश्चानन्दयितव्यञ्च पायुश्च विसर्ज्जयितव्यञ्च पादौ च गन्तव्यञ्च बुद्धिश्च बोद्धव्यञ्चाहङ्कारश्चाहङ्कार्य्यञ्च चित्तञ्च चेतयितव्यञ्च तेजश्च विद्योतयितव्यञ्च प्राणश्च विधारयितव्यञ्चेति। एष हि द्रष्टा श्रोता घ्राता रसयिता मन्ता बोद्धा कर्त्ता विज्ञानात्मा पुरुषः। स परेऽक्षर आत्मनि सम्प्रतितिष्ठते परमेवाक्षरं प्रतिपद्यते। स यो ह वै तदश्रोत्रमशरीरमलोहितं शुभ्रमक्षरं वेदयते सौम्य स सर्व्वज्ञः सर्व्वो भवति तदेष श्लोकः। विज्ञानात्मा सह देवैश्च सर्व्वैः प्राणा भूतानि सम्प्रतितिष्ठन्ति यत्र। तदक्षरं वेदयते यस्तु सौम्य स सर्व्वज्ञः सर्व्वमेवाविवेश। इति। एवञ्च स्वप्नस्थानोऽप्यात्मा षड्धातुः पुरुषो भूतात्मा खलु शब्दतन्मात्रादिपञ्चभूतोपाधिरव्यक्तात्मनारब्धस्तैजसो नामात्मा लिङ्गग्राह्योऽतीन्द्रियश्चेति अव्यक्तात्मोच्यते। तदुक्तञ्च प्रश्नोपनिषदि—अथ हैनं पिप्पलादं सौर्य्यायणो गार्ग्यः पप्रच्छ, भगवन्नेतस्मिन् पुरुषे कानि स्वपन्ति कान्यस्मिन् जाग्रति कतर एष देवः स्वप्नान् पश्यति कस्यैतत् सुखं भवति कस्मिन् नु सर्व्वे सम्प्रतिष्ठिता भवन्तीति। तस्मै स होवाच। यथा गार्ग्य मरीचयोऽर्कस्यास्तं गच्छतः सर्व्वा एतस्मिंस्तेजोमण्डले एकीभवन्ति ताः पुनः पुनरुदयतः प्रचरन्त्येवं ह वै तत् सर्व्वं परे देवे मनस्येकीभवति। तेन तर्ह्येष पुरुषो न शृणोति न पश्यति न जिघ्रति न रसयते न स्पृशते नाभिवदते नादत्ते नानन्दयते न विसृजते नेयते। स्वपितीत्याचक्षते। प्राणाग्नय एवैतस्मिन् पुरे जाग्रति। गार्हपत्यो ह वा एषोऽपानो व्यानोऽन्वाहार्य्यपचनो यद् गार्हपत्यात् प्रणीयते प्रणयनादाहवनीयः प्राणः। यदुच्छ्वासनिश्वासावेतावाहुती समं नयतीति

प्रकारान्तरं व्यक्ताव्यक्तद्वयम्। लिङ्गग्राह्यमित्यनुमानग्राह्यम्। अतीन्द्रियमित्यनेन चेन्द्रियग्रहणायोग्यं यत् केनापि शब्दादिलिङ्गेन गृह्यते, तदव्यक्तम्। किन्तु यन्नित्यानुमेयं मनोऽहङ्कारादि तदेवाव्यक्तम्॥१६॥

खादीनि बुद्धिरव्यक्तमहङ्कारस्तथाष्टमः।
भूतप्रकृतिरुद्दिष्टा विकाराश्चैव षोड़श ॥

समानः। मनोऽहरहर्यजमान इष्टफलमेवोदानः स एनं यजमानमहरहर्ब्रह्म गमयति। अत्रैष देवः स्वप्ने महिमानमनुभवति। यद्दृष्टं दृष्टमनुपश्यति। यत् श्रुतं श्रुतमेवार्थमनुशृणोति। देशदिगन्तरैश्च प्रत्यनुभूतं पुनःपुनः प्रत्यनुभवति। दृष्टञ्चादृष्टञ्च श्रुतञ्चाश्रुतञ्चानुभूतञ्चाननुभूतञ्च सर्व्वं पश्यति सर्व्वं पश्यति। इति स्वप्नस्थानः। अत्र समानोच्छ्वासनिश्वासाभ्यामनुमीयतेऽयं स्वपितीति। चतुर्व्विंशतिकस्य मनसि दशेन्द्रियाणि लीयन्ते, प्राणाः पञ्च जाग्रतीति। तद्विशिष्टः षड्धातुः पुरुषो देवः स्वप्ने मनसा स्वप्नान् पश्यति। इति। तर्हि जागरितस्थानस्त्वेष चतुर्व्विंशतिको भूतात्मा किमैन्द्रियकत्वाद् व्यक्तोऽभिधीयते, न च व्यक्तः? यतो लिङ्गग्राह्यश्चातीन्द्रियश्च मनोदशेन्द्रियाणि लिङ्गग्राह्याणि दर्शितानि स्वस्वकर्म्माणि लिङ्गानि खरद्रवचलोष्णाप्रतिघात लिङ्गानि भूम्यादीनि पञ्च भूतानि। तेषां गन्धादयोऽर्थाः स्वकार्य्यगन्धादि लिङ्गानि। लिङ्गान्येषां व्यक्तान्यैन्द्रियकाणि। इति पञ्चमप्रश्नोत्तरम् ॥ १६ ॥

गङ्गाधरः—तत्राग्निवेशः पप्रच्छ, प्रकृतिः का विकाराः के इति। यतः सम्भूत एष चतुर्व्विंशतिकोऽतीन्द्रियो लिङ्गग्राह्यश्च तेषां चतुर्व्विंशतेः सम्भवहेतुषु का प्रकृतिर्नाम धातुर्विकाराश्च के धातव इति। तत्रोत्तरमाह—खादीनि इत्यादि। उद्दिष्टं पूर्व्वं प्रकृतिश्चाष्टधातुकीति लोके पुरुषे च भूतानामष्टौ प्रकृतयः खादीन्युक्तानि पूर्व्वम्। महाभूतानि खं वायुरग्निरापः क्षितिस्तथा। शब्दः स्पर्शश्च रूपञ्च रसो गन्धश्च तद्गुणाः। इति। तानि खादीनि शब्दमात्रगुण आकाशः स्पर्शमात्रगुणो वायू रूपमात्रगुणं तेजो रसमात्रगुणा आपो गन्धमात्रगुणा क्षितिरित्येतानि। बुद्धिर्महत्तत्त्वं जीवात्मा विषमत्रिगुणलक्षणा विद्याबुद्धिः प्रज्ञा। अव्यक्तन्तु शक्तिब्रह्मगायत्रीश्वरविद्याविद्यात्मकपञ्चब्रह्मपुरुषकालक्षेत्रज्ञप्रधानानीत्येतत्सम्प्रदायात्मकं समत्रिगुणलक्षणं संहतरूपम्। अहङ्कारोऽहमित्यभिमानहेतुर्मलिनविषमत्रिगुणलक्षणस्त्वविद्याबुद्धिः। स चेह गणनायां खमारभ्याष्टमो न सर्गे। सर्गे ह्यव्यक्तमहदहङ्कारखवायुज्योतिरब्भूमय इति। इत्यष्टधातुकी भूतप्रकृतिरुद्दिष्टा पूर्व्वं प्रकृतिश्चाष्टधातुकीत्युक्तम्। विकाराश्चैव षोड़शेति यदिहोद्दिष्टम्. तान् विकारानाह—

चक्रपाणिः—"प्रकृतिः का विकाराः के" इत्यस्योत्तरम्—खादीनीत्यादि। खादीनि सूक्ष्म-

बुद्धीन्द्रियाणि पञ्चैव पञ्च कर्म्मेन्द्रियाणि च।
समनस्काश्च पञ्चार्था विकारा इति संज्ञिताः॥
इति क्षेत्रं समुद्दिष्टं सर्व्वमव्यक्तवर्ज्जितम्।
अव्यक्तमस्य क्षेत्रस्य क्षेत्रज्ञमृषयो विदुः॥ १७॥

बुद्धीन्द्रियाणीत्यादि। इति षोड़श विकारा इति संज्ञिता धातव इति चतुर्व्विंशतिको विश्वरूपो भूतात्मा लोके पुरुषे तु तैजसाख्य आत्मा स्वप्नस्थानः सूक्ष्मशरीरी। एतैश्चतुर्व्विंशत्या निष्पन्नश्चतुर्व्विंशतिको राशिपुरुषो वैश्वानर आत्मा जागरितस्थानः। तत्रात्मकृतसत्त्वरजस्तमांसि स्वस्थमाहङ्कारिकं मनोऽंशेन प्रवेश्य तैः संयुक्तं सत्त्वसंज्ञकं मनः सृजति आहङ्कारिकाणि पञ्च बुद्धीन्द्रियाण्येतान्यात्मकृतानि खादीन्येकैकाधिकानि पञ्चोपादायैतानि श्रोत्रादीनि सृजन्ति। पञ्च कर्म्मेन्द्रियाणि च पञ्च कर्म्मेन्द्रियाणि सृजन्ति। पञ्च च तानि खादीनि स्वस्वशब्दादीनि परस्परेणानुग्रहाच्छब्दादीनि सृजन्तीति विकारसंज्ञकाः षोड़शधातवः। इति चतुर्व्विंशतिधातुकाधिष्ठानभूतं शरीरमिदं शुक्रशोणितमात्राहारजभूतेभ्यो जायते, तद् वक्ष्यते विस्तरेणेति। ननूक्तमव्यक्तमात्मा क्षेत्रज्ञ इति, तत्राव्यक्तं नाम यतस्तदुक्तं स आत्मा क्षेत्रज्ञो नाम कस्मादित्यत आह—इति क्षेत्रमित्यादि। इत्युक्तं सर्व्वमव्यक्तवर्ज्जितं क्षेत्रं समुद्दिष्टम्। अव्यक्तमिहाव्यक्तपुरुषः सत्त्वादित्रिगुणसाम्योपाधिः पुरुषोऽव्यक्तं तत्रोपाधिरपि त्रिगुणसाम्यं क्षेत्रमुक्तं भगवद्गीतायां त्रयोदशाध्याये। इदं शरीरं कौन्तेय क्षेत्रमित्यभिधीयते। एतद् यो वेत्ति तं प्राहुः क्षेत्रज्ञमिति तद्विदः। क्षेत्रज्ञञ्चापि मां विद्धि सर्व्वक्षेत्रेषु भारत। क्षेत्रक्षेत्रज्ञयोर्ज्ञानं यत् तज् ज्ञानं मतं मम। महाभूतान्यहङ्कारो बुद्धिरव्यक्तमेव च। इन्द्रियाणि दशैकञ्च पञ्च चेन्द्रियगोचराः। इच्छा द्वेषः सुखं दुःखं सङ्घातश्चेतना धृतिः।

भूतखादीनि तन्मात्रशब्दाभिधेयानि। बुद्धिर्महच्छब्दाभिधेया। अव्यक्तं मूलप्रकृतिः। अहङ्कारो बुद्धिविकारः, स च त्रिविधो भूतादिस्तैजसो वैकारिकश्च। भूतानां स्थावरजङ्गमानां प्रकृतिर्भूतप्रकृतिः। तत्र चाव्यक्तं प्रकृतिरेव परम्। बुद्ध्यादयस्तु स्वकारणविकृतिरूपा अपि स्वकार्य्यापेक्षया प्रकृतिरूपा इह प्रकृतित्वेनोक्ताः। यदुक्तम्—"मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त" इति। विकारानाह—विकारा इत्यादि। 'एव'शब्दो भिन्नक्रमावधारणे, तेन, विकारा एव षोड़श परं न प्रकृतयः; बुद्धेरिन्द्रियाणि बुद्धीन्द्रियाणि। पञ्चार्था इति स्थूलाः

जायते बुद्धिरव्यक्ताद् बुद्ध्याहमिति मन्यते।
परं खादीन्यहङ्कार उपादत्ते यथाक्रमम्॥

एतत् क्षेत्रं समासेन सविकारमुदाहृतमिति। तस्मादिहाव्यक्तं त्रिगुणसाम्यं न तु पुरुषाधिष्ठितत्रिगुणसाम्यसमुदायरूपमिति। तत् त्रिगुणसाम्यमत्राव्यक्तं क्षेत्रं गीतायां कृष्णाभिमतमित्यविरोधः। अत आह—अव्यक्तमस्येत्यादि। अस्य क्षेत्रस्य त्रिगुणसाम्यरूपाव्यक्तमहदादेरतदन्तस्य क्षेत्रस्य ज्ञातारमव्यक्तस्थं पुरुषं क्षेत्रज्ञमृषयो विदुस्तत्क्षेत्रज्ञाधिष्ठितत्वात् तत्क्षेत्रज्ञाधिष्ठितं कालानुप्रविष्टं प्रधानमभिव्यक्तसमत्रिगुणमित्येतत्समुदायोऽप्यव्यक्तमपि क्षेत्रज्ञमृषयो विदुः इत्यत उक्तमव्यक्तमात्मा क्षेत्रज्ञ इति। बुद्धीन्द्रियाणि सार्थानि मनः कर्म्मेन्द्रियाणि च। अहङ्कारश्च बुद्धिश्च पृथिव्यादीनि चैव हि। अव्यक्तमात्मा क्षेत्रज्ञः क्षेत्रस्यास्य निगद्यते। ईश्वरः सर्व्वभूतस्थः सन्नसन् सदसच्च यः। इत्युक्तं याज्ञवल्क्यसंहितायामिति॥ १७॥

गङ्गाधरः—ननु चतुर्व्विंशतिकस्य पुरुषस्य धातुषु याऽष्टधातुकी प्रकृतिरुक्ता तत्राष्टौ याः प्रकृतयस्ताः किं प्रसिद्धाः सन्तीत्यत आह जायते इत्यादि। यदिदमव्यक्तं कालानुप्रविष्टक्षेत्रज्ञाधिष्ठितप्रधानत्रिगुणसाम्यलक्षणं तस्मादव्यक्तात् तत्त्रिगुणवैषम्यलक्षणस्तस्याव्यक्तस्यैकादशांशस्यैकांशो महान् नाम प्रथमं बुद्धिर्जायते। मनो मतिर्महानात्मेत्यादिपर्य्याया त्रिधाबुद्धिः जायते। सा च त्रिविधा सात्त्विकी राजसी तामसी च। तत्र सात्त्विकी विद्या प्रज्ञा चित्तमित्युच्यतेऽव्यक्तस्य न तु प्राज्ञतैजसवैश्वानराणां. तया सात्त्विकया विद्याबुद्ध्या दिक्कालाभ्याञ्च विशिष्टं तदनुप्रविष्टं यावदव्यक्तं तावान् समुदायः प्राज्ञो नामात्मा बभूवेति आत्मात्मान्तरमारभते कालः कालान्तरमारभते

आकाशादयः शब्दादिरूपाः, गुणगुणिनः परमार्थतो भेदो नास्त्येवास्मिन् दर्शने। एनमेव प्रकृतिविकारसमूहं क्षेत्रक्षेत्रज्ञभेदेन विभजते—इतीत्यादि। अव्यक्तवर्जितमिति प्रकृत्युदासीनवर्ज्जितम्, प्रकृतेश्चोदासीनपुरुषचैतन्येन चैतन्यमस्त्येव॥ १७॥

चक्रपाणिः—सम्प्रति महाप्रलयानन्तरं यथा आदिसर्गे बुद्ध्याद्युत्पादो भवति, तदाह—जायते इत्यादि। बुद्ध्याहमिति मन्यत इति बुद्धेर्जातेनाहङ्कारेणाहमिति मन्यत इत्यर्थः। खादीनीति खादीनि सूक्ष्माणि तन्मात्ररूपाणि तथैकादशेन्द्रियाणि। वचनं हि—"प्रकृतेर्महान् महतोऽहङ्कारस्तस्माद्गणश्च षोडशकः" इति। यथाक्रममिति तस्मादहङ्काराडुत्पद्यते क्रमेण, तत्र वैकृतात् सात्त्विकादहङ्कारात् तैजससहायादेकादशेन्द्रियाणि भवन्ति, भूतादेस्त्वहङ्कारात् तामसात् तैजस-

ततः सम्पूर्णसर्व्वाङ्गो जातोऽभ्युदित उच्यते ।
पुरुषः प्रलये चेष्टैः पुनर्भावैर्वियुज्यते ॥

दिग् दिगन्तरमारभते। ततस्तया विषमत्रिगुणलक्षणया बुद्ध्या खलु मनसा तदव्यक्तमहं सर्व्वकर्त्तेति विपर्य्ययरूपेण स्वं मन्यते। इति मलिनविषम-त्रिगुणलक्षणोऽहमिति विपर्य्ययाभिमन्ता दिक्कालविशिष्टोऽहङ्कारो महता सहितादव्यक्ताज्जायते इत्यव्यक्तस्य द्वितीयं कार्य्यम्।

महत एकादशांशस्यैकांशरूपः क्षेत्रज्ञानुप्रविष्ट एव। स च त्रिविधः। विषम-मलिनसत्त्वबहुलः सात्त्विको वैकारिको नाम। तादृशरजोबहुलस्तैजसो नाम राजसः। तादृशतमोबहुलस्तामसो भूतादिर्नामेति। तत्रादौ भूतादिरहङ्कारः तत्परं यथाक्रमं क्रमेण सत्त्वोद्रेकात् सत्त्वबहुलं शब्दमात्रगुणमाकाशमुपादत्ते। रजोबहुलं स्पर्शमात्रगुणं वायुम्। सत्त्वरजोबहुलं रूपमात्रगुणं तेजः। सत्त्वतमोबहुला रसमात्रगुणा आपः। तमोबहुलां गन्धमात्रगुणाञ्च पृथिवीमिति। ततो वैकारिको नामाहङ्कारस्तैजससहायाद् युगपदेव पञ्च बुद्धीन्द्रियाणि पञ्च कर्म्मे-न्द्रियाणि बुद्धिकर्म्मोभयात्मकं मनश्चोपादत्ते। महदादीनतदन्तानामधिदेवताश्च उपादत्ते। तासां देवतानां ब्रह्मा महान्तं प्राविशदहङ्कारमीश्वरः प्राविशत् प्राविशच्च मनश्चन्द्रमाः श्रोत्रं दिशं स्पर्शनं वायुश्चक्षुः सूर्य्य आपो रसनं घ्राणं क्षितिः पायुं मित्रः प्रजापतिरुपस्थं हस्तमिन्द्रः पादं विष्णुरग्निर्वाचमिति। एवं प्राज्ञ आत्माऽहङ्कारेण मनो दशेन्द्रियाणि पञ्च महाभूतानि सृष्ट्वाऽहङ्कारादि-सप्तदशकं लिङ्गं शरीरमादायात्मानमारभ्य पुनः पञ्चानां महाभूतानामाकाशं क्रियन्तं दिक्कालाभ्यां संयोज्याकाशं सृष्ट्वा तं वायौ प्रवेश्य द्व्यात्मकं वायुं सृष्ट्वा तं तेजसि प्रवेश्य त्र्यात्मकं तेजः सृष्ट्वा तदप्सु प्रवेश्य चतुरात्मिका अपः सृष्ट्वा ताः पृथिव्यां प्रवेश्य पञ्चात्मिकां पृथिवीं सृष्ट्वा तानि पञ्च भूतान्यनुप्रविश्य षड्धातुः सर्व्वसम्पूर्णाङ्गः सन् जातो लोकोऽभ्युदित उच्यते। याज्ञ-वल्क्यसंहितायाञ्च। बुद्धेरुत्पत्तिरव्यक्तात् ततोऽहङ्कारसम्भवः। तन्मात्राणि अहङ्कारादेकोत्तरगुणानि च। शब्दः स्पर्शश्च रूपञ्च रसो गन्धश्च तद्गुणाः।

सहायात् पञ्च तन्मात्राणि। यदुक्तम्—"सात्त्विक एकादशकः प्रवर्त्तते वैकृतादहङ्कारात्। भूतादेस्तन्मात्रः स तामसस्तैजसादुभयम्" इति। तत इति आहङ्कारिककार्य्यानन्तरं तन्मात्रेभ्य तत्तत्स्थूलभूतसम्बन्धात्। सम्पूर्णसर्व्वाङ्गो जात इति आदिसर्गो जातः। एवमादिसर्गं प्रकृतेर्महदादिसर्गं दर्शयित्वा महाप्रलये प्रकृतावव्यक्तरूपायां बुद्ध्यादीनां

यो यस्मान्निःसृतश्चैषां स तस्मिन्नेव लीयते। यथात्मानं सृजत्यात्मा तथा वः कथितो मया। विपाकात् त्रिप्रकाराणां कर्म्मणामीश्वरोऽपि सन्। सत्त्वं रजस्तमश्चैव गुणास्तस्यैव कीर्त्तिताः। रजस्तमोभ्यामाविष्टश्चक्रवद् भ्राम्यते हि सः। इति। लोकवदन्नमयोऽयं पुरुष एतस्यात्मान्नं भूमितत्त्वबहुलं पञ्चभूतात्मकम्। तस्यान्नस्यात्मन आत्मा प्राणमयः पुरुषस्तस्य प्राण एव शिरो व्यानो दक्षिणः पक्षः समान उत्तरः पक्ष आकाश आत्मा पृथिवी पुच्छं प्रतिष्ठा। तस्यात्मन आकाशस्यान्तरात्मा मनोमयस्तस्य यजुरेव शिर ऋग् दक्षिणः पक्षः सामोत्तरः पक्ष आदेश आत्माऽथर्व्वाङ्गिरसः पुच्छं प्रतिष्ठा। तस्यात्मन आदेशस्य अन्तरात्मा विज्ञानमयस्तस्य श्रद्धैव शिरः सत्यं दक्षिणः पक्ष ऋतमुत्तरः पक्षो योग आत्मा महः पुच्छं प्रतिष्ठा। तस्यात्मनो योगस्यान्तरात्मानन्दमयः तस्य प्रियमेव शिरो मोदो दक्षिणः पक्षः प्रमोद उत्तरः पक्ष आनन्द आत्मा ब्रह्म पुच्छं प्रतिष्ठा। एष चेतनाधातुरव्यक्तमात्मेति ख्यापितम्। तस्यात्मन आनन्दस्यान्तरात्मा हिरण्मयः पुरुषः परमात्मा शिवस्तस्य तेजः शिरः आपो दक्षिणः पक्षोऽन्नमुत्तरः पक्षो गायत्रीशक्तिरात्मा शक्तिरसद् ब्रह्म पुच्छं प्रतिष्ठेत्युन्नेयम्। भवति चात्र कठोपनिषदि श्लोकः। हिरण्मये परे कोषे विरजं ब्रह्म निष्कलम्। तच्छुभ्रं ज्योतिषां ज्योतिस्तद् यदात्मविदो विदुरिति।

एष षड्धातुः पुरुषः खलु यावत् प्रलयं वर्त्तते न नश्यति पुनः-पुनर्जायते ततो नारायणस्यास्यादित्यस्य देहादुत्क्रान्तौ प्राकृतप्रलये प्रकृतौ स्थिते काले क्षेत्रज्ञे प्रधानस्य गुणसाम्ये द्विपरार्द्धकाले पुनर्भावैर्वियुज्यते। तदुक्तं मनुना। एवं सर्व्वं स सृष्ट्वेदं माञ्चाचिन्त्यपराक्रमः। आत्मन्यन्तर्दधे भूयः कालं कालेन पीडयन्। यदा स देवो जागर्त्ति तदेदं चेष्टते जगत्। यदा स्वपिति शान्तात्मा तदा सर्व्वं निमीलति। तस्मिन् स्वपति तु स्वस्थे कर्म्मात्मानः शरीरिणः। स्वकर्म्मभ्यो निवर्त्तन्ते मनश्च ग्लानिमृच्छति। युगपत् तु प्रलीयन्ते यदा तस्मिन् महात्मनि। तदायं सर्व्वभूतात्मा सुखं

लयमाह—पुरुष इत्यादि। इष्टैर्भावैरिति पुरुषस्य भोगार्थमिष्टैर्बुद्ध्यादिभिः। अन्ये तु एवंभूतसर्गमत्रजन्मनि, बुद्ध्यादिवियोगञ्च मरणे ब्रूवते। तन्न, जन्ममरणयोर्बुद्ध्यादीनां विद्यमानत्वात्। उक्तं हि—"अतीन्द्रियैस्तैरतिसूक्ष्मरूपैरात्मा कदाचिन्न वियुक्तपूर्व्वः। नैवोन्द्रियैर्नैव मनोमतिभ्यां न चाप्यहङ्कारविकारदोषैः" इति। तथान्यत्राप्युक्तम्— "पूर्व्वोत्पन्नमसक्तं नियतं महदादिसूक्ष्मपर्य्यन्तम्। संसरति निरुपभोगं भावैरधिवासितं लिङ्गम्" इति।

अव्यक्ताद् व्यक्ततां याति व्यक्तादव्यक्ततां पुनः ।
रजस्तमोभ्यामाविष्टश्चक्रवत् परिवर्त्तते ॥
येषां द्वन्द्वे परासक्तिरहङ्कारपराश्च ये ।
उदयप्रलयौ तेषां न तेषां ये त्वतोऽन्यथा ॥ १८ ॥

स्वपिति निर्वृतः। तमोऽयन्तु समाश्रित्य चिरं तिष्ठति सेन्द्रियः। न च स्वं कुरुते कर्म्म तदोत्क्रामति मूर्च्छितः। यदाणुमात्रिको भूत्वा वीजं स्थास्नु चरिष्णु च। समाविशति संसृष्टस्तदा मूर्त्तिं विमुञ्चति। एवं स जाग्रत्स्वप्नाभ्यामिदं सर्व्वं चराचरम्। संजीवयति चाजस्रं प्रमापयति चाव्यय इति।

तर्हि पुनर्न कदापि किं जायते इत्यत आह—अव्यक्तादित्यादि। उक्तरूपेण अव्यक्ताद् व्यक्ततां याति, पुनः कल्पान्ते प्रलये व्यक्तादव्यक्ततां याति। एवंप्रकारेण रजस्तमोभ्यामाविष्ट एष पुरुषश्चक्रवत् परिवर्त्तते भ्राम्यति यावत् त्रिगुणसाम्यलक्षणप्राकृतप्रलयम्। उक्तञ्च भगवद्गीतायाम्। सहस्रयुगपर्य्यन्तमहर्यद् ब्रह्मणो विदुः। रात्रिं युगसहस्रान्तां तेऽहोरात्रविदो जनाः। अव्यक्ताद् व्यक्तयः सर्व्वाः प्रभवन्त्यहरागमे। रात्र्यागमे प्रलीयन्ते तत्रैवाव्यक्तसंज्ञके। भूतग्रामः स एवायं भूत्वा भूत्वा प्रलीयते। रात्र्यागमेऽवशः पार्थ प्रभवत्यहरागमे। परस्तस्मात् तु भावोऽन्योऽव्यक्तोऽव्यक्तात् सनातनः। यः स सर्व्वेषु भूतेषु नश्यत्सु न विनश्यति। अव्यक्तोऽक्षर इत्याहुस्तमाहुः परमां गतिम्। यं प्राप्य न निवर्त्तन्ते तद् धाम परमं मम। पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्यया। यस्यान्तःस्थानि भूतानि येन सर्व्वमिदं ततम्। इति। नन्वेवं चक्रवत् परिवर्त्तनं केषां भवति ततो निवृत्तिर्वा केषां कुतः स्यादित्यत आह—येषां द्वन्द्व इत्यादि। येषां देवनरादीनां द्वन्द्वे खलु सविपर्य्यये द्वये द्वये सुखदुःखे इच्छाद्वेषे इत्यादौ परा परमा आसक्तिरासङ्गः,

तस्मात् महाप्रलय एव प्रकृतौ लयः, तदादिसर्ग एव प्रकृतेर्महदादिसृष्टिरिति। एतमेव प्रपञ्चं लयञ्च प्रकृतेराह—अव्यक्तादित्यादि। अव्यक्तादिति प्रकृतेः, व्यक्ततामिति महदादिमहाभूतपर्य्यन्तप्रपञ्चरूपतां याति। व्यक्तात् महदादिमहाभूतपर्य्यन्तप्रपञ्चावस्थातः पुनरव्यक्तरूपतां याति;—महाप्रलये हि महाभूतानि तन्मात्रेषु लयं यान्ति;—तन्मात्राणि तथेन्द्रियाणि चाहङ्कारे लयं यान्ति, अहङ्कारो बुद्धौ, बुद्धिश्च प्रकृताविति लयक्रमः। अयञ्च लयक्रमो मोक्षेऽपि भवति। परन्तु तं पुरुषं प्रति पुनः सर्गं नारभते प्रकृतिः। अयं संसारः कुतो भवतीत्याह—रज इत्यादि। आविष्टो युक्तः। चक्रवत् परिवर्त्तत इति पुनःपुनर्लयसर्गाभ्यां युज्यते। द्वन्द्व इति रजस्तमोरूपे

प्राणापानौ निमेषाद्या जीवनं मनसो गतिः ।
इन्द्रियान्तरसञ्चारः प्रेरणं धारणञ्च यत् ॥
देशान्तरगतिः स्वप्ने पञ्चत्वग्रहणं तथा ।
दृष्टस्य दक्षिणेनाक्ष्णा सव्येनावगमस्तथा ॥
इच्छा द्वेषः सुखं दुःखं प्रयत्नश्चेतना धृतिः ।
बुद्धिः स्मृतिरहङ्कारो लिङ्गानि परमात्मनः ॥

ये चाहङ्कारपरा अविद्यामूढास्तेषामुदयप्रलयौ कल्पे कल्पे जन्ममरणे भवतः। ये त्वतोऽन्यथा द्वन्द्वानासक्ता अहङ्कारविवर्ज्जितास्तेषां नोदयप्रलयौ पुनरिह जन्ममरणे न भवतः, संसारान्निवृत्तिर्भवतीति। इति षष्ठप्रश्नस्योत्तरम् ॥ १८ ॥

गङ्गाधरः—तत्राग्निवेशः पप्रच्छ, किं लिङ्गं पुरुषस्य चेति। ननु यदुक्तं व्यक्तमैन्द्रियकञ्चैव गृह्यते तद् यदिन्द्रियैः। अतोऽन्यत् पुनरव्यक्तं लिङ्ग-ग्राह्यमतीन्द्रियमिति, पुरुषस्य तल्लिङ्गं किमिति? तथा पृष्टः पुनर्व्वसुरुवाच—प्राणापानावित्यादि। प्राण उच्छ्वासोऽपानो निश्वास इति। निमेषाद्या निमेषोन्मेषाकृतिस्वरवर्णविशेषात्मज्ञानानि तासु तासु योनिषूत्पत्तिश्च। जीवनमायुः, यावज्जीवति, मनसो गतिश्चिन्त्यादौ विषये। इन्द्रियान्तरसञ्चारो मनसः, यदर्थग्रहणायैकस्मिन्निन्द्रिये मनः सञ्चरति तदिन्द्रियसञ्चारतोऽन्यस्मिन्निन्द्रिये मनसो यः सञ्चारः स इन्द्रियान्तरसञ्चारः। प्रेरणं तदिन्द्रिये मनसो यद् यच्च। तत्रैवेन्द्रिये धारणं स्थिरतयावस्थानकरणम्। स्वप्ने च मनसो देशान्तर-गतिः। पञ्चत्वग्रहणं मरणम्। दक्षिणेनाक्ष्णा दृष्टस्य सव्येनाक्ष्णावगमस्तथा सव्येन दृष्टस्यार्थस्य दक्षिणनाक्ष्णावगमः। इच्छा च द्वेषश्च सुखञ्च दुःखञ्च प्रयत्नश्च चेतना च धृतिर्बुद्धिः स्मृतिरहङ्कारश्चेत्येतानि प्रत्यगात्मनि वर्त्तमानानि परमात्मनः प्रत्यगात्मनः परमस्यात्मनोऽव्यक्तस्य लिङ्गानि न तु परमपुरुषस्य परमात्मनो लिङ्गानि तस्याप्रमेयस्य लिङ्गाभावात्। उक्तं हि श्वेताश्व-तरोपनिषदि। निष्क्रियं निर्गुणं शान्तं निरवद्यं निरञ्जनम्।

मिथुने, अहङ्कारपरा इति अहङ्कारान्ममेदमित्यादि मिथ्याज्ञानपराः। उदयप्रलयौ जन्ममरण, किंवा लयसर्गौ। अतोऽन्यथेति रागद्वेषविमुक्ता निरहङ्काराश्च ये, तेषां नोदयप्रलयौ भवतः ॥ १८ ॥

चक्रपाणिः—"किं लिङ्गं पुरुषस्य च" इत्यस्योत्तरम्—प्राणापानावित्यादि। प्राणापानावुच्छ्वास-निश्वासौ। निमेषाद्या इति 'आद्य'शब्दग्रहणेन उन्मेषाद्या प्रेक्षणविशेषा गृह्यन्ते। मनसो

अद्भुतस्य परं सेतुर्दग्धेन्धनमिवानलमिति—आश्रये इति पूर्व्वमन्त्रस्थेन अन्वयः। निरञ्जनं निर्लिङ्गमिति। गौतमेनाप्युक्तम्। इच्छाद्वेषसुखदुःख-प्रयत्नज्ञानान्यात्मनो लिङ्गानि। कणादेनापि वैशेषिकेऽप्युक्तम्। प्राणा-पानौ निमेषोन्मेषजीवनमनोगतीन्द्रियान्तरसञ्चारा बुद्धिः सुखदुःखेच्छाद्वेष-प्रयत्नाश्चात्मनो लिङ्गानि। प्रवृत्तिनिवृत्ती प्रत्यगात्मनि दृष्टे परत्र लिङ्गमिति। यज्ञदत्त इति सन्निकर्षे प्रत्यक्षाभावात् दृष्टं लिङ्गं न विद्यते। सामान्यतो दृष्टाच्चाविशेषः। तस्मादागमिकम्। अहमिति शब्दस्य व्यतिरेकान्नाग-मिकम्। यत् दृष्टमन्नम् अहं देवदत्तोऽहं यज्ञदत्त इति दृष्टत्वात् प्रत्यक्षवत्। देवदत्तो गच्छति यज्ञदत्तो गच्छतीत्युपचाराच्छरीरप्रत्ययः। ममेतिप्रत्ययस्य याथार्थ्यात्। सन्दिग्धस्तूपचारः। अहमिति प्रत्यगात्मनि भावात् परत्र अभावादर्थान्तरमात्मस्वरूपं प्रत्यक्षं यत्र प्रत्यये स प्रत्ययार्थान्तरप्रत्यक्षः। सन्दिग्धस्तूपचारः। न तु शरीरविशेषाद् यज्ञदत्तविष्णुमित्रयोर्ज्ञानविशेषः। अहमिति मुख्ययोग्याभ्यां शब्दवद्व्यतिरेकाद् व्यभिचाराद्विशेषसिद्धेरागमिकम्। नेनाहमिति। सुखदुःखज्ञाननिष्पत्त्यविशेषादैकात्म्यम्। यथाकाशकाल-दिशः। व्यवस्थातो नाना। तस्याभावादव्यभिचारः। इति सूत्राणि क्रमेण व्याख्यातानि। तद् यथा। ननु प्राणापानादिकमात्मनो लिङ्गं किं दृष्टमथानु-मानिकमागमिकं वेति। तत्राह। प्रवृत्तिनिवृत्ती प्रत्यगात्मनि दृष्टे परत्र लिङ्गम्। प्रत्यगात्मनि दृष्टे लिङ्गे परत्र स्वप्नस्थानसुषुप्तिस्थानाव्यक्तेषु लिङ्गं सर्व्वमागमिकं न दृष्टं वानुमानिकम्। कस्मात्? यज्ञदत्त इति सन्निकर्षे प्रत्यक्षाभावात् लिङ्गं न विद्यते। प्रत्यगात्मनि हि यज्ञदत्त इति सन्निकर्ष दृष्टं प्रवृत्तिनिवृत्त्यादिकं परत्र प्रत्यक्षाभावाद् दृष्टं लिङ्गं न विद्यते। तर्हि किमानुमानिकमित्यत आह—सामान्यतो दृष्टाच्चाविशेषः। प्रत्यगात्मनि यथा यज्ञदत्त इति सन्निकर्षे दृष्टं लिङ्गं तत् सामान्यतो दृष्टाच्च परत्र नानुमानिकं यथा प्रत्यगात्मा प्राणिति चापानिति निमिषतीत्येवमादि दृश्यते न तथा परात्मा. तस्मात् सामान्यतो दृष्टाच्चानुमानिकमपि प्रत्यगात्मपरात्मनोरविशेषः। तस्मादागमिकमिति। प्रत्यगात्मपरात्मनोरविशेषादागमिकं परत्रात्मनि प्राणा-पानादिकं लिङ्गम्। यदि तुल्यं लिङ्गं न स्यादुभयोरविशेषो न स्यादिति।

तत्राह वादी—अहमिति शब्दस्य व्यतिरेकान्नागमिकम्। त्वं देवदत्तोऽहं यज्ञदत्त इति व्यतिरेकादविशेषाभावात् प्रत्यगात्मपरात्मनोरप्यविशेषाभावात्

गतिरिति मनसा पाटलिपुत्रादिगमनरूपा। इन्द्रियान्तरसञ्चारोऽपि मनस एव, यथा—चक्षुः

नागमिकमिति। तर्हि किमित्यत आह—यद् दृष्टमन्नमहं देवदत्तोऽहं यज्ञदत्त इति द्रष्टृत्वात् प्रत्यक्षवत्। येन मयान्नं दृष्टं सोऽहमयं देवदत्तः स एवाहं यज्ञदत्त इति द्रष्टृत्वात् परात्मनः प्रत्यक्षवल्लिङ्गं प्राणापानादिकं न प्रत्यक्षं तस्मादनागमिकं न भवति। अस्तु तर्हि च प्रत्यक्षवद्भावेन सामान्यतो दृष्टादानुमानिकं देवदत्तो यज्ञदत्त इति भेदेन प्रत्ययस्तु यो भवति स खलु देवदत्तो गच्छति यज्ञदत्तो गच्छतीत्युपचारात् शरीरप्रत्ययः। यतो देवदत्तो यज्ञदत्त इति भेदेन प्रत्ययोऽविशेषेऽपि परात्मनः शरीरे उपचारात्। अन्यथा देवदत्तो गच्छतीति प्रत्ययो न स्यादात्मनो गत्यभावादिति। कस्मादुपचारः? ममेति प्रत्ययस्य याथार्थ्यात्। मम शरीरमिति प्रत्ययस्य याथार्थ्यात्। देवदत्तो गच्छतीति देवदत्तशब्दार्थस्यात्मनः शरीरे उपचार इति। तत्राह। सन्दिग्धस्तूपचारः। आत्मनः शरीरे तूपचारः सन्दिग्धः। मम देवदत्तस्य शरीरमिति गच्छतीत्युक्तेः शरीरे किमुपचारः। अहं जानामि चेच्छामीत्यादौ किमात्मन्युपचारः। तत्राह। अहमिति प्रत्यगात्मनि भावात् परत्राभावादर्थान्तरमात्मरूपं प्रत्यक्षं यत्र प्रत्यये स प्रत्ययार्थान्तरप्रत्यक्षः। अहं देवदत्त इति प्रत्ययस्य प्रत्यगात्मनि भावात्। परत्रात्मन्यभावात् प्रत्यगात्मनः स्वरूपं परात्मनः स्वरूपमर्थान्तरं न त्वनर्थान्तरं तयोर्यत्र प्रत्यये प्रत्यक्षं स प्रत्ययः प्रत्ययार्थान्तरप्रत्यक्षः। तत्राह। सन्दिग्धस्तूपचारः। न तु शरीरविशेषाद् यज्ञदत्तविष्णुमित्रयोर्ज्ञानविशेष इति। प्रत्यगात्माहं जानामीतीच्छति प्रत्यगात्मनि ज्ञानेच्छादिमत्त्वात्। गच्छामि तिष्ठामीति गमनादिक्रियावत्त्वाच्छरीरे चोपचारस्तु सन्दिग्धः किं प्रत्यगात्मनि किं शरीरे वोपचारो न तु शरीरविशेषाद् यज्ञदत्तविष्णुमित्रयोर्ज्ञानविशेषस्ततः स्यात्। शरीरभेदेन तत् प्रत्यगात्मनो यज्ञदत्तविष्णुमित्रतया तु ज्ञानविशेषः स्यात्, तस्मात् अहमिति मुख्ययोग्याभ्यां शब्दवद्व्यतिरेकाद् व्यभिचाराद्विशेषसिद्धेरागमिकम्। प्रत्यगात्मनि अहमिति मुख्यप्रवृत्त्या शरीरे योग्यया प्रवृत्त्याहमिति शब्दवत्। आप्तोपदेशवत्। जातिगुणक्रिया यदृच्छासङ्केते मुख्यया प्रवृत्त्याप्ता उपदिशन्ति। व्यतिरेकादनुपदेशाज्जात्यादिषु गमनादीनां व्यभिचाराद्विशेषसिद्धेरात्मनः प्राणापानादिकं लिङ्गमागमिकं तेनाहमिति। तेन मुख्यया प्रवृत्त्या ब्राह्मणोऽहमिति। यदृच्छाप्रवृत्त्या देवदत्तोऽहमिति यज्ञदत्तोऽहमिति जात्याकृतिव्यक्तिसमुदाये मुख्या वृत्तिस्तेन परात्मनि त्वहमिति प्रत्ययः। न चानेकत्वमात्मनः। सुखदुःखज्ञाननिष्पत्त्यविशेषादैकात्म्यम्।

परित्यज्य मनः स्पर्शनमधितिष्ठतीत्यादि, प्रेरणञ्च तथा धारणञ्च मनस एवेति हृदम्। देहान्तर-

प्रत्यगात्मनि देवदत्ते यज्ञदत्ते विष्णुमित्रादौ च सुखदुःखज्ञानादीनां निष्पत्तिः परात्मन एवैकस्मादविशेषेण भवतीत्येक एवात्मा यथाकाशकालदिशः एकात्मिका इति। परन्तु। व्यवस्थातो नाना। उपाधिमत्त्वे जन्ममरणादि-व्यवस्थातो नाना। प्रतिपुरुषमेकैक आत्मेति।

ननु बुद्धीच्छादयो मनसो गुणा न त्वात्मगुणा इति चेन्नेत्युवाच कणादः। कस्मात्? परत्र समवायात् प्रत्यक्षत्वाच्च नात्मगुणा मनसो गुणाः। अप्रत्यक्षत्वात्। इति। प्रत्यगात्मनो बुद्ध्यादयो गुणाः, परत्रात्मन्यव्यक्ते समवायात् प्रत्यगात्म-प्रत्यक्षत्वाच्चात्मगुणा न मनसो गुणाः, अप्रत्यक्षत्वात् मनःप्रत्यक्षत्वाभावात्। पूर्व्वमुक्त-मस्मिंस्तन्त्रे। आत्मना चेन्द्रियैर्यत् स्वयमुपलभ्यते तत् प्रत्यक्षम्। इच्छाद्वेषसुख-दुःखप्रयत्नबुद्धय आत्मप्रत्यक्षाः शब्दादयस्त्विन्द्रियप्रत्यक्षा इति। भ्रान्ता अनृषयो मानसप्रत्यक्षानाहुरिच्छाद्वेषादीन्। कथं विज्ञायते परत्रात्मनि बुद्धीच्छादीनां समवायः? उच्यते—कारणगुणपूर्व्वकस्तु कार्य्यगुणो दृष्ट इति। आत्मनः कार्य्ये प्रत्यगात्मनि बुद्धीच्छादयो गुणा दृश्यन्ते, यद्यस्य कारणेऽव्यक्तात्मन्येते बुद्धीच्छादयो नावर्त्तिष्यन्ताथ कार्य्ये प्रत्यगात्मनि नाभविष्यन्निति। कार्य्यान्तराभावाच्च। कारणगुणातिरिक्तकार्य्यगुणान्तराभावाच्च कार्य्यद्रव्य इति। गौतमेनापि ज्ञानस्येन्द्रियार्थभूतमनोगुणत्वं निरस्यात्मनो गुणो ज्ञानमुक्तं तत् पूर्व्वाध्याये निर्व्विकारः परस्त्वात्मेति श्लोकव्याख्याने दर्शितम्। स्मरणा-दयो गुणाश्चात्मन एव गौतमेनोक्ताः। तद् यथा। स्मरणन्त्वात्मनो ज्ञस्वाभाव्यात्। व्याख्यातञ्च वात्स्यायनेन। आत्मन एव स्मरणं, न बुद्धि-सन्ततिमात्रस्य। तु-शब्दोऽवधारणे। कथं? ज्ञस्वाभाव्यात्। ज्ञ इत्यस्य स्वभावः स्वो धर्म्मः, अयं खलु ज्ञास्यति जानात्यज्ञासीदिति त्रिकालविषयेण अनेकेन ज्ञानेन सम्बध्यते। तच्चास्य त्रिकालविषयं ज्ञानं प्रत्यात्मवेदनीयम्। ज्ञास्यामि जानामि अज्ञासिषमिति वर्त्तते। तद् यस्यायं स्वो धर्म्मस्तस्य स्मरणं न बुद्धिप्रबन्धमात्रस्य निरात्मकस्येति। स्मृतिहेतूनामयौगपद्याद् युग-पदस्मरणमित्युक्तम्। सा च स्मृतिः केभ्य उत्पद्यते, इत्यत उक्तं गौतमेन। प्रणिधान-निबन्धाभ्यास-लिङ्ग-लक्षणसादृश्यपरिग्रहाश्रयाश्रित-सम्बन्धानन्तर्य्य-वियोगैककार्य्यविरोधातिशयप्राप्तिव्यवधानसुखदुःखेच्छाद्वेषभयार्थित्व-क्रियाराग-धर्म्माधर्म्मनिमित्तेभ्यः। सुस्मूर्षया मनसो धारणं प्रणिधानं, सुस्मूर्षितलिङ्ग-चिन्तनञ्चार्थस्मृतिकारणम्। निबन्धः खल्वेकग्रन्थोपयमोऽर्थानाम्। एको

गतिः स्वप्न इति च्छेदः। दक्षत्वग्रहणं मरणज्ञानम्। सत्येनावगम इति सत्येनाप्तृणा, स पूर्वार्य

तस्मात् * समुपलभ्यन्ते लिङ्गान्येतानि जीवतः।
न मृतस्यात्मलिङ्गानि तस्मादाहुर्महर्षयः॥

ग्रन्थोपयताः खल्वर्था अन्योन्यस्मृतिहेतव आनुपूर्व्व्यतरथा वा भवन्तीति। धारणा शास्त्रकृतो वा प्रज्ञातेषु वस्तुषु स्मर्त्तव्यानामुपक्षेपो निबन्ध इति। अस्य अभ्यासस्तु समाने विषये ज्ञानानामभ्यावृत्तिरभ्यासजनितः संस्कार आत्मगुणोऽभ्यासशब्देनोच्यते, स च स्मृतिहेतुः समान इति। लिङ्गं पुनः संयोगिसमवाय्येकार्थसमवायिविरोधि चेति। संयोगि यथा—धूमोऽग्नेः। समवायि यथा—गोर्विषाणम्। एकार्थसमवायि यथा—पाणिः पादस्य, रूपं स्पर्शस्य। विरोधि यथा—अभूतं भूतस्येति। लक्षणं पश्ववयवस्थं गोत्रस्य स्मृतिहेतुः। विदानामिदं गर्गाणामिदमिति। सादृश्यं चित्रगतं प्रतिरूपकम्; देवदत्तस्येत्येवमादि। परिग्रहात्। स्वेन वा स्वामी स्वामिना वा स्वः स्मर्य्यते। आश्रयात्। ग्रामण्या तदधीनं स्मरति। आश्रितात्। तदधीनेन ग्रामण्यमिति। सम्बन्धात्। अन्तेवासिना गुरुं स्मरति, ऋत्विजा याज्यमिति। आनन्तर्य्यात्। इति करणीयेष्वर्थेषु। वियोगात्। येन विप्रयुज्यते तद्वियोगप्रतिसंवेदी भृशं स्मरति। एककार्य्यात्। कर्त्रन्तरदर्शनात् कर्त्रन्तरे स्मृतिः। विरोधात्। विजिगीषमाणयोः अन्यतरदर्शनात् अन्यतरः स्मर्य्यते। अतिशयात्। येनातिशय उत्पादितः। प्राप्तेः। यतो येन किञ्चित् प्राप्तमप्राप्तं वा तमभीक्ष्णं स्मरतीति। व्यवधानात्। कोशादिभिरसिप्रभृतीनि स्मर्य्यन्ते। सुखदुःखाभ्यां, तद्धेतुः स्मर्य्यते। इच्छाद्वेषाभ्यां यमिच्छति यञ्च द्वेष्टि तं स्मरति। भयात्। यतो बिभेति। अर्थित्वात्। येनार्थी भोजनेनाच्छादनेन वा। क्रियायाः। रथेन रथकारं स्मरति। रागात्। यस्यां स्त्रियां रक्तो भवति तामभीक्ष्णं स्मरति। धर्म्मात्। जात्यन्तरस्मरणम्, इह चातीतश्रुतावधारणमिति। अधर्म्मात्। प्रागनुभूतदुःखसाधनं स्मरति। न चैतेषु निमित्तेषु युगपत् संवेदनानि भवन्तीति युगपदस्मरणमिति। निदर्शनञ्चेदं स्मृतिहेतूनां न परिसङ्ख्यानमिति। इत्यादि गौतमोक्तं पूर्व्वाध्याये विस्तरेणोक्तं दर्शितम्।

ननु प्राणापानादिकं देवदत्तादिपुरुषस्य दृश्यते कथं परमात्मनो लिङ्गमित्यत आह—तस्मादित्यादि। तस्मात् परमात्मन एव अव्यक्तादात्मन

दक्षिणाक्षिदृष्टो घट इत्यवगम इत्यर्थः। चेतना ज्ञानमात्रम्। बुद्धिस्तूहापोहज्ञानम्। अथ

* यस्मादिति चक्रः।

**शरीरं हि गते तस्मिन् शून्यागारमचेतनम् ।**
**पञ्चभूतावशेषत्वात् पञ्चत्वं गतमुच्यते ॥ १६ ॥**

एतानि लिङ्गानि जीवतो देवदत्तादेः समुपलभ्यन्ते, न तु मृतस्य। तस्मादात्मलिङ्गानि खल्वेतानि महर्षय आहुः। नन्वूच्यते देवदत्तस्येदं शरीरमिति मृतस्य न कथमेतानि लिङ्गानि? तत्राह—शरीरं हीत्यादि। हि यस्मात्। तस्मिन्नात्मनि शरीराद् गते तच्छरीरं शून्यागारमचेतनं भवति। ननु तर्हि शरीरं मृतस्य किंरूपं वर्त्तते? इत्यत आह—पञ्चेत्यादि। शरीरारम्भकाणां शुक्रशोणितमात्राहारात्मजानां चतुर्विधानां पञ्चानां भूतानामवशेषत्वात् आत्मस्थपञ्चभूतानां शरीरान्निर्गतत्वे शेषतया स्थितत्वात् पञ्चत्वं गतं शरीरमुच्यते। तस्मात् प्राणापानादीनि परमात्मनो लिङ्गानीति। याज्ञवल्क्यसंहितायाञ्च। अहङ्कारः स्मृतिर्मेधा द्वेषो बुद्धिः सुखं धृतिः। इन्द्रियान्तरसञ्चार इच्छा धारणजीविते। स्वर्गः स्वप्नश्च भावानां प्रेरणं मनसो गतिः। निमेषश्चेतना यत्न आदानं पाञ्चभौतिकम्। यत एतानि दृश्यन्ते लिङ्गानि परमात्मनः। तस्मादस्ति परो देहादात्मा सर्व्वग ईश्वरः॥ इति सप्तमप्रश्नोत्तरम्॥ १९॥

कथमेतान्यात्मानं गमयन्तीत्याह—यस्मादित्यादि। जीवत इति पञ्चभूतातिरिक्तात्मसंयुक्तस्य। पञ्चत्वन्तु यद्यपि जीवतो न भवति, किन्तु मृतस्यैव, तथापि पञ्चत्वं मृतशरीरं दृश्यमानं विपर्य्ययात् पञ्चत्वाभावाद् जीवच्छरीरलिङ्गं भवतीति ज्ञेयम्। अत्रैवोदाहृताश्च प्राणापानादयो न भूतमात्रे भवन्ति, निरात्मकेष्विष्टकमृतशरीरादिष्वदर्शनात्। न च मन एव भूतातिरिक्तमात्मा भवितुमर्हति। यतस्तस्यापि करणरूपस्य प्रेरणादर्थज्ञानं कर्त्तव्यम्। नापीन्द्रियाण्यात्मत्वेन स्वीकर्त्तुं पार्य्यन्ते। यतः, तथा सति इन्द्रियाणीन्द्रियान्तरोपलब्धार्थं न प्रतिसन्धातुं समर्थानि भवन्ति। अस्ति चेन्द्रियान्तरोपलब्धार्थप्रतिसन्धानम्, यथा—सुरभिचन्दनं स्पृशामि। तस्मात् मनइन्द्रियभूतातिरिक्तात्मा तिष्ठतीति ज्ञेयम्। अत्र यद्यपि 'बुद्धि'शब्देन चेतनाधृतिस्मृत्यहङ्काराः गृह्यन्त एव, तथापि बुद्धिप्रकरणत्वेन पृथक्पृथगात्मकत्वेन पुनःपुनः पृथगुपात्ताः। तथा हि चेतनागुणत्वेन चेतना खादिभूतातिरिक्तधर्म्मेणात्मानं गमयति। धृतिस्तु नियमात्मिका नियन्तारम् आत्मानं गमयति। बुद्धिस्तु ऊहापोहयोरेकं कारणं गमयत्यात्मानम्। स्मृतिस्तु पूर्व्वानुभूतार्थस्मरणकर्त्तारं स्थायिनमात्मानं गमयतीत्यनुसरणीयम्। आत्माधिष्ठातृभावे शरीरे प्राणाद्यभावमाह—शरीरमित्यादि। शून्यागारमिव शून्यागारं यथाऽधिष्ठातृशून्यम्, एवं मृतशरीरमपि। षड्धातुकं शरीरम्, तत्र षष्ठे आत्मनि गते पञ्चभूतात्मकं शरीरं भवति, तेन पञ्चत्वं गतम् उच्यते॥ १९॥

अचेतनं क्रियावच्च मनश्चेतयिता परः।
युक्तस्य मनसा तस्य निर्दिश्यन्ते विभोः क्रियाः॥
चेतनावान् यतश्चात्मा ततः कर्त्ता निरुच्यते।
अचेतनत्वाच्च मनः क्रियावदपि नोच्यते॥ २०॥

गङ्गाधरः—तत्राग्निवेशः पूर्व्वं पप्रच्छ, निष्क्रियञ्चेत्यादि। भो भगवन् यदि परमात्मन एतानि प्राणापानादीनि कार्य्याणि लिङ्गानि भवन्ति, कथमेतानि परमात्मनोऽव्यक्ताद्भवितुमर्हन्ति। यतः। आत्मज्ञा आत्मानं निष्क्रियं वदन्ति स्वतन्त्रञ्च वशिनञ्च सर्व्वगञ्च विभुञ्च क्षेत्रज्ञञ्च तथा साक्षिणञ्च वदन्ति। तत्रायं सन्देहः। तद् यथा—निष्क्रियस्येति। तस्यात्मनोऽव्यक्तस्य निष्क्रियस्य भो भगवन् कथं क्रिया विद्यते। यया क्रियया प्राणापानादीनि निष्पाद्यन्तेऽव्यक्तेन। स चात्मा स्वतन्त्रश्चेत् तदा कथमनिष्टासु योनिषु जायते न त्विष्टासु योनिष्वेकान्तेन। एवं यदि स आत्मा वशी भवति तर्हि च कस्माद्धेतोः असुखैर्भावैः स आत्मा बलादाक्रम्यते। दुःखद्वेषी ह्यात्मा नात्मना वशित्वाद् दुःखैर्बलादाक्रान्तो भवितुं अर्हति। यदि च सर्व्वगश्चात्मा तदा सर्व्वगतत्वात् सर्व्वाः सर्व्वथाः वेदनाः किं स न वेत्ति। स पुनर्विभुः सर्व्वव्यापी कस्माद्धेतोः शैलकुड्यतिरस्कृतं वस्तु न पश्यति। स चात्मा क्षेत्रज्ञस्तत्र संशयः। किं क्षेत्रज्ञः पूर्व्वम्, अथ क्षेत्रं पूर्व्वम्? क्षेत्रं जानातीति क्षेत्रज्ञः खलु क्षेत्राज्ज्ञेयात् पूर्व्वं न युक्तो भवति क्षेत्राभावे कथं क्षेत्रं जानातीति युक्तं भवति; तर्हि पूर्व्वं यदि क्षेत्रं स्यात् तदा क्षेत्रज्ञोऽशाश्वतः स्यात्, प्रागसत्त्वात् इति। साक्षिणञ्चात्मानमाहुरिति यत् तत् कस्यायं साक्षिभूतः स्यात्? हि यस्मादात्मनोऽन्यः कोऽपि कर्त्ता न विद्यते स्वयं कर्त्ता स्वयञ्चैव तत्क्रियायां किं साक्षी भवतीति सप्त प्रश्ना आत्मानमधिकृत्य कृताः, तेषामुत्तराणि क्रमेण पुनर्व्वसुरुवाच। तत्र निष्क्रियस्य क्रिया तस्य भगवन् विद्यते कथमिति प्रश्नस्योत्तरमाह—अचेतनमित्यादि। मनस्तु अचेतनं क्रियावच्च तस्य चेतयिता पर आत्माऽव्यक्ताख्यः क्षेत्रज्ञः। स हि चैतन्ये कारणमुक्तः। सत्त्वयोगेन तस्य ज्ञानप्रवृत्तेः। स्वेन चेति तेन तेन मनसा क्रियावता युक्तस्य तस्य परस्य विभोरात्मनः क्रिया निर्दिश्यन्ते। रथो गच्छतीतिवत्। तर्हि चेतनैरश्वैर्युक्तस्याक्रियस्य रथस्य सक्रियत्वाद्

चक्रपाणिः—"निष्क्रियस्य क्रिया तस्य कथम्" इत्यस्योत्तरम्—अचेतनमित्यादि। चेतयिता पर इति पर आत्मा चेतयिता परं न तु साक्षात् क्रियावान्। ननु यद्येवं कथं तस्य क्रियेत्याह—

यथा कर्त्तृत्वं गौणं तथात्मनः कर्त्तृत्वं किं गौणमिति तत्राह—चेतनावान् इत्यादि। अतो यतश्चेतनावानात्मा मनःक्रिययोपचरितक्रियावान् मनश्चेतयितृत्वान् मुख्यस्ततः कर्त्तात्मा निरुच्यते चैतन्याधीनत्वात् क्रियायाः। मनस्तु क्रियावदपि अचेतनत्वात् कर्त्ता नोच्यते। विना हि चैतन्यं मनः क्रियावदपि किञ्चित् न कर्त्तुं प्रभवतीति। उक्तञ्च मुण्डकोपनिषदि श्वेताश्वतरोपनिषदि च। द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते। तयोरन्यः पिप्पलं स्वाद्वत्ति अनश्नन्नन्योऽभिचाकशीतीति। इति। तथा च अव्यक्तआत्मा महानस्य जीवात्मा। तत् सात्त्विको महानेव मनः कायस्तयोः समानं वृक्षं तत्र अव्यक्ताख्ये यः क्षेत्रज्ञः पुरुषः स एकः सुपर्णः। अपरो विषमत्रिगुणरूपो महान्। द्वावेतौ सुपर्णौ सयुजौ नित्यसंयुक्तौ सखायौ शरीररूपं समानमेकं वृक्षं परिषस्वजाते। तयोर्मध्येऽन्य एकः समत्रिगुणपुरुषः सुषुप्तौ समाधौ च परेऽक्षरे परमात्मनि तुरीये शिवे सम्प्रतितिष्ठते रसो वै स परमात्मा तञ्च रसं ह्येवायं लब्ध्वानन्दी भवति आनन्दमयः संश्चेतसा महता सुखेनानन्दं पिप्पलं फलं स्वादु अत्ति। अन्यो महानात्मा जीवस्तु तत्फलमनश्नंस्तत् फलभोगक्रियामभिचाकशीति पश्यति। परमात्मा शिवो महेश्वरस्तदुपपश्यत्यनुमन्यते न तु भुङ्क्ते। एतदुक्तं भगवद्गीतायाम्। सुषुप्तौ समाधौ च भोक्ता प्राज्ञ आत्मानन्दमयो विष्णुरनुभोक्तानुमन्ता परमात्मा शिव इति। तद् यथा—उपद्रष्टानुमन्तानुभोक्ता भर्त्ता महेश्वरः। परमात्मेति चाप्युक्तो देहेऽस्मिन् पुरुषः पर इति। स्वप्ने चायं क्षेत्रज्ञः एकः सुपर्णः षड्धातुभूतात्मा तैजसोऽपरः सुपर्णः सूक्ष्मं शरीरं समानं वृक्षं परिष्वज्य वर्त्तते। तेनाव्यक्तेन चेतनेनाधिष्ठितत्वात् षड्धातुश्चेतन आहङ्कारिकं मनश्चेतयति स्वेन चेति तेन मनसा युक्तश्च क्रियावान् भवति। स एकोनविंशत्या मुखैः पञ्चमहाभूतैः प्राणैरेकादशेन्द्रियैरहङ्कारबुद्धिभ्याञ्च प्रविविक्तं फलं प्रकृतिजगुणं भुङ्क्ते प्राज्ञस्तत् फलमनश्नंस्तद्भुक्तिक्रियामभिचाकशीति। अत्राप्युपद्रष्टानुमन्तानुभोक्ता परमात्मा शिवः। एवं जागरितस्थानो वैश्वानरो भूतात्मा तत्प्राज्ञात्माधिष्ठितत्वाच्चेतनः क्रियावत् अचेतनं मन आहङ्कारिकमनोजातं मनः चेतयति तन्मनःसंयोगात् क्रियावान् भवति। स सप्ताङ्ग एकोनविंशत्या मुखैः स्थूलान् प्रकृतिजा[न्] गुणान् पिप्पलं

युक्तस्येत्यादि। आत्माधिष्ठितस्यैव मनसः क्रिया उपचारादात्मनः क्रियेत्युच्यते इत्यर्थः। एतत् एवोपपादयति चेतनेत्यादि—चेतनेन ह्यात्मनाधिष्ठितं मनः क्रियासु प्रवर्त्तते, चेतनानधिष्ठितन्तु मनः क्रियासु न प्रवर्त्तते। तेन यत्कृता सा क्रिया, स एव क्रियावानिति व्यपदेष्टुं युज्यते

यथास्वेनात्मनात्मानं सर्व्वः * सर्व्वासु योनिषु।
प्राणैस्तन्त्रयते प्राणी न ह्यन्योऽन्यस्य † तन्त्रकः॥ २१॥

फलं भुङ्क्ते। क्षेत्रज्ञः पश्यति। अत्राप्यनुद्रष्टानुमन्तानुभोक्ता परमात्मा महेश्वरः शिव इति। तदुक्तं भगवद्गीतायां त्रयोदशाध्याये। प्रकृतिं पुरुषञ्चैव विद्ध्यनादी उभावपि। विकारांश्च गुणांश्चैव विद्धि प्रकृतिसम्भवान्। कार्य्य-कारणकर्त्तृत्वे हेतुः प्रकृतिरुच्यते। पुरुषः सुखदुःखानां भोक्तृत्वे हेतुरुच्यते। पुरुषः प्रकृतिस्थो हि भुङ्क्ते प्रकृतिजान् गुणान्। कारणं गुणसङ्गोऽस्य सदसद्योनिजन्मसु। उपद्रष्टानुमन्तानुभोक्ता भर्त्ता महेश्वरः। परमात्मेति चाप्युक्तो देहेऽस्मिन् पुरुषः परः। इति। इति निष्क्रियस्य क्रिया तस्य भगवन् विद्यते कथमिति प्रश्नस्योत्तरमिति॥ २०॥

गङ्गाधरः—अथ स्वतन्त्रश्चेदनिष्टासु कथं योनिषु जायत इति प्रश्नस्योत्तर-माह—यथास्वेनेत्यादि। न खलु स्वस्य तन्त्रः स्वतन्त्रः स यः स्वेतराप्रयुज्यः सन् स्वेतरप्रयोजकः कर्त्ता। तर्हि क इह स्वतन्त्रः। प्राणी सर्व्वः प्राणभृत्। यथास्वेन स्वमनतिक्रम्य स्वेन स्वेनात्मना सर्व्वासु योनिषु प्राणैस्तन्त्रयते न त्वन्यस्य तन्त्रकोऽन्य इति। तस्मादनिष्टासु योनिषु जायते। नैकान्तेनेष्टासु इति। याज्ञवल्क्यसंहितायाञ्च। निःसरन्ति यथा लोह-पिण्डात् तप्तात् स्फुलिङ्गकाः। सकाशादात्मनस्तद्वदात्मानः प्रभवन्ति हि। तत्रात्मा हि स्वयं किञ्चित् कर्म्म किञ्चित् स्वभावतः। करोति किञ्चिदभ्यासाद् धर्म्माधर्म्मो-भयात्मकम्। निमित्तमक्षरः कर्त्ता द्रष्टा ब्रह्म गुणी वशी। अजः शरीरग्रहणात् स जात इति कीर्त्त्यते। इत्यादि। तत्र प्रश्नाः क्रमेण। यद्येवमेव स कथं पापयोनिषु जायते इति, परत्र च कथं भावैरनिष्टैः संप्रयुज्यते? तत्रोत्तरम्। अन्त्यपक्षिस्थावरतां मनोवाक्कायकर्म्मजैः। दोषैः प्रयाति जीवोऽयं भवं योनि-

न त्वचेतनं मनः, तत्पराधीनक्रियत्वेन परमार्थतः क्रियावदपि कर्त्तृत्वेन नोच्यत इति वाक्यार्थः। नोच्यते कर्त्तृ इति शेषः॥ २०॥

चक्रपाणिः—सम्प्रति स्वतन्त्रत्वेऽप्यनिष्टयोनिषु गमनं प्राणाक्षिप्तं समादधाति—यथा-स्वेनेत्यादि। सर्व्वासु नरगोहस्तिकीटादियोनिषु। प्राणैस्तन्त्रयते प्राणैर्योजयति, आत्मनैवायं धर्म्माधर्म्मसहायेनात्मानं सर्व्वयोनिषु नयति, न परप्रेरितो याति, यतोऽन्यः पुरुषोऽस्य प्रेरको नास्ति ईश्वराभावात्। किंवा सत्यपि ईश्वरे तस्यापि कर्म्मपराधीनत्वात्। इदमेव चास्यानिष्ट-

* नयति सर्व्वयोनिषु इति चक्रः। † अन्यस्येत्यत्र अस्यस्य इति चक्रः।

वशी तत् कुरुते कर्म्म यत् कृत्वा फलमश्नुते ।
वशी चेतः समाधत्ते वशी सर्व्वं निरस्यति ॥ २२ ॥
देही सर्व्वगतो ह्यात्मा स्वे स्वे संस्पर्शनेन्द्रिये ।
सर्व्वाः सर्व्वाश्रयस्थास्तु नात्माऽतो वेत्ति वेदनाः ॥ २३ ॥

शतेषु च। अनन्ताश्च यथा भावाः शरीरेषु शरीरिणाम्। रूपाण्यपि तथैवेह सर्व्वयोनिषु देहिनाम्। इत्यादि ॥ २१ ॥

गङ्गाधरः—अथ वशी यद्यसुखैः कस्माद्भावैराक्रम्यते वलादिति प्रश्नस्योत्तरमाह—वशी तदित्यादि। न खलु यः स्ववशे वर्त्तते स वशी, तर्हि कः पुनर्वशी नामोच्यते? स वशी यस्तु तत् कर्म्म कुरुते यत् कर्म्म कृत्वा तस्य कर्म्मणः फलं स्वयमेवाश्नुते नान्योऽश्नुते। प्रज्ञया प्रज्ञापराधेन च सदसत्कर्म्माण्यात्मा करोति तत्र सत्कर्म्मकर्त्ता तादृशवशी तत्कृतकर्म्मफलेन सुखेन वलात् आक्रम्यते। असत्कर्म्मकर्त्ता च वशी तत्कर्म्मफलेन दुःखेन वलादाक्रम्यते। यस्तु चेतः समाधत्ते स वशी, यश्च सर्व्वं निरस्यति सोऽपि सर्व्वसंन्यासी वशी, स स नासुखैर्भावैर्वलादाक्रम्यत इति ॥ २२ ॥

गङ्गाधरः—नन्वेवं चेदात्मा सर्व्वगतः सर्व्वगतत्वाच्च सर्व्वाः सर्व्वेषां वेदनाः

योनिगमने स्वातन्त्र्यम्—यद् अनिष्टयोनिगमनहेत्वनिष्टकारणे स्वातन्त्र्यम्, अनिष्टकारणारब्धस्वकर्म्मणैवायमनिच्छन्नपि नीयत इत्यनिष्टयोनिगमनं भवति। स्वातन्त्र्याच्च यथोक्तं भवति ॥ २१ ॥

चक्रपाणिः—"वशी यद्यसुखैः कस्माद् भावैराक्रम्यत" इत्यस्योत्तरम्—वशीत्यादि। वशी स्वेच्छाधीनप्रवृत्तिः इष्टेऽनिष्टे वात्मा, तेन वशी सन् अयं तानि कर्म्माणि करोति शुभान्यशुभानि वा आपातफलरागात्, यानि कृत्वा तत्कर्म्मप्रभावात् शुभेनाशुभेन वा योगमाप्नोति। एतेन, कर्त्तव्ये कर्म्मण्यस्य वशित्वम्, कृतकर्म्मफलन्त्वस्यानिच्छतोऽपि भवति। तेन, तत्प्रति नास्य वशित्वम्। अन्यदपि वशित्वफलमाह—वशी चेतः समाधत्त इति। अनिष्टेऽर्थे वशी सन् अयं मनो निवर्त्तयति। यदि ह्ययं वशी न स्यात्, न मनो निवर्त्तयितुं शक्नुयात्। अपरमपि वशित्वगमकं कर्म्माह—वशी सर्व्वं निरस्यतीति। वशी सन्नयं मोक्षार्थप्रवृत्तः सर्व्वारम्भं शुभाशुभफलं त्यजतीत्यर्थः। इह 'स्वतन्त्रः' परात्मना ईश्वरादिना प्रेरितप्रवृत्तिरुच्यते। वशी तु स्वयमपि प्रवर्त्तमान इच्छावशात् प्रवर्त्तते, न प्रेरितप्रवृत्तिरूपत्वेन ईप्सिते वर्त्तते इति स्वातन्त्र्यवशित्वयोर्भेदः ॥ २२ ॥

चक्रपाणिः—"सर्व्वाः सर्व्वगतत्वाच्च वेदनाः किं न वेत्ति सः" इत्यस्योत्तरमाह—देहीत्यादि। सर्व्वगत इति सर्व्वगतोऽपि। संस्पर्शनेन्द्रिय इति संस्पर्शयुक्ते शरीरे वेदनाः सुखदुःखरूपा

विभुत्वमत एवास्य यस्मात् सर्व्वगतो महान्।
मनसश्च समाधानात् पश्यत्यात्मा तिरस्कृतम् ॥
नित्यानुबन्धं मनसा देहकर्म्मानुपातिना।
सर्व्वयोनिगतं विद्यादेकयोनावपि स्थितम् ॥ २४ ॥

किं न वेत्तीति प्रश्नस्योत्तरमाह—देहीत्यादि। हि यस्मात् सर्व्वगतोऽप्यात्मा देही रजस्तमोभ्यां मुग्धः स्वे स्वे संस्पर्शनेन्द्रिये स्वस्वसर्व्वा वेदना वेत्ति अतो देहित्वात् सर्व्वाश्रयस्थास्तु सर्व्वा वेदना न वेत्ति। एवमेवोक्तं स्मृतिशास्त्रे याज्ञवल्क्येन। वेत्ति सर्व्वगतां कस्मात् सर्व्वगोऽपि न वेदनाम्। सर्व्वाश्रयां निजे देहे देही विन्दति वेदनामिति ॥ २३ ॥

गङ्गाधरः—तर्हि कथं विभुः स्यादात्मा, विभुश्च चेत् कस्माच्छैलकुड्यतिरस्कृतं न पश्यतीत्यभिप्रेत्याह, न पश्यति विभुः कस्मात् शैलकुड्यतिरस्कृतमिति। तत्रोत्तरम्—विभुत्वमत एवेत्यादि। यस्मात् सर्व्वगतो महांश्चात्माऽत एव विभुत्वमस्य न तु देहित्वात्। देहित्वे तु शैलकुड्यतिरस्कृतं न पश्यति। तर्हि देहित्वे कथं सर्व्वगत आत्मा स्यादित्यत आह मनसश्चेत्यादि। अयमात्मा मनसः समाधानाद् योगे वर्त्तमानः समाधिं कुर्व्वन्नात्ममनसोः संयोगविशेषात् शैलकुड्यादिभिस्तिरस्कृतं सर्व्वं पश्यतीति सर्व्वगतस्तदा स्यात्। कथमेकदेहस्थः सर्व्वं मनसः समाधानात् पश्यतीत्यत आह—नित्यानुबन्धमित्यादि।

वेत्ति, सर्व्वाश्रयस्थास्तु न वेत्तीति योजना। यस्मात् सर्व्वगतोऽयमात्मा स्वकीय एव स्पर्शनवति शरीरे परं वेदना वेत्ति। तेन सर्व्वाश्रयस्थाः सर्व्ववेदना न वेत्तीति वाक्यार्थः। सर्व्वाश्रयस्था इति सर्व्वपरशरीरगताः। परशरीरे चात्मा स्वकर्म्मोपार्जितेन्द्रियाभावाद् विद्यमानोऽपि न लभते सुखदुःख। स्वे स्वे शरीर इति वक्तव्ये, यत् संस्पर्शनेन्द्रिये इति करोति, तेन स्वशरीरेऽपि केशनखादौ स्पर्शनेन्द्रियं नास्ति, तत्र नात्मा किञ्चिदुपलभत इति दर्शयति ॥ २३ ॥

चक्रपाणिः—"न पश्यति विभुः कस्माद्" इत्यादिप्रश्नस्योत्तरं वक्तुं प्रवृत्तो विभुत्वसाधकार्थगुणहेतुप्राप्त्या विभुत्वमेव तावदात्मनः साधयति—विभुत्वमित्यादि। विभुत्वं सर्व्वगतपरिमाणयोगित्वम्। अत एवेत्युक्तसर्व्वगतत्वात्। एतदेव स्पष्टार्थं साक्षाद् ब्रूते—यस्मादित्यादि। सर्व्वगतत्वं सर्व्वतोऽप्युपलभ्यमानत्वेन सर्व्वगताकाशादिपरिमाणस्याप्यस्ति, तेन, तद्व्यवच्छेदार्थं 'महान्' इति पदम्, महापरिमाणयोगिद्रव्यं विभुरुच्यत इति फलति। विभुत्वं व्युत्पाद्य कुड्यादितिरोहितात्मज्ञानं नैकान्तं भवतीति दर्शयन्नाह—मनस इत्यादि। समाधानं समाधिः। अनेन योगिनः समाधिबलात् तिरोहितमपि पश्यन्तीति दर्शयति। ये तु तिरोहितं न पश्यन्ति,

आदिर्नास्त्यात्मनः क्षेत्र-पारम्पर्य्यमनादिकम् ।
अतस्तयोरनादित्वात् किं पूर्व्वमिति नोच्यते ॥ २५ ॥

देहिनमात्मानं देहकर्म्मानुपातिना मनसा शरीरविशेषकर्म्मफलविशेषयोरनुरूपेण पतनशीलेन मनसा नित्यानुबन्धं न कदापि वियुक्तं तन्मनःसमाधानाद्देहिविषयतो निवृत्तौ प्रसाराभावेनैकीभूतत्वादेकयोनावपि स्थितं सर्व्वयोनिगतं विद्यात्। ततः सर्व्वगतत्वं ततो विभुत्वञ्चेति ॥ २४ ॥

गङ्गाधरः—तदेवं विभुत्वान्मनसः समाधानात् सर्व्वं क्षेत्रं जानाति यतस्ततः क्षेत्रज्ञस्तत्रायं संशयः। क्षेत्रज्ञः क्षेत्रमेतयोः किं पूर्व्वम्। क्षेत्रज्ञश्चेत् पूर्व्वं कथं क्षेत्रं जानाति क्षेत्राभावात्। यदि क्षेत्रं पूर्व्वं ततः परं क्षेत्रज्ञस्तदा क्षेत्रज्ञो न शाश्वतो भवति प्रागवर्त्तनाच्छश्वद्वर्त्तनाभावात्। इति प्रश्नस्योत्तरमाह—आदिरित्यादि। आत्मनः क्षेत्रज्ञस्यादिः प्रथमनिर्द्देशो नास्ति किमवधिरात्मास्ति क्षेत्राणाञ्च पारम्पर्य्यमव्यक्तान्महान् महतोऽहङ्कार इत्येवं परम्परमुत्पत्तिस्तस्यापि आद्यभावादनादिकं तत् पारम्पर्य्यम्। तयोरुभयोरत एवंविधादनादित्वात् पूर्व्वं किमिति नोच्यते। यद्यप्येवमनादित्वं क्षेत्रक्षेत्रज्ञयोस्तथापि यथा खल्वादिसर्गेऽव्यक्तं नामात्मा बभूव यथा चाव्यक्तान्महदादिक्षेत्रं बभूव तत्पारम्पर्य्यादादौ क्षेत्रज्ञोऽव्यक्तं नामात्मा बभूव न क्षेत्रज्ञो नाम। ततः परं तस्मादव्यक्तात् क्षेत्रं यदा बभूव तस्य ज्ञानात् क्षेत्रज्ञो नाम बभूव। इति। क्षेत्रज्ञत्वस्वभावेनाव्यक्तं प्रागासीत् ततः क्षेत्रज्ञ उच्यते क्षेत्रज्ञनाम तु क्षेत्र जाते बभूवेति ॥ २५ ॥

तथाप्युपपत्तिमाह—निरयेत्यादि। सर्व्वयोनिगतमप्यात्मानं मनसानुबन्धगतम् एकयोनावपि स्थितं विद्यादिति योज्यम्। देहानुवर्त्तकेन कर्म्मणा अनुपात आत्मना सम्बन्धो यस्य तेन, मनसा देहकर्म्मानुपातिना। एतेन यद्यप्यात्मा कुड्यादितिरोहितस्तथापि यदस्योपलब्धिसाधनं मनः, तस्यैकस्मिन्नेव शरीरे व्यवस्थितस्य व्यवधानात् "न पश्यत्ययं तिरस्कृतम्" इत्युक्तं भवति ॥ २४ ॥

चक्रपाणिः—"क्षेत्रज्ञः क्षेत्रमथवा" इत्यादिप्रश्नस्योत्तरम्—आदिरित्यादि। क्षेत्रपारम्पर्य्यमिति क्षेत्रस्याव्यक्तवर्जितस्य महदादित्रयोविंशतिकस्य परम्परासन्ततेरनादित्वेनैव 'क्षेत्रक्षेत्रज्ञयोरिदं प्रथमम्" इति व्यपदेशो नैव भवतीत्यर्थः। ननु यदि क्षेत्रपरम्पराप्यनादिस्तदात्मवदुच्छेदं नाप्नोति, यदनादिस्तन्नित्यं भवति, यथात्मेति दृष्टम्; ब्रूमः—अनादित्वेऽपि यत् स्वरूपेण एवानादि, तन्नोच्छिद्यते, यथा आत्मा। यत् तु उच्छित्तिधर्म्मकं बुद्ध्यादि, तदुच्छिद्यत एव, सन्तानस्तु परमार्थतः सन्तानिभ्योऽतिरिक्तं नास्त्येव, यदनादिः स्यात्। तेन, सन्तानवादित्वं भाक्तमेव। किञ्चैवम्भूतस्य बुद्ध्यादिसन्तानस्योच्छेदे मोक्षप्रतिपादक आगम एव प्रमाणत्वेन ज्ञेयः ॥ २५ ॥

ज्ञः साक्षीत्युच्यते नाज्ञः साक्षी ह्यात्मा ह्यतः स्मृतः।
सर्व्वो भावो हि सर्व्वेषां भूतानामात्मसाक्षिकः * ॥ २६ ॥
नैकः कदाचिद् भूतात्मा लक्षणैरुपलभ्यते।
विशेषोऽनुपलभ्यस्य तस्य नैकस्य विद्यते ॥

गङ्गाधरः—तर्हि क्षेत्रज्ञानाद् यच्च किञ्चित् करोति तत् सर्व्वं जानातीति साक्षिणमात्मानमाहुस्तत्र संशयः। साक्षिभूतश्च कस्यायं कर्त्ता ह्यन्यो न विद्यत इति। यस्मादात्मैव कर्त्ता न चान्यो महदादिः कोऽपि कर्त्ता, तस्मात् कस्य साक्षिभूतोऽयमात्मा भवतीति। तत्रोत्तरमाह—ज्ञः साक्षीत्यादि। यो जानाति स ज्ञः सुतरां साक्षीत्युच्यते, ज्ञस्त्वात्मा तत आत्मैव साक्षी न त्वज्ञो महदादिः। कस्य साक्षीत्यत आह—भूतानां सर्व्वेषां यस्मात् सर्व्वो भाव आत्मसाक्षिक आत्मैव यस्य साक्षी। यत उक्तम्। द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते। तयोरन्यः पिप्पलं स्वाद्वत्ति अनश्नन्नन्योऽभिचाकशीति। एकः क्रियां करोति तत् पिप्पलं च फलं स्वादु अत्ति अपरस्तदभिचाकशीति पश्यतीति, स आत्मा ज्ञः साक्षी। उक्तश्च मनुना। योऽस्यात्मनः कारयिता तं क्षेत्रज्ञं प्रचक्षते। यः करोति तु कर्म्माणि स भूतात्मोच्यते बुधैरिति ॥ २६ ॥

गङ्गाधरः—अथैवं साक्षी क्षेत्रज्ञश्चेदात्मा द्रष्टा न तु भोक्ता, तर्हि, स्यात् कथं वाऽविकारस्य विशेषो वेदनाकृत इति। आत्मा सर्व्वभूतेषु निर्व्विशेषो निर्व्विकारः कथं तस्याविकारस्य वेदनाकृतविकारेण विशेषो भवति, य एवास्मिन् देवदत्ते स एव यज्ञदत्तादिषु। तत्र देवदत्तो येन सुखी स्यान्न तेन

चक्रपाणिः—"साक्षिभूतश्च कस्यायम्" इत्यस्योत्तरम्—ज्ञ इत्यादि। ज्ञो ज्ञानवान् साक्षीति लोके कथ्यते, न त्वज्ञः पाषाणादिः। तेन, न, ज्ञत्वेनासत्यन्यस्मिन् कर्त्तरि 'साक्षी' इत्युच्यते इति वाक्यार्थः। सर्व्वेषामिति खादीनाम्, सर्व्वे भावा इति भूतधर्म्मा दर्शनयोग्याः। आत्मसाक्षिका इति आत्मोपलभ्यमानाः ॥ २६ ॥

चक्रपाणिः—"कथञ्चाविकारस्य" इत्यादिप्रश्नस्योत्तरम्—नैक इत्यादि। अविकारस्य परमात्मनो

---

* सर्व्वे भावा हि सर्व्वेषां भूतानामात्मसाक्षिकाः इति चक्रधृतः पाठः।

संयोगः पुरुषस्येष्टो विशेषो वेदनाकृतः ।
वेदना यत्र नियता विशेषस्तत्र तत्कृतः ॥ २७ ॥
चिकित्सति भिषक् सर्व्वास्त्रिकाला वेदना इति ।
यया युक्त्या वदन्त्येके सा युक्तिरुपधार्य्यताम् ॥

यन्नदन्त इत्येवं प्रश्नस्योत्तरमाह—नैक इत्यादि। भूतात्मा भूतानामात्मा यदा खल्वेकः केवलो भवति न तदा लक्षणैरुपलभ्यते लक्षणाभावात्। अनुपलभ्यस्यानुमानेनोपलब्धिरहितस्य तस्यैकस्य केवलस्य सर्व्वत्रैव विशेषो न विद्यते। संयोगः पुरुषस्यात्मन इतरैर्महदादिभिः सह योगो वेदनाकृतो विशेषः। कथम्? वेदनेत्यादि। यत्र पुरुषे वेदना सुखदुःखात्मिका नियता एकान्तेन विद्यते तत्र वेदनाकृतो विशेष आत्मनि वर्त्तते। इत्येवं निर्व्विशेषस्य आत्मनः पुरुषस्य चतुर्व्विंशतिकत्वावस्थां गतस्य वेदनाकृतो विशेष इति ॥ २७ ॥

गङ्गाधरः—एवं वेदनाकृतविशेषविशिष्टस्य राशित्वावस्थिकस्य वेदनाभिवर्त्तित्वे, संशयमाह—अथ चार्त्तस्य भगवंस्तिसृणां कां चिकित्सति। अतीतां वेदनां वैद्यो वर्त्तमानां भविष्यतीम्। भविष्यन्त्या असम्प्राप्तिरतीताया अनागमः। साम्प्रतिक्या अपि स्थानं नास्त्यर्त्तेः संशयो ह्यतः। अथेत्यादि। अथैवं वेदनाभिरार्त्तस्य पुरुषस्य तिसृणामर्त्तीनां काम‍र्त्तिं भिषक् चिकित्सति। किमतीतां वेदनां चिकित्सति अथवा वर्त्तमानां वेदनामथवा भविष्यन्तीमिति। तिसृष्वपि चिकित्सा नोपपद्यते। कस्मात्? भविष्यन्त्या वेदनाया असम्प्राप्तिः उत्पत्तिर्नास्ति कथं चिकित्सति? अतीतायाश्च वेदनाया अनागम आगमनं

वेदनाकृतो विशेषो नास्त्येव, यत्र तु वेदनाकृतो विशेषः, स राशिरूपः परमात्मव्यतिरिक्त एवेति वाक्यार्थः। भूतानामधिष्ठाता आत्मा भूतात्मा, अयमेको भूतव्यतिरिक्तो न लक्षणैः प्राणापानादिभिरुक्तैरुपलभ्यते। कुतो नोपलभ्यत इत्याह—विशेष इति। एकस्य भूतरहितस्य, यत् आत्मनो विशेषो वेदनादिर्नोपलभ्यत एव, तेन अनुपलब्धिरेवात्र प्रमाणमित्यर्थः। संयोगपुरुषश्चतुर्व्विंशतिकः। नन्वेवमपि चतुर्व्विंशत्यन्तर्निविष्टस्य भूतात्मनो वेदनाकृतविशेषेण भवितव्यम्, यतः, समुदायधर्म्मः समुदायिनामेव भवति, यथा माषराशेर्गुरुत्वं प्रत्येकं माषाणामेव गौरवेण भवतीत्याह—वेदनेत्यादि। वेदना सुखदुःखरूपा। यत्र बुद्ध्यादिसमूहे नियता व्यवस्थिता वेदना, तत्कृतो दैन्यहर्षादिविशेषोऽपि तत्रैव नियतः, तत्रैव बुद्ध्यादिराशौ वर्त्तते, नात्मनीति भावः। बुद्ध्यादिगतेनैव गुणत्रयपरिणामरूपेण सुखदुःखादिना सुखदुःखादिमानेवायमात्मा, तत्सम्बन्धाच्च सुखदुःखादिमान् भवति ॥ २७ ॥

पुनस्तच्छिरसः शूल ज्वरः स पुनरागतः।
पुनः स कासो बलवांश्छर्दिः सा पुनरागता॥
एभिः प्रसिद्धवचनैरतीतागमनं मतम्।
कालश्चायमतीतानामर्त्तीनां पुनरागतः॥
तमर्त्तिकालमुद्दिश्य भेषजं यत् प्रयुज्यते।
अतीतानां प्रशमनं वेदनानां तदुच्यते॥ २८॥
आपस्ताः पुनरागुर्या * याभिः शस्यं पुरा हतम्।
तथा प्रक्रियते सेतुः प्रतिकर्म्म तथाश्रये॥
पूर्व्वरूपं विकाराणां दृष्ट्वा प्रादुर्भविष्यताम्।
या क्रिया क्रियते सा च वेदनां हन्त्यनागताम्॥ २९॥

नास्ति कान्तु चिकित्सति। साम्प्रतिक्या वर्त्तमानाया अत्तरपि शीघ्रगत-स्वभावात् स्थानं क्षणमपि स्थितिर्नास्ति क्षणे क्षणे नश्वरत्वात्। अतो हि संशय इति प्रश्नः। तस्योत्तरमुवाच—चिकित्सतीत्यादि। भिषक् त्रिकालाः सर्व्वा वेदनाश्चिकित्सतीत्येके यया युक्त्या वदन्ति, सा युक्तिमंत्त उपधार्य्यताम्। अतीतानां वेदनानां तत् प्रशमनमुच्यते। पुनस्तच्छिरसः शूलमभूद् यच्छिरः-शूलं पूर्व्वमभूदित्येवमादिभिर्लोके प्रसिद्धवचनैरतीतानामागमनं मतम् सर्व्वेषां सम्मतम्। अत एवातीतानामर्त्तीनां स कालः पुनरागतस्तं कालमुद्दिश्य यद् भेषजं प्रयुज्यते तदतीतानां वेदनानां प्रशमनं चिकित्सोच्यते॥ २८॥

गङ्गाधरः—इत्यतीतवेदनाचिकित्सायां युक्तिं दर्शयित्वा भविष्यद्वेदना-चिकित्सायां युक्तिं दर्शयति—आपस्ता इत्यादि। याभिरद्भिः पुरा शस्यं हतं ता आपः पुनरागुरागमन्। यथाधुना ताभिरद्भिः शस्यं न हनिष्यते तथा सेतुः प्रक्रियते, तथा रोगाणां शारीरमानसानामाश्रये शरीरे मनसि च यथा व्याधिभिः पूर्व्वं पीड़ितो जनस्तथा न पीड़यिष्यतेऽधुनेत्येवं प्रतिकर्म्म चिकित्सा क्रियते। तद् यथा—पूर्व्वरूपमित्यादि। विकाराणां पूर्व्वरूपं

चक्रपाणिः—'अथ वार्त्तस्य' इत्यादिप्रश्नस्योत्तरमाह—त्रिकित्सतीत्यादि। अतीतवेदनाचिकित्सा न मुख्या, किन्तु लोकसिद्धोपचारेणोच्यत इति वाक्यार्थः। प्रसिद्धवचनैरिति लोकप्रसिद्धवचनैः।

* पुनरायाता इति चक्रः।

पारम्पर्य्यानुबन्धस्तु दुःखानां विनिवर्त्तते।
सुखहेतूपचारेण सुखञ्चापि प्रवर्त्तते॥
न समा यान्ति वैषम्यं विषमाः समतां न च।
हेतुभिः सदृशा नित्यं जायन्ते देहधातवः॥
युक्तिमेतां पुरस्कृत्य त्रिकालां वेदनां भिषक्।
हन्तीत्युक्ता चिकित्सा सा नैष्ठिकी या विनोपधाम्॥ ३०॥

दृष्ट्वा प्रादुर्भविष्यतां विकाराणां या क्रिया क्रियते सा क्रिया चिकित्साऽनागतां भविष्यन्तीं वेदनां हन्तीति॥ २९॥

गङ्गाधरः—अथ वर्त्तमानवेदनाचिकित्सायां युक्तिं दर्शयति—पारम्पर्य्येत्यादि। दुःखानां वर्त्तमानानां व्याधीनां शीघ्रगत्वस्वभावेऽपि भावानां प्रतिक्षणं भङ्गे पूर्व्वभावस्य हेतवो यादृशाः समा विषमा वा त उत्तरावस्थामपि पूर्व्वभावेणैवारभमाणा आरम्भका नश्यन्तीति पूर्व्वभावस्य पारम्पर्य्यानुबन्धो विनिवर्त्तते सुखहेतूपचारेण सुखञ्चानुवर्त्तते विषमपूर्व्वभावहेतुनाशात् समभावेन पूर्व्वभावोत्पादनाद् वर्त्तमानानां वेदनानां चिकित्सा क्रियते। कुत इत्यत आह—न समा इत्यादि। देहधातवो नित्यं हेतुभिः सदृशा जायन्ते। न समा देहधातवो वैषम्यं यान्ति समहेतुभिः। विषमा देहधातवश्च विषमहेतुभिर्न समतां यान्ति। तस्माद्धातुवैषम्ये साम्यहेतुक्रिया क्रियते इति। युक्तिमित्यादि। एतामुक्तां युक्तिं पुरस्कृत्य भिषक् त्रिकालां वेदनां हन्तीति

प्रतिकर्म्म चिकित्सा। आश्रय इति शरीरे। पूर्व्वरूपमित्यादिना अनागतवेदनाचिकित्सा समर्थ्यते। पूर्व्वरूपं यद्यपि भविष्यतामेव भवति रोगाणाम्, तथापि 'भविष्यताम्' इति पदेन, भूतेऽपि व्याधौ यानि रूपाणि भवन्ति, तानि निराकरोति। उक्तं हि—"प्राक् सन्तापादपि चैनं सन्तापार्त्तमनुबध्नन्ति" इत्यनेन रोगावस्थायामपि पूर्व्वरूपसद्भावः। एवमतीतानागतवेदनाचिकित्सा व्युत्पादिता। वर्त्तमानचिकित्सामपि दर्शयन् पारमार्थिकं मतमाह—पारम्पर्य्येत्यादि। पारम्पर्य्यानुबन्धः सन्तानन्यायेनानुबन्धः। दुःखानामिति रोगाणाम्। सुखहेतूपचारेण इत्यारोग्यहेतुचिकित्सासेवया। सुखमित्यारोग्यम्। एवं मन्यते यत्—चिकित्सा सुखहेतुः सेव्यते, तदा दुःखहेतुसेवाभावात् दुःखं नोत्पद्यते, उत्पन्नञ्च दुःखं रोगरूपं क्षणभङ्गित्वेन स्वयमेव नश्यति। सुखहेतुसान्निध्यात् सुखमारोग्यमुत्पद्यते। तेन चिकित्सया अनागतं दुःखं हेतुप्रतिबन्धात् निरुध्यते सुखञ्च जन्यते इति सिद्धान्तः। एतदेवाह—न समा इत्यादि। समाश्च विषमाश्च क्षणभङ्गित्वस्वभावाच्च वैषम्यावस्थां साम्यावस्थां वा यान्तीत्यर्थः। हेतुभिः सदृशा इति समहेतोः समाः, अथ

उपधा हि परो हेतुर्दुःखदुःखाश्रयप्रदः।
त्यागः सर्व्वोपधानाञ्च सर्व्वदुःखव्यपोहकः॥
कोषकारो यथा ह्यंशूनुपादत्ते वधप्रदान्।
उपादत्ते तथार्थेभ्यस्तृष्णामज्ञः सदातुरः॥
यस्त्वग्निकल्पानर्थान् ज्ञो ज्ञात्वा तेभ्यो निवर्त्तते।
अनारम्भादसंयोगात् तं दुःखं नोपतिष्ठते॥ ३१॥

त्रिकालवदनाचिकित्सोक्ता। सा तु नैष्ठिकी चिकित्सा या चिकित्सा उपधां विना। इच्छाद्वेषात्मिका हि तृष्णैवोपाधिः। तदिच्छाद्वेषरूपोपाधिविनाशिनी या चिकित्सा सा नैष्ठिकी निष्ठां निश्चित्य स्थित्यर्थमपुनर्भावार्थं या सा नैष्ठिकी मोक्षसाधिनी॥ ३०॥

गङ्गाधरः—कस्मात्? उपधा हीत्यादि। हि यस्मात्। दुःखदुःखाश्रयप्रदः परो हेतुरुपधा। इहामुत्र सुखानां नश्वरत्वाद् विविधदुःखहेतुपुनर्जन्मकारणत्वाच्च ज्ञानवद्भिर्दुःखपक्षे प्रक्षेपात् सर्व्वाणि सुखान्यपि दुःखान्युच्यन्ते। तेन सुखदुःखोभयात्मकं दुःखं तदुभयात्मकदुःखाश्रयशरीरग्रहणञ्च प्रददाति यः परो हेतुः सा खलु उपधैव इच्छाद्वेषात्मिका तृष्णा। अत एव सर्व्वोपधानां निखिलेच्छाद्वेषाणां त्यागः सर्व्वदुःखानां शारीरमानससुखदुःखानां व्यपोहकः नाशकः। उपधा कथं दुःखदुःखाश्रयं प्रददातीत्यत आह—कोषकार इत्यादि। यथा कोषकारः कीटः स्वस्यैव वधप्रदानंशून् सूत्राण्युपादत्ते तथैवाज्ञः पुरुषः स्वस्यैव वधप्रदां तृष्णामिच्छाद्वेषरूपामर्थेभ्य उपादत्ते सदातुरश्च भवति। कं पुनर्दुःखं नोपतिष्ठत इत्यत आह—यस्त्वित्यादि। यस्तु ज्ञः पुरुषोऽग्निकल्पानर्थान् ज्ञात्वा

विषमहेतोश्च विषमाः। एतच्चिकित्साप्राभृतीयेऽध्याये प्रपञ्चितमेव। चिकित्साप्रस्तावेन सकलदुःखहारिणीं चिकित्सां मोक्षफलामाह—चिकित्सा सेत्यादि। निष्ठा अत्यन्तदुःखमोक्षरूपा, तदर्थं भूता नैष्ठिकी। विनोपधामिति तृष्णां विना, तृष्णाशून्या प्रवृत्तिः मोक्षफला भवतीत्यर्थः॥ २८—३०

चक्रपाणिः—परो हेतुरिति मूलकारणम्। दुःखरूपेणैव दुःखाश्रयः शरीरम्। भोगतृष्णया हि प्रवर्त्तमानो धर्म्माधर्म्मान् दुःखशरीरोत्पादकानुपादत्ते। सर्व्वोपधात्यागात् तु न रागद्वेषाभ्यां क्वचित् प्रवर्त्तते। अप्रवर्त्तमानश्च न धर्म्माधर्म्मानुपादत्ते, एवमनागतधर्म्माधर्म्मोपरमः, उपात्तधर्म्माधर्म्मयोस्तु अनुरागशून्यस्योपभोगादेव क्षयः। तेन, सर्व्वथा कर्म्मक्षयात् दुःखशरीराभाव इति भावः। अत्रैव तृष्णायां दुःखकारणत्वे दृष्टान्तमाह—कोषकार इत्यादि। कोषकारः स्वनामप्रसिद्धः

धीधृतिस्मृतिविभ्रंशः सम्प्राप्तिः कालकर्म्मणाम्।
असात्म्यार्थागमश्चेति ज्ञातव्या दुःखहेतवः॥

तस्योऽधर्म्यो निवर्त्तते तं ज्ञं पुरुषं त्यक्तकर्म्माणं क्रियाया अनारम्भात् कर्म्मफलैः सह संयोगाभावात् दुःखं सुखदुःखयोगात् दुःखं पुनर्जन्म नोपतिष्ठते इति॥ ३१॥

गङ्गाधरः—अथ भोः पूर्व्वमुक्तं कालबुद्धीन्द्रियार्थानां योगो मिथ्या न चाति च। द्वयाश्रयाणां व्याधीनां त्रिविधो हेतुसंग्रह इति; तद्विवरणञ्च तिस्रै-षणीये प्रोक्तम्, इह तु दुःखदुःखाश्रयप्रदो हेतुरुपधा तृष्णा प्रोक्तस्तर्हि पृच्छामि, कारणं वेदनानां किमिति? तत्रोत्तरं विस्तरेणोक्तमनुवादरूपं नातो भवति पुनरुक्तमिति। तद् यथा—धीधृतीत्यादि। पूर्व्वं बुद्धेरयोगातियोगमिथ्यायोगभेदेन यस्त्रिविधो योग उक्तस्तत्र बुद्धिस्त्रिधा धीधृतिस्मृतिभेदेन, स च त्रिविधो योगो विभ्रंश इति धीधृतिस्मृतिविभ्रंश एकः। सम्प्राप्तिः कालकर्म्मणामिति। पूर्व्वं कालस्यायोगातियोगमिथ्यायोगभेदात् त्रिविधः कालस्य यो योग उक्तः, तत्र कालशब्देन शीतोष्णवर्षलक्षणः कालविशेषः कालविशेषपरिणतभावश्च विवक्षितः स चात्र व्यज्यते कालकर्म्मणां सम्प्राप्तिः अयोगातियोगमिथ्यायोगरूपोऽसम्यग्योगः। इति द्वितीयः। असात्म्यार्थागमश्चेति। असात्म्येन्द्रियार्थसंयोग इन्द्रियार्थायोगातियोगमिथ्यायोगरूपोऽसम्यगिन्द्रियार्थयोगः इति त्रयो दुःखहेतवो ज्ञातव्या न तु सुखदुःखोभयात्मकदुःख-

कीटः। सदातुर इति सदा संसारदुःखगृहीतः। अनारम्भादिति रागद्वेषपूर्व्वकारम्भविरहात्। असंयोगादिति आरम्भशून्यत्वेन धर्म्माधर्म्मोच्छेदकृतात् शरीरासंयोगात्। शरीराभावे च निराश्रयत्वकारणकं दुःखं न भवतीति भावः॥ ३१॥

चक्रपाणिः—"कारणं वेदनानां किम्" इत्यस्योत्तरमाह—धीधृतीत्यादि। अयञ्चार्थः प्रकरणागतत्वादुच्यमानो न पुनरुक्ततामावहतीति। धीधृतिस्मृतयः पुनः प्रज्ञाभेदाः। एते च शिष्यव्युत्पत्त्यर्थं प्रज्ञाभेदत्वेनान्यथा व्युत्पादयता इहोच्यन्ते। संप्राप्तिः कालकर्म्मणामिति कालस्य संप्राप्तिस्तथा कर्म्मणश्च सम्प्राप्तिः। कर्म्मसम्प्राप्तिः पच्यमानकर्म्मयोगः। कालसम्प्राप्तिग्रहणेन चेह ये कालव्यक्तास्ते गृह्यन्ते, नावश्यं कालजन्याः; यतः स्वाभाविकानपि कालजन्यान् तथा तृतीयकादीनप्यासात्म्येन्द्रियार्थादिजन्यान् कालजत्वेनैवेहाभिधास्यति। कर्म्मजास्तु प्रज्ञापराधजन्या एवेह कर्म्मजन्यत्वेन विशेषेण शिष्यव्युत्पत्तिनिमित्तं पृथक् क्रियन्ते, कालव्यक्तत्वेन कर्म्मजा इह कालसम्प्राप्तिजन्येष्वेव रोद्धव्याः। प्रज्ञापराधावरोधाश्च यथा कर्म्मजानाम्, तथा प्रथमाध्याय एवोक्तम्। किञ्चाचार्य्यणोन्मादनिदाने

विषमाभिनिवेशो यो नित्यानित्ये हिताहिते।
ज्ञेयः स बुद्धिविभ्रंशः समं बुद्धिर्हि पश्यति ॥
विषयप्रवलं * चित्तं धृतिभ्रंशान्न शक्यते।
नियन्तुमहितादर्थाद् धृतिर्हि नियमात्मिका ॥

हेतवः। वक्ष्यते ह्यत्रैव सुखहेतुर्मतस्त्वेकः समयोगः सुदुर्लभ इति। ननु कोधीभ्रंश इत्यत आह—विषमेत्यादि। हिताहिते नित्यानित्ये च कर्म्मणि काले चार्थे च बुद्धेर्यो विषमाभिनिवेशोऽयोगातियोगमिथ्यायोगरूपः स बुद्धिविभ्रंशो ज्ञेयः। अनेन बुद्धिभ्रंशेन यथाविहितकर्म्मण्ययथावज्ज्ञानं भवति तेन धर्म्मविरुद्धसुखजनकं भावमिच्छति धर्म्म्यकर्म्मजसुखजनकं भावं द्वेष्टीत्येवं तृष्णा भवति। तया तृष्णया विषमवाङ्मनःशरीरप्रवृत्तिर्भवति ततो व्याधिः भवतीत्युक्तस्तिस्रैषणीये कर्म्म वाङ्मनःशरीरप्रवृत्तिरित्यादिना। साध्वी बुद्धिः खलु हि यस्मात् समं पश्यति हिताहिते नित्यानित्ये कर्म्मणि काले चार्थे च समयोगस्तस्मिंस्तदेवमेव पश्यति तद् यथार्थदर्शिनी बुद्धिः। अनेन बुद्धिसमयोगेन यथाविहितकर्म्मणि यथावज्ज्ञानं भवति। तेन धर्म्म्यकर्म्मजसुखमिच्छत्यधर्म्म्यकर्म्मजसुखं द्वेष्टीत्येवं तृष्णा भवति, तया तृष्णया धर्म्म्याणि कर्म्माणि कर्त्तुं समा वाङ्मनःशरीरप्रवृत्तिर्भवति। तत आरोग्यं सुखञ्चेह परत्र च भवति। काले चार्थे च धीभ्रंशो दर्शयिष्यते परिणामासात्म्येन्द्रियार्थसंयोगश्चेति।

अथ का धृतिः कश्च धृतिभ्रंश इत्यत आह—विषयप्रवलमित्यादि।

स्वयमेवोक्तम् यत्—"प्रज्ञापराधात् सम्भूते व्याधौ कर्म्मज आत्मनः" इत्यादि, तथा जनपदोद्ध्वंसनीये च विमाने पुनरुक्तम्—"वाय्वादीनाञ्च वैगुण्यमुत्पद्यते, तस्य मूलमधर्म्मस्तन्मूलं वा पूर्व्वकृतं कर्म्म, तयोर्योनिः प्रज्ञापराध एव" इति। तस्मादिह 'सम्प्राप्तिः कालकर्म्मणाम्' इत्यनेन कालजन्या गदा नोच्यन्ते किन्तु कालव्यक्ताः।

धीविभ्रंशं विवृणोति—विषमेत्यादि। विषमाभिनिवेशोऽयथाभूतत्वेनाध्यवसानम्—नित्येऽनित्यमिति। एवं हितेऽहितमहिते च हितमिति या बुद्धिः, स बुद्धिभ्रंशः। अथ कथमयं बुद्धिविभ्रंशशब्देनोच्यत इत्याह—"समं बुद्धिर्हि पश्यति" उचिता बुद्धिः समं यथाभूतं यस्मात् पश्यति, तस्मादसमदर्शनं बुद्धिविभ्रंश उचित एवेत्यर्थः।

धृतिभ्रंशमाह—विषयेत्यादि। विषयप्रवणं विषयेषु सक्तम्। नियन्तुमिति व्यावर्त्तयितुम्।

---

* विषयप्रवणमिति बहुषु ग्रन्थेषु पाठः।

तत्त्वज्ञाने स्मृतिर्यस्य रजोमोहावृतात्मनः ।
भ्रश्यते स स्मृतिभ्रंशः स्मर्त्तव्यं हि स्मृतौ स्थितम् ॥ ३२ ॥
धीधृतिस्मृतिविभ्रष्टः कर्म्म यत् कुरुतेऽशुभम् ।
प्रज्ञापराधं तं विद्यात् सर्व्वदोषप्रकोपणम् ॥

विषयेषु प्रबलं चिन्त्यसङ्कल्प्यादिषु बलवच्चित्तमहितादर्थात् कर्म्मणः कालादर्थाच्च नियन्तुं निग्रहीतुं न पुंसा शक्यते। इति विषयप्रबलचित्तनिग्रहासामर्थ्यं धृतिभ्रंशो धृतेरयोगातियोगमिथ्यायोगरूपः। का पुनः धृतिरित्यत आह—धृतिर्हि नियमात्मिकेति। विषयप्रबलचित्तनिग्रहकारिणी शक्तिर्धृतिः। धीभ्रंशाद्विषमकर्म्मणि प्रवर्त्तमानं चित्तं धृत्या नियम्यते। धृतिभ्रंशात् तु विषमकर्म्मणीच्छा भवति। यत आपाततः सुखं स्याद् यतो दुःखं स्यात् तत्र न द्वेषो भवतीत्येवं तृष्णा भवति। तया तृष्णया विषमवाङ्मनःशरीरप्रवृत्तिर्भवति ततो व्याधिः स्यात्। धृत्या तन्मनोनिग्रहे विषमप्रवृत्त्यभावादारोग्यं सुखञ्च भवति। अथ कः पुनः स्मृतिभ्रंशः का च स्मृतिरित्यत आह—तत्त्वज्ञान इत्यादि। यस्य रजोमोहावृतात्मनो रजस्तमोऽभिभूतचेतसः पुरुषस्य तत्त्वज्ञाने तस्मिंस्तदित्येवं यथार्थज्ञाने स्मृतिभ्रंश्यते, स स्मृतिभ्रंशः, स्मृत्ययोगातियोगमिथ्यायोगरूपः। कुत इत्यत आह—स्मर्त्तव्यं हि स्मृतौ स्थितमिति। यत्किञ्चित् स्मर्त्तव्यं स्मृतिविषयं तत् स्मृतावभ्रष्टायां स्थितमित्येवं स्मृतिसमयोगाद् धीधृतिभ्रष्टः कर्म्मसु विषमेषु प्रवर्त्तमानो यथार्थं स्मृत्वा ततो निवर्त्तते, नाशुभं कर्म्म करोति। स्मृतिभ्रंशे तत्र तथात्वेन ज्ञानाभावेऽयथार्थसुखमिच्छति यथार्थसुखं द्वेष्टीत्येवं तृष्णा भवति, तया तृष्णया विषमवाङ्मनःशरीरप्रवृत्तिर्भवति, ततो व्याधिर्भवति। स्मृत्या तत्र याथार्थ्यस्मरणाद् अयथार्थाकरणादारोग्यं सुखञ्च भवतीति॥ ३२॥

गङ्गाधरः—इत्येवं धीधृतिस्मृतिभ्रंशाद् यद्भवति तदाह—धीधृतीत्यादि।

धृतिर्हि नियमात्मिकेति, यस्मात् धृतिरकार्य्यप्रसक्तं मनो निवर्त्तयति स्वरूपेण, तस्मान्मनोनियमनं कर्त्तुमशक्ता धृतिः स्वकर्म्मभ्रष्टा भवतीत्यर्थः।

स्मृतिभ्रंशं विवेचयति—तत्त्वेत्यादि। तत्त्वज्ञाने स्मृतिर्यस्य भ्रश्यत इति योजना। 'स्मर्त्तव्यं हि स्मृतौ स्थितम्' इति स्मर्त्तव्यत्वेन सम्मतस्यार्थस्य स्मरणं प्रशस्तस्मृतिधर्म्मः। तत्र तत्त्वज्ञानस्य शिष्टानां स्मर्त्तव्यत्वेन स्मर्त्तव्यस्य यदस्मरणम्, तत् स्मृत्यपराधाद् भवतीत्यर्थः॥ ३२॥

चक्रपाणिः—एवं बुद्ध्यादिभ्रंशत्रयरूपप्रज्ञापराधत्वेन दर्शयन्नाह—धीत्यादि। 'सर्व्वदोष'-

उदीरणं गतिमतामुदीर्णानाञ्च निग्रहः ।
सेवनं साहसानाञ्च नारीणाञ्चातिसेवनम् ॥
कर्म्मकालातिपातश्च मिथ्यारम्भश्च कर्म्मणाम् ।
विनयाचारलोपश्च पूज्यानाञ्चाभिधर्षणम् ॥
ज्ञातानां स्वयमर्थानामहितानां निषेवणम् ।
परमौन्मादिकानाञ्च प्रत्ययानां निषेवणम् ॥
अकालादेशसञ्चारो मैत्री संक्लिष्टकर्म्मभिः ।
इन्द्रियोपक्रमोक्तस्य सद्वृत्तस्य च वर्ज्जनम् ॥
ईर्ष्यामानभयक्रोध-लोभमोहमदभ्रमाः ।
तज्जं वा कर्म्म यत् क्लिष्टं क्लिष्टं यद् देहकर्म्म च ॥

धीधृतिस्मृतिविभ्रष्टः पुरुषो यदशुभं कर्म्म कुरुते वाङ्मनःशरीरप्रवृत्तिं कुरुते, तं प्रज्ञापराधं विद्यात् सर्व्वदोषप्रकोपणमिति। एवं धीधृतिस्मृतिविभ्रष्टश्च सन् यत् कालार्थानामयोगातियोगमिथ्यायोगयुक्तं कर्म्म कुरुते तमपि प्रज्ञापराधमाह— उदीरणमित्यादि । गतिमतां मूत्रपुरीषादीनामप्रवृत्तानामुदीरणं प्रवर्त्तनम् । इति कर्म्मकालातियोगः। तेषामेवोदीर्णानां प्रवर्त्तमानानां निग्रहोऽप्रवर्त्तनं कर्म्मकालायोगः। साहसादीनां सेवनमपि कर्म्मकालातियोगः। एवं यद्यत्कर्म्मणो यः कालस्तस्यातिपातोऽतिक्रमः। तथा कर्म्मणां मिथ्यारम्भोऽयथाविधिनारम्भः। विनयाचारलोपश्च पूज्यानाञ्चाभिधर्षणम्। स्वयं ज्ञातानामर्थानामहितानां सेवनम्। औन्मादिकानां प्रत्ययानामुन्मादबुद्धिकराणां हेतूनां सेवनम्। अकाले चादेशे च सञ्चारः। संक्लिष्टकर्म्मभिर्मैत्री मित्रताकरणम्। इन्द्रियोपक्रमणीयोक्तसद्वृत्तस्य वर्ज्जनम्। ईर्ष्यादयः ईर्ष्यादिजञ्च यत् क्लिष्टं कर्म्म न त्वक्लिष्टं यदुक्तं हेतावीर्ष्युः फले नेर्ष्युरित्यादिकमक्लिष्टम्। देहकर्म्म च यत् क्लिष्टम्।

शब्देन वातादयो रजस्तमसी च गृह्यन्ते। कर्म्मकालातिपातश्चिकित्साकालातिवर्त्तनम्। मिथ्यारम्भ इति मिथ्यायोगः, अयोगातियोगमिथ्यायोगरूपः। विनयाचारलोपेनैव प्राप्तमपि यत् पुनः पूज्यानामभिधर्षणाद्यभिधीयते, तद्विशेषण प्रकोपख्यापनार्थमुदाहरणार्थञ्च। संक्लिष्टकर्म्मभिरति पतितैः

यच्चान्यदीदृशं कर्म्म रजोमोहसमुत्थितम् ।
प्रज्ञापराधं तं शिष्टा ब्रुवते व्याधिकारणम् ॥
बुद्ध्या विषमविज्ञानं विषमञ्च प्रवर्त्तनम् ।
प्रज्ञापराधं जानीयान्मनसो गोचरं हि तत् ॥ ३२ ॥
निर्द्दिष्टा कालसम्प्राप्तिर्व्याधीनां हेतुसंग्रहे ।
चयप्रकोपप्रशमाः पित्तादीनां यथा पुरा ॥
मिथ्यातिहीनलिङ्गाश्च वर्षान्ता रोगहेतवः ।
जीर्णभुक्तप्रजीर्णान्न-कालाकालस्थितिश्च या ॥

अनुक्तमुपसंहरति—यच्चान्यदित्यादि। बुद्ध्या विषमविज्ञानमिति धीधृतिस्मृतिभिः बुद्धिभिः। एतं यावन्तं प्रज्ञापराधं तन्मनसो गोचरं विषयं जानीयात् इति धीधृतिस्मृतिविभ्रंशो बुद्धेरयोगातियोगमिथ्यायोगरूप उदाहृतः ॥ ३२ ॥

गङ्गाधरः—अथ क्रमिकत्वात् सम्प्राप्तिः कालकर्म्मणामुदाह्रियते—निर्द्दिष्टा कालसम्प्राप्तिरित्यादि। दीर्घञ्जीवितीयाध्याये व्याधीनां हेतुसंग्रहे कालबुद्धीन्द्रियार्थानामिति वचने कालसम्प्राप्तिः कालस्यायोगातियोगमिथ्यायोगरूपा निर्द्दिष्टा, व्याधिहेतुरेकस्तत्र तस्य विवरणं पित्तादीनां चयप्रकोपप्रशमा घर्म्मादिषु यथा निर्द्दिष्टाः, तिस्रैषणीये च मिथ्यायोगातियोगहीनयोगलिङ्गा वर्षान्ताः काला रोगहेतवो निर्द्दिष्टाः, जीर्णान्नस्य कालाकालस्थितिर्या, भुक्तान्नस्य भुक्तमात्रान्नस्य या कालाकालस्थितिः, प्रजीर्णान्नस्य जरणा-

लिङ्गमिति निन्दितम्। संक्षेपेण प्रज्ञापराधं दर्शयन्नाह—बुद्ध्येत्यादि। विषममित्यनुचितम्, विषमं विज्ञानं स्वरूपत एव प्रज्ञापराधः। विषमप्रवर्त्तनञ्च 'प्रज्ञापराध'शब्देनोच्यते। मनसो गोचरं तदिति, तद् विषमप्रवर्त्तनं विषमज्ञानञ्च मनःकार्य्यं प्रज्ञाविषयत्वेन मनसो गोचरमित्यर्थः। विषमप्रवर्त्तनञ्च मनसो गोचरत्वेन उपचारादुक्तम्, विसदृशमनोविषयज्ञानाद् विषमवाग्देहप्रवृत्तिरूपं भवति ॥ ३२ ॥

चक्रपाणिः—व्याधीनां कालसम्प्राप्तिमाह—निर्द्दिष्टेत्यादि। व्याधिसंग्रह इति कियन्तःशिरसीये "चयप्रकोपप्रशमाः पित्तादीनां यथाक्रमम्। भवन्त्येकैकशः षट्सु कालेष्वभ्रागमादिषु" ॥ इत्यनेन यथा पुरुदाहरणेन च। तेन कालसम्प्राप्तिर्व्याधीनां चयप्रकोपप्रशमाः पित्तादीनां पुरा निर्द्दिष्टा इति योज्यम्। उदाहरणान्तरमाह—मिथ्येत्यादि। जीर्णान्नो जीर्णावस्थात्रयविशिष्टस्य

पूर्व्वमध्यापराह्णाश्च रात्र्या यामास्त्रयश्च ये।
येषु कालेषु नियता ये रोगास्ते च कालजाः॥
अन्येद्युष्को द्व्यहग्राही तृतीयकचतुर्थकौ।
स्वे स्वे काले प्रवर्त्तन्ते काले ह्येषां बलागमः॥
एते चान्ये च ये केचित् कालजा विविधा गदाः।
अनागते चिकित्स्यास्ते बलकालौ विजानता॥ ३४॥

रम्भानस्य पच्यमानस्य या कालाकालस्थितिः, पूर्व्वाह्णः कफस्य मध्याह्नः पित्तस्यापराह्णः पवनस्य तथा रात्र्याः पूर्व्वार्द्धयामादूर्द्धमर्व्वाक् च शेषार्द्धयामात् ये यामास्त्रयः कफपित्तवातानां काला उक्ताः, तत्र येषु कालेषु ये दोषास्तेषु कालेषु तज्जा ये रोगा नियतास्ते रोगाः कालजाः, एवमन्यद्युष्कादयो ये रोगाः स्वे स्वे काले प्रवर्त्तन्ते वेगागमश्चैषामन्यद्युष्कादीनां स्वे स्वे काले भवतीति कालसम्प्राप्त्यर्व्याधिहेतुः, एते चान्ये च ये केचिद्विविधाः कालजा गदास्तेषां बलकालौ विजानता भिषजा खल्वनागते भविष्यति वेगागमकाले पूर्व्वं ते

अन्नस्य कालः, तथा अन्नस्याकालोऽजीर्णाद्यवस्थालक्षितः। प्रजीर्णञ्च विदग्धम्। रात्र्याः यामास्त्रयश्च य इति, त्रयो भागाः पूर्व्वरात्रमध्यरात्रापररात्ररूपाः, न तु यामः प्रहर इति ज्ञेयम्। अन्यत्रापि च भागत्रये यामविभागं कृत्वा अभिधानशास्त्रे त्रियामा निशा अभिधीयते। तेषु कालेष्विति जीर्णान्नकालादिषु जीर्णे अपराह्णे रात्रिशेषे च वातिका गदाः, भुक्तमात्रे पूर्व्वाह्णे पूर्व्वरात्रे च कफजा गदाः, प्रजीर्णे मध्याह्ने मध्यरात्रे च पित्तजा गदा नियता रोगा ज्ञेयाः। अन्नकाले चाजीर्णलक्षणे भोजनात् त्रयो दोषा भवन्तीति ज्ञेयम्। किंवा जीर्णभुक्तप्रजीर्णान्नकाला इति च्छेदः, ते च जीर्णाद्यवस्थायुक्तान्नकालाः पूर्व्ववदेव ज्ञेयाः, तथा 'कालस्थितिश्च या' इति योजना, 'कालस्थिति'शब्देन बाल्यादिवयस्त्रैविध्यमुच्यते। तत्र बाल्ये श्लैष्मिकाः, यौवने पैत्तिकाः, वार्द्धक्ये वातिका गदा वर्द्धन्त इति ज्ञेयम्। विषमज्वरानपि कालविशेषप्रवर्त्तमानत्वेन कालजे दर्शयन्नाह—अन्येद्युष्क इत्यादि। द्व्यहग्राही चतुर्थकविपर्य्ययः। वक्ष्यति हि—'विषमज्वर एवान्यश्चतुर्थकविपर्य्ययः। मध्येऽहनी ज्वरयत्यादावन्ते च मुञ्चति॥" कथं स्वकीय एव काले प्रवर्त्तनमित्याह—काले ह्येषां बलागम इति, उक्त एव काले यस्माद् बलवन्तो भवन्ति, तस्मात् तत्रैव सञ्जातबलाः सन्तो व्यज्यन्त इत्यर्थः।

एतेषां चिकित्साकालक्रममाह—एते चेत्यादि। 'अन्ये च' इत्यनेनान्येऽपि कालविशेषप्रादुर्भाविणः शोथकुष्ठादीन् सूचयति॥ ३४॥

कालस्य परिणामेन जरामृत्युनिमित्तजाः * ।
रोगाः स्वाभाविका दृष्टाः स्वभावो निष्प्रतिक्रियः ॥
निर्द्दिष्टं दैवशब्देन कर्म्म यत् पौर्व्वदेहिकम् ।
हेतुस्तदपि कालेन रोगाणामुपलभ्यते ॥ ३५ ॥

चिकित्स्या भवन्ति। इति कालशब्देन सोऽपि कालो गृह्यते। ये पुनर्जरामृत्य्वादयोऽप्यनिमित्तजाः स्वाभाविका रोगा दृष्टास्तेऽपि कालस्य परिणामेन भवन्तीति कालजा उच्यन्ते। यौवनान्ते कालपरिणामेन जरा भवति, जरान्ते कालपरिणामेन मृत्युर्भवति। क्रमेणाहारकालपरिणामे मध्याह्नादिषु क्षुधा भवति, कालपरिणामे च निद्रा भवतीत्येवमादि। स्वभावो हि निष्प्रतिक्रियः। स्वाभाविकव्याधेः प्रतिक्रिया नास्ति। ननु पूर्व्वाध्याये कालस्य त्रिविधयोग एव कालसम्प्राप्तिरुक्ता पुनरिह कर्म्मणां सम्प्राप्तिः, किं त्रिविधकारणादतिरिक्तं कारणमित्याशङ्क्याह—निर्द्दिष्टमित्यादि। दैवशब्देन पौर्व्वदेहिकं कर्म्मजफलरूपं धर्म्माधर्म्माख्यं कर्म्म यन्निर्द्दिष्टं तदिह कर्म्मशब्देनोच्यते। तेनेह जन्मनि यत् कर्म्म तत् प्रज्ञापराधजं प्रज्ञापराधाख्यं पूर्व्वदेहेऽपि प्रज्ञापराधादेव अधर्म्मर्यकर्म्म यद्यपि तथापि तत् कर्म्मफलं कालेन परिणतं रोगाणां हेतुरुपलभ्यते। न तु सद्यः। इह देहे कृतं कर्म्म प्रज्ञापराधाद् यद् यद् भवति तदिहैव जन्मनि यत् फलति तत् प्रज्ञापराधजत्वात् प्रज्ञापराधाख्यं, यत् परलोके फलिष्यति तत् परजन्मनि कालान्तरे परिणामात् फलतीति काल एवाभिधीयते

चक्रपाणिः—स्वाभाविकानपि कालपरिणामव्यपदेश्यमानतया इह कालजेऽवरोधयितुमाह—कालस्येत्यादि। जरामृत्युरूपान्निमित्ताज्जाता जरामृत्युनिमित्तजाः, 'मृत्यु'शब्देनेह युगानुरूपायुःपर्य्यवसानभवः कालमृत्युर्ग्राह्यः। किंवा, जरामृत्य्वोर्यन्निमित्तम्, तस्माज्जाता जरामृत्युनिमित्तजाः, जरामृत्युनिमित्तञ्च प्राणिनां साधारणं देहनिवर्तकभूतस्वभावोऽदृष्टञ्च। अथ स्वाभाविकानां का चिकित्सेत्याह—स्वभावो निष्प्रतिक्रिय इति। साधारणचिकित्सया रसायनवर्ज्जं जरा न प्रतिक्रियते, रसायनेन तु प्रतिक्रियत एव। तेन, "अस्य प्रयोगाच्च्यवनः सुवृद्धोऽभूत् पुनर्युवा" इत्यादिरसायनप्रयोगेण समं न विरोधः। किंवा, स्वाभाविका जरादयो रसायनजनितप्रकर्षोत्तरकालं पुनरवश्यं भवन्तीति निष्प्रतिक्रियत्वेनोक्ताः। सम्प्रति कर्म्मसम्प्राप्तिकृतमपि गदं कालविशेषव्यज्यमानतया दर्शयन्नाह—निर्द्दिष्टमित्यादि। कालेनेति पच्यमानतालक्षितेन कालेन युक्तं सत् कर्म्म कारणं भवतीत्यर्थः ॥ ३५ ॥

* जरामृत्युनिमित्तजाः इति चक्रधृतः पाठः।

न हि कर्म्म महत् किञ्चित् फलं यस्य न भुज्यते।
क्रियाघ्नाः कर्म्मजा रोगाः प्रशमं यान्ति तत्क्षयात् ॥ ३६ ॥
अत्युग्रशब्दश्रवणाच्छ्रवणात् सर्व्वशो न च।
शब्दानाञ्चातिहीनानां भवन्ति श्रवणाज्जड़ाः ॥
परुषोद्भीषणाशस्ताप्रियव्यसनसूचकैः।
शब्दैः श्रवणसंयोगो मिथ्यायोगः स उच्यते ॥

न तु प्रज्ञापराध इति। ननु ततो यदि रोगो न स्यात् तदा न कारणं भवत्वित्यत आह—न हीत्यादि। हि यस्मात्। न खल्वेवंभूतं किञ्चित् महत् कर्म्म विद्यते यस्य कर्म्मणः फलं न भुज्यते। सर्व्वकर्म्मसंन्यासेऽपि फलं ब्रह्मलोकप्राप्तिः। "ब्रह्माणं कर्म्मसंन्यासाद्वैराग्यात् प्रकृतेः परम्। ज्ञानात् कैवल्यमाप्नोति" इति योगाभ्यासजातज्ञानस्य फलमप्यस्तीति तत्त्वमिति। तर्हि चैतत्-कर्म्मजव्याधिवत् पौर्व्वदैहिककर्म्मजो व्याधिः किं साध्यासाध्यभावे तुल्य इत्यत आह—क्रियाघ्ना इत्यादि। पौर्व्वदैहिककर्म्मजा रोगाः क्रियाघ्नास्तत्तद्व्याध्युक्तक्रियाभिर्न शाम्यन्ति। तर्हि किमसाध्या इत्यत आह—प्रशमं यान्ति तत्क्षयात्। तत्कारणभूतकर्म्मक्षयात् ते कर्म्मजा रोगाः प्रशमं यान्तीति कालकर्म्मणां सम्प्राप्तिर्दर्शिता ॥ ३४—३६ ॥

गङ्गाधरः—अथासात्म्यागमश्चेति यो रोगहेतुरुक्तस्तं दर्शयति—अत्युग्रशब्दश्रवणादित्यादि। धीधृतिस्मृतिविभ्रंशाद् यद्यपि अत्युग्रशब्दश्रवणादीनि कुर्व्वन्ति प्रज्ञापराधजानि तथापि मेधादीनामत्युग्रशब्दश्रवणादीनि प्रज्ञापराधव्यतिरेकादपि भवन्तीति पृथगुक्तानि। ननु पूर्व्वमुक्तम् इन्द्रियार्थानाम् अयोगोऽतियोगो मिथ्यायोगश्चेति त्रिविधो हेतुसंग्रहः, इह तु शब्दादीनामत्युग्रादीनां श्रवणादिरतियोगोऽथ सर्व्वशो न च श्रवणादि, अतिहीनशब्दादिश्रवणादि, तथा मिथ्यायोगश्चेति चतुर्व्विधो हेतुरुक्त इति विरुध्यत

चक्रपाणिः—कर्म्मणः फलसम्बन्धिनियममाह न हीत्यादि। 'महत्' इति विशेषणेन किञ्चित् महत् कर्म्म प्रायश्चित्तबाधनीयफलं ददात्यपि फलमिति दर्शयति। कर्म्मजानामचिकित्स्यत्वमाह—क्रियाघ्ना इत्यादि। तत्क्षयादिति कर्म्मक्षयात्। कर्म्मक्षयश्च कर्म्मफलोपभोगादेवेति ॥ ३६ ॥

भाविनः इन्द्रियाणिः—क्रमागतमसात्म्येन्द्रियार्थसंयोगं विवृणोति अत्युग्रेत्यादि। सर्व्वशो न चेति

असंस्पर्शोऽतिसंस्पर्शो हीनसंस्पर्श एव च ।
स्पृश्यानां संग्रहेणोक्तः स्पर्शनेन्द्रियबाधकः ॥
यो भूतविषवातानामकालेनागतश्च यः ।
स्नेहशीतोष्णसंस्पर्शो मिथ्यायोगः स उच्यते ॥
रूपाणां भास्वतां दृष्टिर्विनश्यति हि दर्शनात् ।
दर्शनाच्चातिसूक्ष्माणां सर्व्वशश्चाप्यदर्शनात् ॥
द्विष्टभैरवबीभत्स-दूरातिक्लिष्ट-*-दर्शनात् ।
तामसानाञ्च रूपाणां मिथ्यासंयोग उच्यते ॥
अत्यादानमनादानमोकसात्म्यादिभिश्च यत् ।
रसानां विषमादानमल्पादानञ्च दूषणम् ॥
अतिमृद्वतितीक्ष्णानां गन्धानामुपसेवनम् ।
असेवनं सर्व्वशश्च घ्राणेन्द्रियविनाशनम् ॥

इति चेन्न। पूर्व्वं यदुक्तं "योगो मिथ्या न चाति च" इति। न च योगः खलु द्विविधः सर्व्वशो योगाभावो हीनयोगश्च नञो द्व्यर्थग्रहणात्। असंस्पर्शो हीनसंस्पर्शश्च स्पर्शायोगः। अतिसूक्ष्मदर्शनं सर्व्वशोऽदर्शनञ्च रूपायोगः। रसानामनादानमल्पादानञ्च रसायोगः। ओकसात्म्यादिभिर्यद् विषमादानं तद्-रसमिथ्यायोगः। गन्धानां सर्व्वशोऽसेवनमतिमृदुसेवनञ्च गन्धायोगः,

सर्व्वथोग्रशब्दाश्रवणात्। स्पृश्यानामिति स्पृश्यत्वेनोक्तानां शास्त्रेऽभ्यङ्गोत्सादनादीनाम्। भूताः सविषक्रिमिपिशाचादयः। यो भूतविषवातानां संस्पर्शः, तथाकालेनागतः स्नेहशीतोष्ण-संस्पर्शश्चेति योजना। तत्राकाले स्नेहसंस्पर्शो यथा—अजीर्णे कफवृद्धिकाले अभ्यङ्गस्पर्श उष्णे चोष्णस्पर्शोऽकालेनागतो ज्ञेयः। सर्व्वशश्चाप्यदर्शनमिति भास्वतां सूक्ष्माणाञ्च सर्व्वथादर्शनात्। अतिश्लिष्टमिति नेत्रप्रत्यासन्नम्। तामसानां रूपाणाञ्च दर्शनात् विनश्यति दृष्टिरिति सम्बन्धः। मिथ्यायोगः स इति द्विष्टभैरवादिरूपः। अतिसूक्ष्मदर्शनञ्च मिथ्यायोग एव ज्ञेयः। ओकसात्म्या-

---

* क्लिष्टेत्यत्र श्लिष्टेति वा पाठः।

पूतिभूतविषद्विष्टा गन्धा ये चाप्यनार्त्तवाः ।
तैर्गन्धैर्घ्राणसंयोगो मिथ्यायोगः स उच्यते ॥
इत्यसात्म्यार्थसंयोगस्त्रिविधो दोषकोपणः ।
असात्म्यमिति तद्विद्याद् यन्न याति सहात्मताम् ॥ ३७ ॥
मिथ्यातिहीनयोगेभ्यो यो व्याधिरुपजायते ।
शब्दादीनां स विज्ञेयो व्याधिरैन्द्रियको बुधैः ॥
वेदनानामशातानाम् * इत्येते हेतवः स्मृताः ।
सुखहेतुर्मतस्त्वेकः समयोगः सुदुर्लभः ॥ ३८ ॥

अतितीक्ष्णानां गन्धानां सेवनमतियोगः, पूतिगन्धादिसेवनं मिथ्यायोग इति । इति त्रिविधोऽसात्म्यार्थसंयोगो दोषकोपणः । यत् तु सहात्मतामात्मीभावं न याति तदसात्म्यं विद्यादिति ॥ ३७ ॥

गङ्गाधरः—एष खल्वसात्म्येन्द्रियार्थयोगजो व्याधिः किं शारीरो मानसो वेत्यत आह—मिथ्येत्यादि । शब्दादीनां मिथ्यायोगातियोगायोगहीनयोगेभ्यो यो व्याधिर्जायते स ऐन्द्रियकव्याधिः शारीर एव । शरीरं हि चेतनाधिष्ठानभूतं पञ्चमहाभूतविकारसमुदायात्मकं, न त्विह गौतमोक्तं चेष्टेन्द्रियार्थाश्रयशरीरं विवक्षितं, तत्र पृथगिन्द्रियार्थयोर्ग्रहणात् ।

ननु ज्ञातव्या दुःखहेतव इति यदुक्तं तत् किं सुखदुःखोभयरूपवेदनाहेतव इत्यत आह—वेदनानामित्यादि । अशातानामसुखानां वेदनानामित्येते हेतवः स्मृताः

त्रिभिरिति विषमादानमिति सम्बन्धः । ओकसात्म्यादिवैषम्ये राशिदोषवर्ज्जप्रकृत्यादिसहकदोषा ग्रहीतव्याः । त्रिविध इति अयोगातियोगमिथ्यायोगरूपः । असात्म्यत्वं दर्शयति—असात्म्यमित्यादि । सहेति मिलितं शरीरेण । आत्मताम् अविकृतरूपतां न याति । एतेन, यद्गुणयुक्तं प्राकृतरूपोपघातकं भवति, तदसात्म्यमिति । इत्थमसात्म्यार्थजस्य व्याधेरिन्द्रियद्वारभूतत्वेनैन्द्रियकत्वं दर्शयन्नाह—मिथ्येत्यादि । हीनयोगेनेह अयोगो ग्राह्यः । ऐन्द्रियक इति इन्द्रियद्वारभूतः । दुःखरूपवेदनाहेतुं प्रपञ्च्य उक्तमुपसंहरति—वेदनानामित्यादि । असात्म्यानामिति दुःखानाम् । अथ सुखरूपवेदनाहेतुः क इत्याह—सुखेत्यादि । समयोग इति कालबुद्धीन्द्रियार्थानां सम्यग्योगः । सुदुर्लभ इति कालादिसम्यग्योगस्य विरहत्वेन सुदुर्लभत्वात् । प्रायो हि कालादीनां मध्ये

* असात्म्यानाम् इति वा पाठः ।

नेन्द्रियाणि न चैवार्थाः सुखदुःखस्य हेतवः ।
हेतुस्तु सुखदुःखस्य योगो दृष्टश्चतुर्व्विधः ॥
सन्तीन्द्रियाणि सन्त्यर्था योगो न च न चास्ति रुक् ।
न सुखं, कारणं तस्माद् योग एव चतुर्व्विधः ॥ ३९ ॥
नात्मेन्द्रियमनोबुद्धि-गोचरं कर्म्म वा विना ।
सुखं दुःखं यथा यच्च बोद्धव्यं तत् तथोच्यते ॥ ४० ॥

न तु सुखानाम् । कः पुनः सुखहेतुरित्यत आह—सुखहेतुरिति । एकः सुदुर्लभः कालबुद्धीन्द्रियार्थानां समयोगः सुखहेतुर्मतः आरोग्यहेतुरिति यावत् ॥ ३८ ॥

गङ्गाधरः—ननु कालादय एव हेतवः कथं तेषां योगा हेतव उक्ता इत्यत आह—नेन्द्रियाणीत्यादि । सुखदुःखस्य हेतवो नेन्द्रियाणि न चार्था न च कालो न बुद्धिः । तर्हि के हेतवः ? तत्राह—सुखदुःखस्य हेतुस्तु चतुर्व्विधो योगो दृष्टः । कस्मात् ? सन्तीत्यादि । यस्मादिन्द्रियाणि सन्ति सन्ति चार्थास्तेषां योगो न यदि भवति रुक् च नास्ति सुखञ्च नास्ति । एवं कालोऽस्ति पुरुषोऽस्ति योगो नास्ति न चास्ति रुक् न चास्ति सुखम् । तथा बुद्धिः अस्ति बोद्धव्यञ्चास्ति योगो नास्ति रुक् च सुखञ्च नास्तीति बोध्यम् । तस्मात् चतुर्व्विध योग एव सुखदुःखस्य कारणमिति ॥ ३९ ॥

गङ्गाधरः—ननु सुखदुःखस्यानुभवे कारणमात्मेन्द्रियमनोबुद्धयो न कथं सुखदुःखस्य हेतव इत्यत आह—नात्मेत्यादि । न खल्वात्मादिगोचरं सुखं

अन्यतरेणाप्ययोगादिना पुरुषः सम्बध्यते । तेन च नित्यातुरा एव पुरुषा भवन्ति, 'अनातुरारोगानामयादि' स्वस्थव्यपदेशः पुरुषाणां क्रियत इति भावः ॥ ३७।३८ ॥

चक्रपाणिः—सम्प्रति सम्यग्योगस्योपादेयतां दर्शयितुमयोगादीनां हेयतां दर्शयितुं योगमेव चतुर्व्विधं कारणत्वेन दर्शयन्नाह—नेन्द्रियाणीत्यादि । ननु कथमिन्द्रियार्थयोः सुखदुःखकारणत्वेन उपलभ्यमानयोरप्यकारणत्वमित्याह—सन्तीत्यादि । योगो न चेति इन्द्रियार्थयोः सम्बन्धो न च, न सुखमिति च्छेदः । इन्द्रियार्थयोर्योगाभावे अकारणत्वेन, सति तु योगे कारणत्वेन योग एवान्वयव्यतिरेकाभ्यां कारणमवधार्य्यत इति भावः । अयञ्च योग इन्द्रियार्थावधिकृत्य स्पष्टत्वेनोक्तः । तेन, प्रज्ञाकालयोरपि बोद्धव्यः । एतच्चेन्द्रियमर्थञ्चानुपादेयं कृत्वा चतुर्व्विधयोगस्य कारणत्वं योगानामेव हेयोपादेयत्वेन दर्शनार्थं कृतम् ॥ ३९ ॥

चक्रपाणिः—परमार्थतस्त्वात्मेन्द्रियमनोबुद्ध्यर्थादृष्टान्येव तथायुक्तानि सुखदुःखकारणानीति दर्शयन्नाह—नात्मेत्यादि । गोचर इन्द्रियार्थः । कर्म्म अदृष्टम् । तत्र आत्मानं विना नोष्णादौ

स्पर्शनेन्द्रियसंस्पर्शः स्पर्शो मानस एव च।
द्विविधः सुखदुःखानां वेदनानां प्रवर्त्तकः॥ ४१॥
इच्छाद्वेषात्मिका तृष्णा सुखदुःखात् प्रवर्त्तते।
तृष्णा च सुखदुःखानां कारणं पुनरुच्यते॥

दुःखं वा कर्म्म विना भवति अर्थैः सहात्मादीनां कर्म्मणि योगे सति हि यच्च यथासुखं यच्च यथादुःखं तत् तथा बोद्धव्यमुच्यते॥ ४०॥

गङ्गाधरः—ननु तत् कर्म्म किं भवति, तदाह—स्पर्शनेन्द्रियेत्यादि। सुखदुःखानां वेदनानां प्रवर्त्तको हि द्विविधः। बाह्यार्थग्रहणे स्पर्शनेन्द्रियसंस्पर्श एकः प्रवर्त्तकः। मनोबुद्ध्यर्थग्रहणे मानसः स्पर्श एव च द्वितीयः॥ ४१॥

गङ्गाधरः—एवं वेदनानामपि प्रवर्त्तकत्वमस्ति, तदाह—इच्छेत्यादि। इच्छा द्वेषश्चेत्युभयात्मिका तृष्णा सुखदुःखात् प्रवर्त्तत इति तृष्णाप्रवर्त्तिका वेदना. पुनस्तृष्णा च सुखदुःखानां कारणं प्रवर्त्तिकोच्यते। इति परस्परं कारणं

सुखदुःखे भवतः। इन्द्रियादीनाञ्च सुखदुःखकारणत्वं स्पष्टमेव। कर्म्मापि च शुभं सुखकारणम्, अशुभञ्च दुःखकारणम्। यद्यात्मादय एव कारणम्, तत् किमर्थं कालाद्ययोगातियोगादय इहोच्यन्त इत्याह—यथेत्यादि। यत् बोद्धव्यं सुखदुःखं यथा बोद्धव्यं कार्य्यवशात् भवति, तथैवोच्यते नान्यथा, सात्म्यासात्म्येन्द्रियार्थजन्यत्वेन सुखदुःखे प्रतीयमाने चिकित्सायामुपयुक्ते भवतः, नात्मादिजन्यत्वेन। आत्मादिजन्यत्वेनेह सुखदुःखे अभिधीयेते, न ह्यात्मादयो सुखदुःखहेतुतया प्रतिपद्यन्ते, किन्त्वसात्म्येन्द्रियार्थयोगादय एव दुःखहेतवस्त्यज्यन्ते, सुखहेतवः सात्म्येन्द्रियार्थयोगादयस्तूपादीयन्त इति भावः॥ ४०॥

चक्रपाणिः—इदानीं सकलकारणव्यापकं योगं व्युत्पादयितुमैन्द्रियकं मानसस्पर्शं दर्शयितुमाह—स्पर्शनेन्द्रियसंस्पर्श इति। अर्थेनेन्द्रियाणां सम्बन्धः स्पर्शनेन्द्रियकृतो भवति, चक्षुरादीन्यपि स्पृष्टमेवार्थं जनयन्ति, यदि ह्यस्पृष्टमेव चक्षुः श्रोत्रं घ्राणं वा वेत्ति, तदा विदूरमपि गृह्णीयात् न च गृह्णाति। तस्मात् स्पृष्टत्वमिन्द्रियाणां प्रतिपद्यते, मानसस्तु स्पर्शश्चिन्त्यादिना अर्थेन समं सूक्ष्मोऽस्त्येव। येन मनः किञ्चिदेव चिन्तयति, न सर्व्वम्। तेन, यन्मनसा स्पृश्यते, तदेव मनो गृह्णातीति स्थितिः॥ ४१॥

चक्रपाणिः— दुःखोत्पत्तिक्रममाह—इच्छेत्यादि। सुखादिच्छारूपा तृष्णा, दुःखाच्च द्वेषरूपा तृष्णा प्रवर्त्तते। इच्छाख्योपक्रतृष्णा ईप्सितेऽर्थे प्रवर्त्तयन्ती द्विष्टे च निवर्त्तयन्ती, प्रवृत्ति-

उपादत्ते हि सा भावान् वेदनाश्रयसंज्ञकान् ।
स्पृश्यते नानुपादानो नास्पृष्टो वेत्ति वेदनाः ॥ ४२ ॥
वेदनानामधिष्ठानं मनो देहश्च सेन्द्रियः ।
केशलोमनखाग्रान्न-मलद्रवगुणैर्विना ॥ ४३ ॥

बीजाङ्कुरवत् । कस्मादेवं तथाह—उपादत्त इत्यादि । हि यस्मात् सा खल्विच्छाद्वेषात्मिका तृष्णा वेदनाश्रयसंज्ञकान् भावान् शरीरमनांसि उपादत्ते, तस्मात् सुखदुःखानां वेदनानां कारणं तृष्णा । ननु च तृष्णा वेदनाश्रयसंज्ञकान् भावानुपादत्ते न तु वेदनानाश्रयान् । स्पर्शनेन्द्रियेण संस्पर्शो मानसस्पर्शश्च सुखदुःखात्मकवेदनाप्रवर्त्तकः केशादिच्छेदनादितो न कुतः सुखदुःखानुभवः स्यादित्यत आह—स्पृश्यत इत्यादि । स्पर्शनेन्द्रियेण शरीरस्थेन मनसा चानुपादानस्तृष्णानुपादानको भावो न स्पृश्यते । स्पर्शनेन्द्रियेणास्पृष्टश्च भावो न सुखदुःखात्मिका वेदना वेत्ति ॥ ४२ ॥

गङ्गाधरः—तर्हि वेदनाश्रयसंज्ञका वेदनानामधिष्ठानानि के भावास्तृष्णया तूपादत्ता इत्यत आह—वेदनानामित्यादि । मनः सेन्द्रियश्च देहो वेदनानां सुखदुःखानामधिष्ठानमाश्रय इति । किमधिष्ठानमुच्यते इति प्रश्नस्योत्तरम् । ननु सेन्द्रियो देहश्चेद्वेदनाश्रयः कथं केशादिच्छेदनादिषु न सुखदुःखसंवेदनं स्यादित्यत आह—सेन्द्रियो देह इति । केशलोमनखाग्राणि तथान्नमलद्रवाणां विण्मूत्राणां गुणैर्विना देहसंज्ञः । न हि केशादिस्तृष्णोपादानं, तृष्णोपादानन्तु स्पर्शनेन्द्रियं मनश्च, केशादिव्यतिरिक्तं देहं सेन्द्रियं स्पृशति न केशादीन् स्पृशति । तस्मात् केशादयो न वेदनां विदन्ति केशादिव्यतिरिक्तो देहः सेन्द्रियो वेदनां वेत्तीति । गौतमेनाप्येवमुक्तम् । आपनखात् इत्यादि ॥ ४३ ॥

निवृत्तिविषयस्य सुखदुःखहेतुतामपेक्ष्य सुखदुःखे जनयतीति वाक्यार्थः । यथोक्ततृष्णायाः सुखदुःखहेतुत्वं दर्शयन्नाह—उपादत्ते हीत्यादि । वेदनाश्रयसंज्ञकानिति वेदनाकारणत्वेनोक्तान् कालाद्ययोगादिरूपान् । अथ तृष्णा चेत् सुखदुःखकारणम्, तत् किमिन्द्रियार्थेनापरेण कारणेनेत्याह—स्पृश्यत इत्यादि । अनुपादान इति अविद्यमानार्थरूपे स्पर्शकारणे, अर्थं विना नार्थस्य स्पर्शो भवति । अथ न भवत्यर्थस्पर्शस्ततः किमित्याह—'नास्पृष्टो वेत्ति वेदनाः' इति । अर्थस्पर्शशून्यः सन् न सुखदुःखे अनुत्पन्नत्वादेव वेत्तीत्यर्थः ॥ ४२ ॥

चक्रपाणिः—वेदनानां किमधिष्ठानमित्यस्योत्तरमाह—वेदनानामित्यादि । देहः सेन्द्रिय इत्यनेन निरिन्द्रियो देहो केशलोमादिको निरस्तः । तदेव स्पष्टार्थं विवृणोति—केशेत्यादि ।

योगे मोक्षे च सर्व्वासां वेदनानामवर्त्तनम्।
मोक्षो निवृत्तिर्निःशेषा योगो मोक्षप्रवर्त्तकः॥
आत्मेन्द्रियमनोऽर्थानां सन्निकर्षात् प्रवर्त्तते।
सुखं दुःखमनारम्भादात्मस्थे मनसि स्थिरे॥
निवर्त्तते तदुभयं वशित्वञ्चोपजायते।
सशरीरस्य योगज्ञास्तं योगमृषयो विदुः॥ ४४॥

गङ्गाधरः—अथ यदि सुखदुःखात्मिका वेदना तर्हि कालबुद्धीन्द्रियार्थानां त्रिविधयोगात् दुःखप्रवृत्तिस्तच्चिकित्सया धातुवैषम्यनिवृत्तौ तज्जदुःखनिवृत्तिः सुखस्य प्रवृत्तिः, प्रवृत्तस्य च सुखस्य कालबुद्धीन्द्रियार्थसमयोगाद्धातुसाम्यस्थितिस्तज्जसुखस्य च स्थितिरिति सुखात्मिका वेदना तु दुःखानुबन्धा न चिकित्सया निवर्त्तते। इत्याशङ्क्य प्रागग्निवेश उवाच—क्व चैता वेदनाः सर्व्वा निवृत्तिं यान्त्यशेषत इति। सर्व्वाः सुखदुःखात्मिका वेदनाः क्व च चिकित्सायामशेषतो निवृत्तिं यान्तीति। तत्रोत्तरमाह—योगे मोक्षे चेत्यादि। सर्व्वासां सुखदुःखात्मिकानां वेदनानामशेषतोऽवर्त्तनं निवृत्तिर्योगे भवति मोक्षे च भवति। कः पुनर्मोक्षो योगश्चेत्यत आह—मोक्षो निवृत्तिर्निःशेषेति। निःशेषा निवृत्तिः सुखदुःखात्मिकाया वेदनाया मोक्षस्तस्य मोक्षस्य प्रवर्त्तको योग इति। कथमिति? आत्मेत्यादि। आत्मादिसन्निकर्षात् सुखं प्रवर्त्तते दुःखञ्च। सम्यक् सन्निकर्षात् सुखमसम्यक्सन्निकर्षात् दुःखं प्रवर्त्तते। तत्रात्मस्थे स्थिरे मनसि सत्यनारम्भाद्वाचा शरीरेण मनसा च प्रवृत्तेरभावात् तदुभयं सुखञ्च दुःखञ्च निवर्त्तते योगसिद्धस्य सशरीरस्य जीववतः पुरुषस्य वशित्वञ्चोपजायते। वशी हि स यश्चेतः समाधत्ते यश्च सर्व्वं निरस्यति, न तु स वशी यः कर्म्म कृत्वा तत्फलं स्वयं भुङ्क्ते। तं योगज्ञा ऋषयो योगं विदुरिति

किञ्च, इन्द्रियाण्यपि प्राधान्यख्यापनार्थं पृथग् वेदनाश्रयत्वेन सेन्द्रियग्रहणेनोच्यन्ते। वेदनाया देहेन्द्रियगतत्वं तदाधारत्वेन प्रतीयमानत्वाज्ज्ञेयम्। द्रवं मूत्रम्। गुणाः शब्दादयः। शरीरगता एते हि केशादयो न वेदनाधारा इत्यनुभव एव प्रमाणम्। या तु मूत्रपुरीषगता वेदना ग्रहणीमूत्रकृच्छ्रादौ वक्तव्या, सा मूत्रपुरीषाधारशरीरप्रदेशस्यैव बोध्या॥ ४३॥

चक्रपाणि—क्व चैता वेदनाः सर्व्वा इत्यस्योत्तरम्—योग इत्यादि। योगः "अनारम्भाद्" इत्यादिग्रन्थे वक्ष्यमाणः। मोक्षोऽत्यन्तशरीरोच्छेदः। निःशेषेति न पुनर्भवति, एतेन योगेन निवृत्ता

पातञ्जले दर्शने योगशासने चोक्तः। योगश्चित्तवृत्तिनिरोधः। तदा द्रष्टुः स्वरूपेऽवस्थानम्। वृत्तयः पञ्चतय्यः क्लिष्टाक्लिष्टाः। प्रमाण-विपर्य्यय-विकल्प-निद्रा-स्मृतयः। प्रत्यक्षानुमानागमाः प्रमाणानि। विपर्य्ययो मिथ्याज्ञान-मतद्रूपप्रतिष्ठम्। शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः। अभावप्रत्यया-लम्बना वृत्तिर्निद्रा। अनुभूतविषयासम्प्रमोषः स्मृतिरिति वृत्तयः। अभ्यास-वैराग्याभ्यां तन्निरोधः। तत्र स्थितौ यत्नोऽभ्यासः। स तु दीर्घकाल-नैरन्तर्य्यसत्कारासेवितो दृढ़भूमिः। दृष्टानुश्रविकविषयवितृष्णस्य वशीकार-संज्ञा वैराग्यम्। तत् परं पुरुषख्यातेर्गुणवैतृष्ण्यमिति।

सूत्राण्येतानि वेदव्यासेन व्याख्यातानि। तद् यथा। योगः समाधिः, स च सार्व्वभौमश्चित्तस्य धर्म्मः। क्षिप्तं मूढ़ं विक्षिप्तमेकाग्रं निरुद्धमिति चित्तभूमयः। तत्र विक्षिप्ते चेतसि विक्षेपोपसर्ज्जनीभूतः समाधिर्न योगपक्षे वर्त्तते। यस्त्वेकाग्रे मनसि सद्भूतमर्थं प्रद्योतयति क्षिणोति च क्लेशान् कर्म्मबन्धनानि च श्लथयति निरोधमभिमुखं करोति स सम्प्रज्ञातो योग इत्याख्यायते। स च तर्कानुगतो विचारानुगत आनन्दानुगतः अस्मितानुगतः इत्युपरिष्टात् प्रवेदयिष्यामः। सर्व्व-वृत्तिनिरोधे त्वसम्प्रज्ञातः समाधिस्तस्य लक्षणाभिधित्सयेदं सूत्रं प्रवर्त्तते।०। योगश्चित्तवृत्तिनिरोधः।१। इति। सर्व्वशब्दाग्रहणात् सम्प्रज्ञातोऽपि योग आख्यायते। चित्तं हि प्रख्याप्रवृत्तिस्थितिशीलत्वात् त्रिगुणम्। प्रख्यारूपं हि चित्तसत्त्वं रजस्तमोभ्यां संसृष्टमैश्वर्य्यविषयोपगं भवति। तदेव तमसानुविद्धमधर्म्माज्ञानावैराग्यानैश्वर्य्योपगं भवति। तदेव प्रक्षीणमोहावरणं सर्व्वतः प्रद्योतमानमनुविद्धं रजोमात्रया धर्म्मज्ञानवैराग्यैश्वर्य्योपगं भवति। तदेव तमोऽनुविद्धरजोलेशमलापेतं स्वरूपप्रतिष्ठं सत्त्वपुरुषान्यताख्यातिमात्रं धर्म्ममेघध्यानोपगं भवति तत् परं प्रख्यानमित्याचक्षते ध्यायिनः। चिति-शक्तिरपरिणामिन्यप्रतिसंक्रमा दर्शितविषया शुद्धा चानन्ता च सत्त्वगुणाधिका चेयम्; अतो विपरीता विवेकख्यातिरित्यतस्तस्यां विरक्तं चित्तं तामपि ख्यातिं निरुणद्धि। तदवस्थं संस्कारोपगं भवति। स निर्व्वीजः समाधिः। न च तत्र किञ्चित् सम्प्रज्ञायते इत्यसम्प्रज्ञातः। द्विविधः स योगश्चित्तवृत्तिनिरोध इति। तदवस्थे चेतसि विषयाभावात् स्वरूप इत्यारोपितम्। बुद्धिबोधात्मा पुरुषः किंस्वभाव इति।०। तदा द्रष्टुः स्वरूपेऽवस्थानम्।२। स्वरूपप्रतिष्ठा तदानीं चिति-

निवृत्ता वेदना भवतीति सूचयति। मोक्षप्रवर्त्तक इति मोक्षकारणम्। किंवा, 'योगमोक्षौ निवर्त्तकौ' इति पाठः, तदा, अस्मिन् पक्षे यद्यपि योगमोक्षयोर्वेदनानिवर्त्तकत्वं 'योगे मोक्षे च' इत्यादिना

शक्तिर्यथा कैवल्ये ; व्युत्थानचित्ते तु सति तथापि भवती न तथा ।०। कथं तर्हि ? दर्शितविषयत्वात् । वृत्तिसारूप्यमितरत्र ।३। व्युत्थाने याश्चित्तवृत्तयस्तद्विशिष्ट-वृत्तिः पुरुषः । तथा च सूत्रम् । एकमेव दर्शनं ख्यातिरेव दर्शनमिति । चित्तम् अयस्कान्तमणिकल्पं सन्निधिमात्रोपकारि दृश्यत्वेन स्वं भवति पुरुषस्य स्वामिनः। तस्माच्चित्तवृत्तिनिरोधे पुरुषस्यानादिसम्बन्धो हेतुः । ताः पुनर्निरोद्धव्या बहुत्वे सति चित्तस्य ।०। वृत्तयः पञ्चतय्यः क्लिष्टाक्लिष्टाः ।४। क्लेशहेतुकाः कर्म्माशयप्रचये क्षेत्रीभूताः क्लिष्टाः ; गुणविकारविरोधिन्य अक्लिष्टाः क्लिष्टप्रवाहपतिता अप्यक्लिष्टाः। क्लिष्टच्छिद्रेषु अप्यक्लिष्टा भवन्ति । अक्लिष्टच्छिद्रेषु क्लिष्टा अप्यक्लिष्टा इति । तथा-जातीयकसंस्कारा वृत्तिभिरेव क्रियन्ते, संस्कारैश्च वृत्तय इति। एवं वृत्तिसंस्कार-चक्रमनिशमावर्त्तते। तदेवम्भूतं चित्तमवसिताधिकारमात्मकल्पेन व्यवतिष्ठते प्रलयं वा गच्छतीति । ताः क्लिष्टाश्चाक्लिष्टाश्च पञ्चधा वृत्तयः ।०। प्रमाण-विपर्यय-विकल्प-निद्रा-स्मृतयः ।५। तत्र । प्रत्यक्षानुमानागमाः प्रमाणानि । ६ । इन्द्रिय-प्रणालिकया चित्तस्य बाह्यवस्तूपरागात् तद्विषया सामान्यविशेषात्मनोऽर्थस्य विशेषावधारणप्रधाना वृत्तिः प्रत्यक्षं प्रमाणम्। फलमविशिष्टः पौरुषेयश्चित्तवृत्ति-निरोधः । सम्प्रति संवेदी पुरुष इत्युपरिष्टादुपपादयिष्यामः । अनुमेयस्य तुल्यजातीयेष्वनुवृत्तो भिन्नजातीयेभ्यो व्यावृत्तः सम्बन्धो यस्तद्विषया सामान्य-विशेषावधारणप्रधाना वृत्तिरनुमानम् । यथा देशान्तरप्राप्तेर्गतिमच्चन्द्रतारकं चैत्र-वत् । विन्ध्यश्चाप्राप्तेरगतिः । आप्ते न दृष्टोऽनुमितो वार्थः परत्र स्वबोधसंक्रान्त-तया शब्देनोपदिश्यते। शब्दात् तदर्थविषया वृत्तिः श्रोतुरागमः शब्दार्थौ न वक्तन् द्रष्टुरनुमितार्थः स आगमः प्लवते. मूलवक्तरि तद्दृष्टानुमितार्थे निर्विप्लवः स्यात् ।०। विपर्य्ययो मिथ्याज्ञानमतद्रूपप्रतिष्ठम् । ७ । स वा कस्मान्न प्रमाणम् ? यतः प्रमाणेन बाध्यते, भूतार्थविषयत्वात् प्रमाणस्य ; तत्र प्रमाणेन बाधनम् अप्रमाणस्य दृष्टम् । तद् यथा—द्विचन्द्रदर्शनं सद्विषयेणैकचन्द्रदर्शनेन बाध्यते। सोऽयं पञ्चविधो भवत्यविद्याऽस्मितारागद्वेषाभिनिवेशाः पञ्च क्लेशा इति । एत एव स्वसंज्ञाभिस्तमो मोहो महामोहस्तामिस्रोऽन्धतामिस्र इति । एते चित्तमलप्रसङ्गेनाभिधीयन्ते । ०। शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः । ८। स न प्रमाणोपारोही विपर्य्ययोपारोही च ; वस्तुशून्यत्वेऽपि शब्दज्ञानमाहात्म्य-निबन्धनो व्यवहारो दृश्यते। तद् यथा—चैतन्यं पुरुषस्य स्वरूपमिति। यदा चितिः

श्लोकार्द्धेन उक्तम्, तथापि योगमोक्षयोरिह कर्त्तृ तया वेदनानिवृत्तिं दर्शयति, इति न पौनरुक्त्यम् । यथा योगो वेदनानिवर्त्तको भवति, यश्च योगस्तमाह—आत्मेत्यादि । अनारम्भादिति

तत्र पुरुषस्तदा किमत्र केवलो व्यपदिश्यते। भवति च व्यपदेशवृत्तिः। तथा प्रतिषिद्धवस्तुधर्म्मा निष्क्रियः पुरुषस्तिष्ठति। बाल्यः स्थास्यति स्थित इति गतिनिवृत्तौ धात्वर्थमात्रं गम्यते। तथाऽनुत्पत्तिधर्म्मा पुरुष इति उत्पत्तिधर्म्मस्याभावमात्रं गम्यते, न पुरुषान्वयी धर्म्मः, तस्माद्विकल्पितः स धर्म्मस्तेन चास्ति व्यवहार इति।०। अभावप्रत्ययालम्बना वृत्तिर्निद्रा।९। सा च सम्प्रबोधे प्रत्यवमर्शः प्रत्ययविशेषः। कथम्? सुखमहमस्वाप्सं प्रसन्नं मे मनः प्रज्ञां मे विशारदीकरोति, दुःखमहमस्वाप्सं श्रान्तं मे मनो भ्रमत्यनवस्थितम्। गाढं मूढोऽहमस्वाप्सं गुरूणि मे गात्राणि क्लान्तञ्च चित्तमलसं मथितमिव तिष्ठतीति। स खल्वयं प्रबुद्धस्य प्रत्यवमर्शो न स्यात्। असति प्रत्ययानुभवे तदाश्रिताः स्मृतयश्च तद्विषया न स्युस्तस्मात् प्रत्ययविशेषो निद्रा, सा च समाधावितरप्रत्ययवन्निरोद्धव्येति।०। अनुभूतविषयासम्प्रमोषः स्मृतिः।१०। किं प्रत्ययस्याहोस्विद्विषयस्येति। आत्मोपरक्तप्रत्ययो ग्राह्यग्रहणोभयाकारनिर्भासस्तथाजातीयकं संस्कारमारभते। स संस्कारः स्वव्यञ्जकाञ्जनस्तदाकारामेव ग्राह्यग्रहणोभयात्मिकां स्मृतिं जनयति। तत्र ग्रहणाकारपूर्व्वा बुद्धिः ग्राह्याकारपूर्व्वा स्मृतिः सा च द्वयी भवति—भावितस्मर्त्तव्या चाभावितस्मर्त्तव्या च; स्वप्ने भावितस्मर्त्तव्या, जागरितसमये त्वभावितस्मर्त्तव्येति। सर्व्वाः स्मृतयः प्रमाणविपर्य्ययविकल्पनिद्रास्मृतीनामनुभवात् सम्भवन्ति। सर्व्वाश्चैता वृत्तयः सुखदुःखमोहात्मिकाः; सुखदुःखमोहाश्च क्लेशेषु व्याख्येयाः। सुखानुशयी रागः, दुःखानुशयी द्वेषः, मोहः पुनरविद्येति। एताः सर्व्वा वृत्तयो निरोद्धव्याः। आसां निरोधे सम्प्रज्ञातो वा समाधिर्भवति, असम्प्रज्ञातो वेति।०। अथासां निरोधे क उपायः। अभ्यासवैराग्याभ्यां तन्निरोधः।११। चित्तनदी नाम उभयतोवाहिनी। वहति कल्याणाय वहति पापाय। या तु कैवल्यप्राग्भवा विवेकविषयनिम्ना सा कल्याणवहा। संसारप्राग्भवा अविवेकविषयनिम्ना पापवहा। तत्र वैराग्येण विषयस्रोतः खिलीक्रियते। विवेकदर्शनाभ्यासेन विवेकस्रोत उद्घाट्यते इति उभयाधीनश्चित्तवृत्तिनिरोधः।०। तत्र स्थितौ यत्नोऽभ्यासः।१२। चित्तस्यावृत्तिकस्य प्रशान्तवाहिता स्थितिः तदर्थः प्रयत्नो वीर्य्यमुत्पिपादयिषया तत्साधनानुष्ठानमभ्यासः।०। स तु दीर्घकालनैरन्तर्य्यसत्कारासेवितो दृढभूमिः।१३। दीर्घकालासेवितः तपसा ब्रह्म-

विषयोपादानार्थं मनसोऽनवस्थानात्। आत्मस्थे मनसीति विषये निवृत्ते केवलात्मज्ञानस्थे। स्थिर इत्यचले आत्मज्ञानप्रसक्त एवेति यावत्। तदुभयमिति सुखदुःखम्। योगधर्म्मास्त्व-

**आवेशश्चेतसो ज्ञानमर्थानां छन्दतः क्रिया ।**
**दृष्टिः श्रोत्रं स्मृतिः कान्तिरिष्टतश्चाप्यदर्शनम् ॥**

चर्य्येण विद्यया श्रद्धया च सम्पादितः सत्काराख्यो दृढ़भूमिर्भवति । व्युत्थान-संस्कारेण द्रागित्येवानभिभूतविषय इत्यर्थः । ० । दृष्टानुश्रविकविषयवितृष्णस्य वशीकारसंज्ञा वैराग्यम् । १४ । स्त्रियोऽन्नपानमैश्वर्य्यमिति दृष्टविषये वितृष्णस्य स्वर्गादिप्रकृतिलयत्वप्राप्तेः आनुश्रविकविषये वितृष्णस्य दिव्यादिव्य-विषयसम्प्रयोगेऽपि चित्तस्य विषयदोषदर्शिनः प्रसङ्ख्यानबलादनल्प-भोगात्मिका हेयोपादानशून्या वशीकारसंज्ञा वैराग्यम् । ० । तत् परं पुरुषख्यातेः गुणवैतृष्ण्यम् । १५ । दृष्टानुश्रविकविषयदोषदर्शी विरक्तः पुरुषदर्शनाभ्यासात् तच्छुद्धिः । प्राग् विवेकध्यायिनस्तद्बुद्धिगुणेभ्यो व्यक्ताव्यक्तधर्म्मेभ्यो विरक्त इति द्वयं वैराग्यम् । तत्र यदुत्तरं यज्ज्ञानप्रसाधनमात्रं यस्योदये प्रत्युदित-ख्यातिरेवं मन्यते प्राप्तं प्रापणीयं क्षीणाः क्षेतव्याः क्लेशाश्छिन्नः श्लिष्टपर्व्वा भवसंक्रमो यस्य अविच्छेदात् जनित्वा म्रियते मृत्वापि जायते । यस्यैव परा काष्ठा वैराग्यं तस्यैवान्तरीयकं कैवल्यमिति । अथोपायद्वयेन निरुद्धचित्तवृत्तेः कथमुच्यते सम्प्रज्ञातः समाधिरिति । ० । वितर्कविचारानन्दास्मितारूपानुगमात् सम्प्रज्ञातः । १६ । वितर्कश्चित्तस्यालम्बने स्थूल आभोगः, सूक्ष्मो विचारः, आनन्द आह्लादः एकात्मिका संवित् अस्मिता । इति रूपचतुष्टयानुगमात् चतुर्व्विधः समाधिः । तत्र प्रथमः सवितर्कः समाधिः, द्वितीयो वितर्किणः सविचारः, तृतीयो विचारवितर्किणः सानन्दः, चतुर्थस्तद्वितर्कविचारानन्दिनोऽस्मितामात्र इति । सर्व्वे एते सालम्बनाः समाधयः सम्प्रज्ञाताख्याः । अथ असम्प्रज्ञातसमाधिः किमुपायः किंस्वभावो वेति । ० । विरामप्रत्ययाभ्यासपूर्व्वः संस्कारविशेषोऽन्यः ।१७। सर्व्ववृत्तिप्रत्यस्तसमये संस्कारविशेषो निरोधश्चित्तस्य समाधिरसम्प्रज्ञातः । तस्य परं वैराग्यमुपायः । सालम्बनोऽभ्यासस्तत्साधनाय न कल्प्यत इति विरामप्रत्ययो निर्व्वस्तुक आलम्बनीक्रियते । सर्व्वार्थ-शून्यस्तदभ्यासपूर्व्वं चित्तं निरालम्बनमभावप्राप्तमिव भवतीत्येष निर्व्वीजः समाधिरसम्प्रज्ञातः इति ॥ ४४ ॥

गङ्गाधरः—ननु वशित्वमेव किं योगसमाधितो जायते न त्वन्यदित्यत आह—

सम्प्राप्तिमाह—वशित्वमित्यादि । वशित्वं वक्ष्यमाणमष्टविधमैश्वर्य्यबलम् । 'सशरीरस्य' इतिपदेन शरीरेण सहैव वशित्वं भवतीति दर्शयति ॥ ४४ ॥

चक्रपाणिः—आवेश इत्यादि । आवेशः परपुरप्रवेशः । चेतसो ज्ञानमिति परचित्तज्ञानम् ।

इत्यष्टविधमाख्यातं योगिनां बलमैश्वरम् ।
शुद्धसत्त्वसमाधानात् तत् सर्व्वमुपजायते ॥ ४५ ॥

आवेशश्चेत्यादि । शुद्धसत्त्वसमाधानात् रजस्तमोभ्यां विनिर्म्मुक्तमनःसमाधानात् तदावेशादिकं सर्व्वमुपजायते । तद् यथा । शुद्धमनःसमाधानेन स्वार्थेन्द्रियार्थग्रहणान्निवृत्तस्य मनस आत्मनि स्थिररूपेणावस्थितौ व्याधिस्त्यान-संशय-प्रमादालस्य-विरति-भ्रान्तिदर्शनालब्धभूमिकत्वानवस्थितत्वानां चित्तस्य विक्षेपाणामन्तरायाणामभावात् प्रत्यगात्माधिगमाच्च चेतस आवेशाद्यष्टविधं योगिनामैश्वरमीश्वरभावाधिगमे बलं भवति । योगिनां हि त्रयोविंशतिः सिद्धयः; पञ्च क्षुद्रसिद्धयः, दश गुणप्रधानाः सिद्धयः, अष्टौ ब्रह्मप्रधानाः सिद्धयः । त्रिकालज्ञत्वमद्वन्द्वं परचित्ताद्यभिज्ञता । अग्न्यर्काम्बुविषादीनां स्तम्भश्चाप्यपराजयः । इति पञ्च क्षुद्राः सिद्धयः । अस्मिन् देहेऽनूर्म्मिवत्त्वं दूरश्रवणदर्शनं मनोजवित्वं कामरूपं परकायप्रवेशः स्वेच्छामृत्युर्देवक्रीड़ानुदर्शनं यथासङ्कल्पसिद्धिराज्ञासिद्धिरव्याहतगतिः । इति दश गुणप्रधानाः सिद्धयः । अणिमा महिमा लघिमा प्राप्तिः प्राकाम्यमीशित्वं वशित्वं कामावशायिता च । इत्यष्टौ ब्रह्मप्रधानाः सिद्धयः । तासां साधारणकार्य्यत्वेनेदमष्टविधमैश्वरं बलं योगिनामुक्तम् । आवेशश्चेतस इति समाधिर्द्विविधः सबीजो निर्व्वीजश्च । तत्र वक्ष्यमाणैः सतामुपासनादिभिः शुद्धे मनसि मनसः परशरीरावेशादिकारी समाधिः सबीजः । तद् यथा । बन्धकारणशैथिल्यात् प्रचारसंवेदनाच्च चित्तस्य परशरीरावेशः । लोलीभूतस्य मनसोऽप्रतिष्ठितस्य शरीरे कर्म्माशयवशाद्बन्धः प्रतिष्ठा । तस्य कर्म्मणो बन्धकारणस्य शैथिल्यं समाधिबलाद्भवति । प्रचारसंवेदनञ्च चित्तस्य समाधिजमेव । कर्म्मबन्धक्षयात् स्वचित्तस्य प्रचारसंवेदनाच्च योगी चित्तं स्वशरीरान्निष्कृष्य शरीरान्तरेषु निक्षिपति । निक्षिप्तं चित्तञ्चेन्द्रियाण्यनुपतन्ति यथा मधुकरराजं मक्षिका उत्पतन्तमनूत्पतन्ति निविश्यमानमनुविशन्ते तथेन्द्रियाणि परशरीरावेशे चित्तमनुविधीयन्ते इति ।

अर्थानां ज्ञानमिति । पातञ्जले । प्रवृत्त्यालोकन्यासात् सूक्ष्मव्यवहितविप्रकृष्टज्ञानम् । भुवनज्ञानं सूर्य्ये संयमात् । चन्द्रे ताराव्यूहज्ञानम् । ध्रुवे तद्गतिज्ञानम् ।

अर्थानां छन्दतः क्रियेति अर्थानां छन्दतः करणम् । दृष्टिरतीन्द्रियदर्शनम् । श्रोत्रमतीन्द्रियश्रवणम् । स्मृतिः सर्व्वभावतत्त्वस्मरणम्, कान्तिरमानुषी कान्तिः । इष्टतश्चाप्यदर्शनमिति

नाभिचक्रे कायव्यूहज्ञानम्। हृदये चित्तसंवित्। इति। व्यासभाष्यञ्चैषाम्। ज्योतिष्मती प्रवृत्तिरुक्ता, मनसः तस्या य आलोकस्तं योगी न्यस्य सूक्ष्मे व्यवहिते विप्रकृष्टे वाऽर्थेऽर्थमधिगच्छति। सूर्य्ये संयमात् भुवनज्ञानम्। सूर्य्यमण्डलस्थाः सप्त लोकाः, तत्र मेरोः उदीचीप्रभृति मेरुपृष्ठं यावदित्येष भूर्लोकः। मेरुपृष्ठादारभ्य ध्रुवात् ग्रहनक्षत्रताराविचित्रोऽन्तरीक्षलोकः। तत्परं स्वर्लोकः पञ्चविधः। माहेन्द्रस्तृतीयश्चतुर्थः प्राजापत्यो महर्लोकस्त्रिविधो ब्रह्मलोको जनतपःसत्यभेदात्। चन्द्रे ताराव्यूहज्ञानम्। चन्द्रे संयमं कृत्वा ताराव्यूहं विजानीते। ध्रुवे तद्गतिज्ञानम्। ध्रुवे संयमं कृत्वा तासां ताराणां गतिं विजानीयात्। नाभिचक्रे संयमं कृत्वा कायव्यूहं विजानीयात्। हृदये चित्तसंवित्। यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म तत्र विज्ञानम्। तस्मिन् संयमाच्चित्तसंवित् इत्यादि। छन्दतः क्रिया। स्वेच्छया कर्म्मकरणं भवति। यथा पातञ्जले। कायाकाशयोः सम्बन्धसंयमात् लघुतूलसमापत्तेश्चाकाशगमनम्। यत्र कायस्तत्राकाशं तस्यावकाशदानात् कायस्य। तेन सम्बन्धः प्राप्तिः। तत्र कृतसंयमो जित्वा तत्सम्बन्धं लघुतूलादिषु आ परमाणुभ्यः समापत्तिं लब्ध्वा जितसम्बन्धो लघुर्लघुत्वाच्च जले पादाभ्यां विहरति। ततस्तूर्णनाभितन्तुमात्रे विहृत्य रश्मिषु विहरति। ततो यथेष्टमाकाशे गतिरस्य भवति। इत्येवमादिस्वेच्छया गमनादिक्रियाशक्तिः। दृष्टिर्दिव्यचक्षुर्भवति। मूर्द्धज्योतिषि सिद्धदर्शनम्। शिरःकपाले च्छिद्रं प्रभास्वरं ज्योतिस्तत्र संयमात् सिद्धानां द्यावापृथिव्योरन्तरालचराणां दर्शनम्। इत्यादि। श्रोत्रमिति। दिव्यं श्रोत्रं भवति। श्रोत्राकाशयो रन्ध्रसंयमाद् दिव्यं श्रोत्रम्। सर्व्वश्रोत्राणामाकाशः प्रतिष्ठा सर्व्वशब्दानाञ्च। तदुक्तम्। तुल्यदेशश्रवणानामेकदेशश्रुतित्वं सर्व्वेषां भवतीति ; तच्चैतदाकाशस्य लिङ्गम्। अनावरणञ्चोक्तम्। तथामूर्त्तस्यानावरणदर्शनाद् विभुत्वमपि प्रख्यातमाकाशस्य। शब्दगुणानुमितं श्रोत्रं, वधिरावधिरयोरेकः शब्दं न गृह्णाति अपरो गृह्णाति तस्मात् श्रोत्रमेव शब्दविषयं, श्रोत्राकाशयोः सम्बन्धे कृतसंयमस्य योगिनो दिव्यं श्रोत्रं प्रवर्त्तते इति। स्मृतिरिति। वक्ष्यते त्वत्रैव—वक्ष्यन्ते कारणान्यष्टौ इत्यादिना। कान्तिरवान्तरमणिमादिप्रादुर्भावः कायसम्पत्तद्धर्म्मानभिघातश्च। रूपलावण्यवज्रसंहननत्वादिः कायसम्पदिति कान्तिर्भवति। इष्टतश्चाप्यदर्शनम्

यदेच्छति तदा दर्शनयोग्य एव न दृश्यते, यदा चेच्छति तदा दृश्यते। किंवा आवेशश्चेतस इति परचेतसः प्रवेशः, ज्ञानमिति सर्व्वमतीतानागतादिज्ञानम्। शेषं पूर्व्ववत्। ऐश्वरमिति

मोक्षो रजस्तमोऽभावात् बलवत्कर्म्मसंक्षयात् ।
वियोगः कर्म्मसंयोगैः * अपुनर्भव उच्यते ॥ ४६ ॥
सतामुपासनं सम्यगसतां परिवर्ज्जनम् ।
व्रतचर्य्योपवासश्च नियमाश्च पृथग्विधाः ॥
धारणं धर्म्मशास्त्राणां विज्ञानं विजने रतिः ।
विषयेष्वरतिर्मोक्षे व्यवसायः परा धृतिः ॥

इति। स्वेच्छयान्तर्द्धानं भवति। पातञ्जले। कायरूपसंयमात् तद्ग्राह्य-शक्तिस्तम्भे चक्षुःप्रकाशासम्प्रयोगेऽन्तर्द्धानम्। कायरूपसंयमात् रूपस्य ग्राह्यशक्तिं प्रतिबध्नाति, ग्राह्यशक्तिस्तम्भे सति चक्षुःप्रकाशासम्प्रयोगेऽन्तर्द्धान-मुत्पद्यते योगिनः। एतेन शब्दाद्यन्तर्द्धानमुक्तं वेदितव्यमिति। इत्यष्टविधमैश्वर्य्यं बलं योगिनां शुद्धसत्त्वसमाधितः तत् सर्व्वमुपजायत इति ॥ ४५ ॥

गङ्गाधरः—ननु योगो मोक्षप्रवर्त्तक इत्युक्तं यत्, तत्र मोक्षः कीदृश इत्यत आह—मोक्ष इत्यादि। रजस्तमोऽभावात् ततो बलवत्कर्म्मणां धर्म्माधर्म्माणाञ्च संक्षयात्। तथा कर्म्मणां नित्यनैमित्तिककाम्यानां संयोगैर्वियोगो मोक्षोऽपुनर्भव उच्यते ॥ ४६ ॥

गङ्गाधरः—नन्वेवं मोक्षस्य प्रवर्त्तके योगे स्मृतिर्या जायते सा कथं विज्ञायत इत्यत आह—सतामुपासनमित्यादि। व्रतचर्य्या चान्द्रायणादिव्रताचरणम्। उपवासः, त्र्यहादिनियमात्। नियमाश्च दशविधाः पृथक्। धर्म्मशास्त्राणां धारणमभ्यासः। विज्ञानं प्रमाणेन प्रमाज्ञानम्। विजने निर्ज्जने स्थाने स्थितौ रतिः। विषयेषु रत्यभावः। मोक्षे व्यवसायः। मोक्षसाधनकर्म्मसु

योगप्रभावादुपात्तैश्वर्य्यकृतम्। शुद्धसत्त्वसमाधानादिति नीरजस्तमस्कस्य मनस आत्मनि सम्यगाधानात् ॥ ४५ ॥

चक्रपाणिः—अथ कथं मोक्षो भवति, कश्चेत्याह—मोक्ष इत्यादि। बलवत्कर्म्मसंक्षयादिति अवश्यभोक्तव्यफलस्य कर्म्मणः क्षयात्। सर्व्वसंयोगैरिति सर्व्वैरात्मसम्बन्धिभिः शरीरबुद्ध्यहङ्कारा-दिभिः; न पुनः शरीरादिसम्बन्धो भवतीत्यपुनर्भवः ॥ ४६ ॥

चक्रपाणिः—प्रस्तावान्मोक्षोपायमाह—सतामित्यादि। परा धृतिरिति चलितमनोनियमनम्।

* सर्व्वसंयोगैरिति चक्रः।

कर्म्मणामसमारम्भः कृतानाञ्च परिक्षयः।
नैष्कर्म्यमनहङ्कारः संयोगे भयदर्शनम्॥
मनोबुद्धिसमाधानमर्थतत्त्वपरीक्षणम्।
तत्त्वं स्मृतेरुपस्थानात् सर्व्वमेतत् प्रवर्त्तते॥

प्रवर्त्तनम्। परा धृतिर्धैर्य्यमिति। कर्म्मणां नित्यनैमित्तिककाम्यानां स्वभावात् अनारम्भः, कृतानाञ्च कर्म्मणां फलक्षयात् क्षयः। नैष्कर्म्यं गृहाश्रमान्निष्क्रमणम्। अनहङ्कारो गर्व्वत्यागः। लोकानां संयोगे सङ्गमे भयमिव दृश्यते इति। मनोबुद्धिसमाधानम् मनःसमाधानं बुद्धेश्च समाधानं समाधिः। उक्तं पातञ्जले। देशबन्धश्चित्तस्य धारणा। तत्र प्रत्ययैकतानता ध्यानम्। तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिः। त्रयमेकत्र संयमः। इति व्याख्यातानि वेदव्यासेनैतानि।

यत्र नाभिचक्रे हृदयपुण्डरीके मूर्द्धज्योतिषि नासाग्रे जिह्वाग्रे इत्येवमादिषु देशेषु वाह्ये वा विषये चित्तस्य वृत्तिमात्रेण बन्ध इव बन्धो धारणा। तत्र प्रत्ययैकतानता ध्यानम्। तस्मिंश्च देशे ध्येयालम्बनस्य प्रत्ययस्यैकतानता सादृश्यप्रवाहः प्रत्ययान्तरेणापरामृष्टो ध्यानम्। तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिः। ध्यानमेव ध्येयाकारनिर्भासं प्रत्ययात्मकेन स्वरूपेण शून्यमिव यदा भवति ध्येयस्वभावावेशात् तदा समाधिः इत्युच्यते। त्रयमेकत्र संयमः। ( तदेतद्धारणाध्यानसमाधि ) एकविषयाणि त्रीणि साधनानि संयम इत्युच्यते। तदस्य त्रयस्य तान्त्रिकी परिभाषा संयम इति। अर्थतत्त्वपरीक्षणम्। अर्थानां वस्तूनां तत्त्वेन याथार्थ्येन परीक्षासामर्थ्यम्। तत्त्वं सर्व्वत्र याथार्थ्यमित्येतत् सतामुपसनाद्येतदन्तं सर्व्वं स्मृतेरुपस्थानादुपस्थित्या प्रवर्त्तते न लेकैकमात्रं

कर्म्मणाम् असमारम्भ इति अनागतधर्म्माधर्म्मसाधनानामकरणम्। कृतानाञ्च परिक्षय इति जन्मान्तरैः कृतानां कर्म्मणां फलोपभोगात् परिक्षयः। नैष्कर्म्यं संसारनिष्क्रमणेच्छा। अनहङ्कार इति ममेदमहमस्मीत्यादिबुद्धिवर्ज्जनम्। संयोग इति आत्मशरीरादिसंयोगे। मनोबुद्धिसमाधानमिति मनोबुद्ध्योरात्मनि समाधानम्। सर्व्वमेतदिति "कर्म्मणामसमारम्भः" इत्याद्युक्तम्। तत्त्वस्मृतिः आत्मादीनां यथाभूतानुस्मरणम्, सा च आत्मा शरीराद्युपकार्य्यः शरीराद्यश्च तदधीनभावा

स्मृतिः सतुसेवनाद्यैश्च धृत्यन्तैरुपलभ्यते।
स्मृत्वा स्वभावं भावानां स्मरन् दुःखात् प्रमुच्यते॥ ४७॥
वक्ष्यन्ते कारणान्यष्टौ स्मृतिर्यैरुपजायते।
निमित्तरूपग्रहणात् सादृश्यात् सविपर्य्ययात्॥

प्रवर्त्तते। तर्हि स्मृतेः उपस्थितिः कैर्विज्ञायते इत्यत आह—स्मृतिरित्यादि। सत्सेवनादिधृत्यन्तैर्लिङ्गैः स्मृतिरस्योपस्थितोपलभ्यते। कर्म्मणामनारम्भादीनि स्मृत्युपस्थितेर्लिङ्गान्यपि नोपलब्धये प्रभवन्त्येकान्तेन। दुरात्मनां कर्म्मत्यागात्। कृतकर्म्मसंक्षयस्तु परोक्षः। क्रोधादिनापि गृहान्निष्क्रामन्ति। अनहङ्कारः स्वाभाविकश्च दृश्यते। लोकसमवायोऽनकजः स्वभावान्न सत्वते। मनोबुद्धिसमाधानमतीन्द्रियत्वाददृश्यम्। अथतत्त्वपरीक्षणञ्च विद्वद्भिर्दृश्यते। बहुभिर्धार्म्मिकैस्तत्त्वं सेव्यत इति तस्माद्धृत्यन्तैरित्युक्तम्। एवं स्मृत्वा योगी भावानां स्वभावं स्वरूपं स्मरन् दुःखात् सुखदुःखोभयात्मकदुःखाज्जन्मनः प्रमुच्यते न पुनर्भवतीति॥ ४७॥

गङ्गाधरः—ननु कुतः स्मृतिर्भवतीत्यत आह—वक्ष्यन्त इत्यादि। निमित्तग्रहणात् दृष्टश्रुतानुभूतेषु स्मरणं भवति। यथायं मधुरं भाषते मम पुत्रोऽप्येवमिति दूरस्थं पुत्रं स्मरति। तथा रूपग्रहणात् स्मरणं भवति दृष्टश्रुतानुभूतानाम्। यथायं सुन्दरस्तथा मे पुत्र इति स्मरति। सादृश्याद् दृष्टश्रुतानुभूतानां स्मरणं भवति। यथा—यथायं ते गौस्तथा मे द्वौ गावौ स्त इति स्मरति। सविपर्य्ययादसादृश्याद् दृष्टश्रुतानुभूतानां स्मरणं भवति। यथेयं दुग्धवती ते

इत्यादिकस्मरणरूपतया स्मृतिः। अथ स्मृतिः कथं दुःखप्रमोषे कारणमित्याह—स्मृत्वेत्यादि। स्वभावमिति प्रत्यात्मनियतरूपम। गुरुवचनाद्धि प्रथमप्रतिपन्नमात्मादीनां रूपं परस्परभिन्नं परस्परानुपकारकत्वेन व्यवस्थितं स्मरन् न क्वचिदपि प्रवर्त्तते, अप्रवर्त्तमानश्च न दुःखेन प्रकृतिजन्येन युज्यत इत्यर्थः॥ ४७॥

चक्रपाणिः—इदानीं स्मृतिप्रस्तावात् स्मृतिकारणान्याह—वक्ष्यन्त इत्यादि। निमित्तग्रहणं कारणज्ञानम्, कारणं हि दृष्ट्वा कार्य्यं स्मरति। रूपग्रहणमाकारग्रहणम्। यथा—वने गवयं दृष्ट्वा गां स्मरति। सादृश्याद् यथा—पितुः सदृशं पुरुषं दृष्ट्वा पितरं स्मरति। सविपर्य्ययादिति अत्यर्थवैसादृश्यादपि स्मरणं भवति। यथा—अत्यर्थकुरूपं दृष्ट्वा अत्यर्थसुरूपं स्मरति प्रति-

सत्त्वानुबन्धादभ्यासाज् ज्ञानयोगात् पुनःश्रुतात्।
दृष्टश्रुतानुभूतानां स्मरणात् स्मृतिरुच्यते॥ ४८॥
एतत् तदेकमयनं मुक्तैर्मोक्षस्य दर्शितम्।
तत्त्वस्मृतिबलं येन गता न पुनरागताः॥
अयनं पुनराख्यातमेतद् योगस्य योगिभिः।
संख्यातधर्म्मैः सांख्यैश्च मुक्तैर्मोक्षस्य चायनम्॥ ४९॥

गौन तथा मे सा गौरिति स्मरति। सत्त्वानुबन्धाद् दृष्टश्रुतानुभूतानां स्मरणं भवति। यथा मनसा शिवं स्मरति। अभ्यासात् पुनःपुनरावृत्त्या दृष्टश्रुतानुभूतानां स्मरणं भवति। यथा वेदानभ्यस्तान स्मरति। ज्ञानयोगात् योगादित उत्पन्नज्ञानात् सर्व्वेषां दृष्टश्रुतानुभूतानां स्मरणं भवति। यथा योगिनः स्मरन्ति। पुनःश्रुताच्च दृष्टश्रुतानुभूतानां स्मरणं भवति। यद् विस्मृतं तत् पुनः श्रुत्वा श्लोकादिकं स्मरतीति स्मरणात् स्मृतिरुच्यते॥ ४८॥

गङ्गाधरः—नन्वेवं स्मृत्या स्वभावं स्मरन् किं दुःखात् प्रमुच्यते नान्यकारणादित्यत आह—एतदित्यादि। मुक्तैर्जीवद्भिस्तदेतदेकं मोक्षस्यायनं पन्थाः स्मृतिर्दर्शितम्। नन्वस्ति खलु सर्व्वस्यैव स्मृतिः कुत्रचिदेकस्य अपरस्यान्यत्रैवं सर्व्वस्यैव किं मोक्षः स्यादित्यत आह—तत्त्वस्मृतिबलमित्यादि। येन योगेन तत्त्वस्मृतिमेव बलं गता ये प्राप्तास्ते योगिनः शरीरं त्यक्त्वा पुनर्नागता न जाता इति। ननु योगेन कीदृशी स्मृतिर्भूत्वा बलमैश्वरं भवति तत्त्वस्मृतिस्तु प्रायशो जने वर्त्तते। यतस्तस्मिंस्तदिति तत्त्वं प्रायशो जनाः स्मरन्ति। एषा गौरेषोऽश्व एष वृक्ष इत्येवमादि। यद् यथा तत् तथा स्मरन्ति

योगिनम्। सत्त्वानुबन्धादिति मनसः प्रणिधानात्, स्मर्त्तव्यस्मरणाय प्रणिहितमनाः स्मर्त्तव्यं स्मरति। अभ्यासादिति अभ्यस्तमर्थमभ्यासबलादेव स्मरति। ज्ञानयोगादिति तत्त्वज्ञानयोगात् उपजाततत्त्वज्ञाने हि तद्बलादेव सर्व्वं स्मरति। पुनःश्रुतादिति श्रुतोऽप्यर्थः विस्मृतः पुनरेकदेशं श्रुत्वा स्मर्य्यते। स्मृतिकारणमभिधाय स्मृतिरूपमाह—दृष्टेत्यादि। दृष्टं प्रत्यक्षोपलक्षणम्, श्रुतन्त्वागमप्रतीतम्। तेन सर्व्वपूर्व्वानुभूतावरोधः। क्वचित् 'स्मरणं स्मृतिरुच्यते' इति पाठः तत्रापि नार्थभेदः॥ ४८॥

चक्रपाणिः—एवं स्मृतिं सामान्येन प्रतिपाद्य तत्त्वस्मृतेर्मोक्षसाधकत्वं दर्शयन्नाह—एतदित्यादि एकमयनमिति श्रेष्ठः पन्थाः, मुक्तैरिति जीवन्मुक्तैरिति ज्ञेयम्, सर्व्वथा मुक्तानां शरीराभावेनोप-

सर्व्वं कारणवद् दुःखमस्वञ्चानित्यमेव च।
न चात्मा कृतकं * तद्धि तत्र चोत्पद्यते स्वता॥
यावन्नोत्पद्यते सत्या बुद्धिर्नैतदहं यथा।
नैतन्मम च विज्ञाय ज्ञः सर्व्वमतिवर्त्तते॥

न च मुच्यन्ते इति चेत्, सत्यम्। तत्त्वं द्विविधं परमार्थतस्तत्त्वं लोकतस्तत्त्वञ्च। इदन्तु लौकिकं तत्त्वं तस्मिंस्तदिति। पारमार्थिकं तत्त्वन्तु प्रकृतिज्ञानम्। यथा यदग्ने रोहितं रूपं तेजसस्तद् रूपं यच्छुक्लं तदपां यत् कृष्णं तदन्नस्या-पापादग्नेरग्नित्वं विकारो नामधेयं त्रीणि रूपाणीत्येव सत्यमित्येवं सर्व्वेषां प्रकृतिज्ञाने या मूलप्रकृतिस्तां यत् स्मरति योगेन सा तत्त्वस्मृतिरैश्वरं बलम्, तया स्मृत्या भावानां स्वभावं स्वरूपं स्मरन् दुःखात् प्रमुच्यते इति। यथैषा स्मृतिर्मोक्षस्यैकमयनं तथा योगिभिर्योगस्याप्ययनमेतत् स्मृतिरूपमाख्यातम्। साङ्ख्यैश्च सङ्ख्यातधर्म्मैर्विज्ञातधर्म्मैर्मुक्तैर्जीवद्भिर्मोक्षस्य चायनमेतत् तत्त्वस्मृति-रूपमाख्यातमिति॥ ४९॥

गङ्गाधरः—तत् तत्त्वं कीदृशमित्यत आह—सर्व्वमित्यादि। सर्व्वमिदं कारणवत् कार्य्यं न तु कारणं तस्माद् विविधदुःखहेतुत्वाद् दुःखम्। कस्मात्? यतोऽस्वम्। नात्मा। आत्मा हि भूमा। भूमैव सुखं नाल्पे सुखम्। तर्हि कुतोऽस्वमिति। यस्मादनित्यमेव चेदं सर्व्वं न चानित्य आत्मा। कस्मात्? कृतकं तद्धि। हि यस्मात् तत् सर्व्वं कृतकमतश्चानित्यमतोऽस्वमतो दुःखम् इत्येवं तत्र योगे तत्त्वेन स्मृतौ च जातायां स्वता खलु सर्व्वकारणभूतात्मता उत्पद्यते। प्रत्यगात्मभावं विहाय प्रकृतिभूतात्मताभिव्यज्यते इति। ननु चैवं स्मृतिः कियत्कालं नोत्पद्यते, तत्राह—यावदित्यादि। यावत् सा सत्या

र्थकत्वाभावात्। तत्त्वस्मृतिबलमिति तत्त्वस्मृतिरूपबलम्। किंवा, तत्त्वस्मृतिबलं यत्र मोक्षसाधनमार्गे तत् तत्त्वस्मृतिबलमिति। येनेति, येन यथा। गता इति मोक्षं गताः। न पुनरागता इति मुक्तिं याताः न पुनरागच्छन्ति॥ ४९॥

चक्रपाणिः—इदानीं सङ्क्षेपेण संसारहेतुमज्ञानम्, तथा मोक्षहेतुञ्च सम्यग्ज्ञानं दर्शयन्नाह—सर्व्वमित्यादि। सर्व्वं कारणवदिति सर्व्वमुत्पद्यमानं बुद्ध्यहङ्कारशरीरादि। दुःखमिति दुःखहेतुरेव। अस्वमिति सर्व्वं कारणवदेवात्मव्यतिरिक्तं परमार्थतः। न चात्मकृतकमिति न चात्मनोदासीनेन कृतम्। तत्रेति कारणवति बुद्धिशरीरादौ। स्वतेति ममता 'ममेयं बुद्धिः'

* न चात्मकृतकमिति चक्रः।

तस्मिंश्चरमसंन्यासे समूलाः सर्व्ववेदनाः।
ससंज्ञाज्ञानविज्ञानात् * निवृत्तिं यान्त्यशेषतः॥ ५० ॥

बुद्धिर्नोत्पद्यते तावदेवं तत्त्वस्मृतिबलं नोत्पद्यते इत्यर्थादवगम्यम्। का पुनः सत्या बुद्धिस्तस्मिंस्तदिति तु सत्या बुद्धिः सर्व्वस्यैव प्रायेण वर्त्तेत इत्यत आह— नैतदहमित्यादि। यया बुद्ध्या खल्वेतन्नाहमिति ज्ञायते मम चैतन्नेति च विज्ञायते सा सत्या बुद्धिर्विद्याबुद्धिर्मूलप्रकृतिज्ञानम्। न तु तस्मिंस्तदिति ज्ञानं सत्या बुद्धिरियं हि मिथ्याबुद्धिः। द्विविधा हि मिथ्याबुद्धिः प्रधानमिथ्याबुद्धिः स्थाणौ पुरुष इति शुक्तौ रजतमिति। तत्त्वमिथ्याबुद्धिस्तु तस्मिंस्तदिति तत्त्वबुद्धिः। तया सत्यया बुद्ध्या सर्व्वं विज्ञायातिवर्त्तते योगी। तस्मिंस्तदिति तत्त्वबुद्ध्या प्रधानमिथ्याबुद्धिरपैति सत्यया तत्त्वबुद्ध्या मिथ्यातत्त्वबुद्धिस्तस्मिंस्तदिति बुद्धिरपैति। तया तत्त्वबुद्ध्या रागद्वेषमोहा दोषा अपयन्ति दोषापायात् प्रवृत्तिरपैति प्रवृत्त्यपायाद् दुःखं सुखदुःखात्मकमपैति दुःखापायात् तु सर्व्वमतिवृत्य मूलप्रकृतिभूतकारणमात्मा भवति न पुनर्जायत इति। ततः किं स्यादित्यत आह—तस्मिन्नित्यादि। तस्मिन् सर्व्वातिवर्त्तने चरमसंन्यासे सर्व्ववेदनाः शारीरमानससुखदुःखात्मिका आधिभौतिकाध्यात्मिकाधिदैविकरूपाः समूला धर्म्माधर्म्मसहिताः ससंज्ञाज्ञानविज्ञानादशेषतो निवृत्तिं यान्तीति। क चैता वेदनाः सर्व्वा निवृत्तिं यान्त्यशेषत इति प्रश्नस्योत्तरमिति।

अत्रैवान्वीक्षिकीशासने गौतमेनोक्तं सपरीक्षणम्। तद् यथा— ऋणक्लेशप्रवृत्त्यनुबन्धादपवर्गाभावः। प्रधानशब्दानुपपत्तेर्गुणशब्देनानुवादो निन्दाप्रशंसोपपत्तेः। अधिकाराच्च विधानं विद्यान्तरवत्। समारोपादात्मन्यप्रतिषेधः। सुषुप्तस्य स्वप्नदर्शने क्लेशाभावादपवर्गः। न प्रवृत्तिः प्रतिसन्धानाय हीनक्लेशस्य। न क्लेशसन्ततेः स्वाभाविकत्वात्। प्रागुत्पत्तेरभावानित्यत्ववत् स्वाभाविकेऽप्यनित्यत्वम्। अणुश्यामतानित्यत्ववद् वा। न सङ्कल्पनिमित्तत्वाच्च रागादीनाम्। व्याख्यातान्येतानि वात्स्यायनेन। ऋणक्लेशप्रवृत्त्यनुबन्धादपवर्गाभाव इति। ऋणानुबन्धान्नास्त्यपवर्गः।

इत्यादिरूपा। अथ कियन्तं कालमियं भ्रान्त्या स्वतोत्पद्यते इत्याह—यावत् इत्यादि। सत्या बुद्धिः सम्यग् ज्ञानम्। यया सत्यया बुद्ध्या। नैतदबुद्ध्यायहं, किन्तु भिन्न एवाहम्,

* असंज्ञाज्ञानविज्ञाना इति चक्रधृतः पाठः।

जायमानो ह वै ब्राह्मणस्त्रिभिर्ऋणैर्ऋणवान् जायते। ब्रह्मचर्य्येण ऋषिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्य इति अत्र सम्प्रदाने चतुर्थी। ब्रह्मचर्य्यादिभिर्ऋणैः ऋष्यादिभ्य ऋणवान् जायते इति ऋणानि। तेषामनुबन्धः स्वकर्म्मभिः सम्बन्धः। कर्म्मसम्बन्धवचनात्। जरामर्य्यं वात्र तत् सत्रं यदग्निहोत्रं दर्शपौर्णमासौ चेति। जरया ह वा एष एतस्मात् सत्राद्विमुच्यते मृत्युना ह वै चेति। ऋणानुबन्धादपवर्गानुष्ठानकालो नास्तीत्यपवर्गाभावः। क्लेशानुबन्धान्नास्त्यपवर्गः। क्लेशानुबन्धश्च जायते। नास्य क्लेशानुबन्धविच्छेदो गृह्यते। प्रवृत्त्यनुबन्धान्नास्त्यपवर्गः। जन्मप्रभृत्ययं यावत् प्रायणं वाग्बुद्धिशरीरारम्भेणाविमुक्तो गृह्यते। तत्र यदुक्तम्—दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तराभावादपवर्ग इति तदनुपपन्नमिति। अत्राभिधीयते— यत् तावदृणानुबन्धादिति ऋणैरिव ऋणैरिति। "प्रधानशब्दानुपपत्तेर्गुणशब्देनानुवादो निन्दाप्रशंसोपपत्तेः।" ऋणैरिति नायं प्रधानशब्दः। यत्र खल्वेकः प्रत्यादेयं ददाति, द्वितीयश्च प्रतिदेयं गृह्णाति तत्रास्य दृष्टत्वात् प्रधानमृणशब्दः। न चैतदिहोपपद्यते। प्रधानशब्दानुपपत्तेर्गुणशब्देनायमनुवादः ऋणैरिव ऋणैरिति। प्रयुक्तोपमञ्चैतत्। अग्निर्माणवक इति। अन्यत्र दृष्टश्चायमृणशब्द इह प्रयुज्यते। यथाग्निशब्दो माणवके। कथं गुणशब्देनानुवादः? निन्दाप्रशंसोपपत्तेः। कर्म्मलोपे ऋणीव ऋणादानान्निन्द्यते। कर्म्मानुष्ठाने च ऋणीव ऋणप्रतिदानात् प्रशस्यते। जायमान इति गुणशब्दो विपर्य्ययेऽनधिकारात्। जायमानो ह वै ब्राह्मण इति च शब्दो गृहस्थः सम्पद्यमानो जायमान इति। यदायमाश्रमस्थो जायते तदा कर्म्मभिरधिक्रियते। मातृतो जायमानस्यानधिकारात्। यदा तु मातृतो जायते कुमारो न तदा कर्म्मभिरधिक्रियते, अर्थिनः शक्तस्य चाधिकारात्। अर्थिनः कर्म्मभिरधिकारः कर्म्मविधौ कामयोगस्मृतेः। अग्निहोत्रं जुहुयात् स्वर्गकाम इत्येवमादि शक्तस्य च प्रवृत्तिसम्भवात्। शक्तस्य कर्म्मभिरधिकारः प्रवृत्तिसम्भवात्। शक्तः खलु विहिते कर्म्मणि प्रवर्त्तते, नेतर इति। उभयाभावस्तु प्रधानशब्दार्थे मातृतो जायमाने कुमार इति। उभयमर्थिता शक्तिश्च न भवतीति। न भिद्यते च लौकिकाद्वाक्याद् वैदिकं वाक्यं, प्रेक्षापूर्व्वकारिपुरुषप्रणीतत्वात्। तत्र लौकिकस्तावदपरीक्षकोऽपि न जातमात्रं कुमारमेवं

क्षा नैतद् बुद्ध्यादि मम, किन्तु प्रकृतेः प्रपञ्च इति विज्ञाय। शुद्धसत्त्वसाक्षात्कारवान्। सर्व्वमतिवर्त्तेत इति सर्व्वं बुद्ध्यादिं त्यजति। चरमसंन्यास इति पश्चाद्भाविसकलकर्म्मसन्न्यासे। प्रथमं हि

ब्रूयात्—अधीष्व यजस्व ब्रह्मचर्य्यं चर इति। कुत एवमृषिरुपपन्नानवद्यवादी उपदेशार्थेन प्रयुक्त उपदिशति? न खलु वै नर्त्तकोऽन्धेषु प्रवर्त्तते। न गायनो बधिरेष्विति। उपदिष्टार्थविज्ञानञ्चोपदेशविषयः। यथोपदिष्टमर्थं विजानाति तं प्रत्युपदेशः क्रियते, न चैतदस्ति जायमानकुमारक इति। गार्हस्थ्यस्य लिङ्गञ्च मन्त्रब्राह्मणं कर्म्माभिवदति। यच्च मन्त्रब्राह्मणं कर्म्माभिवदति, तत् पत्न्यादिसम्बन्धादिना ब्रह्मचर्य्यगार्हस्थ्यलिङ्गादिनोपपन्नम् तस्मात् गृहस्थोऽयं जायमानोऽभिधीयते इति। अथित्वस्य चाविपरिणामे जरामर्य्यवादोपपत्तेः। यावच्चास्य फलेनार्थित्वं न विपरिणमते न निवर्त्तते, तावदनेन कर्म्मानुष्ठेयमित्युपपद्यते। जरामर्य्यवादस्तं प्रतीति। जरया ह वा इत्यायुषस्तुरीयभागेण प्रव्रज्यावचनम्। जरया ह वा एष एतस्माद्विमुच्यते इति। आयुषस्तुरीयं प्रव्रज्यायुक्तं जरेत्युच्यते। तत्र हि प्रव्रज्या विधीयते। अत्यन्तजरासंयोगे जरया ह वा इत्यनर्थकम्। अशक्तो विमुच्यते इत्येतदपि नोपपद्यते। स्वयमशक्तस्य बाह्यां शक्तिमाह। "अन्तेवासी वा जुहुयाद् ब्रह्मणा स परिक्रीतः। क्षीरहोता वा जुहुयाद्धनेन स परिक्रीतः" इति। अथापि विहितं वानूद्येत कामाद्वार्थः परिकल्प्येत इति विहितानुवचनं न्याय्यमिति। ऋणवानिवाऽस्वतन्त्रो गृहस्थः कर्म्मसु प्रवर्त्तते इत्युपपन्नं वाक्यस्य सामर्थ्यम्। फलस्य हि साधनानि प्रयत्नविषयो न फलम्, तानि सम्पन्नानि फलाय कल्पन्ते। विहितश्च जायमानम्, विधीयते च जायमानम्; तेन यः सम्बध्यते सोऽयं जायमान इति। प्रत्यक्षविधानाभावादिति चेन्न, प्रतिषेधस्यापि प्रत्यक्षविधानाभावादिति। प्रत्यक्षतो विधीयते गार्हस्थ्यं ब्राह्मणेन। यदि चाश्रमान्तरमभविष्यत्, तदपि व्यधास्यत प्रत्यक्षतः। प्रत्यक्षविधानाभावान्नास्त्याश्रमान्तरमिति न, प्रतिषेधस्य प्रत्यक्षविधानाभावात्। न प्रतिषेधो वै ब्राह्मणेन प्रत्यक्षतो विधीयते। न सन्त्याश्रमान्तराणि एक एव गृहस्थाश्रम इति प्रतिषेधस्य प्रत्यक्षतोऽश्रवणादयुक्तमेतदिति। ०। अधिकाराच्च विधानं विद्यान्तरवत्। ०। यथा शास्त्रान्तराणि स्वे स्वेऽधिकारे प्रत्यक्षतो विधायकानि, नार्थान्तराभावात्। एवमिदं ब्राह्मणं गृहस्थशास्त्रं स्वे स्वेऽधिकारे प्रत्यक्षतो विधायकं नाश्रमान्तराणामभावादिति। ऋग् ब्राह्मणञ्चापवर्गाभिधार्य्यभिधीयते। ऋचश्च ब्राह्मणानि चापवर्गाभिधायीनि भवन्ति। ऋचश्च तावत् "कर्म्मभिर्मृत्युमृषयो निषेदुः

मोक्षोपयोगित्वेन गुरुवचनात् क्रियासन्न्यासः कृत एव, परं स्वानुभवविरक्तेन न कृतः, अभ्यासादुद्भूतेन साक्षाद्दृष्टभावस्वभावेन यः सर्व्वसन्न्यासः क्रियते, तत्र समूलाः सर्व्ववेदना ज्ञानात्यन्त्र

प्रजावन्तो द्रविणमिच्छमानाः। अथापरे ऋषयो मनीषिणः परं कर्म्मभ्यो-ऽमृतत्वमानशुः। न कर्म्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः। परेण नाकं विहितं गुहायां विभ्राजते यद् यतयो विशन्ति। वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात्। तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय।"

अथ ब्राह्मणानि। त्रयो धर्म्मस्कन्धाः यज्ञोऽध्ययनं दानमिति। प्रथमस्तप एव, द्वितीयो ब्रह्मचर्य्याचार्य्यकुलवासः, तृतीयोऽत्यन्तमात्मन आचार्य्यकुले-ऽवसादनम्। सर्व्व एवैते पुण्यलोका भवन्ति। ब्रह्मसंस्थोऽमृतत्वमेति। एतमेव प्रव्रजिनो लोकमभीप्सन्तः प्रव्रजन्तीति। अथो खल्वाहुः। काममय एवायं पुरुष इति। स यथाकामो भवति तथा क्रतुर्भवति। तथा तत् कर्म्म कुरुते। यत् कर्म्म कुरुते तदभिसम्पद्यते। इति कर्म्मभिः संसरणमुक्त्वा प्रकृतमन्यदुपदिशन्तीति तु कामयमानो योऽकामो निष्काम आत्मकामो भवति, न तस्य प्राणा उत्क्रामन्ति इहैव समवलीयन्ते ब्रह्मैव सन् ब्रह्माप्येति। इति। तत्र यदुक्तम्—ऋणानुबन्धादपवर्गाभाव इत्येतदयुक्तमिति। ये चत्वारः पथयो देवयाना इति चातुराश्रम्यश्रुतेरैकाश्रम्यानुपपत्तिः। फलार्थिनश्चेदं ब्रह्म जरामर्य्यं वा एतत् सत्रं यदग्निहोत्रं दर्शपौर्णमासौ चेति। कथम्? समारोपादात्मन्यप्रतिषेधः। प्राजापत्यामिष्टिं निरूप्य तस्यां सार्व्ववेदसं हुत्वात्मन्यग्नीन् समारोप्य ब्राह्मणः प्रव्रजेदिति श्रूयते। तेन विजानीमः प्रजावित्तलोकैषणाभ्यश्च व्युत्थायाथ भिक्षाचर्य्यं चरन्तीति। एषणाभ्य-श्चाव्युत्थितस्य पात्रचयान्तानि कर्म्माणि नोपपद्यन्त इति। नाविशेषेण कर्त्तुः प्रयोजकफलं भवतीति चातुराश्रम्यविधानाच्चेतिहासपुराणधर्म्म-शास्त्रेष्वैकाश्रम्यानुपपत्तिः। तदप्रमाणमिति चेन्न। प्रमाणेन खलु ब्राह्मणेन इतिहासपुराणस्य प्रामाण्यमभ्यनुज्ञायते। ते वात्र ते अथर्व्वाङ्गिरस इतिहास-पुराणमभ्यतर्पन्नित्यादि। इतिहासपुराणं पञ्चमं वेदानां वेदमिति। तस्मात् अयुक्तमेतदप्रामाण्यमिति। अप्रामाण्ये च धर्म्मशास्त्रस्य प्राणभृतां व्यवहार-लोपाल्लोकोच्छेदप्रसङ्गः। द्रष्टृप्रवक्तृसामान्याच्चाप्रामाण्यानुपपत्तिः। य एव मन्त्रब्राह्मणद्रष्टारः प्रवक्तारश्च, ते खल्वितिहासपुराणस्य धर्म्मशास्त्रस्य चेति।

शरीरोपरमादेव उपरमन्ते। समूला इति सकारणाः, कारणञ्च बुद्ध्यादयः। संज्ञा आलोचनं निर्व्वि-कल्पकम्। ज्ञानं सविकल्पकम्। विज्ञानं बुद्ध्यवसायः। किंवा संज्ञया नामोल्लेखेन ज्ञानम्, विज्ञानं शास्त्रज्ञानम्। तत्त्वज्ञानमपि हि मोक्षं जनयित्वा निवर्त्तत एव कारणाभावात्॥ ५०॥

विषयव्यवस्थानाच्च यथाविषयं प्रामाण्यम्। अन्यो मन्त्रो ब्राह्मणस्य विषयो-ऽन्यश्चेतिहासपुराणधर्म्मशास्त्राणामिति। यज्ञो मन्त्रब्राह्मणस्य लोकवृत्त-मितिहासपुराणस्य। लोकव्यवहारव्यवस्थानं धर्म्मशास्त्रस्य विषयः। तत्रैकेन सर्व्वंव्यवस्थात इति। यथाविषयमेतानि प्रमाणानीन्द्रियादिवदिति। यत् पुनरेतत् क्लेशानुबन्धस्याविच्छेदादिति। सुषुप्तस्य स्वप्नादर्शने क्लेशाभावा-दपवर्गः। इति। यथा सुषुप्तस्य खलु स्वप्नादर्शने रागानुबन्धः सुखदुःखानु-बन्धश्च विच्छिद्यते तथापवर्गेऽपीति। एतच्च ब्रह्मविदो मुक्तात्मनो रूपमुदा-हरन्तीति। यदपि प्रवृत्त्यनुबन्धादिति। न प्रवृत्तिः प्रतिसन्धानाय हीन-क्लेशस्य। प्रक्षीणेषु रागद्वेषमोहेषु प्रवृत्तिर्न प्रतिसन्धानाय। पूर्व्वसन्धिस्तु पूर्व्वजन्मनिवृत्तौ पुनर्ज्जन्म। तच्चादृष्टकारितं तस्यां प्रहीणायां पूर्व्वजन्माभावे जन्मान्तराभावोऽप्रतिसन्धानमपवर्गः। कर्म्मवैकल्यप्रसङ्ग इति चेन्न। कर्म्म-विपाकप्रतिसंवेदनस्याप्रत्याख्यानात्। पूर्व्वजन्मनिवृत्तौ पुनर्ज्जन्म न भवतीत्युच्यते, न तु कर्म्मविपाकप्रतिसंवेदनं प्रत्याख्यायते। सर्व्वाणि पूर्व्व-कर्म्माणि ह्यन्ते जन्मनि विपच्यन्त इति। न क्लेशसन्ततेः स्वाभाविकत्वात्। नोपपद्यते क्लेशानुबन्धविच्छेदः, कस्मात्? क्लेशसन्ततेः स्वाभाविकत्वात्। अनादिरियं क्लेशसन्ततिः। न चानादिः शक्य उच्छेत्तुमिति। अत्र कश्चित् परिहारमाह। प्रागुत्पत्तेरभावानित्यत्ववत् स्वाभाविकेऽप्यनित्यत्वम्। यथा-ऽनादिः प्रागुत्पत्तेरभाव उत्पन्नेन भावेन निवर्त्त्यते, एवं स्वाभाविकी क्लेश-सन्ततिरनित्येति। अपर आह। अणुश्यामताऽनित्यत्ववद्वा। अनादिरणु-श्यामतेति हेत्वभावादयुक्तम्। अनुत्पत्तिधर्म्मं नित्यमिति नात्र हेतुरस्तीति। अयन्तु समाधिः। नासङ्कल्पनिमित्तत्वाच्च रागादीनाम्। कर्म्मनिमित्तत्वादित-रेतरनिमित्तत्वाच्चेति समुच्चयः। मिथ्यासङ्कल्पेभ्यो रञ्जनीयकोपनीयमोह-नीयेभ्यो रागद्वेषमोहा उत्पद्यन्ते। कर्म्म च सत्त्वनिकायनिर्व्वर्त्तकम्। नैयमिकान् रागद्वेषमोहान् निर्व्वर्त्तयति नियमदर्शनात्। दृश्यते हि कश्चित् सत्त्वनिकायो रागबहुलः कश्चिद् द्वेषबहुलः कश्चिन्मोहबहुल इति। इतरेतर-निमित्ता च रागादीनामुत्पत्तिः। मूढो रज्यति मूढः कुप्यति। रक्तो मुह्यति कुपितो मुह्यति। रक्तः कुप्यति कुपितो रज्यति। सर्व्वमिथ्यासङ्कल्पानां तत्त्वज्ञाना-दनुत्पत्तिः। कारणानुत्पत्तौ कार्य्यानुत्पत्तेरिति। रागादीनामत्यन्तमनुत्पत्ति-रिति। अनादिश्च क्लेशसन्ततिरित्युक्तम्। इमे सर्व्वे खल्वाध्यात्मिका भावा अनादिना प्रबन्धेन प्रवर्त्तन्ते शरीरादयः। न जात्वत्र कश्चिदनुत्पन्नपूर्व्वः प्रथमत

उत्पद्यते अन्यत्र तत्त्वज्ञानात्। न चैवं सत्यनुत्पत्तिधर्म्मकं किञ्चिद्व्यय-धर्म्मकं प्रतिज्ञायते इति। कर्म्म च सत्त्वनिकायनिर्व्वर्त्तकम्। तत्त्वज्ञान-कृतान्मिथ्यासङ्कल्पविघातान्न रागाद्युत्पत्तिनिमित्तं भवति, सुखदुःखासंवित्ति-फलन्तु भवतीति। इत्येवं सिद्धस्त्वपवर्गः प्रमाणप्रमेयाणां तत्त्वज्ञानान्मिथ्या-ज्ञानादीनामुत्तरोत्तरापायाद्भवति। तत् तु तत्त्वज्ञानं प्रमाणप्रमेयेषु तेषु तेषु यत् तथा तथा ज्ञानं तन्न, वस्तुतस्तत्त्वज्ञानम्। यतः। स्वप्नविषयाभिमानवदयं प्रमाण-प्रमेयाभिमानः। यथा स्वप्ने विषया न सन्त्यथ चाभिमानो भवति एवं प्रत्यक्षा-दीनि प्रमाणानि न सन्ति न चात्मशरीरेन्द्रियार्थबुद्धिमनःप्रवृत्तिदोषप्रेत्यभाव-फलदुःखानि प्रमेयाणि सन्त्यथ च प्रमाणप्रमेयाभिमानो भवति। अनृतान्यप्येतानि सत्यान्यभिमन्यन्ते। मायागन्धर्व्वनगरमृगतृष्णिकावद्वा। एषु प्रमाणप्रमेयेष तथा तथा ज्ञानं यत्तज्ज्ञानं ततोऽपैति प्रधानं मिथ्याज्ञानम् अतस्मिंस्तदिति यथा खल्वपुरुषे स्थाणौ पुरुष इति। स्थाणौ स्थाणुरिति च स्वप्नविषयाभिमानवदभि-मानस्तत्त्वमपि मिथ्याज्ञानं सत्यात् तत्त्वज्ञानादपैति। अत एव तत्त्वप्रधान-भेदाच्च मिथ्याबुद्धेर्द्वैविध्योपपत्तिः। स्थाणौ स्थाणुरिति तत्त्वं मिथ्याज्ञान-मपुरुषे स्थाणौ पुरुष इति प्रधानं मिथ्याज्ञानमिति द्विविधं मिथ्याज्ञानमुपपद्यते।

कथं तत्त्वज्ञानमुत्पद्यत इति? समाधिविशेषाभ्यासात्। समाधिस्तु प्रत्याहृतस्येन्द्रियेभ्यो मनसो धारकेण प्रयत्नेन धार्य्यमाणस्यात्मना संयोग-स्तत्त्वबुभुत्साविशिष्टः। सति हि तस्मिन्निन्द्रियार्थेषु बुद्धयो नोत्पद्यन्ते, तदभ्यासवशात् तत्त्वबुद्धिरुत्पद्यते। यदुक्तम्—सति हि तस्मिन्निन्द्रियार्थेषु बुद्धयो नोत्पद्यन्ते। इत्येतत्। "नार्थविशेषप्राबल्यात्।" अनिच्छतोऽपि बुद्ध्युत्-पत्तेर्नैतद् युक्तम्। कस्मात्? अर्थविशेषप्राबल्यात्। बुभुत्समानस्यापि बुद्ध्युत्पत्ति-र्दृष्टा। यथा स्तनयित्नुशब्दप्रभृतिषु; तत्र समाधिविशेषो नोत्पद्यते। "क्षुधा-दिभिः प्रवर्त्तनाच्च।" क्षुत्पिपासाभ्यां शीतोष्णाभ्यां व्याधिभिश्चानिच्छतो-ऽपि बुद्धयः प्रवर्त्तन्ते। तस्मादैकाग्र्यानुपपत्तिरिति। ततस्त्वेतत् समाधि-व्युत्थाननिमित्तं समाधिप्रत्यनीकञ्च, सति त्वेतत्। "पूर्व्वकृतफलानुबन्धात् तदुत्पत्तिः।" पूर्व्वकृतो जन्मान्तरोपचितस्तत्त्वज्ञानहेतुर्धर्म्मप्रविवेकफलानुबन्धो योगाभ्याससामर्थ्यम्। निष्फले ह्यभ्यासे नाभ्यासा आद्रियेरन्। दृष्टं हि लौकिकेषु कर्म्मस्वभ्याससामर्थ्यम्। प्रत्यनीकपरिहारार्थञ्च। "अरण्यगुहा-पुलिनादिषु योगाभ्यासोपदेशः।" योगाभ्यासजनितो धर्म्मो जन्मान्तरेऽप्यनु-वर्त्तते। प्रचयकाष्ठागते तत्त्वज्ञानहेतौ धर्म्मे प्रकृष्टायां समाधिभावनायां तत्त्व-

ज्ञानमुत्पद्यत इति। दृष्टश्च समाधेनार्थविशेषप्राबल्याभिभवः। नाहमेतत् अश्रौषं नाहमेतदज्ञासिषमन्यत्र मे मनोऽभूदित्याह लौकिक इति। यद्यर्थ-विशेषप्राबल्यादनिच्छतोऽपि बुद्ध्युत्पत्तिरनुज्ञायते। "अपवर्गेऽप्येवं प्रसङ्गः।" मुक्तस्यापि वाह्यार्थसामर्थ्याद् बुद्धय उत्पद्येरन्निति। "न निष्पन्नावश्य-म्भावित्वात्।" कर्म्मवशान्निष्पन्नशरीरे चेष्टेन्द्रियार्थाश्रये निमित्तसद्भावात् अवश्यम्भावी बुद्धीनामुत्पादः। न च प्रबलोऽपि सन् वाह्यार्थं आत्मनो बुद्ध्युत्-पादे समर्थो भवति। "तस्येन्द्रियेण संयोगाद् बुद्ध्युत्पादे सामर्थ्यं दृष्टमिति।" "तदभावश्चापवर्गे।" तस्य बुद्धिनिमित्ताश्रयस्य शरीरेन्द्रियस्य धर्म्माधर्म्माभावात् अभावोऽपवर्गे इति। तत्र यदुक्तम्—अपवर्गेऽप्येवं प्रसङ्ग इति तदयुक्तम्। तस्मात् सर्व्वदुःखविमोक्षोऽपवर्गः। यस्मात् सर्व्वदुःखवीजं सर्व्वदुःखायतनञ्च अपवर्गे विच्छिद्यते, तस्मात् सर्व्वेण दुःखेन विमुक्तिरपवर्गः। न निर्व्वीजं निरायतनञ्च दुःखमुत्पद्यत इति। "तदर्थं यमनियमाभ्यासात्मसंस्कारो योगात् चाध्यात्मविध्युपायैः।" "तस्यापवर्गस्याधिगमाय यमनियमाभ्यासात्मसंस्कारः। यमः समानमाश्रमिणां धर्म्मसाधनम्, नियमस्तु विशिष्टः, तयोरभ्यासः। आत्मसंस्कारः पुनरधर्म्महानं धर्म्मोपचयश्च। योगशास्त्राच्चाध्यात्मविधिः प्रतिपत्तव्यः। स पुनरासनं प्राणायामः प्रत्याहारो ध्यानं धारणेति। इन्द्रिय-विषयेषु प्रसङ्ख्यानाभ्यासो रागद्वेषप्रहाणार्थः। उपायस्तु योगाचारविधानमिति।

इत्येवं जातादात्मादिषु प्रमेयेष्वप्रमेयपरात्मरूपतत्त्वज्ञानात् तु। "दुःखजन्म-प्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्गः।" तत्रात्माद्यपवर्ग-पर्य्यन्तप्रमेये मिथ्याज्ञानमनेकप्रकारकं वर्त्तते। आत्मनि तावन्नास्तीति। अनात्म-न्यात्मेति। दुःखे सुखमिति। अनित्ये नित्यमिति। अत्राणे त्राणमिति। सभये निर्भयमिति। इत्येवमादिमिथ्याज्ञानात् प्रतिकूलेषु रागोऽनुकूलेषु द्वेषः। राग-द्वेषाधिकाराच्चासूयेर्ष्यामायालोभादयो दोषा भवन्ति। दोषैः प्रयुक्तः शरीरेण प्रवर्त्तमानो हिंसास्तेयप्रतिषिद्धमैथुनादीन्याचरति। वाचाऽनृतपरुषसूचना-सम्बन्धवचनादीनि। मनसा परद्रोहं परद्रव्याभीप्सानास्तिक्यञ्चवमादीनि। सेयं पापात्मिका प्रवृत्तिरधर्म्मायेति प्रज्ञापराधाद् भवति। अथ शुभा। शरीरेण दानं परित्राणं परिचरणञ्च वाचा सत्यं हितं प्रियं स्वाध्यायश्च मनसा दयामस्पृहां श्रद्धाञ्चेति। सेयं धर्म्माय बुद्धिसमयोगाद् भवति। तत्र प्रवृत्ति-साधनौ धर्म्माधर्म्मौ प्रवृत्तिशब्देनोक्तौ। यथान्नसाधनाः प्राणाः। अन्नं वै प्राणिनः प्राणा इति। सेयं प्रवृत्तिः कुत्सितस्याभिपूजितस्य जन्मनः

कारणम्। जन्म पुनः शरीरेन्द्रियबुद्धीनां निकायविशिष्टः प्रादुर्भावः। तस्मिन् सति दुःखं, तत् पुनः प्रतिकूलवेदनीयं बाधना पीड़ा ताप इति। इमे मिथ्याज्ञानादयो दुःखान्ता धर्म्मा अविच्छेदेन प्रवर्त्तमानाः संसार इति। यदा तु तत्त्वज्ञानान्मिथ्याज्ञानमपैति तदा मिथ्याज्ञानापाये दोषा अपयन्ति। दोषापाये प्रवृत्तिरपैति। प्रवृत्त्यपाये जन्मापैति। जन्मापाये दुःखमपैतीति। दुःखापाये चात्यन्तिकोऽपवर्गो निःश्रेयसमिति।

तदत्यन्तविमोक्षोऽपवर्गः। "यत्र तु निष्ठा यत्र तु पर्य्यवसानं सोऽयं तदत्यन्तविमोक्षोऽपवर्गः।" तेन दुःखेन जन्मनाऽत्यन्तं विमुक्तिरपवर्गः। कथमुपात्तस्य जन्मनो हानमन्यस्य चानुपादानम्। एतामवस्थामपर्य्यन्तामपवर्गं वेदयन्तेऽपवर्गविदः। तदभयमजरममरं ब्रह्मक्षेमप्राप्तिरिति। "बाधनालक्षणं दुःखमिति।" बाधना पीड़ा ताप इति तयानुविद्धमनुषक्तमविभागेण वर्त्तमानं दुःखयोगात् दुःखमिति जन्म सोऽयं सर्व्वलोकं सुखदुःखात्मकदुःखेनानुविद्धं बृहन्तमिति पश्यन् दुःखं जिहासुर्जन्मनि दुःखदर्शी निर्व्विद्यते निर्व्विण्णो विरज्यते विरक्तो विमुच्यते। इति गौतमेन आन्वीक्षिकीशास्त्रे सपरीक्षोऽपवर्ग उक्तः।

छान्दोग्योपनिषदि ब्राह्मणम्। अथ य एष सम्प्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते तदभयमजरममृतमिति होवाच तद् ब्रह्मेति स उत्तमः पुरुष इति। तत्र शारीरकसूत्रम्। सम्पद्याविर्भावः स्वेन शब्दात्। मुक्तः प्रतिज्ञानात्। एवमप्युपन्यासात् पूर्व्वभावादविरोधं बादरायणः। व्याख्यातान्येतानि। अथ य एष सम्प्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते इति। परं ज्योतिः उप समीपे सम्पद्य परव्योमशिवपरमात्मरूपेणाविर्भावः क्षेत्रज्ञस्यात्मनः सम्प्रसादस्य स्यात्। कस्मात्? स्वेन शब्दात् स्वेन रूपेणेति शब्दात्। परमात्मा हि परमव्योमशिवश्चित्सम्प्रसादांशोपाहितः क्षेत्रज्ञो भूतस्तस्य स्वं रूपं परव्योमैवेति। तथात्वे हि सः। मुक्तः प्रतिज्ञानात्। पूर्व्वं प्रजापतिः प्रतिज्ञातवान्। तद् यथा—स इन्द्रः समित्पाणिः पुनरेवेयाय। तं ह प्रजापतिरुवाच। मघवन् यच्छन्ति हृदः प्राव्राजीः किमेवेच्छ न पुनरागम इति। स होवाच। स्वप्ने खल्वयं भगव एवं सम्प्रत्यात्मानं जानात्ययमहमस्मीति। नो एवेमानि भूतानि विनाशमेवापीतो भवति नाहमत्र योग्यं पश्यामीति। एवमेवैष मघवन्निति होवाच। एतन्त्वेव ते भूयोऽनुव्याख्यास्यामि। नो एवान्यत्रैतस्मात्। वसापराणि पञ्च वर्षाणीति प्रतिज्ञाय प्रजापतिना

दक्षिणोक्त इन्द्रः। सहापराणि पञ्च वर्षाण्युवास। तान्येकशतं सम्पेदुरेतत्। तद् यदाहुरेकशतं ह वै वर्षाणि मघवान् प्रजापतौ ब्रह्मचर्य्यमुवास। तस्मै होवाच। मघवन् मर्त्त्यं वा इदं शरीरमात्तं मृत्युना। तदस्यामृतस्याशरीरस्य आत्मनोऽधिष्ठानम् आत्तो वै सशरीरः प्रियाप्रियाभ्याम्। न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिः अशरीरं वाव सन्तं न प्रियाप्रियौ स्पृशतः। अशरीरं वायुरभ्रं विद्युत् स्तनयित्नुः। अशरीराण्येतानि। तद् यथैतान्यमुष्मादाकाशात् समुत्थाय परं ज्योतिरुप सम्पद्य स्वेन रूपेणाभिनिष्पद्यन्ते। एवमेवैष सम्प्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते स उत्तमः पुरुषः, स तत्र पर्य्येतीति, स उत्तमः पुरुषः परव्योम शिवः परमात्मा केवलस्तत्र तत्स्वरूपेण सम्प्रसादः पर्य्येति परिवर्त्तत इति। तत्र चिति तन्मात्रत्वेन तदात्मकत्वात् इत्यौडुलोमिः। चिति चिन्मात्रेऽर्थे पर्य्यवसीयमानः सम्प्रसादः स्वेन रूपेण चिन्मात्ररूपेणाभिनिष्पद्यते। कस्मात्? तदात्मकत्वात्। चेतनाविशिष्टश्चित् परमव्योमरूपः परमात्मा सम्प्रसादोऽपि स एष स्थूलचित्सम्प्रसादांशोपाहितस्ततस्तदात्मक इत्यौडुलोमिरुवाच। आत्मा प्रकरणात्। स्वेनेतिपदेनात्मा परः पुरुषः परव्योमैवाभिधीयते। ऐन्द्रवैरोचनिकविद्यायामात्मन एवाधिकारः। कस्मात् प्रकरणात्? मुक्तिप्रकरणात्। लोकानामात्मा हि बद्धस्तस्य मुक्तिः प्रकरणात्।

ननु चित्सम्प्रसादरूपः क्षेत्रज्ञो लोकानामात्मा प्रधानादितत्त्वबद्धरूप एवास्माच्छरीरात् समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन निर्व्वन्धचित्सम्प्रसाद रूपेणाभिनिष्पद्यत इत्येवं कथं नोच्यत इति चेन्न स तत्र पर्य्येतीत्युक्तेः। पर्य्यायो हि परिवर्त्तनं रूपस्येति। शिवरूपेणाभिभावाच्चित्सम्प्रसादरूपपरिवर्त्तनमिति। ननु कथं स्वेनेतिपदेन लोकानामात्मनः क्षेत्रज्ञस्यात्मा विज्ञायते शिवः परं ज्योतिस्तु ततोऽतिरिक्तं श्रूयते। तद् यथा। अथ यदतः परो दिव्यो ज्योतिः। दीप्यतेऽपि स्वतः पृष्ठेष सर्व्वतः पृष्ठेष्विति। तथा। एतावानस्य महिमा ततो ज्यायांश्च पूरुषः। पादोऽस्य सर्व्वा भूतानि त्रिपादस्यामृतं दिवीत्यत आह—अविभागेन दृष्टत्वात्। स्वेनेति स्वपदेन तज्ज्योतिषैकीभावापन्नो लोकानामात्मनश्चित्सम्प्रसादस्य क्षेत्रज्ञस्य विष्णोरात्मा शिव उत्तमपुरुषः। क्षेत्रज्ञस्य तस्य बद्धस्य मुक्तिप्रकरणात्। भूम्यादित्रिपादस्य तस्याद्धाङ्गभूतायां गायत्र्यां दिवि परमस्वर्लोके तत् त्रिपात्पुरुषस्य मूर्द्धि दशाङ्गले तज्ज्योतिरेवामृतम् तस्यारतदविभागेन दृष्टत्वात्। न तु तदद्धाङ्ग-

भूताया गायत्र्याः पृथग्रूपेण दृष्टत्वादतिरिक्तम्। यथाग्निस्तु रूपादिशक्तिमान्। तस्या रूपादिशक्तेरालोकादिकृत्प्रभादिरग्नेरपृथगेव दृश्यते न तु पृथगिति। ननु स्वेन रूपेणेति किं स्वीयेन ब्रह्मणा ज्योतिषाऽथवाऽस्वेनात्मनेत्यत आह—ब्राह्मणजैमिनिरुपन्यासादिभ्यः। ब्रह्मण इदमादेशभूतं रूपं तेन ब्रह्मण आदेशभूतेन परमव्योमरूपेण शिवेन क्षेत्रज्ञस्य स्वेनात्मना रूपेणेति जैमिनिराह। कुतः? उपन्यासादिभ्यः। उपन्यासादयो हि च्छान्दोग्ये कृताः। स उत्तमः पुरुषः स तत्र पर्य्येति जक्षत् क्रीडन् रममाणः स्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वा वयस्यैर्वा नोपजनं स्मरन्निदं शरीरं स यथा प्रयोग्य आचरणे युक्त एवमेवायमस्मिञ्छरीरे प्राणे युक्तः। अथ यत्रैतदाकाशमनुविसरणं चक्षुः। स चाक्षुषः पुरुषो दर्शनाय चक्षुः। अथ यो वै हेदं जिघ्राणीति स आत्मा गन्धाय घ्राणम्। अथ यो वै हेदमभिव्याहराणीति स आत्माऽभिव्याहाराय वाक्। अथ यो वै हेदं शृणवानीति स आत्मा श्रवणाय श्रोत्रम्। अथ यो वै हेदं मनवानीति स आत्मा मनोमननाय। मनोऽस्य दैवं चक्षुः। स वा एष एतेन दैवेन चक्षुषा मनसैतान् कामान् पश्यन् मनुते यत्र ते ब्रह्मलोके तं वा एतं देवा आत्मानमुपासते। तस्मात् तेषां सर्व्वे च लोका आत्ताः सर्व्वे कामाः स सर्व्वांश्च कामानाप्नोति सर्व्वांश्च कामान्। यस्तमात्मानमनुविद्य विजानातीति होवाच प्रजापतिरित्युपन्यासः। आदिना। स एवाधस्तात् स उपरिष्टादित्यादिसर्व्वगतत्वादिरूपोपदेशः। मुण्डके च। यः सर्व्वज्ञः सर्व्ववित् यस्य ज्ञानमयं तपः। तस्मादेतत् ब्रह्म नाम रूपमन्नञ्च जायत इति व्यपदेशश्च। इति कर्त्तृरूपेण शिवस्यैवोपन्यासादिभ्य इति बोध्यम्। उभयमतेऽप्यविरोधं दर्शयति एवमप्युपन्यासात् पूर्व्वभावादविरोधं वादरायणः। एवमौडुलोमिनोक्तप्रकारेण जैमिनिनोक्तादुपन्यासादिहेतोः पूर्व्वभावात्। चित्सम्प्रसादस्य क्षेत्रज्ञस्य पूर्व्वभावश्चेतनाविशिष्टः परमव्योमैव परमात्मा हेतुस्तस्मात् तत् पूर्व्वपरमव्योमस्वरूपेणाभिनिष्पत्तेरुभयमतेऽप्यविरोधमाह वादरायण ऋषिः। एषां मतावलम्बी वात्स्यायन उवाच। नित्यं सुखमात्मनो मोक्षेऽभिव्यज्यते। तेनाभिव्यक्तेनात्यन्तं युक्तः सुखी भवतीत्येके मन्यन्ते इति। व्याख्यायते चेदम्। सम्प्रसादः क्षेत्रज्ञ आत्मा पुरुष इत्येकोऽर्थः। एष समत्रिगुणावृतस्तु अव्यक्ताख्यः स महता जीवेनोपाहितः प्राज्ञः स जीवः। स य एष सम्प्रसादः कारणतोऽस्माच्छरीरात् समुत्थाय परं ज्योतिर्दिव्यज्योतिरुपसम्पद्य यदा स्वेन रूपेणाभिनिष्पद्यते तदा नित्यं सुखमभिव्यज्यते। तेनाभिव्यक्तेन नित्येन

सुखेन युक्तः स मुक्तः सुखी भवतीत्येके मन्यन्ते। लोके हि यत् सुखमभिव्यज्यते तत् सुखं न नित्यम्। तेषां प्रमाणाभावादनुपपत्तिर्न प्रत्यक्षं नानुमानं नागमो वा विद्यते। नित्यं सुखमात्मनो महत्त्ववन्मोक्षेऽभिव्यज्यत इति।

व्याख्यायते चेदं भाष्यम्। नित्यं सुखमात्मनः क्षेत्रज्ञस्य मोक्षे सत्यभिव्यज्यते इति तेनाभिव्यक्तेन नित्यसुखेन युक्तोऽत्यन्तं सुखी भवतीति ये केचिदाहुस्तेषां तन्नित्यसुखाभिव्यक्तौ प्रमाणाभावादनुपपत्तिः। प्रमाणं हि तत्र प्रत्यक्षं नास्ति न चानुमानमर्थापत्तिः सम्भवोऽभावो वास्ति। नाप्यागम आप्तोपदेश ऐतिह्यञ्चास्ति। नित्यं सुखमात्मनो महत्त्ववन्मोक्षेऽभिव्यज्यते इति यदुच्यते, तत्रापि नित्यस्याभिव्यक्तिः संवेदनं तस्य हेतुवचनम्। अस्य च भाष्यं स्वयमाह—नित्यस्याभिव्यक्तिः संवेदनं ज्ञानमिति। तस्य हेतुर्वाच्यः यतस्तदुत्पद्यत इति। इदञ्च व्याख्यायते। मोक्षे क्षेत्रज्ञस्यात्मनोऽणुपरिमाणस्य शिवरूपेणाभिनिष्पत्तौ महत्त्वपरिमाणं यथा व्यज्यते तथा तस्य यन्नित्यं सुखमभिव्यज्यत इत्युक्तं तन्नित्यस्य सुखस्योत्पत्त्यभावादभिव्यक्तिः संवेदनं ज्ञानं भवतीत्यर्थश्चेत् तदा तस्य ज्ञानस्योत्पत्तौ हेतुर्वाच्य इति जन्यज्ञानोत्पत्तिस्तदा तस्य शिवरूपेणाभिनिष्पत्ताविति दोषस्तत्र। सुखवन्नित्यमिति चेत् संसारस्थस्य मुक्तेन विशेषः। यथा मुक्तः सुखेन तत् संवेदनेन च सन् नित्येनोपपन्नस्तथा संसारस्थोऽपि प्रसज्यते इत्युभयस्य नित्यत्वात् इति। भाष्यञ्च व्याख्यायते। मोक्षे सुखयुक्तनित्यपरमपुरुषरूपेणाभिनिष्पद्यते इति परमपुरुषस्य नित्यत्वेन सुखस्यापि नित्यत्वं तस्य ज्ञानस्यापि नित्यत्वमिति चेत् तदा संसारस्थस्य मुक्तेन पुरुषेण सह विशेषो नास्ति। यथा मुक्तः सन् नित्येन सुखेन नित्येन च तत्सुखसंवेदनेनोपपन्नः स्यात् तथा संसारस्थोऽपि पुरुषो नित्यसुखनित्यसंवेदनोपपन्नः प्रसज्यते। कस्मात्? उभयस्य नित्यत्वात्। सर्व्वस्यैव पुरुषस्य संसारस्थस्यात्मा बद्धोऽपि नित्य एव तस्य सुखं नित्यं तत्संवेदनञ्च नित्यं यावन्महाप्रलयं वर्त्तते इति भावः। तदिष्टापत्तौ दोषमाह—अभ्यनुज्ञाने च धर्म्माधर्म्मफलेन साहचर्य्यं यौगपद्यं गृह्येत। यदिदमुत्पत्तिस्थानेषु धर्म्माधर्म्मफलं सुखं दुःखं वा संविद्यते पर्य्यायेण इति। भाष्यञ्च व्याख्यायते। अभ्यनुज्ञाने मुक्तसंसारस्थयोस्तुल्यत्वस्वीकारे। धर्म्माधर्म्मफलेन संसारस्थस्य सुखदुःखेन स्वीयनित्यसुखस्य साहचर्य्यं यौगपद्यं गृह्येत। नित्यसुखस्यात्मस्थस्य धर्म्माधर्म्मफलसुखदुःखयोः साहचर्य्यं यौगपद्यञ्च भवतु। न चात्मस्थनित्यसुखेन धर्म्माधर्म्मफलसुखदुःखयोः साह-

चर्य्यं यौगपद्यं वा वर्त्तते। कस्मात्? यद् यस्मादिदमुत्पत्तिस्थानेषु संसारेषु जरायुजाण्डजोद्भिज्जस्वेदजयोनिषु जातेन पुरुषेण धर्म्माधर्म्मफलं सुखं दुःखं वा पर्य्यायेण क्रमेण संविद्यते ज्ञायते न तु युगपत्। परस्परविरोधात्। तत आत्मस्थनित्यसुखं धर्म्मफलमनित्यसुखं युगपत् संविद्यतां तथाऽनित्यसुखम् अधर्म्मफलं दुःखञ्च युगपत् संविद्यतामिति। नित्यसंवेदनेऽपि दोषमाह—तस्य च नित्यसंवेदनस्य च सहभावो यौगपद्यं गृह्येत। न सुखाभावो नानभिव्यक्तिरस्ति। उभयस्य नित्यत्वात् अनित्ये हेतुरलम् इति। भाष्यञ्च व्याख्यायते। धर्म्माधर्म्मफलसुखदुःखस्य तस्य च नित्यसुखस्य नित्यसंवेदनस्य च सहभावः साहचर्य्यं यौगपद्यं गृह्येत। संसारस्थस्यात्मनः स्वस्थनित्यसुखस्य स्वस्थनित्यज्ञानस्य च धर्म्मजसुखेनाधर्म्मजदुःखेन सह क्रमाद् यौगपद्यं साहचर्य्यं भवतु। तदिष्टापत्तौ दोषमाह—नेत्यादि। आत्मनस्तु न सुखाभावोऽस्ति नित्यसुखवत्त्वात्। नाप्यनभिव्यक्तिरसंवेदनमस्ति क्षेत्रज्ञत्वेन नित्यज्ञानवत्त्वात्, कस्मात्? उभयस्य नित्यत्वात्। उभयस्यात्मस्थस्य सुखस्य तत्संवेदनस्य नित्यत्वात्। अनित्ये सुखदुःखे नित्यत्ववचनं यदि क्रियते तदा हेतुर्धर्म्माधर्म्मफलं व्यर्थं भवति। अत्र मोक्षे नित्यसुखाभिव्यक्तिवादी भाषते यत् तदाह। अथ मोक्षे नित्यस्य सुखस्य संवेदनमनित्यम्; यत उत्पद्यते स हेतुर्वाच्यः। आत्ममनःसंयोगस्य निमित्तान्तरसहितस्य हेतुत्वम्। इति। भाष्यञ्च व्याख्यायते। मोक्षे यन्नित्यं सुखं संविद्यते तत् संवेदनमनित्यं यतस्तत्संवेदनमुत्पद्यते स च हेतुरयं वाच्यः। को हेतुरित्यत आह—आत्मेत्यादि। निमित्तान्तरैः सहितस्य मनःसंयोगस्य मोक्षे नित्यसुखसंवेदनोत्पत्तौ हेतुत्वं वक्तव्यं मयेति।

तद् दूषयति। आत्ममनःसंयोगो हेतुरिति चेत्, एवमपि तस्य सहकारिनिमित्तान्तरसहितस्य हेतुत्वमिति चेत् तदा तदात्ममनःसंयोगस्य सहकारिनिमित्तान्तरवचनमिति धर्म्मस्य कारणवचनम्। इति। अस्य व्याख्या। आत्ममनःसंयोगो नित्यसुखसंवेदनोत्पत्तौ हेतुरिति एवमपि तस्यात्ममनःसंयोगस्य निमित्तान्तरसहितस्य हेतुत्वमिति चेत् तदा तदात्ममनःसंयोगस्य सहकारिसहकारिनिमित्तान्तरं यद् वक्ष्यते तद् धर्म्मस्य कारणत्वं भवता वक्तव्यम्। तेन धर्म्मसहितस्यात्ममनःसंयोगस्य मोक्षे नित्यसुखसंवेदनोत्पत्तौ हेतुत्वमिति चेत् तदा तत्र दोषमाह—यदि धर्म्मो निमित्तान्तरं तस्य हेतुर्वाच्यो यत उत्पद्यत इति। योगसमाधिजस्य कार्य्यावसायविरोधात् प्रक्षये

संवेदननिवृत्तिः। इति। भाष्यञ्च व्याख्यायते। मोक्षे नित्यसुखसंवेदनोत्पत्तौ खल्वात्ममनःसंयोगस्य हेतुत्वे यदि सहकारिनिमित्तान्तरं धर्म्मो भवता वाच्यः तदा तस्य धर्म्मस्य हेतुर्वाच्यो भवता यतो धर्म्म उत्पद्यते इति। वैधं कर्म्म वाच्यं तत् कर्म्मयोगसमाधिरूपं तज्जस्य धर्म्मस्य कार्य्यावसायविरोधात्। मोक्षे कार्य्याणां सर्व्वेषामवसानं भवति तस्य तदा विरोधात् प्रक्षये धर्म्मस्य कार्य्यस्य क्षये तद्धर्म्मजन्यस्य नित्यसुखसंवेदनस्यापि निवृत्तिः स्यादिति।

अत्र यत् सुखवन्नित्यवादी भाषते, तदाह—यदि योगसमाधिजो धर्म्मो हेतुस्तस्य कार्य्यावसायविरोधात् प्रक्षये संवेदनमत्यन्तं निवर्त्ततेति संवेदने चाविद्यमाने नाविशेषः। इति। भाष्यञ्च व्याख्यायते। मोक्षे नित्यसुखसंवेदनोत्पत्तौ योगसमाधिजो धर्म्मो हेतुस्तस्य योगसमाधिजस्य धर्म्मस्य मोक्षे सर्व्वकार्य्यावसायविरोधात् प्रक्षये तत् संवेदनं यद्यत्यन्तं निवर्त्ततेति तदा संवेदने चाविद्यमाने मोक्षे सुखवन्नित्यस्वरूपः स्यात् संसारस्थस्तु धर्म्माधर्म्मफलसुखदुःखसंवेदीत्यतो मुक्तसंसारस्थयोर्नाविशेषस्तुल्यत्वं भवतीति। अत्राह वादी—यदि धर्म्मक्षयात् संवेदनोपरमः, नित्यं सुखं न संविद्यते इति किं विद्यमानं न संविद्यतेऽथाविद्यमानमिति? नानुमानं विशिष्टेऽस्तीति। व्याख्यायते चेदम्। मोक्षे योगसमाधिजधर्म्मक्षयात् संवेदनोपरमे सति यदि नित्यं सुखं न संविद्यते संवेदनाभावान्न ज्ञायते इति तर्हि तन्नित्यं सुखं विद्यमानं किं न संविद्यतेऽथवा तन्नित्यसुखमविद्यमानं न संविद्यते इति त्वनुमानं विशिष्टे मोक्षे सुखवन्नित्यस्वरूपे लिङ्गाभावान्नास्तीति।

अत्राह प्रतिवादी। अप्रक्षयश्च धर्म्मस्य निरनुमानः, उत्पत्तिधर्म्मकत्वाद् योगसमाधिजो धर्म्मो न क्षीयते इति नास्त्यनुमानम्। उत्पत्तिधर्म्मकम् अनित्यमिति विपर्य्ययस्य त्वनुमानम्। इदञ्च भाष्यं व्याख्यायते। धर्म्मस्य अप्रक्षयो न प्रक्षयोऽस्ति तस्मान्निरनुमान इति सूत्रं, तस्य विवरणमाह—उत्पत्तिधर्म्मकत्वाद्धेतोर्न योगसमाधिजो धर्म्मः क्षीयत इत्यतो मोक्षे सुखवन्नित्यस्वरूपे नित्यसुखस्य नास्त्यनुमानं लिङ्गाभावात्। कथमुत्पत्तिधर्म्मको योगसमाधिजो धर्म्मो न क्षीयते इत्यत आह—उत्पत्तिधर्म्मकं सर्व्वमनित्यमिति। योगसमाधिजधर्म्माद्विपर्य्ययस्य धर्म्मस्य त्वनुमानं नश्वरत्वञ्च, योगसमाधिजो धर्म्म उत्पत्तिधर्म्मकत्वेऽपि नित्य इति बोध्यम्। कथमनुमानं स्याद्विपर्य्ययस्येत्यत आह—यस्य तु संवेदनोपरमो नास्ति तेन संवेदनहेतुर्नित्य इत्यनुमेयम्। इदञ्च भाष्यं व्याख्यायते। यस्योत्पत्तिधर्म्मकस्य सुखस्य संवेदनोपरमो

नास्ति तेन उपरमासद्भावेन संवेदनस्य हेतुरुत्पत्तिधर्म्मकोऽपि धर्म्मो नित्य इत्यतो योगसमाधिजधर्म्माद्विपर्य्ययधर्म्ममनुमेयं संवेदनात् तत्कार्य्यात्। इति।

तत्राह वादी। नित्ये च मुक्तसंसारस्थयोरविशेष इत्युक्तम्। यथा मुक्तस्य नित्यं सुखं तत्संवेदनहेतुश्च। संवेदनस्य तूपरमो नास्ति कारणस्य नित्यत्वात्, तथा संसारस्थस्यापीति। व्याख्यायते चेदम्। नित्ये चेति। यस्योत्पत्तिधर्म्मकस्य सुखस्य संवेदनोपरमो नास्ति तेनोपरमाभावेन तस्य सुखस्य संवेदनहेतौ नित्ये सति मुक्तसंसारस्थयोरविशेष इति यत् पूर्व्वमुक्तं तदेव भवतीति भावः। कथमिति चेत् तदोच्यते—यथेत्यादि। यथा मुक्तस्य नित्यं सुखं तन्नित्यसुखसंवेदनहेतुश्च नित्यस्तस्य हि संवेदनस्योपरमो नास्ति तत्कारणस्य योगसमाधिजधर्म्मस्य नित्यत्वात्। तथा संसारस्थस्याप्यात्मनः सुखं नित्यं तत्स्थं धर्म्मजञ्च सुखमनित्यमपि तस्य संवेदनोपरमाभावेन तत्संवेदनहेतोरुत्पत्तिधर्म्मकस्यापि धर्म्मस्य नित्यत्वमिति मुक्तसंसारस्थयोः अविशेष इत्युक्तम्। एवं सति यत् फलितं तदाह—एवं सति धर्म्माधर्म्मफलेन सुखदुःखसंवेदनेन साहचर्य्यं गृह्येतेति। व्याख्यायते चेदं भाष्यम्। एवंप्रकारेण मुक्तसंसारस्थयोरविशेषे सति धर्म्माधर्म्मफलेन सुखदुःखेन तत्संवेदनेन च नित्यसुखस्य साहचर्य्यं यौगपद्यं गृह्येतेति पूर्व्वमुक्तं भवति सम्पन्नम्। अत्राशङ्का दोषमाह—शरीरादिसम्बन्धः प्रतिबन्धहेतुरिति चेन्न, शरीरादीनामुपभोगार्थत्वात् विपर्य्ययस्य चाननुमानात्। व्याख्यायते चेदं भाष्यम्। संसारस्थस्य धर्म्माधर्म्मफलेन सुखदुःखेन तत्संवेदनेन च नित्यसुखसंवेदनस्य साहचर्य्ययौगपद्यग्रहणे शरीरादिसम्बन्धः शरीरेन्द्रियमनोऽहङ्कारमहत्तत्त्वसम्बन्धः प्रतिबन्धक इति चेन्न। कस्मात्? शरीरादीनाम् आत्मन उपभोगार्थत्वात्। आत्मनो ह्युपभोगार्थाः शरीरादय आत्मना हि धर्म्माधर्म्मफलं सुखदुःखमुपभुज्यते शरीरादिभिर्विपर्य्ययस्य च धर्म्माधर्म्माभ्यासजन्यस्य नित्यसुखस्य चोपभोगः क्रियते तस्य त्वननुमानादनुमानाभावात्। अत्र नित्यसुखाभिव्यक्तिवादी त्वाह। स्यादेतत् संसारस्थस्य शरीरादिसम्बन्धो नित्यसुखसंवेदनहेतोः प्रतिबन्धकस्तेनाविशेषो नास्तीति। व्याख्यायते चेदम्। "एतत् स्यात्।" किं स्यादित्यत आह—संसारस्थस्य आत्मनः शरीरादिसम्बन्धो नित्यसुखसंवेदनहेतोर्योगसमाधिजधर्म्मस्य प्रतिबन्धकस्तेन मुक्तसंसारस्थयोरविशेषो नास्ति, योगसमाधिस्तु सशरीरस्यैव भवति तज्जधर्म्मस्तु नित्यसुखसंवेदनस्य हेतुः शरीरादिसम्बन्धाभावे उत्पद्यते इति।

एतद् दूषयति। एतच्चायुक्तं शरीरादय उपभोगार्थास्ते भोगप्रतिबन्धं करिष्यन्तीत्यनुपपन्नं, न चास्त्यनुमानमशरीरस्यात्मनो भोगः कश्चिदस्तीति। व्याख्यायते चेदं भाष्यम्। ये तु भोगार्थास्ते पुनर्भोगप्रतिबन्धका इति वचनम् अनुपपन्नमित्यतः शरीरादिसम्बन्धो नित्यसुखसंवेदनहेतोः प्रतिबन्धक एतच्च वचनमयुक्तम्। कस्मात्? "यतो न चास्तीत्यादि।" यतोऽशरीरस्य शरीरादि-संयोगशून्यस्यात्मनोऽनुमानं नास्ति तस्य कश्चिद्भोगोऽस्तीति च नानुमानं स्यादिति। अत्राशङ्क्य आह—इष्टाधिगमार्था प्रवृत्तिरिति चेन्न, अनिष्टोपरमार्थ-त्वात्। भाष्यञ्चेदं व्याख्यायते। इच्छाविषयीकृतस्य सुखस्यार्थं लोकः प्रवर्त्तते न त्वनिष्टाधिगमार्थम्, इष्टं हि सुखं यत् पुनर्न नश्यति तस्मान्नित्यसुखार्थं मोक्ष-साधनोपायान् कुरुते इति चेन्न। कस्मात्? अनिष्टोपरमार्थत्वात्। अनिष्टोपरमार्था हि प्रवृत्तिरनिष्टं दुःखं मोक्षे तदुपरमः स्यादित्यर्थः। मोक्षे नित्यसुखाभिव्यक्ति-वादी भाषते। इदमनुमानमिष्टाधिगमार्थो मोक्षोपदेशः प्रवृत्तिश्च मुमुक्षूणां नोभय-मनर्थकमिति। व्याख्यायते चेदं भाष्यम्। इदमनुमीयते। मोक्षोपदेश आचार्य्यैर्यत् क्रियते स मोक्षोपदेश इष्टवस्त्वधिगमार्थ एव न त्वनिष्टनिवृत्तिमात्रार्थः। इष्टभिन्नम् अनिष्टमिष्टञ्च सुखं प्रह्लादकरत्वादनिष्टं दुःखं प्रह्लादहरत्वात्। तद् दुःखात्यन्त-निवृत्तिमन्तरेण केवलं सुखं न भवति सुखाभावे दुःखोदयो दुःखाभावे सुखोदय इति प्रतिनियमादनिष्टोपरमे त्विष्टाधिगम एव भवति तस्मादिष्टाधि-गमार्थश्च मुमुक्षूणां योगादिषु प्रवृत्तिरित्यतो मोक्षोपदेशः प्रवृत्तिश्चेत्युभयं न निरर्थकमिति तर्को युक्त्यपेक्षस्तदनुमानमिति।

एतदपि वादी दूषयति। एतच्चायुक्तमनिष्टोपरमार्थो मोक्षोपदेशः प्रवृत्तिश्च मुमुक्षूणामिति। एतत् पूर्व्वोक्तमिष्टाधिगमार्थो मोक्षोपदेशः प्रवृत्तिश्च मुमुक्षणामिति यदनुमानं तदयुक्तम्। कस्मात्? यतः अनिष्टोपरमार्थो मोक्षोपदेशः प्रवृत्तिश्च मुमुक्षूणामित्यनुमानम् नानर्थकमुभयम्। इष्टभिन्नमनिष्टमिष्टं सुखम् अनिष्टं दुःखं तदुपरमे नियमतो नित्यसुखं स्यादिति न यौक्तिकम्। कथम् इत्यत आह—नेष्टमनिष्टेनाननुविद्धं सम्भवतीतीष्टमप्यनिष्टं सम्पद्यते। अनिष्ट-हानाय घटमान इष्टमपि जहात्यविवेकहानस्याशक्यत्वादिति। व्याख्यायते चेदं भाष्यम्। इष्टं सुखं सुखजनकञ्च यद् यत् तत् सर्व्वमनिष्टेन दुःखेन दुःखजनकेन वा भावेनाननुविद्धमनुविद्धभिन्नं न सम्भवति सर्व्वम् इष्टमनिष्टेनानुविद्धमेव भवति, इत्यत इष्टमप्यनिष्टं भवति। दृश्यते च। अनिष्टहानाय दुःखदुःख-जनकभावत्यागाय यत्र घटते तत्र बुद्धिमानिष्टमपि जहाति। यथाश्वमेधादि-

निर्व्वाहार्थम् अश्वरक्षणायेष्टं पुत्रं नियुज्य युद्धे कश्चित् स पुत्रो हन्यते परेणेति। नन्वेवं नास्तु भवत्वेवम्। नानिष्टमिष्टेनाननुविद्धं सम्भवतीत्यनिष्टमपीष्टं सम्पद्यते। इष्टाय घटमानोऽनिष्टमपि जहातीति। इत्यत आह। अविवेकहानस्य अशक्यत्वादिति। विवेकस्य सदसद्विवेचनाया अभावहानस्य त्यागस्य अशक्यत्वात्। अविवेचनानुविद्धो हि विवेकः। विवेचना हि सर्व्वैः कर्म्मारम्भे सम्यक् कर्त्तुं न शक्यते नाविवेचनया किमप्यारभ्यते, किन्तु विवेचनया कर्त्तव्येऽपि सम्यग्विवेचनाकरणासामर्थ्यादिष्टाय घटमानो बुद्धिमाननिष्टम् अपि जहाति। अपरश्चाह। दृष्टातिक्रमश्च देहादिषु तुल्यः, यथादृष्टमनित्यं सुखं परित्यज्य नित्यं सुखं कामयते। एवं देहेन्द्रियबुद्धीरनित्या दृष्ट्वा अतिक्रम्य मुक्तस्य नित्यदेहेन्द्रियबुद्धयः कल्पितव्याः। साधीयश्चैवं मुक्तस्य चैकात्म्यं कल्पितं भवतीति। इदञ्च भाष्यं व्याख्यायते। सुखस्य देहादिषु दृष्टातिक्रमः तुल्यः कथम् इत्यतो देहादिषु दृष्टातिक्रमतुल्यतां दर्शयति—यथेत्यादि। अनित्यं सुखं दृष्टं परित्यज्यादृष्टं नित्यं सुखं कामयते मुमुक्षुरिति सुखे दृष्टातिक्रमः। एवं देहेन्द्रियबुद्धयोऽप्यनित्या दृश्यन्ते दृष्टास्ता अतिक्रम्य मुक्तस्य नित्य-देहेन्द्रियबुद्धयो भविष्यन्त्यः कल्पितव्याः स्युर्नित्यसुखभोगार्थमिति। तेषां कल्पनामपेक्ष्य खेवमेव साधीयो भवति, यदस्माभिर्मुक्तस्य चैकात्म्यं परम-पुरुषेण सहैकात्मीभावः कल्पितो भवतीति सर्व्वसंयोगनिःसृतो मुक्तो भवतीति भावः।

अत्राशङ्का दूषयति। उत्पत्तिविरुद्धमिति चेत् समानम्, देहादीनां नित्यत्वं प्रमाणविरुद्धं कल्पयितुमशक्यमिति समानं सुखस्यापि नित्यत्वं प्रमाणविरुद्धं कल्पयितुमशक्यमिति। व्याख्यायते चेदं भाष्यम्। उत्पत्तिविरुद्धमिति चेत् समानमिति सूत्ररूपं उत्पत्तिविरुद्धत्वं देहादेर्नित्यत्वं तेन न दृष्टातिक्रमः सुखेन तुल्यः। तत्र दोषमाह। समानमित्यादि तस्य विवरणमाह—देहादीनामित्यादि। देहेन्द्रियबुद्धीनामुत्पत्तिविरुद्धं नित्यत्वं प्रमाणविरुद्धं प्रत्यक्षादिविरुद्धं कल्प-यितुं न शक्यमिति तेन समानं, सुखस्यापि उत्पत्तिविरुद्धं नित्यत्वं प्रमाण-विरुद्धं प्रत्यक्षादिविरुद्धं कल्पयितुं न शक्यमिति। अथ तेषां प्रमाणाभावात् अनुपपत्तिर्न प्रत्यक्षं नानुमानं नागमो वा विद्यते इति यदुक्तं तत्प्रत्यक्षानुमान-प्रमाणाभावं दर्शयित्वागमाभावं दर्शयति—आत्यन्तिके च संसारदुःखाभावे सुखवचनादागमे सत्यविरोधः। यद्यपि च कश्चिदागमः स्यात्। मुक्तस्य आत्यन्तिकं सुखमिति। इदञ्च भाष्यं व्याख्यायते। मोक्षे जाते त्वात्यन्तिके

संसारदुःखाभावे नितरां सुखवचनं क्रियत इत्यतः सत्यप्यागमे मोक्षे नित्यसुखस्य न विरोधः। तद् यथा—यद्यपीत्यादि। यद्यपि मुक्तस्यात्यन्तिकं सुखमित्यागमः कश्चिद् वर्त्तते, तत्रापि न विरोधोऽस्ति। कथमित्यत आह—सुखशब्द आत्यन्तिके दुःखाभावे प्रयुक्त इत्येवमुपपद्यते। दृष्टो हि दुःखाभावे सुखशब्दप्रयोगो बहुलं लोके इति। भाष्यन्त्वेतत् स्पष्टम्। तत्रापि दुःखाभावः प्रतियोगित्वात् सुखमेवेति चेन्न दुःखभिन्नमन्यद् वस्तु सुखमिवास्ति तदेव परमपुरुषरूपत्वं दुःखाभाव उच्यते।

अत्र पुनः सुखाभिव्यक्तिवादी भाषते। नित्यसुखरागस्याप्रहाणे मोक्षाधिगमाभावो रागस्य बन्धसमाम्नानात्। यद्ययं मोक्षे नित्यं सुखमभिव्यज्यते इति नित्यसुखरागेण मोक्षाय घटमानो न मोक्षमधिगच्छेन्नाधिगन्तुमर्हति, बन्धसमाम्नातो हि राग इति। भाष्यञ्चेदं व्याख्यायते। यदि मोक्षे सुखशब्दप्रयोगो दुःखाभावे भवति तदा नित्यसुखरागस्याप्रहाणे मोक्षाधिगमाभावापत्तिः। रागस्य बन्धसमाम्नानात्। इदं स्वयं विवृणोति। मोक्षे नित्यं सुखमभिव्यज्यत इति नित्यसुखकामनया यद्ययं मोक्षाय घटमानो योगसमाधिषु प्रवृत्तो मोक्षे सुखं नाधिगच्छेत् तदा मोक्षमधिगन्तुं नार्हति। बन्धसमाम्नातो हि रागस्तस्य वर्त्तते बन्धे समाम्नातो नियुक्त इति। कथं मोक्षमधिगन्तुं नार्हतीत्यत आह—न च बन्धने सत्यपि कश्चिन्मुक्त इत्युपपद्यते। इति प्रहाणे नित्यसुखरागस्याप्रतिकूलत्वम्। इदञ्च व्याख्यायते भाष्यम्। बन्धने बन्धकारणे रागादौ सति कश्चिदपि मुक्त इति नोपपद्यते। इति हेतोर्मोक्षे नित्यसुखाभिव्यक्तौ सत्यां नित्यसुखरागस्य प्रहाणे सति न प्रतिकूलत्वं नित्यसुखरागस्य मोक्षे सम्भवति। एतदपि दूषयितुमाह—अथास्य नित्यसुखरागः प्रहीयते तस्मिन् प्रहीणे नास्य नित्यसुखरागः प्रतिकूलो भवतीति। मोक्षे दुःखजन्मात्यन्तविमुक्तौ खल्वनेकस्यास्य मुक्तस्य नित्यसुखरागः स्वयमेव तस्माद् हीयते सुखे ह्यनुरज्यते दुःखार्त्त एव दुःखाभावे तु नानुरज्यते सुखायेति। तस्मिन् नित्यसुखरागे प्रहीणे सति नास्य मोक्षे नित्यसुखरागो भवति प्रतिकूल इति। वात्स्यायनभाष्यं समाप्तम्।

इत्थञ्च सम्प्रसादस्य स्वेन रूपेणाभिनिष्पत्तौ मोक्षे शिव एव भवति न पृथग् वर्त्तते। क्षेत्रज्ञस्यात्मा हि शिवः क्षेत्रज्ञोपाधिमोक्षात् स एव शिवो भवति, जलं यथा महाजलाशये पतितं तज्जलेनैकं भवतीति। इति निःशेषनिवृत्तिर्मोक्षस्तत्र सुखदुःखोभयनिवृत्तौ मुक्तस्य ब्रह्मरूपत्वे यदि न नित्यसुखमभिव्यज्यते सुख-

दुःखोभयस्य निवृत्तिश्च स्यात् तदा तैत्तिरीयोपनिषदुक्तम्—यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सह। आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्चनेति मन्त्रेण ब्रह्मण आनन्द उक्तः, स खल्वानन्दो नित्यस्तन्नित्यानन्दवान् पुरुष उत्तमः पुरुष ईश्वरः। पातञ्जले हीश्वर उक्तः। क्लेशकर्म्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः। अस्य व्यासकृतभाष्यम्। अथ प्रधानपुरुषव्यतिरिक्तः कोऽयमीश्वरो नामेति? क्लेशकर्म्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वर इति। अविद्यादयः क्लेशाः, कुशलाकुशलानि कर्म्माणि, तत्फलं विपाकः, तदनुगुणवासना आशयः। ते च मनसि वर्त्तमानाः पुरुषे व्यपदिश्यन्ते। स हि तत्फलस्य भोक्ता इति। यथा जयः पराजयो वा योद्धृषु वर्त्तमानः स्वामिनि व्यपदिश्यते। यो ह्यनेन भोगेनापरामृष्टः स पुरुषविशेष ईश्वरः। कैवल्यं प्राप्ताः सन्ति च बहवः केवलिनः। ते हि त्रीणि छित्वा बन्धनानि कैवल्यं प्राप्ताः। ईश्वरस्य च तत्सम्बन्धो न भूतो न भावी, यथा मुक्तस्य पूर्व्वबन्धकोटिः प्रज्ञायते नैवमीश्वरस्य। यथा प्रकृतिलीनस्योत्तरबन्धकोटिः सम्भाव्यते नैवमीश्वरस्य। स तु सदैव मुक्तः सदैवेश्वरः। योऽसौ प्रकृष्टसत्त्वोपादानादीश्वरस्य शाश्वतिक उत्कर्षः स किं सनिमित्तो निर्निमित्तो वेति। तस्य शास्त्रं निमित्तम्। शास्त्रं पुनः किंनिमित्तं प्रकृष्टसत्त्वनिमित्तम्। एतयोः शास्त्रोत्कर्षयोरीश्वरसत्त्वे वर्त्तमानयोरनादिः सम्बन्धः। एतस्मात् एतद्भवति। सदैवेश्वरः सदैव मुक्तः इति। तच्च तस्यैश्वर्य्यं साम्यातिशयविनिर्मुक्तं न तावदैश्वर्य्यान्तरेण तदतिशय्यते। यदेवातिशयि यस्मात् तदेव तस्मात् काष्ठाप्राप्तिरैश्वर्य्यस्य स ईश्वरः। न च तत्समानमैश्वर्य्यमस्ति। कस्मात्? द्वयोस्तुल्ययोरेकस्मिन् युगपत्कामितेऽर्थे नवमिदमस्तु पुराणमिदमस्तु इति। एकस्य सिद्धावितरस्य प्राकाम्यविघातादूनत्वं प्रसक्तम्। द्वयोश्च तुल्ययोर्युगपत्कामितार्थप्राप्तिर्नास्ति। अर्थविरुद्धत्वात्। तस्माद् यस्य साम्यातिशयविनिर्म्मुक्तमैश्वर्य्यं स ईश्वरः स च पुरुषविशेषः। सर्व्वेभ्यः पुरुषेभ्य उत्तम इत्युत्तमपुरुषः। एतदुत्तमपुरुषरूपेणाभिनिष्पत्तौ सम्प्रसादस्य मोक्षे यदानन्दवत् स्वरूपता स आनन्दो नाभिव्यज्यते मोक्षे नित्यमेव ताद्रूप्येण वर्त्तत इति। नानन्दाभिव्यक्तिर्मुक्तौ इति।

ननु तर्हि सुखदुःखोभयनिवृत्तिश्चेदपवर्गं ततः कथं सङ्गच्छते तल्लक्षणं यत् पुनः कपिलेन साङ्ख्यसंहितायामुक्तं मोक्षलक्षणम्। अथ त्रिविधदुःखात्यन्तनिवृत्तिरत्यन्तपुरुषार्थः ।१। अथशब्दोऽधिकारार्थो मङ्गलश्चास्योच्चारणात्

पुरुषाणां भवतीति। अथाधिक्रियतेऽत्यन्तपुरुषार्थः। पुरुषस्य राशिसंज्ञकस्य स्थूलदेहिनः संसारदुःखसिन्धुमग्नस्यात्यन्तोऽर्थः प्रयोजनं मुख्यफलं त्रिविधदुःखात्यन्तनिवृत्तिः। त्रिविधं दुःखमाधिभौतिकमाध्यात्मिकमाधिदैविकञ्च। पूर्व्वं व्याख्यातम्। तस्यात्यन्ता या निवृत्तिरप्रवृत्तिः साऽत्यन्तपुरुषार्थः। अन्तं नाशमतिक्रान्ता या सात्यन्ता, अत्यन्ता चासौ निवृत्तिश्चेति अत्यन्तनिवृत्तिः, त्रिविधदुःखस्यात्यन्तनिवृत्तिरपुनर्भवप्रवृत्तिः। अत्यन्तोऽन्तम् अतिक्रान्तः पुरुषार्थ इत्यत्यन्तपुरुषार्थो मोक्ष इत्यर्थः। अत्यन्तनिवृत्तिरिति अन्तपदव्यावृत्तिमाह, न दृष्टात् तत्सिद्धिर्निवृत्तेरप्यनुवृत्तिदर्शनात्। २। दृष्टात् दुःखनाशकात् धनपुत्रकलत्रादिकादर्थात् सुखप्राप्तौ सत्यां त्रिविधदुःखनिवृत्तौ जातायां तत्सिद्धिस्तस्यास्त्रिविधदुःखात्यन्तनिवृत्तेः सिद्धिर्न भवति। कस्मात्? निवृत्तेरपि त्रिविधस्य दुःखस्य पुनरनुवृत्तिदर्शनात्। धनपुत्रकलत्रादिवदश्वमेधादिकमपि वैधं कर्म्म दृष्टमेव तज्जनितस्वर्गादिकमदृष्टमपि च्युतं न त्वत्यन्तं ततः पुनरिह संसरणात् त्रिविधदुःखानुवृत्तिर्भवतीति। अत्यन्तपदव्यावृत्तिः स्वयं कृता। अत्यन्तपुरुषार्थे इत्यत्यन्तपदव्यावृत्तिं दर्शयति—प्रात्यहिकक्षुत्प्रतीकारवत् तत्प्रतिकारचेष्टनात् पुरुषार्थत्वम्। ३। प्रत्यहोत्पन्नक्षुधायाः प्रतीकारार्थं निवृत्त्यर्थं चेष्टा भोजनादिवत्। आधिभौतिकादित्रिविधस्य दुःखस्य पारलौकिकस्य चैहिकस्य च प्रतीकारार्थं निवृत्त्यर्थं नित्यनैमित्तिककाम्याश्वमेधादिकर्म्महिताहाराचारसद्वृत्तादिचेष्टनात् तत्तत्त्रिविधदुःखनिवृत्तेः पुरुषार्थत्वं न त्वत्यन्तपुरुषार्थत्वम्। तत्तत्कर्म्मफलस्वर्गादिसुखस्य नश्वरत्वेन नाशे सति तत्त्रिविधदुःखस्य पुनरनुवृत्तेः।०।

ननु दृश्यते कस्यचिद्रसायनसेवनाच्छारीरत्रिविधदुःखानामत्यन्तनिवृत्तिः केषाञ्चिद्धितसेविनां त्रिविधान्यतरस्य दुःखस्यात्यन्तनिवृत्तिः सा किमत्यन्तपुरुषार्थ इत्यत आह। सर्व्वासम्भवात् सम्भवेऽपि सत्त्वासम्भवाद्धेयः प्रमाणकुशलैः। ४। रसायनसेवनात् कर्म्मान्तराद्वा सर्व्वेषां मनःशरीराधिष्ठानानां त्रिविधानां दुःखानामत्यन्तनिवृत्तेरसम्भवात् प्रमाणकुशलैः प्रज्ञानदक्षैस्त्रिविधान्यतमदुःखस्य शारीरमानसान्यतरत्रिविधस्य चात्यन्तनिवृत्तिरूपोऽत्यन्तपुरुषार्थो हेयस्त्याज्यः शेषदुःखसद्भावात्। सम्भवेऽपि सोमरसायनादिसेवनादत्युत्कटतपोभ्यो वा बहुब्रह्मायुष्कालपर्य्यन्तं कस्यचिच्छारीरमानसत्रिविधदुःखानां निवृत्तेः सम्भवेऽपि पुनरपायित्वेन तेषां निवृत्तेः सत्त्वासम्भवाच्चिरं वर्त्तनसम्भवाभावात् सोऽपि पुरुषार्थो हेयः प्रमाणकुशलैरिति। त्रिविधेति पदव्यावृत्तिः। अत्यन्तेत्यस्य च व्यावृत्तिः।०।

ननु तर्हि कोऽत्यन्तपुरुषार्थ इत्यत आह—उत्कर्षादपि मोक्षस्य सर्व्वोत्कर्षश्रुतेः । ५ । उत्कर्षादत्यन्तत्वादपि मोक्षस्यात्यन्तपुरुषार्थत्वम् । कस्मात् ? सर्व्वोत्कर्षश्रुतेः । श्वेताश्वतरोपनिषदि मन्त्रः । न तस्य कार्य्यं करणञ्च विद्यते न तत् समश्चाप्यधिकश्च दृश्यते इति समातिशयाभावः श्रूयते । इत्यादि ।०।

ननूत्कर्षान्मोक्षस्य चेदत्यन्तपुरुषार्थत्वं तर्हि त्रिविधदुःखात्यन्तनिवृत्तिः किं दुःखाविद्धसुखमत्यन्तपुरुषार्थ इति चेन्न । अविशेषश्चोभयोः । ६ । त्रिविधदुःखदुःखाविद्धसुखयोरुभयोश्च न विशेषोऽस्ति । सुखस्य नश्वरत्वेन काले स्वर्गादिसुखनाशे पुनर्दुःखप्राप्तेः सुखस्यापि दुःखमध्ये प्रक्षेपात् । सम्प्रसादस्य क्षेत्रज्ञस्य परव्योमशिवरूपेण निष्पत्तौ स्वस्वरूपाभावात् तद्गतनित्यसुखस्याप्यभावात् कुत्रस्थनित्यसुखमभिव्यज्येतेति । तस्मान्नानन्दाभिव्यक्तिर्मुक्तिरिति नत्त्वम् ।

नन्वेवमशेषतो वेदनानिवृत्तौ सत्यां स योगी कीदृशः सन् जीवन् विचरतीति चेत् तदोच्यते । तैत्तिरीयोपनिषदि ह्युक्तम् । आनन्दमयकोषानन्तरमनुप्रश्नः । उताविद्वानमुं लोकं प्रेत्य कश्चन गच्छति ? आहो विद्वानमुं लोकं प्रेत्य किञ्चित् समश्नुते ? इति प्रश्नः । विद्वान् ब्रह्मज्ञः । अस्योत्तरमुक्तं तत्रैव । असद्वा इदमग्र आसीत् ततो वै सदजायत । तदात्मानं स्वयमकुरुत तस्मात् तत् सुकृतमुच्यते । इति । यद्वै तत् सुकृतं रसो वै स रसं ह्येवायं लब्ध्वानन्दीभवति । को ह्येवान्यात् कः प्राण्याद् यदेष आकाश आनन्दो न स्यात् । एष ह्येवानन्दयति । यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्ये निरुक्ते निलयनेऽभयं प्रतिष्ठां विन्दतेऽथ सोऽभयं गतो भवति । यदा ह्येवैष एतस्मिंस्तदुदरमन्तरं कुरुतेऽथ तत् सभयं भवति । तदुभयं त्विदुषो मन्वानस्य । तदप्येष श्लोको भवति । भीषा वातः पवते भीषोदेति सूर्य्यः । भीषाऽस्मादग्निश्चन्द्रश्च मृत्युर्धावति पञ्चम इति । व्याख्यायते चेयं श्रुतिः । क्रियागुणव्यपदेशरहितमसदेवेदं सर्व्वमग्र आसीत् । तत् स्वगुणनिगूढ़ा शक्तिर्ब्रह्म प्राक् सृष्टेः क्रियागुणव्यपदेशरहितासीत् । सर्गे प्रथमतस्तेजोऽसृजत । तत् तेजोऽपोऽसृजत् ता आपोऽन्नमसृजन्त । तास्तिस्रो देवतास्तेजोऽवन्नाख्या अनुप्रविश्य परा सा शक्तिर्ब्रह्म सा खल्वजा तेजोऽवन्नानि भूत्वा तान्यनुप्रविश्य लोहितशुक्लकृष्णवदाभासमाना वाग्देवी सरस्वती दुर्गा नाम गायत्री अतीन्द्रियध्वनिरूपा बभूवेति सा सदजायत । सैवार्द्धाङ्गेन घनीभूय परमव्योमरूपस्तदतीन्द्रियध्वनिमान् शिवो बभूव सोऽजः । एष परमात्मा पुरुषो नासन्न सत् । असन्न

सदसच्च। तमात्मानं स्वयं सुष्ठु अयः शुभावहविधिर्यस्मात् तं शिवमकुरुत। तस्मात् स्वयत्वात् तदात्मानं शिवं सुकृतमुच्यते। यद्वै यदेव तत् सुकृतं परमात्माख्य ब्रह्म रसो वै सः। स रस एव। प्रथमादिसर्व्वाभूताश्रयत्वात्। तं रसमानन्दस्थे क्षेत्रज्ञे स्थितं तद्विष्णोः परमं परं ज्योतिःस्वरूपं शिवं प्रथमामृतवन्तमयं योगमास्थितः पुरुषो विद्वान् योगे लब्धानन्दीभवति। अमृतरसो हि सुखकरस्तल्लाभे सुखवान् भवति।

अत्र स्वयमाशङ्कते। को ह्येवेत्यादि। तद्रसरूपानन्दमयलाभे क एवान्यात् प्रीतः स्यात् क एव प्राण्यात् प्राणकर्म्मा स्याद् यत एष आकाश आकाशभूतवदाकाश एव निर्लिप्त इति आनन्दोऽस्य न स्यादिति प्रश्नः। उत्तरयति। एष ह्येवानन्दयति। यत एष आनन्दमयस्थक्षेत्रज्ञस्थितः शिवः समाधियोगस्थितं पुरुषं जीवोपाधिमहत्तत्त्वोपाहितं प्राज्ञं क्षेत्रज्ञमानन्दयति महत्तत्त्वाख्यया विद्यया तमानन्दं भुञ्जानो जीवोपाधिः समाधिस्थः क्षेत्रज्ञ आनन्दीभवति न कैवल्यमेति। नन्वेष एकान्तत एव किमानन्दीभवति अनेकान्ततो वेत्यत आह—यदा ह्येवेत्यादि। हि यस्मादेष जीवोपाधिः क्षेत्रज्ञः पुरुष एतस्मिञ्छरीरे अदृश्ये चानात्म्ये निरुक्ते खल्वानन्दमये निलयने भयशून्यं यथा स्यात् तथा प्रतिष्ठामालम्ब्य स्थितिं लभतेऽथ तदनन्तरकालं सोऽभयं गतो भवति। यदा हि यस्मादेष जीवोपाधिः। क्षेत्रज्ञो विद्वान्। एतस्मिञ्छरीरे तद इति। उ भो दरमीषदन्तरं त्रिगुणेनेषद्व्यवहितं तत् परमात्मानं कुरुतेऽथानन्दमयस्य दरव्यवधानाद्विदुषोऽपि तस्य भयं भवति। एतद्भयमभयभयं विदुषो मन्वानस्य भवति।

ननु कुत आनन्दमये निलये प्रतिष्ठां गतस्याभयं भवतीत्यत आह—तदप्येष इत्यादि। अस्मात् सर्व्वभयङ्करात् रुद्रादेव भीषा भयेन वातः पवते सततं गच्छन् सशोषयति। यस्माद् भीषा सूर्य्य उदेति। यस्माद् भीषा चन्द्रोऽग्निश्च उदेति। पञ्चमो मृत्युर्लोकानामन्तकाले नयनार्थं धावतीति। तस्मात् सर्व्वशासनात् शिवादभयं प्रतिष्ठां गतस्य कुतो भयं भवति तस्माद् व्यवधाने कथं नान्यस्माद्भयं स्यादित्यर्थः। नन्वेतदानन्दस्य को विचार इत्यत एतत्श्लोकानन्तरं तत्रैव तैत्तिरीयोपनिषदि। सैषानन्दस्य मीमांसा भवति। युवाध्यात्मसु युवाध्यापक आशिष्ठो द्रढिष्ठो बलिष्ठः। तस्येयं पृथिवी सर्व्वा वित्तस्य पूर्णा स्यात्। स एको मानुषानन्दः। ते ये शतं मानुषानन्दाः। स एको मनुष्यगन्धर्व्वाणाम् आनन्दः श्रोत्रियस्य चाकामहतस्य। ते ये शतं मनुष्यगन्धर्व्वाणामानन्दाः स

एको देवगन्धर्व्वाणामानन्दः । श्रोत्रियस्य चाकामहतस्य । ते ये शतं देवगन्धर्व्वाणामानन्दाः स एकः पितॄणां चिरलोकलोकानामानन्दः । श्रोत्रियस्य चाकामहतस्य । ते ये शतं पितॄणां चिरलोकलोकानामानन्दाः स एक आयानजानां देवानामानन्दः । श्रोत्रियस्य चाकामहतस्य । ते ये शतमायानजानां देवानामानन्दाः स एकः कर्म्मदेवानामानन्दो ये कर्म्मणा देवानपयन्ति । श्रोत्रियस्य चाकामहतस्य । ते ये शतं कर्म्मदेवानामानन्दाः स एको देवानामानन्दः । श्रोत्रियस्य चाकामहतस्य । ते ये शतं देवानामानन्दाः स एक इन्द्रस्यानन्दः । श्रोत्रियस्य चाकामहतस्य । ते ये शतमिन्द्रस्यानन्दाः स एको बृहस्पतेरानन्दः । श्रोत्रियस्य चाकामहतस्य । ते ये शतं बृहस्पतेरानन्दाः स एकः प्रजापतेरानन्दः । श्रोत्रियस्य चाकामहतस्य । ते ये शतं प्रजापतेरानन्दाः स एको ब्रह्मण आनन्दः । श्रोत्रियस्य चाकामहतस्य । स यश्चायं पुरुषे यश्च पश्चादौ यश्चासावादित्ये स एकः स य एवंवित् । तदप्येष श्लोको भवति । यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सह । आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्चनेति । अत्र ब्रह्मण इति यः पुरुषश्चायं पुरुषे क्षेत्रज्ञे वर्त्तते यश्च पश्चादिदेवान्तेषु सर्व्वेषु वर्त्तन्ते य आदित्येऽस्मिन् सूर्य्ये वर्त्तते स एकः परः पुरुषो ब्रह्म शिव एव तस्येयमानन्दस्य मीमांसा । एतं ब्रह्मणः शिवस्यानन्दं विद्वान् कुतश्चन न बिभेतीति जीवन्मुक्तस्य मुक्तस्यानन्दमीमांसा । नन्वेवमस्य तस्माल्लोकात् प्रेत्य किञ्चित् समश्नुत इति प्रश्नस्योत्तरमेतदनन्तरमुक्तम् । अस्माल्लोकात् प्रेत्यैतमन्नमयमात्मानमुपसंक्रामत्येतं प्राणमयमात्मानमुपसंक्रामत्येतं मनोमयमात्मानमुपसंक्रामत्येतं विज्ञानमयमात्मानमुपसंक्रामत्येतमानन्दमयमात्मानमुपसंक्रामति इति । अस्माल्लोकात् प्रेत्येति प्रकर्षेण गत्वा न तु मृत्वा । तदेव तत्रैवोक्तं पुनः । स यश्चायं पुरुषे यश्च पश्चादौ यश्चासावादित्ये स एकः स य एवंवित् । अस्माल्लोकात् प्रेत्य एतमन्नमयमात्मानमुपसंक्रम्यैतं प्राणमयमात्मानमुपसंक्रम्यैतं मनोमयमात्मानमुपसंक्रम्यैतं विज्ञानमयमात्मानमुपसंक्रम्यैतमानन्दमयमात्मानमुपसंक्रम्येमान् लोकान् काममप्यनुपसञ्चरन्नेतत् सामगायन्नास्ते इति । इमानन्नमयादीन् लोकान् स्वेच्छया कामी सन् विचरति । इति । ननु मृत्वायं किं स्यादितो वा कथं गच्छतीत्यतस्तदाह—छान्दोग्योपनिषदि । "तद्य इत्थं विदुर्ये चेमेऽरण्ये श्रद्धातप इत्युपासीत तेऽर्चिषमभिसम्भवन्त्यर्च्चिषोऽहरह्न आपूर्य्यमाणपक्षमापूर्य्यमाणपक्षाद् यामुदङ्केति षण्मासांस्तान् । मासेभ्यः संवत्सरं संवत्सरादादित्यमादित्याच्चन्द्रमसं चन्द्रमसो

अतः परं ब्रह्मभूतो भूतात्मा नोपलभ्यते।
निःसृतः सर्व्वभावेभ्यश्चिह्नं यस्य न विद्यते॥

विद्युतं स तत्पुरुष एतान् ब्रह्म गमयत्येष देवयानः पन्थाः इति।" प्रश्नोपनिषदि। "हृदि ह्येष आत्माऽत्रैतदेकशतं नाड़ीनाम्। तासां शतं शतमेकैकस्यां द्वासप्ततिर्द्वासप्ततिः प्रतिशाखानाड़ीसहस्राणि भवन्ति। आसु व्यानश्चरति। अथैकयोर्द्ध्व उदानः। पुण्येन पुण्यं लोकं जयति पापेन पापमुभयाभ्यामेव मनुष्यलोकमिति।" अथ स एतास्तेजोमात्राः समभ्याददानो हृदयमेवान्ववक्रामति। तस्य हैतस्य हृदयस्याग्रं प्रद्योतते, तेन प्रद्यातेनैष आत्मा निष्क्रामति चक्षुष्टो वा मूर्द्ध्नो वाऽन्येभ्यो वा शरीरदेशेभ्य इति योगिनो विद्यया पुण्यं बान्धवान् गच्छति पापे शत्रून् गच्छति विहीनपुण्यपापाः हृदयाग्रं ज्वलितमर्च्चिषमभिलक्ष्य सम्भवन्ति ते चक्षुरादितोऽहनि निष्क्रम्य दिनमभिसम्भवन्ति दिनात् शुक्लपक्षं शुक्लपक्षादुत्तरायणमुत्तरायणात् संवत्सरं संवत्सरादादित्यमिति अग्निलोकमादित्याच्चन्द्रमसमिति वायुलोकं चन्द्रमसाद् विद्युतमिति वरुणलोकम्। तत्र गतान् खल्वेतान् तपःश्रद्धादियुक्तान क्षेत्रज्ञान् तत्पुरुषः सदाशिवो ब्रह्म गमयति। नैते पुनरावर्त्तन्ते। गीतायाञ्च। अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम्। तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो विदुरिति। अग्निर्ज्योतिर्हृदयाग्रज्वलनज्योतिरभिप्रयान्ति। तस्मादहरहः शुक्लं पक्षं शुक्लपक्षादुत्तरायणमित्यादिक्रमेण तत्र देवयाने पथि प्रयाता ब्रह्मविदो ब्रह्म गच्छन्तीति विदुः। भ्रान्ता आहुर्दिवादिषु मरणे फलमिदम्। तन्न श्रुतिविरोधात्। इति देवयानः पन्था उक्तः। दौर्व्वाससोपनिषदि च पाशुपतयोगे। चतुर्व्विंशगृहे योग एष वै पञ्चविंशकः। षड्विंशश्च तथा ज्ञेयो ह्यध्यक्षः सप्तविंशकः। अष्टाविंशश्च पुरुषस्त्रिंशः पुरुषलोकधृक्। यं विदित्वा न शोचन्ति शिवं तं कथयामि ते। ऊनत्रिंशं तदा विद्याज् ज्ञानतत्त्वार्थचिन्तकः। त्रिंशकन्तु तदा ज्ञात्वा अमृतत्वाय कल्पते। इति पाशुपतयोग इति। इति द्वाविंशप्रश्नस्योत्तरम्॥ ५०॥

गङ्गाधरः—अत्र पुनरग्निवेशः पप्रच्छ। सर्व्ववित् सर्व्वसंन्यासी सर्व्वसंयोगनिःसृतः। एकः प्रशान्तो भूतात्मा कैर्लिङ्गैरुपलभ्यते इति। तत्रोत्तरमाह—अतः परमित्यादि। सोऽयं बद्धो भूतात्मा यः पुनःपुनरिह जायते स सत्यबुद्धेरुत्पत्तौ सर्व्ववित् सन् सर्व्वं संन्यस्य ब्रह्मभूतः सन् नोपलभ्यते।

गतिर्ब्रह्मविदां ब्रह्म तच्चाक्षरमलक्षणम्।
ज्ञानं * ब्रह्मविदाञ्चात्र नाज्ञस्तज् ज्ञातुमर्हति ॥ ५१ ॥

प्रत्यक्षेणानुमानेनाप्तोपदेशेन वा सर्व्वथा नोपलभ्यते। तदा ह्यप्रमेयं भवति प्रमाणैरज्ञेयत्वात्। कस्मान्नोपलभ्यते? सर्व्वं ह्येतत् कार्य्यं लिङ्गं लिङ्गेनानुमेयं स्यादित्यत आह—निःसृत इत्यादि। सोऽयं मुक्तो ब्रह्मभूतः सर्व्वभावेभ्यो निःसृतो यस्मात् तस्मात् तस्य नोपलब्धिरस्ति। कस्मात्? यस्मात् तस्य चिह्नं लिङ्गमनुमितिसाधनं न विद्यते। ततः स कथमुपलभ्येत? सर्व्वभावान्निःसरणान्न तस्य किमपि कार्य्यं करणञ्च विद्यते ततो लिङ्गञ्च नास्तीति। तर्हि नास्तु लिङ्गग्राह्यः ज्ञानान्तरविज्ञेयोऽपि किं न स्यादित्यत आह—गतिरित्यादि। ब्रह्मविदां गतिर्ब्रह्मैव तच्चालक्षणमक्षरञ्च। अत्र ब्रह्मविदां योगिनां यत्सांख्यज्ञानयोगज्ञानं तज्ज्ञानज्ञेयत्वञ्चास्ति मानसग्राह्यत्वन्तु नास्तीत्यस्मादज्ञस्तद्ब्रह्म न ज्ञातुमर्हति। अत्रेयमाशङ्का। यद्येवमात्मा कथं स खलु पुनः बध्यते केन वा बन्धनेनेति? तत्रोच्यते। यदुक्तं लैङ्गे नवमाध्याये—सनत्कुमार उवाच। कथं पशुपतिर्देवः पशवः के प्रकीर्त्तिताः। कैः पाशैस्ते निबद्धाश्च विमुच्यन्ते च ते कथम्। शैलादिरुवाच। ब्रह्माद्याः स्थावरान्ताश्च देवदेवस्य धीमतः। पशवः परिकीर्त्त्यन्ते संसारवशवर्त्तिनः। तेषां पतित्वाद् भगवान् रुद्रः पशुपतिः स्मृतः। अनादिनिधनो धाता भगवान् प्रभुरव्ययः। मायापाशेन बध्नाति पशूंस्तान् परमेश्वरः। स एव मोचकस्तेषां ज्ञानयोगेन सेवितः। अविद्यापाशबद्धानां नान्यो मोचक इष्यते। तप्यते परमात्मानं शङ्करं परमेश्वरम्। चतुर्व्विंशतितत्त्वानि पाशा वै परमेष्ठिनः। पाशेभ्यो मोचयत्येष शिवो जीवानुपासितः। निबध्नाति पशूनेकश्चतुर्व्विंशतिपाशकैः। स एव भगवान् रुद्रो मोचयत्यपि सेवितः। दशेन्द्रियमयैः पाशैरन्तःकरणसम्भवैः। भूततन्मात्रपाशैश्च पशून् बध्नाति च प्रभुः। इन्द्रियार्थमयैः पाशैर्बध्नात्येव शिवः प्रभुः। पाशमुक्ता भवन्त्येते परमेश्वरसेवनात्। भज इत्येव धातुर्वै सेवायां परिकीर्त्तितः। तस्मात् सेवा बुधैः प्रोक्ता भक्तिशब्देन भूयसी। ब्रह्मादीन् स्तम्भपर्य्यन्तान् पशून् बद्ध्वा महेश्वरः। त्रिभिर्गुणमयैः पाशैः कार्य्यं कारयति स्वकम्। दृढेन भक्तियोगेन पशुभिः समुपासितः। मोचयत्येव तान् सद्यः शङ्करः परमेश्वरः। भजनं भक्तिरित्युक्ता वाङ्मनःकायकर्म्मभिः।

* ज्ञेयमिति चक्रः।

सर्व्वकल्याणहेतुत्वात् पाशच्छेदपटीयसी। सर्व्वः सर्व्वग इत्यादि शिवस्य गुणचिन्तनम्। रूपोपादानचिन्ता वा मानसं भजनं विदुः। वाचिकं भजनं धीराः प्रणवादिजपं विदुः। वाचिकं भजनं सद्भिः प्राणायामादि कथ्यते। धर्म्माधर्म्ममयैः पाशैर्बद्धानां देहिनामयम्। मोचकः शिव एवैको भगवान् परमेश्वरः। चतुर्विंशतितत्त्वानि मायाकर्म्मगुणा इति। विषया इति कीर्त्यन्ते पाशा जीवनिबन्धनाः। तैर्बद्धाः शिवभक्त्यैव मुच्यन्ते सर्व्वदेहिनः। पञ्चक्लेशमयैः पाशैः पशून् बध्नाति शङ्करः। स एव मोचकस्तेषां सम्यग् भक्त्या ह्युपासितः। अविद्यामस्मितां रागं द्वेषञ्च द्विपदां वराः। वदन्त्यभिनिवेशञ्च क्लेशान् पाशत्वमागतान्। तमो मोहो महामोहस्तामिस्र इति पण्डिताः। अन्धतामिस्रमित्याहुरविद्यां पञ्चधा स्थिताम्। तान् जीवान् मुनिशार्द्दूलाः सर्व्वांश्चैवापि विद्यया। शिवो मोचयति श्रेयान् नान्यः कोऽपीह मोचकः। अविद्यां तम इत्याहुरस्मितां मोहमित्यपि। महामोहमिति प्राहू रागं योगपरायणाः। द्वेषं तामिस्रमित्याहुरन्धतामिस्रमित्यपि। तथैवाभिनिवेशञ्च मिथ्याज्ञानं विवेकिनः। तमसोऽष्टविधा भेदा मोहस्याष्टविधाः स्मृताः। महामोहप्रभेदाश्च बुधैर्दश विचिन्तिताः। अष्टादशविधं प्राहुस्तामिस्रञ्च विचक्षणाः। अन्धतामिस्रभेदाश्च तथाष्टादशधा स्मृताः। अविद्यया न सम्बन्धो ज्ञानदातुः शिवस्य च। सर्व्वज्ञस्य तु मोहेन नातीतो नाप्यनागतः। भवेद्रागेण देवस्य शम्भोरङ्गजशासिनः। कालेषु त्रिषु सम्बन्धस्तस्य द्वेषेण न भवेत्। मायातीतस्य देवस्य स्थाणोः पशुपतेर्विभोः। तथैवाभिनिवेशेन सम्बन्धो न कदाचन। शङ्करस्य शरण्यस्य शिवस्य परमात्मनः। कुशलाकुशलैस्तस्य सम्बन्धो नैव कर्म्मभिः” इत्यादि। एतदुपदेशेन प्रथमं परमात्मा शिवश्चित् सम्प्रसादं क्षेत्रज्ञमात्मानं मायया बध्नाति ततो ज्ञानविपर्य्ययैः पञ्चभिरविद्यादिभिर्बध्नाति न तु स्वभावधर्म्माधर्म्मादिभिः। अविद्याद्यज्ञानेन बद्धस्तु कर्म्माणि कुर्व्वंस्तत्फलेन धर्म्माधर्म्मेण पुनर्बध्यते। तदुक्तं साङ्ख्ये—“ज्ञानान्मुक्तिः बन्धो विपर्य्ययात्।” विपर्य्ययात् बन्ध इति ज्ञानविपर्य्ययादज्ञानात् क्षेत्रज्ञस्यात्मनो बन्धः स्वभोग्यदुःखहेतुमनःशरीरसंयोगः स्यात्।

ननु कतिविधो ज्ञानविपर्य्यय इत्यत आह। विपर्य्ययभेदाः पञ्च। क्षेत्रज्ञस्य पुरुषस्यात्मनो मनःशरीराभ्यां बन्धस्य स्वभोग्यवेदनाहेतोः संयोगस्य कारणं यज्ज्ञानविपर्य्ययमज्ञानं तस्य भेदाः प्रकाराः पञ्च भवन्ति। ते योगशासने पातञ्जले प्रोक्ताः। तद् यथा—अविद्याऽस्मितारागद्वेषाभिनिवेशाः। तत्र

अविद्याक्रमादनित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मख्यातिः। अस्मिता त्वात्मनात्मनोरेकताप्रत्ययः। स च शरीराद्यतिरिक्त आत्मा नास्तीत्येवं रूपम्। तेनानात्मन्यात्मख्यातिरविद्याऽस्मितातः पृथगेव नास्तित्वयज्ञानरूपा त्वस्मिता रागोऽनुरञ्जनव्यापारः। स चेच्छाहेतुः। द्वेषस्तद्विपर्य्ययः। अभिनिवेशो मरणादित्रासः। इति। रूपैः सप्तभिरात्मानं बध्नाति प्रधानं कोषकारवद्विमोचयत्येकरूपेण। ज्ञानैश्वर्य्यवैराग्यधर्म्माज्ञानानैश्वर्य्यावैराग्याधर्म्माणीत्यष्टौ प्रधानस्य रूपाणि प्रसिद्धानि। तत् तु प्रधानं स्वभावान्नियत्या यदृच्छया चैव सर्गादौ परमात्मन्यनुप्रविष्टं क्षेत्रज्ञमाश्रित्य वर्त्तते। तथा वर्त्तमानं स्वभावादिभिरेव कालतोऽभिव्यक्तसत्त्वादित्रिगुणलक्षणमव्यक्तं नाम भवति। तत्क्षेत्रज्ञानुप्रविष्टसमत्रिगुणलक्षणमव्यक्तं प्रथमं प्रकृतिबद्ध आत्मा क्षेत्रज्ञः। स पुनर्येनात्मानं मनुते स महान् मतिर्विद्या बुद्धिर्मनः क्षेत्रज्ञस्येति स जीवो नामात्मा तेन विशिष्टमव्यक्तं प्राज्ञो नामात्मेति क्षेत्रज्ञस्य द्वितीयो बन्धो महता स च प्राज्ञस्तया बुद्ध्याहमिति मन्यते तयाहम्मत्या विशिष्टः स आत्मा धीधृतिस्मृत्यहङ्कारलिङ्गः स्यात्। इत्यहङ्कारबन्धस्तृतीयः पुनरहङ्कारादुत्पन्नैः पञ्चभिर्महाभूतैः क्रमेणास्य बन्धो भवति। एवं महदादिभिः सप्तभी रूपैः प्रधानं क्षेत्रज्ञमात्मानं बध्नाति कोषकारकीटवत्। स पुनराहङ्कारिकैर्दशभिरिन्द्रियैर्मनसा स्थूलभूतैश्च बध्यत इति। एवम्भूतस्य बृहतो लोकस्य पुरुषस्य यद्यणोरणीयोरूपो नारायणेन ब्रह्मणा सूक्ष्मदेहसर्गे संयोज्यते तदा स क्षेत्रज्ञः सूक्ष्मदेही निर्व्विशेषः स चतुर्योनिज एषोऽमुकोऽहमसावहमित्येवमभिमन्यते बध्यते च सप्तभिरैश्वर्य्यादिभिर्महतो रूपैरहङ्कारोऽभिमन्ता चेश्वरश्चेति धीधृतिस्मृतिभ्रंशरूपा बुद्धिरैश्वर्य्यादिसप्तविधा सत्यविद्यादिपञ्चधैकजीवोपाधिमत आत्मनः क्षेत्रज्ञस्य लिङ्गमिति, तत्र रागादिभिः क्रिया वेदोक्ता वाङ्मनःशरीरैः खल्वारभ्यते सम्यगसम्यक् च तत्सम्यगसम्यगारम्भाद् धर्म्माधर्म्माभ्यां पुनःपुनः कोषकारवग्निजकृतेन सूत्रेण बध्यते इति। बद्धश्चानित्यसुखदुःखात्मकवेदनां भुङ्क्ते। यदा सम्यग्बुद्ध्या वाङ्मनःशरीरैर्वैधावैधकर्म्माणि द्वेषान्नारभ्यन्ते तदा सर्व्वकर्म्मानारम्भादात्मानं बद्धं क्षेत्रज्ञं समबुद्धिरूपं प्रधानं विमोचयतीति अनारम्भादसंयोगात् तं दुःखं नोपतिष्ठत इति। नन्वेवं यद् बध्यते क्षेत्रज्ञस्तद्बन्धनं स्वभावादेव भवति क्रमेण प्रधानाव्यक्तमहदहङ्कारादिष्वनुप्रवेशो नाज्ञानादिति चेत् तत्राह। न स्वभावतो बद्धस्य मोक्षसाधनोपदेशविधिः।०। स्वभावतो बद्धः सन् क्षेत्रज्ञो भूत्वा प्रधानेन बद्धो यदव्यक्तमनुप्रविश्यानन्दमय आत्मा

अभूत् तस्य मोक्षसाधनोपदेशो न विधीयते कैरप्याचार्य्यैः। स्वभावस्यानपायित्वात्।

अत्राह वादी। स्वभावस्यानपायित्वादननुष्ठानमप्रामाण्यम् ।०। स्वभावस्य अपायशीलत्वाभावात् स्वभावतो बद्धस्य मोक्षार्थमनुष्ठानाविधानमप्रामाण्यं न प्रमाणसिद्धमपि त्वनुष्ठानोपदेशः कर्त्तव्य इति। तत्रोत्तरमाह। नाशक्योपदेशविधिरुपदिष्टेऽप्यनुपदेशः ।०। अशक्ये शक्त्यसाध्ये फले साधनार्थमुपदेशकरणं न युज्यते। कस्मात्? यत उपदिष्टेऽप्यनुपदेशः। अशक्यफलसाधनोपाये तूपदिष्टेऽप्यनुपदेशो भवति साधने शक्त्यभावादिति। अत्राशङ्कते—शुक्लपटवद्-वीजवच्चेति ।०। यथा स्वभावसिद्धस्य पटानां शुक्लस्य रागविधानादपायः स्याद् यथा वीजानामङ्कुरकारित्वस्वभावस्याग्निदाहादिनापायः स्यात् तथा स्वभावतो बद्धस्य क्षेत्रज्ञस्य प्रधानेन बद्धस्य बन्धापाये बन्धापाय इति चेत्, तत्राह—शक्त्युद्भवानुद्भवाभ्यां नाशक्योपदेशः ।०। स्वभावस्यापायहेतुभूतकर्म्मसाधने शक्तिरुद्भवति वा नोद्भवति इति अशक्ये साधनोपदेशो न क्रियते। ननु तर्हि किं क्षेत्रज्ञस्यात्मनः प्रधानेन बन्धः कालतः स्यादित्यत आह—न कालयोगतो व्यापिनो नित्यस्य सर्व्वसम्बन्धात् ।०। प्रधानानुप्रविष्टस्याव्यक्ताख्यस्यात्मनो न कालयोगतो बन्धः स्यात्। कस्मात्? व्यापिनो नित्यस्य कालस्य सर्व्वसम्बन्धात्। तर्हि किं देशयोगतो बन्ध इत्यत आह—न देशतोऽप्यस्मात् ।०। देशयोगतोऽपि न पुरुषबन्धः। कस्मात्? अस्मात् व्यापिनो नित्यस्य देशस्य सर्व्वसम्बन्धात्। न हि दृश्यन्ते खादयो देशेन बद्धाः। तर्हि किमवस्थातो बन्धः स्यादित्यत आह। नावस्थातो देहधर्म्मत्वात् तस्याः ।०। याद्रूप्येण यदा वर्त्तते ताद्रूप्येण वृत्तिरवस्था। तद्योगतो न पुरुषबन्धः स्यात्। कस्मात्? देहधर्म्मत्वात् तस्याः। तस्या अवस्थाया देहधर्म्मत्वात् पुरुषस्य बन्धायोग्यत्वात्।

ननु शरीरविशेषेणात्मनो विशेषोपलब्धिरतः कथं देहधर्म्मेणावस्थया न पुरुषबन्धः स्यादित्यत आह—असङ्गोऽयं पुरुष इति ।०। आकाशवदतिविशदत्वादसङ्गोऽयं पुरुषो भौतिकशरीरीयावस्थया बद्धुं न शक्यते, तर्हि किं कर्म्मणा पुरुषो बध्यत इत्यत आह—न कर्म्मणाऽन्यधर्म्मत्वादतिप्रसक्तेश्च ।०। पुरुषस्य बन्धो न कृतेन शुभाशुभकर्म्मफलेन भवति कर्म्मणोऽन्यधर्म्मत्वादात्मनोऽन्यस्य भूतात्मनो धर्म्मं वाङ्मनःशरीरकृतकर्म्मफलं कर्म्म। तच्छरीरगतत्वेनात्मनो यदन्यधर्म्मेण कर्म्मणा बन्धः स्यात् तदाऽतिप्रसङ्गः स्यात् सर्व्वस्य सर्व्वधर्म्मेण

बन्धः सम्भवति। अन्यधर्म्मत्वे कर्म्मणो दोषमाह—विचित्रभोगानुपपत्तिरन्यधर्म्मत्वे ।०। कर्म्मणोऽन्यधर्म्मत्वे पुरुषस्य तत्कर्म्मजविचित्रभोगानुपपत्तिः स्यात्। विचित्रभोगो हि लोकेऽस्मिन्नमुष्मिंश्च नानाविधभोग इति। प्रकृतिनिबन्धनाच्चेन्न तस्या अपि पारतन्त्र्यम् ।०। प्रकृतिनिबन्धनाच्चेत् पुरुषस्यात्मनो विचित्रभोगः स्यादिति चेन्न, यस्मात् तस्या अपि पारतन्त्र्यम्। अचेतनत्वादस्वातन्त्र्यम्। पारतन्त्र्यं चेत् तदा कथं प्रकृतेः पुरुषेण योगः स्यादित्यत आह—न नित्यशुद्धबुद्धमुक्तस्वभावस्य तद्योगस्तद्योगादृते ।०। नित्यम् अविच्छेदेन शुद्धं निर्म्मलत्वं बुद्धत्वं मुक्तत्वञ्च स्वभावो यस्य तस्य नित्यशुद्धबुद्धमुक्तस्वभावस्यात्मनश्चैतन्यहेतोः परमपुरुषस्य तद्योगात् क्षेत्रज्ञेन योगादृते क्षेत्रज्ञस्य प्रकृतियोगो न भवति। तर्हि किमविद्यया क्षेत्रज्ञस्य बन्धः स्यादित्यत आह—नाविद्यातोऽप्यवस्तुना बन्धायोगात् ।०। क्षेत्रज्ञस्यात्मनो नाविद्यया बन्धः स्यात्। कस्मात्? अवस्तुना वस्तुनो बन्धस्यायोगात्। यथा शशविषाणेन वेधो न भवति। अविद्या ह्यवस्तु वस्तु चात्मेति। नन्वविद्या नावस्तु भवतीति चेत् तदाह—वस्तुत्वे सिद्धान्तहानिः ।०। अविद्याया वस्तुत्वे स्वीकृते त्रिगुणवैषमात्मिकायास्तस्याः कार्य्याणामहङ्कारादीनां सर्व्वेषां वस्तुत्वे नित्यत्वप्रसङ्गात् सर्व्वेषां जगतामनित्यत्वसिद्धान्तस्य हानिः स्यात्। तत्र क्षेत्रज्ञवदविद्याया अपि नित्यत्वमनादित्वमिति चेत्, तत्र दोषमाह—विजातीयद्वैतापत्तिश्च। अविद्याया वस्तुत्वे प्रकृतिवदन्यवस्तुत्वे विजातीयद्वैतापत्तिः सजातीयद्वैतत्वन्तु न द्वैतत्वं स्यात्। तत्रापि। विरुद्धोभयरूपा चेत् ।०। विरुद्धं सच्चासच्च तदुभयात्मिकैवैका विद्या भवतीति चेत्, न तावदपदार्थाप्रतीतेः ।०। परस्परविरुद्धधर्म्मसदसदुभयात्मिका त्वविद्या भवतीति चेन्न। कस्मात्? तावत् अपदार्थाप्रतीतेः। सदसदात्मिकायास्तस्याः कार्य्यस्य तावदपदार्थस्यासदंशीभूतस्याप्रतीतेः। वस्तुभूतसदंशात्मकत्वेन प्रतीतेः सदात्मिकैवाविद्या। तर्हि चाविद्या न षट्सु पदार्थेषु कोऽपि पदार्थस्तत्राह—न वयं षट्पदार्थवादिनो वैशेषिकादिवत् ।०। न खलु षडेव पदार्था इति नियमः, षट्पदार्थादप्यतिरिक्तपदार्थदर्शनात्। षट् पदार्थाः प्रमेयाणि तेभ्योऽतिरिक्तं प्रमेयमप्यस्ति। तस्माद् अविद्या नापदार्थो न चावस्तु। न च षट्सु पदार्थेषु किमपि। तस्मान्न पदार्थप्रतीतिः पदार्थत्वादविद्यायाः। तर्हि द्रव्यगुणादिपदार्थानियमे किमयौक्तिकं यत् तत् पदार्थत्वेन संगृह्यत इत्यत आह—अनियमत्वेऽपि नायौक्तिकस्य संग्रहोऽन्यथा बालोन्मत्तादिसमत्वम् ।०। द्रव्यगुणकर्म्मादिपदार्थनियमाभावादपि न

खलु युक्त्यसिद्धं स्वेच्छया यत् तत् किमपि संगृह्यते। परन्तु यौक्तिकस्य पदार्थस्य संग्रहः क्रियते। न तु अस्ति खपुष्पमस्ति शशविषाणमित्येवमलोकस्य संग्रहः क्रियते। अन्यथा यदि यौक्तिकस्य संग्रहमात्रं न कृत्वा यौक्तिकायौक्तिकस्य संग्रहः क्रियते, तदा बालोन्मत्तादीनां खपुष्पशशविषाणादिवचनसमं यथा तथोक्तिकरणं स्यात्।

ननु पुरुषस्यानादिकार्य्यभूतविषयवासनोपरागाद् बन्धः स्यादित्याशङ्कायामाह—नाऽनादिविषयोपरागनिमित्तकोऽप्यस्य ।०। अस्य खलु क्षेत्रज्ञस्य पुरुषस्य अनादिना प्रवाहरूपेण कार्य्यभूतेन विषयेण भोग्येनोपरागनिमित्तकोऽपि बन्धो न भवति। यथा जवादिकुसुमादुपरागेण स्फटिकादिषु रक्ततादिरिति। कस्मात्? न वाह्याभ्यन्तरयोरुपरज्योपरञ्जकभावोऽपि देशव्यवधानात् श्रुघ्नपाटलिपुत्रस्थयोरिव ।०। वाह्यानां सदसद्भावानामिन्द्रियविषयाणां तृष्णाजनकानामाभ्यन्तरस्य क्षेत्रज्ञस्य देशव्यवधानात् महदहङ्कारमनोमनोमयप्राणप्राणमयान्नमयैर्देशैर्व्यवधानादुपरज्योपरञ्जकभावो न सम्भवति यथा श्रुघ्नपाटलिपुत्रयोर्बहुदेशव्यवधानान्नोपरज्योपरञ्जकता सम्भवति। नन्वस्ति सान्निध्यं विषयात्मनोर्यथेन्द्रियाणामन्तःशरीरस्थानां वाह्येष्वर्थेषु सान्निध्याद् ग्रहणं भवतीत्याशङ्कायामाह—द्वयोरेकदेशलब्धोपरागान्न व्यवस्था ।०। यदिन्द्रियाणामर्थेषु सन्निकर्षवदात्मनो वाह्येषु विषयेषु सन्निकर्षाद् विषयोपरागेणात्मनो बन्ध उच्यते, तदात्मन एकदेशेनैव बन्धः स्यादेकदेशेन मुक्त एव वर्त्तते इत्येकदेशलब्धोपरागाद्द्वयोर्बन्धमोक्षयोर्यौगपद्यं भवतीत्यतो व्यवस्था न भवति।

ननु तर्हि चादृष्टवशाद् बन्धः स्यादित्याशङ्कते। अदृष्टवशाच्चेत्। पुरुषबन्धः स्यादित्युच्यते तदा। न द्वयोरेककालायोगादुपकार्य्योपकारकभावः। आत्मा क्षेत्रज्ञो यदि त्वदृष्टवशाद्बद्ध एतद्राशिपुरुषरूपेण जायते, तदा तयोर्द्वयोरात्माऽदृष्टयोरेककालयोगाभावादुपकार्य्योपकारकभावो न स्यात् न ह्येककालमात्मा चादृष्टश्च वर्त्तते। पूर्व्वं यदि नात्माऽवर्त्तिष्यन्न तदात्मा नित्योऽभविष्यत्। अदृष्टन्त्वात्मना बद्धेन राशिपुरुषरूपेण भूत्वा कृतस्य वैधावैधकर्म्मणः फलं धर्म्माधर्म्ममुच्यते। तस्यादृष्टस्य चात्मबन्धे तु नास्त्युपकारकता। तत्राशङ्कते। पुत्रकर्म्मवत् इति चेत्। पुत्रेणोपकार्य्यं तस्य पुत्रस्य संस्कारकर्म्म। पुत्रस्य तदधिकरणत्वात्। पुत्रो हि संस्कार्य्यस्तं पुनः संस्कार उपकुरुते। वीजगर्भादिदोषापनयादिति पुत्रकर्म्मणोरुपकार्य्योपकारकभाववदात्मादृष्टयोर्जनकजातयोरुपकार्य्योपकारकत्वमस्त्येवेति चेत्। नास्ति हि तत्र

स्थिर एकात्मा यो गर्भाधानादिना संस्क्रियते। पुत्रकर्म्मवदुपकार्य्योपकारकभावोऽस्त्यात्मादृष्टयोरिति चेन्न। कस्मात्? अस्ति हीत्यादि। हि यस्मात् तत्र पुत्रकर्म्मणि स्थिर एक एवात्मा य आत्मा गर्भाधानादिना संस्क्रियते। न तु गर्भाधानादिना कर्म्मणा संस्कृतः पुत्र एवात्मा तत्पुत्ररूपत्वेन स्थिरत्वं व्याहन्यते। तथात्मनोऽदृष्टेन न स्थिरत्वं व्याहन्यते।

ननु गर्भाधानादिसंस्कारैर्गुणान्तरमुत्पद्यते तेनोपनयनादिना वेदाध्ययनादिक्षमत्वेन विशिष्टरूपो द्विजो भवतीति नास्ति तत्रैकात्मस्थिरतेति चेत् तत्राह—स्थिरकार्य्यासिद्धेः क्षणिकत्वम् ।०। बद्धस्यादृष्टवशतो जातत्वे क्षणिकत्वं स्यात्। कस्मात्? संस्कारसंस्कार्य्ययोरुपकारकोपकार्य्यत्वेऽपि यवनाद्यन्नादिसेवने पूर्व्वसंस्कारलोपे पुनः संस्कार्य्यत्वविधानात् संस्कारस्य स्थिरकार्य्यासिद्धेः तद्वददृष्टस्यापि नाशे बन्धस्य नाशात् प्रतिक्षणं बन्धतन्नाशयोरापत्तिः स्यादिति। अत्रोत्तरमाह वादी। न प्रत्यभिज्ञाबाधात् ।०। पुत्रकर्म्मणोरिवात्मादृष्टयोरुपकार्य्योपकारकभावे स्थिरकार्य्यासिद्धेर्बन्धस्य क्षणिकत्वं न। कस्मात्? प्रत्यभिज्ञाबाधात्। यथा योऽसौ पुत्र उपनीतः स एवायं यवनाद्यन्नादिदोषात् पुनरुपनीयते इति पुनरुपनयनकर्म्मणि प्रत्यभिज्ञया कार्य्यस्योपनयनस्यास्थिरत्वस्य बाधात्। तथात्मा योऽसौ कृतेन केनचित् कर्म्मफलेन बद्धः, स एवायं तत्कर्म्मफलनाशेऽप्यपरकर्म्मफलेन बध्यते। इति प्रत्यभिज्ञया कार्य्यस्य फलानुबन्धिकर्म्मणोऽस्थिरत्वस्य बाधात्। ननु यद्वस्त्रं शुक्लमहं पर्य्यधां तदेवेदं कृष्णमलिनमिति रजकेन कृतस्य वस्त्रसंस्कारस्य शुक्लगुणाधानस्य नाशदर्शनात् कार्य्याणां स्थैर्य्यस्यासिद्धेर्बन्धस्यादृष्टकृतस्य क्षणिकत्वं तददृष्टस्य नाशात् इत्याशङ्कायामाह। श्रुतिन्यायविरोधाच्च ।०। श्रुतिर्हि। असद्वा इदमग्र आसीत् ततो वै सदजायतेति। तस्य च्छान्दोग्ये ब्राह्मणः। असदेवेदमग्र आसीत् तत् सदासीत्। तत् सदभवदिति। पुनश्च यदुक्तं सदेव सौम्येदमग्र आसीदेकमेवाद्वितीयम्। तद्धैक आहुः। असदेवेदमग्र आसीदेकमेवाद्वितीयं तस्मादसतः सज्जायेतेति। तत्र न्यायः। कुतस्तु खलु सौम्यैवं स्यादिति होवाच कथमसतः सज्जायेतेति सत्त्वेव सौम्येदमग्र आसीदेकमेवाद्वितीयमिति, असत्पदेन सदेव वस्तु तस्मात् सतो जन्म न त्वसतः। खल्ववस्तुतो वस्तुनः सतो जन्मेति श्रुतिन्याययोर्विरोधाच्चात्मनोऽदृष्टतो बन्धस्य न क्षणिकत्वं सत्कार्य्यत्वेनादृष्टस्य नित्यत्वात्। नन्वसद्वा इदमग्र आसीत् ततो वै सदजायतेत्यस्य मन्त्रस्य सदेव सौम्येदमग्र आसीदेकमेवाद्वितीयम्

इति श्रुतेः। असदेवेदमग्र आसीदेकमेवाद्वितीयं तस्मादसतः सज्जायेतेति श्रुत्या सह विरोधात् क्षणिकत्वमेव संशेते इत्याकाङ्क्षायामाह। दृष्टान्ताऽसिद्धेश्च।०। पुत्रकर्म्मवदिति दृष्टान्तेन चादृष्टवशादात्मनो बन्धस्य क्षणिकत्वस्यासिद्धेश्च नादृष्टवशादात्मनो बन्धस्य क्षणिकत्वमिति। दृश्यते ह्युपनयनसंस्कारो यावज्जीवं वर्त्तते विवाहादिना न नश्यति यवनाद्यन्नादिदोषाच्च पापापनयनार्थं पुनरुपनीयते, न तु पूर्व्वोपनयनं नश्यति। अन्यथा पुनरुपनयने षोड़शादिवर्षात्यये व्रात्यत्वापत्तिरिति। अत्र सिद्धान्तमाह। युगपज्जायमानयोर्न कार्य्यकारणभावः।०। नियतपूर्व्ववर्त्ति हि कारणं, पश्चादुत्पद्यते कार्य्यमिति युगपदेककालं जायमानयोर्द्वयोर्न कार्य्यकारणभाव उपपद्यते विनिगमनाभावात्। तस्मादुपनयनसंस्कारो यदा क्रियते तदैव न स वेदाध्ययनाद्यधिकारी भवति कृतोपनयनस्तु भवतीति न युगपज्जायमानौ तावुपनयनवेदाध्ययनाद्यधिकारौ। तद्वद्भावस्त्वत्र नास्ति यदा हि पुरुषो न बध्यते न तदा शुभाशुभफलकर्म्माणि करोति बद्ध एव करोति, तत् कथं कर्म्मफलेनादृष्टेन पूर्व्वाप्रसिद्धेन बन्धः स्यादिति भावः।

ननु कस्मान्न युगपज्जायमानयोः कार्य्यकारणभाव इत्यत आह। पूर्व्वापाये उत्तरायोगात्।०। पूर्व्वापाये पूर्व्वस्य प्रकृतिभूतकारणस्यापाये सत्युत्तरस्य कार्य्यस्यायोगात्। कारणस्यापायकाले हि कार्य्योत्पत्तिर्न तु कारणोत्पत्तिकाले, तस्माद् युगपज्जायमानयोर्न कार्य्यकारणभाव इति। ननु बध्यमानः कर्म्माणि कुरुते शुभाशुभानीति यौगपद्येन कार्य्यकारणभावः सम्भवतीत्यत आह। तद्भावे तदयोगादुभयव्यभिचारादपि न।०। तद्भावे यदा कारणं जायते तदा तस्य कार्य्यस्यायोगात्। उभयव्यभिचारादपि। यद्यस्य कारणमुच्यते तत् तस्य कार्य्यं कथं न स्यादित्युभयस्य कार्य्यत्वमुभयस्य कारणत्वं व्यभिचरतीत्यतो न युगपज्जायमानयोः कार्य्यकारणभाव इति। ननु तर्हि कारणस्य पूर्व्ववर्त्तित्वनियमे यो यस्य पूर्व्ववर्त्ती स तस्य किं हेतुरित्यत आह। पूर्व्वभावमात्रेणानियमः।०। अन्यथा यदि सिद्धिर्भवति तदा स पूर्व्ववर्त्ती न कारणत्वेन नियम्यते। यत् पूर्व्ववर्त्तिनं विना कार्य्यं न नियमतः सिध्यति तत् तस्य कारणमिति न पूर्व्ववर्त्तित्वमात्रेण नियम इति। यथा रासभाभावेऽन्येनापि घटार्थं मृदानयनं भवतीति न रासभो घटोत्पत्तौ नियतकारणमिति। ननु तर्हि पारत्रिकगतिविशेषात् किं बन्धः स्यादित्यत आह। न गतिर्विशेषात्।०। पारत्रिकगतिविशेषान्न बन्धः। कस्मात्? निष्क्रियस्य तदसम्भवात्।०।

निष्क्रियस्य क्षेत्रज्ञस्य गतेरसम्भवात् । ननु श्रूयते पञ्चविधा गतिरित्याशङ्क्याह । गतिश्रुतिरप्युपाधियोगादाकाशवत् ।०। यथा घटाद्युपाधिमानाकाशश्चलति तथात्मनो गतिर्जीवोपाधियोगात् । तस्माद् विपर्य्ययाद् बन्ध इति निष्कर्षः । इति चतुर्व्विधबुद्धियोगात् पुरुषस्य बन्ध उक्त इति । नन्वेवं बद्धः पुरुषः कथं पुनःपुनर्जायते लोके मृत्वा च परलोकं गच्छति । तत्र कारणं वीजभूतं यत् तत् खलूक्तं प्रश्नोपनिषदि—संवत्सरो वै प्रजापतिस्तस्यायने दक्षिणञ्चोत्तरञ्च । तद् ये ह वै तदिष्टापूर्त्ते कृतमित्युपासते । ते चान्द्रमसमेव लोकमभिजायन्ते त एव पुनरावर्त्तन्ते । तस्मादेत ऋषयः प्रजाकामा दक्षिणं प्रतिपद्यन्ते । एष ह वै रयियः पितृयानः इति । मुण्डकोपनिषदि च । प्लवा ह्येते अदृढ़ा यज्ञरूपा अष्टादशोक्तमवरं येषु कर्म्म । एतच्छ्रेयो येऽभिनन्दन्ति मूढ़ा जरामृत्युं पुनरेवापि यान्ति । अविद्यायामन्तरे वर्त्तमानाः स्वयंधीराः पण्डितम्मन्यमानाः । जङ्घन्यमाना पारयन्ति मूढ़ा अन्धेनैव नीयमाना यथान्धाः । अविद्यायां वहुधा वर्त्तमाना वयं कृतार्था इत्यभिनन्दन्ति वालाः । यत्कर्म्मिणो न प्रवेदयन्ति रागा तेनातुराः क्षीणलोकाश्चरन्ते । इष्टापूर्त्तं मन्यमाना वरिष्ठं नान्यच्छ्रेयो वेदयन्ते प्रमूढ़ाः । नाकस्य पृष्ठे ते सुकृतेऽनुभूत्वेमं लोकं हीनतरं वा विशन्ति । इति । छान्दोग्योपनिषदि च । स जातो यावदायुषं जीवति तं प्रेतदिष्टमितोऽग्नय एव हरन्ति यत एवेतो यतः सम्भूतो भवति । तं प्रेतदिष्टं प्रेतस्य मृतस्य दिष्टं भाग्यं तं पुरुषं श्मशाने अग्नये दाहार्थमेव बान्धवैर्नीत्वा यैरग्निभिर्दह्यमानं तेऽग्नय इतो हरन्ति । ततः प्रेतशरीराद्दह्यमानाद् दिष्टं भाग्यं भास्वरपुरुषरूपे उत्तिष्ठति । तदुक्तं वृहदारण्यके च । स जीवति यावज्जीवत्यथ यदा म्रियते । अथैनमग्नयो हरन्ति तस्याग्निरेवाग्निर्भवति । समित् समित् धूमो धूमोऽर्च्चिरर्च्चिरङ्गारा अङ्गारा विस्फुलिङ्गा विस्फुलिङ्गास्तस्मिन्नेतस्मिन्नग्नौ देवाः पुरुषं जुह्वति, तस्या आहुत्याः पुरुषो भास्वरवर्णो भवति इति । स एव दिष्टपुरुषो धूमादिकमभिसम्भवंश्चान्द्रमसं लोकं प्रतिपद्यते । उक्तञ्च गीतायाम् । धूमो रात्रिस्तथा कृष्णः षण्मासा दक्षिणायनम् । तत्र चान्द्रमसं ज्योतिर्योगी प्राप्य निवर्त्तते इति । अत्र योगी इष्टापूर्त्तादिकर्म्मयोगीति । उक्तञ्च च्छान्दोग्ये । अथ य इमे ग्राम इष्टापूर्त्ते दत्तमित्युपासते ते धूममभिसम्भवन्ति । धूमाद् रात्रिं रात्रेरपरपक्षमपरपक्षाद् यान् षड्दक्षिणैति मासांस्तान्नैति संवत्सरमभिप्राप्नुवन्ति मासेभ्यः पितृलोकं पितृलोकादाकाशमाकाशाचन्द्रमसमेष सोमो राजा तद्देवानामन्नं तं देवा भक्षयन्ति । तस्मिन् यावत् सम्पातमुषित्वाऽथैतमेवाध्वान पुनर्निवर्त्तन्ते यथैत-

माकाशमाकाशाद्वायुं वायुर्भूत्वा धूमो भवति धूमो भूत्वाभ्रं भवति अभ्रं भूत्वा मेघो भवति मेघो भूत्वा प्रवर्षति। त इह व्रीहियवा ओषधिवनस्पतयस्तिलमाषा इति जायन्ते। अतो वै खलु दुर्निष्प्रपतरं यो यो ह्यन्नमत्ति यो रेतः सिञ्चति तद्भूय एव भवति। तद् य इह रमणीयचरणा अभ्याशो ह यत् ते रमणीयां योनिमापद्येरन् ब्राह्मणयोनिं वा क्षत्रिययोनिं वा वैश्ययोनिं वा। अथ य इह कपूयचरणा अभ्याशो ह यत् ते कपूयां योनिमापद्येरन् श्वयोनिं शूकरयोनिं वा चाण्डालयोनिं वा। अथैतयोः पथो न कतरेण च न। तानीमानि क्षुद्राण्यसकृदावर्त्तीनि भूतानि भवन्ति जायस्व म्रियस्वेति। एतत् तृतीयं स्थानं तेनासौ लोके न सम्पूर्य्यते। तस्माज्जुगुप्सेति। तदेष श्लोको भवति। स्तेनो हिरण्यस्य सुरां पिबंश्च गुरोस्तल्पमावसन् ब्रह्महा चैते। पतन्ति चत्वारः पञ्चमश्चाचरंस्तैरिति।

ते धूममभिसम्भवन्तीति। तेषां पुण्यवताञ्चापुण्यवताञ्च मृत्वा स्वर्लोकं वा नरकं वा गतानां चिताग्नौ दाहतः शरीरादुत्थिता दिष्टपुरुषाः धूममभिसम्भवन्ति। इत्येवं चन्द्रलोकमभिसम्भवन्तो भवन्ति। सोमो राजा देवानामन्नम्। तस्मिन् यावत् सम्पातमिति। तस्मिंश्चन्द्रमण्डले स्वर्ग-नरकगतानां पुरुषाणां पुण्यपापफलभोगाद् यावत् पुनरिह सम्पातः स्यात् तावत् तत्रोषित्वाऽथानन्तरमेतं पन्थानं निवर्त्तन्ते। यथा खल्वितो लोकाद् गत-स्तथैव क्रमेणागतः स्याच्चन्द्रलोकादाकाशमित्यादि। तद् यथोक्तं छान्दोग्ये बृहदारण्यके च। उद्दालकगौतमं प्रति प्रवाहणो जैवलिर्नाम राजोवाच। असौ वाव द्युलोको गौतमाग्निस्तस्यादित्य एव समित् रश्मयो धूमोऽहरर्च्चिश्चन्द्रमा अङ्गारा नक्षत्राणि विस्फुलिङ्गास्तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वति तस्या आहुतेः सोमो राजा सम्भवति। पर्ज्जन्यो वाव गौतमाग्निस्तस्य वायुरेव समित् अभ्रं धूमो विद्युदर्च्चिरशनिरङ्गारा ह्रादिन्यो विस्फुलिङ्गास्तस्मिन्नेतस्मिन्नग्नौ देवाः सोमं राजानं जुह्वति तस्या आहुतेर्वर्षं सम्भवति। पृथिवी वाव गौतमाग्निस्तस्याः सम्वत्सर एव समित् आकाशो धूमो रात्रिरर्च्चिर्दिशोऽङ्गारा अवान्तर्दिशो विस्फुलिङ्गास्तस्मिन्नेतस्मिन्नग्नौ देवा वर्षं जुह्वति तस्या आहुतेरन्नं सम्भवति। पुरुषो वाव गौतमाग्निस्तस्य वागेव समित् प्राणो धूमो जिह्वार्च्चिश्चक्षुरङ्गाराः श्रोत्रं विस्फुलिङ्गास्तस्मिन्नेतस्मिन्नग्नौ देवा अन्नं जुह्वति तस्या आहुते रेतः सम्भवति। योषा वाव गौतमाग्निस्तस्या उपस्थ एव समित् यदुपमन्त्रयते स धूमो योनिरर्च्चिर्यदन्तः करोति तेऽङ्गारा अभिनन्दा

विस्फुलिङ्गास्तस्मिन्नेतस्मिन्नग्नौ देवा रेतो जुह्वति तस्या आहुतेर्गर्भः सम्भवति। इति पञ्चम्यामाहुतावापः पुरुषवचसः सम्भवन्तीति। स उल्वावृतो गर्भो दश वा मासानन्तः शयित्वा यावद्वाथ जायते। स जातो यावदायुषं जीवति। इति। ऊर्द्ध वर्षिणो मनुष्या यज्ञेन तेन तृप्यन्ति देवाः अधो वर्षन्ति। तद् यथा। असौ वावेत्यादि। देवाः श्रद्धां जुह्वतीति लोके ये देवास्ते मनुष्याणां श्रद्धाम्, अन्नं सम्भवतीत्यन्ते बोध्याः। पुरुषो वावेत्यादौ देवाः शारीराः सूक्ष्मरूपेण शरीरमिद-मास्थाय वर्त्तन्ते। तेन पुरुषो यदन्नमत्ति तद्देवा जुह्वति पुरुषे अग्नौ रेतः शुक्रं स्त्रीपुरुषयोर्बोध्यं न त्वार्त्तवम्। स्त्रीद्वयसम्भोगेऽपि अनस्थिपुत्रोत्पत्तौ स्त्रीशुक्रार्त्तवसंयोगात् न त्वार्त्तवद्वयसंयोगात्। एवं योषा वावेत्यादौ च देवाः शारीरा एव योषायां पुरुषो यद् रेतः सिञ्चति तद् देवाः शारीरास्तस्यां योषायामग्नौ जुह्वतीति बोध्यम्। इति। उक्तञ्च मनुना स्मृतिशास्त्रे। यद्याचरति धर्म्मं स प्रायशोऽधर्म्ममल्पशः। तैरेव चावृतो भूतैः स्वर्गे सुख-मुपाश्नुते। यदि तु प्रायशोऽधर्म्मं सेवते धर्म्ममल्पशः। तैर्भूतैः स परित्यक्तो यामीः प्राप्नोति यातनाः। यामीस्ता यातनाः प्राप्य स जीवो वीतकल्मषः। तान्येव पञ्च भूतानि पुनरप्येति भागशः। पञ्चभ्य एव मात्राभ्यः प्रेत्य दुष्कृतिनां नृणाम्। शरीरं यातनार्थीयमन्यदुत्पद्यते ध्रुवम्। तेनानुभूय ता यामीः शरीरेणेह यातनाः। तास्वेव भूतमात्रासु प्रलीयन्ते विभागशः। सोऽनुभूयाऽसुखो-दर्कान् दोषान् विषयसङ्गजान्। व्यपेतकल्मषोऽभ्येति तावेवोभौ महौ-जसौ। यः करोति तु कर्म्माणि स भूतात्मोच्यते बुधैः। योऽस्यात्मनः कारयिता तं क्षेत्रज्ञं प्रचक्षते। जीवसंज्ञोऽन्तरात्मान्यः सहजः सर्व्वदेहिनाम्। येन वेदयते सर्व्वं सुखं दुःखञ्च जन्मसु। तावुभौ भूतसंपृक्तौ महान् क्षेत्रज्ञ एव च। उच्चावचेषु भूतेषु स्थितं तं व्याप्य तिष्ठतः। इति। धर्म्मकर्म्मफल-भोगं स्वर्गे खल्विन्द्रलोकादौ सुखं धार्म्मिको भुङ्क्ते अधर्म्मफलभोगं यामीः यातना दुःखं यमलोके पापी भुङ्क्ते। तयोः शरीरदाहे शरीरात् समुत्थित-भाग्यपुरुषश्चन्द्रलोके वर्त्तते। यदा तयोः स्वर्गनरकभोगावसानं भवति पुनरिह जन्मग्रहणकाल उपतिष्ठति तदा चतसृभिराहुतिभिः स भाग्यपुरुषः पुरुषे स्त्रियाञ्च रेतोरूपो भवति। यस्य यो भाग्यपुरुषस्तस्य जन्मग्रहणायेह रेतोरूपो भूत्वा योषायां पुंसा निषिक्तः स्वसम्बन्धवता तेन स्वर्गस्थेन नरकस्थेन वा भोगाव-सानवताऽवक्रान्त एकान्ततो गर्भरूपेणाभिनिष्पद्यते। इति ॥ ५१ ॥

तत्र श्लोकः।

**प्रश्नाः पुरुषमाश्रित्य त्रयोविंशतिरुत्तमाः।**
**कतिधापुरुषीयेऽस्मिन् निर्णीतास्तत्त्वदर्शिना॥ ५२॥**

**इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते शारीरस्थाने कतिधापुरुषीयं शारीरं नाम प्रथमोऽध्यायः॥ १॥**

गङ्गाधरः—अध्यायार्थसंग्रहार्थमाह—तत्र श्लोक इति। प्रश्ना इत्यादि। पुरुषमाश्रित्य पुरुषविषये त्रयोविंशतिरुत्तमाः प्रश्नास्त्वस्मिन् कतिधापुरुषीयेऽध्याये तत्त्वदर्शिनात्रेयेण पुनर्व्वसुना निर्णीता इति॥ ५२॥

अध्यायञ्च समापयति—अग्नीत्यादि। पूर्व्ववत् सर्व्वं व्याख्यातमिति।

इति श्रीगङ्गाधरकविरत्नकविराजविरचिते चरकजल्पकल्पतरौ चतुर्थस्कन्धे शारीरस्थानजल्पे कतिधापुरुषीयशारीरनामप्रथमाध्याय-जल्पाख्या प्रथमशाखा॥ १॥

चक्रपाणिः—'सर्व्ववित्' इत्यादिप्रश्नस्योत्तरम्—अतःपरमित्यादि। ब्रह्मभूत इति प्रकृत्यादि-रहितः। 'चिह्नं यस्य न विद्यते' इत्यनेन मुक्तात्मनः प्राणापानाद्यात्मलिङ्गाभावाद्गमकं चिह्नं नास्त्येवेति दर्शयति। न क्षरत्यन्यथात्वं न गच्छतीत्यक्षरम्। अविद्यमानं लक्षणं यस्येत्यलक्षणम्। एतस्यैव मोक्षस्येतरपुरुषाज्ञेयतां दर्शयति—ज्ञेयमित्यादि। ब्रह्मविदामेवात्र मनः प्रस्येति, नाज्ञानामहङ्कारादिगृहीतानामित्यर्थः। संग्रहो व्यक्तः॥ ५१।५२॥

इति चरकचतुराननश्रीचक्रपाणिदत्तविरचितायामायुर्व्वेददीपिकायां चरकतात्पर्य्यटीकायां शारीरस्थाने कतिधापुरुषीयं शारीरं नाम प्रथमोऽध्यायः॥ १॥

## द्वितीयोऽध्यायः ।

**अथातोऽतुल्यगोत्रीयं शारीरं व्याख्यास्यामः,**
**इतिह स्माह भगवानात्रेयः ॥ १ ॥**

**अतुल्यगोत्रस्य रजःक्षयान्ते रहोविसृष्टं मिथुनीकृतस्य ।**
**किं स्याच्चतुष्पात्प्रभवञ्च षड्भ्यो यत् स्त्रीषु गर्भत्वमुपैति पुंसः ॥ २**

गङ्गाधरः—अथैवं बद्धः पुरुषो यः षड्धातुकः स पुनःपुनर्यदिह जायते मनुष्ययोनौ विविधरूपस्तत् कथं कुतः कारणाज्जायते तद्विज्ञानार्थमतुल्यगोत्रीयं शारीरमारभते—अथात इत्यादि । अतुल्यगोत्रस्येतिवाक्यस्थातुल्यगोत्रेति-पदमधिकृत्य कृतः शारीरोऽध्याय इत्यतुल्यगोत्रीयः शारीरोऽध्यायः । शेषं पूर्ववद् व्याख्येयम् ॥ १ ॥

गङ्गाधरः—अथ प्रश्नः—अतुल्यगोत्रस्येत्यादि । यो यया न तुल्यो गोत्रः स तस्या अतुल्यगोत्रः । अपत्यं पौत्रप्रभृतिगोत्रमिति पाणिनिः । अतुल्य-गोत्रस्य पुरुषस्यातुल्यगोत्राया नार्य्या मासं पूर्व्वसञ्चितरजसो मासान्ते प्रवृत्तस्य त्रिरात्रादूर्द्ध्वं क्षयोऽल्पत्वं भवति, तस्यान्तेऽल्पत्वरूपेणानुबन्धे षोडश-रात्रपर्य्यन्तं तया सह मिथुनीकृतस्य मैथुनमापन्नस्य रहोविसृष्टं षड्भ्यो रसेभ्यः प्रभवं चतुष्पाद वाय्वादिसक्रियचतुर्भूतात्मकसम्पूर्णमूर्त्तिमत् यत् सर्व्वासु स्त्रीषु गर्भत्वमुपैति तत् किं स्यादिति प्रश्नः । यत् सर्व्वासु स्त्रीषु गर्भत्वमुपैतीत्युक्त्या ख्यापितम्, पितृयानेन प्रत्यागतवीजधातुदिष्टाधिष्ठित-षड्धातुप्रभवचतुष्पाद्धातुविषयोऽयं प्रश्नः । न तु वीजधातुदिष्टानधिष्ठित-षड्धातुप्रभवधातुविषयो यन्न गर्भत्वमापद्यते इति । नन्वतुल्यगोत्रस्येति

चक्रपाणिः—पूर्व्वाध्याये शरीरस्यादिसर्गं आध्यात्मिकनैष्ठिकमोक्षरूपचिकित्सायुक्त उक्तः, सम्प्रति गर्भादिसर्गमभिधातुमतुल्यगोत्रीयोऽभिधीयते । अतुल्यगोत्रस्येति स्त्रिया अतुल्यगोत्रस्य पुंसः । तुल्यगोत्रीयके हि मैथुनेऽधर्म्मो भवति धर्म्मशास्त्रेषु निषिद्धत्वात् । रजःक्षयान्ते इति रजःप्रवृत्त्यन्ते । 'अन्ते'-इतिपदेन रजःप्रवृत्त्यहं निषेधयति । रहोविसृष्टमिति विजने विसृष्टम् । शुक्रविसृष्टिश्च विजन एव प्रतिबन्धकलज्जाभावात् सम्यग् भवतीति 'रहः' इत्यनेन दर्शयति । मिथुनीकृतस्येत्यनेन सम्यङ्मैथुनप्रयोगं दर्शयति, विपरीतसुरतादींश्च निषेधयति । चतुष्पात् षट्-

शुक्रं तदस्य प्रवदन्ति धीरा यद्धीयते गर्भसमुद्भवाय।
वाय्वग्निभूम्यब्गुणपादवत् तत् षड्भ्यो रसेभ्यः प्रभवश्च तस्य॥ ३

वचनेन परजायायां मिथुनीकृतस्य रहोविसृष्टविषये किमयं प्रश्नो न तु स्वजायायामतुल्यगोत्रत्वाभावादिति? नैवं, शास्त्रे हि धर्म्म्यविषयं प्रष्टा पृच्छति चोपदेष्टा चोपदिशति, न त्वधर्म्म्यविषयम्। धर्म्म्यं हि वैधं कर्म्म भवत्यवैधमधर्म्म्यम्। तत्र वैधं स्वल्पमनल्पमवैधमित्यनल्पानामवैधानां प्रश्नश्च उत्तरञ्च न युज्यते। स्वल्पस्यापि वैधस्य ज्ञानेनानल्पानामवैधानां ज्ञान-सिद्धेः। तस्मादयं धर्म्म्यविषय एव प्रश्नः। धर्म्म्यो हि मिथुनीभावः पुंसः स्वजायायां, न परजायायामिति। ननु जाया पुंसस्तुल्यगोत्रा न त्वतुल्यगोत्रा कथमतुल्यगोत्रस्येत्युपपद्यते इति चेत्? तत्र ब्रूमः। शास्त्रे धर्म्म्यस्य प्रष्टृणा-मुपदेष्टृणाञ्चेयं रीतिः, यत्र वर्त्तमानावस्थया प्रश्न उत्तरं वा न युज्यते तत्र पूर्व्वावस्थयैव प्रश्न उत्तरं वा क्रियते। यथा मनुरुपादिशत्। असपिण्डा च या मातुरसगोत्रा च या पितुः। सा प्रशस्ता द्विजातीनां दारकर्म्मणि मैथुने। इत्यत्र पितुः सगोत्रावर्ज्जनेन मातुः सपिण्डावर्ज्जनसिद्धौ पुनर्मातुरसपिण्डेति वचनानर्थक्यम्, न च मातृपदेन तात्पर्य्यानुपपत्तितो लक्षणया मातामह उच्यते। पश्यति हि त्वाचार्य्यः। अस्ति मातृशब्दश्चास्ति मातामहशब्दश्चेति। मातामहस्यासपिण्डा चासगोत्रा च या पितुरित्येवं मुख्यार्थपदं नोक्त्वा यदसपिण्डा च या मातुरित्युक्तं तेन न लक्षणया मातामहे तात्पर्य्यम्। किं तर्हि? मातुः वर्त्तमानावस्थया तूपदेशानुपपत्तौ पूर्व्वावस्थयैवोपदेशः कृतः। प्राग् विवाहात् मातुर्या सपिण्डा सा वर्जनीयेति। एवमत्रापि। प्राग् विवाहाद् या न तुल्य-गोत्रा सा विवाहे तुल्यगोत्राप्यतुल्यगोत्रा तदितरा त्वधर्म्म्येति। तस्याः प्राग विवाहादतुल्यगोत्रस्य पत्युर्जायाया रजःक्षयान्त इत्यर्थ इति प्रश्नः॥ २॥

गङ्गाधरः—अस्योत्तरमाह—शुक्रमित्यादि। अतुल्यगोत्रेण पुंसा रजः-क्षयान्ते मिथुनीभूतेन स्त्रियां गर्भसमुद्भवाय रहोविसृष्टं यद्धीयते तदस्य पुंसः

प्रभवत्वे उत्तरग्रन्थे व्यक्ते। अज्ञ शिष्यप्रश्नतया निवेशितो ग्रन्थः अज्ञशिष्यार्थोवाच्यंसम्मतिमात्रार्थो ज्ञेयः। तेन यः शिष्यश्चतुष्पदां विशेषं जानाति, स कथं शुक्रशब्दाभिधेयं वेत्तीति न वाच्यम्॥ १।२॥

चक्रपाणिः—प्रश्नस्योत्तरं—शुक्रमित्यादि। धीयत आरोप्यते इत्यर्थः। वाय्वादिपादवदिति वाय्वादयः एव गुणवत्त्वमधिकं करोति, तेन प्रशस्तगुणवतामेव वाय्वादीनां विशुद्धशुक्रारम्भकत्वमिति

संपूर्णदेहः समये सुखश्च गर्भः कथं केन च जायते स्त्री।
गर्भं चिराद्विन्दति सप्रजापि भूत्वाथवा नश्यति केन गर्भः ॥४
शुक्रासृगात्माशयकालसम्पद् यस्योपचाराश्च हितैस्तथार्थैः।
गर्भश्च काले च सुखी सुखश्च संजायते संपरिपूर्णदेहः ॥ ५ ॥

शुक्रं पितृयानेन प्रत्यागतबीजधात्वधिष्ठितं षड्रसप्रभवं वाय्वादिचतुर्भूतरूप-चतुष्पाच्च धीराः प्रवदन्ति। वाय्वादीनां चतुर्णां पादानां गुणवन्न तु वैगुण्य-युक्तम्। वैगुण्ययुक्तन्तु यच्छुक्रं तस्य गर्भहेतुत्वाभावान्न प्रकृतं शुक्रमुच्यते। आकाशस्य तु सर्व्वद्रव्यारम्भे वाय्वादिवद्धेतुत्वेऽपि व्यापद्भावात् तस्येह पाद-त्वेनोक्तिर्न कृता, सम्पदुपेतशुक्रस्य प्रश्नविषयत्वात् ॥ ३ ॥

गङ्गाधरः—इत्येवमुक्तवन्तं गुरुं पुनरग्निवेशः पप्रच्छ—सम्पूर्णदेह इत्यादि। ननु गर्भः केन हेतुना सम्पूर्णदेहः सन् समये यथाकाले सुखश्च यथा स्यात् तथा कथं केन प्रकारेण केन हेतुना च जायते इति। एवं स्त्री सप्रजापि सापत्यापि पुनः केन हेतुना चिराद् विन्दति बहुकालमतीत्य गर्भं गृह्णाति ? अथवा केन हेतुना गर्भो भूत्वा नश्यति। इति त्रयः प्रश्नाः ॥ ४ ॥

गङ्गाधरः—एषामुत्तरमाह—शुक्रासृगित्यादि। यस्य जनिष्यमाणस्य गर्भस्य आरम्भकाणां शुक्रासृगात्माशयकालानां सम्पद् वर्त्तते। शुक्रसम्पत् शुक्रदोषा-

दर्शयति। वाय्वादिषु शुक्रारम्भकेषु 'पाद'व्यपदेशेन सर्व्वेषां तुल्यशुक्रारम्भकत्वं दर्शयति। आकाशन्तु यद्यपि शुक्रे पाञ्चभौतिकेऽस्ति, तथापि न पुरुषशरीरान्निर्गत्य गर्भाशयं गच्छति, किन्तु भूतचतुष्टयमेव क्रियावद् याति, आकाशन्तु व्यापकमेव तत्रागतेन शुक्रेण सम्बद्धं भवति। तेन आकाशस्य गमनाभावादिह गर्भाशयगमनाभिधानप्रस्तावे शुक्रगतत्वेनानभिधानम्। अन्यत्रापि च भूतानां गमनप्रस्तावे आकाशं परित्यक्तमेव। यथा—"भूतैश्चतुर्भिः सहितः सुसूक्ष्मैर्मनोजवो देहमुपैति देहात्" इति। शुक्रञ्च षड्साहारोत्पन्नमेव विशुद्धं भवतीति कृत्वोक्तम्—'षड्भ्यो रसेभ्यः' इत्यादि। यत् तु मधुरस्य शुक्रजनकत्वम् अम्लादीनाञ्च शुक्रविघातकत्वमुच्यते, तदत्यर्थोपयोगादिति ज्ञेयम् ॥ ३ ॥

चक्रपाणिः—सम्पूर्णदेहः कथं जायते इत्येकः प्रश्नः, समये कथं जायते इति द्वितीयः, सुखं कथं जायते इति तृतीयः। सप्रजापि इत्यबन्ध्यापि सती कथं चिरेण गर्भं विन्दति ॥ ४ ॥

चक्रपाणिः—पञ्चानां प्रश्नानामुत्तरं—शुक्रेत्यादि। 'सम्पत्'शब्दः शुक्रादिभिः प्रत्येकमभि-सम्बध्यते। शुक्रासृगाशयानामुष्णत्वं सम्पद्, आत्मनस्तु शुक्रशोणितयोगाधिष्ठातुः शुभजीवकर्म-

योनिप्रदोषान्मनसोऽभितापाच्छुक्रासृगाहारविहारदोषात्।
अकालयोगाद् बलसंक्षयाच्च गर्भं चिराद् विन्दति सप्रजापि ॥६॥
असृङ् निरुद्धं पवनेन नार्य्या गर्भं व्यवस्यन्त्यबुधाः कदाचित्।
गर्भस्य रूपं हि करोति तस्यास्तदासृगस्रावि विवर्द्धमानम् ॥ ७ ॥

भावः। असृक्सम्पदार्त्तवदोषाभावः। आत्मसम्पत् आत्मनः पुनर्भवहेतुशुभादिष्टफलोन्मुखीभावः। आशयसम्पत् स्त्रिया गर्भाशयदोषाभावः। कालसम्पत् शुभतिथिनक्षत्रकरणयोगदिनर्त्तु युगादिभावः। तथा हितैरर्थैर्मातुः आहारविहारैरुपचारा यस्य गर्भस्य जायमानस्य स हि गर्भः काले सुखी परिपूर्णदेहः सन् सुखं यथा स्यात् तथा जायते। अन्यथा त्वन्यथा स्यात् इति प्रथमप्रश्नोत्तरम्। केन स्त्री गर्भं चिराद् विन्दति सप्रजापीति प्रश्नस्योत्तरमाह—योनिप्रदोषादित्यादि। योनिप्रदोषो विंशतिर्योनिव्यापदो वक्ष्यन्ते। मनोऽभितापाद् धननाशादितो मनस्तापात्। शुक्रादिदोषात्। अष्टौ रेतोदोषा वक्ष्यन्ते। असृग्दोषा असृग्दराधिकारे वक्ष्यन्ते। आहारदोषा गर्भव्याघाताहाराः। विहारदोषा व्यायामादयः। अकालयोगात् अपत्ये जातेऽपि पुनर्बहुकालं पुंसम्भोगाभावे पुनः पुंसम्भोगोऽप्यकालयोगः। बलसंक्षयाद् व्याध्यादिभिः स्त्रिया दौर्ब्बल्यात्। सप्रजापि स्त्री चिरकालानन्तरं पुनर्गर्भं विन्दतीति। गर्भो भूत्वा केन हेतुना नश्यतीति प्रश्नस्योत्तरमाह—असृङ् निरुद्धमिति। पवनेन स्वहेतुभिर्विगुणेन वायुना निरुद्धं नार्य्या असृगार्त्तवं कदाचिदबुधा गर्भं व्यवस्यन्ति, वस्तुतो न च स हि गर्भः। कस्मादबुधा एवं व्यवस्यन्ति, तत्राह—गर्भस्येत्यादि। हि यस्मात् तस्याः पवनरुद्धार्त्तवाया अस्रावि

युक्तत्वं सम्पत्, कालस्य स्वनतितीक्ष्णत्वादि सम्पत्, उपचारो गर्भिण्युपचारः। काल इति नवमे दशमे च मासे। यदुक्तम्—"कालः पुनर्नवमं मासमुपादाया दशमात्" इति। सुखीति व्याधिना केनचित् न ग्रस्तः। सुखमित्यक्लेशेन ॥ ५ ॥

चक्रपाणिः—अकालयोगादिति ऋतुकालातिक्रमे पुरुषेण संयोगात्, ऋतुकालश्च षोडशरात्रं यावत्। यदुक्तं—"षोडश दिवसा ऋतुकालः" इति। सुश्रुते तु द्वादशरात्रं ऋतुकाल उक्तः। 'भूत्वाथवा नश्यति केन गर्भः' इत्यस्योत्तरम्—असृगित्यादि। पवनेनेति दुष्टपवनेन कृते असृङ्निरोधे गर्भभ्रमो भवतीत्याह—गर्भस्य रूपम् इत्यादि। गर्भाशये हि विवर्द्धमानं रुधिरं

तदग्निसूर्य्यश्रमरोषशोकैः * उष्णान्नपानैरथवा प्रवृत्तम् ।
दृष्ट्वास्टृगेकं न च गर्भमज्ञाः † केचिन्नरा भूतहृतं वदन्ति ॥ ८
ओजोऽशनानां रजनीचराणामाहारहेतोर्न शरीरमिष्टम् ।
गर्भं हरेयुर्यदि ते न मातुर्लब्धावकाशा न हरेयुरोजः ॥ ६ ॥
कन्यां सुतं वा सहितौ पृथग् वा सुतौ सुते वा तनयान् बहून् वा ।
कस्मात् प्रसूते सुचिरेण गर्भमेकोऽभिवृद्धिश्च यमेऽभ्युपैति ॥१०

यदार्त्तवमसृक् तद्विवर्द्धमानं गर्भस्य रूपं करोति। तदस्रावि तस्या नार्य्या आर्त्तवमसृक् पुनर्यद्यग्निसन्तापादिभिर्हेतुभिरथवोष्णान्नपानैर्हेतुभिः प्रवृत्तं भवति तदा केचिदज्ञा एकं केवलमसृक् दृष्ट्वा गर्भञ्च न दृष्ट्वा भूतहृतं गर्भं वदन्ति। ननु तर्हि ते कस्मादेवं वदन्तोऽज्ञा भवन्ति, यतो गर्भस्य रूपं पश्यन्ति ततस्त्वसृक्स्रावमात्रं पश्यन्ति गर्भाकारं न दृष्ट्वा भूतहृतवचनेन किमज्ञा भवन्तीत्यत आह—ओजोऽशनानामित्यादि। रजनीचराणां राक्षसादीनाम् ओजोऽशनानामाहारहेतोरोज एवेष्टं न तु शरीरमिष्टम्। ते खल्वोजोऽशना रजनीचरा यदि गर्भस्य मातुर्लब्धावकाशा अवकाशं लब्ध्वा अनिष्टं गर्भं हरेयुस्तदा नौजश्च हरेयुरिति ॥ ५—९ ॥

गङ्गाधरः—अथाग्निवेशः पृच्छति—कन्यामित्यादि। भगवन् गुरो कस्मात् हेतोः स्त्री कन्यां दुहितरं प्रसूते, कस्मात् सुतं पुत्रं वा प्रसूते, सहितौ दुहितापुत्रौ कस्मात् प्रसूते, पृथग् वा कस्मात् प्रसूते, कस्मात् सुतौ द्वौ पुत्रौ प्रसूते, द्वे सुते वा

प्रभावात् गर्भलिङ्गानि कानिचिद्दर्शयतीत्यर्थः। असृगेवमिति असृगेव परम्। न च गर्भसंज्ञमिति न गर्भं ग्रन्थाव्याकारकम् ॥ ६—८ ॥

चक्रपाणिः—भूतेन गर्भाहरणे हेतुमाह—ओजोऽशनानामित्यादि। ओजोऽष्टबिन्दुकमश्नन्तीत्योजोऽशनाः। यदि त्वोजोऽशना अपि गर्भं हरेयुस्तदा मातुर्नितरामाहारभूतमोजो लब्धावकाशत्वेन हरेयुः। लब्धावकाशा इति प्राप्तगर्भिण्यभिगमनकारणाः ॥ ९ ॥

चक्रपाणिः—कन्यामित्यादि प्रश्नाष्टकम्। कन्यां कथं प्रसूत इति प्रथमः, सुतं पृथग् वेति द्वितीयः, सहितौ कन्यासुतौ वेति तृतीयः, सुतौ सहितौ इति चतुर्थः। सुते सहिते इति पञ्चमः,

* शोकैरित्यत्र रोगैस्तथा असृगेकमित्यत्र असृगेवमिति वा पाठः।
† गर्भमज्ञा इत्यत्र गर्भसंज्ञमिति पाठान्तरम्।

रक्तेन कन्यामधिकेन पुत्रं शुक्रेण तेन द्विविधीकृतेन।
वीजेन कन्याश्च सुतश्च सूते यथास्ववीजान्यतराधिकेन॥ ११॥
शुक्राधिकं द्वैधमुपैति वीजं यस्याः सुतौ सा सहितौ प्रसूते।
रक्ताधिकं वा यदि भेदमेति द्विधा सुते सा सहिते प्रसूते॥ १२

कस्मात् प्रसूते, कस्माद्वा बहूंस्तनयान् युगपत् प्रसूते, कस्माद्वा सुचिरात् कालात् प्रसूते, कस्माद्वा यमे यमके जायमाने तयोरेकोऽभिवृद्धिमभ्युपैति? इति नव प्रश्नाः॥ १०॥

गङ्गाधरः—अथैषां क्रमेणोत्तराण्याह—रक्तेनेत्यादि। रक्तेन स्त्रिया आर्त्तवेन पुंसः शुक्रादधिकेन कन्यां प्रसूते इति कन्यां कस्मात् प्रसूते इत्यस्योत्तरम्। पुत्रं शुक्रेण स्त्रीरक्तादधिकेन प्रसूते इति कस्मात् सुतं प्रसूते इत्यस्योत्तरम्। तेन तादृशरूपेण द्विविधीकृतेन वीजेन मैथुनतः प्रच्युते ये शुक्रशोणिते वीजरूपे वायुनान्तर्गर्भाशये द्विविधीकृते तयोर्वीजयोर्यथास्वम् अन्यतराधिकेन, रक्ताधिकेन भागेन कन्यां शुक्राधिकेन भागेन सुतमिति कन्यापुत्ररूपं यमकं प्रसूते इति कस्मात् सहितौ कन्यापुत्रौ प्रसूते इत्यस्योत्तरम्। सुश्रुतेऽप्युक्तम्। वीजेऽन्तर्वायुना भिन्ने द्वौ जीवौ कुक्षिमागतौ। यमावित्यभिधीयेते धर्म्मेतरपुरःसराविति॥ यथास्ववीजान्यतराधिकेनेति वायुनान्तरद्विविधीकृतेन रक्ताधिकेन वीजेन कन्यां पृथगेकां प्रसूते; शुक्राधिकेन तु पुत्रं पृथगेकं प्रसूते इति कस्मात् पृथग्वा कन्यां सुतश्च प्रसूते इत्यस्योत्तरम्। यस्या वीजं शुक्राधिकं शुक्राधिकमेव सत् द्वैधं वायुनान्तः-द्विधीकृतत्वमुपैति सा स्त्री सहितौ यमकरूपेण सुतौ द्वौ प्रसूते इति सुतौ वा कस्मात् प्रसूते इत्यस्योत्तरम्। यस्या वीजं रक्ताधिकं भवति तदेव रक्ताधिकमेव यदि द्विधा भेदमुपैति, तदा सा सहिते युगलरूपेण सुते द्वे प्रसूते इति

तनयान् बहून् वेति षष्ठः, सुचिरेण कथं स्त्री प्रसूत इति सप्तमः; यमे युग्मे कथमेकोऽभिवृद्धिम् अभ्युपैतीत्यष्टमः॥ १०॥

चक्रपाणिः—रक्तेनेत्यादुत्तरम्। अधिकेनेति पदं रक्तेन शुक्रेण च योजनीयम्। द्विविधी-कृतेन द्विखण्डीकृतेन। यथास्ववीजान्यतरे भागेऽधिकं यत्, तेन वीजेन। एतेन, यदि द्विविधे भागे एकत्र रक्तमधिकम्, अपरत्र शुक्रम्, एष विभागो भवति, तदा सुतौ भवत इत्युक्तं भवति।

भिनत्ति यावद् बहुधा प्रपन्नः शुक्रार्त्तवं वायुरतिप्रवृद्धः ।
तावन्त्यपत्यानि यथाविभागं कर्म्मात्मकान्यस्ववशात् प्रसूते ॥१३
आहारमाप्नोति यदा न गर्भः शोषं समाप्नोति परिस्रुतिं वा ।
तं स्त्री प्रसूते सुचिरेण गर्भं पुष्टो यदा वर्षगणैरपि स्यात् ॥१४
कर्म्मात्मकत्वाद् विषमांशभेदाच्छुक्रासृजं वृद्धिमुपैति कुक्षौ ।
एकोऽधिको न्यूनतरो द्वितीय एवं यमेऽप्यभ्यधिको विशेषः ॥१५

कस्मात् सुते सहिते प्रसूते इत्यस्योत्तरम् । अतिप्रवृद्धो वायुरन्तः प्रपन्नो यावद् बहुधा त्रिधा चतुर्द्धा पञ्चधेत्येवमादिरूपं यावद् बहुधा शुक्रार्त्तवं रक्ताधिकं वा शुक्राधिकं वा किञ्चिद्रक्ताधिकं किञ्चिच्छुक्राधिकमित्येवं भिनत्ति, तावन्ति अपत्यानि यथाविभागं रक्ताधिका यावन्तो भागास्तावतीः कन्याः, शुक्राधिका यावन्तो विभागास्तावतः पुत्रान, पृथग्वा अस्ववशात् परवशात् धर्म्माधर्म्मवशात् कर्म्मात्मकानि तेषाञ्च कर्म्मतोऽपि प्रसूते इति कस्मात् तनयान् बहून् वा प्रसूते इत्यस्योत्तरम् । गर्भः सम्भवन् कुक्षौ यदा मातुराहारं नाप्नोति तदा तदाहारजरसपोष्यो गर्भः स्वपोषकरसाभावतः शोषं समाप्नोति परिस्रुतिं स्रावं वाप्नोति । तच्चापृष्टमप्युक्तम् एककार्य्यत्वात् आहाराभावफलकथनार्थम् । स शोषमापन्नो गर्भः पुनः क्रमेणाहारजरसपुष्टो यदा वर्षगणैरपि यावता कालेन भवति तदा प्रसूतो भवतीत्यतस्तं शोषमापन्नं गर्भं स्त्री सुचिरेण प्रसूते इति कस्मात् प्रसूत सुचिराच्च गर्भमित्यस्योत्तरमिति । कुक्षौ गर्भाशये । शुक्रासृजं कर्म्मात्मकत्वात् पूर्व्वजन्मकृतशुभाशुभकर्म्मफलानुसारतः वायुना च विषमांशतो भेदाद् द्विभागीकृतत्वात् एको भागोऽधिकः सन् वृद्धिमुपैति द्वितीयो भागो न्यूनतरः स्यादिति, यमेऽप्यभ्यधिकोऽन्यतरन्यूनाधिको विशेषः इति कस्मादेकोऽभिवृद्धिश्च यमेऽभ्युपैतीत्यस्योत्तरम् ॥ ११—१५ ॥

यावद् बहुधा भिनत्तीति यावतीं बहुसंख्यां करोतीति चतुःपञ्चादिरूपाम् । प्रपन्न आगतः शुक्रार्त्तवं वायुरिति सम्बन्धः । यथाविभागमिति यथा शुक्ररक्तविभागो भवति, तथा कन्याः सुताश्च स्वबीजाधिक्यापेक्षया भवन्तीति । कर्म्मात्मकानि अस्ववशात् कर्म्माधीनत्वेन । आहारमित्यादौ गर्भिण्या आहाराप्राप्त्या गर्भस्याहाराप्राप्तिः । शुक्रासृजोर्यः स्थूलसूक्ष्मरूपो विषमांशभेदो भवति, स तु जायमानगर्भकर्म्मवशादेव भवतीत्याह— कर्म्मात्मकत्वादिति ॥ ११—१५ ॥

कस्माद् द्विरेताः पवनेन्द्रियो वा संस्कारवाही नरनारिषण्डः।
वक्री तथेर्ष्याभिरतिः कथं वा सञ्जायते वातिकषण्डको वा ॥ १६ ॥
वीजात् समांशादुपतप्तवीजात् स्त्रीपुंसलिङ्गी भवति द्विरेताः।
शुक्राशयं गर्भगतस्य हत्वा करोति वायुः पवनेन्द्रियत्वम् ॥ १७ ॥

गङ्गाधरः—अतः परमपि पृच्छति—कस्मादित्यादि। कस्माद् द्विरेताः क्लीवं स्यात्? कस्मात् पवनेन्द्रियोऽशुक्रः पुमान् स्यात्? कस्मात् संस्कारवाही वाजीकरणभेषजसंस्कारेणैव पुंस्त्ववान् अन्यथा पुंस्त्वहीनो भवति? कस्मान्नर-नारिषण्डः नरस्य नार्य्याश्चायं नरनारिः स चासौ षण्डश्चेति नरनारिषण्डः, पुरुषषण्डः स्त्रीषण्डश्च स्यात्? कस्मात् पुरुषो वक्री सुश्रुते आसेक्यः स्यात्? कथमीर्ष्याभिरतिरीर्ष्यकः सुश्रुतेऽभिहितः स्यात्? कथं वातिकषण्डको वा जायते? इत्यष्टौ प्रश्नाः ॥ १६ ॥

गङ्गाधरः—तेषां क्रमेणोत्तराण्याह—वीजादित्यादि। द्विविधो हि द्विरेता नपुंसकम्; एकस्तु समांशात् वीजात् शुक्रशोणितात् भवति द्वितीयस्तु उपतप्त-वीजात् वातादिदोषेण जनकवीजशुक्रशोणितोपतापात्। स्त्रीपुंसलिङ्गी योनि-शिश्नोभयाभावेन साधारणचिह्नवान्। द्विरेताः शोणितश्च शुक्रश्च द्वे रेतसी यस्य स तथा। पुमांस्तु शुक्रैकरेताः स्त्री तु शोणितैकरेता इति कस्माद्द्विरेता इत्य-स्योत्तरम्। गर्भगतस्य पुत्रस्य शुक्राशयं विगुणो वायुः कर्म्मवशात् हत्वा पवनेन्द्रि-यत्वं तस्य पुत्रस्य पवनेन्द्रियत्वं शुक्रधातुरहितत्वं करोति। पवनेन्द्रियसंज्ञा प्रसिद्धा

चक्रपाणिः—कस्मादित्यादि प्रश्नाष्टकम्। नरषण्डो नारिषण्डश्च नरनारिषण्डौ। वीजादिति शुक्रशोणितात्। उपतप्तवीजादिति उपतप्तवीजजनकवीजभावात्। स्त्रीपुंसलिङ्गीति स्त्रीपुरुषसाधारणनासिकाचक्षुरादिलिङ्गयुक्तः, यानि तु स्त्रीपुंसयोरसाधारणान्युपस्थध्वजस्तनश्मश्रु-प्रभृतीनि, तानि चास्य न भवन्तीति। असाधारणानि लिङ्गानि वृद्धेन शुक्रेण रक्तेन वा जन्यानि। इह समरक्तशुक्रारब्धे तु नास्त्यन्यतरवृद्धिरिति नोपस्थध्वजादिविशेषलिङ्गभवनम्। द्विधा स्त्रीत्व-पुरुषत्वोपजनकत्वे स्थितं रेतो यस्य स द्विरेताः; किंवा स्त्रीपुंसलिङ्गीति स्त्रीपुंसयोर्यल्लिङ्गमुपस्थ-ध्वजरूपम् तद्युक्त एव स्त्रीपुरुषलिङ्गी, उत्तरकालभावीन्यस्य स्तनशुक्रप्रभृतीनि न भवन्ति। अस्मिन् पक्षे वीजोपतापेनोत्तरकालभाविस्तनादिप्रतिबन्धः कर्म्मवशादेवेति ब्रुवते; किंवा उपस्थ-ध्वजौ यौ, तौ गर्भसमकालमेव भवतः, स्तनादि तूत्तरकालभावितया दुर्ब्बलम्, वीजोपतापेनापि न दृढयोरुपस्थध्वजयोर्बाधः, किन्तु दुर्ब्बलानामेव स्तनादीनामिति। यत्र समांशे शुक्रशोणिते

शुक्राशयद्वारविघट्टनेन संस्कारवाहं हि करोति वायुः ।
मन्दाल्पवीजाववलावहर्षौ क्लीवौ च हेतुर्विकृतिद्वयस्य ॥ १८ ॥
मातुर्व्यवायप्रतिघेन वक्री स्याद् वीजदौर्व्वल्यतया पितुश्च ।
ईर्ष्याभिभूतावपि मन्दहर्षावीर्ष्यारतेरेव वदन्ति हेतुम् ॥ १९ ॥

इति ; कस्मात् पवनेन्द्रियः स्यादित्यस्योत्तरम् । कर्म्मवशाद् वायुर्विगुणः सन् गर्भं शुक्राशयस्य द्वारविघट्टनेन दूषणेन पुत्रं संस्कारवाहं हि करोतीति ; कस्मात् संस्कारवाही स्यादित्यस्योत्तरम् । मातापितरौ सम्भोगकाले मन्दाल्पवीजौ मन्दमतीक्ष्णशक्तिकमल्पमल्पमात्रञ्च वीजं शोणितं शुक्रञ्चेत्युभयं ययोस्तौ, अवलौ नास्ति वलं वीर्य्यं ययोस्तौ तथा, अहर्षौ नास्ति हर्षौ मैथुनार्थं लिङ्गोद्गमस्पन्दनरूपौ ययोस्तौ, क्लीवौ क्लैव्यदोषदुष्टवीजौ, स्त्रीपुरुषौ विकृतिद्वयस्य नरषण्डस्य नारीषण्डस्य च हेतुरिति ; कस्मान्नरनारिषण्ड इत्यस्योत्तरम् । मातुः स्त्रिया यद्व्यवाये प्रतिघोऽनिच्छा तद्व्यवायजः पुत्रो वक्री स्यात्, पितुश्च वीजस्य शुक्रस्य दौर्व्वल्यतया हेतुना पुत्रो वक्री स्यात् । एष सुश्रुते त्वासेक्यसंज्ञक उक्तः, तद् यथा । पित्रोरत्यल्पवीजत्वादासेक्यः पुरुषो भवेत् । स शुक्रं प्राश्य लभते ध्वजोच्छ्रायमसंशयमिति । व्याख्यातञ्चैतत् । मातापित्रोरत्यल्पवीजत्वादासेक्यः पुरुषो भवेत् । स यस्मात् अन्यपुरुषं निजमुखे व्यवायं कारयित्वा तत् सिक्तं शुक्रं

भवतः, तत्र संयोगमहिम्नैव वीजांशे तापो भवतीति ज्ञेयम् । पवनेन्द्रियं विवृणोति—शुक्राशयमित्यादि । शुक्राशयं शुक्रस्थानम् । पवनेन्द्रियत्वं पवनशुक्रत्वम् । शुक्रहीनपवनस्य चेत् शुक्रत्वम्—यद् व्यवायकाले शुक्रसदृशरूपतया प्रवर्त्तनम् तद्वायुरेव परं व्यवायकाले याति । शुक्राशयद्वारेत्यादि संस्कारवाहिविवरणम् । द्वारविघट्टनेनेति द्वारदूषणेन । संस्कारेण वाजीकरणादिना परं यस्य शुक्रमदुष्टद्वारं सत् प्रवर्त्तते स संस्कारवाहः । अत्र च संस्कारवाहेण सुश्रुतोक्ता आसेक्यसौगन्धिककुम्भीका अन्तर्भावनीयाः । यतः, एतेऽपि संस्कारविशेषेणापि शुक्रं त्यजन्ति, यदुक्तं तत्र—"पित्रोरत्यल्पवीर्य्यत्वादासेक्यः पुरुषो भवेत् । स शुक्रं प्राश्य लभते ध्वजोच्छ्रायमसंशयम् । यः पूतियोन्यां जायेत स सौगन्धिकसंज्ञकः । स योनिशेफसोर्गन्धमाघ्राय लभते वलम् । स्वे गुदेऽब्रह्मचर्य्याद् यः स्त्रीषु पुंवत् प्रवर्त्तते । कुम्भीकः स तु विज्ञेयः" इति । मन्देत्यादि—मन्दवेगमल्पवीजं ययोस्तौ । तथा अवलाविति निसर्गवलरहितौ । अहर्षाविति अनुत्साहौ । क्लीवाविति दुष्टवीजौ । अत्र यथोक्तगुणा स्त्री स्त्रीषण्डस्य, यथोक्तगुणः पुरुषस्तु पुरुषषण्डस्य हेतुरिति विज्ञेयम् । एतौ स्ववीजौ ज्ञेयौ, यदुक्तं सुश्रुते—"अशुक्रस्त्वेवं षण्ढकः" इति । मातुर्व्यवायप्रतिघेनेति व्यवायकाले विषमाङ्गन्यासेन प्रतिहतं यस्य शुक्रं

**वाय्वग्निदोषाद् वृषणौ तु यस्य नाशं गतौ वातिकषण्डकः सः।**
**इत्येवमष्टौ विकृतिप्रकाराः कर्म्मात्मकानामुपलक्षणीयाः ॥ २० ॥**

प्राश्य ध्वजोच्छ्रायं शिश्नोद्गमं लभते, तस्मादासेक्य इति संज्ञा। अस्य पर्य्यायः मुखयोनिरिति च। कश्चिदिमं वक्रिणं कुम्भीकमाह। सुश्रुते ह्युक्तं—स्वे गुदेऽब्रह्मचर्य्याद् यः स्त्रीषु पुंवत् प्रवर्त्तते। कुम्भीकः स तु विज्ञेय ईर्ष्यकं शृणु चापरमिति। व्याख्यातञ्चैतत्। यः पुरुषः स्वे गुदे स्वकीयपायौ अब्रह्मचर्य्यात् अन्यपुरुषस्य व्यवायात् अन्यपुरुषं स्वे गुदे व्यवायं कारयित्वा पश्चात् पुंवत् लब्धपुंस्त्वबलः सन् स्त्रीषु व्यवायार्थं स्वयं प्रवर्त्तते स कुम्भीकः कुम्भीकनामा षण्डः। केचित् तु स्त्रीषु विषये तासां स्त्रीणां स्वे गुदे पशुवत् पृष्ठभागेऽनुद्गमशीलेन शिश्नेनाब्रह्मचर्य्यात् क्लैव्यरससंजातत्वात् प्रवृत्य पश्चात् तेन ध्वजोद्गमे जाते तासु स्त्रीषु पुंवत् प्रवर्त्तते स कुम्भीक इत्याहुः। एतत्कुम्भीकोत्पत्तिहेतुः काश्यपेनोक्तः। अरजस्कां यदा नारीं श्लेष्मरेता व्रजेदृतौ। अन्यसक्ता भवेत् प्रीतिर्जायते कुम्भी तत् सदेति; इति वक्री कथं स्यादित्यस्योत्तरम्। ईर्ष्याभिभूतौ सन्तौ दम्पती मन्दहर्षौ भवतस्तावेव द्वौ ईर्ष्यारतेः पुत्रस्य हेतुं वदन्ति। सुश्रुते हि— दृष्ट्वा व्यवायमन्येषां व्यावाये यः प्रवर्त्तते। ईर्ष्यकः स तु विज्ञेयः षण्डकः—इति। व्याख्यातञ्चैतत्। अयं दृग्योनिरप्युच्यते इति ईर्ष्याभिरतिः कथं स्यादित्यस्योत्तरम्। यस्य गर्भारम्भकाले वाय्वग्निदोषात् वृषणावण्डकोषौ नाशं गतौ स वातिकषण्डक इति; कथं वातिकपण्डको वा जायत इत्यस्योत्तरमिति। उपसंहरति—इत्येवमित्यादि। कर्म्मात्मकानामशुभकर्म्मफलविशेषहेतुकानाम् उपलक्षणीया इति वचनेन प्राधान्यादेतदष्टविधत्वं पुंषाण्ड्यम् उक्तम्। अन्यदपि बोध्यम्। उक्तञ्च सुश्रुते। यः पूतियोनौ जायेत स सौगन्धिकसंज्ञितः। स योनिशेफसोर्गन्धमाघ्राय लभते बलम्॥ यो भार्य्यायामृतौ मोहादङ्गनेव प्रवर्त्तते। ततः स्त्रीचेष्टिताकारो जायते षण्डसंज्ञितः॥ अङ्गनेव स्त्रीवदुत्तानीभूय विपरीतबन्धेन। स स्त्रीचेष्टिताकारः स्त्रीचेष्टावान् स्त्रीजनाकारश्च। इति पुंषाण्ड्यानि। अथ स्त्रीषाण्ड्यमप्युक्तं सुश्रुतेन। ऋतौ

गर्भाशयं नियमान्नोपैति स 'वक्री'त्युच्यते। बीजदौर्ब्बल्यतया पितुर्वक्री स्यादिति योजना। परव्यवायं दृष्ट्वा प्राप्तध्वजोच्छ्रायो व्यवायासक्तो भवति, स ईर्ष्यारतिः। यदुक्तं सुश्रुते—"दृष्ट्वा व्यवायमन्येषां व्यवाये यः प्रवर्त्तते। ईर्ष्यकः स तु विज्ञेयः" इति। कर्म्मात्मकानामित्यनेन एते क्लैव्यभेदाः प्राक्तनकर्म्मबलादेव प्रायो भवन्तीति दर्शयति ॥ १९—२० ॥

**गर्भस्य सद्योऽनुगतस्य कुक्षौ स्त्रीपुंनपुंसामुदरस्थितानाम् ।**
**किं लक्षणं कारणमिष्यते किं सरूपतां येन च यात्यपत्यम् ॥२१॥**
**निष्ठीविका गौरवमङ्गसादस्तन्द्राप्रहर्षौ हृदयव्यथा च ।**
**तृप्तिश्च वीजग्रहणञ्च योन्या गर्भस्य सद्योऽनुगतस्य लिङ्गम् ॥२२॥**

पुरुषवद्वापि प्रवर्त्तेताङ्गना यदि। तत्र कन्या यदि भवेत् सा भवेन्नरचेष्टिता ॥ आसेक्यश्च सुगन्धी च कुम्भीकश्चेर्ष्यकस्तथा। सरेतसस्त्वमी ज्ञेया अशुक्राः षण्डसंज्ञिताः। अनया विप्रकृत्या तु तेषां शुक्रवहाः सिराः। हर्षात् स्फुटत्वमायान्ति ध्वजोच्छ्रायस्ततो भवेत् ॥ आहाराचारचेष्टाभिर्यादृशीभिः समन्वितौ। स्त्रीपुंसौ समुपेयातां तयोः पुत्रोऽपि तादृशः ॥ यदा नार्य्यावुपेयातां वृषस्यन्त्यौ कथञ्चन। मुञ्चन्त्यौ शुक्रमन्योन्यमनस्थिस्तत्र जायते। ऋतुस्नाता तु या नारी स्वप्ने मैथुनमावहेत्। आर्त्तवं वायुरादाय कुक्षौ गर्भं करोति हि। मासि मासि विवर्द्धेत गर्भिण्या गर्भलक्षणम्। कललं जायते तस्या वर्जितं पैतृकैर्गुणैः। सर्पवृश्चिककुष्माण्ड-विकृताकृतयश्च ये। गर्भास्त्वेते स्त्रियाश्चैव ज्ञेयाः पापकृता भृशम्। इति। आसेक्यादयः पुरुषदोषाः स्त्रीदोषाश्च। अनस्थिरल्पकोमलास्थिः। कललं सिंघाणप्रख्यम्। पैतृकैर्गुणैः केशश्मश्रुलोमनखास्थिसिरास्नायुधमनीरेतःप्रभृतिभिः। सर्पवृश्चिकादिरूपस्तु मनुष्ये पापाचर्य्येण भवति ॥ १७—२० ॥

<u>गङ्गाधरः</u>—अतः परं गर्भस्य लक्षणादिकं पृच्छति—गर्भस्येत्यादि। सद्योऽनुगतस्य तत्क्षणमेव कुक्षौ सम्भवतो गर्भस्य किं लक्षणमित्येकः प्रश्नः। उदरस्थितानां स्त्रीपुंनपुंसकानां किं लक्षणमिति द्वितीयः प्रश्नः। स्त्रीपुंनपुंसामिति समासान्तविधेरनित्यत्वेन नपुंसशब्दः सान्त इति बोध्यम्। गर्भस्योत्पत्तौ येन च कारणेनापत्यं सरूपतां समानरूपतां याति तच्च कारणं किमिति तृतीयः प्रश्नः ॥ २१ ॥

<u>गङ्गाधरः</u>—क्रमेणैषामुत्तराण्याह—निष्ठीविकेत्यादि। निष्ठीविका ष्ठीवनं मुखेन स्वल्पोद्गिरणम्। गौरवमङ्गस्य। अङ्गसादोऽङ्गावसन्नता श्रान्तत्वमिव। तन्द्रा निद्रावत् क्लान्तिः। अप्रहर्षो ग्लानिः। हृदयव्यथा पीड़ेव हृदये। तृप्तिर्योन्याः।

<u>चक्रपाणिः</u>—गर्भस्येत्यादि पञ्च प्रश्नाः। सद्योऽनुगतस्येति सद्योगृहीतस्य। कारणमित्यादि—कारणं किं तत्, येन कारणेन सरूपतां सादृश्यमपत्यं गर्भो यातीत्यर्थः। अयञ्च पञ्चमः प्रश्नः ॥ २१ ॥

**सव्याङ्गचेष्टा पुरुषार्थिनी स्त्री स्त्रीस्वप्नपानाशनशीलचेष्टा।**
**सव्याङ्गगर्भा * न च वृत्तगर्भा सव्यप्रदुग्धा स्त्रियमेव सूते।**
**पुत्रं ततो लिङ्गविपर्य्ययेण व्यामिश्रलिङ्गा प्रकृतिं तृतीयाम्॥२३**

वीजग्रहणञ्च शुक्रशोणितयोर्वन्धः सुरतान्ते च्युत्यभावः। सद्योऽनुगतस्य तत्क्षणमाधीयमानस्य गर्भस्यैतल्लिङ्गम्। सुश्रुतेऽप्युक्तं—तत्र सद्योगृहीतगर्भाया लिङ्गानि श्रमो ग्लानिः पिपासा सक्थिसदनं शुक्रशोणितयोरवबन्धः स्फुरणञ्च योनेरिति। इति प्रथमप्रश्नोत्तरम्॥ २२॥

गङ्गाधरः—सव्याङ्गचेष्टेत्यादि। या गर्भवती स्त्री पूर्व्वं सव्याङ्गचेष्टा सव्येन वामेनाङ्गेन क्रियामारभते पुरुषार्थिनी पुरुषसङ्गकाङ्क्षिणी स्त्रीस्वप्नपानाशनशीलचेष्टा स्त्रीलोकस्य निद्रावत् पानवत् अशनवत् शीलवत् स्वप्नपानाशनशीलेषु चेष्टा क्रिया यस्याः सा तथा। सव्याङ्गगर्भा सव्यपार्श्व गर्भस्थितिरूपा न च वृत्तः वर्त्तुलरूपो गर्भो यस्या दीर्घगर्भा इत्यर्थः। सव्यप्रदुग्धा स्तनयोर्दुग्धस्य प्रकाशारम्भे प्रथमं सव्यस्तने दुग्धं यस्याः सा तथा। स्त्रियमेव कन्यामेव सा सूते न तु पुत्रमिति। ततो लिङ्गविपर्य्ययेण सव्याङ्गचेष्टादिलिङ्गतो विपर्य्ययलिङ्गेन पुत्रं प्रसूते। व्यामिश्रलिङ्गा सव्यासव्याङ्गचेष्टा स्त्रीपुंसार्थनाभावा स्त्रीपुंसोभयस्वप्नपानाशनशीलचेष्टा सव्यासव्यगर्भा न वृत्तगर्भा न दीर्घगर्भा युगपत्स्तनद्वयदुग्धा या स्त्री सा तृतीयां प्रकृतिं नपुंसकं सूते इत्यर्थः। सुश्रुतेऽप्युक्तं—तत्र यस्या दक्षिणे स्तने प्राक् पयोदर्शनं भवति, दक्षिणाक्षिमहत्त्वञ्च, पूर्व्वञ्च दक्षिणं सक्थ्युत्कर्षति। बाहुल्याच्च पुन्नामधेयेषु द्रव्येषु दौहृदमभिध्यायति, स्वप्नेषु चोपलभते पद्मोत्पलकुमुदाम्रातकादीनि पुन्नामान्येव, प्रसन्नमुखवर्णता च भवति, तां ब्रूयात् पुत्रमियं जनयिष्यतीति। तद्विपर्य्यये कन्याम्। यस्याः पार्श्वद्वयमुन्नतं पुरस्तान्निर्गतमुदरं प्रागभिहितलक्षणञ्च तस्या नपुंसकमिति विद्यात्। यस्या मध्ये निम्नं द्रोणीप्रभूतमुदरं सा युग्मं प्रसूयत इति। इति द्वितीयप्रश्नोत्तरम्॥ २३॥

चक्रपाणिः—बीजग्रहणं शुक्रस्य ग्रहणम्। स्त्रीस्वप्नेत्यादि—स्त्रीविहिता स्वप्नपानाशनशीलचेष्टा। सव्येन पार्श्वेन आत्तो गृहीतो गर्भो यया सा सव्यात्तगर्भा। किंवा सव्याङ्गगर्भेति पाठः। न च वृत्तगर्भेति दीर्घगर्भेत्यर्थः। सव्यस्तने प्रकृष्टं दुग्धं यस्याः सा सव्यप्रदुग्धा। व्यामिश्र-

* सव्यात्तगर्भेति चक्रधृतः पाठः।

गर्भोपपत्तौ तु मनः स्त्रिया यं जन्तुं व्रजेत् तत्सदृशं प्रसूते ॥२४॥
गर्भस्य चत्वारि चतुर्व्विधानि भूतानि मातापितृसम्भवानि।
आहारजान्यात्मकृतानि चैव सर्व्वस्य सर्व्वाणि भवन्ति देहे ॥२५॥
तेषां विशेषाद् बलवन्ति यानि भवन्ति मातापितृकर्म्मजानि।
तानि व्यवस्येत् सदृशत्वहेतुं * सत्त्वं यथानूकमपि व्यवस्येत् ॥२६

गङ्गाधरः—गर्भोपपत्तौ गर्भोत्पत्तिसङ्गकाले स्त्रिया मनस्तु यं जन्तुं प्राणिनं व्रजेत् तत्प्राणिसदृशमपत्यं सा सूते। सुश्रुतेऽप्युक्तम्। पूर्व्वं पश्येदृतुस्नाता यादृशं नरमङ्गना। तादृशं जनयेत् पुत्रं भर्त्तारं दर्शयेदत इति ॥ २४ ॥

गङ्गाधरः—अपत्यस्य मातापितृसमरूपत्वे कारणान्तरञ्चाह—गर्भस्येत्यादि। देहे देहविषये सर्व्वस्य गर्भस्यैव कारणानि मातापितृसम्भवानि आहारजानि आत्मकृतानि चैव सर्व्वाणि समस्तानि चतुर्व्विधानि चत्वारि वाय्वादीनि भूतानि न त्वन्यतमैकद्वित्रिविधानि न वा पञ्चविधानि एवकारेण व्यवच्छेदात्। आकाशन्तु न मातृसम्भवत्वेन पितृसम्भवत्वेन आहारसम्भवत्वेनात्मसम्भवत्वेन च चतुर्व्विधम्; परन्त्वविकारत्वेन चतुष्कमेवैकविधं, ततो न चतुर्व्विधं पञ्च भूतानीति मनसि कृत्वोक्तं चत्वारि भूतानीति। तेषां चतुर्व्विधानां चतुर्णां भूतानां मध्ये मातृपितृकर्म्मजानि शोणितजानि चत्वारि,

लिङ्गा च सव्यदक्षिणादिचेष्टा इत्यादिना ज्ञेया। प्रकृतिं तृतीयामिति नपुंसकम्। गर्भोपपत्तावित्यादिना सारूप्यमाह—गर्भोपपत्तौ वीजग्रहणकाले मनो यं जन्तुं व्रजेत् यं प्राणिनं मनसा ध्यायेत्। एतच्च वीजग्रहणकालीनं मनसानुध्यानं प्रभावादेव चिन्त्यमानसदृशमपत्यं करोतीति ज्ञेयम्। किंवा तत्कालीनचिन्तयैव वीजं चिन्त्यमानसदृशारम्भशक्तिकं क्रियते। दृष्टञ्च मानसानामपि भावानां भूतविशेषकरणे शक्तिविशेषः। यथा सङ्कल्पः शुक्रोदीरणं करोति, तथा दोहदाप्राप्तौ तच्चिन्तया गर्भविकृतिः, ईर्ष्याभयादीनामोजःशुक्रक्षयकर्त्तृत्वमित्यादि। एतदेव च सादृश्यकारणं पश्यता पुनर्वक्तव्यम्,—"यथा—या या यथाविधं पुत्रमाशासीदित्युपादाय सा सा तांस्तान् जनपदान् मनसानुक्रमेद्" इति। जन्त्वनुध्यानं सादृश्यकारणमभिधाय सादृश्यकारणान्तरमाह—गर्भस्येत्यादि। चत्वारीति निर्व्विशेषमाकाशं वर्ज्जयित्वा भूतानि। चतुर्व्विधानीति विवृणोति—गतेत्यादि। मातृसम्भवानि रक्तगतानि, पितृसम्भवानि शुक्रगतानि। आहारजानि तु शुक्रशोणितोत्तरकालं मातुराहारसम्भूतरसजानि। आत्मकृतानीति आत्मप्रतिबद्धकर्म्मवशप्रसूतानि ज्ञेयानि। तत्र शुभकर्म्मणा सदृशरूपजनकानि, अशुभकर्म्मणा

* सदृशत्वलिङ्गमिति वा पाठः।

**कस्मात् प्रजां स्त्री विकृतां प्रसूते हीनाधिकाङ्गीं विकलेन्द्रियाञ्च। देहात् कथं देहमुपैति चान्यमात्मा सदा कैरनुबध्यते च ॥२७॥**

शुक्रजानि चत्वार्य्यात्मजानि चत्वारि तानि त्रिविधानि भूतानि वाय्वादीनि विशेषाद् बलवन्ति भवन्ति, तानि मातृजानि पितृजानि कर्म्मजानि च वाय्वादीनि विशेषतो बलवन्ति स्युस्तानि सदृशत्वहेतुं व्यवस्येत्। मातृशोणितिकबलवद्वाय्वादीनि कर्म्मजसहितानि मातृसदृशत्वहेतुं पितृशुक्रीयबलवद्वाय्वादीनि कर्म्मजसहितानि पितृसदृशत्वहेतुं व्यवस्येत्। यथानूकं गर्भारम्भकाले मातृपितृसत्त्वानूरूपं सत्त्वं मनश्च मनःसदृशत्वहेतुं मातृसत्त्वानूकसत्त्वं मातृसदृशत्वहेतुं पितृसत्त्वानूकसत्त्वं पितृसदृशत्वहेतुं व्यवस्येत्। एतेन यस्य यस्य सत्त्वानूकसत्त्वं भवति तत्सदृशसत्त्वञ्च तस्य भवतीति ख्यापितम्। इति तृतीयप्रश्नोत्तरम्॥ २५।२६ ॥

गङ्गाधरः—अथ पुनः पृच्छति—कस्मादित्यादि। कस्माद्धेतोः स्त्री प्रजां प्रजायते इति प्रजा तामपत्यरूपां विकृतां प्रसूते। ननु प्रकृतिरात्मा तदितरत् सर्व्वं विकृतं किं तस्य प्रश्न इत्यतस्तत्प्रश्ननिरासार्थं विकृतत्त्वं विवृणोति भाष्येण। हीनाधिकाङ्गीं हीनाङ्गीं तथाधिकाङ्गीञ्च विकलेन्द्रियाञ्च प्रजां विकृतां

तु विसदृशरूपजनकानीति ज्ञेयम्। यानि त्वात्मनि सूक्ष्माणि भूतानि आतिवाहिकरूपाणि, तानि सर्व्वसाधारणत्वेनाविशेषसादृश्यकारणानीति नेह बोद्धव्यानि। तत्र एवं चतुर्व्विधानां सादृश्ये किं सादृश्यकारणं किम्भूतं वेत्याह—तेषामित्यादि। 'विशेषात्' इतिपदेन सर्व्वाण्येव सादृश्यकारणानि भवन्ति, किन्तु यानि बलवन्ति, तानि विशेषाद् भूयिष्ठसादृश्यं जनयन्तीति दर्शयति। अत्र चाहारभूतानां प्राक्तनकर्म्मापेक्षयैव सादृश्यकारणत्वं भवतीति कृत्वा नाहारजानां ग्रहणं कृतम्, तेन कर्म्मजेष्वेवाहारजातानामवबोधो ज्ञेयः। पूर्व्वन्तु 'आहारजानि' इति पदेन तेषां विद्यमानतामात्रमुक्तं ज्ञेयम्। किंवा मातृजादीनि हि मात्रादिभिः सदृशं कुर्व्वन्ति, न त्वाहारजातानि आहारसदृशं कुर्व्वन्ति। तेन तेषामिहानुपादानम्। तथा ह्युत्तराध्याये—"यानि खल्वस्य रसजानि" इत्यादिना प्राणानुबन्धादीनि वक्तव्यानि, न च तानि सादृश्यरूपतयेह भवितुमर्हन्तीति इह नोक्तानि। सादृश्यहेतुमभिधाय मनःसादृश्यहेतुमाह—सत्त्वमित्यादि। अनूकं प्राक्तनाव्यवहिता देहजातिः। तेन यथानूकमिति यो देवशरीरादव्यवधानेनागत्य भवति, स देवसत्त्वो भवति, यः पशुशरीरादेति, स पशुसत्त्वो भवतीत्यादि। अपिशब्दात् कर्म्मसम्बन्धं जातिसम्बन्धञ्च दर्शयति। तेन कर्म्मवशादेव सत्त्वं राजसं तामसं सात्त्विकं भवति, तथा मानुषादिजात्यनुरूपञ्च भवति ॥ २२—२६ ॥

चक्रपाणिः—कस्मादित्यादिना विकलेन्द्रियाञ्चेत्यन्तेन एकः प्रश्नः। तत्र 'विकृताम्' इत्यस्य विवरणम्—हीनेत्यादि। देहादित्यादि द्वितीयः। सदा कैरनुबध्यते इति तृतीयः। ये तु

बीजात्मकर्म्माशयकालदोषैर्मातुस्तदाहारविहारदोषैः ।
कुर्व्वन्ति दोषा विविधानि दुष्टाः संस्थानवर्णेन्द्रियवैकृतानि ॥२८॥
वर्षासु काष्ठाश्मघनाम्बुवेगास्तरोः सरित्स्रोतसि संस्थितस्य ।
यथैव कुर्य्युर्विकृतिं तथैव गर्भस्य कुक्षौ नियतस्य दोषाः ॥२६॥
भूतैश्चतुर्भिः सहितः स सूक्ष्मैः * मनोजवो देहमुपैति देहात् ।
कर्म्मात्मकत्वान्न तु तस्य दृश्यं दिव्यं विना दर्शनमस्ति रूपम् ॥३०

कस्मात् स्त्री सूते इत्यर्थः। इत्येकः प्रश्नः। आत्मा कथं देहादेकस्मादन्यं देहमुपैतीति द्वितीयः प्रश्नः। कैश्च भावैरात्मा सदा नित्यमनुबध्यते इति तृतीयः प्रश्नः ॥ २७ ॥

गङ्गाधरः—क्रमेणैषामुत्तराण्याह—बीजात्मेत्यादि। बीजं शुक्रं शोणितञ्च। आत्मा षड्धातुः सूक्ष्मदेही। कर्म्म पूर्व्वकृतं शुभाशुभदिष्टम्। आशयो गर्भाशयः योनिरित्यर्थः। कालः सत्यत्रेताद्वापरकलिसम्बन्धिसंवत्सरीयषड्तुहोरात्रक्षणमुहूर्त्तादिः शुभाशुभो नित्यगस्तथा चावस्थिकश्च बाल्ययौवनवार्द्धक्यादिः; तेषां दोषा वाच्यास्तैः। मातुश्च दोषैस्तदाहारविहारदोषैराहितगर्भाया आहारविहारदोषैः। दोषा वातपित्तकफाः शारीरा रजस्तमश्च मानसदोषौ। एते दोषा दुष्टाः सन्तः विविधानि संस्थानस्यावयवसंस्थाया वर्णस्य इन्द्रियाणाञ्च वैकृतानि विकृतत्वानि कुर्व्वन्ति। अत्र दृष्टान्तमाह—वर्षास्वित्यादि। तरोर्वृक्षस्य। कुक्षौ नियतस्य गर्भस्य। इति प्रथमप्रश्नोत्तरम् ॥ २८।२९ ॥

गङ्गाधरः—भूतैरित्यादिना द्वितीयप्रश्नोत्तरम्। स केवलश्चेतनाधातुरात्मा महदहङ्कारसूक्ष्माकाशादित्रयोविंशत्या सूक्ष्मैस्तत्त्वैः सूक्ष्मदेही क्रियावद्भिः द्वित्रिचतुःपञ्चात्मकैर्वाय्वादिभिश्चतुर्भिर्भूतैः सहितो भूतात्मा म्रियमाणस्तत्-

'विकृताम्' इति पदेन कुरूपाम्, 'हीनाधिकाङ्गीम्' इति पदेन च हीनाङ्गादिरूपामेव कुरूपातिरिक्तां वदन्ति, तेषां मते प्रश्नभेदः स्यात्; तथा अध्यायान्ते च वक्ष्यमाणसंख्या अतिरिक्ता भवति। आत्मीयकर्म्म आत्मकर्म्म। आशयो गर्भाशयः। दोषो वैगुण्यम्। अश्मघनानि पाषाणखण्डाः। वेगाः काष्ठादीनां त्रयाणाम् ॥ २७—२९ ॥

चक्रपाणिः—द्वितीयप्रश्नस्योत्तरम्—भूतैरित्यादि। सुसूक्ष्मैरित्यनेन चातीन्द्रियत्वं दर्शयति। आकाशस्येहाक्रियत्वेन मनोगतिरेव भूतसहिता 'गति'शब्देनोच्यत इति दर्शितं भवति। देहात्

* सुसूक्ष्मैरिति चक्रधृतः पाठः।

**स सर्व्वगः सर्व्वशरीरभृच्च स विश्वकर्म्मा स च विश्वरूपः।**
**स चेतनाधातुरतीन्द्रियश्च स नित्ययुक् सानुशयः स एव॥ ३१॥**

कालमेव निर्म्मितमातिवाहिकं देहमस्माद्देहाद् देहं विहाय मनोजवो मनोवेगेनैव उपैति। मनोजवो मनसो जवो वेगो यस्य स मनोजव एवोपैति। कस्मात् तन्न दृश्यत इत्यत आह—कर्म्मात्मकत्वात्। तस्यास्माद्देहाद्देहान्तरं गच्छतो भूतात्मनो रूपं पूर्व्वकृतकर्म्मफलसम्बन्धात् वाय्वादिभिस्तत्कालमेव कृतत्वात् आतिवाहिकं वायुभूतनिराश्रयं सूक्ष्मभूतमयं रूपं, रूप्यते यत् तद् रूपं शरीरम् दिव्यं प्राप्तिसिद्धिजनितमैश्वरबलविशेषं दर्शनं चक्षुर्विना न दृश्यं दर्शन-योग्यमस्ति। इति देहादन्यदेहगमनमुक्त्वा आत्मा सदा कैरनुबध्यते चेति प्रश्नस्योत्तरमाह—स सर्व्वग इत्यादि। स आत्मा सर्व्वगश्चेतनाचेतनसर्व्वगतः। सर्व्वगश्चाकाशमित्यत आह—सर्व्वशरीरभृच्च। महदादिसूक्ष्माकाशादिस्थूल-पर्व्वतवर्व्वाद्यचेतनसुरासुरनरवानरादिचेतनाद्यतिस्थूलसर्व्वशरीरधारी। ननु तस्य च तत् तत्सर्व्वशरीरं कोऽन्यः कुरुते इत्यत आह स—विश्वकर्म्मेति। विश्वं चराचरं सर्व्वं कर्म्म कार्य्यं यस्य स विश्वकर्म्मा। नन्वेवमस्तु तस्मादात्मनोऽन्यत् किमिदं सर्व्वं शरीरम्, यतोऽयं सर्व्वशरीरभृद्विश्वकर्म्मा च इत्याशङ्कायामाह—स च विश्वरूपः। विश्वं सर्व्वं महदादिकं चराचरं रूप यस्येति वाक्येऽपि तथा-त्वात्। विश्वत्वेन रूप्यते यः स विश्वरूपः। ननु स च क इत्यत आह—स चेतना-धातुरिति। चेतना चित् स्वयं प्रकाशते स्वप्रकाशेनान्यच्च प्रकाशयति सत्त्वादि-योगेन प्राणिषु चैतन्यहेतुः। नन्वेवम्भूतः किं न दृश्यो भवतीत्यत आह—अतीन्द्रियश्चेति। स चेन्द्रियाणि पञ्च श्रोत्रादीन्यतिक्रान्तः। ननु मनसापि किं

इति म्रियमाणदेहात्। देहमित्युत्पद्यमानदेहम्। कर्म्मात्मकत्वादिति कर्म्माधीनत्वात्। तेन कर्म्म धर्म्माधर्म्मरूपं यदेनं भोगार्थं नयति, तदेव देहमुपयातीत्युक्तं भवति। अथ गच्छन् किमित्ययं नोपलभ्यते म्रियमाणपुरुषादित्याह—न त्वित्यादि। तस्यात्मन आतिवाहिकशरीर-युक्तस्य दृश्यं रूपं नास्तीति सूक्ष्मरूपत्वादिति भावः। अथ किं सर्व्वे एदैनं न पश्यन्तीत्याह—दिव्यं विना दर्शनमिति। दिव्यं दर्शनं दिव्यचक्षुः। तेन योगिन एव पश्यन्त्येनमिति दर्शयति॥ ३०॥

चक्रपाणिः—अस्यैवातिवाहिकशरीरयुक्तस्यात्मनो धर्म्मान्तराण्याह—स सर्व्वग इत्यादि। सर्व्वशरीरभृदिति सर्व्वशरीराणि भर्त्तुं योग्यः। विश्वकर्म्मकरणक्षमो विश्वकर्म्मा। विश्वरूपतायां नरपश्वादिशरीररूपतया कर्म्मवशात् भजत इति विश्वरूपः। नित्यं बुद्ध्यादिभिर्युज्यत इति नित्ययुक्। सहानुशयेन रागादिना वर्त्तत इति सानुशयः॥ ३१॥

रसात्ममातापितृसम्भवानि भूतानि विद्याद् दश षट् च देहे ।
चत्वारि तत्रात्मनि संश्रितानि स्थितस्तथात्मा च चतुर्षु तेषु ॥३२॥
भूतानि मातापितृसम्भवानि रजश्च शुक्रश्च वदन्ति गर्भे ।
आप्याय्यते शुक्रमसृक् च भूतैर्यैस्तानि भूतानि रसोद्भवानि ॥३३॥

न ग्राह्य इत्यत आह—स नित्ययुक्। नित्यं मोक्षात् पूर्व्वपर्य्यन्तमविच्छेदेन सत्त्वानुरूपाणि युनक्ति इति नित्ययुक्। तेन सत्त्वाद्युपाधिमत्त्वेऽपि परात्मनो वैश्वानराद्यवस्थायामपि श्रोत्रादिपञ्चेन्द्रियाग्राह्यत्वम्। योगे शुद्धसत्त्वात्मकेन तु मनसा ग्राह्यत्वं ख्यापितम्। तदुक्तं व्यासेन। नैवासौ चक्षुषा ग्राह्यो न च शिष्टैरपीन्द्रियैः। मनसा तु प्रसन्नेन गृह्यते सूक्ष्मदर्शिभिरिति॥ सुतरामयं सानुशयः। वैश्वानराद्यवस्थायां सत्त्वाद्युपाधिमान् सानुशयः रागाद्यनुवृत्ति-शाली। एवम्भूतस्य चेतनाधातोः षड्धातुरूपस्य रसात्ममातापितृसम्भवानि चतुर्विधानि चत्वारि वाय्वादीनि भूतानीति दश षट् चेति षोड़शविधानि स्थूल-देहारम्भकाणि भूतानि निर्व्विकारत्वान्निष्क्रियत्वादेकविधमेवाकाशं न गण्यत इति साधारणानि विद्यादिति। दशेन्द्रियाणि पञ्चभूतानि पञ्चार्था इति विंशति-तत्त्वात्मको देह इत्यर्थः। तत्र यानि चत्वारि वाय्वादीनि भूतानि आत्मनि संश्रितानि यथा तथा आत्मा च तेषु स्वाश्रितेषु चतुर्षु वाय्वादिषु स्थित इति। मातापितृसम्भवानि भूतानि वाय्वादीनि चत्वारि तु रजश्च शुक्रश्च गर्भे वदन्ति, रजस्तु खल्वाग्नेयं पाञ्चभौतिकं शुक्रन्तु सौम्यं पाञ्चभौतिकमिति। तद्रजःस्थानि चत्वारि मातृजानि शुक्रगतानि चत्वारि पितृजानि। गर्भे मिथःसंयुक्तं रजः शुक्रञ्च यैर्मातृकृताहारजरसगतैश्चतुर्भिर्भूतैराप्याय्यते तानि चत्वारि भूतानि रसोद्भवानि

चक्रपाणिः—आतिवाहिकशरीररूपभूतचतुष्टयस्याव्यापकत्वकरणार्थं शरीरे यानि सम्भवन्ति भूतानि, तान्येवाह—रसात्मेत्यादि। एतानि भूतानि सारूप्यहेतुप्रस्तावोक्तान्यपि प्रकरणवशात् तथा वक्तव्यरजःशुक्राद्यनुक्तप्रतिपादनार्थञ्च पुनरुच्यन्ते। आत्मनि संश्रितानीति आत्मकर्म्मणात्मन्यातिवाहिकदेहरूपतया यानि बद्धानि। स्थितस्तथात्मेति तेषु देहान्तरादिक्रियार्थं स्थितः। या गतिर्देहान्तरादिनात्मनः, सा तद्भूतव्यवस्थितस्योच्यते, न व्यापकस्य तस्य सर्व्वत्र सर्व्वगतत्वादित्यर्थः॥ ३२॥

चक्रपाणिः—मातापितृसम्भवानीति रजश्च शुक्रमिति यथासंख्यं मातापितृसम्भवानीति॥ ३३॥

भूतानि चत्वारि तु कर्म्मजानि यान्यात्मलीनानि विशन्ति गर्भम्।
स वीजधर्म्मा ह्यपरापराणि देहान्तराण्यात्मनि याति याति ॥३४॥
रूपाद्धिरूपप्रभवः * प्रसिद्धः कर्म्मात्मकानां मनसो मनस्तः।
भवन्ति ये त्वाकृतिबुद्धिभेदा रजस्तमः कर्म्म च तत्र हेतुः ॥३५॥

इति त्रिविधानि चत्वारि भूतानि, चत्वारि तु कर्म्मजानि पूर्व्वजन्मकृतशुभाशुभकर्म्मफलानुरूपेणात्मस्थभूतजानि, चत्वारि वाय्वादीनि तु भूतानि यानि आत्मलीनानि सूक्ष्मदेहस्थानि चत्वारि भूतानि गर्भाशये मिथःसंयुक्तशुक्रशोणितात्मकं गर्भं विशन्ति तानि चत्वारि वाय्वादीनि पूर्व्वकर्म्मानुरूपेण जनयन्ति तानि कर्म्मजानि। नारायणाख्येन ब्रह्मणा सूक्ष्मदेहनिर्म्माणकाले नियतिवशेन कालपरिणामेन नियतिविशेषतो जन्मजन्मकृतकर्म्मधर्म्माधर्म्मरूपं भवति। ननु कस्मात् तानि गर्भं प्रविशन्तीत्यत आह—स इत्यादि। हि यस्मात् स सूक्ष्मदेही भूतात्मा वीजधर्म्मा वीजं यथैवाङ्कुरं जनयति तथा स सूक्ष्मदेही भूतात्मा स्थूलान् जनयतीति वीजधर्म्मा अपरापराणि देहान्तराणि चेतनाधातावात्मनि याति सति तेन सहैव याति। सुश्रुते चोक्तम्। क्षेत्रज्ञ इत्यारभ्य धाता वक्ता योऽसावित्येवमादिभिः पर्य्यायवाचकैर्नामभिरभिधीयते। दैवसंयोगादक्षयोऽव्ययोऽचिन्त्यो भूतात्मना सहान्वक्षं सत्त्वरजस्तमोभिर्दैवासुरैरपरैश्च भावैर्वायुनाभिप्रर्य्यमाणो गर्भाशयमनुप्रविश्यावतिष्ठते। इति।

ननु कथं वीजधर्म्मा वीजमिवाङ्कुरं किं वा जनयतीत्यत आह—रूपादित्यादि। कर्म्मात्मकानां पूर्व्वकृतशुभाशुभकर्म्मफलधर्म्माधर्म्मानु-

चक्रपाणिः—आत्मलीनानीति नित्यात्मसम्बद्धानि। आत्मलीनभूतानां धर्म्मान्तरमाह—स वीजधर्म्मेत्यादि। आत्मलीनभूतसन्तानो वीजस्वरूपः, वीजं हि स्वसदृशमङ्कुरं करोति। तेन अयमप्यात्मलीनो भूतसन्तानः सदृशं देहरूपं भूतान्तरसङ्गं कुर्व्वन् वीजधर्म्मा भवति। सा वीजधर्म्मिणीति वा पाठः, तदा सा भूतसन्ततिरित्यध्याहार्य्यम्। आत्मनीति मनोयुक्तात्मनि। यातीति गच्छति सति। याति गच्छति देहान्तराणीति योजना। आत्मनश्च गमनं मनोगमनमेव। परापराणीति वा पाठः। तदा पराणि श्रेष्ठानि देवादिशरीराणि, अपराणि अश्रेष्ठानि क्रिम्यादिशरीराणीति योजनीयम् ॥ ३४ ॥

चक्रपाणिः—नन्वपरिदृश्यमाना भूतचतुष्टयी मनःप्रवृत्तिरुक्ता किमर्थं स्वीकर्त्तव्या, यतः परिदृश्यमानमेवेदं षाड्भौतिकं शरीरं शुक्रशोणितकारणमस्तु, इत्याह—रूपाद्धीत्यादि। रूप्यत इति

* रूपाद्धि रूपप्रभव इति चक्रः।

बद्वात्मस्थपञ्चभूतानां रूपादिरूपप्रभवो विशिष्टरूपोत्पत्तिः प्रसिद्धः। तद् यथा—अदुष्टशुक्रस्य पुंसोऽदुष्टशोणितगर्भाशयया स्त्रिया सह संसर्गं गच्छतः शुक्रं गर्भाशयगतमार्त्तवेन संयुक्तमसौ परलोकादवक्रम्य प्रविश्य पूर्व्वं स्वस्मिन् स्थितादाकाशादाकाशं सृजति वायोर्वायुं तेजसस्तेजोऽद्भ्योऽपो भूमेर्भूमिमिति, तैः पञ्चभिरुपहितश्चात्मात्मानं जनयति वैश्वानराख्यम्। तेषामेकैकाधिक-पञ्चभूतानि चाहङ्कारिकश्रोत्रादीन्यनुप्रवेशयन् एतानि श्रोत्रादीनि स्थूलानि पञ्चेन्द्रियाणि सृजति। तथा तैर्भूतैः पञ्चकर्म्मेन्द्रियाण्येवं स्वीयस्वीयरूपतो विशिष्टापूर्व्वरूपप्रभवो मनस्तश्च विक्रियमाणान्मनसः खल्वस्मिन् स्थूलदेहे मनसः सत्त्वात् सत्त्वं रजसो रजस्तमसस्तमः सृजति। तेष्वाहङ्कारिकमनः-प्रवेशात् सत्त्वसंज्ञकस्थूलमनसो विशिष्टापूर्व्वरूपप्रभवो भवति प्रतिपुरुषं भेदेन। तथा प्रतिपुरुषे ये त्वाकृतिबुद्धिभेदाः स्थूलदेहे आकृतिविशेषाः बुद्धिविशेषाश्च तत्र विरूपाकृतिबुद्धिभेदेषु रजस्तमःकर्म्म च सदसत्कर्म्मकृतशुभाशुभफलजनक-संस्कारविशेषौ धर्म्माधर्म्मौ च मिलित्वा हेतुः, न तु हेतवः पृथक् पृथगिति। नित्यं मनोयुक्तत्वेन त्रिगुणयोगः ख्यापितः इति देहात् कथं देहमुपैति चान्य-मात्मेति द्वितीयप्रश्नोत्तरम्॥ ३०—३५॥

रूपं भौतिकं शरीरम्। तेन अभौतिकाच्छरीराद् भौतिकं शरीरं भवतीत्यागमप्रसिद्धम्। तेन आगमादेव साङ्ख्यदर्शनरूपादातिवाहिकशरीरात् तदुक्तं शरीरमुत्पद्यते इति वाक्यार्थः। यद्यपि शुक्ररजसी कारणे, तथापि यदैवातिवाहिकं सूक्ष्मभूतरूपशरीरं प्राप्नुतः, तदैव ते शरीरं जनयतः, नान्यदा। यदि शुक्रशोणितमातिवाहिकशरीरनिरपेक्षं गर्भं जनयति, तदा जीवाधिष्ठानेन जनयेत्, न तु जनयति। तस्मादात्मस्थसुसूक्ष्मभूतादेव बीजरूपात् शुक्रशोणितयुक्ताद् गर्भजन्मेति। एतच्चात्मस्थभूतं मातापितृजभूतेन समं शरीरकारणं कर्म्मवशादेव भवतीत्याह—कर्म्मेति। कर्म्मात्म-कानामिति कर्म्मकारणकानाम्। किंवा रूपवत्तन्तुभ्यो रूपवान् पट उत्पद्यते इति प्रसिद्धम्। तेन आतिवाहिकशरीरादेव शरीरेण भवितव्यम्, कारणसदृशं कार्य्यं भवति। ततश्चात्मधर्म्मित्वं सूक्ष्माणामात्मस्थितभावानां सिद्धमिति भावः। अथ मनः सात्त्विकराजसतामसभेदात् भिन्नं कुतस्तत्र पुरुषे भवतीत्याह—मनसो मनस्त इति। पूर्व्वजन्मन्यवस्थितं यादृक् मनः तस्मादिह जन्मन्यपि तादृगेव मनो भवति। उक्तञ्चान्यत्र—"जन्म जन्म यदभ्यस्तं दानमध्ययनं तपः। तेनैवाभ्यासयोगेन तच्चैवाभ्यस्यते पुनः" इति। तत्रापि मन-उत्पत्तौ कर्म्मात्मकानाम् इति योज्यम्। तेन कर्म्मवशादेव मनोभेदो भवति। नन्वेवं सति आत्मस्थसूक्ष्मभूतात्मरूपक-त्वेनैकरूपेणैव शरीरेण सर्व्वप्राणिनां भवितव्यमित्याह—भवन्तीत्यादि। आकृतिः संस्थानम्। रजस्तमसी अनेकतरतमादिभेदभिन्ने तथा कर्म्म चानेकधा भिन्नम्, सत्यभिन्ने सूक्ष्मभूतरूप-कारणे भेदकारणं न भवतीत्यर्थः॥ ३५॥

अतीन्द्रियैस्तैरतिसूक्ष्मरूपैरात्मा कदाचिन्न वियुक्तरूपः।
न कर्म्मणा नैव मनोमतिभ्यां न चाप्यहङ्कारविकारदोषैः ॥ ३६ ॥
रजस्तमोभ्यान्तु मनोऽनुबद्धं ज्ञानं * विना तत्र हि सर्व्वदोषाः।
गतिप्रवृत्त्योस्तु निमित्तमुक्तं मनः सदोषं बलवच्च कर्म्म ॥ ३७ ॥

गङ्गाधरः—अथात्मा सदा कैरनुबध्यते चेति तृतीयप्रश्नोत्तरमाह—अतीन्द्रियैरित्यादि। तैरतिसूक्ष्मरूपैर्वाय्वग्निपाथोधरणीतिचतुर्भूतैः अतीन्द्रियैः सह आत्मा कदाचिन्न वियुक्तरूपः सर्व्वदैव युक्त इत्यर्थः। ननु तर्हि किमेतैरेव नान्यैर्युक्त इत्यत आह—न कर्म्मणेत्यादि। कर्म्मणा धर्म्माधर्म्माभ्यामात्मा न वियुक्तरूपः। मनोमतिभ्याञ्च नैवात्मा वियुक्तरूपः। न चाप्यात्मा अहङ्कारविकारदोषैर्वियुक्तरूपः। अहङ्कारश्च विकाराश्च पञ्चेन्द्रियाणि च पञ्चार्थाश्च दोषाश्च तैस्तथा, अपि त्वात्मा मिथ्यातिसूक्ष्मपञ्चभूतधर्म्माधर्म्ममनोबुद्ध्यहङ्कारश्रोत्रादिपञ्चबुद्धीन्द्रियपञ्चकर्म्मेन्द्रियपञ्चशब्दाद्यर्थदोषैः सदा युक्त इत्यर्थः ॥ ३६ ॥

गङ्गाधरः—ननु दोषा अत्र किं वातादय इत्यत आह—रज इत्यादि। रजस्तमोभ्यामनुबद्धं मनः सत्त्वसंज्ञकं न तु सत्त्वमात्रम्। नीरजस्तमसि शुद्धसत्त्वे मनसि सात्त्विकमहत्तत्त्वरूपा विद्या बुद्धिर्नाम ज्ञानमुद्रिक्तं भवति, तद्विना सर्व्वदोषा ज्ञेयाः। तस्माद् बलवत् सदोषं मनो बलवच्च कर्म्म पूर्व्वकृतकर्म्मजधर्म्माधर्म्मासम्बन्धात्मकृतपञ्चभूतम् एकदेहाद्गतिर्देहान्तरे प्रवृत्तिर्या तयोर्निमित्तमुक्तमिति तृतीयप्रश्नोत्तरम् ॥ ३७ ॥

चक्रपाणिः—आत्मा सदा कैरनुबध्यत इत्यस्योत्तरम्। अतीन्द्रियैरिति बीजधर्म्मित्वेनोक्तैः। अहङ्कारविकारा एव दोषाः। अयं सूक्ष्मभूताद्यनुबन्धो मनस एवेत्याह—रज इत्यादि। रजस्तमोभ्यां मनः सर्व्वैर्भूतादिभिरनुबद्धं भवति। अत्रैव हेतुः ज्ञानादित्यादि। ज्ञानादिति तत्त्वज्ञानात्। तत्त्वज्ञानं विना मनः सर्व्वैर्दोषैर्युक्तं भवति। तत्त्वज्ञानात्तु निर्दोषं भवतीत्याह। सदोषत्वे मनसः किं भवतीत्याह—गतीत्यादि। गतिर्देहान्तरगमनम्। प्रवृत्तिर्धर्म्माधर्म्मक्रियासु प्रवृत्तिः। सदोषत्वे मनः संसारहेतुर्भवतीति वाक्यार्थः। गतिप्रवृत्त्योर्हेत्वन्तरमाह—बलवच्च कर्म्मेत्यादि। बलवदिति नियमविपाकम्। फलवदिति वा पाठः, तत्रापि स एवार्थः। नियतं कर्म्मफलं कर्म्मबलादेव भवति। अत्र प्रश्नोत्तरेषु यदधिकमुच्यते गतिप्रवृत्त्योः इत्यादिना, तत् प्रकरणवशादेव ज्ञेयम् ॥ ३६।३७ ॥

* ज्ञानादिति चक्रः।

रोगाः कुतः संशमनं किमेषां हर्षस्य शोकस्य च किं निमित्तम् ।
शरीरसत्त्वप्रभवा विकाराः कथं न शान्ताः पुनरापतेयुः ॥ ३८ ॥
प्रज्ञापराधो विषमास्तदर्था हेतुस्तृतीयः परिणामकालः ।
सर्व्वामयानां त्रिविधा च शान्तिर्ज्ञानार्थकालाः समयोगयुक्ताः ॥३९॥
धर्म्म्याः क्रिया हर्षनिमित्तमुक्तास्ततोऽन्यथा शोकवशं नयन्ति ।
शरीरसत्त्वप्रभवास्तु दोषाः * तयोरवृत्त्या न भवन्ति भूयः ॥४०

गङ्गाधरः—अतः परं विकृताङ्गप्रसवप्रसङ्गेन विकारादीन् पृच्छति—रोगा इत्यादि । कुतो हेतो रोगा विकारा धातुवैषम्यरूपा भवन्तीत्येकः प्रश्नः । पूर्व्वं वेदनाहेतुप्रश्नः कृतस्तेन गर्भस्थस्य रोगहेतुप्रश्नासिद्धेन पुनरुक्तः । श्लोकस्थाने कालबुद्धीन्द्रियार्थानामित्येतेनोक्तो व्याधिहेतुर्नाग्निवेशपृष्टः, परन्तु तत्रकारणोक्तः । इत्येतत्प्रकारेण भिन्नभिन्नत्वान्न पुनरुक्तदोषः । एषां रोगाणां किं संशमनम् इति द्वितीयः प्रश्नः । हर्षस्य शोकस्य च किं निमित्तम् इति तृतीयः प्रश्नः । शरीरसत्त्वप्रभवाः शारीरा मानसाश्च विकाराः शान्ताः सन्तः कथं पुनर्नापतेयुर्नागच्छेयुरिति चतुर्थः प्रश्नः ॥ ३८ ॥

गङ्गाधरः—क्रमेणैषामुत्तराण्याह—प्रज्ञापराध इत्यादि । प्रज्ञापराध एकः । विषमास्तदर्थास्तेषां प्रज्ञाहेतूनां श्रोत्रादीनामर्थाः शब्दादयः पञ्च, विषमा अयोगातियोगमिथ्यायोगयुक्ता द्वितीयः । परिणामकालः कालपरिणामः षड्वृत्वहोरात्रपूर्व्वकृताशुभकर्म्मस्वभावरूपस्तृतीयः । सर्व्वामयानां हेतुः । इति रोगाः कुत इत्यस्योत्तरम् । अथ सर्व्वामयानां त्रिविधा शान्तिः का त्रिविधेत्यत आह—ज्ञानेत्यादि । ज्ञानं बुद्धिरर्थः शब्दादिः कालः परिणामस्ते समयोगयुक्ताः इति त्रिविधा सर्व्वामयानां शान्तिः । इति संशमनं किमेषामित्यस्योत्तरम् ॥ ३९ ॥

गङ्गाधरः—हर्षस्य शोकस्य च किं निमित्तमित्यस्योत्तरमाह—धर्म्म्या

चक्रपाणिः—'रोगाः कुतः' इत्येकः प्रश्नः । 'संशमनं किम्' इति द्वितीयः । 'हर्षस्य किं निमित्तम्' इति तृतीयः । 'शोकस्य किं निमित्तम्' इति चतुर्थः । शरीरसत्त्वप्रभवा विकाराः कथं न शान्ताः पुनरापतेयुः' इति पञ्चमः । एवं संग्रहवक्ष्यमाणं षट्त्रिंशकं प्रश्नानां पूर्य्यते ॥ ३८ ॥

चक्रपाणिः—प्रज्ञापराधादयः प्रकरणवशात् पुनरुच्यन्ते । परिणामकाल इति कालपरिणाम इत्यर्थः ॥ ३९ ॥

चक्रपाणिः—धर्म्म्या धर्म्मसाधनाः, ताश्च हर्षकारणधर्म्मकर्त्तृत्वेन कारणं भवति । ततोऽन्य-

* दोषा इत्यत्र रोगा इति चक्रः ।

**रूपस्य सत्त्वस्य च सन्ततिर्या नोक्तस्तदादिर्न हि सोऽस्ति कश्चित्।**
**तयोरवृत्तिः क्रियते पराभ्यां धृतिस्मृतिभ्यां परया धिया च ॥४१**

इत्यादि। धर्म्म्या धर्म्मार्थाः क्रिया हर्षस्य निमित्तमुक्ताः। ततोऽन्यथा धर्म्म्य-क्रियातोऽन्यथा अधर्म्म्याः क्रियाः शोकवशं नयन्ति। इति हर्षस्य शोकस्य च किं निमित्तमित्यस्योत्तरम्। अथ शरीरसत्त्वप्रभवाः शरीरप्रभवा दोषा वातपित्त-कफाः, सत्त्वप्रभवा मनःप्रभवा दोषा रजश्च तमश्चेति पञ्च शारीरमानसा दोषा स्तयोः शारीरदोषमानसदोषयोरवृत्त्या वर्त्तनाभावेन भूयः पुनर्न ते शारीर-मानसदोषजा रोगा भवन्ति ततो न च पुनर्जन्म भवति ॥ ४० ॥

गङ्गाधरः—ननु किं तर्हि सर्व्वेषामेव शारीरमानसदोषाणामवर्त्तनेन पुनः कल्पान्तरेऽपि न भविष्यतीत्यत आह—रूपस्येत्यादि। रूपस्य रूप्यते यत् तद् रूपं शरीरं तस्य। सत्त्वस्य मनसश्च। सन्ततिरपरापरत्वेन सन्तानप्रतानं या तदादि-स्तस्या आदिर्हेतुर्नोक्तः। कुत इत्यत आह—न हीत्यादि। हि यस्मात् स शरीर-सत्त्वसन्ततेरादिर्न कश्चिदस्ति। अनादिर्हि शरीरसत्त्वसन्ततिः, सा वर्त्तत एव कस्यचिद्धर्म्मवशात् शरीरसत्त्वदोषावृत्त्या शरीरसत्त्वप्रभवा रोगा न भूयो भवन्ति न तु सर्व्वेषां युगपदिति भावः। ननु शरीरसत्त्वदोषावृत्तिः कुतः स्यादित्यत आह—तयोरित्यादि। तयोः शरीरसत्त्वदोषयोरवृत्तिरसद्भावः पराभ्यामुत्-कृष्टाभ्यां धृतिस्मृतिभ्यां चित्तस्य केवलब्रह्मात्मदेशबन्धरूपधारणा-ब्रह्मविशेष-रूपमहदादिभावनारूपस्मृतिभ्यां परया श्रेष्ठया च धिया बुद्ध्या क्रियते, न तु पूर्व्वाभ्यस्तश्लोकादिवस्तुस्मरणात् आपाततः क्रोधादिधारणात् गोब्राह्मणादि-भक्तिशीलया बुद्ध्या तासां पूर्व्वतनसाधनावस्थिकत्वात् ॥ ४? ॥

थति अधर्म्म्याः क्रियाः। तयोरवृत्त्येति शरीरमनसोः सन्तानोच्छेदात्। मोक्षे हि शरीरमनसी निवर्त्तेते। ततः सर्व्वथा रोगसन्ताननिवृत्तिर्भवति ॥ ४० ॥

चक्रपाणिः—ननु यन्नस्य निवृत्तिर्भवति, तदादिमद् भवति, तत् किं शरीरमनःसन्ततिरादिमती, येन तस्या निवृत्तिर्वास्तविकी रोगनिवृत्तिकारणमुच्यते इत्याह—रूपस्येत्यादि। रूपस्य शरीरस्य। रूपं हि शरीरं रूप्यमाणत्वेन रूपशब्देनोच्यते, यथा—'रूपाद्धि रूपप्रभवः" इत्यत्रोक्तम्। नोक्त इत्यागमेषु। कुतो नोक्त इत्याह—न हि सोऽस्तीति। न हि सोऽस्ति स्वभावादेवेति नोक्त इत्यर्थः। अथ येयमनादिमती शरीरमनःसन्ततिः, तत् कथं तस्या निवृत्तिरित्याह—तयोरित्यादि। तयोरिति शरीरसत्त्वयोः सन्तन्यमानयोः। पराभ्यामिति श्रेष्ठाभ्याम्। धृत्यादयस्तु यथा मोक्ष-कारणम्, तथोक्तं कतिधापुरुषीये। अनादिरपि च शरीरसन्ततिर्यथा विनश्यति, तथा च तत्रैवोक्तम् ॥ ४१ ॥

सत्याश्रये वा द्विविधे यथोक्ते पूर्व्वं गदेभ्यः प्रतिकर्म्मनित्यम्।
जितेन्द्रियं नानुपतन्ति रोगास्तत्कालयुक्तं यदि नास्ति दैवम् ॥४२
दैवं पुरा यत् कृतमुच्यते तत् तत् पौरुषं यत् त्विह कर्म्म दृष्टम्।
प्रवृत्तिहेतुर्विषमः स दृष्टो निवृत्तिहेतुस्तु समः स एव ॥ ४३ ॥

गङ्गाधरः—तत्र पूर्व्वावस्थायां साधनमाह—सत्याश्रये वेत्यादि। सति द्विविधे यथोक्ताश्रये शरीरे मनसि च गदेभ्यः पूर्व्वं रोगोत्पत्तेः पूर्व्वं नित्यं प्रतिकर्म्म प्रतिक्रिया यस्य तं प्रतिकर्म्मनित्यं तथा जितेन्द्रियं जितसत्त्वसंज्ञं जितमनोदोषरजस्तमसं पुरुषं रोगाः शारीरमानसदोषजा व्याधयो नानुपतन्ति नानुगच्छन्ति। नन्वेवमेव पुरुषं रोगाः किं नानुपतन्त्येव किं कदाचिदनुपतन्ति वेत्यत आह—तत्कालेत्यादि। तत्कालयुक्तं तत्कालपरिणतं पूर्व्वकृतकर्म्मजसंस्कारविशेषधर्म्माधर्म्मरूपादृष्टं यदि नास्ति न वर्त्तते, तदा उक्तं पुरुषं रोगा नानुपतन्त्येव इति दृढ़म् ॥ ४२ ॥

गङ्गाधरः—ननु दैवं किमित्यत आह—दैवमित्यादि। पुरा पूर्व्वजन्मनि कृतं यत् कर्म्म तद् दैवमुच्यते। यत् तु कर्म्म इह जन्मनि कृतं तत् कर्म्म मानुषं पौरुषं दृष्टमुच्यते। स उभयजन्मकृतकर्म्मजः संस्कारविशेषः विषमोऽयोगातियोगमिथ्यायोगयुक्तश्चेत् तदा प्रवृत्तिहेतुः शारीरपरिग्रहार्थकर्म्मारम्भाय प्रवर्त्तनं स्यात्। समस्तु समयोगयुक्तस्तु स उभयजन्मकृतकर्म्मजसंस्कारविशेष एव निवृत्तिहेतुर्गदोत्पत्तेर्निवृत्तौ हेतुः समयोग एवेति ॥ ४३ ॥

चक्रपाणिः—प्रकारान्तरेण शारीरमानसरोगाणां चिकित्सां शास्त्रे व्यवह्रियमाणामाह—सत्येत्यादि—आश्रयशब्देन शरीरमनसी गृह्येते। पूर्व्वं गदेभ्य इत्यनुत्पन्नेष्वेव रूपेषु। प्रतिकर्म्मनित्यमनागतचिकित्सानित्यम्। जितेन्द्रियमित्यनेन च रोगहेतुप्रज्ञापराधासात्म्येन्द्रियार्थवर्ज्जनं दर्शयति, प्रतिकर्म्मनित्यतया चाशक्यपरिहारकालकृतदोषचिकित्सां दर्शयति। तत्कालयुक्तमिति तत्कालावश्यं रोगकर्त्तृतया पच्यमानम्। एतेन बलवद्दैवमवश्यं रोगं ददातीति दर्शयति ॥ ४२ ॥

चक्रपाणिः—प्रकरणाद दैवाख्यं कर्म्म तदनुषङ्गाच्च पुरुषकारमप्याह—दैवमित्यादि। तेन प्रकरणालभ्यमानतया जनपदोद्ध्वंसनीयोक्तकर्म्मलक्षणेन समं न पौनरुक्त्यम्। पुरेति जन्मान्तरे। इहेति इह जन्मनि। प्रवृत्तिहेतुरिति रोगप्रवृत्तिहेतुः। विषम इति अधर्म्मरूपं दैवम्, रोगजनकश्च पुरुषकारः। समस्तु दैवं धर्म्मरूपम्, रोगपरिपन्थी च पुरुषकारः। स इति पुंलिङ्गनिर्द्देशस्तु

हैमन्तिकं दोषचयं वसन्ते प्रवाहयन् ग्रैष्मिकमभ्रकाले ।
घनात्यये वार्षिकमाशु सम्यक् प्राप्नोति रोगानृतुजान्न जातु * ॥ ४४
नरो हिताहारविहारसेवी समीक्ष्यकारी विषयेष्वसक्तः ।
दाता समः सत्यपरः क्षमावानाप्तोपसेवी च भवत्यरोगः ॥ ४५ ॥
ज्ञानं तपस्तत्परता च योगे यस्यास्ति तं नानुपतन्ति रोगाः ।
मतिर्वचः कर्म्म सुखानुबन्धि † सत्त्वं विधेयं विशदा च बुद्धिः ॥४६

गङ्गाधरः—ननु कथं गदेभ्यः पूर्व्वं प्रतिकर्म्मनित्यः स्यादित्यत आह—हैमन्तिकमित्यादि । हैमन्तिकं हेमन्तर्त्तौ दोषसञ्चयं वसन्ते आशु सम्यक् प्रवाहयन् निर्हरन्, ग्रैष्मिकं ग्रीष्मकाले दोषसञ्चयमभ्रकाले प्रावृट्काले आशु सम्यक् प्रवाहयन्, वार्षिकं वर्षाकाले दोषसञ्चयं घनात्यये शरदि आशु सम्यक् प्रवाहयन् पुरुषो जातु कदाचिन्न ऋतुजान् रोगान् प्राप्नोति ॥४४॥

गङ्गाधरः—ननु तर्हि किमाहारविहारजान् रोगान् प्राप्नोतीत्यत आह—नर इत्यादि । हिताहारविहारसेवी विषयेषु असक्तोऽनासक्तः सन् समीक्ष्य सम्यक् कार्य्याकार्य्यहिताहितत्वेन कर्त्तव्यं दृष्ट्वा कर्त्तुं शीलं यस्य स समीक्ष्यकारी, दाता सदानशीलः, समः समदर्शी सर्व्वभूतेषु, सत्यपरः सत्यवागादिक्रियः, क्षमावान्, आप्तोपसेवी गुरुवृद्धसिद्धमहर्ष्यादिसेवी अरोगो भवतीति दृढ़म् ॥ ४५ ॥

गङ्गाधरः—नन्वित्येवंमात्रतोऽरोगाः किं भवन्ति न वेत्यत आह—ज्ञानमित्यादि । ज्ञानं भावानां तत्त्वज्ञानं तपो योगे तत्परता च यस्यास्ति तं पुरुषं रोगाः कदाचिदपि नानुपतन्ति उत्तरकालं नागच्छन्ति । इत्थञ्च निवृत्त्यर्थं

कर्म्मणि धर्म्माधर्म्मरूपतया तथा पुरुषकारस्य प्रत्ययमर्षोऽज्ञेयः । अन्ये तु—"प्रवृत्तिहेतुः" इत्यनेन संसारप्रवृत्तिहेतुरिति, तथा "निवृत्तिहेतुः" इत्यनेन मोक्षहेतुरिति च वर्णयन्ति ॥ ४३ ॥

चक्रपाणिः—अथ कालकृतदोषनिमित्तरोगपरिहारस्य प्रतिकर्म्मणः कर्त्तव्यतामाह—हैमन्तिकमित्यादि । वसन्त इति चैत्रे । अभ्रकाल इति श्रावणे । घनात्यय इति मार्गशीर्षे । यदुक्तम्—"माधवप्रथमे मासि" इत्यादिना "प्रवाहयेत्" इत्यन्तेन यथायोग्यतया वमनादिनेति ज्ञेयम् ॥ ४४ ॥

चक्रपाणिः—इरित्वतररोगाभावकारणमाह—नर इत्यादि । सम इति भूतेषु समचित्तः । सुखानुबन्धमिति लिङ्गविपरिणामात् मत्या वचसा च योज्यम् । तेन चात्मनः कर्म्मण्युत्तरकालीनसुख-

* जन्तुरिति वा पाठः । † सुखानुबन्धमिति चक्रः ।

तत्र श्लोकः ।

इहाग्निवेशस्य महार्थयुक्तं षट्त्रिंशकं प्रश्नगणं महर्षिः ।
अतुल्यगोत्रे भगवान् यथावन्निर्णीतवान् ज्ञानविवर्द्धनार्थम् ॥४७

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते शारीरस्थाने
अतुल्यगोत्रीयशारीरं नाम द्वितीयोऽध्यायः ॥ २ ॥

कर्त्तव्यं यद्यत् तत्तदुपसंहारेणाह—मतिरित्यादि। सुखानुबन्धीति पदं लिङ्ग-विपरिणामेन सर्व्वत्र योज्यम्। तेन सुखानुबन्धिनी चिन्त्यसङ्कल्प्यादि-विषया मतिर्विधेया, वचश्च सुखानुबन्धि विधेयम्, कर्म्म च सुखानुबन्धि विधेयम्, सत्त्वं मनश्च सुखानुबन्धि विधेयम्, ऊहापोहादिबुद्धिश्च विशदा निर्म्मला सुखानुबन्धिनी च विधेयेति बोध्यम् ॥ ४६ ॥

गङ्गाधरः— अथाध्यायार्थमुपसंगृह्णाति—तत्र श्लोक इत्यादि। महार्थं महा-प्रयोजनं प्रवृत्तिनिवृत्तिहेतुत्वात्। षट्त्रिंशकं प्रश्नगणम्। * अतुल्यगोत्रस्येत्या-दिरेकः प्रश्नः। सम्पूर्णदेह इत्यादिना षट् प्रश्नाः। कन्यां सुतं वेत्यादिना नव प्रश्नाः। कस्माद् द्विरेता इत्यादिनाष्टौ प्रश्नाः। गर्भस्य सद्योऽनुगतस्येत्या-दिना त्रयः प्रश्नाः। कस्मात् प्रजामित्यादिना त्रयः प्रश्नाः। रोगाः कुत इत्यादिना चत्वारः प्रश्नाः। इति षट्त्रिंशकं प्रश्नगणं महर्षिः पुनर्व्वसुमुनिः अतुल्यगोत्रे अतुल्यगोत्रीयेऽध्याये ॥ ४७ ॥

अध्यायं समापयति—अग्नीत्यादि।

इति वैद्यश्रीगङ्गाधरकविरत्नकविराजविरचिते चरकजल्पकल्पतरौ शारीरस्थान-जल्पे चतुर्थस्कन्धे अतुल्यगोत्रीयशारीरजल्पाख्या द्वितीयशाखा ॥ २ ॥

फलानि शुभानि गृह्यन्ते। सत्त्वं विधेयं स्वायत्तं मनः। विशदा बुद्धिरिति, न कश्मला बुद्धिः। बुद्धिश्चेह ऊहापोहवती विवक्षिता। मतिस्तु स्मृतिचिन्तादिः। ज्ञानं त त्त्वज्ञानम्। शेषं सुगम-मिति ॥ ४५—४७ ॥

इति चरकचतुराननश्रीमच्चक्रपाणिदत्तविरचितायामायुर्व्वेददीपिकायां चरकतात्पर्य्यटीकायाम्
शारीरस्थाने अतुल्यगोत्रीयशारीरं नाम द्वितीयोऽध्यायः ॥ २ ॥

* अत्र टीकाद्वये षट्त्रिंशत्प्रश्नगणस्य असमञ्जसतयेत्थं विचारितम्। तद् यथा—अतुल्यगोत्रस्येत्यत्रैकः प्रश्नः, सम्पूर्णदेह इत्यत्र पञ्च, कन्यां सुतं वेत्यत्र नव, कस्माद् द्विरेताः इत्यत्राष्टौ, गर्भस्य सद्योऽनुगतस्य इत्यत्र पञ्च, कस्मात् प्रजां स्त्रीत्यत्र त्रयः, रोगाः कुतः इत्यत्र पञ्च। इति षट्त्रिंशत्प्रश्नगणः।

# तृतीयोऽध्यायः ।

**अथातः खुड्डीकागर्भावक्रान्ति शारीरं व्याख्यास्यामः, इतिह स्माह भगवानात्रेयः ॥ १ ॥**

**पुरुषस्यानुपहतरेतसः स्त्रियाश्चाप्रदुष्टयोनिशोणितगर्भाशयाया यदा च भवति संसर्ग ऋतुकाले यदा चानयोस्तथैव**

गङ्गाधरः—अथ सम्पूर्णदेह इत्यादिप्रश्नोत्तरे शुक्रासृगात्माशयकालसम्पदित्यादिना यद्गर्भाभिनिर्वृत्तिरुक्ता, तद् यथा स्यात् तदुपदेष्टुं खुड्डीकागर्भावक्रान्तिं शारीरमारभते—अथात इत्यादि। अथोक्तादनन्तरं, खुड्डीकाशब्दोऽल्पवचनः। गर्भावक्रान्तिमिति लोकान्तरादवाधस्ताद् गर्भावक्रान्तिमधिकृत्य कृतं शारीरमिति तद्धितलुकि युक्तवद्व्यक्तिवचने इति। सर्व्वमन्यत् पूर्ववद् व्याख्येयम् ॥ १ ॥

गङ्गाधरः—पुरुषस्येत्यादि। वातादिकृतशुक्रदोषा अष्टौ वक्ष्यन्ते। तैर्दोषैरनुपहतमदुष्टं रेतः शुक्रं यस्य तस्य पुरुषस्य। योनिशोणितगर्भाशयानां दोषाश्च वक्ष्यन्ते। तैर्दोषैर्न प्रदुष्टा योनिश्च शोणितश्च गर्भाशयश्च यस्यास्तस्याः स्त्रियाः। एवम्भूतयोः स्त्रीपुरुषयोरपत्योत्पत्तिहेतुकर्म्मापरिणामे गर्भो न भवतीति ख्यापनायाह—यदा चेत्यादि। अनयोः स्त्रीपुरुषयोस्तथा-

चक्रपाणिः—पूर्व्वाध्याये शुक्रशोणिते गर्भकारणत्वेनोक्ते, न तु कृत्स्नं गर्भकारणमुक्तम्, अतः सम्पूर्णगर्भकारणाभिधानार्थं खुड्डीकागर्भावक्रान्तिरुच्यते। खुड्डीकामित्यल्पाम्। गर्भस्यावक्रान्तिर्मेलक उत्पत्तिरिति यावत् ॥ १ ॥

चक्रपाणिः—पुरुषस्येत्यादि। अनुपहतरेतसः इति शब्देनैव पुरुषस्य इति लभ्यते। यतः पुरुषस्यैव रेतसो गर्भजनकत्वमुक्तम्। तेन 'पुरुषस्य' इति पदेन, य एव सम्पूर्णधातुः पुरुषशब्देन वाच्यो बालव्यतिरिक्तः, तं ग्राहयति। 'स्त्रियाश्च' इति पदमर्थलब्धं सत् यौवनवतीं स्त्रियं लम्भयति। संसर्गो मैथुनम्। ऋतौ पुष्पदर्शने प्रशस्तकाल ऋतुकालः। तेन ऋतुमात्रमाविग्रहं निषेधयति। यतः रजस्वलाभिगमनमलक्ष्मीमुखाणाम् इत्यादिना त्र्यहं निषेधः। आर्त्तवदर्शनञ्च शारदादृतुसाधर्म्यात् ऋतुशब्देनोच्यते। यथा—ऋतावुप्तानि बीजानि प्ररोहन्ति, तथा आर्त्तवदर्शनात् ऋतौ शुक्ररूपं बीजमुप्तमिति ऋतुसाधर्म्यम्। न केवलमेवम्भूतः

युक्तयोः संसर्गे तु शुक्रशोणितसंसर्गम् अन्तर्गर्भाशयगतं जीवोऽवक्रामति सत्त्वसम्प्रयोगात् तदा गर्भोऽभिनिर्व्वर्त्तते। स सात्म्यरसोपयोगादरोगोऽभिवर्द्धते सम्यगुपचारैश्चोपचर्य्य-

युक्तयोरदुष्टयोनिशोणितगर्भाशयानुपहतरेतसोः स्त्रीपुरुषयोर्युक्तयोरृतुकाले संसर्गे सति अन्तर्गर्भाशयगतं गर्भाशयान्तर्निविष्टं शुक्रशोणितसंसर्गं तयोः स्त्रीपुरुषयोरपत्योत्पत्तिहेतुकर्म्मपरिणामे तदपत्यस्य च जन्मग्रहणहेतुकर्म्मपरिणामे च परस्परसंसृष्टशुक्रशोणितं सत्त्वसम्प्रयोगात् तदात्मनि नित्यानुबन्धस्य मनसो जवेन वायुनाभिप्रेर्य्यमाणो जीवः सूक्ष्मदेहवान् विश्वरूपो भूतात्मा यदावक्रामति परलोकादवाधस्ताज्जन्मक्षेत्रे क्रामति तदा गर्भोऽभिनिर्व्वर्त्तते जायते।

ननु स्त्रीपुंससंयोगकाले किञ्चिदेव शुक्रशोणितमन्तर्गर्भाशये संसर्गमेति कथं गर्भोऽभिवर्द्धते इत्यत आह—स सात्म्येत्यादि। स गर्भः सात्म्यं य आहाररसो मातुरात्मना धातुना सहैकीभूत आरोग्याय सम्पद्यते, तदाहारः सात्म्यीभूतस्तदुपयोगाद् गर्भिण्या अरोगो निर्व्विकारो गर्भोऽभिवर्द्धते। असात्म्यरसोपयोगात् तु सविकार एव वर्द्धते न त्वरोग इत्यभिशब्देन ख्यापितम्। तदसात्म्यरसविशेषोपयोगाद् गर्भे स्थितौ चोत्तरकालञ्च रोगवत्त्वावेन वर्द्धते शरीरमिति। एवं सात्म्यरसोपयोगमात्रादेव किमेवं स्यादित्यत आह—सम्यगुपचारैरित्यादि। सात्म्यरसद्रव्याणां सम्यगुपचारैः सात्म्यरसद्रव्याणां

संसर्गरूप एव गर्भकारणम्, किंवा जीवाधिष्ठाने सतीत्याह—यदेत्यादि। तथा युक्त इति अदुष्टरेतसः पुरुषस्य, अदुष्टयोन्यादेः स्त्रियाश्च संसर्गे। अयञ्चार्थः 'पुरुषस्य' इत्यादिनव लब्धोऽपि पुनः शुक्रशोणितसंसर्गम् इत्यादिग्रन्थे वक्ष्यमाणोऽपि कर्म्मविध्यर्थमनूद्यते। तेन न पौनरुक्त्यम्। किंवा 'पुरुषस्य' इत्यादिना पूर्व्वं, मैथुनात् प्रागनुपहतरेतस्त्वादुक्तम्, 'तथा युक्ते च' इत्यनेन मैथुनसमयेऽपि शुक्रयोन्यादीनामदुष्टिरुच्यते। मैथुनकाले हि ईर्ष्यादिना शुक्रदुष्टिः सम्भाव्यते। शुक्रशोणितसंसर्गमिति शुक्रशोणितमेलकम्। 'अन्तः' इत्यनेन गर्भाशयबाह्यगतं संसर्गमकारणं गर्भस्य निषेधयति। जीवशब्देन चेतनाधातुरात्मा, न त्वात्मा व्यापकः। तत् कथमयमवक्रामतीत्याह—सत्त्वेत्यादि। सत्त्वसम्प्रयोगादिति मनोगमनादित्यर्थः। तद् यथोक्तम्,—"युक्तस्य मनसा तस्य निर्द्दिशन्ति मनःक्रियाः" इति। यद्यप्यात्मा विभुत्वेन सर्व्वगतत्वेन न याति, तथापि यत्रास्य कर्म्मवशान्मनो याति, तत्रैव चैतन्योपलब्धेरात्मापि गतः इति व्यपदिश्यत इति भावः। अथैवमुत्पन्नो गर्भः कथमभिवर्द्धते, कथं वा जायत इत्याह—सम्यगुपचारैरिति, गर्भहितकरैरित्यर्थः।

माणः। ततः प्राप्तकालः सर्व्वेन्द्रियोपपन्नः परिपूर्णसर्व्वशरीरो वलवर्णसत्त्वसंहननसम्पदुपेतः सुखेन जायते समुदायादेषां भावानाम् ॥ २ ॥

मातृजश्चायं गर्भः पितृजश्चात्मजश्च सात्म्यजश्च रसजश्चास्ति च सत्त्वसंज्ञमौपपादुकमितिहोवाच भगवानात्रेयः ॥ ३ ॥

कालसम्पन्नगुणानां मात्रया काले समयोगेनाभ्यवहारैर्व्विहाराणाञ्च शयनासनादीनां समयोगेनाचरणैरुपचर्य्यमाण आचर्य्यमाणः स गर्भः तत् प्रसिद्धकालं प्राप्तः सर्व्वेन्द्रियोपपन्नः परिपूर्णसर्व्वाङ्गावयवो वलवर्णसत्त्वसंहननसम्पदुपेतः सन् एषां मात्रादीनां भावानां समुदायात् सुखेन जायते न त्वेकैकस्मादेषां भावानामिति प्रतिज्ञा। असम्यगुपचारैस्तूपचर्य्यमाणोऽप्राप्तकालोऽसर्व्वेन्द्रियोपपन्नोऽपरिपूर्णसर्व्वाङ्गावयवो वलवर्णसत्त्वसंहननसम्पदपेतः कृच्छ्रेण जायते। इति चार्थप्राप्त्या लभ्यतेऽर्थः ॥ २ ॥

गङ्गाधरः—के भावास्ते येषां समुदायाद् गर्भो जायत इत्यत आह—मातृजश्चायमित्यादि। मातृशब्देनाप्रदुष्टयोनिशोणितगर्भाशया स्त्री पितृशब्देनानुपहतरेताः पुमानभिधीयते। सत्त्वं मन औपपादुकमात्मनः शरीरग्रहणे साधकतमत्वेनोपपत्तिकरम् इति। इतिह पारम्पर्य्योपदेशम् ॥ ३ ॥

प्राप्तकाल इति प्राप्तप्रसवकालः प्रसवकालो नवमदशममासौ। परिपूर्णशरीर इति अव्यङ्गोपचितदेहः। सम्पच्छब्दो बलादिभिः प्रत्येकमभिसम्बध्यते। समुदायादिति सम्यङ्मेलकात्। 'एषाम्' इत्यनेन पुरुषस्येत्यादिग्रन्थोक्तान् रेतआर्त्तवबीजसत्त्वसात्म्यरससम्यगुपचारान् प्रत्यवमृशति ॥ २ ॥

चक्रपाणिः—एतदेव समुदायप्रभवत्वं गर्भस्य प्रत्येकं मात्रादिगर्भकारणमुत्पादनेन दर्शयन्नाह—मातृजश्चेत्यादि। सात्म्यजश्चेत्यत्र सात्म्यशब्देन रसव्यतिरिक्तं रूपादि, उपचाराश्च सात्म्या ग्राह्याः। सात्म्यरसस्तु 'रस' इत्यनेनैव गृहीतः। औपपादुकमिति आत्मनः शरीरान्तरसम्बन्धोत्पादकम्। एतच्च व्याकृतमेव पूर्व्वम्। तत्र यद्यपि 'पुरुषस्यानुपहतरेतसः' इत्यनेन पितैव प्रथममुक्तः, तथापि मातृप्रथमतां दर्शयितुं 'मातृजश्चायम्' इति प्रथमं कृतम्। अत्र माता च गर्भे प्रधानं कारणम्; येन आसेकात् प्रभृति प्रसवपर्य्यन्तं मातुरेव गुणदोषावत्र विदधाति गर्भः। प्रथमतस्तु पुरुषस्य मैथुनस्वातन्त्र्यात् तथा शरीरधारकप्रधानास्थिकारणत्वाच्चाग्रेऽभिधानं कृतम् ॥ ३ ॥

नेति भरद्वाजः। किं कारणम् ? न हि माता न पिता नात्मा न सात्म्यं, न त्वन्नपानभक्ष्यलेह्योपयोगा गर्भं जनयन्ति, न च परलोकादेत्य गर्भं सत्त्वसंज्ञकमवक्रामति ॥ ४ ॥

यदि हि मातापितरौ गर्भं जनयेताम्, भूयस्यश्च स्त्रियः पुमांसश्च भूयांसः पुत्रकामाः; ते सर्व्वे पुत्रजन्माभिसन्धाय मैथुनमापद्यमानाः पुत्रानेव जनयेयुर्दुहितॄर्वा दुहितृकामाः। न च काश्चित् स्त्रियः केचिद्वा पुरुषा निरपत्याः स्युरपत्यकामाश्च परिदेवेरन् ॥ ५ ॥

गङ्गाधरः—भगवदात्रेयस्येमां प्रतिज्ञां श्रुत्वा भरद्वाजः कुमारशिरा नेत्युवाच। गर्भो मात्रादिभ्यो जायत इत्येवं न। तत्र प्रश्नः—किं कारणमिति। तत्र कारणमाह—न हीत्यादि। हि यस्मान्माता न गर्भं जनयति न पिता नात्मा न सात्म्यं, नान्नपानभक्ष्यलेह्योपयोगाश्च गर्भं जनयन्ति, न च सत्त्वं परलोकादेत्य गर्भमवक्रामतीति ॥ ४ ॥

गङ्गाधरः—कस्मादेवमित्यत आह—यदि हीत्यादि। हि यस्मात् पुत्रकामा इत्यस्य स्त्रियः पुमांसश्चेत्युभयाभ्यामन्वयो यथालिङ्गं चकारेण ज्ञापितः। अपत्यकामाः परिदेवेरन् मैथुनं गच्छेयुः स्त्रियः सर्व्वाः पुमांसश्च सर्व्वे न च काश्चित् स्त्रियः पुरुषा वा केचिन्निरपत्या न स्युरिति। दृश्यन्ते हि बह्व्यः स्त्रियः पुमांसश्च बहवोऽपत्यकामा मैथुनं गता निरपत्यास्तस्मान्न माता न पिता गर्भं जनयति ॥ ५ ॥

चक्रपाणिः—पूर्व्वपक्षोद्धारेण सिद्धान्तं ग्राहयितुं मात्रादिकारणानामकारणत्वं भरद्वाजः प्रतिजानीते—नेतीति। यदि हीत्यादिना, मात्रादीनामकारणत्वे हेतुं ब्रूते; किंवा अनेनैव मात्रादीनामकारणत्वं भरद्वाजेन प्रतिज्ञातम्; 'तत् किं कारणम्' इति हेतुप्रश्नः। ततः 'न हि माता' इत्यादि हेतुकथनम्; अस्य चायमर्थः—यतो मात्रादयो गर्भकारणत्वे न प्रत्यक्षा गृह्यन्ते, ततो न मात्रादयो गर्भकारणम्; यदि हीत्यादिना तु उपपत्तिविरोधोऽपि मात्राद्यकारणत्वे नास्तीति दर्शयति; तेन न पौनरुक्त्यम्। मैथुनधर्म्मो व्यवायः। पुत्रकामाः पुत्रानेव जनयेयुः, दुहितृकामा दुहितॄर्वा जनयेयुरिति योजना। न तु काश्चित् स्त्रिय इत्यत्र मैथुनमापद्यमाना एव स्त्रियः पुरुषाश्च न परिदेवेरन् चेति योजना। मातापित्रधीनत्वेन गर्भस्य यदैवेच्छन्त्यपत्यम्, तदैव मैथुनमापद्यमानाः सापत्याः स्युः; ततश्च सर्व्वापत्यत्वे न केचित् परिदेवेरन्नित्यर्थः ॥ ४।५ ॥

न चात्मात्मानं जनयति। यदि ह्यात्मात्मानं जनयेत् जातो वा जनयेदात्मानमजातो वा जनयति, तच्चोभयथाप्ययुक्तम्। न हि जातो जनयति सत्त्वात्, न चैवाजातो जनयेत् सत्त्वात् *, तस्मादेषोभयथाप्यनुपपत्तिस्तिष्ठतु। अथ तावदेतद् यद्ययमात्मानं शक्तो जनयितुं स्यात् न त्वेनमिष्टास्वेव कथं योनिषु जनयेत् वशिनमप्रतिहतगतिं कामरूपिणं तेजोबलवर्णसत्त्वसंहननसमुदितमजरमरुजममरमेवंविधं ह्यात्मात्मानमिच्छन्नित्यतो वा भूयः॥ ६॥

गङ्गाधरः—तर्हि चात्मा गर्भं जनयेदित्यत आह—न चात्मा आत्मानं जनयतीति। कथमित्यत आह—यदीत्यादि। हि यस्मात्। आत्मा यद्यात्मानं जनयेत् तदायं प्रश्नः—आत्मा जातो वात्मानं जनयेदजातो वात्मानं जनयेदिति। तच्चोभयथानुपपन्नमिति दर्शयति—न हीत्यादि। हि यस्मादात्मा जात आत्मानं न जनयति, सत्त्वात् सद्भावादस्ति ह्येवात्मा नास्ति चात्मनो जन्मेति। तर्हि चाजातो जनयतीति चेत्, तदप्ययुक्तम्। कस्मात्? न चैवाजातो जनयति सत्त्वात्। आत्मा सत्त्वादजातः कथं पुनः सन्तमेवात्मानं जनयेदिति? सतो जन्मासम्भवादिति। तस्मादेषा योभयथानुपपत्तिः सा तिष्ठतु। अपरञ्च तावदेतत्। किं तावदित्यत आह—यद्ययमित्यादि। अयमात्मा यद्यात्मानं जनयितुं शक्तः स्यात् तदा त्वेनमात्मानं न कथमिष्टासु योनिषु जनयेत्। वशिनमित्येवमादिश्चात्मानमिच्छन्नतो भूयो रूपं वेच्छन् न कथमात्मानं जनयेदिति। दृश्यते चान्यथा। तस्मादात्मा गर्भं न जनयतीति॥ ६॥

चक्रपाणिः—आत्मजत्वं गर्भस्य निषेधयति—न चात्मेत्यादि। आत्मानं न जनयतीत्यर्थः। सत्त्वादिति जन्यस्यात्मनो विद्यमानत्वात्, न च विद्यमानो जन्यते इत्यर्थः। असत्त्वादिति कारणभूतस्यात्मनोऽजातपक्षेऽसत्त्वान्न कारणत्वमुपपन्नमित्यर्थः। अत्रैव दूषणान्तरमाह—तिष्ठत्वित्यादि। योनिष्विति जातिषु; अतो वा भूय इति यथोक्तगुणयुक्तादप्यधिकं शक्रादिपरमर्द्धितुल्यम् इत्यर्थः॥ ६॥

---

* असत्त्वसत्त्वात् इति चक्रः।

असात्म्यजश्चायं गर्भः। यदि हि सात्म्यजः स्यात् तर्हि सात्म्यसेविनामेवैकान्तेन व्यक्तं प्रजा स्यात्। असात्म्योपसेविनश्च निखिलेनानपत्याः स्युस्तच्चोभयमुभयत्रैव दृश्यते ॥ ७ ॥

न रसजश्चायं गर्भः। यदि हि रसजः स्यान्न केचित् स्त्रीपुरुषेष्वनपत्याः स्युर्न हि कश्चिदस्त्येषां यो रसान् नोपयुङ्क्ते। श्रेष्ठरसोपयोगिनां चेद्गर्भा जायन्ते इत्यभिप्रेतम्, इत्येवं सति आजौरभ्र-मार्गमायूररस-गोक्षीरदधिघृत-मधु-तैल-सैन्धवेक्षुरस-मुद्गशालिभृतानामेकान्तेन प्रजा स्यात्। श्यामाकवरकोद्दालक-कोरदूषककन्दमूलभक्ष्याश्च निखिलेनानपत्याः स्युस्तच्चोभय-मुभयत्रैव दृश्यते ॥ ८ ॥

गङ्गाधरः—सात्म्यश्चान्नादिकं गर्भं जनयतीति चेत्, तदपि न युक्तम्, कथमित्यत आह—असात्म्यजश्चायं गर्भ इति। कस्मान्नायं गर्भः सात्म्यज इत्यत आह—यदि हीत्यादि। तत्र व्यभिचारं दर्शयति। तच्चोभयमित्यादि। तच्चोभयमुभयत्र दृश्यते। सात्म्यसेविनोऽपि निरपत्याः केचित्, केचित् सापत्याः; असात्म्यसेविनश्च केचित् सापत्याः, केचिन्निरपत्या दृश्यन्ते; तस्मान्न सात्म्यजश्चायं गर्भ इति ॥ ७ ॥

गङ्गाधरः—रसजश्चायं गर्भ इति चेत्, तत्रोच्यते—न रसजश्चायं गर्भ इति। कथं न रसज इत्यत आह—यदि हीत्यादि। एषां मध्ये यो जनो रसान् नोपयुङ्क्ते तादृशः कोऽपि नास्ति, कथं तर्हि निरपत्याः स्युः? सर्व्वे एव सापत्या भवेयुरिति। तत्र रसशब्देन श्रेष्ठरसश्चेद्विवक्ष्यते तर्हि चाजरसादिभिः श्रेष्ठरसैः पुष्टा एकान्तेन सापत्याः स्युर्न निरपत्याः स्युः। दृश्यन्ते च केचित् सापत्याः केचित् निरपत्या इति। अश्रेष्ठरसश्यामाकादिभक्ष्याश्च निखिलेनानपत्या न दृश्यन्ते, दृश्यन्ते च केचित् सापत्याः केचिन्निरपत्या इति तदुभयमुभयत्र दृश्यते इति ॥ ८ ॥

चक्रपाणिः—तच्चोभयमिति सप्रजत्वमनपत्यत्वञ्च। उभयत्रेति सात्म्यसेविष्वसात्म्यसेविष्वपि। यो रसान् नोपयुङ्क्ते इति रसाहेतुं गर्भकारणम्, रसा सर्व्वे एव स्त्रीपुरुषाः

न खल्वपि परलोकादेत्य सत्त्वं गर्भमवक्रामति। यदि हि एनमवक्रामेन्नास्य किञ्चिदेव पौर्व्वदेहिकं स्यादविदितमश्रुतमदृष्टं वा। स च तन्न किञ्चिदपि न स्मरति तस्मादेवैतद् ब्रूमहे। अमातृजश्चायं गर्भोऽपितृजश्चानात्मजश्चासात्म्यजश्चारसजश्च न चास्ति सत्त्वमौपपादुकमितिहोवाच भरद्वाजः॥ ६॥

नेति भगवानात्रेयः। सर्व्वेभ्य एभ्यो भावेभ्यः समुदितेभ्योऽभिनिर्व्वर्त्तते गर्भः। मातृजश्चायं गर्भः, न हि मातुर्विना गर्भोप-

गङ्गाधरः—अथास्ति च सत्त्वमौपपादुकमिति यदुक्तं तदप्ययुक्तम्। कथमित्यत आह—न खल्वपीत्यादि। न खलु सत्त्वसंज्ञकं परलोकादेत्य गर्भमवक्रामति। कस्मादित्यत आह—यदि हीत्यादि। हि यस्माद् यदि सत्त्वमेनं गर्भमवक्रामेत्, तदास्य पुरुषस्य पौर्व्वदेहिकं किञ्चिदविदितमश्रुतमदृष्टं वा न स्यात्। किन्तु स किञ्चिदपि न स्मरति। तस्मादित्यादि निगमनम्॥ ९॥

गङ्गाधरः—इति यद्भरद्वाज उवाच तत्रोत्तरमाह—नेति भगवानात्रेय इति। कस्माद्भरद्वाजवचनं न? तदाह—सर्व्वेभ्य इत्यादि। प्राक् प्रतिज्ञातमेषां भावानां समुदायाद् गर्भो जायते इति। तस्मादेभ्यो मात्रादिभ्यः सर्व्वेभ्यः समुदितेभ्यो भावेभ्यो गर्भोऽभिनिर्व्वर्त्तते, न त्वेकैकस्मात्। तस्मान्मातृजश्चायं

सेवन्ते। तेन सर्व्वे एव सापत्याः स्युरिति भावः। अथ रसजो गर्भ इत्यस्य 'श्रेष्ठरसः' इत्यर्थो वर्ण्यते, तत्रापि दूषणान्तरमाह—श्रेष्ठमित्यादि॥ ७।८॥

चक्रपाणिः—"अस्ति च सत्त्वमौपपादुकम्" इति यदुक्तम्, तद् दूषयति—न खल्वपीत्यादि। पौर्व्वदेहिकमिति पूर्व्वदेहानुभूतम्। अविदितमदृष्टं वेति इह जन्मनि पूर्व्वदेहानुभूत नाविदितम् अदृष्टं वा स्यात्। विदितं प्रत्यक्षव्यतिरिक्तप्रमाणोपलब्धम्। दृष्टं प्रत्यक्षोपलब्धम्, एतद्विपर्य्ययात् अविदितमदृष्टञ्च विज्ञेयम्। न च किञ्चिदपि स्मरतीति न च पूर्व्वजन्मानुभूतं स्मरतीत्यर्थः। एवं मन्यते—यन्मनः पौर्व्वदेहिकमनुभवति, तच्चेह जन्मन्यप्यनुवर्त्तते, यथा यत् तेन जन्मान्तरानुभूतम्, तदिह जन्मन्यपि तथैव स्मरति। यथा—देवदत्तो बाल्यानुभूतं यौवने स्मरति, न चायं तथा स्मरति। तेन न पूर्व्वापरजन्मन्येकं सत्त्वमिति। तस्मादित्यादिना दूषणदूषितमत्यर्थं पुनर्निगमे दर्शयति॥ ९॥

चक्रपाणिः—भरद्वाजानुमतम् आत्रेयवचसा दूषयति—नेतीत्यादि। समुदितेभ्य इति वचनात् प्रत्येकं मात्रादीनामितरकारणनिरपेक्षाणां गर्भकारणत्वं निषेधयति। तेन मात्रादिसाकल्येऽपि

पत्तिः स्यात्, न च जन्म जरायुजानाम्। यानि तु खल्वस्य गर्भस्य मातृजानि यानि चास्य मातृतः सम्भवतः सम्भवन्ति तान्यनुव्याख्यास्यामः। तद् यथा—त्वक् च लोहितञ्च मांसञ्च मेदश्च नाभिश्च हृदयञ्च क्लोम च यकृच्च प्लीहा च वृक्कौ च वस्तिश्च पुरीषाधानञ्चामाशयश्च पक्वाशयश्चोत्तरगुदश्चाधरगुदश्च क्षुद्रान्त्रञ्च स्थूलान्त्रञ्च वपा च वपावहनञ्चेति मातृजानि ॥ १० ॥

गर्भः, न पित्रादिकारणमन्तरेण। यद्यमातृजश्चायं गर्भ इत्युच्यते, तर्हि किञ्चः? न हि मातुर्ऋते गर्भस्य धारणादुत्पपत्तिः स्यात्। अपरञ्च जरायुजानां जन्म च न मातुर्ऋते स्यात्। कस्मादित्यत आह—यानि त्वित्यादि। यानि खल्वस्य गर्भस्य जरायुजस्य जातोत्तरकालं मातृजानि मातुरात्तव-प्रकृतीनि। मातृतः सम्भवतोऽस्य गर्भस्य यानि मातृशोणितात् सम्भवन्ति तान्यनुव्याख्यास्याम इति; तद् यथा त्वगित्यादि। वपा हृदयस्थमेदः। नैतानि पितृतो वाहाररसतो वा जायन्ते ॥ १० ॥

गर्भकारणान्तरजीवावक्रमाद्यभावाद् गर्भानुत्पादो युक्त एव। न च सामग्रीजन्ये कार्य्ये एकदेशस्य अजनकत्वेनाकारणत्वम्। एवं सति तन्तूनामपि पटकारणानां कारणान्तरासान्निध्ये पटाजनकत्वेन अकारणत्वं स्यादिति भावः। इदमेव मात्रादिजन्यत्वं गर्भस्य यत्—मात्रादिव्यतिरेकेणानुत्पाद्य-मानत्वम्। एवंविधमेव मातुस्तावत् कारणत्वमाह—'मातृजश्चायं गर्भः' इति। गर्भोत्पत्तौ मातुः कारणत्वं दर्शयित्वा जरायोरपि जन्मनि कारणत्वमाह—जन्मेत्यादि। जरायुरमरा, येन वेष्टिता मनुष्यादयः प्रजायन्ते। जरायुणा वेष्टिता जायन्ते इति जरायुजा मनुष्यादयः। संस्वेदजानां मशकादीनाम् उद्भिज्जादीनां भेकादीनाञ्च मातरं विनापि जन्म भवति। अण्डजानामपि च यद्यपि माता कारणं भवत्येव जन्मनि, तथापि जरायुजमानुषस्येह प्रकरणेऽभिप्रेतत्वेनाण्डजान् विहाय जरायुजानाम् इति कृतम्। किंवा जरायुजस्याभिव्यक्तिरूपे जन्मनि यावदभिव्यक्ति यथा माता कारणं भवति, न तथा अण्डजे। तत्र हि जन्मादावण्डोत्पत्तिः। तत्रैव हि माता कारणम्, न जन्मन्यभिव्यक्तिरूपे। यत् तु 'पितरं विना न जरायुजानां जन्म' इति वक्ष्यति, तत् जरायुजोत्पादे पितुरवश्यापेक्षणीयत्वोपदर्शनार्थम्। अण्डजास्तु मत्स्यादयः पितरं विनापि ऋतुविशेषप्राप्तैव भवन्तीति भावः। मातृजानीत्यस्य विवरणम्—यान्यस्य मातृतः सम्भवतः सम्भवन्तीति। सम्भवतो गर्भस्य यानि मातृत इति मातुरागतात् शोणितात् सम्भवन्त्युत्पद्यन्ते, तानि मातृजानि त्वगादीनि अनुव्याख्यास्याम इति योजना। एवमन्यत्रापि यानि त्वित्यादि-

पितृजश्चायं गर्भः। न हि पितुर्ऋते गर्भोत्पत्तिः स्यान्न च जन्म जरायुजानाम्। यानि खल्वस्य गर्भस्य पितृजानि यानि चास्य पितृतः सम्भवतः सम्भवन्ति तान्यनुव्याख्यास्यामः। तद्यथा—केशश्मश्रुनखलोमदन्तास्थिशिरास्नायुधमन्यः शुक्रमिति पितृजानि॥ ११॥

आत्मजश्चायं गर्भः। गर्भात्मा ह्यन्तरात्मा यस्तमेनं जीव इत्याचक्ष्यते। शाश्वतमरुजमजरममरमक्षयमभेद्यमच्छेद्यमलोड्यं विश्वरूपं विश्वकर्म्माणमव्यक्तमनादिमनिधनमक्षरमपि। स गर्भाशयमनुप्रविश्य शुक्रशोणिताभ्यां संयोगमेत्य गर्भत्वेन जनयत्यात्मनात्मानम्, आत्मसंज्ञा हि गर्भे, तस्य पुनरात्मनो जन्म

गङ्गाधरः—तर्हि पितृजश्चायं कथं स्यादित्यत आह—पितृजश्चायमित्यादि। यानि तु खल्वस्य पितृतो जातस्य गर्भस्य पितृजानि जायमानस्य च यानि तेषाञ्च जन्म न स्यादिति। तानि केशादीनि पितृशुक्रजानि न च मातुरार्त्तवजान्यथवाहाररसजानि॥ ११॥

गङ्गाधरः—कथमात्मज इत्यत आह—आत्मजश्चेत्यादि। योऽन्तरात्मा स गर्भस्यात्मा तमेनमन्तरात्मानं जीव इत्याचक्षते। योऽयं जायते स जीवतीति। किं जीव इत्यत आह—शाश्वतमिति। एष ह्यशाश्वतो मरणशीलत्वात्। सोऽन्तरात्मा शुक्रशोणिताभ्यां सह आत्मानं स्वमेव गर्भत्वेन गर्भरूपेण जनयति। कुतो गर्भस्यात्मत्वमित्यत आह—आत्मसंज्ञा हि गर्भे इति। हि

ग्रन्थो व्याख्येयः। मातृजत्वञ्च त्वगादीनामागमगम्यमेव। पुरीषाधानं पक्वाशयः, उत्तरगुदाधरगुदौ गुदोत्तराधरभागौ, वपावहनं तैलवर्त्तिकेति ख्यातम्॥ १०॥

चक्रपाणिः—शुक्रमिति विच्छिद्य पाठेन, शुक्रस्य सर्व्वधातुसारस्योपादेयतां दर्शयति॥ ११॥

चक्रपाणिः—आत्मज इत्यादिना आत्मजत्वं व्युत्पादयति; 'अन्तरात्मोच्यते' इत्यनेन, गर्भकारणभूतमात्मानं षड्धातुसमुदायवद् 'आत्म'शब्दाभिधेयाद् व्यावर्त्तयति; आचक्षत इति आगमेषु; शाश्वतादिशब्दैर्युक्ते सूत्राः, अलोड्यमित्यक्षोभ्यम्; गर्भत्वेन जनयत्यात्मानमिति गर्भस्वरूपो यः षड्धातुरात्मा, तं जनयतीत्यर्थः; गर्भस्यात्मशब्दाभिधेयतामाह—'आत्मसंज्ञा हि गर्भे' इति;

अनादि-सत्त्वान्नोपपद्यते। तस्मादजात एवायमजातं गर्भं जनयति जातोऽप्यजातं च गर्भं जनयति। स चैव गर्भः कालान्तरेण बालयुवस्थविरभावानवाप्नोति। स यस्यां यस्यामवस्थायां वर्त्तते तस्यां तस्यां जातो भवति, या त्वस्य पुरस्कृता तस्यां जनिष्यमाणश्च। तस्मात् स एव जातश्चाजातश्च युगपद्भवति तस्मिंश्चैतदुभयं सम्भवति जातत्वञ्चैव जनिष्यमाणत्वञ्च। स जातो जन्यते। स चैवानागतेष्ववस्थान्तरेष्वजातो जनयति आत्मनात्मानम्। सतो ह्यवस्थान्तरगमनमात्रमेव हि जन्म चोच्यते

यस्मात् गर्भे गर्भाशये गर्भस्यात्मसंज्ञा स्वसंज्ञा। ननु तर्हि किमात्मा जात इत्यत आह—तस्य पुनरित्यादि। तस्यात्मनः पुनस्तस्यात्मनस्तु जन्म नोपपद्यतेऽनादिसत्त्वात् अनादित्वात् सत्त्वाच्च। तस्माज्जन्मानुपपत्तितः स आत्मा अजात एवाजातं गर्भं जनयति। इति तु न चैवाजातो जनयति सत्त्वादित्यस्योत्तरम्। न हि जातो जनयति सत्त्वादित्यस्योत्तरमाह—जातोऽप्यजातमित्यादि। जातोऽयमात्मा स्वमेव जातं गर्भं जनयति। स चाजात एवात्मा गर्भो गर्भत्वावस्थामापन्नः। बालेत्यादिस्थूलावस्थाप्रदर्शनं शिष्याणां स्फुटबोधार्थम्, वस्तुतः प्रतिक्षणमवस्थान्तरं प्राप्नोति शीघ्रगत्वस्वभावेन क्षणभङ्गत्वात् जगतः। यस्यां यस्यां बाल्ययौवनादौ तस्यां तस्यां बाल्ययौवनादौ, या तु अस्य जातस्य या त्ववस्था पुरस्कृता अग्रे कृता आगामिनी, तस्यामवस्थायां स बालो वा युवा वा जनिष्यमाण इति, तस्मात् स बालो बाल्येन जातश्च युवत्वादिना तु अजातश्चेति युगपज्जातत्वमजातत्वञ्च इत्युभयं तस्मात् तस्मिन् बाल्ये एतज्जातत्वं जनिष्यमाणत्वञ्चैतदुभयं सम्भवति, स च बालो जातः क्रमेण युवा जन्यते जायते आत्मना तूत्पाद्यते इति द्व्यर्थः। कथं जातो जन्यत इत्यत आह—स चैवेत्यादि। स एव च बालोऽनागतेषु भविष्यत्सु युवस्थविरादिभावेषु अवस्थान्तरेषु आत्मानमात्मना जनयति स्वेनैव स्वं युवादिकं जनयति।

तस्येत्यनेन परमात्मानं न जनयति; तस्यानादित्वाज्जन्म नोपपद्यते तस्मादजात एवायम् अजातं गर्भं जनयतीति पक्षोऽत्र योज्यः। अथाजातः सन् गर्भावस्थरूपो जात उच्यते; एवमजातत्वं जातत्वञ्चात्मनि द्वयमपि व्यपदिश्यते। एतदेवात्मनि जातत्वमजातत्वञ्च दर्शयितुं दृष्टान्तार्थं गर्भ एव जातत्वमजातत्वं दर्शयति—स चैवेत्यादि। पुरस्कृतेत्यग्रे भविष्यन्ती।

तत्र तत्र च वयसि तस्यां तस्यामवस्थायाम्। यथा—सतामेव शुक्रशोणितजीवानां प्राक् संयोगाद्गर्भत्वं न भवति। तच्च संयोगाद्भवति। यथा सतस्तस्यैव पुरुषस्य प्रागपत्यात् पितृत्वं न भवति तच्चापत्याद्भवति। तथा सतस्तस्यैव गर्भस्य तस्यां तस्यामवस्थायां जातत्वमजातत्वञ्चोच्यते ॥ १२ ॥

न तु खलु गर्भस्य मातुर्न पितुर्नात्मनः सर्व्वभावेषु यथेष्टकारित्वमस्ति। ते किञ्चित् स्ववशात् कुर्व्वन्ति किञ्चित् कर्म्म-

मन्ववस्थान्तरप्राप्तिरियं, कथं जायते वा जन्यते वा इत्यत आह—सत इत्यादि। सतश्च प्राक्सिद्धस्यावस्थान्तरगमनमेव जन्मोच्यते, न त्वन्यद् रूपम्। तत्र उदाहरणमाह—यथेत्यादि। वीजधर्म्मा सूक्ष्मदेही जीवः। सतां वर्त्तमानानां शुक्रशोणितजीवानां संयोगात्। अत्र दृष्टान्तमाह—यथेत्यादि। तच्चेति पितृत्वम्। इति भगवदात्रेयेण प्रोच्य भरद्वाजोक्तं न हि जातो जनयति सत्त्वात्, न चैवाजातो जनयति सत्त्वात्। तस्मादुभयथाप्यनुपपत्तिरिति दूषणं प्रत्युक्तम् ॥१२॥

गङ्गाधरः—यद्ययमात्मानं शक्तो जनयितुं स्यादित्यादि भरद्वाजदूषणं प्रतिवक्तुमाह—न तु खल्वित्यादि। यथेष्टकारित्वं स्वेच्छानुरूपकारित्वम्। ननु

यथा बालस्य युवत्वावस्थाऽजाता जन्यत इति च, तथा अजातो जनयत्यात्मात्मानमिति च शब्दप्रयोगसमर्थनमात्रमेतद् विवक्षाभेदात् बोद्धव्यम्। अनेन चात्मावस्थाभेदकृतजातत्वसमर्थनेन 'जातो वा' इत्यादिग्रन्थकृतपूर्व्वपक्षः शब्दप्रयोगसमर्थनतया परिहृतः; परमार्थतस्तु नित्यत्वेनाजात एवात्मा आत्मनोऽजातावस्थां गर्भादिरूपां जनयति; तेन नासतः कारणत्वम्, सतो वा जन्यत्वम् इति पक्षः स्थिर एव। सतो हीत्यादिना सत्कार्य्यपक्षं सांख्यमतं दर्शयति; किंवा, वयोभेदेन जन्म, तदेवावस्थान्तरगमनमिति दर्शयति-; तस्यां तस्यामवस्थायामिति च्छेदः। पितृत्वमिति पितृत्वेन व्यपदिश्यत इत्यर्थः ॥ १२ ॥

चक्रपाणिः—यदुक्तम्,—यथात्मा आत्मानं जनयति, तदा वशित्वादिगुणयुक्तं जनयेदिति; तत्रोत्तरमाह—न तु खल्वित्यादि। गर्भस्य सर्व्वभावे न मात्रादीनां यथेष्टकारित्वमिति योज्यम्। अत्र च यद्यप्यात्मैव प्रकृतः तथापि तुल्यसमाधानत्वेन मातापितरावपि व्युत्पादितौ। यतो ह्यात्मनः सर्व्वभावेषु यथेष्टकारित्वेन इष्टयोनिगमनादिप्रसक्तिः समाधीयते, तथा मातापित्रोरपि यथेष्टकारित्वेन पुत्रानेव जनयेयुरित्यादिपूर्व्वपक्षः परिहृतो भवति। अथ कुत एवात्मादीनां यथेष्टकारित्वं क्वचिन्न भवतीत्याह—ते किञ्चिदित्यादि। किञ्चिदिति न सर्व्वम्। अत्र मातापितरौ स्ववशौ मैथुनं गर्भकारणं

वशात् क्वचिच्चैषां करणशक्तेर्भवति क्वचिन्न भवति। यत्र सत्त्वादिकरणसम्पत् तत्र यथाबलमेव यथेष्टकारित्वमतोऽन्यथा विपर्य्ययः। न च करणदोषादकारणमात्मा गर्भजनने

तर्हि कथङ्कारं कर्त्तृत्वमस्तीत्यत आह—ते किञ्चिदित्यादि। ते माता च पिता च जीवश्चैते किञ्चित् कर्म्म स्ववशात् कुर्व्वन्ति, किञ्चित् शोकमोहादिकं कर्म्मवशात्, क्वचित् कार्य्ये एषां मातापितृजीवानां करणानां मनोबुद्ध्यादीनां शक्तेर्भवति, कार्य्यं क्वचिच्च कार्य्ये शक्तितो न भवति। सत्त्वादिकरणसम्पत् मनःप्रभृतीनां रजस्तमोऽनुबन्धनिर्म्मुक्तत्वादिः। अतोऽन्यथा यत्र सत्त्वादिकरणव्यापत् तत्र विपर्य्ययो न यथेष्टकारित्वमिति। ननु तर्हि करणानां मनोबुद्ध्यादीनां रजस्तमःप्रभृतिदोषादात्मा न कारणं भवत्विति चेदाह—न चेत्यादि।

सात्म्यरससेवादिकं चाचरतः, गर्भस्य जीवाधिष्ठानादौ तु कर्म्माधीने परवशौ; तथा आत्मापि गर्भस्य चैतन्ये तथा धर्म्माधर्म्मक्रियानुष्ठाने स्ववशः, कर्म्मजन्ये इष्टयोन्यादिगमने धर्म्माधर्म्मपराधीन एव। तेन कर्म्माधीनेऽपि विषये न मात्रादीनां यथेष्टकारित्वम्। यथेष्टकारित्वमपि मात्रादीनां क्वचित् दर्शयन्नाह—क्वचिच्चैषामित्यादि। करणमुपकरणं साधनोपाय इति यावत्। सत्त्वं मनआदि प्रधानं येषाम्, तानि सत्त्वादीनि मनइन्द्रियशुक्रशोणितादीनि; यथाबलमिति यथाकर्म्म, बलशब्देनेहादृष्टमुच्यते। एतेन यत्र मात्रादीनां पुत्रेच्छायामिष्टयोनिषु गमनादिकरणशक्तिर्भवति, कर्म्म चानुगुणं भवति, तत्रेप्सितपुत्रादिष्विष्टयोनिगमनादि कार्य्यं भवति, यदि तत्र विशुद्धशुक्रः पुरुषो भवति, स्त्री च विशुद्धयोन्याशयत्वादिगुणयुक्ता, पुत्रजननञ्च कर्म्म तयोर्बलवत्, तदा पुत्रजन्माभिसन्धाय मैथुनमापद्यमानौ ईप्सितं पुत्रं जनयतः, तथा आत्मापि विशुद्धसत्त्वादिगुणयुक्तः शुभकर्म्मवान् तत्काले इष्टां योनिमनुध्यायति, तदाभीष्टयोनिगमनं सम्पादयत्यात्मन इत्यादि यथेष्टकारित्वोदाहरणं ज्ञेयम्। अतोऽन्यथा इति सत्त्वादिकरणाशक्तौ विगुणे च दैवे विपर्य्यय इति न यथेष्टकारित्वम्; किंवा क्वचिच्च मैथुनादौ पित्रादीनां न स्ववशत्वम्। तत् किमिति जीवोपक्रमादावपि न स्ववशत्वमेषां भवति? इत्याह—क्वचिच्चैषामित्यादि। क्वचिदेव कार्य्ये यस्मात् किञ्चित् करणं मात्रादीनां शक्तम्, न सर्व्वत्र, तेन सर्व्वेष्वेव गर्भस्य भावेषु न शक्तमिति भावः। यत्रापि चैते मात्रादयः स्ववशाः सन्तः कुर्व्वन्ति, तत्रापि स्वीयस्वीयकरणायुक्ता एव कुर्व्वन्तीत्याह—यत्र सत्त्वेत्यादि। यथाबलमिति यथाशक्ति। अनेन च मात्रादयो गर्भस्य येषु विशेषेषु शक्ताः, तेषु सत्त्वादिकरणसम्पत्तौ यथेष्टकारिणो भवन्ति, नाशक्यविषये उपहतोपकरणा वा यथेष्टकारिणो भवन्तीति दर्शयति। अतोऽन्यथा विपर्य्यय इत्यस्य चार्थोऽग्रे व्याकृतः। ननु सत्त्वादिकरणदोषाच्चेदयमात्मा गर्भं न जनयति तथाविधं, हन्त

सम्भवति। दृष्टश्च चेष्टा योनिरैश्वर्य्यं मोक्षश्चात्मविद्भिरात्मायत्तम्। न ह्यन्यः सुखदुःखयोः कर्त्ता न चान्यतो गर्भो जायते जायमानः, न चाङ्कुरोत्पत्तिरबीजात् ॥ १३ ॥

कुतोऽत्रात्मा करणदोषवत्वेऽपि नाकारणमित्यत आह— दृष्टञ्चेत्यादि। कस्माच्च चेष्टादिकमात्मायत्तं दृश्यते इत्यत आह—न ह्यन्य इत्यादि। हि यस्मादात्मतोऽन्यः कश्चिद्भावः। ननु कथमन्यो न कर्त्तेत्यत आह—न चान्यत इत्यादि। अन्योऽप्यात्मतो यः कर्त्तेष्यते सोऽपि जायमानो न चात्मतोऽन्यतो जायते। ननु कथं नान्यतः स कर्त्ता जायमानो जायते इत्यत आह— न चाङ्कुरेत्यादि। वीजं विना न चाङ्कुरोत्पत्तिरिति, तथा च वीजं चेतनावान् आत्मा तस्माज्जायमानोऽन्यश्चेतनः कर्त्ताभिधीयते उपचारात्। परन्तु तत्रापि कर्त्तृत्वे आत्मैव वीजं तस्मादात्मा सुखदुःखयोः कर्त्ता तस्माच्च सुखदुःखहेतुः कर्म्म शुभाशुभमात्मायत्तं शुभाशुभकर्म्मफलादिष्टानिष्टयोनिरैश्वर्य्यं मोक्षश्च शुभकर्म्मत इत्यत आत्मायत्तमेव चेष्टादिकमतो नात्मा करणदोषादकारणं गर्भजनने सम्भवतीति बोध्यम् ॥ १३ ॥

तर्ह्यकारणमेवायमात्मा, कारणं हि यद्भवति, तत् करोत्येव कार्य्यमित्याह—न चेत्यादि। करणदोषादकुर्व्वन् गर्भं कदाचिदात्मा न गर्भजनने कारणं भवतीति न, अपि तु भवत्येव कारणम्। एवं मन्यते—मृदाद्यभावात् घटमकुर्व्वन्नपि कुम्भकारः कारणमेव घटस्य भवति, घटजननशक्तियुक्तत्वात्, तथा आत्मापि करणदोषादकुर्व्वन्नपि तथाविधं गर्भं तज्जनन-शक्तत्वेन भूयोदृष्टत्वात् कारणमेव भवति। तथेष्टयोनिगमने प्रसक्तिरपि प्रोद्भाविता, आत्मनः कारणत्वेन सा क्वचिद् भवतीत्यपि दर्शयन्नाह—दृष्टञ्चेत्यादि। आत्माधीना योनिः पुरुषं प्रति इष्टा योनिः, तथा ऐश्वर्य्यादयश्चात्माधीना दृष्टाः, यथोक्तं कतिधापुरुषीये—"आवेशश्चेतसो ज्ञानम्" इत्यादिना। आत्मनः कारणत्वे हेत्वन्तरमाह—न ह्यन्य इत्यादि। हि यस्मादात्मनोऽन्यः सुखदुःखयोः कर्त्ता नास्ति, अत आत्मैव सुखदुःखसाधनेन्द्रियकर्म्मशरीरादिकर्त्ता। तेन आत्मा कारणं गर्भस्य सुखदुःखाद्याधारस्येति भावः। अथ भूतान्येव कस्मात् संयोगवशात् चेतना-सुखादिकारणानि न भवन्तीत्याह—न चान्यत इत्यादि। अन्यत इति विजातीयात्। जायमान इत्युत्पद्यमानः। सदृशमेव कारणात् कार्य्यमुत्पद्यते। येन न शणस्याङ्कुरोत्पत्तिर्नारिकेलवीजाद्भिति कार्य्यत्वेनाभिमताङ्कुरस्य वीजादुत्पत्तिः; तेन गर्भस्य यच्चैतन्यं तदचेतनेभ्यो न भवति, किन्तु चेतनाधातोरात्मन एवेति दर्शयति ॥ १३ ॥

यानि खल्वस्य गर्भस्यात्मजानि यानि चास्यैवात्मतः सम्भवतः सम्भवन्ति तान्यनुव्याख्यास्यामः । तद् यथा—तासु तासु योनिषूत्पत्तिरायुरात्मज्ञानं मन इन्द्रियाणि प्राणापानौ प्रेरणं धारणमाकृतिस्वरवर्णविशेषाः सुखदुःखे इच्छाद्वेषौ चेतना धृतिर्बुद्धिः स्मृतिरहङ्कारः प्रयत्नश्चेत्यात्मजानि ॥ १४ ॥

सात्म्यजश्चायं गर्भः । न ह्यसात्म्यसेवित्वमन्तरेण स्त्रीपुरुषयोः वन्ध्यत्वमस्ति गर्भे वाऽनिष्टो भावः । यावत् खल्वसात्म्य-

गङ्गाधरः—नन्वेवमात्मनोऽन्यतोऽपि तानि जायन्ते यानि तु खल्वस्य गर्भस्यात्मजानीत्यतस्तान्याह—यानीत्यादि । जातोत्तरकालमप्यात्मजानि सम्भवतो गर्भाशये जायमानस्य गर्भस्य च यानि चात्मजानि तानि चानुव्याख्यास्याम इत्यर्थः । आयुः दीर्घह्रस्वादिरूपं शुभाशुभकर्म्मफलात्, आत्मज्ञानं स्वज्ञानम्, मनः सत्त्वसंज्ञकमिथ्याहङ्कारिकान्मनसः पूर्व्वकृतकर्म्मसहितात्मनः । एवमाहङ्कारिकेन्द्रियेभ्यो नित्यस्वानुबन्धेभ्यो नित्येभ्यो भूतेभ्यः पुनः कर्म्मात्मकेभ्यस्तद्विरूपाण्यनित्यानीन्द्रियाणि बोध्यम् । प्रेरणं मनःप्रभृतीनां स्वस्वविषये, धारणं मनसि धारणा चिरस्थितिरित्यर्थः । आकृतिविशेषः स्वरविशेषो वर्णविशेषश्चात्मकार्य्य एव शुक्रच्युतिकालिकप्रकारविशेषरसविशेषादिकरणसम्पत्तिसहायाद् भवति, न तु शुक्रादिप्रकारविशेषकार्य्यः । तस्मादिष्टास्वेव योनिषु वशिनमित्यादिकश्चात्मानमात्मा न जनयति । तस्मादेवात्मजश्चायं गर्भ इति ॥ १४ ॥

गङ्गाधरः—गर्भस्यात्मजत्वं स्थापयित्वा सात्म्यजत्वं स्थापयति—सात्म्यजश्चायमित्यादि । अयं गर्भस्तु सात्म्यज एव न त्वसात्म्यजः । कुतो नासात्म्यजः सात्म्यजश्च भवतीत्यत आह—न हीत्यादि । हि यस्मात् असात्म्यसेवित्वं विना स्त्रीपुंसयोर्बन्ध्यत्वं नास्ति, गर्भेषु वाप्यनिष्टभावो नास्ति

चक्रपाणिः—एवमात्मजत्वं गर्भस्य व्युत्पाद्यात्मजान् विशेषेणाह—यानीत्यादि । प्रेरणं धारणञ्चेन्द्रियाणामेव । अत्र च तत्तद्देवादि-पश्वादियोनिगमनपरत्वे धर्म्माधर्म्मजन्ये धर्म्माधर्म्मस्यापि जनकत्वेनात्मैव मूलकारणमुच्यते । आत्मज्ञानप्राणापानादौ तु मनःकारणत्वेऽप्यात्मैव व्यवधानेन कारणम् ॥ १४ ॥

चक्रपाणिः—सात्म्यजश्चेत्यादिना सात्म्यजत्वं व्युत्पादयति, असात्म्यसेवा गर्भोपघातिनी

सेविनां स्त्रीपुरुषाणां त्रयो दोषाः प्रकुपिताः शरीरमुपसर्पन्तो न शुक्रशोणितगर्भाशयोपघातायोपपद्यन्ते तावत् समर्था गर्भजननाय भवन्ति। सात्म्यसेविनां पुनः स्त्रीपुरुषाणामनुपहतशुक्रशोणितगर्भाशयानामृतुकाले सन्निपतितानां जीवस्यानवक्रमणाद् गर्भा न प्रादुर्भवन्ति। न हि केवलं सात्म्यज एवायं गर्भः समुदायोऽत्र कारणमुच्यते ॥ १५ ॥

यानि तु खल्वस्य गर्भस्य सात्म्यजानि यानि चास्य सात्म्यतः सम्भवतः सम्भवन्ति तान्यनुव्याख्यास्यामः। तद्

तस्मात् सात्म्यजो गर्भो न त्वसात्म्यजः। अत्रासात्म्यसेविनस्त्वखिलेनानपत्याः स्युरिति यदाशङ्कितं तन्न। कुत इत्यत आह—यावत् खल्वित्यादि। तस्मादसात्म्यसेविनां शरीरोपसर्पद्भिरपि प्रकुपितैरपि त्रिभिर्दोषैः शुक्रशोणितगर्भाशयोपघाताभाववतां सापत्यत्वम्। शुक्रशोणितगर्भाशयोपघातवतान्तु अनपत्यत्वमिति नासात्म्यसेविनां निखिलेनानपत्यत्वम्। एवं सात्म्यसेविनाम् ऐकान्त्येन व्यक्तं प्रजा स्यादिति यदुक्तं तदपि न युक्तम्। कुत इत्यत आह— सात्म्यसेविनां पुनरित्यादि। सन्निपतितानामिति व्यवायमापन्नानाम्। यदि सात्म्यसेविनामनुपहतशुक्रशोणितगर्भाशयानामृतुकाले व्यवायवतामपि स्त्रीपुरुषाणां जीवस्यावक्रममन्तरेण न गर्भा भवन्ति, तर्हि कथं सात्म्यजश्चायम् उच्यते इत्यत आह—न हीत्यादि। केवलमिति एकस्मात् सात्म्यादेव गर्भो जायते इति नोच्यते, किमुच्यते इत्यत आह—समुदाय इत्यादि। समुदायो मातापित्रात्मसात्म्यरससत्त्वानामेषां समुदाय इत्यर्थः। जीवस्यानवक्रमे सात्म्यम् एव सेवमानानां न गर्भा भवन्ति। जीवस्योपक्रमे तु भवन्त्येवेति सात्म्यसेविनाम् ऐकान्त्येन व्यक्तं प्रजा न स्यादिति बोध्यम्। नन्वेतावतापि सात्म्यस्य कस्मात् कारणत्वमिष्यते जीवस्यावक्रमस्येष्यतामिति चेन्न। गर्भाणां सात्म्यस्य कारणत्वमन्तरेण सात्म्यजान्यपि यानि तानि न प्रादुर्भवन्ति ॥ १५ ॥

गङ्गाधरः—ननु कानि च तानि सात्म्यजानीत्यत आह—यानीत्यादि। गर्भस्य जातोत्तरकालं यानि तु सात्म्यजानि तानि सात्म्यतः सम्भवतो

दर्शयन् सात्म्यसेवाया गर्भं प्रति कारणत्वं द्रढयति, सात्म्यसेविनामपि प्रभावबलोत्पत्तिं दर्शयन्

यथा—आरोग्यमनालस्यमलोलुपत्वमिन्द्रियप्रसादः स्वरवर्णवीज-सम्पत् प्रहर्षभूयस्त्वञ्चेति सात्म्यजानि ॥ १६ ॥

रसजश्चायं गर्भः। न हि रसादृते मातुः प्राणयात्रापि स्यात्, किं पुनर्गर्भजन्म। न चैवास्यासम्यगुपयुज्यमाना रसा गर्भ-

गर्भाशये जायमानस्यास्य च यानि सात्म्यजानि तान्यनुव्याख्यास्यामः। वीजस्य सम्पत् शुक्रशोणितदोषाभावः। प्रहर्षभूयस्त्वं मैथुने दुःखशून्यसुखोत्कर्षः। तस्मात् सात्म्यजश्चायं गर्भो न त्वसात्म्यज इति ॥ १६ ॥

गङ्गाधरः—सात्म्यजत्वं स्थापयित्वा गर्भस्य रसजत्वं स्थापयति—रसजश्चेत्यादि। ननु कस्माद् रसजश्चायं गर्भ इत्यत आह—न हीत्यादि। प्राणयात्रा प्राणयापना। मातुः प्राणयात्रां विना कथं गर्भस्य जन्मसम्भव इत्यभिमत्याह—किमित्यादि। तत्रापि रसोपयोगिस्त्रीपुरुषावभिप्रेत्य स्त्रीपुरुषाणां रसानुपयोगित्वाभावेन सर्व्वेषामेव सप्रजत्वापत्तिवारणाय श्रेष्ठरसोपयोगस्य गर्भहेतुत्वे कल्पिते श्रेष्ठरसाजादिमांसरसादिसेविभिन्नानां श्यामाकादिसेविनां निखिलेन अनपत्यत्वं यदाशङ्कितं तन्न। कुत इत्यत आह—न चैवेत्यादि। अस्य स्त्रीपुरुषोभयस्यासम्यगुपयुज्यमाना अश्रेष्ठा रसा नैव गर्भमभिनिर्व्वर्त्तयन्ति, असम्यग्रससेविनां हि स्त्रीपुरुषाणां त्रयो दोषाः प्रकुपिताः शरीरमुपसर्पन्तो न यावत् शुक्रशोणितगर्भाशयोपघाताय सम्पद्यन्ते तावत् तद्रसानुरूपगर्भजननाय भवन्ति इति। असम्यग्रसोपयोगिनां शरीरं सर्पद्भिरपि प्रकुपितैस्त्रिभिर्दोषैरनुपहतशुक्रशोणितगर्भाशयानां सापत्यत्वम्। तदुपहतशुक्रशोणितगर्भाशयानान्तु

"असात्म्यरससेविनश्च निखिलेनानपत्याः स्युः" इति पूर्व्वपक्षं परिहरति; सात्म्यरससेविनां पुनरित्यादिना तु ग्रन्थेन 'सात्म्यरससेविनामेकान्तेन प्रजा स्यात्' इति यदुक्तम्, तत् परिहरति; सन्निपतितानामिति व्यवायमापन्नानाम्। अत्र स्वरवर्णौ सात्म्यरसजत्वेनोक्तौ; तेन द्वावप्यत्र कारणमिति ज्ञेयम् ॥ १५।१६ ॥

चक्रपाणिः—प्राणयात्रापि स्यादिति गर्भाधारभूताया मातुरपि प्राणस्थितिरित्यर्थः। न चैवमसम्यगुपयुज्यमाना इत्यादिना, 'असात्म्यरसोपयोगस्य गर्भोपघातित्वं' दर्शयति; असात्म्यरसोपयोगिनां प्रभावेण जननं यत्, तदसात्म्यसेविप्रजाभवनन्यायतुल्यमिति नेह पुनर्दर्शितम्। समुदयो-

मभिनिर्व्वर्त्तयन्ति। न च केवलं सम्यगुपयोगादेव रसानां गर्भाभिनिर्वृत्तिर्भवति समुदायोऽप्यत्र कारणमुच्यते ॥ १७ ॥

यानि तु खल्वस्य गर्भस्य रसजानि यानि चास्य रसतः सम्भवतः सम्भवन्ति तान्यनुव्याख्यास्यामः। तद् यथा— शरीरस्याभिनिर्वृत्तिरभिवृद्धिः प्राणानुबन्धस्तृप्तिः पुष्टिरुत्साहश्चेति रसजानि ॥ १८ ॥

निरपत्यत्वमित्यस्मात् श्यामाकादुपयोगिनां न निखिलेनानपत्यत्वमिति। एवं छागादिश्रेष्ठरसोपयोगिनामैकान्त्येन प्रजा स्यादिति यदुक्तं तदपि न युक्तम्। कुत इत्यत आह—न च केवलमित्यादि। केवलं श्रेष्ठाजादिरसानामुपयोगादेव गर्भाभिनिर्वृत्तिश्च न भवति जीवस्यानवक्रमात्। न हि केवलं रसज एवायं गर्भ इत्युच्यते। किमुच्यते कारणमित्यत आह—समुदाय इत्यादि। तथा च जीवस्यानवक्रमे श्रेष्ठरसोपयोगिनामपि न गर्भः स्यात् जीवावक्रमे तु स्यादित्यतो हेतोरजादिश्रेष्ठरसोपयोगिनामेकान्तेन गर्भो न भवतीति बोद्धव्यम्। नन्वेवम् अस्त्वात्मा कारणं कुतो रसः कारणमुच्यते इति चेन्न। रसं विना शरीराभिनिर्वृत्त्यभिवृद्ध्यादीनां रसकार्य्याणां गर्भस्य जातोत्तरकालं गर्भाशये जायमानस्य चासम्भवात् ॥ १७ ॥

गङ्गाधरः—ननु कानि रसकार्य्याणीत्यत आह—यानि त्वित्यादि। यानि जातोत्तरकालं गर्भस्य रसजानि रसतः सम्भवतो गर्भाशये जायमानस्य यानि च रसजानि तान्यनुव्याख्यास्यामः—तद् यथेत्यादि। शरीरस्याभिनिर्वृत्तिरुत्पत्तिः। शुक्रशोणितयोरपि रसजत्वात्। अभिवृद्धिः क्रमेण परिमाणवृद्धिर्दैर्घ्येण स्थौल्येन च। प्राणानुबन्धः उत्तरोत्तरबलश्वासनिश्वासादिहेतुत्वनुवृत्तिः। पुष्टिर्मध्यकालेऽपि दीर्घत्वाद्यभिवृद्धिं विनापि पोषणं शरीरस्य। इत्येवं प्रकारेण रसजश्चैवायं गर्भो न त्वरसज इति ॥ १८ ॥

ऽप्यत्र कारणमित्यनेन तुल्यसम्यग्रससेविनाञ्चापत्यभवने कारणं धर्म्मादि दर्शयति। अभिनिर्वृत्तिः अङ्गप्रत्यङ्गव्यक्तता। वृद्धिस्तु दैर्घ्येण वृद्धिः। प्राणानुबन्धः इति बलानुबन्धः। पुष्टिरुपचयः। उत्साहो बलम्। 'इति'शब्दः प्रकारे। तेन एवंप्रकाराण्यान्यान्यपि वर्णादीनि रसजानीति दर्शयति। एवं पूर्वत्रापि 'इति'शब्दो व्याख्येयः। यदा तु 'इति'शब्दश्च परिसमाप्त्यर्थः, तदाऽप्याविष्कृता रसजानां परिसमाप्तिर्ज्ञेया। तेन अनाविष्कृता वर्णादयोऽपि रसजा लभ्यन्ते ॥ १७।१८ ॥

अस्ति खल्वपि सत्त्वमौपपादुकं यज्जीवस्पृक् शरीरेण * अभिसंबध्नाति, यस्मिन्नपगमनपुरस्कृते शीलमस्य व्यावर्त्तते, भक्तिर्विपर्य्यस्यते, सर्व्वेन्द्रियाण्युपतप्यन्ते, बलं हीयते, व्याधय आप्यायन्ते, यस्माद्धीनः प्राणान् जहाति, यदिन्द्रियाणामभिग्राहकञ्च मन इत्यभिधीयते, तत् त्रिविधमाख्यायते शुद्धं राजसं तामसञ्चेति। येनास्य खलु मनो भूयिष्ठं तेन द्वितीयायामाजातौ

गङ्गाधरः—इति रसजत्वं गर्भस्य स्थापयित्वा सत्त्वजत्वं स्थापयति—अस्तीत्यादि। न खल्वपि परलोकादेत्य सत्त्वं गर्भमवक्रामति इति यदुक्तं तन्न। यस्मादस्ति खलु सत्त्वं मनोऽप्यौपपादुकमिति। कथमौपपादुकमित्यत आह—यत् सत्त्वं जीवस्पृक् जीवात्मानं नित्यं स्पृशत् शरीरेणाभिसम्बध्नाति, तद्विना हि जीवात्मनः शरीराभिसम्बन्धो न स्यात्। यस्मिन् सत्त्वे अपगमनं शरीरात् स्वनिर्गमनं, पुरोऽग्रे कृतं येन तस्मिन् आसन्नमरणस्यास्य शील स्वभावो व्यावर्त्तते विपरीतो भवति, भक्तिर्भजनशीलता विपर्य्यस्यते विपर्य्ययो भवति। उपतप्यन्ते सर्व्वेन्द्रियाणि शक्त्यादिना हीयन्ते। यस्माद्धीनः प्राणी। तदिन्द्रियाणां श्रोत्रादीनां स्वार्थग्रहणाय प्रेरकं यत् तन्मन इत्यभिधीयते। तत् त्रिविधमाख्यायते शुद्धं केवलसत्त्वात्मकं राजसं रजोगुणबहुलं तामसं तमोगुणबहुलम्। इत्यस्मादस्ति खल्वपि सत्त्वमौपपादुकमिति। न तु न चास्ति सत्त्वमौपपादुकमिति। अत्र तु नास्य किञ्चित् पौर्व्वदेहिकं स्यादविदितमश्रुतमदृष्टं वा स च किञ्चिदपि न स्मरतीति यदाशङ्कितं तदप्ययुक्तम्। कुत इत्यत आह—येनास्येत्यादि। येन सत्त्वाद्यन्यतमेन गुणेनास्य मनुष्यस्य मनो भूयिष्ठं

चक्रपाणिः—अस्तीत्यादिना मनस औपपादुकमाक्षिप्तं समादधाति। 'अपि'शब्दोऽवधारणे। अत्र च 'यज्जीवं स्पृक्शरीरेणाभिसंबध्नाति' इत्यादिना मनसो धर्म्मकथनमेवौपपादुकसाधनं भवति, मनोव्यतिरेकेणैतदुच्यमानधर्म्माणामसिद्धेः। नित्यमात्मानं स्पृशतीति स्पृक्। शरीरमातिवाहिकशरीरम्। तेन स्पृक्शरीरेण कारणभूतेन जीवमात्मरूपमभिसबध्नाति भोगायतनशरीरेणेति शेषः। आतिवाहिकशरीरसद्भावश्च "भूतैश्चतुर्भिः सहितः" इत्यनेन प्रतिपादितः। किंवा 'जीवमात्मानं स्पृक्शरीरेण' इति स्पर्शवता शरीरेण यन्मनोऽभिसंबध्नाति तदौपपादुकमस्तीति योजना। एवं मन्यते—यदि मनोऽआत्मनः शरीरसम्बन्धे न स्वीक्रियते, तदा व्यापकत्वादात्मनः सर्व्वत्रवोपलब्ध्या भवितव्यम्। न च भवति। तथा यत्र स्पर्शवति शरीरे मनः प्रतिबद्धं भवति, तत्रैवायं

* जीवं स्पृक्शरीरेणेति चक्रः।

सम्प्रयोगो भवति। यदा तु तेनैव शुद्धेन संयुज्यते तदा जाते-रतिक्रान्तायाश्च स्मरति। स्मार्त्तं हि ज्ञानमात्मनस्तस्यैव मनसोऽनुबन्धादनुवर्त्तते, यस्यानुवृत्तिं पुरस्कृत्य पुरुषो जातिस्मर इत्युच्यते इति सत्त्वमुक्तम्॥ १८॥

यानि खल्वस्य गर्भस्य सत्त्वजानि यानि चास्य सत्त्वतः

तद्गुणभूयिष्ठेन तेन मनसा द्वितीयायामाजातौ द्वितीयजन्मपर्य्यन्तं सम्प्रयोगः अस्य मनुष्यस्य भवति। तद्गुणमनोऽनुवृत्तिर्द्वितीयजन्मपर्य्यन्तं भवति। यदा तु तेनैव मनसा शुद्धेन केवलसत्त्वगुणात्मकेन संयुज्यतेऽयं पुरुषस्तदाति-क्रान्ताया अतीतायाः पूर्व्वस्या अपि जातेर्जन्मनः स्मरति। स्मरतेः कर्म्मणि षष्ठी। न तु राजसेन न वा तामसेन मनसा यदि संयुज्यते। कुत इत्यत आह—स्मार्त्तं हीत्यादि। हि यस्मादात्मनो ज्ञानं स्मार्त्तं स्मृत्या वर्त्तते। एतमेवार्थं व्याकरोति। तस्यैव शुद्धसत्त्वात्मकस्य मनस आत्मनोऽनुबन्धादनुवर्त्तते। यस्य ज्ञानस्यानुवृत्तिं पुरस्कृत्य अग्रे कृत्वा पुरुषो जातिस्मरः पूर्व्वजन्मस्मरणशील इत्यभिधीयते इति। तस्मान्नास्य किञ्चित् पौर्व्वदेहिकं स्यादविदितमश्रुतमदृष्टं वा, स च किञ्चिदपि न स्मरतीति यदुक्तं तन्न। नन्वेवमस्त्वात्मनो गुणवतः सत्त्वोद्रेकेण गर्भावक्रमो न तु सत्त्वसंप्रयोगादिति चेन्न, मनःकार्य्याणां शील-शौचादीनामसम्भवात्॥ १९॥

गङ्गाधरः—ननु कानि सत्त्वकार्य्याणीत्यत आह—यानीत्यादि। जातोत्तर-

मुखादुपलभते। 'स्पृग्'विशेषणेन शरीरस्य मूत्रनखकेशादौ मनोगमनाभावादात्मनोऽनुपलब्धिं दर्शयति। अपगमनपुरस्कृत इति देहान्तरगमनापायमुखे। भक्तिरिच्छा। यस्माद्धीन इति मनसा त्यक्तः। येनेति यथाभूतेन सात्त्विकेन राजसेन तामसेन वा मनसा मनो भूयिष्ठमित्यभिप्रायः। द्वितीयायां वा जाताविति द्वितीयजन्मनि, जन्मान्तरे यादृशं मनः, तादृशमेव जन्मान्तरे प्रायो भवतीत्यर्थः। केचित् तु, 'तेन न द्वितीयायाम्' इति पठन्ति। अत्रापि प्रायो द्वितीये जन्मनि तुल्येन मनसा योगो न भवति, कदाचित् तु भवतीत्यर्थः। यदुक्तम्—'नास्य किञ्चित् पौर्व्व-देहिकमविदितं स्याद्' इति, तत् पौर्व्वदेहिकं ज्ञानं क्वचिद् भवतीति दर्शयन्नाह—यदा त्वित्यादि। शुद्धेनेति विशुद्धसत्त्वगुणेन। तस्यैवेति वक्ष्यमाणेन यस्येत्यनेन सम्बध्यते। योनियन्त्र-पीडायामपि हि उद्भूतेन तमसा विप्लुतं मनो नातिक्रान्तजन्मगतं स्मरति, यस्तूद्भूतसत्त्वस्तमसा नाभिभूयते, स स्मरत्येवातिक्रान्तजन्मानुभूतमिति भावः। पुरस्कृत्येति कारणत्वेनावधार्य्य। अयञ्च मनोधर्म्मसमूह इन्द्रियोपक्रमोक्तोऽपि पुनरिह प्रकरणवशादुच्यमानो न पुनरुक्तदोषमावहति।

सम्भवतः सम्भवन्ति तान्यनुव्याख्यास्यामः। तद् यथा—भक्तिः शीलं शौचं द्वेषः स्मृतिर्मोहस्त्यागो मात्सर्य्यं शौर्य्यं भयं क्रोधस्तन्द्रोत्साहस्तैक्ष्ण्यं मार्द्दवं गाम्भीर्य्यमनवस्थितत्वमित्येवमादयश्चान्ये ते सत्त्वजा विकारा यानुत्तरकालं सत्त्वभेदमधिकृत्योपदेक्ष्याम इति सत्त्वजानि। नानाविधानि तु खलु सत्त्वानि तानि सर्व्वाण्येकपुरुषे भवन्ति। न च भवन्त्येककालम्। एकन्तु प्रायोऽनुवृत्त्याह ॥ २० ॥

कालं यानि सत्त्वजानि यानि च जायमानस्य। शीलं शीलता। तैक्ष्ण्यं तीव्रस्वभावः। मार्द्दवं मृदुस्वभावः। गाम्भीर्य्यमचञ्चलत्वम्। उत्तरकालं महत्यां गर्भावक्रान्त्यां शारीरे। ननु सत्त्वमुक्तं त्रिविधं शुद्धं राजसं तामसमिति। तत् त्रिकमेवैकैकस्मिन् पुरुषे किमथवा प्रत्येकमित्यत आह—नानेत्यादि। एककालं युगपत्। ननु यदैककालं न भवति शुद्धं राजसं तामसञ्च मनस्तर्हि कथं मनःसंज्ञमुच्यते सत्त्वं रजस्तमश्चाख्यायताम् अथवा सत्त्वमयं, रजोमयं तमोमयञ्चाख्यायतां त्रिविधमेव ततो भवति न तु नानाविधमित्यत आह—एकन्तु इत्यादि। सत्त्वमेकं प्रायोऽस्य सत्त्वगुणादेरेकैकगुणबहुलत्वेनानुवृत्त्या सात्त्विकं वा राजसं वा तामसं वाह। तस्मान्न खल्वपि परलोकादेत्य सत्त्वं गर्भमवक्रामतीति न वाच्यम् ॥ २० ॥

यद्यपि सत्त्वस्य गर्भजनकत्वं साक्षान्नोक्तम्, तथापि सत्त्वस्य यदुपपादकत्वं गर्भं प्रति, तेनैव सत्त्वस्य गर्भजनकत्वं प्रतिज्ञातं मन्तव्यम्। तेन 'यानि खल्वस्य गर्भस्य सत्त्वजानि' इत्यादिना गर्भे सत्त्वजभावकथनमुपपन्नमेव, गर्भकारणत्वकथनमपि च। सत्त्वस्योपपादकत्वभाषया कारणत्वं यदुक्तम्, तद्देहान्तरगमनरूपधर्म्मस्य गर्भकारणत्वातिरिक्तस्य प्रतिपादनीयम्। नानाविधानीति नानाविधसात्त्विकराजसतामसवृत्तिभिन्नानि। तान्येकपुरुषे भवन्तीत्यनेन एक एव पुरुषः कदाचिद्धर्म्मक्रियायां सात्त्विको भवति, कदाचित् कामचिन्तायां राजसः, कदाचित् मोहे तमोमय इति दर्शयति। एकदैव सात्त्विकादयो धर्म्मा न भवन्ति, किन्तु पर्य्यायेण भवन्ति। ननु यद्येकपुरुष एव सर्व्वे सात्त्विकादयो भवन्ति, तत् कथमयं सात्त्विक इत्यादिव्यपदेशा भवन्तीत्याह—एकन्त्वित्यादि। प्रायोवृत्त्येति भूयिष्ठा यस्य सात्त्विका वृत्तयो भवन्ति स सात्त्विकः, यस्य राजस्यो वृत्तयो भवन्ति स राजस उच्यते इत्यादि। एतदेव पूर्व्वमुक्तम्,—'यद्गुणञ्चाभीक्ष्णं पुरुषमनुवर्त्तते सत्त्वम्, तद्गुणमेवोपदिशन्ति बाहुल्यानुशयाद्' इति ॥ १९।२० ॥

एवमयं नानाविधानामेषां गर्भकराणां भावानां समुदायादभिनिर्व्वर्त्तते गर्भः। यथा कूटागारं नानाद्रव्यसमुदायात्, यथा वा रथो नानारथाङ्गसमुदायात्। तस्मादेतदवोचाम—मातृजश्चायं गर्भः पितृजश्चात्मजश्च सात्म्यजश्च रसजश्चास्ति च सत्त्वमौपपादुकमितीतिहोवाच भगवानात्रेयः॥ २१॥

भरद्वाज उवाच। यद्ययं नानाविधानामेषां गर्भकराणामेव

गङ्गाधरः—अथोपसंहरणप्रतिज्ञातार्थमाह—एवमित्यादि। एवमुक्तप्रकारेण अयं गर्भो नानाविधानां मातापित्रात्मसात्म्यरससत्त्वानां समुदायात् समस्तादभिनिर्व्वर्त्तते न व्यस्तात्। अत्र दृष्टान्तमाह—यथेत्यादि। कूटागारं जेन्ताकगृहम्। तस्मान्मात्रादिषट्कृतो गर्भाभिनिर्व्वर्त्तनादेतद् वक्ष्यमाणं त्रयम् अवोचाम। किमित्यत आह—मातृजश्चायमित्यादि। स्पष्टम्॥ २१॥

गङ्गाधरः—अत्रापि भगवदात्रेयोक्ते प्रतिवचने सति पुनरपि भरद्वाजः कुमारशिराः। स पूर्व्वप्रतिपक्षो भरद्वाज उवाच, किमिति प्राह—यद्ययमित्यादि।

चक्रपाणिः—एवं मात्रादिकारणव्युत्पादनेन गर्भस्य समुदायप्रभवतां व्युत्पादितां दृष्टान्तेन द्रढयन्नाह—एवमयमित्यादि। कूटागारं वर्त्तुलाकारं गृहं जेन्ताकस्वेदप्रतिपादितम्, अन्ये तु वस्त्रादिकृतं सञ्चारगृहं कूटागारमाहुः। अत्र प्रकरणे यद्यपि मात्रादीनां सर्व्वेषां समुदितानामेव गर्भं प्रति कारणत्वम्, तथापि मातापित्रात्मसत्त्वानि विहाय सात्म्यरसयोरेव कारणत्वव्युत्पादने यत् 'समुदायोऽप्यत्र कारणम्' इत्युक्तम्, तत्रैवं मन्यते—अत्र यथा मात्रादयश्चत्वारोऽवश्यं गर्भप्रतिपादकभूताः, न तथा सात्म्यो रसो वा। येन शुक्रशोणितसत्त्वात्मसंसर्गादेव गर्भो भवति, नावश्यं गर्भमेलके सात्म्यरसयोरपेक्षा, गर्भमेलकोत्तरकालं सात्म्यरसाभ्यां गर्भस्य पुष्ट्यादयो जन्यन्ते। तेन सात्म्ये रसे चावश्यं समुदायमपेक्ष्यं दर्शयति। यत्रैव 'समुदायोऽप्यत्र कारणम्' इत्युक्तम्, मात्रादयस्तु परस्परसमुदायमपेक्षमाणा अपि नावश्यं सात्म्यरससमुदायमादिगर्भमेलकेऽपेक्षन्त इति पुनस्तत्र समुदायापेक्षित्वं नोक्तम्। 'समुदायादेषां भावानाम्' इत्यनेन ग्रन्थेन, यत् परस्परसमुदायापेक्षित्वं मात्रादीनां चतुर्णाम्, तदुक्तमेव। यद्यपि गर्भं प्रत्यविशेषेण सात्म्यरसयोरपि कारणत्वम् 'सात्म्यजश्चायं रसजश्चायम्' इत्यनेनोक्तम्, तद् गर्भमेलकोत्तरकालं कारणत्वेन, तथा मातापित्रोरपि विशुद्धशुक्रशोणितोत्पादहेतुतया पारम्पर्य्येण कारणत्वादिति ज्ञेयम्॥ २१॥

चक्रपाणिः—पुनर्भरद्वाजः पृच्छति—यद्ययमित्यादि। कथं सन्धीयत इति कया परिपाट्या

भावानां समुदायादभिनिर्व्वर्त्तते गर्भः, कथमयं सन्धीयते? यदि चापि सन्धीयते, कस्मात् समुदायप्रभवः सन् गर्भो मनुष्यविग्रहेण जायते? मनुष्यश्च मनुष्यप्रभव उच्यते। तत्र चेदिष्टमेतद् यस्मान्मनुष्यो मनुष्यप्रभवः, तस्मादेव मनुष्यविग्रहेण जायते। यथा गौर्गोप्रभवः यथा चाश्वोऽश्वप्रभव इत्येवं यदुक्तमग्रे समुदायात्मक इति तदयुक्तम्। यदि च मनुष्यो मनुष्यप्रभवः कस्माज्जड़ान्धकुब्जकुब्रूमूकमिन्मिनवामनव्यङ्गोन्मत्तकुष्ठकिलासिभ्यो जाताः पितृसदृशरूपा न भवन्ति?

अयं गर्भ इत्यन्वयः। कथमयमित्यत्रापि गर्भ इत्यनुवर्त्तते। कथं केन प्रकारेणायं गर्भो हेतुसमुदायान्मिलतीत्यर्थः। तत्र सर्व्वदा सर्व्वेषामपत्यदर्शनाभावेन यदापत्योत्पत्तिहेतुकर्म्म परिणमति तदा मात्रादिहेतुसमवायः स्यात्। ततश्च यद्यपि सन्धीयते तर्हि कस्मात् समुदायप्रभवो मात्रादिषट्कप्रभवः सन् गर्भो मनुष्यविग्रहेण मनुष्याकारेण जायते। तत्र यदि मनुष्यो मनुष्यप्रभव इत्यतो मनुष्यविग्रहेण जायते इति तर्हि कस्माच्च मनुष्यो मनुष्यप्रभव उच्यते। तत्र च मनुष्यो मनुष्यप्रभव इति वचने चेद् यदेतत्तदिष्टं भवद्भिस्तत् किमित्यत आह—यस्मादित्यादि। मनुष्यप्रभव इति पितृरूपान्मनुष्यात् प्रभवो न तु मातृमनुष्यात्। अत्र दृष्टान्तो यथा गौरित्यादि। एवमुक्तप्रकारे सति तदयुक्तं मात्रादिषट्कसमुदायज इति वचनं यदुक्तं तदयुक्तम्। ननु कस्मात् तदयुक्तमित्यत आह—यदि चेत्यादि। तर्हि कस्मादित्यादि। कुब्रूः कुभाषी। मूको वाग्रहितः। मिन्मिनः सानुनासिकवचनः। वामनो ह्रस्वः। मनुष्यप्रभवत्वान्मनुष्यविग्रहेण भवतु। मातापित्रनुरूपेण जड़ादिभ्यश्च जाताः कस्माज्जड़ादयः पितृसदृशरूपा न भवन्तीति विप्रतिपत्तिरेका।

मिलतीत्यर्थः। मनुष्यविग्रहेण जायत इति मनुष्यजातौ कस्मान् मनुष्यविग्रहेणैव जायत इत्यर्थः। 'समुदायात्मकः' इति यदुक्तम्, तदयुक्तमित्यत्र मात्राद्यतिरिक्तजातिकथनेन तथा जातेरेव मनुष्यादिरूपाया बलवत्कारणत्वेन यथोक्तमात्रादिसमुदायप्रभवत्वं न युक्तमिति भावः। दूषणान्तरमाह—यदि चेत्यादि। जड़ो जड़बुद्धिः। मिन्मिनः सानुनासिकः। पितृसदृशरूपा इत्यत्र पितृशब्देन मातापितरौ ग्राह्यौ। कारणसदृशरूपत्वेन च चेन्मनुष्या भवन्ति, ते जड़ादिरूपकारणजाता अपि

अथात्रापि बुद्धिरेवं स्यात् स्वेनैवायमात्मा चक्षुषा रूपाणि वेत्ति, श्रोत्रेण शब्दान्, घ्राणेन गन्धान्, रसनेन रसान्, स्पर्शनेन स्पर्शान्, बुद्ध्या बोद्धव्यमित्यनेन हेतुना जड़ादिभ्यो जाताः पितृसदृशा भवन्ति। अत्रापि प्रतिज्ञाहानिदोषः स्यात्। एवमुक्ते ह्यात्मा सत्स्विन्द्रियेषु ज्ञः स्यात् असत्स्वज्ञः, यत्र चैतदुभयं सम्भवति ज्ञत्वमज्ञत्वञ्च स विकारप्रकृतिकश्चात्मा * निर्व्विकारश्च। यदि च दर्शनादिभिरात्मा विषयान् वेत्ति, निरिन्द्रियो दर्शनादि-

अपरश्चाह—अथात्रापीत्यादि। आत्मा स्वेनैवात्मन एव चक्षुरादिना रूपादीन् वेत्तीत्येवमेव रूपेण आत्मा जड़ेनैव स्वेन गर्भस्थेन जातो जड़ो भवतीतीष्टापत्तौ च मात्रादिसमुदायप्रभव इति प्रतिज्ञायाश्च हानिर्भवति। ननु कस्मात् पूर्व्वप्रकारेष्टापत्तौ प्रतिज्ञा हीयते इत्यत आह—एवमुक्ते ह्यात्मेत्यादि। जड़ादिभ्यः पितृभ्यो जाता जड़ादयो भवन्तीत्येवमुक्ते सति। हि यस्मात् सत्सु वर्त्तमानेष्विन्द्रियेष्वात्मा तु ज्ञः स्यात् असत्स्विन्द्रियेष्वज्ञः स्यात्, तच्चापीष्टं चेत् तर्हि यत्रैतत् ज्ञत्वमज्ञत्वञ्चेत्युभयं सम्भवति, स चात्मा विकारप्रकृतिश्च निर्व्विकारश्च भवतु। तत्रापि यदि चेत्यादि। तर्हि कारणसदृशत्वेन जड़रूपाः स्युरिति भावः। अत्र जड़ादिबहूदाहरणकरणं पक्षस्य बहूदाहरणसिद्धत्वेन दृढ़त्वप्रतिपादनार्थम्। कृतं पूर्व्वपक्षसमाधानमाशङ्कते—अथात्रेत्यादि। स्वेनैवेति आत्मकर्म्मोपार्जितेनैव। तेन इन्द्रियाणि यस्मादात्मजान्युक्तानि, न तु मातापितृरूपमनुष्यजन्यानि, ततश्च पित्रोरिन्द्रियं प्रत्यकारणत्वे न तदिन्द्रियसदृशानीन्द्रियाण्यपेक्ष्यैव भवन्तीति भावः। स्वेनैवेत्यादि श्रोत्रादिभिरपि सम्बध्यते। जड़ादिभ्योजाता इत्यत्र आदिशब्दः प्रकारवाची। तेन कुब्जकुष्ठ्यादीनां ग्रहणम्। कुब्जत्वकुष्ठत्वाद्याधारभूतं हि शरीरं नात्मजम्, किन्तु मातापितृजमेव। ततश्च कुब्जादिजातस्य कुब्जादिप्रसङ्गेनैवापकृतत्वं तदवस्थमेव। आशङ्कितं समाधानं दूषयति—अत्रापीत्यादि। प्रतिज्ञादोषः स्यादिति, 'आत्मा ज्ञः' इत्यादिना आत्मनो ज्ञत्वप्रतिज्ञायाः, तथा 'निर्व्विकारः परस्त्वात्मा' इत्यादिना निर्व्विकारत्वप्रतिज्ञायाः हतायाः दोषः स्यादिति भावः। असत्स्वज्ञ इत्यनेन कदाचिदज्ञत्वात् प्रतिज्ञातज्ञत्वम् व्याहतम्, इन्द्रियाधीनत्वेन ज्ञत्वमात्मनः पराधीनं सत्र वास्तवं स्यादिति भावः। यत्रेत्यादिना सविकारत्वं साधयति। ज्ञत्वपरित्यागेनाज्ञत्वे प्रकृतेरन्यथाभूतत्वेन विकारो भवतीति भावः। सविकार इति 'विकारवान्' इत्यर्थो मतुब्लोपाज् ज्ञेयः। आत्मन इन्द्रियाधीनत्वेन ज्ञत्वे दूषणान्तरमाह—यदि चेत्यादि।

* स विकारप्रकृतिकश्चात्मा इत्यत्र स विकारश्चात्मा इति चक्रधृतः पाठः।

विरहादज्ञः स्यात् अज्ञत्वादकारणमकारणत्वाच्चानात्मेति वाग्-वस्तुमात्रमेतद्वचनमनर्थकं स्यादितिहोवाच भरद्वाजः ॥ २२ ॥

आत्रेय उवाच। पुरस्तादेतत् प्रतिज्ञातं सत्त्वं जीवस्पृक्-शरीरेण अभिसंबध्नातीति। यस्मात् तु समुदायप्रभवः सन् स गर्भो मनुष्यविग्रहेण जायते मनुष्यो मनुष्यप्रभव इत्युच्यते तद्व वक्ष्यामः ॥ २३ ॥

भूतानां चतुर्व्विधा योनिर्भवति जराय्वण्डस्वेदोद्भिदः। तासां खलु चतसृणामपि योनीनामेकैका योनिरपरिसंख्येयभेदा भवति भूतानामाकृतिविशेषापरिसंख्येयत्वात्। तत्र जरायु-

निरिन्द्रियत्वेनाज्ञानकत्वाच्च अकारणत्वमकारणत्वाच्चानात्मायं गर्भः स्यादिति, तस्मात् मात्रादिसमुदायाद्गर्भो भवतीति प्रतिज्ञाहानिदोषः स्यात्। नन्वस्तु गर्भः सोऽनात्मा निरिन्द्रियस्तु यः स्यादिति तु वाग्वस्तुमात्रमेतद्वचनमनर्थकं स्यात् सेन्द्रियो निरिन्द्रियः सर्व्वः प्राणी सात्मा वस्तुत इतिहोवाच स कुमारशिरा भरद्वाजः ॥ २२ ॥

गङ्गाधरः—अत्रापि विमतिपत्तावात्रेय उवाच। किमुवाचेत्यत आह—पुरस्तादित्यादि ॥ २३ ॥

गङ्गाधरः—तद्वक्ष्याम इति यत् तदाह—भूतानामित्यादि। भूतानां प्राणिनाम्। योनीनामपरिसङ्ख्येयभेदेषु हेतुमाह—भूतानामाकृतीत्यादि।

अज्ञत्वादकारणमिति, अज्ञत्वादकारणं शरीरप्रेरणादौ न कारणं स्यादित्यर्थः। अकारणत्वाच्च * नात्मेति शरीरप्रेरणादौ बुद्धिनिष्पाद्येऽकारणत्वाद् या चेतनाचेतनपञ्चभूतातिरिक्ता चैतन्यधार्य्यात्म-शब्दवाच्या इत्यर्थः। वाग्वस्तुमात्रमित्यर्थरहितशब्दमात्रमेतत् यदुच्यते—आत्मा स्वेन चक्षुषा रूपं पश्यतीत्यादि ॥ २२ ॥

चक्रपाणिः—आत्रेयः समादधाति—पुरस्तादित्यादि। एतच्च 'कथमयं सन्धीयते' इत्यस्योत्तरम्। सत्त्वं शुक्रार्त्तवसन्धानकारणमित्यर्थः ॥ २३ ॥

चक्रपाणिः—भूतानामिति प्राणिनाम्। योनिर्जातिः। यद्यपि योनिशब्दः कारणवचनः, तथापि जराय्वादिरूपयोनिजाता अपि जराय्वादय एवोच्यन्ते कार्य्ये कारणोपचारात्। आकृतिः संस्थानम्, तस्या विशेषाः परस्परविलक्षणाकृतय एव नरकरितुरगादिरूपाः। सम्भाविधोनिभेदं

* अज्ञत्वात् कालपूर्व्वशरीरप्रेरणादिति पाठान्तरम्।

जानामण्डजानां प्राणिनामेते गर्भकरा भावा यां यां योनिमापद्यन्ते तस्यां तस्यां योनौ तथातथारूपा भवन्ति। तद् यथा—कनकरजतताम्रत्रपुसीसान्यासिच्यमानानि वै तेषु तेषु मधूच्छिष्टविम्बेषु *। तानि यदा मनुष्यविम्बमापद्यन्ते तदा मनुष्यविग्रहेण जायन्ते। तस्मात् समुदायप्रभवः सन् स गर्भो मनुष्यविग्रहेण जायते मनुष्यो मनुष्यप्रभव इत्युच्यते तद्योनित्वात् ॥ २४ ॥

तत्र चतसृषु योनिषु चतुर्षु वा जराय्वादियोनिजेषु मध्ये जरायुजानां प्राणिनामण्डजानाञ्च प्राणिनां न तु स्वेदजानामुद्भिज्जानाञ्च गर्भकरा गर्भकारकाः शुक्रशोणितादयो भावा यां यां मनुष्यगोगजाश्वखरादिकां योनिम् आपद्यन्ते, तस्यां तस्यां मनुष्यगोगजाश्वखरादिकायां योनौ तथातथारूपा मनुष्यगोगजाश्वखरादिरूपा भवन्ति। ननु केन प्रकारेण तथातथारूपा भवन्तीत्यत आह—तद् यथेत्यादि। त्रपुरत्र वङ्गम्। तेषु तेषु मनुष्यगोगजाश्वखरादिरूपेषु मधूच्छिष्टविम्बेषु मधुमलनिर्म्मितविग्रहाकरेषु आसिच्यमानानि द्रुतकनकादीनीव तथातथारूपा भवन्ति। एतच्च भाष्यरूपेण विवृणोति—तेष्वित्यादि। तेषु मनुष्यगोगजाश्वखरादिविम्बेषु मध्ये मनुष्यविम्बं मधुमलनिर्म्मितमनुष्यविग्रहाकरं कनकादीन्यापद्यन्ते तदा मनुष्यविग्रहेण जायन्ते आसिच्यमानानि द्रुतकनकादीनीति शेषः। तस्मात् मनुष्यविम्बरूपयोनिम् आपन्नत्वात्। तद्योनित्वात् मनुष्यविग्रहाकरविम्बत्वात् ॥ २४ ॥

दर्शयित्वा योग्यानुकारो भवति, तदाह—तत्रेत्यादि। गर्भेत्यादि। गर्भकरा भावाः शुक्रादयः। मधूच्छिष्टविग्रहेष्विति सिक्थकेन मृत्तिकायां निर्म्मितसञ्चकरूपविग्रहेषु। मनुष्यबिम्बमिति मनुष्याकारं सिक्थककृतसञ्चकम्। कनकादिबहुद्रव्योदाहरणम्, यथा कनकादीनां बहूनामपि मनुष्यसञ्चकसिक्थकस्थानां मनुष्याकृतिजनकत्वम्, तथा शुक्रादीनामपि बहूनां मनुष्ययोनिपतितानां मनुष्यविग्रहकर्त्तृत्वमिति साधर्म्म्योदाहरणार्थम्। समुदायात्मकः सन्निति यद्यपि समुदायजन्यः, तथापि योनिरूपकारणमहिम्ना स्वयोनिसदृश एव भवति, नान्ययोनिसदृशः। न च कारणधर्म्मः पर्य्यनुयोगमर्हति। तेन शुक्रादिसमुदायोऽपि कारणं भवति, मातापितरौ विशेषेण गर्भस्य सजातीयत्वे कारणं भवत इति न कदाचित् क्षतिः। तद्योनित्वादिति विशेषेण मनुष्यस्य कारणत्वात् ॥ २४ ॥

---

* मधूच्छिष्टविग्रहेषु इति चक्रधृतः पाठः।

यच्चोक्तं यदि च मनुष्यो मनुष्यप्रभवः कस्मान्न जड़ादिभ्यो जाताः पितृसदृशरूपा भवन्तीति। तत्रोच्यते यस्य यस्य ह्यङ्गावयवस्य वीजे वीजभाग उपतप्तो भवति, तस्य तस्याङ्गावयवस्य विकृतिरुपजायते, नोपजायते चानुपतापात् तस्मादुभयोरुपपत्तिरपि। अत्र सर्व्वस्य चात्मजानीन्द्रियाणि तेषां भावाभावहेतुर्दैवम्, तस्मान्नैकान्ततो जड़ादिभ्यो जाताः पितृसदृशरूपा भवन्ति॥ २५॥

गङ्गाधरः—द्वितीयदोषमुद्धरति—यच्चोक्तं यदि चेत्यादि। तस्य सिद्धान्तमाह—तत्रोच्यत इत्यादि। हि यस्मात्। यस्य यस्याङ्गावयवस्ये त्यादि। तस्मात् तत्तदवयववीजे वीजाभागानुपतापानुपतापाभ्यामङ्गविकृत्यविकृतिजननात् तदुभयोपपत्तिर्विकृताविकृतयोरुभयोरुपपत्तिरपि भवति। अत्र विकृताविकृतोभयोपपत्तौ च सर्व्वस्य पुरुषस्यात्मजानीन्द्रियाणि। तेषामिन्द्रियाणां भावाभावहेतुर्विकृताविकृतसद्भावाभावानां हेतुर्दैवं पूर्व्वजन्मकृतं कर्म्म तस्मादिन्द्रियाभावभावयोर्दैवस्य हेतुत्वात् एकान्ततो जड़ादिभ्योः जाताः पितृसदृशरूपा न भवन्ति। तस्मात् यदि च मनुष्यो मनुष्यप्रभवः कस्मान्न जड़ादिभ्योः जाताः पितृसदृशरूपा भवन्तीति न वाच्यम्॥ २५॥

चक्रपाणिः—वीज इति शुक्रशोणिते। वीजस्याङ्गप्रत्यङ्गनिर्व्वर्त्तको भागो वीजभागः। उभयोपपत्तिरप्यत्रेति पितृसदृशा भवन्ति न भवन्ति चेत्यर्थः। आत्मजानीति आत्मप्रतिबद्धकर्म्मजानि। भावाभावहेतुर्दैवमिति इन्द्रियभावे इन्द्रियजनकं शुभम्, इन्द्रियाभावे चाशुभं दैवं हेतुरित्यर्थः। उपसंहरति—तस्मादित्यादि। एवं मन्यते—मनुष्यवीजं हि प्रत्यङ्गवीजभागसमुदायात्मकं स्वसदृशप्रत्यङ्गसमुदायरूपपुरुषजनकम्। आत्मजानि इन्द्रियाणि च भोगसाधनानि आत्मप्रतिबद्धकर्म्माधीनानि। तेन पिता यदि कुष्ठ्यपि भवति, वीज न दुष्टं भवति कुष्ठाधानत्वगादिजनकम्, ततो निष्कुष्ठान्येव त्वगादीन्यनुपतप्तत्वगादिवीजात् सदृशानि जायन्ते, यदा त्वतिवृद्धकुष्ठतया पित्रोर्वीजमपि कुष्ठजनकदोषदुष्टं भवति, तदा दुष्टत्वगादिर्वीजभागात् कुष्ठदुष्टैव त्वग् जायते। यदुक्तम्,—"स्त्रीपुंसयोः कुष्ठदोषाद् दुष्टशोणितशुक्रयोः। यदपत्यं तयोर्जातं ज्ञेयं तदपि कुष्ठितम्" इति। एवं कुष्ठिनो यदि हेतुबलाद् वीजे कुष्ठजनको दोषो भवति, तदा कुष्ठिनोऽपि कुष्ठवदपत्यं भवति। अन्धत्वादाविन्द्रियोपघातरूपे दुर्दैवमेव कारणम्। तच्चान्धापत्येऽप्यवश्यमस्ति। तेन यदान्धेऽपत्येऽप्येवं पितृचूपघातकमशुभं भवति, तदा काकतालीयन्यायादन्धजातोऽप्यन्धो दृश्यते। एवं कुब्जादौ जड़ादौ च व्याख्येयम्॥ २५॥

न चात्मा सत्स्विन्द्रियेषु ज्ञोऽसत्सु वा भवत्यज्ञः । न ह्यसत्त्वः कदाचिदात्मा । सत्त्वविशेषाच्चोपलभ्यते ज्ञानविशेष इति ॥ २६

भवन्ति चात्र ।

न कर्त्तुरिन्द्रियाभावात् कार्य्यज्ञानं प्रवर्त्तते ।
यैः क्रिया वर्त्तते या तु * सा विना तैर्न वर्त्तते ॥

गङ्गाधरः—अथात्मा सत्स्विन्द्रियेष्वित्यादिना यदुक्तं तदपि न वाच्यम् कुत इत्यत आह—न चेत्यादि । न चाज्ञो भवत्यात्मेत्यन्वयः । कुतोऽसत्स्विन्द्रियेष्वात्मा नाज्ञो भवतीत्यत आह—न ह्यसत्त्व इत्यादि । कदाचिदपि काले आत्मा हि यस्मान्नासत्त्वो मनोऽनुबन्धरहितो न भवति । तर्हि किं सर्व्वदा सत्त्वरूपः सत्त्ववानित्यत आह—सत्त्वविशेषाच्चेति । यदा यदा यादृशसत्त्ववान् आत्मा भवति तदा तदा तस्मादेव सत्त्वविशेषाज् ज्ञानविशेष उपलभ्यते तस्यात्मन इति । वृक्षाद्यचेतनेऽपि ह्यात्मान्तश्चेतनोऽभ्यन्तरश्च इति सूचितम् ॥ २६ ॥

गङ्गाधरः—तथाविधार्थं दर्शयति वेदप्रमाणेन—भवन्ति चात्रेत्यादि । न कर्त्तुरित्यादि । इन्द्रियाभावात् कर्त्तुः कार्य्यज्ञानं न प्रवर्त्तते इति । तर्हि किम् इन्द्रियसद्भावेन कार्य्यज्ञानप्रवर्त्तने कर्त्तुः कार्य्यक्रियाभिनिर्वृत्तिः स्यादित्यत आह—यैरित्यादि । यैर्हेतुभिर्या क्रिया वर्त्तते तैर्हेतुभिर्विना सा न वर्त्तते इति ।

चक्रपाणिः—या चाज्ञत्वप्रसक्तिरात्मन्युक्ता, तत्राह—न चेत्यादि । इन्द्रियभावे तथेन्द्रियाभावेऽपि नित्यं ज्ञानवानेवात्मा इति प्रतिज्ञार्थः । न ह्यसत्त्वः कदाचिदित्यत्र 'हि'शब्दो हेतौ । तेन यस्मात् सर्व्वदा समनस्क एवात्मा । तेन वाह्येन्द्रियाभावेऽप्यन्तःकरणमनोयोगात् नित्यमात्मा मनःकरणको ज्ञानवानेवायमित्यर्थः । यत्त्वेतद् वाह्यविषयगतं ज्ञानम्, तत् सत्त्वस्येन्द्रियाधिष्ठानविशेषाद् भवति । तेन इन्द्रियाभावे इन्द्रियजन्यं विशिष्टं ज्ञानं न भवति । यत् तु केवलमनोजन्यमात्मज्ञानम्, तद् भवत्येव सर्व्वदा । तस्माद् यन्नित्यभावि मनःसन्निधिमात्रजन्यमात्मज्ञानम्, तत् सदैवास्ति ॥ २६ ॥

चक्रपाणिः—न चास्य ज्ञानजननशक्तिः पराहता भवतीत्याशयेनाह—न कर्त्तुरित्यादि । कार्य्यज्ञानमिति कार्य्यप्रवृत्तिजनकवाह्यविषयज्ञानम् । तेन निर्व्विषयं ज्ञानमात्मन इन्द्रियाभावे भवतीति

* या क्रिया वर्त्तते भावैरिति चक्रसम्मतः पाठः ।

जानन्नपि मृदोऽभावात् कुम्भकृन्न प्रवर्त्तते ।
शृणुया * वेदमध्यात्ममात्मज्ञानबलं महत् ॥
इन्द्रियाणि च सङ्क्षिप्य मनः संगृह्य चञ्चलम् ।
प्रविश्याध्यात्ममात्मज्ञः स्वे ज्ञाने पर्य्यवस्थितः ॥
सर्व्वत्र विहितज्ञानः सर्व्वभावान् परीक्षते ।
गृह्णीष्व वेदमपरं भरद्वाज विनिर्णयम् ॥
निवृत्तेन्द्रियवाक्चेष्टः सुप्तः स्वप्नगतो यदा ।
विषयान् सुखदुःखे च वेत्ति नाज्ञोऽप्यतः स्मृतः ॥

ननु कस्मादिन्द्रियसद्भावेन कर्त्तुः कार्य्यज्ञानप्रवृत्तौ न क्रियाभिनिर्वृत्तिः इत्यत आह—जानन्नपीत्यादि । कुम्भकृत् सेन्द्रियो जानन्नपि कुम्भं कर्त्तुं मृदोऽभावात् मृत्तिकाया अभावात् न च कुम्भं कर्त्तुं प्रवर्त्तते प्रभवति। इत्थञ्चात्मा यद् यदिन्द्रियवान् भवति तत्तदिन्द्रियकार्य्यज्ञानवान् भवतीति। तथाचाध्यात्मम् आत्मानमधिकृत्य वेदं शृणुयाः वेदमाहात्मज्ञानबलं महदिति। आत्मनो ज्ञानमेव बलं महद्बलम्। नन्वात्मज्ञानबलं कुतो भवतीत्यत आह—इन्द्रियाणीत्यादि। श्रोत्रादीनीन्द्रियाणि शब्दश्रवणादितः सङ्क्षिप्य निवर्त्त्य चञ्चलं नानाविधविषयाभिलाषि मनः स्वार्थचिन्त्याचिन्त्यादितः संगृह्य निवर्त्त्य अध्यात्ममात्मनि अधिकृत्य स्वे ज्ञाने आत्मज्ञाने प्रविश्यात्मज्ञः पर्य्यवस्थितः सर्व्वतोभावेनावस्थितः सन् सर्व्वत्र चराचरे विहितज्ञानः कृतज्ञानः सन् सर्व्वज्ञः सन् सर्व्वभावान् चराचरान् परीक्षते विजानीते। इत्युक्त्वात्रेयः स्वगुरुभरद्वाजसिद्धान्तनिदर्शनवेदं दर्शयति—गृह्णीष्वेत्यादि। निवृत्तेत्यादि। निवृत्ताः श्रोत्रादिपञ्चबुद्धीन्द्रियाणि वाक् चेष्टा यस्य स सुप्तः स्वप्ना-

सूचयति। भावैरित्यत्र 'यैः' इति शेषः। वर्त्तते उत्पद्यते। अत्रैव दृष्टान्तमाह—जानन्नपीत्यादि। घटं कर्त्तुं जानन्नपीत्यादि योज्यम्। मृदो मृत्तिकाया अभावात्। आत्मनो ज्ञत्वे साधनान्तरमाह—श्रूयतामित्यादि। आत्मानमधि अध्यात्मम्, तद्भवमध्यात्मम्। आत्मनो ज्ञानस्य बलमात्मज्ञानबलम्। सङ्क्षिप्येति विषयेभ्यो व्यावर्त्त्य, मनः सङ्क्षिप्येति मनोऽप्यात्मव्यतिरिक्तविषयान् निगृह्य। चञ्चलमिति स्वभावः। स्वे ज्ञान इति आत्मज्ञाने। सर्व्वभावान् परीक्षत इति विनापीन्द्रियैः समाधिबलादेव यस्मात् सर्व्वज्ञो भवति, तस्माज्ज्ञस्वभाव एव निरिन्द्रियोऽप्यात्मा।

---

* श्रूयतामिति चक्रः।

नात्मा ज्ञानादृते चैको ज्ञातुं किञ्चित् प्रवर्त्तते * ।
न ह्येको वर्त्तते भावो वर्त्तते नाप्यहेतुकः ॥
तस्माज्ज्ञः प्रकृतिश्चात्मा द्रष्टा कारणमेव च ।
सर्व्वमेतद् भरद्वाज निर्णीतं जहि संशयम् ॥ २७ ॥

वस्थां गतः विषयान् सुखदुःखे च वेत्ति। एतच्चोदाहरणप्रदर्शनमात्रं तेन अपिशब्दात् सुषुप्तिमापन्नोऽपि सुखमात्रं वेत्ति। समाध्यवस्थायामात्मानञ्च वेत्तीत्यतोऽपि हेतोर्वात्माऽज्ञो न स्मृतः। ननु समाध्यवस्थायामपि किमात्मा नाज्ञो भवति इत्यत आह—नात्मा ज्ञानादित्यादि। ज्ञानादृते एकः केवल आत्मा ब्रह्मरूपः किञ्चिज्ज्ञातुं न प्रवर्त्तते ज्ञानाभावात् किमपि ज्ञातुं कर्त्तुं वा प्रभवति। ननु कस्मान्न ज्ञातुं प्रवर्त्तते न वा कर्त्तुमित्यत आह—न ह्येक इत्यादि। एको भावो हि यस्मान्न सर्वावस्थायां वर्त्तते अहेतुकश्च भावो नापि वर्त्तते। भवतीति भावः उत्पत्तिशीलः, उत्पत्तिश्च सतो ह्यवस्थान्तरगमनं तस्मात् तेजोऽबन्नादिः सर्व्वो भावः सहेतुकस्तथा च वैकारिकाद्यहङ्कारयोगेण केवलस्यात्मनो विश्वरूपाद्यवस्थागमनं जन्मोच्यते स्वयमेव तथाभूतत्वात्। तथाभूतश्चात्मा भाव एव द्रव्यमध्ये पठितः, न ह्येको वर्त्ततेऽनादिरपि नाप्यहेतुकः तस्माज्ज्ञः प्रकृतिश्च महदादीनां, न तु विकारः जवाकुसुमादिप्रतिबिम्बविम्बित-विमलस्फटिकोपलवत् सूर्य्यकरनिशाकरकरतिमिरापरक्तगगनवद्वा वैकारिकाद्यहङ्कारादिविम्बितो ह्यात्मा द्रष्टा न तु भोक्ता सर्व्वजगतां कारणमेव, केवलस्त्वात्मा मुक्तः स्वयम्भुवि भगवति हिरण्यगर्भे लीनो भवति, सोऽपि परमव्योमरूपाव्याकृतदेही बृहत्पुरुषः परः पुरुषस्तदतिरिक्तकेवल-

अपरमपि लौकिकं निरिन्द्रियस्य ज्ञानसद्भावोदाहरणमाह—गृह्णीष्वेत्यादि। स्वप्नगतान् स्वप्नदर्शनावस्थायां प्राप्तान्। आत्मज्ञानविषयज्ञानयोर्विशेषमाह—आत्मेत्यादि। आत्मज्ञानात् नित्यात् विना। किञ्चिज्ज्ञानं विषयजम्। एकमसहायम्। न वर्त्तते इन्द्रियादिकारणरूपसहायं विना नोत्पद्यते। आत्मज्ञानञ्च नित्यमेव साङ्ख्येऽप्युक्तम्;—"चिच्छक्तिपरिणामिनी" इत्यादिना "आत्मनः" इत्यन्तेन। अत्रोपपत्तिमाह—न ह्येको वर्त्तते भाव इति। भाव उत्पत्तिधर्म्मा एकः सन् कारणरहितः सन् न वर्त्तते। तेनोपपद्यते। तथा भावः कारणजन्यत्वे सत्यपि अहेतुक इति अकर्त्तृको न वर्त्तते, किन्तु कुम्भकाराधिष्ठितान्येव मृच्चक्रादीनि प्रवर्त्तन्ते। तस्माद्विषयज्ञानान्यपि इन्द्रियमनोऽर्थैस्तथा चात्मना जन्यन्त इति भावः। उपसंहरति—तस्मादित्यादि। अत्र आत्मनो

* आत्मज्ञानादृते चैकं ज्ञानं किञ्चिन्न वर्त्तते इति चक्रधृतः पाठः।

तत्र श्लोकौ।

हेतुर्गर्भस्य निर्व्वृत्तौ वृद्धौ जन्मनि चैव यः।
पुनर्व्वसुमतिर्या च भरद्वाजमतिश्च या॥
प्रतिज्ञा प्रतिषेधश्च विशदश्चात्मनिर्णयः।
गर्भावक्रान्तिमुद्दिश्य खुड्डीकां संप्रकाशितम् * ॥ २८ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते शारीरस्थाने खुड्डीका-गर्भावक्रान्तिशारीरं नाम तृतीयोऽध्यायः ॥ ३ ॥

ब्रह्मभागस्याधुना सर्गस्थितौ सद्भावो नास्तीति सर्व्वसम्मतम्। न ह्येको वर्त्तते भावो वर्त्तते नाप्यहेतुक इति। अत एवाह—सर्व्वमेतदित्यादि। जहि-संशयमिति जहिस्तम्भ इत्यादिवत् समासः॥ २७॥

गङ्गाधरः—अथाध्यायसंग्रहार्थमाह—तत्रेत्यादि। हेतुरित्यादि स्पष्टम्॥ २८ अध्यायं समापयति—अग्नीत्यादि। इति खुड्डीकेत्यादि।

इति वैद्य श्रीगङ्गाधरकविरत्नकविराजविरचिते चरकजल्पकल्पतरौ शारीर-स्थानजल्पाख्ये चतुर्थस्कन्धे खुड्डीकागर्भावक्रान्ति-शारीरजल्पाख्या तृतीयशाखा॥ ३॥

त्वाङ्गत्वं प्रसक्तोपपादितम्। सविकारत्वमात्मनः नित्यज्ञानबल * साधनेन परिहृतमिति न पृथक् परिहृतम्। भरद्वाजशब्देनेह नात्रेयगुरुरुच्यते, किन्तु अन्य एव भरद्वाजगोत्रः कश्चित्। तेन संशयच्छेदनमात्रेयेणोपपन्नमेव ॥ २७ ॥

चक्रपाणिः—संग्रहे हेतुशब्दो गर्भादिषु जन्मान्तेषु सम्बध्यते। प्रतिज्ञानिषेधो भरद्वाजकृतो ज्ञेयः। तत्साधनञ्च यदात्रेयस्य, तद् विशदश्चात्मनिर्णयः इत्यनेनोक्तम्। 'तद्' इति सामान्येन मात्रादि प्रत्यवमर्षणपुंसकम् ॥ २८ ॥

इति चरकचतुराननश्रीमच्चक्रपाणिदत्तविरचितायामायुर्व्वेददीपिकायां चरकतात्पर्य्यटीकायां शारीरस्थाने खुड्डीकागर्भावक्रान्तिशारीरं नाम तृतीयोऽध्यायः ॥ ३ ॥

---

* तत् प्रकाशितमिति चक्रः।

* नित्यज्ञानवत्त्वसाधनेन इति पाठान्तरम्।

# चतुर्थोऽध्यायः ।

## अथातो महतीगर्भावक्रान्तिशारीरं व्याख्यास्यामः, इतिह स्माह भगवानात्रेयः ॥ १ ॥

यतश्च गर्भः सम्भवति यस्मिंश्च गर्भसंज्ञा यद्विकारश्च गर्भो यया चानुपूर्व्याभिनिर्व्वर्त्तते कुक्षौ यश्चास्य वृद्धिहेतुर्यतश्च अस्याजन्म भवति यतश्च जायमानः कुक्षौ विनाशं प्राप्नोति यतश्च कार्त्स्न्येनाविनश्यन् विकृतिमापद्यते तदनुव्याख्यास्यामः ॥ २ ॥

मातृतः पितृत आत्मतः सात्म्यतो रसतः सत्त्वत इत्येतेभ्यो

गङ्गाधरः—अथ गर्भस्य कारणानां विनिश्चयानन्तरं गर्भसंज्ञादिज्ञानार्थं महतीं गर्भावक्रान्तिं शारीरमारभते—अथात इत्यादि । ऊर्द्ध्वात् परलोकादेत्य गर्भत्वेनाव जीवलोके क्रम्यते आत्मनेति गर्भावक्रान्तिः । तामधिकृत्य कृतं शारीरमिति तद्धितलुकि युक्तवद्व्यक्तिवचने । अस्य महत्त्वं यतो गर्भसम्भवः यस्मिंश्च गर्भसंज्ञा यद्विकारश्च गर्भो यया चानुपूर्व्याभिनिर्व्वर्त्तते गर्भः कुक्षावित्येवमादुरपदेशवत्त्वात् । पूर्व्वाध्यायस्य यतो गर्भसम्भवस्तस्यैव प्रपञ्चमात्रेण खुड्डाकत्वमेतदपेक्ष्य । अन्यच्च सर्व्वं पूर्व्ववद् व्याख्येयम् ॥ १ ॥

गङ्गाधरः—यतश्चेत्यादिकाः प्रतिज्ञाता व्याख्यातुमारभ्यन्ते । यतश्च गर्भः सम्भवतीति प्रतिज्ञार्थं व्याचष्टे ॥ २ ॥

गङ्गाधरः—मातृत इत्यादि । तस्य गर्भस्य यतो यतो मात्रादितः सम्भवतस्तान् मातृजादीनवयवान् त्वक् च लोहितञ्चेत्यादिना मातृजानवयवान्, केशश्मश्रुनखेत्यादिना पितृजान्, तासु तासु योनिषूत्पत्तिरित्यादिनात्मजान्, आरोग्यमनालस्यमित्यादिना सात्म्यजान्, शरीराभिनिर्व्वृत्तिरभिवृद्धिः

चक्रपाणिः—खुड्डीकागर्भावक्रान्तिप्रपञ्चत्वान्महत्या गर्भावक्रान्तेरनन्तरमभिधानम् । यत इति यतः कारणात् । यद्विकार इति यन्मय इत्यर्थः । ययानुपूर्व्या येनानुक्रमेणेत्यर्थः । कार्त्स्न्येन अविनश्यन्निति मरणमगच्छन्निति ॥ १।२ ॥

चक्रपाणिः—'मातृतः' इत्यादिना 'सम्भवति' इत्यन्तेन चोक्तञ्च मातृजादय एव प्रोक्ता इति वाक्यार्थः फलति । अयञ्च वाक्यार्थो यद्यपि पूर्व्वाध्याय एवोक्तः "मातृजश्चायम्" इत्यादिना, तथापि

भावेभ्यः समुदितेभ्यो गर्भः सम्भवति। तस्य ये येऽवयवा यतो यतः सम्भवतः सम्भवन्ति, तान् विभज्य मातृजादीन् अवयवान् पृथक् पृथगुक्तमग्रे। शुक्रशोणितजीवसंयोगे कुक्षि-गते गर्भसंज्ञा भवति। गर्भस्त्वन्तरीक्षवाय्वग्नितोयभूमि-विकारश्चेतनाधिष्ठानभूतः। एवमनयैव युक्त्या पञ्चमहाभूत-विकारसमुदायात्मको गर्भश्चेतनाधात्वधिष्ठानभूतः। स ह्यस्य षष्ठो धातुरुक्तः॥ ३॥

इत्यादिना रसजान्, भक्तिः शीलं शौचमित्यादिना सत्त्वजान् विभज्य विभागशो निर्दिश्य, अग्रे खुड्डीकागर्भावक्रान्तौ। इति यतश्च गर्भः सम्भवतीति प्रतिज्ञा-तार्थो व्याख्यातो भवति। अथ यस्मिंश्च गर्भसंज्ञा तदनुव्याख्यास्याम इति प्रतिज्ञातार्थं व्याख्यातुमाह—शुक्रेत्यादि। कुक्षिगते गर्भाशयगते। सुश्रुते-ऽप्युक्तं—शुक्रशोणितं गर्भाशयस्थमात्मप्रकृतिविकारसम्मूर्च्छितं गर्भ इत्युच्यत इति। इति यस्मिंश्च गर्भसंज्ञेति प्रतिज्ञातार्थो व्याख्यातो भवति। अयं गर्भस्तु यद्विकारस्तदनुव्याख्यास्याम इति यत् प्रतिज्ञातं तद् व्याख्यायते—गर्भस्त्वित्यादि। अन्तरीक्षादिपञ्चभूतविकारोऽयं गर्भस्तत्रान्तरीक्षमेकविधम् अकर्म्मात्मकत्वात्। सक्रियत्वात् तु वाय्वादीनि स्वस्वरूपाद्विरूपमूर्त्तीनि षोडश-विधानि—तत्रात्मजानि चत्वारि, वाय्वादीनि अमिश्राणि पूर्व्वकृतकर्म्मफलानु-बद्धानि। मातृजानि चत्वारि, पितृजानि चत्वारि, रसजानि चत्वारि, इति पाञ्च-भौतिकानि द्वादश मिश्राणि। चेतनाधिष्ठानभूत इति आत्मनो विकारा-भावादात्माधिष्ठानभूत एव न त्वात्मविकार इत्यर्थः। उपसंहरन्निममर्थमाह—एवमनयेत्यादि। स हीत्यादि। हि यस्मात् स चेतनः क्षेत्रज्ञ आत्माऽस्य

प्रश्नक्रमविशुद्ध्यनुरोधात् पुनरिह कृतः। येन प्रथमं कारणम्, तदनु कार्य्यरूपो धर्म्मोऽभिधेय इति क्रमेण प्रश्नः शोभते। यत् तु "शुक्रशोणितसंसर्गमन्तर्गर्भाशयगतम्" इत्यादिना, 'गर्भोऽभिनिर्व्वर्त्तते' इत्यन्तेनोक्तम्, तत्र अयमसौ 'गर्भ'शब्दाभिधेयोऽर्थ इति नाभिहितमेव। तेन न गर्भसंज्ञाभि-धेयार्थव्याकरणं पुनरुक्तमेव। कुक्षिगत इति कुक्ष्येकदेशगतगर्भाशयगते। संयोग इति सम्यग्-योगे। तेन जीवस्यातिवाहिकशरीरेण योगः संगृह्यते, न त्वात्मनो व्यापकत्वेन यो योगो गर्भ-जनकः। एवंभूतसंयोगो यद्यपि कुक्षावेव भवति, तथापि सिद्धमेवार्थं शिष्यं प्रतिपादयितुं 'कुक्षिगते' इति पदं कृतम्। गर्भस्त्वित्यादि। गर्भारम्भकाण्यपि भूम्यादीनि परित्यज्यान्तरिक्षमादौ कृतं

यथा चानुपूर्व्याभिनिर्वर्त्तते कुक्षौ तदनुव्याख्यास्यामः। गते पुराणे रजसि, नवे चावस्थिते, पुनः शुद्धस्नातां स्त्रियमव्यापन्नयोनिशोणितगर्भाशयामृतुमतीमाचक्ष्महे। तया सह तथाभूतया यदा पुमानव्यापन्नबीजो मिश्रीभावं गच्छति तस्य हर्षोदीरितः परः शरीरधात्वात्मा शुक्रभूतोऽङ्गादङ्गात्

जीवस्य षष्ठो धातुरुक्तः, पञ्च चान्तरीक्षादयो धातवः। इत्येतत् षड्धातुसम्भवस्तु गर्भः। इति यद्विकारश्च गर्भस्तदनुव्याख्यास्याम इति प्रतिज्ञातार्थो व्याख्यातो भवति॥ ३॥

गङ्गाधरः—अथ यथा चानुपूर्व्या गर्भोऽभिनिर्व्वर्त्तते कुक्षौ तदनुव्याख्यास्याम इति प्रतिज्ञातार्थं स्मारयति—यथा चानुपूर्व्येत्यादि। गते पुराणे रजसीत्यादि। पुराणे क्रमेण मासेन सञ्चितं रजः पुराणमुच्यते, तस्य प्रवृत्त्या गतेऽतीते त्रिरात्रान्ते चतुर्थे दिने नवे नूतने रजसि अवस्थिते पुनः शुद्धस्नाताम् ऋतुस्नाताम् अव्यापन्नयोनिमव्यापन्नशोणितामव्यापन्नगर्भाशयां। योनिव्यापदः शोणितदोषा गर्भाशयदोषाश्च वक्ष्यन्ते। तथाभूतया अव्यापन्नयोनिशोणितगर्भाशयया तया स्त्रिया सह अव्यापन्नबीजोऽप्रदुष्टशुक्रः पुमान्। शुक्रदोषाश्च वक्ष्यन्ते योनिव्यापदध्याये। मिश्रीभावं मैथुनम्। तस्यर्त्तुमत्या स्त्रिया सह संसर्गं गच्छतः पुंसो मैथुनजहर्षोदीरितः प्रेरितः परः श्रेष्ठश्चरमः शरीर-

वक्ष्यमाणभूतग्रहणानुरोधात्। वक्ष्यति हि—"योऽन्तरिक्षं पूर्व्वतरमन्येभ्यो गुणेभ्य उपादत्ते" इत्यादि। चेतनाधिष्ठानभूत इति आत्मनो भोगायतनस्वरूप इत्यर्थः। 'चेतना'शब्देन आत्मोच्यते। किंवा 'भूत'शब्दः सादृश्ये, चेतनाधिष्ठानमिव शरीरमित्यर्थः। न तु परमार्थतो निराश्रयस्यात्मनो भोगायतनत्वव्यतिरेकेण शरीरमाश्रयो भवति। अनया युक्त्येति अनया भूतविकाररूपया योजनया पञ्चमहाभूतसमुदायात्मको भवति, अनया युक्त्या कतिधापुरुषीयोक्तश्चतुर्व्विंशतिको भवति, तथा मातृजादिरूपचिन्तया मात्रादिसमुदायात्मको भवतीत्यर्थः। न चैतेषां पक्षाणां विरोधोऽस्ति। यतः मातृजादिव्यपदेशेऽपि पञ्चमहाभूतविकारत्वमविरुद्धमेव, येन मातृजादयोऽप्यस्य महाभूतविकारा एव। उक्तं हि—"रसात्ममातापितृसम्भवानि। भूतानि विद्यात् दश षट् च देहे" इति। चतुर्व्विंशतिकत्वेऽपि च पञ्चमहाभूतात्मकरूपतैव तत्र प्रपञ्चिता। स हीत्यादि—अस्येति गर्भस्य॥ २

चक्रपाणिः—गत इति निवृत्ते। पुराण इति ऋतुकालातिक्रमसञ्चिते। नवे चावस्थित इति वचनेन नवेऽप्यनवस्थिते गर्भकारणत्वं नास्तीति दर्शयति। शुद्धस्नातामित्यनेन शुद्धस्नातैव स्त्री गम्या, नास्नाता, अशुद्धत्वादिति दर्शयति। 'स्त्यायत्यस्यां गर्भ इति 'स्त्री'। अनेन वन्ध्यां

सम्भवति । स तथा हर्षभूतेनात्मनोदीरितश्चाधिष्ठितबीजधातुः पुरुषशरीरादभिनिष्पत्योदितेन पथा गर्भाशयमनुप्रविश्यार्त्तवेन संसर्गमेति ।

तत्र पूर्व्वं चेतनाधातुः सत्त्वकरणो गुणग्रहणाय पुनः

धात्वात्मा शारीरधातुरूप आत्मा पूर्व्वजन्मन्यात्मकृतदिष्टानुप्रविष्टशुक्रभूतः शुक्राख्योऽङ्गादङ्गान्तरे तदङ्गादङ्गान्तरे क्षरितः सम्भवति । सुश्रुतेऽप्युक्तं—सौम्यं शुक्रमार्त्तवमाग्नेयमितरेषामप्यत्र भूतानां सान्निध्यमस्त्यणुना विशेषेण परस्परोपकारात् परस्परानुग्रहात् परस्परानुप्रवेशाच्च। तत्र स्त्रीपुंसयोः संयोगे तेजः शरीराद् वायुरुदीरयति । ततस्तेजोऽनिलसन्निपाततः शुक्रं च्युतं योनिमभिप्रतिपद्यते संसृज्यते चार्त्तवेनेति। स तथेति तथर्त्तुमत्या स्त्रिया सह संसर्गं गतस्य पुंसो मैथुनजहर्षभूतेनात्मना उदीरितः प्रच्युतश्चाधिष्ठितबीजधातुः पितृयानेन सोमलोकगतो दिष्टरूपं बीजं ततः प्रत्यागतं पुनः। अधिष्ठितं यं धातुं सोऽधिष्ठितबीजश्चासौ धातुश्चेत्यधिष्ठितबीजधातुः। कर्त्तरि क्तः। स परः शरीरधात्वात्मा शुक्रभूतः पुरुषशरीरादभिनिष्पत्योदितेनोक्तेन पथा योनिरन्ध्रेण गर्भाशयमनुप्रविश्याऽप्रदुष्टेन नवेनार्त्तवेन संसर्गमेति। सुश्रुतेऽप्युक्तं—ततोऽग्नीषोमसमयोगात् संसृज्यमानो गर्भो गर्भाशयमनु प्रतिपद्यते। इति।

तथा प्रकारेणार्त्तवेन संसृष्टे शुक्रे सति कथं गर्भः स्यादित्यत आह—तत्रेत्यादि। तत्र तथाविधरूपेणार्त्तवसंसृष्टशुक्रे चेतनाधातुरात्मा सत्त्वकरणो मनःकरणः सूक्ष्मशरीरेणाभिसंवद्धेन मनसा करणेन वेगवान् गुणग्रहणाय

निरस्यति। ऋतुमतीमित्यत्र प्रशंसायां मतुप्। तया सहेति तया स्त्रिया। तथाभूतयेति तादृगृतुयुक्तया। हर्षः प्रीतिविशेषः। तेनोदीरितः प्रेरितः। पर इति सारः, किंवा परकालोत्पन्नः परः। शुक्रं हि सर्व्वधातुभ्यः परमुत्पद्यते। शरीरधात्वात्मा इति शरीरधातुरूपः। शुक्रभूत इति शुक्रस्वरूप एवाङ्गादङ्गात् सम्भवति व्यज्यते। तेन नाङ्गेभ्यः शुक्रमुत्पद्यते, किन्तु शुक्ररूपतयैव स्थितं व्यज्यते। वचनं हि—"सर्व्वत्रानुगतं देहे शुक्रम्" इति। हर्षभूतेनेति हर्षरूपेणात्मना उदीरितश्चाधिष्ठितश्चेत्यनेन, उदीरणकाले तथा निःसरणकालेऽपि हर्षमयाधिष्ठानं शुक्रस्य गर्भाशयप्राप्तिकारणं दर्शयति—यदि शुक्रप्रवृत्तिकाले पुरुषो हर्षरहितः स्यात्, न तदा सम्यक् शुक्रप्रवृत्तिः तथा वेगविघातान्न गर्भाशयप्रवृत्तिर्भवति। वीजरूपो धातुर्बीजधातुः शुक्रमिति। संसर्गं सम्यङ्मूर्च्छनम्।

सत्त्वं मनः करणं यस्य स सत्त्वकरणः। आत्मा निष्क्रियत्वेन क्रियावता मनसा यत् कार्य्यं करोति, तच्च कार्य्यं मनसा क्रियमाणमप्यचेतनेन चेतनावत आत्मन एवोच्यते। वचनं

**प्रवर्त्तते। स हि हेतुः कारणं निमित्तमक्षरं कर्त्ता मन्ता बोधयिता बोद्धा द्रष्टा धाता ब्रह्मा विश्वकर्म्मा विश्वरूपः पुरुषः प्रभवोऽव्ययो नित्यो गुणी ग्रहणं प्राधान्यमव्यक्तं जीवो ज्ञः प्रकुलश्चेतनावान् प्रभुश्च भूतात्मा चेन्द्रियात्मा चान्तरात्मा चेति। स गुणोपादानकालेऽन्तरीक्षं पूर्व्वतरमन्येभ्यो गुणेभ्य उपादत्ते।**

इच्छाद्वेषप्रयत्नसुखदुःखबुद्धिस्मृतिधृतिग्रहणाय वायुनाभिप्रेर्य्यमाणः प्रवर्त्तते तत्रार्त्तवसंसृष्टशुक्रे गर्भाशयं प्रविश्यावतिष्ठते। अस्य चार्त्तवसंसृष्टशुक्र-प्रवर्त्तनेन च वीजधर्म्मणः सूक्ष्मदेहस्यापि नित्यानुबन्धस्य प्रवृत्तिरुक्ता भवति। उक्तं ह्यतुल्यगोत्रीये—भूतानि चत्वारि तु कर्म्मजानि यान्यात्मलीनानि विशन्ति गर्भे। स वीजधर्म्मा ह्यपरापराणि देहान्तराण्यात्मनि याति याति॥ इति। ननु तदप्रदुष्टार्त्तवसंसृष्टशुक्रे चेतनाधातुः को यो गुणग्रहणाय पूर्व्वं प्रवर्त्तते इत्यत आह—स हीत्यादि। स चेतनाधातुर्हि यस्मात् हेतुः सर्व्वकर्म्मसु हेतुर्हि पूर्व्ववर्त्ती। ननु स निष्क्रियः कथं हेतुः स्यादित्यत आह—कारणमिति। कारयतीति कारणं प्रयोजकः, स्वयं किञ्चिदपि न करोति सत्त्वादींस्तु कुर्व्वतः प्रेरयति। अत एव निमित्तम्। नन्वस्य हेतुः क इत्यत आह—अक्षरं न क्षरतीत्यक्षरम्। अनादेस्तस्य हेतुर्नास्तीति भावः। अत एव कर्त्ता। ननु सत्त्वादिः क्रियाकारकः कथं न कर्त्ता इत्यत आह—मन्तेति। मतिमान् मननशील इत्यर्थः। ननु मननन्तु सत्त्वं करोति कथं मन्ता स्यादित्यत आह—बोधयितेति, सत्त्वादिकांश्चेतयिता। ननु स्वयं किं न बुध्यते इत्यत आह—बोद्धेति। ननु तर्हि किं क्रियाः कारयति फलं न भुङ्क्ते इत्यत आह—द्रष्टेति। क्रियाद्रष्टा न तु क्रियाकर्त्ता क्रियाफलभोक्ता वा, अत एव धाता ब्रह्मेत्यादिपर्य्यायवाच्यः। प्रकुल इति प्रगतः कुलं वंशं प्राप्तः स प्रकुलः। प्रभुः शक्तिमान्। भूतात्मा भूतानां प्राणिनामात्मा स्वप्नावस्थस्तैजसाख्य आत्मा, इन्द्रियात्मा इन्द्रियाणां श्रोत्रादीनामात्मा स्वस्वक्रियाहेतुः। अन्तरात्मा सुषुप्तिस्थानः प्राज्ञः। एनं विना हि न गर्भनिर्म्माणं सम्भवतीति पूर्व्वमयं प्रवर्त्तते।

हि—"चेतनावान् यतश्चात्मा ततः कर्त्ता निरुच्यते।" गुणग्रहणायेत्यत्र 'गुण'शब्देन, गुण-गुणिनोरभेदोपचारात् गुणवन्ति भूतान्युच्यन्ते। किंवा गुणोऽप्रधानम्, प्रधानञ्चात्मा, तद्-व्यतिरिक्तानि च भूतानि गुणाः। कस्मादात्मा भूतानि गृह्णात्यप्रधानरूपाणीत्याशङ्कायामात्मनः प्राधान्यख्यापकान् पर्य्यायानाह—स हीत्यादि। न क्षरतीत्यक्षरम्। गुणी भूतरूपगुणवानित्यर्थः।

यथा प्रलयात्यये सिसृक्षुर्भूतान्यक्षरभूतः सत्त्वोपादानं * पूर्व्वतरमाकाशं सृजति, ततः क्रमेण व्यक्ततरगुणान् धातून् वाय्वादींश्चतुरः ; तथा देहग्रहणेऽपि प्रवर्त्तमानः पूर्व्वतरमाकाशमेवोपादत्ते, ततः क्रमेण व्यक्ततरगुणान् धातून् वाय्वादींश्चतुरः । सर्व्वमपि तु खल्वेतद् गुणोपादानमणुना कालेन भवति ॥ ४ ॥

नन्वयमार्त्तवसंसृष्टे शुक्रे पूर्व्वं प्रवर्त्तमानः किं कुरुते इत्यत आह—स इत्यादि । स हेत्वादिपर्य्यायवाच्यश्चेतनाधातुः सत्त्वकरणः पूर्व्वमार्त्तवसंसृष्टशुक्रे प्रविष्टो गुणग्रहणाय प्रवर्त्तमानः गुणोपादानकाले सत्त्वं रजोबाहुल्येन विकुर्व्वन् रजोबहुलेन तेन अन्येभ्यो गुणिभ्यो वाय्वादिभूतेभ्यः पूर्व्वतरं पूर्व्वतममन्तरीक्षं शब्दगुणवदप्रतीघातलक्षणं स्वसहचरवीजधर्म्मसूक्ष्मदेहस्थाकाशं निष्क्रियं संसृज्य सरूपमेव शब्दगुणमप्रतीघातलक्षणमाकाशमुपादत्ते सृजति। अत्र दृष्टान्तमाह—यथेत्यादि। प्रलयात्यये प्रलयावसाने भूतानि प्राणिनः सिसृक्षुरक्षरभूतो ब्रह्मा नारायणाख्यः सुप्तोत्थितः प्रतिबुद्धः पूर्व्वं सत्त्वं मनः सदसदात्मकं सृष्ट्वा सत्त्वोपादानं तन्मनःप्रकृतिकं पूर्व्वतरमाकाशं सृजति। ततः क्रमेणेत्यादि स्पष्टम्। नन्वेवमन्तरीक्षादिभूतोपादानं कियद्भिः कालैरित्यत आह—सर्व्वमपि खित्यादि। एतदन्तरीक्षादिपञ्चभूतरूपेण शब्दादिगुणोपादानमणुना परमाणुकालेन भवत्यात्मन इति ॥ ४ ॥

गृह्णाति भूतानीति ग्रहणम्। एतैः पर्य्यायैरात्मनोऽभिधेयस्येतरपदार्थोपकार्य्यत्वेनाश्रयत्वं प्रसिद्धं दर्श्यते। पूर्व्वतरं प्रथममेव। अन्येभ्यो गुणेभ्य इति वाय्वादिभ्यः। अत्र गर्भे भूतग्रहणक्रमे दृष्टान्तमाह—यथेत्यादि। प्रलयस्य महाप्रलयस्यात्यये इति सर्गे इत्यर्थः। सिसृक्षुरिति स्रष्टुमिच्छुः। भूतानि आकाशादीनि। सत्त्वोपादान इति मनःकरणः। महाप्रलये हि विकारस्य प्रकृतौ लयात् प्रकृतिपुरुषावेव परमव्यक्तरूपौ तिष्ठतः। ततश्च सर्गारम्भे प्रकृतेर्महदादिः प्रपञ्च उत्पद्यते क्रमेण। तत्र प्रथममाकाशमुत्पद्यते, ततो वाय्वादीनि व्यक्तानीति सांख्यसिद्धान्तः। आकाशस्य जन्यत्वं सांख्यमतेनैव ज्ञेयम्। देहग्रहणेऽपीति गर्भस्वरूपग्रहणेऽपीति। उपादत्त इति शुक्रशोणितगतमाकाशमाकाशमयतया स्वीकरोति। व्यक्ततरगुणानिति आकाशमेकगुणमपेक्ष्य शब्दस्पर्शगुणो वायुर्व्यक्ततरः, तमपेक्ष्य शब्दस्पर्शरूपगुणं तेजोव्यक्ततरमित्यादि। भयञ्च भूत-

* सत्त्वोपादान इति चक्रः।

स तु सर्व्वगुणवान् गर्भत्वमापन्नः प्रथमे मासि संमूर्च्छितः

गङ्गाधरः—एवं सर्व्वगुणवान् गर्भत्वमापन्नः सन् वक्ष्यमाणक्रमेणान्नमय एष स्थूलश्चतुर्विंशतिधातुकः पुरुषो भवति। उक्तञ्चैवं तैत्तिरीयोपनिषदि ब्रह्मानन्दवल्ल्याम्—तस्माद्वा एतस्मादात्मन आकाशः-सम्भूतः, आकाशाद्वायुः, वायोरग्निः, अग्नेरापः, अद्भ्यः पृथिवी, पृथिव्या ओषधयः, ओषधीभ्योऽन्नम्, अन्नाद् रेतः, रेतसः पुरुषः, स एवात्र यः पुरुषोऽन्नरसमयः। तस्येदमेव शिरोऽयं दक्षिणः पक्षोऽयमुत्तरः पक्षोऽयम् आत्मा इदं पुच्छं प्रतिष्ठा। तदप्येष श्लोको भवति। अन्नाद्वै प्रजा जायन्ते, याः काश्च पृथिवीं श्रिताः। अथान्नेन जीवन्ति अथैनदपि यन्त्यन्ततः। अन्नं हि भूतानां ज्येष्ठं, तस्मात् सर्व्वौषधमुच्यते। सर्व्वं वै ते अन्नमाप्नुवन्ति, येऽन्नं ब्रह्मोपासते। अन्नाद् भूतानि जायन्ते जातान्यन्नेन वर्द्धन्ते। अद्यतेऽत्ति च भूतानि तस्मादन्नं तदुच्यते। तस्माद्वा एतस्मादन्नरसमया-दन्योऽन्तरात्मा प्राणमयस्तेनैष पूर्णः। स वा एष पुरुषविध एव। तस्य पुरुष-विधताम्। अन्वयं पुरुषविधः। तस्य प्राण एव शिरो व्यानो दक्षिणः पक्षः अपान उत्तरः पक्ष आकाश आत्मा। पृथिवी पुच्छं प्रतिष्ठा। तदप्येष श्लोको भवति। प्राणं देवा अनुप्राणन्ति मनुष्याः पशवश्च ये। प्राणो हि भूतनामायु-स्तस्मात् सर्व्वायुषमुच्यते। सर्व्वमेव त आयुर्यन्ति ये प्राणं ब्रह्मोपासते। प्राणो हि भूतानामायुस्तस्मात् सर्व्वायुषमुच्यते। तस्यैष एव शारीर आत्मा यः पूर्व्वस्य। तस्माद्वा एतस्मात् प्राणमयादन्योऽन्तर आत्मा मनोमयः। तेनैष पूर्णः। स वा एष पुरुषविध एव। तस्य पुरुषविधतामन्वयं पुरुषविधः। तस्य यजुरेव शिर ऋग्दक्षिणः पक्षः सामोत्तरः पक्ष आदेश आत्मा अथर्व्वाङ्गिरसः पुच्छं प्रतिष्ठा। तदप्येष श्लोको भवति। यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सह। आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्चन॥ तस्यैष एव शारीर आत्मा यः पूर्व्वस्य। तस्माद्वा एतस्मान्मनोमयादन्योऽन्तर आत्मा विज्ञान-मयः। तेनैष पूर्णः। स वा एष पुरुषविध एव। तस्य पुरुषविधतामन्वयं पुरुषविधः। तस्य श्रद्धैव शिर ऋतं दक्षिणः पक्षः सत्यमुत्तरः पक्षो योग आत्मा महः पुच्छं प्रतिष्ठा। तदप्येष श्लोको भवति। विज्ञानं यज्ञं तनुते कर्म्माणि तनुतेऽपि च। विज्ञानं देवाः सर्व्वे ब्रह्मज्येष्ठमुपासते। विज्ञानं

ग्रहणक्रम आगमसिद्ध एव, नात्र युक्तिस्तथाविधा हृदयङ्गमास्ति। एतच्च भूतग्रहणं लघुनैव कालेन भवतीति दर्शयन्नाह—सर्व्वमित्यादि॥ ४॥

ब्रह्म चेद्वेद तस्माच्चेन्न प्रमाद्यति। शरीरे पाप्मनो हित्वा सर्व्वान् कामान् समश्नुते। तस्यैष एव शारीर आत्मा यः पूर्व्वस्य। तस्माद्वा एतस्मा-द्विज्ञानमयादन्योऽन्तर आत्मानन्दमयः। तेनैष पूर्णः। स वा एष पुरुषविध एव। तस्य पुरुषविधतामन्वयं पुरुषविधः। तस्य प्रियमेव शिरो मोदो दक्षिणः पक्षः प्रमोद उत्तरः पक्ष आनन्द आत्मा ब्रह्म पुच्छं प्रतिष्ठा। तदप्येष श्लोको भवति। असन्नेव भवति असद् ब्रह्मेति वेद चेत्। अस्ति ब्रह्मेति चेद्वेद सन्तमेनं ततो विदुः। तस्यैष एव शारीर आत्मा यः पूर्व्वस्य इति। आनन्द आत्मा ब्रह्म पुच्छं प्रतिष्ठेत्यनेन ख्यापितं हिरण्मयः पुरुषः एतस्मात् पञ्चमात् कोषात् परः षष्ठः कोष इति। तथा च। तस्माद्वा एतस्मा-दानन्दमयादन्योऽन्तर आत्मा हिरण्मयः। तेनैष पूर्णः। स वा एष पुरुषविध एव। तस्य पुरुषविधतामन्वयं पुरुषविधः। तस्यान्नमेव शिर आपो दक्षिणः पक्षस्तेज उत्तरः पक्ष सद्ब्रह्मगायत्री शक्तिरात्मा। असद्ब्रह्मशक्तिः पुच्छं प्रतिष्ठा। तदप्येष श्लोको भवति। हिरण्मये परे कोषे विरजं ब्रह्म निष्कलम्। तच्छुभ्रं ज्योतिषां ज्योतिस्तद् यदात्मविदो विदुः॥ असद्वा इदमग्र आसीत् ततो वै सदजायत। तदात्मानं स्वयमकुरुत तस्मात् तं सुकृतमुच्यते॥ तस्यैष एव शारीर आत्मा यः पूर्व्वस्येति। यद्वै तत् सुकृतं रसो वै सः। रसं ह्येवायं लब्ध्वानन्दीभवति। को ह्येवान्यात् कः प्राण्याद् यदेष आकाश आनन्दो न स्यात्। एष ह्येवानन्दयतीति। इति तद्धेतुव्यपदेशाद्धिरण्मयः पुरुषोऽप्यानन्दः सद्ब्रह्म पुच्छं प्रतिष्ठा। स आनन्दो ब्रह्मेति व्यजानादित्युक्तमत आनन्दमयत्वमिति। समाधौ सुषुप्तौ चैष यमानन्दयति स आनन्दतीत्यानन्द आत्मानन्दमयस्यात्माऽभिहित इति। अथ तस्माद्वा एतस्मादात्मन आकाशः सम्भूत आकाशाद्वायुर्वायोरग्निरग्नेः आपोऽद्भ्यः पृथिवी, पृथिव्या ओषधयः, इत्येतं वेदं स्मृत्वा मनुरुवाच। तस्य सोऽहर्निशस्यान्ते प्रसुप्तः प्रतिबुध्यते। प्रतिबुद्धश्च सृजति मनः सदसदात्मकम्। मनः सृष्टिं विकुरुते चोद्यमानं सिसृक्षया। आकाशं जायते तस्मात् तस्य शब्दं गुणं विदुः॥ आकाशात् तु विकुर्व्वाणात् सर्व्वगन्धवहः शुचिः। बलवान् जायते वायुः स वै स्पर्शगुणो मतः॥ वायोरपि विकुर्व्वाणाद्विरोचिष्णु तमोनुदम्। ज्योतिरुत्पद्यते भास्वत् तद्रूपगुणमुच्यते॥ ज्योतिषश्च विकुर्व्वाणा-दापो रसगुणाः स्मृताः। अद्भ्यो गन्धगुणा भूमिरित्येषा सृष्टिरादितः॥ इति द्वितीयादिकल्पे यद्वा अव्यक्तं नामात्मा स एवैष आदित्यो नारायणो

**सर्व्वधातुकलुषीकृतः * खोटभूतो भवत्यव्यक्तविग्रहः सदसद्-**

नाम ब्रह्मात्मा एतस्मान्मनो विक्रियमाणमाकाशं ससज्जति द्वितीयादिकल्पे पृथिव्यप्तेजोवाय्वाकाशमनोऽहङ्कारमहान्त इत्यष्टौ प्रकृतय आत्मा नवमी प्रकृतिरिति भगवद्गीतायामुक्तम्—भूमिरापोऽनिलो वह्निः खं मनो बुद्धिरेव च। अहङ्कार इतीयं मे भिन्ना प्रकृतिरष्टधा॥ अपरेयं महावाहो जीवभूता सनातनी। मूलप्रकृतिरुद्दिष्टा ययेदं धार्य्यते जगत्॥ इति। एतच्चोक्तम्। मातृजश्चायं गर्भ इत्यादिना, मात्रादिजानि पञ्चभूतानि मनोऽहङ्कारो महानात्मा चेति नव प्रकृतयः। स्थूलपुरुषस्य चतुर्व्विंशतिकस्य दशेन्द्रियाण्यर्थाश्च पञ्चेति पञ्चदशात्मशब्देन संगृहीतानीति चतुर्व्विंशतिः प्रकृतयस्तत्र विकृतिभूताः षोडश प्रकृतयः प्रकृतिभूता अष्टौ प्रकृतय इति। इत्थं गर्भत्वमापन्नः प्रथमे मासि सम्मूर्च्छितः स्यात्। सुश्रुते च—"सौम्यं शुक्रमार्त्तवमाग्नेयमितरेषामप्यत्र भूतानां सान्निध्यमस्त्यणुना विशेषेण परस्परोपकारात् परस्परानुग्रहात् परस्परानुप्रवेशाच्च। तत्र स्त्रीपुंसयोः संयोगे तेजः शरीराद्वायुरुदीरयति ततस्तेजोऽनिलसन्निपाताच्छुक्रं च्युत योनिमभिप्रतिपद्यते संसृज्यते चार्त्तवेन ततोऽग्नीषोमसंयोगात् संसृज्यमानो गर्भो गर्भाशयमनुप्रतिपद्यते। क्षेत्रज्ञो वेदयिता स्प्रष्टा घ्राता द्रष्टा श्रोता रसयिता पुरुषः स्रष्टा गन्ता साक्षी धाता वक्ता योऽसावित्येवमादिभिः पर्य्यायवाचकैर्नामभिरभिधीयते दैवसंयोगादक्षयोऽव्ययोऽचिन्त्यो भूतात्मना सहान्वक्षं सत्त्वरजस्तमोभिर्द्दैवासुरैरपरैश्च भावैर्वायुनाभिप्रेर्य्यमाणो गर्भाशयमनुप्रविश्यावतिष्ठते। तत्र शुक्रबाहुल्यात् पुमानार्त्तवबाहुल्यात् स्त्री साम्यादुभयोर्नपुंसकमिति। ऋतुस्तु द्वादशरात्रं भवति दृष्टार्त्तवः। अदृष्टार्त्तवाप्यस्तीत्येके" इत्यारभ्य "तत्र प्रथमे मासि कललं जायते। द्वितीये शीतोष्णानिलैरभिप्रपच्यमानानां महाभूतानां सङ्घातो घनः सञ्जायते। यदि पिण्डः पुमान्, स्त्री चेत् पेशी, नपुंसकञ्चेदर्व्वुदमिति॥"

तथा चात्र प्रथमे मासि प्रथमतः शुक्रशोणितयोः सम्यङ्मेलनं ततः सर्व्वधातुकलुषीकृतः। सर्व्वेषां शुक्रगाणां शोणितगानामात्मगानाञ्च रसगानाञ्च धातूनां वाय्वादीनां भूतानामकलुषभावः कलुषभावः क्रियते स इत्याविलीकृतो भवति। ततोऽनन्तरन्तु खोटभूतः स्त्यानरूपः श्लेष्मवद् भवति। तदा त्वव्यक्तविग्रहः पिण्डाद्याकाराव्यक्तिसमसद्भूताङ्गावयवः सत्-

चक्रपाणिः—सर्व्वधातुकलनीकृत इति अव्यक्तसर्व्वधातुतया कलनीकृतः। 'धातु'शब्देन च भूतान्युच्यन्ते। किंवा रसादिधातुबीजानि। खोटः श्लेष्मा। तेन खोटभूत इति श्लेष्मभूत

* सर्व्वधातुकलनीकृतः इति चक्रधृतः पाठः।

भूताङ्गावयवः । द्वितीये मासि घनः सम्पद्यते पिण्डः पेश्यर्व्वुदं वा । तत्र घनः पुरुषः, स्त्री पेशी, अर्व्वुदं नपुंसकम् । तृतीये मासि सर्व्वेन्द्रियाणि सर्व्वाङ्गावयवाश्च यौगपद्येनाभिनिर्व्वर्त्तन्ते । तत्रास्य केचिदङ्गावयवा मातृजादीनवयवान् विभज्य पूर्व्वमुक्ता यथावत् । महाभूतविकारप्रविभागेन त्विदानीमस्य तांश्चैवाङ्गावयवान् कांश्चित्, पर्य्यायान्तरेणापरांश्चानुव्याख्यास्यामः ॥ ५ ॥

सूक्ष्मदेहस्थाङ्गावयवः असत्स्थूलदेहभावाङ्गावयवः एतदुभयभूताङ्गावयवरूपः इत्येवं कललं प्रथमे मासि पूर्णे सति भवति । ततो द्वितीये मासि स गर्भत्वमापन्नो घनः कठिनः स्यात् । स च त्रिविधः पिण्डः पेशी वाप्यर्व्वुदं वा । तत्र घनः पिण्डो ग्रन्थ्याकारश्चेत् पुरुषो भवति । पेशी चेत् स्त्री भवति । अर्व्वुदं वर्त्तुलाकारश्चेन्नपुंसकमिति । अथ तृतीये मासि इत्यादि । अभिनिर्व्वर्त्तन्ते इति तृतीयमासस्य पूर्व्वार्द्धे हस्तपादशिरसां पञ्च पिण्डका अभिनिर्व्वर्त्तन्तेऽङ्गप्रत्यङ्गविभागश्च सूक्ष्मो भवति । शेषार्द्धे तु सर्व्वाङ्गेन्द्रियाणि सर्व्वाङ्गावयवाश्च व्यक्तारम्भा भवन्तीत्यर्थः । चतुर्थमासस्य पूर्व्वार्द्धे अव्यक्ततररूपेण भवन्ति इत्यभिप्रायभेदेन तृतीये मासि सर्व्वेन्द्रियाणि सर्व्वाङ्गावयवाश्च यौगपद्येनाभिनिर्व्वर्त्तन्ते इति स्वयमस्मिंस्तन्त्रे लिखितवान् । सुश्रुतस्तु "तृतीये हस्तपादशिरसां पञ्च पिण्डका निर्व्वर्त्तन्तेऽङ्गप्रत्यङ्गविभागश्च सूक्ष्मो भवतीति । चतुर्थे सर्व्वाङ्गप्रत्यङ्गविभागः प्रव्यक्ततरो भवति । गर्भहृदयप्रव्यक्तभावात् चेतनाधातुरभिव्यक्तो भवति । कस्मात् तत्स्थानत्वात् । तस्माद् गर्भश्चतुर्थे मास्यभिप्रायमिन्द्रियार्थेषु करोति । द्विहृदयाञ्च नारीं दौहृदयिनीमाचक्षते" इति लिखितवान् । तत्रास्येत्यादि । तत्र सर्व्वेन्द्रियसर्व्वाङ्गावयवेषु मध्येऽस्य गर्भस्य केचित् त्वगादय एवाङ्गावयवाः पूर्व्वं खुड्डीकागर्भावक्रान्तिशारीरे, इदानीन्त्वस्य गर्भस्य महाभूतविकारप्रविभागेन

इत्यर्थः । अव्यक्तविग्रह इत्यस्य विवरणम्—सदसद्भूताङ्गावयव इति विद्यमानाविद्यमानाङ्गावयव इत्यर्थः । अङ्गानाञ्च वीजरूपतया स्थितत्वे सत्त्वम्, अव्यक्तभावाच्चासत्त्वम् । किञ्च सदसद्भूताङ्गावयवो घनः सम्पद्यते इति योजना । घनः कठिनः । पिण्डो ग्रन्थ्याकारः । पेशी दीर्घमांसपेश्याकारा । अर्व्वुदं वर्त्तुलोन्नतम् । अङ्गानि शिरःप्रभृतीनि तदवयवाश्चेत्यङ्गावयवाः । यौगपद्येनेतिवचनेन "कुमारस्य शिरः पूर्व्वमभिनिर्व्वर्त्तते" इत्यादिवक्ष्यमाणान्यैकैकीयमतानि निषेधयति । यौगपद्येन हि सर्व्वाङ्ग-

मातृजादयोऽप्यस्य महाभूतविकाराः, तत्रास्याकाशात्मकं शब्दः श्रोत्रं लाघवं सौक्ष्म्यं विवेकश्च *। वाय्वात्मकं स्पर्शः स्पर्शनं रौक्ष्यं प्रेरणं धातुव्यूहनं चेष्टाश्च शारीर्य्यः। अग्न्यात्मकं रूपं दर्शनं प्रकाशः पक्तिरौष्ण्यञ्च। अबात्मकं रसो

तांश्चैवाङ्गावयवान् त्वगादीन् पर्य्यायान्तरेण नामान्तरेणापरांश्चाङ्गावयवाननु-व्याख्यास्यामः ॥ ५ ॥

गङ्गाधरः—तत् किमित्याह—मातृजादयोऽपीत्यादि। मातृजास्त्वगादयो येऽङ्गावयवाः खुड्डीकायामुक्तास्तत्र त्वगादिषु ये शब्दलाघवसौक्ष्म्यशुषिरादयस्तत् सर्व्वं शौणितिकाकाशात्मकम्। एवं पितृजाश्च येऽङ्गावयवाः केशश्मश्रुनखादय उक्तास्तेषु च ये शब्दलाघवसौक्ष्म्यविवेकास्तत् सर्व्वं पितुः शुक्रगाकाशात्मकम्। एवमात्मजाश्च येऽङ्गावयवा इन्द्रियादय उक्तास्तेषु मध्ये श्रोत्रेन्द्रियं स्वर-विशेषश्चात्मजाकाशात्मकम्। वाय्वात्मकमित्यादि। चत्वारि त्वगिन्द्रियादीनि वाय्वाद्यात्मकानीन्द्रियाणि तत्र स्पर्शने स्पर्शश्चक्षुषि रूपः, रसने रसो, घ्राणे गन्धश्च वाय्वाद्यात्मकाः। पञ्च कर्म्मेन्द्रियाणि चात्मजपञ्चभूतात्मकानि तेषु लाघवादीनि च सात्म्यजाश्च ये त्वारोग्यादयस्तेषु मध्ये इन्द्रियप्रसादस्तु य उक्तस्तत्र श्रोत्रेन्द्रियप्रसादः सात्म्यरसगाकाशात्मकः। तथा रसजा ये शरीराभिनिर्व्वृत्त्यभिवृद्धी उक्ते, तयोः शब्दलाघवसौक्ष्म्यशुषिराभिनिर्व्वृत्त्यभि-वृद्धी, एतद्द्वयं रसगताकाशात्मकम्। एवं सत्त्वजा ये भक्त्यादयस्तेषु यथा-सम्भवं शब्दादिगाम्भीर्य्यादिकं सत्त्वकार्य्यमिति केचित्। एवं वाय्वात्मक-मिति। त्वगादिमातृजाङ्गावयवेषु स्पर्शरौक्ष्यधातुव्यूहनचेष्टा इत्येतत् सर्व्वं मातृशोणितीयवाय्वात्मकम्। पितृजकेशादिषु च तत् सर्व्वं पितुः शुक्रगतवाय्वा-त्मकम्। आत्मजेन्द्रियादिषु चात्मगतवाय्वात्मकं स्पर्शनमिन्द्रियं प्राणापान-चेष्टाप्रेरणं रौक्ष्याकृतिरित्येतत् सर्व्वम्। स्पर्शनेन्द्रियप्रसादस्तु सात्म्यीय-वाय्वात्मकम्। शारीराभिनिर्व्वृत्तिस्तदभिवृद्धिश्च तयोः स्पर्शरौक्ष्य-धातुव्यूहनशरीरचेष्टाश्च सर्व्वं रसजवाय्वात्मकम्। अग्न्यात्मकमित्यादि। मातृजत्वगादिषु रूपं प्रकाश औष्ण्यञ्च मातृशोणितिकाग्न्यात्मकम्।

निर्व्वृत्तिरिति सिद्धान्तः। केचिदिति न सर्व्वे। तत्र मातृजाद्यङ्गकथनेन शब्दादयो य इह भूतविकारत्वेन वक्ष्यन्ते, ते न सर्व्वे प्रोक्ताः, किन्तु केचिदेव त्वगादयः। पर्य्यायान्तरेणेतिवचनात् ये मातृजादयः

* विरेकश्चेति चक्रः।

रसनं शैत्यं मार्द्दवः स्नेहः क्लेदश्च । पृथिव्यात्मकं गन्धो घ्राणं गौरवं स्थैर्य्यं मूर्त्तिश्च । एवमयं लोकसम्मितः पुरुषः । यावन्तो हि लोके भावविशेषास्तावन्तः पुरुषे, यावन्तः पुरुषे तावन्तो लोके इति बुधास्त्वेवं द्रष्टुमिच्छन्ति ॥ ६ ॥

पितृजकेशादिषु च पितुः शुक्रगताग्न्यात्मकं तत् त्रयम् । आत्मजेन्द्रियादिषु दर्शनं चक्षुरिन्द्रियं तद्गतरूपं पक्तिः वर्णविशेष आत्मगताग्न्यात्मकम् । चक्षुरिन्द्रियप्रसादः वर्णो वीजसम्पच्च सात्म्यीयाग्नेयम् । शारीररूपं रूपाभिवृद्धिश्च प्रकाशश्चौष्ण्यञ्चाहारजरसगाग्न्यात्मकम् । अथ मातृजत्वगादिषु रसः शैत्यं मार्द्दवः स्नेहः क्लेदश्चेति सर्व्वं मातृशोणितगतावात्मकम् । एवं पितृजकेशादिषु च तत् सर्व्वम् । आत्मजेन्द्रियादिषु च रसनमिन्द्रियं रसनगतरसः आकृतिः स्नेहमार्द्दवौ चात्मगतावात्मकम् । सात्म्यगतावात्मकन्तु रसनप्रसादः । रसगतावात्मकन्तु शरीराभिनिर्वृत्त्यभिवृद्ध्योः । शरीररसशैत्यमार्द्दवस्नेहक्लेदा इति सर्व्वम् । अथ मातृजत्वगादिषु गन्धगौरवस्थैर्य्यमूर्त्तय इत्येतत् सर्व्वं मातृशोणितीयपृथिव्यात्मकम् । तथा पितृजकेशादिषु तत्सर्व्वं शुक्रगतपृथिव्यात्मकम् । आत्मजेन्द्रियादिषु घ्राणमिन्द्रियं तद्गतगन्धगौरवस्थैर्य्यमूर्त्तयश्चेत्येतत् सर्व्वमात्मगतपृथिव्यात्मकम् । घ्राणेन्द्रियप्रसादस्तु सात्म्यगतपृथिव्यात्मकः । शरीरगतगन्धगौरवस्थैर्य्यमूर्त्तयश्चेत्येतत् सर्व्वं रसगतपृथिव्यात्मकमिति । एवं शेषाः पाञ्चभौतिककार्य्यगुणा बोध्याः । अस्य गर्भस्यात्मपञ्चभूतात्मकत्वेनाङ्गावयवानुक्त्वा शेषार्थोप-

"त्वक् च लोहितञ्च" इत्यादिनोक्ताः, त इह न साक्षाद् वक्तव्याः, किन्तु ये त्वग्गता मूर्त्तिस्नेहमार्द्दवादयः, ते भूतजन्यत्वेनोच्यमानास्त्वचोऽभिधायका भवन्ति । एवं शोणितगतभूतविकारकथनेन शोणितकथनं ज्ञेयम् । त्वगादयो भूतविकारा वक्ष्यमाणा इति विकारसमुदायरूपा एव । अङ्गानाञ्च मातृजरूपेण यदभिधानम्, तत् मात्रधीनत्वप्रतीत्यर्थम् । पुनश्चेह भूतजन्यत्वेनाभिधानमङ्गानां क्षये वा वृद्धौ वा सत्यां तत्कारणभूतोपयोगप्रतिषेधाभ्यां वृद्धिक्षयजननज्ञानार्थम् । यदङ्गं यद्भूतप्रभवम्, तदङ्गं तद्भूतप्रधानेन द्रव्येण वर्द्धते, क्षीयते च तद्विपरीतेन । लाघवं यद्यपि वायौ पठन्ति,—"रूक्षः शीतो लघुश्चैव" इत्यादिना, तथापि आकाशाल्लाघवं प्रधानं ज्ञेयम्, तेन इहाकाशविकारे पठन्ति । आकाशं हि अत्यर्थसूक्ष्मत्वाच्चातिलघु । विरेको विच्छेदः । धातुव्यूहनं धातुरचना धातुवर्द्धनञ्च । दृश्यतेऽनेनेति दर्शनं चक्षुरिन्द्रियम् । मूर्त्तिः काठिन्यम् ।

एतद्भूतविकारमयत्वं शरीरस्य लोकमयस्य चेति यज्ज्ञानम्, तन्मोक्षस्यापि परमाभीष्टस्य

एवमस्येन्द्रियाण्यङ्गावयवाश्च यौगपद्येनाभिनिर्वर्त्तन्ते अन्यत्र तेभ्यो भावेभ्यो येऽस्य जातस्योत्तरकालं जायन्ते। तद् यथा—दन्ता व्यञ्जनानि व्यक्तीभावस्तथा युक्तानि चापराण्येषा प्रकृतिः, विकृतिः पुनरतोऽन्यथा। सन्ति खल्वस्मिन् गर्भे केचिच्च नित्या भावाः, सन्ति चानित्याः केचित्। तस्य ये

संहारार्थं जगत्सम्मितत्वमाह—एवमित्यादि। एतच्च प्रपञ्चेन व्याख्यास्यते स्वयमेव॥ ६॥

गङ्गाधरः—उपसंहरति—एवमस्येन्द्रियाणीत्यादि। अन्यत्र विनेत्यर्थः। ये दन्तादयो वक्ष्यमाणाः। दन्ताः; व्यञ्जनानि स्तनाधःकुन्तलश्मश्रुकक्षलोमाकृतिविशेषाश्च। व्यक्तीभावो बुद्ध्यादीनां रूपादीनां वाक्यादीनां शुक्रादीनां लोमादीनामित्येवमादीनाम्। तथा युक्तानि चापराणि गमनधावनादीनि। एषा प्रकृतिरवैकारिकी। ननु जातदन्तोऽपि जायते इत्यत आह—विकृतिरित्यादि। अथास्मिंस्तृतीयमासशेषार्द्धे प्रव्यक्तोन्मुखे तूपस्थे शुक्राधिक्ये पुमान् रक्ताधिक्ये स्त्री द्वयोः साम्ये तु नपुंसकमिति यदुक्तं तत् किं

कारणं भवतीति लोकसाम्यं दर्शयन्नाह—एवमयमित्यादि। एवमयमिति पञ्चभूतविकारमयत्वेन लोकसम्मित इति लोकतुल्यः। इह च भूतविकारमयत्वञ्च यच्छरीरस्योक्तम्, तेन भूतविकारमयत्वमधिकृत्य सादृश्यमुक्तम्। लोकपुरुषयोः साम्यमाध्यात्मिकम्, लोकपुरुषयोः साम्यं पुरुषविचये वक्तव्यम्, तदिहानुक्तमपि "यावन्तो हि" इत्यविशेषणाभिधानेन सूचितं ज्ञेयम्। तेन यावन्तो भावविशेषा आध्यात्मिका वा अन्तरात्मसत्त्वाहङ्कारादयो भौतिका वा मूत्रश्लेष्मादयः, ते पुरुषगता लोकेनापि समाना इति ज्ञेयम्। एतच्च लोकपुरुषयोः साम्यं पुरुषविचये वक्तव्यं भविष्यति। एतच्च लोकपुरुषयोः सामान्यकथनं मुमुक्षूणामेवोपयुक्तमिति दर्शयन्नाह—बुधास्त्वेवमित्यादि। बुधाः सम्यग्ज्ञानवन्तो मोक्षयुक्ता इति यावत्। लोकपुरुषसामान्यकथनञ्च मोक्षार्थमेवेति पुरुषविचये स्वयमेव वक्ष्यति॥ ५। ६॥

चक्रपाणिः—प्रकृतिं तृतीयमासभवामिन्द्रियाद्यङ्गाभिनिर्वृत्तिमुपसंहरति—एवमस्येत्यादि। युगपदेव यौगपद्यमित्यभिधानम् इन्द्रियैरपि सर्व्वाङ्गाभिनिर्वृत्तेः समकालतोपदर्शनार्थम्। किं दन्तादयोऽपि तृतीयमासे भवन्तीत्याशङ्क्याह—अन्यत्रेत्यादि। व्यञ्जनानि श्मश्रुस्तनादीनि। व्यक्तीभावः शुक्ररजसोराविर्भावः। तथा युक्तानीति जातोत्तरकालत्वेन स्थूलमांसादीनि। एषा प्रकृतिरिति इन्द्रियाण्यङ्गानि च युगपद् भवन्ति, दन्तादयश्च जातस्यापि चिरेण भवन्तीत्येवंरूपो मनुष्यस्वभाव इत्यर्थः। अन्यथेति कदाचित् सदन्त एव जायते इत्यादिका विकृतिर्मनुष्यस्य। कस्मात् दन्तादयो गर्भाद्विजायमानत्वेन नित्यत्वेन नोच्यन्त इत्याह—सन्तीत्यादि। 'खलु'शब्दो

एवाङ्गावयवाः सन्तिष्ठन्ते, त एव स्त्रीलिङ्गं पुरुषलिङ्गं नपुंसकलिङ्गं वा बिभ्रति ॥ ७ ॥

ततः स्त्रीपुरुषयोर्ये वैशेषिका भावाः प्रधानसंश्रया गुणसंश्रयाश्च, तेषां यतो भूयस्त्वं ततोऽन्यतरभावः । तद् यथा—

नियमत एव किं व्यभिचारतो वेत्यत आह—सन्तीत्यादि । नित्यास्ते ये सूक्ष्मशरीरस्था एवाङ्गावयवाः सन्तिष्ठन्ते, अनित्या आजन्म मरणान्तं पुनःपुनरागमापायिनः पुरीषादयः केशादयश्च । य एवाङ्गावयवाः सन्तिष्ठन्ते संस्थानवन्तस्त एवाङ्गावयवाः स्त्रीलिङ्गादिकं बिभ्रति, न त्वसंस्थानवन्तः ॥ ७ ॥

गङ्गाधरः—तत इत्यादि । ततस्तस्माद्धेतोः स्त्रीपुरुषयोर्मैथुनकाले ये वैशेषिका भावाः प्रधानसंश्रयाः पुरुषाश्रिताः पुत्रकराः स्त्रीसंश्रिताः कन्याकराः गुणसंश्रयाः स्त्रीगताः पुत्रकराः पुरुषसंश्रयाः कन्याकरा ये भावविशेषास्तेषां भावानां मध्ये यतो यदीयभावविशेषाणां भूयस्त्वं ततो भूयसा निर्भावविशेषयोरन्यतरभावः स्त्रीपुरुषकर इति शेषः । ननु ते के वैशेषिका भावा इत्यत आह—तद् यथेत्यादि ।

हेतौ । नित्या इति यावच्छरीरभाविणः करचरणादयः । अनित्याश्च न यावच्छरीरभाविणो दन्तादयः । एतेन अनित्यस्वभावाद् दन्तादीनां गर्भादिजायमानत्वान्न नित्यत्वम् । विकृतिरिति अनित्यत्वयुक्तमित्यर्थः । अथ नित्यानित्येषु मध्ये के स्त्र्यादिलिङ्गं बिभ्रतीत्याह—तस्येत्यादि । सन्तिष्ठन्त इति यावच्छरीरं तिष्ठन्ति नित्याः सन्तीति यावत् । एतेन य एव नित्या उपस्थादयः, त एव स्त्रीलिङ्गतां पुंलिङ्गतां वा बिभ्रति । तत्रोपस्थरूपो नित्यो भावः स्त्रीलिङ्गं शेफश्च, उपस्थलिङ्गाकाररहितञ्च रन्ध्रमात्रं नपुंसकलिङ्गं भवति । किंवा स्त्रिया यल्लिङ्गं स्तनादि, पुरुषस्य वा श्मश्रुप्रभृति, नपुंसकस्य वा स्त्रीपुंससमानाकारत्वं जातोत्तरकालभावि, तदपि य एव नित्या भावा उरःकपोलप्रभृतयः, त एव कालवशाद् बिभ्रतीति वाक्यार्थः । उर एव हि स्तनारम्भकवीजयुक्तं स्त्रिया उत्तरकालं स्तनवद् भवति । एवं कपोल एव श्मश्रुवीजयुक्तः श्मश्रुवान् भवति । न तद्युक्तम् । यतः स्तनश्मश्रुप्रभृतीनां वीजं चेदस्ति शरीरे, तत् किं गर्भात् प्रभृति स्तनादि न जायत इति चेत् ? न, यतो वीजमहिमायम्, य उत्तरकाल एव कार्य्यं करोति । अथवा न पतितमपि धान्यादि वीजं प्रस्तरे वाङ्कुरं जनयति । न च स्वभावमुपालम्भमर्हति । यदैवाङ्गावयवाः सन्ति, तदैव स्त्र्यादिलिङ्गं बिभ्रतीत्यादिपाठपक्षे तु व्यक्त एवार्थः । अथ कुमारे शुक्रादी कारणे स्त्र्यादिविशेषो भवतीत्याह—वैशेषिका इति । वैशेषिका विशिष्टाः परस्परव्यावृत्ता इति यावत् । प्रधानसंश्रया इति आत्मसंश्रयाः । गुणसंश्रया इति शुक्रशोणितगतभूतसंश्रयाः । गुणशब्देन हि भूतान्युच्यन्ते । 'यतः' इति सप्तम्यां तसिल् । तेन यस्मिन् वैशेषिकभावे भूयस्त्वं

क्लैव्यं भीरुत्वमवैशारद्यं मोहोऽनवस्थानमधोगुरुत्वमसंहननं शैथिल्यं मार्दवं गर्भाशयवीजभागस्तथा युक्तानि चापराणि स्त्रीकराणि, अतो विपरीतानि पुरुषकराणि, उभयभागावयवानि नपुंसककराणि। यस्य यत्कालमेवेन्द्रियाणि सन्तिष्ठन्ते तत्-

क्लैव्यं स्त्रियाः पुरुषस्य वा मैथुने वृष्यत्वाभावः, भीरुत्वञ्च। अवैशारद्यं मैथुनविद्या-विरहः। मोहो मुग्धता। अवस्थानं विश्रामो रताभ्यन्तरे। अधोगुरुत्वमधःकायाव-सादपूर्व्वकसुरतम्। असंहननं शरीरदृढ़त्वाभावः। शैथिल्यमुपस्थशिथिलता। मार्द्दवं मृदुभावः। गर्भाशयवीजयोर्भागो गर्भाशयस्य भागो वामभागः, वीजस्य भागः शोणिताधिक्यम्। तथा युक्तानि चापराणीति स्त्रीपुरुषयोः स्त्रीचेष्टिता-कारादीनि। अतो विपरीतानि अक्लैव्यमभीरुत्वं वैशारद्यममोहोऽनवस्थानमधो-लघुत्वं संहतीभावः शैथिल्याभावस्तीव्रत्वं गर्भाशयस्य दक्षिणभागः शुक्राधिक्यं स्त्रीपुंसयोः पुंश्चेष्टिताकारादीनि च। उभयभागावयवानि कस्यचित् क्लैव्यं कस्यचिदक्लैव्यं कस्यचिद्भीरुत्वं कस्यचिदभीरुत्वं कस्यचिदवैशारद्यं कस्य-चिद्वैशारद्यं कस्यचिन्मोहः कस्यचिदमोहः कस्यचिदवस्थानं कस्यचिदनवस्थानं कस्यचिच्छैथिल्यं कस्यचिदशैथिल्यं कस्यचिन्मार्द्दवं कस्यचिदमार्द्दवं गर्भाशयस्य मध्यमभागः वीजयोः शुक्रशोणितयोः समभाग इति। तथा पुरुषस्य स्त्रीचेष्टिताकारः स्त्रियाः पुंश्चेष्टिताकार इत्येवमादीनि।

यस्य यत्कालमित्यादि। तृतीयमासशेषार्द्धमारभ्य चतुर्थमासस्य पूर्व्वार्द्धं यावत् यत्कालमेव यस्य गर्भस्येन्द्रियाणि श्रोत्रादीनि बुद्धीन्द्रियाणि

दैववशाद् भवति, ततो भावादन्यतरस्य स्त्रीरूपस्य पुंरूपस्य वा गर्भस्य उत्पत्तिर्भवति। यदि स्त्रीकरा भावा क्लैब्यादयो भूयांसो भवन्ति, तदा स्त्री जायते, विपर्य्यये पुमानित्यर्थः। अवैशारद्यं मोहः। शैथिल्यमनिविड़संयोगता, यथा—दृढ़शणतन्तुविरलवापितपटस्य शैथिल्यम् मार्द्दवन्तु निविड़संयोगस्यापि सहजावयवमार्द्दवम्, यथा—पट्टसूत्रे निरन्तरवापितपटस्य मृदुत्वम्। क्लैब्याद्यनवस्थानपर्य्यन्तं प्रधानसंश्रयम्, शेषं गुणसंश्रयम्। तथा युक्तानीत्यनेन, योनिवीज-भागादीनि ग्राहयति। एतेन अधोगुरुत्वादयो रक्ताधिक एव भवन्तीति ज्ञेयम्। तेन "रक्तेन कन्यामधिकेन" इति यदुक्तम्, तदनेन समं न विरुद्धं भवति। विपरीतान्यक्लैब्यादीनीत्यर्थः। उभयभागावयवा इति स्त्रीपुरुषकारका अवयवाः। नपुंसककरणीति नपुंसकनिर्द्देशोऽव्यक्त-गुणाभिप्रायेण; तेन प्रथमं नपुंसककराणीति अव्यक्तगुणसन्देहाभिप्रायेण प्रयुक्तम्, ततः कानि तानीत्यपेक्षया विशेषपरिग्रहादुभयभागावयवा इति पुंलिङ्गेन निर्द्देशो ज्ञेयः। सन्तिष्ठन्त इति

कालमेवास्य चेतसि वेदनानिबन्धं प्राप्नोति। तस्मात् तदा प्रभृति गर्भः स्पन्दते प्रार्थयते च जन्मान्तरानुभूतमिह यत् किञ्चित् तद् द्वैहृदय्यमाचक्षते वृद्धाः।

मातृजञ्चास्य हृदयं मातृहृदयेनाभिसम्बद्धं रसहारिणीभिः* संवाहिनीभिः। तस्मात् तयोस्ताभिर्भक्तिः सम्पद्यते। तच्चैव कारणमवेक्षमाणा न द्वैहृदय्यविमानितं गर्भमिच्छन्ति कर्त्तुम्। विमानने ह्यस्य विनाशो दृश्यते गर्भस्य विकृतिर्वा।

पाण्यादीनि च कर्म्मेन्द्रियाणि सन्तिष्ठन्ते संस्थावन्ति भवन्ति, तत्कालमेवास्य गर्भस्य ज्ञानक्रिययोर्बहिः प्रव्यक्तत्वाच्चेतसि मनसि वेदनानिबन्धं सुखदुःखनिबन्धं ज्ञानं कर्म्म च भावं प्राप्नोति। एष गर्भ इति शेषः। तस्मात् इन्द्रियसंस्थानेन वेदनानिबन्धप्राप्तितस्तदा तत्कालात् प्रभृति सुखाय स्पन्दते दुःखापनोदनाय प्रार्थयते च सुखार्थं दुःखापनोदनाय, जन्मान्तरानुभूतमिह किञ्चिन्न तु सर्व्वमिति। तं गर्भं द्वैहृदय्यं द्वे हृदये सम्बद्धे अस्य तत् तथा मातृहृदयेन गर्भहृदयस्य सम्बन्धात्।

ननु कस्माद् द्वैहृदय्यमाचक्षते वृद्धा इत्यत आह—मातृजञ्चेत्यादि। अस्य गर्भस्य यस्मान्मातृजं हृदयं तस्मान्मातृहृदयेनाभिसम्बद्धम्। तन्मातृरसहारिणीभिर्मातुराहारजरसवाहिनीभिः संवाहिनीभिर्धमनीभिः, ताभिस्तयोर्मातृगर्भयोर्भक्तिर्भजनं सम्पद्यते। तच्चैव मातुराहारजरसवाहिनीभिर्धमनीभिर्मातृगर्भयोर्भक्तिमेव कारणमवेक्षमाणाः पश्यन्तो भिषजो द्वैहृदय्यविमानितं

अभिनिर्व्वर्त्तन्ते। वेदना सुखदुःखोपलब्धिः; निबन्धं प्राप्नोतीतीन्द्रियोदयादेव समकालमेव सुखदुःखज्ञो भवतीति वाक्यार्थः। तस्मादिति सुखदुःखसम्बन्धात्। सुखोत्पादनार्थं दुःखपरिहारार्थञ्च स्पन्दते चलति, तथा प्रार्थयते च सुखहेतून् जन्मान्तरानुभूतानित्यर्थः; तद्गर्भहृदयप्रार्थनायुक्तं मातृहृदयं द्वैहृदयम्; वृद्धा इति ज्ञानवृद्धा आचक्षते; द्विहृदयस्य भावो द्वैहृदयम्—मातृहृदयं गर्भहृदयेन समं हृदयद्वयं भवति। ननु गर्भहृदयेन समं हृदयद्वयं भवति; कथं गर्भहृदयं सम्बद्धं भवतीत्याह—मातृजमिति। मातृकारणकार्त्तवजम्; रसवाहिनीभिरिति गर्भपोषणार्थाभिः मातृहृदयगर्भनाडीप्रतिबद्धाभी रसवाहिनीभिः; एतेन यद् गर्भः प्रार्थयते, तत्प्रार्थनया रसवाहिनीभिः हृदयमागतया मातापि तावत् प्रार्थनावती भवति; एवं मातृप्रार्थनयापि गर्भः प्रार्थनावान् भवति। तयोरिति मातृगर्भयोः; भक्तिरिच्छा; ताभिरिति रसवाहिनीभिः; सम्पद्यत इति मातृहृदयाद् गर्भहृदयमित्यर्थः।

* रसवाहिनीभिरिति चक्रः।

**समानयोगक्षेमा हि तदा भवति केषुचिदर्थेषु माता। तस्मात् प्रियहिताभ्यां गर्भिणीं विशेषेणोपचरन्ति कुशलाः। तस्या द्वैहृदय्यस्य च विज्ञानार्थं लिङ्गानि समासेनोपदेक्ष्यामः॥ ८॥**

द्वैहृदय्यप्रतिकूलाहारविहाराचरितं गर्भं कर्त्तुं नेच्छन्ति। कस्मात्?—विमानने हीत्यादि। हि यस्माद्विमानने द्विहृदयगर्भाभिलषितानाचरणेऽस्य गर्भस्य विनाशो विकृतिर्वा दृश्यते। तस्मात् तदा द्वैहृदय्यकाले माता द्वैहृदयिनी गर्भिणी गर्भेण सह समानयोगक्षेमा केषुचिदर्थेषु गर्भानुपघातकरेषु भावेषु गर्भाभिलषितानुकूलस्यानुकूलाहारविहारादियोगेन क्षेमा मङ्गला भवति। तस्मात् प्रियहिताभ्यां गर्भाभिलाषेण तदभिलषितेन हितेन च गर्भवतीं कुशला वैद्या उपचरन्ति। सुश्रुतेऽप्युक्तम्—चतुर्थे सर्व्वाङ्गप्रत्यङ्गविभागः प्रव्यक्ततरो भवति। गर्भहृदयप्रव्यक्तभावात् चेतनाधातुरभिव्यक्तो भवति। कस्मात्? तत्स्थानत्वात्। तस्माद्गर्भश्चतुर्थे मास्यभिप्रायमिन्द्रियार्थेषु करोति। द्विहृदयाञ्च नारीं द्वैहृदयिनीमाचक्षते। द्वैहृदय्यविमाननात् कुब्जं कुणिं खञ्जं जडं वामनं विकृताक्षमनक्षं वा नारी सुतं जनयति। तस्मात् सा यद् यदिच्छेत् तत् तस्यै दापयेत्। लब्धदोहदा हि वीर्य्यवन्तं चिरायुषञ्च पुत्रं जनयति। भवन्ति चात्र। इन्द्रियार्थांस्तु यान् यान् सा भोक्तुमिच्छति गर्भिणी। गर्भाबाध-भयात् तांस्तान् भिषगाहृत्य दापयेत्॥ सा प्राप्तदोहदा पुत्रं जनयेत गुणान्वितम्। अलब्धदोहदा गर्भं लभेतात्मनि वा भयम्। येषु येष्विन्द्रियार्थेषु द्वैहृदे वै विमानना। प्रजायेत सुतस्यार्त्तिस्तस्मिंस्तस्मिंस्तथेन्द्रिये॥ राजसन्दर्शने यस्या दोहदं जायते स्त्रियाः। अर्थवन्तं महाभागं कुमारं सा प्रसूयते। दुकूलपट्टकौषेय-भूषणादिषु दोहदात्। अलङ्कारैषिणं पुत्रं ललितं सा प्रसूयते। आश्रमे संयतात्मानं धर्म्मशीलं प्रसूयते। देवताप्रतिमायान्तु प्रसूते पार्षदोपमम्। दर्शने व्यालजातीनां हिंसाशीलं प्रसूयते। गोधामांसाशने पुत्रं सुषुप्सुं

गर्भस्य विनाशो विकृतिर्वेति—महता इच्छाविघातेन विनाशः स्वल्पेन च विकृतिः, किंवा गर्भेच्छा-पूर्व्विका मातुरिच्छा, तद्विघातेन विनाशो गर्भस्य, सा हीच्छा विहता साक्षाद् गर्भसम्बन्धितया सुकुमारतरं गर्भं वातप्रकोपाद् विनाशयति; या तु मातुरिच्छा विहता, सा मातरि वातक्षोभं जनयतीति समानयोगक्षेमे गर्भेऽपि मनाग् विकृतिजननाद् विकृतिं जनयति; एतदेव दर्शयति—समान-योगक्षेमा हीत्यादि। योगः सुखहेतुयोगः; क्षेमः प्रत्यवायपरीहारः, एतौ योगक्षेमौ मातुर्गर्भेण समानौ भवतः। केषुचिदर्थेष्वितिवचनादतुल्ययोगक्षेमता च क्वचिद् भवतीति दर्शयति; तेन नावश्यं मातुर्विकाराः क्षुदादयो गर्भे विकृतिमावहन्ति, गर्भस्य वा मातरीति; गर्भिणीं विशेषेणेति-

उपचारसम्बोधनं ह्यस्य ज्ञाने दोषज्ञानञ्च लिङ्गतः *, तस्मादिष्टो लिङ्गोपदेशः ; तद् यथा—आर्त्तवादर्शनमास्यसंस्रवणमनन्नाभिलाषश्छर्द्दिररोचकोऽम्लकामता च विशेषेण। श्रद्धाप्रणयनञ्चोच्चावचेषु भावेषु गुरुगात्रत्वं चक्षुषोर्ग्लानिरालस्यं स्तन्यं

धारणात्मकम्। गवां मांसे च बलिनं सर्व्वक्लेशसहं तथा। माहिष दोहदाच्छूरं रक्ताक्षं लोमसंयुतम्। वराहमांसात् स्वप्नालुं शूरं सञ्जनयेत् सुतम्। मार्गाद्विक्रान्तजङ्घालं सदा वनचरं सुतम्। सृमराद्विग्नमनसं नित्यभीतञ्च तैत्तिरात्। अतोऽनुक्तेषु या नारी समभिध्याति दोहदम्। शरीराचारशीलैः सा समानं जनयिष्यति। कर्म्मणा चोदितं जन्तोर्भवितव्यं पुनर्भवेत्। यथा तथा दैवयोगाद्दोहदं जनयेद्धृदि" ॥ इति। गर्भिण्या आहारविहाराद्यनुत्कर्षेण गर्भस्यानतिचिरपोषणाच्चतुर्थमासस्य पूर्व्वार्द्धकालाभिप्रायेण लिखितवान् सुश्रुतः। अस्य तन्त्रस्य तु कृती गर्भिण्या आहारविहाराद्युत्कर्षेण गर्भप्रपुष्ट्या तृतीयमासस्य शेषार्द्धकालाभिप्रायेण सर्व्वेन्द्रियसर्व्वाङ्गावयवाभिनिर्व्वृत्ति द्वैहृदय्यादिकं लिखितवानित्यतो न तन्त्रद्वयविरोधः। ननु कथं गर्भिणीं प्रियहिताभ्यां भिषज उपचरेयुरित्यत आह—तस्या इत्यादि। तस्या द्वैहृदयिन्या गर्भिण्या द्वैहृदय्यस्य च गर्भस्य ॥ ८ ॥

गङ्गाधरः—नन्वनयोर्लिङ्गोपदेशेन किं स्यादित्यत आह—उपचारेत्यादि। हि यस्मादस्य द्वैहृदय्यस्य गर्भस्य लिङ्गतो ज्ञाने सति उपचारसम्बोधनं द्वैहृदयिन्या गर्भिण्या आहारविहारादीनामुपचारस्य सम्यक् बोधः स्यात्, दोषज्ञानञ्च स्यात्, तस्मादुपचारस्य सम्यगसम्यग्ज्ञानहेतुत्वात् तयोर्विज्ञानार्थं लिङ्गानां समासेनोपदेश इष्ट इति—आर्त्तवेत्यादि। आर्त्तवादर्शनमिति। प्रथममासावधि लिङ्गान्येतानि प्रायेण भवन्ति। गर्भिणीगर्भयोरुपचारार्थं तृतीयमासि लिखितवान् न तु तृतीयमास्येव भवन्तीमानि नान्यमासीति। छर्द्दिरकामतो वमनम्। विशेषेणाम्लेषु कामता श्रद्धेत्यर्थः। उच्चावचेषु उच्चैश्च नीचैश्च भावेषु प्रणयनं प्रणयः। यच्चनादगर्भिण्यपि स्त्री ऋतुकाले प्रियहितोपचारणीया ; यदुक्तम्—"सहचर्य्यैश्चैनां प्रियहिताभ्यां सततमुपचरेयुः" इत्यादि ॥ ७।८ ॥

चक्रपाणिः—उपचारसाधनं यथोचितोपचारकरणम् ; अस्येति गृहीतस्य तथा द्वैहृदयस्य च ; तत्र गृहीतगर्भोपचारो यथा—"शङ्किता चेत् गर्भमापन्ना क्षीरमनुपस्कृतं काले काले पिबेत्" इत्यादि।

* उपचारसाधनं ह्यस्याज्ञाने दोषः। ज्ञानञ्च लिङ्गतः। इति चक्रसम्मतः पाठः।

स्तनयोः, ओष्ठयोः स्तनमण्डलयोश्च कार्ष्ण्यम् अत्यर्थम्। श्वयथुः पादयोरीषल्लोमराज्युद्गमो योन्याश्चाटालत्वमिति गर्भे पर्य्यागते रूपाणि भवन्ति ॥ ६ ॥

सा यद् यदिच्छेत् तत्तदस्यै दद्यादन्यत्र गर्भोपघातकरेभ्यो भावेभ्यः। गर्भोपघातकरास्त्विमे भावाः; तद् यथा—सर्व्वमतिगुरूष्णतीक्ष्णं दारुणाश्च चेष्टाः, इमांश्चान्यानुपदिशन्ति वृद्धाः। देवतारक्षोऽनुचरपरिरक्षणार्थं न रक्तानि वासांसि बिभृयात् न

चक्षुषोर्ग्लानिः। आलस्यं निद्रार्त्तता। स्तनयोः स्तन्यं प्रकाशते। ओष्ठयोः कार्ष्ण्य स्तनमण्डलयोः चूचुकयोश्च कार्ष्ण्यमत्यर्थमेव पूर्व्वं स्यात्। पादयोरेव श्वयथुर्नान्यत्र। ईषदल्पः रोमराजीनामुद्गमः। योन्याश्चाटालत्वं विस्तृतयोनिता। गर्भे पर्य्यागते सर्व्वतोभावेन समागते। तेन प्रथममासि ईषद्रूपेण लिङ्गान्येतानि भवन्ति। द्वितीयमासे मध्यमरूपेण तृतीयमासे पूर्णरूपेण। सुश्रुतेऽपि—स्तनयोः कृष्णमुखता रोमराज्युद्गमस्तथा। अक्षिपक्ष्माणि चाप्यस्याः सम्मील्यन्ते विशेषतः॥ अकामतश्छर्दयति गन्धादुद्विजते शुभात्। प्रसेकः सदनञ्चापि गर्भिण्या लिङ्गमुच्यते॥ तदाप्रभृत्येव व्यायामं व्यवायमपतर्पणमतिकर्षणं दिवास्वप्नं रात्रिजागरणं शोकं यानारोहणं भयमुत्कुटुकासनञ्चैकान्ततः स्नेहादिक्रियां शोणितमोक्षणञ्चाकाले, वेगविधारणञ्च न सेवेत। दोषाभिघातैर्गर्भिण्या यो यो भागः प्रपीड्यते। स स भागः शिशोस्तस्य गर्भस्थस्य प्रपीड्यते॥ इति ॥ ९ ॥

गङ्गाधरः—सा यद् यदिच्छेदित्यादि। सा द्विहृदयिनी गर्भवती। अन्यत्रेति विना इत्यर्थः। इमे वक्ष्यमाणातिगुर्व्वादयः। सर्व्वमित्यादि। इमानिति वक्ष्यमाणान्। देवतेत्यादि। रक्तवर्णवसना हि नारी सकलजन-

द्विहृदयोपचारश्चात्रैव वक्ष्यति; ज्ञानमिह गर्भस्य द्विहृदयस्य च ज्ञानम्; अम्लकामता विशेषेणेति च्छेदः। श्रद्धा इच्छा; उच्चावचेष्विति उच्चनीचेषु, भक्षणीयत्वेन कृतेषु चाकृतेषु चेत्यर्थः; ईषत् पादयोः श्वयथुः; चाटालत्वं सविवृतत्वम्; तेन एतानि च लक्षणानि तृतीयमासयुक्तानि च द्वैहृदयस्य च लिङ्गानि भवन्तीति ज्ञेयम् ॥ ९ ॥

चक्रपाणिः—दारुणाश्चेष्टाः व्यवायादिकाः; देवतारक्षोऽनुचरेभ्यः परिरक्षणम्। यद्वित्यादि।

मदकराणि मद्यान्यभ्यवहरेत् न यानमधिरोहेत्। न मांस-भश्नीयात् सर्व्वेन्द्रियप्रतिकूलांश्च भावान् दूरतः परिवर्ज्जयेत्। यच्चान्यदपि किञ्चित् स्त्रियो विदुः। तीव्रायान्तु खलु प्रार्थनायां काममहितमप्यस्यै हितेनोपसंहितं प्रदद्यात् प्रार्थनाविलयार्थम् *। प्रार्थनासन्धारणाद्धि वायुः कुपितोऽन्तःशरीरमनुचरन् गर्भस्यापद्यमानस्य विनाशं वैरूप्यं वा कुर्य्यात्॥ १० ॥

अथ चतुर्थे मासे स्थिरत्वमापद्यते गर्भः, तस्मात् तदा गर्भिणी गुरुगात्रत्वमापद्यते। विशेषेण पञ्चमे मासे गर्भस्य

मनोरमा भवति देवतादिभिरपि ग्रहीतुमिष्टा स्यादिति भावः। मद्यसात्म्या पुनर्नारी गर्भिणी न मदकराणि मद्यान्यभ्यवहरेत्। यच्चान्यदपीति मैथुनादिकं यत् स्त्रियो विघ्नं विदुः तदपि परिवर्ज्जयेत्। ननु विघ्नप्रार्थनायां किं कर्त्तव्यमित्यत आह—तीव्रायामित्यादि। कामं यथाभिलषितमहितमपि हितेनोपसंहितं मिश्रितमस्यै गर्भिण्यै दद्यात्। किमर्थमित्याह—प्रार्थनाविलयार्थं पुनःप्रार्थनानिवारणार्थम्। नन्वहितापदानेन किं स्यादित्यत आह—प्रार्थनेत्यादि। हि यस्मात् अहितप्रार्थनायाः सन्धारणादप्राप्तया इति। इति तृतीयमासीयगर्भव्याख्यानम् ॥ १० ॥

गङ्गाधरः—अथ चतुर्थे इत्यादि। चतुर्थ मास चतुर्थमासस्य शेषार्द्ध, यस्यास्त्वाहारादुत्कर्षस्तस्यास्तु गर्भः पूर्व्वार्द्धे वा। विशेषेणेत्यादि। विशेषेण

यच्चान्यत् स्त्रियः गर्भकालासेव्यत्वेन विदुः, तदपि वर्जयेत्; वदन्ति हि स्त्रियः—"न गर्भिणी कूपमवलोकयेत्, न नदीपारं यायात्" इत्यादि; वृद्धस्त्रीवचनमप्यागममूलमेव, इह तु विस्तरभयान्न दर्शितमिति भावः। प्रार्थना इति याच्ञा, तस्यास्तु तीव्रत्वं बलवदिच्छाजन्यमेव; हितोपहितमिति हितेन युक्तम्; किंवा कल्पनया हितम्; प्रार्थनाया विनयनं विस्फोटनम्, तदर्थम्; स्फोटना च प्रार्थितलाभेनैवापयाति; प्रार्थनाऽविनयने दोषमाह—प्रार्थनेत्यादि। प्रार्थनायाः सम्यग्धारणं प्रार्थनासन्धारणम्; एतच्च स्तोकक्रमेणापि प्रार्थनादाने सति भवति, यथोक्तविधिना वा हितदाने सति इच्छा मनाक् समग्रा वा खण्डिता भवति; इच्छाविघातश्च मनःक्षोभकरभयादिकर्त्तृत्वाद् वातप्रकोपको भवति; आपद्यमानस्येत्यनेन गर्भस्यातितरुणत्वेन मनागपि वातक्षोभासहत्वं दर्शयति। वैरूप्यविनाशविकल्पस्तु वातप्रकोपप्रकर्षापकर्षकृतो ज्ञेयः ॥ १० ॥

चक्रपाणिः—तृतीयमासानुपूर्व्व्या कथनप्रस्तावागतं गर्भस्य विशेषमभिधाय यथाक्रमागतां चतुर्थ-

* हितोपहितं प्रदद्यात् प्रार्थनाविनयनार्थम् इति चक्रसम्मतः पाठः।

मांसशोणितोपचयो भवत्यधिकमन्येभ्यो मासेभ्यः, तस्माद् गर्भिणी तदा कार्श्यमापद्यते। विशेषेण षष्ठे मासे गर्भस्य बल-वर्णोपचयो भवत्यधिकमन्येभ्यो मासेभ्यः, तस्मात् तदा गर्भिणी बलवर्णहानिमापद्यते। विशेषेण सप्तमे मासे सहसा सर्व्वभावै-राप्यायते गर्भः, तस्मात् तदा गर्भिणी कान्ततमा * भवति। अष्टमे मासे गर्भश्च मातृतो गर्भतश्च माता रसहारिणीभिः संवाहिनीभिः मुहुर्म्मुहुरोजः परस्परत आददाति, गर्भस्य

इति विवृणोति—अधिकमन्येभ्यो मासेभ्य इति प्रथममासावध्युपचयात्। तस्माद्गर्भस्य पूर्व्वपूर्व्वमासतः पञ्चमे मासेऽधिकमांसशोणितोपचयात् तदा पञ्चमे मासे कार्श्यमापद्यते गर्भिणी। मनश्च प्रतिबुद्धतरं भवति पञ्चमे। इति सुश्रुतोक्तं विशेषेणेति पदेन बोध्यम्।

एवं षष्ठे च मासे। विशेषेणेति पदेन षष्ठे बुद्धिः प्रतिबुद्धतरेति सुश्रुतोक्तं बोध्यम्। तथा सप्तमे सर्व्वाङ्गप्रत्यङ्गविभागः प्रव्यक्ततर इति सुश्रुतोक्तन्तु सर्व्वभावैः शरीरे यावन्तो भावा बलवर्णकान्तिबुद्धिसर्व्वाङ्गप्रत्यङ्गविभागादय-स्तावद्भिर्भावैः सहसाप्यायते वर्द्धते। कान्ततमा अतिशयेन मनोरमा भवति। अष्टमे मासे इति। अष्टमे मासे रसहारिणीभिः संवाहिनीभिर्धमनीभि गर्भश्च मातृतो मुहुर्मुहुरोजो बलहेतुं धातुविशेषमाददाति। माता च गर्भिणी च गर्भतो मुहुर्म्मुहुरोज आददाति इति गर्भगर्भिण्योः परस्परत ओजोग्रहणं मुहुर्म्मुहुः

मासानुपूर्व्वीमाह—चतुर्थ इत्यादि। स्थिरत्वमिति निविड़त्वम्। अत एव निविड़ेन गुरुतरेण गर्भेणाक्रान्ता गर्भिणी गुरुगात्रा भवतीति युक्तम्।

अधिकमन्येभ्य इत्यनेन मासान्तरेष्वपि स्तोकक्रमेण मांसादिवृद्धिं जनयति। येन शारीरेण भावेन गर्भ उपचीयते, तेन गर्भिणी हीयते इति युक्तमेव। यतो गर्भमांसादिपोषणेनैव क्षीण आहाररसो न मातुर्मांसादि सम्यक् पोषयति। बलवर्णयोरुपचयो बलवर्णोपचयः। किंवा उपचयो धातुपुष्टिः। सर्व्वभावैरिति मांसशोणितादिभिः। सप्तमे गर्भ आप्याय्यते, पूर्व्वेषु तु मासेषु न सर्व्वैः। युगपदिति शेषः। सर्व्वाकारैरिति सर्व्वमांसशोणितादिजन्यरूपैः। क्लान्ततमेति हीनतमा। अष्टम इत्यादि। रसवाहिनीभिरिति मातृहृदये गर्भनाड्याञ्च सम्बद्धाभी रस-वाहिनीभिः। परस्परत ओज आददाते इति मातुरोजो गर्भ आदत्ते, गर्भस्य चौजो माता आदत्ते।

* आप्याय्यते * * * क्लान्ततमा इति चक्रधृतः पाठः।

सम्पूर्णत्वात्* । तस्मात् तदा गर्भिणी मुहुर्म्मुहुर्मुदा युक्ता भवति मुहुर्म्मुहुश्च ग्लाना, तथा च गर्भः । तस्मात् तदा गर्भस्य जन्म व्यापत्तिमद्भवत्यधिकमोजसोऽनवस्थितत्वात् । तच्चैवार्थमभिसमीक्ष्याष्टमं मासमगण्यमित्याचक्षते कुशलाः । तस्मिन्नेक-

रसवहनाड़ीभिर्भवति । कस्मात् ? गर्भस्य सम्पूर्णत्वात् । तस्माद्गर्भगर्भिण्योः परस्परतो मुहुर्म्मुहुरोजोग्रहणात् मुहुर्म्मुहुर्मुदा युक्ता, यदा गर्भतो गर्भिणी रसवहनाड़ीभिरोजो गर्भस्य गृह्णाति तदा हर्षयुक्ता भवति । गर्भश्च ग्लानो भवति । मुहुर्म्मुहुर्ग्लानो यदा गर्भो मातृतो रसवहनाड़ीभिरोजो गृह्णाति तदा गर्भिणी क्षीणहर्षा भवति । तथा च गर्भः —तद्वच्च गर्भो मुदा युक्तो मुहुर्म्मुहुर्भवति मुहुर्म्मुहुर्ग्लानो भवति । तस्माद् गर्भगर्भिण्योः परस्परतो मुहुर्म्मुहुरोजोग्रहणेन मुहुर्म्मुहुर्हर्षाहर्षात् सबलदुर्ब्बलत्वाच्च तदाष्टमे मासे गर्भस्य जन्म अधिकं व्यापत्तिमद्भवति प्रायोऽल्पायुष्ट्वादिदोषं भवति । कस्मात् ? ओजसोऽनवस्थितत्वात् । प्राणायतनं ह्योज उक्तम् । तच्च व्यापद्दोषमर्थमभिसमीक्ष्य गर्भस्याष्टममासमगण्यमित्याचक्षते कुशलाः । तस्मिन्नष्टमे मासे खल्वेक-

ओजोऽनवस्थाने हेतुमाह—गर्भस्यासम्पूर्णत्वादिति, यस्माद् गर्भोऽसम्पूर्णः, तस्मादनिष्पन्नाश्रयं गर्भौजोऽनवस्थितं भवति । मातुरोजो गर्भं गच्छतीति यदुच्यते, तद्गर्भौज एव मातृसम्बद्धं सन् मात्रोज इति व्यपदिश्यते । गर्भस्यासम्पूर्णत्वादिति हेतुः । सम्पूर्णत्वे मातृदेहतस्तस्यौजसो गमने असङ्गतिः स्यात्, तथा यथा गर्भौजसो मातर्य्यवस्थानसमये जन्म गर्भमरणकरं भवति, तथा मातुरोजसो गर्भावस्थाने सति यद् गर्भजन्म, तत्र मातुरपि मरणं स्यात् । न चैतदिष्टम् । येनोभयथापि गर्भस्यैवात्र मरणमुच्यते, न मातुः, 'तदा गर्भस्य जन्म व्यापत्तिमद् भवति" इति वचनेन । जतूकर्णेऽपि, अष्टमेऽपि जन्म गर्भविनाशायैव न मातुर्दर्शितम् । यदुक्तम्—"स्त्रीगर्भावन्योन्यस्य ओजसी हरतोऽष्टमे । तस्मात् तदा सूतिका गर्भविनाशायैव" इति । अन्ये तु वर्णयन्ति यत्—"सत्यपि मातुरोजसो गर्भगमने जन्मादृष्टवशादेव गर्भस्यैव मरणाय भवति, न मातुः ।" सुश्रुतव्याख्यातारस्तु—"अष्टममासे नैर्ऋतभागत्वाच्च गर्भस्य सत्यप्योजोऽनवस्थाने तुल्ये गर्भस्यैव नाशो न मातुः" इति वर्णयन्ति । गर्भिणी मुहुर्म्मुहुर्मुदा युक्ता भवतीति गर्भौजोयोगात् हर्षयुक्ता भवति, ओजोविगमात् तु मुहुर्म्मुहुर्ग्लाना भवतीति योज्यम् । तथा गर्भ इति गर्भिणीवद्गर्भोऽपि मुहुर्म्मुहुर्मुदा युक्तो भवति, मुहुर्म्मुहुर्ग्लानो भवति । तस्मादिति पूर्व्वोक्तं गर्भव्यापत्तिहेतुं साक्षाद् ब्रूते । ओजसोऽनवस्थितत्वादिति । एतच्च व्याकृतमेव । अष्टममासस्य विशेषान्तरमाह—तच्चैवेत्यादि । तच्चैवार्थमिति गर्भव्यापत्तियुक्तमर्थम् । अगण्यमिति

* असम्पूर्णत्वात् इति चक्रः ।

दिवसातिक्रान्तेऽपि नवमं मासमुपादाय प्रसवकालमित्याहुरा द्वादशमासात् *। एतावान् प्रसवकालः, वैकारिकमतः परं कुक्षौ स्थानं गर्भस्य । एवमयमनयानुपूर्व्याभिनिर्व्वर्त्तते कुक्षौ ॥११॥

मात्रादीनान्तु खलु गर्भकराणां भावानां सम्पदस्तथा वृत्तसौष्ठवान्मातृतश्चैवोपस्नेहोपस्वेदाभ्यां कालपरिणामात्

दिवसातिक्रान्तेऽतीतैकदिने सति द्वितीयदिनमारभ्य नवममासमादाय प्रसवकाला आ द्वादशमासादित्याहुरिति। इह द्वादशशब्दः सम्पूर्णाष्टमं गणयित्वा यो द्वादशो भवति तत्र विवक्षितो, न पुनरेकदिवसातिक्रमेऽष्टमं पूर्णं मत्वा तदुत्तरं चतुर्थो मासो द्वादशः। एतावान् कालः प्रसवस्य प्रकृतः। अतः परं गर्भस्य कुक्षौ स्थानं स्थितिर्वैकारिकमिति। सुश्रुते ह्युक्तम्—नवमदशमैकादशद्वादशसु मासेषु प्रसूयतेऽतः परं वैकारिकमिति। एवमित्यादि। यथा चानुपूर्व्या निर्व्वर्त्तते कुक्षावित्यस्य व्याख्यानोपसंहारः ॥ ११ ॥

गङ्गाधरः—अथ यश्चास्य गर्भस्य कुक्षौ वृद्धिहेतुरित्यस्य व्याख्यानमाह—मात्रादीनामित्यादि। गर्भकराणां भावानां मात्रादीनां मातापित्रात्मसात्म्याहाररससत्त्वानां सम्पदोऽवैगुण्यान् तथा मातुर्वृत्तसौष्ठवाद् यथाविधिवर्त्तनात् मातृतश्चैवोपस्नेहोपस्वेदाभ्यां मातुर्गर्भाशयस्नेहेन यः स्नेहस्तथा तदुष्मणा यः स्वेदस्ताभ्यां स्नेहभावितभाण्डस्थस्य वस्तुनस्तत्स्नेहोष्मभ्यामिव।

न गणनया गर्भिण्यां प्रतिपादनीयम्। यदि हि गर्भिणी गण्यमानमष्टमं मासं गर्भजन्म व्यापत्तिकरं शृणुयात्, ततो भीता स्यात्, तद्भयाच्च गर्भस्य वातक्षोभात् व्यापत् स्यादिति भावः। तस्मिन्निति अष्टमे मासि। 'आ दशमाद्' इति वचनं प्रशस्ततरप्रसवकालाभिप्रायेण। सुश्रुते द्वादशमासपर्य्यन्तं सम्यक् प्रसवकालाभिधानं लोकदोषयोरेकादशद्वादशमासयोरेवाल्पदोषत्वेनादोषपक्ष एव निक्षेपाद् बोद्धव्यम्। दत्तमुत्तरमुपसंहरति—एवमित्यादि ॥ ११ ॥

चक्रपाणिः—'यश्चास्य वृद्धिहेतुः' इति प्रश्नस्योत्तरं—मात्रादीनान्तु इत्यादि। 'आदि'ग्रहणात् पित्रात्मसात्म्यसत्त्वानि "मातृजश्चायं पितृजश्चायम्" इत्यादिग्रन्थोक्तानि गृह्यन्ते। वृत्तस्य मातुराचाररूपस्य सौष्ठवं श्रेष्ठत्वं वृत्तसौष्ठवम्। 'मातृतः' इतिपदं वृत्तसौष्ठवेन तथा उपस्नेहोपस्वेदाभ्याञ्च सम्बध्यते। रससात्म्यसौष्ठवन्तु मात्रादिसम्पदा लब्धमेव। उपस्नेहो धातुनिष्पन्नसम्बन्धः। उपस्वेदः शरीरस्योष्मणा परं गर्भस्य स्वेदनम्। उपस्वेदश्च गर्भवृद्धिकरो भवत्येव।

* आ दशमासादिति चक्रधृतः पाठः।

स्वभावसंसिद्धेश्च कुक्षौ वृद्धिं प्राप्नोति। मात्रादीनामेव तु खलु गर्भकराणां भावानां व्यापत्तिनिमित्तमस्याजन्म भवति॥ १२॥

ये त्वस्य कुक्षौ वृद्धिहेतुसमाख्याता भावास्तेषां विपर्य्ययादुदरे विनाशमापद्यतेऽथवाप्यचिरजातः स्यात्। यतस्तु कार्त्स्न्येन अविनश्यन् विकृतिमापद्यते तदनुव्याख्यास्यामः। यदा स्त्रिया दोषप्रकोपणान्यासेवमानाया दोषाः प्रकुपिताः शरीरमुपसर्पन्तः शोणितगर्भाशयोपघातायोपपद्यन्ते, न च कार्त्स्न्येन शोणित-

एवं कालपरिणामात् कालेन परिपाकात्। स्वभावसंसिद्धेश्च। तदा तदा वृद्धिस्वभावसिद्धेः गर्भः कुक्षौ वृद्धिं प्राप्नोति इति यच्चास्य वृद्धिहेतुरित्यस्य व्याख्यानम्। अथ यतश्चास्याजन्म भवति तद् व्याख्यायते। मात्रादीनामेव त्वित्यादि। मातापित्रात्मसात्म्याहाररससत्त्वानां गर्भकराणां भावानां व्यापत्तिनिमित्तं दोषनिमित्तमस्य गर्भस्याजन्म न जन्म भवति॥ १२॥

गङ्गाधरः अथ यतश्च जायमानः कुक्षावित्यादिना पूर्व्वप्रतिज्ञातं स्मरन्नाह—ये त्वस्येत्यादि। तद् यथा—यदेत्यादि। स्त्रिया वातादिदोष-प्रकोपणान्यासेवमानायाः प्रकुपिता दोषाः शरीरमुपसर्पन्तः शोणिताशय-गर्भाशययोरुपघातायोपपद्यन्ते तदा जायमानो गर्भ उदरे विनाशं प्राप्नोति, अथवा स गर्भो चिरकालाज्जायते। इति। यतस्त्वित्यादि। तत्र दोषा

यथा अण्डजानां पक्षतेरुपस्वेदनं वृद्धिकरं दृष्टम्। कालपरिणामादिति यथा यथा कालप्रकर्षः, तथा तथा वर्द्धते गर्भः। वृद्धिहेत्वन्तरमाह—स्वभावसंसिद्धेश्चेति, स्वभावेनैव कर्म्मजन्येन गर्भो भवति वर्द्धिष्णुरित्यर्थः। कर्म्मणा हि भोगलक्षणशरीरनिर्व्वर्त्तकेनारभ्यमाणं गर्भशरीरं वर्द्धिष्णु-स्वभावमेवारब्धम्, तेन वर्द्धत एव।

"कुतश्चास्याजन्म भवति" इत्यस्योत्तरं—मात्रेत्यादि। व्यापत्तिनिमित्तमिति व्यापत्तिकारणम्, तत्र मातुर्व्यापच्छोणितगर्भाशयादिदुष्टिः, पितुर्व्यापच्छुक्रदुष्टिरित्याद्यनुसरणीयम्॥ १२॥

चक्रपाणिः—"यतश्च जायमानः" इत्यादिप्रश्नस्योत्तरम्—ये त्वस्येत्यादि। वृद्धिहेतुसमाख्याता भावाः, "मात्रादीनान्तु खलु गर्भकराणां भावानां सम्पदः" इत्यादिग्रन्थोक्ताः। अथवाप्यचिरजात इति यदा मात्रादीनां सर्व्वथा दोषवत्त्वे विपर्य्ययोऽपि भवति, तदा विनाशमापद्यते गर्भः। यदा तेषां दोषवत्तायामसम्यग्विपर्य्ययो भवति, तदा अचिरजातो व्यापद्यत इति ज्ञेयम्।

अवशिष्टस्य प्रश्नस्योत्तरं दर्शयितुमाह—यतस्त्वित्यादि। अविनश्यन्नित्यत्र विनाशेन विकृतिः अभिप्रेता, विकृतावपि 'विनाश'शब्दो दृष्टः। यथा—असच्छीलत्वेन विकृते पुरुषे 'विनष्टोऽयम्'

गर्भाशयौ दूषयन्ति, तदेयं गर्भं लभते, तदा गर्भस्य तस्य मातृजानामवयवानामन्यतमोऽवयवो विकृतिमेकोऽनेकोऽथवोपपद्यते। यस्य यस्य ह्यवयवस्य वीजभागे दोषाः* प्रकोपमापद्यन्ते तं तमवयवं विकृतिराविशति। यदा ह्यस्याः शोणितगर्भाशयवीजभागः प्रदोषमापद्यते तदेयं बन्ध्यां जनयति। यदा पुनरस्याः शोणितगर्भाशयवीजभागावयवः प्रदोषमापद्यते

यदा न कार्त्स्न्येन शोणिताशयगर्भाशयौ दूषयन्ति तदेयं स्त्री गर्भं लभते, किन्तु तस्य गर्भस्य मातृजावयवा विकृता भवन्ति। तत्र दोषा यद्यदवयवारम्भकवीजभागं दूषयन्ति स स चावयवो विकृतो भवति। यदा पुनरस्याः स्त्रियाः शोणितगर्भाशययोर्वीजभागः प्रदुष्टो भवति तदा बन्ध्यां कन्यामियं जनयति। यदा पुनरस्याः स्त्रियाः शोणितगर्भाशययोर्वीजभागैकदेशः प्रदुष्टो भवति तदेयं

इति व्यपदेशः। एवञ्च सत्येकदेशेनापि विकृतौ 'विनाश'शब्ददर्शने 'कार्त्स्न्येन' इति विशेषणं युक्तं भवति।

दोषप्रकोपणेनैव दोषप्रकोपणसेवायां लब्धायां पुनः 'दोषप्रकोपणोक्तान्यासेवमानाया' इति पदं दोषाणां स्वहेतुसेवया न बलवन्तं प्रकोपं दर्शयितुम्। परहेतुसेवयापि हि स्तोकमात्रया अनुबन्धरूपो दोषकोपो भवति। यथा—अम्लेन पित्तं जन्यमानं श्लेष्मोपगतं जन्यते। 'न तु कार्त्स्न्येन दूषयन्ति' इति वचनेन, कार्त्स्न्येन दुष्टया गर्भजन्मैव न भवतीति दर्शयति। मातृजानामिति त्वग्लोहितादीनाम्। अन्यतम इति जातावेकवचनम्। तत्रैकोऽप्यवयवोऽन्यतमः, तथा अनेकेऽवयवाः 'अन्यतम'शब्देन प्रोक्ताः। अत एवैकोऽथवानेक इत्यन्यतमविवरणमुपपन्नं भवति। अन्यथा तु 'अन्यतम'पदेन एकस्यैवावयवस्य गृहीतत्वात् 'अनेक' इति करणमसङ्गतं स्यात्। कुतः पुनरेकस्यानेकस्य वा विकृतिर्भवतीत्याह—यस्येत्यादि। बीज इति कृत्स्न एवारम्भके। वीजभागो वेत्यवयववीजस्यैकदेशे। एतां विकृतिमेव शृङ्गग्राहिकतया वक्तुमाह—यदेत्यादि। शोणित इत्यार्त्तवे। गर्भाशयजनको वीजभागो गर्भाशयवीजभागः, शोणितगतो गर्भाशयवीजभागो शोणितगर्भाशयवीजभागः। किंवा गर्भाशयस्य तथा वीजभागस्य आर्त्तवरूपस्य जनकः। गर्भाशयार्त्तवे च मातृजावयवमध्ये पठिते शोणितजन्ये एव। तेन आर्त्तवेतरवीजभागस्य दुष्टिरुपपन्ना। आर्त्तवञ्च यद्यपि द्वादशवर्षादूर्ध्वं व्यज्यते, तथापि आर्त्तवोत्पत्तिर्गर्भकाल एव भवति। येन सतामार्त्तवदन्तश्मश्रुप्रभृतीनां काले व्यक्तिर्भवति, तेन आर्त्तवारम्भकस्यापि वीजस्य गर्भकाले प्रदोष उपपन्नः। प्रदोष इत्यत्र 'प्र'शब्देन दुष्टिप्रकर्षं प्रकृष्टबन्ध्यतारूपकार्य्यजनकं दर्शयति। गर्भाशयस्य तथा आर्त्तवस्य कोपघातेन स्त्रिया बन्ध्यत्वं व्यक्तमेव। गर्भाशयवीजभागावयव इत्यत्रापि पूर्ववद्

* बीजे वीजभागे वा दोषः इति पाठः पुस्तकान्तरे पाठः।

तदा पूतिप्रजां जनयति। यदा त्वस्याः शोणित-*-गर्भाशय-बीजभागावयवः स्त्रीकराणाञ्च बीजभागानामेकदेशः प्रदोषमापद्यते, तदा स्त्र्याकृतिभूयिष्ठामस्त्रियं वार्त्तां † नाम जनयति तां स्त्रीव्यापदमाचक्षते। एवमेव पुरुषस्य बीजदोषे पितृजावयवविकृतिं विद्यात्। यदा शरीरे बीजभागः प्रदोषमापद्यते, तदा बन्ध्यं जनयति। यदा ह्यस्य बीजे बीजभागावयवः प्रदोषमापद्यते तदा पूतिप्रजां जनयति। यदा त्वस्य बीजे बीजभागावयवः पुरुषकराणाञ्च बीजभागानामेकदेशः प्रदोषमापद्यते, तदा पुरुषाकृतिभूयिष्ठमपुरुषं तृणपूलिकं ‡ नाम

पूतिप्रजां दुर्गन्धिप्रजां जनयति। यदा पुनरस्याः स्त्रियाः शोणितगर्भाशययोः बीजभागैकदेशः स्त्रीकराणामार्त्तवाधिकशुक्रादीनामेकदेशश्च प्रदुष्टो भवति तदा स्त्र्याकृतिभूयिष्ठामस्त्रियं नपुंसकरूपां वार्त्तां नाम जनयति। तां सर्व्वां स्त्रीव्यापदमाचक्षते वैद्या इति। अथ पुरुषव्यापदमाह—एवमित्यादि। अनेन प्रकारेण पुरुषस्य दोषप्रकोपणान्यासेवमानस्य प्रकुपिता दोषाः शरीरे बीजे बीजभागं पुरुषकरं शुक्राधिकादिकं प्रदूषयन्ति तदा बन्ध्यपुत्रं जनयति। यदा पुनरस्य बीजे बीजभागः प्रदुष्टो भवति तदा पूतिप्रज पुत्रं जनयति। यदा च पुनरस्य पुंसो बीजे बीजभागावयवः पुरुषकराणाञ्च शरीरबीजभागानामेकदेशः शुक्रादिः प्रदुष्टो भवति तदा पुरुषाकृतिभूयिष्ठमपुरुषं नपुंसकं तृणपूलिकं नाम जनयति। तां पुरुषव्यापदमाचक्षते। इति।

व्याख्येयम्। 'अवयव'शब्देन तु गर्भाशयस्य चार्त्तवस्य चैकदेश इहोच्यते। पूतिप्रजामिति म्रियमाणापत्यम्। अन्ये तु क्लिन्नाङ्गप्रत्यङ्गां पूतिमाहुः। स्त्रीकराणां शरीरबीजभागानामिति स्त्रीव्यञ्जकस्तनोपस्थलोमराज्यादिजनकबीजभागानाम्। अस्त्रियमित्यसम्पूर्णलक्षणाम्। वार्त्तां नामेति 'वार्त्ता'संज्ञा शास्त्रसमयकृता। स्त्रीनिमित्तार्त्तवप्रदोषकृतव्यापत् स्त्रीव्यापत्। एवं तां पुरुषव्यापदमाचक्षते इत्यत्रापि पुरुषव्यापद् व्याख्येया।

बीज इति शुक्रे। शुक्ररूपबीजजनको भागो बीजभागः। इह बन्ध्यमित्यनेन पुरुषबन्ध्यं ब्रूते, इह तु पूतिप्रजाव्याख्या पूर्व्ववत्। अपुरुषमिति असमस्तपुरुषलक्षणयुक्तम्। 'तृणपुत्रिक'संज्ञापि शास्त्रसमयसिद्धैव। वार्त्तातृणपुत्रिकयोर्व्यवायेच्छा परं भवति, न तु व्यवायसामर्थ्यमिति ब्रूवते।

* शोणिते इति चक्रधृतः पाठः। † वार्त्तामिति चक्रः। ‡ तृणपुत्रिकमिति वा पाठः।

जनयति तां पुरुषव्यापदमाचक्षते। एतेन सात्म्यजानां रसजानां सत्त्वजानाञ्चावयवानां विकृतिरपि व्याख्याता भवति। निर्व्विकारः परस्त्वात्मा सर्व्वभूतानां निर्व्विशेषः सत्त्वशरीरयोस्तु विशेषात् विशेषोपलब्धिः ॥ १३ ॥

एतेनेत्यादि। एतदनुसारेण यस्या गर्भवत्याः सात्म्यमाहाररसं दोषप्रकोपणान्यासेवमानायाः प्रकुपिता दोषा दूषयन्ति तदा सात्म्यरसाहाररसजानामारोग्यादीनामवयवानां शरीराभिनिर्वृत्त्यभिवृद्ध्यादीनाञ्चावयवानां विकृतिर्भवति। यस्याः सत्त्वं दूषयन्ति यदि तदा सत्त्वजानाञ्चावयवानां भक्तिशीलशौचादीनां विकृतिर्भवतीति व्याख्यातं भवति। तर्हि चात्मजानाञ्च अवयवानां किमात्मदोषाद् विकृतिर्भवतीत्यत आह—निर्व्विकार इत्यादि। शारीरमानसैर्दोषैरात्मनो न दुष्टिरस्ति। कस्मात्? यत परस्त्वात्मा चेतनाधातुरव्यक्तं नाम निर्व्विकारः। सर्व्वभूतानां निर्व्विशेषः। समसत्त्वरजस्तमोलक्षणो हीनाधिकावस्थारहितः सूक्ष्मदेहसर्गानन्तरं नारायणेन हिंसाहिंसादिभावैर्योगे कृते विशेषेऽपि विकाराभावान्निर्व्विशेषत्वं स्थूलपुरुषेषु सर्व्वेष्वात्मन इति स्थूलपुरुषावस्थायां सत्त्वशरीरविशेषयोगात् प्रतिजनमात्मनो विशेषोपलब्धिरिति विशेषमात्रं न तु विकारः स्यादिति ॥ १३ ॥

एवं मातापितृजावयवविकृतिं व्याख्याय सात्म्यरससत्त्वजावयवविकृतिव्यपदेशार्थमाह— एतेनेत्यादि। सात्म्यविभ्रमात् तु सात्म्यजानामारोग्यानालस्यादीनामन्यतमेन हीयते। एवं रससत्त्वयोरप्युन्नेयम्।

आत्मजोऽप्ययं गर्भ उक्तः, तत् कथमिह तद्विकृत्या विकृतिर्गर्भस्य नोच्यत इत्याह— निर्व्विकार इत्यादि। पर इत्यनेन मनःशरीरादिसमुदायादात्मानं व्यवच्छिनत्ति। सर्व्वभूतानां निर्व्विशेष इति, सर्व्वेषु भूतेषु वर्त्तमानोऽप्ययं परमात्मा तुल्य एव। यस्तु तत्र सुखदुःखादिविशेष उपलभ्यते, स शरीरविशेषस्य तथा मनोविशेषस्य च सुखदुःखादिविशेषकारणस्य विशेषादुपलभ्यते। एतदेव 'शारीरसत्त्वयोस्तु' इत्यादिनोक्तम्। सुखादयस्तु न परमात्मविकाराः, किन्तु धर्म्मा एवेति दर्शितमेव। यानि चात्मजत्वेन गर्भे "तासु तासु योनिषु उत्पत्तिः" इत्यादिना ग्रन्थेनात्मजानि दर्शितानि, तान्यपि परमात्मविकारा न भवन्ति, किन्तु सत्त्वरजस्तमःप्रबलतारूपविकारजमनोजन्यधर्म्माधर्म्मजन्यान्येव। तेन सूक्ष्मचिन्तायामात्मजान्यपि यान्युक्तानि, तानि सत्त्वजान्येव। तस्मादेहात्मजावयवविकारोऽपि सत्त्वजावयवविकार एव बोद्धव्य इति भावः ॥ १३ ॥

तत्र त्रयस्तु शारीरदोषा वातपित्तश्लेष्माणस्ते शरीरं दूषयन्ति। द्वौ पुनः सत्त्वदोषौ रजस्तमश्च, तौ सत्त्वं दूषयतः। ताभ्यां सत्त्वशरीराभ्यां दुष्टाभ्यां विकृतिरुपजायते, नोपजायते चादुष्टाभ्याम् ॥ १४ ॥

तत्र शरीरं योनिविशेषाच्चतुर्व्विधमुक्तमग्रे। त्रिविधं खलु सत्त्वं, शुद्धं राजसं तामसमिति। तत्र शुद्धमदोषमाख्यातं कल्याणांशत्वात्। राजसं सदोषमाख्यातं रोषांशत्वात्। तथा तामसमपि सदोषमाख्यातं मोहांशत्वात् ॥ १५ ॥

तेषान्तु त्रयाणामपि सत्त्वानामेकैकस्य भेदाग्रमपरिसंख्येयं

गङ्गाधरः—नन्विह के दोषा इत्यत आह—तत्रेत्यादि। सत्त्वदोषौ मनोदोषौ रजश्च तमश्चेति द्वौ। ताभ्यां शारीरदोषमानसदोषाभ्यां दुष्टाभ्यां शरीरसत्त्वाभ्यां गर्भस्य विकृतिरुपजायते ताभ्यामेवादुष्टाभ्यां गर्भस्य विकृतिर्नोपजायते ॥ १४ ॥

गङ्गाधरः—तद् विवृणोति—तत्रेत्यादि। योनिविशेषाच्चतुर्व्विधं शरीरं जरायुजमण्डजं स्वेदजमुद्भिज्जमुक्तमग्रे। त्रिविधं खलु सत्त्वं मनः। शुद्धं केवलसात्त्विकं राजसं रजोबहुलं तामसं तमोबहुलमिति। तत्र शुद्धं केवलसत्त्वगुणं मनोऽदोषं निर्दोषमाख्यातमिति कल्याणांशत्वाच्छुभसत्त्वांशत्वात्। राजसं सदोषं मनः रोषांशत्वात्, रोषो हि रजोमूलः। तामसञ्च मनः सदोषं मोहांशत्वात्, तमो हि मोहात्मकमिति ॥ १५ ॥

गङ्गाधरः—तेषामित्यादि। तेषां त्रयाणां सत्त्वानामिति मनसामेकैकस्य

चक्रपाणिः—'शरीरसत्त्वयोस्तु' इत्यादिना शरीरमनसी दुःखरूपविकारेऽपि कारणमुक्ते। तत्रैव च यैर्दोषैः शरीरं मनश्च याभ्यां दोषाभ्यां युक्तं दुःखकारणं भवति, तानाह—तत्र त्रय इत्यादि। विकृतिरुपजायत इति शारीरमानसरोगरूपं जायते ॥ १४ ॥

चक्रपाणिः—सम्प्रति 'शरीरसत्त्वयोस्तु विशेषाद्' इत्यनेन दर्शितान् शरीरसत्त्वविशेषानेवाह—तत्रेत्यादि। चतुर्व्विधमिति जरायुजाण्डजोद्भिजस्वेदजम्। 'अग्रे' इति खुड्डिकायाम्। कल्याणांशत्वादिति शुभरूपांशत्वात्। मनो हि कल्याणभाग-रोषभाग-मोहभागैस्त्रिभागम्।

तरतमयोगाच्छरीरयोनिविशेषेभ्यश्चान्योन्यानुविधानत्वाच्च। शरीरं हि * सत्त्वमनुविधीयते, सत्त्वञ्च शरीरम्। तस्मात् कतिचित् सत्त्वभेदाननूकाभिनिर्द्देशेन निदर्शनार्थमेवानुव्याख्यास्यामः॥१६

भेदाग्रं भेदस्य प्रवरमपरिसङ्ख्येयम्। कस्मात्? तरतमयोगात्। सत्त्वरजस्तमसां द्वयोर्द्वयोरेकस्योत्कर्षयोगात् त्रयाणाञ्चैकस्योत्कर्षयोगाच्च। उत्कर्षो हंग्रश एवाणुद्व्यणुकादिभेदादसङ्ख्येयः। न केवलं सत्त्वादितारतम्यात्, शरीरयोनि-विशेषेभ्यश्चेति। शरीरविशेषाणां योनिविशेषेभ्यः। योनिः शरीराणां जराय्वादयः। तद्विशेषाः प्रत्येकभेदादसङ्ख्येयाः। कुतः शरीरयोनिविशेषेभ्यः सत्त्वविशेष इत्यत आह—अन्योन्यानुविधानाच्चेति। शरीरसत्त्वयोरेकत्र सहजातत्वात् परस्परमनुरूपेण विधानात्। कथमित्यत आह—शरीरं हीत्यादि। हि यस्मात्। जायमाने गर्भे निर्म्माणकर्त्रा शरीरं सत्त्वमनु विधीयते सत्त्वसदृशं शरीरं निर्म्मीयते। सत्त्वञ्च शरीरमनु विधीयते योनि-विशेषे जायमानं शरीरमनु सादृश्येन सत्त्वं निर्म्मीयते। तस्मात् सत्त्वभेदान कतिचिदनूकाभिनिर्द्देशेन सादृश्याभिनिर्द्देशेन निदर्शनार्थमनुव्याख्यास्यामो न तु कृत्स्नान् सत्त्वभेदान्। कृत्स्नसत्त्वभेदस्यानूकाभिनिर्द्देशेन निदर्शनकरणा-शक्यत्वात्। सत्त्वभेदनिदर्शनेनैव शरीरभेदस्यापि निदर्शनसिद्धेः पृथङ्निदर्शनं करिष्यामः। सत्त्वशरीरयोरन्योन्यानुविधानात्॥ १६ ॥

तत्र रोषांशतमोऽंशौ सदोषौ अधर्म्मरूपतया। भेदाग्रमिति भेदप्रमाणम्। तरतमयोगादिति शुचितरशुचितममनोभेदयोगात्। शरीरविशेषाः बालयुवशरीरादिविशेषाः। योनिविशेषास्तु मनुष्यपश्वादिजातिविशेषाः। किंवा शरीरस्य नरपश्वादिजातिविशेषाः शरीरयोनि-विशेषाः, तेभ्यः। अथ शरीरभेदाद् वा कथं मनोभेदो भवतीत्याह—अन्योन्यानुविधानाच्च। एतदेव विभजते—शरीरमपीत्यादि। सत्त्वानुरूपं शरीरं भवति, यदि शुद्धसत्त्वं भवति, तदा देवादिशरीरं भवति इत्यादि, तथा शरीरानुरूपञ्च सत्त्वं भवति। यथा पशुशरीरे तामसम्, मनुष्यशरीरे राजसम्, देवशरीरे सात्त्विकमिति ज्ञेयम्। किंवा अन्योन्यानुविधानादिति सत्त्व-रजस्तमसां परस्परानुविधानादित्यर्थः। अस्मिन् पक्षे शरीरं ह्यपि 'सत्त्वमनु विधीयते' इत्यादिना व्यवहितमपि शरीरानुविधानं मनसो दुर्ब्बोधत्वात् व्याख्येयम्। सत्त्वभेदानिति मनोभेदान्। अनूकाभिनिर्द्देशेन सादृश्यनिर्द्देशेन ॥ १५।१६ ॥

---

* "अपि" इति चक्रधृतः पाठः।

तद् यथा—शुचिं सत्याभिसन्धिं जितात्मानं संविभागिनं ज्ञान-विज्ञानवचनप्रतिवचनशक्तिसम्पन्नं स्मृतिमन्तं कामक्रोधलोभ-मोहेर्ष्याहर्षापेतं समं सर्व्वभूतेषु ब्राह्मं विद्यात्। इज्याध्ययन-व्रतब्रह्मचर्य्यपरमतिथिव्रतमुपशान्तमदमानरागद्वेषलोभमोह-रोषं प्रतिभावचनविज्ञानोपधारणशक्तिसम्पन्नमार्षं विद्यात्। ऐश्वर्य्य-वन्तमादेयवाक्यं यज्वानं शूरमोजस्विनं तेजसोपेतमक्लिष्टकर्म्माणं दीर्घदर्शिनमर्थधर्म्मकामाभिरतमैन्द्रं विद्यात्। लेखास्थवृत्तं

गङ्गाधरः—तद् यथेति। प्राधान्यादुत्कर्षाच्च प्रथमं शुद्धसत्त्वभेदानाह—शुचिमित्यादि। अभिसन्धिरनुसन्धानम्। संविभागिनं यत् कार्य्यं यदकार्य्यं तद्विभागकरणबुद्धिशीलम्। कामाद्यपेतम्। सर्व्वभूतेषु सममिति ब्राह्मं ब्रह्मसत्त्वं विद्यात्। एतेन ब्राह्मं शरीरञ्च व्याख्यातम्। यो हि ब्राह्मसत्त्वः स एव ब्राह्मकायः। उक्तं हि सुश्रुते। "शौचमास्तिक्यमभ्यासो वेदेषु गुरुपूजनम्। प्रियतातिथ्यमिज्या च ब्रह्मकायस्य लक्षणम्" इति। एतेन ब्राह्मसत्त्वं व्याख्यातं परस्परानुविधानात्।

इज्येत्यादि। इज्या यजनम्। उपशान्ता मदादयो यस्य तं प्रतिभादिसम्पन्नम्। तत्र प्रतिभा श्रुतमात्रबोधः। आर्षं सत्त्वं विद्यात्। एतेनार्षकायो व्याख्यातः। तथा च सुश्रुतः। "जपव्रतब्रह्मचर्य्य-होमाध्ययनसेविनम्। ज्ञान-विज्ञानसम्पन्नमृषिसत्त्वं नरं विदुः॥"

ऐश्वर्य्यवन्तमित्यादि। आदेयवाक्यं ग्राह्यवाक्यवादिनम्। शूरं विक्रम-वन्तम्। ओजस्विनं बलवन्तम्। तेजसोपेतं दीप्तिमन्तम्। अक्लिष्टकर्म्माणम् अविद्यास्मितारागद्वेषाभिनिवेशाः पञ्च क्लेशास्तैर्व्वर्जितं कर्म्म यस्य तं तथा। ऐन्द्रमिन्द्रसत्त्वं नरं विद्यादिति। एतेन चैन्द्रकायः पुरुषो व्याख्यातः। सुश्रुते चोक्तः। "माहात्म्यं शौर्य्यमाज्ञा च सततं शास्त्रबुद्धिता। भृत्यानां भरणञ्चापि माहेन्द्रं कायलक्षणम्॥" इति। एतेन माहेन्द्रसत्त्वो व्याख्यातः।

लेखास्थवृत्तमित्यादि। लेखास्थवृत्तं कर्त्तव्याकर्त्तव्यव्यवस्थावृत्तम्।

चक्रपाणिः—संविभागिनमिति सम्यत्फलविभजनशीलम्। अतिथौ यथोचितसपर्य्यादिकवृत्तं व्रतमाचरतीति अतिथिव्रतः। लेखा कर्त्तव्याकर्त्तव्यमर्य्यादा, तत्र स्थितं वृत्तं यस्य स लेखास्थवृत्तः

प्राप्तकारिणमसंहार्य्यमुत्थानवन्तं स्मृतिमन्तमैश्वर्य्यालम्बिनं * व्यपगतरागेर्ष्याद्वेषमोहं याम्यं विद्यात्। शूरं धीरं शुचिमशुचिद्वेषिणं यज्वानमम्भोविहाररतिमक्लिष्टकर्म्माणं स्थानकोपप्रसादं वारुणं विद्यात्। स्थानमानोपभोगं परिवारसम्पन्नं सुखविहारं धर्म्मार्थकामनित्यं शुचिं व्यक्तकोपप्रसादं कौबेरं विद्यात्। प्रियनृत्यगीतवादित्रोल्लापकं श्लोकाख्यायिकेतिहासपुराणेषु कुशलं गन्धमाल्यानुलेपनवसनस्त्रीविहारकामनित्यमनसूयकं गान्धर्व्वं विद्यात्। इत्येवं शुद्धसत्त्वस्य सप्तविधं भेदांशं

असंहार्य्यमसश्चयिनम्। उत्थानवन्तं सम्यक् समर्थम्। याम्यं यमसत्त्वं नरं विद्यादिति। एतेन याम्यकायो व्याख्यातः। सुश्रुते च। "प्राप्तकारी दृढ़ोत्थानो निर्भयः स्मृतिमान् शुचिः। रागमोहभयद्वेषैर्वर्ज्जितो याम्यसत्त्ववान्॥" इति।

शूरमित्यादि। अम्भोविहाररतिं जलविहारे रतिर्यस्य तम्। अक्लिष्टकर्म्माणं पूर्व्वं व्याख्यातम्। स्थानकोपप्रसादं यत्र कोपः कर्त्तव्यो यत्र च प्रसादः कर्त्तव्यस्तत्र तत्र स्थाने कोपप्रसादौ यस्य तम्। वारुणं वरुणसत्त्वं विद्यादिति। एतेन वरुणकायश्च व्याख्यातः। सुश्रुतेऽप्युक्तः। "शीतसेवा सहिष्णुत्वं पैङ्गल्यं हरिकेशता। प्रियवादित्वमित्येतद् वारुणं कायलक्षणम्॥" इति। एतेन वरुणसत्त्वो व्याख्यातः।

स्थानमानेत्यादि। यत्र मानः कर्त्तव्यो यत्र चोपभोगः कर्त्तव्यस्तत्र तत्र मानोपभोगो यस्य तम्। व्यक्तकोपप्रसादं न तु गूढ़कोपप्रसादम्। कौबेरं कुबेरसत्त्वं नरं विद्यादिति। एतेन कौबेरकायः पुरुषो व्याख्यातः। सुश्रुते ह्युक्तम्। "मध्यस्थता सहिष्णुत्वमर्थस्यागमसश्चयौ। महाप्रसवशक्तित्वं कौबेरं कायलक्षणम्॥"। इति। एतेन कौबेरसत्त्वश्च व्याख्यातः।

प्रियनृत्येत्यादि। प्रिया नृत्यगीतवादित्रोल्लापा यस्य तम्। श्लोकादिषु कुशलं दक्षम्। गन्धादिषु विहारकामो नित्यं यस्य तम्। गान्धर्व्वं गन्धर्व्व-

तम्, अलङ्घितकर्त्तव्याकर्त्तव्यमित्यर्थः। असम्प्रहार्य्यमित्यशक्यवारणम्। ऐश्वर्य्यं लभत इति ऐश्वर्य्यलम्भी। स्थाने उचिते कोपः प्रसादश्च यस्य स स्थानकोपप्रसादः। सुखविहारमिति सुखक्रीड़म्। उल्लापः स्तोत्रम्। विहारः क्रीड़ा, किंवा स्त्रीभिः समं विहरणं स्त्रीविहारः। गान्धर्व्वमिति

* ऐश्वर्य्यलम्भिनम् इति चक्रः।

विद्यात् कल्याणांशत्वात्। तत्संयोगात् तु ब्राह्ममत्यन्तशुद्धं व्यवस्येत् ॥ १७ ॥

शूरं चण्डमसूयकमैश्वर्य्यवन्तमौदरिकं * रौद्रमननुक्रोशकमात्मपूजकमासुरं विद्यात्। अमर्षिणमनुबन्धकोपं छिद्रप्रहारिणं क्रूरमाहारातिमात्ररुचिमामिषप्रियतमं स्वप्नायासबहुलमीर्ष्युं राक्षसं विद्यात्। महालसं स्त्रैणं स्त्रीरहस्काममशुचिं

सत्त्व नरं विद्यात्। एतेन गान्धर्व्वकायो व्याख्यातः। सुश्रुते ह्युक्तम्—"गन्धमाल्यप्रियत्वञ्च नृत्यवादित्रकामिता। विहारशीलता चैव गान्धर्व्वं कायलक्षणम् ॥" इति। एतेन गन्धर्व्वसत्त्वो व्याख्यातः। इत्येवमित्यादिना शुद्धसत्त्वस्य सप्तविधं भेदांशं विद्यात्। तत्र ब्राह्मं सत्त्वमत्यन्तं शुद्धं विद्यात् कल्याणांशत्वात् ॥ १७

गङ्गाधरः—अथ राजससत्त्वानाह—सुश्रुते च। सप्तैते सात्त्विकाः कायाः राजसांस्तु निबोध मे इति। शूरमित्यादि। चण्डं कोपस्वभावम्। औदरिकं बह्वाशिनम्। रौद्रमुग्रम्। अननुक्रोशं निर्दयम्। आत्मपूजकं निजस्याहारादिभिरुपचारैर्भजनशीलम्। आसुरमासुरसत्त्वं विद्यादिति। एतेनासुरकायः पुरुषो व्याख्यातः। सुश्रुते चोक्तम्। "ऐश्वर्य्यवन्तं रौद्रञ्च शूरं चण्डमसूयकम्। एकाशिनञ्चौदरिकमासुरं सत्त्वमीदृशम् ॥" इति। अमर्षिणमित्यादि। अनुबन्धकोपं यं प्रति कुप्यति कोपनिवृत्तेऽपि कोपानुबन्धो यस्य तं प्रति वर्त्तते तमनुबन्धकोपम्। छिद्रप्रहारिणं यदा तस्य कार्य्येषु विवरं प्राप्नोति तदैव तं प्रहरति। राक्षसं राक्षससत्त्वं तं नरं विद्यादिति। एतेन राक्षसकायोऽपि व्याख्यातः। सुश्रुते च। "एकान्तग्राहिता रौद्रमसूया धर्म्मबाह्यता। भृशमात्रं तमश्चापि राक्षसं कायलक्षणम् ॥" इति। एतेन राक्षससत्त्वो व्याख्यातः। महालसमित्यादि।

गान्धर्व्वसत्त्वम्। एवं ब्राह्ममित्यादावपि ज्ञेयम्। एवञ्च ब्राह्मादिभिः सत्त्ववाचकैः पदैरेव प्रत्ययसूच्यैः सत्त्वस्य सप्तविधभेदकथनं समानकारणादुपपन्नं भवति। शुद्धस्येति सत्त्वगुणबहुलस्य। अथ कथमेते ब्राह्मादयः शुद्धसत्त्वस्यैव भेदा इत्याह—कल्याणांशत्वादिति। तत्संयोगादिति कल्याणांशस्य सम्यग्योगात् ॥ १७ ॥

चक्रपाणिः—औपधिकमिति छद्मानुचारिणम्। अननुक्रोशमित्यननुमेयम्। स्त्रिया समं रहसि

* औदरिकमित्यत्र औपधिकमिति चक्रसम्मतः पाठः।

शुचिद्वेषिणं भीरुं भीषयितारं विहारशीलं पशाचं विद्यात्। क्रुद्धशूरमक्रुद्धभीरुं तीक्ष्णमायासबहुलं मन्त्रसुगोचरम् * आहारविहारपरं सार्पं विद्यात्। आहारकाममतिदुःखशीलाचारोपचारमसूयकमसंविभागिनमतिलोलुपकर्म्मशीलं प्रैतं विद्यात्। अनुषक्तकाममजस्रमाहार-विहार-परमनवस्थितममर्षिणमसञ्चयं शाकुनं विद्यात्। इत्येवं खलु राजसस्य सत्त्वस्य षड्विधं भेदांशं विद्याद् रोषांशत्वात् ॥ १८ ॥

स्त्रैणं स्त्रीवशं स्त्रीषु रहसि स्थितिकामं भीरुञ्च भीषयितारञ्च पैशाचं पिशाचसत्त्वं नरं विद्यादिति। एतेन पिशाचकायो व्याख्यातः। सुश्रुते च। "उच्छिष्टाहारता तैक्ष्ण्यञ्च साहसप्रियता तथा। स्त्रीलोलुपत्वं नैर्लज्ज्यं पैशाचं कायलक्षणम् ॥" इति। एतेन पैशाचसत्त्वञ्च व्याख्यातः।

क्रुद्धशूरमित्यादि। यदा क्रुद्धः स्यात् तदा शूरः स्यादिति क्रुद्धशूरस्तम्। अक्रुद्धभीरुम् यदा न क्रुद्धस्तदा भीरुरित्यक्रुद्धभीरुस्तम्। मन्त्रसुगोचरम् यत्किञ्चित् कोऽपि मन्त्रयते तन्मन्त्रं सुष्ठुगोचरं ज्ञानविषयीभवतीति मन्त्रसुगोचरस्तम्। सार्पं सर्पसत्त्वं नरं विद्यादिति। एतेन सार्पकायो व्याख्यातः। सुश्रुते हि—"तीक्ष्णमायासिनं भीरुं चण्डं मायान्वितं तथा। विहाराचारचपलं सर्पसत्त्वं विदुर्नरम् ॥" इति।

आहारकाममित्यादि। अतिदुःखाः शीलाचारोपचारा यस्य तम्। असंविभागिनं कार्य्याकार्य्यविभागज्ञानहीनम्। प्रैतं प्रेतसत्त्वं नरं विद्यादिति। एतेन प्रैतकायो व्याख्यातः। सुश्रुते चोक्तः। "असंविभागमलसं दुःखशीलमसूयकम्। लोलुपञ्चाप्यदातारं प्रेतसत्त्वं विदुर्नरम् ॥" इति।

अनुषक्तकाममित्यादि। अनुषक्तः सदा संसक्तः कामो यस्य तम्। अजस्रं यथा स्यात् तथा आहारविहारेषु परं रतम्। शाकुनं पक्षिसत्त्वं नरं विद्यात्। एतेन शाकुनकायो व्याख्यातः। सुश्रुतेऽपि। "प्रवृद्धकामसेवी चाप्यजस्राहार एव च। अमर्षणोऽनवस्थायी शाकुनं कायलक्षणम् ॥" इति। एतेन शाकुनसत्त्वो व्याख्यातः। इत्येवं राजसस्य सत्त्वस्य रोषांशत्वात् षड्विधं भेदांशं विद्यात् ॥१८

स्थातुमिच्छतीति स्त्रीरहस्कामः। क्रुद्धशूरमक्रुद्धभीरुमिति क्रोधे सति शूरम्, अक्रोधे सति भीरुम्।

* सन्त्रस्तगोचरमिति चक्रधृतः पाठः।

निराकरिष्णुमधमवेशं जुगुप्सिताचाराहारविहारमैथुनपरं स्वप्नशीलं पाशवं विद्यात् । भीरुमबुधमाहारलुब्धमनवस्थित-मनुषक्तकामक्रोधं सरणशीलं तोयकामं मात्स्यं विद्यात् । अलसं केवलमभिनिविष्टमाहारे सर्व्वबुद्ध्यङ्गहीनं वानस्पत्यं विद्यात् । इत्येवं खलु तामसस्य सत्त्वस्य त्रिविधं भेदांशं विद्यान्मोहांशत्वात् । इत्यपरिसंख्येयभेदानां खलु त्रयाणामपि सत्त्वानां भेदैकदेशो व्याख्यातः ॥ १९ ॥

शुद्धस्य सत्त्वस्य सप्तविधो ब्रह्मर्षिशक्रवरुणयमकुबेर-गन्धर्व्वसत्त्वानुकारेण । राजसस्य षड्विधो दैत्यराक्षसपिशाच-सर्पप्रेतशकुनिसत्त्वानुकारेण । तामसस्य त्रिविधः पशुमत्स्य-वनस्पति-सत्त्वानुकारेण । कथञ्च यथासत्त्वमुपचारः स्यादिति ।

गङ्गाधरः—अथ तामसानाह—निराकरिष्णुमित्यादि । सर्व्वनिराकरण-शीलम् । पाशवं पशुसत्त्वं विद्यात् । एतेन पशुकायो व्याख्यातः । सुश्रुते च । "षडेते राजसाः कायास्तामसांस्तु निबोध मे । दुर्म्मेधस्त्वं मन्दता च स्वप्ने मैथुननित्यता । निराकरिष्णुता चैव विज्ञेयाः पाशवा गुणाः ॥" इति ।

भीरुमित्यादि । सरणशीलं गमनस्वभावम् । मात्स्यं मत्स्यसत्त्वम् । एतेन मात्स्यकायो व्याख्यातः । सुश्रुते च । "अनवस्थितता मौर्ख्यं भीरुत्वं सलिलार्थिता । परस्पराभिमर्दश्च मत्स्यसत्त्वस्य लक्षणम् ॥" इति ।

अलसमित्यादि । वानस्पत्यं वनस्पतिसत्त्वं नरम् । एतेन वनस्पति-कायश्च व्याख्यातः । सुश्रुते च । "एकस्थानरतिर्नित्यमाहारे केवले रतः । वानस्पत्यो नरः सत्त्वधर्म्मकामार्थवर्जितः ॥" इति । इत्येवमित्यादुपसंहारे । मोहांशत्वात् तमोऽंशत्वादिति । इत्यपरिसङ्ख्येयेत्यादि । इत्यपरिसङ्ख्येयेत्या-

गोचरशब्देन अचिरभाविविषये प्रचारो लक्ष्यते, तेन सम्प्रस्तगोचरमिति प्रस्तविषयप्रचारम् । पिशाचाद् भिन्न एव यथोक्ताचारः प्रेतः । तेन प्रैतमपि सत्त्वं पृथगुक्तम् । सरणशीलमिति गमन-शीलम् । बुद्ध्यादीनि ऊहापोहविचारस्मृत्यादीनि उक्तानि ॥ १८।१९ ॥

चक्रपाणिः—सुखस्मरणार्थं शुद्धादिभेदेन सन्धीकृत्य सत्त्वभेदानाह—शुद्धस्येत्यादि । वनस्पति-सत्त्वानुकारेणेत्यन्तो ग्रन्थो भेदैकदेशो व्याख्यात इत्यन्ते योजनीयः क्रियान्तराभावात् । एते च

केवलश्चायमुद्देशो यथोद्देशमभिनिर्द्दिष्टो भवति। गर्भावक्रान्तिसंप्रयुक्तस्यार्थस्य विज्ञाने सामर्थ्यं गर्भकराणाञ्च भावानामनुसमाधिर्विघातश्च विघातकराणां भावानामिति ॥ २० ॥

तत्र श्लोकाः।

निमित्तमात्मा प्रकृतिर्वृद्धिः कुक्षौ क्रमेण च।
वृद्धिहेतुश्च गर्भस्य पञ्चार्थाः शुभसंज्ञिताः ॥
अजन्मनि च यो हेतुर्विनाशे विकृतावपि।
इमांस्त्रीनशुभान् भावानाहुर्गर्भविघातकान् ॥ २१ ॥
शुभाशुभसमाख्यातानष्टौ भावानिमान् भिषक्।
सर्व्वथा वेद यः सर्व्वान् स राज्ञः कर्त्तुमर्हति ॥

द्विभिः षड्भिः श्लोकैरुपसंहारः। तत्र गर्भावक्रान्तीति। गर्भावक्रान्तिशारीरद्वयस्य खुड्डीकामहदाख्यस्य सम्प्रयुक्तस्य वाच्यस्यार्थस्य ज्ञाने सामर्थ्यमभिनिर्द्दिष्टं भवति। गर्भकराणां भावानामनुसमाधिः संग्रहः स चाभिनिर्द्दिष्टो भवति। विघातकराणां गर्भोपघातकराणां विघातोऽभिनिर्द्दिष्टो भवति ॥ १९।२० ॥

गङ्गाधरः—अध्यायार्थोपसंहारार्थमाह—तत्र श्लोका इति। निमित्तं गर्भस्य। आत्मा गर्भस्य स्वरूपम्। प्रकृतिर्गर्भस्य। यया चानुपूर्व्व्या गर्भस्य कुक्षौ वृद्धिः। वृद्धिहेतुश्चेति। शुभसंज्ञिताः पञ्चार्थाः। अजन्मनि हेतुः। गर्भस्य विनाशे हेतुर्गर्भस्य विकृतौ च हेतुरितीमांस्त्रीनशुभान् भावान् ॥ २१ ॥

गङ्गाधरः—इत्थञ्चाष्टौ शुभाशुभसमाख्यातान् भावान् यो भिषक् सर्व्वथा

सत्त्वभेदाः प्रायेण भवन्ति मानुषेष्विति कृत्वा एत एवोदाहरणार्थमुक्ताः। एवमनुक्ता अपि शूकरव्याघ्रादिसत्त्वानुकारेण सत्त्वभेदा बोद्धव्या एवेति दर्शयन्नाह—कथमित्यादि। कथं नाम यथासत्त्वं प्राणिमनोभिर्मनुष्याणामुपचारः स्यादित्येतदर्थमुदाहरणरूपा अमी सत्त्वभेदा व्याख्याता इति वाक्यार्थः। यथाप्रतिज्ञं वाक्यार्थमुपसंहरति—केवल इत्यादि। केवलः कृत्स्नः। उद्देश इति 'अत्र गर्भे' इत्यादिग्रन्थकृतः। यथोद्देशमिति उद्देशक्रमानतिक्रमेण। सामर्थ्यमिति प्रयोजनम्। अनुसमाधिरनुष्ठानम्। विघातो वर्ज्जनम्। विघातकराणामिति गर्भविघातकराणाम् ॥ २० ॥

अत्राप्युपायान् गर्भस्य स एवं ज्ञातुमर्हति ।
ये च गर्भविघातोक्ता भावास्तांश्चाप्युदारधीः ॥ २२ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते शारीरस्थाने महती-गर्भावक्रान्तिशारीरं नाम चतुर्थोऽध्यायः ॥ ४ ॥

वेद वेत्ति । स राज्ञः सर्व्वान् चिकित्सितविधीन् कर्त्तुमर्हतीति । एवं ये च गर्भविघातोक्ता भावास्तांश्चावाप्युपायान् प्राप्युपायान् गर्भस्य । स उदारधी-र्ज्ञातुमर्हति ॥ २२ ॥

अध्यायं समापयति—अग्नीत्यादि ।

इति वैद्य श्रीगङ्गाधरकविरत्नकविराजविरचिते चरकजल्पकल्पतरौ शारीरस्थानजल्पाख्ये चतुर्थस्कन्धे महतीगर्भावक्रान्ति-शारीरजल्पाख्या चतुर्थी शाखा ॥ ४ ॥

चक्रपाणिः—अथैतेषु मध्ये के ते गर्भस्य शुभाः,ये गर्भेऽनुष्ठेया इत्याह—निमित्तमित्यादि ॥२१।२२

इति चरकचतुरानन-महामहोपाध्याय-श्रीमच्चक्रपाणिदत्तविरचितायां चरकतात्पर्य्यटीकायामायुर्व्वेद-दीपिकायां शारीरस्थाने महतीगर्भावक्रान्तिशारीरं नाम चतुर्थोऽध्यायः ॥ ४ ॥

## पञ्चमोऽध्यायः ।

**अथातः पुरुषविचयं शारीरं व्याख्यास्यामः,**
**इतिह स्माह भगवानात्रेयः ॥ १ ॥**

**पुरुषोऽयं लोकसम्मित इत्युवाच भगवान् पुनर्व्वसुरात्रेयः । यावन्तो हि मूर्त्तिमन्तो लोके भावविशेषास्तावन्तः पुरुषे, यावन्तः पुरुषे तावन्तो लोके ॥ २ ॥**

गङ्गाधरः—अतः पूर्व्वाध्यायेऽभिहितमेवमयं लोकसम्मितः पुरुष इति। तस्य प्रपञ्चार्थमतोऽनन्तरं पुरुषविचयं शारीरमारभते—अथात इत्यादि। पुरुषं विशेषेण चिनोत्यस्मिन्ननेन वेति पुरुषविचयमधिकृत्य कृतं शारीरमिति ॥ १ ॥

गङ्गाधरः—पुरुषस्य विचयोऽयम् पुरुषोऽयं लोकसम्मित इति। अयमन्नमयः पुरुषः खलु लोकसम्मितः। लोकस्त्वनुत्तमतमो भूर्भुवःस्वरिति त्रिलोकरूपः परमव्योम परमात्मा परमपुरुषः। कुतोऽयं लोकसम्मितस्तदाह यावन्तो हीत्यादि। हि यस्माल्लोके यावन्तो मूर्त्तिमन्तो भावविशेषाः सन्ति तावन्तः पुरुषे वर्त्तन्ते, तथा यावन्तो मूर्त्तिमन्तो भावविशेषाः पुरुषे वर्त्तन्ते तावन्तो लोकेऽपीति। पुरुषे यावन्तस्तावन्तो लोके सन्तीति पुनर्वचनेन लोके यन्न दृश्यते पुरुषे तु दृश्यते तदपि पुरुषस्थभावेनानुमेयमिति ख्यापितम्। तेन स्वाङ्गुलिमानेन यथा चतुरशीत्यङ्गुलिमितः पुरुषस्तथा तस्याङ्गुलिमानेन लोकोऽपि चतुरशीत्यङ्गुलिमित इति लोकसम्मितः पुरुषः पुरुषसम्मितश्च लोक इति। मूर्त्तिमन्त इति शिष्यबोधार्थं स्थूलत उक्तम्। वस्तुतो यावन्तो भावा लोके तावन्तः पुरुषे, यावन्तः पुरुषे तावन्तो लोके मूर्त्तिमन्त इति वचनेनामूर्त्तानां प्रतिषेधाभावात् ॥ २ ॥

चक्रपाणिः—पूर्व्वाध्यायेऽभिहितं "यावन्तो हि लोके भावास्तावन्तः पुरुषे" इति, तच्च प्रपञ्चितं बहुवाच्यत्वात्। अतः प्रपञ्चाभिधानार्थं पुरुषविचयं ब्रूते। पुरुषविचयनं लोकसामान्येन गणनं पुरुषविचयः, तमधिकृत्य कृतोऽध्यायः पुरुषविचयः ॥ १ ॥

चक्रपाणिः—सम्मितस्तुल्यः। लोकसम्मितत्वमेव विभजते—यावन्तो हीत्यादि। भगवता

इत्येवंवादिनं भगवन्तमात्रेयमग्निवेश उवाच। नैतावता वाक्येनोक्तं वाक्यार्थमवगाहामहे। भगवता बुद्ध्या भूयस्तरमतोऽनुव्याख्यायमानं शुश्रूषामहे इति ॥ ३ ॥

तमुवाच भगवानात्रेयः। अपरिसंख्येया लोकावयवविशेषाः, पुरुषावयवविशेषा अप्यपरिसंख्येयाः। यथा यथा प्रधानश्च तेषां यथास्थूलं पुरुषावयवविशेषाः कतिचित् तेषां सामान्यमभिप्रेत्योदाहरिष्यामः; तानेकमना निबोध सम्यगुपवर्ण्यमानानग्निवेश! षड् धातवः समुदिता लोक इति शब्दं लभन्ते। तद् यथा—पृथिव्यापस्तेजो वायुराकाशं ब्रह्म चाव्यक्तमित्येत एव च षड् धातवः समुदिताः पुरुष इति शब्दं लभन्ते।

गङ्गाधरः—इत्येवमित्यादि तत् श्रुत्वाग्निवेश उवाच—नैतावतेत्यादि ॥ ३ ॥

गङ्गाधरः—तमुवाचात्रेयः अपरिसङ्ख्येया इत्यादि। तान् लोकपुरुषयोः समानान् कतिचिदवयवविशेषान्। अनुत्तमतमेषु त्रिषु लोकेषु प्रथमं लोकमाह—षड् धातव इत्यादि। तद्यथेति। पृथिवीत्यादि—येयं पृथिवी तस्या दशगुणा आपस्तां परित आवृत्य वर्त्तन्ते। अपश्च ताः परितो दशगुणं तेज आवृत्य वर्त्तते। तेजश्च दशगुणो वायुरावृत्य वर्त्तते। वायुमपि चाकाशो दशगुण आवृत्य वर्त्तते। आकाशश्चाहङ्कारो दशगुण आवृत्य वर्त्तते। तञ्चाहङ्कारमभितो दशगुणो महानावृत्य वर्त्तते। महान्तश्चाव्यक्तमात्मा ब्रह्म दशगुणमावृत्य वर्त्तते इत्येवमहङ्कारमहद्भ्यामुपलक्षितमव्यक्तं ब्रह्मेह विवक्षितमित्येत एव षड्धातवो यथा लोक इति शब्दं (अनुत्तमतमाष्टलोकी भूलोकशब्दं) लभन्ते तथा खल्वेते एव षड्धातवः समुदिताः पुरुष इति शब्दं लभन्ते। कथं पुरुषः पृथिव्यादि-

भूयस्तरानुव्याख्यायमानमिति योजना। लोकस्य तरुतृणपश्वादिरूपा अवयवाः तथा पुरुषस्य च स्नायुकण्डराधमन्यादिरूपा अवयवा अपरिसंख्येयाः। तेन अकार्त्स्न्येनाभिधानम्। अतो ये ये लोकपुरुषयोः स्थूला अवयवाः, ते ते सामान्यप्रतिपादनार्थमुच्यन्त इति वाक्यार्थः। ब्रह्मणो

तस्य च पुरुषस्य पृथिवी मूर्त्तिः, आपः क्लेदः, तेजोऽभिसन्तापो, वायुः प्राणो, वियच्छिद्राणि, ब्रह्म अन्तरात्मा।

यथा खलु ब्राह्मी विभूतिर्लोके तथा पुरुषेऽप्यान्तरात्मिकी विभूतिः। ब्रह्मणो विभूतिर्लोके प्रजापतिरन्तरात्मनो विभूतिः पुरुषे सत्त्वम्। यस्त्विन्द्रो लोके स पुरुषेऽहङ्कारः, आदित्यास्तु आदानं, रुद्रो रोषः, सोमः प्रसादो, वसवः सुखम्, अश्विनौ कान्तिः, मरुदुत्साहः, विश्वेदेवाः सर्व्वेन्द्रियाणि सर्व्वेन्द्रियार्थाश्च, तमो मोहो, ज्योतिर्ज्ञानम्। यथा लोकस्य सर्गादिस्तथा पुरुषस्य गर्भाधानं, यथा कृतयुगमेवं बाल्यं, यथा त्रेता तथा यौवनं, यथा द्वापरस्तथा स्थाविर्य्यं, यथा कलिरेवमातुर्य्यं, यथा युगान्तस्तथा मरणम्। इत्येवमेतेनानुमानेनानुक्तानामपि

षड्धातुकः पुरुष इत्यत आह—तस्य चेत्यादि। या सा षड्धातुके पुरुषे विश्वरूपेऽन्तरात्मनि पृथिवी तस्या एव विकारभूता पृथिवी, पुरुषेऽस्मिन मूर्त्तिः। यास्ता आपस्तासां विकाररूपा आपः, क्लेदः शरीरे। यत्तत्तेजो विश्वरूपे तद्विकारभूतं तेजः, शरीरे सन्तापः। यः स विश्वरूपे वायुस्तद्विकार एष शारीरः प्राणः। यत् तद्विश्वरूपे वियत्तद्विकारभूतवियदेतानि शरीरे छिद्राणि। यत् तद्विश्वरूपेऽव्यक्तमात्मा ब्रह्म तदेवायं शारीरो भूतात्मा विश्वरूप इति।

नन्वेतावता न लोकसम्मितः पुरुषो भवति। लोके हि ब्रह्मादयः सन्ति पुरुषे तु ते के वर्त्तन्त इत्यत आह—यथा खल्वित्यादि। लोके खलु यथा ब्राह्मी विभूतिराव्यक्तिकी विभूतिस्तथा पुरुषेऽप्यान्तरात्मिकी आव्यक्तिकी विभूतिः। तद् यथा—ब्रह्मणोऽव्यक्तस्य विभूतिर्यथा लोके प्रजापतिर्ब्रह्मादिस्तथान्तरात्मनो विभूतिः पुरुषे सत्त्वं मनः। यस्त्विन्द्र इत्यादि स्पष्टम्। अथानुक्तार्थमुपसंहरति—इत्येवमित्यादि। एतेनानुमानेनानुक्तानामपि लोक-

विवरणम्—'अव्यक्तम्' इति। तस्येत्यादिना पुरुषे षड्धातून् दर्शयति। मूर्त्तिः काठिन्यम्। लोके षड्धातवो व्यक्ता एवेति न विवेचिताः। ब्राह्मीति आत्मविशेषजगत्स्रष्टुर्विभूतिः। प्रजापतिर्ब्रह्म-

लोकपुरुषयोरवयवविशेषाणामग्निवेश! सामान्यं विद्यात् इति ॥ ४ ॥

पुरुषयोरवयवविशेषाणां मूर्त्तामूर्त्तानां सामान्यमग्निवेश! भवान् विद्यादिति। तथा च। "यावन्तः पुरुषे तावन्तो लोके" इत्यनेन ख्यापितं यद्यदत्र पुरुषे तत्त तत्रेति, तत्र पुरुषो यथा स्वाङ्गुलिमानेन चतुरशीत्यङ्गुलिमितस्तथा परमव्योम परमात्मा परमपुरुषः शिवोऽपि लोकाख्यः स्वाङ्गुलिमानेन चतुरशीत्यङ्गुलिमितः। तत्राधस्तात् पुरुषस्यापादनाभिपर्य्यन्तः पञ्चाशदङ्गुलिमितो भूर्लोको यथा प्रथमः पादस्तथामुष्यापि परमपुरुषस्येश्वरस्याधस्तात् पञ्चाशदङ्गुलिमितोऽव्यक्ता भूर्भुवःस्वर्महर्जनतपःसत्यविष्णुलोका इत्यष्टलोकी अनुत्तमतमो भूर्लोकः प्रथमः पादः। यथा चास्य पुरुषस्य नाभेरूर्द्ध्वं कण्ठपर्य्यन्तोऽन्तराश्चितुर्व्विंशत्यङ्गुलिमितो भुवर्लोको द्वितीयः पादस्तथामुष्य लोकाख्यस्य परमव्योम्नः परमेश्वरस्याव्यक्ताख्यादूर्द्ध्वं चतुर्व्विंशत्यङ्गुलिमितो देशोऽनुत्तमतमो भुवर्लोको द्वितीयः पादः। यथैव चास्य पुरुषस्य कण्ठादूर्द्ध्वं शिरोग्रीवं दशाङ्गुलं स्वर्लोकस्तृतीयः पादस्तथैव चामुष्य परमव्योम्नः परमपुरुषस्य लोकाख्यस्योर्द्ध्वं दशाङ्गुलमनुत्तमतमः स्वर्लोकस्तृतीयः पाद इति। त्रिपात् पुरुषो यथा तथा त्रिपात् परमपुरुषः परमव्योमलोकाख्यः शिवः। तत्राधस्तात् पञ्चाशदङ्गुले परमे व्योम्नि यानि पृथिव्यप्तेजोवाय्वाकाशाहङ्कारमहदव्यक्तानि तानि, तथा यानि च सप्तपातालाद्यं तत् पृथिव्यन्ते भूर्लोके नागादीनि मनुष्यादीनि, यानि चान्तरीक्षे भुवर्लोके चन्द्रार्कादीनि ज्योतींषि, यानि स्वर्लोके शक्रादीनि, यानि च महर्लोके यानि जनोलोके यानि तपोलोके विराड़ादीनि, यानि सत्यलोके ब्रह्मलोकवैकुण्ठशिवलोकादीनि, यानि चाव्यक्ताख्ये लोके प्रधानाख्यो ब्रह्मा क्षेत्रज्ञाख्यो विष्णुः कालाख्यो महाविष्णुश्चेत्येतानि तानि सर्व्वाणि परमव्योमरूपपृथिव्या नातिरिक्तानि अतत्स्थत्वात्। इत्यष्टलोकी अनुत्तमतमा पृथिवी यथा प्रथमः पादः परमव्योम तानि सर्व्वाण्यावृणोत्। तथास्य पुरुषस्य नाभेरधस्ताद् यावन्ति तानि नाधोदेहादतिरिक्तानि तात्स्थ्यादिति भूर्लोकः प्रथमः पादः। यदेव तत् परमव्योमाष्टलोकात्मकादव्यक्तादूर्द्ध्वं चतुर्विंशत्यङ्गुलमनुत्तमतमो भुवर्लोकः कौमारलोक उच्यते। तत्र पञ्च ब्रह्मपुरुषाः कुमाराः सदाशिवर्व्वेदादयो विद्या

नामा। आदानं ग्रहणम्। आदित्योऽप्यादददातीति, आदानमप्यादित्यः। इह च मनुप्रभृतिषु प्राजा-

चाविद्या च तानि सर्व्वाणि न ततोऽतिरिक्तानि तात्स्थ्यादिति। तत्परमव्योम तान्यावृणोत्। एवमस्य पुरुषस्य नाभेरूर्द्ध्वं कण्ठपर्य्यन्तो भुवर्लोकस्तत्र हृदि ये पञ्च प्राणाः पञ्चब्रह्मपुरुषास्ते ततो नातिरिक्ता इष्यन्ते अतात्स्थ्यात्। इत्येवमष्टलोकात्मकभूमिलोकसहितं कौमारलोकात्मकभुवर्लोकं सर्व्वतो वृत्वासौ परमव्योम परमपुरुष ऊर्द्ध्वं दशाङ्गुलमनावृतत्वेनातिशयेन आशिरोग्रीवं स्वर्लोकोऽतिष्ठदिति। तथास्य पुरुषस्यापि शिरोग्रीवं दशाङ्गुलमुत्तमाङ्गत्वेनातिष्ठदिति। तदुक्तं पुरुषसूक्ते। "सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्। सभूमिं सर्व्वतो वृत्वा अत्यतिष्ठद्दशाङ्गुलम्॥" इति। सभूमिं भूमिलोकसहितं भुवर्लोकं सर्व्वत ऊर्द्ध्वाधश्चतुर्दिशं बहिराभ्यन्तरञ्चावृत्य दशाङ्गुलं वपुरतिशयेनानावरणेनातिष्ठदिति। तथा तत्रैव पुरुषसूक्ते "एतावानस्य महिमा ततो ज्यायांश्च पूरुषः। पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि" इति यदुक्तम्, तत्र पाद इति औस्थाने सुश्छन्दसि। पादावित्यर्थः। विश्वा इति जसोड़ाश्छन्दसि। एतावानस्य त्रिपादस्य पुरुषस्य महिमा महत्त्वमस्य त्रिपादस्य द्वौ पादौ भूपादभुवःपादौ विश्वानि भूतानि। दिवि तृतीये पादे स्वर्लोके शिरोग्रीवे दशाङ्गुलेऽमृतं ज्योतिःस्वरूपं ब्रह्म वाग्रूपा गायत्री चतुर्थः पाद इति। तदमृतं पुरुषस्याप्यस्य मूर्द्ध्नि ब्रह्मरन्ध्रे सहस्रदलपद्मकर्णिकाभ्यन्तरे वर्त्तते इति त्रिलोकसम्मितः पुरुष इति। ननु च्छान्दोग्योपनिषदि चानयर्चा वस्तुत्वेन लोकपुरुषयोरैक्यं व्याख्यातम्। तद् यथा—गायत्री वा इदं सर्व्वं भूतं यदिदं किञ्च। वाग् वै गायत्री। वाग् वै सर्व्वं गायति च त्रायते च। या वै सा गायत्री। इयं वाव सा येयं पृथिवी। अस्यां हीदं सर्व्वभूतं प्रतिष्ठितमेतामेव नातिशीयते। या वै सा पृथिवी इयं वाव सा यदिदमस्मिन् पुरुषे शरीरमस्मिन् हीमे भावाः प्रतिष्ठिता एतदेव नातिशीयन्ते इति। १। या वै सा गायत्री। इयं वाव सा यद्वैतत् पुरुषे शरीरमस्मिन् हीमे प्राणाः प्रतिष्ठिताः एतदेव नातिशीयन्ते। यद्वैतत् पुरुषे शरीरमिदं वाव तत् यदिदमस्मिन्नन्तःपुरुषे हृदयमस्मिन् हीमे प्राणाः प्रतिष्ठिता एतदेव नातिशीयन्ते। २। सैषा चतुष्पदा षड्विधा गायत्री। तदेतदृचाभ्यनूक्तम्। एतावानस्य महिमा ततो ज्यायांश्च पूरुषः। पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवीति। ३। या वै सा गायत्री इयं वाव सा यद् वैतद् ब्रह्मेति। यद् वैतद् ब्रह्म। इदं वाव तद्योऽयं वहिर्द्धा

पत्यादिरूपता आगमसिद्धैव ज्ञेया। सर्व्वेन्द्रियार्थो विश्वेदेवा एव। सर्गादिरिति प्रलयानन्तरः कालः। अनुक्तानामित्यनेन मतिर्बृहस्पतिः, कामो गन्धर्व्व इत्यादि। सामान्यं तुल्यम्॥ २—४॥

पुरुषादाकाशः। यो वै स वहिर्द्धा पुरुषादाकाशोऽयं वाव स योऽयमन्तःपुरुषे आकाशः। यो वै सोऽन्तःपुरुष आकाशोऽयं वाव स योऽयमन्तर्हृदय आकाशः। यो वै सोऽन्तर्हृदय आकाशस्तदेतत् पूर्णमप्रवर्त्ति। पूर्णामप्रवर्त्तिनीं श्रियं लभते य एवं वेदेति। तस्य ह वा एतस्य हृदयस्य पञ्च देवसुषयः। स योऽस्य प्राङ् सुषिः स प्राणस्तच्चक्षुः स आदित्यस्तदेतत् तेजोऽन्नाद्यमित्युपासीत। तेजस्यन्नादो भवति य एवं वेदेति। १। अथ योऽस्य दक्षिणः सुषिः स व्यानस्तच्छ्रोत्रं स चन्द्रमाः। तदेतच्छ्रीश्च यशश्चेत्युपासीत। श्रीमान् यशस्वी भवति य एवं वेदेति। २। अथ योऽस्य प्रत्यङ् सुषिः सोऽपानः सा वाक् सोऽग्निस्तदेतद् ब्रह्मवर्च्चसमन्नाद्यमुपासीत। ब्रह्मवर्च्चस्यन्नादो भवति य एवं वेदेति। ३। अथ योऽस्योदङ् सुषिः स समानस्तन्मनः स पर्जन्यस्तदेतत् कीर्त्तिश्च व्युष्टिश्चेत्युपासीत। कीर्त्तिमान् व्युष्टिमान् भवति य एवं वेदेति।४। अथ योऽस्योर्द्धः सुषिः स उदानः स वायुः स आकाशस्तदेतदोजश्च महश्चेत्युपासीत। ओजस्वी महान् भवति य एवं वेदेति। ५। तत्र ते पञ्च ब्रह्मपुरुषाः स्वर्गस्य लोकस्य द्वारपाः। स य एवं पञ्च ब्रह्मपुरुषान् स्वर्गस्य लोकस्य द्वारपान् वेद, अथास्य कुले वीरो जायते। प्रतिपद्यते स्वर्गं लोकं य एतानेव पञ्च ब्रह्मपुरुषान् स्वर्गस्य लोकस्य द्वारपान् वेदेति। ३। अथ यदतः परो दिवो ज्योतिर्दीप्यतेऽपि स्वतः पृष्ठेषु सर्व्वतः पृष्ठेष्वनुत्तमतमेषु लोकेषु। इदं वाव तद् यदस्मिन्नन्तःपुरुषे ज्योतिः। तस्यैषा दृष्टिर्यदत्रैतस्मिञ्छरीरे संस्पर्शेनोष्मिमाणं विजानाति। तस्यैषा श्रुतिः। यत्रैतत् कर्णावपि गृह्य निनदमिव नदथुमिवाग्नेरिव ज्वलन उपशृणोति। तदेतद् दृष्टञ्च श्रुतञ्चेत्युपासीत। चक्षुष्यः श्रुतो भवति य एवं वेदेति। ४। अत्र ब्राह्मणे पादोऽस्य विश्वा भूतानीत्यनेनोक्तौ द्वौ पादौ या वै सा गायत्रीत्यारभ्य नातिशीयन्त इत्यन्तेन व्याख्यातौ। तत्रादेन नातिशीयन्त इत्यन्तेन प्रथमो भूपादः। द्वितीयेन नातिशीयन्त इत्यन्तेन हृदयं भुवःपादो द्वितीय इति। त्रिपादस्यामृतं दिवीत्यनेनोक्तौ द्वौ पादौ गायत्र्याः सैषा चतुष्पदेत्यादिना व्याख्यातौ। तत्र द्वारपान् वेदेत्यन्तेन द्युपादस्तृतीयो व्याख्यातः। अथ यदतः पर इत्यादिनामृतपादश्चतुर्थो व्याख्यातः। इति चतुष्पादा सैषा गायत्री। षड्विधा वाग्रूपा खल्ववर्णा प्रकृतिरेका ब्रह्म प्रजापतिं प्रति दर्शनयोग्यार्था वर्णवत्यः पञ्चधा। श्वेता रक्ता पीता कृष्णा अघोरा चेति षड्विधा। चेतोऽर्पणनिगदादुक्ता न तु वस्तुत इति। शारीरकसूत्रैश्चोक्तम्। ज्योतिश्चरणाभिधानात्। छन्दोऽभिधानान्नेति चेन्न

एवंवादिनं भगवन्तम् आत्रेयमग्निवेश उवाच, एवमेतत् सर्व्वमनपवादं यथोक्तं भगवता लोकपुरुषयोः सामान्यम्। किन्त्वेवास्य सामान्योपदेशस्य प्रयोजनमिति॥ ५॥

भगवानुवाच, शृण्वग्निवेश! सर्व्वलोकमात्मन्यात्मानञ्च सर्व्वलोके सममनुपश्यतः सत्या बुद्धिरुत्पद्यते। सर्व्वलोकं ह्यात्मनि पश्यतो भवत्यात्मैव सुखदुःखयोः कर्त्ता नान्य इति कर्म्मात्मकत्वाच्च। हेत्वादिभिरयुक्तः * सर्व्वलोकोऽहमिति विदित्वा ज्ञानं पूर्व्वमुत्थाप्यते अपवर्गाय। तत्र संयोगापेक्षी

चेतोऽर्पणनिगदात्। तथा हि दर्शनम्—भूम्यादिपादव्यपदेशाच्चैवमिति। इत्येवं लोकपुरुषयोर्देहप्रदेशविभागवस्तुविभागाभ्यां सामान्यमुक्तमिति॥ ४॥

गङ्गाधरः—एतत् श्रुत्वा यदुवाच तदाह—एवंवादिनमित्यादि। किं नु अस्येत्यादि प्रश्नः। भगवानुवाचेति तदुत्तरम्। तद् यथा—सर्व्वलोकमित्यादि। यदि लोकपुरुषयोः सामान्यं नोपदिश्यते तर्हि कथमग्निवेश! सममनुपश्यतः सत्या बुद्धिरुत्पद्यत इत्यादि। कस्मादित्यत आह—सर्व्वलोकमित्यादि। आत्मैव सुखदुःखयोः कर्त्ता नान्य इति बुद्ध्या किं स्यादित्यत आह—कर्म्मात्मकत्वाच्चेत्यादि। सुखदुःखयोः कर्त्ताहमिति कर्म्मात्मकत्वात् तु हेतुभिर्धर्म्माधर्म्मादिभिः कर्म्मजातैरयुक्तः सन् सर्व्वलोकोऽहमिति विदित्वापवर्गाय ज्ञानपूर्व्वं जनेन

चक्रपाणिः—अनपवादमित्यव्यवधानम्। किन्त्वस्येत्यादि। आयुर्व्वेदे किमप्येतत्साम्य-कथने प्रयोजनमित्यर्थः। कथं सत्या बुद्धिरुत्पद्यते इति अस्यां योजनायां किञ्चास्याः प्रयोजनमिति शेषो ज्ञेयः। यथा च लोकपुरुषसाम्यं सत्यबुद्धिजनकं भवति, तदाह—सर्व्वलोकं हीत्यादि। आत्मनि पश्यत इति आत्मनोऽभेदेन पश्यतः। 'आत्म'शब्देन षड्धातुसमुदायात्मकः पुरुष इहोच्यते। तेन यत्किञ्चिल्लोकगतं सुखदुःखजनकम्, तदप्यात्मस्वरूपमित्यनेन बाह्यलोकभूतमपि आत्मकृतमेव वैषयिकं नित्यदुःखानुयुक्तं हेयं सुखम्, तथा निसर्गाद्धेयं दुःखञ्च पश्यन् राग-द्वेषनिर्म्मुक्तः सन् सत्यज्ञानवान् भवतीति भावः। अथ सत्यज्ञानस्यापि किं प्रयोजनमित्याह—कर्म्मेत्यादि। लोकपुरुषसाम्यज्ञानेऽपि सत्यज्ञानस्यादावपवर्गानुष्ठानं प्रयोजनमिति वाक्यार्थः। अत्र कर्म्मात्मकत्वात् इति कर्म्माधीनत्वात्, हेत्वादयोऽग्रे वक्ष्यमाणाः। कर्म्मवशः सन् हेत्वादिभिर्युक्तोऽयमात्मा प्रवर्त्तते, कर्म्म, तत्त्वज्ञानात् प्रवृत्त्युपरमे सति कारणाभावान्नोपपद्यते। उक्तञ्च—"कर्म्म

* हेत्वादिभिर्युक्त इति चक्रः।

लोकशब्दः, षड्धातुसमुदायो हि सामान्यतः सर्व्वलोकः । तस्य च हेतुरुत्पत्तिर्वृद्धिरुपप्लवो वियोगश्च । तत्र हेतुरुत्पत्तिकारणम् । उत्पत्तिर्जन्म, वृद्धिराप्यायनम्, उपप्लवो दुःखागमः, वियोगः, षड्धातुविभागः स जीवापगमः प्राणनिरोधो भङ्गो लोकस्वभावः । तस्य मूलं सर्व्वोपप्लवानाञ्च प्रवृत्तिर्निवृत्तिरुपरमश्च । प्रवृत्तिर्दुःखं निवृत्तिः सुखमिति यज् ज्ञानमुत्पद्यते, तत् सत्यम् । तस्य हेतुः सर्व्वलोकसामान्यज्ञानमेतत् प्रयोजनं सामान्योपदेशस्येति ॥ ६ ॥

उत्थाप्यते। ननु कथं ज्ञानं पूर्व्वं भवेदित्यत आह—तत्रेत्यादि। संयोगापेक्षी लोकशब्दः। हि यस्मात् षड्धातुसमुदायः सामान्यतो लोकशब्दः। तस्य लोकस्य षड्धातुसमुदायस्य हेतुरुत्पत्त्यादिश्चास्ति। तत्र हेतुरुत्पत्तिकारणमित्यादि। तस्य मूलमिति। षड्धातुसंयोगस्य खलु लोकस्य पुरुषस्य च मूलं सर्व्वोपप्लवानां सर्व्वदुःखागमानाञ्च मूलं प्रवृत्तिर्वाङ्मनःशरीरारम्भः कर्म्म। तस्य षड्धातुसंयोगस्य जन्मनः सर्व्वोपप्लवानाञ्च निवृत्तिर्वाङ्मनःशरीरैरनारम्भः उपरमः, षड्धातुसंयोगस्योपरमः सर्व्वोपप्लवानाञ्चोपरमः। तस्मात् प्रवृत्तिर्वाङ्मनःशरीरारम्भो दुःखम्। निवृत्तिर्वाङ्मनःशरीरैरनारम्भः सुखं सुखकरमिति यज् ज्ञानमुत्पद्यते तज् ज्ञानं सत्यं, सा सत्या बुद्धिः। तस्य सत्यज्ञानस्योत्पत्तौ

त्यक्तप्रवृत्तेस्तु तत्त्वज्ञानाद्धि क्षीयते। नोपभोगात्'' इति। तदात्यन्तिककर्म्मक्षयात् आत्यन्तिककर्म्मफलाभावरूपो मोक्षो भवतीति भावः। संयोगापेक्षीति षड्धातुमेलके पुरुषरूपे वर्त्तते इत्यर्थः। 'लोक'शब्देनेह प्रकरणे लोकत इति कृत्वा पुरुष एवोच्यते जनजगद्रूपो लोकः। यतः हेत्वादयो येऽत्र कर्म्मपरवशत्वेन लोके वक्तव्याः, ते पुरुष एव सम्भवन्ति। 'सर्व्व'शब्देन सर्व्वप्राणिनो ग्राह्यान्त।

हेत्वादिपञ्चकं निर्द्दिश्य विभजते—तस्य हेतुरित्यादि। तस्य मूलमिति तस्य जीवापगमस्य कारणम्। सर्व्वोपप्लवानाञ्चेति सर्व्वसुखदुःखानाम्। प्रवृत्तिः रागद्वेषमूला प्रवृत्तिः। निवृत्तिरिति अप्रवृत्तिः। 'उपरम'शब्दस्तस्येत्यनेन सम्बध्यते तथा सर्व्वोपप्लवानाञ्च इत्यनेन सम्बध्यते। दुःखानाञ्चोपरमो निवृत्तिकृत एव, निवृत्तिजन्यत्वेन च कार्य्यकारणयोः अभेदोपचारादुपरमोऽपि निवृत्तिर्थः शब्दसामानाधिकरण्येनोच्यते। प्रवृत्तिर्दुःखमिति च कार्य्यकारणयोरभेदोपचारात् बोद्धव्यम्। सत्यज्ञानस्वरूपमाह—इति यज ज्ञानमित्यादि। इतीति

अथाग्निवेश उवाच, किंमूला भगवन् प्रवृत्तिः, निवृत्तौ वोपाय इति ॥ ७ ॥

भगवानुवाच। मोहेच्छाद्वेषकर्म्ममूला प्रवृत्तिः। तज्जा ह्यहङ्कारसङ्गसंशयाभिसंप्लवाभ्यवपात-विप्रत्ययविशेषानुपायास्तरुणमिव द्रुममतिविपुलशाखास्तरवोऽभिभूय पुरुषमवतत्यैवोत्तिष्ठन्ते, यैरभिभूतो न सत्तामतिवर्त्तते। तत्रैवं जाति-रूप-वित्त-बुद्धि-शील-विद्याभिजन-वयो-वीर्य्य-प्रभावसम्पन्नोऽहमित्यहङ्कारः। यन्मनोवाक्कायकर्म्म नापवर्गाय, स सङ्गः।

हेतुः सर्व्वलोकसामान्यस्यात्मनि ज्ञानम्। एतज् ज्ञानमेव लोकपुरुषयोः सामान्योपदेशस्य प्रयोजनमिति ॥ ५। ६ ॥

गङ्गाधरः—तत् श्रुत्वा यदुवाच तदाह—अथेत्यादि। प्रवृत्तिः किंमूला निवृत्तौ क उपाय इति ॥ ७ ॥

गङ्गाधरः—तदुत्तरमाह—भगवानित्यादि। मोहादिचतुर्म्मूला प्रवृत्तिः। मोहादयो हि ज्ञातारं प्रवर्त्तयन्ति पुण्ये पापे वा। पुण्यपापञ्च कर्म्म प्रवर्त्तयति। कथमित्यत आह—तज्जा हीत्यादि। मोहादिभ्यो जायन्तेऽहङ्कारादयः। ततः किं स्यादित्यत आह—तरुणमिवेत्यादि। मोहादिजा अहङ्कारादयः खल्वतिविपुलशाखास्तरवो यथा तरुणं द्रुममभिभूयावतत्योत्तिष्ठन्ते तथा पुरुषमभिभूयावतत्योत्तिष्ठन्ते। यैर्मोहादिजैरहङ्कारादिभिरभिभूतः पुरुषो न सत्तां प्रवृत्तेर्हेतुमतिवर्त्तते नातिक्रामति। अहङ्कारादिः पुनः कीदृश इत्यतस्तान् विवृणोति—तत्रैवमित्यादि। जातिरूपादिसम्पन्नोऽहमित्यभिमानोऽहङ्कारः।

पूर्व्वप्रत्यवमर्षकम्। एतस्मिन् सत्यज्ञाने लोकपुरुषसामान्यज्ञानस्य हेतुत्वं दर्शयन्नाह—तस्येत्यादि ॥ ५। ६ ॥

चक्रपाणिः—प्रवृत्तेः संसाररूपायाः तथा निवृत्तेर्मोक्षरूपायाः कारणमुपायञ्च पृच्छति—किंमूलेत्यादि। मोहेत्याद्युत्तरम्। मोहेच्छाद्वेषकर्म्ममूलेति मोहान्मिथ्याज्ञानस्वरूपादिच्छाद्वेषौ, तयोश्च धर्म्माधर्म्मरूपं कर्म्म, तच्च मूलं संसारस्येत्यर्थः। कथमेते मोहादयः संसारकारणमित्याह—तज्जा हीत्यादि। अत्र चाहङ्कारादौ यथायोग्यतया मोहादीनां कारणत्वं ज्ञेयम्। अहङ्कारादयश्चाष्टावग्रे वक्ष्यमाणा ज्ञेयाः। अवतत्येति व्याप्येति। न सत्तामतिवर्त्तते इति प्रवृत्तिहेतुं नातिक्रामति। अत्रोक्तमहङ्कारं विवृणोति—तत्रैवमित्यादि। जात्यादिभिः प्रभावान्तैः सम्पन्न

कर्म्मफलमोक्षपुरुषप्रेत्यभावादयः सन्ति न वेति संशयः। सर्व्वास्ववस्थासु अनन्योऽहमहं स्रष्टा स्वभावसंसिद्धोऽहमहं शरीरेन्द्रियबुद्धिस्मृतिविशेषराशिरिति ग्रहणमभिसंप्लवः। मम मातृपितृभ्रातृदारापत्यबन्धुमित्रभृत्यगणो गणस्याहमित्यभ्यवपातः। कार्य्याकार्य्यहिताहितशुभाशुभेषु विपरीताभिनिवेशो विप्रत्ययः। ज्ञाज्ञयोः प्रकृतिविकारयोः प्रवृत्तिनिवृत्त्योश्च असामान्यदर्शनं विशेषः *। प्रोक्षणानशनाग्निहोत्रत्रिःसवनाभ्युक्षणावाहनयजनयाजनयाचनसलिलहुताशनप्रवेशनादयः समारम्भाः प्रोच्यन्ते ह्यनुपायाः। एवमयमधीधृतिस्मृतिरहङ्काराभिनिविष्टः संसक्त-

यद् यन्मनोवाक्कायकर्म्म नापवर्गाय क्रियते स सङ्गः, यद्यदपवर्गाय कर्म्म तत् तन्न सङ्गः। कर्म्मफलमस्ति न वा मोक्षोऽस्ति न वा पुरुष आत्मास्ति न वेत्येवमादिज्ञानं संशयः। सर्व्वावस्थासु अहमनन्यो ब्रह्मणोऽन्यो नाहमहं स्रष्टाहं स्वभावसंसिद्ध एवाहं शरीरादिमान राशिरिति ज्ञानमभिसंप्लवः। ममेयं मातायं पितेत्येवमादिज्ञानमभ्यवपातः। कार्य्यादिषु विपरीताभिनिवेशो विप्रत्ययः। ज्ञाज्ञयोर्विद्वन्मूर्खयोः सामान्यादर्शनं प्रकृतिविकारयोश्च प्रवृत्तिनिवृत्त्योश्चैवमादिद्वन्द्वयोः सामान्यादर्शनं विशेष इति। प्रोक्षणानशनाग्निहोत्रादयः समारम्भाः कर्म्माणि स्वर्गोपाया अपि मोक्षेऽनुपायाः प्रोच्यन्ते। इत्येवमयं पुरुषः खलु धीधृतिस्मृति-

स्त्रष्टोऽहमिति ज्ञानमहङ्कारः। यदित्यादि सङ्गविवरणम्। कर्म्मफलादयः सन्ति न वेति यज् ज्ञानं तत् संशयः। अभिसंप्लवमाह—सर्व्वेत्यादि। (आत्मनोऽभिमत आत्मना आत्मन्यभिसंप्लव आत्मना आत्मगोचरता आत्मबुद्धिरित्यर्थः।) सर्व्वावस्थास्विति सर्व्वासु शरीरावस्थासु ज्ञातसमुदायरूप एवाहमस्मीति यज् ज्ञानम् तदिह ज्ञेयम्। परमात्मनस्तु सर्व्वावस्थाशून्यत्वमिति यज् ज्ञानं तत् सम्यग्ज्ञानमेव। एवमहं स्रष्टाहं स्वभावसंसिद्ध इत्यत्रापि शरीरवान् एवाहङ्कारविषयो ज्ञेयः। अहं शरीरेन्द्रियबुद्धिविशेषराशिरित्यत्र शरीरादिष्वचेतनेष्वहङ्कारास्पदत्वेन चेतनाभिमानो विरुद्ध इति ज्ञेयम्। ममेत्यादिना अभ्यवपातमाह—अभ्यवपातः परात्मता, अनात्मीयेन ममता, कार्य्येत्यादिना विप्रत्ययं ब्रूते। विपरीताभिनिवेशो विपर्य्ययेण ज्ञानम्, यथा—कार्य्ये अकार्य्यमकार्य्ये कार्य्यमित्यादि। ज्ञाज्ञयोरित्यादिना अविशेषमाह—अविशेषः

* सामान्यदर्शनमविशेष इति चक्रसम्मतः पाठः।

संशयोऽभिप्लुतबुद्धिरभ्यवपतितोऽन्यथादृष्टिर्विशेषग्राही विमार्गगतिर्निवासवृक्षः सत्त्वशरीरदोषमूलानां मूलं सर्व्वदुःखानां भवति। एवमहङ्कारादिभिर्दोषैः भ्राम्यमाणो नातिवर्त्तते प्रवृत्तिम्, सा मूलमघस्य। निवृत्तिः अपवर्गस्तत् परं प्रशान्तं तदक्षरं तद् ब्रह्म स मोक्षः ॥ ८ ॥

तत्र मुमुक्षूणामुदयनानि च सर्व्वाण्यनुव्याख्यास्यामः।

हीनः सन्नहङ्काराभिनिविष्टः संसक्तसंशयोऽभिप्लुतबुद्धिरभ्यवपतितश्चान्यथादृष्टिश्च विशेषग्राही विमार्गगतिश्च सन् सत्त्वशरीरयोर्दोषाणां रजस्तमोवातपित्तकफानां मूलानि यान्यसात्म्येन्द्रियार्थसंयोगप्रज्ञापराधपरिणामाख्यानि निदानानि तेषां मूलं कारणं भवति सर्व्वदुःखानाञ्च मूलं भवति। अथवा सत्त्वशरीरदोषा मूलानि येषां तेषां सर्व्वदुःखानां मूलं भवति। कथमित्यत आह—एवमित्यादि। एवमनेन प्रकारेण पुमानहङ्कारादिभिर्दोषैर्भ्राम्यमाणः प्रवृत्तिं वाङ्मनःशरीरारम्भं नातिवर्त्तते। सा प्रवृत्तिरघस्याशुभस्य मूलम्। इति किंमूला प्रवृत्तिरिति प्रश्नस्योत्तरमुक्त्वा निवृत्तौ वोपायः क इत्यस्योत्तरमाह—निवृत्तिर्वाङ्मनःशरीरानारम्भः खल्वपवर्गोऽपवर्गजनकत्वादिति या सा निःशेषा निवृत्तिस्तत् परं प्रशान्तं तदक्षरं तद् ब्रह्म ब्रह्मरूपेणाभिनिष्पत्तिहेतुत्वात्। स मोक्ष इति सर्व्वेभ्यो बन्धेभ्यः प्रमोचनहेतुत्वात् ॥ ८ ॥

गङ्गाधरः—निवृत्तिमुक्त्वा तत्रोपायान् वक्तुमाह—तत्रेत्यादि। तत्र निवृत्तौ

विशेषाप्रतीतिः। विप्रत्ययस्तु विशेषाणां विपर्य्ययेण ग्रहणमिति भेदः। प्रोक्षणेत्यादिना अनुपायमाह। अनुपाया इति अन्योपायाः सन्तोऽपि परमपुरुषार्थे मोक्षे अनुपायाः। त्रिःसवनं त्रिः सम्यक् स्नानम्। सम्प्रति अहङ्कारादीनां धीधृतिस्मृतिविभ्रंशमूलत्वेनाधीधृतिस्मृत्यभिधानपूर्व्वकं संसाररूपनित्यानुबन्धशरीरमानसदुःखकारणत्वं व्युत्पादितम्। अहङ्कारादीन् संक्षिप्याप्याह—एवमित्यादिना। निवासवृक्ष इव निवासवृक्षः। तेन यथा निवासवृक्षः पक्षिणां नित्यमाश्रयो भवति, एवमहङ्कारादियुक्तोऽपि रोगस्य निवासो भवतीति दर्शयति। भ्राम्यमाण इति पुनःपुनरपि शरीरान्तराणि नीयमानः। नातिवर्त्तते प्रवृत्तिमिति संसारं न त्यजति। एवं मोहेच्छाजन्यकर्म्ममूलतां प्रवृत्तेर्दर्शयित्वा प्रवृत्तेरपि कर्म्मकारणतामाह—सा च मूलमघस्येति। प्रवृत्तिरपि धर्म्माधर्म्मरूपस्य मूलम्। इह च धर्म्माधर्म्माविशेषेण संसारदुःखकारणतया 'अघ'शब्देनोक्तौ। सम्प्रति निवृत्तावुपायं वक्तुं निवृत्तिमेव तावदुपादेयताप्रतिपादकपर्य्यायैराह—निवृत्तिरित्यादि ॥ ७।८ ॥

चक्रपाणिः—उदित्यर्थे मोक्ष इति, उदयनानि हि मोक्षोपाया इत्यर्थः। लोकदोषदर्शिन

तत्र * मुमुक्षोरादित एवाचार्य्याभिगमनं, तस्योपदेशानुष्ठानम्, अग्नेरेवोपचर्य्या, धर्म्मशास्त्रानुगमनं, तदर्थावबोधस्तेनावष्टम्भः, तत्र यथोक्ताः क्रियाः। सतामुपासनम्, असतां परिवर्ज्जनं, न सङ्गतिर्दुर्ज्जनेन, सत्यं सर्व्वभूतहितमपरुषमनतिकाले परीक्ष्य वचनम्, सर्व्वप्राणिषु चात्मनीवावेक्षा, सर्व्वासामस्मरणम् असंकल्पनमप्रार्थनाऽनभिभाषणञ्च स्त्रीणाम्, सर्व्वपरिग्रहत्यागः

मुमुक्षूणां बन्धान्मोक्तुमिच्छूनामुदयनानि चानुव्याख्यास्यामः निवृत्ताबुपाया-ननुव्याख्यास्याम इति। तद् यथा—तत्रेत्यादि। तत्र सर्व्वबन्धेभ्यो मोक्तुमिच्छोर्मुमुक्षोरादितः प्रथमत आचार्य्याभिगमनम्। यः कार्त्स्न्येन मोक्षोपायानुपदेष्टुं प्रभवति तमाचार्य्यमुपगम्य मुमुक्षुस्तस्याचार्य्यस्य मोक्षे य उपदेशस्तस्यानुष्ठानं कर्म्मकरणम्। मोक्षायाचार्य्येण यदुपदेष्टव्यं तदुपदिष्टस्य कर्म्मणोऽनुष्ठानमाचरणम्। अग्नेरेवोपचर्य्या। वैतानिकवैवाहिकस्याग्नेरेवोप-चर्य्या सेवा। धर्म्मशास्त्रानुगमनं मन्वादिस्मृतिशास्त्रानुगतकर्म्मकरणम्। तदर्थावबोधो धर्म्मशास्त्रार्थस्यावबोधः गुरुणा व्याख्यातस्यार्थस्य धारणम्। तेन धर्म्मशास्त्रार्थधारणेनावष्टम्भः चित्तावरुद्धता। ततस्तत्र धर्म्मशास्त्रार्थज्ञाता क्रियाचर्य्या। ततः सतामुपासनं वर्ज्जनञ्चासतामसाधूनां पुरुषाणां विशेषेण दुर्ज्जनेन सह सङ्गतिः सङ्गो न विधेया। सत्यं वचनं वक्तव्यं, न चाहितं न वा कस्यचिद्धितं कस्यचिदहितं परन्तु सर्व्वभूतहितं न चापि परुषं न निष्ठुरम्, अनतिकाले वाक्यकालमनतिक्रम्य पुरुषं सत्पुरुषमेव लक्षीकृत्य काले वाक्यप्रयोगार्हसमये न त्वकाले परीक्ष्य यद्वचनं यदुपयुक्तं तथा रूपेण परीक्ष्य वचनं वक्तव्यमित्यर्थः। अवेक्षा दृष्टिः, सा च समा न तु विषमा। सर्व्वासां स्त्रीणामस्मरणं स्मृतिः पूर्व्वानुभूतासम्प्रमोषः, असङ्कल्पनं मनसा चिन्तादिक्रियावर्ज्जनम्, अप्रार्थनमयाच्ञा अनभिभाषणञ्च। स्त्रीणा-मित्यनेन सर्व्वत्रान्वयः। ततः सर्व्वो भोजनाद्यर्थपरिग्रहस्तस्यापि त्यागः।

इति हेतुगर्भविशेषणम्। तेन नित्यं दुःखाक्रान्तलोकदर्शनाद् विरक्तस्य सत इति दर्शयति। आचार्य्य इह मोक्षशास्त्रोपदेष्टा। तेनावष्टम्भ इति शास्त्रावबोधेन धैर्य्यं करणीयम्, मनागपि तत्र कथन्ता न कर्त्तव्या इत्यर्थः। यथोक्ता क्रिया कर्त्तव्या इति शेषः। आत्मनीवावेक्षा चेति यथा आत्मनि

* लोकदोषदर्शिन इत्यधिकं क्वचित् पठ्यते।

कौपीनं प्रच्छादनार्थं धातुरागनिवसनं, कन्थासीवनहेतोः सूचीपिप्पलकं, शौचाधानहेतोर्जलकुण्डिका, दण्डधारणं, भैक्ष्यचर्य्यार्थं पात्रं, प्राणधारणार्थमेककालमग्राम्यो यथोपपन्न एवाभ्यवहारः, श्रमापनयनार्थं शीर्णशुष्कपर्णतृणास्तरणोपधानं, ध्यानहेतोः कायनिबन्धनं, वनेष्वनिकेतनिवासः, तन्द्रानिद्रालस्यादिकर्म्मवर्ज्जनं, सर्व्वेष्विन्द्रियार्थेष्वनुरागोपतापनिग्रहः, सुप्तस्थितगतप्रेक्षिताहार-विहार-प्रत्यङ्गचेष्टादिकेष्वारम्भेषु स्मृतिपूर्व्विका प्रवृत्तिः, सत्कारस्तुतिगर्हावमानक्षमित्वं, क्षुत्पिपासायासश्रम-

प्रच्छादनार्थं परिधानार्थं कट्यतिरिक्ताङ्गाच्छादनार्थञ्च धातुरागनिवसनं गैरिकमृद्रञ्जितं कौपीनं वस्त्रचीरम्। तत्र परिधानार्थं कौपीनमात्रं सर्व्वाङ्गाच्छादनार्थं कन्था कार्य्या। सुतरां कन्थासीवनहेतोः सूचीपिप्पलकं सूचीरक्षणार्थं फलकोषादिरूपं पात्रम्। शौचश्चाधानश्च तयोर्हेतोः शौचाधानहेतोर्जलकुण्डिका जलकमण्डलुः, आधानं स्खलनरक्षा तदर्थं दण्डधारणम्, भैक्ष्यचर्य्यार्थं पात्रं स्थाली, एककालं नाधिकवारमग्राम्यो ग्राम्याहार ओदनपूपसूपमांसमत्स्यदधिघृतदुग्धपायसादिस्तद्व्यतिरिक्तः फलमूलरूपः यथोपपन्नः यदृच्छया यल्लभ्यते तदभ्यवहारः। शीर्णं यदृच्छया गलितं शुष्कं पर्णं तृणञ्च तत्कृतास्तरणोपधानमास्तरणं शय्या उपधानं शिरोऽधः कृतपिण्डिताकारः। कायनिबन्धनम् योगासनम्। वनेषु न तु ग्रामादिषु अनिकेतवासः कुटीरादिनिकेतनहीनवासः वृक्षादितलादौ वासः। इन्द्रियार्थेषु शब्दादिषु अभीष्टेष्वनुरागः अनभीष्टेषूपतापस्तयोर्निग्रहः। तर्हि किमनभीष्टेष्वनुराग उपतापोऽभीष्टेष्विति चेन्न। इष्टानिष्टेष्वर्थेष्वनुरागोऽपि न कार्य्य इत्यर्थात्। सुप्तादिष्वारम्भेषु स्मृतिपूर्व्विका न तु यथाकथञ्चित् प्रवृत्तिः, सत्कारः पूजनं

अकार्य्यतावुद्धिस्तथा सर्व्वप्राणिषु कर्त्तव्या। असङ्कल्पनमित्यभावनम्। प्रच्छादनार्थं कटिवेष्टनार्थम्। किंवा कौपीनार्थं प्रच्छादनार्थञ्च। सूचीपिप्पलकं सूचीस्थापनपात्रम्। भैक्ष्यचर्य्यार्थं पात्रं भिक्षापात्रमित्यर्थः। प्राणयात्रार्थमित्यनेन यावन्मात्रेणाहारेण प्राणयात्रा भवति, तावन्मात्र आहारः कर्त्तव्यः, न तु रागादिति दर्शयति। एवं श्रमापनयनार्थमित्यादावपि तावन्मात्रप्रयोजनता व्याख्येया। कायनिबन्धनं योगपट्टम्। अनिकेतवास इति अगृहवासः। एतेन वनेऽपि न गृहं कृत्वा स्थातव्यमिति दर्शयति। इन्द्रियार्थेषु गन्धादिषु अनुरागस्य तथोपतापस्य द्वेषरूपस्य

शीतोष्णवातवर्षासुखदुःखसंस्पर्शसहत्वम्। शोक-दैन्य-द्वेषमद-मानलोभरागेर्ष्याभयक्रोधादिभिरसम्बलनम्, * अहङ्कारादिषूप-सर्गसंज्ञा। लोकपुरुषयोः स्वर्गादिसामान्यावेक्षणं, कार्य्यकाला-त्ययभयं, योगारम्भे सततमनिर्व्वेदः सत्त्वोत्साहः, अपवर्गाय धीधृतिस्मृतिबलाधानं, नियमनमिन्द्रियाणां चेतसि, चेतस आत्मन्यात्मनश्च, धातुभेदेन शरीरावयवसंख्यानमभीक्ष्णं, सर्व्वं

स्तुतिः प्रशंसा, गर्हा निन्दा, अवमानमवज्ञा, तेषु क्षमित्वमुदासीनता। यदि कश्चित् सत्करोति तेन हृष्टो न स्यात्, यदि कश्चित् स्तौति तेनापि नाह्लादितः स्यात्, यदि कश्चिन्निन्दति वावजानीते, न च ताभ्यां दुःखी स्यात्, न शोकाद्य-सम्बलनं शोकादिसम्वलितत्वराहित्यम्। अहङ्कारादिष्वभिमानादिषु उपसर्ग-संज्ञा उपसर्गत्वेन ज्ञानम्। स्वर्गादिसामान्यावेक्षणं स्वर्लोके स्वर्गादिपूरुषेऽपि गर्भाधानादौ स्वर्गादि इत्येवमुक्तं यल्लोकपुरुषयोः सामान्यं तस्यावेक्षणं दर्शनम्। कार्य्यकालात्यये भयं मोक्षार्थमुपयुक्तकार्य्याणां कालवर्त्तने तदत्यये तदतीतत्वे भाविनि भयं विधेयम्। अनिर्व्वेद इति। वैराग्यादितो मनःखेदो निर्व्वेदः। योगारम्भे सततवैराग्यादिना मनःखेदो न कार्य्यः, किन्तु योगारम्भे सततं सत्त्वोत्साहो मनस उत्साहः। धीधृत्यादीनां चतुर्णामाधानं धारणं पोषणञ्च। इन्द्रियाणां नियमनं शब्दाद्यर्थेभ्यो निवर्त्त्येन्द्रियाणां श्रोत्रादीनां चेतसि मनसि नियमनं धारणं कार्य्यम्। चेतसश्च चिन्त्यादिभ्यो निवर्त्त्य स्वस्मिन्नेव चेतसि नियमनं धारणं कार्य्यम्। आत्मनश्च चिन्त्यसङ्कल्प्यादिशब्दादि-विषयेष्विच्छाद्वेषसुखदुःखप्रयत्नबुद्धिभ्यो निवर्त्त्यैवात्मन्येव नियमनं धारणं

निग्रहः कर्त्तव्यः। स्मृतिपूर्व्विका प्रवृत्तिरिति कोऽहम्, किमर्थं रागत्यागादिकमारभ्यते इत्यादि स्मर्त्तव्यमित्यर्थः। सत्कारः पूजा, सत्कारे स्तुतौ च सत्यामहृष्टत्वम्। यथा गर्हायामवमाने च समदर्शित्वम्, तथा सत्कारादिष्वपि ज्ञेयम्। क्षुधादिषु चानुद्वेगः क्षुधादिसहत्वम्। असंवसनम् असंवासः। अहङ्कारादयोऽष्टाविहैवोक्ताः। उपसर्गसंज्ञेति अनर्थहेतुत्वभावना। लोकपुरुषयोः स्वर्गादिसामान्यावेक्षणमिति यथा इहैव लोकपुरुषयोरादिसर्गतः प्रकृतिसामान्यमुक्तं, तथावेक्षणम् इत्यर्थः। कार्य्यकालात्ययभयमिति मोक्षानुगुणकर्त्तव्यस्य कालातिपातभयं करणीयम्। नियमनम् इन्द्रियाणां चेतसि इन्द्रियाणि बाह्यविषयनिवृत्तानि मनस्येव नियतानि कर्त्तव्यानि। चेतसः चिन्त्यादिविषयेभ्यो व्यावृत्तस्य परमात्मन्यात्मज्ञानार्थं नियमनं कर्त्तव्यम्। आत्मनश्चात्मनि

* असंवसनमिति चक्रः।

कारणवद् दुःखमस्वमनित्यमित्यभ्युपगमः । सर्व्वप्रवृत्तिषु दुःख-संज्ञा, सर्व्वसंन्यासे सुखमित्यभिनिवेशः । एष मार्गोऽपवर्गाय, अतोऽन्यथा बध्यते । इत्युदयनानि व्याख्यातानि ॥ ९ ॥

भवन्ति चात्र ।

एतैरविमलं सत्त्वं शुद्ध्युपायैर्विशुध्यति ।
मृज्यमान इवादर्शस्तैलचेलकचादिभिः ॥
ग्रहाम्बुदरजोधूम-नीहारैरसमावृतम् ।
यथार्कमण्डलं भाति भाति सत्त्वं तथामलम् ॥

कार्य्यम् । धातुभेदेन त्वङ्मांसरसरक्तादिभेदेन शरीरावयवसंख्यानं शरीरावयवानां ज्ञानं कार्य्यम् । सर्व्वं कारणवद् दुःखमित्यभीक्ष्णं कार्य्यम् । सर्व्वमस्वमात्मव्यतिरिक्तं यदिदं किञ्चित् तत्सर्व्वमनित्यमित्यभ्युपगमः । सर्व्वप्रवृत्तिषु वेदोक्तविधिविहिताविहितेषु कर्म्मसु धर्म्माधर्म्मसाधनेषु या या प्रवृत्तिस्तासु दुःखसंज्ञा दुःखत्वेन ज्ञानम्, सर्व्वसंन्यासे सर्व्वपरित्यागे सुखमिति द्वयमभिनिवेशः स च कार्य्यः । अतोऽन्यथा उक्तेभ्योऽपीभ्य आचार्य्याभिगमनादिभ्योऽन्यथा बध्यते बद्धो भवति पुरुषः । इत्युदयनानि निवृत्तावुपायाः ॥ ९ ॥

<u>गङ्गाधरः</u>—एषामुपायानां फलं वक्तुमाह—भवन्तीत्यादि । एतैरिति । एतैराचार्य्याभिगमनादिभिः सर्व्वैः शुद्ध्युपायैर्मनसः शुद्धेरुपायैरविमलमनिर्म्मलं सत्त्वं मनः शुद्ध्यति निर्म्मलं भवति । क इवेत्यत आह दृष्टान्तम्—मृज्यमान इत्यादि । दृष्टान्तान्तरमाह—ग्रहेत्यादि । ग्रहो राहुकेतुरूप आच्छादकः । असमावृतं सम्यगनाच्छादितं तथामलं तद्वदमलं निर्म्मलं सत् सत्त्वं मनो भाति ।

नियमनमिति योजना । तेन आत्मापीन्द्रियार्थविषयेभ्यो व्यावर्त्त्यात्मनि मन्तव्यः । धातुभेदेन शरीरावयवसंख्यानमिति शरीरस्य रसमलस्नाय्वादिरूपतया ज्ञानम् । शरीरं हि रसमलस्नाय्वादिरूपतया भाव्यमानं वैराग्यहेतुर्भवति, यथा—"मज्जाऽस्थ्ना रजसा प्लीह्ना यकृता शकृतापि च । पूर्णोः स्नायुशिरा याः स्युस्ताः स्त्रियश्चर्म्मपेशिकाः ॥" इत्यादिका वैराग्यभावना । कारणवदित्यनेन नित्यात्मव्यतिरिक्तं सर्व्वमनित्यं दर्शयति । दुःखमिति दुःखहेतुः । अस्वमिति आत्मव्यतिरिक्तम् अनात्मीयञ्च । सर्व्वसंन्यासेष्विति सर्व्वप्रवृत्त्युपरमेषु ॥ ९ ॥

<u>चक्रपाणिः</u>—अविमलमिति क्रियाविशेषणम् । ग्रहो राहुः । सत्त्वस्य पञ्चेन्द्रियाणि

ज्वलत्यात्मनि संरुद्धं तत् सत्त्वं संवृतायने ।
शुद्धः स्थिरः प्रसन्नार्च्चिर्दीपो दीपाशये यथा॥ १० ॥
शुद्धसत्त्वस्य या शुद्धा सत्या बुद्धिः प्रवर्त्तते ।
विद्या सिद्धिर्मतिर्मेधा प्रज्ञा ज्ञानञ्च सा मता ॥
यया भिनत्त्यतिबलं महामोहमयं तमः ।
सर्व्वभावस्वभावज्ञो यया भवति निस्पृहः ॥
योगं यया साधयते साङ्ख्यः सम्पद्यते यया ।
यया नोपैत्यहङ्कारं नोपास्ते कारणं यया ॥

ननु कुत्र भातीत्यत आह—ज्वलतीत्यादि । संवृतायने संवृतानि अयनानि श्रोत्रादीन्द्रियच्छिद्ररूपाणि वहिर्गमनकर्म्माणि यस्य तस्मिन्नात्मनि, तत् शुद्धसत्त्वं मनः संरुद्धं वहिरनिगच्छेत् अन्तःसंरुद्धं सत् ज्वलति दीप्यते । क इवेत्यत आह—शुद्ध इत्यादि । दीपाशये प्रदीपसंरक्षणाधाने यदि संवृतच्छिद्रे दीपं स्थापयति तदा स दीपः शुद्धो धूमाद्याविलतारहितः सन् स्थिरो वातादिभिश्चाचञ्चलः सन् प्रसन्नार्च्चिश्च सन् यथा प्रज्वलति तथा तत् सत्त्वमित्यर्थः ॥ १० ॥

गङ्गाधरः—ननु सत्त्वे शुद्धे किं स्यादित्यत आह—शुद्धेत्यादि । शुद्धसत्त्वस्य शुद्धं सत्त्वं मनो यस्य तस्य पुरुषस्य, शुद्धा निर्म्मला सत्या च बुद्धिः प्रवर्त्तते, या च सा शुद्धा सत्या बुद्धिः सा विद्या सा सिद्धिः सा मतिः सा मेधा सा प्रज्ञा सा ज्ञानञ्च मता । ननु कथं सा बुद्धिर्विद्यादिरुच्यते इत्यत आह—ययेत्यादि । यया शुद्धया सत्यया बुद्ध्या अतिबलम् अतिशयबलवत् महामोहमयं तमो भिनत्ति नाशयति योगी । यया च शुद्धया सत्यया बुद्ध्या निस्पृहः सन् सर्व्वभावाणां स्वभावज्ञो भवति । यया च बुद्ध्या योगं साधयते । यया च बुद्ध्या पुरुषः साङ्ख्यः सङ्ख्यया तत्त्वज्ञानेन वर्त्तते यः स साङ्ख्यः

ज्ञानावरकाणि भवन्तीति कृत्वा सूर्य्यस्यापि पञ्चैव महादयश्चावरका उक्ताः । ज्वलतीति केवलात्मज्ञानजनकत्वेन प्रकाशते । आत्मनि संरुद्धमिति इन्द्रियेभ्यो व्यावृत्यात्मनियतम् । संवृतायन इति आत्मपक्षेऽपि संवृतेन्द्रियरूपच्छिद्रमात्मनि ज्ञेयम् । दीपाशयो दीपधारिका गृहं वा ॥ १० ॥

चक्रपाणिः—शुद्धसत्त्वमभिधाय तज्जन्यां मोक्षसाधनत्वेनात्यर्थोपादेयां सत्यां बुद्धिं विविधैः उपयुक्तैः स्वरूपैराह—शुद्धेत्यादि । महामोहोऽहमादि मिथ्याज्ञानम् । निस्पृह इति उपाविरंसाजिहासाशून्यः । योगमिति विषयव्यावृत्तस्य मनस आत्मन्येव परं योगम् । सङ्ख्या तत्त्वज्ञानम्,

यया नालम्बते किञ्चित् सर्व्वं संन्यस्यते यया।
याति ब्रह्म यया नित्यमजरं शान्तमक्षरम्॥ ११ ॥
लोके वितत-*-मात्मानं लोकञ्चात्मनि पश्यतः।
परावरदृशः शान्तिर्ज्ञानमूला न नश्यति॥
पश्यतः सर्व्वभूतानि सर्व्वावस्थासु सर्व्वदा।
ब्रह्मभूतस्य संयोगो न शुद्धस्योपपद्यते॥ १२ ॥

सम्पद्यते भवति। यया चाहङ्कारमभिमानाद्यहङ्कारकर्म्म नोपैति। यया च कारणं पुनर्भवहेतुं नोपास्ते। यया न किञ्चिदपि नालम्बते। यया च सर्व्वं संन्यस्यते। यया च ब्रह्म निर्व्वाणं याति प्राप्नोति। ब्रह्म तु नित्यम् अजरं शान्तमक्षरञ्च। एषा च बुद्धिर्महत्तत्त्वमुच्यते॥ ११॥

गङ्गाधरः—ज्ञानस्यास्य निर्व्वाणसाधकत्वं दर्शयति—लोके इत्यादि। लोके जगति आत्मानं विततं पश्यतो जानतः पुंसः आत्मनि च लोकं विततं पश्यतः परावरदृशः परं सर्व्वतः श्रेष्ठं ब्रह्म ततोऽवरं सर्व्वमिदं महदादिकं द्रष्टुं शीलं यस्य तस्य। तथा शान्तिर्निर्व्वृत्तिर्ज्ञानमूला निरुक्तसत्यबुद्धिमूला न कदापि नश्यति। अस्याः शान्तेः फलमाह—पश्यत इत्यादि। सर्व्वावस्थासु जागरण-स्वप्न-सुषुप्तिषु सर्व्वदा अविच्छेदेन सर्व्वभूतानि समं पश्यतो

तथा वर्त्तत इति साङ्ख्यः। नोपास्ते कारणमिति न सुखदुःखकारणं सेवते। नालम्बते किञ्चिदिति क्वचिदप्यास्थानं न करोति। संन्यस्यत इति सर्व्वत्रोदासीनो भवति। ब्रह्मेति मोक्षः। त्रिधा-सिद्धत्रादयश्च यद्यपि ज्ञानविशेषेऽपि प्रसिद्धाः, तथापीह प्रकरणात् तत्त्वज्ञानपरा एव ज्ञेयाः॥ ११॥

चक्रपाणिः—लोकविततमात्मानमिति लोकरूपमात्मानम्, तथा लोकञ्चात्मनि शरीरात्मरूप-मेलकरूपे व्यवस्थितमिति शेषः। पश्यतः। परावरदृश इति परमात्मानम्, अवराण्यात्मव्यति-रिक्तानि प्रकृत्यादीनि यः पश्यति, तस्य परावरदृशः। 'ज्ञानमूला' इत्यनेन मोहमूलामस्थिरां शान्तिं निरस्यतीति।

अथ जीवन्मुक्तस्य किमिति सुखदुःखहेतुधर्म्माधर्म्मसंयोगो न भवतीत्याह—पश्यत इत्यादि। पश्यत इति पश्यत एव परं न तु रज्यतो नापि द्विषत इत्यर्थः। ब्रह्मभूतस्येति—

* लोकवितत्तमिति चक्रः।

नात्मनः कारणाभावात् * लिङ्गमप्युपलभ्यते ।
स सर्व्वकारणत्यागान्मुक्त इत्यभिधीयते ॥
विपापं विरजः शान्तं परमक्षरमव्ययम् ।
अमृतं ब्रह्म निर्व्वाणं पर्य्यायैः शान्तिरुच्यते ॥ १३ ॥
एतत् तत् सौम्य ! विज्ञानं यज् ज्ञात्वा मुक्तसंशयाः ।
मुनयः प्रशमं जग्मुर्वीतमोहरजःस्पृहाः ॥ १४ ॥

तत्र श्लोकौ ।

सप्रयोजनमुद्दिष्टं लोकस्य पुरुषस्य च ।
सामान्यं मूलमुत्पत्तौ निवृत्तौ मार्ग एव च ।

ब्रह्मभूतस्य जीवन्मुक्तस्य शुद्धस्य शुद्धसत्त्वस्य संयोगः संसारसंसरणहेतुधर्म्माधर्म्माभ्यां संयोगो न सम्पद्यते ॥ १२ ॥

गङ्गाधरः—शरीरपरित्यागे तु ब्रह्मभूतस्यात्मनः कारणाभावान्मनःशरीराद्यभावात् लिङ्गं प्राणापानादि सुखदुःखादि च नोपलभ्यते। स पुरुषः सर्व्वकारणानां सत्त्वशरीरादीनां त्यागान्मुक्त इत्यभिधीयते। मुक्तेः पर्य्यायमाह—विपापमित्यादि ॥ १३ ॥

गङ्गाधरः—अध्यायार्थस्य फलमाह—एतत् तदित्यादि । तदेतत् पुरुषविचय-

ब्रह्मभूतस्य जीवन्मुक्तस्येति व्याख्येयम् । सर्व्वथा मुक्ते हि ज्ञानमपि नास्ति । तेन पश्यत इति न स्यात् । संयोग इति धर्म्माधर्म्मसम्बन्धः ॥ १२ ॥

चक्रपाणिः—अथ मुक्तात्मनः किं लक्षणमित्याह—नेत्यादि । आत्मन इति मुक्तात्मनः । करणाभावादिति मनःप्रभृतिकरणाभावात् । उक्तं हि—"करणानि मनोबुद्धिर्बुद्धिकर्म्मेन्द्रियाणि च" इति, मनःप्रभृत्यभावाच्च शरीराभावोऽप्यर्थलब्ध एव । सर्व्वाभावाच्चात्मनि किमपि लक्षणं नास्ति, स्वरूपेण चात्मातीन्द्रिय एव । तेन नात्माभावान्नोपलभ्यते, तल्लिङ्गानामभावादेव नोपलभ्यत इति भावः ।

विपापमित्यादिना मोक्षस्वरूपप्रकाशकान् पर्य्यायानाह—यज् ज्ञात्वेति ज्ञानं प्राप्येत्यर्थः । किंवा गुणप्रकाशकत्वात् ज्ञानमपि ज्ञेयं भवतीति बोद्धव्यम् । संग्रहे शुद्धसत्त्वसमाधानमित्यनेन,

* करणाभावादिति चक्रः ।

शुद्धसत्त्वसमाधानं सत्या बुद्धिश्च नैष्ठिकी।
विचये पुरुषस्योक्ता निष्ठा च परमर्षिणा ॥ १५ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते शारीरस्थाने
पुरुषविचयशारीरं नाम पञ्चमोऽध्यायः ॥ ५ ॥

शारीरं विज्ञानं, हे सौम्य ! यज् ज्ञात्वा यच्छारीरज्ञानेन मुनयो मुक्तसंशयाः सन्तो वीतमोहरजःस्पृहाः सन्तः प्रशमं शान्तिं जग्मुः ॥ १४ ॥

गङ्गाधरः—अथाध्यायार्थमुपसंहरति—तत्र श्लोकावित्यादि। निष्ठा मोक्षः ॥ १५ ॥

अध्यायं समापयति—अग्नीत्यादि।

इति वैद्य श्रीगङ्गाधरकविरत्नविरचिते चरकजल्पकल्पतरौ शारीरस्थानजल्पे
चतुर्थस्कन्धे पुरुषविचयशारीरजल्पाख्या पञ्चमी शाखा ॥ ५ ॥

'एतैरभिमलम्' इत्यादिना 'वीपाशये यथा' इत्यन्तेन ग्रन्थेनोक्तार्थः संगृहीतः। 'शुद्धसत्त्वस्य' इत्यादिना सत्या बुद्धिरुक्ता। नैष्ठिकी मोक्षसाधिका। निष्ठा मोक्षः ॥ १३—१५ ॥

इति महामहोपाध्यायचरकचतुराननश्रीमच्चक्रपाणिदत्तविरचितायामायुर्व्वेददीपिकायां चरक-
तात्पर्य्यटीकायां शारीरस्थाने पुरुषविचयशारीरं नाम पञ्चमोऽध्यायः ॥ ५ ॥

## षष्ठोऽध्यायः ।

अथातः शरीरविचयं शारीरं व्याख्यास्यामः,

इतिह स्माह भगवानात्रेयः ॥ १ ॥

शरीरविचयः शरीरोपकारार्थमिष्यते । ज्ञात्वा हि शरीरतत्त्वं शरीरोपकारकरेषु भावेषु ज्ञानमुत्पद्यते, तस्माच्छरीरविचयं प्रशंसन्ति कुशलाः ॥ २ ॥

तत्र शरीरं नाम चेतनाधिष्ठानभूतं, पञ्चमहाभूतविकार-

गङ्गाधरः—अथ योगारम्भे शरीराङ्गप्रत्यङ्गज्ञानापेक्षत्वात् त्वङ्मांसादीनां विशेषेण ज्ञानस्य प्रयोजनं वक्तुश्च शरीरविचयशारीरमारभते—अथात इत्यादि । शरीरविचयं शरीरं विशेषेण चीयते चयनं क्रियते येनेति शरीरविचयः तमधिकृत्य कृतं शारीरमिति शरीरविचयं शारीरमित्यर्थः ॥ १ ॥

गङ्गाधरः—शरीरेत्यादि । विचयो विचयनं विज्ञानं शरीरोपकारार्थं शरीरस्योपकारः समधातुत्वकरणरक्षणप्रयोजनकमिष्यते । ननु कुतः शरीरोपकाराय शरीरस्य विचयः स्यादित्यत आह—ज्ञात्वा हीत्यादि । हि यस्मात् । शरीरतत्त्वं शरीरस्य याथार्थ्यं ज्ञात्वा पुंसः शरीरोपकारकरेषु शरीरस्य धातुसाम्यकरणरक्षणकारिषु भावेषु ज्ञानमुत्पद्यते ॥ २ ॥

गङ्गाधरः—ननु शरीरं किं तावदित्यत आह—तत्रेत्यादि । चेतन आत्मा तस्याधिष्ठानं भूतम्, अधिष्ठीयते यत् तदधिष्ठानं तद् भूतम् । नन्वात्मनो महदादिष्वपि बाह्यजगत्सु अधिष्ठानमस्तीति तद्व्यवच्छेदार्थमाह—पञ्चेत्यादि । पञ्च महाभूतानि खं वायुर्ज्योतिरापो भूरित्येतानि च विकाराश्च मनो दशेन्द्रियाण्यर्थाः

चक्रपाणिः—पुरुषविचयं मोक्षोपयुक्तत्वेन पुरुषोपकारकमभिधाय व्याक्रियमाणचिकित्सोपयुक्तं शरीरोपकारकं शरीरविचयं ब्रूते । शरीरस्य विचयः विचयनं शरीरस्य प्रविभागेन ज्ञानमित्यर्थः । शरीरोपकारार्थमिति शरीरारोग्यार्थम् । अथ कथं शरीरज्ञानं शरीरोपकारकमित्याह—ज्ञात्वा हीत्यादि । शरीरस्य रक्तादिरूपस्य स्वभावरूपं तत्त्वं ज्ञात्वैव इदमस्य वृद्धस्य धातोरसामान्यगुणतयाऽवर्द्धकत्वेनोपकारकमिति, तथोक्तविपर्ययत्वादपकारकमिति ज्ञेयम् । ज्ञायते उपकार्य्यते शरीरतत्त्वमनेनेति वाक्यार्थः ॥ १।२ ॥

चक्रपाणिः—समुदितस्यैव शरीरस्य स्वरूपमाह—तत्रेत्यादि । 'चेतना'शब्देन ज्ञानकारणम्

समुदायात्मकम्। समसंयोगवाहिनो यदा * ह्यस्मिन् शरीरे धातवो वैषम्यमापद्यन्ते, तदायं विनाशं क्लेशं वा प्राप्नोति ॥३॥

वैषम्यगमनं पुनर्हि धातूनां वृद्धिह्रासगमनमकात्‌र्त्स्न्येनैव।

त्वगादीनि चेत्येते तेषां समुदायः समस्तरूपः तदात्मकं शरीरमिति सूक्ष्मशरीरेऽनुगतं न स्थूलशरीरे। त्वङ्मांसादीनां प्रकृतिभूतपञ्चमहाभूतत्वङ्मनोदशेन्द्रियार्थत्वाभावात्। मनसश्च शरीरत्वे सत्त्वमात्मा शरीरञ्चेति सूत्रे शरीरस्य मनस्तः पृथग्वचनस्यासङ्गतेः। तस्मात् पञ्च महाभूतानि तद्विकाराश्च दशेन्द्रियपञ्चार्थास्त्वङ्मांसादयश्चेत्येते तेषां समुदायः समस्तरूपो न प्रत्येकरूपः तदात्मकं शरीरम्। अथवा विकारा दशेन्द्रियाण्यर्थाश्च समुदाया मातृजादिपञ्चभूतात्मकास्त्वङ्मांसादय इति ज्ञानार्थम्। शरीरमुक्त्वा शरीरस्योपकारार्थम् अपकारमाह—समेत्यादि। हि यस्मादस्मिन् शरीरे धातवस्त्वग्रक्तमांसादयः प्रसादधातवः, स्वेदादय उपधातवो, वातपित्तकफमूत्रादयो मलधातवश्च समसंयोगवाहिनः समेन समुचितमानेन संयोगं परस्परं धातूनां मेलकं नीरोगतया वहन्तीति। वस्तुतः समानां स्वस्वघटकानां भावानां द्रव्यगुणकर्म्मणां सम्यगारोग्यलक्षणसम्पत्करं योगं समवायं वहन्तीति समसंयोगवाहिनो धातवो यदा वैषम्यमापद्यन्ते प्राप्नुवन्ति तदा ॥ ३ ॥

गङ्गाधरः—ननु वैषम्यप्राप्तिः का? इत्यत आह—वैषम्येत्यादि। वृद्धिह्रासगमनं वृद्धिगमनं ह्रासगमनञ्च। अकात्‌र्त्स्न्येन सर्व्वेषां धातूनामसाकल्येन

आत्मोच्यते। 'भूत'शब्द उपमाने। तेन चेतनाया आत्मसम्बन्धिन्या शरीर एवोपलम्भादात्मनः शरीरमधिष्ठानमिति भवति। परमार्थस्तु चेतनाश्रय आत्मा, आत्मा च निराश्रय एव, किंवा चेतनस्यात्मनोऽधिष्ठानभूतमिति चेतनाधिष्ठानभूतमिति। पञ्चानां महाभूतानां विकारा रसादयः शरीरारम्भकाः, तेषां समुदायो मेलकः, स आत्मा स्वरूपं यस्य तत् तथा। 'समुदाय'शब्देन च समुदायारम्भका धातव एवोच्यन्ते। तेन न संयोगमात्रस्य शरीरत्वप्रसक्तिः। किंवा समुदायः संयोग एवोच्यताम्, तथा समुदाय आत्मा कारणं यस्य शरीरस्य द्रव्यरूपस्य तत् पञ्चमहाभूतविकारसमुदायात्मकं शरीरमेव। समेनोचितप्रमाणेन धातूनां मेलकेन समयोगतया वहतीति समयोगवाहि। यदा तु धातूनां न्यूनातिरिक्तत्वेन विषमो मेलको भवति, तदा असमयोगवाहीति दर्शयन्नाह—यदा हीत्यादि। लघुना वैषम्येण रोगमात्रजनकेन क्लेशम्, महता दुःसाध्यरोगजनकेन वैषम्येण विनाशं मरणं प्राप्नोतीति शरीरम् ॥ ३ ॥

चक्रपाणिः—अथ किं तत् वैषम्यमित्याह—वैषम्यगमनमिति, वैषम्यगमनं वैषम्यावस्थाप्राप्तिः।

---

* समुदायात्मकं समयोगवाहि। यदेत्यादि चक्रधृतः पाठः।

**प्रकृत्या च यौगपद्येन विरोधिनां धातूनां वृद्धिह्रासौ भवतः ।**

सकलधातूनां हि सामान्याभावेन, युगपद्वृद्धेर्विशेषाभावेन तु ह्रासस्य चासम्भवात् । ननु क्षयः स्थानञ्च वृद्धिश्चेति त्रिविधं वैषम्यमुक्तम्, अत्र तु वृद्धि-ह्रासगमनमिति स्ववचनविरोध इति चेत्, न, स्थानस्य पृथक्त्वे हि न वैषम्यं परन्तु साम्यमेव, विषमसहचरितत्वेन स्वस्थानाकर्षणादित्वे तु समस्तान्तर्गतत्वेन पृथग्वचनानावश्यकत्वात् । तद्वक्तुमाह—प्रकृत्या चेत्यादि । प्रकृत्या च

वैषम्यमेव कादाचित्कमित्यर्थः, यदि हि वैषम्यमेव ब्रूते, तदा सहजसिद्धमपि धातूनां यत् न्यूनातिरिक्तत्वेन वैषम्यं, तदपि गृह्यते । तेन 'गमन'पदप्रक्षेपात् सहजं वैषम्यं परित्यज्य प्रमाणापेक्षं कदाचिदुत्पद्यमानं वैषम्यं दर्शयति । वृद्धिह्रासगमनञ्चेह व्यस्तसमस्तवैषम्यं ज्ञेयं वृद्धिह्रासस्यैव विशेषाभावात् । अकात्स्न्येन प्रकृत्या चेति अकात्स्न्येनेति एकदेशेन, प्रकृत्येति सकलेन स्वभावेन । तेन च रसादीनाञ्च अशेषेण वृद्धिह्रासौ तथा अकात्स्न्येन वृद्धिह्रासौ उपसंगृहीतौ भवतः । अन्ये तु 'अकात्स्न्येन' इतिपदं क्लेशं विनाशं प्राप्नोतीत्यनेन योजयन्ति । तेन यदापि धातवो वैषम्यमापद्यन्ते, तदापि न क्लेशविनाशौ भवतः, 'अकात्स्न्येन' इतिपदेन क्लेशविनाशव्यभिचारस्य विहितत्वाच्च । दृष्टञ्चैतत्, यथा—वृष्यप्रयोगात् शुक्रवृद्धौ सत्यामपि न क्लेशविनाशौ भवतः, तथा बालस्य वर्द्धमानधातोरपि गुण एव परं दृश्यते । तच्च नातिसाधु । यतः बालस्य वर्द्धमानधातोरपि वयोऽनुरूपाः प्राकृतमानस्थिता एव धातवो भवन्ति, तेन न ते प्राकृतमाना वृद्धा उच्यन्ते । या तु वृष्यप्रयोगजा शुक्रवृद्धिः, सा यदि विकारकारिका न भवति, तदा तु प्राकृतमानान्तर्गता एव । एतदेव धातूनां प्राकृतमानम्—यदविकारकारि । अञ्जल्यादिमानन्तु ग्रन्थान्तरेणाभिहितमपि नित्यपरोक्षतया पुनः स्वाभाविक-धातुलक्षणैरेव ज्ञातव्यम् । तस्माच्छुक्रस्य यावती वृद्धिरदोषा, तावती प्राकृतमानावस्थारूपैव । प्राकृतमानातिरिक्तौ चेह वृद्धिह्रासौ 'वैषम्यगमन'शब्देनोच्येते । तस्मादाद्यैव व्याख्या । यस्मादेवं केवलं वृद्धिह्रासगमनमेव वैषम्यगमनम् । किन्तु प्रकृत्या च वैषम्यगमनं धातूनां भवतीति व्याख्या न भवति । तथा हि—"प्रकृतिस्थं यदा पित्तं मारुतः श्लेष्मणः क्षये" इत्यादौ प्रकृतिस्थस्य दोषस्य विकारकर्त्तृत्वमुच्यते, विकारकरस्य दोषस्य प्रकृतिस्थतापि वैषम्यानुक्रियाकारित्वेन 'वैषम्य'-शब्देनोच्यते । तदपि नातिसुन्दरम् । येन प्रदेशान्तरेष्वपि त्रिविधां गतिं प्रतिपद्य प्रकृतिस्थता धातूनां निर्विकार एवोक्ता, यथा—"क्षीणा जहति लिङ्गं स्वं समाः स्वं कर्म्म कुर्वते । दोषाः प्रवृद्धाः स्वं लिङ्गं दर्शयन्ति यथाबलम्" तथा "विकारो धातुवैषम्यम्" "विकारो दुःखमेव च" एवमादिषु । यत् तु "प्रकृतिस्थं यदा पित्तम्" इत्यादि स्वमानावस्थितस्य पित्तस्य विकारकरत्वम्, तच्छरीरप्रदेशान्तरनीतस्य पित्तादेस्तु तत्प्रदेशवृद्धस्यैव विकारकर्त्तृत्वम् । स्वमानस्थितोऽपि दोषः प्रदेशान्तरं नीतः सन् प्रदेशस्थदोषापेक्षया वृद्ध एव भवति । तत्रापि वृद्धस्यैव विकार-कर्त्तृत्वम्, प्रपञ्चितश्चार्थश्चायमेव ग्रन्थे । यत्रापि स्वमानस्थितानां रक्तादीनां वातादिदुष्ट्या विकार-

यद्धि यस्य धातोर्वृद्धिकरं तत् ततो विपरीतगुणस्य धातोः प्रत्यवायकरन्तु सम्पद्यते। तदेव तस्माद् भेषजं सम्यगवचार्य्यमाणं * युगपदूनातिरिक्तानां धातूनामधिकमपकर्षति न्यूनम्

विरोधिनां धातूनां यौगपद्येन एककालं वृद्धिह्रासौ भवतः। यद्यत्र कश्चिद्धातुः समो वर्त्तते वृद्धह्रस्वाभ्याञ्चाकृष्यते तदा सोऽपि वृद्धह्रस्वान्तर्गत एव स्यात्, तत्र क्षीणो यत्राकृष्यते तत्र वृद्धः स्यादिति युगपद्वृद्धिह्रासौ भवतः। यदि नाकृष्टः स्यात् तदा दुष्टो न स्यादिति भावः। ननु कथं विरोधिनां धातूनां युगपद्वृद्धिह्रासौ भवत इत्यत आह—यद्धीत्यादि। तत इति। तस्माद्धातुतः प्रत्यवायकरं ह्रासकरम्। तदेव भेषजं युगपदूनातिरिक्तानां धातूनां युगपद्

कर्त्तृत्वम्, तत्रापि वातादय एव वृद्धाः प्राधान्येन विकारकारकाः, रक्तादयोऽपि तद्दुष्टिदोषसम्बन्धात् हीनस्वगुणा वृद्धस्वगुणा वा भवन्ति, ततो गुणहानिवृद्धिभ्यां वृद्धिह्रासौ दृष्येऽपि तिष्ठत एवेति न प्रकृतिस्थस्य विकारकारित्वमिति पश्यामः। उपयुक्तभेषजेन यथा वृद्धिह्रासौ भवतः तदाह—यौगपद्येनेत्यादि। विरोधिनामिति परस्परविरुद्धगुणानाम्, तदेवोपपादनं दर्शयति—यद्धीत्यादि। यद्धि भेषजम्,—यथा क्षीरं कफशुक्रादिवृद्धिकरम्, तत् तु पित्तरक्तादेः प्रत्यवायकरं भवति ह्रासकरं भवतीत्यर्थः। विपरीतस्येति कर्त्तव्ये यत् विपरीतगुणस्येति करोति, तेन जातिवैपरीत्याद् गुणवैपरीत्यमेव ह्रासकारणं प्राधान्येन दर्शयति। तेन गोमूत्रं द्रवत्वसामान्यात् समानमपि कटूष्णरूक्षादिगुणयोगात् कफस्यापि ह्रासकमेव।

उपपादितयौगपद्येन धातूनां वृद्धिह्रासगमनमुपसंहरन्नाह—तदेवेत्यादि। सम्यग् उपचर्य्यमाणमित्यनेन उचितमात्रादियोगं तथा साम्यावाप्तावधिकभेषजप्रयोगं दर्शयति,—मात्रादिविगुणं हि भेषजं न उचितां क्रियां करोति,—यथा वृद्धस्य कफस्य क्षीणस्यापि पित्तस्य क्षयवृद्धिभ्यां सामान्यं समुपयुज्यते कट्वादि, तत् साम्यापातोत्तरकालमप्युपयुज्यमानं पित्तवृद्ध्या कफक्षयेण च पुनर्वैषम्यमावहति। तस्मात् तद्दोषाणां व्यावृत्त्यर्थं सम्यगुपचर्य्यमाणमिति कृतम्। ननु पूर्व्वोक्तभेषजेन विरोधिनां वृद्धिह्रासौ भवतः। उपसंहारे तु धातूनां साम्यकरं भेषजं भवतीत्युच्यते, तत् कथं साम्यमेव इत्याशङ्क्य वृद्धिह्रासकरमेव धातुसाम्यकरं भवतीति दर्शयन्नाह—अधिकमपकर्षति, न्यूनमाप्याययतीति। एवंभूतञ्च धातुसाम्यकरणम्। यत्रैव विरोधिनां वृद्धिह्रासौ विदेते, तत्रैव ज्ञेयम्, न सर्व्वत्र। तेन यत्र वृद्धिरेव परं दोषाणां न क्षयः, तत्र यथा वृद्धस्य दोषस्य क्षयाधानमुक्तम्, न तथा क्षीणस्य वर्द्धनमिति ज्ञेयम्।

* सम्यगुपचर्य्यमाणमिति वा पाठः।

आप्यायतीति । एतावदेव हि भैषज्यप्रयोगे फलमिष्टं स्वस्थवृत्तानुष्ठानञ्च यावद्धातूनां साम्यं स्यात् ॥ ४ ॥

स्वस्थस्यापि * समधातूनां साम्यानुग्रहार्थमेव कुशला रसगुणानाहारविकारांश्च पर्य्यायेण इच्छन्त्युपयोक्तुम् । सात्म्य-

वृद्धह्रस्वधातूनामधिकमपकर्षति न्यूनमाप्याययति वृद्धस्य ह्रासकरं यत् तदेव ह्रस्वस्य वृद्धिकरं भवति, इति एकमेव भेषजं तस्मात् साम्यकरं भवति। अकार्त्स्न्येन तु वृद्धं धातुं समानगुणं द्रव्यं वर्द्धयति विशिष्टगुणं ह्रासयति, ह्रस्वञ्च तथा, तस्मात् वृद्धे धातौ विपरीतगुणं भेषजं ह्रस्वे तु धातौ समानगुणं द्रव्यं भेषजं सम्यगवचार्य्यमाणं साम्यकरं भवतीति । एतावदेव धातुवैषम्ये सति धातुसाम्यकरणमेव, द्वितीयञ्च यावद् धातूनां साम्यं तावत् स्वस्थवृत्तानुष्ठानमिति । स्वस्थवृत्तानुष्ठानफलमिष्टं यावद्धातूनां साम्यमिति ; अत एव पूर्व्वाध्यायेऽप्युक्तं "धातुसाम्यमिहोच्यते । धातुसाम्यक्रिया चोक्ता तन्त्रस्यास्य प्रयोजनम् ॥" इति ॥ ४ ॥

<u>गङ्गाधरः</u>—ननु स्वस्थाः किं भेषजमाचरन्तीत्यत आह—स्वस्थस्यापीत्यादि । साम्यानुग्रहार्थं साम्यरक्षणार्थम् । कुशलाः स्वहितैषिणो बुद्धिमन्तोऽपि स्वस्थाः । पर्य्यायेण सम्यगुचितक्रमेण । पर्य्यायेणाहारविकाराणामुपयोगमुक्त्वा

उक्तधातुसाम्योपादेयतां दर्शयितुं भेषजप्रयोगस्य तथा स्वस्थवृत्तानुष्ठानस्य धातुसाम्यातिरिक्तं फलं निषेधयन्नाह—एतावदेवेत्यादि । 'एतावदेव' इत्यनेन वक्ष्यमाणधातुसाम्यं प्रत्यवमृशति । धातुसाम्यात्मको हि भेषजसाध्यो न धातुसाम्यादतिरिच्यते, तथा स्वस्थस्यौजस्करत्वम्, रसायनेनापि धातुसाम्यमेव विशुद्धमाधीयते । तेन धातुसाम्यादतिरिक्तमायुर्व्वेदसाध्यं नास्तीति भावः । उक्तञ्च—"धातुसाम्यक्रिया चोक्ता तन्त्रस्यास्य प्रयोजनम्" इति ॥ ३।४ ॥

<u>चक्रपाणिः</u>—ननु स्वस्थे धातुसाम्यं सिद्धमेव, न च सिद्धं साध्यते स्वस्थनिष्ठवृत्तानुष्ठानेऽपि धातुसाम्यमेव फलमित्याह—स्वस्था ह्यपीत्यादि । साम्यानुग्रहार्थमिति स्वस्था एव साम्यस्य परापरसात्म्योत्पादेन परिपालनार्थम् । रसा मधुरादयः । गुणा गुर्व्वादयः । आहारविकाराः खाद्यलेह्या यवाग्वादयः । पर्य्यायेणेति उचितेन क्रमेण, स च क्रमः, यथा—मधुरमुपयुज्य तज्जन्यकफवृद्ध्यादिप्रतिबन्धार्थं कट्वाद्युपयोज्यमित्यादिः रसक्रमः, तथा गुरुमुपयुज्य तत्कार्य्यप्रतिबन्धार्थं लघूपयोगः, इत्येवंप्रकारो लघुगुरूपयोगक्रमः । आहारविकारेऽपि यवाग्वाद्युपयुज्य तत्पाकार्थं पेयाद्युपयोग इत्यादिकः क्रमः । 'गुण'शब्देन च रसा अपि प्राप्यन्ते, तथापि रसाः प्राधान्यात् पृथगुक्ताः । सात्म्यसमाम्नातानिति 'रसगुणान्' इत्यस्य, तथा 'आहारविकारांश्च' इत्यस्य विशेषणम् । सात्म्याश्च ते अभ्यासेन तथा समत्वेन

* स्वस्था ह्यपीति चक्रः ।

समज्ञातान् एकप्रकारभूयिष्ठांश्चोपयुञ्जानास्तद्विपरीतकरणलक्षणसमज्ञातचेष्टया सममिच्छन्ति कर्त्तुम्। देशकालात्मगुणविपरीतानां हि कर्म्मणामाहारविकाराणाञ्च क्रियोपयोगः सम्यक्। सर्व्वाभियोगो*ऽनुदीर्णानां सन्धारणमसन्धारणम्

विपर्य्ययाणामुपयोगमाह—सात्म्येत्यादि। यान् रसगुणान् आहारविकारान् सात्म्यसमज्ञातान् सात्म्यत्वेन सुखानुबन्धहेतुत्वेन धातुसमत्वेन धातुसमगुणतया ज्ञातान् एकप्रकारभूयिष्ठांश्च मधुराद्येकप्रकारबहुलानपि उपयुञ्जानाः कुशलाः स्वस्थास्तेभ्य आहारविकारेभ्यो विपरीतानामाहारविकाराणां करणलक्षणेन संस्कारतो लाक्षणिकतया समत्वेन ज्ञातस्यैव द्रव्यस्य समीकरणार्थं संस्कारप्रकरणीभूता या चेष्टा तया तद्विपरीतानाहारविकारानपि समं धातुसमं कर्त्तुमिच्छन्ति। ननु कुतो विपरीतानामेवंरूपेण समीकरणमिष्यते पर्य्यायेण यत् समीभवति तेनैवेष्टसिद्धिः स्यादिति चेत्, न। कस्मादित्यत आह—देशेत्यादि। देशविपरीतानां कालविपरीतानामात्मनो धातुगुणविपरीतानाञ्च कर्म्मणां सम्यक् क्रिया तत्त्वज्ञानं आहारविकाराणाञ्च सम्यक् उपयोगः। तथा सर्व्वाभियोगः

स्वाभाविकपथ्यत्वेनाज्ञाता इति सात्म्यसमाज्ञाताः, सम'शब्देनात्र पथ्यमुच्यते। किंवा सर्व्वदा सात्म्यत्वेन समाज्ञाताः सात्म्यसमाज्ञाताः। तेन असात्म्यानामुपयोगमेव प्रतिक्षिपति। यच्च तावत् रसादयः पर्य्यायेणोपयुज्यते तत् साधु। यत्र त्वेकप्रकारा एव रसादयः कुतश्चिद्धेतोरभ्यस्यन्ते, तत्र को विधिरित्याह—एकप्रकारेत्यादि। तत्रोपयुक्तैकप्रकाररसादिभूयिष्ठाद् रसादेर्विपरीतमेव करोतीति तद्विपरीतकरी समाज्ञाता चेष्टा। तया चेष्टया समं कर्त्तुमिच्छन्तीति, एकप्रकारभूयिष्ठाद्युपयोगेन आधीयमानवैषम्यशरीरं समधातु कर्त्तुमिच्छन्ति। एतदुदाहरणम्—यथा मधुरप्रकारभूयिष्ठं च आहारप्रकारमुपयुञ्जीत, तस्य मधुरसमानकफादिवृद्धिमाशङ्क्य कफादिक्षयकरी व्यायामादिचेष्टा, तथा सामान्यमाधीयते। किंवा तद्विपरीतकरी च, तथा समत्वेन च आज्ञाता या चेष्टा, सा तद्विपरीतकरसमाज्ञाता, तेन क्रियमाणम् अतियोगादि निषेधयति।

सम्प्रति प्रस्तावागतं स्वस्थवृत्तं समासेनाह—देशेत्यादि। देशादिभिः 'गुण'शब्दः सम्बध्यते। 'आत्म'शब्देनेह शरीरमुच्यते। देशविपरीतं कर्म्म यथा—मरौ स्वप्नः। कालविपरीतं कर्म्म यथा—वसन्ते व्यायामः। आत्मविपरीतं कर्म्म यथा—स्थूलशरीरे व्यायामजागरणादि। एवमाहारप्रभेदाश्च कालादिविपरीता उन्नेयाः। कर्म्मणां सम्यक्क्रियोपयोगस्तथा आहारविकाराणां सम्यक्क्रियोपयोगः। मिथ्यायोगायोगरूपोऽप्यतियोगो ज्ञेयः। तेन सर्व्वेषां

* सर्व्वातियोग इति चक्रः।

उदीर्णानाञ्च गतिमतां साहसानाञ्च वर्ज्जनम्। स्वस्थवृत्त-मेतावद्धातूनां साम्यानुग्रहार्थमुपदिश्यते ॥ ५ ॥

धातवः पुनः शारीराः समानगुणैः समानगुणभूयिष्ठैर्वापि आहारविकारैरभ्यस्यमानैर्वृद्धिं प्राप्नुवन्ति ; ह्रासन्तु विपरीत-गुणैर्विपरीतगुणभूयिष्ठैर्वाप्याहारैरभ्यस्यमानैः। तत्रेमे शरीरधातु-गुणाः संख्यासामर्थ्यकराः। तद् यथा—गुरुलघुशीतोष्णस्निग्ध-

सन्धारणं गतिमतामनुदीर्णानां, मलादीनामुदीर्णानामसन्धारणं तथा साह-सानाञ्च वर्ज्जनं स्वस्थवृत्तञ्चैतावदेव धातूनां साम्यानुग्रहार्थमुपदिश्यते ॥ ५ ॥

गङ्गाधरः—ननु के धातवः कैर्वृद्धिं कैश्च ह्रासं प्राप्नुवन्तीत्यत आह—धातव इत्यादि। शारीरा इत्यनेन मानसानां निरासः। समानगुणभूयिष्ठैर्वेति भूयिष्ठगुणानामल्पिष्ठगुणावजयित्वात्। उक्तं हि विरुद्धगुणसमवाये भूयसाल्प-मवजीयते इति। जैमिनिनाप्युक्तं—विरुद्धधर्म्मसमवाये भूयसां स्यात् सधर्म्मकत्वमिति। अभ्यस्यमानैर्न त्वेकवारमात्राभ्यवहारतः। ननु शारीर-धातूनां के गुणा इत्यत आह— तत्रेमे इत्यादि। शरीरधातुगुणाः संख्यासामर्थ्यकरा इमे वक्ष्यमाणा गुर्व्वादय एव शरीरधातुगुणा आहारद्रव्याणां पाञ्चभौतिकानां सामान्यविशेषयोर्ज्ञाने सामर्थ्यकराः शक्तिजनका न त्वन्ये बुद्ध्यादयः शब्दादयः परत्वादयो वा शरीरस्य वृद्धौ वा ह्रासे वा सामान्यविशेषज्ञाने शक्तिकराः। बुद्ध्यादि-जनकत्वं हि द्रव्याणां प्रभावात्। परत्वादिजनकत्वञ्च गुणैर्नास्ति। शब्दादि-

कालबुद्धीन्द्रियार्थमिथ्यायोगादीनां वर्ज्जनं सर्व्वातियोगसन्धारणम्। कालमिथ्यायोगादेस्तु दुष्परि-हरस्य प्रतिक्रिययैव वर्ज्जनम्। गतिमतामिति पुरीषादीनां वहिर्गमनशीलानाम्। साहसानाम् अयथाबलानाम् ॥ ५ ॥

चक्रपाणिः—अथ रसादिधातूनां वृद्धिह्रासावुक्तौ। तौ सात्म्याहाराभ्यां क्रियेते, तद् दर्शयितुमाह—धातव इत्यादि। 'शारीराः' इतिपदेनाध्यात्मिकान् बुद्ध्यादीन् व्यवच्छिनत्ति। यतो न बुद्ध्यादयः समानगुणवचनाद् व्यावर्त्तन्ते, असमानगुणानाक्रामन्ति। समान एव परं गुणो यस्य तत्समान-गुणम्, यथा—मांसं मांसस्य समानगुणभूयिष्ठम्। यदल्पसमानगुणम्, यथा—शुक्रस्य क्षीरम्, क्षीरस्यातिद्रवत्वात् शुक्रेऽल्पसमानगुणम्। अभ्यस्यमानैरित्यनेन सकृदुपयोगाद् वृद्धिं ह्रासञ्च निषेधयति। विपरीता एव परं गुणा यस्य तद् विपरीतगुणम्। अल्पसमानगुणन्तु विपरीत-गुणभूयिष्ठम्। अथ के ते शरीरधातुगुणाः, ये तेषां गुणैः समानाश्चोच्यन्त इत्याह—तत्रेत्यादि। शरीरधातुगुणा इति विशेषेण प्रस्तुतत्वेनानभिधेयान् गुणान् बुद्ध्यादीन् निरस्यति। परादयस्तु

रुक्ष-मन्द-तीक्ष्ण-स्थिरसरमृदुकठिन-विशदपिच्छिलश्लक्ष्णखर-सूक्ष्मस्थूलसान्द्रद्रवाः। तेषु ये ते गुरवो धातवो गुरुभिराहार-विकारगुणैरभ्यस्यमानैराप्याय्यन्ते लघवश्च ह्रसन्ति। लघवस्तु ये ते लघुभिरेवाप्याय्यन्ते, गुरवश्च ह्रसन्ति। एवमेव सर्व्वधातुगुणानां सामान्याद् * वृद्धिर्विपर्य्ययात् ह्रासः। तस्मान्मांसमाप्याय्यते मांसेन भूयोऽन्येभ्यः शरीरधातुभ्यः। तथा लोहितं लोहितेन,

जनकत्वन्तु नान्तरीक्षादिद्रव्याहारतो दृश्यते। दृश्यते च प्रभावात् खरस्पर्शवर्ण-रसगन्धजनकत्वं द्रव्याणामिति। ननु के च ते गुणा इत्यत आह—तद् यथेत्यादि। गुर्व्वादयो द्रवान्ता विंशतिः शरीरधातुगुणाः पाञ्चभौतिकाहारद्रव्यसामान्य-विशेषज्ञानशक्तिजनका इत्यर्थः। उदाहरणमाह—तेष्वित्यादि। आप्याय्यन्ते इति णिजन्तात् कर्म्मणि तिङ्, ते इति प्रयोज्यकर्त्ता कर्म्मसंज्ञायामाख्यातेनोक्तः। धातून् इत्यणिजन्तत्वे कर्म्म, प्रयोजकस्तु कर्त्ता गुरुभिरिति। लघवस्तु ये ते लघुभिराहारविकारगुणैरभ्यस्यमानैराप्याय्यन्ते, धातव इत्येवं योज्यं पूर्व्ववत्। गुरुलघू गुणावुदाहृत्य शेषानतिदिशति—एवमेवेत्यादि ह्रास इत्यन्तेन। वृद्धिह्रासयोर्गुणत उदाहृत्य तैर्गुणैर्धातुत उदाहरति—तस्मादित्यादि। तस्मात् गुर्व्वादितो गुर्व्वादेर्वृद्धिह्रासौ, लघ्वादितो लघ्वादेर्वृद्धिह्रासौ गुर्व्वादेरित्यस्माद्धेतोर्मांसमाप्याय्यते मांसेन, भूयोऽन्येभ्यः शरीरधातुभ्यः। यद्यपि शरीरधातुगुणा भवन्ति, तथापि ते वृद्धिं ह्रासञ्च प्रति अनतिप्रयोजनत्वाद् इहानुक्ताः। रसस्तु प्रधानत्वेन प्रकरणानन्तरोक्त एवेति नेहोक्तः। स्पर्शस्तु शीतोष्णसंगृहीत एव। शब्दरूपगन्धास्तु वृद्धौ ह्रासे च नातिप्रयोजना इति नोक्ताः। संख्या ज्ञानं गणना वा, तत्र सामर्थ्यं कुर्व्वन्तीति संख्यासामर्थ्यकराः। एते हि गुर्व्वादयो ज्ञाता विंशतिर्गुर्व्वादयो भवन्तीति यदङ्गानां संख्या-सामर्थ्यरूपम्, तत् कुर्व्वन्ति गुरुलघ्वादयः। परस्परविपर्य्ययात्मकान् द्वन्द्वान् दश गुणान् दर्शयित्वा तेषाञ्च द्रव्यसम्बन्धानां शृङ्गग्राहिकतया कर्म्माह—तेष्वित्यादि। लघवश्च ह्रसन्तीति च्छेदः। शेष-शीतादिगुणानां वृद्धिमतिदेशेनाह—एवमित्यादि। सामान्ययोगादिति समानैकरूपार्थयोगात्। तच्च सामान्यं सर्व्वथा समानगुणजातिरूपं भवति, यथा—पोष्यपोषकयोर्मांसयोः। क्वचिद् विजातीयगुणा एव पोष्यपोषकवृत्तयो भवन्ति, यथा—क्षीरशुक्रयोः। तत्रात्यर्थवृद्धिकर्त्तृत्वेन प्रथमं जातिरूपमेव सामान्यं सर्व्वगुणसामान्ययुक्तमुदाहरति—तस्मादित्यादि। भूयस्तरमन्येभ्य इत्यनेन, मांसेन मांसगुणभूयिष्ठतया रक्तादिवृद्धिरपि क्रियते, भूयसी तु सामान्ययोगान्मांसस्य वृद्धिः

* सामान्ययोगात् इति चक्रेण पठ्यते।

मेदो मेदसा, वसा वसया, अस्थि तरुणास्थ्ना, मज्जा मज्ज्ञा, शुक्रं शुक्रेण, गर्भस्त्वामगर्भेण ॥ ६ ॥

यत्र त्वेवंलक्षणेन सामान्येन सामान्यवतामाहारविकाराणामसान्निध्यं स्यात्, सन्निहितानां वाप्ययुक्तत्वान्नोपयोगः घृणित्वादन्यस्माद्वा कारणात् स च धातुरभिवर्द्धयितव्यः स्यात्। तस्य ये समानगुणाः स्युराहारविकारा असेव्याश्च, तत्र समानगुणभूयिष्ठानामन्यप्रकृतीनाञ्च आहारविकाराणामुपयोगः स्यात्।

मांसं हि कात्स्न्र्येन गुरुस्नेहादिगुणतः समानं मांसस्य, न त्वन्यशरीरधातवः कृत्स्नगुणतो मांससमाना इत्यतो भूय एव मांसं मांसेनाप्याय्यते। यावद्भिर्हि गुणैर्यो यस्य समानः स तावद्भिर्गुणैस्तेन वर्द्धत इति भावः। एवमुत्तरेषु बोध्यम्। तरुणास्थ्नेति दृढत्वेनास्थिभक्षणासम्भवात् इति ॥ ६ ॥

गङ्गाधरः—शरीरधातूनां वृद्धिह्रासावुदाहृत्य कस्य धातुर्वर्द्धयितव्यः कस्य ह्रासयितव्य इति तदाह—यत्र त्वेवमित्यादि। यत्र धातौ एवंलक्षणेन मांसस्य मांसेनेत्येवमादिरूपेण असान्निध्यमसन्निधानं नोपयोगः स्यात् सन्निहितानामेवंरूपेण कृत्स्नेन सामान्येन सामान्यवतामाहारविकाराणामभ्यवहृतानां वा घृणित्वादयुक्तं सदप्यवृंहणं स्यादन्यस्माद् वा कारणादयुक्तं सदप्यवृंहणं स्यात् स च धातुरभिवर्द्धयितव्यः। ननु केन प्रकारेण वर्द्धयितव्यः किं मनुष्यमांसेन मनुष्यमांसमित्येवमादि स्यादित्यत आह—तस्येत्यादि। यदि घृणित्वादन्यस्माद् वा कारणात् मांसवर्द्धनाय मांसं नोपयोक्तुमर्हति यस्य धातोस्तस्य धातोर्ये समानगुणा मनुष्यमांसादयोऽसेव्याश्चाहारविकारास्तत्र धातौ तत्समानगुणभूयिष्ठानामन्यद्रव्यात्मकानामन्यप्रकृतिकानां छागादिप्रकृतिकानाञ्चाहार-

क्रियत इति दर्शयति। लोहितं लोहितेनैवेत्येवमादौ "भूयस्तरमन्येभ्यः" इत्यनुवर्त्तनीयम्। गर्भस्त्वामगर्भेणेत्यत्र आमगर्भेणाण्डादिरूपेण समुदितानां मांसादीनां साम्यनिष्पन्नानां वृद्धिरुच्यते ॥ ६ ॥

चक्रपाणिः—सम्प्रति समानगुणभूयिष्ठेन विजातीयेन वृद्धिमाह—यत्रेत्यादि। एवंलक्षणेनेति तुल्यजातिरूपेण। उक्तार्थं विवृणोति—घृणित्वादित्यादि। अन्यस्माद् वा कारणादित्यभक्ष्यामगर्भशुक्रादिभक्षणजन्याधर्म्मतया। तत्रेत्यनेन असन्निहिताम्, घृणया कारणान्तरेण च सन्निहिता अपि

तद् यथा—शुक्रक्षये क्षीरसर्पिषोरुपयोगो मधुरस्निग्धसमाख्यातानाञ्चापरेषामेव द्रव्याणाम्, मूत्रक्षये पुनरिक्षुरस-वारुणीमण्ड-द्रवमधुराम्ललवणोपक्लेदिनाम्, पुरीषक्षये कुल्माषमाष-कुष्कुण्डाजमध्य-यव-शाक-धान्याम्लानाम्, वातक्षये कटुतिक्त-कषायरुक्षलघुशीतानाञ्च, पित्तक्षयेऽम्ललवणकटुक्षारोष्णतीक्ष्णानाम्, श्लेष्मक्षये स्निग्ध-गुरु-मधुर-सान्द्र-पिच्छिलानां द्रव्याणाम्। कर्म्मापि च यद् यस्य धातोर्वृद्धिकरं तत्तदासेव्यम्। एवमन्येषामपि शरीरधातूनां सामान्यविपर्य्ययाभ्यां वृद्धिह्रासौ यथाकालं कार्य्यौ। इति सर्व्वधातूनामेकैकशोऽतिदेशतश्च वृद्धि-ह्रासकराणि व्याख्यातानि भवन्ति ॥ ७ ॥

विकाराणामुपयोगः स्यात् वृद्धिकर इति शेषः। अस्योदाहरणमाह—तद् यथेत्यादि। शुक्रक्षये इत्यादि। समानगुणभूयिष्ठानामुदाहरणानि। कुष्कुण्डः पलालच्छत्रिका। अजस्य मध्यं मध्यदेहः। आहारानुदाहृत्य माह—कर्म्मापि चेत्यादि। एतद्वृद्ध्युदाहरणानुसारेण वृद्धानामपि ह्रासो विपरीताहारविहाराभ्यामुदाहर्त्तव्य इति बोध्यम्। अनुक्तधातूनां वृद्धिह्रासावुपसंहर्त्तुमाह—एवमन्येषामित्यादि। शारीरधातुवृद्धिह्रासव्याख्यामुपसंहरति इति सर्व्वधातूनामित्यादि ॥ ७ ॥

असेव्यान् प्रत्यवमृषति। अन्यप्रकृतीनामिति विजातीयानाम्। अत्रोदाहरणमाह—तद् यथेत्यादि। शुक्रे क्षीणे यदि शुक्रान्तरं न प्राप्यते, प्राप्तं वा घृणादिवशात् न प्रयोज्यं स्यात्, तदा समानगुणभूयिष्ठानां क्षीरादीनामुपयोगः कर्त्तव्य इत्यर्थः। मूत्रादावपि घृणादिना स्वजातिप्रयोगविषये समानगुणभूयिष्ठमाह—मूत्रेत्यादि। कुष्कुण्डं पलालादिच्छत्रिका। अजमध्यं छागान्तरास्थि। द्रव्याणामुपयोग इति योजना। आहारं वृद्धिकरमभिधाय विहारमपि वृद्धिकरमाह—कर्म्मेत्यादि। 'कर्म्म'शब्देनेहास्याचिन्तादयोऽपि गृह्यन्ते। कर्म्म तु प्रायः प्रभावादेव वृद्धिकरं भवतीति कृत्वात्र समानगुणतापरिग्रहो न कृतः। साक्षादनुक्तानामपि धातूनामुक्तन्यायानुसारेण वृद्धिह्रासकारणमिति दर्शयति—एवमित्यादि। यथाकालमिति क्रियाकालानामनतिपातेन। उक्तं प्रकरणमुपसंहरति—इति सर्व्वेत्यादि। एकैकश इत्यनेन 'मांसमाप्याय्यते मांसेन' इत्यादिनोक्तं गृह्णाति। अतिदेश तश्चेत्यनेन "एवमन्येषामपि शारीरधातूनाम्" इत्यादिनोक्तं गृह्णाति ॥ ७ ॥

कार्त्स्न्येन शरीरवृद्धिकरास्त्विमे भावा भवन्ति। तद् यथा—कालयोगः, स्वभावसंसिद्धिः, आहारसौष्ठवम्, अविघातश्चेति। बलवृद्धिकरास्त्विमे भावा भवन्ति। तद् यथा—बलवत्पुरुषे देशे जन्म, बलवत्पुरुषे च काले। सुखश्च कालयोगः। वीजक्षेत्रगुणसम्पच्चाहारसम्पच्च शरीरसम्पच्च सात्म्यसम्पच्च सत्त्वसम्पच्च स्वभावसंसिद्धिश्च यौवनञ्च कर्म्म च संहर्षश्चेति ॥ ८ ॥

गङ्गाधरः—शरीरैकदेशमांसादिवृद्धिह्रासावुक्त्वा कृत्स्नदेहवृद्धिह्रासकरानुदाहरति—कार्त्स्न्येनेत्यादि। इमे के तानाह—कालेत्यादि। कालो नित्यगः कृतयुगादिः हेमन्तादिश्च तथावस्थिकश्च स्त्री पुंसां च बाल्ययुवत्वादिः। स्वभावः स्वस्वप्रकृतिः, संसिद्धिः स्वाभाविकी या यस्य सिद्धिः अविघात इत्यव्याघातकरो भावः। बलवृद्धीत्यादि। बलवत्पुरुषे देशे यस्मिन् देशे बलवान् पुरुषो जायते स देशः, एवं बलवान् पुरुषो यस्मिन् काले जायते स कालः। सुखश्च सुखानुबन्धः कालयोगः। वीजक्षेत्रयोर्गुणसम्पत् सादगुण्यम्। आहारसम्पत् आहारसादगुण्यम्, शरीरसम्पत् शरीरगुणानां सादगुण्यम्, सात्म्यसम्पत् सात्म्यानामपि रसानां मधुरादीनां सादगुण्यं कट्वादीनामसादगुण्यम्, सत्त्वसम्पत् मनसो धर्म्मवशेन सादगुण्यमधर्म्मवशेनासादगुण्यम्। स्वभावसंसिद्धिः स्वाभाविकी सिंहादीनां बलसिद्धिः। यौवनञ्च बाल्यवार्द्धक्यापेक्षया। बलकरं कर्म्म च, धर्म्मोऽपि न

चक्रपाणिः—वृद्धिप्रस्तावात् सर्व्वशरीरवृद्धिकरानाह—कार्त्स्न्येनेत्यादि। कालयोग इति वृद्धिकारकयौवनादिकालयोगः। यौवनादौ हि सप्तदशवत्सरादिकाललक्षणे कालमहिम्नैव वृद्धिर्भवति। 'स्वभाव'शब्देनादृष्टमुच्यते। तेन स्वभावसंसिद्धशरीरवृद्धिहेतुरदृष्टम्। आहारसौष्ठवमित्याहारसम्पत्। अविघातश्चेति शरीरवृद्धिविघातकरातिव्यवायमनोघातादिविरहः।

वृद्धिप्रस्तावाच्च बलवृद्धिकरान् भावानाह—बलेत्यादि। देशमहिम्ना बलवन्तः पुरुषाः यस्मिन्। हेमन्ते शिशिरे वा काले जायमानस्य बलं जनयति। सुखश्च कालयोग इति साधारणकालयोगः। वीजस्य शुक्रस्य तथा क्षेत्रस्यार्त्तवगर्भाशयरूपस्य गुणानां प्रशस्तकर्म्मणां सम्पत् वीजक्षेत्रगुणसम्पत्। अत्र वीजक्षेत्रयोर्निर्द्दोषतापि सम्पत् स्यात्। तेन निर्द्दोषातिरिक्तस्य सारत्वादिवीजक्षेत्रगुणप्राप्त्यर्थं 'गुण'ग्रहणं ज्ञेयम्। सत्त्वसम्पच्चेति सत्त्वसम्पदापि शारीरं बलं भवतीति ज्ञेयम्। वचनं हि—"शरीरं ह्यपि सत्त्वमनुविधीयते।" स्वभावसंसिद्धिर्बलजनककर्म्मसंसिद्धिः। कर्म्म व्यायामादिकर्म्मेत्यर्थः। व्यायामादिकर्म्माभ्यासात् निजं बलं भवति ॥ ८ ॥

आहारपरिणामकरास्त्विमे भावा भवन्ति। तद् यथा—उष्मा वायुः क्लेदः स्नेहः कालः संयोगश्चेति *। तत्र तु खल्वेषाम् उष्मादीनामाहारपरिणामकराणां भावानामिमे कर्म्मविशेषा भवन्ति। तद् यथा—उष्मा पचति, वायुरपकर्षति, क्लेदः शैथिल्यम् आपादयति, स्नेहो मार्दवं जनयति, कालः पर्य्याप्तिमभिनिर्व्वर्त्तयति, संयोगस्त्वेषां परिणामधातुसाम्यकरः सम्पद्यते। परिणामतस्त्वाहारस्य गुणाः शरीरगुणभावमापद्यन्ते

सर्व्वो बलहेतुर्यथा युधिष्ठिरः सर्व्वधर्म्मवान न यथा बली तथा भीमोऽतादृशधर्म्मवानपि बली। संहर्षश्च चित्ताह्लादः॥ ८॥

गङ्गाधरः—नन्वाहारसम्पद्बलवृद्धिहेतुः कथमाहारसम्पत् स्यादित्यत आह—आहारेत्यादि। उष्माग्निर्जाठरो धातुगश्च सर्व्वः। ननु कः केन कर्म्मणाहारं परिणामयति इत्यत आह—तत्रेत्यादि। उष्मा पचतीत्यादि। कालः पर्य्याप्तिं परिणतिं निष्पत्तिम्। संयोगस्त्वेषामिति एषामाहारजरसानां परिणामेन धातुभिः सह साम्यं समतां करोतीति। ननु कथं संयोगः परिणामेन धातुसाम्यं करोतीत्यत आह—परिणामत इत्यादि। परिणामत

चक्रपाणिः—प्रशस्तगुणाभिधानप्रस्तावादाहारपरिणामस्यापि प्रशस्तस्य हेतुमाह—आहारेत्यादि। काल इति पाककालो निशावसानादिरूपः। समयोग इत्याहारस्य प्रकृत्याद्यष्टाहारविधिविशेषात् सम्यग्योगः। तत्र चाहारपरिणामकरेषु उष्मैव साक्षात् पाके व्याप्रियते, वाय्वादयस्तु तस्य पचतः सहायताव्यापारविशेषेण सहायतां यान्तीति दर्शयन्नाह—तत्रेत्यादि। वायुरपकर्षतीति उष्मस्थानाद् विदूरस्थितमन्नमुष्मसमीपं नयति। यदुक्तम्—"अन्नमादानकर्म्मा तु प्राणः कोष्ठं प्रकर्षति" इति। वायुरपकर्षतीत्युपलक्षणम्। तेन अग्न्युत्तेजनमपि समानाख्यस्य वायोः बोद्धव्यम्। उक्तं हि—"समानेनावधूतोऽग्निः पचति" इति। पर्य्याप्तिमिति पाके निष्पत्तिम्, सत्यपि उष्मादिव्यापारे कालवशादेव पाको भवति, नोष्मादिव्यापारमात्रादिति भावः। समयोगस्तु एषामिति एषामाहारद्रव्याणां प्रकृत्यादीनां यः समयोगः, स परिणामकरो धातुसाम्यकरश्च भवति। यदा हि प्रकृत्यादिविरुद्ध आहारो भवति, तदा प्रकृत्यादिदोषादेव न सम्यक्परिणामकरो भवति। एतदुष्मादिव्यापारप्रतिपादकं ग्रन्थान्तरम्, यथा—"अन्नमादानकर्म्मा तु प्राणः कोष्ठं प्रकर्षति। तद्द्रवैर्भिन्नसंघातं स्नेहेन मृदुतां गतम्। समानेनावधूतोऽग्निरुदर्य्यः पवनेन तु। काले पक्वं समं सम्यक् पचत्यायुर्विवृद्धये॥" इति

* समयोगश्चेति चक्रः।

यथास्वम् अविरुद्धाः, विरुद्धाश्च विहन्युर्विहताश्च विरोधिभिः शरीरम् ॥ ६ ॥

शरीरधातवस्त्वेवं द्विविधाः संग्रहेण, मलभूताः प्रसादभूताश्च । तत्र मलभूतास्ते, ये शरीरस्य बाधकराः स्युः । तद् यथा—शरीरच्छिद्रेषूपदेहाः पृथग्जन्मानो वहिर्म्मुखाः परिपक्वाश्च धातवः, प्रकुपिताश्च वातपित्तश्लेष्माणो, ये चान्येऽपि

उष्मवाय्वादिभिराहाररूपान्तरनिष्पत्त्याहारस्य ये गुणा यथास्वमविरुद्धाः समानास्ते शरीरधातूनां यद्रूपा गुणास्तद्भावं तद्रूपतामापद्यन्ते प्राप्नुवन्ति । विरुद्धाश्च ये त्वाहारस्य गुणास्ते च परिणामतो विरोधिभिर्गुणैर्विहताः सन्तः शरीरं विहन्युर्न तु शरीरगुणभावमापद्यन्ते ॥ ९ ॥

गङ्गाधरः—शरीरेत्यादि । शरीरधातवो द्विविधाः संग्रहेण संक्षेपेण, मलभूतास्ते आहारजपुरीषादयः शरीरस्य बाधकराः । मलरूपान् शरीरधातून् विवृणोति कर्म्मतः । उपदेहा उपलेपरूपाः पृथग्जन्मानः स्वेदसिंघाणकादिरूपेण पृथक्पृथग्जन्मानः । वहिर्म्मुखा वहिर्निःसरणोन्मुखाः परिपक्वाश्च पाकात् पूयतां गताश्च धातवो भवन्ति । प्रकुपिताश्च कोपमापन्नाः

अथ कया परिपाट्या परिणाममापद्यमान आहारो धातुसाम्यकरो भवतीत्याह—परिणामत इत्यादि । सर्व्वमाननिर्द्देशेन, यो यथा यथा आहारांशः परिणमते, स तथा तथा शरीरगुणरूपतां याति, न कृत्स्नाहारपरिणाममपेक्षत इति दर्शयति । यथास्वमविरुद्धा इति य आहारगुणा यस्मिन् शरीरगुणेऽविरुद्धाः, त एव तद्रूपतां नयन्ति । यथा—आहारस्य कठिनो भागो मांसास्थ्यादिकठिनभागपोषको भवति, द्रवांशस्तु शोणितादिरूपो भवति इत्यादि । विरुद्धास्तु विहन्युरिति शरीरगुणविरुद्धास्तु आहारगुणा विरुद्धान् गुणान् विहन्युर्ह्रासयेयुरित्यर्थः । अथ ते शरीरगुणा आहारगुणविहताः सन्तः किं कुर्व्वन्तीत्याह—विहतास्तु विरोधिभिः शरीरं विहन्युरिति योजना । विरोधिभिरिति विपरीतैराहारगुणैर्विहता इति क्षयं नीताः, किंवा विरोधिभिरिति यथा—दुग्धमत्स्यादिविरुद्धाहारैर्विहताः शरीरं हन्युः, 'च'कारात्, विरुद्धगुणैश्च क्षयं नीताः शरीरं हन्युरिति दर्शयति ॥ ९ ॥

चक्रपाणिः—अथ कतिप्रकारास्ते शरीरगुणा इत्याह—शरीरेत्यादि । संग्रहेण सङ्क्षेपेण । तेन विस्तरेण धातूपधात्वादिविभागेन बहवश्च भवन्ति । 'भूत'शब्दः स्वरूपे । बाधकरा इति पीडाकरा इत्यर्थः । पृथग्जन्मान इति पीडाकारकाः सिङ्घाणकादिभेदेन नानारूपाः । 'वहिर्म्मुखाः' इत्यनेन, य एव च्छिद्रमलाः प्रभूततया वहिर्निःसरणाभिमुखाः, त एव पीडाकर्त्तृत्वेन मलाख्याः ।

केचिच्छरीरे तिष्ठन्ति भावाः शरीरस्योपघातायोपपद्यन्ते, सर्व्वांस्तान् मलान् * सञ्चक्ष्महे, इतरांस्तु प्रसादाख्यान्, गुर्व्वादींश्च द्रवान्तान् गुणभेदेन, रसादींश्च शुक्रान्तान् द्रव्यभेदेन ॥ १० ॥

तेषां सर्व्वेषामेव वातपित्तश्लेष्माणो दुष्टा दूषयितारो भवन्ति दोषत्वात्। वातादीनां पुनर्धात्वन्तरे कालान्तरे दुष्टानां त्रिविधाशितपीतीयेऽध्याये विज्ञानान्युक्तानि। एतावत्येव

वातपित्तश्लेष्माणः। ये चान्येऽपीति अजीर्णान्न-क्रिम्यादयस्तिष्ठन्ति तान् सर्व्वान् शरीरच्छिद्रेषूपदेहकरादीन्। इतरांस्तु त्वग्रसादीन् प्रसादाख्यान्। गुणभेदेन गुर्व्वादीन् संचक्ष्महे। द्रव्यभेदेन रसादीन् शुक्रान्तान् सञ्चक्ष्महे। रसस्य श्रेयस्त्वञ्च रसशब्देन गृह्यते ॥ १० ॥

गङ्गाधरः—तेषामित्यादि। तेषां मलानां रसादीनाञ्च सर्व्वेषां दूषयितारो दुष्टा वातपित्तश्लेष्माणः। धात्वन्तरे कालान्तरे च दुष्टानां वातादीनान्तु

ये तु उपलेपमात्रकारका गुणकर्त्तृतया, न ते मलाख्याः। परिपक्वाश्च धातव इति पाकात् पूयतां गताश्च शोणितादयो मलाख्याः। किंवा अपक्वाश्चेति पाठः। तदा समधातवो मलाख्या इति ज्ञेयम्। कुपिताश्चेति पदेन वातादयः सामान्येन क्षीणा वृद्धा वा गृह्यन्ते। विकृतिमात्रं हि वातादीनां कोपः। ये चान्येऽपीत्यादिना विमार्गगतान् पीड़ाकारकान् शरीरधातून् तथाजीर्णादीन् ग्राहयन्ति। मल इति एकवचनं जातौ। इतरानिति स्वमानस्थितपुरीषवातादीन्। पुरीषवातादयोऽपि शरीरावष्टम्भकाः प्रसाद एव गुणकर्त्तृत्वात्। शरीरगतान् मलप्रसादभावानभिधाय पुनर्गुणद्रव्यभेदानाह—गुर्व्वादींश्चेत्यादि। गुर्व्वादयो द्रवान्ताः पश्चादुक्ता एव। अत्र च ये मला उपधातवश्च नोक्ताः, ते गुर्व्वादिगुणाधारत्वेन ग्राह्याः। किंवा इतरांस्तु निर्व्बाधकरान् मलादीन् प्रसादे सञ्चक्ष्महे, तथा गुर्व्वादींश्च तथा रसादींश्च निर्व्विकारान् द्रव्यगुणरूपान् प्रसादे सञ्चक्ष्महे इति व्याख्येयम् ॥ १० ॥

चक्रपाणिः—अथ यदेतत् पुरीषादीनां मलत्वम्, तद्दूषणाय भवति। तेन तेषां दूषकत्वे हेतुमाह—तेषामित्यादि। तेषामिति पुरीषादीनां रसादीनाञ्च। दुष्टा इति स्वहेतूपचिताः। क्षीणास्तु नानादुष्टिं दोषाः कुर्व्वन्तीति प्रतिपादितमेव। अथ धात्वन्तराश्रयिणां वातादीनां दुष्टानां किं तल्लक्षणम्, येन ज्ञातव्या इत्याह—वातादीनामित्यादि। विज्ञानानीति लक्षणानि।

* मलानित्यत्र मले तथा प्रसादाख्यानित्यत्र प्रसादे इति चक्रधृतः पाठः।

दुष्टदोषगतिर्यावत् संस्पर्शनाच्छारीरधातूनाम् । प्रकृतिभूतानान्तु खलु वातादीनां फलमारोग्यम् । तस्मादेषां प्रकृतिभावे प्रयतितव्यं बुद्धिमद्भिः ॥ ११ ॥

तत्र श्लोकः ।

सर्व्वदा सर्व्वथा सर्व्वं शरीरं वेद यो भिषक् ।
आयुर्व्वेदं स कात्स्न्येन वेद लोकसुखप्रदम् ॥ १२ ॥

विज्ञानानि लक्षणानि अश्रद्धा चारुचिश्चास्येत्यादिभिरुक्तानि । यावत् संस्पर्शनादिति शरीरधातूनां संस्पर्शनेन्द्रियलक्ष्य यावत् । दुष्टदोषगतिरेतावती । तदतीता तु न दुष्टदोषगतिरस्तीति । दुष्टदोषकार्य्यमुक्त्वा प्रकृतिभूतानां वातादीनां कार्य्यमाह—प्रकृतिभूतानामित्यादि । तस्मादित्यारोग्यफलकत्वात् एषां वातादीनाम् ॥ ११ ॥

गङ्गाधरः—एतमर्थं श्लोकेनाह—सर्व्वदेत्यादि । वेदेति वेत्ति । लोकसुखप्रदमायुर्व्वेदम् । स कृत्स्नेन वेद वेत्ति ॥ १२ ॥

ननु रसाद्याश्रयदुष्टवातादिलक्षणं तावत् विविधाशितपीतीये चोक्तम् । केशमूत्रनखाद्याश्रयदुष्टलक्षणन्तु यदत्र नोक्तम्, तत् कथं ज्ञेयमित्याह—एतावत्येवेत्यादि । केशादौ दुष्टानामपि वातादीनां गतिर्नास्तीति वाक्यार्थः । यावत् संस्पर्शनादिति स्पर्शनेन्द्रियव्याप्यत्वेन शरीरधातूनां दूषणे स्पर्शनेन्द्रियपर्य्यन्तमेव दुष्टदोषगतिर्भवति, तेन न केशादिषु दुष्टदोषगतिः । यत् तु पलितादिकेशे मूत्रे नखे वा पुष्पम्, तत् स्पर्शवच्छरीरस्थितेनैव दोषेण कृतम्, न पुनर्नखमूत्रकेशेष्वपि स्वमार्गचारी दोषः प्रचरतीति ब्रुवते । वयन्तु ब्रूमः—विविधाशितपीतीयोक्तदुष्ट्या सर्व्वदुष्ट्युपसंग्रहो भवतीति दर्शयन्नाह—एतावत्येवेत्यादि । यावत् संस्पर्शनादिति कृत्स्नसम्बन्धात् । तेन शरीरधातूनां यावत् स्पर्शनाद् दुष्टदोषगतिर्भवति, सा एतावत्येव, सा सर्व्वा विविधाशितपीतीयोक्तैव, न ततोऽधिका दुष्टिर्देहस्यास्ति । तत्र हि "मलानाश्रित्य दुष्टास्तु भेदशोषप्रदूषणम्" इति ग्रन्थेन कृत्स्नग्रहणात् केशनखौ च मलौ गृहीतावेव । एतेन नखाग्रकेशाग्रगतेन दोषेणैव कृतं भवेत् । अथ दुष्टा वातादयो दुष्टिलक्षणानि कुर्व्वन्ति, प्रकृतिस्थास्तु किं कुर्व्वन्तीत्याह—प्रकृतिभूतानामित्यादि । सम्प्रत्युक्तप्रकरणजन्यशरीरज्ञानस्य फलमाह—शरीरमित्यादि ॥ ११।१२ ॥

तमेवमुक्तवन्तं भगवन्तमात्रेयमग्निवेश उवाच। श्रुतमेतद् यदुक्तं भगवता शरीराधिकारे वचः। किं नु खलु गर्भस्याङ्गं पूर्व्वमभिनिर्व्वर्त्तते कुक्षौ, कुतोमुखः कथं वा चान्तर्गतस्तिष्ठति, किमाहारश्च वर्त्तयति, कथम्भूतश्च निष्क्रामति, कैश्चायमाहारोपचारैर्जातस्सद्व्याधिरभिवर्द्धते, सद्यो हन्यते कैः, कथश्चास्य देवादिप्रकोपनिमित्ता विकारा उपलभ्यन्ते आहोस्विन्न, किञ्चास्य कालाकाल-मृत्योर्भावाभावयोर्भगवानध्यवस्यति, किञ्चास्य परमायुः, कानि चास्य परमायुषो निमित्तानीति ॥१३॥

तमेवमुक्तवन्तमग्निवेशं भगवान् पुनर्व्वसुरात्रेय उवाच। पूर्व्वमुक्तमेतद्गर्भावक्रान्तौ यथायमभिनिर्व्वर्त्तते कुक्षौ। यच्चास्य यदा सन्तिष्ठतेऽङ्गजातम्। विप्रतिपत्तिवादास्तत्र बहुविधाः

गङ्गाधरः—तमेवेत्यादि। एवं पूर्व्वमुक्तं यावत् तावदुक्तवन्तं भगवन्तम्। यत्प्रश्नमुवाच तदाह—किं न्वित्यादि। नु भो गर्भस्य खलु किमङ्गं कुक्षौ पूर्व्वमभिनिर्व्वर्त्तते। इत्यादयः प्रश्नाः॥ १३॥

गङ्गाधरः—तेषामुत्तरमुवाच। तदाह—पूर्व्वमुक्तमित्यादि। यदङ्गं कुक्षौ गर्भस्य

चक्रपाणिः—शरीरविचायकं प्रकरणं समाप्य गर्भशरीरविचायकं प्रकरणमारभते—एवंवादिनमित्यादि। कुक्षाविस्यन्तेन एकः प्रश्नः। कुतोमुखः कथञ्चान्तर्गतस्तिष्ठतीति द्वितीयः। निष्क्रामतीत्यन्तेन तृतीयः। कैश्चायमाहारोपचारैर्जातः सद्यो हन्यत इति चतुर्थः। कैर्व्याधिरभिवर्द्धत इति पञ्चमः। आहोस्विन्नेत्यन्तः षष्ठः। शेषं प्रश्नत्रयं पूर्व्वप्रश्नद्वयस्य व्यवच्छेदमेव। एवं नव प्रश्नाः। अध्यवस्यतीति निश्चिनोति ॥ १३ ॥

चक्रपाणिः—यथाक्रममुत्तराण्याह—पूर्व्वमित्यादि। पूर्व्वमुक्तमिति यच्चास्य यदा सन्तिष्ठते अङ्गजातम्, तदपि गर्भावक्रान्तौ 'एवमस्य युगपदिन्द्रियाणि अङ्गावयवाश्च यौगपद्येनाभिनिर्व्वर्त्तन्ते, अन्यत्र तेभ्यः, येऽस्य जातस्योत्तरकालं जायन्ते" इत्यादिना ग्रन्थेनोक्तम्। यद्यपि 'कथमभिनिर्व्वर्त्तते कुक्षौ, इति नेह पृष्टम्, तथापि अभिनिर्वृत्तिक्रमोपदर्शनेन "किं नु खलु गर्भस्याङ्गं पूर्व्वमभिनिर्व्वर्त्तते" इति प्रश्नस्य यथोक्तोत्पादक्रमोपदर्शनादुत्तरं भवतीति मुनिनोक्तम्,—'उक्तमेतत् गर्भावक्रान्तौ यथायमभिनिर्व्वर्त्तते कुक्षौ' इति। उक्तामपि युगपदङ्गाभिनिर्वृत्तिं

सूत्रकारिणामृषीणां सन्ति सर्व्वेषां, तानपि निबोधोच्यमानान् । शिरः पूर्व्वमभिनिर्व्वर्त्तते कुक्षाविति कुमारशिरा भरद्वाजः पश्यति, सर्व्वेन्द्रियाणां तदधिष्ठानमिति । हृदयमिति काङ्कायनो वाह्लीकभिषक् चेतनाधिष्ठानत्वात् । नाभिरिति भद्रकाप्य आहारागम इति कृत्वा । पक्वगुदमिति* शौनको मारुताधिष्ठानत्वात् । हस्तपादमिति वड़िशस्तत्करणत्वात् पुरुषस्य । इन्द्रियाणीति जनको वैदेहस्तान्यस्य बुद्ध्यधिष्ठानानीति कृत्वा । बुद्धिपरोक्षत्वादचिन्त्यमिति मारीचिः कश्यपः । सर्व्वाङ्गनिर्वृत्तिः युगपदिति धन्वन्तरिः । तदुपपन्नं सर्व्वाङ्गाणां तुल्यकालाभि-

पूर्व्वमभिनिर्व्वर्त्तते । अत्र विप्रतिवादाः सूत्रकारिणामृषीणां बहुविधास्तानुच्यमानान् मया त्वं निबोध । तद् यथाह—शिरः पूर्व्वमित्यादि । कुमारशिरा भरद्वाजः पश्यति सर्व्वेन्द्रियाणां तद्धि शिरोऽधिष्ठानमिति । हृदयं पूर्व्वमभिनिर्व्वर्त्तते कुक्षाविति काङ्कायनः । सर्व्वाङ्गनिर्वृत्तियुगपदिति धन्वन्तरिरित्यन्ता विप्रतिपत्तीः कुमारशिरःप्रभृतिवच्छौनकादयोऽपि चक्रुस्तदुक्तं सुश्रुते । "गर्भस्य हि सम्भवतः पूर्व्वं शिरः सम्भवतीत्याह शौनकः शिरोमूलत्वाद् देहेन्द्रियाणाम् । हृदयमिति कृतवीर्य्यो बुद्धेर्मनसश्च स्थानत्वात् । नाभिरिति पाराशर्य्यस्ततो हि वर्द्धते देहो देहिनः । पाणिपादमिति मार्कण्डेयस्तन्मूलत्वाच्चेष्टाया गर्भस्य । मध्यशरीरमिति सुभूतिर्गौतमस्तन्निबद्धत्वात् सर्व्वगात्रसम्भवस्य । तत् तु न सम्यक् । सर्व्वाङ्गप्रत्यङ्गानि युगपत् सम्भवन्तीत्याह धन्वन्तरिः । गर्भस्य सूक्ष्मत्वान्नोपलभ्यन्ते वंशाङ्कुरवच्चूतफलवच्च । तद् यथा चूतफले परिपक्वे केशरमांसास्थिमज्जानः पृथग् दृश्यन्ते कालप्रकर्षात्, तान्येव तरुणे नोपलभ्यन्ते सूक्ष्मत्वात् तेषां सूक्ष्माणां केशरादीनां कालः प्रव्यक्ततां करोति । एतेनैव वंशाङ्कुरोऽपि व्याख्यातः । एवं गर्भस्य तारुण्ये सर्व्वेष्वङ्गप्रत्यङ्गेषु सत्स्वपि सौक्ष्म्यादनुप-

मतान्तरोद्धारेण स्थिरं कर्त्तुमाह—विप्रतिवादास्त्वत्रेत्यादि । पक्वाशयश्च गुदश्चेति पक्वाशयगुदम् । किंवा पक्वाशयसमीपस्थगुदम् उत्तरगुदमित्यर्थः । इन्द्रियाणीति इन्द्रियाधिष्ठानानि नयनगोलकादीनि । तदुपपन्नमिति प्रतिज्ञाभिहितार्थस्य युगपदङ्गाभिनिर्वृत्तिरूपस्य सिद्धत्वादिति

* पक्वाशयगुदमिति वा पाठः ।

र्वृत्तत्वाद् । हृदयप्रभृतानां * सर्व्वाङ्गाणां ह्यस्य हृदयं मूलमधिष्ठानञ्च केषाञ्चिद्भावानाम्, न च तस्मात् पूर्व्वाभिनिर्वृत्तिः एषाम् । तस्माद् हृदयपूर्व्वाणां सर्व्वाङ्गाणां तुल्यकालाभिनिर्व्वृत्तिः । सर्व्वभावा ह्यन्योन्यप्रतिबद्धास्तस्माद् यथाभूतदर्शनं साधु ॥ १४ ॥

लब्धिः । तान्येव कालप्रकर्षात् प्रव्यक्तानि भवन्ति ।" इति । एतद्धन्वन्तरिमतम् अनुमन्तुमाह—तदुपपन्नमित्यादि । कस्मात् तदुपपद्यत इत्यत आह—सर्व्वाङ्गाणामित्यादि । तत्रापि किञ्चित् स्वमतमुपदर्शयन्नुपपादयति—हृदयेत्यादि । हि यस्मात् हृदयप्रभृतीनां सर्व्वाङ्गाणामस्य गर्भस्य हृदयादिसर्व्वाङ्गाणां हृदयं मूलं केषाञ्चिद् भावानामोजःप्रभृतीनाम् आत्ममनोबुद्धीनाञ्चाधिष्ठानञ्च तस्माद् हृदयस्य पूर्व्वाभिनिर्व्वृत्तिरिति काङ्कायनकृतवीर्य्यसोमतमङ्गप्रत्यङ्गानां पूर्व्वाभिनिर्व्वृत्तावेषां सर्व्वाङ्गाणां पूर्व्वं हृदयस्याभिनिर्व्वृत्तिरिति न सम्यक् । सर्व्वाङ्गप्रत्यङ्गानि युगपत् सम्भवन्तीति धन्वन्तरिमतञ्च सम्यक् उपपन्नं यथा तदाह—तस्माद् हृदयपूर्व्वाणामित्यादि । पूर्व्वं हृदयस्याभिनिर्व्वृत्तिरात्मावक्रान्तिम् अन्तरेणाङ्गाभिनिर्व्वृत्तेरसम्भवात् आदौ गर्भाशयगते शुक्रशोणिते यत्रात्मावक्रम्य तिष्ठति तदेव हृदयं भवति । तस्माद् हृदयनिर्देशपूर्व्वाणां सर्व्वाङ्गाणां तुल्यकालाभिनिर्व्वृत्तिः । कस्मात् ? सर्व्वभावा हीत्यादि । हि यस्मात्

हेत्वर्थः प्रतिज्ञार्थादभिन्न एव । ये तु तुल्यकालाभिनिर्व्वृत्तत्वादिति पठन्ति, तेषां हेत्वर्थो व्यक्तत्वादभिन्न एव । येन उत्तरकालमपि सर्व्वाङ्गाणां युगपद् वृद्धिदर्शनम् । समानकालवर्द्धमानानां फलानां समकालमेव जन्मानुमीयते, असमानकालजातानां न समानकालसमा वृद्धिर्भवति । पूर्व्वर्षीणां मतानि हृदयपूर्व्वाभिनिर्व्वृत्तिदूषणेनैव समानन्यायाद् दूषयन्नाह—सर्व्वाङ्गाणां तस्येत्यादि । मूलमिव मूलम्, तदुपघातेन सर्व्वाङ्गोपघातात् । अधिष्ठानमित्याश्रयः । तत्रौजःप्रभृतीनामधिष्ठानं हृदयञ्च भवति, न च तस्मात् पूर्व्वाभिनिर्व्वृत्तिरिति तस्याधिष्ठानमूलत्वात्, नानधिष्ठानानाञ्च पूर्व्वाभिनिर्व्वृत्तिर्भवति । यदि हि मूलं कारणमिह मतं स्यात्, तदा प्राक् कार्य्येभ्योऽङ्गेभ्यश्च हृदयं स्यात्, न चेहाङ्गानां हृदयं कारणम्, किन्तु प्रधानम्, प्राधान्यञ्च तदुपघातेन सर्व्वोपघातात् इति । यश्चाप्याश्रयाश्रयिभावः, स चापि सहोत्पन्नानामेव । हृदयं सदाश्रितौजःप्रभृतीनां प्रधानं भवतीति भावः । तदेवं चेत् हृदयस्य प्रधानस्य पूर्व्वोत्पादो नास्ति, तदा शिरःप्रभृतीनामपि पूर्व्वोत्पादो नास्त्येवेति कृत्वोपसंहरन्नाह—एषां तस्मादित्यादि । युगपदभिनिर्व्वृत्तो

* सर्व्वाङ्गाणां तुल्यकालाभिनिर्व्वृत्तत्वाद् । हृदयप्रभृतीनामित्यत्र सिद्धत्वादिति चक्रः ।

गर्भस्तु खलु मातुः पृष्ठाभिमुख ऊर्द्ध्वशिराः सङ्कुच्याङ्गानि आस्ते जरायुवृतः कुक्षौ। व्यपगतबुभुक्षापिपासस्तु गर्भः परतन्त्र-वृत्तिर्मातरमाश्रित्य वर्त्तयत्युपस्नेहोपस्वेदाभ्याम्, गर्भस्तु सद-सद्भूताङ्गावयवः। तदनन्तरं ह्यस्य लोमकूपायनैरुपस्नेहः कश्चित्

सर्व्वभावा अन्योन्यप्रतिवद्धा न ह्येकं विना अपरो भावः शरीरे प्रतिवद्धो वर्त्तते। तस्माद् यथाभूतदर्शनमुक्तरूपेण दर्शनम् साधु। इति पूर्व्वप्रश्नस्योत्तरमिति ॥१४

गङ्गाधरः अथ कुतोमुखः कथं वा चान्तर्गतस्तिष्ठतीति द्वितीयप्रश्नोत्तर-माह—गर्भस्त्वित्यादि कुक्षावित्यन्तम्। तत्र कुतोमुख इत्यस्योत्तरं—मातुः पृष्ठाभिमुख इति। कथं वा चान्तर्गतस्तिष्ठतीत्यस्योत्तरमाह—ऊर्द्ध्वशिरा इत्यादि। जरायुवृतः कुक्षाविति। जरायुवृतमुखत्वाद् गर्भो न कुक्षौ रोदिति। तदुक्तं सुश्रुते—जरायुणा मुखे च्छन्ने कण्ठे च कफवेष्टिते। वायोर्मार्ग-निरोधाच्च न गर्भस्थः प्ररोदिति॥ इति। अथ गर्भः किमाहारश्च वर्त्तयतीति प्रश्नस्योत्तरमाह—व्यपगतेत्यादि। क आहारो यस्य स किमाहारो गर्भो वर्त्तयतीति चौरादिको वृतिः। गर्भः कुक्षौ व्यपगतक्षुत्पिपासस्तु सन् परतन्त्रवृत्तिर्मातरमाश्रित्य वर्त्तयति। व्यपगतबुभुक्षापिपास इति निरा-हारश्चेत् कथं जीवन् वर्त्तते इत्यत आह—परतन्त्रवृत्तिरिति। कोऽसौ परो यस्य तन्त्रवृत्तिर्वर्त्तत इत्यत आह—मातरमाश्रित्य वर्त्तयति। कथं निराहार इत्यत आह—उपस्नेहोपस्वेदाभ्यामिति। गर्भाशयस्य यः स्नेहो यश्चोष्मा तत्-स्नेहस्य स्नेहेन तदुष्मणः स्वेदेन गर्भाशये वर्त्तयति, यथा घृतादिस्निग्धभाण्डे स्थित वस्तु वर्त्तते। तथा गर्भाशये सदसद्भूताङ्गावयवः किञ्चिदङ्गं जातं किञ्चिदजात-मिति सदसद्भूताङ्गावयवो यदा गर्भस्तदैवमुपस्नेहोपस्वेदाभ्यां गर्भाशये वर्त्तते। सदवयवस्तु कथं वर्त्तते इत्यत आह—तदनन्तरमित्यादि। तत्सदसद्भूता-ङ्गावयवानन्तरं सद्भूताङ्गावयवस्यास्य गर्भस्य लोमकूपायनैः कश्चिदुपस्नेहः कश्चित्

इत्यन्तरमाह—सर्व्वभावा हीत्यादि। भावा इति शरीरभावाः। अन्योन्यप्रतिबद्धा इति यस्मात् सर्व्वभावाः परस्परप्रतिबद्धा एव सिरास्नाय्वादिभिर्जायन्ते, तेन समाननिबन्धना युगपदेव भवन्ति। यथाभूतदर्शनमिति यथात्मदर्शनम्, तच्च धन्वन्तरिमतमेव ॥ १४ ॥

चक्रपाणिः—गर्भस्त्वित्यादि द्वितीयप्रश्नस्योत्तरम्। 'व्यपगत' इत्यादि, "किमाहारश्च वर्त्तयति" इति प्रश्नस्योत्तरम्। परतन्त्रवृत्तिरिति मात्रधीनवृत्तिः। एतदेव विवृणोति—मातरमित्यादि। उपस्नेहो निष्यन्दः। सदसद्भूताङ्गावयव इतिच्छेदः। तदनन्तरमित्यङ्गप्रत्यङ्गवृत्तौ सत्याम्।

नाभिनाड्ययनैः। नाभ्यां ह्यस्य नाड़ी प्रसक्ता, सा नाभ्याञ्च अमरा। अमरा चास्य मातुः प्रसक्ता हृदये। मातृहृदयं ह्यस्यताममरामभिप्लवते सिराभिः स्यन्दमानाभिः। स तस्य रसो बलवर्णकरः सम्पद्यते। स च सर्व्वरसवानाहारः स्त्रिया ह्यापन्नगर्भायास्त्रिधा रसः प्रतिपद्यते स्वशरीरपुष्टये स्तन्याय गर्भवृद्धये च। स तेनाहारेणोपष्टब्धो वर्त्तयत्यन्तर्गतः। स चोप-

नाभिनाड्ययनैरुपस्नेहस्तं गर्भं वर्त्तयति। कथं नाभीनाड्ययनैरित्यत आह—नाभ्यां हीत्यादि। हि यस्मादस्य गर्भस्य सर्व्वभूताङ्गावयवस्य या नाभिप्रसक्ता नाड़ी सा नाभ्याश्च अमरा नाम नाड़ी। अमरा चास्य गर्भस्य मातुर्हृदये प्रसक्ता। मातृहृदयश्चास्य ताममरां गर्भनाड़ीं स्वप्रसक्तां नाड़ीं रसं स्यन्दमानाभिः सप्तशतसिराभिरभि व्याप्य प्लवते आप्लवते। स मातुः सिराभिः स्यन्दितो रसस्तस्य गर्भस्य बलवर्णकरः सम्पद्यते। यदि मातुराहाररसो गर्भस्य बलवर्णकरः सम्पद्यते, तर्हि मातुः शरीरं कथं पुष्यतीत्यत आह—स चेत्यादि। स सर्व्वरसवान् आहार आपन्नसत्त्वायाः स्त्रियाः त्रिधा रसः त्रिभागरसः सम्पद्यते। आहारपरिणतरसस्य त्रयो भागा भवन्ति, एकभागो रसः स्त्रियाः स्वशरीरपुष्टये सम्पद्यते, द्वितीयो रसभागः स्तन्याय सम्पद्यते, तृतीयो रसभागस्तु गर्भवृद्धये। तत्तृतीयं रसभागं स्यन्दमानाभिः सिराभिर्गर्भस्यामरामभिप्लवते, तेन मातृरसं स्यन्दमानाभिः सिराभिरभिप्लुतया नाभिनाड्याऽभिष्यन्दितेन रसेनाहारेण गर्भ उपष्टब्धः सन्नन्तर्गतो गर्भाशये वर्त्तयतीति। तेन मूत्रपुरीषवातोत्सर्गाभावः सर्व्वसम्पूर्णधातुत्वेऽप्यल्पमूत्रपुरीषवातत्वात्। सुश्रुते चोक्तम्। मलाल्पत्वादयोगाच्च वायोः पक्काशयस्य च। वातमूत्रपुरीषाणि न गर्भस्थः करोति हि॥ इति। नाभिनाड्ययनैः यमाहाररसमेवाहरति तज्जनितवातमूत्रपुरीषाण्यल्पानि भवन्ति तेषु पक्काशयसंयोगाभावादपानयोगाभावाच्च अप्रवृत्तिर्भवति। इति तृतीयप्रश्नस्योत्तरम्।

नाभिसक्ता नाड़ी नाभिनाड़ी। अयनैरिति मार्गैः। अपरा गर्भस्य नाभिनाड़ीप्रतिबद्धा 'अमरा' इति ख्याता। अभिसंप्लवते इति प्राप्नोति। एतच्चापरादिजन्म गर्भादृष्टवशात् भवति। कथंभूतोः

स्थितकाले जन्मनि प्रसूतिमारुतयोगात् परिवृत्त्या अवाक्‌शिराः निष्क्रामत्यपत्यपथेन । एषा प्रकृतिः, विकृतिः पुनरतोऽन्यथा । परन्त्वत एव स्वतन्त्रवृत्तिर्भवति ॥ १५ ॥

तस्याहारोपचारौ जातिसूत्रीयोपदिष्टावविकारकरौ चाभिवृद्धिकरौ भवतः । ताभ्यामेव विषमाभ्यां जातः सद्य उपहन्यते तरुरिवाचिरव्यपरोपितो वातातपाभ्यामप्रतिष्ठितमूलः ।

अथ कथम्भूतश्च निष्क्रामतीति प्रश्नस्योत्तरमाह—स चोपस्थितकाल इत्यादि । स च परिपूर्णसर्व्वाङ्गगर्भे उपस्थितकाले जन्मनि जन्मकालोपस्थितौ प्रसूतिमारुतयोगात् प्रसूयते येन वायुना तद्वायुयोगात् परिवृत्त्या मातुः पृष्ठाभिमुख ऊर्द्ध शिराः शिरःपरिवर्त्तनेनाधःशिरा भूत्वाऽपत्यपथेन योनिपथेन निष्क्रामति निर्गच्छति । सुश्रुतेऽप्युक्तम्—शङ्खनाभ्याकृतिर्योनिस्त्र्यावर्त्ता सम्प्रकीर्त्तिता । तस्यास्तृतीये त्वावर्त्ते गर्भशय्या प्रतिष्ठिता ॥ यथा रोहितमत्स्यस्य मुखं भवति रूपतः । तत्संस्थानां तथारूपां गर्भशय्यां विदुर्बुधाः ॥ आभुग्नोऽभिमुखः शेते गर्भो गर्भाशये स्त्रियाः । स योनिं शिरसा याति स्वभावात् प्रसवं प्रति ॥ इति । एषा प्रकृतिः प्रसवस्य । अतोऽन्यथा मूढ़गर्भोक्तप्रकारेण प्रसवो विकृतिः । इत्येवं प्राग् जन्मनः परतन्त्रवृत्तिः । परन्तु अतो जन्मनः परन्तु स्वतन्त्रवृत्तिर्भवत्याहारविहारादिषु, स्वेन निजेन तन्त्रः स्वतन्त्रः स्वाधीनः । इति चतुर्थप्रश्नोत्तरम् ॥ १५ ॥

गङ्गाधरः—कैश्चायमाहाराचारैर्जातोऽव्याधिर्वर्द्धते, कः सद्यो हन्यत इति पञ्चमप्रश्नस्योत्तरमाह—तस्येत्यादि । तस्य गर्भस्य जातस्य जातिसूत्रीयोपदिष्टावित्यतः परं वक्ष्यमाणाध्यायोक्तौ आहारोपचारौ अविकारकरौ अभिवृद्धिकरौ च भवतः । ताभ्यामाहारोपचाराभ्यामेव विषमाभ्यां सेविताभ्यां जातः पुत्रः सद्य उपहन्यते । तत्र दृष्टान्तमाह—तरुरिवेत्यादि । यथा तरुरचिरव्यप-

निष्क्रामतीत्यस्योत्तरम्—स चोपस्थितकाल इत्यादि । उपस्थितकाल इति प्रत्यासन्नकाले । विकृतिरतोऽन्यथेति निर्गत्य चरणेनापि निर्गमो भवतीति दर्शयति । स्वतन्त्रवृत्तिर्भवतीति स्वयंकृतेन स्तन्यपानादिना वर्त्तते, न गर्भस्थ इव मातुरेवाहारेण परं वर्त्तत इत्यर्थः ॥ १५ ॥

चक्रपाणिः—'कैश्चायम्' इत्यादिप्रश्नस्योत्तरम्—तस्येत्यादि । 'जातिसूत्रीयोपदिष्टौ' इत्यनागतावेक्षणेनानागते भूतवत्प्रयोगाद बोद्धव्यम् । व्यपरोपितस्तत्स्थानादारोपितः । किञ्चास्येत्यादि-

आप्तोपदेशादद्भुतरूपदर्शनात् समुत्थानलिङ्गचिकित्सितविशेषाच्च * दोषप्रकोपानुरूपाश्च देवादिप्रकोपनिमित्ताश्च विकाराः समुपलभ्यन्ते ॥ १६ ॥

कालाकालमृत्य्वोस्तु भावाभावयोरिदमध्यवसितं नः। यः कश्चिन्म्रियते सर्व्वः काल एव स म्रियते। न हि कालच्छिद्र-

रोपितः शीघ्रमुत्पाट्य प्रतिरोपितो विषमाभ्यां वातातपाभ्यामप्रतिष्ठितमूलोऽस्थिरमूलः सद्य उपहन्यते तद्वत्। इति पञ्चमप्रश्नस्योत्तरम्। अथ किञ्चास्य देवादिप्रकोपनिमित्ता विकाराः समुपलभ्यन्ते, इति षष्ठप्रश्नस्योत्तरमाह— आप्तोपदेशादित्यादि। अस्य जातस्य शिशोर्देवादिप्रकोपनिमित्ताः स्कन्दादिग्रहावेशनिमित्ता विकारा दोषप्रकोपानुरूपा आप्तोपदेशात् समुपलभ्यन्तेऽद्भुत-(रूप)-दर्शनादाश्चर्य्य-(रूप)-दर्शनाच्च समुपलभ्यन्ते। समुत्थानविशेषान्निदानविशेषाल्लिङ्गविशेषाच्चिकित्सितविशेषाच्च समुपलभ्यन्ते। इति षष्ठप्रश्नोत्तरम् ॥ १६ ॥

गङ्गाधरः—अथ कालमृत्य्वोर्भावाभावयोः किमध्यवस्यति, अकालमृत्योर्भावे किमध्यवस्यति, अकालमृत्योरभावे च किमध्यवस्यतीति प्रश्नोत्तरमाह— कालाकालेत्यादि। इदमित्यत उत्तरं वक्ष्यमाणम्। अध्यवसितं निश्चयेन नोऽस्माकं व्यवसितम्। तत् किमित्यत आह—य इत्यादि। यः कश्चित् म्रियते

प्रश्नस्योत्तरम्—आप्तोपदेशादित्यादि। आप्तोपदेश इति कुमारतन्त्रोपदेशो ब्रह्मादिप्रणीतः। तत्र हि कुमाराणां देवादिनिमित्तविकाराः प्रतिपाद्यन्ते। देवादिग्रहणेन च तदनुचरा अपि गृह्यन्ते। स्कन्दग्रहादयः सुश्रुतोक्ता देवादयश्चाष्टौ। यदुक्तम्—'देवास्तथा शत्रुगणाश्च तेषां गन्धर्व्वयक्षाः पितरो भुजङ्गाः। तथैव रक्षांसि पिशाचजातिरेषोऽष्टको देवगणो ग्रहाः स्युः ॥' इति। अनुमानमप्यत्राह—अद्भुतेत्यादि। अद्भुतमाश्चर्य्यमिति यावत्, अद्भुतरूपदर्शनादिना यद् भवति, तच्चामानुषबलशौभादि ज्ञेयम्। एतद्धि दोषाजन्यत्वाद् देवादिकारणं गमयति। समुत्थानादिविशेष आगन्तूनामागन्तुविकारेषु स्फुट एव। अदोषप्रकोपानुरूपा इति दोषप्रकोपजन्यरोगविधर्म्माणः ॥ १६ ॥

चक्रपाणिः—कालाकालेत्यादौ 'इदमध्यवसितम्' इत्यनेन, प्रकरणव्यवस्थापनीयत्वम्, 'तस्मात् उभयमस्ति काले मृत्युरकाले च' इति ग्रन्थे वक्ष्यमाणं प्रत्यवमृषति। एकीयमतमाह—यः

* अदोषप्रकोपानुरूपा इति वा पाठः।

मस्तीत्येके भाषन्ते । तच्च असम्यक् । न ह्यच्छिद्रता सच्छिद्रता वा कालस्योपपद्यते कालस्वलक्षणभावात् ॥ १७ ॥

तथाहुरपरे—अकालमृत्युर्नास्ति, यो यदा म्रियते स तस्य नियतो

स सर्व्वः काल एव म्रियते। ननु योऽयं कश्चिद्बाल्ये म्रियतेऽपरो यौवने, सोऽपि सर्व्वः किं काल एव म्रियते कस्मादित्यतो हेतुमाह—न हीत्यादि। हि यस्मात् कालच्छिद्रं नास्ति। कालो हि महानसङ्गो नित्यगश्चक्रवद् भ्रमति न काल-व्यतिरेकेण कश्चिदस्ति यस्त्वकालोऽभिधीयते। इत्यतोऽकालाभावाद् योऽयं वर्त्तते स यदा मरिष्यति सोऽप्यस्मिन्नेव काले सर्व्वः काल एव म्रियते। इति कालमृत्युरेवास्ति न त्वकालमृत्युरस्तीत्येके भाषन्ते एके मुनयो वदन्ति। मतमेतद् दूषयति—तच्चेत्यादि। ननु कस्मात् तदसम्यगित्यत आह—न हीत्यादि। हि यस्मात् कालस्याच्छिद्रता सच्छिद्रता वा कालस्याविच्छेदेन चक्रवद्भ्रमणस्वभावस्य लक्षणभावान्नोपपद्यते। चक्रवद्भ्रमणेन नित्यगत्वस्य लक्षणत्वेन सच्छिद्रता नोपपद्यते। शीतोष्णवर्षादिस्वलक्षणत्वेन षड्ऋतुमासपक्ष-दिनरात्रिप्रहरादिस्वलक्षणत्वेनाच्छिद्रता च नोपपद्यते ऋतुमासादिलक्षणत्वेना-च्छिद्रता नोपपद्यते इति भावस्तस्मात् तदसम्यक्॥ १७ ॥

गङ्गाधरः—तथाहुरित्यादिना परेषां मतमाह—तथा अकालमृत्युर्नास्तीति आहुरपरेऽन्ये मुनयः। परन्तु यो यदा म्रियते स तस्य नियतो मृत्युकाल इति कालमृत्युरेव हि भूतानामस्तीति। ननु यो यदा म्रियते स तस्य नियतो मृत्योः कालः, स च यद्यरिष्टाधिकारोक्तलक्षणैर्ज्योतिषादिना च विज्ञेयः तर्हि तेन विज्ञाय कालपरिमाणं प्रागपि ततः कालाद् युद्धादावसीषुशूलादि-प्रहरणादिना हतस्याकालमृत्युर्दृश्यते इति चेन्न। तथा मृत्युचिह्नमपि हि तस्य वर्त्तत एवेति। अरिष्टादि ज्ञात्वा तस्य नियत एवेति। (परे त्वित्यादि।)

कश्चिदित्यादि। न हि काले छिद्रमस्तीति कालविहितः कश्चिदवकाशोऽस्तीति यं कालशून्यमवकाशम् आसाद्याकाले मृत्युः स्यादिति भावः। एतद् दूषयति तच्चेत्यादिना। सान्तरं यदवयविद्रव्यम्, तत् सच्छिद्रमित्युच्यते। यच्च निरन्तरम्, तदच्छिद्रम्। तेन कालस्य निरवयवस्य सच्छिद्रता-ऽच्छिद्रता वा न सम्भवति, तेन यदुच्यते—"कालस्याच्छिद्रत्वान्नाकाले मृत्युरस्ति" इति तदयुक्तमिति भावः। यत् त्वकालमृत्युव्यापकत्वेन कालस्योपचरितच्छिद्रत्वम्, तदुत्तरवक्ष्यमाणैकजातीयमत-दूषणेनैव दूषितम्। कालस्वलक्षणस्वभावादिति कालस्वलक्षणे सच्छिद्रतायाः अच्छिद्रतायाश्च अभावादित्यर्थः। एकीयमतान्तरमाह—तथाहुरित्यादि। यो यदा म्रियते, स एव तस्य नियतो

मृत्युकालः, स सर्व्वभूतानां सत्यः समक्रियत्वादिति। तदपि चान्यथार्थग्रहणम्। न हि कश्चिन्न म्रियते इति समक्रियः। कालः पुनरायुषः प्रमाणमधिकृत्योच्यते। यस्य चेष्टं यो यदा म्रियते तस्य स नियतो मृत्युकाल इति। तस्य सर्व्वे भावा यथास्वं नियतकाला

कालः किञ्चिद्भूतमधुना न मारयत्यनुग्रहात्, किञ्चिन्न भूतमधुना मारयति निग्रहादिति विषमक्रियो न भवति परन्तु समक्रियत्वात् सर्व्वभूतानां सत्यश्च। सर्व्वभूतानां प्राक्तनकर्म्माद्यनुरूपेणायुषः क्षये कस्मिंश्चित् काले कस्यचिन्मरणं कस्यचिदायुषः शेषे सति कस्मिंश्चित् काले जीवनं न किमपि भूतम्। कालो मारयति न, वा जीवयति। परन्तु प्राक्तन-कर्म्मादिवशादायुषः कालपरिसंख्यापूरणकालतो म्रियन्ते सर्व्वाण्येव भूतानीति। कालः सर्व्वभूतानां समक्रियत्वात् सत्यः प्रकृतार्थकारीति; तस्मादकालमृत्युर्नास्त्यपि तु च कालमृत्युरेवेति पर आहुः। मतञ्चैतद् दूषयति—तदपि चेत्यादि। अन्यथार्थग्रहणमसम्यग् ज्ञानम्। ननु कस्मादन्यथार्थग्रहण तदित्यतो हेतुमाह—न हीत्यादि। हि यस्मात् कश्चिन्न म्रियते, कालः किञ्चिद्भूतं न मारयति द्वेषात् किञ्चिद्भूतं न जीवयत्यनुग्रहादिति समक्रियः कालो नोच्यते पुनः काल आयुषः प्रमाणं परिमाणमधिकृत्योच्यते। मरण-जीवनहेतुतया कालो यदुच्यते तर्हि सर्व्वेषां सर्व्वदा मरणापत्तिर्न हि मारकः कश्चित् कालो नियतो दृश्यते सर्व्वदा हि म्रियते सर्व्वदा च जीवतीत्यतश्च कालो न मरणमधिकृत्योच्यते परन्त्वायुषः परिमाणमधिकृत्योच्यते। परिमाणे परिपूर्णकाले मरणकारणान्म्रियते इत्यतो न समक्रियत्वं हेतुरिति समक्रिय-वादिमतदूषणम्। अथ यस्य चेत्यादिना यो यदा म्रियते स तस्य नियतो मृत्युकाल इति मतं दूषयति। तस्येति तस्य वादिनो मते सर्व्वे भावा

मृत्युकालः, इति कथं ज्ञायते इत्याह— कालः सर्व्वभूतानां सत्यः समक्रियत्वादिति, यस्मात् कालः सर्व्वभूतानामविशेषेण मारकतया समक्रियः, न रागात् किञ्चिद्भूतं मारयति, न द्वेषाद् वा किञ्चित् तु; किन्तु सर्व्वाण्येव हन्ति। तेन सर्व्वभूतानामयं सत्यो रागद्वेषशून्य इत्यर्थः। ततश्च राग-द्वेषशून्यतया हन्तैव परं मारयति, नानुचित इति भावः। दूषयति एतदपीत्यादिना। न हि कश्चिन्न म्रियत इति कृत्वा समक्रियः कालो भवत्येव, न तु शतवर्षलक्षणमायुःप्रमाणमधिकृत्य भवता समक्रियः कालोऽभिधीयते, यदि हि शतवर्षायुःप्रमाणेऽपि समक्रियः स्यात्, तेन शतवर्षाद् वा पूर्व्वं न केचिन्म्रियेरन्, दृश्यते चैतत्। तस्मादेवंभूतसमक्रियत्वेन कालस्य शतवर्षायुः-

भविष्यन्ति, तच्च नोपपद्यते । प्रत्यक्षं ह्यकालाहारवचनकर्म्मणां फलमनिष्टं विपर्य्यये चेष्टम् । प्रत्यक्षतश्चोपलभ्यते खलु कालाकालयुक्तिस्तासु तास्ववस्थासु तं तमर्थमभिसमीक्ष्य । तद् यथा—कालोऽयमस्य तु व्याधेराहारस्यौषधस्य प्रतिकर्म्मणो विसर्गस्य चाकालो वा । लोकेऽप्येतद्भवति—काले देवो वर्षत्यकाले वर्षति, काले शीतमकाले शीतं, काले तपत्यकाले तपति, काले पुष्पफलमकाले च पुष्पफलमिति । तस्मादुभयमस्ति काले

मृत्युमन्तो नामरास्तत्र केचिन्नियतमरणकालाः केचिदनियतमरणकालास्तत्र नियतकालाः सर्व्वे भविष्यन्ति । इष्टापत्तौ त्वाह—तच्चेत्यादि । कुतो नोपपद्यते इत्यतो हेतुमाह—प्रत्यक्षमित्यादि । अत्रायं भावः । यो यदा भुङ्क्ते स तस्य नियतो भोजनकाल इति चेत् तर्हि कथं यः कश्चिदेकदिनं मध्याह्ने भुङ्क्तेऽपरदिनं प्रातरपरेद्युः सायमित्यतस्तस्याकालभोजनफलं किं न स्यात् ? एवं यो यदा यद्वक्ति स तस्य वचनस्य नियतः काल एवञ्च यो यदा यत् कर्म्म करोति स तस्य नियतस्तत्कर्म्मकाल इत्यादौ व्याख्येयम् । विपर्य्यये मध्याह्नादिप्रतिनियतकाले भोजनादौ च फलमिष्टम् । हि यस्मात् प्रत्यक्षं तस्मात् यो यदा म्रियते स तस्य न नियतो मृत्युकाल इति । प्रत्यक्षतः प्रमाणान्तरं दर्शयति कालाकालयोः—प्रत्यक्षतश्चेत्यादि । भावानां कालाकालयोरस्तित्व-नास्तित्व-विषया युक्तिश्च प्रत्यक्षत उपलभ्यते किं दृष्ट्वेत्यत आह—तासु तास्वि-त्यादि । तासु तासु वक्ष्यमाणासु व्याध्यादिसद्भावासद्भावास्ववस्थासु तं तं व्याध्यादिमर्थमभिसमीक्ष्य सर्व्वतोभावेन सम्यग् दृष्ट्वा । उदाहरणमाह—तद् यथेत्यादि । प्रतिकर्म्मणश्चिकित्सायाः । विसर्गस्य व्याधिमुक्तेः । लोकतोऽपि

प्राप्तेर्वाक् मरणम् 'कालमृत्यु'शब्दाभिधेयमिहायुर्व्वेदे, तन्निरस्तं भवतीति भावः । अकालमृत्यु-प्रतिषेधे दूषणमाह—तस्येत्यादि । सर्व्वभावा इति मृत्युव्यतिरिक्ता अप्याहारवचनादयः । प्रत्यक्ष-मिति सुव्यक्तं प्रमाणेनेत्यर्थः, कालाकालव्यक्तिस्तासु तास्विति ताश्च अवस्थास्तं तं व्याध्या-हारादिकमर्थं बुद्धिस्थीकृत्य 'कालाकाल'शब्देनोच्यन्त इत्यर्थः । अत्र तृतीयदिनयुक्तायां तृतीयक-ज्वरं प्रति कालोऽयमस्येति व्यपदिश्यते, विपर्य्यये चाकाल इति व्यपदेशः, तथा ग्लान्यादिमुक्तायां शरीरावस्थायामाहाररूपमर्थमुद्दिश्य कालोऽयमाहारस्येति ज्ञानं भवति, विपर्य्यये चाकालमित्यु-दाहरणमुन्नेयम् । विसर्गस्येति व्याधिमोक्षस्य । इह प्रकरणे 'काल'शब्देनोचितः कालोऽभि-

मृत्युरकाले च। नैकान्तिकमत्र। यदि ह्यकाले मृत्युर्न स्यान्नियतकालप्रमाणमायुः सर्व्वं स्यात् ॥ १८ ॥

एवं गते हि हिताहितज्ञानमकारणं स्यात्, प्रत्यक्षानुमानोपदेशाश्चाप्रमाणाः स्युः, ये प्रमाणभूताः सर्व्वतन्त्रेषु यैरायुष्याण्यनायुष्याणि चोपलभ्यन्ते। वाग्वस्तुमात्रमेतद्वादमृषयो मन्यन्ते नाकाले मृत्युरस्तीति। वर्षशतं खल्वायुषः प्रमाणमस्मिन् काले। तस्य निमित्तं प्रकृतिगुणात्मसम्पत् सात्म्योपसेवनञ्चेति ॥ १९ ॥

कालाकालयोर्दृष्टान्तमाह—लोकेऽपीत्यादि। नैकान्तिकमत्रेति अत्र मृत्यौ कालाकालयोर्नैकान्तिकत्वमिति। युक्त्यन्तरमाहानैकान्तिकत्वे—यदि हीत्यादि। हि यस्मात् अकाले यदि मृत्युर्न स्यात् तर्हि सर्व्वमायुर्नियतकालप्रमाणं स्यात् न हि कश्चित् दीर्घायुः कश्चिदल्पायुर्वा स्यात् ॥ १८ ॥

<u>गङ्गाधरः</u>—यदि च सर्व्वमायुर्नियतकालप्रमाणं स्वीकुर्म्मः का च तेन हानिरित्यत आह—एवमित्यादि। हि यस्मादेवं सर्व्वमायुर्नियतकालप्रमाणमिति गतेऽभ्युपगते हिताहितज्ञानमकारणं स्यात्। हितसेवनेन चिरायुरहिताचरणेनाल्पायुरिति प्रयोजनाभावात्। ननु दीर्घायुरल्पायुश्च स्वभावतो न हिताहिताभ्यामिति चेन्न। कुत इत्यत आह—प्रत्यक्षेत्यादि। ये प्रत्यक्षादितः प्रमाणभूता यैः सर्व्वतन्त्रेषु आयुष्याणि अनायुष्याणि चोपलभ्यन्ते च तेऽप्रमाणाः स्युः। आप्तोपदेशतः सर्व्वतन्त्रेषु यानि निषेव्य दीर्घायुर्भवन् दृश्यते, स्वल्पायुर्भवन्नपराणि निषेव्य दृश्यतेऽनुमीयते च तथादर्शनात्। यथा ब्रह्मचर्य्यं हितमहितमतिमैथुनादिकम्। अत एवोभयमस्ति काले मृत्युरकाले च नैकान्तिकमत्र। तस्मात् नाकाले मृत्युरस्तीत्येतद्वादमृषीणां वाग्वस्तुमात्रं

धीयते, 'अकाल'शब्देनानुचितः कालः, न तु कालविग्रहः। सिद्धान्तमुपसंहरति—तस्मादित्यादि। नैकान्तिकमिति कालमृत्युरेव परं भवति, किंवा अकालमृत्युरेव परं भवतीत्यैकान्तिकपक्षो नास्ति। अकालमृत्योरभावपक्षे दूषणमाह—यदि हीत्यादि। हिताहितज्ञानमकालमृत्युप्रतिषेधार्थं विधीयते। एवं चेदकालमृत्युर्नास्ति, तदा हिताहितज्ञानं निष्प्रयोजनं स्यात्। प्रत्यक्षानुमानोपदेशा अप्रमाणानि स्युरिति, आयुर्व्वेदसम्बन्धाः प्रत्यक्षादयः आयुर्व्वेदार्थदर्शकाः आयुष्यानायुष्यार्थाभावादप्रमाणभूताः स्युरिति भावः। दूषितपक्षं निःसारतया दर्शयन्नाह—वागित्यादि। "किञ्चास्य परमायुः" इत्यस्य प्रश्नस्योत्तरमाह—वर्षशतमिति। अस्मिन् काले कलौ। शेषप्रश्नस्योत्तरम्—तस्येत्यादि। प्रकृति-

तत्र श्लोकाः ।

शरीरं यद् यथा तच्च वर्त्तते क्लिष्टमामयैः ।
यथा क्लेशं विनाशं वा याति ये चास्य धातवः ॥
वृद्धिह्रासौ तथा चैषां क्षीणानामौषधञ्च यत् ।
देहवृद्धिकरा भावा बलवृद्धिकराश्च ये ॥

न वस्तुतः । इति सप्तमप्रश्नोत्तरम् । अथ किञ्चास्य परमायुः परिमाणत उत्कृष्टमायुरिति स तत्प्रश्नोत्तरमाह—वर्षशतं खल्वायुषः प्रमाणमिति । नियतकालप्रमाणमायुरनियतकालप्रमाणञ्चेति तत्र नियतकालप्रमाणस्यायुषः सर्व्वमुत्कृष्टं प्रमाणमस्मिन् काले वर्षशतमिति । अस्य विस्तार इन्द्रियोपक्रमणीये श्लोकस्थाने व्याख्यातः । अस्मिन् काले इति कलियुग इति कश्चित् तेन "शतायुर्व्वै पुरुष" इति श्रुतेः "शतायुषः पुत्रपौत्रान् वृणीष्व" इति कठोपनिषदि च "जिजीविषे शतं समा" इति ईशोपनिषदि च दर्शनात् । एवञ्च समाः शतमप्याधिरायुषा न वियुज्यते इति स्ववचनदर्शनाच्च । न हि सर्व्वे बहुलख्यापनार्थमेकमेव शब्दं प्रयुञ्जते । तस्मादस्मिन् कल्पे इति कल्परूपकालार्थे कालशब्दप्रयोगः । हिताहितसेवनात् तस्य वृद्धिह्रासौ भवत इति इत्यष्टमप्रश्नोत्तरम् । अथ कानि चास्य परमायुषो निमित्तानीत्यस्य नवमप्रश्नस्योत्तरमाह—तस्येत्यादि । प्रकृतिगुणसम्पत् प्रकृतीनां मातुः शोणितं, पितुः शुक्रमात्मा च, सात्म्यञ्च, रसश्चेति, मातुराहारः सत्त्वञ्चेत्येतासां प्रकृतीनां गुणानां सम्पत् । आत्मसम्पदिति तत् पुरुषस्य । सात्म्योपसेवनञ्चेति । इति नवमप्रश्नोत्तरम् ॥ १९ ॥

गङ्गाधरः—अथाध्यायार्थोपसंहारायाह—तत्र श्लोका इत्यादि । शरीरविचय इत्यादिना सविचयप्रयोजनं शारीरं यत् । समयोगवाहिन इत्यादिना तच्छरीरं यथा वर्त्तते यथामयैः क्लिष्टं भवति यथा चामयैः संक्लेशं विनाशं वा याति । वैषम्यगमनं हीत्यादिना अस्य ये धातवो वृद्धिह्रासौ यान्ति ।

गुणात्मसम्पदिति प्रकृतिसम्पत्, गुणसम्पत्, आत्मसम्पत् । तत्र प्रकृतिसम्पत् समवातादिप्रकृतिता-समप्रकृतिर्हि चिरायुर्भवति, गुणसम्पत् तु सारसंहननादिभिरायुष्यलक्षणैर्योगः किंवा या प्रकृतेर्मातृ-पित्राद्युपकरणस्य गुणसम्पत्, सा प्रकृतिगुणसम्पत् । आत्मनस्तु चिरायुष्ट्वकारणधर्म्मसंयुक्तता सम्पत् ॥ १७—१९ ॥

चक्रपाणिः—संग्रहे 'ये चास्य धातवः', इत्यनेन 'मांसं मांसेन वर्द्धते' इत्यादौ धातुरूपेणोक्त

परिणामकरा भावा या च तेषां पृथक् क्रिया।
मलाख्याः संप्रसादाख्या धातवः प्रश्न एव च॥
नवको निर्णयश्चास्य विधिवत् सम्प्रकाशितः।
तथ्यः शरीरविचये शारीरे परमर्षिणा॥ २०॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते शारीरस्थाने शरीरविचयशारीरं नाम षष्ठोऽध्यायः॥ ६॥

तस्मान्मांसमाप्याय्यते मांसेनेत्यादिना एषामस्य धातूनां क्षीणानां यदौषधं वृद्धिकरम्। कात्स्न्र्येनेत्यादिना ये देहवृद्धिकरा भावाः। बलवृद्धिकरास्त्विमे इत्यादिना ये च बलवृद्धिकरा भावाः। आहारेत्यादिना परिणामकरा ये भावाः। तत्खल्वेषामित्यादिना तेषां परिणामकराणामुष्मादीनां या या क्रिया पृथक् प्रत्येकम्। शरीरधातवस्त्वेवं द्विविधा तु इत्यादिना मलाख्या धातवः। इतरांस्त्वित्यादिना प्रसादाख्या धातवः। तमेवमुक्तवन्तमित्यादिना नवक एव च प्रश्नः। पुनश्च तमेवमुक्तवन्तमित्यादिनास्य नवकस्य प्रश्नस्य यथावत् यथार्थनिर्णयश्च तथ्यश्च। परमर्षिणा पुनर्वसुना संप्रकाशितः॥ २०॥

अध्यायं समापयति—अग्नीत्यादि।

इति वैद्यश्रीगङ्गाधरकविरत्नविरचिते चरकजल्पकल्पतरौ शारीरस्थानजल्पे चतुर्थस्कन्धे शरीरविचयशारीरजल्पाख्या षष्ठी शाखा॥ ६॥

मांसादीनां संग्रहोऽयमिति वदन्ति। 'वृद्धिह्रासौ यथा तेषाम्' इत्यनेन 'धातवः पुनः' इत्यादिग्रन्थार्थं गृह्णाति। 'क्षीणानामौषधं यत्' इति मांसमाप्यायते मांसेन' इत्यादि संगृह्णाति। 'या च तेषां पृथक् क्रिया' इत्यनेन तेषामाहारपरिणामकराणामुष्मप्रभृतीनां पृथक्कर्म्मणाम्। यदुक्तम्—'तद् यथा—उष्मा पचति' इत्यादिना, तद् गृह्यते॥ २०॥

इति महामहोपाध्यायचरकचतुराननश्रीमच्चक्रपाणिदत्तविरचितायामायुर्वेददीपिकायां चरकतात्पर्यटीकायां शारीरस्थाने शरीरविचयशारीरं नाम षष्ठोऽध्यायः॥ ६॥

## सप्तमोऽध्यायः ।

**अथातः शरीरसंख्यानाम शारीरं व्याख्यास्यामः, इतिह स्माह भगवानात्रेयः ॥ १ ॥**

**शरीरसंख्यामवयवशः कृत्स्नं शरीरं प्रविभज्य सर्व्वशरीरसंख्यानप्रमाणज्ञानहेतोर्भगवन्तमात्रेयमग्निवेशः पप्रच्छ ॥ २ ॥**

गङ्गाधरः—अथ शरीरविचयः शरीरोपकारार्थमिष्यते इति यदुक्तं, तत्रोक्ताध्यायोक्तशरीरविचयानन्तरं शरीरविचयपरिशेषं व्याकर्त्तुं शरीरसङ्ख्यानाम शारीरमारभते—अथात इत्यादि। शरीरस्य सङ्ख्या सङ्ख्यया ज्ञानमनेनेति शरीरसङ्ख्या, सा विद्यतेऽस्मिन्नध्याये मत्वर्थीयप्रत्ययः। पूर्व्ववच्छन्दसीति मत्वर्थे च्छन्दःप्रत्ययमुत्पाद्य तल्लोपे प्रकृतिभावश्च विधाय शरीरसङ्ख्येति निष्पाद्यते। शरीरसङ्ख्या नाम यस्य तत् तथा। सर्व्वं पूर्व्ववत् ॥ १ ॥

गङ्गाधरः—शरीरेत्यादि। अग्निवेशो भगवन्तमात्रेयं सर्व्वशरीराणां सङ्ख्यानस्य सङ्ख्यया ज्ञानस्य प्रमाणं साधनं तस्य ज्ञानहेतोः शरीरमवयवशः प्रविभज्य शरीरसङ्ख्यां पप्रच्छेति योजना ॥ २ ॥

चक्रपाणिः—पूर्व्वाध्याये धातुभेदेन शरीरमभिधाय एतदेव शरीरमवयवसंख्याभेदेन प्रतिपादयितुं शरीरसंख्या उच्यन्ते, अवयवसंख्यानप्रमाणभेदेन च शरीरज्ञानं प्राधान्येन साक्षात् साधनं चिकित्सोपयुक्तं करिष्यतीति अध्यायान्ते 'शरीरसंख्यां यो वेद' इत्यादि। अवयवशः शरीरं विभज्य शरीरसंख्यां पप्रच्छेति योजना। पृच्छाप्रयोजनमाह—सर्व्वशरीरसंख्यानप्रमाणज्ञानहेतोरिति। संख्यानस्य प्रमाणमियत्ता संख्यानप्रमाणम्, तच्च 'षड् द्वादश' इत्यादिग्रन्थवाच्यम्। किंवा संख्यानञ्च प्रमाणञ्च संख्यानप्रमाणम्। अत्र 'षट् त्वचः' इत्यादि संख्यानम्, 'दशोदकाञ्जलयः' इत्यादि शरीरावयवप्रमाणम्। किंवा संख्यानामप्रमाणज्ञानहेतोरिति पाठः। तत्र संख्यानप्रमाणस्य दत्तमेवोदाहरणम्, नामज्ञानन्तु 'एकजिह्विका' इत्यादिग्रन्थे भवतीति व्याख्यानयन्ति ॥ १।२ ॥

तमुवाच भगवानात्रेयः। शृणु मत्तोऽग्निवेश ! शरीरं सर्व्वमभिसंचक्षाणस्य यथाप्रश्नमेकमनाः। यथावत् शरीरे षट् त्वचः; तद्यथा—उदकधरा त्वग् वाह्या, द्वितीया त्वसृग्धरा, तृतीया सिध्मकिलाससम्भवाधिष्ठाना च, चतुर्थी कुष्ठसम्भवाधिष्ठाना,

गङ्गाधरः—तमुवाचेत्यादि। अभिसंचक्षाणस्य व्याख्यानं कुर्व्वतो मम। यथावदित्यादि। षट् त्वचस्ता विवृणोति—तद् यथेत्यादि। ननु सुश्रुतेन गर्भव्याकरणशारीरे तूक्तम्—अग्निः सोमो वायुः सत्त्वं रजस्तमः पञ्चेन्द्रियाणि भूतात्मेति प्राणाः। तस्य खल्वेवं प्रवृत्तस्य शुक्रशोणितस्याभिपच्यमानस्य क्षीरस्येव सन्तानिकाः सप्त त्वचो भवन्ति। तासां प्रथमाऽवभासिनी नाम, या सर्व्ववर्णानवभासयति पञ्चविधाश्च च्छायां प्रकाशयति। सा व्रीहेरष्टादशभागप्रमाणा सिध्मपद्मकण्टकाधिष्ठानेति। तन्त्रे त्वस्मिन्नियं वाह्या त्वगुदकधरेति नाम्नाभिहिता। द्वितीया त्वसृग्धरेति। सुश्रुतेनापि तत्रैवोक्तं द्वितीया लोहिता नाम व्रीहेः षोड़शभागप्रमाणा तिलकालकन्यच्छव्यङ्गाधिष्ठानेति। तृतीया सिध्मकिलाससम्भवाधिष्ठाना चेति। अत्र सुश्रुतः प्रोवाच तृतीया श्वेता नाम व्रीहेर्द्वादशभागप्रमाणा चर्म्मदलाजगल्लीमशकाधिष्ठाना। चतुर्थी ताम्रा नाम व्रीहेरष्टमभागप्रमाणा विविधकिलासकुष्ठाधिष्ठानेति द्वे त्वचे प्रोवाच। तत्रेऽस्मिन् ते द्वे त्वेकत्वेन स्वीकृत्य तृतीया त्वगुक्ता, तेनास्मिंस्तन्त्रे या चतुर्थी सा सुश्रुते पञ्चमी, अस्मिन् पञ्चमी या सुश्रुते सा षष्ठी, अस्मिन् षष्ठी सुश्रुते सप्तमीति न विरोधः। तथा च तृतीया या सा तूपरिदेशे श्वेता, तत्र सिध्मचर्म्मदलाजगल्लीमशकाधिष्ठानम्। अधस्तात् तु ताम्रा किलासाख्यकुष्ठाधिष्ठाना एतयोः प्राधान्यात् सम्भवस्य कारणस्य दोषादेरधिष्ठानभूता इत्यर्थः। चतुर्थीति।

चक्रपाणिः—आचक्षाणस्येत्यत्र 'मत्तम्' इति शेषः। तेन सर्व्वं शरीरमाचक्षाणस्य मे मत्तः शृण्विति योजना। ततश्च 'नटस्य शृणोति' इतिवदनुपयोगे षष्ठी शृण्वित्यनेन। मतान्तरमप्यस्ति शरीरावयवसंख्यान इति सूचयति। ततश्च सुश्रुते—"सप्त त्वचर्श्चाण्यस्थ्नां शतानि" इत्यादिना यद्धि प्रतिपादितं संख्याविरुद्धमुच्यते, तच्छल्यशास्त्रोपयुक्तमतभेदादिति दर्शयति। यदुक्तम् सुश्रुते—"त्रीणि सषष्ठानि शतान्यस्थ्नां वेदविदो भाषन्ते। शल्यतन्त्रे तु त्रीण्येव शतानि", अनेन वचनेन योऽन्योऽपि त्वगादिसंख्याभेदश्चरकसुश्रुतयोः स्वतन्त्रोपयुक्तसंख्योपादानाद्बोध्यः। सिध्मकिलास-

पञ्चमी अलजीविद्रधीसम्भवाधिष्ठाना। षष्ठी तु सा यस्यां छिन्नायां ताम्यत्यन्ध इव च तमः प्रविशति, याञ्चाप्यधिष्ठायारूंषि जायन्ते पर्व्वसन्धिषु सुकृष्णरक्तानि स्थूलमूलानि दुश्चिकित्स्यतमानि च। इति षट् त्वचः। एताः षड़ङ्गं शरीरमवतत्य तिष्ठन्ति ॥ ३ ॥

कुष्ठानां सम्भवस्य दोषस्याधिष्ठानं यस्यां सा तथा। सुश्रुते तु पञ्चमीयमुक्ता। तद् यथा—पञ्चमी वेदिनी नाम व्रीहिपञ्चमभागप्रमाणा कुष्ठविसर्पाधिष्ठाना। इति। पञ्चमीत्यलजीविद्रधीति प्राधान्यादुक्तम्। सुश्रुते हि रोहिणीनाम्नीयं षष्ठी त्वक्। तद् यथा—षष्ठी रोहिणी नाम व्रीहिप्रमाणा ग्रन्थ्यपच्यर्व्वु दश्लीपदगलगण्डाधिष्ठानेति। षष्ठीत्यादि। यस्यां त्वचि च्छिन्नायां ताम्यति पुरुषः। कीदृशं ताम्यतीति तद् विवृणोति—अन्ध इवेत्यादि। तत्र कस्याधिष्ठानमित्यत आह—याञ्चेत्यादि। अरूंषीति। व्रणा या अरूंपिका शोथरूपा व्रणाः। कुत्र कीदृशानीत्यत आह—पर्व्वेत्यादि। सुकृष्णरक्तानि स्थूलमूलानि दुश्चिकित्स्यतमानीत्यरूंषीत्यस्य त्रीणि विशेषणानि। इत्येताः षट् त्वचः षड़ङ्गं शरीरमवतत्य व्याप्य तिष्ठन्तीति। उपलक्षणमेतत् तेन तन्त्रान्तरोक्तं शेषमपि बोध्यम्। तद् यथा—सुश्रुते—सप्तमी मांसधरा नाम व्रीहिद्वयप्रमाणा भगन्दरविद्रध्यर्शोऽधिष्ठाना। यदेतत् प्रमाणं निर्द्दिष्टं तन्मांसलेष्ववकाशेषु न ललाटे सूक्ष्माङ्गुल्यादिषु च। यतो वक्ष्यत्युदरेषु व्रीहिमुखेणाङ्गुष्ठोदरप्रमाणमवगाढ़ं विध्येदिति। कलाः खल्वपि सप्त सम्भवन्ति धात्वाशयान्तरमर्य्यादाः। भवतश्चात्र। यथा हि सारः काष्ठेषु च्छिद्यमानेषु दृश्यते। तथा धातुर्हि मांसेषु च्छिद्यमानेषु दृश्यते। स्नायुभिश्च प्रतिच्छन्नान् सन्ततांश्च जरायुणा। श्लेष्मणा वेष्टितांश्चापि कलाभागांस्तु तान् विदुः। आसां प्रथमा मांसधरा नाम, यस्यां मांस सिरास्नायुधमनीस्रोतसां प्रताना भवन्ति। भवति चात्र। यथा विसमृणालानि विवर्द्धन्ते समन्ततः। भूमौ पङ्कोदकस्थानि तथा मांसे सिरादयः। द्वितीया रक्तधरा नाम। मांसस्याभ्यन्तरतस्तस्यां शोणितं विशेषतश्च सिरासु यकृत्-

सम्भवाधिष्ठानेति सिध्मकिलासौ यतो दोषात् सम्भवतः, तस्य दोषस्याधिष्ठानभूता। एवमुत्तरत्रापि व्याख्येयम्। ताम्यतीत्यस्य विवरणम्—'अन्ध इव तमः प्रविशति' इति। किंवा ताम्यतीति तमोयुक्तभाववच्चेष्टते। अरूंषीति व्रणानि। पर्व्वस्विति अवयवसन्धिषु ॥ ३ ॥

तत्रायं शरीरस्याङ्गविभागः—तद् यथा—द्वौ बाहू द्वे सक्थिनी शिरोग्रीवमन्तराधिरिति षड़ङ्गमङ्गम् ॥ ४ ॥

प्लीहोश्च भवति। भवति चात्र। वृक्षाद् यथाभिप्रहतात् क्षीरिणः क्षीरमावहेत्। मांसादेवं क्षतात् क्षिप्रं शोणितं सम्प्रसिच्यते। तृतीया मेदोधरा नाम, मेदो हि सर्व्वभूतानामुदरस्थमणवस्थिषु, महत्सु च मज्जा भवति। भवति चात्र। स्थूलास्थिषु विशेषेण मज्जा त्वभ्यन्तराश्रितः। अथेतरेषु सर्व्वेषु सरक्तं मेद उच्यते। शुद्धमांसस्य यः स्नेहः सा वसा परिकीर्त्तिता। चतुर्थी श्लेष्मधरा नाम सर्व्वसन्धिषु प्राणभृतां भवति। भवति चात्र। स्नेहाभ्यक्ते यथा त्वक्षे चक्रं साधु प्रवर्त्तते। सन्धयः साधु वर्त्तन्ते संश्लिष्टाः श्लेष्मणा तथा। पञ्चमी पुरीषधरा नाम, याऽन्तःकोष्ठे मलमभिविभजते पक्वाशयस्था। भवति चात्र। यकृत् समन्तात् कोष्ठञ्च तथान्त्राणि समाश्रिता। उण्डकस्थं विभजते मलं मलधरा कला। षष्ठी पित्तधरा नाम, या चतुर्व्विधमन्नपानमुपयुक्तम् आमाशयात् प्रच्युतं पक्वाशयोपरिस्थितं धारयति। भवति चात्र। अशितं खादितं पीतं लीढ़ं कोष्ठगतं नृणाम्। तज्जीर्य्याति यथाकालं शोषितं पित्ततेजसा। सप्तमी शुक्रधरा नाम, या सर्व्वप्राणिनां सर्व्वशरीरव्यापिनी। भवन्ति चात्र। यथा पयसि सर्पिस्तु यथा चेक्षुरसे गुड़ः। शरीरेषु तथा शुक्रं नृणां विद्याद् भिषग्वरः। द्व्यङ्गुले दक्षिणे पार्श्वे वस्तिद्वारस्य चाप्यधः। मूत्रस्रोतःपथाच्छुक्रं पुरुषस्य प्रवर्त्तते। कृत्स्नदेहाश्रितं शुक्रं प्रसन्नमनसस्तथा। स्त्रीषु व्यायच्छतश्चापि हर्षात् तत् सम्प्रवर्त्तते ॥" इति ॥ ३ ॥

गङ्गाधरः—अथ किं षड़ङ्गं शरीरमित्यत आह—तत्रायमित्यादि। द्वौ बाहू इति द्वे अङ्गे। द्वे सक्थिनी इति द्वे अङ्गे। शिरोग्रीवमित्येकमङ्गम्। शिरश्च ग्रीवा चेति तयोः समाहार इत्येकवद्भावात्। अन्तराधिरित्येकमङ्गम्; अन्तर्मध्यमादधातीति व्युत्पत्त्या मध्यदेह इत्यर्थः। इति षड़ङ्गमङ्गं शरीरम्। सुश्रुतेऽप्युक्तम् शरीरसङ्ख्याव्याकरणशारीरे—तच्च षड़ङ्गं शाखाश्चतस्रो मध्यं पञ्चमं षष्ठं शिर इति। अत्र शिर इति ग्रीवापर्य्यन्तं शिरःसंज्ञम् ॥ ४ ॥

चक्रपाणिः—षड़ङ्गतामुक्तां शरीरस्य विभजते—तत्रायमित्यादि। शिरश्च ग्रीवा च शिरोग्रीवम्, एतच्चैक्यं विवक्षया ज्ञेयम्; अन्तराधिर्मध्यम् ॥ ४ ॥

त्रीणि षष्ट्यधिकानि शतान्यस्थ्नां सह दन्तोलूखलनखैः ; तद् यथा—द्वात्रिंशद् दन्तोलूखलानि, द्वात्रिंशद्दन्ताः, विंशतिर्नखाः, विंशतिः पाणिपादशलाकाः । षष्टिरङ्गुल्यस्थीनि । द्वे पाण्योर्द्वे कूर्च्चाधश्चत्वारः पाण्योर्मणिकाः, चत्वारः पादयोर्गुल्फाः । चत्वार्य्यरत्न्योरस्थीनि चत्वारि जङ्घयोः द्वे जानुनोर्द्वे

गङ्गाधरः—त्रीणीत्यादि । दन्तनखैः सहास्थ्नां षष्ट्यधिकानि त्रीणि शतानि नृणामिति । ननु शल्यतन्त्रे त्रीणि शतान्यस्थ्नामित्युक्तं कथमिह षष्ट्यधिकानीत्यत आह—सहेत्यादि । शल्यतन्त्रे सुश्रुतेऽप्युक्तम् । त्रीणि सषष्ट्यान्यस्थिशतानि वेदवादिनो भाषन्ते, शल्यतन्त्रेषु त्रीण्येव शतानि । इति । शल्यतन्त्रेषु येषामस्थ्नां विशेषेण शस्त्रक्रिया चिकित्सिते नास्ति तानि षष्ट्यस्थीनि नोपदिश्यन्ते, न तु सन्तीति कृत्वा नोपदिश्यन्ते । तानि च षष्टिरस्थ्नामेषा—दन्तोलूखलेन जत्रस्थीनि षष्टिस्तैः सह त्रीणि शतानि भवन्त्यस्थ्नामिति । तानि विवृणोति—द्वात्रिंशदित्यादि । दन्तानां द्वात्रिंशत् एकैकस्यैकैकमुलूखलाकृतिस्थितिस्थानमिति । द्वात्रिंशदेव दन्तोलूखलानि शल्यतन्त्रे नोक्तानि । द्वात्रिंशद् दन्तास्तूक्तास्तद्ग्रहणेन तान्यपि गृह्यन्ते । विंशतिर्नखा इति शल्यतन्त्रे नोक्तम् । विंशतिः पाणिपादशलाका इति । द्वयोः पाण्योः पादयोश्च द्वयोस्तलेषु चतुर्षु स्थानेष्वङ्गुलिविंशतेः मूलेषु स्थिताः विंशतिः शलाकाः । षष्टिरङ्गुल्यस्थीनि । पाणिपादचतुष्टये विंशतेरङ्गुलीनाम् एकैकस्यामङ्गुल्यां त्रीणि त्रीण्यस्थीनि तान्येकैकस्मिन् पाणिपादे पञ्चदश, चतुर्षु षष्टिः । द्वे अस्थिनी पार्ष्ण्योः । पादयोर्मूले शलाकाभ्योऽधस्तादेकैकमिति द्वे । द्वे कूर्चाध इति पाण्योः शलाकाभ्योऽधस्तात् तच्छलाकाबन्धे एकैकमिति, द्वयोः पाण्योर्मूले द्वे अस्थिनी पार्ष्ण्यस्थिवत् । ततोऽधस्ताच्चत्वारः पाण्योर्मणिका मणिबन्धस्थाने त्वेकैकस्मिन् पाणौ द्वे अस्थिनी ; द्वयोश्चत्वारि । एवमेव पादयोश्चत्वारो गुल्फा इति । ततोऽधस्ताच्चत्वारि अरत्न्योः

चक्रपाणिः—सषष्ठानीति षष्ट्यधिकानि । दन्तेषूलूखलम्, यत्राश्रिता दन्ताः । यद्यपि नखा विविधाशितपीतीये मलभागपोष्यत्वेन मले एव प्रक्षिप्ताः, तथापीहास्थितारूपयोगस्यापि विद्यमानत्वात् अस्थिगणनायां पतिताः । प्रत्यङ्गुलि पर्व्वत्रयम् । तेन विंशत्यङ्गुलिगतम् अस्थ्नां विंशतित्रयं भवति । वृद्धाङ्गुष्ठे यद्धस्तपादप्रविष्टम्, तत् तृतीयं पर्व्व ज्ञेयम् । वृद्धाङ्गुष्ठशलाका अपि स्वल्पमाना ज्ञेयाः, अङ्गुलीनां शलाका यत्र लग्नाः, तत्र शलाका अङ्गुष्ठाधि-

कूर्परयोर्द्वे ऊर्व्वोर्द्वे बाह्वोः सांसयोः, द्वावक्षकौ द्वे तालुनि, द्वे श्रोणीफलके, एकं भगास्थि पुंसां मेढ्रास्थि, एकं त्रिकसंश्रितमेकं गुदास्थि, पृष्ठगतानि पञ्चत्रिंशत्, पञ्चदशास्थीनि ग्रीवायाम्। द्वे जत्रुण्येकं हन्वस्थि, द्वे हनुमूलबन्धने, द्वे ललाटे, द्वे अक्ष्णोर्द्वे गण्डयोर्नासिकायां त्रीणि घोणाख्यानि, द्वयोः पार्श्वयोश्चतुर्व्विंशतिश्चतुर्व्विंशतिः पञ्जरास्थीनि

अस्थीनि। हस्तयोः प्रकोष्ठे त्वेकैकस्मिन् द्वे द्वे अस्थिनी, ततश्चत्वारि द्वयोरिति। एवं चत्वारि जङ्घयोरस्थीनि गुल्फाधस्ताज्जानुपर्य्यन्ते। द्वे जानुनोरिति पृथुगुटिकाकारे। एवमेव कूर्परयोर्द्वे अस्थिनी। प्रकोष्ठबाह्वोः सन्धौ क्षुद्रगुडिकाकारे द्वे। द्वे ऊर्व्वोरित्येकैकस्मिन् ऊरावेकैकमिति द्वे। एवमेव सांसयोर्बाह्वोर्द्वे, एकैकस्मिन् बाहावेकैकमिति द्वे। इत्येवं चतसृषु पाणिपादरूपासु शाखासु खल्वेकैकस्यां शाखायां नखैः सह द्वात्रिंशदस्थीनि ; चतसृषु तान्यष्टाविंशत्युत्तरं शतं भवन्ति। शल्यतन्त्रेषु सुश्रुतादिषु नखानुक्तत्वादेकैकस्यां शाखायां सप्तविंशतिस्तान्यष्टोत्तरशतमुक्तानि। इति दन्तोलूखलदन्तसहितानि तान्यष्टाविंशत्युत्तरशतास्थीनि द्विनवत्यधिकशतं भवन्ति।

द्वावक्षकावित्यादि। अत्र द्वित्वप्रसङ्गाद् द्वे तालुनीत्युक्तम्। तालुगतद्वयवर्ज्जमक्षकादिषु खल्वक्षश्रोणिभगमेढ्रत्रिकगुदपृष्ठेषु द्वाचत्वारिंशत्। तद् यथा—द्वावक्षकौ कण्ठादधोऽंसकौ द्वे। द्वे श्रोणीफलके इति नितम्बे द्वे। स्त्रीणामेकं भगास्थि पुंसां मेढ्रास्थि। त्रिकसंश्रितमेकं गुदे चैकम्। इति पञ्च श्रोण्याम्, अक्षकौ द्वाविति सप्त। पृष्ठगतानि पञ्चत्रिंशदिति द्वाचत्वारिंशत्।

अथ ग्रीवां प्रत्यूर्द्ध्वं सप्तत्रिंशदिति। तद् यथा—द्वे तालुनीत्युक्तम्। पञ्चदश ग्रीवायामिति ; तेषामेकादश ग्रीवायां कण्ठनाड्यां चत्वारि। द्वे जत्रुणि। नेमे शल्यतन्त्रे वर्णिते, हन्वस्थि चैकं न वर्णितमिति। द्वे हनुमूलबन्धने। द्वे ललाटे। द्वे अक्ष्णोर्द्वे गण्डयोः नासिकायां त्रीणीति घनरूपमेकवत्। इति वक्ष्यति शिरःकपालानि चत्वारि द्वौ शङ्खकाविति जत्रुगतद्वयवर्ज्जं पञ्चत्रिंशद् ग्रीवां प्रत्यूर्द्ध्वम्।

अथ मध्यदेहे—द्वयोः पार्श्वयोरित्यादि। द्वयोः पार्श्वयोरेकैकस्मिन् पार्श्वैकमूले वक्षसि लग्नानि द्वादश द्वादश। इति चतुर्व्विंशतिः। चतुर्व्विंशतिः पञ्जरा-

स्थानम्। जानु जङ्घोर्व्वोः सन्धिः। अक्षाविवाक्षकौ, जत्रुसन्धेः कीलकौ। तालुषके तालवस्थिनी।

च पार्श्वकानि । तावन्ति चैषां स्थालिकान्यर्व्वुदाकाराणि तानि द्विसप्ततिः । द्वौ शङ्खकौ चत्वारि शिरःकपालानि । वक्षसि सप्तदशेति त्रीणि षष्ट्यधिकानि शतान्यस्थ्नामिति ॥ ५ ॥

स्थीनि पार्श्वकानि तान्येकैकस्मिन् पार्श्वे द्वादश द्वादशेति चतुर्व्विंशतिः । तावन्ति चैषां स्थालिकानि पृष्ठे सर्व्वुदाकाराणि द्वादश द्वादशेति चतुर्व्विंशतिस्तानि मिलित्वा द्विसप्ततिः ।

वक्षसि सप्तदशेति । पूर्व्वं द्वे जत्रुणीत्युक्तम् इत्येकाधिकनवतिर्मध्यदेहे । द्वौ शङ्खकौ चत्वारि शिरःकपालानीति ग्रीवां प्रत्यूर्द्ध्वं षड् व्याख्यातानीति मिलित्वा षष्ट्यधिकानि त्रीणि शतान्यस्थ्नां भवन्ति । तत्र शल्यतन्त्रेषु दन्तोलूखलानि द्वात्रिंशद् विंशतिर्नखा जत्रुणि द्वे हन्वस्थि चैकमिति षष्टिः पृथङ् नोच्यन्ते । दन्तग्रहणेन दन्तोलूखलानां ग्रहणात् नखानां बाह्यत्वात् जत्रुणि द्वयोर्वक्षसोऽस्थिग्रहणेन ग्रहणात् हन्वस्थ्नश्च यौवने पृथक्त्वाभावाद् द्वित्वमिति न विरोधः ।

सुश्रुते चोक्तम् । त्रीणि सषष्टान्यस्थिशतानि वेदवादिनो भाषन्ते । भवन्ति चात्र । स्थालैः सह चतुःषष्टिर्दशना विंशतिर्नखाः । पाणिपादशलाकाश्च तासां स्थानचतुष्टयम् । षष्ट्यङ्गुलीनां द्वे पाष्ण्योः कूर्च्चाधो मणिगुल्फयोः । चत्वार्य्यरत्न्योश्चास्थीनि जङ्घायां तद्वदेव च । द्वे द्वे जानुकूर्परोरु-फलकांससमुद्भवे । अक्षे तालूषके श्रोणी-फलके चैवमादिशेत् । भगास्थ्येकं त्रिके पायौ पृष्ठे त्रिंशच्च पञ्च च । ग्रीवा पञ्चदशास्थिः स्यात् जत्र्वेकैकं तथा हनोः । तन्मूले द्वे ललाटाक्षि-गण्डे नासाघनास्थिका । पार्श्वकस्थालिकैः सार्द्धमर्व्वुदानि द्विसप्ततिः । द्वौ शङ्खकौ कपालानि चत्वार्य्यत्र शिरस्यथ । उरः पञ्चदशास्थि स्यात् पुरुषस्यास्थिसंग्रहः । इति । एतदेवाग्नेयपुराणे याज्ञवल्क्यसंहितायाञ्च स्मृतावुक्तमिति ।

तथा पुनः सुश्रुते—शल्यतन्त्रे तु त्रीण्येव शतानि । तेषामष्टोत्तरशतं शाखासु । षड्विंशत्युत्तरशतं श्रोणिपार्श्वपृष्ठाक्षोरःसु । ग्रीवां प्रत्यूर्द्ध्वं षट्षष्टिः । एवमस्थ्नां त्रीणि शतानि पूर्य्यन्ते । एकैकस्यान्तु पादाङ्गुल्यां त्रीणि त्रीणि तानि पञ्चदश । तलकूर्च्चगुल्फसंश्रितानि सप्त । पाष्ण्यावेकम् । जङ्घायां द्वे । जानुन्येकमेकमूरौ, इति सप्तविंशतिरेकस्मिन् सक्थ्नि भवन्ति । एतेन

भगास्थि अभिमुखं कटीसन्धानकारकं तिर्य्यगस्थि । स्थालकानीति पर्शुकानां मूलस्थानलग्नानि ।

पञ्चेन्द्रियाधिष्ठानानि, तद् यथा—त्वग् जिह्वा नासिकाक्षिणी कर्णौ च। पञ्च बुद्धीन्द्रियाणि, तद् यथा—स्पर्शनं रसनं घ्राणं दर्शनं श्रोत्रमिति। पञ्च कर्म्मेन्द्रियाणि, तद् यथा—हस्तौ पादौ पायुरुपस्थो जिह्वा चेति ॥ ६ ॥

हृदयं चेतनाधिष्ठानमेकम्। दश प्राणायतनानि। तद् यथा—मूर्द्धा कण्ठो हृदयं नाभिर्गुदं वस्तिरोजः शुक्रं शोणितं

इतरसक्थिबाहू च व्याख्यातौ। तान्यष्टोत्तरशतमस्थ्नाम्। श्रोण्यां पञ्च। तेषां द्वे नितम्बे। गुदभगत्रिकसंश्रितमेकैकम्। पार्श्वे षट्त्रिंशत् एवमेकस्मिन्, द्वितीयेऽप्येवम्। पृष्ठे त्रिंशत्। द्वे अक्षसंज्ञे। सप्तदशोरसि। ग्रीवायामेकादश। कण्ठनाड्यां चत्वारि। द्वे हन्वोर्दन्ता द्वात्रिंशत्। नासायां त्रीणि। द्वे तालुनि। गण्डकर्णशङ्खेष्वेकैकं तानि षट्। षट् शिरसि। तानि षट् षष्टिरिति त्रीणि शतान्यस्थ्नां पूर्य्यन्ते। इत्यस्थिसंग्रहो व्याख्यातो भवति ॥ ५ ॥

गङ्गाधरः—अथ पञ्चेन्द्रियाधिष्ठानानीति। तद् यथा—त्वग्जिह्वेत्यादि। त्वचामुत्पत्तिरुक्ता। जिह्वायास्तूत्पत्तिः सुश्रुतेनोक्ता—उदरे पच्यमानानामाध्मानाद् रुक्मसारवत्। कफशोणितमांसानां सारो जिह्वा प्रजायते॥ पञ्च बुद्धीन्द्रियाणीत्यादि स्पष्टम्। पञ्च कर्म्मेन्द्रियाणीति। जिह्वा चेति वागिन्द्रियं न तु रसनेन्द्रियम्। द्वयोरधिष्ठानं हि जिह्वा ॥ ६ ॥

गङ्गाधरः—हृदयमिति सुश्रुतेऽप्युक्तम्। शोणितकफप्रसादजं हृदयं यदाश्रया हि धमन्यः प्राणवहाः। तस्याधो वामतः प्लीहा फुपफसश्च, दक्षिणतो यकृत् क्लोम च। तद्धृदयं विशेषेण चेतनास्थानमतस्तस्मिन् तमसावृते सर्व्वे प्राणिनः स्वपन्ति। भवति चात्र। पुण्डरीकेण सदृशं हृदयं स्यादधोमुखम्। जाग्रतस्तद् विकशति स्वपतश्च निमीलतीति। विस्तरस्तु अर्थदशमहामूलीयेऽस्योक्तः। दश प्राणायतनानीति च विस्तरेण दशप्राणायतनिकेऽध्याये व्याख्यातम्। तेषु दशसु मध्ये पूर्व्वाणि मूर्द्धकण्ठहृदयनाभि-

स्थालकार्ब्बुदानि तु पर्शुकामूलान्यर्ब्बुदाकाराण्यस्थीनि। नासिकागण्डकूटललाटानामेकमूलत्वादेकमेवास्थि गणनीयम्। ये तु पृथगङ्गानि पठन्ति, तेषां नासागण्डकूटललाटानां त्रयाणां त्रीण्येवास्थीनि, एकत्वेन तु संख्यापूरणम्। अक्षिणी कर्णौ च पृथक्त्वेऽपि एकैकेन्द्रियाधिष्ठानत्वेन एकत्वेन ग्राह्ये। एवं हस्तौ पादौ च एकतया ग्राह्यौ ॥ ५।६ ॥

चक्रपाणिः—इह दशप्राणायतनेषु दशप्राणायतनीयोक्तौ शङ्खौ परित्यज्य नाभिं मांसञ्च गृहीतम्।

मांसमिति । तेषु षट् पूर्व्वाणि मर्म्मसंख्यातानि । पञ्चदश कोष्ठाङ्गानि, तद् यथा—नाभिश्च हृदयञ्च क्लोम च यकृच्च प्लीहा च वृक्कौ च वस्तिश्च पुरीषाधारश्चामाशयश्च पक्वाशयश्चोत्तर-गुदश्चाधरगुदश्च क्षुद्रान्त्रञ्च स्थूलान्त्रञ्च वपावहनञ्चेति ॥ ७ ॥

गुदवस्त्य इति षट् मर्म्मसङ्ख्यातानि । पञ्चदश कोष्ठाङ्गानीति । सप्त आशया-ङ्गानि । सुश्रुते तु—आशयाः सप्त ते तु वाताशयः पित्ताशयः श्लेष्माशयो रक्ताशय आमाशयः पक्वाशयो मूत्राशयः स्त्रीणां गर्भाशयोऽष्टमः इति । अत्राङ्गानि विवृणोति । तद् यथा—नाभिश्चेत्यादि । सुश्रुतेनोक्तम्—तस्यान्तरेण नाभिस्तु ज्योतिःस्थानं ध्रुवं स्मृतम् । तद् आधमति वातेन देहस्तेनास्य वर्द्धते ॥ इति । क्लोमशब्देनात्र पुप्फुस उण्डुकश्चेति द्वयम् । सुश्रुतेनोक्तम्—शोणितफेनप्रभवः फुप्फुसः शोणितकिट्टप्रभव उण्डुकः इत्युण्डुकः क्लोम । यकृत् प्लीहा च रक्ताशयः । सुश्रुतेनोक्तम्—गर्भस्य यकृत्प्लीहानौ शोणितजाविति । वृक्कौ वुक्कद्वयम्, वक्षोऽधस्तात् । सुश्रुतेऽप्युक्तम्—रक्तमेदःप्रसादाद् वुक्कौ भवत इति । वस्तिरेका मूत्राशयः । पुरीषाधारश्चेति यत्र पुरीषमादधाति । आमाशयश्चेति नाभिस्तनान्तरदेशो यत्र भुक्तमात्रमपक्वं तिष्ठति । पक्वाशय-श्चेति नाभेरधस्ताद्देशो यत्र पक्वं भुक्तस्य किट्टं तिष्ठति । उत्तरगुदञ्चेति तत् पक्वं पुरीषं यद्वहति । अधरगुदञ्चेति अर्द्धपञ्चाङ्गुलिमानं त्रिवलिरूपं गुदं तस्याधोभागः पुरीषं यद्विसृजति । अन्त्रं यदुदरमध्यस्थं, या लोके नाड़ीत्युच्यते, न तु सा नाड़ी, शास्त्रे हि तदन्त्रमित्युच्यते । तच्च द्विविधं क्षुद्रान्त्रञ्च स्थूलान्त्रञ्च । सुश्रुते तु गर्भस्येत्यधिकृत्य । असृजः श्लेष्मणश्चापि यः प्रसादः परो मतः । तं पच्यमानं पित्तेन वायुश्चाप्यनुधावति । ततोऽस्यान्त्राणि जायन्ते गुदं वस्तिश्च देहिनः ॥ इति । तथा सार्द्धत्रिव्यामान्यन्त्राणि पुंसां स्त्रीणामर्द्ध-व्यामहीनानीति । व्यामोऽत्र सवक्षःप्रसारितबाहुद्वयम् । वपावहनञ्चेति । हृन्मेदस्तु वपा वसेति तद्वहनं मेदःस्थानम् । इति पञ्चदश कोष्ठाङ्गानीति ॥ ७ ॥

तेन नाभिमांसयोरपि प्राणायतनत्वं तथा शङ्खयोश्च, पाठद्वयदर्शनाद् बोद्धव्यम् । यदुक्तम् दश-प्राणायतनीये—"दशैवायतनान्याहुः प्राणा येषु प्रतिष्ठिताः । शङ्खौ मर्म्मत्रयं कण्ठो रक्तं शुक्रौजसी गुदम् ॥" इति । क्लोम पिपासास्थानम् । वस्तिः मूत्रस्थानम् । उत्तरगुदम्—यत्र पुरीषमवतिष्ठते । येन तु पुरीषं निष्क्रामति तदधरगुदस्थानम् 'तैफनर्सिका' इति ख्यातम् ॥ ७ ॥

षट्पञ्चाशत् प्रत्यङ्गानि षट्स्वङ्गेषूपनिबद्धानि, यान्यपरिसंख्यातानि पूर्व्वमङ्गेषु परिसंख्यायमानेषु, तान्यन्यैः पर्य्यायैरिह प्रकाश्य व्याख्यातानि भवन्ति। तद् यथा—द्वे जङ्घापिण्डिके द्वे ऊरुपिण्डिके द्वौ स्फिचौ द्वौ वृषणावेकं शेफो द्वे उखे द्वौ वङ्क्षणौ द्वौ कुकुन्दरौ एकं वस्तिशीर्षमेकमुदरं द्वौ स्तनौ द्वौ भुजौ * द्वे बाहुपिण्डिके चिवुकमेकं द्वावोष्ठौ द्वे सृक्कण्यौ द्वौ दन्तवेष्टकावेकं तालु एका गलशुण्डिका द्वे उपजिह्विके एका गोजिह्विका द्वौ गण्डौ द्वे कर्णशष्कुलिके द्वौ कर्णपुत्रकौ द्वे अक्षिकूटे चत्वार्य्यक्षिवर्त्माणि द्वे अक्षिकनीनिके द्वे भ्रुवावेकोऽवटुः चत्वारि

गङ्गाधरः—कोष्ठाङ्गान्युक्त्वा प्रत्यङ्गान्याह—षट्पञ्चाशत् प्रत्यङ्गानीत्यादि। नन्वेतानि किं षडङ्गाधिकान्युतावान्तराणीत्यत आह—षट्स्वित्यादि। पूर्व्वं येषु परिसंख्यायमानेष्वङ्गेषु यान्यपरिसङ्ख्यातानि तानि षडङ्गेषु पाणिपादशिरोऽन्तराधिषु षट्सूपनिबद्धानि। तान्यन्यैः पर्य्यायैरिह पुनः प्रकाश्यानि भवन्ति। तद् यथेत्यादि—तत्रैते जङ्घादिके द्वे द्वे। जङ्घे द्वे द्वे चोरुपिण्डिके। द्वौ स्फिचौ। द्वौ वृषणौ। द्वे उखे। द्वौ वङ्क्षणे। द्वौ कुकुन्दरौ। द्वौ स्तनौ। द्वौ भुजौ। द्वे बाहुपिण्डिके। द्वावोष्ठौ। द्वे सृक्कण्यौ। द्वौ दन्तवेष्टकौ। द्वे उपजिह्विके। द्वौ गण्डौ। द्वे कर्णशष्कुलिके। द्वौ कर्णपुत्रकौ। द्वे त्वक्षिकूटे। द्वे अक्षिकनीनिके। द्वे भ्रुवौ

चक्रपाणिः—षट्पञ्चाशत् प्रत्यङ्गानीति, तद् यथा—द्वे जङ्घापिण्डिके इत्यादिग्रन्थवक्ष्यमाणानि। यानीत्यादि—यानि यानि वक्ष्यमाणानि षट्पञ्चाशत् प्रत्यङ्गानि पूर्व्वमङ्गेषु हस्तादिषु षट्सु परिसंख्यायमानेषु अपरिसंख्यातानि, तान्यन्यैः पर्य्यायैः प्रकाश्यानि भवन्तीति योजना। पर्य्यायाश्च 'जङ्घापिण्डिकादयः' शब्दा एव, एतेन हस्तादिषडङ्गकथनेनैव तदाश्रिता अपि जङ्घापिण्डिकादय उक्ता एव। सम्प्रति तु अवयवविशेषव्यवहारार्थं जङ्घापिण्डिकादयः पृथगुक्ता इति वाक्यार्थः। पूर्व्वमङ्गेष्विति-स्थाने पूर्व्वमन्येष्विति पाठः, तथापि 'अन्य'शब्देन हस्तादीनि षडङ्गानि ग्राह्याणि। उखे इति कक्षस्य पार्श्वयोर्निम्नभागौ। कुकुन्दरौ स्फिचोरुपरि उन्नतौ भागौ। वस्तिशीर्षं नाभेरधः। श्लेष्मभुवौ कण्ठपार्श्वयोर्व्यवस्थितौ कठिनौ भागौ। सृक्कण्यौ वदनान्ते। द्वे उपजिह्विके इति जिह्वाया अधोगता जिह्वा, तथा उपरिगता ग्राह्या। एका गोजिह्विकेति गीर्वाक, तस्याः कारणभूता जिह्वा। तेन वचनकारणभूता प्रधानभूता जिह्वैव गृह्यते। कर्णशष्कुलिके कर्णगतावर्त्तकौ, कर्णपुत्रकौ तु द्वौ कर्णावेव। अक्षिकूटके

* द्वौ भुजौ इत्यत्र द्वौ श्लेष्मभुवौ इति चक्रः।

पाणिपादहृदयानि। नव महान्ति च्छिद्राणि सप्त शिरसि द्वे चाधः ॥ ८ ॥

च। इत्येतानि प्रत्यङ्गानि खलु (एकोनविंशतिः)। विंशतिः द्विद्विसङ्ख्यानि भवन्ति। शेफःप्रभृतीन्येकैकसङ्ख्यानि। तत्र यथा। एकं शेफः (एका वस्तिः) एकं वस्तिशीर्षमेकम् उदरमेकं चिवुकमेकं तालु एका गलशुण्डिका एका गोजिह्विका एकोऽवटुः। तथान्यत्रोक्तम्—एकोऽवटरेकं मस्तकमेकं पृष्ठमेको नाभिरेकं ललाटमेका नासिका ग्रीवा चैका। इत्येतान्येकैकसङ्ख्यानि। तत्र जङ्घापिण्डिका जानुनोरधस्तान्मांसपिण्डाकारमङ्गम्। ऊरुपिण्डिका ऊरुस्थमांसपिण्डिका। स्फिक् नितम्बमांसपिण्डिका। वृषणावण्डद्वयम्। सुश्रुते च—मांसासृक्कफमेदःप्रसादाद् वृषणौ भवतः इत्युक्तम्। शेफः शिश्नो ग्रीवाहृदयनिबन्धिनीनामधोगानां कण्डराणां प्ररोह इति। उखे इति उखं कक्षपार्श्वयोर्निम्नभागः। ऊरुवृषणयोर्मध्यभागो वङ्क्षणः। स्फिचोरुपर्य्युन्नतभागः कुकुन्दरः। नाभेरधोदेशो वस्तिशीर्षम्। चिवुकं मुखाधोभागो हन्वग्रदेशः। एका गलशुण्डिकेति गलाभ्यन्तरं नलीति लोके। द्वे उपजिह्विके इति गलसंलग्ना क्षुद्रजिह्वा चैका गलाभ्यन्तरमेका चेति। एका गोजिह्विकेति गौर्वाक् तदर्था जिह्वा रसनानामेति। अवटुर्घाटा। पाणिहृदयं पाणितलं पादहृदयं पादतलम्। नव महान्ति च्छिद्राणीति पुरुषाभिप्रायेण। तानि विवृणोति—सप्त शिरसि द्वे अधः इति। चक्षुषोर्द्वयोः द्वे च्छिद्रे। नासिकायां द्वे च्छिद्रे। कर्णयोर्द्वयोर्द्वे च्छिद्रे। मुखच्छिद्रमेकमिति सप्त च्छिद्राणि शिरसि महान्ति स्त्रीपुरुषयोः। उपस्थद्वारमेकमेकं गुदद्वारमिति द्वे अधश्छिद्रे महती, इति नव महान्ति च्छिद्राणि स्त्रीपुंसयोर्ब्रह्मरन्ध्रे चैकम् आवृतमिति दश। स्त्रीणामपराणि त्रीणि महान्ति च्छिद्राणि। द्वे स्तनयोश्छिद्रे एकं योनिद्वारमार्त्तववहमधस्तादिति त्रयोदश च्छिद्राणि स्त्रीणां महान्ति। सुश्रुते चोक्तानि—श्रवण-नयन-वदन-घ्राण-गुदमेढ्राणि नव स्रोतांसि नराणां बहिर्मुखाण्येतानि, स्त्रीणामपराणि त्रीणि, द्वे स्तनयोरधस्ताद्रक्तवहञ्चैकमिति। तत्रान्तरेऽन्तर्मुखमेकं ब्रह्मरन्ध्रमिति। तेन सह पुंसो दश स्त्रीणां त्रयोदशेति। लोमकूपान्यसङ्ख्येयानि क्षुद्रच्छिद्राणि ॥ ८ ॥

अक्षिगोलके। द्वे अक्षिकनीनिके इत्यत्र 'कनीनिका'शब्देन नासया सममक्षिसन्धिरभिधीयते। अवटुर्घाटा। चत्वारि पाणिपादहृदयानीति पाण्योः पादयोश्च तलानि मध्यानि चत्वारीत्यर्थः। एतावतैव षटपञ्चाशत् प्रत्यङ्गानि पूर्य्यन्ते। नव महान्ति च्छिद्राणीति व्याकरोति—सप्त शिरसि द्वे

एतावद्दृश्यं शक्यमपि निर्द्देष्टुम्, अनिर्देश्यमतः परं तर्क्य-मेव। तद् यथा—नव स्नायुशतानि सप्त सिराशतानि

गङ्गाधरः—एतावदिति त्वगादिकं यावदुक्तं तावद् दृश्यं निर्द्देष्टुं शक्यमतः परं प्रत्यङ्गं तर्क्यमूहनीयमिति। तद् विवृणोति—तद् यथेत्यादि। नव स्नायुशतानि। स्नायूनां नव शतानि। तदुक्तं सुश्रुतेऽपि—त्वक्पर्य्यन्तस्य देहस्य योऽयमङ्गविनिश्चयः। शल्यज्ञानादृते नैष वर्ण्यतेऽङ्गेषु केषुचित्। तस्मान्निःसंशयं ज्ञानं हर्त्रा शल्यस्य वाञ्छता। शोधयित्वामृतं सम्यग् द्रष्टव्योऽङ्गविनिश्चयः। प्रत्यक्षतो हि यद् दृष्टं शास्त्रदृष्टञ्च यद्भवेत्। समासतस्तदुभयं भूयो-ज्ञानविवर्द्धनम्॥ तस्मात् समस्तगात्रमविषोपहतमदीर्घव्याधिपीड़ितम् अवर्ष-शतिकं निःसृष्टान्त्रपुरीषं पुरुषमवहन्त्यामापगायां निबद्धं पञ्जरस्थं मुञ्जवल्वज-कुशशणादीनामन्यतमेन वेष्टिताङ्गमप्रकाशे देशे कोथयेत्। सम्यक्प्रकुथितञ्च उद्धृत्य ततो देहं सप्तरात्रादुशीरबालवेणुवल्वजकुर्चीनामन्यतमेन शनैःशनैः अवघर्षयंस्त्वगादीन् सर्व्वानेव वाह्याभ्यन्तराङ्गप्रत्यङ्गविशेषान् यथोक्तान् लक्षयेत् चक्षुषा। श्लोकौ चात्र भवतः। न शक्यश्चक्षुषा द्रष्टुं देहे सूक्ष्मतमो विभुः। दृश्यते ज्ञानचक्षुर्भिस्तपश्चक्षुर्भिरेव च। शरीरे चैव शास्त्रे च दृष्टार्थः स्याद् विशारदः। दृष्टश्रुताभ्यां सन्देहमवापोह्याचरेत् क्रियाः॥ इति। तत्र। नव स्नायु शतानि तासां शाखासु षट्शतानि। द्वे शते त्रिंशच्च कोष्ठे। ग्रीवां प्रत्यूर्द्ध्वं सप्ततिः इति। तत्रैककस्यान्तु पादाङ्गुल्यां षट् निचितास्तास्त्रिंशत् तावत्य एव तलकूर्च्च-गुल्फेषु। तावत्य एव जङ्घायाम्। दश जानुनि। चत्वारिंशदूरु। दश वङ्क्षणे। शतमध्यर्द्धमेवमेकस्मिन् सक्थ्नि भवन्ति। एतेनेतरसक्थिबाहू च व्याख्यातौ। एवं शाखासु षट् शतानि भवन्ति। षष्टिः कट्यामशीतिः पृष्ठे पार्श्वयोः षष्टिरुरसि त्रिंशत्। एवं कोष्ठे द्वे शते त्रिंशच्च भवन्ति। षट्त्रिंशद् ग्रीवायां मूर्द्ध्नि चतुस्त्रिंशत्। एवं ग्रीवां प्रत्यूर्द्ध्वं सप्ततिः। एवं नव स्नायु-शतानि व्याख्यातानि। भवन्ति चात्र। स्नायूश्चतुर्व्विधा विद्यात् तास्तु सर्व्वा निबोध मे। प्रतानवत्यो वृत्ताश्च पृथ्व्यश्च शुषिरास्तथा। प्रतानवत्यः शाखासु

चाध वृत्ति। एतावत् त्वगादि दृश्यं प्रायः प्रत्यक्षविषय इत्यर्थः। अतः परं तर्क्यमेवेति अतस्त्वगादेः परं यत् स्नाय्वादि, तत् प्रायस्तर्क्यमेव, अनुमानगम्यमेवेत्यर्थः। यद्यपि स्नाय्वाद्यपि प्रत्यक्षं भवति, तथापीह वक्ष्यमाणसंख्यायुक्तं सर्व्वं स्नाय्वादि न प्रत्यक्षेण सुकरग्रहणमिति 'तर्क्यमेव' इत्युक्तम्। स्नाय्वादिभेदानेवाह—नव स्नायुशतानीत्यादि।

सर्व्वसन्धिषु चाप्यथ। वृत्तास्तु कण्डराः सर्व्वा विज्ञेयाः कुशलैरिह। आमपक्काशयान्तेषु वस्तौ च शुषिराः खलु। पार्श्वोरसि तथा पृष्ठे पृथुलाश्च शिरस्यथ। नौर्यथा फलकास्तीर्णा बन्धनैर्बहुभिर्युता। भारक्षमा तरेदप्सु नृयुक्ता तु समाहिता। एवमेव शरीरेऽस्मिन् यावन्तः सन्धयः स्मृताः। स्नायुभिर्बहुभिर्बद्धास्तेन भारवहा नराः। न ह्यस्थीनि न वा पेश्यो न सिरा न च सन्धयः। व्यापादितास्तथा हन्युर्यथा स्नायुः शरीरिणम्। यः स्नायूः प्रविजानाति बाह्याश्चाभ्यन्तरास्तथा। स गूढ़ं शल्यमुद्धर्त्तुं देहाच्छक्नोति देहिनाम्॥ इति। तथा। मेदसः स्नेहमादाय सिरा स्नायुत्वमाप्नुयात्। सिराणाञ्च मृदुः पाकः स्नायूनाञ्च ततः खरः इति। इति नव स्नायुशतानि व्याख्यातानि भवन्ति।

अथ सप्त सिराशतानीति। तदुक्तं सुश्रुते—सप्त सिराशतानि भवन्ति। याभिरिदं शरीरमाराम इव जलहारिणीभिः केदार इव च कुल्याभिरुपस्निह्यते-ऽनुगृह्यते चाकुञ्चनप्रसारणादिभिर्विशेषैः। द्रुमपत्रसेवनीनामिव च तासां प्रतानास्तासां नाभिर्मूलम्। ततश्च प्रसरन्त्यूर्द्ध्वमधस्तिर्य्यक् च। भवतश्चात्र। यावत्यस्तु सिराः काये सम्भवन्ति शरीरिणाम्। नाभ्यां सर्व्वा निबद्धास्ताः प्रतन्वन्ति समन्ततः। नाभिस्थाः प्राणिनां प्राणाः प्राणान्नाभिर्व्युपाश्रिताः। सिराभिरावृतो नाभिश्चक्रनाभिरिवारकैः॥ तासां मूलसिराश्चत्वारिंशत् तासां वातवाहिन्यो दश। पित्तवाहिन्यो दश। कफवाहिन्यो दश। दश रक्तवाहिन्यः। तासान्तु वातवाहिनीनां वातस्थानगतानां पञ्चसप्ततिः शतञ्च भवति। तावत्य एव पित्तवाहिन्यः पित्तस्थाने, कफवाहिन्यश्च तावत्यः कफस्थाने, रक्तवाहिन्यस्तु यकृत्प्लीह्नोः; एवमेतानि सप्त सिराशतानि। तत्र वातवाहिन्यः सिरा एकस्मिन् सक्थ्नि पञ्चविंशतिः। एतेनेतरसक्थिबाहू च व्याख्यातौ। विशेषतस्तु कोष्ठे चतुस्त्रिंशत्—तासां गुदमेढ्राश्रिताः श्रोण्यामष्टौ, द्वे द्वे पार्श्वयोः, षट् पृष्ठे, तावत्य एव चोदरे, दश वक्षसि, एकचत्वारिंशज्जत्रुण ऊर्द्ध्वम्;—तासां चतुर्दश ग्रीवायां, कर्णयोश्चतस्रः, नव जिह्वायाम्, षट् नासिकायाम्, अष्टौ नेत्रयोः। एवमेतत् पञ्चसप्तत्यधिकशतं वातवहानां सिराणां व्याख्यातम्। एष एव विभागः शेषाणामपि। विशेषतस्तु पित्तवाहिन्यो नेत्रयोर्दश, कर्णयोर्द्वे। एवं रक्तवहाः कफवहाश्च। एवमेतानि सप्त सिराशतानि सविभागानि व्याख्यातानि। भवन्ति चात्र। क्रियाणामप्रतीघातममोहं बुद्धिकर्म्मणाम्। करोत्यन्यान् गुणांश्चापि स्वाः सिराः पवनश्चरन्। यदा तु कुपितो वायुः स्वाः सिराः प्रतिपद्यते। तदास्य विविधा रोगा जायन्ते वातसम्भवाः।

आजिष्णुतामन्नरुचिमग्निदीप्तिमरोगताम्। संसर्पत् स्वाः सिराः पित्तं कुर्य्याच्चान्यान् गुणानपि। यदा प्रकुपितं पित्तं सेवते स्ववहाः सिराः। तदास्य विविधा रोगा जायन्ते पित्तसम्भवाः। स्नेहमङ्गेषु सन्धीनां स्थैर्य्यं बलमुदीर्णताम्। करोत्यन्यान् गुणांश्चापि बलाशः स्वाः सिराश्चरन्। यदा तु कुपितः श्लेष्मा स्वाः सिराः प्रतिपद्यते। तदास्य विविधा रोगा जायन्ते श्लेष्मसम्भवाः। धातूनां पूरणं वर्णं स्पर्शज्ञानमसंशयम्। स्वाः सिराः सञ्चरद्रक्तं कुर्य्याच्चान्यान् गुणानपि। यदा तु कुपितं रक्तं सेवते स्ववहाः सिराः। तदास्य विविधा रोगा जायन्ते रक्तसम्भवाः। न हि वातं सिराः काश्चिन्न पित्तं केवलं तथा। श्लेष्माणं वा वहन्त्येता अतः सर्व्ववहाः स्मृताः। प्रदुष्टानां हि दोषाणामुच्छ्रितानां प्रधावताम्। ध्रुवमुन्मार्गगमनमतः सर्व्ववहाः स्मृताः। तत्रारुणा वातवहाः पूर्य्यन्ते वायुना सिराः। पित्तादुष्णाश्च नीलाश्च शीता गौर्य्यः सिराः कफात्। असृग्वहास्तु रोहिण्यः सिरा नात्युष्णशीतलाः। अत ऊर्द्ध्वं प्रवक्ष्यामि न विध्येद् याः सिरा भिषक्। वैकल्यं मरणञ्चापि व्यधात् तासां ध्रुवं भवेत्। सिराशतानि चत्वारि विद्याच्छाखासु बुद्धिमान्। षट्त्रिंशच्च शतं कोष्ठे चतुःषष्टिश्च मूर्द्धनि। शाखासु षोड़श सिराः कोष्ठे द्वात्रिंशदेव तु। पञ्चाशज्जत्रुणश्चोर्द्ध्वमवेध्याः परिकीर्त्तिताः॥ तत्र सिराशतमेकैकस्मिन् सक्थ्नि भवति। तासां जालधरा त्वेका, तिस्रश्चाभ्यन्तराः; तत्रोर्व्वीसंज्ञे द्वे, लोहिताक्षसंज्ञा चैका एतास्त्ववेध्याः। एतेनेतरसक्थिबाहू च व्याख्यातौ। एवमशस्त्रकृत्याः षोड़श शाखासु। द्वात्रिंशत् श्रोण्यां, तासामष्टावशस्त्रकृत्याः। द्वे द्वे विटपयोः कटीकतरुणयोश्च। अष्टावष्टावेकैकस्मिन् पार्श्वे तासामेकैकामूर्द्ध्वगां परिहरेत्। पार्श्वमधिगते च द्वे। चतस्रो विंशतिश्च पृष्ठवंशमुभयतस्तासाम् ऊर्द्ध्वगामिन्ये द्वे द्वे परिहरेद् बृहतीसिरे। तावत्य एवोदरे। तासां मेढ्रोपरि रोमराजीम् उभयतो द्वे द्वे परिहरेत्। चत्वारिंशद्वक्षसि, तासां चतुर्द्दशाशस्त्रकृत्याः। हृदये द्वे। द्वे द्वे स्तनमूले स्तनरोहितापलापस्तम्भेषूभयतोऽष्टौ। एवं द्वात्रिंशत् अशस्त्रकृत्याः पृष्ठोदरोरःसु भवन्ति। सचतुःषष्टि सिराशतं जत्रण ऊर्द्ध्वं भवति। तत्र षट्पञ्चाशच्छिरोधरायाम्; तासामष्टौ चतस्रश्च मर्म्मसंज्ञाः परिहरेत्। द्वे कृकाटिकयोर्द्वे विधुरयोः। एवं ग्रीवायां षोड़शावेध्याः। हन्वोरुभयतोऽष्टावष्टौ; तासान्तु सन्धिधमन्यौ द्वे द्वे परिहरेत्। षट्त्रिंशज्जिह्वायाम्; तासामधः षोड़शाशस्त्रकृत्याः। रसवहे द्वे, वाग्वहे च द्वे। द्विर्द्वादश नासायाम्। तासामौपनासिक्यश्चतस्रः परिहरेत्। तासामेव च तालुन्येकां मृदावुद्देशे। अष्टात्रिंशत्

द्वे धमनीशते पञ्च * पेशीशतानि सप्तोत्तरं मर्म्मशतं द्वे पुनः

उभयोर्नेत्रयोः ; तासामेकैकामपाङ्गयोः परिहरेत्। कर्णयोर्दश। तासां शब्दवाहिनीनामेकैकां परिहरेत्। नासानेत्रगतास्तु ललाटे षष्टिः। तासां केशान्तानुगताश्चतस्रः। आवर्त्तयोरेकैका स्थापन्याञ्चैका परिहर्त्तव्या। शङ्खयोर्दश। तासां शङ्खसन्धिगतामेकैकां परिहरेत्। द्वादश मूर्द्धनि तासामुत्क्षेपयोर्द्वे परिहरेत्। सीमन्तेष्वेकैकामेकामधिपताविति। एवमशस्त्रकृत्याः पञ्चाशज्जत्रुण ऊर्द्ध्वमिति। भवति चात्र। व्याप्नुवन्त्यभितो देहं नाभितः प्रसृताः सिराः। प्रतानाः पद्मिनीकन्दाद्विसादीनां यथा जलम्॥ इति।

अथ द्वे धमनीशते इति। धमनीनां द्वे शते भवतः। सुश्रुतेऽपि दृश्यते—चतुर्व्विंशतिर्धमन्यो नाभिप्रभवा अभिहिताः। तत्र केचिदाहुः सिराधमनीस्रोतसामविभागः। सिराविकारा एव धमन्यः स्रोतांसि चेति। तत् तु न सम्यक्। अन्या एव हि धमन्यः स्रोतांसि च सिराभ्यः। कस्मात्? व्यञ्जनान्यत्वात्, मूलसंनियमात्, कर्म्मवैशेष्यादागमाच्च। केवलन्तु परस्परसन्निकर्षात् सदृशागमकर्म्मत्वात् सौक्ष्म्याच्च विभक्तकर्म्मणामप्यविभाग इव कर्म्मसु भवति। तासान्तु नाभिप्रभवाणां धमनीनामूर्द्धगा दश, दश चाधोगामिन्यश्चतस्रस्तिर्य्यग्गाः। ऊर्द्धगाः शब्दस्पर्शरूपरसगन्धप्रश्वासोच्छ्वासजृम्भितक्षुद्धसितकथितरुदितादीन् विशेषानभिवहन्त्यः शरीरं धारयन्ति। तास्तु हृदयमभिप्रपन्नास्त्रिधा जायन्ते तास्त्रिंशत्। तासान्तु वातपित्तकफशोणितरसान् द्वे द्वे वहतः, ता दश। शब्दरूपरसगन्धानष्टाभिर्गृह्णीते। द्वाभ्यां भाषते च, द्वाभ्यां घोषं करोति, द्वाभ्यां स्वपिति, द्वाभ्यां प्रतिबुध्यते। द्वे चाश्रुवाहिण्यौ, द्वे स्तन्यं स्त्रिया वहतः स्तनसंश्रिते ; ते एव शुक्रं नरस्य स्तनाभ्यामभिवहतः। तास्त्वेतास्त्रिंशत् सविभागा व्याख्याताः। एताभिरूर्द्ध्वं नाभेरुदरपार्श्वपृष्ठोरःस्कन्धग्रीवाबाहवो धार्य्यन्ते याप्यन्ते च। भवति चात्र। ऊर्द्ध्वं गतास्तु कुर्व्वन्ति कर्म्माण्येतानि सर्व्वशः। अधोगतास्तु वक्ष्यामि कर्म्म तासां यथायथम्। अधोगमास्तु वातमूत्रपुरीषशुक्रार्त्तवादीन्यधो वहन्ति। तास्तु पित्ताशयमभिप्रतिपन्नास्तत्रस्थमेवान्नपानरसं विपक्वमौष्ण्याद्विरेचयन्त्योऽभिवहन्त्यः शरीरं तर्पयन्त्यर्पयन्ति चोर्द्धगतानां तिर्य्यग्गतानां रसस्थानञ्चाभिपूरयन्ति

---

* चत्वारीति चक्रः।

मूत्रपुरीषस्वेदांश्च विरेचयन्त्यामपक्वाशयान्तरे च त्रिधा जायन्ते तास्त्रिंशत्। तासान्तु वातपित्तकफशोणितरसान् द्वे द्वे वहतस्ता दश, द्वे अन्नवाहिन्यौ अन्त्राश्रिते। तोयवहे द्वे। मूत्रवस्तिमभिप्रपन्ने मूत्रवहे द्वे। शुक्रवहे द्वे शुक्रप्रादुर्भावाय द्वे विसर्गाय, ते एव रक्तमभिवहतो नारीणामार्त्तवसंज्ञम्। द्वे वर्च्चो निरसन्त्यौ स्थूलान्त्रप्रतिबद्धे, अष्टावन्यास्तिर्य्यग्गाणां धमनीनां स्वेदम् अर्पयन्ति। तास्त्वेतास्त्रिंशत् सविभागा व्याख्याताः।

एताभिरधो नाभेः पक्वाशयकटीमूत्रपुरीषगुदवस्तिमेढ्रसक्थीनि धाय्यन्ते याप्यन्ते च। भवति चात्र। अधोगमास्तु कुर्व्वन्ति कर्म्माण्येतानि सर्व्वशः। तिर्य्यग्गाः संप्रवक्ष्यामि कर्म्म तासां यथायथम्। तिर्य्यग्गाणान्तु चतसृणां धमनीनाम् एकैका पञ्चधा प्रतन्वन्ती विंशतिर्भवति। विंशतिश्चैकैका पुनरष्टधा प्रतन्वन्ती षष्ट्युत्तरशतं भवति, ता एता धमन्यो द्वे शते भवन्त्यथैवं शतधा सहस्रधा चोत्तरोत्तरं विभज्यन्ते, तास्त्वसङ्ख्येयाः; ताभिरिदं शरीरं गवाक्षितं विबद्धमाततञ्च। तासां मुखानि रोमकूपप्रतिबद्धानि, यैः स्वेदमभिवहन्ति रसञ्चापि सन्तर्पयन्त्यन्तर्बहिश्च, तैरेव चाभ्यङ्गपरिषेकावगाहालेपनवीर्य्याण्यन्तःशरीरम् अभिप्रतिपद्यन्ते त्वचि विपक्वानि, तैरेव स्पर्शसुखमसुखं वा गृह्णाति। तास्त्वेताश्चतस्रो धमन्यः सर्व्वाङ्गगताः सविभागा व्याख्याताः। भवतश्चात्र। यथा स्वभावतः खानि मृणालेषु विसेषु च। धमनीनां तथा खानि रसो यैरुपचीयते। पञ्चाभिभूतास्त्वथ पञ्चकृत्वः पञ्चेन्द्रियं पञ्चसु भावयन्ति। पञ्चेन्द्रियं पञ्चसु भावयित्वा पञ्चत्वमायान्ति विनाशकाले॥ इति।

अथ यद्यपि स्रोतसां परिसंख्यानं स्रोतोविमाने व्याख्यातं, तथापि तत्प्रपञ्चार्थं सौश्रुतमत ऊर्द्ध्वं स्रोतसां मूलविद्धलक्षणमुपदेक्ष्यामः। गर्भस्य तु। यथास्वमुष्मणा युक्तो वायुः स्रोतांसि दारयेत्। अनुप्रविश्य पिशितं पेशीर्विभजते तथा॥ तानि खलु स्रोतांसि प्राणान्नोदक-रसरक्तमांसमेदोमूत्रपुरीषशुक्रार्त्तववहानि। येष्वधिक एकेषां बहूनि। एतेषां विशेषा बहवः। तत्र प्राणवहे द्वे, तयोर्मूलं हृदयं रसवाहिन्यश्च धमन्यः; तत्र विद्धस्य क्रोशनविनमनमोहनभ्रमणवेपनानि मरणं वा भवति। अन्नवहे द्वे, तयोर्मूलमामाशयोऽन्नवाहिन्यश्च धमन्यः; तत्र विद्धस्याध्मानं शूलान्नद्वेषौ छर्द्दिः पिपासान्ध्यं मरणं वा। उदकवहे द्वे, तयोर्मूलं तालु क्लोम च; तत्र विद्धस्य पिपासा सद्योमरणञ्च। रसवहे द्वे, तयोर्मूलं हृदयं रसवाहिन्यश्च

धमन्यः। तत्र विद्धस्य शोषः प्राणवहविद्धवच्च मरणं तल्लिङ्गानि चेत्यर्थः। रक्तवहे द्वे, तयोर्मूलं यकृत्प्लीहानौ रक्तवाहिन्यश्च धमन्यः; तत्र विद्धस्य श्यावाङ्गता ज्वरो दाहः पाण्डुता शोणितातिगमनं रक्तनेत्रता चेति। मांसवहे द्वे, तयोर्मूलं स्नायुत्वचं रक्तवहाश्च धमन्यः; तत्र विद्धस्य श्वयथुर्मांसशोषः सिराग्रन्थयो मरणं वा। मेदोवहे द्वे, तयोर्मूलं कटी वुक्कौ च; तत्र विद्धस्य स्वेदागमनं स्निग्धाङ्गता तालुशोषः स्थूलशोफता पिपासा च। मूत्रवहे द्वे, तयोर्मूलं वस्तिर्मेढ्रश्च; तत्र विद्धस्यानद्धवस्तिता मूत्रनिरोधः स्तब्धमेढ्रता च। पुरीषवहे द्वे, तयोर्मूलं पक्वाशयो गुदश्च; तत्र विद्धस्यानाहो दुर्गन्धता ग्रथितान्त्रता च। शुक्रवहे द्वे, तयोर्मूलं स्तनौ वृषणौ च; तत्र विद्धस्य क्लीवता चिरात् प्रसेको रक्तशुक्रता च। आर्त्तववहे द्वे, तयोर्मूलं गर्भाशय आर्त्तववाहिन्यश्च धमन्यः; तत्र विद्धायां वन्ध्यात्वं मैथुनासहिष्णुत्वमार्त्तवनाशश्च। सेवनीच्छेदाद् रुजाप्रादुर्भावः। वस्तिगुदविद्धलक्षणं प्रागुक्तमिति। स्रोतोविद्धन्तु प्रत्याख्यायोपाचरेदुद्धृतशल्यन्तु क्षतविधानेनोपाचरेत्। मूलात् खादन्तरं देहे प्रसृतन्त्वभिवाहि यत्। स्रोतस्तदिति विज्ञेयं सिराधमनिवर्ज्जितम्॥ इति।

अथ पञ्च पेशीशतानीति। पेशीनां पञ्च शतानीत्यर्थः। तद् यथा—सुश्रुते गर्भस्य। यथास्वमुष्मणा युक्तो वायुः स्रोतांसि दारयेत्। अनुप्रविश्य पिशितं पेशीर्विभजते तथा॥ पञ्च पेशीशतानि भवन्ति। तासां चत्वारि शतानि शाखासु, कोष्ठे षट्षष्टिः, ग्रीवां प्रत्यूर्द्ध्वं चतुस्त्रिंशत्। एवं ताः पञ्च शतानि भवन्ति। तद् यथा—एकैकस्यान्तु पादाङ्गुल्यां तिस्रस्तिस्रस्ताः पञ्चदश। दश प्रपदे। पदोपरि कूर्च्चसन्निविष्टास्तावत्य एव। दश गुल्फतलयोः। गुल्फजान्वन्तरे विंशतिः। पञ्च जानुनि। विंशतिरूरौ। दश वङ्क्षणे। शतमेवमेकस्मिन् सक्थ्नि भवति। एतेनेतरसक्थि बाहू च व्याख्यातौ। एवं शाखासु चत्वारि शतानि पेशीनां पूर्य्यन्ते। तिस्रः पायौ। एका मेढ्रे। सेवन्याञ्चापरा। द्वे वृषणयोः। स्फिचोः पञ्च पञ्च। द्वे वस्तिशिरसि। पञ्चोदरे। नाभ्यामेका। पृष्ठोर्द्ध्वसन्निविष्टाः पञ्च पञ्च दीर्घाः। षट् पार्श्वयोः। दश वक्षसि। अक्षकांसौ प्रति समन्तात् सप्त। द्वे हृदयामाशययोः। षट् यकृत्प्लीहोण्डुकेषु। एवं कोष्ठे षट्षष्टिः पेशीनां पूर्य्यन्ते।

ग्रीवायां चतस्रः। अष्टौ हन्वोः। एकैका काकलकगलयोः। द्वे तालुनि। एका जिह्वायाम्। ओष्ठयोर्द्वे। घोणायां द्वे। द्वे नेत्रयोः। गण्डयोश्चतस्रः। कर्णयोर्द्वे। चतस्रो ललाटे। एका शिरसीत्येवं ग्रीवां प्रत्यूर्द्ध्वं त्रिंशत् पेश्यः पूर्य्यन्ते।

एवमेतानि पञ्च पेशीशतानि। सिरास्नाय्वस्थिपर्व्वाणि सन्धयश्च शरीरिणाम्। पेशीभिः संवृतान्यत्र बलवन्ति भवन्त्यतः॥ स्त्रीणान्तु चतुर्व्विंशतिरधिका। दश तासां स्तनयोः, एकैकस्मिन् पञ्च पञ्च। यौवने तासां परिवृद्धिः। अपत्यपथे चतस्रस्तासां प्रसृते अभ्यन्तरतो द्वे। मुखाश्रिते बाह्ये च प्रसृते द्वे। गर्भच्छिद्र-संश्रितास्तिस्रः। शुक्रार्त्तवप्रवेशिन्यस्तिस्रः। चतस्र एव पित्तपक्वाशयमध्ये गर्भाशयः, यत्र गर्भस्तिष्ठति। तासां बहलपेलवस्थूलाणुपृथुवृत्तह्रस्वदीर्घस्थिरमृदुश्लक्ष्ण-कर्कशभावाः सन्ध्यस्थिसिरास्नायुप्रच्छादका यथादेशं स्वभावत एव भवन्ति। भवति चात्र। पुंसां पेश्यः पुरस्ताद् याः प्रोक्ता लक्षणमुष्कजाः। स्त्रीणामावृत्य तिष्ठन्ति फलमन्तर्गतं हि ताः॥ इति।

अथ सप्तोत्तरं मर्म्मशतमिति। म्रियतेऽस्योपघातेनेति मर्म्म। मर्म्मणां सप्तोत्तरं सप्ताधिकं शतमेकं भवतीत्यर्थः। तद् यथा सुश्रुते। सप्तोत्तरं मर्म्मशतम्। तानि मर्म्माणि पञ्चात्मकानि। तद् यथा—मांसमर्म्माणि। सिरामर्म्माणि। स्नायु-मर्म्माणि। अस्थिमर्म्माणि। सन्धिमर्म्माणि चेति। न खलु मांससिरास्नाय्वस्थि-सन्धिव्यतिरेकेणान्यानि मर्म्माणि भवन्ति; यस्मान्नोपलभ्यन्ते। तत्रैकादश मांसमर्म्माणि। एकचत्वारिंशत् सिरामर्म्माणि। सप्तविंशतिः स्नायुमर्म्माणि। अष्टावस्थिमर्म्माणि। विंशतिः सन्धिमर्म्माणि। तदेतत् सप्तोत्तरं मर्म्मशतम्। तेषाम् एकादशैकस्मिन् सक्थ्नि भवन्ति। एतेनेतरसक्थि बाहू च व्याख्यातौ। उदरोरसोर्द्वादश। चतुर्द्दश पृष्ठे। ग्रीवायां प्रत्यङ्गं सप्तत्रिंशत्। तदेतत् सप्तोत्तरं मर्म्मशतं पूर्य्यते। इति।

तत्र सक्थिमर्म्माणि—क्षिप्रतलहृदयकूर्च्चकूर्च्चशिरोगुल्फेन्द्रवस्तिजान्वाण्यूर्व्वीलोहिताक्षाणि विटपञ्चेत्येकादश। एतेनेतरसक्थि व्याख्यातम्। उदरोरसोस्तु—गुदवस्तिनाभिहृदयस्तनमूलस्तनरोहितापलापान्यपस्तम्भौ चेति द्वादश। पृष्ठमर्म्माणि तु—कटीकतरुणकुकुन्दरनितम्बपार्श्वसन्धिबृहत्यंसफल-कानि अंसौ चेति चतुर्द्दश। बाहुमर्म्माणि तु—क्षिप्रतलहृदयकूर्च्चकूर्च्चशिरो-मणिबन्धेन्द्रवस्तिकूर्पराणूर्व्वीलोहिताक्षाणि कक्षधरञ्चेत्येकादश। एतेनेतरो बाहुर्व्याख्यातः। जत्रूर्द्ध्वं मर्म्माणि—चतस्रो धमन्योऽष्टौ मातृका द्वे कृकाटिके द्वे विधुरे द्वौ फणौ द्वावपाङ्गौ द्वावावर्त्तौ द्वावुत्क्षेपौ द्वौ शङ्खौ एका स्थपनी पञ्च सीमन्ताः चत्वारि शृङ्गाटकान्येकोऽधिपतिः। इति सप्तत्रिंशत्। इत्येवं सप्तोत्तरं मर्म्मशतम्।

प्रत्यङ्गनामतः—तत्र तलहृदयेन्द्रवस्तिगुदस्तनरोहितानि मांसमर्म्माणि।

नीलधमनी-मातृकाशृङ्गाटकापाङ्गस्थपनीफणस्तनमूलापलापापस्तम्भ-हृदयनाभि-पार्श्वसन्धिवृहतीलोहिताक्षोर्व्व्यः सिराममर्माणि। आणिविटपकक्षधर-कूर्च्चकूर्च्चशिरोवस्तिक्षिप्रांसविधुरोत्क्षेपाः स्नायुमर्म्माणि। कटीकतरुण-नितम्बांसफलकशङ्खास्त्वस्थिमर्म्माणि। जानुकूर्परसीमन्ताधिपतिगुल्फमणिवन्ध-कुकुन्दरावर्त्तकृकाटिकाश्चेति सन्धिमर्म्माणि। तान्येतानि पञ्चविकल्पानि मर्म्माणि भवन्ति। तद् यथा—सद्यःप्राणहराणि। कालान्तरप्राणहराणि। विशल्यघ्नानि। वैकल्यकराणि। रुजाकराणीति। तत्र सद्यःप्राणहराण्येकोन-विंशतिः। कालान्तरप्राणहराणि त्रयस्त्रिंशत्। त्रीणि विशल्यघ्नानि। चतुश्चत्वारिंशद् वैकल्यकराणि, अष्टौ रुजाकराणीति। भवन्ति चात्र। शृङ्गाट-कान्यधिपतिः शङ्खौ कण्ठशिरोगुदम्। हृदयं वस्तिनाभी च घ्नन्ति सद्योहतानि तु। वक्षोमर्म्माणि सीमन्ततलक्षिप्रेन्द्रवस्तयः। कटीकतरुणे सन्धी पार्श्वजौ वृहती च या। नितम्बाविति चैतानि कालान्तरहराणि तु। उत्क्षेपौ स्थपनी चैव विशल्यघ्नानि निर्द्दिशेत्। लोहिताक्षाणि जानूर्व्वी-कूर्च्चा विटपकूर्पराः। कुकुन्दरे कक्षधरे विधुरे सकृकाटिके। अंसांसफलकापाङ्गा नीले मन्ये फणौ तथा। वैकल्यकरणान्याहुरावर्त्तौ द्वौ तथैव च। गुल्फौ द्वौ मणिबन्धौ द्वौ द्वे द्वे कूर्च्चशिरांसि च। रुजाकराणि जानीयादष्टावेतानि बुद्धिमान्। क्षिप्राणि विद्धमात्राणि घ्नन्ति कालान्तरेण च।

मर्म्माणि नाम मांससिरास्नाय्वस्थिसन्धिसन्निपातास्तेषु स्वभावत एव विशेषेण प्राणास्तिष्ठन्ति, तस्मान्मर्म्मस्वभिहतास्तांस्तान् भावानापद्यन्ते। तत्र सद्यःप्राणहराण्याग्नेयान्यग्निगुणेष्वाशु क्षीणेषु क्षपयन्ति। कालान्तरप्राणहराणि सौम्याग्नेयान्यग्निगुणेष्वाशु क्षीणेषु क्रमेण च सोमगुणेषु कालान्तरेण क्षपयन्ति। विशल्यघ्नानि वायव्यानि, शल्यमुखनिरुद्धो यावदन्तर्वायुस्तिष्ठति तावज्जीवति उद्धृतमात्रे तु शल्ये मर्म्मस्थानाश्रितो वायुर्निष्क्रामति; तस्मात् सशल्यो जीवति उद्धृतशल्यो म्रियते। वैकल्यकराणि सौम्यानि, सोमो हि स्थिरत्वाच्छैत्याच्च प्राणावलम्बनं करोति। रुजाकराण्यग्निवायुगुणभूयिष्ठानि, विशेषतश्च तौ रुजाकरौ। पाञ्चभौतिकीञ्च रुजामाहुरेके।

केचिदाहुर्मांसादीनां पञ्चानामपि समस्तानां विद्धानाञ्च समवायात् सद्यःप्राणहराणि। एकहीनानामल्पानां वा कालान्तरप्राणहराणि। द्विहीनानां विशल्यप्राणहराणि। त्रिहीनानां वैकल्यकराणि। एकस्मिन्नेव रुजाकराणीति। यतश्चैवमतोऽस्थिमर्म्मस्वप्यभिहतेषु शोणितागमनं भवति। चतुर्व्विधा यास्तु

सिराः शरीरे प्रायेण ता मर्म्मसु सन्निविष्टाः। स्नाय्वस्थिमांसानि तथैव सन्धान सन्तर्प्य देहं प्रतिपालयन्ति। ततः क्षते मर्म्मणि ताः प्रवृद्धः समन्ततो वायुरभिस्तृणोति। विवर्द्धमानस्तु स मातरिश्वा रुजः सुतीव्राः प्रतनोति काये। रुजाभिभूतस्तु पुनः शरीरं प्रलीयते नश्यति चास्य संज्ञा। अतो हि शल्यं विनिहर्त्तु मिच्छन् मर्म्माणि यत्नेन परीक्ष्य कर्षेत्। एतेन शेषं व्याख्यातम्।

तत्र सद्यःप्राणहरमन्ते विद्धं कालान्तरेण मारयति। कालान्तरप्राणहरमन्ते विद्धं वैकल्यमापादयति। विशल्यप्राणहरमन्ते विद्धं कालान्तरेण क्लेशयति रुजाश्च करोति। रुजाकरमतीववेदनं भवति। तत्र सद्यःप्राणहराणि सप्त-रात्राभ्यन्तरान्मारयन्ति। कालान्तरप्राणहराणि पक्षान्मासाद् वा। तेष्वपि तु क्षिप्राणि कदाचिदाशु मारयन्ति। विशल्यप्राणहराणि वैकल्यकराणि च कदाचिदत्यभिहतानि मारयन्ति।

अत ऊर्द्ध प्रत्येकशो मर्म्मस्थानान्यनुव्याख्यास्यामः। तत्र पादाङ्गुष्ठाङ्गुल्यो-र्मध्ये क्षिप्रं नाम मर्म्म; तत्र विद्धस्याक्षेपकेण मरणम्। मध्यमाङ्गुलीमनुपूर्व्वेण मध्ये पादतलस्य तलहृदयं नाम; तत्रापि रुजाभिर्मरणम्। क्षिप्रस्योपरिष्टादुभयतः कूर्च्चो नाम; तत्र पादस्य भ्रमणवेपने भवतः। गुल्फसन्धेरध उभयतः कूर्च्चशिरो नाम; तत्र रुजाशोफौ। पादजङ्घयोः सन्धाने गुल्फो नाम; तत्र रुजास्तब्ध-पादता खञ्जता वा। पार्ष्णिं प्रति जङ्घामध्ये इन्द्रवस्तिर्नाम; तत्र शोणितक्षये मरणम्। जङ्घोर्व्वोः सन्धाने जानु नाम; तत्र खञ्जता। जानुन ऊर्द्धमुभयत-स्त्र्यङ्गुलमाणिर्नाम; तत्र शोफाभिवृद्धिः स्तब्धसक्थिता च। ऊरुमध्ये उर्व्वी नाम; तत्र शोणितक्षयात् सक्थिशोषः। ऊर्व्या ऊर्द्ध मधो वङ्क्षणसन्धेरूरुमूले लोहिताक्षं नाम; तत्र लोहितक्षयेण पक्षाघातः। वङ्क्षणवृषणयोरन्तरे विटपं नाम; तत्र षाण्ड्यमल्पशुक्रता वा भवति। एवमेतान्येकादश सक्थिमर्म्माणि व्याख्यातानि। एतेनेतरसक्थिबाहू च व्याख्यातौ। विशेषतस्तु यानि सक्थि गुल्फजानुविटपानि, तानि बाहौ मणिवन्धकूर्परकक्षधराणि। यथा वङ्क्षणवृषणयोरन्तरे विटपं एवं वक्षःकक्षयोर्मध्ये कक्षधरम्; तस्मिन् विद्धे त एवोपद्रवाः। विशेषतस्तु मणिवन्धे कुण्ठता कूर्पराख्ये कुणिः कक्षधरे पक्षाघातः। एवमेतच्चतुश्चत्वारिंशच्छाखासु मर्म्माणि व्याख्यातानि।

अत ऊर्द्ध मुदरोरसोर्मर्म्मस्थानान्यनुव्याख्यास्यामः। तत्र वातवर्च्चोनिरसनं स्थूलान्त्रप्रतिबद्धं गुदं नाम; तत्र सद्योमरणम्। अल्पमांसशोणितोऽभ्यन्तरतः कट्यां मूत्राशयो वस्तिर्नाम; तत्रापि सद्योमरणमश्मरीव्रणादृते। तत्राप्युभयतो भिन्ने

न जीवति, एकतो भिन्ने मूत्रस्रावी व्रणो भवति। स तु यत्नेनोपक्रान्तो रोहति। पक्वामाशययोर्मध्ये सिराप्रभवा नाभिर्नाम ; तत्रापि सद्य एव मरणम्। स्तनयोः मध्यमधिष्ठाय उरस्यामाशयद्वारं सत्त्वरजस्तमसामधिष्ठानं हृदयं नाम ; तत्र सद्य एव मरणम्। स्तनयोरधस्तात् द्व्यङ्गुलमुभयतः स्तनमूले नाम मर्म्मणी ; तत्र कफपूर्णकोष्ठतया कासश्वासाभ्यां म्रियते। स्तनचूचुकयोरूर्द्ध्वं द्व्यङ्गुलमुभयतः स्तनरोहितौ नाम ; तत्र लोहितपूर्णकोष्ठतया कासश्वासाभ्याञ्च म्रियते। अंसकूटयोरधस्तात् पार्श्वोपरिभागयोरपलापौ नाम ; तत्र रक्तेन पूयभावं गतेन मरणम्। उभयत्र उरसो नाड्यौ वातवहे अपस्तम्भौ नाम ; तत्र वातपूर्णकोष्ठतया कासश्वासाभ्याञ्च मरणम्। एवमेतान्युदरोरसोर्द्वादश मर्म्माणि व्याख्यातानि।

अत ऊर्द्ध्वं पृष्ठमर्म्माण्यनुव्याख्यास्यामः। तत्र पृष्ठवंशमुभयतः प्रतिश्रोणीकाण्डमस्थिनी कटीकतरुणे नाम मर्म्मणी ; तत्र शोणितक्षयात् पाण्डुर्विवर्णो हीनरूपश्च म्रियते। पार्श्वजघनबहिर्भागे पृष्ठवंशमुभयतो नातिनिम्ने कुकुन्दरे नाम मर्म्मणी ; तत्र स्पर्शाज्ञानमधःकाये चेष्टोपघातश्च। श्रोणीकाण्डयोरुपर्य्याशयाच्छादनौ पार्श्वान्तरप्रतिबद्धौ नितम्बौ नाम ; तत्राधःकायशोषो दौर्ब्बल्याच्च मरणम्। अधःपार्श्वान्तरप्रतिबद्धौ जघनपार्श्वमध्ययोस्तिर्य्यगूर्द्ध्वञ्च जघनात् पार्श्वसन्धी नाम ; तत्र लोहितपूर्णकोष्ठतया म्रियते। स्तनमूलादुभयतः पृष्ठवंशस्य बृहतौ नाम ; तत्र शोणितातिप्रवृत्तिनिमित्तैरुपद्रवैर्म्रियते। पृष्ठोपरि पृष्ठवंशमुभयतस्त्रिकसम्बन्धे अंसफलके नाम ; तत्र बाह्वोः स्वापः शोषो वा। बाहुमूर्द्धग्रीवामध्येऽंसपीठस्कन्धनिबन्धनावंसौ नाम ; तत्र स्तब्धबाहुता। एवमेतानि चतुर्द्दश पृष्ठमर्म्माणि व्याख्यातानि।

अत ऊर्द्ध्वं जत्रुगतानि व्याख्यास्यामः। तत्र कण्ठनाडीम् उभयतश्चतस्रो धमन्यः, द्वे नीले द्वे च मन्ये व्यत्यासेन ; तत्र मूकता स्वरवैकृतमरसग्राहिता च। ग्रीवायामुभयतश्चतस्रः सिरामातृकाः ; तत्र सद्योमरणम्। शिरोग्रीवयोः सन्धाने कृकाटिके नाम ; तत्र चलमूर्द्धता। कर्णपृष्ठतोऽधःसंश्रिते विधुरे नाम ; तत्र बाधिर्य्यम्। घ्राणमार्गमुभयतः स्रोतोमार्गप्रतिबद्धे अभ्यन्तरतः फणे नाम ; तत्र गन्धाज्ञानम्। भ्रूपुच्छान्तयोरधोऽक्ष्णोर्बाह्यतोऽपाङ्गौ नाम ; तत्रान्ध्यं दृष्ट्युपघातो वा। भ्रुवोरुपरि निम्नयोरावर्त्तौ नाम ; तत्रान्ध्यं दृष्ट्युपघातश्च। भ्रुवोः पुच्छान्तयोरुपरि कर्णललाटयोर्मध्ये शङ्खौ नाम ; तत्र सद्योमरणम्। शङ्खयोरुपरि केशान्त उत्क्षेपौ नाम ; तत्र सशल्यो

जीवति, पाकात् पतितशल्यो वा, नोद्धृतशल्यः। भ्रुवोर्मध्ये स्थपनी नाम ; तत्रोत्क्षेपवत्। पञ्च सन्धयः शिरसि विभक्ताः सीमन्ता नाम ; तत्रोन्मादभयचित्तनाशैर्मरणम्। घ्राणश्रोत्राक्षिजिह्वासन्तर्पणीनां सिराणां मध्ये सिरासन्निपातः शृङ्गाटकानि, तानि चत्वारि मर्म्माणि ; तत्रापि सद्योमरणम्। मस्तकाभ्यन्तरोपरिष्टात् सिरासन्धिसन्निपातो रोमावर्त्तोऽधिपतिर्नाम ; तत्रापि सद्योमरणम्। एवमेतानि सप्तत्रिंशत् ऊर्द्ध्वजत्रुगतानि मर्म्माणि व्याख्यातानि।

भवन्ति चात्र। ऊर्व्यः सिरांसि विटपे च सकक्षपार्श्वे एकैकमङ्गुलमिताः स्तनपूर्व्वमूलम्। विद्ध्यङ्गुलिद्वयमितं मणिवन्धगुल्फं त्रीण्येव जानु सपरं सह कूर्पराभ्याम्। हृद्वस्तिकूर्च्चगुदनाभि वदन्ति मूर्द्ध्नि चत्वारि पञ्च च गले दश यानि च द्वे। तानि स्वपाणितलकुञ्चितसम्मितानि शेषाण्यवेहि परिविस्तरतोऽङ्गुलार्द्धम्। एतत् प्रमाणमभिवीक्ष्य वदन्ति तज्ज्ञाः शस्त्रेण कर्म्मकरणं परिहृत्य मर्म्म। पार्श्वाभिघाततमपीह निहन्ति मर्म्म तस्माद्धि मर्म्मसदनं परिवर्ज्जनीयम्। छिन्नेषु पाणिचरणेषु सिरा नराणां सङ्कोचमीयुरसृगल्पमतो निरेति। प्राप्यामितव्यसनमुग्रमतो मनुष्याः संछिन्नशाखतरुवन्निधनं न यान्ति। क्षिप्रेषु तत्र सतलेषु हतेषु रक्तं गच्छत्यतीव पवनश्च रुजं करोति। एवं विनाशमुपयान्ति हि तत्र विद्धा वृक्षा इवायुधविघातनिकृत्तमूलाः। तस्मात् तयोरभिहतस्य तु पाणिपादं छेत्तव्यमाशु मणिवन्धनगुल्फदेशे। मर्म्माणि शल्यविषयार्द्धमुदाहरन्ति यस्माच्च मर्म्मसु हता न भवन्ति सद्यः। जीवन्ति तत्र यदि वैद्यगुणेन केचित् ते प्राप्नुवन्ति विकलत्वमसंशयं हि। संभिन्नजर्ज्जरितकोष्ठशिरःकपाला जीवन्ति शस्त्रविहतैश्च शरीरदेशैः। छिन्नैश्च सक्थिभुजपादकरैरशेषैर्येषां न मर्म्मपतिता विविधाः प्रहाराः॥ सोममारुततेजांसि रजःसत्त्वतमांसि च। मर्म्मसु प्रायशः पुंसां भूतात्मा चावतिष्ठते। मर्म्मस्वभिहतास्तस्मान्न जीवन्ति शरीरिणः। इन्द्रियार्थेष्वसंवित्तिर्मनोबुद्धिविपर्य्ययः। रुजश्च विविधास्तीव्रा भवन्त्याशुहरे हते। हते कालान्तरघ्ने तु ध्रुवो धातुक्षयो नृणाम्। ततो धातुक्षयाज्जन्तुर्वेदनाभिश्च नश्यति। हते वैकल्यजनने केवलं वैद्यनैपुणात्। शरीरं क्रियया युक्तं विकलत्वमवाप्नुयात्॥ विशल्यघ्नेषु विज्ञेयं पूर्व्वोक्तं यच्च कारणम्। रुजाकराणि मर्म्माणि क्षतानि विविधा रुजः। कुर्व्वन्त्यन्ते च वैकल्यं कुवैद्यवशगो यदि। छेदभेदाभिघातेभ्यो दहनाद् दारणादपि।

उपघातं विजानीयान्मर्म्मणां तुल्यलक्षणम्॥ मर्म्माभिघातश्च न कश्चिदस्ति योऽल्पात्ययो वापि निरत्ययो वा। प्रायेण मर्म्मस्वभिताडितास्तु वैकल्यमृच्छन्त्यथ वा म्रियन्ते। मर्म्माण्यधिष्ठाय हि ये विकारा मूर्च्छन्ति काये विविधा नराणाम्। प्रायेण ते कृच्छतमा भवन्ति नरस्य यत्नैरपि साध्यमानाः॥ इति।

द्वे सन्धिशते इति। सन्धीनां द्वे शते इत्यस्थिसन्ध्यभिप्रायेण, स्नायुसन्धीनाम् असङ्ख्येयत्वात्। तद् यथा सुश्रुते। सन्धयस्तु द्विविधाश्चेष्टावन्तः स्थिराश्च। शाखासु हन्वोः कट्याश्च चेष्टावन्तस्तु सन्धयः। शेषास्तु सन्धयः सर्व्वे विज्ञेया हि स्थिरा बुधैः॥ सङ्ख्यातस्तु दशोत्तरे द्वे शते। तेषां शाखास्वष्टषष्टिः, एकोनषष्टिः कोष्ठे, ग्रीवां प्रत्यूर्द्ध्व त्र्यशीतिः। एवं दशोत्तरे द्वे शते। तत्रैकैकस्यां पादाङ्गुल्यां त्रयस्त्रयः, द्वावङ्गुष्ठे ते चतुर्द्दश। जानुगुल्फवङ्क्षणेष्वेकैकः। एवं सप्तदशैकस्मिन् सक्थ्नि भवन्ति। एतेनेतरसक्थिबाहू च व्याख्यातौ। त्रयः कटीकपालेषु। चतुर्व्विंशतिः पृष्ठवंशे। तावन्त एव पार्श्वयोः। उरस्यष्टौ। तावन्त एव ग्रीवायाम्। त्रयः कण्ठे। नाड़ीषु हृदयक्लोमनिबद्धास्त्वष्टादश। दन्तपरिमाणा दन्तमूलेषु। एकः काकलके नासायाञ्च। द्वौ वर्त्ममण्डलजौ नेत्राश्रयौ। गण्डकर्णशङ्खेष्वेकैकः। द्वौ हनुसन्धी। द्वावुपरिष्टाद् भ्रुवोः शङ्खयोश्च। पञ्च शिरःकपालेषु। एको मूर्द्धि। त एते सन्धयोऽष्टविधाः। कोरोदूखल-सामुद्ग-प्रतर-तुन्नसेवनी-वायसतुण्ड-मण्डल-शङ्खावर्त्ताः। तेषामङ्गुलिमणिबन्ध-गुल्फजानुकूर्परेषु कोराः सन्धयः। कक्षवङ्क्षणदशनेषूदूखलाः। अंसपीठगुद-भगनितम्बेषु सामुद्गाः। ग्रीवापृष्ठवंशयोः प्रतराः। शिरःकटीकपालेषु तुन्नसेवनी। हन्वोरुभयतस्तु वायसतुण्डाः। कण्ठहृदयनेत्रक्लोमनाड़ीषु मण्डलाः। श्रोत्र-शृङ्गाटकेषु शङ्खावर्त्ताः। तेषां नामभिरेवाकृतयः प्रायेण व्याख्याताः। अस्थ्नान्तु सन्धयो ह्येते केवलाः परिकीर्त्तिताः। पेशीस्नायुसिराणान्तु सन्धिसङ्ख्या न विद्यते॥ इति। इति शेषाणां सन्धीनां प्रतिसन्धानं तन्त्रान्तरतः कार्य्यम्।

अथ प्रत्यङ्गेषु यद्यपि कण्डरादीनि नोक्तानि, तथापि उपलक्षणतः सुश्रुतादितश्च कतिचन प्रत्यङ्गान्यधिकानि कण्डरादीनि व्याख्यास्यन्ते। तद् यथा—षोड़श कण्डराः। तासां चतस्रः पादयोस्तावत्य एव हस्तग्रीवापृष्ठेषु। एवं षोड़श कण्डराः। तत्र हस्तपादगतानां कण्डराणां नखाः प्ररोहा इति। नखास्त्वस्मिंस्तन्त्रे मागस्थिषु गणिताः। ग्रीवाहृदयनिबन्धिनीनाम् अधोभागगतानां मेढ्रं प्ररोहः। श्रोणीपृष्ठनिबन्धिनीनामधोभागगतानां बिम्बः। मूर्द्धोरुवक्षोऽक्षपिण्डादीनाञ्चेति।

सन्धिशते। त्रिंशच्छतसहस्राणि * नव च शतानि षट्पञ्चाशत्-सहस्राणि † शिराधमनीनामणुशः प्रविभज्यमानानां मुखाग्रपरिमाणम्। तावन्ति चैव केशश्मश्रुलोमानीत्येतद् यथावद् यत्संख्यातं

अथ मांससिरास्नाय्वस्थिजालानि प्रत्येकं चत्वारि चत्वारि। तानि मणिबन्धगुल्फसंश्रितानि परस्परनिबद्धानि परस्परसंश्लिष्टानि परस्परगवाक्षितानि चेति यैर्गवाक्षितमिदं शरीरम्। अथ षट् कूर्च्चाः। ते हस्तपादग्रीवामेढ्रेषु। हस्तयोर्द्वौ पादयोर्द्वौ ग्रीवामेढ्रयोः एकैकः। एवमेते षट् कूर्चाः। अथ महत्यो मांसरज्जवश्चतस्रः। पृष्ठवंशमुभयतः पेशीनिबन्धनार्थं द्वे बाह्ये आभ्यन्तरे च द्वे। एवं चतस्रः। अथ सप्त सेवन्यः। शिरसि विभक्ताः पञ्च, जिह्वाशेफसोरेकैकास्ताः परिहर्त्तव्याः शस्त्रेण। अथ चतुर्द्दशास्थ्नां संघाताः, तेषां त्रयो गुल्फजानुवङ्क्षणेषु। एतेनेतरसक्थिबाहू च व्याख्यातौ। त्रिकशिरसोरेकैकः। एवं चतुर्द्दशास्थ्नां संघाताः। अथ चतुर्द्दशैव सीमन्ताः। ते चास्थिसंघातवद्गणनीयाः। यतस्तैर्युक्ता अस्थिसंघाताः। ये ह्युक्ताः सङ्घातास्तु खल्वष्टादशैकेषामिति। अथ परिगणनसामर्थ्येऽपि सिराधमनीनां परिसंख्यार्थमाह—त्रिंशदित्यादि। सिराधमनीनामणुशः प्रविभज्यमानानां समस्तसे त्रिंशच्छतसहस्राणीति त्रिंशल्लक्षाणि। शतञ्च तानि सहस्राणि चेति शतसहस्राणि लक्षमुच्यन्ते। त्रिंशच्च तानि शतसहस्राणि चेति तानि तथा। द्विगुर्व्वा शतसहस्रमिति पात्रादित्वान्न स्त्रीत्वम्। सिरात्वधमनीत्वभेदेन नाभिप्रभवाश्चत्वारिंशत् सिराश्चतुर्व्विंशतिर्धमन्यस्तासां प्रधानात् नव शतानि। सप्त सिराशतानि द्वे धमनीशते इति तानि नव शतानि। षट्पञ्चाशत्सहस्राणि प्रतानतो भूत्वा पुनः प्रतानतस्त्रिंशल्लक्षाणि भवन्त्यणुशो विभज्यमानानि। तेषां यावन्ति मुखाग्रपरिमाणानि तावदेव केशश्मश्रुरोमकूपपरिमाणम्। तावन्ति चैव मिलित्वा केशश्मश्रुलोमानि न त्वधिकानीति। द्वासप्ततिः कोट्यो लोमानीत्युक्तमग्निनापि।

अणुशः प्रविभज्यमानानामिति अणुभावानां भेदेन भिद्यमानानाम्। मुखाग्रपरिमाणमिति मुखरूपस्य परिमाणम्। अत्र यान्येव सप्त शिराशतानि धमनीशतद्वयञ्चोक्तानि, तान्येव सूक्ष्मप्रतानाश्च भेदगणनया एकोनत्रिंशत् सहस्राणि नव शतानि षट्पञ्चाशत्कानि, स्थूलगणनत्वे पूर्व्वशिरासंख्या धमन्यन्तर्भवतीति न विरोधः। तावन्ति चैव केशश्मश्रुलोमानीति एकोनत्रिंशत् सहस्राणि नव शतानि षट्पञ्चाशत्कानि केशश्मश्रुलोम्नां भवन्तीत्यर्थः। एतच्च

* एकोनत्रिंशतत्सहस्राणीति पाठान्तरम्। † षट्पञ्चाशत्कानीति वा पाठः।

त्वक्प्रभृति दृश्यमतः परं तत् तर्क्यम्। एतदुभयमपि न विकल्पते प्रकृतिभावाच्छरीरस्य ॥ ९ ॥

यत् त्वञ्जलिसंख्येयं तदुपदेक्ष्यामः। तत् परं प्रमाणमभिज्ञेयम्। तच्च वृद्धिह्रासयोगि तर्क्यमेव। तद् यथा—दशोदकस्याञ्जलयः शरीरे स्वेनाञ्जलिप्रमाणेन। यत् तु प्रच्यवमानं पुरीष-

"त्रिंशच्छतसहस्राणि शतानि च नवैव तु। षट्पञ्चाशत्सहस्राणि रसदेहो वहन्ति ताः॥ द्वासप्ततिस्तथा कोट्यो लोमानीह महामुने॥" इति। उपसंहरतीत्येतदित्यादि। इत्यतः किं त्वगादि दृश्यं नान्यदित्यत आह—यत् संख्यातमित्यादि। त्वक्प्रभृति यद् दृश्यं सङ्ख्यातम् अतः परं त्वगादिभिन्नं यत् तर्क्यमेव च संख्यातम्, तत् तदित्येतत् यथावत् यथार्थम्। एतदुभयमपि दृश्यं तर्क्यमित्युभयमपि न कल्प्यते, कुत इत्यत आह—प्रकृतीत्यादि। शरीरस्य प्रकृतिभावात् आरोग्यात् ॥ ९ ॥

गङ्गाधरः—अथ यद् यदपरं तदाह मानत एव—यत् त्वित्यादि। नन्वञ्जलिमानतः कथमुपदिश्यते इत्यत आह—तत् परमित्यादि। तदुपदेक्ष्यमाणमञ्जलिप्रमाणमभिज्ञेयं, यतः परं प्रमाणम् उत्कृष्टं प्रमाणकरणम्। ननु कथं प्रमाणं स्यादित्यत आह—तच्चेत्यादि। तच्चाञ्जलिमानं वृद्धिह्रासयोगितया तर्क्यमनुमेयमेव, तत्रास्ति प्रयोजनं वृद्धं ह्रासयितव्यं ह्रस्वं वर्द्धयितव्यं समं पालयितव्यमिति। ननु कस्य कस्य कियदञ्जलिमानमित्यत आह—तद् यथेत्यादि। स्वेनाञ्जलिप्रमाणेन स्वस्वयुग्मकरतलधृतोन्मानेन। एतेन सर्व्वत्र व्याप्तिः। ननु कस्योदकस्य दशाञ्जलय इत्यत आह—यत् त्वित्यादि। विरेचनेन दोषतो वा अतियोगेन युक्तं पुरीषं

केशादिसंस्थानं स्थूलशिरागतकेशादिविभागेन ज्ञेयम्, सूक्ष्मसूक्ष्मविभागे तु केशादीनां बहुत्वमपि शास्त्रान्तरोक्तं भवतीति ज्ञेयम्। एतत् त्वक्प्रभृति दृश्यम्, तर्क्यञ्च रसादि। यथावत् संख्यातमिति योजना। सम्प्रति यथोक्तं त्वगादीनां मानं प्रकृतिस्थे शरीरे न व्यभिचरतीति दर्शयन्नाह—एतदुभयमिति दृश्यं तर्क्यञ्च। प्रकृतिभावादिति अविकृतत्वात् शरीरस्य, यत्र तु शरीरं विकृतं भवति, तत्र यथोक्तत्वगादिमानमपि विकृतं भवतीति भावः ॥ ८।९ ॥

चक्रपाणिः—ननु यथा प्रकृतिस्थे शरीरे यथोक्तं मानं त्वगादि न व्यभिचरति, तथा किं

मनुबध्नाति अतियोगेन, तथा मूत्रं रुधिरमन्यांश्च शरीरधातून्; यत् तु सर्व्वशरीरचरं बाह्यत्वग् बिभर्त्ति, यत् त्वगन्तरे व्रणगतं लसीकाशब्दं लभते, यच्चोष्मणानुबन्धं लोमकूपेभ्यो निष्पतत् स्वेदशब्दमवाप्नोति, तदुदकं दशाञ्जलिप्रमाणम्। नवाञ्जलयः पूर्व्वस्याहारपरिणामधातोर्यद्रसमित्याचक्षते। अष्टौ शोणितस्य, सप्त पुरीषस्य, षट् श्लेष्मणः, पञ्च पित्तस्य, चत्वारो मूत्रस्य, त्रयो वसायाः, द्वौ मेदसः, एको मज्ज्ञः। मस्तिष्कस्यार्द्धाञ्जलिः, शुक्रस्य तावदेव प्रमाणं, तावदेव श्लेष्मणश्चौजसः। इत्येतदेव शरीरतत्त्वमुक्तम्॥ १०॥

प्रच्यवमानं यदुदकमनुबध्नाति, एवं यदुदकमतियोगयुक्तं मूत्रञ्च रक्तञ्च अन्यानपि शरीरधातूनतियोगेनानुबध्नाति, यच्चोदकं सर्व्वशरीरचरं बाह्यत्वग् बिभर्त्ति, यत् तूदकं त्वगन्तरे वर्त्तमानं व्रणगतं क्षतगतं सत् निर्गच्छति लसीकाशब्दञ्च लभते तस्योदकस्य दशाञ्जलयः। नन्वेतावदेव किमुदकमस्ति नास्त्यन्यदित्यत आह—यच्चेत्यादि। यच्चोदकम् उष्मणा शरीरव्यापिनोष्मणा। तदप्युदकं दशाञ्जलिप्रमाणं स्वेनाञ्जलिप्रमाणेनेति परत्र सर्व्वत्रानुवर्त्तते। पूर्व्वस्याद्यस्य आहारपरिणामधातो रसाख्यस्य नवाञ्जलय इत्याह यद् रसमित्यादि। अष्टौ शोणितस्य द्वितीयधातोरञ्जलयः स्वेनाञ्जलिमानेन। सप्त पुरीषस्याञ्जलयः। षट् श्लेष्मणोऽञ्जलयः। पञ्च पित्तस्याञ्जलयः। चत्वारो मूत्रस्याञ्जलयः। त्रयो वसाया अञ्जलयः। द्वौ मेदसोऽञ्जली। एको मज्ज्ञो मज्जधातोरञ्जलिः। मस्तिष्कस्य मस्तकान्तरस्थस्य घृतिकाख्यस्यार्द्धाञ्जलिः। शुक्रस्यार्द्धाञ्जलिः। श्लेष्मणश्चौजस ओजोधात्वाख्य-श्लेष्मणः श्लेष्मविशेषस्य तावदेवार्द्धाञ्जलिरेव। अष्टबिन्द्वात्मकन्तु यदोजः तत्र वृद्धिह्रासयोगि तत्वयं, तन्नाशाद्धि नाशः स्यादिति। बिन्दुर्हि कर्षमाणम्, तेऽष्टौ त्वर्द्धाञ्जलिः॥ १०॥

प्रकृतिस्थे शरीरे तदुदकाद्यपि यथोक्तं मानं न व्यभिचरतीत्याह— यत् त्वञ्जलीत्यादि। यत् तु उदकादि अञ्जलिसंख्येयमग्रे वक्ष्यमाणम्, तदुदकादेः परं प्रमाणम्॥ १०॥

तत्र यद् विशेषतः स्थूलं स्थिरं मूर्त्तिमद् गुरुखरकठिनमङ्गं नखास्थिदन्तमांसचर्म्मवर्च्चःकेशश्मश्रुलोमकण्डरादि, तत् पार्थिवं गन्धो घ्राणञ्च। यद् द्रवसरमन्दस्निग्धमृदुपिच्छिलं रसरुधिरवसाकफपित्तमूत्रस्वेदादि, तदाप्यं रसो रसनञ्च। यत् पित्तमुष्मा च यो या च भाः शरीरे, तत् सर्व्वमाग्नेयं रूपं दर्शनञ्च। यदुच्छ्वासप्रश्वासोन्मेषनिमेषाकुञ्चनप्रसारणगमनप्रेरणधारणादि, तद् वायवीयं स्पर्शः स्पर्शनञ्च। यद् विविक्तमुच्यते महान्ति चाणूनि च स्रोतांसि, तदान्तरीक्षं शब्दः श्रोत्रञ्च। यत् प्रयोक्तृ तत् तत् प्रधानम् बुद्धिर्मनश्च। इति शरीरावयवसंख्या यथास्थूलभेदेन अवयवानां निर्द्दिष्टा ॥ ११ ॥

गङ्गाधरः—अथोक्तत्वगादिषु मातृजलादिभेदेन पूर्व्वमुक्तं पाञ्चभौतिकत्वम्, तदेव सामान्यतो भौतिकत्वं विशिनष्टि तत्रेत्यादि। तत् पार्थिवमिति पृथिव्यधिकपाञ्चभौतिकं, गन्धोऽपि घ्राणञ्चेन्द्रियं तादृशम्, अन्यथा गन्धविशेषो न स्यात् घ्राणस्यापीन्द्रियत्वं न स्यात्। यद् द्रवेत्यादि। तदाप्यमित्यत्र बहुलपञ्चभूतात्मकं, रसोऽपि तथा, अन्यथा विशेषो न तस्य स्यात्। रसनमपि तथा, नहीन्द्रियत्वरूपेण विशिष्टापूर्व्वत्वं केवलजलात्मकत्वे भवति। यत् पित्तमित्यादि। आग्नेयं तेजोऽधिकपञ्चभूतात्मकं, रूपं दर्शनञ्चेन्द्रियं तथात्वात्। यदुच्छ्वासादिकं तद् वायवीयं वायुप्रधानपञ्चभूतात्मकवायुकार्य्यम्। यद् विविक्तं विरलत्वं छिद्रादिरूपं तदान्तरीक्षमाकाशात्मकं, शब्दश्चाकाशबहुलपञ्चभूतात्मकः स्वरूपो विशेषरूपात्, श्रोत्रञ्चाकाशबहुलपाञ्चभौतिकं सचेष्टत्वात्। निश्चेष्टस्याकाशस्य स्वमात्रात्मकत्वे तु न तथात्वं स्यात्। यत् प्रयोक्तृ मनःश्रोत्रादीनि च स्वस्वार्थं यत् प्रयुङ्क्ते यत् सत्त्वादिगुणाश्रित आत्मा प्रेरयति तद्गुणप्रधानं तत्। तदाश्रयणं बुद्धिर्मनश्च यदा यत् प्रयोक्तृ तदा तद्गुणप्रधानं तद् गुणवदात्मप्रधानम् ॥ ११ ॥

शरीरावयवास्तु परमाणुभेदेनापरिसंख्येया भवन्ति अतिबहुत्वादतिसौक्ष्म्यादतीन्द्रियत्वाच्च। तेषां संयोगविभागे परमाणूनां कारणं वायुः कर्म्म स्वभावश्च। तदेतच्छरीरसंख्यातम् अनेकावयवं दृष्टम्, एकत्वेन सङ्गसंख्यातं, पृथक्त्वेन

गङ्गाधरः—उपसंहर्त्तुमाह—शरीरेत्यादि। ननु परमाणुभेदेनापरिसङ्ख्येया भवन्तु शरीरावयवास्तेषां संयोगविभागौ कथं भवत इत्यत आह—तेषामित्यादि। तेषां स्थूलाङ्गप्रत्यङ्गघटकानां मातृजादिपरमाणूनां संयोगे विभागे च कारणं वायुः सक्रियत्वात्। ननु सर्व्वदा संयोगस्य विभागस्य प्रवृत्त्यापत्तिर्वायुसद्भावादित्यत आह—कर्म्म स्वभावश्चेति। कर्म्म शुभाशुभक्रियानिष्पन्नसंस्कारविशेषधर्म्माधर्म्मपरिणामः, स्वभावश्च तत्तत्पुरुषशरीरारम्भकतया संयोगे विनाशकतया च विभागे तेषां परमाणूनां स्वभावोऽपि कारणमित्यर्थः। ननु तेषां संयोगे सति किं विभागे वा किं स्यादित्यत आह—तदेतच्छरीरेत्यादि। तत् त्वगादिकमेतत् अनेकावयवं शरीरसङ्ख्यातं शरीरसंज्ञया ख्यातं दृष्टं भवति। एकत्वेनात्ममनोबुद्ध्यहंकाराकाशादीनां समुदायानां मिलितत्वेनैकीभूतत्वेन सङ्गसंख्यातं सङ्गः संयोगस्तेन सङ्गेन संख्यातं व्याख्यातम्। पृथक्त्वेन तेषां परमाणूनामात्ममनःप्रभृतीनां विभागेन

चक्रपाणिः—अतिसौक्ष्म्यादिति अतिसूक्ष्मबुद्धिबोध्यत्वात्। अतीन्द्रियत्वञ्च परमाणूनां स्वभावसिद्धमेवास्मदादीन् प्रति। यत्तु सूक्ष्ममतीन्द्रियं वा, तत् परिसंख्यातुं नितरामेव दुष्करं भवतीति युक्तं हेतुत्रयमपरिसंख्याने। अथैते विप्रकलिताः परमाणवः कथं शरीरे संयुज्यन्ते, शरीरविनाशेऽपि वियुज्यन्ते इत्याह—तेषामित्यादि। ननु यदि वायुः कारणं परमाणूनां संयोगविभागे, तत् किमिति करोतीत्याह—कर्म्म स्वभावश्चेति, न केवलो वायुः, किन्तु कर्म्मस्वभावपरिगृहीत एव। तेन संयोगे कर्म्मणा स्वभावेन च वायुः परिगृहीतो भवति, तथा वियोगे परमाणूनां शरीरविनाशं जनयतीत्यर्थः। इदानीं शरीरसंख्यानफलमाह—तदेतदित्यादि। परमार्थतोऽनेकावयवमपि तच्छरीरं संख्याने मोहादेकत्वेन दृष्टं सत् सङ्गहेतुर्भवतीत्यर्थः। एकत्वेन हि शरीरं

अपवर्गः । तत्र प्रधानमशक्तं सर्व्वसत्तानिवृत्तौ * निवर्त्तते इति ॥ १२ ॥

तत्र श्लोकौ ।

शरीरसंख्यां यो वेद सर्व्वावयवशो भिषक् ।
तदज्ञाननिमित्तेन स मोहेन न युज्यते ॥

अपवर्गो मोक्षः। मृते हि न मनसा न कर्म्मणा नाकाशादिभिरात्मनो विभागः। ननु यथा आत्माधिष्ठानेन वायुः कर्म्म च स्वभावश्च परमाणूनामात्मादीनां संयोगेनैकीभावेन सङ्घसंख्यातत्वं सम्पादयति, यथा च विभागेन शरीरदेहिनो-मृतत्वं सम्पादयति, तथात्मनो मनोबुद्ध्यादिभिर्विभागं सम्पादयन्नपवर्गं सम्पादयतु इत्यत आह—तत्रेत्यादि। प्रधानं सत्त्वादित्रिगुणवानात्मा तत्रात्ममनोबुद्ध्यादीनां पृथक्त्वे अशक्तं न समर्थं न हि वायुर्वा कर्म्म वा शुभाशुभं स्वभावो वा सर्व्वपरमाणूनां पृथक्त्वकरणे संभवति, परन्तु सर्व्वसत्तानिवृत्तौ सर्व्वभावानां निवृत्तौ सत्यां निवर्त्तते निःशेषतो निवृत्तिमद् भवतीति ॥ १२ ॥

गङ्गाधरः—अथैतच्छारीरज्ञानफलार्थं श्लोकावाह—शरीरसङ्ख्यामित्यादि। तदज्ञाननिमित्तेन तेषां शरीरावयवानामज्ञानं निमित्तं यस्य तेन मोहेन

पश्यन् तदुपकाराय प्रवर्त्तमानो रागद्वेषाभ्यां सक्तो भवति । अपवर्ग इत्यपवर्गहेतुरित्यर्थः । शरीरन्तु पृथगवयवेन भाव्यमाणं न ममतास्पदं भवति, ममताभावाच्च न तदुपकारकापकारकेषु रागद्वेषौ भवतः, तदभावाच्च प्रवृत्त्युपरमे सति धर्म्माधर्म्माभावादपवर्गो भवतीत्यर्थः। शरीरसंख्याने यथा मोक्षो भवति, तदाह—तत्रेत्यादि। प्रधानमात्मा। तत्रेति शरीरपृथक्त्वभावनायाम्। असक्तमिति यथोक्तक्रमेण रागद्वेषरहितम्। सर्व्वसन्तानाभिनिवृत्ताविति सर्व्वस्मिन्नुपकारके नापकारके च भावे आस्थानिवृत्तौ सत्याम्, निवर्त्तते इति संसारे निवर्त्तते ॥ ११।१२ ॥

चक्रपाणिः—इममेव गद्योक्तमर्थं श्लोकेनाह—शरीरेत्यादि। तदज्ञाननिमित्तेनेति शरीरैकत्वतारूपमिथ्याज्ञानजन्येन। मोहेनेति 'अहं स्थिरशरीरी एको ममेदमुपकारकम्' इत्यादिमोहेन।

* अशक्तं सर्व्वसत्तानिवृत्तौ इत्यत्र असक्तं सर्व्वसन्तानाभिनिवृत्तौ इति चक्रसम्मतः पाठः

अमूढ़ो मोहमूलैश्च न दोषैरभिभूयते।
निर्दोषो निस्पृहः शान्तः प्रशाम्यत्यपुनर्भवः ॥ १३ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते शारीरस्थाने शरीर-
संख्यानाम शारीरं नाम सप्तमोऽध्यायः ॥ ७ ॥

इच्छाद्वेषभयशोकलोभादिना स भिषक् न युज्यते। तेन च यत् फलति तदाह अमूढ़ इत्यादि। अमूढ़ो भिषङ् मोहमूलैर्दोषैः कामादिहेतुकप्रवर्त्तनालक्षणैः नाभिभूयते। ततश्च यत् फलति तदाह—निर्दोष इत्यादि। निर्दोषः प्रवर्त्तनालक्षणदोषरहितो भिषग् निस्पृहश्च भवति। तादृशस्तु चेद्भवति तदा शान्तः स्यात् सर्व्वकर्म्मसु प्रवर्त्तनायां यतः प्रशाम्यति। शान्तश्च यदि भवति तदा अपुनर्भवः पुनर्भवरहितो मुक्तो भवतीति चरमं फलति ॥ १३ ॥

अध्यायं समापयति अग्नीत्यादि।

इति वैद्यश्रीगङ्गाधरकविरत्नविरचिते चरकजल्पकल्पतरौ शारीरस्थानजल्पाख्ये चतुर्थस्कन्धे शरीरसंख्याशारीरजल्पाख्या सप्तमी शाखा ॥ ७ ॥

मोहमूलैरिति मोहकारणकैः। दोषैरिति रागद्वेषैः। निर्दोषत्वेन निस्पृहो भवति। रागद्वेषमूला हीच्छा तदभावान्न भवति। निस्पृहश्च सन् सर्व्वक्रियोपरमात् शान्तो भवति। शान्तश्च सन् प्रशाम्यति संसरणे विश्राम्यति। ततश्च नास्य पुनर्भवो जन्मरूपो भवतीति ॥ १३ ॥

इति महामहोपाध्यायचरकचतुराननश्रीमच्चक्रपाणिदत्तविरचितायामायुर्व्वेददीपिकायां चरक-तात्पर्य्यटीकायां शारीरस्थाने शरीरसंख्यानाम शारीरं सप्तमोऽध्यायः ॥ ७ ॥

---

## अष्टमोऽध्यायः ।

**अथातो जातिसूत्रीयं शारीरं व्याख्यास्यामः,**
**इतिह स्माह भगवानात्रेयः ॥ १ ॥**

**स्त्रीपुंसयोरव्यापन्नशुक्रशोणितगर्भाशययोः श्रेयसीं प्रजामिच्छतोस्तन्निर्वृत्तिकरं कर्म्मोपदेक्ष्यामः । अथाप्येतौ स्त्री-**

गङ्गाधरः—अथ शारीरं यावदुक्त्वा जन्मप्रकारोपदर्शनार्थं जातिसूत्रीयं शारीरमारभते—अथात इत्यादि । जातिर्जन्म तस्याः सूत्रमधिकृत्य कृतमिति जातिसूत्रीयम् ॥ १ ॥

गङ्गाधरः—स्त्रीपुंसयोरिति द्वन्द्वे स्त्रियाः पूर्व्वनिपातः । द्वादशवर्षा स्त्री पञ्चविंशतिवर्षः पुमान्, न ततो न्यूनवयसोः स्त्रीपुंसयोरव्यक्तार्त्तवत्वात् स्त्रियाः पुंसस्त्वदृढशुक्रत्वात् । उक्तञ्च सुश्रुते—यथा हि पुष्पमुकुलस्थो गन्धो न शक्यमिहास्तीति वक्तुं नैव नास्तीति । अथवास्ति सतां भावानामभिव्यक्तिरिति कृत्वा केवलं सौक्ष्म्यान्नाभिव्यज्यते, स एव गन्धो विवृतपत्रकेशरैः कालान्तरेणाभिव्यक्तिं गच्छति; एवं बालानामपि वयःपरिणामात् शुक्रप्रादुर्भावो भवति । रोमराज्यादयोऽथार्त्तवादयश्च विशेषा नारीणां रजसि चोपचीयमाने शनैः शनैः स्तनगर्भाशययोन्यभिवृद्धिर्भवति । स एवान्नरसो वृद्धानां जरापक्वशरीरत्वान्न प्रीणनो भवतीति । यथासम्भवादव्यापन्नशुक्रत्वं पुंसोऽव्यापन्नशोणितगर्भाशययोनित्वं स्त्रियाः । गर्भाशयपदं योनावुपलक्षितम् । प्रजामपत्यम् । एतेन साधारणापत्यनिर्व्वृत्तिकरकर्म्मणोऽवान्तरीयकत्वादुपदेश-

चक्रपाणिः—सम्प्रति पारिशेष्यात् जातिसूत्रीयमुच्यते । 'जाति'शब्देन जन्मकारणमुच्यते, तस्य सूत्रं जन्मोपायकथनसूत्रम्, तदधिकृत्य कृतोऽध्यायः । स्त्रीपुंसयोरिति क्रमनिर्द्देशं कृत्वा अव्यापन्नशोणितगर्भाशयशुक्रयोरिति निर्द्देशो यथाक्रमानुरोधात् यद्यपि युज्यते, तथाप्यत्र 'शुक्रं पूर्व्वं नियच्छति' इति न्यायमाश्रित्य क्रमभेदेन निर्द्देशः । श्रेयसीं प्रजामिच्छतोरित्यत्र श्रेयसी प्रजा गुणवान् पुत्रो गुणवती च कन्याभिप्रेता । यतः अत्र कन्योत्पादविधानं लेशतः करिष्यति । तेन निर्गुणयोः कन्यापुत्रयोस्तथा नपुंसकस्य चाश्रेयस्त्वेन व्युदासः । अन्ये पुत्रमेव श्रेयसीं प्रजामाहुः । यतः अत्र सर्व्वम्, पुत्रमेवोद्दिश्य विधानं प्रायः करिष्यति । तदर्थाभिनिर्व्वृत्तिकरमिति

पुंसौ स्नेहस्वेदाभ्यामुपपाद्य वमनविरेचनाभ्यां संशोध्य क्रमात् प्रकृतिमापादयेत्। संशुद्धौ चास्थापनानुवासनाभ्याम् उपाचरेत्, उपाचरेच्च मधुरौषधसंस्कृताभ्यां घृतक्षीराभ्यां पुरुषं, स्त्रियं पुनस्तैलमाषाभ्याम्। ततः पुष्पात् प्रभृति त्रिरात्रं ब्रह्मचारिणी आसीताधःशायिनी पाणिभ्यामन्नमजर्ज्जरपात्रे भुञ्जाना न च काञ्चिदेव मृजामापद्येत ॥ २ ॥

प्रतिज्ञापि बोध्या। अथाप्येताविन्यादि। एतौ स्त्रीपुंसौ निरुक्तरूपौ। क्रमेण वमनविरेचनानन्तरं दौर्ब्बल्ये जाते पेयादिक्रमेण प्रकृतिं जातबलादिकत्वं प्रागवदुपपादयेत्। संशुद्धाविति वमनविरेचनाभ्याम्। उपाचरेच्चेति। आस्थापनानुवासनोपचरणानन्तरं पुरुषं मधुरौषधैर्जीवनीयौषधैर्दशभिः संस्कृताभ्यां साधिताभ्यां घृतक्षीराभ्यां पुरुषमुपाचरेत्। मधुरौषधसंस्कृताभ्यां तैलमाषाभ्यां स्त्रियं उपाचरेत् पानाहारविधिना। तत्र जीवनीयदशककाथकल्काभ्यां स्नेहात् चतुर्गुणपादिकाभ्यां घृतं तैलञ्च साधयेत्। क्षीरन्तु चतुर्गुणजलेन स्वाष्टमांशजीवनीयदशककल्केन स्वावशेषं साधयेत्। माषस्तु यूषसूपादिरूपेण निष्पाद्यः। जीवनीयदशककल्ककर्षं प्रास्थिकजले पूर्व्वमर्द्धशृतं काथं कृत्वा तेन काथेन चतुर्द्दशगुणेनाष्टादशगुणेन वा पक्वः पादशिष्टो माषो यूषः स्यात्। कल्कसाध्यो वा कार्य्य इति। ततः पुष्पात् प्रभृतीति। ततो मासं क्रमेणोपचितशुद्धार्त्तवप्रवर्त्तनमारभ्य त्रिरात्रं नारी अधःशायिनी खट्वादूर्द्ध्वदेशे शयनं हित्वा भूमिदेशे दर्भसंस्तरे शयाना सती ब्रह्मचारिणी च सती रमणोपरता सती पाणिभ्यां करतलाभ्यामन्नमजर्जरपात्रे वा भुञ्जाना च जीर्णतमपात्रेतरपात्रेऽन्नं हविष्यविधिना

श्रेयःप्रजारूपप्रयोजननिष्पादकम्। अथापीत्यादौ 'अथ'शब्दोऽधिकारे, 'अपि'शब्दो विशेषार्थः। तेन व्यापन्नशुक्रशोणितगर्भाशययोरपि स्त्रीपुंसयोः श्रेयःप्रजाजनकगुणाधानार्थं स्नेहादिकर्म्मकरणमिति दर्शयति। यद्यपि 'एतौ' इतिपदेनैवाधिकृतौ स्त्रीपुंसौ लब्धौ, तथापि पुनर्यतः स्त्रीपुंसौ स्नेहनादिवक्ष्यमाणकर्म्मणा योज्यौ इति दर्शयति। क्रमेणेति पेयादिक्रमेण, स च क्रमः वमनं पृथक्प्रदेशान्तरोक्तक्रमन्यायेन बोद्धव्यः। पुनः 'संशुद्धौ च' इति वचनात् सम्यक्शुद्धयोरेवास्थापनानुवासने कर्त्तव्ये, नासम्यक्शुद्धयोरिति दर्शयति। 'मधुरौषध'शब्देन मधुरौषधग्रहणं मधुरस्य विशेषेण शुक्रवृद्धिकरत्वात्। अन्ये तु 'मधुरौषध'शब्देन जीवनीयगणमिच्छन्ति। पुष्पादित्यादिना

ततश्चतुर्थेऽहन्येनामुत्साद्य सशिरस्कं स्नापयित्वा शुक्लान्यक्षुण्णानि वासांस्याच्छादयेत् भूषाश्च धारयेत्, पुरुषञ्च ।

भुञ्जाना च सती आसीत वर्त्तेत, न च काञ्चित् मृजां दन्तगात्रादिमार्ज्जनं नापद्येतेति । उक्तञ्च सुश्रुते "अथास्मै पञ्चविंशतिवर्षाय द्वादशवर्षां पत्नीमावहेत् पित्र्यधर्म्मार्थकामप्रजाः प्राप्स्यतीति । ऋतुस्तु द्वादशरात्रं भवति दृष्टार्त्तवः । अदृष्टार्त्तवाऽप्यस्तीत्येके भाषन्ते । तद्वर्षाद् द्वादशात् काले वर्त्तमानमसृक् पुनः । जरापक्वशरीराणां याति पञ्चाशतः क्षयम् । पीनप्रसन्नवदनां प्रक्लिन्नात्ममुखद्विजाम् । नरकामां प्रियकथां स्रस्तकुक्ष्यक्षिमूर्द्धजाम् ॥ स्फुरद्भुजकुचश्रोणीनाभ्यूरुजघनस्फिचम् । हर्षौत्सुक्यपराञ्चापि विद्यादृतुमतीमिति ॥ नियतं दिवसेऽतीते संकुचत्यम्बुजं यथा । ऋतौ व्यतीते नार्य्यास्तु योनिः संव्रियते तथा ॥ मासेनोपचितं काले धमनीभ्यां तदार्त्तवम् । ईषत्कृष्णं विगन्धञ्च वायुर्योनिमुखं नयेत् ॥ ऋतौ प्रथमदिवसात् प्रभृति ब्रह्मचारिणी दिवास्वप्नाञ्जनाश्रुपातस्नानानुलेपनाभ्यङ्गनखच्छेदनप्रधावनहसनकथनातिशब्दश्रवणविलेखनानिलायासान् परिहरेत् । किं कारणम् ? दिवास्वपन्त्याः स्वापशीलोऽञ्जनादन्धो रोदनाद् विकृतदृष्टिः स्नानानुलेपनाद् दुःखशीलस्तैलाभ्यङ्गात् कुष्ठी नखापकर्त्तनात् कुनखी प्रधावनाच्चञ्चलो हसनाच्छ्यावदन्तौष्ठतालुजिह्वः प्रलापी चातिकथनादतिशब्दश्रवणाद् बधिरः अवलेखनात् खलतिर्मारुतायाससेवनात् उन्मत्तो गर्भो भवतीत्येवमेतान् परिहरेत् । दर्भसंस्तरणशायिनीं करतलशरावपर्णान्यतमभोजिनीं हविष्यं त्र्यहञ्च भर्त्तुः संरक्षेत् । इति ॥ २ ॥

गङ्गाधरः—ततश्चतुर्थे इत्यादि । तस्त्रिरात्रानन्तरं चतुर्थेऽहनि दिने एनां ब्रह्मचारिणीमृतुमतीं स्त्रियमुत्साद्य खलितैलहरिद्रादुद्वर्त्तनेनोद्वर्त्त्य सकेशगात्रं सशिरस्कं शिरःसहितं स्नापयित्वा शुक्लानि श्वेतवर्णान्यक्षुण्णानि वासांस्याच्छादयेत् भूषाश्च धारयेत् । पुरुषञ्चेति । पुरुषमपि पूर्व्वं मासं मैथुनोपरतं, स्त्रीपुष्पात् प्रभृति च त्रिरात्रं ब्रह्मचारिणं मैथुनोपरमणेन, तथाधःशायिनं पाणिभ्यामजर्ज्जरपात्रे वा हविष्यविधानेनान्नं भुञ्जानम्, गात्रादिमार्ज्जनादि वर्ज्जयन्तम्, चतुर्थेऽह्नि तथैवोत्साद्य सशिरस्कं स्नापयित्वा शुक्लान्यक्षुण्णानि वासांस्याच्छादयेत्, तथा स्रजं भूषणञ्च धारयेत् । बहुवचनात्

ततः शुक्लवाससौ च स्रग्विणौ सुमनसावन्योन्यमभिकामौ संवसेतामिति ब्रूयात्। स्नानात् प्रभृति युग्मेष्वहःसु संवसेतां पुत्रकामौ, अयुग्मेषु दुहितृकामौ ॥ ३ ॥

एकद्विवसनाच्छादनव्यवच्छेदः। तथा स्नातं स्रग्विणमलङ्कृतं भर्त्तारं तथा शुद्धस्नाता स्रग्विणी भूषालङ्कृता कृतमङ्गलाचरणस्वस्तिवाचना प्राक् पश्येत् भर्त्तृसदृशपुत्रकामा इत्यर्थः शेषः। उक्तं हि सुश्रुते—ततः शुद्धस्नातां चतुर्थेऽहन्यहतवाससमलङ्कृतां कृतमङ्गलस्वस्तिवाचनां भर्त्तारं दर्शयेत्। तत् कस्य हेतोः ? पूर्व्वं पश्येदृतुस्नाता यादृशं नरमङ्गना। तादृशं जनयेत् पुत्रं भर्त्तारं दर्शयेदतः। ततो विधानं पुत्रीयमुपाध्यायः समाचरेत्। कर्म्मान्ते च क्रमं हेतनमारभेत विचक्षणः॥ इति। ततः किं कुर्य्यादित्यत आह—ततः शुक्लवाससौ इत्यादि। सुमनसाविति सुचित्तौ संवसेतां सहवासं कुर्य्यातामित्यर्थः। ननु पुत्रकामयोर्दुहितृकामयोश्च दिवसनियमोऽस्ति न वा सहवासे इत्यत आह—स्नानादित्यादि। स्नानदिनमारभ्य युग्मेष्वहःसु दिनेषु न तु स्नानात् पूर्व्वं, तेन चतुर्थे षष्ठेऽष्टमे दशमे द्वादशे वा दिने पुत्रकामौ संवसेताम्। दुहितृकामौ त्वयुग्मेषु, स्नानात् प्रभृति न तु स्नानात् पूर्व्वं, तेन पञ्चमे सप्तमे नवमे एकादशे चाहनि संवसेतामित्यर्थः। सुश्रुतेऽप्युक्तम्—ततोऽपराह्ने पुमान् मासं ब्रह्मचारी सर्पिःस्निग्धः सर्पिःक्षीराभ्यां शाल्योदनं भुक्त्वा मासं ब्रह्मचारिणीं तैलस्निग्धां तैलमाषोत्तराहारां नारीमुपेयाद्रात्रौ सामादिभिरभिविश्वास्य विकल्प्यैवं चतुर्थ्यां षष्ठ्यामष्टम्यां दशम्यां द्वादश्याञ्च रात्रावुपेयादिति पुत्रकामः। एषूत्तरोत्तरं विद्यादायुरारोग्यमेव च। प्रजासौभाग्यमैश्वर्य्यं बलञ्च दिवसेषु वै॥ अतः परं पञ्चम्यां सप्तम्यां नवम्यामेकादश्याञ्च रात्रौ स्त्रीकामः। त्रयोदशीप्रभृतयो निन्द्या इति। एवं (गर्भावक्रान्तिशारीरे) सुश्रुतेऽप्युक्तम्—युग्मेषु तु पुमान् प्रोक्तो दिवसेष्वन्यथाऽबला। पुष्पकाले शुचिस्तस्मादपत्यार्थी स्त्रियं व्रजेत्॥ अथ तत्र प्रथमे दिवसे ऋतुमत्यां मैथुनगमनमनायुष्यं पुंसां भवति। यश्च तत्राधीयते गर्भः स प्रसवमानो विमुच्यते, द्वितीयेऽप्येवम् सूतिकागृहे वा। तृतीयेऽप्येवमसम्पूर्णाङ्गोऽल्पायुर्वा भवति। चतुर्थे तु सम्पूर्णाङ्गो

दर्शनात्। ब्रह्मचारिणीति अधःशायिनीति च त्रिरात्रमित्यनेन सम्बध्यते। स्नानात् प्रभृतीति संवसेतामित्यनेन सम्बध्यते, तेन स्नानात् प्रभृति मैथुनं विधीयते, न तु स्नानदिनात् (पूर्व्वं) प्रभृति, पुत्रकामयोर्युग्मदिनविधानात्। युग्मदिनन्तु प्रथमदिनात् प्रभृत्येव गणनीयम्।

न च न्युब्जां पार्श्वगतां वा संसेवेत; न्युब्जाया वातो बलवान् स योनिं प्रपीड़यति, पार्श्वगताया दक्षिणे पार्श्वे श्लेष्मा संच्युतः पिदधाति गर्भाशयम्, वामे पार्श्वे पित्तं तदस्याः पीड़ितं विदहति रक्तं शुक्रञ्च, तस्मादुत्ताना सती वीजं गृह्णीयात्। तस्या हि यथास्थानमवतिष्ठन्ते दोषाः। पर्य्याप्ते चैनां शीतोदकेन परिषिञ्चेत् ॥ ४ ॥

दीर्घायुश्च भवति। न च प्रवर्त्तमाने रक्ते वीजं प्रविष्टं गुणकरं भवति। यथा नद्यां प्रतिस्रोतः प्लाविनि द्रव्यं प्रक्षिप्तं प्रतिनिवर्त्तते नोर्द्ध्वं गच्छति, तद्वदेव द्रष्टव्यम्। तस्मान्नियमवती त्रिरात्रं परिहरेत्। अतः परं मासादुपेयात्। इति। अत्र मासादूर्द्ध्वमित्यर्थः। अर्व्वाङ् मासाद् गमनं पुनर्गर्भद्वारविघट्टनेन स्थितमपि गर्भं व्यापादयति। केचित् तु अतः परं पञ्चदशादिनात् गर्भलाभविनिश्चय एव लब्धगर्भात् तु नैवेति पठन्ति ॥ ३ ॥

गङ्गाधरः—ननु सहवासे बहवो बन्धाः कामशास्त्रे दृश्यन्ते, केन बन्धेन संवसेतामित्यत आह—न चेत्यादि। न्युब्जामनुत्तानां पार्श्वगतां दक्षिणेन वामेन वा पार्श्वेन शयितां वामेन दक्षिणेन वा पार्श्वेन शयितः सन् न च संसेवेत रमेत। ननु कस्मात् न्युब्जां न सेवेतेत्यत आह—न्युब्जाया इत्यादि। प्रपीड़यति न च वीजं ग्राहयतीति भावः। ननु पार्श्वगतां कस्मान्नोपसेवेतेत्यत आह—पार्श्वेत्यादि। पार्श्वगताया वामपार्श्वेन शयिताया दक्षिणे पार्श्वे श्लेष्मा संच्यूतः सन् गर्भाशयं पिदधाति। दक्षिणेन पार्श्वेन शयिताया वाम-पार्श्वे पित्तं तत् संच्यूतं सत् पीड़ितञ्च सत् अस्याः स्त्रिया मैथुनेन गृहीतशुक्रायाः तच्छुक्रं स्वार्त्तवरक्तञ्च मिलितमपि विदहति। तस्मादुत्तानेति। ननु कुतो वीजमुत्ताना गृह्णातीत्यत आह—तस्या हीत्यादि। दोषा वातपित्तकफाः। यथास्थानं स्वस्वस्थानम्। पर्य्याप्ते चैनामिति परिगतमैथुने मैथुनसमाप्तावित्यर्थः। एनां कृतरमणां स्त्रियं मैथुनश्रमोष्मप्रशमार्थं शीतोदकेन मुखनयनादिषु योनिषु च परिषिञ्चेत् ॥ ४ ॥

यदुक्तं हारीते चतुर्थीषष्ठ्यष्टमीद्वादशीषु गुणवन्तमायुष्मन्तं पुत्रं जनयति, पञ्चमीनवम्येकादशीषु कन्या गुणवतीः, सप्तम्यां दुर्भगाकन्यामिति ॥ २।३ ॥

तत्रात्यशिता क्षुधिता पिपासिता भीता विमनाः शोकार्त्ता क्रुद्धा चान्यञ्च पुमांसमिच्छन्ती मैथुने चातिकामा वा नारी गर्भं न धत्ते, विगुणां वा प्रजां जनयति। अतिबालामतिवृद्धां दीर्घरोगिणीमन्येन वा विकारेणोपसृष्टां वर्ज्जयेत्। पुरुषेऽप्येत एव दोषाः। अतः सर्व्वदोषवर्ज्जितौ स्त्रीपुरुषौ संसृज्येयाताम् ॥ ५ ॥

गङ्गाधरः—अथ न्युब्जत्वादिषु गर्भानाधानप्रकरणादन्यानपि गर्भानाधानहेतूनाह—तत्रेत्यादि। अत्यशिता अतिशयेनाशितं भुक्तं पीतं लीढं खादितं वा यया सा अत्यशिता। क्षुधिता क्षुधा जातास्याः सा. एवं पिपासा जातास्याः सा। विमनाः विगतं चिन्तादिभिर्न स्वच्छन्दं मनो यस्याः सा। इच्छन्तीति रमणार्थमिच्छति रमणकालेऽन्यं पुरुषं या सा। यदि चात्यशिताद्यन्यतमा गर्भं धत्ते, तदा विगुणां वेत्यादि। गर्भं न धत्ते विगुणां वा प्रजां जनयतीति सूत्रद्वयमनुवर्त्ततेऽधिकारत्वात्। तस्मात् अतिबालामित्यादिकां स्त्रियं वर्ज्जयेत्। उक्तं ह्यन्यत्र—बालेति गीयते नारी यावत् षोड़शवत्सरम्। ततः परन्तु तरुणी यावद् द्वात्रिंशतं व्रजेत्॥ तत ऊर्द्ध्वं भवेत् प्रौढ़ा यावत् पञ्चाशतं व्रजेत्। ततः परं भवेद् वृद्धा सुरतोत्सववर्ज्जिता। बाला तु प्राणदा प्रोक्ता तरुणी प्राणधारिणी। प्रौढ़ा करोति वृद्धत्वं वृद्धा मरणमादिशेत्। निदाघशरदोर्बाला प्रौढ़ा वर्षावसन्तयोः। हेमन्ते शिशिरे योग्या वृद्धा कापि न शस्यते॥ सद्योमांसं नवान्नञ्च बाला स्त्री क्षीरभोजनम्। घृतमुष्णोदकञ्चैव सद्यःप्राणकराणि षट्॥ पूतिमांसं स्त्रियो वृद्धा बालार्कस्तरुणं दधि। प्रभाते मैथुनं निद्रा सद्यःप्राणहराणि षट्॥ इति। सुश्रुतेऽप्युक्तम्—(गर्भिणी व्याकरणे) अथास्मै पञ्चविंशतिवर्षाय द्वादशवर्षां पत्नीमावहेत् पित्र्यधर्म्मार्थकामप्रजाः प्राप्स्यतीति। ऊनषोड़शवर्षायामप्राप्तः पञ्चविंशतिम्। यद्याधत्ते पुमान् गर्भं कुक्षिस्थः स विपद्यते॥ जातो वा न चिरञ्जीवेज्जीवेद्वा दुर्ब्बलेन्द्रियः। तस्मादत्यन्तबालायां गर्भाधानं न कारयेत्॥ अतिवृद्धायां दीर्घरोगिण्यामन्येन वा विकारेणोपसंसृष्टायां गर्भाधानं न कुर्व्वीत। पुरुषस्यैवंविधस्य त एव दोषाः सम्भवन्तीति॥

चक्रपाणिः—न्युब्जामित्यधोमुखीम्। पर्य्यासे समाप्ते मैथुने; मैथुने चातिकामेति निवृत्तेऽपि पुरुषे मैथुनमिच्छन्ती। अन्येन वा विकारेणेति कुष्ठादिजुगुप्सितेन रोगेण ॥ ४।५ ॥

**संजातहर्षौ मैथुने चानुकूलौ इष्टगन्धं स्वास्तीर्णं सुखं शयनमुपकल्प्य मनोज्ञं हितमशनं मात्रावदशित्वा दक्षिणपादेन**

पुरुषस्याप्यत्यशितत्वाद्यतिबालत्वादिदोषाद् गर्भानाधानहेतुत्वं विगुणप्रजाहेतुत्वञ्चाभिप्रेत्यातिदेशेनात्यशितादिकं पुरुषं वर्ज्जयितुमाह—पुरुषेऽप्येत एवेत्यादि। एत एवात्यशितत्वादयो दोषाः। उक्तञ्चान्यत्र—अतिबालो ह्यसम्पूर्ण-सर्व्वधातुः स्त्रियं व्रजन्। अपतप्येत सहसा तड़ागमिव काजलम्॥ शुष्कं रूक्षं यथा काष्ठं जन्तुजग्धं विजर्ज्जरम्। संस्पृष्टमाशु जीर्य्येत तथा वृद्धः स्त्रियं व्रजन्॥ पञ्चपञ्चाशतो नारी सप्तसप्ततितः पुमान्। द्वावेतौ न प्रसूयेते प्रसूयेते व्यतिक्रमात्॥ इति। अत्रातिबाल्यामित्यतिशब्देन द्वादशवर्षात् प्रायो रजःप्रवृत्तिः स्त्रीणां तदा यौवनारम्भः। पौगण्डावस्था बाल्यमेव न त्वतिबाल्यम्। तदा पञ्चविंशत्यादिप्राप्तपुंयोगाद् गर्भाधानं न सदोषं. प्रागपि द्वादशवर्षात् तु रजःप्रवृत्तिर्यस्यास्तामतिबालां वर्ज्जयेत्। वृद्धा तु पञ्चाशद्वर्षा प्रायेण स्त्रीणां तावद्रजःप्रवृत्तिस्तत्र मध्यवयःपुरुषयोगाद् गर्भाधानं न सदोषम्। पञ्चाशतः परन्तु या सरजस्का सप्तसप्ततिप्रभृतिवर्षेषु सातिवृद्धा। श्रेयसीप्रजार्थं तां वर्जयेत्। एवं पुरुषस्यापि षोड़शाब्दं यावद् बाल्यं यदुक्तं तदतिबाल्याभिप्रायेण. स्त्रिया इव द्वादशवर्षं यावत्. पञ्चविंशतिं यावत् तु सर्व्वसम्पूर्णधातुत्वात् शुक्रस्य च सर्व्वगुणोपपन्नत्वात्। स्त्रिया इव षोड़शवर्षं यावद् बाल्यातीतत्वं तदा गर्भाधानकरणं न सदोषं प्राक् च पञ्चविंशतेः सदोषं. तस्मादतिबालं श्रेयसीं प्रजां जनयितुं वर्ज्जयेत्। एवमतिवृद्धस्यापि सप्ततेरूर्द्ध्वं सप्तसप्ततिप्रभृतिषु वयःसु जरापक्वशरीरत्वेनाहाररसस्य प्रीणनत्वाभावेन क्षीणशुक्रत्वेन श्रेयःप्रजाजननं सदोषं, प्राक् सप्ततेरदोषम्। तस्मादतिवृद्धं पुरुषं श्रेयसीं प्रजां जनयितुं वर्ज्जयेदिति भावः। अत उक्ताद्धेतोः सर्व्वदोषवर्जितौ रजोयोनिगर्भाशय-दोष-रजस्वलाकालिकापरिहार्य्य-परिहारदोष-न्युब्जादि--दोषात्यशितत्वादिदोषातिबालत्वादिदोषरहिता स्त्री. तथा शुक्रदोषाब्रह्मचर्य्यत्वादिदोषात्यशितत्वादिदोषातिबाल्यादिदोषरहितः पुमान्. एतौ द्वौ श्रेयसीं प्रजामुत्पादयितुं संसृज्येयातां संसर्गं कुर्व्वीयाताम्॥ ५॥

गङ्गाधरः—ननु केन प्रकारेण संसर्गं कुर्व्वीयातामित्यत आह—संजातेत्यादि। मनोज्ञं हितञ्चाशनं मात्रावदशित्वा नातिमात्रमशित्वा चतुर्थ्यादौ रात्रौ शयनं शय्याम् इष्टगन्धं स्वमनोरमगन्धयुक्तं स्वास्तीर्णं स्वाच्छादनं सुखं

पुमान्, वामपादेन स्त्री चारोहेत्। तत्र मन्त्रं प्रयुञ्जीत। अहिरसि आयुरसि सर्व्वतः प्रतिष्ठासि धाता त्वा दधातु विधाता त्वा दधातु ब्रह्मवर्च्चसा भवेदिति।

ब्रह्मा बृहस्पतिर्विष्णुः सोमः सूर्य्यस्तथाश्विनौ।
भगोऽथ मित्रावरुणौ पुत्रं वीरं दधातु मे॥

इत्युक्त्वा संवसेयाताम्। सा चेदेवमाशासीत बृहन्तमवदातं हर्य्यक्षमोजस्विनं शुचिं सत्त्वसम्पन्नं पुत्रमिच्छेयमिति॥ ६

शुद्धस्नानात् प्रभृत्यस्यै मन्थमवदातं यवानां मधुसर्पिर्भ्यां संसृज्य श्वेताया गोः सरूपवत्सायाः पयसालोड्य राजते कांस्ये

सुखकरं मनोज्ञञ्च शयनमुपकल्प्य संजातहर्षौ सम्यक्परस्परालिङ्गन-चुम्बन-दर्शन-कटाक्षविक्षेपण-स्मित-हसित-संलाप-लपित-घनजघनस्तनोपमर्द्दितादिभिः जातो हर्षो ध्वजोच्छ्राययोनिस्फुरणादिलक्षणो ययोस्तौ मैथुने चानुकूलौ परस्परसम्मतौ सन्तौ पुमान् वामपार्श्वेन स्त्री तु दक्षिणपार्श्वेन परस्पराभिमुखं शयित्वा दक्षिणपादेन पुमान् स्त्रिया दक्षिणपादमारोहेत्। वामपादेन स्त्री तं स्वदक्षिणपदारूढं पुंसो दक्षिणपदमारोहेत्। यद्वा निरुक्तरूपेण संजातहर्षौ मैथुने चानुकूलौ हितं मात्रावदशित्वा इष्टगन्धादिकं शयनं शय्यामुपकल्प्य दक्षिणपादेन पुमानारोहेच्छयनं ततः स्त्री च तच्छयनं वामपादेनारोहेत् इत्यर्थः। तत्रारोहणे मन्त्रमिमं प्रयुञ्जीत पठेत्। मन्त्रस्तु अहिरसीत्यादि। सा चेदित्यादि। हर्य्यक्षं सिंहमिव सत्त्वसम्पन्नं सत्त्वसारम्॥ ६॥

गङ्गाधरः—शुद्धस्नानादित्यादि। यवानां मन्थं स्नानात् प्रभृत्यस्यै प्रातः पानाय प्रयच्छेत्। मन्थं विवृणोति—यवानामवदातं तुषादिमलरहितत्वेनावदातं सक्तुकं मधुघृताभ्यां संसृज्य संसृष्टं कृत्वा सरूपवत्सायाः समानवर्णवत्सायाः श्वेताया गोः पयसालोड्य। भुञ्जीतेति मध्याह्ने, तथा

चक्रपाणिः—आरोहेत् शयनमिति सम्बन्धः। 'अहिरसीत्यादि दधातु मे' इत्यन्तो मन्त्रः। हर्य्यक्षं सिंहविक्रमम्। तेनोपादेयमेवेत्याह—इच्छेयमिति। इच्छेयमित्यनेकार्थत्वाद् धातूनां लभेयमित्यर्थः, तेन 'आशासीत' इत्यस्य 'इच्छेयम्' इत्यनेन न पौनरुक्त्यमिति व्याख्यानयन्ति॥६॥

वा पात्रे काले काले सप्ताहं सततं प्रयच्छेत् पानाय। प्रातश्च शालियवान्नविकारान् दधिमधुसर्पिर्भिः पयोभिर्वा संसृज्य भुञ्जीत तथा सायम् अवदातशरणशयनासनपानवसन-भूषणवेशा च स्यात्। सायं प्रातश्च शश्वत् श्वेतं महान्तम् ऋषभमाजानेयं वा हरिचन्दनाङ्गदं पश्येत्। सौम्याभिश्चैनां कथाभिर्मनोऽनुकूलाभिरुपासीत। सौम्याकृतिवचनोपचार-चेष्टांश्च स्त्रीपुरुषानितरानपि चेन्द्रियार्थानवदातान् पश्येत्। सहचर्य्यश्चैनां प्रियहिताभ्यां सततमुपाचरेयुः, तथा भर्त्ता। न च मिश्रीभावमापद्येयाताम्। इत्यनेन विधिना सप्तरात्रं स्थित्वा अष्टमेऽहनि आप्लुत्याद्भिः सशिरस्कं सह भर्त्रा, चाहतानि वस्त्राण्याच्छादयेदवदातान्यवदाताश्च स्रजो भूषणानि बिभृयात्॥ ७

सायं भुञ्जीतेत्यन्वयः। अवदातशरणशयना शुक्लगृहे शुक्लशय्यासुप्ता शुक्लासना शुक्लपाना शुक्लवसना शुक्लभूषणा च स्यात्। शश्वत्कृतं सर्व्वतः शुक्लं महान्तमृषभं वृहद्वृषम् आजानेयं प्रागुक्तमश्वं हरिचन्दनाङ्गदं हरिचन्दनं बाहुभूषा यस्य तं तथा। हरिचन्दनं श्वेतचन्दनम्। सौम्याभिर्वात्सल्ययुक्ताभिः कथाभिः। सौम्याकाराः सौम्यवचनाः सौम्योपचाराः सौम्यचेष्टाश्च स्त्रियो वा पुरुषा वा ये ये भवन्ति तांस्तान् पश्येत् इतरानपि चेन्द्रियार्थांश्चक्षुर्ग्राह्यानवदातान् शुक्लानेव पश्येत्। सहचर्य्यः सहचरीजनाः। तथा भर्त्ता प्रियहिताभ्यां सततमेनामुपाचरेदित्यन्वयः। मिश्रीभावं मैथुनम्। इत्यनेनेत्यादि। सप्तरात्रमिति न स्नानात् किन्तु ऋतुप्रवृत्तित एव सप्तरात्रम्। अष्टमेऽर्थादृतुप्रवृत्तित एवाष्टमे त्वहनि। आप्लुत्य निमज्ज्य॥ ७॥

चक्रपाणिः—काले काल इति सायं प्रातः। अत्र च मन्थपानस्य तथा शालियवान्नभोजनस्य च विहितत्वादुभावपि मात्रया काले करणीयौ। शरणं गृहम्। आजानेयमुत्तमकुलजम्। 'हरिचन्दन' शब्देन श्वेतचन्दनं विवक्षितम्। 'हरि'शब्दस्यानेकार्थत्वात् 'हरि'शब्देन श्वेतस्यैव ग्रहणं प्रकरणात्। अङ्गदोऽङ्गरागः, किंवा अङ्गदो बाहुभूषणम्। पश्येदित्युपलभेत। तेन श्रोत्र-मनोभ्यामपि अवदातत्वग्रहणं लभ्यते॥ ७॥

तत ऋत्विक् प्रागुत्तरस्यां दिश्यगारस्य प्राक्प्रवन-*-मुदक्प्रवनं वा देशमभिसमीक्ष्य गोमयोदकाभ्यां स्थण्डिलमुपसंलिप्य प्रोक्ष्य चोदकेन वेदीमस्मिन् स्थापयेत्। तां पश्चिमेनाहतवस्त्रसञ्चये श्वेतार्षभे वाऽप्यजिन उपविशेत् ब्राह्मणप्रयुक्तः, राजन्यप्रयुक्तस्तु वैयाघ्रे चर्मण्यानडुहे वा, वैश्यप्रयुक्तस्तु रौरवे वास्ते वा। तत्रोपविष्टः पालाशीभिरैङ्गुदीभिरौदुम्बरीभिर्माधूकीभिर्वा समिद्भिरग्निमुपसमाधाय कुशैः परिस्तीर्य परिधिभिश्च परिधाय लाजैः शुक्लाभिश्च गन्धवतीभिः सुमनोभिरुपाकिरेत्। तत्र प्रणीयोदपात्रं पवित्रं पूतमुपसंस्कृत्य सर्पिराज्यार्थं यथोक्तवर्णानाजानेयादीन् समन्ततः स्थापयेत्॥ ८॥

गङ्गाधरः—तत इत्यादि। तत ऋत्विक् जलप्लवनानन्तरं याजकः। अगारस्य प्रागुत्तरस्यां पूर्व्वादिदिग्भागे क्रमेणावरायां दिशि प्राक्प्लवनं पूर्व्वस्यां दिशि निम्नतया जलं यथा प्लवते तम्, उदक्प्लवनम् उत्तरस्यां दिशि चोदकं प्लवते यत्र तं देशम्। तां वेदीं पश्चिमेन पश्चाद्देशे अहतवस्त्रसञ्चये नववस्त्राणि बहुलपटलीकृत्य आसनं रचयित्वा तत्र उपविशेत्। श्वेतार्षभे वा शुक्लवृषभस्य वाप्यजिने चर्म्मणि उपविशेत्। ब्राह्मणप्रयुक्त ऋत्विक् ब्राह्मणनियोगेन प्रवृत्त ऋत्विक्। राजन्यप्रयुक्तस्तु क्षत्रियेण नियुक्तस्तु वैयाघ्रे व्याघ्रस्य चर्म्मणि आनडुहे वार्षभे वा चर्म्मणि उपविशेत्। वैश्यप्रयुक्तस्तु वैश्येन पुत्रार्थं नियुक्तस्तु ऋत्विक् रौरवे हारिणे चर्म्मणि वास्ते च्छागे वा चर्म्मण्युपविशेत्। तत्र यथोक्ते चर्म्मणि। अग्निमुपसमाधाय वेद्यामग्निं संस्थाप्य कुशैः परिस्तीर्य्य चतुर्दिक्षु कुशानास्तीर्य्य परिधिभिः पलाशादिशाखासमिद्भिः परिधाय इष्ट्वा लाजैरुपाकिरेत् जुहुयात्, शुक्लाभिर्गन्धवतीभिः सुमनोभिः पुष्पैश्चोपाकिरेत्। ततस्तत्र होमस्थाने पवित्रं स्वभावतो विशुद्धं पूतं

चक्रपाणिः—स्थण्डिलं पूजनस्थानम्। वेदीं पिण्डिकाम्। तां पश्चिमेनेति वेदिकायाः पश्चिमे। श्वेत आर्षभे अजिने श्वेतवृषभचर्म्मणीत्यर्थः। ब्राह्मणप्रयुक्त इति यदि ब्राह्मणेन पुत्रेष्ट्यर्थं वा प्रयुक्तः स्यात्, तदा ऋत्विक् श्वेतवस्त्रसञ्चये श्वेतवृषभचर्म्मणि वा उपविशेत। राजन्यप्रयुक्तस्तु

* वर्णामिति चक्रः।

ततः पुत्रकामा पश्चिमतोऽग्निं दक्षिणतो ब्राह्मणमुपवेश्यान्वालभेत सह भर्त्रा यथेष्टं पुत्रमाशासाना। ततस्तस्या आशासानाया ऋत्विक् प्रजापतिमभिनिर्द्दिश्य योनौ तस्याः कामपरिपूरणार्थं काम्यामिष्टिं निर्व्वपेत्—विष्णुर्योनिं कल्पयतु इत्यनयर्चा। ततश्चैवाज्येन स्थालीपाकमभिसंसार्य्य त्रिर्जुहुयात् यथाम्नायं मन्त्रोपमन्त्रितमुदपात्रं तस्यै दद्यात्। सर्व्वोदकार्थान् कुरुष्वेति। ततः समाप्ते कर्म्मणि पूर्व्वं दक्षिणपादमभिहरन्ती प्रदक्षिणमग्निमनु परिक्रामेत्। ततो ब्राह्मणान् स्वस्ति वाचयित्वा सह भर्त्राऽज्यशेषं प्राश्नीयात् पूर्व्वं मन्त्रपूतमुदकपात्रं प्रणीय। आज्यार्थं होमार्हघृतमाज्यं तदर्थं, सर्पिः कृत्य। यथोक्तवर्णान् आशासीत पुत्रवर्णीयवर्णयुक्तान् आजानेयादीन् पूर्व्वोक्तकुलीनाश्वादीन् समन्ततश्चतुर्दिक्षु वेद्याः स्थापयेत्॥ ८॥

गङ्गाधरः—तत इत्यादि। ततः पुत्रकामा सह भर्त्रा यथेष्टं स्वाभिमतं पुत्रमाशासाना वाञ्छन्ती सती अग्निं पश्चिमतो दक्षिणतो ब्राह्मणम् उपवेश्यान्वालभेत पलाशादिशाखाभिरिष्ट्वा लाजादिभिरुपकिरेत्। तस्याः पुत्रमाशासानायाः प्रजापतिमभिनिर्दिश्य ऋत्विक् तस्या एव नार्य्या योनौ काम्यामिष्टिं "विष्णुर्योनिं कल्पयतु" इत्यनयर्चा कामपूरणार्थं निर्व्वपेत्। ततश्चानन्तरं स्थालीपाकं चरुम् आज्येन सर्पिषाभिसंसार्य्य मिश्रीकृत्य यथाम्नायं यथावेदं यस्या यद्वेदीयपच्छाखा तस्यास्तद्वेदीयतच्छाखोक्तमन्त्रोपमन्त्रितं प्राक्प्रणीतमुदकपात्रं तस्यै दद्यात्। किमर्थं दद्यात्? सर्व्वोदकार्थान् अनेनोदकेन कुरुष्वेति ब्रुवंस्तस्यै दद्यादिति। तत इत्यादि।

वेद्यामिति चर्म्मण्युपविशेदिति शेषः। रुरुर्हरिणविशेषः। परिधिभिरिति चतुर्भिः पलाशवृहद्दण्डैः। परिधायेति वेष्टयित्वा परिहितान्येव। पूतं मन्त्रपूतम्, तच्चोदपात्रविशेषणम्। उपसंस्कृत्येति तन्त्रशास्त्रमेव संस्कारमन्त्रैरुपसंस्कृत्य। सर्पिराज्यार्थमिति नवनीतं घृतार्थम्। किंवा सर्पिर्घृतमेव, आज्यार्थमिति मन्त्रपूतघृतकरणार्थम्। 'आज्य'शब्देन मन्त्राभिमन्त्रितं घृतमुच्यते। पश्चिमतोऽग्निं दक्षिणतो ब्राह्मणमिति यथा पूर्व्वेणाग्निर्वामे च ब्राह्मणो भवति तथेत्यर्थः। अनुलभेतेति ऋत्विक्प्रयुक्ता ऋत्विग्विधानमनुकुर्य्यादित्यर्थः। प्रजापतिमभिनिर्द्दिश्येति ब्रह्माणमभिमन्त्र्य। योनौ कामपूरणार्थमग्नाविष्टिं निर्व्वपेदिति कुर्य्यात्। इष्टिर्योनिशोधिका। इष्टिसाधिका

पुमान् पश्चात् स्त्री। न चोच्छिष्टमवशेषयेत्। ततस्तौ सह संवसेताम् अष्टरात्रं तथाविधपरिच्छदावेव च स्यातां तथेष्टपुत्रं जनयेताम् ॥ ६ ॥

या तु स्त्री श्यामं लोहिताक्षं व्यूढोरस्कं महाबाहुञ्च पुत्रमाशासीत, या वा कृष्णं कृष्णमृदुदीर्घकेशं शुक्लाक्षं शुक्लदन्तं तेजस्विनमात्मवन्तम्। एष एवानयोरपि होमविधिः। किन्तु परिबर्हो वर्णवर्ज्जं स्यात्, पुत्रवर्णानुरूपस्तु यथाशीरेव तयोः परिबर्होऽन्यः कार्य्यः स्यात्। द्विजेभ्यः शूद्रा तु नमस्कारमेव कुर्य्याद् देवगुरुतपस्विसिद्धेभ्यश्च। या या च यथाविधं

पश्चात् स्त्री पूर्व्वं भर्त्ता उच्छिष्टं चरुशेषं न रक्षेदित्यर्थः। ततः परं तौ पुना रात्रौ सह संवसेतां संसर्गं कुर्य्यातामम्। अष्टरात्रमष्टमाहम् आरभ्याष्टरात्रं पञ्चदशरात्रं यावदित्यर्थः। तथाविधपरिच्छदावेव उक्तप्रकारपरिच्छदावेव। तथेष्टपुत्रं तत्प्रकारमिष्टं पुत्रं जनयेतां न त्वन्यविधपरिच्छदौ स्त्रीपुरुषौ ॥ ९ ॥

गङ्गाधरः—नन्वन्यविधपुत्रमिच्छन्ती किमाचरन्ती जनयेदित्यत आह या त्वित्यादि। व्यूढोरस्कं व्यूढं विपुलोजस्वद् उरो वक्षो यस्य तं तथा। गयं तृतीयविधपुत्रान्तरप्रकारमाह—या वेत्यादि। श्यामकृष्णयोर्भेदस्तु श्वेतकृष्णयोर्मिश्रीभावे यद्रूपं तत् श्यामम्। कृष्णस्तु प्रसिद्धः। आत्मवन्तमित्यन्तस्य आशासीतेत्यनेन पूर्व्वेणान्वयः। अनयोरपि द्वयोः पुत्रविशेषाविच्छन्त्योरपि एवोक्तः शुक्लवर्णपुत्रकामाया एव होमविधिः कार्य्यः। ननु वर्णादिभेदः कुतः स्यादित्यत आह—किन्त्वित्यादि। वर्णवर्ज्जं परिबर्हः परिच्छदः स्यात् यत्रमन्थाद्याहारशुक्लवासोऽलङ्करणादिवर्ज्जमस्याः पुत्रवर्णानुरूपः। श्यामं पुत्रमिच्छन्त्याः श्यामः, कृष्णं पुत्रमिच्छन्त्याः कृष्णः। यथाशीर्यथाकामं परिबर्हः पानाशनवसनभूषणगृहशयनासनादुपसेवनरूपः परिच्छदः कार्य्यः। शूद्रा त्वित्यनेनापकर्षवर्णा तदुत्कर्षवर्णेभ्यो द्विजेभ्यो नमस्कारं कुर्य्यात्।

अथानुक्ततावत्प्रकारपुत्रजननप्रकरणमाह—या या चेत्यादि।

स्रक्। पाकमिति चरुम्। अभिघार्य्येति मिश्रीकृत्य। यथाम्नायमिति यथावेदम्। किन्तु परिबर्हवर्ज्जमिति परिबर्हः शयनासनपुष्पादिपरिच्छदः। तेन यथाविधा पुत्रेच्छा तथावर्णपरिबर्हः

पुत्रमाशासीत, तस्यास्तस्यास्तां तां पुत्राशिषमनुनिशम्य तांस्तान् जनपदान् मनसानुपरिक्रामयेत्। ततो या या येषां जनपदानां मनुष्याणामनुरूपं पुत्रमाशासीत, सा सा तेषां तेषां जनपदानां मनुष्याणामाहारविहारोपचारपरिच्छदाननुविधीयस्वेति वाच्या स्यात्। इत्येतत् सर्व्वं पुत्राशिषां समृद्धिकरं कर्म्म व्याख्यातं भवति ॥ १० ॥

न खलु केवलमेतदेव कर्म्म वर्णानां वैशेष्यकरम्; अपि तु तेजोधातुरप्युदकान्तरीक्षधातुप्रायोऽवदातवर्णकरो भवति।

पुत्राशिषं पुत्रकामनाम् अनुपरिक्रामयेन्मनसा चिन्तयेत्। मनसाऽनुपरिक्रम्य विचिन्त्य या या नारी येषां येषां जनपदानां मनुष्याणामनुरूपं पुत्रमाशासीत कामयेत, सा सा तेषां तेषां जनपदानां मनुष्याणामाहारादीन् अनुविधीयस्व भो भो अनुकुरुष्वेति ऋत्विजा वाच्या स्यात्। छान्दसत्वात् कर्त्तरि तङ्विकरणे। अथवा अनुविधाने द्विकर्म्मवत्। तत्रैकं कर्म्माहारविहारोपचारपरिच्छदानिति, द्वितीयं भो नारि पुत्रकामे त्वामिति। एतत् तु युष्मत्कर्त्तरि वाच्ये तङ्विकरणे, नार्यां त्वमिहास्ति। तत्तज्जनपदीयाहाराद्यनुविधाने नार्य्याः स्वातन्त्रयात् परन्तु ऋत्विगुपदेशेन हेतुना तदाहाराद्यनुविधानाचरणात् फलाश्रयकर्म्मकत्वं तत्तुल्यक्रियावत्त्वेन स्वातन्त्र्यात् तु कर्म्मकर्त्ता कर्म्मवत्। अन्तर्भावितणिच्त्वं। समृद्धिकरं पुत्रेच्छानां परिपूरणकरम् ॥ १० ॥

नन्वेतावतैव कर्म्मणा किं शुक्लश्यामकृष्णादिरूपवन्तः पुत्रा भवेयुरुत कारणान्तरमस्तीत्यत आह—न खल्वित्यादि। केवलमुक्तं यावत् कर्म्मैव वर्णवैशेष्यकरं न खलु भवति। अपि तु शुक्लादिवर्णवैशेष्ये उक्तकर्म्मवदन्यदपि कारणमस्ति तत् किमित्यत आह—तेजोधातुरपीत्यादि। तैजसो हि वर्णस्तस्मात् तेजोधातुर्वर्णकरो यथाप्यो रसो रसकरश्चाप्धातुरिति तत्र भूतान्तरयोगो वर्णस्य वैशेष्यकरो भवति, यथा—भूतान्तरयोगोऽप्धातोः

कर्म्मेत्य इति वाक्यार्थः। शूद्राविधानमाह—शूद्रा त्वित्यादि। नमस्कारमेव कुर्य्यादिति शूद्राया मन्त्रे होमे चानधिकारात् नमस्कारमात्रकरणम् ॥ ८—१० ॥

पृथिवीवायुधातुप्रायः कृष्णवर्णकरः, समसर्व्वधातुप्रायः श्यामवर्णकरः ॥ ११ ॥

रसवैशेष्यकरः। यथापोऽव्यक्तरसास्तथा तेजोऽव्यक्तरूपं स्वरूपतः। ननु केन भूतेन सह योगे वर्णविशेषकर इत्यत आह उदकेत्यादि। तेजोधातुः वर्णकरः स च तत्तदवयवारम्भकद्रव्यारम्भकः पाञ्चभौतिक एवाधुना वर्त्तते तेन तत्तदवयवारम्भकाले तत्प्रकृतिभूतद्रव्यगतस्तेजोधातुर्यदि उदकान्तरीक्षधातुप्रायो जलाकाशोभयधातुबहुलः पाञ्चभौतिको भवति, तदा अवदातवर्णकरः शुक्लवर्णकरः स्यात्, उदकं हि पाञ्चभौतिकं शुक्लमाकाशश्च विशदं, तदुभययोगेन अन्यतरत्वं तेजसोऽव्यक्तवर्णः श्वेतत्वेनाभिव्यज्यते। यथाब्धातोरव्यक्तरसो भूमियोगेन मधुरत्वेनाभिव्यज्यते। एवं स च तेजोधातुर्यदि पृथिवीवायुधातुप्रायः पृथिवीगुणवायुगुणबहुलः पाञ्चभौतिकः स्यात् तदा कृष्णवर्णकरः स्यात्, पृथिवी हि कृष्णवर्णा पाञ्चभौतिकी, पाञ्चभौतिकश्चाधुना वायुर्विशदोऽपि खरचलत्वेन भूतान्तरयोगात् कृष्णवर्णकरः, तद्द्वययोगेन तेजसोऽव्यक्तवर्णः कृष्णत्वेन अभिव्यज्यते। एवं षड्रसवत् द्वौ वर्णौ विशेषेण भेदकभूतभिन्नौ भवतः। पुनस्तयोस्तारतम्येन रक्तपीतारुणादयो बहवो वर्णा भवन्ति। उक्तञ्च सुश्रुते—तत्र तेजोधातुः सर्व्ववर्णानां प्रभवः। स यदा गर्भोत्पत्तावब्धातुप्रायो भवति तदा गर्भं गौरं करोति, पृथिवीधातुप्रायः कृष्णम्, पृथिव्याकाशधातुप्रायः कृष्णश्यामम्, तोयाकाशधातुप्रायो गौरश्यामम्। यादृग्वर्णम् आहारमुपसेवते गर्भिणी तादृग्वर्णप्रसवा भवतीत्येके भाषन्ते। तत्र दृष्टिभागमप्रतिपन्नं तेजो जात्यन्धं करोति। तदेव रक्तानुगतं रक्ताक्षं, पित्तानुगतं पिङ्गाक्षं, श्लेष्मानुगतं श्वेताक्षं, वातानुगतं विकृताक्षमिति। अत एव समसर्व्वधातुप्रायो यदि तेजोधातुर्भवति तदा श्यामवर्णकरः स्यात्। श्यामस्तु खलु तुल्यांशेन शुक्लकृष्णयोर्मिश्रीभावे सत्युपलभ्यते यो वर्णः, स एव द्विविधः सुश्रुते ह्युक्तः—कृष्णश्यामः गौरश्यामः। पृथिवी हि कृष्णा खन्तु विशदं शुक्लकरं, तयोर्द्वयोः संयोगे तेजसोऽव्यक्तवर्णः कृष्णाधिकश्यामत्वेन अभिव्यज्यते। तोयं शुक्लमाकाशश्च विशदं शुक्लकारणं तयोश्च द्वयोः संयोगे तेजसोऽव्यक्तवर्णो गौराधिकश्यामत्वेनाभिव्यज्यते इति तु तन्त्रकृतिनानेना-

चक्रपाणिः—वर्णविशेषकरं हेत्वन्तरमाह—न तु खल्वित्यादि। तेजोधातुः कृष्णवर्णे श्यामवर्णे

**सत्त्ववैशेष्यकराणि पुनस्तेषां तेषां प्राणिनां मातापितृसत्त्वान्यन्तर्व्वत्न्याः श्रुतयश्च अभीक्ष्णं स्वोचितश्च कर्म्म सत्त्वविशेषाभ्यासश्चेति। यथोक्तेन विधिनोपसंस्कृतशरीरयोः स्त्रीपुरुषयोस्तु मिश्रीभावमापन्नयोः शुक्रं शोणितेन सह समेत्याव्यापन्नमव्यापन्नेन योनावनुपहतायाम् अप्रदुष्टे गर्भाशये**

दातवर्ण उच्यते। तथा च उदकैकधातुबहुलः पाञ्चभौतिकश्चेत् तेजोधातुस्तदा हरिद्राभगौरवर्णकरः स्यात्, आकाशबहुलस्तु पलाशाभहरितवर्णकरः स्यात्। पृथिवीबहुलस्तु पक्वजम्बूपमकृष्णवर्णकरः स्यात्, वायुबहुलस्तु रूक्षकृष्णवर्णकरः स्यान्नीलवर्णकर इत्यर्थः। तदुभयबहुलस्तु कज्जलवर्णकरः स्यात्। पृथिव्याकाशबहुलस्तु कृष्णश्यामवर्णकरः स्यात्। एवं वर्णभेदा उन्नेयाः॥ ११॥

गङ्गाधरः—ननु वर्णविशेष एवं भवतु सत्त्वविशेषस्तु किं तत्तत्कर्म्मणा स्यादित्यत आह—सत्त्वेत्यादि। तेषां तेषां प्राणिनां सत्त्ववैशेष्यकराणि पुनर्मातापितृसत्त्वानि गर्भारम्भकशुक्रशोणितसंसर्गकाले मातुः पितुश्च यद्गुणबहुलं मनः स्यात् तद्गुणबहुलं तयोः पुत्रदुहित्रोर्मनः। अन्तर्व्वत्न्या गर्भिण्याः अभीक्ष्णं सततं यादृशगुणबहुलगाथाख्यायिकापुराणवेदादिविषयाणां श्रुतयः श्रवणानि, स्वोचितश्च कर्म्म जन्मान्तरे स्वेनात्मना उचितं स्वक्रियया समवेतं यत् कर्म्म धर्म्माधर्म्मरूपम्। सत्त्वविशेषस्य शुद्धस्य राजसस्य तामसस्य वा तत्प्रभेदब्राह्मादिरूपेणाभ्यासः सततक्रियया। एतानि सत्त्ववैशेष्यकराणि तेषां तेषां प्राणिनां भवन्तीत्यर्थः।

अथाव्यभिचारेणापत्यजन्महेतुमाह—यथोक्तेनेत्यादि। यथोक्तेन उक्तरूपेण विधिना। मिश्रीभावं संसर्गं शुक्रमव्यापन्नं पुरुषस्य शुक्रमव्यापन्नेन स्त्रियाः शोणितेन समेत्य संयोगमेत्यानुपहतायां स्त्रिया योनौ चाप्रदुष्टे च

च वर्त्तते। वर्णविशेषहेतुमभिधाय सत्त्वभेदहेतुमाह—सत्त्वेत्यादि। मातापितृसत्त्वानीति मातापित्रनुकारेण सत्त्वानि प्रायः प्रभावादेव भवन्ति। अन्तर्व्वत्नी गर्भिणी। श्रुतयश्चाभीक्ष्णमिति यथा गर्भिणी गीतादि शृणोति, तथासत्त्वमपत्यं जनयति। स्वोचितञ्च कर्म्मेति गर्भेणोपार्जितं कर्म्म स्वबलानुरूपं सत्त्वं जनयति। सत्त्वविशेषाभ्यासश्चेति यथाविधं सत्त्वं पुरुषोऽभ्यस्यति जन्मान्तरे, तत्सत्त्व एव जायते। वचनं हि—"जन्म जन्म यदभ्यस्तं दानमध्ययनं तपः। तेनैवाभ्यासयोगेन तच्चाप्यभ्यस्यते पुनः॥" इति।

गर्भमभिनिर्व्वर्त्तयत्येकान्तेन। यथा निर्म्मले वाससि सुपरि-

स्त्रिया गर्भाशये गर्भमेकान्तेनाव्यभिचारेणाभिनिर्व्वर्त्तयति जनयति। सुश्रुतेऽप्युक्तम्—ध्रुवं चतुर्णां सान्निध्याद् गर्भः स्याद् विधिपूर्व्वकः। ऋतुक्षेत्राम्बुवीजानां सामग्र्यादङ्कुरो यथा॥ इति। अत्र ऋतुर्वसन्तादिसमयः। क्षेत्रं कर्षितभूखण्डम्। अम्बु वार्षिकादि जलम्। वीजं वीजमेव धान्यादिकम्। इति चतुर्णां समस्तानां नैकद्वित्रिसंख्यकानां, विधिपूर्व्वकसान्निध्यात् संयोगात् यथाङ्कुरो भवः स्यात्, तथा ऋतुः स्त्रिया आर्त्तवसमयः, क्षेत्रं गर्भाशयः, अम्बु पुनराहारपाकजो व्यापी रसधातुजातः, स्त्रीपुंसयोरार्त्तवशुक्रं वीजं, वीजधर्म्मा सूक्ष्मदेही ह्यात्मा चेति चतुर्णां विधिपूर्व्वकं सान्निध्यात् यथोक्तेन विधिना संयोगाद् गर्भो ध्रुवं स्यादिति कश्चिद् व्याचष्टे, तदनेन विरोधान्न सम्यक्। ऋतुसमयं विना हि शोणिताभावात्। आर्त्तवशोणितप्रभवस्थानं गर्भाशय एव ऋतुशब्देनोच्यते, क्षेत्रं योनिः अम्बु शोणितं शुक्रञ्च वीजं प्रागुक्तम्। एभ्यस्तु चतुर्भ्यो गर्भाभिनिर्व्वृत्तिरेव भवति। ततोऽभिवृद्धिस्तु मातुराहारपरिणामजरसेनाङ्कुराभिनिर्व्वृत्तेरनन्तरं परिषेकजलेनेव। तस्मादङ्कुरोत्पत्तिकाले यज्जलम् अभिषिक्तं कारणं भवति तद्वदार्त्तवं न तु मात्राहारजरस इति न तत्रयोर्विरोधः। नन्वनैकान्तोऽत्र दृश्यते पुरुषस्य शुक्रं विनापि गर्भाभिनिर्व्वृत्तिः, उक्तञ्च सुश्रुते—यदा नार्य्यावुपेयातां वृषस्यन्त्यौ कथञ्चन। मुञ्चन्त्यौ शुक्रमन्योन्यमनस्थिस्तत्र जायते। इति। उच्यते, अत्र केनचित् न खलु शुक्रं विना, विना चार्त्तवं योनिञ्च, विना गर्भाशयं गर्भाभिनिर्व्वृत्तिः, अत एवाव्यापन्नशुक्रशोणितयोनिगर्भाशयसमुदायादवश्यं गर्भाभिनिर्व्वृत्तिर्भवति न तु गर्भस्यानिष्पत्तिरेषामन्यतमैकद्वित्रिहेतुतो यदि गर्भाभिनिर्व्वृत्तिस्तेन चानैकान्तिकत्वं कथमिति। अन्ये त्वाहुरविकृतगर्भोत्पत्तेरिदं हेतुचतुष्टयम्, स्त्रीद्वययोगे तु विकृतगर्भः, यतोऽभिहितमनस्थिस्तत्र जायत इति। वस्तुतस्तु अव्यापन्नशुक्रशोणितयोनिगर्भाशयसमुदाय एवैकान्तेन गर्भाभिनिर्व्वृत्तिहेतुस्तत्र स्त्रीद्वययोगेऽपि शुक्रशोणितयोगोऽस्ति अन्यथा विना शुक्रयोगं गर्भः स्यात्, पुंशुक्रकार्य्यमस्थ्यादिकमुक्तं स्त्रीशुक्रकार्य्यं नोक्तमप्युन्नेयमदृढनलकास्थ्यादिकं न पुंशुक्रकार्य्यं तावत् तेनानस्थिस्तत्र जायत इति दृढास्थ्यादिहीनः कोमलास्थ्यादिमान् पुरुषो जायते। एतेन पुंशुक्रकार्य्यवचनेन स्त्रीशुक्रकार्य्यमपि तत् सर्व्वं

सम्प्रति गर्भोत्पत्तिक्रममाह—यथोक्तेनेत्यादि। यथोक्तेन विधिनेति पञ्चकर्म्मादिना उक्तेनेति।

कलितं रञ्जनं समुदितगुणमुपनिपातादेव रागमभिनिर्व्वर्त्तयति, तद्वत् । यथा वा क्षीरं दध्नाभिषुतमभिषवणाद् विहाय स्वभावम् आपद्यते दधिभावं, शुक्रं तद्वत् । एवमभिनिर्व्वर्त्तमानस्य गर्भस्य तु स्त्रीपुरुषत्वे हेतुः पूर्व्वमुक्तः ॥ १२ ॥

कोमलत्वेन भवतीत्युक्तं भूनम् । तत्रापि शुक्राधिक्ये पुमान् आर्त्तवाधिक्ये स्त्रीति व्याख्येयम् । यत् पुनरुक्तं योषितोऽपि स्रवत्येव शुक्रं पुंसः समागमे । तत्र गर्भस्य किञ्चित् तु करोतीति न चिन्त्यते ॥ इति, तदनार्षम् । अवश्यं हि चिन्तनीयं स्त्रीशुक्रकार्य्यम् अन्यथानस्थिकापत्यजन्मवचनं युञ्जन्त्यौ शुक्रमन्योन्यमितिवचनञ्च व्यर्थं स्यात् । स्त्रिया आर्त्तवप्रवृत्तिमात्रादनस्थिकापत्यजन्मप्रसङ्गात् । शुक्रन्तु स्त्रिया वा पुंसो वा यदि न व्यापन्नं भवति, योनावदुष्टायामप्रदुष्टे च गर्भाशये शोणितेन संसर्गमेति, तदा तदेवादुष्टयोनिगर्भाशयगतार्त्तवसंसृष्टं शुक्रं जीवोऽवश्यमवक्रामतीति । तत्र पुंसः शुक्रञ्चेत् तदा सर्व्वसम्पूर्णाङ्गो भवति गर्भः । स्त्रियाः शुक्रञ्चेत् तदा पुंसः शुक्रकार्य्यकेशश्मश्रुनखास्थिप्रभृतिदृढाङ्गहीनो भवति । यतः शुक्रमात्रस्यैव कार्य्याणि केशादीनि तत्र पुंशुक्रकार्य्याणि दृढानि केशादीनि, स्त्रीशुक्रकार्य्याणि पुनर्मृदूनि नलकास्थ्यादीनि न दृढास्थ्यादीनि । तेनानस्थिस्तत्र जायते इत्यत्रानस्थिरल्पकोमलास्थिरित्यर्थः । स्त्रियाः स्वपरान्यतरशुक्रं स्वशोणितसंसृष्टं जीवावक्रान्तौ हेतुः । सुश्रुते—ऋतुस्नाता तु या नारी स्वप्ने मैथुनमावहेत् । आर्त्तवं वायुरादाय कुक्षौ गर्भं करोति हि ॥ मासि मासि विवर्द्धेत गर्भिण्या गर्भलक्षणम् । कललं जायते तस्या वर्जितं पैतृकैर्गुणैः ॥ इति दर्शनात् ; अत्र कललं सिंघाणप्रख्यं, पैतृकैर्गुणैः केशादिभिः दृढैरङ्गैः । न तु कोमलास्थ्यादिभिर्वर्जितम् ।

अथात्रैकान्तेन गर्भाभिनिर्वृत्तौ दृष्टान्तमाह—यथेत्यादि । रञ्जनं रागाधानहेतुः संस्कारद्रव्यम् उपनिपातात् स्रक्षणात् समुदितगुणं रागमभिनिर्व्वर्त्तयति । दृष्टान्तान्तरमाह—यथा वेत्यादि । दध्नाभिषुतं दध्ना सन्धानीकृतम्, तद्वत् शुक्रमित्यन्वयः । ननु शुक्रं किं शोणितेनाभिसन्धानीभूतं स्वभावं

रञ्जनं रागद्रव्यम् । दध्यभिषुतमिति दध्ना स्तोकमात्रेण मिश्रितम् । आपद्यते दधिभावमिति दधित्वमापद्यते । तद्वदिति यथा क्षीरं दधि भवति रञ्जनं रागो वा भवति तथा शुक्रं गर्भमभि-

यथा हि वीजमनुपततमृत्तं स्वां स्वां प्रकृतिमनुविधीयते व्रीहिर्वा व्रीहित्वं यवो वा यवत्वम्, तथा स्त्रीपुरुषावपि यथोक्तं हेतुविभागमनुविधीयेते। तयोः कर्म्मणा वेदोक्तेन विवर्त्तनम्

शुक्रत्वरूपं विहाय क्षीरस्याभिसन्धानदधिभाववत् स्वाभिसन्धानार्त्तवभावम् आपद्यते इति चेत् न, दध्नाभिषुतमित्यत्र दध्नेति पदं येन सन्धीयते यत्तद्द्रव्यं सन्धानभावमापद्यते इति ख्यापनार्थं प्राधान्येनोपलक्षणान्न तु दधिमात्रं, तेन तक्राद्यम्लद्रव्येणाप्यभिषुतं क्षीरं स्वभावं विहाय तदुभयं दधिभावमेवापद्यते न तु तक्राद्यम्लद्रव्यभावं, तद्वदेव शुक्रं शोणिताभिषुतं तद्द्रव्यं गर्भभावमापद्यते विहाय शुक्रभावमित्यर्थः। एवमभिनिर्व्वर्त्तमानस्येत्यादि। एवमुक्तप्रकारेणोत्पद्यमानस्य गर्भस्य सद्योगृहीतगर्भलक्षणं व्यक्तगर्भलक्षणञ्च पूर्व्वमुक्तम्। सुश्रुतेऽपि— तत्र सद्योगृहीतगर्भाया लिङ्गानि। श्रमो ग्लानिः पिपासा सक्थिसदनं शुक्रशोणितयोरवबन्धः स्फुरणञ्च योनेः। स्तनयोः कृष्णमुखता रोमराज्युद्गमस्तथा। अक्षिपक्ष्माणि चाप्यस्याः संमील्यन्ते विशेषतः॥ अकामतश्छर्दयति गन्धादुद्विजते शुभात्। प्रसेकः सदनञ्चापि गर्भिण्या लिङ्गमुच्यते॥ तदा-प्रभृत्येव व्यायामं व्यवायमपतर्पणमतिकर्षणं दिवास्वप्नं रात्रिजागरणं शोकं यानारोहणं भयमुत्कटुकासनञ्चैकान्ततः स्वेदादिक्रियां शोणितमोक्षणञ्चाकाले वेगविधारणञ्च न सेवेत। दोषाभिघातैर्गर्भिण्या यो यो भागः प्रपीड्यते। स स भागः शिशोस्तस्य गर्भस्थस्य प्रपीड्यते॥ इति। तथा, तथोक्तरूपेणाभिनिर्व्वर्त्तमानस्य गर्भस्य स्त्रीपुरुषत्वे हेतुः पूर्व्वमतुल्यगोत्रीये रक्तेन कन्यामधिकेन पुत्रं शुक्रेणेत्यनेनोक्तः॥ १२॥

गङ्गाधरः—स च स्त्रीपुरुषत्वहेतुः कीदृशत्वेनोक्तः किमेकान्ततोऽप्रतिहननीयत्वेन किं कारणान्तरेण प्रतिहननीयत्वेनेत्याशङ्क्याह—यथा हीत्यादि। अनुविधीयते स्वस्वप्रकृत्यनुरूपेणाङ्कुरभावमापद्यते। तद् विवृणोति—व्रीहिरित्यादि। तथा स्त्रीपुरुषयोरपि स्त्रीत्वे हेतुः शोणिताधिक्यं पुरुषत्वे हेतुः शुक्राधिक्यं नपुंसकत्वे द्वयोः साम्यम् इति। यथोक्तं हेतुविभागं स्त्रीहेतुः शोणिताधिक्यं स्त्रीत्वमनुविधीयते।

निर्व्वर्त्तयति। शुक्रं यथोक्तशुक्रमित्यर्थः। सम्प्रति स्त्रीपुरुषत्वे च रक्ताधिकत्वं शुक्राधिकत्वञ्च पूर्व्वोक्तं हेतुमनूद्य वैदिकं पुत्रजनकं विधानान्तरं वक्तुमाह—एवमित्यादि॥ ११।१२॥

चक्रपाणिः—यथोक्तं हेतुविभागमनुविधीयेते इति "रक्तेन कन्यामधिकेन पुत्रम्। शुक्रेण"

उपदिश्यते प्राग् व्यक्तीभावात् प्रयुक्तेन । सम्यक् कर्म्मणां हि देशकालसम्पदुपेतानां नियतमिष्टफलत्वं तथेतरेषामितरत्वम् । तस्मादापन्नगर्भां स्त्रियमभिसमीक्ष्य प्राग् व्यक्तीभावाद् गर्भस्य पुंसवनमौषधमस्यै दद्यात् ॥ १३ ॥

गोष्ठे जातस्य न्यग्रोधस्य प्रागुत्तराभ्यां शाखाभ्यां शुङ्गे अनुपहते आदाय द्वाभ्यां धान्यमाषाभ्यां सम्पदुपेताभ्यां गौर-

पुरुषहेतुः शुक्राधिक्यं पुरुषत्वमनुविधीयते। नपुंसकहेतुस्तयोः साम्यं नपुंसकत्वमनुविधीयते। तयोः स्त्रीपुरुषयोरात्तवरेतसोर्हिलोविवर्त्तनमन्यथात्वेन प्रवर्त्तनं शोणिताधिक्यमपि समशोणितशुक्रमपि च वीजं स्त्रीनपुंसकं न जनयित्वा वीजं पुत्रं जनयिष्यत्येकान्तेन इतिरूपप्रवर्त्तनं वेदोक्तेन कर्म्मणा उपदिश्यते। कदोपदिश्यते इत्यत आह—प्राग् व्यक्तीभावाद् इति। स्त्रीत्व-पुंस्त्व-नपुंसकत्व-लिङ्गानां व्यक्तीभावात् पूर्व्वकालम्, सर्व्वम् अर्वाक् त्रिमासात् प्रयुक्तेन कृत-प्रयोगेण वेदोक्तकर्म्मणा विवर्त्तनं तयोरुपदिश्यते। तयोरिति सप्रयोजनत्वेन स्त्रीनपुंसकवीजयोः पुंस्त्वरूपेण विवर्त्तनं कर्त्तव्यं, न तु क्लीवस्य स्त्रीरूपस्य वा हेतुविवर्त्तनमिष्यते। ननु कुतो हेतुं विवर्त्तयति कर्म्मणेत्यत आह—सम्यगित्यादि। तथेतरेषामिति असम्यक्कर्म्मणामदेशे चाकाले च असम्प-दुपेतानामितरत्वम् अनिष्टफलत्वमित्यर्थः। तस्मादापन्नगर्भां गर्भमापन्नाम् अभि-समीक्ष्य गर्भस्य लिङ्गव्यक्तीभावात् पूर्व्वं तृतीयमासं यावत्, अस्यै गर्भमापन्नायै पुंसवनं पुमांसं सूयतेऽनेनेति पुंसवनमौषधं दद्यात् ॥ १३ ॥

<u>गङ्गाधरः</u>—ननु किं पुंसवनं तदाह—गोष्ठे जातस्येत्यादि। न्यग्रोधस्य वृक्षस्य पूर्व्वस्थशाखाया एकां शुङ्गामुत्तरस्थशाखायाश्चैकामिति शुङ्गे द्वे अनुपहते

इत्यादिग्रन्थोक्तविभागं स्त्रीपुरुषजनकमनुविधीयते। वेदोक्तेनायुर्व्वेदोक्तेन। प्राग् व्यक्तीभावादिति यावत् स्त्रीत्वं पुंस्त्वं वा गर्भस्य व्यक्तं भवति तावदेव, तद् वक्ष्यमाणं कर्म्म लिङ्गपरिवृत्तिकरं भवति। व्यक्तिस्तु द्वितीयमासे भवति। यदुक्तम्—"द्वितीये मासे घनः सम्पद्यते," इति। किंवा तृतीये मासे अङ्गप्रत्यङ्गाभिव्यक्तीभावो ज्ञेयः। द्वितीये तु मासे ग्रन्थ्यादिरूपगर्भप्रत्यङ्गव्यक्तीभावो न वक्तव्यः। तेन वक्ष्यमाणं कर्म्म मासद्वयं यावत् कर्त्तव्यम्। प्रयुक्तेनेति पूर्व्वेण सम्बध्यते। नियतं निश्चितम्। तथेतरेषामितरत्त्वमिति देशकालविगुणानामनिष्टकारणत्वान्निश्चयेयमित्यर्थः। पुंसवनमिति पुंस्त्व-कारकं कर्म्म। गोष्ठो गवां विश्रामस्थानम्। अतः स्थानादिविशेषपरिग्रह एव फलदो भवतीति

सर्षपाभ्यां वा सह दध्नि प्रक्षिप्य पुष्ये नक्षत्रे पिबेत्। तथैव अपरान् जीवकर्षभकापामार्गसहचरकल्कांश्च युगपदेकैकशो यथेष्टं वाप्युपसंस्कृत्य पयसा, कुड्यकीटकं मत्स्यकञ्च * उदकाञ्जलौ प्रक्षिप्य पुष्येण पिबेत्। तथा कनकमयान् राजतानायसांश्च पुरुषकानग्निवर्णान् अणुप्रमाणान् दध्नि पयसि उदकाञ्जलौ वा प्रक्षिप्य पिबेदनवशेषतः पुष्येण। पुष्येणैव च पिष्टस्य पच्यमानस्योष्माणमुपघ्राय तस्यैव च पिष्टस्योदक-संसृष्टस्य रसं देहलीमुपनिधाय दक्षिणे नासापुटे स्वयमासिञ्चेत्

अभग्ने आदाय द्वाभ्यां धान्यमाषाभ्यां शमीधान्यरूपमाषाभ्यां सम्पदुपेताभ्याम् अक्षुण्णाभ्यां गौरसर्षपाभ्यां सम्पदुपेताभ्यां द्वाभ्यां श्वेतसर्षपाभ्यां वा सह दध्नि प्रक्षिप्य पुष्ये नक्षत्रे पिबेत्। इत्येको योगः। तथापरान् जीवकर्षभादीन् चतुरो युगपत् मिलित्वा एकः, एकैकशो वा चत्वारः। यथेष्टं वा अन्यतम-द्वयेन षड् वा योगा इति। तथान्यतमत्रयेण चत्वार इति दश पञ्च योगानपरान् पयसोपसंस्कृत्य किञ्चित् पक्त्वा पुष्येण पिबेत्। तथा कुड्यकीटकं वल्वीनामकीटं उदकाञ्जलौ प्रक्षिप्य पुष्येण पिबेत्। तथा मत्स्यकं क्षुद्रमत्स्यकमेकमुदकाञ्जलौ प्रक्षिप्य पुष्येण पिबेत्। तथा कनकमयान् स्वर्णनिर्म्मितान् राजतान् रौप्यनिर्म्मितान् आयसान् लौहनिर्म्मि-तान् वा पुरुषकान् पुरुषमूर्त्तियुक्तान् अणुप्रमाणान् भक्षणयोग्यसूक्ष्मपरिमाणान् अग्निवर्णान् अग्नौ दग्ध्वा अग्निवर्णान् कृत्वा दध्नि गव्ये पयसि दुग्धे गव्ये निर्व्वा-पितान् उदकाञ्जलौ वा प्रक्षिप्य पुष्येण अनवशेषतो निःशेषेण पिबेत्। अथवा पुष्येणैव च नक्षत्रेण पिष्टस्य पिष्टकविशेषस्य उष्माणम् औष्ण्यमुपघ्राय घ्रात्वा तस्योष्णपिष्टस्य जलसेकेन जलसंसृष्टस्य रसं तदीयजलं देहल्यां निधाय

वचनादुन्नीयते, नात्र तादृशा युक्तयः प्रभवन्ति। 'धान्यमाष'शब्देन व्रीहिमाषं ग्राहयन्ति सुवर्णमाषञ्च व्याचक्षते। गौरसर्षपः श्वेतसर्षपः। पुष्येणेति पुष्यानक्षत्रेण। यथेष्टमित्यनेन द्विशस्त्रिशो वा पिबेदित्यपि दर्शयति। कुड्यकीटः 'कवडिगणा' इति ख्यातः। किंवा ज्येष्ठी कुड्य-कीटः। जतूकर्णेऽप्यत्र 'भित्तिमत्स्यः' इति पठ्यते। भित्तिमत्स्यशब्देन च पाश्चात्ये 'ज्येष्ठी' उच्यते। मत्स्यकोद्रः मत्स्यहा मत्स्यकेति ख्यातः। देहली गृहद्वाराधःकाष्ठम्, तत्रोपरि

* मत्स्यकोद्रञ्चेति चक्रः।

पिचुना। इति पुंसवनानि। यच्चान्यदपि ब्राह्मणा ब्रूयुराप्ता वा पुंसवनमिष्टं, तच्चानुष्ठेयम्॥ १४॥

अत ऊर्द्ध्वं गर्भस्थापनानि व्याख्यास्यामः। ऐन्द्री ब्राह्मी शतवीर्य्या सहस्रवीर्य्यामोघाव्यथा शिवा बलारिष्टा वाट्यपुष्पी

प्राङ्गणस्य समीपे निधाय तां देहलीमुपनिधाय गृहीत्वा दक्षिणे नासापुटे छिद्रे पिचुना तूलकवर्त्त्या गर्भिणी नारी स्वयमासिञ्चेन्न त्वन्योऽन्येनेति। अन्यान्यपि पुंसवनान्यनुमन्तुमाह—यच्चान्यदपीत्यादि। सुश्रुतेऽप्युक्तं—लब्धगर्भायाश्चैतेष्वहःसु लक्षणावटशुङ्गासहदेवाविश्वदेवानामन्यतमं क्षीरेणाभिषुत्य त्रींश्चतुरो वा बिन्दून् दद्याद् दक्षिणे नासापुटे पुत्रकामायै न च तान् निष्ठीवेत् इति। अत्र लक्षणालक्षणन्तु—पुत्रकाकाररक्ताल्पबिन्दुभिः लाञ्छितच्छदा। लक्षणा पुत्रजननी वस्तगन्धाकृतिर्भवेत्॥ ताञ्च शरत्काले पुष्पफलोपेतां दृष्ट्वा शनिवारसन्ध्यायां तस्याश्चतुर्भागेषु खदिरकीलकं निखाय अपरेद्युर्राह्णि मूलपुष्ययोगे गते दिवाकरे मन्त्रञ्च जपित्वा समानवर्णवत्साया गोः क्षीरेण यथाविधि नस्यं दद्यात्। वटशुङ्गो वटप्ररोहः। सहदेवा बलाभेदः पीतपुष्पा काञ्चरीति लोके। विश्वदेवा गाङ्गेरुकी गुड़शर्करेति लोके, अन्ये सितपुष्पां बलामाहुः। अभिषुत्य क्षीरेण सन्धानीकृत्य न तान् निष्ठीवेदिति न पुनत्कुर्य्यात्। चकारादलब्धगर्भायाः सर्व्वेषामेव लक्षणादीनां नस्यदानं सहस्राभिहुतं गर्भग्रहणाय पश्चाद् ग्राम्यधर्म्मसेवनमिति। तदुक्तं तन्त्रान्तरे। पूर्व्वमौषधं सहस्राभिहुतं कृतमङ्गलदेशे गोः क्षीरेण पेषयित्वा तस्मात् त्रीन् बिन्दून् दक्षिणे नासापुटे दद्यात् न निष्ठीवेत् तान् कण्ठप्राप्तान्। सायञ्च दिनानि पयसौदनम् अश्नीयात् तदूर्द्ध्वं ग्राम्यधर्म्मसेवनमिति॥ १४॥

गङ्गाधरः—अत ऊर्द्ध्वमित्यादि। ऐन्द्री गोरक्षकर्कटी, ब्राह्मी ब्राह्मणयष्टी, शतवीर्य्या सहस्रवीर्य्या श्वेतकृष्णदलभेदेन दूर्व्वाद्वयम्, अमोघा पाटला, अव्यथा

निधाय शिर इति शेषः। किंवा आत्मानमेव देहल्यामुपरि विधायेति मन्तव्यम्। यदुक्तं जतूकर्णे—"देहल्यामासीना" इति॥ १३।१४॥

चक्रपाणिः—सम्प्रति स्थितस्य गर्भस्य गर्भोपघातकप्रभावखण्डकत्वेन यत् पुनः स्थितिकारकम्, तद् गर्भस्थापनमुच्यते, अत ऊर्द्ध्वमित्यादिना। ऐन्द्री गोरक्षकर्कटी। शतवीर्य्यासहस्रवीर्य्ये

विश्वक्सेनकान्ता च, आसामोषधीनां शिरसि दक्षिणेन पाणिना धारणम्, एताभिश्चैव सिद्धस्य पयसः सर्पिषो वा पानम्, एताभिश्चैव पुष्ये पुष्ये स्नानम्, सदा चैताभिः समालभेत। तथा सर्व्वासां जीवनीयोक्तानामोषधीनां सदोपयोगस्तैस्तैरुपयोगविधिभिः। इति गर्भस्थापनानि व्याख्यातानि भवन्ति॥ १५॥

गर्भोपघातकरास्त्विमे भावा भवन्ति। तद् यथा उत्कटविषमस्थानकठिनासनसेविन्याः, वातमूत्रपुरीषवेगान् उपरुन्धत्याः, दारुणानुचितव्यायामसेविन्याः, तीक्ष्णोष्णातिमात्रसेविन्याः,

गुडूची, शिवा हरीतकी, अरिष्टा कटुकी, वाट्यपुष्पी पीतवला, विश्वक्सेनकान्ता शतमूली; आसामोषधीनां धारणं शिरसि दक्षिणेन पाणिना कार्यं गर्भिण्या। एताभिरैन्द्र्यादिभिरोषधीभिः पयसोऽष्टमांशाभिः कल्करूपाभिः पयसोऽपि चतुर्गुणेन जलेन पयोऽवशेषः पाकस्तस्य पयसः पानम्। तथा चैताभिर्मिलिताभिरैन्द्र्यादिभिरोषधीभिर्घृतात् पादांशाभिः कल्करूपाभिर्घृताच्चतुर्गुणजलेन च पक्कस्य सर्पिषो वा पानम्। पुष्ये पुष्ये प्रतिपुष्यानक्षत्रे एताभिरैन्द्र्यादिभिः शृतजलेन स्नानम्। सदा च प्रत्यहञ्चैताभिरैन्द्र्यादिभिरोषधिभिः समालभेत उद्वर्त्तनं कुर्यात्। तथा सर्व्वासां दशानामेव, न न्यूनानां, जीवनीयोक्तानाम्। तैस्तैर्दक्षिणेन पाणिना शिरसा धारणं, ताभिः सिद्धस्य पयसः सर्पिषो वा पानम्, पुष्ये पुष्ये च ताभिः सिद्धजलेन स्नानम्, प्रत्यहञ्च जीवनीयैरुद्वर्त्तनमित्येतैर्विधिभिः। इति गर्भस्य स्थापनानि॥ १५॥

गङ्गाधरः—गर्भोपघातकरास्त्वित्यादि। दारुणो व्यायामोऽतिधावनादिः। अनुचितो व्यायामोऽनभ्यस्तव्यायामः। तीक्ष्णस्य मरिचविषजयपालादेः। उष्णस्य वीर्य्यतो गुड़त्र्यर्कादेः, स्पर्शतो वह्न्यादेः, अतिसेविन्याः। अल्पाल्पसेवनन्तु

दूर्व्वाद्वयम्। अमोघा पाटला। अव्यथा गुडूची। अरिष्टा कटुरोहिणी। वाट्यपुष्पी पीतबला। विश्वक्सेनकान्ता प्रियङ्गुः॥ १५॥

प्रमिताशनसेविन्या गर्भो म्रियतेऽन्तः कुक्षेः, अकाले वा स्रंसते शोषी वा भवति। तथाभिघातप्रपीड़नैः श्वभ्रकूपप्रपातदेशावलोकनैर्वा अभीक्ष्णं मातुः प्रपतत्यकाले, तथातिमात्रसंक्षोभिभिर्यानैरप्रियातिमात्रश्रवणैर्वा। प्रततोत्तानशायिन्याः पुनर्गर्भस्य नाभ्याश्रया नाडी कण्ठमनुवेष्टयति। विवृतशायिनी नक्तञ्चारिणी चोन्मत्तं जनयति, अपस्मारिणं पुनः कलिकलहाचारशीला, व्यवायशीला दुर्व्वपुषम् अह्रीकं स्त्रैणं वा, शोकनित्या भीतमपचितमांसमल्पायुषं वा, अभिध्यात्री परोपतापिनमीर्ष्युं स्त्रैणं वा, स्तेना त्वायासबहुलमतिद्रोहिणमकर्म्म-

प्रमिताशनमत्यल्पमिताशनम्। कुक्षेर्गर्भाशयस्यान्तर्मध्ये म्रियते। स्रंसतेऽधस्तात् पतति। शोषी शुष्करूपो वा भवति। अभिघातोऽभिहननं दण्डादिभिः, प्रपीड़नम् उपमर्द्दनादिकम्। श्वभ्रदेशः गर्त्तयुक्तदेशस्तत्रापि अतिगर्त्तत्वात् कूपरूपो देशः। प्रपातदेशः प्रपतत्यस्मादिति पर्व्वतादुच्चदेशः। तेषां मातुरभीक्ष्णम् आलोकनेनैवाकाले गर्भः प्रपतति। अतिमात्रसंक्षोभिभिरतिमात्रगात्रचालनकरैर्यानैः, अप्रियाणां शब्दानामतिमात्रश्रवणैः प्रपतत्यकाले इत्यन्वयः। प्रततं निरन्तरमुत्तानशायिन्याः पुनर्गर्भस्य नाभ्याश्रया नाड़ी गर्भस्य कण्ठमनुवेष्टयति। विवृतशायिनी हस्तपादौ सर्व्वाङ्गञ्च विस्तीर्य्य शयनशीला, नक्तं रात्रौ चारिणी, कलिर्वाचा कलहः, कलहः शरीरेण कलहस्तौ शीलयति सततं करोति या सा कलिकलहशीला अपस्मारिणं जनयति। व्यवायशीला प्रायेण गर्भवती व्यवायं शीलयति या सा दुर्व्वपुषं दुर्निन्दितदेहमपत्यं जनयति अह्रीकमलज्जं स्त्रैणं स्त्रीवशं वा। शोकनित्या शोकः सततो यस्याः सा भीतमपत्यमपचितमांसं कृशमपत्यं वाल्पायुषमपत्यं वा जनयतीत्यन्वयः। अभिध्यात्री परस्वविषयं सततं वाञ्छन्ती। स्तेना चौर्य्यशीला गर्भवती।

चक्रपाणिः—बालस्याचिरजातस्यापि 'गर्भ'व्यपदेशो भवतीति। तेन कुक्षेर्वहिरपि मरणसम्भवे 'अन्तः कुक्षेः' इति विशेषणमुपपन्नम्। प्रततोत्तानशायिनी उत्तानशयनशीला। विवृते अनावृते, विवृते तु शायिनी तथा नक्तञ्चारिणी च रक्षःप्रभृतिभूताभिगमनीया भवति। ततश्च भूतैरभिभूतो गर्भ उन्मत्तो भवतीति युक्तम्। कलिर्वाचा, कलहस्तु शारीरकलहः। स्त्रैणं स्त्रीवशम्। अभिध्यात्री मनसा

शीलं वा, अमर्षिणी चण्डमौपाधिकमसूयकं वा, स्वप्ननित्या तन्द्रालुमबुधमल्पाग्निं वा, मद्यनित्या पिपासालुमनवस्थितचित्तं वा, गोधामांसप्रिया शार्करिणम् आश्मरिलं शनमेंहिणं वा। वराहमांसप्राया रक्ताक्षं क्रथनमतिपरुषरोमाणं वा, मत्स्य-मांसनित्या चिरनिमिषं स्तब्धाक्षं वा, मधुरनित्या प्रमेहिणं मूकमतिस्थूलं वा। अम्लनित्या रक्तपित्तिनं त्वगक्षिरोगिणं वा, लवणनित्या शीघ्रवलिपलितखालित्यरोगिणं वा, कटुकनित्या दुर्ब्बलमल्पशुक्रमनपत्यं वा, तिक्तनित्या शोषिणमबलमपचितं वा, कषायनित्या श्यावम् आनाहिनमुदावर्त्तिनं वा। यद्‌ यच्च यस्य यस्य व्याधेर्निमित्तमुक्तं तत् तदासेवमानान्तर्व्वत्नी तन्निमित्तविकारबहुलमेवापत्यमुपजनयति। पितृजास्तु शुक्रदोषा

अमर्षिणी क्रोधशीला। चण्डं क्रोधशीलम्। औपाधिकमुपाधिश्छद्मचरणं तेन व्यवहरतीत्यौपाधिकं छद्मचारिणम्, स्वप्ननित्या सततनिद्राशीला तन्द्रालुं तन्द्रायुतम, मद्यनित्या सततमद्यपा अनवस्थितचित्तं चञ्चलचित्तम्। गोधा स्वर्णगोधिका। शार्करिणं शर्कराख्यरोगयुक्तम् आश्मरिलमश्मरीरोगयुक्तं, वराहमांसप्राया प्रायेण वराहमांसाशना, क्रथनं क्रथयति अकस्मादुच्छ्वास-रोधं करोति तं तथा, मत्स्यमांसनित्या मत्स्यनित्या मांसनित्या वा मत्स्यमांसोभयनित्या वा चिरनिमिषं चिरेण निमेषक्षेपो यस्य तं तथा, स्तब्धाक्षमतिचिरनिमिषम्, त्वगक्षिरोगिणं त्वग्रोगिणमक्षिरोगिणं वा, खालित्य-मिन्द्रलुप्तं टाक् इति लोके। अपचितं कृशम्। श्यावं धूम्रवर्णम्। आनाहिनं पुरीषबन्धकोष्ठम्। अनुक्तमुपसंहरन्नाह—यच्चेत्यादि। अन्तर्व्वत्नी गर्भिणी। ननु मातुरेवाहाराचारनिमित्तं किं गर्भस्योपहननं न पितुरित्यत आह—

द्रोहणशीला। औपाधिकं शाठ्यप्रचारिणम्। क्रथनमकस्मादुच्छ्वासावरोधम्। मधुरनित्येति गर्भिणीविहितं क्षीरं विहायान्यमधुराण्यनुसेविनी बोद्धव्या, क्षीरस्य विहितत्वेन प्राशस्त्यम्। तत्र सात्म्यानामपि रसानामत्यर्थोपयोगे दोषमभिधाय यत् पुनर्मद्यादीनामत्यर्थसेवने पृथग् दोषं ब्रूते, तत् प्रभावस्य दोषविशेषाभिधानार्थमिति ज्ञेयम्। यद्‌वस्तुसेवया ये च विकारा गर्भस्योचितनिदाना दृश्यन्ते, ते तावदुचितोत्पादा एव। यथा—निद्रातिसेवया तन्द्रालुः, अम्लेन

मातृजैरपाचारैर्व्याख्याताः । इति गर्भोपघातकरा भावा व्याख्याताः ॥ १६ ॥

तस्मादहितानाहारविहारान् प्रजासम्पदमिच्छन्ती विशेषेण वर्ज्जयेत् । साध्वाचारा चात्मानमुपचरेद्धिताभ्यामाहारविहाराभ्यामिति ॥ १७ ॥

पितृजास्त्वित्यादि । शुक्रदोषा इत्यनेन यावत् पितुरपचारः शुक्रं न दूषयति, तावदपचारो न गर्भोपघातायोपपद्यते इति ख्यापितम् । मातृजैः अपचारैरुक्तैर्यो मातुरपचारैर्गर्भोपघातः पितुरपि तैरपचारैर्दुष्टशुक्रं यं गर्भमारभते स गर्भ उपहन्यते इत्यर्थः ॥ १६ ॥

गङ्गाधर—तस्मादिति । गर्भोपघातात् । अहितान् उक्तानाहारविहारान् अपरांश्च तन्त्रान्तरोक्तान् पुरुषो विशेषेण स्त्री च वर्ज्जयेत् । साध्वाचारा चेति— गर्भिणी प्रथममासात् प्रभृति साध्वाचारा च मङ्गलशान्तिदेवताब्राह्मणगुरुपरा नित्यं प्रहृष्टा शुचिरलङ्कृता शुक्लवसना च सती हिताभ्यामाहारविहाराभ्याम् आत्मानमुपचरेदिति। सुश्रुतेऽप्युक्तं— गर्भिणी प्रथमदिवसात् प्रभृति नित्यं प्रहृष्टा शुच्यलङ्कृता शुक्लवसना शान्तिमङ्गलदेवताब्राह्मणगुरुपरा च भवेत् । मलिनविकृतहीनगात्राणि न स्पृशेत् । दुर्गन्धदुर्द्दर्शनानि परिहरेदुद्वेजनीयाश्च कथाः । शुष्कं पर्य्युषितं कुथितं क्लिन्नञ्चान्नं नोपभुञ्जीत । वहिर्निष्क्रमणं शून्यागारं चैत्यश्मशानवृक्षाश्रयान् क्रोधभयसङ्करांश्च भावानुच्चैर्भाष्यादिकं परिहरेत्, यानि च गर्भं व्यापादयन्ति । न चाभीक्ष्णं तैलाभ्यङ्गोत्सादनादीनि निषेवेत । न चायासयेच्छरीरं, पूर्व्वोक्तानि च परिहरेत् । शयनासनं मृद्वास्तरणं नात्युच्चमपाश्रयोपेतमसम्बाधं विदध्यात् । हृद्यं द्रवं मधुरप्रायं स्निग्धं दीपनीयं संस्कृतञ्च भोजनञ्च भोजयेत् । सामान्यमेतत् आप्रसवात् ।

वातपित्तादियुक्त इत्यादि । ये तु हेतुसदृशविकारा गर्भस्य दृश्यन्ते, यथा गोमांसेन शर्कराश्मर्यादि, तेऽपि द्रव्यप्रभावादेव ज्ञेयाः । यद्यपि गर्भग्रहणात् प्रागपि स्त्रियापि अपथ्यसेवार्त्तवदुष्टिद्वारा गर्भे विकारं जनयति, तथा पुरुषस्यापथ्यसेवाशुक्रदुष्टिद्वारा गर्भे दुष्टिं जनयतीति इहैव "पितृजास्तु" इत्यादिना ग्रन्थे वक्तव्यम्, तथापि गृहीतगर्भाया एव स्त्रिया अपचाराविशेषेणात्यन्तप्रधानाद् गर्भदुष्टिकरा भवन्तीति कृत्वा 'तत् तदासेवमानान्तर्वत्नीत्याद्युक्तम् । मातृजैरपचारैर्व्याख्याता इति मातुरपचारानुरूपा गर्भव्याधयो भवन्ति, एवं पितुरपि व्यवायात् प्रागपचारेणेह शुक्रदुष्टरपचारानु-

व्याधींश्चास्या मृदुमधुरशिशिरसुखसुकुमारप्रायैरौषधाहारोपचारैरुपचरेत्। न चास्या वमनविरेचनशिरोविरेचनानि प्रयोजयेत्, न रक्तमवसेचयेत्, सर्व्वकालञ्च नास्थापनमनुवासनं वा कुर्य्यादन्यत्रात्ययिकाद् व्याधेः। अष्टमं मासमुपादाय वमनादिसाध्येषु पुनर्विकारेष्वात्ययिकेषु मृदुभिर्वमनादिभिः तदनु-

विशेषतस्तु गर्भिणी प्रथमद्वितीयतृतीयमासेषु मधुरशीतद्रवप्रायमाहारमुपसेवेत। विशेषतस्तु तृतीये षष्टिकौदनं पयसा भोजयेत्। चतुर्थ दध्ना, पञ्चमे पयसा, षष्ठे सर्पिषा चेत्येके। चतुर्थे पयोनवनीतसंसृष्टमाहारयेज्जाङ्गलमांससहितं हृद्यमन्नं भोजयेत्। पञ्चमे क्षीरसर्पिःसंसृष्टं, षष्ठे श्वदंष्ट्रासिद्धस्य सर्पिषो मात्रां पाययेद् यवागूं वा। सप्तमे सर्पिः पृथक्पर्ण्यादिसिद्धम्। एवमाप्याय्यते गर्भः। अष्टमे बदरोदकेन बलातिबलाशतपुष्पापललपयोदधिमस्तुतैललवणमदनफल-मधुघृतमिश्रेणास्थापयेत्, पुराणपुरीषशुद्ध्यर्थम् अनुलोमनार्थञ्च वायोः। ततः पयोमधुरकषायसिद्धेन तैलेनानुवासयेदनुलोमे हि वायौ सुखं प्रसूयते निरुपद्रवा च भवति। अत ऊर्द्ध्वं स्निग्धाभिर्यवागूभिर्जाङ्गलरसैश्चोपक्रमेत् आप्रसवकालात्। एवमुपक्रान्ता स्निग्धा बलवती सुखमनुपद्रवा प्रसूयते इति ॥ १७ ॥

गङ्गाधरः—अथास्या गर्भिण्या ज्वरादीनामुपक्रममाह—व्याधींश्चास्या इत्यादि। सुकुमारं क्लेशजनकवर्ज्जं मृद्वादयः प्राया बहुला यत्र तैस्तथा। तथा हि ज्वरादीनां व्याधीनां स्वस्वाधिकारे वक्ष्यमाणा ये त्वौषधाहारोपचारास्तेषु मध्ये ये त्वौषधाहारोपचारा मृदुमधुरशिशिरसुखसुकुमारप्रायास्तैर्ज्वराधिकारोक्तैरस्याः गर्भिण्या ज्वरमुपचरेत् रक्तपित्ताधिकारोक्तै रक्तपित्तमित्येवं यथास्वाधिकारोक्तैर्मृद्वाद्यौषधाहारोपचारैरस्याः सर्व्वान् व्याधीनुपचरेदित्यर्थः। न चेत्यादि स्पष्टम्। न रक्तमित्याद्यपि स्पष्टम्। अन्यत्रेति अष्टममासादिषु विधेयतया वक्ष्यमाणादन्यत्र। अष्टमं मासमित्यादि। यदि चाष्टमादिमासेषु वमनादिकं विना न साध्यव्याधिप्रशमस्तदा आशुप्रतिकारार्थं वमनादिकं न विधेयम्। यदि चात्ययिकश्च व्याधिः स्याद्वमनादिभिरेव साध्यो न तु शमनादिभिः

रूपा व्याधयो भवन्तीत्यर्थः। 'स्त्री विशेषेण' इत्यनेन पुरुषोऽपि वर्ज्जयेदिति दर्शयति। साध्वाचारेति मङ्गलाचारशीला ॥ १६।१७ ॥

चक्रपाणिः—मृदुभिर्वमनादिभिरिति मृदुद्रव्यगतैरल्पमात्रैश्च वमनादिभिरित्यर्थः। तदुप-

कारिभिर्वोपचारः स्यात् । पूर्णमिव तैलपात्रमसंक्षोभयित्वान्तर्वत्नी भवत्युपचर्य्या ॥ १८ ॥

सा चेदपचाराद्द्वयोस्त्रिषु वा मासेषु पुष्पं पश्येन्नास्या गर्भः

तदा सहत्वे मृदुभिर्वमनादिभिरुपचारः । असहत्वे तु वमनाद्यनुकारिभिर्निष्ठीवनकवड़ादिभिरुपचारः स्यादित्यर्थः । कस्माद् एवमुपचार इत्यत आह—पूर्णमिवेत्यादि । यथा पूर्णं तैलपात्रम् अक्षोभयित्वा उपचर्य्यं तथान्तर्व्वत्नी स्त्री असंक्षोभयित्वा उपचर्य्या भवति । संपूर्व्वकत्वेऽपि नञ्पूर्व्वकत्वात् न त्वयो ल्यप् इति असंक्षोभयित्वेति पदं साधु । सुश्रुतेऽप्युक्तम् । अथ गर्भिणीं व्याध्युत्पत्तावत्यये छर्दयेत् । मधुराम्लेनान्नोपहितेनानुलोमयेच्च । संशमनीयञ्च मृदु विदध्यात् । अन्नपानयोरश्नीयाच्च मृदुवीर्य्यं मधुरप्रायं गर्भाविरुद्धञ्च । गर्भाविरुद्धाश्च क्रिया यथायोगं विदधीत मृदुप्रायाः । भवन्ति चात्र । सौवर्णं सुकृतं चूर्णं कुष्ठं मधु घृतं वचा । मत्स्याक्षकः शङ्खपुष्पी मधुसर्पिः सकाञ्चनम् ॥ अर्कपुष्पी मधु घृतं चूर्णितं कनकं वचा । हेमचूर्णानि कैटय्यः श्वेता दूर्व्वा घृतं मधु । चत्वारोऽभिहिताः प्राशाः श्लोकार्द्धेषु चतुर्ष्वपि । कुमाराणां वपुर्मेधा-बलबुद्धिविवर्द्धनाः ॥ इति । तन्त्रान्तरेऽप्युक्तम् । ज्वरादिरोगे गर्भिण्या मृदु कुर्य्याच्चिकित्सितम् । तीक्ष्णं हि भेषजं तस्या गर्भपाताय कल्पते । अतो धान्यपटोलादि बुद्ध्वा योज्यं ज्वरादिजित् । सिंहास्यादि गुडूच्यादि तथा धान्यपटोलकः । पित्तज्वरहरः क्वाथो गर्भिण्या ज्वरशान्तये । मधु तीक्ष्णं न शंसन्ति केचिद्गर्भवतीज्वरे । कुशकाशोरुबूकाणां मूलं गोक्षुरकस्य च । शृतशीतं सितायुक्तं गर्भिण्या ज्वरदाहनुत् । चन्दनं शारिवा लोध्रं मृद्वीका शर्करान्वितम् । क्वाथं कृत्वा प्रदातव्यं गर्भिण्या ज्वरनाशनम् । एरण्डमूलममृता मञ्जिष्ठा रक्तचन्दनम् । दारुपद्मयुतः क्वाथो गर्भिण्या ज्वरनाशनः । ह्रीवेरारलुरक्तचन्दनबलाधन्याकवत्सादनी, मुस्तोशीरवरा सपर्पटविषा क्वाथं पिबेद् गर्भिणी । नानावर्णरुजातिसारकगदे रक्तस्रुतौ वा ज्वरे, योगोऽयं मुनिभिः पुरा निगदितः सुत्यामयेषूत्तमः । आम्रजम्बूत्वचः क्वाथं लेहयेल्लाजसक्तुभिः । अनेन लीढ़मात्रेण गर्भिण्या ग्रहणीं जयेदिति ॥ १८ ॥

गङ्गाधरः—इति गर्भिण्या व्याधिप्रतिक्रियामुक्त्वा गर्भिण्या अपचारादिना गर्भोपघातारम्भे पुनरार्त्तवप्रवृत्तौ तत्प्रतिकारार्थमाह—सा चेदित्यादि । सा

कारिभिर्वेति यथा वमनार्थकारि निष्ठीवनम्, विरेचनानुकारिणी फलवर्त्तिरित्यादिभिरुपचारः कर्त्तव्यः।

स्थास्यतीति विद्यात्। अजातसारा हि तस्मिन् काले भवन्ति गर्भाः। सा चेच्चतुष्प्रभृतिषु मासेषु क्रोधशोकासूयेर्ष्याभय-त्रास-व्यवायव्यायाम-संक्षोभसन्धारणविषमाशनशयनस्थानक्षुत्-पिपासाद्यतियोगात् कदाहाराद्वा पुष्पं पश्येत् तस्या गर्भस्थापन-विधिमुपदेक्ष्यामः ॥ १९ ॥

पुष्पदर्शनादेवैनां ब्रूयाच्छयनं तावन्मृदुसुखशिशिरास्तरणा-स्तीर्णमीषदवनतशिरस्कं प्रतिपद्यस्वेति। ततो यष्टीमधुक-सर्पिर्भ्यां परमशिशिरवारिणि संस्थिताभ्यां पिचुमाप्लाव्योपस्थ-समीपे स्थापयेत्। तस्यास्तथा शतधौतसहस्रधौताभ्यां सर्पिर्भ्याम्

गर्भिणी चेद् यदि द्वयोर्मासयोस्त्रिषु वा मासेषु। ननु त्रिषु मासेष्वित्युक्तेऽत्र प्रथमद्वितीयतृतीया मासा लभ्यन्ते, कथं पुनः द्वयोरित्युक्तमिति चेन्न। प्रथममासे हि पुष्पदर्शने गर्भासम्भव एव तत् कथं गर्भिणीति व्यवस्यते। तस्मात् प्रथम-मासे गर्भिण्याः पुष्पदर्शनस्यासम्भव इति ख्यापनार्थं त्रिष्विति वचनं न त्रिमासबोधकं किन्तु तृतीयमासपरं, सुतरां द्वयोरिति वक्तुमावश्यकं भवति, तेन द्वयोरिति च पदं द्वितीयमासपरमिति बोध्यम्। पूरणार्थप्रत्ययलोपो वा। ननु कुतोऽस्या द्वितीयमासे तृतीयमासे वा पुष्पदर्शिन्या गर्भिण्या गर्भो न स्थास्यती-त्यत आह—अजातसारा हीत्यादि। न जातं सारं स्थिरांशो येषां तेऽजातसारा गर्भाः, हि यस्मात् तस्मिन् काले द्वितीये तृतीये च मासे भवन्ति तस्मादस्या गर्भो न स्थास्यति। ननु चतुष्प्रभृतिमासेषु यदि पुष्पं पश्येत् तदा किं स्यादित्यत आह—सा चेदित्यादि। क्रोधाद्यपचाराद् यदि चतुर्थादिषु मासेषु पुष्पं पश्येत् तदा प्रतिक्रिययास्या गर्भः स्थास्यतीत्यतस्तस्या गर्भस्थापनविधिमुप-देक्ष्यामः ॥ १९ ॥

गङ्गाधरः—पुष्पेत्यादि। पुष्पदर्शनाच्चतुर्थादिषु मासेषु पुष्पं दृष्ट्वा प्रथममेनां गर्भिणीं ब्रूयात् मृदुसुखशिशिरास्तरणास्तीर्णं शयनं शय्यामीषदवनतशिरस्कं यथा स्यात् तथा प्रतिपद्यस्वेति। तथा प्रतिपन्नाया गर्भिण्या उपस्थसमीपे योनिद्वारे परमशिशिरवारिणि संस्थिताभ्यां यष्टीमधुकसर्पिर्भ्यां पिचुं विस्तृततूलकम्

सन्धारणं वेगसन्धारणम्। कदाहारः कुत्सिताहारः। शिशिरं शीतम्। यष्टीमधुकसिद्धं सर्पिः

अधो नाभेः प्रदिह्यात् । सर्व्वतश्च गव्येन चैनां पयसा सुशीतेन मधुकाम्बुना वा न्यग्रोधादिकषायेण वा परिषेचयेदधो नाभेः । उदकं वा सुशीतमवगाहयेत्, क्षीरिणां कषायद्रुमाणाञ्च स्वरसपरिपीतानि चेलानि ग्राहयेत् । न्यग्रोधादिसिद्धयोर्वा क्षीरसर्पिषोः पिचुं ग्राहयेत् अतश्चैवाक्षमात्रं प्राशयेत्, प्राशयेद्वा केवलञ्च क्षीरसर्पिः । पद्मोत्पलकुमुदकिञ्जल्कांश्च अस्यै समधुशर्करान् लेहार्थं दद्यात् शृङ्गाटकपुष्करवीजकशेरुकान् भक्षणार्थम् । गन्धप्रियङ्गुसितोत्पलशालूकोडुम्बरशलाटुन्यग्रोध-

आप्लाव्य स्थापयेत् । तस्यास्तथेत्यादि । नाभेरधः प्रदिह्यात् । सर्व्वतश्च शिरःप्रभृति सर्व्वाङ्गं सुशीतेन पयसा सुशीतेन मधुकाम्बुना वा सुशीतेन न्यग्रोधादिकषायेण वा परिषेचयेत् । न्यग्रोधादिस्तु प्रसिद्धः—न्यग्रोधोडुम्बराश्वत्थप्लक्षमधुककपीतन-ककुभाम्रकोषाम्रचोरकपत्र-जम्बूद्वय-पियाल-मधुकरोहिणीवञ्जुल-कदम्बवदरीतिन्दुकीसल्लकीलोध्रसावरलोध्रभल्लातकपलाशा नन्दीवृक्षश्चेति । न्यग्रोधादिर्गणो व्रण्यः संग्राही भग्नसाधकः । रक्तपित्तहरो दाह-मेदोघ्नो योनिदोषहृत् ॥ इति । अधो नाभेरित्यादि नाभेरधोदेशपर्य्यन्तम् । उदकं वेत्यादि । क्षीरिणाञ्चेति । क्षीरिणः प्रसिद्धाः वटोडुम्बराश्वत्थप्लक्षकपीतनाः पञ्च । स्वरसपरिपीतानि क्षीरिणां वल्कलस्वरसेन चेलखण्डानि भावयित्वा योनावभ्यन्तरतो ग्राहयेत् । न्यग्रोधादिसिद्धयोरित्यादि । उक्तन्यग्रोधादिगणस्य क्षीरादष्टमांशकल्केन चतुर्गुणजलेन सिद्धस्य क्षीरावशेषपक्वस्य क्षीरस्य पिचुं तत्क्षीरभाविताप्लुततूलकं किंवा न्यग्रोधादेः कल्केन पादिकेन चतुर्गुणेन जलेन सिद्धस्य सर्पिषः पिचुं तत्सर्पिषाप्लुततूलकं योनावन्तर्ग्राहयेत् । अतश्चेति । न्यग्रोधादिसिद्धात् क्षीराद् वा सर्पिषो अक्षमात्रं तोलकद्वयम् । केवलमेव क्षीरसर्पिः क्षीरोत्थं घृतमसाधितम् । पद्मोत्पलेत्यादि । पद्मादीनां त्रयाणां किञ्जल्कान् । शृङ्गाटकेत्यादि । पुष्करवीजं पद्मवीजम् । गन्धप्रियङ्ग्वित्यादि । गन्धप्रियङ्गुर्गन्धद्रव्यविशेषः प्रियङ्गुर्नाम, न तु

पद्ममधुकसर्पिः । चेलानि ग्राहयेदित्यत्र योनिमिति शेषः । अतश्चैवेति न्यग्रोधादिशुङ्गात् । किंवा क्षीरसर्पिष इत्यस्मिन् पाठे क्षीरोत्थितं सर्पिः क्षीरसर्पिः ॥ १८—२० ॥

शुङ्गानि वा पाययेदेनामाजेन पयसा। पयसा चैनां बलातिबलाशालिषष्टिकेक्षुमूल-काकोलीशृतेन समधुशर्करं रक्त-शालीनामोदनं मृदुसुरभिशीतं भोजयेत्। लावकपिञ्जलकुरङ्ग-शम्बरशशहरिणैणकालपुच्छकरसेन वा घृतसुसंस्कृतेन सुख-शिशिरोपवातदेशस्थां भोजयेत्। तथा क्रोधशोकायासव्यवाय-व्यायामतश्चाभिरक्षेत्। सौम्याभिश्चैनां कथाभिर्मनोऽनुकूलाभिः उपासीत। तथाऽस्या गर्भस्तिष्ठति ॥ २० ॥

यस्याः पुनरामान्वयात् पुष्पदर्शनं स्यात् प्रायस्तस्यास्तद्गर्भ-बाधकं भवति विरुद्धोपक्रमत्वात् तयोः। यस्याः पुनरुष्णतीक्ष्णोप-

प्रियङ्गुधान्यम्। एषां कल्कं पाययेदाजेन पयसा छागदुग्धेन। पयसा चेत्यादि— बलादीक्षवन्तानां मूलं काकोलीनां कल्केन पयोऽष्टमांशेन चतुर्गुणजलेन शृतेन पक्वेन पयसा मृदुसुरभिशीतं न तु स्पर्शोष्णं रक्तशालीनामोदनं समधुशर्करं भोजयेत्। लावेत्यादि—लावादीनां मांसं सलिले पक्त्वा रसं निष्पाद्य घृतेन संस्कृत्य तेन रसेन वा सुखादिदेशस्थामेनां गर्भिणीं रक्तशालीनामोदनं समधुशर्करं भोजयेत्। क्रोधादितश्चाभिरक्षेत् क्रोधादिकं कर्त्तुं वारयेत्। सौम्याभिर्वात्सल्यवतीभिः। तथास्या उक्तप्रकारेणास्याश्चतुर्थादिमासेषु पुष्प-दर्शनेऽपि पुष्पप्रवृत्तिनिवृत्तौ गर्भस्तिष्ठति ॥ २० ॥

गङ्गाधरः—अथामान्वयात् पुष्पदर्शने किं स्यादित्यत आह—यस्याः पुन रित्यादि। आमस्त्वपक्व आहारस्तस्यान्वयोऽनुबन्धस्तस्माद् यस्याः पुष्पदर्शनं स्यात् प्रायस्तस्यास्तत् पुष्पदर्शनं गर्भबाधकं भवति। कुत इत्यत आह— विरुद्धेत्यादि। विरुद्धोपक्रमत्वन्तत्र पुष्पप्रवृत्तिनिवारणार्थं मधुरशिशिराद्युपचार उपक्रमः, स चामे विरुद्धो भवति। आमो हि मधुरशिशिरादिगुणो भवति तेन वर्द्धते इति। लघुरुक्षोष्णाद्युपचारस्त्वामे उपक्रमः, स च पुष्पप्रवृत्तौ विरुद्धः। पुष्पं हि रुक्षोष्णादिगुणं तेन वर्द्धते प्रवर्त्तते च। इति विरुद्धोपक्रमत्वादामान्वयात् पुष्पदर्शनं गर्भिण्या गर्भबाधकरं भवतीत्यर्थः। यस्याः पुनरित्यादि—यस्याः

चक्रपाणिः—आमान्वयादिति आमजनकहेतोः सकाशादित्यर्थः। विरुद्धोपक्रमत्वादिति गर्भस्रावे हि स्तम्भनं कर्त्तव्यम्, तच्च शीतं मृदु मधुरञ्च, तच्चैतदामविरुद्धमामजनकत्वादिति विरुद्धोपक्रमता।

योगाद्गर्भिण्या महति संजातसारे गर्भे पुष्पदर्शनं स्यादन्यो वा योनिस्रावः, तस्या गर्भो वृद्धिं न प्राप्नोति निःस्रुतत्वात्, स कालान्तरमवतिष्ठतेऽतिमात्रं, तमुपविष्टकमित्याचक्षते केचित् । उपवासव्रतकर्म्मपरायाः पुनः कदाहारायाः स्नेहद्वेषिण्या वात प्रकोपणान्यासेवमानाया गर्भो वृद्धिं नाप्नोति परिशुष्कत्वात्, स चापि कालान्तरमवतिष्ठतेऽतिमात्रमस्पन्दनश्च भवति, तन्तु नागोदरमित्याचक्षते ॥ २१ ॥

नार्य्योस्तयोरुभयोरपि चिकित्सितविशेषमुपदेक्ष्यामः । भौतिकजीवनीयबृंहणीयमधुरवातहरसिद्धानां सर्पिषामुपयोगः ।

जातसारे गर्भे महति सति उष्णतीक्ष्णोपयोगात् पुष्पदर्शनं स्यात्, अन्यो वा प्रदरादिरूपो योनिस्रावः स्यात्, स निःस्रुतस्रावो गर्भोऽयथास्वकालवर्द्धमानः कालान्तरं प्रसवकालमतीत्यातिमात्रं कालमवतिष्ठते गर्भाशये इति शेषः । तस्य संज्ञामाह—तमित्यादि । उपवेशनशीलत्वादुपविष्टकसंज्ञा । उपवासेत्यादि— कदाहारायाः कुत्सिता रूक्षशाकाशुधान्यादितण्डुलौदनादय आहारा यस्यास्तस्याः । परिशुष्कत्वात् उपवासादिभिर्गर्भस्य परिशोषात् । तेन सोऽपि गर्भः कालान्तरमवतिष्ठतेऽतिमात्रम् । स च गर्भोऽस्पन्दनः स्पन्दनरहितो भवति । तस्य संज्ञामाह—तमित्यादि । नागोदरमिति संज्ञा ॥ २१ ॥

गङ्गाधरः—अनयोश्चिकित्सामाह—नार्य्योस्तयोरित्यादि । तयोरुपविष्टकगर्भवतीनागोदरगर्भवत्योर्नार्य्योः । भौतिकेत्यादि भूतोपघातेभ्यो हितं वचागुग्गुल्वादिकं भूतोन्मादापस्मारोक्तं द्रव्यं भौतिकम् । जीवनीयो दशकः । बृंहणीयः क्षीरिणीराजक्षवकादिदशकः । मधुरोऽत्र विमानोक्तमधुरस्कन्धः, न तु सुश्रुतोक्तः काकोल्यादिर्गणः—काकोलीक्षीरकाकोली-जीवकर्षभकमुद्गपर्णीमाषपर्णीमेदामहामेदाच्छिन्नरुहा-कर्कटशृङ्गीतुगाक्षीरीपद्मकप्रपौण्डरीकर्द्धिवृद्धिमृद्वीका-जीवन्त्यो मधुकश्चेति । काकोल्यादिरयं पित्त-शोणितानिलनाशनः । जीवनो

अन्यो वेति आर्त्तवलक्षणव्यतिरिक्तः । अत्रापि केचिदित्युक्तम्, तथाप्यप्रतिषेधादाचार्य्यस्यापि एतन्मतं किञ्चिद्विशेषमिति ॥ २१ ॥

चक्रपाणिः—अत्र 'विशेष'शब्देन गर्भव्यापदन्तरापेक्षया चिकित्सितविशेषो ज्ञेयः । उप-

नागोदरे तु योनिव्यापन्निर्दिष्टं पयसामामगर्भाणां गर्भवृद्धि-करणाश्च सम्भोजनमेतैरेव सिद्धैश्च घृतादिभिः सुबुभुक्षायाम्।* अभीक्ष्णं यानवाहनापमार्ज्जनावजृम्भणैरुपपादनमिति ॥ २२ ॥

यस्याः पुनर्गर्भो न स्पन्दते, तां श्येनमत्स्यगवयतित्तिरिताम्र-चूड़शिखिनामन्यतमस्य सर्पिष्मता रसेन माषयूषेण वा प्रभूत-

बृंहणो वृष्यः स्तन्यश्लेष्मकरस्तथा ॥ इति। क्षीरघृतवसामज्जशालिषष्टिकयव-गोधूममाषशृङ्गाटककशेरुकत्रपुषर्व्वारुककर्कारुकालाबूककालिन्दककतकाङ्कलोञ्च पियाल-पुष्करवीजकाश्मर्य्यमधुक-द्राक्षाखर्ज्जूरराजादनतालनारिकेलेक्षुविकार-बलातिबलात्मगुप्ता-विदारीपयस्यागोक्षुरक-क्षीरमोरटमधूलिकाकुष्माण्डप्रभृतीनि समासेन मधुरो वर्गः। वातहरोऽत्र भद्रदार्व्वादिः सुश्रुते वीरतर्व्वादिरुक्तः। तद् यथा—वीरतरु-सहचरद्वय-दर्भवृक्षादनीगुन्द्रानल-कुशकाशाश्मभेदकाग्निमन्थ-मोरटावसुकवसिरभल्लूककुरुण्टकेन्दीवरकपोतवक्काः श्वदंष्ट्रा चेति। वीरतर्व्वादि-रित्येष गणो वातविकारनुत्। अश्मरीशर्करामूत्र-कृच्छ्राघातरुजापहः ॥ इति। एषां भौतिकादीनां घृतपादांशकल्केन चतुर्गुणक्वाथेन च सिद्धानां सर्पिषामुप-योगः। बहुवचनं गणाभिप्रायेण। भौतिकेन सिद्धस्य सर्पिषो जीवनीयेन सिद्धस्य वा बृंहणीयेन सिद्धस्य वा मधुरेण सिद्धस्य वाप्युपयोग इति बोध्यम्। इत्युपविष्टकगर्भिण्याः। नागोदरगर्भिण्यास्त्वाह—नागोदरे त्वित्यादि। योनि-व्यापत्तिनिर्द्दिष्टम् आमगर्भाणां वृद्धिकरो यावान् तावान् पयसा आमगर्भाणां चकारात् नागोदरसंज्ञगर्भस्य च वृद्धिकरः। संभोजनमेतैरेव भौतिकादि-सिद्धैर्घृतादिभिः सुबुभुक्षायामभीक्ष्णं संभोजनमन्नस्य सम्यगा तृप्त्या भोजनम्। यानं नौकाद्यनभिसंक्षोभणयानैर्दोलादिवाहनैरपामार्ज्जनैरभ्यङ्गस्नानादिभिरव-जृम्भणैरुत्साहवर्द्धनैः प्रियाश्वासादिवचनैर्गात्रप्रसारणैर्वा उपपादनम् ॥ २२ ॥

गङ्गाधरः—यस्याः पुनरित्यादि। श्येनः पक्षिविशेषः। श्येनादीनामन्यतम-मांसस्य रसेन सर्पिष्मता घृतयुक्तेन। सर्पिष्मता माषयूषेण वा। प्रभूत-

विष्टकनागोदरयोस्तु विशिष्टैवेह चिकित्सा वक्तव्या। किंवा 'यस्याः पुनर्गर्भः प्रसुप्तो न स्पन्दते' इत्यादिना योऽवस्थायां विशेषो वक्तव्यः, तमपेक्ष्योक्तं चिकित्सितविशेष इति। भौतिकं भूतोप-युक्तहितं वचागुग्गुल्वादि। किंवा महापैशाचिकादिघृतवक्ष्यमाणं द्रव्यम्, सुभिक्षाया इति

* सुभिक्षाया इति चक्रः।

सर्पिषा मूलकयूषेण वा रक्तशालीनामोदनं मृदुमधुरशीतं भोजयेत् । तैलाभ्यङ्गेनास्याश्चाभीक्ष्णमुदरवङ्क्षणोरुकटीपार्श्वपृष्ठप्रदेशानीषदुष्णेनोपचरेत् ॥ २३ ॥

यस्याः पुनरुदावर्त्तविबन्धः स्यादष्टमे मासे न चानुवासनसाध्यं मन्यते, ततस्तस्यास्तद्विकारप्रशमनमुपकल्पयेन्निरूहम् । उदावर्त्तो ह्युपेक्ष्यो गर्भं सगर्भां गर्भिणीं वा निपातयेत् । तत्र वीरण-शालि-षष्टिक-कुश-काशेक्षुवालिका-वेतसपरिव्याधमूलानां भूतीकाऽनन्ताकाश्मर्य्यपरूषकमधुकमृद्वीकानाञ्च पयसार्द्धोदकेन उद्गमय्य रसं पियालविभीतकमज्ज तिलकल्कसंप्रयुक्तम् ईषल्लवणाम् अनत्युष्णाञ्च निरूहं दद्यात् । व्यपगतविबन्धाञ्चैनां सुख-

सर्पिषा ह्रस्वमूलकयूषेण वा रक्तशालीनामोदनं भोजयेत् । अस्या नागोदरिण्या उदरं वङ्क्षणादिप्रदेशांश्च ईषदुष्णेन तैलाभ्यङ्गेनाभीक्ष्णमुपचरेत् ॥ २३ ॥

गङ्गाधरः—यस्या इत्यादि । न चानुवासनसाध्यं मन्यतेऽर्थात् तमुदावर्त्तविबन्धम् । अत्रायं भावः । अनुवासनसाध्यो यद्युदावर्त्तविबन्धः स्यात् तदानुवासयेदेनाम् । यस्यास्त्वनुवासनसाध्यं न मन्यते तदा तस्या उदावर्त्तविबन्धिन्या अष्टममासगर्भिण्यास्तद्विकारस्य उदावर्त्तविबन्धस्य प्रशमनो यो निरूहः साधुर्भवति तं निरूहमुपकल्पयेत् । कुत इत्यत आह—उदावर्त्त इत्यादि । हि यस्मात् । उदावर्त्तः न प्रतिकृत्य उपेक्ष्यः सन् सगर्भां गर्भसहितां गर्भिणीं नारीं निपातयेत् मारयेत्, गर्भं वान्तर्गर्भाशये निपातयेत् । तस्मादुदावर्त्तप्रशमनं निरूहम् उपकल्पयेत् । निरूहद्रव्यमाह—तत्रेत्यादि । वीरणमुशीरम् इक्षुवालिका नटाइ इति लोके । परिव्याधः जलवेतसः । एषां मूलानाम् । भूतीकं यमानी । भूतीकादीनाञ्च रसं क्वाथम् अर्द्धोदकेन पयसा मिलिताष्टगुणेन वीरणादीनां मूलानि भूतीकादीनि च पक्त्वा पादावशेषं रसं क्वाथमुद्गमय्य उद्धृतं कृत्वा तं क्वाथं पियालविभीतकयोर्मज्ज-तिलानां कल्कैः संप्रयुक्तं सम्यगालोडनेन प्रकर्षेण युक्तम् ईषल्लवणमल्पसैन्धवयुक्तमनत्युष्णमीषदुष्णं कृत्वा निरूहं गुदेन पथा आस्थापन-

चक्रपाणिः । न चानुवासनसाध्यं मन्येत इति सामर्थ्यादुदावर्त्तस्येति नानुवासनसाध्यो भवतीति ज्ञेयम् । तद्विकारप्रशमनमिति उदावर्त्तप्रशमनमित्यर्थः । उदावर्त्तप्रशमनं निरूहमाह—तत्रेत्यादि ।

सलिलपरिषिक्ताङ्गीं स्थैर्य्यकरमविदाहिनमाहारं भुक्तवतीं सायं मधुरकसिद्धेन तैलेनानुवासयेत्, न्युब्जान्त्वेनामास्थापनानुवासनाभ्यामुपचरेत् ॥ २४ ॥

यस्याः पुनरतिमात्रदोषोपचयाद्वा तीक्ष्णोष्णातिमात्रसेवनाद्वा वात-मूत्र-पुरीष-वेगधारणैर्वा विषमाशन-शयनस्थान-संपीड़नैर्वा क्रोधशोकेर्ष्यासूयाभयत्रासादिभिर्वा अपरैः कर्म्मभिरन्तःकुक्षौ गर्भो म्रियते। तस्याः स्तिमितं स्तब्धमुदरमाततं शीतमश्मान्तर्गतमिव भवत्यस्पन्दनो गर्भः, शूलमधिकमुपजायते, न चाव्यः प्रादुर्भवन्ति, योनिर्न प्रस्रवत्यक्षिणी चास्याः स्रस्ते भवतः। ताम्यति व्यथते भ्रमते श्वसित्यरतिबहुला च भवति, न चास्या वेगप्रादुर्भावो वा यथावदुपलभ्यते, इत्येवंलक्षणां स्त्रियं मृतगर्भेयमिति विद्यात् ॥ २५ ॥

वस्तिं दद्यात्। व्यपगतविबन्धां तेन निरूहेण विबन्धं भित्त्वा पुरीषनिःसरणवतीमेनामष्टममासिकगर्भवतीं सुखसलिलस्नातां स्थैर्य्यकरं गर्भस्यास्थापनकरम् ऐन्द्रीब्राह्मीत्यादुक्तं तेन सिद्धमाहारं भुक्तवतीं सायं सन्ध्याकाले मधुरकसिद्धेन उक्तकाकोल्यादिकल्ककाथाभ्यां पादिकचतुर्गुणाभ्यां साधितेन तैलेनानुवासयेत्। नन्वेतां किं वामपार्श्वेन शयितामास्थापनानुवासनाभ्यामुपचरेदित्यत आह— न्युब्जामित्यादि। न्युब्जामनुत्तानामधोमुखेन शयितामिति यावत् ॥२४॥

<u>गङ्गाधरः</u> —अथान्तर्मृतगर्भायाः प्रतिक्रियामाह— यस्याः पुनरित्यादि। अन्तःकुक्षौ गर्भाशयाभ्यन्तरे। अन्तर्मृतगर्भलक्षणमाह— तस्या इत्यादि। स्तिमितमार्द्रद्रव्यमिव, स्तब्धमचलत्वेन गुरु, आततं सर्व्वोदरव्याप्तमिव, अश्मान्तर्गतं यस्य तदन्तर्गतप्रस्तरमिव तस्या उदरं भवति गर्भश्चास्पन्दनः। न चाव्यः आव्यौ प्रसवकालिकशूलः। अस्या गर्भिण्या अक्षिणी स्रस्ते अधःपतिते भवतः। मृतगर्भेयम्

परिव्याधो वेतसभेदः। अष्टगुणमष्टम रसमिति क्वाथं निःक्वाथ्य। क्वाथादिपरिमाणञ्च निरूहपरिमाणपरिभाषयैव कर्त्तव्यम्। न्युब्जामित्यधोमुखीम् ॥ २२—२४ ॥

चक्रपाणिः—अश्मान्तर्गतमिवेति अन्तर्गतप्रस्तरमिवेत्यर्थः। आव्यो प्रसवकालशूलम्।

ति कुक्षौ मृतो गर्भो यस्याः सा मृतगर्भा। सुश्रुते तु मूढ़गर्भनिदानेऽप्युक्तम्— ग्राम्यधर्म्मयानवाहनाध्वगमनप्रस्खलनप्रपतनप्रपीड़नधावनाभिघातविषमशयनासनोपवास-वेगाभिघातातिरूक्ष-कटुतिक्त-भोजन-शाकातिक्षारसेवनातिसारवमनविरेचनप्रेङ्खोलनाजीर्णगर्भशातनप्रभृतिभिर्विशेषैर्बन्धनान्मुच्यते गर्भः फलमिव वृन्तबन्धादभिघातविशेषैः। स विमुक्तबन्धनो गर्भाशयमतिक्रम्य यकृत्प्लीहान्त्रविवरैरवस्रंसमानः कोष्ठसंक्षोभमापादयति। तथा जठरसंक्षोभाद् वायुरपानो मूढ़ः पार्श्ववस्तिशीर्षोदरयोनिशूलानाहमूत्रसङ्गानामन्यतममापाद्य गर्भं व्यापादयति तरुणं शोणितस्रावेण। तमेव कदाचिद् विवृद्धमसम्यगागतमपत्यपथमनुप्राप्तमनिरस्यमानमपानवैगुण्यसम्मोहितं गर्भं मूढ़गर्भमित्याचक्षते। ततः स कीलः प्रतिखुरो बीजकः परिघ इति। तत्र ऊर्द्धबाहुशिरःपादो यो योनिमुखं निरुणद्धि कील इव, स कीलः। निःसृतहस्तपादशिराः कायसङ्गी प्रतिखुरः। यस्तु निर्गच्छत्येकशिरोभुजः स बीजकः। परिघ इव योनिमुखमावृत्य तिष्ठेत् स परिघः। इति चतुर्व्विधो भवतीत्येके भाषन्ते। तत् तु न सम्यक्। कस्मात्? स यदा विगुणानिलप्रपीड़ितोऽपत्यपथमनेकधा प्रतिपद्यते, तदा सङ्ख्या हीयते। तत्र कश्चित् द्वाभ्यां सक्थिभ्यां योनिमुखं प्रतिपद्यते। कश्चिदाभुग्नकसक्थिरेकेन। कश्चिदाभुग्नसक्थिशरीरः स्फिग्देशेन तिर्य्यगागतः। कश्चिदुरःपार्श्वपृष्ठानामन्यतमेन योनिद्वारं पिधायावतिष्ठते। अन्तःपार्श्वपरिवर्त्तशिराः कश्चिदेकेन बाहुना। कश्चिदाभुग्नशिराः बाहुद्वयेन। कश्चिदाभुग्नमध्यो हस्तपादशिरोभिः। कश्चिदेकेन सक्थ्ना योनिमुखमभिप्रनिपद्यतेऽपरेण पायुमित्यष्टविधा मूढ़गर्भगतिरुद्दिष्टा समासेन। तत्र द्वावन्त्यावसाध्यौ मूढ़गर्भौ। शेषानपि विपरीतेन्द्रियार्थाक्षेपकयोनिभ्रंशसंवरणमक्कलश्वासकासभ्रमनिपीड़ितान् परिहरेत्। भवन्ति चात्र। कालस्य परिणामेन मुक्तं वृन्ताद् यथा फलम्। प्रपतेत स्वभावेन नान्यथा पतितुं फलम्॥ एवं कालप्रकर्षेण मुक्तो नाड़ीविबन्धनात्। गर्भाशयस्थो यो गर्भो जननाय प्रपद्यते॥ क्रिमिवाताभिघातैस्तु तदेवोपद्रुतं फलम्। पतत्यकालेऽपि यथा तथा स्याद् गर्भविच्युतिः। आ चतुर्थात् ततो मासात् प्रस्रवेद् गर्भविच्युतिः। ततः स्थिरशरीरस्य पातः पञ्चमषष्ठयोः॥ प्रविध्यति शिरो या तु शीताङ्गी निरपत्रपा। नीलोद्धतशिरा हन्ति सा गर्भं स च तां तथा॥ गर्भास्पन्दनमावीनां प्रणाशः श्यावपाण्डुता। भवत्युच्छ्वासपूतित्वं शूलश्चान्तमृते शिशौ॥ मानसागन्तुभिर्मातुरुपतापैः प्रपीड़ितः। गर्भो व्यापद्यते कुक्षौ व्याधिभिश्च प्रपीड़ितः॥

तस्य गर्भशल्यस्य जरायुप्रपातनं कर्म्म शमनमित्याहुरेके। मन्त्रादिकमथर्व्ववेदविहितमित्येके। परिदृष्टकर्म्मणा शल्यहर्त्रा आहरणमित्येके ॥ २६ ॥

वस्तमारविपन्नायाः कुक्षिः प्रस्पन्दते यदि। तत्क्षणाज्जन्मकाले तं पाटयित्वोद्धरेद् भिषक्। इति ॥२५॥

गङ्गाधरः—अथास्या मृतगर्भायाश्चिकित्सामाह—तस्येत्यादि। गर्भशल्यस्य गर्भाशयान्तमृतशिशुरूपशल्यस्य शमनं शान्तिकरं जरायुप्रपातनं यच्चर्म्माकृतिजरायुणा गर्भो वेष्टितः सन्नन्तर्गर्भे वर्त्तते तस्य जरायोर्निर्गमनमित्येके वदन्ति। अन्ये त्वेकेऽथर्व्ववेदविहितं मन्त्रादिकर्म्म तस्य गर्भशल्यस्य शमनमित्याहुः; परे त्वेके परिदृष्टकर्म्मणा सर्व्वतोभावेन दृष्टं गर्भशल्याहरणं कर्म्म येन तेन शल्यहर्त्रा शल्याहरणशीलेन भिषजा तस्य गर्भशल्यस्याहरणं शमनमित्याहुः। त्रयमेवैतदप्रतिषिद्धत्वादनुमतमाचार्य्येण। गर्भशल्यापहरणमुक्तं सुश्रुते—नातः कष्टतममस्ति यथा मूढ़गर्भशल्योद्धरणम्। अत्र हि योनियकृत्प्लीहान्त्रविवरगर्भाशयानां मध्ये कर्म्म कर्त्तव्यं स्पर्शेन। उत्कर्षणापकर्षणस्थानापवर्त्तनोत्कर्त्तनभेदनच्छेदनपीड़नर्जुकरणदारणानि चैकहस्तेन गर्भं गर्भिणीं वा अहिंसता। तस्मादधिपतिमापृच्छ्य परञ्च यत्नमास्थायोपक्रमेत। तत्र समासेनाष्टविधा मूढ़गर्भगतिरुद्दिष्टा। स्वभावगता अपि त्रयः सङ्गा भवन्ति. शिरसो वैगुण्यादंसयोर्जघनस्य वा। जीवति तु गर्भे सूतिकागर्भनिर्हरणं प्रयतेत; निर्हर्त्तुमशक्ये च्यवनान् मन्त्रानुपशृणुयात्। तान् वक्ष्यामः। इहामृतञ्च सोमश्च चित्रभानुश्च भामिनि। उच्चैःश्रवाश्च तुरगो मन्दिरे निवसन्तु ते॥ इदममृतमपां समुद्धृतं वै तव लघु गर्भमिमं प्रमुञ्चतु स्त्री। तदनलपवनार्कवासवास्ते सह लवणाम्बुधरैर्दिशन्तु शान्तिम्॥ मुक्ताः पाशा विपाशाश्च मुक्ताः सूर्य्येण रश्मयः। मुक्तः सर्व्वभयाद् गर्भ एह्येहि चिरमाचिरः॥ औषधानि च विदध्यात् यथोक्तानि। मृते चोत्तानाया आभुग्नसक्थ्या वस्त्राधारकोन्नमितकट्या धन्वननागवृत्तिकाशाल्मलीमृत्स्नाघृताभ्यां म्रक्षयित्वा हस्तं योनौ प्रवेश्य गर्भमुपहरेत्। तत्र सक्थिभ्यामागतमनुलोममेवाञ्छेत्। एकसक्थिप्रपन्नस्येतरसक्थि प्रसार्य्यापहरेत्। स्फिग्देशेनागतस्य स्फिग्देशं प्रपीड्य ऊद्ध्र्वमुत्क्षिप्य सक्थिनी प्रसार्य्यापहरेत्। तिर्य्यगागतस्य परिघस्येव तिरश्चीनस्य

'एके' इति वचनेन अप्रतिषेधेन च दुश्चिकित्स्यत्वाभेर्जरायुपातनकर्म्मादीनां त्रयाणामपि मृतगर्भापहरणे

व्यपगतगर्भशल्यान्तु स्त्रियमामगर्भां सुरासीध्वरिष्टमधु-मदिरासवानामन्यतमम् अग्रे सामर्थ्यतः पाययेत गर्भकोष्ठ-विशुद्ध्यर्थमर्त्तिविस्मरणार्थं प्रहर्षणार्थञ्च।

अतः परं बृंहणैर्बलानुरक्षिभिः स्नेहप्रयुक्तैः * यवाग्वादिभिर्वा तत्कालयोगिभिराहारैरुपाचरेद् दोषधातुक्लेदविशोषणमात्रं वा तत्कालम्। अतः परं स्नेहपानैर्वस्तिभिराहारविधिभिश्च दीपनीयजीवनीयबृंहणीयमधुरवातहरैरुपचारैराचरेत्। परिपक्व-गर्भशल्यायाः पुनर्विमुक्तगर्भशल्यायास्तदहरेव स्नेहोपचारः स्यात्॥ २७।२८॥

पश्चाद्र्ध्वमूढ़मुत्क्षिप्य पूर्व्वार्द्धमपत्यपथं प्रत्याजनमानीयापहरेत्। पार्श्वपरि-वर्त्तिशिरसमंसं प्रपीड्योद्धमुत्क्षिप्य शिरोऽपत्यपथमानीयापहरेत्। बाहुद्वयप्रति-पन्नस्योद्ध्वमुत्पीड्यांसौ शिरोऽनुलोममानीयापहरेत्। द्वावन्त्यावसाध्यौ मूढ़-गर्भौ। एवमशक्ये शस्त्रमवचारयेत्। सचेतनञ्च शस्त्रेण न कथञ्चन दारयेत्। दार्य्यमाणो हि जननीमात्मानञ्चैव घातयेत्। तत्र स्त्रियमाश्वास्य मण्डलाग्रेणाङ्गुलीशस्त्रेण वा शिरो विदार्य्य शिरःकपालान्याहृत्य शङ्कुना गृहीत्वोरसि कक्षायां वापहरेदभिन्ने शिरसि चाक्षिकूटे गण्डे वा। अंससंसक्तस्य अंसदेशे बाहुं छित्त्वा दृतिमिवाततं वातपूर्णोदरं वा विदार्य्य निरस्यान्त्राणि शिथिलीभूतमाहरेत्। जघनसक्तस्य वा जघनकपालानीति। यद्यदङ्गं हि गर्भस्य तस्य सजति तद्भिषक्। सम्यग्विनिर्हरेच्छित्त्वा रक्षेन्नारीञ्च यत्नतः। गर्भस्य गतयश्चित्रा जायन्तेऽनिलकोपतः। तत्रानल्पमतिस्तासो वर्त्तेत विधि-पूर्व्वकम्। नोपेक्षेत मृतं गर्भं मुहूर्त्तमपि पण्डितः। स ह्याशु जननीं हन्ति निरुच्छ्वासं पशुं यथा। मण्डलाग्रेण कर्त्तव्यं छेद्यमन्तर्विजानता। वृद्धिपत्रं हि तीक्ष्णाग्रं नारीं हिंस्यात् कदाचन। अथापतन्तीममरां पातयेत् पूर्व्ववद्भिषक्। हस्तेनापहरेद्वापि पार्श्वाभ्यां परिपीड्य वा। धुनुयाच्च मुहुर्नारीं पीडयेद् वांसपिण्डिकाम्। तैलाक्तयोनेरेवं तां पातयेन्मतिमान् भिषक्॥ २६॥

गङ्गाधरः—निर्हृतगर्भशल्याया उपक्रममाह—व्यपगतेत्यादि। आमगर्भां निर्हृतामगर्भशल्याम्। परिपक्वगर्भशल्याया विमुक्तगर्भशल्याया इत्यन्वयः। तदह-

* अस्नेहसम्प्रयुक्तैरिति चक्रधृतः पाठः।

परमतो निर्व्विकारमाप्यायमानस्य गर्भस्य मासे मासे कर्म्म उपदेक्ष्यामः। प्रथममासे शङ्किता चेद् गर्भमापन्ना क्षीरमनुपस्कृतं मात्रावच्छीतं काले पिबेत्। सात्म्यञ्च भोजनं सायं प्रातश्च भुञ्जीत। द्वितीये मासे क्षीरमेव च मधुरौषधसिद्धम्, तृतीये मासे क्षीरं मधुसर्पिर्भ्यामुपसंसृज्य, चतुर्थे मासे तु क्षीरनवनीतमक्ष-मात्रमश्नीयात्; पञ्चमे मासे क्षीरसर्पिः, षष्ठे मासे क्षीरसर्पिर्मधु-

रेवेति गर्भशल्यनिहरणदिनमेव। सुश्रुतेऽप्युक्तम्—एवं निर्हृतशल्यान्तु सिञ्चे-दुष्णेन वारिणा। ततोऽभ्यक्तशरीराया योनौ स्नेहं निधापयेत्। एवं मृद्वी भवेद् योनिस्तच्छूलञ्चोपशाम्यति। कृष्णातन्मूलशुण्ठ्येला-हिङ्गुभार्गीसदीप्यकाः। वचामतिविषां रास्नां चव्यं सञ्चूर्ण्य पाययेत्। स्नेहेन दोषस्यन्दार्थं वेदनोप-शमाय च। काथञ्चैषां तथा कल्कं चूर्णं वा स्नेहवर्ज्जितम्। शाकलग्र्यिङ्गवति-विषा-पाठाकटुकरोहिणीः। तथा तेजोवतीञ्चापि पाययेत् पूर्व्ववद् भिषक्। त्रिरात्रं पञ्चसप्ताहं ततः स्नेहं पुनः पिबेत्। पाययेदासवं नक्तमरिष्टं वा सुसंस्कृतम्। शिरीषककुभाभ्याञ्च तोयमाचमनं हितम्। उपद्रवाश्च येऽन्ये स्युस्तान् यथास्वमुपाचरेत्। सर्व्वतः परिशुद्धा च स्निग्धपथ्याल्पभोजना। स्वेदाभ्यङ्गपरा नित्यं भवेत् क्रोधविवर्ज्जिता। पयो वातहरैः सिद्धं दशाहं भोजने हितम्। रसं दशाहं शेषे तु यथायोगमुपाचरेत्। व्युपद्रवां विशुद्धाञ्च ज्ञात्वा च वरवर्णिनीम्। ऊर्द्ध्वं चतुर्भ्यो मासेभ्यो विसृजेत् परिहारतः। योनिसन्तर्पणे-ऽभ्यङ्गे पाने वस्तिषु भोजने। बलातैलमिदं वास्यै दद्यादनिलवारणम्॥ बलामूलकषायस्येत्यादिना बलातैलं बोध्यं सुश्रुते॥ २७। २८॥

गङ्गाधरः—परमत इत्यादि। अतः परम् एतदनन्तरम्। प्रथममासे गर्भमापन्ना आपन्नगर्भतया लोकेऽनुभूता चेद्भवति। अनुपस्कृतमौषधैरसंस्कृतमेव। सायमिति सन्ध्यातीते निशामुखे, प्रातरिति पूर्व्वभोजनकाले। द्वितीये मासे इत्यादि—मधुरौषधं काकोल्यादि, तदष्टांशकल्कचतुर्गुणजलसिद्धम्। तृतीये इत्यादि—मधुसर्पिर्भ्यामुपसंसृज्य सम्यगालोड्य मिश्रीकृत्य। चतुर्थे मासे इत्यादि—क्षीर-नवनीतं क्षीरमन्थनोद्धृतं नवनीतं, न तु दध्युत्थम्। पञ्चमे इत्यादि—क्षीरसर्पिः

प्रति सम्यक्साधनतः नाप्नोति दर्शयति। दोषधातुक्लेदविशोषणमात्रं कालमित्यनेन दोषधातु-क्लेदविशोषणावधि तां यथोक्तक्रमस्य दर्शयति॥ २५—२८॥

षधसिद्धम्, तदेव सप्तमे मासे। तत्र गर्भस्य केशा जायमाना मातुर्विदाहं जनयन्तीति स्त्रियो भाषन्ते, तन्नेति भगवानात्रेयः। किन्तु गर्भोत्पीडनाद्द्वातपित्तश्लेष्माण उरः प्राप्य विदहन्ति। ततः कण्डूरुपजायते, कण्डूमूला च किक्कशावाप्तिर्भवति। तत्र कोलोदकेन नवनीतस्य मधुरौषधसिद्धस्य पाणितलमात्रमस्यै दातुं दद्यात्। चन्दनमृणालकल्कैश्चास्याः स्तनोदरं विमृद्नीयात्। शिरीषधातकीसर्षपमधुकचूर्णैः कुटजार्ज्जकबीजमुस्तहरिद्राकल्कैर्वा, निम्बकोलसुरसमञ्जिष्ठाकल्कैर्वा, पृषद्धरिणशशरुधिरयुतया त्रिफलया वा, करवीरकपत्रसिद्धेन वा तैलेनाभ्यङ्गः। परिषेकः पुनर्मालतीमधुकसिद्धेनाम्भसा। जातकण्डूया च

क्षीरोत्थं घृतं, न तु दध्युत्थम्। पष्ठे इत्यादि। मधुरं काकोल्याद्यौषधक्वाथकल्काभ्यां चतुर्गुणपादिकाभ्यां सिद्धं क्षीरसर्पिः क्षीरोत्थं सर्पिर्न तु दध्युत्थम्। तदेवेति मधुरौषधसिद्धं क्षीरसर्पिरेव सप्तमे मासे। सर्व्वत्र सात्म्यमेव च भोजनं सायं प्रातर्भुञ्जीतेति योज्यम्। तत्रेत्यादि। तत्र सप्तमे मासे। सर्व्वं स्पष्टम्। किक्कशावाप्तिश्चर्म्मविदरणावाप्तिः। तत्रेत्यादि। कोलोदकेन शुष्कबदरफलक्वाथेन चतुर्गुणेन मधुरौषधानां काकोल्यादीनां कल्केन नवनीतात् पादिकेन सिद्धस्य पक्वस्य नवनीतस्य गव्यस्य पाणितलमात्रं कर्षप्रमाणम्। चन्दनादीनां कल्कैर्मृद्नीयात्। शिरीषादिरेको योगः कुटजाद्यपरः। कुटजस्यार्ज्जकस्य तुलस्याश्च बीजम्। तृतीयस्तु निम्बादिकल्कः। चतुर्थः पृषदादिः। पृषत् क्षुद्रहरिणः। त्रिफलया हरीतकीविभीतक्यामलकीति त्रयी त्रिफला तया कल्करूपया प्रकरणात् स्तनोदरं मृद्नीयादित्यस्य सर्व्वत्रान्वयः। पञ्चमः करवीरकपत्रेत्यादि। करवीरकपत्रकल्कः पादिकस्तेन चतुर्गुणेन जलेन च पक्वेन तैलेन। परिषेक इत्यादि। मालत्यादिभिरनुरूपैः कल्कैः सिद्धेनाद्भ्यृतेन

चक्रपाणिः—गर्भस्य प्रतिमासिकं कर्म्माह—परमत इत्यादि। तन्नेति भगवानात्रेय इति पूर्वमेव तृतीये मासेऽङ्गप्रत्यङ्गनिष्पत्तेः केशा अपि तदैव जाताः क्रमेण वर्द्धन्ते, न सप्तमे मास इति भावः। अथ कथं तर्हि सप्तमे विशेषेण कण्डूर्भवतीत्याह—गर्भोत्पीडनाद्धीत्यादि। किक्किशः

कण्डूयनं वर्ज्जयेत् त्वग्भेदनवैरूप्यपरिहारार्थम्। अशक्यायान्तु कण्डाम् उन्मर्द्दनोद्घर्षणाभ्यां परिहारः स्यात्। मधुरमाहारजातं वातहरम् अल्पमल्पस्नेहलवणमल्पोदकानुपानञ्च भुञ्जीत॥ २९॥

अष्टमे मासे क्षीरयवागूं सर्पिष्मतीं काले काले पिबेत्। तन्नेति भद्रकाप्यः, पैङ्गल्याबाधो ह्यस्या गर्भमागच्छेदिति। अस्त्वत्र पैङ्गल्याबाध इत्याह भगवान् पुनर्व्वसुरात्रेयः। न ह्येतदकार्य्यम् *। एवं कुर्व्वती ह्यारोग्यबलवर्णस्वरसंहननसम्पदुपेतं ज्ञातीनामपि श्रेष्ठमपत्यं जनयति। नवमे खल्वेनां मासे

अम्भसा। जातकण्डूरुपस्थितकण्ड्या च। किमर्थं कण्डूयनं वर्ज्जयेदित्यत आह—त्वग्भेदेत्यादि। अशक्यायामसह्यायाम्। उन्मर्द्दनम् उद्घर्षणं वा कृत्वा कण्डू-परिहारः कार्य्यः स्यात्। मधुरमित्यादि क्षीरेत्यादुक्तम्॥ २९॥

गङ्गाधरः—अष्टमे इत्यादि। क्षीरयवागूं क्षीरेण चतुर्द्दशगुणेन षड्गुणेन वा पक्वां क्षुद्रतण्डुलानां यवागूं मण्डं पेयां वा सर्पिष्मतीं घृतप्रक्षेपां काले काले यथाकाले पिबेत्। तन्नेति भद्रकाप्य इत्यादि। अष्टमासे सर्पिष्मतीं क्षीरयवागूं न पिबेदित्याह। कस्मात्? पैङ्गल्याबाध इत्यादि। हि यस्मादस्या गर्भिण्याः पैङ्गल्याबाधः पैङ्गल्यस्य पिङ्गलनेत्रताया आबाधो गर्भमागच्छेत् गर्भस्यापि पिङ्गलनेत्रता स्यात्। ननु पित्तेऽत्यर्थं प्रदुष्टे तु नेत्रयोः पिङ्गता भवेदिति शालाक्यवचनात् कथं क्षीरयवागूपानात् पैङ्गल्याबाधः स्यादिति चेन्न। अष्टमे हि मासे गर्भिण्याः क्षीरयवागूपानस्य प्रभावात् पैङ्गल्यजनकत्वमिति। मतमेतद् दूषयति—अस्त्वत्रेत्यादि। पैङ्गल्याबाधोऽस्तु गर्भस्य भवतु, स च न क्षतिकरः। कस्मात्? हि यस्मात् एवमष्टमे मासि सर्पिष्मत्क्षीरयवागूपानं कुर्व्वती गर्भिणी स्वयमरोगा सती आरोग्यादिसम्पदुपेतं ज्ञातीनां मध्ये श्रेष्ठमपत्यं जनयति। एतन्नकार्य्यं न भवति। महाफलमेतत् कार्य्यमेव पिङ्गलनेत्रत्वमल्पं न किञ्चित्करम्। तेन किम्

चर्म्मविदरणम्। स्तनावुदरञ्च स्तनोदरम्। कोलं बदरी। परिहारः कण्डा इति शेषः। पैङ्गल्यं पिङ्गलनेत्रता, सा च यद्यपि पित्तकृता, यदुक्तं शालाक्ये "पित्तेऽत्यर्थे प्रदुष्टे तु नेत्रयोः पिङ्गता स्मृता" इति, तथापीह अष्टममासीयगर्भे क्षीरयवागाहारसम्भवप्रभावादेव पैङ्गल्यं भवतीति ज्ञेयम्। न त्वेवैतन्न कार्य्यमिति पैङ्गल्यस्याल्पदोषत्वादुत्तरकालं सुकरप्रतिक्रियत्वाच्च क्षीरयवागू-

* न त्वेवैतन्न कार्य्यमिति पाठान्तरम्।

[म]धुरौषधसिद्धेन तैलेनानुवासयेत् । अतश्चैवास्यास्तैलं पिचुमिश्रं [यो]नौ प्रणयेद् गर्भस्थानमार्गस्नेहनार्थम् ॥ ३० ॥

यदिदं कर्म्म प्रथममासमुपादायोपदिष्टमा नवमान्मासात्, [ते]न गर्भिण्या गर्भसमये गर्भधारणी कुक्षिकटीपार्श्वपृष्ठं मृदु [भ]वति वातश्चानुलोमः संपद्यते । मूत्रपुरीषे च प्रकृतिभूते [सु]खेन मार्गमनुपद्येते चर्म्मनखानि मार्द्दवमुपयान्ति बलवर्णौ [च]ोपचीयेते । पुत्रं ज्येष्ठं सम्पदुपेतं सुखिनं सुखेनैषा काले [प्र]जायत इति ॥ ३१ ॥

प्राक् चैवास्या नवममासात् सूतिकागारं कारयेत् अपहतास्थि-[श]र्कराकपाले देशे प्रशस्तरूपरसगन्धायां भूमौ प्रागद्वारमुदग्द्वारं [वा] । बैल्वानां काष्ठानां तैन्दुकैङ्गुदानां भल्लातकानां वारुणानां खादि-

[गङ्गाधरः]—अथ … इत्याह भगवान् । नवमे इत्यादि । मधुरौषधैः काको-[ल्या]दिभिः पादिककल्करूपैश्चतुर्गुणजलेन च सिद्धेन पक्वेन । कश्चित् [म]धुरौषधानां क्वाथकल्काभ्यां चतुर्गुणपादिकाभ्यामित्याह । अतश्चैव मधुरौषध-[सि]द्धादेतत्तैलाच्च, तैलं किञ्चित् पिचुमिश्रं तूलकमिश्रमस्या नवममासगर्भिण्या [यो]नौ प्रणयेत् धारणार्थं वितरेत् । किमर्थमित्यत आह—गर्भस्थानेत्यादि । [ग]र्भस्थानं गर्भाशयः, मार्गो गर्भनिर्गमवर्त्म योनिद्वारं, तयोः स्नेहनार्थम् ॥३०॥

गङ्गाधरः—एतत् प्रथममासादिनवममासपर्य्यन्तोपदिष्टक्रियाफलमाह—[य]दिदमित्यादि स्पष्टम् । सुश्रुतेऽप्युक्तं तत् पूर्व्वं लिखितम् ॥ ३१ ॥

गङ्गाधरः—अथ प्रसवार्थं तावत् कर्म्माह—प्राक् चेत्यादि । नवममासात् पू[र्व्व]मष्टमे मासि । अत्रापि मासे प्रसवप्रसक्तेः । अपहतेत्यादि । अपहता व्यपगता [अस्थ्या]दयो यत्र देशे तस्मिन् देशे । प्राग्द्वारं पूर्व्वद्वारम्, उदग्द्वारमुत्तरद्वारं वा । बैल्वानां बिल्वकाष्ठानां, तिन्दुकानां तूँद इति लोके, ऐङ्गुदानां जीवपुत्रिकाणां

[सि]द्धमिति भावः । अतश्चैवेति मधुरौषधसिद्धतैलात् । प्रजायते इति गर्भधारिण्या अनेन [कर्म]णा पुत्रजन्मैव व्याकृतं भवतीति ॥ २९—३१ ॥

चक्रपाणिः—पुत्रं प्रसूते यत्र गर्भिणी प्रसूता च यत्र प्रतिष्ठति, तत् सूतिकागारमुच्यते ।

राणां वा यानि चान्यान्यपि ब्राह्मणाः शंसेयुरथर्व्ववेदविदः। तद्वसनालेपनाच्छादनापिधानसम्पदुपेतं वास्तु * विद्यात्। हृदययोगेनाग्निसलिलोदूखलवर्च्चःस्थानस्नानभूमिमहानसमृतुसुखञ्च †। तत्र सर्पिस्तैल-मधुसैन्धव-सौवर्च्चलकाललवण-विड़ङ्गगुडकुष्ठ-किलिम-नागर-पिप्पलीपिप्पलीमूलहस्तिपिप्पली-मण्डूकपर्ण्येला-लाङ्गलिकी-वचा-चव्य-चित्रक-चिरविल्व-हिङ्गुसर्षप-लसुन-कण-कणिकानीपातसीवल्लिजभूर्ज्जाः कुलत्थमैरेयसुरासवाः सन्निहिताः स्युः। तथाश्मानौ द्वौ द्वे चण्डमुषले द्वे उदूखले खरो वृषभश्च द्वौ च तीक्ष्णौ सूचीपिप्पलकौ सौवर्णराजतौ शस्त्राणि च तीक्ष्णायसानि

वारुणानां वरुणकाष्ठानाम्। शंसेयुः प्रशस्तान्युपदिशेयुः। तद्वसनेत्यादि। तेषां तेषां काष्ठनिर्म्मितं वसनं पीठखट्टादिकम् आलेपनमालेपनार्थं पात्रम् आच्छादनम् चतुष्पार्श्वे गृहस्यावरणम् अपिधानं कवाटम् एवमादिसम्पदुपेतं वास्तुं सूतिकागारस्य वासस्थानं विद्यात्। हृदययोगेन मनोयोगेन तत्तद्वतुसुखमग्निः सलिलमुदूखलं वर्च्चःस्थानं विड्विसर्गस्थानं स्नानभूमिर्महानसञ्च इत्येतत् सर्व्वमृतुसुखं तत्प्रसवकालमुक्तम्। तत्रेत्यादि। काललवणं विड़लवणमित्यन्ये विड़्लवणसदृशकृष्णवर्णलवणम्। किलिमो देवदारु। कणः कुण्डक इति ख्यातः। कणिका स्थूलावयवतण्डुलकणाः। वल्लिजः कुष्माण्डम्। अश्मानौ द्वौ शिलाशिलापुत्रौ। द्वे चण्डमूपले गुरुतरमूपलद्वयम्। उदूखलद्वयञ्च। सूतिकागारद्वारे स्थापनार्थं, न तु मुषलव्यायामार्थम्। खरो गर्द्दभः, वृषभोऽनड्वान्। सूचीपिप्पलकौ सूचिगुड़कद्वयं सौवर्णराजतौ एका सूची सुवर्णस्य द्वितीया

वारणस्त्वगावरणं वा। तत् सेवयेदिति सम्बन्धः। वसनं वस्त्रम्। आच्छादनमास्तरणम्। अपिधानं कपाटः। वास्तुविद्याहृदयं वास्तुविद्यातत्त्वम्, तद्योगादग्न्यादीनां स्थानं यत्र तद् गृहम्। वास्तुविन्मतेन विभक्तमग्न्यादिस्थानं तद् मूतं कर्त्तव्यमित्यर्थः। वर्त्तमानर्त्तुमपेक्ष्य सुखमृतुसुखम्। सर्पिस्तैलादीनाञ्चात्र गृहे स्थापनीयानां व्यक्त एव तावदुपयोगः। बहुत्वेन येषामनु न वक्तव्यः, तेषामप्यग्रमुपयोग उन्नेयः। किलिमं देवदारु। कणः कुण्डक इति ख्यातः। कणिका तु कुण्डकात् स्थूला। तण्डुला येन कुट्टयन्ते, तन्मुषलम्। कुण्डमुषले इति ह्रस्वमुषले। किंवा चण्डमुषले इति पाठः, तदा गुरुतरमुषले इत्यर्थः। सूच्याकारौ पिप्पलकौ सूचीपिप्पलकौ।

* वास्तुविद्याहृदययोगाग्नीति चक्रधृतः पाठः। † सेवयेदित्यधिकः पाठः चक्रधृतः।

...ौ च विल्वमयौ पर्य्यङ्कौ तैन्दुकैङ्गुदानि काष्ठान्यग्निसन्धुक्षणानि, स्त्रियश्च बह्व्यो बहुशः प्रजाताः सौहार्दयुक्ताः सततमनुरक्ताः प्रदक्षिणाचाराः प्रतिपत्तिकुशलाः प्रकृतिवत्सलास्त्यक्तविषादाः क्लेशसहिष्ण्वोऽभिमताः । ब्राह्मणाश्चाथर्व्ववेदविदो यच्चान्यदपि तत्र समर्थं मन्येत यच्चान्यच्च ब्राह्मणा ब्रूयुः स्त्रियश्च वृद्धास्तत् कार्य्यम् ॥ ३२ ॥

ततः प्रवृत्ते नवमे मासे पुण्येऽहनि प्रशस्तनक्षत्रयोगमुपगते भगवति शशिनि कल्याणे करणे मैत्रे मुहूर्त्ते शान्तिं हुत्वा गोब्राह्मणमग्निमुदकञ्चादौ प्रवेश्य गोभ्यस्तृणोदकं मधु लाजांश्च प्रदाय ब्राह्मणेभ्योऽक्षतान् सुमनसो नान्दीमुखानि फलानीष्टानि दत्त्वोदकपूर्व्वमासनस्थेभ्योऽभिवाद्य पुनराचम्य

...तस्य । बहुशः प्रजाताः बह्वपत्यप्रसूताः । प्रदक्षिणाचाराः प्रकर्षेण दाक्षिण्येन ...साम्मुख्येन न वैमुख्येनाचरणशीलाः कर्म्मदक्षा इत्यर्थः । प्रतिपत्तिकुशलाः — यदुच्यते केनचित् तदुक्तिमात्रेण बोद्धारः ज्ञापिकाश्च । प्रकृतिवत्सला वात्सल्यस्वभावाः । अभिमताः प्रसूतिमनोऽभिसम्मताः । एतानि स्त्रीविशेषणानि । ब्राह्मणाः इत्यादि । तत्र समर्थं कर्म्मकरत्वेनावश्यकम् । वृद्धा इति स्त्रिय इत्यन्वयः ॥ ३२ ॥

गङ्गाधरः—तत इत्यादि । कल्याणे इत्यस्य करण इत्यनेनाप्यन्वयः । शान्तिं शान्तिकर्म्म विधिना हुत्वा आदौ सूतिकागारे प्रवेशकाले पूर्व्वं गोब्राह्मणं तत्र गृहे प्रवेश्य प्रवेशन कारयित्वा ततोऽग्निं तत्र प्रवेश्य उदकञ्च तत्र प्रवेश्य, अक्षतांस्तण्डुलान् सुमनसः पुष्पाणि नान्दीमुखानि माङ्गल्यसूचकफलानि केचित् नान्दीमुखो मृदङ्गस्तदाकारफलानि इष्टानि गर्भिण्याः स्वाभिमतानि प्रविश्यागारे आसनस्थेभ्यो ब्राह्मणेभ्यो दत्त्वा पूर्व्वमुदकमभिवाद्य ततो ब्राह्मणा-

...केवा सूची यत्र स्थाप्यते स सूचीपिप्पलकः । पर्य्यङ्कः खट्वा । समर्थं मन्येत इति कार्य्यमिति ...षः ॥ ३२ ॥

चक्रपाणिः - शान्तिं कृत्वेति शान्तिहोमं कृत्वा । नान्दीमुखानि च फलानि नान्दीमुखश्राद्धोप-

स्वस्ति वाचयेत्। ततः पुण्याहशब्देन गोब्राह्मणमन्वावर्त्तमाना प्रविशेत् सूतिकागारम्। तत्रस्था च प्रसवकालं प्रतीक्षेत ॥३३ ॥

तस्यास्तु खल्विमानि लिङ्गानि प्रजननकालमभिभवन्ति। तद् यथा—क्लमो गात्राणां, ग्लानिराननस्य म्लानता, अक्ष्णोः शैथिल्यं, विमुक्तबन्धनत्वमिव वक्षसः, कुक्षेरवस्रंसनमधो गुरुत्वं, वङ्क्षणवस्तिकटीकुक्षिपार्श्वपृष्ठनिस्तोदो योनेः प्रस्रवणमनन्नाभिलाषश्च। ततोऽनन्तरमावीनां प्रादुर्भावः प्रसेकश्च गर्भोदकस्य। आवीप्रादुर्भावे तु भूमौ शयनं विदध्यान्मृद्वास्तरणोपपन्नम्।

दीनभिवाद्य पुनराचम्य स्वस्तिवाचनं कृत्वा पुण्याहं पुण्याहमित्युक्त्वा गोब्राह्मणं प्रदक्षिणं चरणमभिहरन्ती। सुश्रुतेऽप्युक्तं—नवमे मासे सूतिकागारमेनां प्रवेशयेत् प्रशस्ततिथ्यादौ। तत्रारिष्टं ब्राह्मणक्षत्रियवैश्यशूद्राणां श्वेतरक्तपीतकृष्णेषु भूमिप्रदेशेषु विल्वन्यग्रोधतिन्दुकभल्लातकनिर्म्मितं सर्व्वागारं यथासङ्ख्यं तन्मयपर्य्यङ्कमुपलिप्तभित्तिं सुविभक्तपरिच्छदं प्रागद्वारमुदगद्वारं वाष्टहस्तायतं चतुर्हस्तविस्तृतं रक्षामङ्गलसम्पन्नं विधेयमिति। तत्रस्थेत्यादि स्पष्टम् ॥ ३३ ॥

गङ्गाधरः—तस्या इत्यादि। प्रसवकालमभि लक्ष्यीकृत्य। क्लमो गात्राणाम् अवसन्नता। ग्लानिरहर्षः। आननस्य म्लानता। अक्ष्णोः शैथिल्यं निमेषोन्मेषासामर्थ्यमित्यर्थः। विमुक्तबन्धनत्वमिवेति वक्षोबन्धमोचनमिवेत्यर्थः। कुक्षेरवस्रंसनमधस्तात्पतनमिव। अधोगुरुत्वमधस्तादुदरे गुरुता। वङ्क्षणादिषु निस्तोदः, योनेः प्रस्रवणं स्रावः। सुश्रुतेऽप्युक्तम्—जाते हि शिथिले कुक्षौ मुक्ते हृदयबन्धने। सशूले जघने नारी ज्ञेया सा तु प्रजायिनी॥ तत्रोपस्थितप्रसवायाः कटी पृष्ठं प्रति समन्ताद् वेदना भवत्यभीक्ष्णं पुरीषप्रवृत्तिर्मूत्रं प्रसिच्यते। योनिमुखात् श्लेष्मा चेति। ततोऽनन्तरमित्यादि। आवीनां प्रसववेदनानाम् गर्भोदकस्य गर्भगतोदकस्य। आवीप्रादुर्भावे त्वित्यादि—शयनं शय्याम्।

हितानि फलानि। किंवा नान्दी मुरजः, तन्मुखाकृतीनि फलानि खर्ज्जूरादीनि। पुण्याहशब्दो मङ्गलशब्दः। प्रदक्षिणं यथा भवति तथा समनुवर्त्तमाना ॥ ३३ ॥

तदध्यासीनां तां ततः समन्ततः परिचार्य्य* यथोक्तगुणाः स्त्रियः पर्य्युपासीरन् । ताश्चाश्वासयन्त्यो वाग्भिर्ग्राहणीयाभिरुपदिष्टतदर्थाभिधायिनीभिः । सा चेदाभिः संक्लिश्यमाना न प्रजायेत, अथैनां ब्रूयाद्—उत्तिष्ठ मुषलमन्यतरञ्च गृह्णीष्व । अनेनैतदुलूखलं धान्यपूर्णं मुहुर्म्मुहुरभिजहि मुहुर्म्मुहुरवजृम्भस्व चंक्रमस्व चान्तरान्तरा इत्येवमुपदिशन्त्येके ॥ ३४ ॥

तन्नेत्युवाच भगवानात्रेयः । दारुणव्यायामवर्ज्जनं हि गर्भिण्याः सततमुपदिश्यते विशेषतश्च प्रजननकाले । प्रचलितसर्व्वधातुदोषायाः सुकुमारस्वभावाया नार्य्या मुषलव्यायामसमीरितो वायुरन्तरं लब्ध्वा प्राणान् हिंस्यात् । दुष्प्रतीकारतमा हि तस्मिन् काले विशेषेण भवति गर्भिणी । तस्मान्मुषलग्रहणं परिहार्य्यमृषयो मन्यन्ते, जृम्भणं चंक्रमणञ्च पुनरनुष्ठेयमिति ॥ ३५ ॥

अथास्यै दद्यात् कुष्ठैलालाङ्गलिकीवचाचित्रकचिरविल्व-†-चूर्णमुपघ्रातुं । सा तत् मुहुर्म्मुहुरुपजिघ्रेत् । तथा भूर्ज्जपत्रधूमं

तदध्यासीनां तच्छयनमध्यासीनां तां गर्भिणीम् । प्रादुर्भूतावीं मृद्वास्तरणसम्पन्नां शय्यामध्यास्तवतीं गर्भिणीं समन्ततश्चतुर्द्दिक्षु ता यथोक्तगुणाः स्त्रियः परिचार्य्य परिचर्य्यकर्म्माणि कृत्वा ग्राहणीयाभिरुपदेष्टव्यार्थाभिधायिनीभिः वाग्भिराश्वासयन्त्यः पर्य्युपासीरन् सर्व्वतोभावेनोपासनां कुर्य्युः । सा चेदित्यादि । न प्रजायेत न प्रसूयेत । अथैनां गर्भिणीं तासामेका ब्रूयात् । किं ब्रूयादित्यत आह—उत्तिष्ठेत्यादि । अनेन मुषलेन । अभिजहि अभिघातं कुरु । अवजृम्भस्व हस्तपादादिप्रसारणं कुरु । चंक्रमस्व मुहुः पादविहरणं कुरु । अन्तरान्तरा मध्ये मध्ये ॥ ३४ ॥

गङ्गाधरः—तन्नेत्यादि । स्पष्टार्थास्त्रयः श्लोकाः ॥ ३५ ॥

चक्रपाणिः—उपदिष्टार्थाभिधायिनी वाग् ग्राहणीया । अवजृम्भस्वेति गात्राणि प्रसारय । अन्तरं

* परिवार्य्येति बहुषु ग्रन्थेषु पाठः ।　　† इतः परं वच्येत्यधिकः पाठो दृश्यते ।

शिंशपासारधूमं वा, तस्याश्चान्तरान्तरा कटीपार्श्वपृष्ठसक्थि-देशानीषदुष्णेन तैलेनाभ्यज्यानुसुखमवमृद्नीयात्। इत्यनेन तु कर्म्मणा गर्भोऽवाक् प्रतिपद्यते। स यदा जानीयाद् विमुच्य हृदयमुदरमस्यास्त्वाविशति वस्तिशीर्षमवगृह्णाति त्वरयन्त्येना-माव्यः परिवर्त्ततेऽस्या अवाग् गर्भ इति। अस्यामवस्थायां पर्य्यङ्कमेनामारोप्य प्रवाहयितुमुपक्रमेत। कर्णे चास्या मन्त्र-मिममनुकूला स्त्री जपेत्।

क्षितिर्जलं वियत् तेजो वायुरिन्द्रः प्रजापतिः।
सगर्भां त्वां सदा पान्तु वैशल्यञ्च दिशन्तु ते॥
प्रसुव त्वमविक्लिष्टमविक्लिष्टा शुभानने।
कार्त्तिकेयद्युतिं पुत्रं कार्त्तिकेयाभिरक्षितम्॥ ३६॥

ताश्चैनां यथोक्तगुणाः स्त्रियोऽनुशिष्युरनागतावीर्मा प्रवाहिष्ठाः, यदि ह्यनागतावीः प्रवाहयते व्यर्थमेवास्यास्तत् कर्म्म भवति। प्रजा चास्या विकृता विकृतिमापन्ना च श्वासकास-शोषप्लीहप्रसक्ता वा भवति। यथा हि क्षवथूद्गारवातमूत्रपुरीष-वेगान् प्रयतमानोऽप्यप्राप्तकालान्न लभते कृच्छ्रेण वाप्यवाप्नोति, तथाऽनागतकालं गर्भमपि प्रवाहमाणा। यथा चैषामेव क्षवथ्वा-

गङ्गाधरः—अथेत्यादि। भूर्ज्जपत्रधूमं शिंशपासारधूमं वोपाजिघ्रेन्मुहुर्म्मुहु-रित्यन्वयः। अनुसुखमधोनयनरूपेण। अवाक् हृदयबन्धमुक्तोऽधः। स यदेत्यादि। आविशति गर्भः त्वरयन्त्येनामाव्य इति आवीभिरेषा व्यग्रा भवतीत्यर्थः। तदास्या गर्भोऽवाक् परिवर्त्ततेऽधःशिरा भवति। प्रवाहयितुं कुन्थयितुम्। मन्त्रमाह— क्षितिरित्यादिर्मन्त्रः। ताश्चैनामित्यादि। किमनुशिष्युस्तदाह—अनागतावीः। तत्र दोषमाह—यदि हीत्यादि। व्यर्थं विरक्तयर्थम्। विकृतेति विवृणोति-

लब्ध्वेति हेतुमासाद्य। यद्यपि मुषलग्रहणं निषिद्धम्, तथाप्युत्तरकालं द्वारे मुषलस्थापनं वक्तव्य-मिति साधु मुषलोपादानम्॥ ३४—३७॥

ीनां सन्धारणामुपघातायोपपद्यते, तथा प्राप्तकालस्य गर्भस्या-प्रवाहणम् इति। सा यथानिर्देशं कुरुष्वेति वक्तव्या स्यात्। तथा च कुर्व्वती शनैःपूर्व्वं प्रवाहेत ततोऽनन्तरं बलवत्तर-मिति। तस्याञ्च प्रवाहमाणायां स्त्रियः शब्दं कुर्य्युः "प्रजाता प्रजाता धन्यं धन्यं पुत्रं," इति। तथास्या हर्षेणाप्याय्यन्ते प्राणाः ॥ ३७ ॥

यदा च प्रजाता स्यात् तदैनामवेक्षेत काचिदस्या अमरा प्रपन्ना वा प्रपन्ना नेति। तस्याश्चेदमरा न प्रपन्ना स्यादथैनाम् अन्यतमा स्त्री दक्षिणेन पाणिना नाभेरुपरिष्टाद् बलवन्निपीड्य सव्येन पाणिना पृष्ठत उपगृह्य सुनिर्द्धूतं निर्द्धुनुयात्। अथास्याः पाष्णर्या * श्रोणीमाकोटयेत्। अथास्याः स्फिचावुपसंगृह्य सुपीड़ितं पीडयेत्। अथास्या बालवेण्या कण्ठतालु परिमृशेत्।

विकृतिमित्यादि। विकृतिं विपरीताकृतिम्। तथा प्राप्तकालस्येति। प्राप्तावी-गर्भिणी यदि न प्रवाहते तदा तदप्रवाहणं प्रवाहणकालप्राप्तस्य गर्भस्योप-घातायोपपद्यते इति। तथेत्यादि। शनैःपूर्व्वं शनैःपूर्व्वं यत्र तत् शनैःपूर्व्वं प्रवाहेत पूर्व्वं मन्दंमन्दं प्रवाह्यानन्तरं बलवत्तरं प्रवाहेत। प्रजाता प्रजाता प्रसूतवती प्रसूतवती धन्यं धन्यं पुत्रमिति शब्दं स्त्रियः कुर्य्युः। तथा तेन शब्दकरणेन अस्याः प्राणा हर्षेणाप्याय्यन्ते ॥ ३६।३७ ॥

गङ्गाधरः—यदा चेत्यादि। प्रजाता स्यादिति प्रसूतवती स्यात् तदा एनां प्रसूतामवेक्षेत अवधानेन काचित् स्त्री। अस्या अमरा नाम नाड़ी पुष्पनाड़ी प्रपन्ना पतिता वा न प्रपन्नेति पश्येत्। न चेत् प्रपन्ना तदा सुनिर्द्धूतं सुनिष्कम्पितं निर्द्धुनुयात् निष्कम्पयेत्। पाष्णर्या श्रोणीम् आकोटयेत् कुटिलं कारयेत्। बालवेण्या केशवेणीं मुखमध्ये प्रवेश्य कण्ठस्य तालु परिमृशेत्

चक्रपाणिः—सुनिर्धूतामति क्रियाविशेषणम्। आकोटयेदिति पीड़येत्। बालकृता वेणी

* पार्ष्ण्या इत्यत्र पादपार्ष्ण्यां, परिमृशेदित्यत्र परिस्पृशेदिति पाठान्तरम्।

भूर्ज्जपत्रकाचमणिसर्पनिर्म्मोकैः * चास्या योनिं धूपयेत्। कुष्ठतालीशकल्कं वल्वजयूषे मैरेयसुरामण्डे वा कौलत्थे वा मण्डूकपिप्पलीक्काथे वा संप्लाव्य तथा पाययेदेनाम् ॥ ३८ ॥

तथा सूक्ष्मैलाकिलिमकुष्ठनागरविड़ङ्ग-कालविड़गुड़-चव्यपिप्पलीचित्रकोपकुञ्चिकाकल्कं, खरवृषभस्य जरतो वा दक्षिणां कर्णामुत्कृत्य दृषदि जर्ज्जरीकृत्य वल्वजयूषादीनामन्यतमे प्रक्षिप्याप्लाव्य मुहूर्त्तस्थितमुद्धृत्य तदाप्लावनं पाययेदेनाम्। शतपुष्पाकुष्ठहिङ्गुमदनसिद्धस्य चैनां तैलस्य पिचुं ग्राहयेत्। ततश्चैवानुवासयेदेतैरेव चाप्लावनैः फलजीमूतकेक्ष्वाकुधामार्गवकुटजकृतवेधनहस्तिपर्ण्युपहितैरास्थापयेत्। तदास्थापनम् अस्या हि सह वातमूत्रपुरीषैर्निर्हरत्यमरामासक्तां वायोरनुलोम-

योजयेत्। भूर्जेत्यादि। काचमणिः काच एव। कुष्ठेत्यादि। वल्वजयूषे ऊलूयाघासस्य बीजविदलक्काथे। मण्डूकः मण्डूकपर्णी॥ ३८॥

गङ्गाधरः—तथेत्यादि। किलिमो देवदारु। कालविड़ः बिट्लवणम्। गुड़ः पुराणगुड़ः। उपकुञ्चिका कृष्णजीरकम्। खरेत्यादि। खरवृषभस्य पुंगर्द्दभस्य चण्डवलीवर्द्दस्य जरतो वृद्धस्य मृतस्य दक्षिणं कर्णं वा उत्कृत्य कर्त्तनं कृत्वा जर्ज्जरीकृत्य कुट्टयित्वा वल्वजक्काथाद्यन्यतमे मुहूर्त्तं स्थितं तं कल्कं कर्णं वा तदाप्लावनं वल्वजयूषादिकं पाययेदेनामित्यर्थः। शतपुष्पेत्यादि। शतपुष्पादिकल्केन तैलपादिकेन तेषां क्काथेन सिद्धस्य चतुर्गुणजलेन वा पक्कस्य तैलस्य पिचुं तूलकम् एनाम् अप्रपन्नामरां प्रसूतां योनौ ग्राहयेत्। तत इति पिचुग्रहणानन्तरं तेन तैलेन अनुवासयेत्। एतैरेव च वल्वजयूषादिभिराप्लावनैः फलादिकल्कोपहितैः आस्थापयेत्। फलं मदनफलम्। जीमूतधामार्गवौ घोषकप्रभेदौ। इक्ष्वाकुस्तिक्तालाबूः। कृतवेधनं ज्योत्स्निका। हस्तिपर्णी मोरटः। आस्थापनकर्म्माह—तदास्थापनमित्यादि। निर्हरति बहिष्करोति। ननु वातमूत्रादिसहितां कथममराम्

बालवेणी। वल्वजयूषो वल्वजक्काथः। मण्डूकपिप्पली मण्डूकपर्णी। किंवा मण्डूको मण्डूकपर्णी, पिप्पली पिप्पलयेव, तयोः। वल्वजयूषादौ सूक्ष्मैलादीनां पानं विधीयते। खरवृषभश्चण्ड-

* निर्म्मोकैरित्यत्र निर्म्मोकधूमैः, मण्डे इत्यनन्तरं तीक्ष्णे, क्काथे इत्यत्र सम्पाके, कालविड़गुड़ेत्यत्र कालागुरुतः, हस्तिपर्णीत्यत्र हस्तिपिप्पलीति पाठान्तरम्।

गमनात् । अमरां हि वातमूत्रपुरीषाण्यन्यानि चान्तर्बहि-र्मुखाणि * सज्जन्ति । तस्यास्त्वमरायाः प्रपतनार्थे खल्वेवमेव कर्म्मणि क्रियमाणे जातमात्रस्यैव कुमारस्य कार्य्याण्येतानि कर्म्माणि भवन्ति । तद् यथा—अश्मनोः संघट्टनं कर्णयोर्मूले, शीतोदकेनोष्णोदकेन वा सुखपरिषेकः । तथा संक्लेशविहतान्

इत्यत आह—अमरां हीत्यादि । अमरां नाडीं वातादीन्यन्यानि च प्रसवानन्तरं बहिर्म्मुखाणि सन्त्यन्तः सज्जन्ति लगन्ति तिष्ठन्ति। तेनास्थापनं वातानुलोमनं वातादिभिः सहैवासक्ताममरां निर्हरतीति भावः। सुश्रुतेऽप्युक्तम्—प्रजनयिष्यमाणां कृतमङ्गलस्वस्तिवाचनां कुमारपरिवृतां पुन्नामफलहस्तां स्वभ्यक्तामुष्णोदकपरिषिक्तामथैनां सम्भृतां यवागूमा कण्ठात् पाययेत् । ततः कृतोपधाने मृदुविस्तीर्णे शयने स्थितामाभुग्नसक्थीमुत्तानाम् अशङ्कनीयाश्चतस्रः स्त्रियः परिणतवयसः प्रजननकुशलाः कर्त्तितनखाः परिचरेयु-रिति । अथास्या विशिखान्तरमनुलोममनुसुखमभ्यञ्ज्यात् । ब्रूयाच्च एनामेका सुभगे प्रवाहस्वेति न चाप्राप्तावीः प्रवाहस्व । ततो विमुक्ते गर्भनाडी-प्रबन्धे सशूलेषु श्रोणिवङ्क्षणवस्तिशिरःसु प्रवाहेथाः शनैः शनैः । ततो गर्भनिर्गमे प्रगाढं, ततो गर्भे योनिमुखं प्रपन्ने गाढतरम् आ विशल्यभावात् । अकालप्रवाहणाद्वधिरं मूकं व्यस्तहनुं मूर्द्धाभिघातिनं कासश्वासशोषोपद्रुतं कुब्जं विकलं वा जनयति । तत्र प्रतिलोममनुलोमयेत् । गर्भसङ्गे तु योनिं धूपयेत् कृष्णसर्पनिर्म्मोकेण पिण्डीतकेन वा । बध्नीयाद्धिरण्यपुष्पीमूलं, हस्तपादयोर्धारयेत् सुवर्च्चलां विशल्यां वा । इति । अथामरापातनान्तरं किं कर्त्तव्यं, शिशोर्वा जातमात्रस्य किं विधेयं इत्यत आह तस्यास्त्वित्यादि । तस्या अमरायाः पुष्पनाड्याः प्रपातनार्थे क्रियमाणे निरुक्ते कर्म्मणि सति तत्कालमेव जातमात्रस्यैव कुमारस्य, न तु जातोत्तरं कियन्तं कालं विश्राम्य । अश्मनोः प्रस्तरद्वयस्य संघट्टनं घर्षणेन शब्दायनम् उदरान्निष्क्रमणयातनाभिभूत-शिशोश्चैतन्यार्थं कार्य्यं शिशोरेव तस्य कर्णयोर्मूले । तथा तेन प्रकारेण क्रिय-

बल्वजादिः । एतैरेवेति बल्वजादिभिरेव; सज्जन्ति बहिर्गमनशीलानि पुरीषादीनि अभ्यन्तरदेशे संसक्तानि भवन्ति । शीतोदकेन चोष्णोदकेनेति ऋतुभेदेन ज्ञेयः, ग्रीष्मकाले शीतोदकेन, शीत-

* बहिर्गमनशीलानीति वा पाठः ।

प्राणान् पुनर्लभेत, कृष्णाकपालिकासूर्पेण चैनमभिनिष्पुणीयुः। यद्वयच्चेष्टं स्याद् यावत् प्राणानां प्रत्यागमनं तत्तत् सर्व्वमेव कुर्य्युः ॥ ३९ ॥

ततः प्रत्यागतप्राणं प्रकृतिभूतमभिसमीक्ष्य स्नानोदकग्रहणाभ्यामुपपादयेत्। अथास्य ताल्वोष्ठकण्ठजिह्वामार्ज्जनम् आरभेताङ्गुल्या सुपरिलिखितनखया सुप्रक्षालितोपधानयाकार्पासपिचुमत्या। प्रथमं प्रमार्ज्जितास्यस्य चास्य शिरस्तालु कार्पासिकपिचुना स्नेहगर्भेण प्रतिसंच्छादयेत्। ततोऽस्यानन्तरं कार्य्यं सैन्धवोपहितेन सर्पिषा प्रच्छर्द्दनम्। ततः कल्पनं नाड्यास्ततस्तस्याः कल्पनविधिमुपदेक्ष्यामः। नाभिबन्धनात्

माणे क्लेशविहतान् गर्भाशयात् निष्क्रमणयातनाभिभूतान् प्राणान्। कृष्णकपालिकासूर्पेण ईषिकनलीबद्धकपालदेशः कृष्णकपालिका तत्कृतः सूर्पस्तेन एनं शिशुम् अभिनिष्पुणीयुर्वीजयेयुरित्यर्थः। यद् यदित्यादि। क्लेशविहतप्राणागमनकरं यावत् कर्म्म कर्त्तव्यमित्यर्थः ॥ ३९ ॥

गङ्गाधरः—तत इत्यादि। शिशोश्चैतन्यानन्तरं स्नानम् उदकग्रहणं मलमार्ग-शौचं कारयेत्। अथास्येत्यादि। अस्य प्राणागतत्वेन प्रकृतिभूतस्य कृतस्नानशौचस्य। सुप्रक्षालितोपधानया प्रक्षालितमावरणं यस्या अङ्गुल्यास्तया। लिखितनखया कर्त्तितनखया कार्पासपिचुमत्याङ्गुल्या तात्वादिकप्रमार्ज्जनं कुर्य्यात्। प्रमार्ज्जितास्यस्य उक्तरूपेण प्रमार्ज्जिततात्वादेः शिशोः शिरस्तालु ब्रह्मरन्ध्रस्थानं स्नेहगर्भेण घृताक्तेन कार्पासपिचुना तूलकेन। ततोऽनन्तरमस्य शिशोः सैन्धवोपहितेन सर्पिषा प्रच्छर्द्दनं कार्य्यम्। सुश्रुतेऽप्युक्तम्—अथ जातस्योल्बं मुखञ्च सैन्धवसर्पिषा विशोध्य घृताक्तं मूर्द्ध्नि पिचुं दद्यादिति। अत्र उल्बं शिशोः कण्ठगतश्लेष्माणं विशोध्य छर्द्दनेन निर्हरेदित्यर्थः। तत इत्यादि। ततः कल्पनं नाड्या इति नाभिनाड़ीच्छेदनम्। नाभिबन्धनात् नाभिमूलात्

काले तु उष्णोदकेनेत्यर्थः। संक्लेशविहतानिति यानिरन्ध्रपीड़िताद्विक्लेशपराहतान्। कृष्णकपालिका ईषिकेति, तत्कृतसूर्पः, कृष्णकपालिकासूर्पः, तेन निष्पन्नवायुं वीजयेयुरित्यर्थः। अथ कियन्तं कालं तद्वीजनमित्याह—यावत् प्राणानां प्रत्यागमनमिति। उदकग्रहणं मलमार्ग-

प्रभृति हित्वाष्टाङ्गुलमभिज्ञानं कृत्वा छेदनावकाशस्य द्वयो-रन्तरयोः शनैर्गृहीत्वा तीक्ष्णेन रौक्म्यराजतायसानामन्यतमे-नार्द्धधारेण * छेदयेत् तामग्रे सूत्रेणोपनिबध्य कण्ठे चास्य शिथिलमवसृजेत् ॥ ४० ॥

अस्य चेन्नाभिः पच्यते तां लोध्रमधुकप्रियङ्गुहरिद्रादारु-कल्कसिद्धेन तैलेनाभ्यञ्ज्यात् । एषामेव तैलौषधानां चूर्णेनाव-चूर्णयेत् । एष नाडीकल्पनविधिरुक्तः सम्यक् । असम्यक्-कल्पने हि नाड्या आयामव्यायामोत्तुण्डितापिण्डलिका- † -विनामिकाविजृम्भिकाबाधेभ्यो भयम् । तत्रानिदाहिभिर्वात-पित्तप्रशमनैरभ्यङ्गोत्सादनपरिषेकैः सर्पिर्भिश्चोपक्रमेत गुरु-

प्रभृति अष्टाङ्गुलं नाड्या हित्वा त्यक्त्वा छेदनस्थानस्यावकाशस्थानस्य द्वयोरन्त-रयोरभिज्ञानमभिसन्धानं (चिह्नं) कृत्वा तां नाडीमग्रे सूत्रेण बद्ध्वा । रौक्म्यं सुवर्ण-निर्म्मितम् । छित्त्वा तत्सूत्रैकदेशमस्य शिशोः कण्ठे उपनिबध्य विसृजेत् । सुश्रुतेऽप्युक्तम्—ततो नाभीनाडीमष्टाङ्गुलमायम्य सूत्रेण बद्ध्वा छेदयेत् तत-स्तत्रैकदेशञ्च कुमारस्य ग्रीवायां सम्यग् बध्नीयात् इति ॥ ४० ॥

गङ्गाधरः—अस्य चेदित्यादि । अस्य छिन्ननाभिनाडीकस्य । तां छिन्न-नाडीं नाभिं लोध्रादीनां कल्केन तैलपादिकेन चतुर्गुणजलेन च सिद्धेन तैलेन । एषामेव तैलौषधानां तैलकल्कार्थमेषां लोध्रादीनां चतुर्णां चूर्णेन । असम्यग् इत्यादि । आयामा दीर्घा व्यायामा विस्तीर्णा चासौ उत्तुण्डिता चेति आयाम-व्यायामोत्तुण्डिता । आयामव्यायामाभ्यामुत्तुण्डिता दीर्घपीनगुड़काकारा । पिण्डलिका परिमण्डलगुड़काकारा । विनामिका अन्तोच्छूनमध्यनिम्नगुड़काकारा । विजृम्भिका मुहुर्म्मुहुर्वृद्धिमती । एते चत्वारो नाभिगता आबाधाः । कथमुप-

शायम् । उपधानमावरणम्, तच्चेहाङ्गुल्या कार्पासपिचुनैव । अष्टाङ्गुलमभिज्ञानं कृत्वेति अष्टाङ्गुलं चिह्नं कृत्वा । अर्द्धधारस्तिर्य्यगधारः शस्त्रविशेषः । तामिति छिन्नावशिष्टाङ्गुलां नाडीम् । कण्ठेऽवसृजेदिति नाड्यग्रबद्धं सूत्रं कुमारस्य कण्ठे निबध्नीयात् ॥ ३८—४० ॥

चक्रपाणिः—नाड्या अविककल्पने दोषमाह—असम्यगित्यादि । आयामो दैर्घ्यम्, व्यायामो

* अर्द्धधारेण इति चक्रः । † आयामव्यायामतुण्डिका इति पाठान्तरम् ।

लाघवमभिसमीक्ष्य कुमारस्य। प्रागतो जातकर्म्म कार्य्यं, ततो मधुसर्पिषी मन्त्रोपमन्त्रिते यथाम्नायं प्राशितुमस्मै दद्यात्। स्तनमत ऊर्द्ध्वमनेनैव विधिना दक्षिणं पातुं पुरस्तात् प्रयच्छेत्। अथातः शीर्षतः स्थापयेदुदकुम्भं मन्त्रोपमन्त्रितम्॥ ४१॥

अथास्य रक्षां विदध्यात्। आदानीकर्कन्धुखदिरपीलु-

क्रमेतेत्यत आह—तत्रेत्यादि, गुरुलाघवमिति कुमारस्य नाभिबाधकदोषाणां गुरुलाघवम् अभिसमीक्ष्य पूर्व्वं गुरुदोषं त्वरयोपक्रम्यानन्तरं लघुदोषमुपक्रमेदित्यर्थः। प्रागत इत्यादि। नाभिनाड़ीच्छेदनात् पूर्व्वं शीताभिरद्भिः कुमारमाश्वास्य कुमारस्य जातकर्म्म कार्य्यम्। तत इत्यादि। यथाम्नायं यस्य यद्वेदोक्तविधिना पुरुषानुक्रमेण कर्म्म विधीयते तद्वेदोक्तमन्त्रोपमन्त्रिते मधुसर्पिषी प्राशितुं दद्यादा स्तन्यप्रवृत्तेश्च प्रसूतायाः। सुश्रुते च—अथ कुमारं शीताभिरद्भिराश्वास्य जातकर्म्मणि कृते मधुसर्पिरनन्ताब्राह्मीरसेन सुवर्णचूर्णमङ्गुल्यानामिकया लेहयेत्। ततो बलातैलेनाभ्यज्य क्षीरिवृक्षकषायेण सर्व्वगन्धोदकेन वा रूप्यहेमप्रतप्तेन वा वारिणा स्नापयेदेनम् कपित्थपत्रकषायेण वा कोष्णेन यथाकालं यथादोषं यथाविभवञ्च इति। स्तन्यमत ऊर्द्ध्वमित्यादि। अत ऊर्द्ध्वम् अतः परं स्तन्यप्रवृत्तौ सत्याम्। सुश्रुतेऽप्युक्तं—धमनीनां हृदिस्थानां विवृतत्वात् अनन्तरम्। चतूरात्रात् त्रिरात्राद्वा स्त्रीणां स्तन्यं प्रवर्त्तते। तस्मात् प्रथमेऽह्नि मधुसर्पिरनन्तामिश्रं मन्त्रपूतं त्रिकालं पाययेत्। द्वितीये लक्ष्मणसिद्धं सर्पिस्तृतीये च। ततः प्राङ्निवारितस्तन्यं मधुसर्पिः स्वपाणितलसम्मितं त्रिकालं पाययेत् इति। अत ऊर्द्ध्वं स्तन्यप्रवृत्तौ अनेन विधिना यथाम्नायं मन्त्रोपमन्त्रितं दक्षिणं स्तनं पुरस्तादग्रे पातुं प्रयच्छेत्। ततो वाममिति शेषः। अथात इत्यादि। उदकुम्भं जलपूर्णकुम्भं यथाम्नायं मन्त्रोपमन्त्रितं कुमारस्य शीर्षतः स्थाने स्थापयेत्॥ ४१

गङ्गाधरः—अथास्य रक्षां विदध्यादिति। रक्षाविधिमाह—आदानी-

विस्तारः, ताभ्यां कुण्डिका आयामस्यायामकुण्डिका दीर्घपीनत्वयुतेत्यर्थः। पिण्डलिका तु परिमण्डलयुता। विनामिका अन्ताच्छन्ना मध्यनिम्ना। विजृम्भिका तु मुहुर्म्मुहुर्वृद्धिमती। गुरुलाघवमवेक्ष्येति नाड़ीपाककारकपित्ते तथा वाते आयामस्यायामकुण्डिकादिविकारचतुष्टयकारके यो दोषो गुरुः, स उपकर्त्तव्यस्त्वरयेत्यर्थः। जातमात्रस्य वेदोक्तं कर्म्म जातकर्म्म। यथाम्नायमिति यथागमं मन्त्रोपमन्त्रिते। एतेनैव विधानेन स्तनमभिमन्त्रितं पाययेदित्यर्थः। आदनी घोषकभेदः।

परूषकशाखाभिरस्या गृहं भिषक् समन्ततः परिवारयेत् । सर्व्वतश्च सूतिकागारस्य सर्षपातसीतण्डुलकणकणिकाः * प्रकिरेत् । तथा तण्डुलबलिमङ्गलहोमः सततमुभयकालं क्रियेत प्राङ् नामकर्म्मणः † । द्वारे च मुषलमनुतिरश्चीनं न्यस्तं कुर्य्यात् । वचाकुष्ठक्षौमकहिङ्गुसर्षपातसीलसुनकणकणिकानां रक्षोघ्नसमाख्यातानाञ्चौषधीनां पोट्टलिकां बद्ध्वा सूतिकागारस्योत्तरदेहल्यामवसृजेत्, तथा सूतिकायाः कण्ठे सपुत्रायाः, स्थाल्युदकुम्भपर्य्यङ्केष्वपि, तथैव द्वयोर्द्वारपक्षयोः । सकणकुम्भकेन्धनाग्निस्तिन्दुककाष्ठेन्धनश्चाग्निः सूतिकागारस्याभ्यन्तरतो नित्यं स्यात् । स्त्रियश्चैनां यथोक्तगुणाः सुहृदश्चानुजागृयुः दशाहं द्वादशाहं वा अनुपरतप्रदानमङ्गलाशीः स्तुतिगीतवादित्रमन्न-

स्यादि । आदानी देवदानी घोषकभेदः । अस्याः सूतिकाया गृहं समन्ततः चतुर्दिक्षु । सूतिकागारस्य सर्व्वतश्चतुर्दिक्षु मध्यतश्च सर्षपादीन् प्रकिरेत् प्रक्षिपेत् । तण्डुलानां क्षुद्रतरकणाः कणः, क्षुद्रकणाः कणिकाः । तण्डुलबलिमङ्गलहोमस्तण्डुलबलिना मङ्गलहोम उभयकालं सायं प्रातश्च क्रियत । प्राङ् नामकर्म्मण अशौचान्तदिनपर्य्यन्तम् । मुषलम् अनुतिरश्चीनं तिरोभावेण न्यस्तं कुर्य्यात् । वचादीनां तथान्येषामपि गुग्गुलवादीनां रक्षोघ्नसमाख्यातानामोषधीनां वस्त्रे पोट्टलीं बद्ध्वा उत्तरदेहल्यामुत्तरप्राङ्गणे द्वारोपरि अवसृजेत् रक्षेत् । सूतिकायाः पुत्रस्य च कण्ठे तस्य पोट्टलीं बध्नीयात् । स्थाल्यादिषु च रक्षेत् तस्य पोट्टलीं, द्वारपक्षयोः द्वारपार्श्वयोर्द्वयोश्च पोट्टलीद्वयं रक्षेत् । सूतिकागारस्याभ्यन्तरतो नित्यं कणस्तण्डुलकणः, कुम्भ उदकुम्भः, इन्धनं काष्ठमग्निस्तैः सहितः स्यादग्निश्च तिन्दुककाष्ठेन्धनः स्यात् । स्त्रियश्च इत्यादि । अनुजागृयुर्जागरणम् एनामनु लक्ष्यीकृत्य कुर्य्युः । अनुपरतानि

तण्डुलबलिहोमः कियत्कालं कर्त्तव्य इत्याह—आ नामकर्म्मण इति । दशाहं यावदित्यर्थः, दशाहे तु नामकर्म्म भविष्यतीति । जतूकर्णेऽप्युक्तम्—‘तण्डुलबलिहोमो द्विकालमा दशमाहम्” इति ।

* सर्षपातसीकणकणिकाः तथा तण्डुलबलिहोम इति चक्रः । † आ नामकर्म्मण इति चक्रः

पानविशदमनुरक्तप्रहृष्टजनसम्पूर्णञ्च तद्वेश्म कार्य्यम्। ब्राह्मणश्चाथर्व्ववेदवित् सततमुभयकालं शान्तिं जुहुयात् स्वस्त्ययनार्थं सुकुमारस्य तथा सूतिकायाः। इत्येतद् रक्षाविधानमुक्तम्॥ ४२

सूतिकान्तु खलु बुभुक्षितां विदित्वा स्नेहं पाययेत् प्रथमं परमया शक्त्या सर्पिस्तैलं वसां मज्जानं वा सात्म्यीभावमभिसमीक्ष्य भिषक् पिप्पलीपिप्पलीमूलचव्यचित्रकशृङ्गवेरचूर्णसहितम्। स्नेहं पीतवत्याश्च सर्पिस्तैलाभ्यामभ्यज्य वेष्टयेदुदरं महता वाससा। तथा अस्या न वायुरुदरे विकृतिमापादयति अनवकाशत्वात्। जीर्णे तु स्नेहे पिप्पल्यादिभिरेव सिद्धां यवागूं सुस्निग्धां

अविरतानि प्रदानादीनि यत्र तदनुपरतप्रदानादि। अन्नपानविशदम् अन्नेन पानेनावदातं। तद्वेश्म सूतिकागारम्। सुकुमारस्य स्वस्त्ययनार्थं तथा सूतिकायाः स्वस्त्ययनार्थम्। सुश्रुतेऽप्युक्तम्—अथ बालं क्षौमपरिवृतं क्षौमवस्त्रास्तृतायां शय्यायां शाययेत्। पीलुबदरीनिम्बपरुपकशाखाभिश्चैनं वीजयेत्। मूर्ध्नि चास्याहरहस्तैलपिचुमवचारयेत्। धूपयेच्चैनं रक्षोघ्नैर्धूपैः। रक्षोघ्नानि चास्य पाणिपादशिरोग्रीवास्ववसृजेत्। तिलातसीसर्षपकणांश्चात्र प्रकिरेत्। अधिष्ठाने चाग्निं प्रज्वालयेत्। व्रणितोपासनीयञ्चावेक्षेत इति॥ ४२॥

गङ्गाधरः—सूतिकान्त्वित्यादि। प्रथमं प्रथमदिनावधि सर्पिर्वा तैलं वा वसां वा मज्जानं वा स्नेहं पाययेत् परमया शक्त्या। सर्पिरादीनां सात्म्यीभावं सूतिकाया अभिसमीक्ष्य पिप्पल्यादिचूर्णसहितं स्नेहं सर्पिराद्यन्यतमं पाययेत्। तच्च पीतवत्याः सूतिकाया उदरं महता वाससा वस्त्रेण वेष्टयेदिति। अस्य फलमाह—तथेत्यादि। तेन प्रकारेण अस्या अवकाशमप्राप्य उदरे वायुर्न विकृतिमापादयति। कस्मादित्यत आह—अनवकाशत्वादिति। वस्त्रवेष्टनेन

'रक्षोघ्नसमाख्यातानाम्'' इत्यनेन गुग्गुल्वादीन् ग्राहयन्ति। उत्तरदेहल्यामिति द्वारोपरि, अन्ये तु देहलीं द्वाराधःकाष्ठमाहुः॥ ४१।४२॥

चक्रपाणिः—कुमारस्य जातकर्म्माभिधाय सूतिकायाः कर्त्तव्यमाह—सूतिकान्त्वित्यादि। बुभुक्षितामित्यनेन यावता कालेन बुभुक्षिता भवति, तदा स्नेहपानं कर्त्तव्यम्। परमया शक्त्येति उत्तमया शक्त्या लक्षिता स्नेहं पिबेत्, यावता स्नेहेन बलविरोधो न भवति तावन्मात्रं स्नेहं पिबेदित्यध्याहृतम्। सात्म्यीभावमभिसमीक्ष्येति सर्पिरादिषु यद् यस्याः सात्म्यम्, तत् तस्यै

द्रवां मात्रशः पाययेतोभयकाल-*-श्चोष्णोदकेन परिषेचयेत् प्राक् स्नेहयवागूपानाभ्याम् । एवं पञ्चरात्रं सप्तरात्रं वानुपाल्य क्रमेणाप्याययेत् । स्वस्थवृत्तमेतावत् तु सूतिकायाः ॥ ४२ ॥

वायुरुदरेऽवकाशं न प्राप्नोतीति भावः । ततोऽस्मिन् पीते स्नेहे जीर्णे सति पिप्पल्यादीत्यादि । अत्रायमर्थः—पूर्व्वमुष्णोदकेनैनां परिषिच्य घृताद्यन्यतमं स्नेहं पिप्पल्यादिचूर्णसहितं मात्रावत् पाययेत् । ततोऽनन्तरमुक्तरूपेण वस्त्रवेष्टनं, ततस्तस्मिन् जीर्णे पिप्पल्यादिकल्कपादिकचतुर्गुणजलसिद्धां घृतादिसुस्निग्धां द्रवां यवागूं मण्डरूपां पेयां वा मात्रां पाययेत् पूर्व्वाह्णम् । अपमपराह्णे पूर्व्वमुष्णोदकेनैनां परिषिच्य स्नेहं पाययित्वा तस्मिन् जीर्णे तादृशीं यवागूं मात्रां पाययेदिति बोध्यम् । एवं पञ्चरात्रं वा सप्तरात्रं वा पालयेत् । सुश्रुतेऽप्युक्तम्—अथ सूतिकां बलातैलाभ्यक्तां वातहरौषधनिकाथेनोपचरेत् । सशेषदोषान्तु तदहः पिप्पलीपिप्पलीमूलहस्तिपिप्पलीचित्रकशृङ्गवेरचूर्णं गुडोदकेनोष्णेन पाययेत् । एवं द्विरात्रं त्रिरात्रं वा कुर्य्यात् आ दुष्टशोणितविशुद्धेः । ततो विदारिगन्धादिसिद्धां स्नेहयवागूं क्षीरयवागूं वा पाययेत् त्रिरात्रम् । ततो यवकोलकुलत्थसिद्धेन जाङ्गलरसेन शाल्योदनं भोजयेद् बलमग्निबलञ्चावेक्ष्य । अनेन विधिनाध्यर्द्धमासमुपसंस्कृता विमुक्ताहाराचारा विगतसूतिकाभिधाना स्यात् पुनरार्त्तवदर्शनादित्येके । धन्वभूमिजातां सूतिकां घृततैलयोरन्यतरस्य मात्रां पाययेत् पिप्पल्यादिकषायानुपानं स्नेहनित्या च स्यात् त्रिरात्रं पञ्चरात्रं वा । बलवतीमबलां यवागूं पाययेत् त्रिरात्रं पञ्चरात्रं वा । अत ऊर्द्धं स्निग्धेनान्नसंसर्गेणोपचरेत् प्रायशश्चैनां प्रभूतेनोष्णोदकेन परिषिञ्चेत् । क्रोधायासमैथुनादीन् परिहरेत् । भवतश्चात्र । मिथ्याचारात् सूतिकाया यो व्याधिरुपजायते । स कृच्छ्रसाध्योऽसाध्यो वा भवेदत्यपतर्पणात् । तस्मात् तां देशकालौ च व्याधिसात्म्येन कर्म्मणा । परीक्ष्योपचरेदेवं नेयमत्ययमाप्नुयात् ॥ इति ॥ ४२ ॥

वेदम् । अच्छेनेति निर्म्मलेन । उभयतः कालमिति पदम् उष्णोदकेन परिषेचयेदित्यनेन योज्यम् । तदेव कालद्वयमाह—प्रागित्यादि । पौर्व्वाह्णिकस्नेहपाने परिषेकं कारयितव्यम्, तथा जीर्णे स्नेहे परिषेचितां यवागूः पाययितव्येत्यर्थः । अयन्तु व्यवहारोऽनूपदेशे प्रबलकफत्वात् प्राणिनाम्, न जाङ्गलादिदेशव्यवहार इति ॥ ४२ ॥

* इतः परम् अच्छेनेत्यधिकः पाठश्चक्रधृतः ।

तस्यास्तु खलु सूतिकाया यो व्याधिरुत्पद्यते, स कृच्छ्रसाध्यो भवत्यसाध्यो वा। गर्भवृद्धिक्षयितशिथिलसर्व्वधातुत्वात् प्रवाहणवेदनाक्लेदरक्तनिःस्रुतिविशेषशून्यशरीरत्वाच्च। तस्मात् तां यथोक्तेन विधिनोपचरेत्। भौतिकजीवनीयबृंहणीय-*-वातहरसिद्धैरभ्यङ्गोत्सादनपरिषेचनावगाहनान्नपानविधिभिर्विशेषतश्चोपचरेत्। विशेषतो हि शून्यशरीराः स्त्रियः प्रजाता भवन्ति ॥ ४४ ॥

गङ्गाधरः—अथ सूतिकायाः स्वास्थ्यवृत्तमुक्त्वातुर्य्यवृत्तमाह—तस्यास्त्वित्यादि। ननु कस्मात् कृच्छ्रसाध्योऽसाध्यो वेत्यत आह—गर्भेत्यादि। गर्भस्याधानात् प्रभृति वृद्ध्या क्षयिताः शिथिलाश्च सर्व्वे धातवो यस्यास्तत्त्वात्। ततः परं प्रसवकाले प्रवाहणं वेदना प्रसवयातना। क्लेदरक्तयोर्निःस्रुतिः निःशेषेण स्रावस्तेषां विशेषेण शून्यं स्नेहरहितं शरीरं यस्यास्तथात्वाच्च। यथोक्तेन पूर्व्वोक्तेन विधिनोपचरेत्। विशेषतश्च भौतिकादिसिद्धैरभ्यङ्गादिविधिभिरुपचरेत्। कस्माद् भौतिकादिसिद्धैरभ्यङ्गादिभिर्विशेषतः सूतिकामुपचरेदित्यत आह—विशेषतो हीत्यादि। प्रजाताः प्रसूताः स्त्रिय इति। अत्र रुक्षणे दोष उक्तः सुश्रुते—प्रजातायाश्च नार्य्या रुक्षशरीरायास्तीक्ष्णैरविशोधितं रक्तं वायुना तद्देशगेनातिसंरुद्धं नाभेरधः पार्श्वयोर्वस्तौ वस्तिशिरसि वा ग्रन्थिं करोति। ततश्च नाभिवस्त्युदरशूलानि भवन्ति। सूचीभिरिव निस्तुद्यते भिद्यते दीर्य्यत इव च पक्वाशयः। समन्तादाध्मानमुदरे मूत्रसङ्गश्च भवतीति मक्कल्लक्षणम्। तत्र वीरतर्व्वादिसिद्धं जलमूषकादिप्रतीवापं पाययेत्। यवक्षारचूर्णं वा सर्पिषा सुखोदकेन वा लवणचूर्णं वा, पिप्पल्यादिक्वाथेन पिप्पल्यादिचूर्णं वा, सुरामण्डेन वरुणादिक्वाथं वा, पञ्चकोलैलाप्रतीवापं पृथक्पर्ण्यादिक्वाथं वा

चक्रपाणिः—सूतिकाया मिथ्योपचारेण व्याधिर्भवन् कृच्छ्रसाध्योऽसाध्यो वा भवति तथा दर्शयन् यथोक्तक्रमस्यावधानेन कर्त्तव्यतां दर्शयितुमाह—तस्यास्त्वित्यादि। गर्भवृद्ध्या धात्वन्तरापोषणेन क्षयिताश्च शिथिलीकृताश्च सर्व्वे धातवो यस्याः सा तथा। यथा गर्भव्यपगम एव तावच्छरीरशून्यत्वे हेतुः, तथा प्रवाहणवेदनाक्लेदरक्तनिःस्रुतिविशेषा हेतुरित्याह—प्रवाहणेत्यादि। यथोक्तेनेति स्नेहपानादिना, एतेन यथोक्तविधिकरणमेव दुश्चिकित्स्यस्य सूतिकाव्याधेश्च निदानवर्ज्जनमुक्तं

* इतः परं मधुरेत्यधिकः पाठः क्वचिद् दृश्यते।

दशमे त्वहनि सपुत्रा स्त्री सर्व्वगन्धौषधैर्गौरसर्षप-लोध्रैश्च स्नाता लघ्वहत वस्त्रपरिहिता पवित्रेष्टलघुभूषणवती [च] सुसंस्पृश्य मङ्गलानि उचिताम् अर्च्चयित्वा च देवतां शिखिनः शुक्लवाससोऽव्यङ्गांश्च ब्राह्मणान् स्वस्ति वाचयित्वा कुमारमहतेन शुचिवाससाच्छादयेत् । प्राक्-शिरसमुदक्शिरसं वा संवेश्य देवतापूर्व्वं द्विजातिभ्यः प्रणमति इत्युक्त्वा कुमारस्य पिता द्वे नामनी कारयेत् नाक्षत्रिकं नामाभिप्रायिकञ्च । तत्राभिप्रायिकं नाम घोषवदाद्यन्तस्थान्त-मूष्मान्तञ्च वृद्धं त्रिपुरुषान्तरमनवप्रतिष्ठितम् । नाक्षत्रिकन्तु नक्षत्रदेवतासंयुक्तं कृतं द्व्यक्षरं चतुरक्षरं वा ॥ ४५ ॥

[म]द्दारुमरिचसंसृष्टं पुराणगुडं वा, त्रिकटुकचतुर्जातककुस्तुम्बुरुमिश्रं खादेदच्छं वा पिबेदरिष्टमिति । इति ॥ ४४ ॥

गङ्गाधरः—ततः किं कार्य्यमित्यत आह—दशमे त्वित्यादि । लघु चाहतञ्च [व]स्त्रं परिहितं यया सा, तथा पवित्रञ्च इष्टञ्च लघु च भूषणं वर्त्तते यस्याः सा, [त]था उचितां देवतां गणेशादिं शिखिनः शिखावतः शुक्लवाससः शुक्ल-वस्त्रावृतान् अव्यङ्गान् सर्व्वसम्पूर्णाङ्गान् । अहतेन नवेनाक्षुण्णेन वाससा । प्राक्शिरसं पूर्व्वशिरसम् उदक्शिरसम् उत्तरशिरसं वा संवेश्य शाययित्वा देवता-पूर्व्वं पूर्व्वं देवताभ्यो नमस्कृत्वा द्विजातिभ्यो द्विजातीनुद्दिश्य प्रणमतीत्युक्त्वा कुमारस्य पिता घोषवदाद्यन्तस्थं, घोषवन्तो वर्णाः कवर्गादीनां पञ्चानां वर्गाणामन्त्यान्त्यास्त्रयस्त्रयः । तेषामन्यतमो वर्णो यस्यादौ अन्ते च स्थितो [त]त् घोषवदाद्यन्तस्थम् । ऊष्मान्तञ्चेति चशब्दो वार्थे । शषसहा ऊष्माणः, तदन्यतमवर्णान्तम् । त्रिपुरुषान्तरं पितृपितामहप्रपितामहनाम-

[भि]न्नानि दर्शयति । यदुत्पन्नव्याधौ विहितं भेषजम् तत् प्रायो न सिध्यतीति कृत्वा नेहोक्तम् । [रा]क्षसिकं भूतहरम् ॥ ४४ ॥

चक्रपाणिः—उचितामिति या यस्या देवता सदा पूज्या, तामर्च्चयित्वा । शिखिन इति पावकान् । किंवा शिखा चूड़ा, तद्वतो ब्राह्मणानमुण्डान् । नक्षत्रदेवतायुक्तमिति, यस्मिन् नक्षत्रे [कु]मारो जातः, तस्य नक्षत्रस्य या तु देवता, तस्या नाम कर्त्तव्यमित्यर्थः । किंवा द्वे नामनी

कृते च नामकर्म्मणि कुमारं परीक्षितुमुपक्रमेतायुषः प्रमाणज्ञानहेतोः। तत्रेमान्यायुष्मतां कुमाराणां लक्षणानि भवन्ति। तद् यथा—एकैकजा मृदवोऽल्पाः स्निग्धाः सुबद्धमूलाः कृष्णाः केशाः प्रशस्यन्ते। स्थिरा वहला त्वक्, प्रकृत्याकृतिसम्पन्नमीषत्प्रमाणातिरिक्तम् अनुरूपमातपत्रोपमं शिरः प्रशस्यते। व्यूढं दृढं समं सुश्लिष्टशङ्खसन्ध्यूर्द्ध्वव्यञ्जन-*

वर्ज्जम्। अनवप्रतिष्ठितं नवीनसङ्केतितवर्ज्जं प्रसिद्धप्रतिष्ठितम्। नक्षत्राणि अश्विन्यादीनि तत्कुमारजन्मकालिकानि। नक्षत्रदेवता अश्वियमदहनादयः तत्र यज्जन्मनक्षत्रं तस्य नामसंयुक्तं अन्यतरनामसंयुक्तं द्व्यक्षरं चतुरक्षरं वा कृतं नाम नाक्षत्रिकम्। सुश्रुतेऽप्युक्तं—ततो दशमेऽहनि मातापितरौ कृतमङ्गल-कौतुकौ स्वस्तिवाचनं कृत्वा नाम कुर्य्यातां यदभिप्रेतं नक्षत्रनाम वा। इति। अत्र दशमेऽहनीति श्रेष्ठत्वाद् ब्राह्मणाभिप्रायेण तत्रोपलक्षणादशौचान्तदिने सर्व्वेषा-मित्यर्थः ॥ ४५ ॥

<u>गङ्गाधरः</u>—नामकरणानन्तरं किं कार्य्यमित्यत आह—कृते चेत्यादि। एकैकजाः पृथक् पृथग्जाता इत्यादीनि सर्व्वाणि केशा इत्यस्य विशेषणानि। स्थिरेत्यश्लथा वहला स्थूला त्वक् चर्म्म। प्रकृत्येत्यादिना शिरोलक्षणं, प्रकृतिरविकृतिराकृतिस्तया सम्पन्नं शिरः प्रायेण शरीरानुरूपमीषत्प्रमाणाति-रिक्तम्। आतपत्रोपमं छत्रोपमम्। व्यूढमित्यादि ललाटलक्षणम्। व्यूढं वृहत् दृढं गाढं सममनुच्चावचं सुष्ठु श्लिष्टैः संमिलितैः शङ्खसन्धिभिरूर्द्ध-

कारयेत् नाक्षत्रिकम् आभिप्रायिकञ्च, इत्यादि पाठः। घोषवदित्यादि विशेषणम्, घोषा वर्गचतुर्थी 'घझढधभाः,' अन्तस्था 'यरलवाः', 'शषसाः' उष्माणः ॥ ४५ ॥

<u>चक्रपाणिः</u>—नामकर्म्मणीति नामकरणसमयक्रियमाणहोमादिकर्म्मणि, नामैव वा कर्म्म। स्थिरेत्यश्लथा। ईषत्प्रमाणातिवृत्तं शिर इति उत्सर्गापवादन्यायेन बोद्धव्यम्। तेन यदुक्तं पूर्व्वम्—"षडङ्गुलोत्सेधं द्वात्रिंशदङ्गुलपरिणाहं शिरः" एतच्चाभिधायोक्तम्—"तत्रायुर्बलमित्यादि यावत् प्रमाणवति शरीरे, विपर्य्ययस्तु हीनेऽधिके वा" इति, एतद्वचनादपवादभूतमप्यतीव प्रशस्तं भवतीति ज्ञेयम्। एवं महदुपचितं पाणिपादम् इत्यत्रापि व्याख्येयम्। अनुरूपमित्यनेन शरीरानुरूपतां शिरसो दर्शयन् उक्तलक्षणादनतिवृद्धिं शिरसो दर्शयति, अतिवृद्धिं शरीराननुरू-

* -र्द्ध्वव्यञ्जनमिति चक्रः

सम्पन्नमुपचितं बलिनमर्द्धचन्द्राकृति ललाटम्, बहलौ विपुल-समपीठौ समौ नोच्चैर्वृद्धौ पृष्ठतोऽवनतौ सुश्लिष्टकर्णपुत्रकौ महाच्छिद्रौ कर्णौ। ईषत्प्रलम्बिन्यावसक्ते समे संहते महत्यौ भ्रुवौ। समे समाहितदर्शने व्यक्तभागविभागे बलवती तेज-सोपपन्ने स्वङ्गापाङ्गे चक्षुषी। ऋज्वी महोच्छ्वासा वंशसम्पन्ना ईषदवनताग्रा नासिका। महद् ऋजु सुनिविष्टदन्तमास्यम्। आयामविस्तारोपपन्ना श्लक्ष्णा तन्वी प्रकृतियुक्ता पाटलवर्णा जिह्वा। श्लक्ष्णं युक्तोपचयमुष्मोपपन्नं रक्तं तालु। महान् अदीनः

व्यञ्जनमर्द्धाकारस्तेन सम्पन्नम्। उपचितं वृद्धिमत्। बलिनं वलिमत्। अर्द्ध-चन्द्राकृति च ललाटं प्रशस्यते इत्यन्वयः। बहलावित्यादिना कर्णलक्षणम्। विपुलतया समपीठौ नोच्चैर्वृद्धौ लतिकाभागतो वृद्धौ। पृष्ठतः पश्चाद्भागेनावनतौ नम्रौ। सुश्लिष्टौ कर्णपुत्रकौ बाह्यकर्णग्रन्थी ययोस्तौ। ईषदित्यादिना भ्रूलक्षणम्। ईषत्प्रलम्बिन्यौ नातिलम्बनातिह्रासरूपे नातिविच्छिन्नमध्ये इत्यसक्ते समे समानरूपे संहते घनलोमवत्यौ महत्यौ स्थूले। समे इत्यादिना चक्षुर्लक्षणम्। समे समानरूपे, समाहितदर्शने सम्यगाहितदृष्टिभागे. भागाः शुक्लकृष्णादयः तेषां विभागा व्यक्ता ययोस्ते तथा, बलवती दर्शनबलयुक्ते, तेजसा दूर-दृष्ट्यादिलक्षितेन उपपन्ने, सुष्ठु अङ्गानि वर्त्मादीनि अपाङ्गौ च ययोस्तथा। ऋज्वीत्यादि नासिकालक्षणम्। ऋज्वी सरला, महोच्छ्वासा वृहन्निश्वासयुक्ता, वंशसम्पन्नेति दीर्घवंशाकारतया सम्पन्ना, ईषदवनताग्रा अल्पनम्राग्रभागा। महदित्यादिनास्यलक्षणम्। आस्यं मुखच्छिद्ररेखा महद् दीर्घतया वृहत् ऋजु सरल सुनिविष्टं सुष्ठु निवेशः स्थानं युक्तदन्तपंक्ति तद्युक्तम्। आयामेत्यादिना जिह्वालक्षणम्। आयामेन दैर्घ्येण विस्तारेण विस्तृततया उपपन्ना, श्लक्ष्णा अखरा, तन्वी अघना, प्रकृतियुक्ता अविकृता, पाटलवर्णा श्वेतरक्तवर्णा। श्लक्ष्णमित्यादिना तालुलक्षणम्। श्लक्ष्णमखरं युक्तोपचयं नातिनिम्नं नात्युच्चम्। उष्मोपपन्नं स्वाभाविकेनोष्मणा सम्पन्नं, रक्तं रक्तवर्णम्। महान्

भवति, तच्चाप्रशस्तमेव। ऊर्द्ध्वव्यञ्जनमिति ऊर्द्ध्वरेखात्रयरूपलक्षणयुक्तम्। जतूकर्णे हि त्रिरेखं ललाटमुक्तम्। नोच्चैर्वृद्धाविति अनुद्भूतौ सन्तावनुक्रमवृद्धौ। व्यक्तभागविभागे इति प्रव्यक्त-कृष्णशुक्लविभागे। शोभनानि वर्त्मादीनि अङ्गानि अपाङ्गे च ययोस्ते स्वाङ्गोपाङ्गे। अत्र 'अङ्ग'-

स्निग्धोऽनुनादी गम्भीरसमुत्थो धीरः स्वरः। नातिस्थूलौ नातिकृशौ विस्तारोपपन्नावास्यप्रच्छादनौ रक्तावोष्ठौ। महत्यौ हनू। वृत्ता नातिमहती ग्रीवा। व्यूढ़मुपचितमुरः। गूढ़ं जत्रु पृष्ठवंशश्च। विप्रकृष्टान्तरौ स्तनौ। अंसानुपातिनी स्थिरे पार्श्वे। वृत्तपरिपूर्णायतौ बाहू सक्थिनी अङ्गुलयश्च। महदुपचितं पाणिपादम्। स्थिरा वृत्ताः स्निग्धास्ताम्रास्तुङ्गाः कूर्म्माकाराः करजाः। प्रदक्षिणावर्त्ता सोत्सङ्गा च नाभी। नाभ्युरस्त्रिभागहीना समा समुपचितमांसा कटी। वृत्तौ स्थिरोपचितमांसौ नात्युन्नतौ नात्यवनतौ स्फिचौ। अनुपूर्व्वं वृत्तावुपचययुक्तावूरू। नात्युपचिते नात्यपचिते

इत्यादिना स्वरलक्षणम्। येन शब्देन भाषते स शब्दः कण्ठस्य स्वरः। महान् वृहान्, अदीनः अक्षीणः, स्निग्धोऽकर्कशः श्रुतौ मधुर इत्यर्थः। अनुनादी प्रतिध्वनिमान्, गम्भीरसमुत्थो नाभित इव प्रपद्यते इति लक्ष्यते घोषरूपः। धीरः अशीघ्रः। नातिस्थूलावित्यादिनौष्ठलक्षणम्। आस्यप्रच्छादनौ सम्पुटरूपौ न विवृतरूपौ, स्वभावतो दन्तानाच्छाद्य सततं वर्त्तिनौ। द्वे हनू महत्यौ। वृत्तेत्यादि ग्रीवालक्षणम्। ग्रीवा वृत्ता वर्त्तुला नातिमहती नातिवृहती। व्यूढ़मित्यादिना वक्षोलक्षणम्। व्यूढं वृहत् उपचितं मांसलतया वृद्धिमत्। गूढं गुप्तमव्यक्तमित्यर्थः। जत्रु कण्ठोरसोः सन्धिः। पृष्ठवंशश्च गूढ़ इत्यन्वयो लिङ्गविपर्य्ययेण। विप्रकृष्टं न सन्निकृष्टमन्तरमन्तरालदेशो ययोस्तौ स्तनौ। अंसेत्यादिना पार्श्वलक्षणम्। अंसौ भुजयोरुपरिभागौ तावनु लक्षीकृत्य पतितुं शीलं ययोस्ते अंसानुपातिनी, स्थिरे अश्लथे च पार्श्वे। वृत्तेत्यादिना बाहुलक्षणम्। वृत्तौ वर्त्तुलौ परिपूर्णौ घनौ आयतौ दीर्घौ च बाहू सक्थिनी च वृत्ते परिपूर्णे आयते। अङ्गुलयश्च वृत्ताः परिपूर्णा आयताश्चेति। लिङ्गवचनविपर्य्ययेण अन्वयः। महदित्यादिना पाणिपादलक्षणम्। उपचितं मांसलम्। स्थिरा इत्यादिना नखलक्षणम्। सोत्सङ्गा अन्तोन्नतत्वेन मध्यनिम्ना गभीरेत्यर्थः। नाभ्युरसोर्मध्ये यावन्मात्रं तस्य तृतीयभागहीना द्विभागयुक्ता, समा नोच्चावचा कटी। वृत्तावित्यादि स्फिक्लक्षणम्। स्थिरमश्लथमुपचितं वृद्धं मांसं ययोस्तौ

ग्रहणेन च नेत्रस्यापाङ्गस्य लब्धस्यापि पुनः करणं विशेषेणापाङ्गशोभोपदर्शनार्थम्। आस्यप्रच्छादनौ

एणीपदे प्रगूढ़सिरास्थिसन्धी जङ्घे । नात्युपचितौ नात्यपचितौ गुल्फौ । पूर्व्वोपदिष्टगुणौ पादौ कूर्म्माकारौ । प्रकृतियुक्तानि वातमूत्रपुरीषाणि तथा स्वप्नजागरणायासस्मितरुदितस्तनग्रहणानि । यच्च किञ्चिदन्यदनुक्तमस्ति तदपि सर्व्वं प्रकृतिसम्पन्नमिष्टम्, विपरीतं पुनरनिष्टम् । इति दीर्घायुर्लक्षणानि ॥ ४६ ॥

अतो धात्रीपरीक्षामुपदेक्ष्यामः । अथ ब्रूयाद् धात्रीमानयेति । समानवर्णां यौवनस्थां निभृतामनातुरामव्यङ्गामव्यसनाम्

तथा नात्युच्चनातिनीचौ । अनुपूर्व्ववृत्तावित्यादिनोरुलक्षणम् । अनुपूर्व्वं क्रमेण वृत्तौ वर्त्तुलौ क्रमेण च मांसलौ । नात्युपेत्यादिना जङ्घालक्षणम् । एणीपदे हरिणीसमपादे । प्रगूढ़सिरे अस्फुटसिरास्थिसन्धिमती जङ्घे । नात्युपेत्यादिना गुल्फलक्षणम् । पूर्व्वोपदिष्टगुणौ महदुपचितं पाणिपादमित्युक्त्या महान्तौ चोपचितौ च पादावित्यर्थः । पुनः कूर्म्माकारौ कूर्म्मपृष्ठवत् मध्योन्नतौ । प्रकृतियुक्तानीत्यविकृतानि वातादीनि, तथा प्रकृतियुक्तानि स्वप्नादीनि । यच्च किञ्चित् अनुक्तं पार्श्वादिपाणिपादविहरणादि । विपरीतं यस्य यस्याङ्गस्य यद्यल्लक्षणमुक्तं तद्विपरीतम् अनिष्टमदीर्घायुर्लक्षणम् । इति दीर्घायुर्लक्षणं शतायुर्लक्षणम् ॥ ४६ ॥

गङ्गाधरः—कुमारस्यायुःपरीक्षानन्तरं किं कार्य्यमित्यत आह—अत इत्यादि । समानवर्णामिति । वर्णोऽत्र किं वेदे वर्णत्वेनोपदिष्टजातिः ? किं शरीरस्य रूपम् ? नाद्यः । शूद्राः खलु सन्ति बहवो जातयः । शूद्रत्वेन तास्तु सर्व्वाः समानाश्चेत् मनुष्यत्वेन ब्राह्मणादयोऽपि समाना भवन्तु । न चान्त्यम् । सर्व्वेषां न ह्येकं रूपं ब्राह्मणक्षत्रियादीनाञ्चैकदेशेन समानरूपत्वमस्तीति । तस्मादत्र वर्णो वेदे शूद्रादिवर्णत्वेनोपदिष्टा जातिरुपलक्षणीया प्राधान्यात् समानजातिरित्यर्थः । निभृतामनुद्धताम् । अव्यङ्गां सर्व्वसम्पूर्णाङ्गीं नाङ्गहीनाम् । अव्यसनां काम-

मुष्कावरकौ । पृष्ठवंशश्च गूढ इति योजनीयम् । असम्पातिनी सुनिर्गतकक्षे । एणीपदे इति एणीजङ्घासदृशे । प्रकृतियुक्तानीति न बहूनि नात्यल्पानि च, प्रकृतियुक्तमिति देहानुरूपम् ॥ ४६ ॥

चक्रपाणिः—समानवर्णामिति तुल्यजातीयाम् । 'यौवनस्थाम्' इत्यनेन न बालावृद्धे । बाला-

अविरूपामजुगुप्सां देशजातीयामक्षुद्राम् अक्षुद्रकर्म्मिणीं कुले जातां वत्सलामरोगजीवद्वत्सां पुंवत्सां दोग्ध्रीमप्रमत्ताम् अशायिनीमनुच्चारशायिनीमनन्तावशायिनीं कुशलोपचारां शुचिमशुचिद्वेषिणीं स्तनस्तन्यसम्पदुपेतामिति ॥ ४७ ॥

तत्रेयं स्तनसम्पत्—नात्यूर्द्ध्वौ नातिलम्बावनतिकृशावनतिपीनौ युक्तपिप्पलकौ सुखप्रपाणौ चेति। स्तन्यसम्पत् तु प्रकृति-*-वर्णगन्धरसस्पर्शम् उदपात्रे च दुह्यमानं दुग्धमुदकं व्येति प्रकृतिभूतत्वात् तत् पुष्टिकरमारोग्यकरञ्चेति। अतोऽन्यथा व्यापन्नं ज्ञेयम् ॥ ४८ ॥

क्रोधादिदोषरहिताम् अविरूपामविकटरूपाम् अजुगुप्सां परनिन्दाऽनभिधायिनीं देशजातीयां समानदेशजत्वेन रूपकाराम। अक्षुद्राम् अक्षुद्रस्वभावाम्। न वा क्षुद्रकर्म्मिणीं क्षुद्रकर्म्मकरीम्। कुले जातां सतां ब्राह्मणादीनां कुले जातामपि स्थितां, न तु दुःशीलादिष्वकुलेषु जाताम्। वत्सलां वात्सल्यवतीम् अरोगजीवद्वत्साम् अरोगो जीवंश्च वत्सः स्वपुत्रो यस्याः सा। पुंवत्सां पुत्रवत्सां न तु कन्यावत्साम्। दोग्ध्रीं स्वयंप्रवृत्तदुग्धवतीम्। अप्रमत्तामपापवतीम्। अशायिनीमकाले चादेशे चाशयनशीलाम्। अनुच्चारशायिनीम् उच्चारोऽमेध्यदेशस्तत्राशयनशीलां मेध्यदेशे शयनशीलामित्यर्थः। अनन्तावशायिनीम् अन्तावशायिनी पतितब्राह्मणीप्रभृतिरुच्यते तद्भिन्नाम्। कुशलोपचारां भद्रोपचरिताम् ॥ ४७ ॥

गङ्गाधरः—ननु कीदृशी स्तनस्तन्ययोः सम्पदित्यत आह—तत्रेयमित्यादि। युक्तपिप्पलकौ स्तनानुरूपवृन्तयुक्तस्तनगुड़कौ। स्तन्येत्यादि। प्रकृतयोऽविकृताः स्वाभाविका वर्णगन्धरसस्पर्शा यस्य तत् स्तन्यं सम्पदुपेतम्। तस्य परीक्षाप्रकारमाह—उदपात्रे चेत्यादि। दुग्धं स्तन्यदुग्धम् उदकं व्येति उदकं व्ययं कृत्वा

वृद्धयोरसम्पूर्णाङ्गक्षीणधातुत्वेन निरस्यति। निभृतामिति विनीताम्। अविरूपामिति अविकृतावयवाम्। अव्यङ्गामिति अहीनाङ्गीम्। देशजातीयां समानदेशजाम्। अनन्त्यावशायिनीमिति शूद्रस्य हि सवर्णत्वे चाण्डालादिस्त्री च प्रशस्ता, सा न निषिध्यते, ब्राह्मणादीनामसवर्णत्वेनैव सा

* प्रकृतेति वा पाठः।

तस्य विशेषाः—श्यावारुणवर्णं कषायानुरसं विशदमनालक्ष्यगन्धं रूक्षं द्रवं फेनिलं लघ्वतृप्तिकरं कर्षणं वातविकाराणां कर्तृ वातोपसृष्टं क्षीरमिति ज्ञेयम्। कृष्णनीलपीतताम्रावभासं तिक्ताम्लकटुकानुरसं * कुणपरुधिरगन्धि भृशोष्णञ्च पित्तविकाराणां कर्तृ पित्तोपसृष्टं क्षीरमिति ज्ञेयम्। अत्यर्थशुक्लमतिमाधुर्य्योपपन्नं लवणानुरसं घृततैलवसामज्जगन्धि पिच्छिलं तन्तुमदुदकपात्रेऽवसीदत् श्लेष्मविकाराणाञ्च कर्तृ श्लेष्मोपसृष्टं क्षीरमिति ज्ञेयम्। तेषान्तु त्रयाणामपि क्षीरदोषाणां प्रतिविशेषमभिसमीक्ष्य यथास्वं यथादोषञ्च वमनविरेचनास्थापनानुवासनानि विभज्य कृतानि प्रशमनाय भवन्ति॥ ४९॥

दुग्धमयं भवति तेन विशेषेणोदकं व्याप्नोति उदकेन सहैकीभावमापद्यते इत्यर्थः। तत् स्तन्यं प्रकृतिभूतत्वादविकृतत्वात् पुष्टिकरम्। अतोऽन्यथा उदपात्रे दुग्धमानं दुग्धं यदि नोदकं व्येति तदा व्यापन्नं विकृतिमापन्नं स्तन्यं ज्ञेयम्॥ ४८

गङ्गाधरः—ननु केन विकृतं कीदृशं भवतीत्यत आह—तस्येत्यादि। विशदम् अपिच्छिलम्। अनालक्ष्यगन्धं सम्यग्लक्षणीयगन्धरहितम्। कर्षणं कृशकरम्। एवम्भूतं क्षीरं वातोपसृष्टं ज्ञेयम्। कृष्णेत्यादि पित्तदुष्टस्तन्यलक्षणम्। कुणपगन्धि रुधिरगन्धि च। अत्यर्थेत्यादि श्लेष्मदुष्टस्तन्यलक्षणम्। एषां प्रतीकारार्थमाह—तेषामित्यादि। तत्र तेषां त्रयाणां क्षीरदोषाणां वातादीनां प्रतिविशेषं विशेषं विशेषं कोष्ठाश्रयत्वोदीर्णत्वादि संशोधनानुगुणं दुष्टिविशेषमभिसमीक्ष्य यथास्वं वमनाद्यर्हानर्हं यथादोषं वमनादीनि विभज्य कृतानि प्रशमनाय क्षीरदोषप्रशमनाय भवन्ति॥ ४९॥

निरस्ता। किंवा ब्राह्मणादीनामपि पतितब्राह्मणादि 'अनन्त्यावशायिनीम्' इतिशब्देन क्षिप्यते। पुष्करपिप्पलकाविति उच्चैस्तरवृन्तौ। उदकं व्येतीति उदकं विशेषेण एति प्राप्नोतीत्यर्थः, उदके विसर्पत् क्षीरं प्रशस्तमिति॥ ४७।४८॥

चक्रपाणिः—वातादिदुष्टक्षीरलक्षणान्याह—श्यावेत्यादि। लवणानुरसमिति श्लेष्मदुष्टक्षीरदोष-

* तिक्ताम्लकटुकानुरसमिति चक्रः।

पानाशनविधिस्तु दुष्टक्षीराया यवगोधूमशालिषष्टिकमुद्ग-हरेणुककुलत्थसुरासौवीरक-*-मैरेयमेदकलसुनकरञ्जप्रायः स्यात्। क्षीरदोषविशेषांश्चावेक्ष्यावेक्ष्य तत्तद् विधानं कार्य्यं स्यात्। पाठामहौषधसुरदारुमुस्तमूर्व्वागुडूचीवत्सकफलकिराततिक्तकटुक-रोहिणीशारिवाकषायाणाञ्च पानं प्रशस्यते। तथान्येषां तिक्त-कषायकटुकमधुराणां द्रव्याणां प्रयोगः। इति क्षीरविशोधनानि उक्तानि भवन्ति। क्षीरविकारविशेषानभि समीक्ष्य मात्रां कालञ्च। इति क्षीरविधानानि ॥ ५० ॥

क्षीरजननानि तु मद्यानि सीधुवर्ज्ज्यानि ग्राम्यानूपौदकानि च शाकधान्यमांसानि द्रवमधुराम्लभूयिष्ठाश्चाहाराः क्षीरिण्यश्च ओषधयः क्षीरपाणञ्चानायासश्च वीरणषष्टिकशालिकेक्षुबालिका-दर्भकुशकाशगुन्द्रेत्कटमूलकषायाणाञ्च पानम्। इति क्षीर-जननान्युक्तानि ॥ ५१ ॥

गङ्गाधरः—पानाशनेत्यादि। दुष्टक्षीराया धात्र्याः। क्षीरदोषविशेषांश्च वातादीनवेक्ष्यावेक्ष्य यवादीनां भक्ष्यविधानं कार्य्यं स्यादित्यर्थः। पानविधान-माह—पाठेत्यादि। तथान्येषां प्रयोग इत्यन्वयः। क्षीरविकारमभि लक्ष्यीकृत्य मात्रां कालञ्च समीक्ष्य तत्तद्विधानं कार्य्यमित्यर्थः ॥ ५० ॥

गङ्गाधरः—क्षीरदोषप्रतिकारमुक्त्वा क्षीरजननविधिमाह—क्षीरजननानि त्यादि। सीधुवर्ज्ज्यानि मद्यानि ग्राम्यादीनि च शाकानि धान्यानि मांसानि च। द्रवादिभूयिष्ठा आहाराश्च, क्षीरिण्यश्च वटोडुम्बरादयः। वीरणादीनामित्-कटान्तानां मूलस्यैकशः कषायाणां पानं बहुवचनात्। एतयोः क्षीरदोष-क्षीर-दोषप्रतिकारयोः प्रकारा विस्तरेण योनिव्यापदि वक्ष्यन्ते ॥ ५१ ॥

द्रव्यसंमूर्च्छनप्रभावाज्ज्ञेयम्, येन श्लेष्मदुष्टे लवणरसता भवति। एतत्पृथग्लक्षणयोगाच्च द्वन्द्व-सन्निपातदुष्टिरप्युन्नेया। चिकित्सामाह—एषामित्यादि। प्रतिप्रतिविशेषमभिसमीक्ष्येति प्रतिप्रति-वातादीनां कोष्ठाश्रयित्वोदीर्णत्वादि शोधनानुगुणविशेषमिति, चिह्नविशेषादपि धात्रीमपेक्ष्य वमना-

* इतः परं तुषोदक इत्यधिकः क्वचित्।

**धात्री तु यदा स्वादुबहुलशुद्धदुग्धा स्यात् तदा स्नातानुलिप्ता शुक्लवस्त्रं परिधाय ऐन्द्रीं ब्राह्मीं शतवीर्य्यां सहस्रवीर्य्याम् अमोघामव्यथां शिवामरिष्टां वाट्यपुष्पीं विष्वक्सेनकान्तामिति विभ्रत्योषधीः कुमारं प्राङ्मुखं प्रथमं दक्षिणं स्तनं पाययेत् । इति धात्रीकर्म्म ॥ ५२ ॥**

गङ्गाधरः—अथ दशमाहानन्तरं नामकर्म्मणि कृते स्तन्यपानविधिमाह—धात्री त्वित्यादि । ऐन्द्र्याद्योषधीर्बिभ्रती धात्री कुमारं प्राङ्मुखं मन्त्रोपमन्त्रितं दक्षिणं स्तनं प्रथमं पाययेत् ततः परं वामम् । सुश्रुतेऽप्युक्तम्—ततो यथावर्णं धात्रीमुपेयान्मध्यमप्रमाणां मध्यमवयसमरोगां शीलवतीमचपलामलोलुपाम् अकृशामस्थूलां प्रसन्नक्षीरामलम्बोष्ठीमलम्बोर्द्ध्वस्तनीमव्यङ्गामव्यसनिनीं जीवद्वत्सां दोग्ध्रीं वत्सलामक्षुद्रकर्म्मिणीं कुले जातामतो भूयिष्ठैश्च गुणैरन्वितां श्यामाम् आरोग्यबलवृद्धये बालस्य । तत्रोर्द्ध्वस्तनी करालं कुर्य्यात् । लम्बस्तनी नासिकामुखं छादयित्वा मरणमापादयेत् । ततः प्रशस्तायां तिथौ शिरःस्नातम् अहतवाससमुदङ्मुखं शिशुमुपवेश्य धात्रीं प्राङ्मुखीमुपवेश्य दक्षिणं स्तनं धौतमीषत्परिस्रुतमभिमन्त्र्य मन्त्रेणानेन पाययेत् । "चत्वारः सागरास्तुभ्यं स्तनयोः क्षीरवाहिणः । भवन्तु सुभगे नित्यं बालस्य बलवृद्धये । पयोऽमृतरसं पीत्वा कुमारस्ते शुभानने । दीर्घमायुरवाप्नोतु देवाः प्राश्यामृतं यथा ॥" अतोऽन्यथा नानास्तन्योपयोगस्यासात्म्याद्व्याधिजन्म भवति । अपरिस्रुतेऽप्यतिस्तब्धस्तन्यपूर्णस्तनपानादुत्स्रुहितस्रोतसः शिशोः कासश्वासवमीप्रादुर्भावः । तस्मादेवं विधानं स्तन्यं न पाययेत् । क्रोधशोकावात्सल्यादिभिश्च स्त्रियाः स्तन्यनाशो भवति । अथास्याः क्षीरजननार्थं सौमनस्यमुत्पाद्य यवगोधूमशालिषष्टिकमांसरससुरासौवीरकपिण्याकलसुनमत्स्यकशेरुकशृङ्गाटकबिसविदारिकन्दमधुकशतावरीनलिकालाबूकालशाकप्रभृतीनि विदध्यात् ।

दीनां बहुत्वाल्पत्वविशेषः कर्त्तव्य इत्यर्थः । तत्तद्विधानं कार्य्यं स्यादिति सम्बद्धदोषप्रतिकूलमाहारविधानं कार्य्यं स्यात् । कषायाणामिति बहुवचनात् व्यस्तसमस्तानां कषाया गृह्यन्ते । क्षीरिण्यश्च दुग्धिकाकलम्बिकादयो दृश्यमानक्षीराः । अमोघादयोऽनन्तरं व्याकृता', अव्यथा गुडूची ॥४९—५२॥

अतोऽनन्तरं कुमारागारविधिमनुव्याख्यास्यामः। वास्तुविद्याकुशलः प्रशस्तं रम्यमतमस्कं निवातं प्रवातैकदेशं दृढमपगतश्वापदपशुदंष्ट्रिमूषिकापतङ्गं सुविभक्तसलिलोदूखलमूत्रवर्च्चःस्थानस्नानभूमिमहानसमृतुसुखं यथर्त्तु शयनासनास्तरणसम्पन्नं कुर्य्यात्। तथा सुविहितरक्षाविधानबलिमङ्गलहोमप्रायश्चित्तं शुचि वृद्धवैद्यानुरक्तजनसम्पूर्णम्। इति कुमारागारविधिः॥५३॥

शयनास्तरणप्रावरणानि कुमारस्य मृदुलघुशुचिसुगन्धीनि स्युः। स्वेदमलजन्तुमन्ति मूत्रपुरीषोपसृष्टानि च वर्ज्ज्यानि स्युः।

अथास्याः स्तन्यमप्सु परीक्षेत। तच्चेच्छीतलममलं तनु शङ्खावभासमप्सु न्यस्तमेकीभावं गच्छत्यफेनिलमतन्तुमन्नोत्प्लवते न सीदति वा तच्छुद्धमिति विद्यात्। तेन कुमारस्यारोग्यं शरीरोपचयो बलवृद्धिश्च भवति। न च क्षुधित-शोकार्त्त-श्रान्त-प्रदुष्टधातु-गर्भिणीज्वरितातिक्षीणातिस्थूल-विदग्ध-भक्ष्य-विरुद्धाहारतर्पितायाः स्तन्यं पाययेत्, नाजीर्णौषधश्च बालम्; दोषौषधमलानां परस्परोपघातेन तीव्ररोगोत्पत्तिभयात्। भवतश्चात्र। धात्र्यास्तु गुरुभिर्भोज्यैः विषमैर्दोषलैस्तथा। दोषा देहे प्रकुप्यन्ति ततः स्तन्यं प्रकुप्यति। मिथ्याहारविहारिण्या दुष्टा वातादयः स्त्रियाः। दूषयन्ति पयस्तेन शारीरा व्याधयः शिशोः॥ इति॥५२॥

गङ्गाधरः—अथैवं धात्रीस्तन्यपानानन्तरं गते जननाशौचे निष्क्रान्ते च सूतिकागृहात् कुत्र बालं वासयेत् कथञ्च रक्षेदित्यत आह—अतोऽनन्तरमित्यादि। वास्तु सूतिकागारान्निष्क्रान्तस्य शिशोर्वासार्थं गृहम् अतमस्कमन्धकाररहितं निवातमपि प्रवातैकदेशं तद्वास्तुन एकदेशे प्रकृष्टो वातो वातीत्येवं वास्तु विद्यात्। अपगतश्वापदादिकं सुविभक्तानि विभागशः स्थानानि सलिलादीनि महानसान्तानि यत्र तत् तथा। तद्वास्तु ऋतुसुखं तस्मिन्नृतौ सुखकरम् अकष्टदं यथर्त्तु ऋत्वनुरूपं शय्यादिसम्पन्नं विहितरक्षाविधानयुक्तसूतिकागृहरक्षाविधानेन कृतं रक्षाविधानं बलिमङ्गलादिकञ्च यत्र तत् तथा। शुचि च। एवं वृद्धादिसम्पूर्णम्॥५३॥

गङ्गाधरः—यथा पालयेत् तदाह—शयनास्तरणेत्यादि। स्वेदादिमन्ति मूत्रा-

असति सम्भवेऽन्येषां तान्येव सुप्रक्षालितोपधानानि सुधूपितानि * शुद्धानि शुष्काणि योगं गच्छेयुः ॥ ५४ ॥

धूपनानि पुनर्वाससां शयनास्तरणप्रावरणानाञ्च यवसर्षपातसीहिङ्गु-गुग्गुलुवचाचोरकवयःस्थागोलोमीजटिलापलङ्कषाऽशोकरोहिणीसर्पनिर्म्मोकाणि घृतयुक्तानि स्युः । मणयश्च धारणीयाः कुमारस्य, खड्गरुरुगवयवृषभाणां जीवतामेव दक्षिणेभ्यो विषाणेभ्योऽग्राणि गृहीतानि स्युः । ऐन्द्राद्याश्चौषधयो जीवकर्षभकौ च यानि चान्यान्यपि ब्राह्मणाः प्रशंसेयुरथर्व्ववेदविदः ॥ ५५ ॥

धूपसृष्टानि च शयनादीनि वर्ज्यानि स्युः । यस्य शयनादीनि बहूनि न सन्ति तस्य विधानमाह—असति सम्भवे इत्यादि । अन्येषां स्वेदादिमूत्रादियुक्तानि शय्यादीन्येकविधानि त्यक्तान्येषां सम्भवे त्वसति तान्येव स्वेदादिमूत्रादियुक्तानि शय्यादीनि सुप्रक्षालितादीनि योगं गच्छेयुः ॥ ५४ ॥

गङ्गाधरः—ननु कैर्धूपयेदित्यत आह—धूपनानीत्यादि । यवादीनां सर्पनिर्म्मोकान्तानां चूर्णं कृत्वा घृतेन म्रक्षयित्वा वस्त्रशय्यादीनां धूपनं कार्य्यमित्यर्थः । गुग्गुलुर्महिषाक्षगुग्गुलुः । पलङ्कषा साधारणगुग्गुलुः । चोरकश्चोरपुष्पी । गोलोमी गोडुम्बा । जटिला जटामांसी । रोहिणी कटुरोहिणी । मणयश्चेत्यादि । मणयश्च धारणीयाः यस्य ये सम्भवन्ति । तथा खड्गः खड्गिनामा पशुः । रुरुः स्वल्पहरिणः । गवयः गोसदृशः पशुभेदः । वृषभोऽनड्वान् । जीवतामेषां दक्षिणशृङ्गाग्राणि छित्त्वानीय कुमारस्य धारणीयानि

चक्रपाणिः—सुप्रक्षालितोपधूपितानीति सुधौतोत्तरप्रच्छादनानि । शुद्धशुष्काणीति धौतान्यपि यदा मलादिरागेणापि रहितानि भवन्ति शुष्काणि च, तदैवोपयोज्यानि । सुधौतं ह्यार्द्रमपि स्यात् तथा गाढ़रागमलादिभावितं धौतमप्यशुद्धं स्यात्, तस्मादुक्तम् शुद्धशुष्काणीति ॥ ५३।५४ ॥

चक्रपाणिः—वयःस्था ब्राह्मी, गोलोमी श्वेतदूर्व्वा । जटिला मांसी । अग्राणि धारणीयानि स्युरिति योजना । उक्तं हि जतूकर्णे—"रुरुखड्गादीनां जीवतां दक्षिणशृङ्गाग्राणि निकृत्तानि धारयेत् ।" जीवकर्षभकौ प्रजास्थापनोक्तौ । मन्त्राश्चाथर्व्ववेदोक्ताः ऐन्द्राद्या दश ।

* सुप्रक्षालितोपधानानि सुधूपितानि इत्यत्र सुप्रक्षालितोपधूपितानि इति चक्रधृतः पाठः ।

**क्रीड़नकानि खल्वस्य विचित्राणि घोषवन्त्यभिरामाणि चागुरूणि चातीक्ष्णाग्राणि चानास्यप्रवेशीनि चाप्राणहराण्यवित्रासनानि स्युः। न ह्यस्य वित्रासनं साधु। तस्मात् तस्मिन् रुदत्यभुञ्जाने वान्यत्र विधेयताम् अगच्छति राक्षसपिशाचपूतनाद्यानां नामानि चाह्वयता कुमारस्य वित्रासनार्थं नामग्रहणं न कार्य्यं स्यात् ॥ ५६ ॥**

स्युः। तथा ऐन्द्राद्या उक्ता याः पूर्व्वमतः ऐन्द्रीं ब्राह्मीमित्यादिना धात्र्या धारणीयाः। एवं जीवकर्षभकौ तथान्यानि च धारणीयानि ॥ ५५ ॥

अथ बालस्य क्रीड़ार्थं द्रव्याणि कीदृशानि स्युरित्यत आह—क्रीड़नकानित्यादि। बालस्य क्रीड़नमेभिरिति तानि क्रीड़नकानि। चित्रेण कृतविचित्राणि घोषवन्ति शब्दवन्ति तेन बाला हृष्यन्ति। अगुरूणि पत्तलानि कुमारो यदुत्तोलनक्षेपणादिषु शक्नोति। अतीक्ष्णाग्राणि तीक्ष्णाग्राणि हि बालं हिंस्युः। अनास्यप्रवेशीनि कुमारस्य मुखे प्रवेशार्हाणि न भवन्ति यानि कुमारो न गिलितुं शक्नोति। अप्राणहराणि विषाद्यनाक्तानि हीरकविषादिप्राणहरद्रव्याकृतानि। अवित्रासनानि कुमारस्य त्रासाजनकानि। ननु कथमवित्रासनानि क्रीड़नकानि कुर्य्युर्बालो यदि रोदिति नर्दति न पिबति न भुङ्क्ते तदा लोके केनचित् वित्रासनेन बालं वित्रास्य शान्तं कुरुते, पानञ्च पाययेत् भोजयेच्चैवमादि इत्यत आह—न ह्यस्येत्यादि। अस्य कुमारस्य यस्माद्वित्रासनं न साधु, तस्मात् तस्मिन् कुमारे रुदति वाप्यभुञ्जाने वान्यत्र विधेयतामगच्छति नर्दति चापिबतीत्येवमादौ सति तूष्णीम्भावदुग्धपानादिकर्त्तव्यतामगच्छति न कुर्व्वति राक्षसादीनां नामान्याह्वयता पुरुषेण स्त्रिया वा कुमारस्य वित्रासनार्थं तेषां राक्षसादीनां वित्रासजनकानां नामग्रहणं न कार्य्यम्। सुश्रुतेऽप्युक्तं—बालं पुनर्गात्रसुखं गृह्णीयात्। न चैनं तर्ज्जयेत् सहसा न प्रतिरोधयेत् वित्रासभयात् सहसा नापहरेदुत्क्षिपेद्वा वातादिविघातभयात् नोपवेशयेत् कौब्ज्यभयात्। नित्यञ्चैनमनुवर्त्तेत प्रियशतैरजिघांसुः। एवमनभिहतमनास्त्वभिवर्द्धते नित्यमग्रसत्त्वसम्पन्नो नीरोगः सुप्रसन्नमनाश्च भवति। वातातपविद्युत्प्रभापादपलताशून्यागारनिम्नस्थानगृहच्छायादिभ्यो दुर्ग्रहोपसर्गतश्च बालं रक्षेत्। नाशुचौ विसृजेद्बालं नाकाशे विषमे न च।

यदि त्वातुर्य्यं किञ्चित् कुमारमागच्छेत्, तत् प्रकृतिनिमित्त-पूर्व्वरूपलिङ्गोपशयविशेषैस्तत्त्वतोऽनुबुध्य सर्व्वविशेषानातुरौषध-देशकालाश्रयानवेक्षमाणश्चिकित्सितुमारभेतैनं मधुरमृदुलघु-सुरभिशीतसङ्करं * कर्म्म प्रवर्त्तयन्। एवंसात्म्या हि कुमारा भवन्ति, तथा ते शर्म्म लभन्तेऽचिराय।

नोत्पमारुतवर्षेषु रजोधूमोदकेषु च॥ क्षीरसात्म्यतया क्षीरमाजं गव्यमथापि वा। दद्याद् आ स्तन्यपर्य्याप्तेर्बालानां वीक्ष्य मात्रया॥ षण्मासञ्चैनमन्नं प्राशयेल्लघु हितञ्च नित्यमवरोधानारतश्च स्यात् कृतरक्ष उपसर्गभयात्। प्रयत्नतश्च ग्रहोपसर्गेभ्यो रक्ष्या बाला भवन्ति॥ इति॥ ५६॥

अथास्यातुर्य्यप्रतिकारार्थमाह—यदि त्वातुर्य्यमित्यादि। आतुर्य्यं व्याधितत्वम्। तत् कुमारस्यातुर्य्यम्। प्रकृतिर्वातादिदोषदूष्यरूपा, निमित्तं बाह्य-कारणम्, रुक्षादिस्तन्यादिकं पूर्व्वरूपम्, लिङ्गं रूपम्, उपशयश्च, तेषां विशेषै-र्यस्य व्याधेर्या प्रकृतिर्यन्निमित्तं यत् पूर्व्वरूपं यल्लिङ्गं यश्चोपशयस्तेषां स्तद्विशेषै-स्तत्त्वतो यथार्थतोऽनुबुध्य ज्ञात्वा आतुरस्य व्याधिविशेषं प्रकृतिविशेषं बल-विशेषमेवमादि। औषधस्य तीक्ष्णत्वादिवीर्य्यविशेषं मानविशेषं रसविशेषमेव-मादि। देशस्य साधारणत्वजाङ्गलत्वानूपत्वादिविशेषम्। कालस्य नित्यगस्य वसन्तादितदाद्यत्वमध्यत्वान्तत्वादिनाद्यमध्यत्वान्तादिविशेषमिति आतुरौषधदेश-कालाश्रयान् सर्व्वविशेषानवेक्षमाण एनं कुमारमातुरं चिकित्सितुं मधुरादि-सङ्करं मधुरादिमिलितं कर्म्म प्रवर्त्तयन् आरभेत। कस्मात् मधुरादिसङ्करं कर्म्म प्रवर्त्तयन्नारभेतेत्यत आह—एवंसात्म्या हीत्यादि। हि यस्मात् कुमारा एवं मधुर-मृदुलघुसुरभिशीतसङ्करसात्म्या भवन्ति, तस्मान्मधुरादिसङ्करं कर्म्म प्रवर्त्तयन् नारभेत। तथा तेन प्रकारेण ते कुमारा अचिराय शीघ्रं शर्म्म सुखं लभन्ते।

सुश्रुतेऽप्युक्तं—धात्र्यास्तु गुरुभिर्भोज्यैर्विषमैर्दोषलैस्तथा। दोषा देहे प्रकुप्यन्ति ततः स्तन्यं प्रदुष्यति॥ मिथ्याहारविहारिण्या दुष्टा वातादयः स्त्रियाः। दूषयन्ति पयस्तेन शारीरा व्याधयः शिशोः॥ भवन्ति

तदित्यादौ प्रकृतिर्वातादयः। निमित्तं बाह्यं रुक्षादि साक्षाद् वातादिकारणम्। सर्व्व-विशेषानित्यादौ 'आतुर'शब्देनातुर्य्यहेतुर्व्याधिर्गृह्यते। 'आश्रय'शब्देन तु शरीरम्। शं कल्याणं

* शीतशङ्करमिति चक्रः।

कुशलास्तांश्च भिषक् सम्यग् विभावयेत्। अङ्गप्रत्यङ्गदेशेषु रुजा यत्रास्य जायते॥ मुहुर्मुहुः स्पृशति तं स्पृश्यमानश्च रोदिति। निमीलिताक्षो मूर्द्धस्थे शिरोरोगे न धारयेत्॥ वस्तिस्थे मूत्रसङ्गार्त्तो रुजा तृष्यति मूर्च्छति। विण्मूत्रसङ्गवैवर्ण्य-च्छर्द्याध्मानान्त्रकूजनैः॥ कोष्ठे दोषान् विजानीयात् सर्व्वत्रस्थांश्च रोदनैः॥ तेषु च यथाभिहितं मृद्वच्छेदनीयमौषधं मात्रया क्षीरपस्य क्षीरसर्पिषा धात्र्याश्च विदध्यात्। क्षीरान्नादस्यात्मनि धात्र्याश्च; अन्नादस्य कषायादीनात्मन्येव न धात्र्याः। तत्र मासादूर्द्ध क्षीरपायाङ्गुलिपर्व्वद्वयग्रहणसम्मितामौषधमात्रां विदध्यात्, कोलास्थिसम्मितां कल्कमात्रां क्षीरान्नादाय, कोलसम्मितामन्नादायेति। येषां गदानां ये योगाः प्रवक्ष्यन्तेऽगदङ्कराः। तेषु तत्कल्कसंलिप्तौ पाययेत शिशुं स्तनौ। एकं द्वे त्रीणि चाहानि वातपित्तकफज्वरे॥ स्तन्यपाय हितं सर्पिरितराभ्यां यथार्थतः। न च तृष्णाभयादत्र पाययेत शिशुं स्तनौ। विरेकवस्तिवमनान्यृते कुर्य्याच्च नात्ययात्॥ मस्तुलुङ्गक्षयाद् यस्य वायुस्तात्वस्थि नामयेत्। तस्य तृड्दैन्ययुक्तस्य सर्पिर्मधुरकैः शृतम्॥ पानाभ्यञ्जनयोर्योज्यं शीताम्बुद्रवेजनं तथा। वातेनाध्मापितां नाभिं सरुजां तुण्डिसंज्ञिताम्॥ मारुतघ्नैः प्रशमयेत् स्नेहस्वेदोपनाहनैः। गुदपाके तु बालानां पित्तघ्नीं कारयेत् क्रियाम्। रसाञ्जनं विशेषेण पानालेपनयोर्हितम्॥ क्षीराहाराय सर्पिः पाययेत् सिद्धार्थकवचामांसी-पयस्यापामार्गशतावरीसारिवाब्राह्मीपिप्पलीहरिद्राकुष्ठसैन्धवसिद्धम्, क्षीरान्नादाय मधुकवचापिप्पलीचित्रकत्रिफलासिद्धम्, अन्नादाय द्विपञ्चमूलीक्षीरतगरभद्रदारुमरिचमधुविडङ्गद्राक्षाद्विब्राह्मीसिद्धम्। तेनारोग्यबलमेधायूंषि शिशोर्भवन्ति।

अथ कुमार उद्विजते त्रस्यति रोदिति नष्टसंज्ञो भवति नखदशनैर्धात्रीमात्मानञ्च परिणुदति दन्तान् खादति कूजति जृम्भते भ्रुवौ विक्षिपत्यूर्द्ध निरीक्षते फेनमुद्वमति सन्दष्टौष्ठः क्रूरो भिन्नामवर्चा दीनार्त्तस्वरो निशि जागर्त्ति दुर्ब्बलो म्लानाङ्गो मत्स्यच्छुछुन्दरिमत्कुणगन्धो यथा पुरा धात्र्याः स्तन्यमभिलषति तथा नाभिलषतीति सामान्येन ग्रहोपसृष्टलक्षणमुक्तम् विस्तरेणोत्तरे वक्ष्यामः॥ तदुत्तरे यथा—बालग्रहाणां विज्ञानं साधनञ्चाप्यनन्तरम्। उत्पत्तिं कारणञ्चैव सुश्रुतैकमनाः शृणु। स्कन्दग्रहस्तु प्रथमः स्कन्दापस्मार एव च। शकुनी रेवती चैव पूतना चान्धपूतना। पूतना शीतनामा च तथैव मुखमण्डिका। नवमो नैगमेयश्च यः पितृग्रहसंज्ञितः। धात्रीमात्रोः प्राक् प्रदिष्टापचाराच्छौचभ्रष्टान्

कुलाचारहीनान्। त्रस्तान् हृष्टांस्तर्जितान् क्रन्दितान् वा पूजार्हतोहिंस्युरेते कुमारान्। ऐश्वर्य्यस्थास्ते न शक्या विशन्तो देहं द्रष्टुं मानुषैर्विश्वरूपाः। आप्तं वाक्यं तत् समीक्ष्याभिधास्ये लिङ्गान्येषां यानि देहे भवन्ति॥ शूनाक्षः क्षतजसमगन्धिकः स्तनद्विट् रक्तास्यो द्रुतचलितैकपक्ष्मनेत्रः। उद्विग्नः सुललितचक्षुरल्परोदो स्कन्दार्त्तो भवति च गाढमुष्टिवर्च्चाः॥ १॥ निःसंज्ञो भवति पुनर्भवेत् ससंज्ञः संरब्धः करचरणैश्च नृत्यतीव। विण्मूत्रे सृजति विनद्य जृम्भमाणः फेनञ्च प्रसृजति तत्सखाभिपन्नः॥२॥ स्रस्ताङ्गो भयचकितो विहङ्गगन्धिः संस्राविव्रणपरिपीड़ितः समन्तात्। स्फोटैश्च प्रततनुः सदाहपाकैर्विज्ञेयो भवति शिशुः क्षतः शकुन्या॥ ३॥ रक्ताक्षो हरितमलोऽतिपाण्डुदेहः श्यावो वा ज्वरमुखपाकवेदनार्त्तः। रेवत्या व्यथिततनुश्च कर्णनासं मृद्नाति ध्रुवमभिपीड़ितः कुमारः॥ ४॥ स्रस्ताङ्गः स्वपिति सुखं दिवा न रात्रौ विड़्भिन्नं सृजति च काकतुल्यगन्धिः। छर्द्यार्त्तो हृषिततनूरुहः कुमारस्तृष्णालुर्भवति च पूतनागृहीतः॥ ५॥ यो द्वेष्टि स्तनमतिसारकासहिक्काच्छर्दीभिर्ज्वरसहिताभिरर्द्द्यमानः। दुर्व्वर्णः सततमधःशयोऽम्लगन्धिस्तं ब्रूयाद् भिषगिह गन्धपूतनार्त्तम्॥ ६॥ उद्विग्नो भृशमतिवेपते प्ररुद्यात् संलीनः स्वपिति च यस्य चान्त्रकूजः। विस्राङ्गो भृशमतिसार्य्यते च यस्तं जानीयाद् भिषगिह शीतपूतनार्त्तम्॥ ७॥ म्लानाङ्गः सुरुचिरपाणिपादवक्त्रो बह्वाशी कलुषसिरावृतोदरो यः। सोद्वेगो भवति च मूत्रतुल्यगन्धिः स ज्ञेयः शिशुरथ वक्त्रमण्डिकार्त्तः॥ ८॥ यः फेनं वमति विनम्यते च मध्ये सोद्वेगं विलपति चोर्द्ध्वमीक्षमाणः। ज्वर्य्येत प्रततमथो वसासगन्धिर्निःसंज्ञो भवति हि नैगमेयजुष्टः॥ ९॥ प्रस्तब्धो यः स्तनद्वेषी मुह्यते चाविशन् मुहुः। तं बालं न चिराद्धन्ति ग्रहः सम्पूर्णलक्षणः। विपरीतमतः साध्यं चिकित्सेदचिरार्द्दितम्। गृहे पुराणहविषाभ्यज्य बालं शुचौ शुचिः। सर्षपान् प्रकिरेत् तेषां तैलैर्दीपश्च कारयेत्। सदा सन्निहितश्चापि जुहुयाद्धव्यवाहनम्। सर्व्वगन्धौषधीवीजैर्गन्धमाल्यैरलङ्कृतम्। अग्नये कृत्तिकाभ्यश्च स्वाहा स्वाहेति संस्मरन्। नमः स्कन्दाय देवाय ग्रहाधिपतये नमः। शिरसा त्वाभिवन्देऽहं प्रतिगृह्णीष्व मे बलिम्। नीरुजो निर्व्विकारश्च शिशुर्मे जायतां ध्रुवम्॥

अथ स्कन्दग्रहप्रतिषेधं व्याख्यास्यामः। स्कन्दग्रहोपसृष्टानां कुमाराणाञ्च शस्यते। वातघ्नद्रुमपत्राणां निःक्वाथः परिषेचने। तेषां मूलेषु सिद्धश्च तैलमभ्यञ्जने हितम्॥ सर्व्वगन्धसुरामण्ड-कैटर्य्योवापमिष्यते। देवदारुणि

रास्नायां मधुरेषु द्रुमेषु च॥ सिद्धं सर्पिश्च सक्षीरं पानमस्मै प्रयोजयेत्। सर्षपाः सर्पनिर्म्मोको वचा काकादनी घृतम्॥ उष्ट्राजाविगवाञ्चैव रोमाण्युद्धूपनं शिशोः। सोमवल्लीमिन्द्रवल्लीं शमीं विल्वस्य कण्टकान्। मृगादन्याश्च मूलानि ग्रथितान्येव धारयेत्॥०॥ रक्तानि माल्यानि तथा पताका रक्ताश्च गन्धा विविधाश्च भक्ष्याः। घण्टा च देवाय बलिर्निवेद्यः सकुक्कुटः स्कन्दग्रहे हिताय॥ स्थानं त्रिरात्रं निशि चत्वरेषु कुर्य्यात् पुनः शालियवैर्नवैस्तु। अद्भिश्च गायत्र्यभिमन्त्रिताभिः प्रज्वालनञ्चाहुतिभिश्च वह्नेः॥०॥ रक्षामतः प्रवक्ष्यामि वालानां पापनाशिनीम्। अहन्यहनि कर्त्तव्या या भिषग्भिरतन्द्रितैः। तपसां तेजसाञ्चैव यशसां वपुषां तथा। निधानं योऽव्ययो देवः स ते स्कन्दः प्रसीदतु। ग्रहसेनापतिर्देवो देवसेनापतिर्विभुः। देवसेनारिपुहरः पातु त्वां भगवान् गुहः। देवदेवस्य महतः पावकस्य च यः सुतः। गङ्गोमाकृत्तिकानाञ्च स ते शर्म्म प्रयच्छतु। रक्तमाल्याम्बरः श्रीमान् रक्तचन्दनभूषितः। रक्तदिव्यवपुर्देवः पातु त्वां क्रौञ्चसूदनः॥ १॥

अथातः स्कन्दापस्मारप्रतिषेधं व्याख्यास्यामः। विल्वः शिरीषो गोलोमी सुरसादिश्च यो गणः। परिषेके प्रयोक्तव्यः स्कन्दापस्मारशान्तये। सर्व्वगन्धविपकन्तु तैलमभ्यञ्जने हितम्। क्षीरिवृक्षकषाये च काकोल्यादौ गणे तथा। विपक्तव्यं घृतं वापि पानीयं पयसान्वितम्। उत्सादनं वचाहिङ्गुयुक्तं स्कन्दग्रहे हितम्। गृध्रोलूकपुरीषाणि केशा हस्तिनखा घृतम्। वृषभस्य च रोमाणि योज्यान्युद्धूपनेऽपि च। अनन्तां कटुकीं विम्वीं मर्कटीञ्चापि धारयेत्। पकापकानि मांसानि प्रसन्नं रुधिरं पयः। भूतौदनो निवेद्यश्च स्कन्दापस्मारिणोऽवटे। चतुष्पथे च कर्त्तव्यं स्नानमस्य यतात्मना। स्कन्दापस्मारसंज्ञो यः स्कन्दस्य दयितः सखा। विशाखसंज्ञश्च शिशोः शिवोऽस्तु विकृताननः॥ २॥

अथातः शकुनीप्रतिषेधं व्याख्यास्यामः। शकुन्यभिपरीतस्य कार्य्यं वैद्येन जानता। वेतसाम्रकपित्थानां निःक्वाथः परिषेचने॥ कषायमधुरैस्तैलं कार्य्यमभ्यञ्जने शिशोः। मधुकोशीरह्रीवेर-सारिवोत्पलपद्मकैः॥ रोध्रप्रियङ्गुमञ्जिष्ठा-गैरिकैः प्रदिहेच्छिशुम्। व्रणेषूक्तानि चूर्णानि पथ्यानि विविधानि च॥ स्कन्दग्रहे धूपनानि तानीहापि प्रयोजयेत्। शतावरीमृगैर्व्वारु-नागदन्तीनिदिग्धिकाः॥ लक्ष्मणां सहदेवाञ्च बृहतीञ्चापि धारयेत्। तिलतण्डुलकं माल्यं हरितालं मनःशिला॥ बलिरेष करञ्जेषु निवेद्यो

नियतात्मना। निकुञ्ज च प्रयोक्तव्यं स्नानमस्य यथाविधि ॥ स्कन्दग्रहोपशमनं घृतं तच्चेह पूजितम्। कुर्य्याच्च विविधां पूजां शकुन्याः कुसुमैः शुभैः ॥ अन्तरीक्षचरा देवी सर्व्वालङ्कारभूषिता। अधोमुखी तीक्ष्णतुण्डा शकुनी ते प्रसीदतु ॥ दुर्दर्शना महाकाया पिङ्गाक्षी भैरवस्वरा। लम्बोदरी शङ्कुकर्णी शकुनी ते प्रसीदतु ॥ ३ ॥

अथातो रेवतीप्रतिषेधं व्याख्यास्यामः। अश्वगन्धाजशृङ्गी च सारिवा सपुनर्नवा। सह विदारी च तथा कषायाः सेचने हिताः ॥ तैलमभ्यञ्जने कार्य्यं कुष्ठे सर्ज्जरसेऽपि वा। धवाश्वकर्णककुभ-धातकीतिन्दुकीषु च ॥ काकोल्यादिगणे चैव पानीयं सर्पिरिष्यते। कुलत्थाः शङ्खचूर्णश्च प्रदेहाः सार्व्वगन्धिकाः ॥ गृध्रोलूकपुरीषाणि यवा यवफलो घृतम्। सन्ध्ययोरुभयोः कार्य्यमेतदुद्धूपनं शिशोः ॥ वरुणारिष्टकमयं रुचकं सेन्दुकं तथा। सततं धारयेच्चापि कृतं वा पौत्रजीविकम् ॥ शुक्लाः सुमनसो लाजाः पयः शाल्योदनं तथा। बलिर्निवेद्यो गोतीर्थे रेवत्यै प्रयतात्मना ॥ सङ्गमे च भिषक् स्नानं कुर्य्याद् धात्रीकुमारयोः। नानावस्त्रधरा देवी चित्रमाल्यानुलेपना ॥ चलत्कुण्डलिनी श्यामा रेवती ते प्रसीदतु। लम्बा कराला विनता तथैव बहुपुत्रिका। रेवती सततं माता सा ते देवी प्रसीदतु ॥ ४ ॥

अथातः पूतनाप्रतिषेधं व्याख्यास्यामः। कपोतवङ्कारल्लुको वरुणः पारिभद्रकः। आस्फोताश्चैव योज्याः स्युर्बालानां परिषेचने। वचा वयःस्था गोलोमी हरितालं मनःशिला ॥ कुष्ठं सर्ज्जरसश्चैव तैलार्थं वर्ग इष्यते। हितं घृतं तुगाक्षीर्य्यां सिद्धं मधुरकेषु च ॥ कुष्ठतालीशखदिरं चन्दनस्यन्दने तथा। देवदारु वचा हिङ्गु कुष्ठं गिरिकदम्बकः ॥ एला हरेणवश्चापि योज्या नत्पने सदा। गन्धनाकुलिकुम्भीका-मज्जानो वदरस्य च ॥ कर्कटास्थि घृतञ्चैव धूपनं सर्षपैः सह। काकादनीं चित्रफलां बिम्बीं गुञ्जाञ्च धारयेत् ॥ मत्स्यौदनञ्च कुर्व्वीत कृशरां पललं तथा। शरावसम्पुटे कृत्वा बलिं शून्यगृहे हरेत् ॥ उच्छिष्टेनाभिषेकेण शिरसि स्नानमिष्यते। पूज्या च पूतना देवी बलिभिः सोपहारकैः ॥ मलिनाम्बरसंवीता मलिना रूक्षमूर्द्धजा। शून्यागाराश्रिता देवी दारकं पातु पूतना ॥ दुर्दर्शना सुदुर्गन्धा कराला मेघकालिका। भिन्नागाराश्रया देवी दारकं पातु पूतना ॥ ५ ॥

अथातोऽन्धपूतनाप्रतिषेधं व्याख्यास्यामः। तिक्तकद्रुमपत्राणां कार्य्यः क्वाथोऽवसेचने। सुरा सौवीरकं कुष्ठं हरितालं मनःशिला। तथा

स्वर्ज्जरसञ्चैव तैलार्थमुपदिश्यते ॥ पिप्पल्यः पिप्पलीमूलं वर्गौ मधुरको मधु। शालपर्णी बृहत्यौ च घृतार्थमुपदिश्यते ॥ सर्व्वगन्धैः प्रदेहश्च गात्रेष्वक्ष्णोश्च शीतलैः। पुरीषं कौक्कुटं केशांश्चर्म्म सर्पत्वचं तथा ॥ जीर्णाञ्च भिक्षुसङ्घाटीं धूपनायोपकल्पयेत्। कुक्कुटीं मर्कटीं शिम्बीमनन्ताञ्चापि धारयेत् ॥ मांसमामं तथा पक्वं शोणितञ्च चतुष्पथे। निवेद्यमन्तश्च गृहे शिशो रक्षानिमित्ततः ॥ शिशोश्च स्नपनं कुर्य्यात् सर्व्वगन्धादिकैः शुभैः। कराला पिङ्गला मुण्डा कषायाम्बरवासिनी ॥ देवी बालमिमं प्रीता संरक्षत्वन्ध-पूतना ॥ ६ ॥

अथातः शीतपूतनाप्रतिषेधं व्याख्यास्यामः। कपित्थं सुवहां बिम्बीं तथा बिल्वं प्रतीबलाम्। नन्दीं भल्लातकीञ्चापि परिषेके प्रयोजयेत् ॥ वस्तमूत्रं गवां मूत्रं मुस्तञ्च सुरदारु च। कुष्ठञ्च सर्व्वगन्धांश्च तैलार्थमवचारयेत् ॥ रोहिणीस्वर्ज्जखदिर-पलाशककुभत्वचः। निःक्वाथ्य तस्मिन् निःक्वाथे सक्षीरं विपचेद् घृतम् ॥ गृध्रोलूकपुरीषाणि वस्तगन्धामहेस्त्वचः। निम्बपत्राणि मधुकं धूपनार्थं प्रयोजयेत् ॥ धारयेदपि लम्बाञ्च गुञ्जां काकादनीं तथा। नद्यां मुद्गकृतैश्चान्नैस्तर्पयेच्छीतपूतनाम् ॥ देव्यै देयश्चोपहारो वारुणी रुधिरं तथा। जलाशयान्ते बालस्य स्नपनञ्चोपदिश्यते ॥ मुद्गौदनाशना देवी सुराशोणितपायिनी। जलाशयालया देवी पातु त्वां शीतपूतना ॥ ७ ॥

अथातो मुखमण्डिकाप्रतिषेधं व्याख्यास्यामः। कपित्थबिल्वतर्कारी-वांशीगन्धर्व्वहस्तकाः। कुबेराक्षी च योज्याः स्युर्बालानां परिषेचने ॥ स्वरसैर्भृङ्गवृक्षाणां तथाजहरिगन्धयोः। तैलं वसाश्च संयोज्य पचेदभ्यञ्जने शिशोः ॥ मधूलिकायां पयसि तुगाक्षीर्य्यां गणे तथा। मधुरे पञ्चमूले च कनीयसि घृतं पचेत् ॥ वचा सर्ज्जरसः कुष्ठं सर्पिश्चोद्धूपने हितम्। धारयेदपि जिह्वाश्च चापचीरहिसर्पजाः ॥ वर्णकं चूर्णकं माल्यमञ्जनं पारदं तथा। मनःशिलाश्चोपहरेद्गोष्ठमध्ये बलिं तथा ॥ पायसं सपुरोडाशं बल्यर्थमुपहारयेत्। मन्त्रपूताभिरद्भिश्च तत्रैव स्नपनं हितम् ॥ अलङ्कृता रूपवती सुभगा कामरूपिणी। गोष्ठमध्यालयरता पातु त्वां मुखमण्डिका ॥ ८ ॥

अथातो नैगमेयप्रतिषेधं व्याख्यास्यामः। बिल्वाग्निमन्थपूतीकाः कार्य्याः स्युः परिषेचने। सुरासौवीरधान्याम्लैः परिषेकश्च शस्यते ॥ प्रियङ्गु-सरलानन्ता शतपुष्पाकुटन्नटैः। पचेत् तैलं सगोमूत्रैर्दधिमस्त्वम्लकाञ्जिकैः ॥ पञ्चमूलद्वयक्वाथे क्षीरे मधुरकेषु च। पचेद् घृतञ्च मेधावी खर्ज्जुरी-

मस्तकेऽपि च ॥ वचां वयःस्थां गोलोमीं जटिलां वापि धारयेत् । उत्सादनं हितश्चात्र स्कन्दापस्मारनाशनम् ॥ सिद्धार्थकवचाहिङ्गु-कुष्ठञ्चैवाक्षतैः सह । भल्लातकाजमोदाश्च हितमुद्धूपनं शिशोः ॥ मर्कटोलूकगृध्राणां पुरीषाणि नवग्रहे । धूपः सुप्ते जने कार्य्यो बालस्य हितमिच्छता ॥ तिलतण्डुलकं माल्यं भक्ष्यांश्च विविधानपि । कुमारपितृमेषाय वृक्षमूले निवेदयेत् ॥ अधस्तात् वटवृक्षस्य स्नपनञ्चोपदिश्यते । बलिं न्यग्रोधमूलेषु तिथौ षष्ठ्यां निवेदयेत् ॥ अजाननश्चलाक्षिभ्रुः कामरूपी महायशाः । बालं पालयिता देवो नैगमेयोऽभिरक्षतु ॥ ९ ॥

अथातो ग्रहाणामुत्पत्तिं व्याख्यास्यामः । नव स्कन्दादयः प्रोक्ताः बालानां य इमे ग्रहाः । श्रीमन्तो दिव्यवपुषो नारीपुरुषविग्रहाः ॥ एते गुहस्य रक्षार्थं कृत्तिकोमाग्निशूलिभिः । सृष्टाः शरवणस्थस्य रक्षितस्यात्मतेजसा ॥ स्त्रीविग्रहा ग्रहा ये तु नानारूपा मयेरिताः । गङ्गोमाकृत्तिकानाञ्च ते भागा राजसा मताः ॥ नैगमेयस्तु पार्व्वत्या सृष्टो मेषाननो ग्रहः । कुमारधारी देवस्य गुहस्यात्मसमः सखा ॥ स्कन्दापस्मारसंज्ञो यः सोऽग्निनाग्निसमद्युतिः । स च स्कन्दसखा नाम विशाख इति चोच्यते ॥ स्कन्दः सृष्टो भगवता देवेन त्रिपुरारिणा । बिभर्त्ति चापरां संज्ञां कुमार इति स ग्रहः ॥ बाललीलाधरो योऽयं देवो रुद्राग्निसम्भवः । मिथ्याचारेषु भगवान् स्वयं नैष प्रवर्त्तते ॥ कुमारः स्कन्दसामान्यादत्र केचिदपण्डिताः । गृह्णातीत्यल्पविज्ञाना ब्रुवते देहचिन्तकाः ॥ ततो भगवति स्कन्दे सुरसेनापतौ कृते । उपतस्थुर्ग्रहाः सर्व्वे दीप्तशक्तिधरं गुहम् ॥ ऊचुः प्राञ्जलयश्चैनं वृत्तिं नः संविधत्स्व वै । तेषामर्थे ततः स्कन्दः शिवं देवमचोदयत् ॥ ततो ग्रहांस्तानुवाच भगवान् भगनेत्रहृत् । तिर्य्यग्योनिं मानुषञ्च देवञ्च त्रितयं जगत् । परस्परोपकारेण वर्त्तते धार्य्यतेऽपि च ॥ देवा मनुष्यान् प्रीणन्ति तिर्य्यग्योनींस्तथैव च । वर्त्तमानैर्यथाकालं शीतवर्षोष्णमारुतैः ॥ इज्याञ्जलिनमस्कार-जपहोमव्रता-दिभिः । नराः सम्यक् प्रयुक्तैश्च प्रीणन्ति त्रिदिवेश्वरान् ॥ भागधेयं विभक्तञ्च शेषं किञ्चिन्न विद्यते । तद् युष्माकं शुभा वृत्तिर्बालेष्वेव भविष्यति ॥ कुलेषु येषु नेज्यन्ते देवाः पितर एव च । ब्राह्मणाः साधवश्चैव गुरवोऽतिथयस्तथा ॥ निवृत्ताचारशौचेषु परपाकोपभोजिषु । उच्छिन्नबलिभिक्षेषु भिन्नकांस्योप-भोजिषु ॥ गृहेषु तेषु ये बालास्तान् गृह्णीध्वमशङ्किताः । तत्र वो विपुला वृत्तिः पूजा चैव भविष्यति ॥ एवं ग्रहाः समुत्पन्ना बालान् गृह्णन्ति चाप्यतः ।

ग्रहोपसृष्टा बालास्तु दुश्चिकित्स्यतमा मताः॥ वैकल्यं मरणञ्चाशु ध्रुवं स्कन्दग्रहे मतम्। स्कन्धग्रहोऽत्युग्रतमः सर्व्वेष्वेव यतः स्मृतः॥ अन्यो वा सर्व्वरूपस्तु न साध्यो ग्रह उच्यते॥ इति।

अथ रावणकृतकुमारतन्त्रे नन्दाप्रभृतिद्वादशमातृका बालग्रहा उक्ताः प्रतिकाराश्च तासाम्। तद् यथा—प्रथमे दिवसे मासि वर्षे वा गृह्णाति नन्दा नाम मातृका। तया गृहीतमात्रस्य प्रथमं भवति ज्वरः। अशुभशब्दं मुञ्चत्यात्कारश्च भवति स्तन्यं न गृह्णाति। वलिं तस्याः प्रवक्ष्यामि येन सम्पद्यते शुभम्। नद्युभयतटमृत्तिकां गृहीत्वा पुत्तलिकां कृत्वा शुक्लभक्तं शुक्लपुष्पं सप्त ध्वजाः सप्त प्रदीपाः सप्त स्वस्तिकाः। सप्त शष्कुलिकाः सप्त जम्बुड़िका गन्धं धूपं ताम्बूलं मत्स्यं मांसं सुराग्रभक्तञ्च पूर्व्वस्यां दिशि चतुष्पथे मध्याह्ने वलिर्दातव्या। अश्वत्थपत्रं कुम्भे प्रक्षिप्य बालं शान्त्युदकेन स्नापयेत्। रसोनसिद्धार्थमेषशृङ्गनिम्बपत्रशिवनिर्म्माल्यैर्बालं धूपयेत्। ॐ नमो रावणाय हन हन मुञ्च मुञ्च स्वाहा। चतुर्थ दिवसे ब्राह्मणान भोजयेत्, ततः सम्पद्यते शुभम्।१। द्वितीये दिवसे मासे वर्षे वा गृह्णाति सुनन्दा नाम मातृका। तया गृहीतमात्रस्य प्रथमं भवति ज्वरः। चक्षुरुन्मीलति गात्रमुद्वेजयति न शेते क्रन्दति स्तन्यं न गृह्णात्यात्कारश्च भवति। वलिं तस्य प्रवक्ष्यामि येन सम्पद्यते शुभम्। तण्डुलं हस्तपृष्ठैकं गृहीत्वा दधिगुड़घृतमिश्रितं शरावैकं गन्धं ताम्बूलं पीतपुष्पं पीतसप्तध्वजाः चत्वारः प्रदीपा दश स्वस्तिकाः मत्स्यमांससुरातिलचूर्णञ्च पश्चिमस्यां दिशि चतुष्पथे वलिर्देयः, दिनानि त्रीणि सन्ध्यायाम्। ततः शान्त्युदकेन स्नापयेत्। शिवनिर्म्माल्यसिद्धार्थमार्ज्जारलोमोशीरकबालकघृतैर्धूपं दद्यात्। ॐ नमो रावणाय हन हन मुञ्च मुञ्च हूं फट् स्वाहा। चतुर्थे दिवसे ब्राह्मणान भोजयेत्, ततः सम्पद्यते शुभम्।२। तृतीये दिवसे मासे वर्षे वा गृह्णाति पूतना नाम मातृका। तया गृहीतमात्रस्य प्रथमं भवति ज्वरः। गात्रमुद्वेजयति स्तन्यं न गृह्णाति मुष्टिं बध्नाति क्रन्दत्यूर्द्धं निरीक्षते। वलिं तस्य प्रवक्ष्यामि येन सम्पद्यते शुभम्। नद्युभयतटमृत्तिकां गृहीत्वा पुत्तलिकां कृत्वा गन्धं ताम्बूलं रक्तपुष्पं रक्तचन्दनं रक्तसप्तध्वजाः सप्त प्रदीपाः सप्त स्वस्तिकाः पक्षिमांसं सुराग्रभक्तञ्च दक्षिणस्यां दिश्यपराह्णे चतुष्पथे वलिर्देयः। शिवनिर्म्माल्यसर्षपगुग्गुलुनिम्बपत्रमेषशृङ्गैर्दिनत्रयं धूपयेत्। ॐ नमो रावणाय हन हन मुञ्च मुञ्च त्रासय त्रासय स्वाहा। चतुर्थे दिवसे ब्राह्मणान

भोजयेत्, ततः सम्पद्यते शुभम्। ३। चतुर्थे दिवसे मासे वर्षे वा गृह्णाति मुखमुण्डतिका नाम मातृका। तया गृहीतमात्रस्य प्रथमं भवति ज्वरः। ग्रीवां नमयति चक्षुरुन्मीलति स्तन्यं न गृह्णाति रोदिति स्वपिति मुष्टिं बध्नाति। बलिं तस्य प्रवक्ष्यामि येन सम्पद्यते शुभम्। नद्युभयतटमृत्तिकां गृहीत्वा पुत्तलिकां कृत्वोत्पलपुष्पगन्धताम्बूलं दश ध्वजाश्चत्वारः प्रदीपाः त्रयोदश स्वस्तिका मत्स्यमांससुराग्रभक्तञ्चोत्तरस्यां दिश्यपराह्णे चतुष्पथे बलिर्देयः। ॐ नमो रावणाय हन हन मुञ्च मुञ्च स्वाहा। चतुर्थे दिवसे ब्राह्मणान् भोजयेत्, ततः सम्पद्यते शुभम्। ४। पञ्चमे दिवसे मासे वर्षे वा गृह्णाति कटपूतना नाम मातृका। तया गृहीतमात्रस्य प्रथमं भवति ज्वरः। गात्रमुद्वेजयति स्तन्यं न गृह्णाति मुष्टिञ्च बध्नाति। बलिं तस्य प्रवक्ष्यामि येन सम्पद्यते शुभम्। कुम्भकारचक्रमृत्तिकां गृहीत्वा पुत्तलिकां कृत्वा गन्धं ताम्बूलं शुक्लौदनं शुक्लपुष्पं पञ्च ध्वजाः पञ्च प्रदीपाः पञ्च वटकाः ऐशान्यां दिशि बलिर्देयः। शान्त्युदकेन स्नापयेत्। शिवनिर्म्माल्यसर्प-निर्म्मोकगुग्गुलुनिम्बपत्रवालकघृतैर्धूपं दद्यात्। ॐ नमो रावणाय चूर्णय चूर्णय स्वाहा। चतुर्थे दिवसे ब्राह्मणान् भोजयेत्। ततः सम्पद्यते शुभम्। ५। षष्ठे दिवसे मासे वर्षे वा गृह्णाति शकुनिका नाम मातृका। तया गृहीत-मात्रस्य प्रथमं भवति ज्वरः। गात्रभेदञ्च दर्शयति दिवा रात्रावुत्थानं भवत्यूर्द्ध्वं निरीक्षते। बलिं तस्य प्रवक्ष्यामि येन सम्पद्यते शुभम्। पिष्टकेन पुत्तलिकां कृत्वा शुक्लपुष्पं रक्तपुष्पं पीतपुष्पं गन्धं ताम्बूलं दश प्रदीपाः। पीतदशध्वजाः दश स्वस्तिका दश वटकाः क्षीरजम्बुड़िका मत्स्यमांससुराग्र-भक्तञ्चाग्नेय्यां ग्रामनिष्क्रान्ते मध्याह्ने बलिं दद्यात्। शान्त्युदकेन स्नापयेत्। शिवनिर्म्माल्यरसोनगुग्गुलुसर्पनिर्म्मोकनिम्बपत्रघृतैर्धूपयेत्। ॐ नमो रावणाय हन हन मुञ्च मुञ्च स्वाहा। चतुर्थ दिवसे ब्राह्मणान् भोजयेत्, ततः सम्पद्यते शुभम्। ६। सप्तमे दिवसे मासे वर्षे वा गृह्णाति शुष्करेवती नाम मातृका। तया गृहीतमात्रस्य प्रथमं भवति ज्वरः। गात्रमुद्वेजयति मुष्टिं बध्नाति रोदिति। बलिं तस्य प्रवक्ष्यामि येन सम्पद्यते शुभम्। रक्तपुष्पं शुक्लपुष्पं गन्धं ताम्बूलं रक्तौदनं कृशरां त्रयोदश स्वस्तिकास्त्रयोदश शष्कुलिका जम्बुड़िकाः। मत्स्यमांससुरास्त्रयोदश रक्तध्वजाः पञ्च प्रदीपाः पश्चिमदिशि ग्रामनिष्क्रामेऽपराह्णे वृक्षमाश्रित्य बलिं दद्यात्। शान्त्युदकेन स्नापनं गुग्गुलुमेषशृङ्गसर्षपोशीरवालकघृतैर्धूपयेत्। ॐ

नमो रावणाय दीप्ततेजसे हन हन मुञ्च मुञ्च स्वाहा। चतुर्थे दिवसे ब्राह्मणान भोजयेत्। ततः स्वस्थो भवति बालकः। ७। अष्टमे दिवसे मासे वर्षे वा गृह्णात्यार्य्यका नाम मातृका। तया गृहीतमात्रस्य प्रथमं भवति ज्वरः। गृध्रगन्धः पूतिगन्धश्च जायते आहारञ्च न गृह्णाति उद्वेजयति गात्राणि। बलिं तस्य प्रवक्ष्यामि येन सम्पद्यते शुभम्। रक्तपीतध्वजाश्चन्दनं पुष्पं शष्कुल्यः पर्पटिकाः मत्स्यमांसजम्बुद्दिकाः सुराः प्रत्यूषे बलिर्देयः। ॐ रावणाय त्रैलोक्यविद्रावणाय चतुर्द्दिशमोक्षणाय ज्वल ज्वल हन हन दह दह ॐ ह्रीं फट् फट् स्वाहा। चतुर्थे दिवसे ब्राह्मणान् भोजयेत्, ततः सम्पद्यते शुभम्। ८। नवमे दिवसे मासि वर्षे वा गृह्णाति सूतिका नाम मातृका। तया गृहीतमात्रस्य प्रथमं भवति ज्वरः। नित्यं छर्द्दिर्भवति गात्रभङ्गं दर्शयति मुष्टिं बध्नाति स्वापो भवति। बलिं तस्य प्रवक्ष्यामि येन सम्पद्यते शुभम्। नदुभयतट-मृत्तिकां गृहीत्वा पुत्तलिकां कृत्वा शुक्लवस्त्रेणावेष्टयेत्। शुक्लपुष्पं गन्धं ताम्बूलं शुक्लत्रयोदश ध्वजाः त्रयोदश प्रदीपाः त्रयोदश स्वस्तिकाः। त्रयोदश पूपिकाः त्रयोदश मत्स्यपोलिका मत्स्यमांससुरा उत्तरदिग्भागे ग्रामनिष्क्रामे बलिर्दातव्यः। शान्त्युदकेन स्नापयेत्। गुग्गुलुनिम्बपत्र-गोशृङ्गश्वेतसर्षपघृतैर्धूपयेत्। ॐ नमो रावणाय चतुर्भुजाय हन हन स्वाहा। चतुर्थे दिवसे ब्राह्मणान् भोजयेत्। ततः स्वस्थो भवति बालकः। ९। दशमे दिवसे मासे वर्षे वा गृह्णाति निरृता नाम मातृका। तया गृहीत-मात्रस्य प्रथमं भवति ज्वरः। गात्रमुद्वेजयति आत्कारश्च भवति रोदिति मूत्रं पुरीषश्च भवति। बलिं तस्य प्रवक्ष्यामि येन सम्पद्यते शुभम्। पारा-वारमृत्तिकां गृहीत्वा पुत्तलिकां कृत्वा गन्धं ताम्बूलं रक्तपुष्पं रक्तचन्दनं पञ्च वर्णाः पञ्च ध्वजाः पञ्च प्रदीपाः पञ्च स्वस्तिकाः पञ्च पूपिकाः मत्स्यमांससुरा वायव्यां दिशि बलिं दद्यात्। काकविष्ठागोमांसगाश्रृङ्ग-रसोनमार्ज्जारलोमनिम्बपत्रघृतैर्धूपयेत्। ॐ नमो रावणाय चूर्णितहस्ताय मुञ्च मुञ्च स्वाहा। चतुर्थे दिवसे ब्राह्मणान भोजयत्, ततः सम्पद्यते शुभम्। १०। एकादशे दिवसे मासे वर्षे वा गृह्णाति पिलिपिच्छिका नाम मातृका। तया गृहीतमात्रस्य प्रथमं भवति ज्वरः। आहारं न गृह्णात्यूर्द्ध्वदृष्टिर्भवति आत्कारश्च भवति। बलिं तस्य प्रवक्ष्यामि येन सम्पद्यते शुभम्। पिष्टकेन पुत्तलिकां कृत्वा रक्तचन्दनरक्तां तस्या मुखं दुग्धेन सेचयेत्। पीतपुष्पं गन्धं ताम्बूलं पीतसप्तध्वजाः सप्त प्रदीपा अष्टौ वटका अष्टौ शष्कुल्यो मत्स्य-

† रोगे त्वरोगवृत्तम् आतिष्ठेद् देशकालात्मगुणविपर्य्ययेण वर्त्तमानः । क्रमेणासात्म्यानि परिवर्त्त्योपयुञ्जानः सर्व्वाण्यहितानि वर्ज्जयन् तथा बलवर्णशरीरायुषां सम्पदमाप्नोतीति ॥ ५७

मांससुराः पूर्व्वस्यां दिशि बलिं दद्यात् । शान्त्युदकेन स्नापनं, शिवनिर्म्माल्यगुग्गुलुगोशृङ्गसर्पनिर्म्मोकघृतैर्धूपयेत् । ॐ नमो रावणाय मुञ्च मुञ्च स्वाहा । चतुर्थे दिवसे ब्राह्मणान् भोजयेत्, ततः सम्पद्यते शुभम् । ११ । द्वादशे दिवसे वर्षे वा गृह्णाति कामुका नाम मातृका । तया गृहीतमात्रस्य प्रथमं भवति ज्वरः । विहस्य वादयति करेण तर्ज्जयति गृह्णाति क्रामयति निश्वसिति मुहुर्म्मुहुः । आहारं न करोति कृशताऽस्य च भवति । बलिं तस्य प्रवक्ष्यामि येन सम्पद्यते शुभम् । क्षीरेण पुत्तलिकां कृत्वा गन्धं ताम्बूलं शुक्लपुष्पं शुक्लसप्तध्वजाः सप्त प्रदीपाः सप्त शष्कुलिकाः करम्भकेण बलिं दद्यात् । शान्त्युदकेन स्नापयेत् । शिवनिर्म्माल्यगुग्गुलुसर्पनिर्म्मोकसर्षपघृतैर्धूपयेत् । ॐ नमो रावणाय मुञ्च मुञ्च हन हन स्वाहा । चतुर्थे दिवसे ब्राह्मणान् भोजयेत्, ततः सम्पद्यते शुभम् । १२ । इति रावणकृतकुमारतन्त्रम् ।

नन्वेवंविधिना त्वारोग्ये सति किं विधेयमित्यत आह—रोगे त्वित्यादि । अरोगवृत्तं स्वस्थवृत्तम् उक्तं यावत् तावदातिष्ठेत् । ननु यस्यानायुष्याणि सात्म्यानि तस्य स्वास्थ्यवृत्तास्थानं कथं स्यादित्यत आह—देशेत्यादि । देशस्य गुणतः कालस्य गुणतः आत्मनश्च गुणतो विपर्य्ययशालिष्वाहाराचारादिषु वर्त्तमानः शिशुः । नन्वेवं वर्त्तमानः शिशुः किं कुर्य्यादित्यत आह—क्रमेणेत्यादि । क्रमेण परिवर्त्त्य देशगुणविपरीतान् कालगुणविपरीतान् आत्मगुणविपरीतांश्च आहारविहारादीन् क्रमेण त्यक्त्वा सात्म्यानि देशकालात्मगुणसमानि उपयुञ्जानः सन् अहितानि वर्ज्जयंश्च सन् तथा उक्तप्रकारबलवर्णशरीरायुषां सम्पदम् आप्नोति ॥ ५७ ॥

करोतीति चक्रम् । देशकालेत्यादौ 'आत्म'शब्देन शरीरमुच्यते, तेन देशस्य तथा कालस्य शरीरस्य च यो गुणः शीतादिः । शुद्धिपरिहाराचाराविसेवायां वर्त्तमानः स्वस्थवृत्तं कुर्य्यात् । अन्यत्रापि स्वस्थवृत्ते प्रोक्तम्,—देशकालादिगुणविपरीताहारविहाराः सात्म्या भवन्तीति । क्रमेण नवेगान्धारणीयोक्तेन "उचितादहिताद् धीमान् क्रमशो विरमेन्नरः" इत्यादिस्वस्थवृत्तोक्तेन

† अरोगेऽप्यरोगवृत्तमिति चक्रः ।

एवमेनं कुमारम् आ यौवनप्राप्तेर्धर्म्मार्थकौशलागमनादनुपालयेत्। इति पुत्राशिषां समृद्धिकरं कर्म्म व्याख्यातम्। तदाचरन् यथोक्तैर्विधिभिः पूजां यथेष्टं लभतेऽनसूयकः इति ॥ ५८ ॥

तत्र श्लोकौ।

पुत्राशिषां कर्म समृद्धिकारकं
यदर्थमेतन्महदर्थसंहितम्।
तदाचरन् ज्ञो विधिभिर्यथातथं
पूजां यथेष्टं लभतेऽनसूयकः ॥

गङ्गाधरः—नन्वेवमातिष्ठेत् कियन्तं कालमित्यत आह—एवमेनमित्यादि। एवमुक्तप्रकारेण एनं कुमारम् आ यौवनप्राप्तेः षोड़शाब्दायुःप्रमाणपूर्त्तिपर्य्यन्तमनुपालयेत्। कस्मादित्यत आह—धर्म्मेत्यादि। धर्म्मार्थयोः विषययोः साधनाय यत् कौशलं तस्यानुपगमः शैशवे। तस्मात् आ यौवनप्राप्तेरेवमेनं कुमारमनुपालयेदिति भावः। अध्यायमुपसंहरति—इति पुत्राशिषामित्यादि। पुत्रस्य आशिषाम् आशासनानां शुभवाञ्छानां समृद्धिः सत्फलं तत्करम्। तदाचरन् तत् पुत्राशिषां समृद्धिकरं कर्म्माचरन् पुरुषः यथोक्तैरुक्तविधिमनतिक्रम्याचरन् अनसूयको लोके परानसूयकः पूजां मानमर्य्यादादिकां यथेष्टां स्वाभिलषितां लभते। इति सत्पुत्रलाभफलम् ॥ ५८ ॥

गङ्गाधरः—एतमर्थं श्लोकेनाह—तत्र श्लोकावित्यादि। अर्थसंहितं प्रयोजनसहितं महदेतत् पुत्राशिषां समृद्धिकारकं कर्म्म यदर्थं भवति, विधिभिः उक्तविधानैस्तत् कर्म्माचरन्नसूयारहितो ज्ञः पण्डितो यथायथं यथायोग्यं

क्रमेणोपयुञ्जान इत्यर्थः। तथा वस्त्वन्तरसात्म्यसेवायामपि बालश्चैवमेव भवतीति व्याख्यानम्। स्वस्थवृत्ताचरणफलमाह—तथेत्यादि ॥ ५५—५७ ॥

चक्रपाणिः—पुत्राशिषां समृद्धिकरमिति पुत्रप्रार्थनानुरूपफलकरमित्यर्थः। पुत्राशिषामित्यध्यायार्थसंग्रहश्लोकः। 'ज्ञः' इति पुरुषविशेषणं प्राधान्यात् कृतम्। तेन पूजामेव लभते।

शरीरं चिन्त्यते सर्व्वं दैवमानुषसम्पदा।
सर्व्वभावैर्यतस्तस्माच्छारीरं स्थानमुच्यते ॥ ५९ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते शारीरस्थाने जातिसूत्रीयं शारीरं नाम अष्टमोऽध्यायः ॥ ८ ॥

इत्याचार्य्यचरकमुनिविरचितायां संहितायां शारीरस्थानकं चतुर्थं समाप्तम्। शारीरस्थानमेकपिण्डेन श्लोकानाम् एकोनपञ्चाशदुत्तराणि नवशतानि। अङ्केन ९४९।

इति शारीरस्थानम् ॥ ४ ॥

यथेष्टं स्वाभिलषितां पूजां लभते इत्यर्थः। अथास्य स्थानस्य शारीरस्य निरुक्तिमाह शरीरमित्यादि। यतो यस्माद्धेतोः सर्व्वभावैर्महदहङ्कारादिभिर्विशिष्टं दैवमानुषसम्पदा च विशिष्टं शरीरं सर्व्वं चिन्त्यते तस्माद्धेतोः शारीरस्थानमुच्यते। दैवसम्पदस्तु शरीरे परमात्मादिकाः। मानुषसम्पदस्तु पुरुषकारादिकाः ॥ ५९ ॥

अध्यायं समापयति—अग्नीत्यादि। जातिसूत्रीयं नाम शारीरं कौमारभृत्यतन्त्रं स्थानं समापयति—इत्याचार्येत्यादि।

इति वैद्यश्रीगङ्गाधरकविराजकविरत्नविरचिते चरकजल्पकल्पतरौ चतुर्थस्कन्धे शारीरस्थानजल्पे जातिसूत्रीयशारीरजल्पाख्याष्टमी शाखा ॥ ८ ॥

इति चरकजल्पकल्पतरौ शारीरस्थानजल्पश्चतुर्थस्कन्धः ॥ ४ ॥

पुत्रस्यात्यन्तप्राधान्यं बहुतात्पर्यसूचकः। शारीरस्थानशब्दव्युत्पत्तिदर्शकं श्लोकं पठन्ति—शरीरमित्यादि। तच्च व्यक्तार्थमेव ॥ ५८।५९ ॥

इति महामहोपाध्याय-चरकचतुरानन-श्रीमच्चक्रपाणिदत्तविरचितायामायुर्वेददीपिकायां चरकतात्पर्य्यटीकायां शारीरस्थाने जातिसूत्रीयं शारीरं नाम अष्टमोऽध्यायः ॥ ८ ॥

---

॥ श्रीः ॥

# चरक-संहिता।

## इन्द्रियस्थानम्

### प्रथमोऽध्यायः।

अथातो वर्णस्वरीयमिन्द्रियं व्याख्यास्यामः,
इतिह स्माह भगवानात्रेयः ॥ १ ॥

गङ्गाधरः—अथ जातिसूत्रीये बालानामायुषः परीक्षार्थं लक्षणानि संक्षेपतो व्याख्यातानि, पुनस्तेषामरिष्टलक्षणानि चिकित्सायामुपयोगाय भवन्तीत्यतः शारीरस्थानानन्तरमिन्द्रियस्थानमारभते। उक्तं हि सुश्रुते—"फलाग्निजलवृष्टीनां पुष्पधूमाम्बुदा यथा। ख्यापयन्ति भविष्यत्त्वं तथारिष्टानि पञ्चताम्। तानि सौक्ष्म्यात् प्रमादाद् वा तथैवाशुव्यतिक्रमात्। गृह्यन्ते नोद्गतान्यज्ञैर्मुमूर्षोर्न त्वसम्भवात्। ध्रुवन्त्वरिष्टे मरणं ब्राह्मणैस्तत् किलामलैः। रसायन-तपो-जप्य-

चक्रपाणिः—शारीरे चिकित्साधिकरणं शरीरं प्रतिपाद्य चिकित्सा वक्तव्या, सा च साध्यरोगे वक्तव्या नासाध्यरोगे। यदुक्तं "स्वार्थविद्यायशोहानिमुपक्रोशमसंग्रहम्। प्राप्नुयान्नियतं वैद्यो योऽसाध्यं समुपाचरेत्" इति। न च रिष्टप्रतिपत्तिमन्तरा साध्यत्वप्रतिपत्तिरिति रिष्टप्रतिपादकमिन्द्रियस्थानमेव चिकित्सास्थानात् प्रागुच्यते। तस्यान्तर्गतस्य लिङ्गं रिष्टाख्यमिन्द्रियम्, यदुक्तं व्याकरणे "इन्द्रियं रिष्टम्" इत्यादि। तस्येन्द्रियस्य स्थानमिन्द्रियस्थानम्। अत्रापि चेन्द्रियस्थाने वक्तव्ये व्यक्ततमरिष्टाभिधायकतया वर्णस्वरीयमिन्द्रियमुच्यते। अत्र हि यानि रिष्टानि वक्तव्यानि, तानीतररिष्टेभ्यश्चक्षुरादिग्राह्यतया व्यक्ततमानि। वर्णस्वरावधिकृत्य कृतो वर्णस्वरीयः।

**इह खलु वर्णश्च स्वरश्च गन्धश्च रसश्च स्पर्शश्च चक्षुश्च श्रोत्रञ्च घ्राणञ्च रसनञ्च स्पर्शनञ्च सत्त्वञ्च भक्तिश्च शौचञ्च**

तत्परैर्वा निवार्य्यते। नक्षत्रपीड़ा बहुधा यथा कालाद्विपच्यते। तथैवारिष्टपाकञ्च ब्रुवते बहुधा जनाः। असिद्धिमाप्नुयाल्लोके प्रतिकुर्व्वन् गतायुषः। अतो रिष्टानि यत्नेन लक्षयेत् कुशलो भिषक्॥" इति। अथात इत्यादि। अथ जातिसूत्रीयानन्तरमतोऽरिष्टलक्षणानां चिकित्सायामुपयोगात् वर्णस्वरीयं वर्णश्च स्वरश्चेति परीक्षितुमधिकृत्य कृतोऽध्यायस्तं तथा। इन्द्रियम् इन्द्रः प्राणस्तस्य लिङ्गम् इतीन्द्रियं रिष्टम्। अथवा इन्द्रोऽन्तरात्मा तस्य लिङ्गमिति इन्द्रियं रिष्टमरिष्टमित्यनर्थान्तरम्। व्याकरणे ह्युक्तमिन्द्रियमिन्द्रियलिङ्गमिति॥ १॥

गङ्गाधरः—इहेत्यादि। खलुशब्दो व्याक्यालङ्कारे। वर्णश्चेति बुद्धीन्द्रियाणां मध्ये बहुविषयत्वेन चक्षुषः प्राधान्यात् शीघ्रतरग्रहणत्वाच्च चाक्षुषभावस्य परीक्षार्थं पूर्व्वं वर्णश्चेत्युक्तम्। अत्र वर्णशब्देनोपलक्षणात् रौक्ष्यादयो गृह्यन्ते। वक्ष्यते ह्यत्रैव वर्णग्रहणेन ग्लानिहर्षरौक्ष्यस्नेहा व्याख्याता इति कश्चित्, तन्न; वर्णस्वरमधिकृत्य ग्लानिहर्षरौक्ष्यादेः परीक्ष्यत्वेन निर्देशात्। स्वरश्चेति। शारीरभावान्तरमपेक्ष्याशुस्वरस्य श्रावणत्वात् रूपतोऽनाशुग्रहणाद् रूपादनन्तरं गन्धरसादेः पूर्व्वमुपादानम्। एवमाशुज्ञानादुत्तरोत्तरेषामनाशुबोधादुपादानं बोध्यम्। सत्त्वञ्चेति मनः। भक्तिरिच्छा शीलता साहजिकी वृत्ता। शौचं

इन्द्रियस्य रिष्टरूपस्य प्रतिपादकोऽध्याय इन्द्रियस्तं व्याख्यास्यामः। एवमन्यत्रापि पुष्पितकमिन्द्रियमित्याद्यपि इन्द्रियविशेषणं व्याख्येयम्॥ १॥

चक्रपाणिः—इन्द्रियस्थानप्रतिपाद्यं कृत्स्नं विषयमाह—इहेत्यादि। इहेन्द्रियस्थाने। 'खलु'शब्दो वाक्यालङ्कारे। इह यद्यपीन्द्रियाण्येव विषयवर्णादिग्राहकतया अग्रे वक्तुं युज्यन्ते, तथापि तेषामतीन्द्रियत्वेन न तदाश्रयरिष्टानां व्यक्तत्वम्। तेन प्रव्यक्तानि वर्णादीन्येवेति प्रव्यक्तरिष्टाधिकरणान्यग्रेऽभिधीयन्ते, वर्णादिष्वपि च यथा व्यक्तत्वं तथा पूर्व्वनिपातः। मेघादिशब्दस्तु यद्यपि वर्णादपि व्यक्तस्तथापि शब्दविशेष एवेह चात्मादिसम्पाद्यः 'स्वर'शब्दाभिधेयो रिष्टाधिकरणत्वेनाभिमतः, स च वर्णापेक्षयाऽव्यक्त एव। इहेत्यादावसमासेन वर्णादीनां प्रत्येकमपि रिष्टाधिकरणत्वं दर्शयति। समासे हि समुदायस्य रिष्टाधिकरणकतया परीक्षितव्यत्वं शङ्केत। वर्णशब्देन च वर्णसहचरिताश्चक्षुर्ग्राह्या रौक्ष्यादयोऽपि गृह्यन्ते। अत एव वर्णप्रस्ताव एव वक्ष्यति यत् 'वर्णग्रहणेन ग्लानिहर्षरौक्ष्यस्नेहा व्याख्याताः' इति। स्वरादिग्रहणेन च स्वराद्यभावोऽपि गृह्यते। तेन अङ्गुलिपर्व्वशब्दाभावगन्धाभावादयो रिष्टान्यवबुध्यन्ते। स्पर्शग्रहणेन च स्पर्शोपलभ्य-

शीलश्चाचारश्च स्मृतिश्च प्रकृतिश्च विकृतिश्चाकृतिश्च मेधा च बलश्च ग्लानिश्च हर्षश्च रौक्ष्यश्च स्नेहश्च तन्द्रा चारम्भश्च गौरवश्च लाघवश्च गुणाश्च आहारश्च विहारश्चाहारपरिणामश्चोपायश्चापायश्च व्याधिश्च पूर्व्वरूपश्च वेदनाश्चोपद्रवाश्च छाया च प्रतिच्छाया च

शुचिता। शीलं शीलनं सहजवृत्तम्। आचार आचरणं परम्परया शिक्षितव्यवहारः। स्मृतिः स्मरणम्। प्रकृतिः स्वभावः। विकृतिः सत्त्वशरीरयोर्वैकृत्यम्। आकृतिराकारः शरीरस्य। मेधा धारणावती बुद्धिः। ग्लानिः अहर्षः। तन्द्रा निद्रैव। आरम्भः क्रियासु प्रवृत्तिः। गौरवं गुरुता धात्वादीनाम्। लाघवं लघुता शरीरस्य। गुणश्चेति शारीरो गुणो मृदुतीक्ष्णशीतोष्णादयः। तत्र प्राधान्यात् गौरवलाघवे पृथगुक्ते। आहारश्चेति अशितादिचतुर्व्विधोऽभ्यवहारः। विहारो विहरणम्। आचारस्तु शिक्षया व्यवहार उक्तस्तेनास्य भेदः। आहारपरिणामश्चेत्यभ्यवहृतस्य परिणतिः। उपायो व्याधिप्रतिकाराय यो य उपायस्तत्सौष्ठवासौष्ठवाभ्यां शुभाशुभफलात्। अपायो व्याधेर्निवृत्तिः। व्याधिः ज्वरादिव्याधिरेव। वेदनाः सुखदुःखे। छाया देहस्य च्छविः।

काठिन्याद्यवबोधः। सत्त्वं मनः सत्त्वविकृतेरुदाहरणम् यथा—"औत्सुक्यं भजते सत्त्वं चेतोभिः आविशत्यपि" इत्यादि। भक्तिरिच्छा। शीलं सहजवृत्तम्। आचारः शास्त्रशिक्षाकृतो व्यवहारः। भक्त्यादयो यद्यपि सत्त्वविकारत्वेन सत्त्वग्रहणेनैव लभ्यन्ते, यदुक्तम्—"भक्तिः शीलं शौचं द्वेषः स्मृतिर्मोहस्त्यागो मात्सर्य्यं भयं क्रोधस्तन्द्रोत्साहस्तैक्ष्ण्यं मार्द्दवं गाम्भीर्य्यमनवस्थितमित्येवमादयः सत्त्वविकाराः" इति, तथापि भक्त्यादीनामपि पृथगरिष्टाधिकरणत्वेन इह पृथक्करणम्। निद्रादौर्ब्बल्यात् तन्द्रेति 'तन्द्रा'शब्देन निद्रोच्यते। अत्र च रिष्टमुक्तम्, यथा—"निद्रा नित्या भवति न वा" इति। आरम्भ इति अरिष्टव्याध्युत्पादारम्भः। यदुक्तम्,—"श्वयथुर्यस्य कुक्षिस्थो हस्तपादं प्रधावति" इत्यादि। गौरवे रिष्टं यथा—"निष्ठ्यूतञ्च पुरीषञ्च रेतश्चाम्भसि मज्जति" इत्यादि। लाघवे रिष्टं गुरूणामङ्गानां लाघवं ज्ञेयम्। गुणारिष्टम्, यथा—"गुणाः शरीरदेशानां शीतोष्णमृदुदारुणाः। विपर्य्यासेन लक्ष्यन्ते स्थानेष्वन्येषु तद्विधाः" इति। आहाररिष्टं यथा—"आहारमुपयुञ्जानो भिषजा सूपकल्पितम्" इत्यादि। आहारपरिणामरिष्टं यथा—"दुर्ब्बलो बहु भुङ्क्ते यः प्राग् भुक्तादन्नमातुरः। अल्पमूत्रपुरीषश्च" इति। उपाय उपगमनं व्याधिमेलक इत्यर्थः, यदुक्तम्—"सहसा ज्वरसन्तापस्तृष्णा मूर्च्छा बलक्षयः। विश्लेषणञ्च सन्धीनाम्" इति। व्याध्यपगमनमपायः यदुक्तम्—"यं नरं सहसा रोगो दुर्ब्बलं परिमुञ्चति" इत्यादि। व्याधिश्चेति व्याधिरेव रिष्टं यथा—"वाताष्ठीला सुसंवृत्ता दारुणा हृदि तिष्ठति" इति। छाया भौतिकी पञ्चरूपा। प्रतिच्छाया तु देहच्छायावत् नेत्रकुमारिकापि प्रतिच्छायारूपापि

**स्वप्नदर्शनञ्च दूताधिकारश्च पथि चौत्पातिकञ्चातुरकुले भावावस्थान्तराणि च भेषजञ्च भेषजप्रवृत्तिश्च भेषजाधिकारयुक्तिश्च, इति परीक्ष्याणि भवन्ति प्रत्यक्षानुमानोपदेशैरायुषः प्रमाणावशेषं जिज्ञासमानेन भिषजा। तत्र खल्वेषां परीक्ष्याणां कानिचित् पुरुषानाश्रितानि भवन्ति, कानिचिच्च पुरुषसंश्रयाणि। तत्र यानि पुरुषानाश्रितानि तान्युपदेशतो युक्तितश्च परीक्षेत, पुरुषसंश्रयाणि प्रकृतितो विकृतितश्च ॥ २ ॥**

प्रतिच्छाया लोके या तु छायेत्युच्यते। दूताधिकारः आतुरस्य चिकित्सार्थं वैद्यानयनाय यो गच्छति स दूतस्तस्याधिकारस्तद्गतचेष्टादिः। पथि वैद्यस्य तदातुरचिकित्सार्थं गच्छतः पथि उत्पातकरभावदर्शनम्। आतुरकुले च आतुरस्यामात्यस्वगणेषु शुभाशुभसूचकानि यानि यानि भावावस्थान्तराणि। भेषजं तद्व्याधिहितमौषधम्। भेषजप्रवृत्तिस्तस्मिन् व्याधौ प्रयुक्तस्य भेषजस्य शरीरे प्रवृत्तिः क्रिया। भेषजानामधिकारस्य तद्भेषजस्य स आतुरोऽधिकारी वा न वेति भेषजाधिकारे युक्तिः। इति वर्णादीनि आयुषः प्रमाणावशेषं जिज्ञासमानेन ज्ञातुमिच्छता भिषजा प्रत्यक्षानुमानोपदेशैः परीक्ष्याणि भवन्ति। नन्वेतानि कथं परीक्षितव्यानि भिषजा इत्यत आह—तत्रेत्यादि। एषां वर्णादीनां मध्ये कानिचिद् दूताधिकारादीनि। पुरुषं यस्यायुषः प्रमाणावशेषो जिज्ञास्यः तम्। कानिचित् वर्णादीनि उपदेशतः प्रश्नादितः युक्तितः

ग्रहीतव्या। अयञ्च छायादिभेदः पञ्चरूपीयेन्द्रिये दर्शयितव्यः। आतुरकुले भावावस्थारिष्टं यथा—"अग्निपूर्णानि पात्राणि भिन्नानि विशिखानि च। भिषङ्मुमूर्षतां वेश्म प्रविशन्नेव पश्यति ॥" इत्यादि। भेषजसंवृत्तौ रिष्टं यथा—"यमुद्दिश्यातुरं वैद्यः संवर्त्तयितुमौषधम्। यतमानो न शक्नोति दुर्लभं तस्य जीवितम्।" भेषजस्य विकारेण समं या युक्तिः, तत्र रिष्टं यथा—"विज्ञातं बहुशः सिद्धं विधिवच्चावचारितम्। न सिध्यत्यौषधं यस्य तस्य नास्ति चिकित्सितम्।" शेषे बहुरिष्टोदाहरणमुक्तम्। इति समाप्तौ। प्रत्यक्षपूर्व्वकत्वात् सर्व्वप्रमाणानामिहादौ प्रत्यक्षं कृतम्। यद्यपि वर्णाद्य आयुर्लक्षणप्रतिपादिता दीर्घायुःप्रमाणजिज्ञासायामपि परीक्ष्यन्ते, तथापीह गणारिष्टप्रकरणे आयुःप्रमाणाविशेषज्ञानार्थमेव परीक्षणीयाः। अत उक्तम्—'प्रमाणविशेषं जिज्ञासमानेन' इति। पुरुषम् अनाश्रितानि दूताद्याश्रयाणि रिष्टानि। युक्तितश्चेत्यनुमानत इत्यर्थः। अत्र युक्तेरपि रिष्टत्वावधारणे क्षमत्वात्। प्रत्यक्षं हि दूतादीनां स्वरूपमात्रं गृह्णाति, रिष्टन्तु

तत्र प्रकृतिर्जातिप्रसक्ता कुलप्रसक्ता च दशानुपातिनी * च कालानुपातिनी च वयोऽनुपातिनी च प्रत्यात्मनियता चेति। एतावज्जातिकुलदशाकालवयःप्रत्यात्मनियता हि तेषां तेषां पुरुषाणां ते ते भावविशेषा भवन्ति ॥ ३ ॥

तर्कतोऽनुमानतश्च। युक्त्यपेक्षो हि तर्कोऽनुमानं न तर्कभिन्नम्। प्रकृतितः सहजस्वरूपतः। विकृतितः सहजस्वरूपवैपरीत्यतः ॥ २ ॥

गङ्गाधरः—प्रकृतिः षोढ़ेत्यभिप्रायेणाह—तत्र प्रकृतिर्जातिप्रसक्तेत्यादि। जातिप्रसक्ता, प्रकृतिर्जातिः ब्राह्मणादिस्तत्स्वभावेन या प्रकृतिः प्रसज्यते सा। कुलप्रसक्ता, तत्रापि यत्कुले जातः पुरुषस्तद्वंशे जातानां पुरुषाणां या या प्रकृतिः प्रसक्ता सा। दशानुपातिनी, व्यापत्सम्पदातुर्य्यानातुर्य्यादिषु दशासु यस्यां दशायां या प्रकृतिः सम्पतति यादृशरूपेण तदनुरूपेण या दशा पतति सा दशानुपातिनी। कालानुपातिनी, यस्मिन् काले वसन्तादौ कृतयुगादौ च यादृशरूपेण प्रकृतिः पतति तदनुरूपेण पतनशीला प्रकृतिः कालानुपातिनी। वयोऽनुपातिनी, यस्मिन् वयसि शिशुबालपौगण्डकिशोरयुवमध्यवृद्धान्यतमस्मिन् पतनशीला या प्रकृतिस्तदनुरूपेणैतस्मिन् वयसि पतनशीला प्रकृतिर्वयोऽनुपातिनी। प्रत्यात्मनियता, प्रत्येकपुरुषे नियता या प्रकृतिः सा प्रत्यात्मनियता। ते ते भावविशेषाः तेषां तेषां पुरुषाणां ये ये वर्णादयस्ते ते भावविशेषाः एतावत्सु जातिकुलदशाकालवयःप्रत्यात्मसु नियताः। हि यस्मात् वर्णादयः शौचादयश्च भावाः पुरुषाणां जातिनियताश्च भवन्ति, कुल-

दूतादीनामागमादेव ज्ञायते। पुरुषाश्रयिवर्णादिगतरिष्टग्रहणे तु प्रत्यक्षमपि तत्तद्रिष्टविशेषग्रहणे तत्तद्विशेषेण व्याप्रियत इति मत्वा तत् प्रतिषिद्धम्। अनुमानन्तु रिष्टत्वेन प्रतिपादितमनिमित्तत्वादिति धर्म्मविचारे व्याप्रियते। एवं सर्व्वत्र। प्रकृतितश्चेति विकृतिज्ञानहेतुतया प्रकृतिरिष्टज्ञाने व्याप्रियते, यत् प्रकृतिज्ञानाधीनं विकृतिविज्ञानं भवति। परीक्षा त्वत्राधिकृता प्रसिद्धैः प्रत्यक्षादिभिरेव ज्ञेया ॥ २ ॥

चक्रपाणिः—प्रकृतिं विभजते—तत्रेत्यादि। जातिप्रसक्ता यथा—ब्राह्मणजातौ शौचम्। कुलप्रसक्ता यथा—किञ्चिदेव कुलं शुच्याचारवद् भवति। देशानुपातिनी यथा—अन्तर्वेदिवासिनः शुचयो भवन्ति। कालानुपातिनी यथा—कृतयुगे शौचम्। वयोऽनुपातिनी यथा—बाल्येऽशौचम्। प्रत्यात्मनियता यथा—कश्चिदेव पुरुषः प्रकृत्या शुचिर्भवति इत्याद्युदाहरणीयम्।

* देशानुपातिनीति चक्रः।

विकृतिः पुनर्लक्षणनिमित्ता च लक्ष्यनिमित्ता च निमित्तानुरूपा च। लक्ष्यमिति तावन्निमित्तानुमानम्। तत्र लक्षणनिमित्ता नाम सा यस्याः शरीरे लक्षणान्येव हेतुभूतानि भवन्ति। लक्षणानि हि कानिचिच्छरीरोपनिबद्धानि। यानि तस्मिंस्तस्मिन् काले

नियताश्च भवन्ति, दशानियताश्च भवन्ति, कालनियताश्च भवन्ति, वयोनियताश्च भवन्ति, प्रत्येकपुरुषनियताश्चैव भवन्ति नान्यनियताः। तस्मात् जातिप्रसक्तादिः षोढ़ा प्रकृतिः ॥ ३ ॥

गङ्गाधरः—विकृतिं विवृणोति स्वरूपतः विकृतिरित्यादि। लक्षणं शरीरगतरेखाचक्रशङ्खादिचिह्नं तन्निमित्तं यस्याः सा लक्षणनिमित्ता विकृतिः। लक्ष्यं निमित्तैरनुमीयते यत् तल्लक्ष्यं व्याध्यादिकम्, तन्निमित्तं यस्याः सा लक्ष्यनिमित्ता विकृतिः। व्याधितो हि सत्त्वशरीरयोर्विकृतिर्भवति। निमित्तानुरूपेति। निमित्तेन यत् क्रियते तत् क्रियते यया विकृत्या सा विकृतिर्निमित्तानुरूपा। ननु रेखादिलक्षणेन यल्लक्ष्यते शुभाशुभं तदत्र किं लक्ष्यमित्यतः स्वयं विवृणोति—लक्ष्यमित्यादि। निमित्तानुमानं कारणेनानुमानं यस्य तन्निमित्तानुमानं व्याध्यादिकं तावल्लक्ष्यम्। न तु लक्षणरेखादिभिर्लक्ष्यं शुभाशुभमत्र विवक्ष्यते। लक्षणनिमित्तादिविकृतित्रयं क्रमेण भाष्येण विवृणोति—तत्रेत्यादि। शरीरे लक्षणान्येव शङ्खाङ्कुशादिरेखादिकानि चिह्नानि यस्याः विकृतेर्हेतुभूतानि भवन्ति सा विकृतिर्लक्षणनिमित्ता नाम। कुत एतदित्यत आह—लक्षणानि हीत्यादि। हि यस्मात् कानिचिल्लक्षणानि शारीररेखादिचिह्नानि शरीरोपनिबद्धानि शरीरेण सह जातानि उत्तरकालं जातानि च शरीरे लग्नानि भवन्ति। ननु तानि कानि चिह्नानि इत्यत आह—यानीत्यादि। यानि शारीरचिह्नानि तस्मिंस्तस्मिन् काले तत्तच्चिह्नसूचनीयशुभा-

कुतः पुनर्जात्यादिनियता प्रकृतिर्भवतीत्यत्र हेतुमाह—जातिकुलेत्यादि। ते ते भावविशेषा इति शुचित्वाशौचादयः ॥ ३ ॥

चक्रपाणिः—रिष्टाधिकाराधिकृतां विकृतिं विवेचयितुं सर्व्वानेव विकृतिभेदानाह—विकृतित्यादि। हेतुभूतानीति हेतुसदृशानि, तेन दैवमेव नखरेखापद्मादिसामुद्रिकोक्तलक्षणयुक्ते शरीरे राज्यधनबन्धमादिरूपविकृतिप्राप्तौ हेतुः, लक्षणानि तु दैवनिमित्तानि बोधकमात्राणि, अत एव

तत्राधिष्ठानमासाद्य तां तां विकृतिमुत्पादयन्ति । लक्ष्यनिमित्ता तु सा यस्या उपलभ्यते निमित्तं यथोक्तनिदानेषु। निमित्तानुरूपा तु निमित्तार्थकारिणी । यामनिमित्तां निमित्तमायुषः प्रमाणज्ञानस्येच्छन्ति भिषजः । भूयश्चायुषः क्षयनिमित्तां

शुभकर्म्मपरिणामकाले तत्र शरीरप्रदेशेऽधिष्ठानमासाद्य तां तां शुभां वाशुभां वा शरीरे विकृतिं स्वाभाविकशरीरप्रकृत्यन्यथारूपामुत्पादयन्ति । लक्ष्यनिमित्तां भाष्येण विवृणोति—लक्ष्यनिमित्ता त्वित्यादि । यस्यास्तु विकृतेर्निमित्तं व्याध्यादिकमुपलभ्यते सा लक्ष्यनिमित्ता विकृतिः । यथोक्तनिदानेषु व्याधीनां निदानादिषु सा विकृतिरुक्ता वाच्या च । निमित्तानुरूपां विकृतिं भाष्येण विवृणोति—निमित्तानुरूपा त्वित्यादि । निमित्तार्थकारिणी निमित्तानां लक्षणानां लक्ष्याणाञ्च येऽर्था विकृतयस्तान् अर्थान् कर्त्तुं शीलं यस्याः सा निमित्तार्थकारिणी । उदाहरणेन तां दर्शयति—यामित्यादि । यां विकृतिम् अनिमित्तां निमित्तं विना रेखादिचिह्नं व्याध्यादिकं कारणं विना प्राक्तनकर्म्मतो यदृच्छया वा जातामायुषः प्रमाणज्ञानस्य निमित्तमिच्छन्ति भिषजः सा निमित्तार्थकारिणी निमित्तानुरूपोच्यते । ननु यदृच्छयैव कस्माद्भवतीत्यतस्तु

दैवादित्युक्तं दैवकर्त्तृत्वञ्चात्रोच्यते । विकृतिमुत्पादयन्तीत्यत्रापि दैवादिति योजनीयम् । तेन दैवबलादेव लक्षणानां राज्यधनवधबन्धनादिरूपविकृतिकर्त्तृत्वम् । तस्मिंस्तस्मिन् काल इत्यनेन लक्षणसूचितारिष्टपाककाले नियतत्वं विकृतेर्दर्शयति । लक्षणसूचिताश्च राज्यादय इह पुरुषस्य कदाचिद्भवन्तोऽस्वाभाविका एवेति कृत्वा विकृतिशब्देनोच्यन्ते । यथोक्तं निदानेष्विति यथा—रुक्षादिसेवया वातादिप्रकोपरूपा विकृतिर्निदानोक्तेत्यर्थः । निमित्तानुरूपेति निमित्तसदृशी । तदेव स्फारयति—निमित्तार्थकारिणीति निमित्तस्य यो अर्थः कार्य्यजननरूपः कार्य्यबोधनरूपो वा, तमनुकरोतीति निमित्तार्थानुकारिणी । रिष्टाख्या हि विकृतिर्मरणे, तस्यैव बोधने वा निमित्तं भवति । अपरमपि "अनिमित्ताम्" इत्यनन्तरमस्य विशेषणं कथयिष्यति । रिष्टस्य हि न रौक्ष्यादिना शरीरसम्बन्धादि निमित्तमुपलभ्यते । यद् वा आयुःक्षयरूपं यन्निमित्तं तद् विद्यमानमपि नान्यैरुपलभ्यते, किन्तु तदेव रिष्टादुन्नीयते । तेन अव्यक्तनिमित्तत्वमिहानिमित्तत्वं ज्ञेयम् । अत्र गतायुष्ट्वमेव सकलपुरुषसंश्रितरिष्टव्यापकं कारणं साधु ; यत् तु वक्ष्यति—"क्रियापथमतिक्रान्ताः केवलं देहमाश्रिताः । चिह्नं कुर्व्वन्ति यद् दोषास्तदरिष्टं प्रचक्षते" इति, तद् दूतादिगतरिष्टव्यापकतया पुरुषाश्रयिरिष्टमात्राभिप्रायेण ज्ञेयम् । आयुषः प्रमाणज्ञानस्येति आयुःशेषप्रमाणज्ञानस्येत्यर्थः । भूय

प्रेतलिङ्गानुरूपाम्, यामायुषोऽन्तर्गतस्य ज्ञानार्थमुपदिशन्ति धीराः। याश्चाधिकृत्य पुरुषसंश्रयाणि मुमूर्षतां लक्षणान्युपदेक्ष्यन्ते। इत्युद्देशः। तं विस्तरेणोपदिशन्तो भूयः परमतो व्याख्यास्यामः॥ ४॥

अपराश्चाह—भूयश्चेत्यादि। यां विकृतिमन्तर्गतस्य लक्षणलक्ष्याभ्यामविज्ञेयस्यायुषो ज्ञानार्थमायुषः क्षयनिमित्तामायुषः कर्म्मवशात् क्षय एव निमित्तं यस्यास्ताश्च भूयो भूयिष्ठं प्रेतलिङ्गरूपां मृतस्यानुमानकरणरूपां धीरा उपदिशन्ति। एवं परीक्षाहेतूनुक्त्वास्मिन स्थाने यद् यल्लक्षणं वाच्यं तदाह—याश्चेत्यादि। याश्च विकृतिमधिकृत्यात ऊर्द्ध्वं पुरुषसंश्रयाणि मुमूर्षताम् आसन्नमृत्यूनां पुंसां लक्षणान्युपदेक्ष्यन्ते सा विकृतिर्निमित्तानुरूपा। एतेनास्मिन स्थाने लक्षणनिमित्ता लक्ष्यनिमित्ता च विकृतिः पुरुषसंश्रयाणां वर्णादीनां परीक्षार्थं न दर्शयितव्या निमित्तानुरूपैव विकृतिर्दर्शयितव्या, तया पुरुषसंश्रयाणि मृत्युलक्षणानि परीक्षेतेत्यर्थः। इत्युद्देशः संक्षेपेणात्र प्रमाणविशेषज्ञानार्थं परीक्षासूत्रोपदेश एषः। तस्यायुषः प्रमाणज्ञानार्थपरीक्षासूत्रोद्देशं भूयोऽतः परम् ऊर्द्ध्वं व्याख्यास्यामः। इति प्रतिज्ञा॥ ४॥

इति अत्यर्थम्। तेनात्यर्थमायुःक्षयनिमित्तां प्रत्यासन्नायुःक्षयजन्यामिति यावत्। यामिति क्षीणायुःकार्य्याम्। प्रेतलिङ्गानुरूपामिति प्रेतसदृशीम्, "मला दन्तेषु जायन्ते प्रेताकृतिरुदीर्य्यते" इत्यादिग्रन्थवक्ष्यमाणाम्। इमां हि विकृतिमायुषोऽन्तर्गतस्य ज्ञानार्थं वदन्ति। या त्वन्या प्रेतलिङ्गानुरूपा वर्णाश्रया सा नात्यर्थं प्रत्यासन्नमरणबोधिका। तेन सा नात्यर्थक्षीणायुःकार्य्येत्यर्थः। एवं 'भूयश्च' इत्यादिना 'धीराः' इत्यन्तेन निमित्तानुरूपविकृतिविशेषस्य कार्य्यविशेषं मरणलक्षणमभिधाय पुनः सामान्येनानिमित्ततया धर्म्मान्तरमाह—यामधिकृत्येत्यादि। 'पुरुषसंश्रयाणि' इति विशेषणेन पुरुषानाश्रितदूतादिरिष्टे नावश्यमनिमित्ततास्तीति दर्शयति। यतो दूताधिकारादौ यानि रिष्टानि, तानि दृश्यमाननिमित्तान्यप्यागमादेव रिष्टत्वेनावधार्य्यन्ते, यथा—"मुक्तकेशोऽथवा नग्ने रुदत्यप्रत्ययेऽथवा। भिषगभ्यागतं दृष्ट्वा दूतं मरणमादिशेत्।" अत्र भिषजा मुक्तकेशवचनाद् दृश्यत एव कारणम्, तथा दूतागमने चातुरस्य प्रेरणादिकारणमस्त्येव। तेनानिमित्तञ्च आतुराश्रयि रिष्टमेव। अन्ये तु एवंभूतवैद्यदूतसमागमः परिहर्त्तव्यत्वेन ज्ञातः सन् यदा दैवाद् भवति, तदा दैवनिमित्तः सन् रिष्टं भवति। तेन सर्व्वरिष्टव्यापिकैवेयमनिमित्तता। 'भूयश्च' इत्यादिग्रन्थेन तु प्रेतलिङ्गानुरूपां विकृतिं भूय आयुषोऽन्तर्गतस्य ज्ञानार्थमुपदिशन्ति इति च तथा पुरुषसंश्रयान् भूय उपदेक्ष्यन्ते, पुरुषानाश्रयाणि तु स्वल्पग्रन्थेनोपदेक्ष्यन्ते इति व्याख्यानयन्ति। इत्युद्देश इति इन्द्रियस्थानार्थो ज्ञेय इत्यर्थः॥ ४॥

तत्रादित एव वर्णाधिकारः। तद् यथा—कृष्णश्यामः श्यामावदातोऽवदातश्चेति प्रकृतिवर्णाः शरीरस्य भवन्ति। यांश्चापरान् अवेक्ष्यमाणानपि * विद्यादनूकतोऽन्यथा वापि निर्दिश्यमानांस्तज्ज्ञैः। नीलश्यामताम्रहारितशुक्लाश्च वर्णाः शरीरे वैकारिका भवन्ति। यांश्चापरानवेक्ष्यमाणानपि विद्यात् प्राग्विकृतानदूरोत्पन्नान् †। इति प्रकृतिविकृतिवर्णा भवन्ति इत्युक्ताः शरीरस्य ॥ ५ ॥

गङ्गाधरः—उद्देशानुक्रमेण व्याख्यातुमाह—तत्रेत्यादि। कृष्णः स्निग्ध-कृष्णः पक्वजम्बूफलवत् तद्युक्तः श्याम ईषत्कृष्ण इत्यर्थः। श्यामावदात ईषच्छ्यामः उज्ज्वलश्याम इति यावत्। अवदातो गौर इति च त्रयो वर्णाः प्रकृतिवर्णाः। तज्ज्ञैर्वर्णभेदनामज्ञैर्यांश्च अपरान् अनूकतो वस्त्वन्तरसादृश्येन निर्दिश्यमानान् अन्यथा वस्त्वन्तरानूकव्यतिरेकेण वा निर्दिश्यमानान् अवेक्ष्यमाणान् तानपि प्रकृतिवर्णान् विद्यात्, तेऽपि प्रकृतिवर्णा भवन्ति। नीलश्याम इति नीलवत् श्यामवर्णः। ताम्रवर्णः। हारितशुक्ल इति पालाशवद्गौरः। एते त्रयो वर्णा विकृतिवर्णाः। यांश्चापरान् प्राग्विकृतान् पूर्ववर्णान्यवर्णान् अदूरोत्पन्नान्, न तु दूरोत्पन्नान् विद्यात्। तेन जन्ममात्रं

चक्रपाणिः—प्रकृतिज्ञानान्तरीयकत्वाद् विकृतिज्ञानस्य प्रकृतिवर्णानेव तावदाह—कृष्ण इत्यादि। अवदातो गौरः। इह च प्रायेण ये वर्णाः प्रकृत्या भवन्ति, ते प्रकृतिवर्णा उच्यन्ते, ये तु प्रायेण विकृत्या भवन्ति, ते विकृतिवर्णा उच्यन्ते इति ज्ञेयम्। तेन प्रकृतिवर्णा अपि कदाचिद् विकृति-वर्णा भवन्ति, तथा विकृतिवर्णा अपि जन्मप्रभृति जायमानतया कदाचिदपि प्रकृतिवर्णा भवन्तीति ज्ञेयम्। अनुक्तप्रकृतिवर्णातिदेशार्थमाह—यांश्चेत्यादि। उपेत्य ईक्षमाण इत्युपेक्षमाणः। अनूकत इति सादृश्यतः। अनेन च 'कृष्णश्यामादिवर्ण'शब्देन निर्दिश्यमानान् विद्यादिति योजना। नीलेत्यादिना विकृतिजायमानतया विकृतिवर्णानाह। इह 'अपरान्' इति वचनेन विकृति-वर्णसङ्करजा वर्णा ज्ञेयाः। विकृतिवर्णान्तरमाह—प्रागित्यादि। प्राग्विकृतानिति पूर्व-वर्णादन्यथाभूतानित्यर्थः। तेनापि येन श्यामेन सता रसायनयोगाद् गौरवर्णत्वं प्राप्तम्, स च त्यक्तरसायनः कालवशात् पुनः श्यामवर्णो भवति, तस्यापि पूर्व्वगौरवर्णाद् विकृतिः श्यामवर्णो

* अवेक्ष्यमाणानित्यत्र उपेक्षमाण इति चक्रधृतः पाठः।

† प्रागविकृतानभूत्वोत्पन्नानिति चक्रसम्मतः पाठः।

तत्र प्रकृतिवर्णोऽर्द्धशरीरे विकृतिवर्णोऽर्द्धशरीरे, द्वावपि वर्णौ मर्य्यादाविभक्तौ दृष्ट्वा यद्यं वं सव्यदक्षिणविभागेन, यद्यं वं पूर्व्वपश्चिमविभागेन, यद्यं वमधरोत्तरविभागेन, यद्यं वमन्तर्वहिर्विभागेन * आतुरस्य, रिष्टमिति विद्यात्। एवमस्य वर्णभेदो मुखस्यान्तर्गतो वर्त्तमानो मरणाय भवति। वर्णभेदेन ग्लानि-

यो वर्णस्तदुत्तरं कैशोरादौ यद्वर्णान्यथात्वं तद्वारितम्। न ते शरीरस्य वैकारिका वर्णा भवन्ति॥ ५॥

गङ्गाधरः—तत्र कस्मिन् वर्णेऽरिष्टत्वमित्यत आह—तत्रेत्यादि। प्रकृतिवर्ण इति साहजिको वर्णः। अर्द्धशरीरे इति नृसिंहाकारेण वार्द्धनारीश्वराकारेण वा तदाह—द्वावपीत्यादि। द्वौ प्रकृतिवर्णविकृतिवर्णौ मर्य्यादाविभक्तौ सीमया विभागीकृतौ दृष्ट्वा सव्यदक्षिणविभागेन सव्ये वामे प्रकृतिवर्णो दक्षिणे विकृतिवर्णः, दक्षिणे प्रकृतिवर्णः, वामे विकृतिवर्णो वेत्यवंरूपेण यदि मर्य्यादाविभक्तौ, यदि वा पूर्व्वपश्चिमविभागेन पुरोदेहे प्रकृतिवर्णः पृष्ठतो विकृतिवर्णोऽथवा पृष्ठतः प्रकृतिवर्णः पुरस्ताद्विकृतिवर्ण इत्येवंरूपेण मर्य्यादाविभक्तौ, यदि वाऽधरोत्तरभागेण ऊर्द्ध्वार्द्धकाये प्रकृतिवर्णोऽधोऽर्द्धकाये विकृतिवर्णोऽथवा अधोऽर्द्धदेहे प्रकृतिवर्ण उर्द्ध्वार्द्धदेहे विकृतिवर्ण इत्येवंरूपेण मर्य्यादाविभक्तौ, यदि वान्तर्बहिर्विभागेन देहाभ्यन्तरे प्रकृतिवर्णो वहिर्देहे विकृतिवर्णोऽथवा वहिर्देहे प्रकृतिवर्णो देहाभ्यन्तरे विकृतिवर्ण एवंरूपेण मर्य्यादाविभक्तौ द्वावपि वर्णौ दृष्ट्वातुरस्यारिष्टमिति विद्यान्न तु स्वस्थस्य। एवमस्यातुरस्य न तु स्वस्थस्य एवंप्रकारेण वर्णभेदो यदि मुखस्यान्तर्गतोऽर्द्धे प्रकृतिवर्णोऽर्द्धे विकृतिवर्णो वर्त्तमानः स्यात् तदा मरणाय भवति, अरिष्टं भवति। न तु नियतमरणव्यापकतो भिन्नमरिष्टं भवतीत्युक्तम्। तुल्यप्रकारत्वात् ग्लान्यादीनप्याह—

भवन् रिष्टं स्यादित्याह—अमूल्वोत्पन्नानिति। तेन नायं दोषः। अत्र हि पूर्व्वभूत एव वर्णः पुनर्भवति। तेन न रिष्टम्॥ ५॥

चक्रपाणिः—मर्य्यादाविभक्ताविति समसीमान्तरस्थापितौ। पूर्व्वपश्चिमविभागेनेति अभि

* अन्तर्विभागेनेति चक्रः।

हर्षरौक्ष्यस्नेहा व्याख्याताः, तथा पिप्लवव्यङ्गतिलकालकपिडकानामन्यतमस्यानने जन्मातुरस्यैवमेवाप्रशस्तं विद्यात् ॥ ६

नखनयनवदनमूत्रपुरीषहस्तपादौष्ठादिषु च वैकारिकोक्तानां वर्णानामन्यतमस्य प्रादुर्भावो हीनबलवर्णेन्द्रियेषु लक्षणमायुषः क्षयस्य भवति । * यदन्यदपि किञ्चिद्वर्णवैकृतमभूतपूर्व्वं सहसैव

वर्णभेदेनेत्यादि । यथा वर्णऽरिष्टमुक्तम्, तथार्द्धशरीरे ग्लानिरर्द्धशरीरे हर्षः यदि द्वावपि सव्यदक्षिणविभागेन वा पूर्व्वपश्चिमविभागेन वाप्यधरोत्तरविभागेन वाप्यन्तर्वहिर्विभागेन वा मर्य्यादाविभक्तौ दृष्ट्वातुरस्यारिष्टं विद्यात् । एवमस्य ग्लानिहर्षभेदो मुखस्यान्तर्गतो वर्त्तमानो मरणाय भवति । एवं यद्यर्द्धशरीरे रौक्ष्यमर्द्धशरीरे स्नेहो द्वावपि सव्यदक्षिणविभागेन वा पूर्व्वपश्चिमविभागेन वाप्यधरोत्तरविभागेन वान्तर्वहिर्विभागेन वा मर्य्यादाविभक्तौ पश्येत् तदातुरस्य अरिष्टं विद्यात्, न तु स्वस्थस्य । एवमस्यातुरस्य वर्णभेदो यदि मुखस्यान्तर्गतो वर्त्तमानो भवति तदा मरणाय भवति । इति यथा वर्णौ द्वौ सव्यदक्षिणभेदेन पूर्व्वपश्चिमभेदेन वा अधरोत्तरभेदेन वा अन्तर्वहिर्भेदेन वा व्याख्यातौ, तथा ग्लानिहर्षौ द्वौ रौक्ष्यस्नेहौ द्वौ चेति. वर्णभेदेन ग्लान्यादयो व्याख्याता बोध्याः । तथा पिप्लवो न्यच्छः कृष्णः व्यङ्गः तिलकालकादीनामन्यतमस्य यद्यातुरस्यानने जन्म स्यात्, तदा एवमेवारिष्टरूपमप्रशस्तं विद्यात् ॥ ६ ॥

गङ्गाधरः—नखनयनादिषु वैकारिकोक्तानां नीलश्यामताम्रहारितशुक्लानामन्यतमस्य वर्णस्य प्रादुर्भावो जन्म हीनबलादिके व्याधिते पुरुषे आयुषः क्षयस्य लक्षणं, न त्वक्षीणबलवर्णेन्द्रिये वा स्वस्थे । यदन्यदपीति । अभूतपूर्व्वंजन्मप्रभृति स्वास्थ्यदशायां यन्न वर्णस्वरूपं तदेव वर्णवैकृतं यदुक्तादन्यत्

मुखपृष्ठभागेनेत्यर्थः । अन्तर्विभागेनेति अत्रान्तर्गतो वर्णो मुखनासाकर्णश्रोत्रान्तर्गततया उन्नेयः । अन्यत्रेति अवान्तरे हस्तपादादौ । वर्णभेदेनेति यथा वर्णविभागेन रिष्टम्, तथापि ग्लान्यादिविभागेनेत्यपीत्यर्थः । हर्ष इह उपचयो ज्ञेयः, मानसहर्षस्येह चाक्षुषाधिकारेऽसङ्गतत्वात् । तथेत्यादौ पिप्लुप्रभृतीनामपि वर्णवत् सव्यदक्षिणादिविभागेन जन्म रिष्टं भवति । एतदेव 'जन्म'-शब्देनोच्यते ॥ ६ ॥

चक्रपाणिः—नखेत्यादौ बलहान्याद्यभावे सति न रिष्टम् । यच्चेत्यादिना अनुक्तवर्णरिष्टं गृह्णाति । अभूतपूर्व्वमिति पूर्व्वंव्याकृतरसायनविहितवर्णप्रादुर्भावव्युदासार्थम् । सहसो-

* यच्चान्यत् इति चक्रधृतः पाठः ।

उत्पद्यतेऽनिमित्तमेव ह्रीयमानस्यातुरस्य * तच्चारिष्टमिति विद्यात्। इति वर्णाधिकारः ॥ ७ ॥

स्वराधिकारस्तु—हंसक्रौञ्चनेमिदुन्दुभिकलविङ्ककाककपोत-झर्झरानूकाः प्रकृतिस्वरा भवन्ति। यांश्चापरानवेक्ष्यमाणान् विद्यादनूकतोऽन्यथा वापि निर्दिश्यमानांस्तज्ज्ञैः। † शुक-कल-ग्रहग्रस्ताव्यक्त-गद्गद-क्षाम-दीनानुकीर्णाश्चातुराणां स्वरा वैकारिका भवन्ति। यांश्चापरानवेक्ष्यमाणानपि विद्यात् प्राग्विकृताद्‌ अदूरोत्पन्नान्। इति प्रकृतिविकृतिस्वरा व्याख्याता भवन्ति। तत्र प्रकृतिर्वैकारिकाणामाश्वभिनिर्वृत्तिः स्वराणामेकत्वमेकस्य

सहसैवानिमित्तमेव देहे उत्पद्यते, तत् तु ह्रीयमानस्य बलादिभ्य आतुरस्यारिष्टं विद्यादिति ॥ ७ ॥

गङ्गाधरः—इति वर्णारिष्टमुक्त्वा उद्देशानुरूपत्वात् स्वरारिष्टाधिकारः। हंसेत्यादि। नेमी रथचक्रम्। कलविङ्कः पक्षिविशेषः। झर्झरः वाद्यभेदः। एषामनूकाः सदृशाः प्रकृतिस्वरा भवन्ति यांश्चापरान् स्वराननूकतोऽन्यथा वा तज्ज्ञैः स्वरविद्भिरवेक्ष्यमाणान् दृश्यमानानपि निर्दिश्यमानान् स्वरान् विद्यात्, तेऽपि प्रकृतिस्वराः। शुकः पक्षिविशेषः। कलः सूक्ष्मः। ग्रहग्रस्तः सर्व्वथानुच्चरणम्। अव्यक्तः। गद्गदोऽर्द्धोच्चरितः। क्षामः क्षीणः। दीनो दुःखोच्चार्य्यमाणः स्वरः। अनुकीर्ण उपर्य्युपर्य्युच्चार्य्यमाणः। एते स्वरा आतुराणां वैकारिका भवन्ति। यांश्चापरान् स्वरज्ञैरवेक्ष्यमाणानपि विद्यात् वैकारिकान् स्वरान् प्राग् विकृतात् पूर्व्वस्वरतोऽन्यथारूपात् अदूरोत्पन्नानल्पकालोत्पन्नान् स्वरान् विद्यात्, तेऽपि वैकारिकाः स्वरा भवन्ति। अथ स्वरारिष्टत्वमाह—तत्रेत्यादि। तत्र प्रकृतिविकृतिस्वरेषु मध्ये प्रकृतिस्वराणामुपघातेन वैकारिक-

त्पद्यत इत्यनेन रिष्टानां शीघ्रस्वभावं दर्शयति। अनिमित्तमिति पूर्व्वोक्तार्थमेव। ह्रीयमानस्य शश्वदिति स्वभावकथनम्, रिष्टोत्पत्त्या ह्रीयमानता शश्वदवश्यं भवति ॥ ७ ॥

चक्रपाणिः—क्रमागतं स्वरमाह—स्वरेत्यादि। झर्झरो वाद्यभाण्डविशेषः। यांश्चेत्यादि पूर्व्ववत्। एडको मेषः किंवा अनड्वान्। कलः सूक्ष्मः। ग्रस्तः सर्व्वथानुच्चारः। क्षामो रूक्षः। दीनो दुःखोच्चार्य्यमाणस्वरः। अनुकीर्णः उपर्य्युपर्य्युच्चार्य्यमाणः। प्रकृतेर्वैकारिका

* इतः परं शश्वदित्यधिकः क्वचित्। † एड़क इति चक्रः।

चानेकत्वमप्रशस्तम्। इति स्वराधिकारः। इति वर्णस्वराधिकारौ यथावदुक्तौ मुमूर्षतां ज्ञानार्थम्॥ ८॥

भवन्ति चात्र।

यस्य वैकारिको वर्णः शरीर उपपद्यते।
अर्द्धे वा यदि वा कृत्स्ने निमित्तं न च नास्ति सः॥
नीलं वा यदि वा श्यामं ताम्रं वा यदि वारुणम्।
मुखार्द्धमन्यथावर्णो मुखार्द्धेऽरिष्टमुच्यते॥
स्नेहो मुखार्द्धे सुव्यक्तो रौक्ष्यमर्द्धमुखे भृशम्।
ग्लानिरर्द्धे तथा हर्षो मुखार्द्धे प्रेतलक्षणम्॥

स्वराणामाशु शीघ्रमभिनिर्वृत्तिः, अप्रशस्तमरिष्टमातुरस्य। तथा स्वराणामनेकेषां प्रकृतिस्वराणां वा विकृतिस्वराणां वा एकत्वम् मिश्रीभावेणैकस्वरत्वम् एको वैकारिकः स्वरः। एकस्य वा स्वरस्यानेकत्वं बहवो वैकारिकस्य स्वराः। तथातुरस्य बलादिहीनस्य सहसा भवति तदा तस्यातुरस्य अप्रशस्तमिति॥ ८॥

गङ्गाधरः— एतदर्थे श्लोकानाह भवन्तीत्यादि। यस्येत्यादि। वैकारिको वर्णो नीलश्यामादिर्व्याख्यातः। अर्द्धे वा शरीरे उपपद्यतेऽपरार्द्धे प्रकृतिवर्ण इति गम्यमानत्वात्। न च तत्र निमित्तं, तदा स नास्ति मृतोऽभूदित्यर्थः। यदि वा कृत्स्ने शरीरे बाह्ये वाभ्यन्तरे वा कृत्स्नशरीरे वैकारिको वर्ण उत्पद्यते, न च तत्र निमित्तं वातादिकारणं, वर्त्ततेऽभ्यन्तरे वा बाह्ये वा गम्यमानत्वात् प्रकृतिवर्णस्तदा स नास्ति। नीलं वेत्यादि। यद्यर्द्धं मुखं नीलं मुखार्द्धेऽन्यथावर्णः प्रकृतिवर्णात्, किं वार्द्धमुखं श्याममभ्यन्तरतो मुखार्द्धेऽन्यथावर्णो यदि वार्द्धं मुखमभ्यन्तरतस्ताम्रं मुखार्द्धेऽन्यथावर्णः, यदि वार्द्धं मुखमभ्यन्तरेण अरुणं हारितशुक्लं मुखार्द्धेऽभ्यन्तरतोऽन्यथावर्णः प्रकृतिवर्णः स्यात् तदा अरिष्टमुच्यते। स्नेह इति। स्नेहो मुखार्द्धे इत्यादि पूर्व्वं व्याख्यातम्।

अन्यथाभूता इति प्रकृतिवैकारिकाः। स्वरानेकत्वमिति कदाचिदेव एककस्वरत्वं कदाचित् कलस्वरत्वमित्यादि। एकस्य चानेकत्वमिति एकस्यैव स्वरस्य चानेकत्वमिति प्रतिभाति। अनिमित्तमिति सम्बध्यते॥ ८॥

तिलकाः पिप्लवो व्यङ्गा राजयश्च पृथग्विधाः।
आतुरस्याशु जायन्ते मुखे प्राणान् मुमुक्षतः॥
पुष्पाणि नखदन्तेषु पङ्को वा दन्तसंश्रितः।
चूर्णको वापि दन्तेषु लक्षणं तद्‌ गतायुषः॥
ओष्ठयोः पादयोः पाण्योरक्ष्णोर्मूत्रपुरीषयोः।
नखेष्वपि च वैवर्ण्यमेतज्ज्ञीणबले-*-ऽन्तकृत्॥ ९॥
यस्य नीलावुभावोष्ठौ पक्कजाम्बवसन्निभौ।
मुमूर्षुरिति तं विद्यात् नरं धीरो गतायुषम्॥
एको वा यदि वानेको यस्य वैकारिकः स्वरः।
सहसोत्पद्यते जन्तोर्हीयमानस्य नास्ति सः॥
यच्चान्यदपि किञ्चित् स्याद्‌ वैकृतं स्वरवर्णयोः।
बलमांसविहीनस्य तत् सर्व्वं मरणोदयम्॥ १०॥

नखदन्तेषु व्याधितस्य यदि पुष्पाण्याशु भवन्ति दन्तसंश्रितश्च पङ्कः कर्दम इव क्लेदो भवति. किंवा चूर्णकश्चूर्णरजोवद्‌ दन्तेषु भवति तद्‌ गतायुषो लक्षणम्। ओष्ठयोरित्यादि। नखनयनवदनेत्यादिना व्याख्यातम्॥ ९॥

गङ्गाधरः—यस्येत्यादि। यस्यातुरस्य, न तु स्वस्थस्य, प्रकरणात्। सुस्पष्टार्थत्वात् पूर्व्वं न.व्याख्यातमिदं स्वयम्। स्वराधिकारं यद्व्याख्यातवान् तत्र श्लोकमाह—एको वेत्यादि। तत्रेत्यादिना व्याख्यातम्। यच्चान्यदपीत्यादि। वर्णारिष्टं यदन्यदपीत्यादिना व्याख्यातम्। तथैव स्वरविषयं बोध्यम्। यदन्यदपि किञ्चित् स्वरवैकृतमभूतपूर्व्वं सहसैवोत्पद्येत अनिमित्तमेव बलमांसहीनस्यातुरस्य तच्च सर्व्वमरिष्टमिति विद्यात्॥ १०॥

चक्रपाणिः—अयमेवार्थो गद्योक्तः स्पष्टार्थं सुखग्रहणार्थञ्च श्लोकेनोच्यते यस्येत्यादिना। तिलका इत्यादौ मुख इति मुखे तथा मुखाभ्यन्तरे॥ ९॥

चक्रपाणिः—ओष्ठाविति द्विवचनमुक्त्वापि यद 'उभौ' इति करोति, तेन सकलौष्ठव्याप्तिं दर्शयति। मुमूर्षुरित्युक्त्वापि यत् गतायुषमिति करोति, तेन रिष्टयुक्तो मुमूर्षुर्गतायुरिति

* "क्षीणबले" इति चक्रः।

तत्र श्लोकः ।

इति वर्णस्वरावुक्तौ लक्षणार्थं मुमूर्षताम् ।
यस्तु सम्यग् विजानाति नायुर्ज्ञाने स मुह्यति ॥ ११ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते इन्द्रियस्थाने वर्णस्वरीयमिन्द्रियं नाम प्रथमोऽध्यायः ॥ १ ॥

गङ्गाधरः—अत्राध्यायार्थोपसंहारश्लोकमाह—तत्र श्लोक इति ॥ ११ ॥
अध्यायं समापयति—अग्नीत्यादि ।

इति वैद्यश्रीगङ्गाधरकविरत्नविरचिते चरकजल्पकल्पतरौ पञ्चमस्कन्धे इन्द्रियस्थानजल्पे वर्णस्वरीयजल्पाख्या प्रथमशाखा ॥ १ ॥

दर्शयति । अजातरिष्टस्तु प्रतिक्रियाभावात् मुमूर्षुर्गतायुरपि भवति । मरणोदयमिति मरण-कारणमिति ज्ञानार्थम् ॥ १०।११ ॥

इति महामहोपाध्यायचरकचतुराननश्रीमच्चक्रपाणिदत्तविरचितायामायुर्वेददीपिकायां चरक-तात्पर्य्यटीकायाम् इन्द्रियस्थाने वर्णस्वरीयेन्द्रियं नाम प्रथमोऽध्यायः ॥ १ ॥

## द्वितीयोऽध्यायः ।

अथातः पुष्पितकमिन्द्रियं व्याख्यास्यामः,
इतिह स्माह भगवानात्रेयः ॥ १ ॥

पुष्पं यथा पूर्व्वरूपं फलस्येह भविष्यतः ।
तथा लिङ्गमरिष्टाख्यं पूर्व्वरूपं मरिष्यतः ॥
अप्येवन्तु भवेत् पुष्पं फलेनाननुबन्धि यत् ।
फलञ्चापि भवेत् किञ्चिद् यस्य पुष्पं न पूर्व्वजम् ॥
न त्वरिष्टस्य जातस्य नाशोऽस्ति मरणादृते ।
मरणञ्चापि तन्नास्ति यन्नारिष्टपुरःसरम् ॥ २ ॥

गङ्गाधरः—अथोद्देशानुक्रमत्वाद् वर्णस्वरपरीक्षोपदेशानन्तरं गन्धरसपरीक्षार्थं पुष्पितकमिन्द्रियमारभते—अथेत्यादि। फलस्य पूर्व्वरूपं पुष्पमिति। पुष्पितमधिकृत्य कृतोऽध्याय इति पुष्पितकम् ॥ १ ॥

गङ्गाधरः—पुष्पमित्यादि। भविष्यतः फलस्य पूर्व्वरूपं पुष्पं यथा, तथा मरिष्यतः पुरुषस्य अरिष्टाख्यं लिङ्गं भविष्यन्मरणस्य पूर्व्वरूपम्। तत्र व्यभिचारं दर्शयति—अप्येवन्त्वित्यादि। न केवलं फलस्य भविष्यत एव पुष्पं पूर्व्वरूपं फलेनाननुबन्धि फलजनकत्वं विनापि, पुष्पस्य सद्भावोऽस्ति। अपि च यस्य फलस्य पूर्व्वजं पुष्पं न भवति, तदपि किञ्चित् फलमस्ति, यथोडुम्बराश्वत्थवटादिफलं पुष्पं विनापि भवति। न तु तथारिष्टस्य जातस्य नाशोऽस्ति मरणादृते

चक्रपाणिः—वर्णस्वरानन्तरं गन्धस्य कृतत्वान्निर्द्दिष्टत्वाच्च तदाश्रयिरिष्टप्रतिपादकं पुष्पितकमुच्यते—पुष्पं यथेत्यादि। प्रकरणार्थो यद्यपि सकलेन्द्रियसाधारणतया प्रथमाध्याय एव वक्तुं युज्यते, तथापीह पुष्पानुकारेण गन्धाश्रयिरिष्टस्य वाच्यत्वात् पुष्पं प्रकृतम्, तत्प्रसङ्गाच्च रिष्टस्य पुष्पधर्म्मव्यापकमपि प्रकरणमिहोच्यते। पुष्पं यथेत्यादौ अव्यभिचरितफलसम्बन्धमेव पुष्पम्। अत एव अप्येवन्त्वित्यादिना फलपुष्पयोः परस्परव्यभिचारं दर्शयति पुष्पफलदृष्टान्तेन रिष्टमरणयोः दुर्बोधत्वात्। ननु पुष्पफलव्यभिचारमपि शिष्यो गृह्णीयादिति तन्निरासार्थमाह—अप्येवमित्यादि। फलेनाननुबन्धीति यथा वेतसपुष्पम्। यस्य पुष्पं न पूर्व्वजमपि शाखादेव फलम्। जातस्येति सम्पूर्णस्य। किञ्चिदुदिते ह्यरिष्टेऽसम्पूर्ण नावश्यं मृत्युः। अन्ये तु जातस्य

मिथ्या दृष्टमरिष्टाभमनरिष्टमजानता ।
अरिष्टं वाप्यसम्बुद्धमेतत् प्रज्ञापराधजम् ॥ ३ ॥

जातस्यारिष्टस्य फलादृते न पुष्पनाशवन्नाशोऽस्ति। मरणञ्चापि न चारिष्टं विना वर्त्तते। अत एव यत्रारिष्टं पुरःसरं पूर्व्वं सरति तत्र मरणमस्ति, यद्यत्र रसायनतपोजप्यतत्परत्वं मरणहरमन्त्रब्राह्मणश्च न प्रयुङ्क्ते तदा "ध्रुवन्त्वरिष्टे मरणं ब्राह्मणैस्तत् किलामलैः। रसायनतपोजप्य-तत्परैर्वा निवार्य्यते ॥" इति सुश्रुतवचनात् ॥ २ ॥

गङ्गाधरः—नन्वरिष्टवतोऽपि जीवनं दृश्यतेऽजातारिष्टस्यापि मरणं दृश्यते इति चेन्नत्याह—मिथ्येत्यादि। अनरिष्टमजातारिष्टं पुरुषस्य यदजानता वैद्येनारिष्टाभं दृष्टं तन्मिथ्या, न रिष्टम्। जातञ्च यदरिष्टम् अजानता वैद्येन असम्बुद्धं न सम्यक् ज्ञातं तदपि मिथ्या, अनरिष्टम्। ननु कथमेवं भवति ? मिथ्यारूपम् एतज्ज्ञानं प्रज्ञापराधजं वैद्यानां प्रज्ञापराधात्

नियतस्येति वर्णयन्ति। द्विविधं हि रिष्टं नियतञ्चानियतञ्च। तत्र नियतम्, "मृतमेव तमात्रेयो व्याचचक्षे पुनर्व्वसुः" इत्यादि। अनियतम्, यथा—"संशयप्राप्तमात्रे यो मन्यते तस्य जीवितम्। अरोगः संशयं गत्वा कश्चिदेव प्रमुच्यते" इति। तथाऽनियतारिष्टाभिप्रायेणैव सुश्रुतेऽप्युक्तम्—"ध्रुवन्त्वरिष्टे मरणं ब्राह्मणैस्तत् किलामलैः। रसायनतपोजप्य-तत्परैर्वा निवार्य्यते ॥" एतच्चान्ये न मन्यन्ते। आचार्य्येण रिष्टमरणयोरव्यभिचारस्य महता प्रयत्नेन दर्शितत्वात्। "संशयप्राप्तम्" इति वचनं मरणप्रतिपादकमेवाचार्य्येण भङ्ग्यन्तरेणोक्तम्, यथाचार्य्यस्यारिष्टार्थस्तथा तद्ग्रन्थ एव व्याख्यास्यामः। यत् तु रसायनादिसाध्यत्वं रिष्टस्य तदनुमतमेव। रसायनमहेश्वरप्रसादादयो हि सर्व्वलोकमर्य्यादामपि हन्तुं क्षमाः। तेन तदव्यभिचारमपेक्ष्येह ग्रन्थः क्रियते। महेश्वरो हि भस्मीभूतं कामं पुनर्जीवयति स्म। तपसा च रामेण मृतोऽपि विप्रपुत्रः पुनर्जीवित इत्याद्यनुसरणीयम्। अन्ये तु कालमृत्यावेव रिष्टपूर्व्वकं मरणं भवतीति वर्णयन्ति, वदन्ति च—"यद्यकालमृत्यौ रिष्टं भवति तदा वर्णोऽत्र मृत्युप्रदं रिष्टं तत् विफलं स्यात्, येन कालमृत्युरुचिताचरणेऽपि परं मृत्युर्भवति, तत्र रिष्टे जाते यद्युचिता क्रिया क्रियते तदा मृत्युर्भवितुमर्हति, तेन कालगतमेव रिष्टम्" इति। तच्च न, अविशेषेण कालाकालमरणे रिष्टसद्भावनियमात्। अकालमृत्यौ च कालमृत्यौ च यदैव क्रियापथमतिक्रान्तोऽपचारजनितो व्याधिर्भवति, तदैव परं रिष्टं भवति। अत एवोक्तम्—"क्षणेनैव रिष्टाः प्रादुर्भवन्ति" इति। यश्चैनं न स्वीकरोति, तस्य नियतायुषोऽपचारजन्यव्याधेरसाध्यता कदापि न स्यात्। येन यथाऽपचारजा दोषा अतिशयप्रमादादसाध्यव्याधिजनका भवन्ति, तथा मरणपूर्व्वरिष्टजनका अपि भवन्ति ॥ २ ॥

चक्रपाणिः—यत्र कुत्रचित् रिष्टमरणव्यभिचारिलिङ्गज्ञानं भवति, तद् भ्रान्तमिति दर्शयन्नाह—मिथ्येत्यादि। अरिष्टाभमिति अरिष्टसदृशम्। मिथ्यादृष्टमिति रिष्टत्वेन ज्ञातम्, एतदेवारिष्टे

ज्ञानसंवर्द्धनार्थन्तु लिङ्गर्मरणपूर्व्वजः।
पुष्पितानुपदेक्ष्यामो नरान् बहुविधान् बहून् * ॥
नानापुष्पोपमो गन्धो यस्य भाति दिवानिशम्।
पुष्पितस्य वनस्येव नानाद्रुमलतावतः ॥
तमाहुः पुष्पितं धीरा नरं मरणलक्षणैः।
स ना संवत्सराद् देहं जहातीति विनिश्चयः ॥ ४ ॥

भवति। तस्मात् भवन्नरिष्टे मरणं न तु ब्राह्मणादिभिर्निवार्य्यमिति कश्चिदत्र व्याचष्टे तन्न सुश्रुतविरोधात् ॥ ३ ॥

गङ्गाधरः—ज्ञानेत्यादि। ज्ञानमायुषः प्रमाणावशेषस्य ज्ञानसंवर्द्धनार्थं मरणपूर्व्वजैर्मरणात् पूर्व्वं जायन्ते ये तैः लिङ्गैः पुष्पितान् नरान् पुरुषान् बहून् बहुविधानुपदेक्ष्यामः इत्यर्थः। नानेत्यादि। यस्य पुरुषस्य दिवानिशमर्थात् सर्व्वदैवाविच्छेदेन नानापुष्पोपमो गन्धः शरीरे भाति प्रकाशते तं नरं मरणलक्षणैः पुष्पितं धीरा आहुः, यथा नानाद्रुमलतावतः पुष्पितस्य वनस्य नानापुष्पोद्भवो गन्धो भाति। एतावता तद्वनस्य नाशवत् नाश इति न ख्यापितं, किन्तु नाशे पुष्पवद्गन्धांशे इयमुपमा। ननु कियद्दिवसान्मरणं स्यादित्यत आह—स नेत्यादि। यो नानापुष्पैर्गन्धतस्तुल्यगन्धो भाति स ना संवत्सरात् संवत्सरसमाप्तिं प्राप्य देहं जहातीति निश्चयः ॥ ४ ॥

रिष्टज्ञानं प्रज्ञापराधजम्। तथा रिष्टमपि सूक्ष्मरूपतया मारके व्याधावसम्बन्धं भवति, एतदपि प्रज्ञापराधजं मिथ्याज्ञानम्। तेन रिष्टे यत्र सत्यपि मरणं न भवतीति च ज्ञानं भ्रान्तम्, तथा रिष्टं विनापि क्वचित् मरणं भवतीति ज्ञानं भ्रान्तम्, ततश्च सिद्धोऽव्यभिचारो मरणरिष्टयोरिति वाक्यार्थः ॥ ३ ॥

चक्रपाणिः—ज्ञायते मरणमनेनेति ज्ञानं रिष्टम्, तस्य सम्बोधनं ज्ञानसम्बोधनम्। मरणपूर्व्वकैरिति मरणपूर्व्वभाविभिः। पुष्पिता यथा वृक्षादयो गन्धवन्तो भवन्ति, तथा रिष्टगन्धप्रयुक्ता ये भवन्ति, ते पुष्पिताः, तान् पुष्पितान्। बहुविधैर्लिङ्गैर्बहून् पुष्पितानिति योजना। वनस्येत्युक्तेऽपि यन्नानाद्रुमलतावत इति करोति, तेन भिन्नजातीयं वनं आहयति। वनं हि सजातीयवृक्षाणामपि स्यात्, यथा—चम्पकवनमशोकवनमित्यादि। नानात्वञ्च पुष्पाणामेकजातीयानामपि कलिकाद्यवस्थाभेदादपि स्यात्, तस्मात् साधु विशेषणम् 'नानाद्रुमलतावतः' इति। मरणलक्षणैर्यथोक्तैर्गन्धैस्तं पुष्पितकमाहुरित्यादि योज्यम्। संवत्सरादिति संवत्सराभ्यन्तरे ॥ ४ ॥

* "ज्ञानसम्बोधनार्थन्तु लिङ्गैर्मरणपूर्व्वकैः। ·· बहुविधैर्बहून्" इति चक्रसम्मतः पाठः।

एवमेकैकशः पुष्पैर्यस्य गन्धः समो भवेत् ।
इष्टैर्वा यदि वानिष्टैः स च पुष्पित उच्यते ॥
समासेनाशुभान् गन्धानेकत्वेनाथ वा पुनः ।
आजिघ्रेद् यस्य गात्रेषु तं विद्यात् पुष्पितं भिषक् ॥ ५ ॥
आप्लुतानाप्लुते * काये यस्य गन्धाः शुभाशुभाः ।
व्यत्यासेनानिमित्ताः स्युः स च पुष्पित उच्यते ॥
तद् यथा चन्दनं कुष्ठं तगरागुरुणी मधु ।
माल्यं मूत्रपुरीषे वाऽमृतानि † कुणपानि वा ॥

गङ्गाधरः एवमित्यादि । एवं यद्येकैकशः पुष्पैरिष्टैर्मनोज्ञैरनिष्टैः दुर्गन्धिभिर्वा समो गन्धो यस्य भवेत्, सोऽपि पुष्पित उच्यते, संवत्सराद् देहं जहाति। इति पुष्पितस्य जीवितसंख्यामानम् । समासेनेत्यादि । यस्य गात्रे अशुभान् गन्धान् समासेन बहुशुभगन्धमेलकतया एकीभावेन वैद्य आजिघ्रेत् तमपि भिषक् पुष्पितं विद्यात् । संवत्सरात् देहं स जहाति । अथवा पुनः । अशुभान् गन्धान् एकैकशो न तु मिश्रान् यस्य गात्रेषु भिषगाजिघ्रेत् तमपि पुष्पितं नरं विद्यात् । सोऽपि संवत्सराद् देहं जहातीति ॥ ५ ॥

गङ्गाधरः—आप्लुतेत्यादि । यस्य काये तैलचन्दनागुरुकुङ्कुमादिभिरशुभ-शुभगन्धद्रव्यैराप्लुते वानाप्लुते वा व्यत्यासेनानिमित्ताः अकारणतो गन्धाः शुभाशुभाः स्युः स च पुष्पित उच्यते संवत्सराद् देहञ्च जहातीति। एतद्भाष्येण विवृणोति—तद् यथेत्यादि । चन्दनादिगन्धः शुभः । मूत्रपुरीषादि-

चक्रपाणिः—एवमिति दिवानिशम् । समासेनेत्यादि । पुष्पव्यतिरिक्तशवाद्यशुभगन्धयोगेनापि 'पुष्पितत्वं' परिभाष्यते इति शेषः । समासेनेति मेलकेन । आप्लुतेत्यादौ आप्लुतानाप्लुतत्व-विशेषव्यत्यासश्च शुभाशुभगन्धानाञ्च ज्ञेयः । पुष्पितत्वाभिधानञ्च यत्र यत्र, तत्र तत्र संवत्सरान्तं जीवितं पूर्ववचनाद भवति । तद् यथेत्यादिना शुभाशुभद्रव्याण्याह—मृतानीति मानुष-

* "आप्लुतानाप्लुता इति चक्रपाठः । † "च मृतानि" इति चक्रसम्मतः पाठः ।

ये चान्ये विविधात्मानो गन्धा विविधयोनयः ।
तेऽप्यनेनानुमानेन ज्ञेया विकृतितां गताः ॥
इदञ्चाप्यतिदेशार्थं लक्षणं गन्धसंश्रयम् ।
वक्ष्यामो यदभिज्ञाय भिषङ् मरणमादिशेत् ॥ ६ ॥
वियोनिर्विदुरो गन्धो यस्य गात्रे तु जायते ।
इष्टो वा यदि वानिष्टो न स जीवति तां समाम् ।
एतावद् गन्धविज्ञानम्————————॥ ७ ॥

गन्धोऽशुभः । ये चान्ये इत्यनेनानुक्तशुभाशुभगन्धसंग्रहः । विविधात्मान इति अकृत्रिमा नानागन्धाः । विविधयोनय इति नानाद्रव्यकृतसंयोगतः ये गन्धाः शुभाः किंवा अशुभाः । तथा च यस्य काये चन्दनादिशुभगन्धद्रव्यैराप्लुतेऽकारणतस्तत्तच्छुभगन्धा न स्फुरन्तोऽशुभाः मूत्रपुरीषादिगन्धा भान्ति सोऽपि पुष्पितः संवत्सराद् देहं जहाति । एवं यस्य चन्दनादिशुभगन्धद्रव्यैर्विनाप्लुते कायेऽनिमित्ताश्च यदि शुभगन्धा भान्ति सोऽपि पुष्पितः सम्वत्सराद देहं जहातीति भावः । एवं यस्य मूत्राद्यशुभगन्धद्रव्यैरनाप्लुते कायेऽनिमित्ता मूत्रपुरीषादिका अशुभा गन्धा भान्ति सोऽपि पुष्पितः सम्वत्सराद् देहं जहातीति भावः । ननु किं चन्दनादिशुभाशुभगन्धा एव नान्ये इत्यत आह—इदञ्चेत्यादि । इदञ्चातिदेशार्थं न तु नियमार्थं, तेन शुभाशुभगन्धं यावद् द्रव्यं बोध्यम् ॥ ६ ॥

गङ्गाधरः—वियोनिरित्यादि । विगता नास्ति योनिरुत्पत्तिहेतुर्यस्य स वियोनिरनिमित्तो गन्धः, विदुरः स्थायी गन्धः, विद् सत्तायामित्यस्य कृदन्तत्वे रूपम् । तथा च यस्य गात्रेऽनिमित्तो निरन्तरं विद्यमान इष्टो वाप्यनिष्टो वा गन्धो जायते स पुष्पितस्तां प्रवर्त्तमानां समां संवत्सरं न च जीवति । इति गन्धपरीक्षा ॥ ७ ॥

व्यतिरिक्तानि गवादीनि मृतानि । कुणपानि मानुषशरीराणि । "विविधयोनयः" इत्यनेन नानाद्रव्यकृतधूपवर्त्यादिगन्धान् ग्राहयति । विविधात्मान इत्यनेन तु अकृत्रिमनानाद्रव्यगन्धा उच्यन्ते । अनेनानुमानेनेति "आप्लुते" इत्यादिग्रन्थोक्तरिष्टानुसारेण । अतिदेशार्थमिति अनुक्तज्ञानार्थम् । वियोनिरिति निर्हेतुकः । विदूर इति स्थायी ॥ ५—७ ॥

——————————रसज्ञानमतः परम् ।
आतुराणां शरीरेषु वक्ष्यते विधिपूर्व्वकम् ॥ ८ ॥
यो रसः प्रकृतिस्थानां नराणां देहसम्भवः ।
स एषां चरमे काले विकारं भजते द्वयम् ॥
कश्चिद्देवास्य वैरस्यमत्यर्थमुपपद्यते ।
स्वादुत्वमपरश्चापि विपुलं भजते रसः ॥
तमनेनानुमानेन विद्याद् विकृतितां गतम् ।
मनुष्यो हि मनुष्यस्य कथं रसमवाप्नुयात् ॥
मक्षिकाश्चैव यूकाश्च दंशाश्च मशकैः सह ।
विरसादपसर्पन्ति जन्तोः कायान्मुमूर्षतः ॥
अत्यर्थरसिकं कायं कालपक्वस्य मक्षिकाः ।
अपि स्नातानुलिप्तस्य भृशमायान्ति सर्व्वशः ॥ ९ ॥

गङ्गाधरः—अतः परमुद्देशक्रमत्वात् रसज्ञानमाह—आतुराणामित्यादि। आतुराणां शरीरेषु विधिपूर्व्वकं रसज्ञानं वक्ष्यते ॥ ८ ॥

गङ्गाधरः—यो रस इत्यादि। यो रसः एषामातुराणां प्रकृतिस्थानाञ्च नराणां चरमे काले मृत्युकाले द्वयं विकारं भजते। किं द्वयं विकारम् इत्यत आह—कश्चिदित्यादि। अस्य कश्चिद्रसोऽत्यर्थं वैरस्यमशुभरसत्वमुपपद्यते प्राप्नोति। अपरश्च कश्चिद्रसो विपुलं स्वादुत्वं मधुरत्वं भजते। तमित्यादि। तं द्विविधं विकृतितां गतं रसमनेन वक्ष्यमाणमक्षिकादिनानुमानेन विद्यात्। ननु कस्माद्रसो रसनार्थोऽनुमानेन वेदितव्य इत्यत आह—मनुष्यो हीत्यादि। अनुमानार्थमाह—मक्षिकाश्चेत्यादि। मुमूर्षतो जन्तोः कायात् विरसान्मक्षिकादयोऽपसर्पन्ति अपगच्छन्ति न तु तत्र काये चरन्ति। इत्यनेन कायस्य

चक्रपाणिः—वैरस्यमिति अनिष्टरसताम्। कथमित्याक्षेपे, तेन न कथमपीत्यर्थः। अवाप्नुयादिति जानीयात्। अत्यर्थरसिकमिति अतिस्वादुरसम्। कालपक्वस्येति पूर्णकालस्य। सर्व्वश इति सर्व्वगात्रेषु ॥ ८।९ ॥

तत्र श्लोकः ।

यान्येतानि * मयोक्तानि लिङ्गानि रसगन्धयोः ।
पुष्पितस्य नरस्यैतत् फलं मरणमादिशेत् ॥ १० ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते इन्द्रियस्थाने
पुष्पितकमिन्द्रियं नाम द्वितीयोऽध्यायः ॥ २ ॥

वैरस्यमनुमेयम् । अत्यर्थमित्यादि । कालपक्कस्य जीवितकालपरिणतस्य, अर्थात् आसन्नमृत्युकालस्य । अत्यर्थं रसिकम् अत्यर्थस्वादुरसयुक्तं कायं सर्व्वशः सर्व्वथैव भृशमायान्ति आगच्छन्ति न मुञ्चन्ति । यदि स पुरुषो मक्षिकापसर्पणार्थं स्नातोऽनु पश्चात् चन्दनादितिक्तद्रव्यैरवलिप्तो भवति तथापि तस्य तमत्यर्थरसिकत्वात् कायं भृशं सर्व्वश आयान्ति न मुञ्चन्ति । इत्यनेन कायस्यातिमधुरत्वमनुमेयम् ॥ ९ ॥

गङ्गाधरः—संग्रहार्थं फलवचनार्थञ्च श्लोकमाह यान्येतानीत्यादि । मरणमेवैतयोः फलमादिशेत् तुल्यमानमेव एतयोरिति बोध्यम् ॥ १० ॥

अध्यायं समापयति—अग्नीत्यादि ।

इति वैद्यश्रीगङ्गाधरकविरत्नविरचिते चरकजल्पकल्पतरौ पञ्चमस्कन्धे इन्द्रियस्थानजल्पे पुष्पितकेन्द्रियाध्यायजल्पद्वितीयशाखा ॥ २ ॥

चक्रपाणिः—संग्रहश्लोके सामान्येन पुष्पितस्यैतिवचनात् रसरिष्टेऽपि पुष्पितत्वमस्य विवक्षितम् । तेन रसरिष्टेऽपि संवत्सराभ्यन्तरे मरणमिति फलति ॥ १० ॥

इति महामहोपाध्यायचरकचतुराननश्रीमच्चक्रपाणिदत्तविरचितायामायुर्व्वेददीपिकायां चरकतात्पर्य्यटीकायाम् इन्द्रियस्थाने पुष्पितकेन्द्रियशारीरं नाम द्वितीयोऽध्यायः ॥ २ ॥

---

* सामान्येनेति चक्रः ।

## तृतीयोऽध्यायः ।

अथातः परिमर्शनीयमिन्द्रियं व्याख्यास्यामः,
इतिह स्माह भगवानात्रेयः ॥ १ ॥

वर्णे स्वरे च गन्धे च रसे चोक्तं पृथक् पृथक् ।
लिङ्गं मुमूर्षतां सम्यक् स्पर्शेष्वपि निबोधत * ॥ २ ॥

स्पर्शप्राधान्येनातुरस्यायुषः प्रमाणावशेषं जिज्ञासुः प्रकृतिस्थेन पाणिना शरीरमस्य केवलं स्पृशेत्, विमर्शयेद्वान्येन । परिमृशता तु खल्वातुरशरीरमिमे भावास्तत्र तत्र बोद्धव्या भवन्ति । तद् यथा—सततं स्पन्दमानानां शरीरदेशानां

गङ्गाधरः—अथ उद्देशानुक्रमत्वाद् गन्धरसपरीक्षानन्तरं स्पर्शपरीक्षार्थं परिमर्शनीयमिन्द्रियं व्याख्यातुमारभते—अथात इत्यादि । परिमर्शनमन्येन स्वेन च पाणिना स्प्रष्टुं परिमर्शनमधिकृत्य कृतमिन्द्रियमिति परिमर्शनीयम् ॥ १ ॥

गङ्गाधरः—वर्ण इत्यादि । स्पष्टम् ॥ २ ॥

गङ्गाधरः—स्पर्शप्राधान्येनेत्यादि । स्पर्शः स्पर्शनेन्द्रियार्थस्तत्प्राधान्येन चक्षुरादिस्पर्शरूपविशेषेणापि आतुरस्यायुषः प्रमाणावशेषं जिज्ञासुः ज्ञातुमिच्छुर्भिषक् प्रकृतिस्थेन पाणिना न तु विकारयुक्तेन पाणिना, तेन हि सम्यक् स्पर्शो न ज्ञायते, अस्यातुरस्य केवलं कृत्स्नं शरीरं स्पृशेत् । ननु यदङ्गं न स्प्रष्टुं युज्यते, यस्य वा अमुष्यंम्पश्यादेः स्पर्शो न युज्यते, भिषजो वा पाणिरप्रकृतिस्थः, तस्य कथं स्पर्शनं स्यादित्यत आह—विमर्शयेद्वान्येनेति । कथं परिमर्शनं स्यादित्यत आह—परीत्यादि । आतुरशरीरं परिमृशता भिषजा त्वातुरशरीरस्य स्वपाणिना वान्येन वा स्पर्शनेन परीक्षां कुर्व्वता खल्विमे तत्र तत्र शरीरे भावा बोद्धव्या भवन्ति । के ते भावा इत्यत आह—तद् यथेत्यादि । सततं स्पन्द-

चक्रपाणिः—इन्द्रियार्थानां रिष्टपारिशेष्यात् स्पर्शगतारिष्टाभिधायकं परिमर्शनीयमिन्द्रियमुच्यते । इममेव चाध्यायसम्बन्धं दर्शयन्नाह—वर्ण स्वरे चेत्यादि । स्पर्शेनेति वक्तव्ये, यत्

* निबोधत इत्यत्र विधीयते इति पाठान्तरं क्वचित् ।

स्तम्भः, नित्योष्मणां शीतभावः, मृदूनां दारुणत्वम्, श्लक्ष्णानां खरत्वम्, सतामसद्भावः, सन्धीनां स्रंसभ्रंशच्यवनानि*, मांसशोणितयोर्वीतभावः, दारुणत्वम्, स्वेदानुबन्धः, स्तम्भो वा। यच्चान्यदपि किञ्चिदीदृशं विकृतमनिमित्तं स्यात्। इतिलक्षणानां संग्रहः स्पृश्यानां भावानाम्॥ ३॥

तद् व्यासतोऽनुव्याख्यास्यामः। तस्य चेत् परिमृश्यमानं पृथक्त्वेन पादजङ्घोरुस्फिगुदरपार्श्वपृष्ठेषिकापाणिग्रीवाताल्वोष्ठललाटं स्विन्नं शीतं प्रस्तब्धं दारुणं वीतमांसशोणितं

मानानां शरीरदेशानां नयनहृदयादीनां स्तम्भोऽस्पन्दनम्। नित्योष्मणां मुखाभ्यन्तरनासामूर्द्धकण्ठहृदयनाभ्यादीनां शीतभावः शीतत्वम्। मृदूनां शरीरदेशानां दारुणत्वं कठिनत्वम्। श्लक्ष्णानां शरीरदेशानां जिह्वादीनां खरत्वं कर्कशत्वम्। सतां वृषणादीनां अकस्मादसद्भावो विलयनम्। सन्धीनां स्रंसो नात्यधःपतनं, भ्रंशः स्वस्थानादधःपतनं, च्यवनं सन्धीनां स्वस्थानात् विश्लेषः। मांसशोणितयोर्वीतभावः क्षयः नास्तित्वमित्यर्थः। दारुणत्वं कठिनत्वम्। स्वेदानुबन्धः प्रायेण स्वेदसातत्यम्। स्तम्भो वा स्वेदस्यैव। अनुक्तविकृतिमुपसंहरति—यच्चान्यदित्यादि। अनिमित्तमकस्मादकारणमीदृशं भृशं विकृतम्। इतिलक्षणानाम् इत्येवंप्रकारलक्षणयुक्तानां स्पृश्यानां शरीरभावाणाम्॥ ३॥

गङ्गाधरः—तत्परिमर्शनं व्यासतोऽनुव्याख्यास्याम इत्यर्थः। तस्येत्यादि। तस्यातुरस्य पृथक्त्वेन एकैकशः पादजङ्घादिकं परिमृश्यमानं यदि स्विन्नं घर्म्मयुक्तं शीतं शीतलं प्रस्तब्धमस्पन्दं दारुणं कठिनं वीतमांसशोणितं मांस-

'स्पर्शप्राधान्येनैव' इति करोति, तेन अस्पर्शग्राह्यमपि चक्षुर्लोहितत्वादि रिष्टमिह स्पर्शपरीक्षामध्ये वक्तव्यमिति दर्शयति। अत्र च वृषणादीनां सतामिति ज्ञेयं स्थूलावयवानां रिष्टेऽप्यभावदर्शनात्। भ्रंशोऽपि गमनम्, धावनन्तु पार्श्वतो गमनम्। वीतीभावोऽतिक्षीणत्वमिति। लक्षणमनिमित्तमिति मरणलक्षणम्। स्पर्शानामिति छेदः॥ १—३॥

* च्यवनानीत्यत्र धावनानि इति वा पाठः।

वा स्यात्, परासुरयं पुरुषो नचिरात् कालं मरिष्यतीति विद्यात् ॥ ४ ॥

तस्य चेत् परिमृश्यमानानि पृथक्त्वेन गुल्फजानुवङ्क्षण-गुदवृषणमेढ्रनाभ्यंसस्तनमणिक-पर्शुकाहनुनासिकाकर्णाक्षिभ्रू-शङ्खादीनि स्रस्तानि व्यस्तानि च्युतानि स्थानेभ्यः स्कन्नानि स्युः, परासुरयं पुरुषो नचिरात् कालं मरिष्यतीति विद्यात् ॥ ५ ॥

तथास्योच्छ्वासमन्यादन्तपक्ष्मचक्षुःकेशलोमोदरनखाङ्गुलीश्च लक्षयेत्। तस्य चेदुच्छ्वासोऽतिदीर्घो ह्रस्वो वा स्यात्, परासुरिति विद्यात्। तस्य चेन्मन्ये परिमृश्यमाने न स्पन्देयातां, परासुरिति विद्यात्। तस्य चेद् दन्ताः प्रतिकीर्णाः श्वेता जातशर्कराः स्युः, परासुरिति विद्यात्। तस्य चेत् पक्ष्माणि जटावद्धानि स्युः, परासुरिति विद्यात्। तस्य चेच्चक्षुषी प्रकृतिहीने विकृति-

शोणिताभ्यां क्षीणं स्यात्। परासुर्गतप्राणः पराशब्दस्य गतार्थत्वात्। नचिरात् कालमचिरात् कालम् ॥ ४ ॥

गङ्गाधरः—अथ तस्यातुरस्य पृथक्त्वेन एकैकशः परिमृश्यमानानि गुल्फादीनि स्थानेभ्यश्च्युतानि सन्ति स्कन्नानि गतिमन्ति शुष्काणि स्युस्तदायं पुरुषः परासुर्नचिरात् कालं मरिष्यतीति विद्यात् ॥ ५ ॥

गङ्गाधरः—तथेत्यादि। लक्षयेत् परिमृशेत्। कथमित्यत आह—तस्येत्यादि। श्वासपरिमर्शनम्। ततस्तस्येत्यादि। परिमृश्यमाने पाणिना स्पृश्यमाने यदि न स्पन्देयातां तदायं परासुरिति विद्यात्। तस्य चेदित्यादि। प्रतिकीर्णा मललिप्ताः, श्वेताः श्वेतवर्णाः, जातशर्करा दन्तान्तर्ज्जातशर्करा दृढ़-रूपाः। तस्य चेदित्यादिना पक्ष्मणां परीक्षा। जटाबद्धानि त्रिचतुरादिपक्ष्माणि मिलित्वा जटाकाराणि। तस्य चेदित्यादि। चक्षुःपरीक्षा। प्रकृतिहीने प्रकृत्याः

चक्रपाणिः—पृष्ठेपिका पृष्ठवंशः। पृथक्त्वेनेति एकैकत्वेन। मणिकं करबाहुसन्धिः। मन्ये गलपार्श्वगते धमन्यौ। उच्छ्वासदैर्घ्यह्रासौ नासाग्रदत्तकरस्पर्शादुपलभ्येते। परिकीर्णा इति मललिप्ताः। श्वेतत्वं चक्षुर्ग्राह्यमपि स्पर्शपरीक्षणीयं दन्तधर्म्मप्रस्तावादुच्यते। चक्षुषी

युक्ते अत्युत्पिण्डिते अतिप्रविष्टे अतिजिह्मे अतिविषमे अतिमुक्तबन्धने अतिप्रस्रुते सततोन्मिषिते निमेषोन्मेषातिप्रवृत्ते विभ्रान्तदृष्टिके विपरीतदृष्टिके हीनदृष्टिके नकुलान्धे कपोतान्धे अलातवर्णे कृष्णनीलपीतश्यावताम्रहरितशुक्लवैकारिकाणां वर्णानामन्यतमेनातिप्लुते वा स्याताम्, तदा परासुरिति विद्यात्॥ ६॥

तस्य चेत् केशलोमान्यायम्यमानानि प्रलुच्येरन् न वेदयेयुः, तं परासुरिति विद्यात्। तस्य चेदुदरे सिराः प्रकाशेरन् श्याव-

स्वभावाद् हीने भवतः सुतरां विकृतियुक्ते, अत्युत्पिण्डिते अतिशयेन वहिः पिण्डाकारतया निर्गते, अतिप्रविष्टे अभ्यन्तरतोऽतिकोटराकारे, अतिजिह्मे अतिकुटिले, अतिविषमे चक्षुर्द्वयस्यातिवैषम्यं न तुल्यत्वम्, अतिमुक्तबन्धने अत्यर्थस्फारिते, अतिप्रस्रुते अत्यर्थं स्रावयुक्ते, सततोन्मिषिते सर्व्वदा प्रायेण निमेषरहिते, किंवा निमेषोन्मेषयोरतिप्रवृत्तियुक्ते, विभ्रान्तदृष्टिके इतस्ततो दृष्टियुक्ते, विपरीतदृष्टिके विपरीतदृष्टियुक्ते, हीनदृष्टिके दर्शनरहिते, नकुलान्धे कपोतान्धे वा। तद् यथा—"नकुलान्धस्तु रूपाणि दिवा शुक्लानि पश्यति। कपोतान्धस्तु रूपाणि दिवा कृष्णानि पश्यति॥" अलातवर्णे तप्ताङ्गारवर्णे। कृष्णादिवैकारिकाणां वर्णानामन्यतमेनातिशयेन प्लुते वा स्यातामेवंविधे तदायं गतासुः॥ ६॥

गङ्गाधरः—तस्येत्यादिना केशपरीक्षा। आयम्यमानानि आयतीकृतानि प्रलुच्येरन न वेदयेयुरुत्पाटने न वेदनाबोधं गच्छेयुः। तस्य चेदित्यादिना

प्रकृतिहीने विकृतियुक्ते इति सामान्यवचनम्, तस्य विवरणम्—अत्युत्पिण्डिते इत्यादि। अत्युत्पिण्डिते इति अत्यर्थनिर्गते। अतिजिह्मे अतिकुटिले, अतिविषमे इति एकं संवृतमपरं विस्तृतमिति। निमेषोन्मेषक्रियया अत्यर्थं वर्त्तते इति निमेषोन्मेषातिवृत्ते। विपरीतदृष्टिके इति व्यस्तदृष्टिके। किंवा विपरीतदृष्टिके अन्यथाग्राहिणी। हीनदृष्टिके अदूरदर्शिनी, नष्टदृष्टिके वा। नकुलान्धकपोतान्धलक्षणग्रस्तः "नकुलान्धस्तु रूपाणि दिवा शुक्लानि पश्यति। कपोतान्धस्तु रूपाणि दिवा कृष्णानि पश्यति॥" अलातस्तु तप्ताङ्गारः। इह चक्षुरिताभिधानप्रस्तावादस्पर्शग्राह्यमपि चक्षुषोरलातवर्णत्वादिकमुच्यते॥ ४—६॥

चक्रपाणिः—उदरानुगताः शिरास्त्विह स्पर्शनग्राह्या भवन्तीति उक्ताः, तत्प्रसङ्गात् चक्षुर्ग्राह्याः

ताम्रनीलहारिद्रशुक्ला वा स्युः, परासुरिति विद्यात्। तस्य चेन्नखा वीतमांसशोणिताः पक्कजाम्बववर्णाः स्युः, तं परासुरिति विद्यात्। अथास्याङ्गुलीः लक्षयेत्। तस्य चेदङ्गुल्य आयम्यमाना न स्फुटेयुः, तं परासुरिति विद्यात्॥ ७॥

भवति चात्र।

एतान् स्पृश्यान् बहून् भावान् यः स्पृशन्नवबुध्यते।
आतुरे न स संमोहमायुर्ज्ञानस्य गच्छति॥ ८॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते इन्द्रियस्थाने परिमर्शनीयमिन्द्रियं नाम तृतीयोऽध्यायः॥ ३॥

उदरपरीक्षा। सिराः सरणशीला नाड्यः। प्रकाशेरन् व्यक्ताः स्युः किंवा ताश्च श्यावादिवर्णाः स्युः। तस्य चेदित्यादिना नखपरीक्षा। वीतमांसशोणिता मांसशोणितरहिताः पक्कजाम्बववर्णाश्च स्युः। अथास्येत्यादिनाङ्गुलीपरीक्षा। आगम्यमाना आयामेन क्रोड़शोऽन्युब्जीकरणेन न स्फुटेयुस्तदायं परासुः॥ ७॥

गङ्गाधरः—अत्र श्लोकेन दर्शयति—एतानित्यादि। स भिषगातुरे आयुर्ज्ञानस्य सम्मोहं न गच्छतीत्यर्थः॥ ८॥

गङ्गाधरः—अध्यायं समापयति—अग्नीत्यादि।

इति वैद्य श्रीगङ्गाधरकविरत्नविरचिते चरकजल्पकल्पतरौ इन्द्रियस्थानजल्पे पञ्चमस्कन्धे परिमर्शनीयेन्द्रियतृतीयाध्यायजल्पाख्या तृतीयशाखा॥ ३॥

शिरावर्णा अप्युक्ताः। आयच्छेदिति स्फोटयेत्। नखाङ्गुलिगतारिष्टपरीक्षायान्तु स्पर्शोऽपि व्याप्रियत एवेति कृत्वा तदरिष्टमपीहोक्तम्। एतान् स्पृश्यानिति बाहुल्यादुक्तम्। एवं स्पृशन् इत्येतदपि बाहुल्यादुक्तम्। 'अज्ञानस्यैव'पाठपक्षे षष्ठी सम्बन्धविवक्षायाम्॥ ७।८॥

इति महामहोपाध्याय-चरकचतुरानन-श्रीमच्चक्रपाणिदत्तविरचितायामायुर्व्वेददीपिकायां चरक-तात्पर्य्यटीकायाम् इन्द्रियस्थाने परिमर्शनीयेन्द्रियं नाम तृतीयोऽध्यायः॥ ३॥

# चतुर्थोऽध्यायः ।

अथात इन्द्रियानीकमिन्द्रियं व्याख्यास्यामः,
इतिह स्माह भगवानात्रेयः ॥ १ ॥

इन्द्रियाणि यथा जन्तोः परीक्षेत विशेषवित् ।
आयुःप्रमाणं जिज्ञासुर्भिषक् तन्नो निबोधत ॥
अनुमानात् परीक्षेत दर्शनादीनि तत्त्वतः ।
अद्धा हि वितथं ज्ञानमिन्द्रियाणामतीन्द्रियम् ॥
स्वस्थेभ्यो विकृतं यस्य ज्ञानमिन्द्रियसम्भवम् ।
आलक्षयेतानिमित्तेन लक्षणं मरणस्य तत् ॥ २ ॥

गङ्गाधरः—अथोद्देशानुक्रमिकत्वात् पञ्चार्थपरीक्षानन्तरं पञ्चेन्द्रियपरीक्षार्थमिन्द्रियानीकमिन्द्रियमाह—अथात इत्यादि। इन्द्रियाणामनीकं समूहमायुषः प्रमाणविशेषज्ञानार्थं परीक्षितुमधिकृत्य कृतमितीन्द्रियानीकम् ॥ १ ॥

गङ्गाधरः—इन्द्रियाणीत्यादि। विशेषवित् इतीन्द्रियशक्तिविशेषवेत्ता भिषक्। तदिन्द्रियपरीक्षणम्। नन्विन्द्रियमप्रत्यक्षं कथं परीक्षेतेत्यत आह—अनुमानादित्यादि। दर्शनादीनि चक्षुरादीनि। इन्द्रियेषु बहुविषयत्वेन प्राधान्यादादौ चक्षुर्ग्रहणम्। ननु कस्मादनुमानादित्यत आह—अद्धा हीत्यादि। हि यस्मादिन्द्रियाणामतीन्द्रियत्वेनेन्द्रियाणां ज्ञानमप्यतीन्द्रियम् इन्द्रियाण्यतिक्रान्तं, ततो न वितथमद्धानेन्द्रियप्रत्यक्षतो ज्ञानम् तस्मादनुमानेन चक्षुरादीनि तत्त्वतः परीक्षेत। परीक्षामाह—सामान्यसूत्रेण। स्वस्थेभ्यः इत्यादि। यस्य पुरुषस्य त्विन्द्रियसम्भवं चक्षुरादिभिर्दर्शनादिजं ज्ञानं

चक्रपाणिः—उद्देशक्रमानुरोधादिन्द्रियगोचरारिष्टाभिधानार्थमिन्द्रियानीकमुच्यते। इन्द्रियाणामनीकं समूहमधिकृत्य कृतमिन्द्रियानीकम्। दर्शनं चक्षुः, दर्शनादीनि चक्षुरादीनि पञ्चेन्द्रियाणि। इन्द्रियाणां परीक्षा न प्रत्यक्षेणेत्याह—अद्धा हीत्यादि। अद्धेति अवितथम्। अतीन्द्रियत्वादनुमानेनैव परीक्षणमिति वाक्यार्थः। स्वस्थेभ्य इति प्रकृतिस्थेभ्य इन्द्रियेभ्यः। उत्पन्नमिति शेषः। इन्द्रियसंश्रयमिति वाह्येन्द्रियजन्यम्। अनिमित्तेनेति विकृतज्ञानजनकबाह्यहेतुव्यतिरेकेण। इन्द्रियगतविकृतज्ञानजनकदोषनिरासस्तु 'स्वस्थेभ्यः' इति विशेषणेनैव

इत्युक्तं लक्षणं सम्यगिन्द्रियेष्वशुभोदयम् ।
तदेव तु पुनर्भूयो विस्तरेण निबोधत ॥ ३ ॥
घनीभूतमिवाकाशमाकाशमिव मेदिनीम् ।
विगीतमुभयन्त्वेतत् पश्यन् मरणमृच्छति ॥ ४ ॥
यस्य दर्शनमायाति मारुतोऽम्बरगोचरः ।
अग्निना याति वा दीप्तस्तस्यायुःक्षयमादिशेत् ॥ ५ ॥

स्वस्थेभ्यः पुरुषेभ्यो विकृतमनिमित्तेन भिषगालक्षेत, तस्य तल्लक्षणं मरणस्य । इतीन्द्रियेष्वशुभोदयं लक्षणं सम्यगुक्तम् । तदेव भूयो बहुतमं विस्तरेण यूयं निबोधत ॥ २।३ ॥

गङ्गाधरः—घनीभूतमित्यादि । पुमानाकाशं घनीभूतं मूर्त्तिमन्तमिव पश्यन् मरणमृच्छति । मेदिनीं पृथिवीमाकाशमिव पश्यन् मरणमृच्छति । एतदुभयन्तु विगीतं विपर्य्ययेण गीतं निन्दितम् ॥ ४ ॥

गङ्गाधरः—यस्येति । अम्बरगोचर आकाशगत्या स्पर्शनेन्द्रियविषयो मूर्त्तो मारुतो यस्य पुंसो दर्शनमायाति मूर्त्तिमान् सन् दृष्टिगोचरो भवति। अथवाग्निना वा दीप्तः सन् दर्शनं आयाति तस्यायुःक्षयमादिशेत् । सुश्रुतेऽप्युक्तं—यश्चानिलं मूर्त्तिमन्तमन्तरीक्षञ्च पश्यति । धूमनीहारवासोभिरावृतामिव मेदिनीम् ।

कृतः । अशुभोदयमिति मरणकारणम् । 'पुनः'शब्दः प्रकाशने । यथा—"दोषाः पुनस्त्रयः" । 'भूयः'शब्दः पुनःपुनरर्थे । किंवा 'भूयः'शब्दो महदर्थः । तेन 'पुनर्भूयः'शब्दयोर्भिन्नार्थत्वम् । घनीभूतमिति कठिनतां गतम् । तेन 'भूत'शब्दो गतार्थे, यथा—उपध्यानीभूतम् । तेन 'इव'शब्दश्चोपमाने भवति । घनीमन्ये पृथिवीं वदन्ति । तेन घनीभूतं पृथिवीरूपतां यातम् । आकाशमिव मेदिनीमिति शून्यरूपां मेदिनीम् । विगीतमिति विपरीतत्वेन ज्ञातम् । "उभयम्" इत्यनेन यौगपद्येन पृथिव्याकाशविपरीतोपलम्भो रिष्टम् नैकैकत्वेन । अयञ्चारिष्ट-महिमा यथा—एवंरूपमेव रिष्टं भवति, एवमप्युक्तारिष्टेषु तथा तथोत्पादः स्वमहिम्नैव ज्ञेयः । एतानि चारिष्टानि सामान्येनैवेन्द्रियारिष्टाभिधायकप्रकरणलब्धान्यपि प्रायोभावित्वेन श्लक्ष्णाहिक-तयाभिधीयन्ते ॥ १—४ ॥

चक्रपाणिः—दर्शनमिति चक्षुर्गोचरताम् । अम्बरगोचर इत्यनेन अधिष्ठातृदेवतारूपवातदर्शनं निषेधयति । एतेन एष वायुरित्याकारवानिति मारुतप्रत्यक्षज्ञानमरिष्टम् । नायाति दर्शनमिति सम्बन्धः ॥ ५ ॥

जले सुविमले जालमजालावतते नरः।
स्थिरे गच्छति वा दृष्ट्वा जीवितात् परिमुच्यते ॥ ६ ॥
जाग्रत् पश्यति यः प्रेतान् रक्षांसि विविधानि च।
अन्यद्वाप्यद्भुतं किञ्चिज्जीवितात् परिमुच्यते ॥ ७ ॥
योऽग्निं प्रकृतिवर्णस्थं नीलं पश्यति निष्प्रभम्।
कृष्णं वा यदि वा शुक्लं सोऽग्नौ * व्रजति सप्तमीम् ॥ ८ ॥

प्रदीप्तमिव लोकञ्च यो वा प्लुतमिवाम्भसा। भूमिमष्टापदाकारां रेखाभिर्यश्च पश्यति। न पश्यति सनक्षत्रां यश्च देवीमरुन्धतीम्। ध्रुवमाकाशगङ्गां वा तं वदन्ति गतायुषम्॥ इति ॥ ५ ॥

गङ्गाधरः—जले इति। स्थिरे गच्छति चपले वा सुविमलेऽजालावतते जालैरनवतते जले जालं दृष्ट्वा जीवितात् परिमुच्यते म्रियते इत्यर्थः ॥ ६ ॥

गङ्गाधरः—जाग्रदित्यादि। यः स्वस्थ आतुरो वा जाग्रत् सन् प्रेतान मृतान् पश्यति स जीवितात् परिमुच्यते। यो वा जाग्रत् सन् विविधानि रक्षांसि पश्यति स जीवितात् परिमुच्यते। अन्यद्वापीदृशमद्भुतं किञ्चित् यो जाग्रत् सन् पश्यति स म्रियते। उक्तञ्च सुश्रुते—ज्योत्स्नादर्शोष्णतोयेषु छायां यश्च न पश्यति। पश्यत्येकाङ्गहीनां वा विकृतां वान्यसत्त्वजाम्। श्वकाककङ्कगृध्राणां प्रेतानां यक्षरक्षसाम्। पिशाचोरगनागानां भूतानां विकृतामपि। यो वा मयूरकण्ठाभं विधूमं वह्निमीक्षते। आतुरस्य भवेन्मृत्युः स्वस्थो व्याधिमवाप्नुयात्॥ इति ॥ ७ ॥

गङ्गाधरः—योऽग्निमित्यादि। प्रकृतिवर्णस्थं न गन्धकादिसम्भवत्वेन नीलं वह्निं य आतुरो नीलं, निष्प्रभमग्नेर्या प्रभा प्रसिद्धा तया हीनं पश्यति, स सप्तमीं रात्रिम् अग्नौ व्रजति, सप्तमरात्रे म्रियते। एवं य आतुरोऽग्निं कृष्णं निष्प्रभं पश्यति, सोऽपि सप्तमरात्रे म्रियते। एवं य आतुरोऽग्निं शुक्लं धवलं निष्प्रभं पश्यति सोऽपि सप्तमरात्रे म्रियते ॥ ८ ॥

चक्रपाणिः—स्थित इति स्थिरे। गच्छति वहमाने। येषु चेह रिष्टेषु मरणकालनियमो नोक्तस्तत्र संवत्सरमवधिर्भवति। ततः परेण हि रिष्टे मरणानभिधानात् ॥ ६ ॥

चक्रपाणिः—प्रेतानित्यादिबहुवचनान्नैकप्रेतादिदर्शनं रिष्टमिति भावः। प्रकृतिवर्णस्थमिति

* सोऽग्नौ इत्यत्र निशामिति क्वचित् पाठः।

मरीचीनसतोऽमेघान् मेघान् वाप्यसतोऽम्बरे।
विद्युतो वा विना मेघान् यः पश्यति स नश्यति ॥ ९ ॥
मृन्मयीमिव यः पात्रीं कृष्णाम्बरसमावृताम्।
आदित्यमीक्षते शुद्धं चन्द्रं वा न स जीवति ॥ १० ॥
अपर्व्वणि यदा पश्येत् सूर्य्याचन्द्रमसोर्ग्रहम्।
अव्याधितो व्याधितो वा तदन्तं तस्य जीवितम् ॥ ११ ॥
नक्तं सूर्य्यमहश्चन्द्रमनग्नौ धूममुत्थितम्।
अग्निं वा निष्प्रभं रात्रौ दृष्ट्वा मरणमृच्छति ॥ १२ ॥

गङ्गाधरः—मरीचीनित्यादि। य आतुरोऽमेघान् मेघहीनान् असतश्च मरीचीन् मेघज्योतिषः अम्बरे आकाशे पश्यति, स नश्यति। यो वातुरोऽम्बरे विना मेघान् असतः असत्त्वान् मेघान् पश्यति, स नश्यति। यो वाप्यातुरोऽम्बरे विना मेघान् विद्युतः पश्यति, स नश्यतीति ॥ ९ ॥

गङ्गाधरः—मृन्मयीमिवेत्यादि। य आतुरः कृष्णाम्बरसमावृतां कृष्णवर्णवस्त्रावृतां मृन्मयीं पात्रीमिव शुद्धं मेघाद्यनावृतं निर्म्मलमादित्यं सूर्य्यमीक्षते पश्यति, स न जीवति। यो वातुरस्तथा मेघाद्यनावृतं निर्म्मलं चन्द्रं कृष्णाम्बरसमावृतां मृन्मयीं पात्रीमिव पश्यति स न जीवति। पात्रीं स्थालीं शरावादिकाम् ॥ १० ॥

गङ्गाधरः—अपर्व्वणीत्यादि। अव्याधितो व्याधितो वा यस्त्वपर्व्वणि अमावास्यां विना अन्यत्र तिथौ सूर्य्यग्रहणं राहुकेतुभ्यां यदा पश्येत्, किंवा पूर्णिमां विना अन्यत्र तिथौ चन्द्रस्य ग्रहणं यदा पश्येत्, तस्य तदन्तं तद्ग्रहणदर्शनपर्य्यन्तं जीवितम्। यदा ग्रहणदर्शनं न स्यात् तदा मरिष्यतीति भावः ॥ ११ ॥

गङ्गाधरः—नक्तमित्यादि। आतुरोऽनातुरो वा नक्तं रात्रौ सूर्य्यं दृष्ट्वा मरणम्

वैवर्ण्यविकृत्यादिकारकसविषाम्रवर्णादिविरहेण स्वीय एव लोहितकपिले वर्णे व्यवस्थितम्। सप्तमीं निशां व्रजति। तेनाष्टमाहान्मरणम् ॥ ७—८ ॥

चक्रपाणिः—मरीचीनसत इत्यत्र प्रकरणात् 'मरीचि'शब्देन मेघद्युतिरुच्यते। मरीचीनां विशेषणम् 'असतः' इति। विद्युतो वा विना मेघादिति अभ्रान्तच्छटा एव यदा मेघसम्बन्धोपलभ्यमाना विद्युत इति, ता हि न विना मेघदर्शनमपि कदाचित् स्वस्थैरुपलभ्यन्ते ॥ ९ ॥

चक्रपाणिः—शुद्धमिति मेघाद्यनन्तरितम्। रात्रावित्यनेन दिवा वह्निनिष्प्रभत्वदर्शनमरिष्टं

प्रभावतः प्रभाहीनान् निष्प्रभान् ये प्रभावतः।
नरा विलिङ्गान् पश्यन्ति भावान् प्राणान् जिहासवः ॥ १३ ॥
व्याकृतीनि विवर्णानि विसङ्ख्योपगतानि च।
विनिर्म्मितानि * पश्यन्ति रूपाण्यायुःक्षये नराः ॥ १४ ॥
यश्च पश्यत्यदृश्यान् वै दृश्यान् यश्च न बुध्यते।
तावप्युभौ यथा प्रेतौ तथा ज्ञेयौ विजानता ॥ १५ ॥

ऋच्छति। रात्रौ असच्चन्द्रं यस्यां रात्रौ चन्द्रो न वर्त्तते तस्यां रात्रौ चन्द्रं दृष्ट्वा मरणमृच्छति। अनग्नौ उत्थितं धूमं दृष्ट्वा मरणमृच्छति। शीते तु यन्नद्यादि-जले धूमवत् पश्यति स न धूमः, परन्तु वाष्पः। रात्रौ अग्निं निष्प्रभं दृष्ट्वा मरणमृच्छति ॥ १२ ॥

गङ्गाधरः—प्रभावत इत्यादि। प्राणान् प्राणादिकान् शारीरान् जिहासवो हातुमिच्छवोऽर्थात् शीघ्रं ये मरिष्यन्ति ते नराः प्रभावतो भावान् प्रभाहीनान् पश्यन्ति, निष्प्रभान् भावान् अप्रभावतो निष्प्रभान् न पश्यन्ति अर्थात् निष्प्रभान् प्रभावतः पश्यन्ति। एवंप्रकारेणान्यानपि भावान् विलिङ्गान् विगतसहज-लिङ्गान् पश्यन्ति ॥ १३ ॥

गङ्गाधरः—व्याकृतीनीत्यादि। नरा आयुःक्षये सति रूपाणि मूर्त्ति-विशेषान् विनिर्म्मितानि विशिष्टं साधु निर्म्मितानि प्रतिमादीनि व्याकृतीनि विरुद्धाकृतीनि पश्यन्ति विवर्णानि वा पश्यन्ति, विसङ्ख्योपगतानि सङ्ख्या-वैपरीत्ययुक्तानि वा पश्यन्ति ॥ १४ ॥

गङ्गाधरः—यश्चेत्यादि। यश्चादृश्यान् वाय्वाकाशादीन् पश्यति, यश्च वा दृश्यान् मूर्त्तिमतो घटादीन् न बुध्यते न पश्यति, तावुभौ यथा प्रेतौ मृतौ यथा, तथा ज्ञेयौ विजानता विज्ञेन। सुश्रुते च—द्वन्द्वान्युष्णहिमादीनि कालावस्था दिशस्तथा। विपरीतेन गृह्णाति भावानन्यांश्च यो नरः ॥ दिवा

नैवेति दर्शयति। विलिङ्गानिति विगतसहजलिङ्गान्। तेन प्रभाव्यतिरिक्ताऽनादिलिङ्गविपर्य्ययो रिष्टं भवति। भावानिति प्राणान्। किंवा महापञ्चभूतानि शरीररूपाणि। व्याकृतीनीति विविधाकृतीनि। विवर्णानीति विरुद्धवर्णानि। विसंख्योपगतानीति विगतसंख्यायुक्तानि। विनिमितानीति व्याकृत्यादौ विगतनिमित्तानि व्याकृत्यादिकारकहेतुव्यतिरेकेण व्याकृत्यादियुक्त-रूपदर्शनमरिष्टमित्यर्थः। रूपाणीति रूपवन्ति द्रव्याणि ॥ १०—१५ ॥

* विनिमित्तानि इति चक्रः।

अशब्दस्य च यः श्रोता शब्दान् यश्च न बुध्यते।
द्वावेतौ पश्यतः क्षिप्रं यमालयमसंशयम् ॥ १६ ॥
संवृत्याङ्गुलिभिः कर्णौ ज्वालाशब्दं य आतुरः।
न शृणोति गतासुं तं बुद्धिमान् परिवर्ज्जयेत् ॥ १७ ॥
विपर्य्ययेण यो विद्याद् गन्धानां साध्वसाधुताम्।
न चैतान् सर्व्वशो विद्यात् तं विद्याद् विगतायुषम् ॥ १८ ॥

द्वन्द्वान्युष्ण हिमादीनि कालावस्था दिशस्तथा। विपरीतेन यो गृह्णाति भावानन्यांश्च यो नरः॥ ज्योतींषि यश्चापि ज्वलितानीव पश्यति। रात्रौ सूर्य्यं ज्वलन्तं वा दिवा वा चन्द्रवर्च्चसम्। अमेघोपप्लवे यश्च शक्रचापतडिद्गुणान्। तडित्वतोऽसितान् यो वा निर्म्मले गगने घनान्। विमानयानप्रासादैर्यश्च सङ्कुलमम्बरम्। यश्चानिलं मूर्त्तिमन्तमन्तरीक्षञ्च पश्यति। तं वदन्ति गतायुषम्। इति परेणान्वयः। इति चक्षुःपरीक्षा ॥ १५ ॥

गङ्गाधरः—अथ श्रोत्रपरीक्षामाह—अशब्देत्यादि। अशब्दस्य शब्देतरस्य श्रवणेन्द्रियाग्राह्यस्य स्पर्शादेर्यः श्रोता, यो वा शब्दान् न बुध्यते न शृणोति, एतौ द्वौ क्षिप्रं यमालयं पश्यतः॥ १६ ॥

गङ्गाधरः—संवृत्येत्यादि। य आतुरः कर्णावङ्गुलिभिः संवृत्य ज्वालाशब्दं ज्वालावद्ध्वनिं न शृणोति, गतासुं गतप्राणं तं बुद्धिमान् परिवर्ज्जयेत्। सुश्रुते तु—शृणोति विविधान् शब्दान् यो दिव्यानामभावतः। समुद्रपुरमेघाणामसम्पत्तौ च निस्वनान्। तान् स्वनान् नावगृह्णाति मन्यते चान्यशब्दवत्। ग्राम्यारण्यस्वनांश्चापि विपरीतान् शृणोत्यपि। द्विषच्छब्देषु रमते सुहृच्छब्देषु कुप्यति। न शृणोति च योऽकस्मात् तं ब्रुवन्ति गतायुषम्॥ इति। इति श्रवणाधिकारः॥ १७ ॥

गङ्गाधरः—अथ घ्राणपरीक्षा—विपर्य्ययेणेत्यादि। यो गन्धानां साधुत्वम् असाधुत्वं विपर्य्ययेण विद्यादसाधुत्वं वा साधुत्वं विद्यात् साधुत्वं वाप्यसाधुत्वं तौ द्वौ। यश्च एतान् साधून् वाप्यसाधून् वा सर्व्वान् गन्धान् सर्व्वशो न विद्यात् तं त्रिकं विगतायुषं विद्यात्। सुश्रुतेऽपि—सुगन्धिं वेत्ति

चक्रपाणिः—अशब्दस्येत्यादिना—श्रोत्रारिष्टमाह। ज्वालाया शब्द इव शब्दो ज्वालाशब्दस्तम्। विपर्य्ययेणेत्यादिना—घ्राणारिष्टमुच्यते। न वा तान् सर्व्वशो विद्यादिति सर्व्वथैव गन्धान् शुभान्

योरसान् न विजानाति न वा जानाति तत्त्वतः।
मुखपाकादृते पक्वं तमाहुः कुशला नरम् ॥ १९ ॥
उष्णान् शीतान् खरान् श्लक्ष्णान् मृदूनपि च दारुणान्।
स्पृष्ट्वा विद्यात् ततोऽन्यत्वं मुमूर्षुस्तेषु मन्यते ॥ २० ॥

दुर्गन्धिं दुर्गन्धस्य सुगन्धिताम्। यो वा गन्धान् न जानाति गतासुं तं विनिर्दिशेत् ॥ इति घ्राणपरीक्षा ॥ १८ ॥

गङ्गाधरः—अथ रसनेन्द्रियपरीक्षा—यो रसानित्यादि। मुखपाकादृते मुखस्य वातादिना दुष्टौ रसनोपघातं विना यो रसान् मधुरादिविशेषान् न विजानाति रसमात्रं जानाति, यो वा रसत्वेन वा न रसान् जानाति, तं नरं कुशला वैद्याः पक्वं जीवितकालेन पक्वं परिणतमाहुरचिरान्मरिष्यतीत्याहुरित्यर्थः। सुश्रुते च—विपरीतेन गृह्णाति रसान् यश्चोपयोजितान्। उपयुक्ताः क्रमाद् यस्य रसा दोषाभिवृद्धये ॥ यस्य दोषाग्निसाम्यञ्च कुर्य्यु र्मिथ्योपयोजिताः। यो वा रसान् न संवत्ति गतासुं तं प्रचक्षते ॥ इति रसनापरीक्षा ॥ १९ ॥

गङ्गाधरः—अथ स्पर्शनेन्द्रियपरीक्षा—उष्णानित्यादि। मुमूर्षुर्नर उष्णान् स्पर्शान् शीतान् स्पृष्ट्वा तेषूष्णेषु ततोऽन्यत्वं शीतत्वं मन्यते। एवं खरान् स्पर्शान् श्लक्ष्णान् स्पृष्ट्वा खरेषु श्लक्ष्णत्वं मन्यते। एवं मृदून् स्पर्शान् दारुणान् कठिनान् स्पृष्ट्वा मृदुषु दारुणत्वं मन्यते। सुश्रुते च—यस्तूष्णमिव गृह्णाति शीतमुष्णञ्च शीतलम्। संजातशीतपिड़को यश्च दाहेन पीड्यते ॥ उष्णगात्रोऽतिमात्रञ्च यः शीतेन प्रवेपते। प्रहारान् नाभिजानाति योऽङ्गच्छेदमथापि वा ॥ पांशुनेवावकीर्णानि यश्च गात्राणि मन्यते। वर्णान्यभावो राज्यो वा यस्य गात्रे भवन्ति हि ॥ स्नातानुलिप्तं यञ्चापि भजन्ते नीलमक्षिकाः। सुगन्धिर्वाति योऽकस्मात् तं ब्रुवन्ति गतायुषम् ॥ इति स्पर्शनेन्द्रियपरीक्षा ॥ २० ॥

अशुभान् वा न वेत्ति। तत्त्वत इति स्वकीयेन रूपेण। 'मुखपाक'शब्दः पित्तादिदोषोपलक्षणम्। तेन पित्तदुष्टरसनान्यथात्वग्राहकस्य व्युदासोऽवरुध्यते। पक्वमिति सम्पूर्णायुष्कालम्। ततोऽन्यत्वमिति उष्णे शीतत्वम्, श्लक्ष्णे खरत्वमित्यादि मन्यते ॥ १९—२० ॥

अन्तरेण तपस्तीव्रं योगं वा विधिपूर्व्वकम्।
इन्द्रियैरधिकं पश्यन् पञ्चत्वमुपपद्यते॥ २१ ॥
इन्द्रियाणामृते दृष्टेरिन्द्रियार्थान् न पश्यति *।
विपर्य्ययेण यो विद्यात् तं विद्याद् विगतायुषम् †॥ २२॥
स्वस्थाः प्रज्ञाविपर्य्यासैरिन्द्रियार्थेषु वैकृतम्।
पश्यन्ति ‡ ये सुबहुशस्तान् गतायुष आदिशेत्॥ २३ ॥

गङ्गाधरः—अथ सामान्येन्द्रियपरीक्षा—अन्तरेणेत्यादि। विधिपूर्व्वकं तीव्रं तपोऽन्तरेण तीव्रं योगमन्तरेण च इन्द्रियैः श्रोत्रादिभिः पञ्चभिः अधिकमिन्द्रियाग्राह्यम् अगोचरञ्च पश्यन् जानन् पञ्चत्वं मृत्युमुपपद्यते। तपोयोगाभ्यां हि अधिकं पश्यति तन्नाशुभम्॥ २१॥

गङ्गाधरः—इन्द्रियाणामित्यादि। इन्द्रियाणां मध्ये दृष्टेर्ऋते चक्षुषी विनान्यैश्चतुर्भिरिन्द्रियैरिन्द्रियार्थान् स्पर्शादीन् न पश्यति न जानाति सर्व्वार्थांश्चक्षुषैव पश्यति न तु रूपवत्तया। परन्तु चक्षुर्ग्राह्यार्थस्य विपर्य्ययेण तत्तच्छब्दस्पर्शादितया विद्यात् तं गतायुषं विद्यात्॥ २२॥

गङ्गाधरः—स्वस्था इत्यादि। स्वस्था नरा ये प्रज्ञाविपर्य्यासैर्बुद्धिविपर्य्ययैरिन्द्रियार्थेषु शब्दादिषु सुबहुशो वैकृतं पश्यन्ति तान् गतायुष आदिशेत्॥२३॥

चक्रपाणिः—सम्प्रति सर्व्वेन्द्रियरिष्टं सामान्येन ब्रूते—अन्तरेणेत्यादि। अन्तरेणेति विना। योगमित्यस्य विशेषणं विधिपूर्व्वकमित्यनेन यथाविधि कृतस्यैव योगस्यातीन्द्रियज्ञाने समर्थत्वम्। अधिकमिति अस्मदादीन्द्रियाविषयम्। पञ्चत्वमिति मरणम्। दृष्टिरुपलब्धिः या दृष्टिरुपचारात् उच्यते, तेन ऋते दृष्टेरिति उपलब्धिं विना। ततश्चेन्द्रियाणामुपलब्धिशक्तिं विना य इन्द्रियैः उपलब्धुमशक्यान् पश्येदिन्द्रियैः, न स जीवेत। अदोषजानित्यनेन च दोषजस्वभावादिन्द्रियाशक्यार्थग्रहणं निराकरोति। यथा अङ्गुल्यभिन्त्रितं चक्षुर्व्वातदुष्टत्वा आसन्नवस्तुद्वयमिन्द्रियाविषयं पश्यति, यथा पित्तदुष्टरसनं ह्यम्लं न मधुरं प्रत्येतीत्यादि बोध्यम्। स्वस्था इत्यविकृतेन्द्रियमनसः। प्रज्ञाविपर्य्यासैरिति शेषीभूतार्थप्रभावकृतः प्रज्ञाविपर्य्यासः। असदिति अयथाभूतम्।

---

* "अदोषजान्" इति चक्रः।

† नरः पश्यति यः कश्चित् इन्द्रियैर्न स जीवति इति चक्रवर्णितः पाठः।

‡ येऽसद्बहुशस्तेषां मरणमादिशेत्। इति चक्रसम्मतः पाठः।

तत्र श्लोकः ।

एतदिन्द्रियविज्ञानं यः पश्यति यथातथम् ।
मरणं जीवितञ्चैव स भिषग् ज्ञातुमर्हति ॥ २४ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते इन्द्रियस्थाने
इन्द्रियानीकमिन्द्रियं नाम चतुर्थोऽध्यायः ॥ ४ ॥

गङ्गाधरः—अध्यायार्थमुपसंहृत्य प्रशंसति—तत्रेत्यादि । इन्द्रियस्य विज्ञानं विज्ञानकरणं शास्त्रं यः पश्यति जानाति ॥ २४ ॥

अध्यायं समापयति—अग्नीत्यादि ॥

इति वैद्यश्रीगङ्गाधरकविरत्नविरचिते चरकजल्पकल्पतरौ पञ्चमस्कन्ध इन्द्रियस्थानजल्पे इन्द्रियानीकेन्द्रियजल्पाख्या चतुर्थी शाखा ॥ ४ ॥

बहुश इत्यनेन सकृद्दर्शनस्य नारिष्टत्वम् । इन्द्रियविज्ञानम् इन्द्रियगतरिष्टज्ञानम् । जीवितज्ञानञ्चेह रिष्टशून्येन्द्रियज्ञाने सति भवतीति ज्ञेयम् ॥ २१—२४ ॥

इति महामहोपाध्यायचरकचतुराननश्रीमच्चक्रपाणिदत्तविरचितायामायुर्वेददीपिकायां चरकतात्पर्यटीकायाम् इन्द्रियस्थाने इन्द्रियानीकेन्द्रियं नाम चतुर्थोऽध्यायः ॥ ४ ॥

## पञ्चमोऽध्यायः ।

अथातः पूर्व्वरूपीयमिन्द्रियं व्याख्यास्यामः,
इतिह स्माह भगवानात्रेयः ॥ १ ॥

पूर्व्वरूपाण्यसाध्यानां विकाराणां पृथक् पृथक् ।
भिन्नाभिन्नानि वक्ष्यामि भिषजां ज्ञानवृद्धये ॥ २ ॥
पूर्व्वरूपाणि सर्व्वाणि ज्वरोक्तान्यतिमात्रया ।
यं विशन्ति विशत्येनं मृत्युर्ज्वरपुरःसरः ॥ ३ ॥

गङ्गाधरः—अथेत्यादि । अथेन्द्रियानीकेन्द्रियादनन्तरमतः आतुरविषयारिष्टोद्देशानुक्रमवशात् पूर्व्वरूपाणां पूर्व्वरूपीयमिन्द्रियं व्याख्यास्यामः, इतिह स्माह भगवानात्रेयः ॥ १ ॥

गङ्गाधरः—तद् यथा—पूर्व्वरूपाणीत्यादि । असाध्यानां विकाराणां पृथक् पृथक् रोगाणामसाध्यत्वख्यापकानि पूर्व्वरूपाणि भिन्नाभिन्नानि विशेषसामान्यानि प्रतिरोगं विशेषेण पूर्व्वरूपाणि सर्व्वरोगाणामेकविधया च वक्ष्यामि ॥ २ ॥

गङ्गाधरः—सामान्यविधया प्रथमत आह—पूर्व्वरूपाणीत्यादि । एनं ज्वरिणम् ॥ ३ ॥

चक्रपाणिः—इन्द्रियगतरिष्टमभिधाय सत्त्वादीनामग्रे सूचितानामरिष्टमग्रे वक्तुं युज्यते ; तत् तु अल्पवक्तव्यत्वात् तदुल्लङ्घ्य बहुवक्तव्यं पूर्व्वरूपरिष्टमभिधातुं पूर्व्वरूपीयोऽभिधीयते । प्रथमाध्याये एव तु सत्त्वादीनामग्रेऽभिधानमिन्द्रियैः समं बुद्धिसाधनत्वादिप्रसङ्गागतं ज्ञेयम् । व्याधिस्तु यद्यपि बहुत्वेन वक्तव्यः कतमानिशरीरीयेऽग्रे सूचितश्च, तथापि पूर्व्वरूपपूर्व्वकत्वात् व्याधेः पूर्व्वं पूर्व्वरूपमिह । सूत्रे त्वग्रे व्याधिवचनेन पूर्व्वरूपात् व्याधेः पूर्व्वरूपबोध्यस्य प्राधान्यं दर्शयति । भिन्नाभिन्नानीति साधारणासाधारणानि । तत्र "पूर्व्वरूपाणि" इत्यादिना "तस्यापि मरणं ध्रुवम्" इत्यन्तेन सर्व्वव्याधिविशिष्टं साधारणमुक्तम् । पूर्व्वरूपैकदेशांस्तु इत्यादिना तु प्रतिव्याधि भिन्नपूर्व्वरूपारिष्टमुच्यते । अन्ये तु भिन्नाभिन्नानीति उक्तानुक्तानीति ब्रुवते, तत्र ज्वरादिपूर्व्वरूपाण्युक्तानि । अभिकष्टैः स्वरैरित्यादि तु पूर्व्वरूपमनुक्तम् । सर्व्वाणीति समस्तानि । अति-

अन्यस्यापि च रोगस्य पूर्व्वरूपाणि यं नरम्।
विशन्त्यनेन कल्पेन तस्यापि मरणं ध्रुवम् ॥ ४ ॥
पूर्व्वरूपैकदेशांस्तु वक्ष्याम्यन्यान् सुदारुणान्।
ये रोगाननुबध्नन्ति मृत्युर्यैरेव बुध्यते * ॥ ५ ॥
बलञ्च हीयते यस्य प्रतिश्यायश्च वर्द्धते।
तस्य नारीप्रसक्तस्य शोषोऽन्तायोपजायते ॥ ६ ॥
श्वभिरुष्ट्रैः खरैर्वापि याति यो दक्षिणां दिशम्।
स्वप्ने यक्ष्माणमासाद्य जीवितं स विमुञ्चति † ॥ ७ ॥

गङ्गाधरः—अन्यस्यापीत्यादि। अनेन कल्पेन साकल्येन पूर्व्वरूपाणि यं नरं विशन्ति इत्यन्वयः ॥ ४ ॥

गङ्गाधरः—इत्यभिन्नानि पूर्व्वरूपाण्युक्त्वा भिन्नान्याह—पूर्व्वरूपैकदेशांस्तु इत्यादि। अन्यान् कान् ये पूर्व्वरूपैकदेशा रोगान् अनुबध्नन्ति अभिव्यक्तलदशायामपि संबध्नन्ति न चान्यपूर्व्वरूपवन्निवृत्तिं यान्ति तान्। ननु तांश्च बहून् बहूनां व्याधीनामनुबन्धिनः पश्यामो न च तैर्म्रियते इत्यत आह—मृत्युरित्यादि। यैः पूर्व्वरूपैकदेशैरेव मृत्युर्बुध्यते ज्ञायते तान् पूर्व्वरूपैकदेशान् वक्ष्यामि ॥ ५ ॥

गङ्गाधरः—बलञ्चेत्यादि। शोषो राजयक्ष्मा। तस्य पूर्व्वरूपविशेषः प्रतिश्यायो यस्य क्रमेण वर्द्धते बलञ्च हीयते नारीप्रसक्तस्य सततं मैथुनं सेवमानस्य तस्यातः परं शोषः स्यात्। स च तस्यान्ताय नाशायोपपद्यते ॥ ६ ॥

गङ्गाधरः—पूर्व्वरूपावस्थायां स्वप्नतोऽप्यरिष्टमाह—श्वभिरित्यादि। यः

मात्रयेति अत्युल्वणत्वेन। ज्वरपुरःसर इति ज्वरान्तरभावी। एतेन कल्पेनेत्यनेन सर्व्वाणि चातिमात्रया चेति दर्शयति ॥ १—४ ॥

चक्रपाणिः—रोगाननुबध्नन्तीति रोगेण पश्चाद्भाविना अवश्यं युज्यन्ते। मृत्युर्यैरनुबध्यते इति यैः रोगैरनुबध्यते। एतेनैतत् फलति, ज्वरिणो तैर्व्याधिभिर्नियतसम्बन्धा अवश्यं मारका भवन्तीत्यर्थः। "श्वभिरुष्ट्रैः खरैः" इत्यादि शोषनिदानेऽप्युक्तम्। तेन दक्षिणदिशागमनं

* अनुबध्यते इति पाठान्तरम्।

† स्वप्ने यक्ष्मा तमाविश्य न जीवन्नवसृज्यते। एतत् पाठान्तरञ्च दृश्यते।

प्रेतैः सह पिबेन्मद्यं स्वप्ने यः कृष्यते शुना ।
स घोरं ज्वरमासाद्य न जीवेन्न च मुच्यते ॥ ८ ॥
लाक्षालक्ताम्बराभं यः पश्यत्यम्बरमन्तिकात् ।
स रक्तपित्तमासाद्य तेनैवान्ताय नीयते ॥ ९ ॥
रक्तस्रग्रक्तसर्व्वाङ्गो रक्तवासा मुहुर्हसन् ।
यः स्वप्ने नीयते नार्य्या स रक्तं प्राप्य सीदति ॥ १० ॥
शूलाटोपान्त्रकूजाश्च दौर्ब्बल्यञ्चातिमात्रया ।
नखादिषु च वैवर्ण्यं गुल्मेनान्तकरो ग्रहः ॥ ११ ॥

पुरुषः स्वप्ने श्वभिः कुक्कुरैरुष्ट्रैः खरैर्गर्द्दभैर्वा दक्षिणां दिशं याति स यक्ष्माणं पश्चात् यक्ष्मरोगं प्राप्य म्रियते। एततपूर्व्वरूपवान् यक्ष्मा न साध्य इत्यर्थः ॥ ७ ॥

गङ्गाधरः—प्रेतैरित्यादि । यः पुरुषः पूर्व्वं ज्वरोत्पत्तेः, स्वप्ने प्रेतैः मृतैः सह मद्यं पिबेत्, यो वा स्वप्ने शुना कुक्कुरेण कृष्यते कर्षणीक्रियते, सोऽपि घोरं ज्वरमासाद्य न जीवेन न च मुच्यते । एततपूर्व्वरूपको ज्वरोऽसाध्य इत्यर्थः ॥ ८

गङ्गाधरः—लाक्षेत्यादि । यः पुरुषः । प्रकरणात् स्वप्ने पूर्व्वम् अन्तिकात् स्वनिकटमवधीकृत्य अम्बरमाकाशं लाक्षालक्ताम्बराभं लाक्षालक्तेन रक्तम् अम्बरं वस्त्रं तदाभं पश्यति स परं रक्तपित्तमासाद्य तेन रक्तपित्तेन अन्ताय मरणाय नीयते यमालयं नीयते इत्यर्थः । कर्म्मणि गत्यर्थत्वाच्चतुर्थी । एतत्-पूर्व्वरूपकं रक्तपित्तमसाध्यमित्यर्थः ॥ ९ ॥

गङ्गाधरः—रक्तस्रगित्यादि । यो वा पुरुषः स्वप्ने रक्तस्रक् रक्तपुष्पमालावान् भूत्वा रक्तसर्व्वाङ्गो रक्तम्रक्षितसर्व्वाङ्गो भूत्वा रक्तवासाश्च भूत्वा मुहुर्हसन् सन् नार्य्या नीयते स रक्तं रक्तपित्तमासाद्य सीदति म्रियते । एततपूर्व्वरूपकञ्चासाध्यम् ॥ १० ॥

गङ्गाधरः—शूलाटोपेत्यादि । यस्य गुल्मस्य पूर्व्वरूपाण्येतानि शूलाटोपान्त्रकूजातिमात्रदौर्ब्बल्यनखादिवैवर्ण्यानि तस्य गुल्मेन ग्रहो ग्रहणम् अन्तकरः

विशेषितमेतदरिष्टम् । अन्तिकादिति समीपात् । रक्तं प्राप्येति रक्तपित्तं प्राप्य । सीदति म्रियते ॥ ५—१० ॥

चक्रपाणिः—आटोपः कुक्षौ शब्दवद्वातभ्रमणम् । गृह्यते अनेनेति ग्रहो लिङ्गमित्यर्थः ।

लता कण्टकिनी यस्य दारुणा हृदि जायते।
स्वप्ने गुल्मस्तमन्ताय क्रूरो विशति मानवम्॥ १२॥
कायेऽल्पमपि संस्पृष्टं सुभृशं यस्य दीर्य्यते।
क्षतानि च न रोहन्ति कुष्ठैर्मृत्युर्हिनस्ति तम्॥ १३॥
नग्नस्याज्यावसिक्तस्य जुह्वतोऽग्निमनर्च्चिषम्।
पद्मान्युरसि जायन्ते स्वप्ने कुष्ठैर्मरिष्यतः॥ १४॥
स्नातानुलिप्तगात्रेऽपि यस्मिन् गृध्नन्ति मक्षिकाः।
स प्रमेहेण संस्पर्शं प्राप्य तेनैव हन्यते॥ १५॥

नाशकः स्यादित्यर्थः। न चेदं स्वप्नतः पूर्व्वरूपम्। कश्चित् प्रकरणात् स्वप्ने एवं दर्शनं व्याचष्टेऽसाध्यगुल्मपूर्व्वरूपमिति, तन्न॥ ११॥

गङ्गाधरः—लतेत्यादि। यस्य स्वप्ने हृदि कण्टकिनी कण्टकवती दारुणा लता जायते, तं मानवमन्ताय नाशाय क्रूरो गुल्मो विशति। एतत्पूर्व्वरूपको गुल्मोऽसाध्यः॥ १२॥

गङ्गाधरः—काये इत्यादि। यस्य कायेऽल्पमपि संस्पृष्टं सुभृशं दीर्य्यते क्षतानि च न तस्य रोहन्ति, तं पुरुषं मृत्युः कुष्ठैर्भाविभिर्हिनस्ति। एतत्पूर्व्वरूपाणि कुष्ठान्यसाध्यानि। नेदं स्वप्नतोऽरिष्टं पूर्व्वरूपम्॥ १३॥

गङ्गाधरः—स्वप्नत आह—नग्नस्येत्यादि। कुष्ठरोगैर्भविष्यद्भिर्मरिष्यतः पुरुषस्य, स्वप्ने नग्नस्य दिगम्बरस्य आज्यावसिक्तस्य घृतम्रक्षितसर्व्वाङ्गस्य अनर्च्चिषम् अप्रज्वलितमग्निं निर्व्वाणाग्निं वा जुह्वतो होमं कुर्व्वत उरसि वक्षसि पद्मानि जायन्ते इति। यो नरः स्वप्ने नग्नो भूत्वा घृतं म्रक्षयित्वा निर्व्वाणाग्नौ होमं करोति पद्मानि च तस्य वक्षसि जायन्ते इति पश्यति तस्य कुष्ठरोगेण मरणं भविष्यतीति विद्यादित्यर्थः॥ १४॥

गङ्गाधरः—स्नातेत्यादि। यस्मिन् पुरुषे मक्षिका गृध्नन्ति स्नातानुलिप्ते गात्रेऽपि अनुलेपतिक्तत्वेन न तं मुञ्चन्ति गृध्नन्त्येव लुभ्यन्त्येव, स प्रमेहेण संस्पर्शं प्राप्य प्रमेहं प्राप्य तेनैव प्रमेहेण हन्यते। एतत्पूर्व्वरूपकप्रमेहोऽसाध्यः॥ १५॥

संस्पृष्टमिति शस्त्रतृणादिसंस्पृष्टम्। यद्यपि "स्नातानुलिप्तगात्रे" इत्यादि 'स्नातानुलिप्तस्य' इत्यादिनोक्तम् तथापीह प्रमेहेण मरणप्रदर्शनार्थं पुनरुच्यते। तत्र च यदा प्रमेहपूर्व्वरूपान्तराणि

स्नेहं बहुविधं स्वप्ने चण्डालैः सह यः पिबेत् ।
बध्यते स प्रमेहेण स्पृश्यतेऽन्ताय मानवः ॥ १६ ॥
ध्यानायासौ तथोद्वेगो मोहश्चास्थानसम्भवः ।
अरतिर्बलहानिश्च मृत्युरुन्मादपूर्व्वकः ॥ १७ ॥
आहारद्वेषणं यस्य लुप्तचित्तमुदर्द्दितम् ।
विद्याद् धीरो मुमूर्षुं तमुन्मादेनातिपातिना ॥ १८ ॥
क्रोधनं त्रासबहुलं सकृत्प्रहसिताननम् ।
मूर्च्छायतृष्णाबहुलं हन्त्युन्मादः शरीरिणम् ॥ १९ ॥
नृत्येद् रक्षोगणैः सार्द्धं यः स्वप्नेऽम्भसि मज्जति ।
स प्राप्य भृशमुन्मादं याति लोकमितः परम् ॥ २० ॥

गङ्गाधरः—स्नेहमित्यादि । यः स्वप्ने चण्डालैः सह बहुविधं स्नेहं घृतनवनीततैलादिकं पिबेत्, स मानवः प्रमेहेण बध्यतेऽनुबध्यतेऽन्ताय मरणाय स्पृश्यते च । तस्य प्रमेहो भविष्यति तेन प्रमेहेण स मरिष्यतीति भावः ॥ १६ ॥

गङ्गाधरः—ध्यानेत्यादि । पूर्व्वरूपाधिकारात् । यस्योन्मादपूर्व्वरूपाणि ध्यानं चिन्ता, आयासः श्रमकरो भावः, उद्वेगः, अस्थानसम्भवो मोहः—यत्र मोहविषयता नास्ति तत्र मोहः, अरतिरनवस्थचित्तत्वं, बलहानिश्चैतानि यस्य, तस्योन्मादरोगो भूत्वा पश्चान्मृत्युरित्यर्थः ॥ १७ ॥

गङ्गाधरः—आहारेत्यादि । यस्योन्मादपूर्व्वरूपेषु आहारद्वेषणं लुप्तचित्तत्वेन मुदा हर्षभावेण प्रवर्त्तमानेन अर्द्दितं व्यथितं तं पुरुषमतिपातिना भाविना उन्मादेन मुमूर्षुं धीरो विद्यात् ॥ १८ ॥

गङ्गाधरः—क्रोधनमित्यादि । उन्मादपूर्व्वरूपेषु क्रोधनं त्रासबहुलं सकृदेकवारमात्रं प्रहसिताननं मुर्च्छायतृष्णाबहुलं शरीरिणम् उन्मादो भूत्वा हन्ति ॥१९

गङ्गाधरः—नृत्येदित्यादि । उन्मादपूर्व्वरूपेषु यः स्वप्ने रक्षोगणैः सह

भवन्ति, एतच्च लक्षणं भवति, भवति तदा प्रमेहेण मृत्युः । यदा प्रमेहपूर्व्वरूपाणि न भवन्ति, तदा येन केनापि व्याधिना मृत्युञ्जयः । उदर्द्दितमिति उदर्द्दयुक्तम् । यद् वा उदर्दितं मृदवातार्द्दितम् ॥ ११—२० ॥

असत् तमः पश्यति यो यः शृणोत्यसतः स्वनान्।
बहून् बहुविधान् जाग्रत् सोऽपस्मारेण वध्यते॥ २१॥
मत्तं नृत्यन्तमाविध्य प्रेतो हरति यं नरम्।
स्वप्ने हरति तं मृत्युरपस्मारपुरःसरः॥ २२॥
स्तभ्येते प्रतिबुद्धस्य हनुमन्ये तथाक्षिणी।
यस्य तं वहिरायामो गृहीत्वा हन्त्यसंशयम्॥ २३॥
शष्कुलीर्वाप्यपूपान् वा स्वप्ने खादति यो नरः।
स चेत् प्रच्छर्दयेत् तादृक् प्रतिबुद्धो न जीवति॥ २४॥

नृत्येत्, अम्भसि च मज्जति, स भृशमुन्मादं रोगं प्राप्य इतो जन्मक्षेत्रात् परलोकं याति॥ २०॥

गङ्गाधरः—असत् तम इत्यादि। यो जाग्रत् सन्नसत् तमो मिथ्याऽन्धकारं पश्यति, यो वा जाग्रत् सन्नसतो मिथ्या बहुविधान् बहून् स्वनान् शृणोति, सोऽपस्मारेण भाविना वध्यते हन्यते॥ २१॥

गङ्गाधरः—मत्तमित्यादि। प्रेतो मृतः पुरुषो यं नरं नृत्यन्तं मत्तं स्वम् आविध्याधःशिरसं कृत्वा स्वप्ने हरति, स्वप्ने इति पश्यन्तं तम् अपस्मारेण भाविना मृत्युर्हरतीत्यर्थः॥ २२॥

गङ्गाधरः—स्तभ्येते इत्यादि। पूर्व्वं निद्रया वाह्यज्ञानहीनस्य पश्चात् प्रतिबुद्धस्य जागरितस्य यस्य हनुमन्ये तथाऽक्षिणी च स्तभ्येते, तं नरं वहिरायामो धनुःस्तम्भो भविष्यन् गृहीत्वा हन्ति॥ २३॥

गङ्गाधरः—शष्कुलीरित्यादि। यो नरः स्वप्ने शष्कुलीरपूपान् वा खादति, स चेत् प्रतिबुद्धो जागरितः सन् तादृक् शष्कुलीर्वापूपान् वा प्रच्छर्दयेत्, स वहिरायामेण भाविना न जीवति मरिष्यतीत्यर्थः॥ २४॥

चक्रपाणिः—आविध्येति अधःशिरसं कृत्वा। तादृगिति अपूपशष्कुलीरूपम्॥ २१—२४॥

एतानि पूर्व्वरूपाणि यः सम्यगवबुध्यते।
स एषामनुबन्धश्च फलश्च ज्ञातुमर्हति ॥ २५ ॥
य इमांश्चापरान् स्वप्नान् दारुणानुपलक्षयेत्।
आतुराणां विनाशाय क्लेशाय महतेऽपि वा ॥ २६ ॥
यस्योत्तमाङ्गे जायन्ते वंशगुल्मलतादयः।
वयांसि च निलीयन्ते स्वप्ने मौण्ड्यमियाच्च यः ॥
गृध्रोलूकश्वकाकाद्यैः स्वप्ने यः परिवार्य्यते।
रक्षःप्रेतपिशाचस्त्री-चण्डालद्रविड़ान्धकैः ॥
वंशवेत्रलतापाश-तृणकण्टकसङ्कटे।
प्रमुह्यति च यः स्वप्ने यो गच्छन् प्रपतत्यपि ॥

गङ्गाधरः—पूर्व्वरूपाधिष्ठाधिकारस्याशेषं समापयति—एतानीत्यादि। अनुबन्धम् एषामुक्तानां व्याधीनां पश्चादवश्यं सम्बन्धं तद्व्याधीनामेषां वा पूर्व्वरूपाणां फलञ्च मरणं ज्ञातुमर्हति ॥ २५ ॥

गङ्गाधरः—अथ पूर्व्वरूपावस्थिकस्वप्नानुक्त्वा रूपावस्थादिषु स्वप्नप्रकरणम् आरब्धुमाह—य इमानित्यादि। यस्य यस्य यक्ष्मज्वरादे रोगस्य पूर्व्वरूपतया यो यः स्वप्न उक्तस्तत्तद्व्याधिनातुरस्य स एष एष स्वप्नो विनाशाय उपलक्ष्यते इत्यर्थः इमानुक्तान् दारुणान् स्वप्नान् आतुराणां तत्तद्व्याधिभिः पीड़ितानां विनाशायोपलक्षते। अपरानपि दारुणान् स्वप्नान् वक्ष्यमाणान् आतुराणां वर्त्तमानातुर्य्यवतां विनाशाय महते क्लेशाय वापि उपलक्षते ॥ २६ ॥

गङ्गाधरः—ननु के तेऽपरे स्वप्ना इत्यत आह—यस्योत्तमाङ्गे इत्यादि। यथायथमनियतसङ्ख्यं स्वप्ने दर्शनं बोध्यम्। उत्तमाङ्गे मूर्द्धनि वंशाद्यन्यतमाः, मौण्ड्यं मुण्डनम् इयात् प्राप्नुयात्। गृध्रादिभी रक्षःप्रेतादिभिश्च वंशादिसङ्कटे स्वप्ने यः परिवार्य्यते परिवारीक्रियते, यः प्रमुह्यति मोहं प्राप्नोति, यः स्वप्ने

चक्रपाणिः—एषामनुबन्धमिति एतत्पूर्व्वरूपोत्तरकालभाविनं व्याधिम्। फलञ्चैषां मृत्युरूपम्। क्लेशाय महतेऽपि वेत्यत्रारोगिणां क्लेशाय महते इति बोध्यम्, रोगिणान्तु मरणायैव। यत उत्तरत्रोपसंहारे "इत्येते दारुणाः स्वप्नाः" इत्यादौ यथोक्तमेव विभागं करिष्यति ॥ २५।२६ ॥

चक्रपाणिः—वयांसीति पक्षिणः। गृध्रादिकाकाद्यैः परिवार्य्यत इति सम्बन्धः। संसजति

भूमौ पांशूपधानायां वल्मीके वाथ भस्मनि।
श्मशानायतने श्वभ्रे स्वप्ने यः प्रपतत्यपि॥
कलुषेऽम्भसि पङ्के वा कूपे वा तमसावृते।
स्वप्ने मज्जति शीघ्रेण स्रोतसा नीयते च यः॥
स्नेहपानं तथाभ्यङ्गः प्रच्छर्द्दनविरेचने।
हिरण्यलाभः कलहः स्वप्ने बन्धपराजयौ॥
उपानद्युगनाशश्च प्रपातः पदचर्म्मणोः।
हर्षः स्वप्ने प्रकुपितैः पितृभिश्चापि भर्त्सनम्॥
चन्द्रतारार्कनक्षत्र-दीपदैवतचक्षुषाम्।
पतनश्च प्रणाशो वा स्वप्ने भेदो नगस्य वा॥
रक्तपुष्पं वनं भूमिं पापकर्म्मालयं चिताम्।
गुहान्धकारसंबाधं स्वप्ने यः प्रविशत्यपि॥
रक्तमाली हसन्नुच्चैर्दिग्वासा दक्षिणां दिशम्।
दारुणामटवीं स्वप्ने कपियुक्तः प्रयाति वा॥

गच्छन् सन् प्रपतति, यः स्वप्ने कलुषेऽम्भसि पङ्के वा तमसावृते कूपे वा मज्जति, यश्च शीघ्रेण वेगवता स्रोतसा नीयते, यस्य स्वप्ने स्नेहानां घृतादीनां पान तथा स्नेहाभ्यङ्गः, एवं प्रच्छर्द्दनं विरेचनञ्च, यस्य स्वप्ने हिरण्यस्य कपर्द्दकस्य लाभः, स्वप्ने च कलहः एवं बन्धो वा पराजयो वा, एवमुपानद्युगस्य चर्म्मपादुकाद्वयस्य नाशः, स्वप्ने तथा पादयोश्चर्म्मणोर्द्वयोः प्रपातः, स्वप्ने हर्षः, एवं प्रकुपितैः पितृभिर्भर्त्सनम्, तथा स्वप्ने चन्द्रादीनां प्रपातः णाशो वा, नगस्य वृक्षस्य भेदो भङ्गः स्वप्ने, यः स्वप्ने रक्तपुष्पादिकं प्रविश। —गुहान्धकाररूपसम्यग्बाधाकरं देशं यः स्वप्ने प्रविशति, यो रक्तमाली

इति संयुक्तो भवति। किंवा प्रमुह्यतीति वा पाठः, तत्र प्रमुह्यतीति वंशादिसङ्कटे लग्नः सन् न निर्गममार्गमासादयति। प्रपतत्यपीति भूमावित्यादिना योज्यम्। पांशूपधानायामिति धूलिसंयुक्तायाम्। किंवा भूमावित्यादि प्रविशतीत्यनेन योज्यम्। उपानत् उपानद्वौ। रक्तपुष्पमिति वनविशेषणम्। गुहान्धकारसंबाधमिति गुहान्धकाररूपं कष्टकारकम्। दिग्वासा नग्नः सन्।

कषायिणामसौम्यानां नग्नानां दण्डधारिणाम् ।
कृष्णानां रक्तनेत्राणां स्वप्ने नेच्छन्ति दर्शनम् ॥ २७ ॥
कृष्णा पापाऽनाचारा दीर्घकेशनखस्तनी ।
विरागमाल्यवसना स्वप्ने कालनिशा मता ॥ २८ ॥
इत्येते दारुणाः स्वप्ना रोगी यैर्याति पञ्चताम् ।
अरोगः संशयं गत्वा कश्चिदेव प्रमुच्यते ॥ २९ ॥
मनोवहानां पूर्णत्वाद् दोषैरतिबलैस्त्रिभिः ।
स्रोतसां दारुणान् स्वप्नान् काले पश्यति दारुणे ॥ ३० ॥

रक्तपुष्पमालावान् सन्नुच्चैर्हसन् दिग्वासा नग्नः सन् दक्षिणां दिशं याति, अथवा तथाविधः सन् कपियुक्तेन वानरसहयोगेन दारुणामटवीं प्रयाति, अथवा कषायिणामसौम्यादीनाञ्च दर्शनम् स्वप्ने नेच्छन्ति। एषां स्वप्ने दर्शनमशुभकरत्वान्नेच्छन्ति तज्ज्ञा इति भावः ॥ २७ ॥

गङ्गाधरः—कृष्णा स्त्री पापाऽनाचारा वा स्त्री दीर्घकेशादिमती स्त्री विरागमाल्यवसना रक्तमाल्यवसना स्त्री च स्वप्ने दृष्टा सती कालनिशा कालरात्रिर्यमभगिनी मता मारिका ज्ञेया ॥ २८ ॥

गङ्गाधरः—एषां स्वप्नानामाशिषमाह—इत्येते इत्यादि। एषां दारुणत्वं रोगिणां मारकत्वमरोगाणां प्रायेण मारकत्वञ्च। कस्यचिद् बहुक्लेशेन मोचकत्वमिति भावः ॥ २९ ॥

गङ्गाधरः—ननु कस्माद्दारुणं स्वप्नं पश्यति तदाह—मनोवहानामित्यादि। नरो दारुणे मारके काले समुपस्थितेऽतिबलैरतिशयबलवद्भिस्त्रिभिर्दोषैर्वातपित्तकफैर्मनोवहानां स्रोतसां पूर्णत्वात् दारुणान् मारकान् स्वप्नान् पश्यति ॥ ३० ॥

कपियुक्तेन यानेनेति शेषः। कश्चिदेव प्रमुच्यत इत्यरोगान् प्रति नैतत् स्वप्नानामरिष्टत्वम्। तेन अरोगेष्वेतेषां मरणव्यभिचारेण नारिष्टत्वं वक्ष्यति ॥ २७—२९ ॥

चक्रपाणिः—यथैतत् स्वप्नदर्शनं भवति तदाह—मनोवहानामित्यादि। मनोवहानि स्रोतांसि यद्यपि पृथङ् नोक्तानि तथापि मनसः केवलमेवेदं शरीरमयनभूतम् इत्यभिधानात् सर्व्वशरीरस्रोतांसि गृह्यन्ते, विशेषेण तु हृदयाश्रितत्वान्मनसस्तदाश्रिता दश धमन्यो मनोवहा अभिधीयन्ते। त्रिभिरिति

नातिप्रसुप्तः पुरुषः सफलानफलांस्तथा।
इन्द्रियेशेन मनसा स्वप्नान् पश्यत्यनेकधा ॥ ३१ ॥
दृष्टं श्रुतानुभूतञ्च प्रार्थितं कल्पितं तथा।
भाविकं दोषजञ्चैव स्वप्नं सप्तविधं विदुः ॥ ३२ ॥

गङ्गाधरः—ननु कीदृक् पुरुषो दारुणान् स्वप्नान् पश्यति न च कथं सर्व्वः पश्यति, न वा कथं सर्व्वदैव निद्रायां पश्यतीत्यत आह—नातीत्यादि। नातिप्रसुप्तोऽनतिप्रसुप्तः, विभाषया नञोऽनादेशविधानात्। अनतिप्रसुप्तस्तु सुषुप्तिवर्ज्जं या निद्रा तन्निद्रागतः। तादृशस्तु तैजसाहङ्कारयोगेणात्मा भवति। सुषुप्तस्तु तामसाहङ्कारयोगेण भवति। ईदृशस्त्वात्मा न त्रिदोषपूर्णमनोवहस्रोतस्त्वं विना दारुणान् स्वप्नान् पश्यति। परन्तु तैजसाहङ्कारयोगमात्रेण स्वप्नान् पश्यति न दारुणान् पश्यति। त्रिदोषपूर्णमनोवहस्रोतास्तु दारुणान् स्वप्नान् पश्यति, न तु सर्व्वः पुरुषः। यदा तामसाहङ्कारयोगः स्यात् तदा न कश्चन स्वप्नं पश्यति। नन्वेवमपि दारुणान् स्वप्नान् दृष्ट्वापि जीवन् अस्तीति दृश्यते इत्यत आह—सफलानफलांस्तथेति। एतान् दारुणान् स्वप्नान् सफलान् अफलांश्च पश्यति। योऽफलान् पश्यति स जीवति, यः सफलान् स म्रियते एवेति भावः। ननु कस्मात् स्वप्नाः सफलाश्चाफलाश्च भवन्त्येकविधत्वादात्मन इत्यत आह—इन्द्रियेशेनेत्यादि। मनसा इन्द्रियेशेन दशेन्द्रियप्रेरकेण मनसानेकधा स्वप्नान् पुरुषः पश्यति ॥ ३१ ॥

गङ्गाधरः—ननु कीदृशा अनेकधा स्वप्ना इत्यत आह—दृष्टमित्यादि। श्रुतश्चानुभूतश्च तत्तथा। एकं स्वप्नं दृष्टं विदुः। द्वितीयं श्रुतम्। तृतीयमनुभूतं मनसा चिन्तितं तर्कितं व्याख्यातमित्यादिकम्। चतुर्थं प्रार्थितं पूर्व्वं मनसा वाचा वा यद् याचितम्। पञ्चमं कल्पितं मनसाऽप्राप्याप्राप्यत्वादिरूपेण यन्मनसा

त्रिभिरपीत्यर्थः। तेन पृथक् चापि दोषैः पूरणं ज्ञेयम्। नातिप्रसुप्त इति नातिनिद्राभिभूत इत्यर्थः। इन्द्रियेशेनेति इन्द्रियप्रेरकेण ॥ ३०।३१ ॥

चक्रपाणिः—स्वप्नानां फलवत्त्वञ्चोक्तं स्वप्नप्रकारानाह—दृष्टमित्यादि। दृष्टमिति चक्षुषा, अनुभूतन्तु शेषेन्द्रियज्ञातम्। कल्पितमिति मनसा भावितम्। प्रार्थितं याच्ञाविषयकृतम्। भाविकमिति भाविशुभाशुभफलसूचकम्। दोषजमिति उल्वणवातादिदोषजन्यम् ॥ ३२ ॥

तत्र पञ्चविधं पूर्व्वमफलं भिषगादिशेत्।
दिवास्वप्नमतिह्रस्वमतिदीर्घं तथैव च ॥ ३३ ॥
दृष्टः प्रथमरात्रे यः स्वप्नः सोऽल्पफलो भवेत्।
न स्वपेद् यः पुनर्दृष्ट्वा स सद्यः स्यान्महाफलः ॥ ३४ ॥
अकल्याणमपि स्वप्नं दृष्ट्वा तत्रैव यः पुनः।
पश्येत् सौम्यं शुभाकारं तस्य विद्याच्छुभं फलम् ॥ ३५ ॥

कल्पनीक्रियते पूर्व्वं तत्। भाविकं भविष्यन्तं षष्ठम्। दोषजं वातादिदोषभवं सप्तमं विदुः। इति सप्तविधं स्वप्नं विदुः ॥ ३२ ॥

गङ्गाधरः—तत्रेत्यादि। तत्र पञ्चविधं पूर्व्वं दृष्टं श्रुतम् अनुभूतं प्रार्थितं कल्पितञ्चेति पञ्चविधमफलं भिषगादिशेत्। शेषौ भाविकदोषजौ सफलौ। तत्राप्याह—दिवेत्यादि। भाविकं वा दोषजं वा दिवा यदि पश्यति तदाप्यफलं विदुः। यदि वा भाविकं दोषजं वा स्वप्नं रात्रावतिह्रस्वं स्वल्परूपेण पश्यति तदा तमप्यफलं विदुः। यदि वातिदीर्घं रात्रौ भाविकं दोषजं वा स्वप्नं पश्यति तदा तमप्यफलं विदुरित्यर्थस्तथैवेत्यस्य ॥ ३३ ॥

गङ्गाधरः—नन्वेभ्योऽतिरिक्ताः सर्व्वे फलवन्तः सन्तु न कथं सर्व्वदा फलन्ति इत्यत आह—दृष्ट इत्यादि। प्रथमरात्रे प्रहररात्राभ्यन्तरे सोऽल्पफलश्चिर-फलश्च। स्वप्ने तु प्रथमे यामे वत्सरेण फलं लभेत् इति तन्त्रान्तरवचनात्। एतेन द्वितीय-तृतीय-चतुर्थयामेषूत्तरोत्तरं फलाधिक्यं स्वल्पकालश्च ख्यापितः। तत्रापि स्वल्पफलत्वमाह—न स्वपेदित्यादि। यः स्वप्नं दृष्ट्वा पुनर्न स्वपेत् न निद्रां गच्छेत् स सद्यस्त्रिरात्रेण महाफलः स्यात् महाफलप्राप्तः स्यात्। एतेन स्वप्नं शुभं वाशुभं दृष्ट्वा पुनर्निद्रागमे स्वल्पफलः चिरेण फलहानिर्वा भवतीति ख्यापितम् ॥ ३४ ॥

गङ्गाधरः—ननु पुनरपि निद्रागतो यदि पूर्व्वस्वप्नविरोधिस्वप्नं पश्येत्, तदा किं स्यादित्यत आह—अकल्याणमपीत्यादि। यद्यकल्याणं कल्याणं

चक्रपाणिः—पूर्व्वं दृष्टादिकल्पितान्तं पञ्चविधस्वप्नमफलं फलशून्यत्वादिति पारिशेष्याद् भाविकं दोषजन्यञ्च सफलम्। तत्र भाविकं शुभाशुभरूपतया शुभाशुभफलप्रदम्। यत् तु दोषजन्यं तद् दोषप्रकोपजन्यव्याधिरूपफलसूचकतया सफलम्। अफलस्वप्नान्तरमाह—दिवा-स्वप्नमित्यादि। दिवादृष्टं सर्व्वं स्वप्नम् तथा रात्रिदृष्टञ्चातिदीर्घमतिह्रस्वञ्च स्वप्नमफलं

वा स्वप्नं पूर्व्वं दृष्ट्वा तत्रैव स्वप्ने शुभाकारं सौम्यं न त्वशुभाकारं स्वप्नं पश्येत्। तस्य शेषस्वप्नफलं शुभं स्यात्। सुतरां जागरित्वा पुनर्निद्रायां शुभस्वप्नदर्शनस्य शुभमेव फलं लभ्यते। एतेन शेषस्वप्नो गरीयानिति ख्यापितः।

इत्थञ्चापरिसङ्ख्येयाः स्वप्ना द्विधा, कतिचिच्छुभाः कतिचित् अशुभास्तत्रास्मिंस्तन्त्रेऽशुभाः कतिचिदुपदिष्टा अरिष्टाधिकारात्। अपरे तु अशुभाः शुभाश्च कतिचित् तन्त्रान्तरतोऽवगन्तव्याः। सुश्रुते तु अशुभाः शुभाश्च कतिचिदुक्तास्तत्र कतिचिदशुभा यथा—स्वप्नानतः प्रवक्ष्यामि मरणाय शुभाय च। सुहृदो यांश्च पश्यन्ति व्याधितो वा स्वयं तथा॥ स्नेहाभ्यक्तशरीरस्तु करभव्यालगर्द्दभैः। वराहैर्म्महिषैर्व्वापि यो यायाद् दक्षिणामुखः॥ रक्ताम्बरधरा कृष्णा हसन्ती मुक्तमूर्द्धजा। यं वा कर्षति बद्ध्वा स्त्री नृत्यन्ती दक्षिणामुखम्॥ अन्त्यावसायिभिर्यो वा कृष्यते दक्षिणामुखः। परिष्वजेरन् यं वापि प्रेताः प्रव्रजितास्तथा॥ मूर्द्धन्याघ्रायते यस्तु श्वापदैर्विकृताननैः। पिबेन्मधु च तैलञ्च यो वा पङ्केऽवसीदति॥ पङ्कप्रदिग्धगात्रो वा प्रनृत्येत् प्रहसेत् तथा। निरम्बरश्च यो रक्तां धारयेच्छिरसि स्रजम्॥ यस्य वंशो नलो वापि तालो वोरसि जायते। यं वा मत्स्यो ग्रसेद् यो वा जननीं प्रविशेन्नरः॥ पर्व्वताग्रात् पतेद् यो वा श्वभ्रे वा तमसावृते। ह्रियते स्रोतसा यो वा यो वा मौण्ड्यमवाप्नुयात्॥ पराजीयेत बध्येत काकाद्यैर्व्वाभिभूयते। पतनं तारकादीनां प्रणाशं दीपचक्षुषोः॥ यः पश्येद् देवतानां वा प्रकम्पमवनेस्तथा। यस्य च्छर्द्दिर्विरेको वा दशनाः प्रपतन्ति वा॥ शाल्मलीं किंशुकं यूपं वल्मीकं पारिभद्रकम्। पुष्पाढ्यं कोविदारं वा चितां वा योऽधिरोहति॥ कार्पासतैलपिण्याक-लोहानि लवणं तिलान्। लभेताश्नीत वा पक्वमन्नं यश्च पिबेत् सुराम्। स्वस्थः स लभते व्याधिं व्याधितो मृत्युमृच्छति॥ यथास्वं प्रकृतिस्वप्नो विस्मृतो विहतश्च यः। चिन्ताकृतो दिवादृष्टो भवन्त्यफलदास्तु ते॥ ज्वरितानां शुना सख्यं कपिसख्यन्तु शोषिणाम्। उन्मादे राक्षसः प्रेतैः अपस्मारे प्रवर्त्तनम्। मेहातिसारिणां तोय-पानं स्नेहस्य कुष्ठिनाम्॥ गुल्मेषु स्थावरोत्पत्तिः कोष्ठे मुण्ड्यं शिरोरुजि। शष्कुलीभक्षणं छर्द्दयामध्वा श्वासपिपासयोः। हरिद्राभोजनं वापि यस्य स्यात् पाण्डुरोगिणः। रक्तपित्ती पिबेद् यस्तु शोणितं स विनश्यति॥ स्वप्नानेवंविधान् दृष्ट्वा प्रातरुत्थाय यत्नवान्। दद्यान्माषांस्तिलान् लोहं विप्रेभ्यः काञ्चनं तथा। जपेच्चापि पुमान्

विद्यात्। अत्र चाध्याये येषामेव स्वप्नरूपरिष्टसम्भवः त एवोक्ताः। तेन प्रहृष्यादीनां किमिति

तत्र श्लोकः ।

पूर्व्वरूपाण्यथ स्वप्नान् य इमान् वेत्ति दारुणान् ।
न स मोहादसाध्येषु कर्म्माण्यारभते भिषक् ॥ ३६ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते इन्द्रियस्थाने पूर्व्वरूपीयमिन्द्रियं नाम पञ्चमोऽध्यायः ॥ ५ ॥

मन्त्रान् गायत्रीं त्रिपदां तथा । दृष्ट्वा च प्रथमे यामे सुप्याद् ध्यात्वा पुनः शुभम् ॥ जपेद्वान्यतमं देवं ब्रह्मचारी समाहितः । न चाचक्षीत कस्मैचिद् दृष्टं स्वप्नमशोभनम् ॥ देवतायतने चैव वसेद् रात्रित्रयं तथा । विप्रांश्च पूजयेन्नित्यं दुःस्वप्नात् प्रविमुच्यते ॥ अत ऊर्द्धं प्रवक्ष्यामि प्रशस्तं स्वप्नदर्शनम् । देवान् द्विजान् गोवृषभान् जीवतः सुहृदो नृपान् ॥ समिद्धमग्निं विप्रांश्च निर्म्मलानि जलानि च । पश्येत् कल्याणलाभाय व्याधेरपगमाय च । मांसं मत्स्यान् स्रजः श्वेताः वासांसि च फलानि च । लभन्ते धनलाभाय व्याधेरपगमाय च । महाप्रासाद-सफल-वृक्षवारणपर्व्वतान् । आरोहेद् द्रव्यलाभाय व्याधेरपगमाय च । नदी-नदसमुद्रांश्च क्षुभितान् कलुषोदकान् । तरेत् कल्याणलाभाय व्याधेरपगमाय च । उरगो वा जलौको वा भ्रमरो वापि यं दशेत् । आरोग्यं निर्दिशेत् तस्य धनलाभञ्च बुद्धिमान् । एवंरूपान् शुभान् स्वप्नान् यः पश्येद्व्याधितो नरः । स दीर्घायुरिति श्रेयस्तस्मै कर्म्म समाचरेत् ॥ इति ॥ ३५ ॥

गङ्गाधरः—अध्यायाशिषमाह—तत्र श्लोक इति । पूर्व्वरूपाणीत्यादि । एतदध्यायोक्तानि पूर्व्वरूपाणि इमान् इत्यस्य लिङ्गविपर्य्ययेणान्वयात् । स मोहात् अज्ञानात् ॥ ३६ ॥

अध्यायं समापयति—अग्नीत्यादि ॥

इति वैद्यश्रीगङ्गाधरकविरत्नकविराजविरचिते चरकजल्पकल्पतरावन्द्रिय-स्थानजल्पे पञ्चमस्कन्धे पूर्व्वरूपीयेन्द्रियजल्पाख्या पञ्चमी शाखा ॥ ५ ॥

* स्वप्नारिष्टानि, इत्यादि न वाच्यम् । तत्र रिष्टासम्भावादेवानभिधानं ज्ञेयम् । "दृष्टः प्रथमयामे यः" इत्यादिग्रन्थं केचिदत्र पठन्ति, स व्यक्तार्थ एव ॥ ३३—३६ ॥

इति महामहोपाध्याय-चरकचतुरानन-श्रीमच्चक्रपाणिदत्तविरचितायामायुर्व्वेददीपिकायां चरकतात्पर्य्यटीकायाम् इन्द्रियस्थाने पूर्व्वरूपीयमिन्द्रियं नाम पञ्चमोऽध्यायः ॥ ५ ॥

## षष्ठोऽध्यायः ।

अथातः कतमानिशरीरीयमिन्द्रियं व्याख्यास्यामः,
इतिह स्माह भगवानात्रेयः ॥ १ ॥

कतमानि शरीराणि व्याधिमन्ति महामुने !
यानि वैद्यः परिहरेद्येषु कर्म्म न सिध्यति ॥
इत्यग्निवेशेन गुरुः प्रश्नं पृष्टः पुनर्व्वसुः ।
आचचक्षे यथा तस्मै भगवांस्तन्निबोधत ॥ २ ॥
यस्य वै भाषमाणस्य रुजत्यूर्द्ध्वमुरो भृशम् ।
अन्नं वा च्यवतेऽपक्वं स्थितं वापि न जीर्य्यति ॥

<u>गङ्गाधरः</u>—अथ पूर्व्वरूपीयेन्द्रियव्याख्यानन्तरं स्थानविशेषे व्याधिविशेषतोऽरिष्टं व्याख्यातुं कतमानिशरीरीयमिन्द्रियं व्याख्यायते—अथात इत्यादि। कतमानि शरीराणि व्याधिमन्तीत्यादि। श्लोकार्थं कतमानि शरीराण्यधिकृत्य कृतमित्यर्थे कतमानिशरीरीयमिति ॥ १ ॥

<u>गङ्गाधरः</u>—कतमानीत्यादि। हे महामुने गुरो ! येषु व्याधिमत्सु शरीरेषु चिकित्सितं कर्म्म न सिध्यति, तानि कतमानि व्याधिमन्ति शरीराणि भवन्ति, यानि शरीराणि व्याधिमन्ति वैद्यः परिहरेदरिष्टत्वान्न चिकित्सेदिति प्रश्नमग्निवेशेन शिष्येण पृष्टो भगवान् पुनर्व्वसुर्गुरुस्तस्मै अग्निवेशाय यथा आचचक्षे तन्निबोधत ॥ २ ॥

<u>गङ्गाधरः</u>—यस्येत्यादि। भाषमाणस्य वाक्यं वदत एव यस्य ऊर्द्ध्वमुरो वक्षस ऊर्द्ध्वदेशो भृशं रुजति व्यथते, न त्वभाषमाणस्य तं भिषक् परिवर्ज्जयेत्। यस्य भुक्तमपक्वमन्नं च्यवते गुदात् निर्गच्छति, अथवा यस्य भुक्तमन्नमुदरे

<u>चक्रपाणिः</u>—सम्प्रति पूर्व्वरूपीयानन्तरं भाविव्याध्याश्रयारिष्टाभिधानार्थं कतमानिशरीरीयमिन्द्रियमुच्यते। कतमानि शरीराण्यधिकृत्य कृतं कतमानिशरीरीयम्। प्रश्नमिति पृच्छाविषयम्। ऊर्द्ध्वमुर इति उरऊर्द्ध्वभाग इत्यर्थः। एतदध्यायप्रतिपाद्यानाञ्चासाध्यव्याधीनां मरणसूचकेन

बलञ्च हीयते शीघ्रं तृष्णा चातिप्रवर्द्धते ।
जायते हृदि शूलञ्च तं भिषक् परिवर्ज्जयेत् ॥ ३ ॥
हिक्का गम्भीरजा यस्य शोणितञ्चातिसार्य्यते ।
न तस्मा औषधं दद्यात् स्मरन्नात्रेयशासनम् ॥ ४ ॥
आनाहश्चातिसारश्च यमेतौ दुर्ब्बलं नरम् ।
व्याधितं विशतो रोगौ दुर्लभं तस्य जीवितम् ॥ ५ ॥
आनाहश्चातिसारश्च कर्षितं यमुभौ भृशम् ।
विशतो विजहत्येनं प्राणा नातिचिरान्नरम् ॥ ६ ॥

स्थितमपि न जीर्य्यति, बलञ्च हीयते, शीघ्रं तृष्णा चातिप्रवर्द्धते, हृदि च शूलं जायते, तं नरं भिषक् परिवर्ज्जयेत् ॥ ३ ॥

गङ्गाधरः—हिक्केत्यादि। गम्भीरजा नाभिप्रवृत्ता गम्भीरा नाम हिक्का यस्य तस्यैव शोणितातिसारश्चेत् ॥ ४ ॥

गङ्गाधरः—आनाह इत्यादि। आनाहो विड्विबन्धव्याधिः स्वनामाख्यातस्तत्रातिसारश्चेत् तदा एतौ द्वौ मिथो विरुद्धौ यं दुर्ब्बलं व्याधितं नरं प्रविशतस्तस्य दुर्लभं जीवितं स्यात्, न तु प्रबलस्य नापि स्वस्थस्य ॥ ५ ॥

गङ्गाधरः—एवमानाहश्चेत्यादि व्याख्येयम्। कर्षितं व्याधिभिर्वा धनबान्धवक्षयोपवासादितो वा, इति पूर्व्वस्माद्भेदः। नातिचिरादिति शीघ्रमित्यर्थः ॥ ६ ॥

अरिष्टेन समं मरणसूचकतया साधर्म्यादरिष्टानामपि व्याधीनामभिधानमिह ब्रूते। यदि एत एवासाध्यव्याधयो मरणपूर्व्वरूपतया रिष्टरूपा एव भवन्ति, तथापि न कदाचित् क्षतिः। तेनारिष्टाधिकारादरिष्टत्वमेव एतदध्यायवाच्यानामपि व्याधीनामिच्छामः ॥ १—३ ॥

चक्रपाणिः—गम्भीरजा इति गम्भीरनाभ्यादिदेशजा न तु गम्भीरा, तस्याः स्वरूपासाध्यत्वेनोक्तत्वात्। 'शोणितञ्चातिसार्य्यते' इति विशेषणमनर्थकं स्यात्। व्याधितमित्यनेन हिक्कातिसारारिष्टव्याधिगृहीतमिति दर्शयति। आनाहातिसारयो रोगत्वेनापि 'रोग'विशेषणं विशेषेण

ज्वरः पौर्व्वाह्णिको यस्य शुष्ककासश्च दारुणः।
बलमांसविहीनस्य यथा प्रेतस्तथैव सः॥ ७॥
ज्वरो यस्यापराह्णे तु श्लेष्मकासश्च दारुणः।
बलमांसविहीनस्य यथा प्रेतस्तथैव सः॥ ८॥
यस्य मूत्रं पुरीषञ्च ग्रथितं संप्रवर्त्तते।
निरुष्मणो जठरिणः श्वसतो न स जीवति॥ ९॥
श्वयथुर्यस्य कुक्षिस्थो हस्तपादं विसर्पति।
ज्ञातिसङ्घं स संक्लेश्य तेन रोगेण हन्यते॥ १०॥

गङ्गाधरः—ज्वर इत्यादि। पौर्व्वाह्णिको दिवापूर्व्वदशदण्डाभ्यन्तरे ज्वरस्य भोगावशेषस्तत्र कफकाले। दारुणः कष्टदः। शुष्ककासो वातकर्म्म। इति अचिन्त्यलक्षणम्। बलमांसहीनस्य मरणात्, बलमांसवतस्तु कष्टेन जीवनमिति भावः। एवं ज्वरो यस्यापराह्णे त्विति व्याख्येयम्॥ ७। ८॥

गङ्गाधरः—यस्येत्यादि। मूत्रं ग्रथितं ग्रन्थिलवत्, पुरीषञ्च ग्रथितं यस्य श्वसतः श्वासं कुर्व्वतः, निरुष्मणो मन्दाग्नेर्जठरिण उदररोगिणः संप्रवर्त्तते, स न जीवति॥ ९॥

गङ्गाधरः—श्वयथुरित्यादि। यस्य कुक्षिस्थ उदरगतः श्वयथुः क्रमेण हस्तपादं विसर्पति, तेन श्वयथुरोगेण स चिरकालं तदार्त्तः सन् नानाविध-परिचर्य्याभिर्ज्ञातिसङ्घं संक्लेश्य क्लेशं दत्त्वा तेन रोगेण हन्यते म्रियते इत्यर्थः॥ १०॥

रुजाकर्त्तृत्वोपदर्शनार्थम्। इहालभ्य एव जीविते 'दुर्लभम्' इत्युक्तम्। यदाह—सर्व्वथालभ्यं दुर्लभमिति। अन्ये तु 'दुर्लभमाषया' अनियतं मरणे रिष्टमिति ब्रुवते, एवं "संशयप्राप्तमात्रेयो जीवितं तस्य मन्यते" इत्यादावपि व्याख्यानयन्ति। अनियतरिष्टता स्वरसतस्त्वस्माभिः पुष्पितक एवोक्ता। "संशयप्राप्तमात्रेयो जीवितं तस्य मन्यते" इत्यस्य चार्थं यस्यश्यावनिमित्तीये वक्ष्यामः॥ ४—८॥

चक्रपाणिः—मूत्रं ग्रथितमिति घनीभूतं ज्ञेयम्। ज्ञातिसङ्घं स संक्लेश्येतिवचनेन चिरमस्य रोगोऽनुवर्त्तते। ततः प्रत्याशया ज्ञातयस्तत्प्रतीकारार्थं क्लिश्यन्ति, ततस्तु म्रियत एव न प्रतिकर्त्तुं पार्य्यते॥ ९।१०॥

श्वयथुर्यस्य पादस्थस्तथा स्रस्ते च पिण्डिके ।
सीदतश्चाप्युभे जङ्घे तं भिषक् परिवर्ज्जयेत् ॥ ११ ॥
शूनहस्तं शूनपादं शूनगुह्योदरं नरम् ।
हीनवर्णबलाहारमौषधैर्नोपपादयेत् ॥ १२ ॥
उरोयुक्तो बहुश्लेष्मा नीलः पीतः सलोहितः ।
सततं च्यवते यस्य दूरात् तं परिवर्ज्जयेत् ॥ १३ ॥
हृष्टरोमा सान्द्रमूत्रः शुष्क-*-कासज्वरार्द्दितः ।
क्षीणमांसो नरो दूराद् वर्ज्ज्यो वैद्येन जानता ॥ १४ ॥
त्रयः प्रकुपिता यस्य दोषाः कोष्ठेऽभिलक्षिताः † ।
कृशस्य बलहीनस्य नास्ति तस्य चिकित्सितम् ॥ १५ ॥

गङ्गाधरः—श्वयथुर्यस्येत्यादि । यस्य पादस्थः श्वयथुः पिण्डिके जान्वधोमांसपिण्डद्वयश्च स्रस्ते अधस्ताल्लम्बितं भवति, उभे द्वे च जङ्घे सीदतोऽवसन्ने भवतस्तं भिषक् परिवर्ज्जयेत् ॥ ११ ॥

गङ्गाधरः—शूनेत्यादि । यस्य हस्ते शोथः पादे च शोथः गुह्योदरयोश्च शोथः, हीनाश्च बलवर्णाहारास्तमौषधैर्नोपपादयेत्, स मरिष्यतीति भावः ॥ १२ ॥

गङ्गाधरः—उर इत्यादि । यस्य उरसि वक्षसि युक्तो लग्नो बहुश्लेष्मा उत्कासादिना तस्मादुरसः सततं सलोहितो नीलो वा सलोहितः पीतो वा च्यवते, तं दूरात् परिवर्ज्जयेत् ॥ १३ ॥

गङ्गाधरः—हृष्टरोमेत्यादि । सान्द्रमूत्रो घनं मूत्रं यस्य सः ॥ १४ ॥

गङ्गाधरः—त्रय इत्यादि । कोष्ठे मलमूत्ररुधिराद्याशये हृदुण्डुकादिषु च । अकृशस्य बलवतो वा । न तस्य चिकित्सितमस्तीति भावः ॥ १५ ॥

चक्रपाणिः—पिण्डिके इति जङ्घामांसपिण्डिके । उरोयुक्त इति उरोभवत्वेन रोगोऽनुमीयमानः । कष्टाभिलक्षिता इति दुरुपक्रमत्वेन ज्ञाताः । किंवा कोष्ठाभिलक्षिता इति पाठः, स व्यक्त

---

* शून इति पाठान्तरम् ।

† कष्टाभिलक्षिता इति च

ज्वरातिसारौ शोफान्ते श्वयथुर्वा तयोः क्षये।
दुर्ब्बलस्य विशेषेण नरस्यान्ताय जायते ॥ १६ ॥
पाण्डुरश्च कृशोऽत्यर्थं तृष्णयातिपरिप्लुतः।
डम्वरी कुपितोच्छ्वासः प्रत्याख्येयो विजानता ॥ १७ ॥
हनुमन्याग्रहस्तृष्णा बलह्रासोऽतिमात्रया।
प्राणाश्चोरसि वर्त्तन्ते यस्य तं परिवर्ज्जयेत् ॥ १८ ॥
व्यायच्छते ताम्यति च शर्म्म किञ्चिन्न बिन्दति।
क्षीणमांसबलाहारो मुमूर्षुरचिरान्नरः ॥ १९ ॥

गङ्गाधरः—ज्वरेत्यादि। यस्य शोफान्ते पूर्व्वं शोथो भूत्वा निवृत्तो ज्वरातिसारौ च युगपज्जायेते, तस्य नरस्यान्ताय नाशाय व्याधी। स यदि दुर्ब्बलस्तदा किमत्र वचः। नरस्य तयोः क्षये पूर्व्वं ज्वरातिसारौ द्वावेव भूत्वा निवृत्तौ श्वयथुश्चान्ताय जायते भवति, दुर्ब्बलस्य तस्य विशेषेणाचिरादेवान्ताय जायते इत्यर्थः ॥ १६ ॥

गङ्गाधरः—पाण्डुर इत्यादि। पाण्डुरः पाण्डुरोगवान् योऽत्यर्थं कृशस्तृष्णया चात्यर्थं परिप्लुतः। डम्वरी आडम्बरवान् स्तब्धाक्षः सन्नवलोकयति संरम्भेण वा पश्यति। कुपितोच्छ्वासः श्वासरोगवान् प्रत्याख्येयस्त्याज्यः ॥ १७ ॥

गङ्गाधरः—हनुमन्येत्यादि। यस्य हनुग्रहो मन्याग्रहस्तृष्णा तथातिमात्रया बलह्रासः प्राणा उरसि वर्त्तन्ते इत्येवं लक्ष्यते, तेन प्राणनिर्गमोन्मुखत्वमाख्यायते, तं परिवर्ज्जयेत् ॥ १८ ॥

गङ्गाधरः—व्यायच्छते इत्यादि। यो व्यायच्छते व्यायामं कुरुते तेन व्यायामेन ताम्यति ग्लायति न किञ्चित् शर्म्म सुखं बिन्दति क्षीणमांसादिश्च भवति, स नरोऽचिरान्मुमूर्षुर्भवति ॥ १९ ॥

एव। डम्वरी स्तब्धाक्षावलोकी, किंवा डम्वरी संरम्भवान्। कुपित उच्छ्वासो यस्य स कुपितोच्छ्वासः ॥ ११—१७ ॥

चक्रपाणिः—प्राणाश्चोरसि वर्त्तन्त इति वायव उरसि प्रकुपिता वहन्ति। यदि तु जीवितं प्राणा इहोच्यन्ते, तदा तस्योरसि वर्त्तन्ते मृत एव पुरुषो भवति। ततश्च तस्मिन् काले रिष्टेनासाध्यतां ज्ञात्वा रोगिपरित्यागे वैद्यस्याप्रसिद्धिर्भवत्येवेति कृत्वा प्राणा वायव इहोच्यन्ते इति ब्रुवते। वयन्तु ब्रूमः सद्योमरणीयारिष्टवदेतत् प्रत्यासन्नमृत्युगमकमेव भविष्यतीति ॥१८॥

**विरुद्धयोनयो यस्य विरुद्धोपक्रमा भृशम्।**
**जायन्ते दारुणा रोगाः शीघ्रं शीघ्रं स हन्यते ॥ २० ॥**
**बलं विज्ञानमारोग्यं ग्रहणी मांससारिणी * ।**
**एतानि यस्य हीयन्ते क्षिप्रं क्षिप्रं स हीयते ॥ २१ ॥**

गङ्गाधरः—विरुद्धेत्यादि। यस्य विरुद्धयोनयो योनीनां परस्परं विरोधिता येषां ते विरुद्धयोनयो रोगाः। ते च वातपित्तश्लेष्मजसान्निपातिकादयो रोगा भवन्ति, न च ते मारकाऽकस्मादित्यत आह—विरुद्धोपक्रमा भृशमिति। योनीनां परस्परविरुद्धत्वेऽपि न क्षतिर्यदि तेषां रोगाणामपि दोषदूष्यतो विरुद्ध उपक्रमः स्यात्। यथाधोगरक्तपित्तं वातानुगपित्तजं, विरेकसाध्यं पित्तं तच्च नाधोगरक्तपित्तहितमिति उभयगं वा। तत्र ते यदि दारुणाः कष्टदाः शीघ्रं जायन्ते तदा तै रोगैः स शीघ्रं हन्यते। इत्यनुक्तसर्व्वरोगारिष्टं व्याख्यातम् ॥ २० ॥

गङ्गाधरः—बलमित्यादि। मांससारिणी ग्रहणी मांससन्निविष्टा ग्रहणी नाड़ी अर्थाज्जठराग्निः। एतानि यस्य हीयन्ते तस्य जीवितं मृत्युर्हरतीति। एतेन स्मृतिमेधाप्रकृतिबलपरीक्षा व्याख्याता। इति व्याधीनां रूपतः परीक्षाः व्याख्याताः। सुश्रुतेऽप्यवारणीयेऽध्याये यथा—उपद्रवैस्तु ये जुष्टा व्याधयो यान्त्यवार्य्यताम्। रसायनाद्विना वत्स तान् शृण्वेकमना मम ॥ वातव्याधिः प्रमेहश्च कुष्ठमर्शो भगन्दरः। अश्मरी मूढ़गर्भश्च तथैवोदरमष्टमम्। अष्टावेते प्रकृत्यैव दुश्चिकित्स्या महागदाः ॥ प्राणमांसक्षयश्वास-तृष्णाशोषवमिज्वरैः। मूर्च्छातिसारहिक्काभिः पुनश्चैतैरुपद्रुताः। वर्ज्जनीया विशेषेण भिषजा सिद्धिमिच्छता ॥ शूनं सुप्तत्वचं भग्नं कम्पाध्मानिपीड़ितम्। रुजार्त्तिमन्तञ्च नरं वातव्याधिर्विनाशयेत् ॥ यथोक्तोपद्रवारिष्टमतिप्रस्रुतमेव वा। पिड़कापीड़ितं गाढ़ं प्रमेहो हन्ति मानवम् ॥ प्रभिन्नं प्रस्रुताङ्गञ्च रक्तनेत्रं हतस्वरम्। पञ्चकर्म्मगुणातीतं कुष्ठं हन्तीह कुष्ठिनम् ॥ तृष्णारोचकशूलार्त्तमतिप्रस्रुतशोणितम्। शोफातिसारसंयुक्तमर्शोव्याधिर्विनाशयेत् ॥ वातमूत्रपुरीषाणि क्रिमयः शुक्रमेव च। भगन्दरात् प्रस्रवन्ति यस्य तं परिवर्ज्जयेत् ॥ प्रशूननाभिवृषणं बद्ध-

चक्रपाणिः—आयच्छते अङ्गानि क्षिपति। विरुद्धयोनय इति परस्परविरुद्धधर्म्माणः। विरुद्धयोनयोऽपि स्वल्पतयैकभूततया वा अविरुद्धोपक्रमा अपि भवन्तीत्यत उक्तं विरुद्धोपक्रमा इति।

* मांसशोणितमिति चक्रः।

मूत्रं रुजार्द्दितम्। अश्मरी क्षपयत्याशु सिकता शर्करान्विता॥ गर्भकोषपरासङ्गो मक्कल्लो योनिसंवृतिः। हन्यात् स्त्रियं मूढ़गर्भो यथोक्ताश्चाप्युपद्रवाः॥ पार्श्व-भङ्गान्नविद्वेष-शोफातिसारपीड़ितम्। विरिक्तं पूर्य्यमाणञ्च वर्ज्जयेदुदरार्द्दितम्॥ यस्ताम्यति विसंज्ञश्च शेते निपतितोऽपि वा। शीतार्द्दितोऽन्तरुष्णश्च ज्वरेण म्रियते नरः॥यो हृष्टरोमा रक्ताक्षो हृदि सङ्घातशूलवान। नित्यं वक्त्रेण चोच्छ्वस्यात् तं ज्वरो हन्ति मानवम्॥ हिक्काश्वासपिपासार्त्तं मूढं विभ्रान्तलोचनम्। सन्ततो-च्छ्वासिनं क्षीणं नरं क्षपयति ज्वरः॥ आविलाक्षं प्रताम्यन्तं निद्रायुक्तमतीव च। क्षीणशोणितमांसञ्च नरं क्षपयति ज्वरः॥ श्वासशूलपिपासार्त्तं क्षीणं ज्वर-निपीड़ितम्। विशेषेण नरं वृद्धमतीसारो विनाशयेत्॥ शुक्लाक्षमन्नद्वेष्टार-मूर्द्ध्वश्वासनिपीड़ितम्। कृच्छ्रेण बहु मेहन्तं यक्ष्मा हन्तीह मानवम्॥ श्वासशूलपिपासान्न-विद्वेषग्रन्थिमूढ़ताः। भवन्ति दुर्ब्बलत्वञ्च गुल्मिनो मृत्युमेष्यतः॥ आध्मानं बहु निष्यन्दं छर्द्दिहिक्कातृड़र्द्दितम्। रुजाश्वाससमाविष्टं विद्रधिर्नाशयेन्नरम्॥ पाण्डुदन्तनखो यस्तु पाण्डुनेत्रश्च मानवः। पाण्डुसंघात-दर्शी च पाण्डुरोगी विनश्यति॥ लोहितं छर्दयन् यस्तु बहुशो लोहितेक्षणः। रक्तानाञ्च दिशां द्रष्टा रक्तपित्ती विनश्यति॥ अवाङ्मुखस्तून्मुखो वा क्षीण-मांसबलो नरः। जागरिष्णुरसन्देहमुन्मादेन विनश्यति॥ बहुशोऽपस्मरन्तन्तु प्रक्षीणं चलितभ्रुवम्। नेत्राभ्याञ्च विकुर्व्वाणमपस्मारो विनाशयेत्॥ इति। तथा विपरीताविपरीतव्रणविज्ञानीयेऽपि। गन्धवर्णरसादीनां विशेषाणां समासतः। वैकृतं यत् तदाचष्टे व्रणिनः पक्कलक्षणम्॥ कटुस्तीक्ष्णश्च विस्रश्च गन्धस्तु पवनादिभिः। लोहगन्धस्तु रक्तेन व्यामिश्रः सान्निपातिकः॥ लाजातसीतैलसमाः किञ्चिद्विस्रास्तु गन्धतः। ज्ञेयाः प्रकृतिगन्धाः स्युरतो-ऽन्यद् गन्धवैकृतम्। मद्यागुर्व्वाज्यसुमनः-पद्मचन्दनचम्पकैः। सगन्धा दिव्यगन्धा वा मुमूर्षूणां व्रणाः स्मृताः। श्ववाजिमूषिकध्वाङ्क्ष-पूतिवल्लूरमत्कुणैः। सगन्धाः पङ्कगन्धाश्च भूमिगन्धाश्च गर्हिताः। ध्यामकुङ्कुमकङ्कुष्ठ-सवर्णाः पित्तकोपतः। न दह्यन्ते न चूष्यन्ते भिषक् तान् परिवर्ज्जयेत्। कण्डूमन्तः स्थिराः श्वेताः स्निग्धाः कफनिमित्ततः। दूयन्ते च विदह्यन्ते भिषक् तान् परिवर्ज्जयेत्। कृष्णास्तु ये तनुस्रावा वातजा मर्म्मतापिनः। स्वल्पामपि न कुर्व्वन्ति रुजं तान् परिवर्ज्जयेत्। क्ष्वेड़न्ति घुघुरायन्ते ज्वलन्तीव च ये व्रणाः। त्वङ्मांस-स्थाश्च पवनं सशब्दं विसृजन्ति ये। ये च मर्म्मस्वसम्भूता भवन्त्यत्यर्थवेदनाः। दह्यन्ते चान्तरत्यर्थं वहिः शीताश्च ये व्रणाः। दह्यन्ते वहिरत्यर्थं भवन्त्यन्तश्च

विकारा यस्य वर्द्धन्ते प्रकृतिः परिहीयते ।
सहसा सहसा तस्य मृत्युर्हरति जीवितम् ॥ २२ ॥

तत्र श्लोकः ।

इत्येतानि शरीराणि व्याधिमन्ति विवर्ज्जयेत् ।
न ह्येषु धीराः पश्यन्ति सिद्धिं काञ्चिदुपक्रमात् ॥ २३ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते इन्द्रियस्थाने कतमानि-
शरीरीयमिन्द्रियं नाम षष्ठोऽध्यायः ॥ ६ ॥

शीतलाः । शक्तिकुन्तध्वजरथा वाजिवारणगोवृषाः । येषु चाप्यवभासेरन् प्रासादाकृतयस्तथा । चूर्णावकीर्णा इव ये भान्ति वा न च चर्णिताः । प्राण-मांसक्षयश्वास-कासारोचकपीड़िताः । प्रवृद्धपूयरुधिरा व्रणा येषाञ्च मर्म्मसु । क्रियाभिः सम्यगारब्धा न सिध्यन्ति च ये व्रणाः । वर्ज्जयेत् तान् भिषक् प्राज्ञः संरक्षन्नात्मनो यशः ॥ इति ॥ २१ ॥

गङ्गाधरः—विकारा इत्यादि स्पष्टम् ॥ २२ ॥

गङ्गाधरः—अध्यायार्थमुपसंहर्त्तुमाह—इत्येतानीत्यादि ॥ २३ ॥

अध्यायं समापयति—अग्नीत्यादि।

इति वैद्यश्रीगङ्गाधरकविरत्नविरचिते चरकजल्पकल्पतराविन्द्रियस्थान-
जल्पे पञ्चमस्कन्धे कतमानिशरीरीयेन्द्रियजल्पाख्या
षष्ठी शाखा ॥ ६ ॥

आरोग्यं हीयत इति अत्रोक्तरोगव्यतिरिक्तरोगवृद्ध्या आरोग्यहानिर्बोध्या। प्रकृतिः परिहीयत इति स्वभावसुशीलत्वादिरूपं क्षीयते। किंवा प्रकृतिर्जन्मप्रतिबद्धश्लेष्मप्रकृत्यादिरूपा हीयते ॥ १९—२३ ॥

इति महामहोपाध्याय-चरकचतुरानन-श्रीमच्चक्रपाणिदत्तविरचितायामायुर्व्वेददीपिकायां चरक-
तात्पर्य्यटीकायाम् इन्द्रियस्थाने कतमानिशरीरीयेन्द्रियं नाम षष्ठोऽध्यायः ॥ ६ ॥

## सप्तमोऽध्यायः।

अथातः पन्नरूपीयमिन्द्रियं व्याख्यास्यामः,
इतिह स्माह भगवानात्रेयः॥ १॥

दृष्ट्वा * यस्य विजानीयात् पन्नरूपां कुमारिकाम्।
प्रतिच्छायामयीमक्ष्णोर्नैनमिच्छेच्चिकित्सितुम्॥ २॥

ज्योत्स्नायामातपे दीपे सलिलादर्शयोरपि।
अङ्गेषु विकृता यस्य च्छाया प्रेतस्तथाविधः॥ ३॥

गङ्गाधरः—अथेत्यादि। अथ कतमानिशरीरीयेन्द्रियव्याख्यानन्तरमतः शरीरीयत्वात् प्रतिच्छायादीनां परीक्षार्थं पन्नरूपीयमिन्द्रियं व्याख्यास्याम इत्यर्थः। पन्नं गतं विनष्टं रूपं यस्याः सा पन्नरूपा। तामधिकृत्य कृत इति पन्नरूपीयस्तं तथा। सर्व्वं पूर्व्ववत्॥ १॥

गङ्गाधरः—दृष्ट्वेत्यादि। यस्याक्ष्णोः दृष्ट्वा भिषक् प्रतिच्छायामयीं स्वकीयप्रतिविम्बमयीं कुमारिकां पुत्तलिकां पन्नरूपां विगतरूपां विजानीयात्, तमेनं पुरुषं चिकित्सितुं नेच्छेदसाध्यत्वात्॥ २॥

गङ्गाधरः—ज्योत्स्नायामित्यादि। यस्य अङ्गेषु ज्योत्स्नादिनिविष्टप्रतिविम्वरूपाङ्गेषु च्छाया छविर्विकृता विकृतिमापन्ना स्वरूपान्तरप्राप्ता, तथाविधः स प्रेतो मृत एवाचिरान्मृत्युत्वात्॥ ३॥

चक्रपाणिः—व्याधिरूपानन्तरं वेदनोपद्रवौ सत्त्वस्वप्नौ च पूर्व्वाध्याय एव "शूलाटोपान्त्रकूजश्च" इत्यादिना रिष्टरूपावुक्तावेवेति कृत्वा च्छायाप्रतिच्छायारूपारिष्टस्य क्रमप्राप्तस्याभिधायकं पन्नरूपीयमुच्यते। पन्नरूपामधिकृत्य कृतं पन्नरूपीयम्॥ १॥

चक्रपाणिः—पन्नरूपामिति नष्टरूपाम्। कुमारिकामिति पुरुषान्तरनयनगतां कुमारिकाम्। किंवा आतुरनयनगतामेव। यदुक्तं हारीते—"अदर्शनमसंघाते नेत्र नष्टकुमारिके" इति। प्रतिच्छायामयीमिति प्रतिच्छायारूपाम्॥ २॥

चक्रपाणिः—अन्यत्रापि च्छायाविकृतिमाह—ज्योत्स्नेत्यादि। अङ्गेषु विकृतेति शिरोबाहु-

* दृष्टाम् इति बहुषु ग्रन्थेषु पाठः।

छिन्ना च्छिद्राकुला च्छाया हीना वाप्यधिकापि वा ।
नष्टा तन्वी द्विधाच्छिन्ना विकृता * विशिराश्च या ॥
एताश्चान्याश्च याः काश्चित् प्रतिच्छाया विगर्हिताः ।
सर्व्वा मुमूर्षतां ज्ञेया न चेल्लक्ष्यनिमित्तजाः ॥ ४ ॥
संस्थानेन प्रमाणेन वर्णेन प्रभयापि वा ।
छाया विवर्त्तते यस्य स्वस्थोऽपि प्रेत एव सः ॥

गङ्गाधरः—अस्याः प्रतिच्छायायाः विकृतिमाह—छिन्नेत्यादि । यस्य ज्योत्स्नादिषु च्छाया प्रतिविम्बरूपा प्रतिच्छायेत्यर्थः छिन्ना विच्छिन्नरूपा, किंवा च्छिद्रा च्छिद्रवती, अथवा आकुला आविला अनिश्चितप्रतिविम्बरूपा, हीना वा केनापि अङ्गप्रत्यङ्गतः न्यूना, किंवा अधिका, अथवा नष्टा ज्योत्स्नादिषु च्छाया न दृश्यते, किंवा तन्वी अतिसूक्ष्मरूपा, अथवा द्विधाच्छिन्ना ज्योत्स्नादिषु द्विधाच्छेदवती दृश्यते । अथवा विकृता अननुकारिणी, किंवा विशिरा शिरोहीना । एता याः प्रतिच्छाया अन्या वा याः काश्चित् विगर्हिताः प्रतिच्छायाः सर्व्वाः एव ताः प्रतिच्छाया मुमूर्षतां ज्ञेयाः, चेत् यदि लक्ष्यनिमित्तजा न स्युः । लक्ष्या ज्योत्स्नादयस्तद्दोषनिमित्तजा न चेद्भवेयुरित्यर्थः । लक्ष्यदोषनिमित्तास्तु न रिष्टलक्षणम् इत्यर्थः ॥ ४ ॥

गङ्गाधरः—संस्थानेनेत्यादि । संस्थानमाकृतिः च्छाया स्वमूर्त्तिर्नात्र प्रतिच्छाया, यस्य विवर्त्तते रूपान्तरत्वेन वर्त्तते स स्वस्थ आतुरोऽपि प्रेत एव ।

जलादिष्वधिकरणभूतेषु प्रतिच्छाया यस्य विकृता भवतीत्यर्थः । तेन व्यस्तसमस्ताङ्गविकृता च्छाया गृह्यते । अन्ये तु विभक्तिविपरिणामादङ्गानामिति व्याख्यानयन्ति, तथा च सुगम एवार्थः ॥ २ ॥

चक्रपाणिः—एतानेव च्छायाविकृतिभेदानाह—छिन्नेत्यादि । आकुलेति अनिश्चितप्रतिबिम्बा । अविकृता विकृतानुकारिणी । यद्यप्यरिष्टाधिकारे अनिमित्तमेव यद् भवति तदरिष्टमुक्तम्, तथापि पुनः स्पष्टार्थं 'न चेल्लक्ष्यनिमित्तजाः' इत्युक्तम् ॥ ४ ॥

चक्रपाणिः—सम्प्रति च्छायारूपं सामान्येन दर्शयन् छायाश्रयारिष्टमाह—संस्थानेनेत्यादि । एतच्च प्रतिच्छायायाः समानं सूत्रम् । तत्र संस्थानेन प्रमाणेन च्छायायाः प्रतिच्छायायाः स्वरूप-

* अविकृतेति चक्रः ।

संस्थानमाकृतिर्ज्ञेया सुषमा विषमा च या।
मध्यमल्पं महच्चोक्तं प्रमाणं त्रिविधं नृणाम् ॥ ५ ॥
प्रतिप्रमाणसंस्थाना जलादर्शातपादिषु।
छाया या सा प्रतिच्छाया या च वर्णप्रभाश्रया ॥ ६ ॥
खादीनां पञ्च पञ्चानां च्छाया विविधलक्षणाः।
नाभसी निर्म्मला नीला सस्नेहा सप्रभेव च ॥
रुक्षा श्यावारुणा या तु वायवी सा हतप्रभा।
विशुद्धरक्ता त्वाग्नेयी दीप्ताभा दर्शनप्रिया ॥

संस्थानं विवृणोति—संस्थानमित्यादि। संस्थानमाकृतिर्नाम ज्ञेया सा चाकृतिः द्विविधा सुषमा विषमा च। सुषमा अविकृता शोभनरूपा, विषमा समाद्विगता नातिशोभना इत्यर्थः। प्रमाणं विवृणोति—मध्यमित्यादि ॥ ५ ॥

गङ्गाधरः—प्रतिच्छायां विवृणोति—प्रतीत्यादि। प्रमाणसंस्थानयोः प्रति सरूपा या च्छाया जलादिषु सा प्रतिच्छाया। एवं जलादिषु वर्णप्रभाश्रया वर्णप्रभयोरपि अनुरूपा या च्छाया सापि प्रतिच्छाया, छायामाह लोके ॥ ६ ॥

गङ्गाधरः—खादीनामित्यादि। खादीनां पञ्चानां भूतानां पञ्च च्छायाः संस्थानप्रमाणवर्णप्रभारूपविविधलक्षणाः। तद् यथा—तदाह नाभसीत्यादि। नाभसी च्छाया तु सा या नीला निर्म्मला सस्नेहा स्निग्धेत्यर्थः। सप्रभेव प्रभावतीव, न हि प्रभा सम्भवत्याकाशस्य किन्तु वैशद्यात् सप्रभेव। वायवीच्छायामाह—रुक्षेत्यादि। हतप्रभा प्रभाहीना। आग्नेयीं च्छायामाह—

कथनम् तथा वर्णेन प्रभया च च्छायायाः स्वरूपकथनम्। संस्थानेन प्रमाणेन च सदृशी च्छाया प्रतिच्छाया ज्ञेया। वर्णेन प्रभया च लक्षिता वर्णप्रभाश्रयाऽग्रे वक्ष्यमाणा पञ्चविधा ज्ञेया। अत्र यत्तदोर्नित्याभिसम्बन्धात् सा इत्यध्याहार्य्यते। तेन संस्थानादिभिर्या च्छाया प्रतिच्छायारूपा, सा यस्य विवर्त्तते अन्यथा भवति स प्रेत एवेति योजना।

प्रतिच्छायाकारभूते संस्थानप्रमाणे एव विवृणोति—संस्थानमित्यादि। आकृतिराकारः। प्रतीत्यादि प्रतिच्छायाविवरणम्। 'छाया वर्णप्रभाश्रया' इत्यादि तु च्छायाविवरणं भविष्यति। प्रतिप्रमाणसंस्थानेत्यत्र प्रति सादृश्ये। तेन प्रमाणसदृशी संस्थानसदृशी। प्रमाणसंस्थानसदृशतया जलादिषु या च्छाया सा प्रतिच्छाया। छाया तु या पञ्चविधा सा वर्णप्रभाश्रया वर्णप्रभासहचरितोपलभ्यत इत्यर्थः ॥ ५।६ ॥

चक्रपाणिः—खादीनामित्यादिना च्छायां विभजते। सप्रभेति दीप्ताभा।

शुद्धवदूर्य्यविमला सुस्निग्धा चाम्भसी शुभा ।
स्थिरा स्निग्धायता * श्लक्ष्णा श्यामा श्वेता च पार्थिवी ॥७
वायवी गर्हिता तासां चतस्रः स्युः शुभोदयाः ।
वायवी तु विनाशाय क्लेशाय महतेऽपि वा ॥ ८ ॥
स्यात् तैजसी प्रभा सर्व्वा सा तु सप्तविधा स्मृता ।
रक्ता पीता सिता श्यावा हरिता पाण्डुराऽसिता ॥
तासां याः स्युर्विकाशिन्यः स्निग्धाश्च विपुलाश्च याः ।
ताः शुभा रुक्षमलिनाः संक्लिष्टा-†-श्चाशुभोदयाः ॥ ९ ॥

विशुद्धेत्यादि । आग्नेयी च्छाया विशुद्धा निर्म्मला चासौ रक्ता चेति । दीप्ताभा प्रदीप्तद्युतिः । दर्शनप्रिया द्रष्टुः मनोरमा । आम्भसीं छायामाह—शुद्धेत्यादि । शुद्धं वैदूर्य्यमिव विमला निर्म्मला सुस्निग्धा शुभा शोभना च्छाया आम्भसी । पार्थिवीं छायामाह—स्थिरेत्यादि । स्थिरा चिरावस्थायिनी, स्निग्धा चिक्कणरूपा, आयता इति दीर्घा प्रमाणाभिप्रायेणोक्तं संस्थानवर्णप्रभाणां दीर्घत्वाभावात्, श्लक्ष्णा ईषत्श्लक्ष्णा, श्यामा, श्वेता च व्यस्तसमस्ता पार्थिवीयं छाया ॥ ७ ॥

गङ्गाधरः—छायालक्षणान्युक्त्वा तच्छुभाशुभमाह—वायवीत्यादि । तासां पञ्चानां पाञ्चभौतिकीनां छायानां मध्ये गर्हितत्वं विवृणोति—वायवी त्वित्यादि ॥ ८ ॥

गङ्गाधरः—तैजस्याश्छायाया विशेषमाह—स्यात् तैजसीत्यादि । सर्व्वा तैजसी प्रभा, विना हि तैजसतां न प्रभा सम्पद्यते । सा तु तैजसी प्रभा सप्तविधा मता । किं सप्तविधा तदाह—रक्तेत्यादि । तासामित्यादि । तासां रक्तादीनां सप्तानां प्रभाणां मध्ये याः प्रभाः विकाशिन्यः आशुप्रसारिण्यः स्निग्धाश्च

वायवी गर्हितेति वायवी रिष्टे प्रायो भवति । यस्य जन्मप्रभृति वायवी स चापि प्रभूतक्लेशभाग् भवतीति एतदेवाह—वायवीत्यादि । विनाशायेति अकस्मादुत्पन्ना विनाशाय सहजा तु वायवी क्लेशायेति ज्ञेयम् ॥ ७।८ ॥

चक्रपाणिः—सम्प्रति च्छायाश्रयत्वेन वर्णभेद उक्तः, तत्र वर्णभेदास्तद्रिष्टञ्च प्रथमाध्याय एवोक्तम् । प्रभायास्तु भेदं रिष्टञ्चाह—तैजसीत्यादि । प्रभा च यद्यपि प्रथमाध्याय एव संग्रहेणोक्ता,

* स्निग्धा घना इति चक्रधृतः पाठः ।　　† संक्षिप्ता इति वा पाठः ।

वर्णमाक्रामति च्छाया प्रभा * वर्णप्रकाशिनी ।
आसन्ना लक्ष्यते च्छाया प्रकृष्टा भाः प्रकाशते ॥१०॥
नाच्छायो नाप्रभः कश्चिद्विशेषाश्चिह्नयन्ति तु ।
नृणां शुभाशुभोत्पत्तिं काले च्छायाः प्रभाश्रयाः ॥ ११ ॥

विमलाश्च स्युस्ताः तैजस्यः प्रभाः सप्त शुभोदयाः । यास्तु रक्तादयस्तैजस्यः प्रभा रूक्षमलिनाः संक्लिष्टाः उत्पतिताश्च स्युस्ता अशुभोदयाः ॥ ९ ॥

गङ्गाधरः—प्रभाच्छाययोर्भेदमाह—वर्णमित्यादि । छाया वर्णमाक्रामति मलिनीकरोति, प्रभा तु वर्णप्रकाशिनी । तद्विज्ञानार्थमाह लक्षणान्तरम्—आसन्नेत्यादि । छाया न दूराल्लक्ष्यते परन्त्वासन्ना नैकट्यमापन्ना च लक्ष्यते । भाः प्रभा तु प्रकृष्टा विप्रकर्षेण दूरादपि लक्ष्यते । इति च्छायाप्रभयोर्भेदः ॥ १० ॥

गङ्गाधरः—तत्र प्रभागतच्छायाया अशुभशुभत्वमाह—नाच्छाय इत्यादि । कश्चित् पुरुषो नाच्छायश्छायारहितोऽस्ति, न वा अप्रभः प्रभारहितोऽस्ति । तस्मात् सर्व्वाश्छायाः सर्व्वाश्च प्रभा न नृणां शुभं वा अशुभं वा चिह्नयन्ति परन्तु विशेषाश्छायानां प्रभाणाञ्च विशेषाः प्रभेदाः काश्चिच्छायाः काश्च प्रभा नृणां शुभाशुभोत्पत्तिं काले कालपरिणामे चिह्नयन्ति, चिह्नीभूता ज्ञापयन्ति, सुतरां यदा प्रभाविशेषा नृणां शुभाशुभोत्पत्तिं चिह्नयन्ति, तदा ते प्रभाविशेषा स्वरूपान्यत्वेन च्छायाभिन्नैव भवन्तीति । प्रभाश्रयापि च्छाया न त्वतिरिक्ता प्रभा शुभाशुभोत्पत्तिचिह्नकदशायामिति भावः ॥ ११ ॥

तथापि तत्र च्छायाश्रयत्वेन न वर्णभेदा उक्ताः, तत्र वर्णभेदास्तदरिष्टञ्च प्रथमाध्याये संग्रहेणोक्ता-स्तथापि च्छायाश्रयत्वेन न तत्र सूचिता इति ज्ञेयम् । अशुभोदया इत्यकस्मादुत्पादे मरणोदयाः, सहजोत्पादे तु बहुदुःखरूपा अशुभोदया इति ज्ञेयम् ॥ ९ ॥

चक्रपाणिः—प्रभाच्छाययोर्दुर्लक्षणत्वेन भेदकं लक्षणमाह—वर्णमिति । वर्णमाक्रामतीति च्छाया-क्रान्तो वर्णो नोपलभ्यते सम्यक् । आसन्ना लक्ष्यते च्छाया । यथा—चित्रगता च्छाया प्रत्यासन्नैव लक्ष्यते । भाः प्रकृष्टा प्रकाशते यथा मणिमौक्तिकादीनां प्रभा दूरादुपलभ्यत इत्यर्थः ॥ १० ॥

चक्रपाणिः—विशेषा इति च्छायाप्रभयोः शुभाशुभरूपविशेषाः । चिह्नयन्तीति गमयन्ति ।

---

* भास्तु इति चक्रधृतः पाठः ।

कामलाक्ष्णोर्मुखं पूर्णं शङ्खयोर्मुक्तमांसता * ।
सन्त्रासश्चोष्णता चाङ्गे † यस्य तं परिवर्ज्जयेत् ॥ १२ ॥
उत्थाप्यमानः शयनात् प्रमोहं याति यो नरः ।
मुहुर्म्मुहुर्न सप्ताहं स जीवति विकत्थनः ॥ १३ ॥
संसृष्टा व्याधयो यस्य प्रतिलोमानुलोमगाः ।
व्यापन्ना ग्रहणी प्रायः सोऽर्द्धमासं न जीवति ॥ १४ ॥

गङ्गाधरः—छायाविशेषमुक्त्वाऽपरमरिष्टं दर्शयति—कामलेत्यादि। यस्याक्ष्णोर्द्वयोः कामला, मुखञ्च पूर्णमुपचितं न कृशम्, शङ्खयोर्ल्ललाटोभयदेशयोर्मुक्तमांसता हीनमांसता, सन्त्रासः सम्यक्त्रासस्तथाङ्गेषु चोष्णता, तं नरं परिवर्ज्जयेत् ॥ १२ ॥

गङ्गाधरः—उत्थाप्येत्यादि। शयनात् निद्रितस्तु निद्रातः शयानः शय्यातो वा यदि उत्थाप्यमानो मुहुर्म्मुहुरेव प्रमोहं याति, विकत्थनः विशेषेण श्लाघया वैद्यो वदेत् इति भावः ॥ १३ ॥

गङ्गाधरः—संसृष्टा इत्यादि। यस्य संसृष्टा अनेकव्याधयो मिलितास्तत्र मध्ये कश्चित् प्रतिलोमगोऽपरश्चानुलोमग ऊर्द्ध्वमार्गगोऽधोमार्गग इत्यर्थः। प्रायो ग्रहणी ग्रहणशीला नाड़ी व्यापन्ना ग्रहण्यध्यायोक्तदोषवती सोऽर्द्धमासं न जीवति ॥ १४ ॥

काल इति परिपाककाले। कामलाक्ष्णोरिति कामलिन इव पीताक्षत्वम्। विकत्थन इति निन्दापरः। संसृष्टा इति परस्परसंबद्धाः। किंवा संसृष्टदोषजन्याः। प्रतिलोमानुलोमगा इति अधोमार्गोर्द्ध्वमार्गगताः। व्यापन्ना ग्रहणीति च्छेदः। किंवा व्यापन्ना ग्रहणी यस्य स व्यापन्नग्रहणीक इति पाठः। 'प्रायशोऽर्द्धमासं न जीवति' इत्यनेनार्द्धमासमतिक्रम्यापि मरणं भवति, न तु मरणव्यभिचारः ॥ ११—१४ ॥

* गण्डयोर्मुक्तमांसता इति पाठान्तरम्। † चोष्णगात्रश्च इति वा पाठः

उपरुद्धस्य योगेन कर्षितस्याल्पमश्नतः।
बहु मूत्रपुरीषं स्याद् यस्य तं परिवर्ज्जयेत् ॥ १५ ॥
दुर्ब्बलो बहु भुङ्क्ते यः प्रागभुक्तादन्नमातुरः *।
अल्पमूत्रपुरीषश्च यथा प्रेतस्तथैव सः ॥ १६ ॥
वर्द्धिष्णुं †गुणसम्पन्नमन्नमश्नाति यो नरः।
शश्वच्च बलवर्णाभ्यां हीयते न स जीवति ॥ १७ ॥
प्रकूजति प्रश्वसिति शिथिलश्चातिसार्य्यते।
बलहीनः पिपासार्त्तः शुष्कास्यो न स जीवति ॥ १८ ॥
ह्रस्वञ्च यः प्रश्वसिति व्याविद्धं स्पन्दते च यः।
मृतमेव तमात्रेयो व्याचचक्षे पुनर्व्वसुः ॥ १९ ॥

गङ्गाधरः—उपरुद्धस्येत्यादि। व्याधिना कर्षितस्य योगेनोपरुद्धस्याल्पमश्नतो यस्य मूत्रपुरीषं बहु स्यात् तं परिवर्ज्जयेत् ॥ १५ ॥

गङ्गाधरः—दुर्ब्बल इत्यादि। य आतुरः प्रागभुक्तात् अनातुर्य्यावस्थायां यावन्मितं भुक्तमासीत् तदभुक्ताद्बहुमानमन्नमातुरः सन् आतुर्य्यावस्थायां भुङ्क्तेऽथच दुर्ब्बलः अल्पमूत्रपुरीषश्च स्यात्, स यथा प्रेतो मृतो नरस्तथा, अर्थादासन्नमृत्युरित्यर्थः ॥ १६ ॥

गङ्गाधरः—वर्द्धिष्णुगुणेत्यादि। यो नरो वर्द्धिष्णुगुणसम्पन्नमन्नं न तु हीनगुणमन्नं वर्द्धिष्णु क्रमेण मानतोऽधिकमश्नाति शश्वच्च दिने दिने च बलवर्णाभ्यां हीयते, स न जीवति ॥ १७ ॥

गङ्गाधरः—प्रकूजतीत्यादि। यः प्रकूजति अव्यक्तशब्दं करोति प्रश्वसिति च शिथिलं द्रवं यथा स्यात् तथातिसार्य्यते बलहीनादिश्च भवति, स न जीवति ॥ १८ ॥

गङ्गाधरः—ह्रस्वञ्चेत्यादि। यो ह्रस्वमदीर्घं व्याविद्धं कुटिलम् ॥ १९ ॥

चक्रपाणिः—प्रागभुक्तेति अदुर्ब्बलः सन्नभुक्तेत्यर्थः। पूर्व्वदिनेषु बहु भुङ्क्ते इत्यर्थः। इष्टमिति इष्टरसम्। गुणसम्पन्नमिति पथ्यम्। शिथिलमिति पूर्व्वेण संबध्यते। तेन श्लथ इव प्रकूजति। प्रश्वसितीत्यन्तःश्वासं नयति। व्याविद्धमिति कुटिलम् ॥ १५—१९ ॥

* प्रागभुक्तान्नमाश्रितः इति वा पाठः। † इष्टञ्च इति चक्रः।

ऊर्द्ध्वश्च यः प्रश्वसिति श्लेष्मणा चाभिभूयते।
हीनवर्णबलाहारो नरो वा न स जीवति ॥ २० ॥
ऊर्द्ध्वाग्रे नयने यस्य यस्यानारतकम्पने *।
बलहीनः पिपासार्त्तः शुष्कास्यो न स जीवति ॥ २१ ॥
यस्य गण्डावुपचितौ ज्वरकासौ च दारुणौ।
शूली प्रद्वेष्टि चाप्यन्नं तस्मिन् कर्म्म न सिध्यति ॥ २२ ॥
व्यावृत्तमुखजिह्वस्य भ्रुवौ यस्य च विच्युते।
कण्टकैश्चाचिता जिह्वा यथा प्रेतस्तथैव सः ॥ २३ ॥
शेफश्चात्यर्थमुत्सिक्तं निःसृतौ वृषणौ भृशम्।
अतश्चैव विपर्य्यासो विकृत्या प्रेतलक्षणम् ॥ २४ ॥

गङ्गाधरः—ऊर्द्ध्वमित्यादि। श्लेष्मणाभिभूयते कण्ठ आव्रियते। हीनवर्णादिको वा, स न जीवति ॥ २० ॥

गङ्गाधरः—ऊर्द्ध्वाग्रे इत्यादि। यस्य नयने द्वे ऊर्द्ध्वाग्रे। यस्य वा नयने द्वे अनारतं सततं कम्पने सततकम्पनशीले भवतः। बलहीनादिः स च न जीवति ॥ २१ ॥

गङ्गाधरः—यस्येत्यादि स्पष्टम् ॥ २२ ॥

गङ्गाधरः—व्यावृत्तेत्यादि। व्यावृत्तं स्वरूपान्यथारूपं मुखजिह्वं यस्य। विच्युते अधोनते। कण्टकैः कण्टकाकारैराचिता व्याप्ता जिह्वा ॥ २३ ॥

गङ्गाधरः—शेफश्चेत्यादि। यस्य विकृत्या शेफो मेढमत्यर्थमुत्सिक्तमन्तःप्रविष्टं, वृषणौ च भृशं निःसृतौ निर्गतौ, त्वेतत् प्रेतलक्षणं मृतस्य लक्षणम्। एवं

चक्रपाणिः—ऊर्द्ध्वाग्रे इति ऊर्द्ध्वमुखे। आरतकम्पने अविश्रान्तकम्पने। उत्सिक्तमिति अन्तःप्रविष्टम्। अतश्चैवं विपर्य्यास इति शेफोऽतिनिःसृतं वृषणौ चापि प्रविष्टौ। विकृत्येति

* मन्ये चारतकम्पने इति पाठश्चक्रसम्मतः।

**निचितं यस्य मांसन्तु त्वगस्थि * चैव दृश्यते।**
**क्षीणस्यान्यूनतस्तस्य मासमायुः परं भवेत्॥ २५॥**

विकृत्यैवातो विपर्य्यासे च प्रेतलक्षणम्। तद् यथा—शेफो भृशं निःसृतं वृषणौ चात्यर्थमन्तःप्रविष्टौ इत्यर्थः। विकृत्येति वचनेन प्रकृत्या यस्य त्वेवं तन्न रिष्टमिति ख्यापितम्॥ २४॥

गङ्गाधरः—निचितमित्यादि। यस्य मांसं शरीरे निचितं सम्पूर्णम्। त्वगस्थि च दृश्यते, यस्य क्षीणस्यान्यूनतः सम्पूर्णतः मांसहीनस्य त्वगस्थि च निचितं दृश्यते, तस्य मासं व्याप्य परमायुर्भवेदित्यर्थः। सुश्रुतेऽपि—श्यावा लोहितिका नीला पीतिका वापि मानवम्। अभिद्रवन्ति यं छायाः स परासुरसंशयम्॥ अभिद्रवन्ति अभिधावन्ति। ह्रीश्रियौ नश्यतो यस्य तेजओजः-स्मृतिप्रभाः। अकस्माद् यं भजन्ते वा स परासुरसंशयम्। यस्याधरौष्ठः पतितः क्षिप्तश्चोर्द्ध्वं तथोत्तरः। उभौ वा जाम्बवाभासौ दुर्लभं तस्य जीवितम्। आरक्ता दशना यस्य श्यावा वा स्युः पतन्ति वा। खञ्जनप्रतिमा वापि तं गतायुषमादिशेत्। कृष्णा स्तब्धावलिप्ता वा जिह्वा शूना च यस्य वै। कर्कशा वा भवेद् यस्य सोऽचिराद्विजहात्यसून्। कुटिला स्फुटिता वापि शुष्का वा यस्य नासिका। अवस्फूर्ज्जति मग्ना वा न स जीवति मानवः। संक्षिप्ते विषमे स्तब्धे रक्ते स्तब्धे च लोचने। स्यातां वा प्रस्रुते यस्य स गतायुर्नरो ध्रुवम्। केशाः सीमन्तिनो यस्य संक्षिप्ते विनते भ्रुवौ। लुनन्ति चाक्षिपक्ष्माणि सोऽचिराद् याति मृत्यवे। नाहरत्यन्नमास्यस्थं न धारयति यः शिरः। एकाग्रदृष्टिर्मूढ़ात्मा सद्यः प्राणान् जहाति सः। बलवान् दुर्ब्बलो वापि संमोहं योऽधिगच्छति। उत्थाप्यमानो बहुशस्तं धीरः परिवर्ज्जयेत्। उत्तानः सर्व्वदा शेते पादौ विकुरुत च यः। विप्रसारणशीलो वा न स जीवति मानवः। शीतपादकरोच्छ्वास-श्छिन्नश्वासश्च यो भवेत्। काकोच्छ्वासश्च

स्वभावं विना। तेन स्वभावोत्सिक्तशेफादि न रिष्टम्। किन्त्वनिमित्तं कादाचित्कं तदेव तावद् अरिष्टम्। निचितमिति क्षीणं 'नि'शब्दस्य प्रतिषेधार्थत्वात्। एवञ्च तथा मांसं क्षीणं भवति। यथा

* त्वगस्थिश्चैव इति चक्रः।

यो मत्त्यस्तं धीरः परिवर्ज्जयेत्। निद्रा न च्छिद्यते यस्य यो वा जागर्त्ति सर्व्वदा। मुह्येद्वा वक्तुकामस्तु प्रत्याख्येयः स जानता। उत्तरौष्ठञ्च यो लिह्यादुद्गारांश्च करोति यः। प्रेतैर्वा भाषते सार्द्धं प्रेतरूपं तमादिशेत्॥ खेभ्यः सरोमकूपेभ्यो यस्य रक्तं प्रवर्त्तते। पुरुषस्याविषार्त्तस्य सद्यो जह्यात् स जीवितम्। वाताष्ठीला तु हृदये यस्योर्द्ध्वमनुयायिनी। रुजान्नविद्वेषकरी स परासुरसंशयम्। अनन्योपद्रवकृतः शोफः पादसमुत्थितः। पुरुषं हन्ति नारीञ्च मुखजो गुह्यजो द्वयम्। अतिसारो ज्वरो हिक्का च्छर्द्दिः शूनाण्डमेढ्रता। श्वासिनः कासिनो वापि यस्य तं परिवर्ज्जयेत्। स्वेदो दाहश्च बलवान् हिक्का श्वासश्च मानवम्। बलवन्तमपि प्राणैर्वियुञ्जन्ति न संशयम्। श्यावा जिह्वा भवेद् यस्य सव्यञ्चाक्षि निमज्जति। मुखञ्च जायते पूति यस्य तं परिवर्ज्जयेत्। वक्त्रमापूर्य्यतेऽश्रूणा स्विद्यतश्चरणावुभौ। चक्षुश्चाकुलतां याति यमराष्ट्रं गमिष्यतः। अतिमात्रं लघूनि स्युर्गात्राणि गुरुकाणि च। यस्याकस्मात् स विज्ञेयो गन्ता वैवस्वतालयम्। पङ्कमत्स्यवसातैलघृतगन्धाश्च ये नराः। मृष्टगन्धांश्च ये वान्ति गन्तारस्ते यमालयम्। यूका ललाटमायान्ति बलिं नाश्नन्ति वायसाः॥ येषां वापि रतिर्नास्ति यातारस्ते यमालयम्। ज्वरातिसारशोफाः स्युर्यस्यान्योन्यावसादिनः। प्रक्षीणबलमांसस्य नासौ शक्यश्चिकित्सितुम्। क्षीणस्य यस्य क्षुत्तृष्णे हृद्यैरिष्टैर्हितैस्तथा। न शाम्यतोऽन्नपानैश्च तस्य मृत्युरुपस्थितः। प्रवाहिका शिरःशूलं कोष्ठशूलञ्च दारुणम्। पिपासा बलहानिश्च तस्य मृत्युरुपस्थितः। विषमेणोपचारेण कर्म्मभिश्च पुराकृतैः। अनित्यत्वाच्च जन्तूनां जीवितं निधनं व्रजेत्। प्रेतभूतपिशाचाश्च रक्षांसि विविधानि च। मरणाभिमुखं नित्यमुपसर्पन्ति मानवम्। तानि भेषजवीर्य्याणि प्रतिघ्नन्ति जिघांसया। तस्मान्मोघाः क्रियाः सर्व्वा भवन्त्येव गतायुषः॥ इति॥ २५॥

त्वगस्थिष्वेव लग्ना दृश्यते। किंवा निचितमुपचितं मांसं स्यात्। त्वगस्थिष्वेव दृश्यते त्वगस्थिमात्रावशेषो वा भवतीति यावत्॥ २०—२६॥

तत्र श्लोकः।

इदं लिङ्गमरिष्टाख्यमनेकमभिजज्ञिवान्।
आयुर्व्वेदविदित्याख्यां लभते कुशलो जनः॥ २६॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते इन्द्रियस्थाने
पन्नरूपीयमिन्द्रियं नाम सप्तमोऽध्यायः॥ ७॥

गङ्गाधरः—अध्यायार्थमुपसंहर्त्तुमाशिषमाह—तत्र श्लोक इत्यादि। इदमित्यादि। अभिजज्ञिवान् अभिज्ञातवान् कुशलो जन आयुर्व्वेदवित् इत्याख्यां लभते॥ २६॥

अध्यायं समापयति—अग्नीत्यादि।

इति वैद्यश्रीगङ्गाधरकविरत्नविरचिते चरकजल्पकल्पतरौ इन्द्रियस्थानजल्पे पञ्चमस्कन्धे पन्नरूपीयेन्द्रियजल्पाख्या सप्तमी शाखा॥ ७॥

इति महामहोपाध्यायचरकचतुराननश्रीमच्चक्रपाणिदत्तविरचितायामायुर्व्वेददीपिकायां चरकतात्पर्य्यटीकायाम् इन्द्रियस्थाने पन्नरूपीयमिन्द्रियं नाम सप्तमोऽध्यायः॥ ७॥

---

## अष्टमोऽध्यायः ।

अथातोऽवाक्शिरसीयमिन्द्रियं व्याख्यास्यामः,
इतिह स्माह भगवानात्रेयः ॥ १ ॥

अवाक्शिरा वा जिह्मा वा यस्य वा विशिरा भवेत् ।
जन्तो रूपप्रतिच्छाया नैनमिच्छेच्चिकित्सितुम् ॥ २ ॥
जडीभूतानि पक्ष्माणि दृष्टिश्चापि न गृह्यते ।
यस्य जन्तोर्न तं धीरो भेषजेनोपपादयेत् ॥ ३ ॥
यस्य शूनानि वर्त्मानि न समायान्ति शुष्यतः ।
चक्षुषी चोपदह्येते यथा प्रेतस्तथैव सः ॥ ४ ॥

गङ्गाधरः—अथ पन्नरूपीयेन्द्रियानन्तरम् । अतश्छायाधिकारात् हेतोरवाक्शिरसीयमिन्द्रियम्, अवाक्शिरा इति पदार्थमधिकृत्य, कृतमिन्द्रियम् व्याख्यास्यामः ॥ १ ॥

गङ्गाधरः—अवाक्शिरा इत्यादि । यस्य जन्तो रूपप्रतिच्छाया जलादर्शज्योत्स्नातपादिषु मूर्त्तिप्रतिविम्बः अवाक्शिरा ऊर्द्ध्वपदा स्यादथवा जिह्मा कुटिला स्यादथवा विशिरा विवर्त्तितमस्तका वा स्यादेनं चिकित्सितुं नेच्छेत् ॥ २ ॥

गङ्गाधरः—जडीभूतानीत्यादि । यस्य जन्तोः पक्ष्माणि जडीभूतानि मिलितानि भवन्ति न च तैर्दृष्टिर्गृह्यते तं जन्तुं धीरो न भेषजेनोपपादयेत् । सुश्रुतेऽप्युक्तं—मिलन्ति चाक्षिपक्ष्माणि सोऽचिराद् याति मृत्यवे ॥ इति ॥ ३ ॥

गङ्गाधरः—यस्येत्यादि । यस्य शुष्यतः शोषं गच्छतो जन्तोर्वर्त्मानि चक्षुषोश्चत्वारि उपर्य्यधोवर्त्मानि शूनानि शोफवन्ति भवन्ति न समायान्ति सम्यक्त्वं परस्परं सङ्गततया मिलनं नायान्ति, चक्षुषी च उपदह्येते, स यथा प्रेतस्तथैव स्यादित्यर्थः ॥ ४ ॥

चक्रपाणिः—उक्तानुक्तपरिग्राहकेऽध्यायत्रये वक्तव्ये च्छायारिष्टाभिधायकत्वसाधर्म्यादवाक्शिरसीयोऽभिधीयते । अवाक्शिरा इति ऊर्द्ध्वपादः । एत च्छायाप्रकरणवक्तव्यमपि शीघ्रमारकत्व-

भ्रुवोर्वा यदि वा मूर्द्ध्नि सीमन्तावर्त्तकान् बहून्।
अपूर्व्वान-*-कृतान् व्यक्तान् दृष्ट्वा मरणमादिशेत्॥ ५॥
त्र्यहमेतेन जीवन्ति लक्षणेनातुरा नराः।
अरोगाणां पुनस्त्वेतत् षड़्रात्रं परमुच्यते॥ ६॥
†आयम्योत्पाटितान् केशान् यो नरो नावबुध्यते।
अनातुरो वा रोगी वा षड़्रात्रं नातिवर्त्तते॥ ७॥
यस्य केशा निरभ्यक्ता दृश्यन्तेऽभ्यक्तसन्निभाः।
उपरुद्धायुषं ज्ञात्वा तं धीरः परिवर्ज्जयेत्॥ ८॥

गङ्गाधरः—भ्रुवोरित्यादि। यस्य जन्तोर्भ्रुवोर्द्वयोलामसु अपूर्व्वान् पूर्व्वं न ये सीमन्तावर्त्तकास्तान्, अकृतान् न च कैश्चिन्निमित्तैः कृता ये तान्, व्यक्तान् बहून् सीमन्तावर्त्तकान् दृष्ट्वा यदि वा मूर्द्ध्नि केशेषु दृष्ट्वा तस्य मरणमादिशेत्। अस्य लक्षणस्य स्वस्थातुरत्वदिननियममाह—त्र्यहमित्यादि। एतेन सीमन्तावर्त्तकलक्षणेन आतुरा नरास्त्र्यहं जीवन्ति। अरोगाणान्तु षड़्रात्रम् एतज्जीवनं परं परमायुरुच्यते॥ ५।६॥

गङ्गाधरः—आयम्येत्यादि। अनातुरो रोगी वा यो नरः स्वस्य केशान् परेण वा स्वेन वा आयम्य आयतीकृत्य उत्पाटितान् नावबुध्यते, स षड़्रात्रं नातिवर्त्तते अतिक्रामति। षड़्रात्रं प्राप्य म्रियते इत्यर्थः॥ ७॥

गङ्गाधरः—यस्येत्यादि। यस्य निरभ्यक्तास्तैलादिस्नेहेनाभ्यक्तरहिताः केशा अभ्यक्तसन्निभास्तैलादिस्नेहाभ्यक्तकेशतुल्या दृश्यन्ते, धीरस्तं पुरुषमुपरुद्धायुषं क्षीणायुषं ज्ञात्वा परिवर्ज्जयेत्॥ ८॥

ख्यापनार्थमिह शीघ्रमारकरिष्टेष्वपि पठितम्। अत्र ह्यरिष्टानि त्र्यहादिमारकाणि वक्तव्यानि। समाधास्तीति न परस्परं मिलन्ति। असजानकृतानिति प्रयत्नेनाकृतान्॥ १—६॥

चक्रपाणिः—आयस्येति बलादाकृष्य। यद्यपि "मृतस्य केशलोमानि" इत्यादिनैव तदरिष्टमित्युक्तम्, तथापीहातुरस्वस्थविषयप्रतिपादनार्थमभिधानम्, किञ्च तत्र 'प्रच्यवेरन्' इति पदेन केशानामनुत्पाटनमुक्तम्, नेह तथेति विशेषः॥ ७।८॥

* असजान् इति पाठान्तरं वर्त्तते। † आयस्य इति चक्रपाणिसः पाठः।

ग्लायतो * नासिकावंशः पृथुत्वं यस्य गच्छति ।
अशूनः शूनसङ्काशः प्रत्याख्येयः स जानता ॥ ९ ॥
अत्यर्थविवृता यस्य यस्य चात्यर्थसंवृता ।
जिह्मा वा परिशुष्का वा नासिका न स जीवति ॥ १० ॥
मुखशब्दस्रवावोष्ठौ † शुक्लश्यावातिलोहितौ ।
विकृतौ ‡ यस्य वा नीलौ न स रोगाद्विमुच्यते ॥ ११ ॥
अस्थिश्वेता द्विजा यस्य पुष्पिताः पङ्कसंवृताः ।
विकृत्या न स रोगांस्तु विहायारोग्यमश्नुते ॥ १२ ॥

गङ्गाधरः—ग्लायत इत्यादि । यस्य ग्लायतो हृष्यतः पुरुषस्य नासिकावंशः पृथुत्वं गच्छति, अशूनः सन शूनसङ्काशश्च भवति, स जानता वैद्येन प्रत्याख्येयस्त्याज्यः ॥ ९ ॥

गङ्गाधरः—अत्यर्थेत्यादि । यस्य नासिका जिह्मा कुटिला अत्यर्थविवृता अतिशयविस्तृता निर्गता वा अथवात्यर्थसंवृता कुञ्चिता अनिर्गता वा, यस्य नासिका जिह्मा कुटिला वा परिशुष्का स न जीवति ॥ १० ॥

गङ्गाधरः—मुखेत्यादि । यस्य रोगिणो द्वावोष्ठौ मुखशब्दस्रवौ स्वमुखात् शब्दनिःसृतौ स्रवतः स्रावं कुरुतस्तौ । यदा शब्दं न कुरुते स पुमान्, तदा न स्रवतः । शुक्लवर्णौ श्याववर्णावतिलोहितवर्णौ मिलितत्रयवर्णौ वा । यस्य वा विकृतौ स्वरूपान्यरूपौ नीलौ वा, स तद्रोगान्न मुच्यते ॥ ११ ॥

गङ्गाधरः—अस्थीत्यादि । यस्य रोगिणो द्विजा दन्ता अस्थिश्वेता अस्थिवत् सिता रूक्षाः पुष्पिताः पुष्पवद्गन्धा दन्तश्वेतत्वापेक्षया अतिश्वेता वा

चक्रपाणिः—ग्लायत इति दौर्बल्यं भजते । अशून इति परमार्थतोऽशूनः । विवृतेति निर्गता । संवृतेति प्रविष्टा । शब्दस्रवौ कर्णौ । विकृत्येति सहजं विना तथा हेतुं विनेत्यर्थः ॥ ९—११ ॥

---

* ग्लायते इति चक्रः ।　　† मुखं शब्दस्रवावोष्ठौ इति वा पाठः ।

‡ विकृत्या इति पाठान्तरम् ।

स्तब्धा निश्चेतना गुर्व्वी कण्टकोपचिता भृशम्।
श्यावा शुष्काथवा शूना प्रेतजिह्वा विसर्पिणी ॥ १३ ॥
दीर्घमुच्छ्वस्य यो ह्रस्वं नरो निश्वस्य ताम्यति।
उपरुद्धायुषं ज्ञात्वा तं धीरः परिवर्ज्जयेत् ॥ १४ ॥
हस्तौ पादौ च मन्ये च तालु चैवातिशीतलम्।
भवत्यायुःक्षये क्रूरमथवापि भवेन्मृदु ॥ १५ ॥
घट्टयन् जानुना जानु पादावुद्यम्य पातयन्।
योऽपास्यति मुहुर्वक्त्रमातुरो न स जीवति ॥ १६ ॥
दन्तैश्छिन्दन् नखाग्राणि नखैश्छिन्दन् शिरोरुहान्।
काष्ठेन भूमिं विलिखन् न रोगात् परिमुच्यते ॥ १७ ॥

विकृत्या स्वभावं विना पङ्कसंवृताः क्लेदयुक्ताः, स रोगान् विहायारोग्यं नाश्नुते ॥ १२ ॥

गङ्गाधरः—स्तब्धेत्यादि। यस्य जिह्वा स्तब्धा निश्चला निश्चेतना स्पर्श-रसानभिज्ञा गुर्व्वी परिपुष्टा कण्टकोपचिता भृशं कण्टकाकारैरुपचिता व्याप्ता श्यावा शुष्का अथवा शूना शोफवती एवं विसर्पिणी वहिर्निर्गता सा प्रेतजिह्वा प्रतस्याचिरान्मरिष्यतो जिह्वा ॥ १३ ॥

गङ्गाधरः—दीर्घमित्यादि। यो रोगी नरः पूर्व्वं दीर्घमुच्छ्वस्य पश्चात् ह्रस्वं निश्वस्य ताम्यति, तमुपरुद्धायुषं क्षीणायुष ज्ञात्वा धीरः परिवर्ज्जयेत् ॥ १४ ॥

गङ्गाधरः—हस्तावित्यादि। आयुःक्षये नराणां हस्तादिकमतिशीतलं भवति अथवा क्रूरं भवति अपि वा मृदु भवति ॥ १५ ॥

गङ्गाधरः—घट्टयन्नित्यादि। य आतुरो नरो जानुना जानु घट्टयन् पादौ च उद्यम्य उच्चैः कृत्वा क्षिप्त्वा पातयन् मुहुर्वारंवारं वक्त्रम् अपास्यति अपाक्षिपति, स न जीवति ॥ १६ ॥

गङ्गाधरः—दन्तैरित्यादि। रोगी नरो दन्तैर्नखाग्राणि च्छिन्दन् नखैः शिरोरुहान् केशान् च्छिन्दन् काष्ठेन भूमिं विलिखन् रोगान्न परिमुच्यते ॥ १७

चक्रपाणिः—अस्थिवत् श्वेता अस्थिश्वेताः। विसर्पिणी वहिर्निर्गता। निश्वस्येति अन्तरो-

दन्तान् खादति यो जाग्रदसाम्ना विरुदन् हसन् ।
विजानाति न चेद् दुःखं न स रोगाद् विमुच्यते ॥ १८ ॥
मुहुर्हसन् मुहुः क्ष्वेड़न् शय्यां पादेन हन्ति यः ।
उच्चैश्छिद्राणि विमृशन्नातुरो न स जीवति ॥ १९ ॥
यैर्विन्दते पुरा भावैः समेतैः परमां रतिम् ।
तैरेव रममाणस्य ग्लास्नोर्मरणमादिशेत् ॥ २० ॥
न बिभर्त्ति शिरोग्रीवं पृष्ठं वा भारमात्मनः ।
सहनूं पिण्डमास्यस्थमातुरस्य मुमूर्षतः ॥ २१ ॥
सहसा ज्वरसन्तापस्तृष्णा मूर्च्छा बलक्षयः ।
विश्लेषणञ्च सन्धीनां मुमूर्षोरुपजायते ॥ २२ ॥

गङ्गाधरः—दन्तानित्यादि । यो जाग्रत् सन् दन्तान् खादति दन्तकड़कड़ि-ध्वनिं करोति । असाम्ना अशान्तवचनेन विरुदन् रुदन् हसंश्च सन् चेद यदि दुःखं न विजानाति, स रोगी न रोगाद् विमुच्यते ॥ १८ ॥

गङ्गाधरः—मुहुरित्यादि । य आतुरो मुहुर्हसन् सन् मुहुः क्ष्वेड़न् विषादं कुर्व्वन् सन् पादेन शय्यां हन्ति शय्यायामाघातं करोति उच्चैश्छिद्राण्यूर्द्ध्वाङ्गानि च्छिद्राणि कर्णनासादिविवराणि विमृशन् स्पृशन्नर्थात् स्पृशति, स आतुरो न जीवति ॥ १९ ॥

गङ्गाधरः—यैरित्यादि । यैः समेतैः सङ्गतैः भावैर्नरः पुरा परमां रतिं विन्दते तैरेव सङ्गतैर्भावै रममाणस्य क्रीड़तस्तस्य ग्लास्नोरक्रीड़तोऽहृष्यतो मरणमादिशेत् ॥ २० ॥

गङ्गाधरः—न बिभर्त्तीत्यादि । मुमूर्षत आतुरस्य शिरोग्रीवम् आत्मनो भारं न बिभर्त्ति, पृष्ठं वा आत्मनो भारं न बिभर्त्ति, आस्यस्थं पिण्डमन्नग्रासः सहनु हनुसंहितम् आत्मनो भारं न बिभर्त्ति ॥ २१ ॥

गङ्गाधरः—सहसेत्यादि । मुमूर्षोर्नरस्य सहसा ज्वरसन्तापादयः । सन्धीनां विश्लेषणञ्च शैथिल्यम् उपजायते ॥ २२ ॥

ग्रासं नीत्वा । अपास्यति मुहुरिति मुखमाक्षिपति । असाम्ना इति उच्चैः । छिद्राणीति नासाकर्णाक्षिस्रोतांसि ॥ १२—१९ ॥

गोसर्गे वदनाद् यस्य स्वेदः प्रच्यवते भृशम्।
लेपज्वरोपतप्तस्य दुर्लभं तस्य जीवितम् ॥ २३ ॥
नोपैति कण्ठमाहारो जिह्वा कण्ठमुपैति च।
आयुष्यन्तं गते जन्तोर्बलञ्च परिहीयते ॥ २४ ॥
शिरो विक्षिपते कृच्छ्रान्मुञ्चयित्वा प्रपाणिकौ।
ललाटप्रस्रुतस्वेदो मुमूर्षुः श्लथबन्धनः ॥ २५ ॥

तत्र श्लोकः।

इमानि लिङ्गानि नरेषु बुद्धिमान्
विभावयेतावहितो मुहुर्म्मुहुः *।

गङ्गाधरः—गोसर्ग इत्यादि। यस्य लेपज्वरोपतप्तस्य प्रलेपकज्वरवतः गोसर्ग प्रभातकाले वदनात् मुखात् भृशमतिशयं यथा स्यात् तथा स्वेदो घर्म्मः प्रच्यवते, तस्य जीवितं दुर्लभम् ॥ २३ ॥

गङ्गाधरः—नोपैतीत्यादि। जन्तोरायुषि अन्तं शेषं गते सत्याहारो न कण्ठमुपैति जिह्वा च कण्ठमुपैति बलञ्च परिहीयते ॥ २४ ॥

गङ्गाधरः—शिर इत्यादि। मुमूर्षुर्नरः शिरोगतौ स्वप्रपाणिकौ पाणिद्वयाग्रभागौ शिरस्तः कृच्छ्रात् मुञ्चयित्वा आनीय शिरो विक्षिपते चालयते, ललाटप्रस्रुतस्वेदश्च भवति, श्लथबन्धनः शिथिलसन्धिबन्धनो भवतीति ॥ २५ ॥

गङ्गाधरः—अध्यायार्थोपसंहारार्थमाशिषमाह—तत्र श्लोक इत्यादि। इमानीत्यादि। बुद्धिमान् भिषगवहितोऽवधानपूर्व्वकमिमानि अत्राध्याये प्रोक्तानि लिङ्गानि मरणलक्षणानि नरेषु महुर्म्मुहुर्विभावयेत विशेषेण

चक्रपाणिः—ग्लास्नोरिति क्षीयमाणस्य। भारमात्मन इति ऊर्द्ध्वशरीरम्। पृष्ठमिति

---

* मुमूर्षुषु इति च पाठः।

क्षणेन भूत्वा ह्यपयान्ति कानिचित्
न चाफलं लिङ्गमिहास्ति किञ्चन ॥ २६ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते इन्द्रियस्थाने अवाक्-
शिरसीयमिन्द्रियं नामाष्टमोऽध्यायः ॥ ८ ॥

निरीक्षेत। कस्मात्? हि यस्मादेषु कानिचिल्लिङ्गानि क्षणेन भूत्वा अपयान्ति अपगच्छन्ति। ननु यान्यपयान्ति यान्तु अपरलक्षणेन ज्ञातव्यमिति तैश्च किमित्यत आह—न चेत्यादि। इह एषु चिह्नेषु मध्ये किञ्चन चिह्नं न चाफलं निष्फलमस्ति। यल्लिङ्गं क्षणेन भूत्वापगतं न च ज्ञातं ततोऽन्यच्च लक्षणं किञ्चिन्न यदि भवति तदा तत्र भिषग् मुह्यति, तस्मान्मूहुर्मुहु-र्विभावयेतेत्यर्थः ॥ २६ ॥

अध्यायं समापयति—अग्नीत्यादि।

इति वैद्यश्रीगङ्गाधरकविरत्नविरचिते चरकजल्पकल्पतराविन्द्रियस्थान-
जल्पे पञ्चमस्कन्धेऽवाक्शिरसीयेन्द्रियजल्पाख्याष्टमी शाखा ॥ ८ ॥

शरीराधोभागः। गोसर्ग इति प्रत्यूषे। लेपज्वरः स्वल्पशीतयुक्तः कफज्वरः। कृच्छ्रादित्यस्थीनि मुञ्चयित्वा प्रपाणिकौ मणिबन्धादूर्द्ध्वं कूर्परपर्य्यन्तं शिरो विक्षिपति ॥ २०—२६ ॥

इति महामहोपाध्यायचरकचतुराननश्रीमच्चक्रपाणिदत्तविरचितायामायुर्वेददीपिकायां
चरकतात्पर्य्यटीकायाम् इन्द्रियस्थाने अवाक्शिरसीयमिन्द्रियं
नाम अष्टमोऽध्यायः ॥ ८ ॥

## नवमोऽध्यायः ।

अथातो यस्यश्यावनिमित्तीयमिन्द्रियं व्याख्यास्यामः,
इतिह स्माह भगवानात्रेयः ॥ १ ॥

यस्य श्यावे परिध्वस्ते हरिते चापि दर्शने ।
आपन्नो व्याधिरन्ताय ज्ञेयस्तस्य विजानता ॥ २ ॥
निःसंज्ञः परिशुष्कास्यः संविद्धो * व्याधिभिश्च यः ।
उपरुद्धायुषं ज्ञात्वा तं धीरः परिवर्ज्जयेत् ॥ ३ ॥
हरिताश्च सिरा यस्य लोमकूपाश्च संवृताः ।
सोऽम्लाभिलाषी पुरुषः पित्तान्मरणमश्नुते ॥ ४ ॥

गङ्गाधरः—अथावाक्शिरसीयेन्द्रियानन्तरम् अतश्छायाधिकाराद्धेतोः यस्यश्यावनिमित्तीयमिन्द्रियं व्याख्यास्यामः ॥ १ ॥

गङ्गाधरः—यस्येत्यादि । यस्य नरस्यातुरस्य दर्शने चक्षुषी परिध्वस्ते नष्टे श्यावे हरिते वा तमापन्नः प्राप्तो व्याधिस्तस्यान्ताय मरणाय विजानता भिषजा ज्ञेय इत्यर्थः ॥ २ ॥

गङ्गाधरः—निःसंज्ञ इत्यादि । यो नरो व्याधिभिः संविद्धो निःसंज्ञः परिशुष्कास्यश्च स्यात्, तम् उपरुद्धायुषं ज्ञात्वा धीरः परिवर्ज्जयेत् ॥ ३ ॥

गङ्गाधरः—हरिताश्चेत्यादि । यस्य सिरा हरिताः पालाशवर्णाः, लोमकूपाश्च संवृता न स्वेदान् वहन्ति स यद्यम्लाभिलाषी स्यात् तदा पित्तात् पित्तजरोगान्मरणमश्नुते ॥ ४ ॥

चक्रपाणिः—यस्यश्यावनिमित्तीयोऽपि उक्तानुक्तरिष्टाभिधायकतया उच्यते । 'यस्यश्याव'-शब्देन लक्षणेन 'यस्यश्याव' इत्यादिग्रन्थोक्तं रिष्टम् ग्राह्यम् । तेन यस्यश्यावरूपनिमित्तं रिष्टमधिकृत्य कृतोऽध्यायः यस्यश्यावनिमित्तीयः । समृद्ध उपचितः ॥ १—३ ॥

* समृद्ध इति चक्रव्याख्यातः पाठः ।

शरीरान्ताश्च शोभन्ते शरीरश्चोपशुष्यति ।
बलञ्च हीयते यस्य राजयक्ष्मा हिनस्ति तम् ॥ ५ ॥
अंसाभितापो हिक्का च दर्शनं शोणितस्य च ।
आनाहः पार्श्वशूलञ्च भवत्यन्ताय शोषिणः ॥ ६ ॥
वातव्याधिरपस्मारी कुष्ठी रक्ती-* तथोदरी ।
गुल्मी च मधुमेही च राजयक्ष्मी च यो नरः ॥
अचिकित्स्या भवन्त्येते बलमांसक्षये सति ।
मन्देष्वपि विकारेषु तान् भिषक् परिवर्ज्जयेत् ॥ ७ ॥
विरेचनहतानाहो † यस्तृष्णानुगतो नरः ।
विरिक्तः पुनराध्माति यथा प्रेतस्तथैव सः ॥ ८ ॥

गङ्गाधरः—शरीरान्ताश्चेत्यादि । 'यस्य शरीरान्ता हस्तपादाद्यन्तावयवाः शोभन्ते पुष्टिवर्णप्रभादिभिः साधुभावा भवन्ति शरीरश्चान्तराधिमध्यकाय उपशुष्यति बलमपि च हीयते, तं राजयक्ष्मा हिनस्ति ॥ ५ ॥

गङ्गाधरः—अंसेत्यादि । यस्य शोषिणो राजयक्ष्मिणः अंसाभितापो भुजयोरूर्द्ध्वदेशयोरुपतापः हिक्का च शोणितस्य रक्तस्य दर्शनञ्चानाहः पार्श्वशूलञ्च, अन्ताय मरणाय स्यात् ॥ ६ ॥

गङ्गाधरः—वातव्याधिरित्यादि । वाताज्जातोऽसाधारणो नानात्मजो व्याधिर्यस्य स तथा । रक्ती रक्तपित्ती । अचिकित्स्या असाध्याः । मन्देषु अल्पेष्वपि बलमांसक्षयेऽल्पदोषेष्वपि बहुदोषेषु सुतरां वातव्याध्यादीन् परिवर्ज्जयेत् ॥ ७ ॥

गङ्गाधरः—विरेचनेत्यादि । यो नरो विरेचनहतानाहः विरेचनेन हतो जित आनाहो यस्य स तृष्णानुगतो यदि विरिक्तः सन् पुनराध्माति वायुना पूर्णोदरो भवति, तदा स यथा प्रेतस्तथैव भवति ॥ ८ ॥

चक्रपाणिः—शरीरान्ता हस्तपादादयः । शोभन्त इति राजन्ते, किंवा शोभायुक्ता इव भवन्ति । वात एव व्याधिर्यस्य रोगिणः स वातव्याधिः । तानिति बलमांसक्षययुक्तान् । विरेचनहृत आनाहो यस्य स तथा ॥ ४—८ ॥

* शोफी इत्यन्यत्र पठ्यते ।

† विरेचनहृतानाह इति चक्रः ।

पेयं पातुं न शक्नोति शुष्कत्वादास्यकण्ठयोः।
उरसश्च विबन्धत्वाद् यो नरो न स जीवति ॥ ९ ॥
स्वरस्य दुर्ब्बलीभावं हानिश्च बलवर्णयोः।
रोगवृद्धिमयुक्तया च * दृष्ट्वा मरणमादिशेत् ॥ १० ॥
ऊर्द्ध्वश्वासं गतोष्माणं शूलोपहतवङ्क्षणम्।
शर्म्म चानधिगच्छन्तं बुद्धिमान् परिवर्ज्जयेत् ॥ ११ ॥
†अपस्वरभाषमाणं प्राप्तं मरणमात्मनः ॥
श्रोतारश्चाप्यशब्दस्य दूरतः परिवर्ज्जयेत् ॥ १२ ॥
यं नरं सहसा रोगो दुर्ब्बलं परिमुञ्चति।
संशयप्राप्तमात्रेयो जीवितं तस्य मन्यते ॥

गङ्गाधरः—पेयमित्यादि स्पष्टम् ॥ ९ ॥

गङ्गाधरः—स्वरस्येत्यादि। स्वरस्य दुर्ब्बलीभावं स्वरक्षीणत्वं दृष्ट्वा बलवर्णयोर्हानिश्च दृष्ट्वा अयुक्तया युक्तिं विना अर्थादनुचितक्रमेण रोगवृद्धिश्च दृष्ट्वा सर्व्वेषां रोगिणां मरणमादिशेत् ॥ १० ॥

गङ्गाधरः—ऊर्द्ध्वेत्यादि। गतोष्माणं नित्योष्मस्थानवक्षःशिरोजिह्वादिषु गतोऽतीत उष्मा यस्य तं तथा, शूलोपहतवङ्क्षणं वङ्क्षणदेशेऽतिशयशूलवन्तं शर्म्म च क्षणमपि नाधिगच्छन्तं सर्व्वं रोगिणं बुद्धिमान् परिवर्ज्जयेत् ॥ ११ ॥

गङ्गाधरः—अपस्वरेत्यादि। अपस्वरेण विकृतस्वरेण भाषमाणं नरम् आत्मनो मरणं प्राप्तं परिवर्ज्जयेत्। अशब्दस्य शब्दाभावे सति शब्दस्य श्रोतारश्च परिवर्ज्जयेदिति ॥ १२ ॥

गङ्गाधरः—यं नरमित्यादि। यं दुर्ब्बलं रोगिणं नरं सहसा स रोगो मुञ्चति तस्य जीवितं संशयप्राप्तमात्रेयो मन्यते कश्चित् कश्चिज्जीवति महा-

चक्रपाणिः—अयुक्तेनेत्यनुचितरूपेण अपस्वरमिति विकृतस्वरं यथा भवति तथा भाषमाणम्। किं

* अयुक्तेनेति पाठान्तरम्। † अपस्वरं भाषमाणं इति चक्रधृतः पाठः।

अथ चेज्ज्ञातयस्तस्य याचेरन् प्रणिपाततः ।
रसेनाद्यादिति ब्रूयान्नास्मै दद्याद्विशोधनम् ॥
मासेन चेन्न दृश्येत विशेषस्तस्य शोभनः ।
रसैश्चान्यैर्बहुविधैर्दुर्लभं तस्य जीवितम् ॥ १३ ॥
निष्ठ्यूतञ्च पुरीषञ्च रेतश्चाम्भसि मज्जति ।
यस्य तस्यायुषः प्राप्तमन्तमाहुर्मनीषिणः ॥ १४ ॥

कष्टेनेति संशयमाप्तमित्यनेन ख्यापितम् । तदाह अथ चेदित्यादि । वैद्येन प्रत्याख्यानानन्तरं चेद् यदि तस्य ज्ञातयो भ्रात्राद्यमात्यगणाः प्रणिपाततोऽस्य चिकित्सार्थं याचेरन्, तदा रसेन मांसरसेन पुष्ट्यर्थमद्यादिति वैद्यस्तान् ज्ञातिगणान् ब्रूयात् । न चास्मै दुर्ब्बलाय सहसा रोगमुक्तये विशोधनं दद्यात् कर्षकत्वात् । ननु तेन किं स्यादित्यत आह—मासेनेत्यादि । चेद् यदि मांसरसेन मासमन्नादनेन तस्य दुर्ब्बलस्य शोभनो विशेषः सुलक्षणयोगेन पूर्व्वभावाद्विशिष्टो भावो न दृश्यते, तदा बहुविधैरन्यै रसैरदनेनापि तस्य जीवितं दुर्लभम् । यदि च मासेन मांसरसादनेन शोभनो विशेषो दृश्येत तदा स जीवेदिति मत्वा अन्यैर्बहुविधैः रसैरदनेन चिकित्सेदिति भावः ॥ १३ ॥

गङ्गाधरः—निष्ठ्यूतञ्चेत्यादि । निष्ठ्यूतं निष्ठीवनम् ॥ १४ ॥

भाषमाणमित्याह—मरणमात्मन इति । मरिष्यामि मरिष्यामीति भाषमाणमित्यर्थः । श्रोतारञ्चे त्यादिरिष्टानन्तरं 'संशयप्राप्तमात्रेयः' इत्यादि अनियतारिष्टतया आत्रेयस्यात्र मरणं प्रति सन्देह इति ब्रूते, तत्र, नारिष्टस्य मरणाव्यभिचारित्वमाचार्य्येण प्रयत्नेनोक्तम्, व्युत्पादितञ्चास्माभिः । किञ्च न च वीतसंशयस्यात्रेयस्य संशयोऽस्ति । तेन शिष्यव्युत्पत्त्यर्थमाचार्य्यः संशयं दर्शयति, तथा निर्णयं करोति । यथा "दृष्ट्वा प्रमेहं मधुरं सपिच्छं मधूपमं स्याद् द्विविधो विचारः" इत्यादौ संशयं दर्शयित्वा निर्णयं दर्शितवान्, तथा अत्रापि दुर्ब्बलस्येह रोगमुक्तौ रिष्टं वा स्यात् सर्व्वथा सन्तर्पणाद् व्याधिक्षयो वा स्यादिति सन्देहः, अरिष्टपक्षे तु मरणम् । तत्र 'अथ चेत्' इत्यादिना परीक्षामारभते, परीक्षाञ्च मासादिना विशेषादालभ्य रिष्टत्वावधारणं भवतीति सुव्यवस्थोऽयं ग्रन्थः । दुर्लभमित्यप्राप्यम् ॥ ९—१३ ॥

निष्ठ्यूते यस्य दृश्यन्ते वर्णा बहुविधाः पृथक्।
तच्च सीदेत् पयः प्राप्य न स जीवितुमर्हति ॥ १५ ॥
पित्तमुष्मानुगं यस्य शङ्खौ प्राप्य विशुष्यति।
स रोगः शङ्खको नाम त्रिरात्राद्धन्ति मानवम् ॥ १६ ॥
सफेनं रुधिरं यस्य मुहुरास्यात् प्रसिच्यते।
शूलैश्च तुद्यते कुक्षिः प्रत्याख्येयः स तादृशः ॥ १७ ॥
बलमांसक्षयस्तीव्रो रोगवृद्धिररोचकः।
यस्यातुरस्य लक्ष्यन्ते त्रीन् पक्षान् न स जीवति ॥ १८ ॥

तत्र श्लोकः।

विज्ञानानि मनुष्याणां मरणे प्रत्युपस्थिते।
भवन्त्येतानि संपश्येदन्यान्येवंविधानि च ॥

गङ्गाधरः—निष्ठ्यूते इत्यादि। तच्च निष्ठ्यूतं पयो जलं प्राप्य सीदेत् गलितं स्यात् ॥ १५ ॥

गङ्गाधरः—पित्तमित्यादिना शङ्खकस्यात्रारिष्टाधिकारत्वात् प्रदर्शनम् ॥ १६ ॥

गङ्गाधरः—सफेनमित्यादि। स्पष्टम् ॥ १७ ॥

गङ्गाधरः—बलमांसेत्यादि ॥ १८ ॥

गङ्गाधरः—अध्यायार्थाशेषमाह—विज्ञानानीत्यादि। मनुष्याणामुपस्थितं मरणं प्रति एतानि विज्ञानानि भवन्ति, एतानि संपश्येत्। एवंविधान्यन्यानि च उपस्थितमरणविज्ञानानि सम्यक् पश्येत्। सर्व्वाण्येवोपस्थितमरणविज्ञानानि मनुष्याणां भिषक् पश्येदिति भावः।

चक्रपाणिः—निष्ठ्यूत इत्यादौ बहुविधवर्णयोगः पूर्व्वारिष्टाद्विशेषः। सीदतीति मज्जति। 'पित्तम्' इत्यादिना सूत्रस्थानोक्तोऽपि शङ्खक इह मरणसूचकतयारिष्टत्वेनोच्यते। विज्ञानानीति

तानि सर्व्वाणि लक्ष्यन्ते न तु सर्व्वाणि मानवम् ।
विशन्ति विनशिष्यन्तं तस्माद् बोध्यानि सर्वशः ॥ १६ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते इन्द्रियस्थाने यस्य-
श्यावनिमित्तीयमिन्द्रियं नाम नवमोऽध्यायः ॥ ६ ॥

ननु सर्व्वाण्येवारिष्टचिह्नानि, तर्हि किं सर्व्वानेव पुरुषान् प्रविशन्ति इत्यत आह—तानीत्यादि। तानि उपस्थितमरणविज्ञानानि सर्व्वाण्येवैकैकं पुरुषं प्रति लक्ष्यन्ते कानि कानि जातानि इति कृत्वा अवेक्ष्यन्ते, कानि कस्य भवन्तीति नियमाभावात्। न तु सर्व्वाणि मरणलिङ्गानि विनशिष्यन्तं मरिष्यन्तमेकं मानवं विशन्ति। तस्मात् प्रतिनियतलिङ्गाभावात् सर्व्वशः सर्व्वाण्येवैकैकं मानवं प्रति बोध्यानि भवन्तीत्यर्थः ॥ १९ ॥

अध्यायं समापयति—अग्नीत्यादि।

इति वैद्यश्रीगङ्गाधरकविरत्नविरचिते चरकजल्पकल्पतरौ इन्द्रियस्थानजल्पे पञ्चमस्कन्धे यस्यश्यावनिमित्तीयेन्द्रियजल्पाख्या नवमी शाखा ॥ ९ ॥

लक्षणानि नयनादिवैकृतानि ज्ञेयानि। सर्व्वाणि लक्ष्यन्त इति नाना पुरुषेषु लक्ष्यन्ते। न तु सर्व्वाणि मानवं विशन्तीति न एकं पुरुषं सर्व्वाणि विशन्तीति ॥ १५—१९ ॥

इति महामहोपाध्यायचरकचतुराननश्रीमच्चक्रपाणिदत्तविरचितायामायुर्व्वेददीपिकायां चरकतात्पर्य्यटीकायाम् इन्द्रियस्थाने यस्यश्यावनिमित्तीयेन्द्रियं नाम नवमोऽध्यायः ॥ ९ ॥

## दशमोऽध्यायः।

अथातः सद्योमरणीयमिन्द्रियं व्याख्यास्यामः,
इतिह स्माह भगवानात्रेयः ॥ १ ॥

सद्यस्तितिक्षतः प्राणान् लक्षणानि पृथक् पृथक्।
अग्निवेश ! प्रवक्ष्यामि स स्पृष्टो येन जीवति ॥ २ ॥
वाताष्ठीला सुसंवृत्ता तिष्ठन्ती दारुणा हृदि।
तृष्णयाभिपरीतस्य सद्यो मुष्णाति जीवितम् ॥ ३ ॥
पिण्डिके शिथिलीकृत्य जिह्मीकृत्य च नासिकाम्।
वायुः शरीरे विचरन् सद्यो मुष्णाति जीवितम् ॥ ४ ॥
भ्रुवौ यस्य च्युते स्थानादन्तर्दाहश्च दारुणः।
तस्य हिक्काकरो रोगः सद्यो मुष्णाति जीवितम् ॥ ५ ॥

गङ्गाधरः—अथ यस्यश्यावनिमित्तीयेन्द्रियानन्तरमतश्छायारिष्टमसङ्गात् सद्योमरणीयं सद्योमरणमधिकृत्य कृतमिन्द्रियं व्याख्यास्याम इति ॥ १ ॥

गङ्गाधरः—सद्यस्तितिक्षत इत्यादि। प्राणान् सद्यस्तितिक्षतो वर्त्तमान-शरीरेण भोग्यभोगात् सद्यः क्षान्तीकुर्व्वतः पुरुषस्य पृथक् पृथक् लक्षणानि प्रवक्ष्याम्यग्निवेश ! स यैर्लक्षणैः स्पृष्टो न जीवति ॥ २ ॥

गङ्गाधरः—वाताष्ठीलेत्यादि। दारुणा वाताष्ठीला हृदि वक्षसि सुसंवृत्ता सती तिष्ठन्ती तृष्णयाभिपरीतस्य जीवितं सद्यो मुष्णाति चोरयति ॥३॥

गङ्गाधरः—पिण्डिके इत्यादि। पुरुषस्य वायुः पिण्डिके जान्वधोमांस-पिण्डद्वयं शिथिलीकृत्य नासिकाञ्च जिह्मीकृत्य कुटिलीकृत्य शरीरे विचरन् सद्यो जीवितं मुष्णाति ॥ ४ ॥

गङ्गाधरः—भ्रुवावित्यादि। यस्य यस्मिन् रोगे भ्रुवौ स्थानात् च्युते अधस्तान्नीचे भवतः, अन्तर्दाहश्च दारुणो भवति, स च रोगो यदि तस्य हिक्काकरः स्यात्, तदा तस्य जीवितं सद्यो मुष्णाति ॥ ५ ॥

चक्रपाणिः—व्यवहितमरणप्रतिपादकमरिष्टमभिधाय प्रत्यासन्नमरणप्रतिपादकरिष्टयुक्तः सद्यो-मरणीयोऽभिधीयते। 'सद्यः'शब्देनेह केचित् सप्तरात्रमिच्छन्ति, अपरे त्रिरात्रम्। तितिक्षत

क्षीणशोणितमांसस्य वायुरूर्द्ध्वगतिश्चरन् ।
उभे मन्ये समे यस्य सद्यो मुष्णाति जीवितम् ॥ ६ ॥
अन्तरेण गुदं गच्छन् नाभिञ्च सहसानिलः * ।
कृशस्य वङ्क्षणौ गृह्णन् सद्यो मुष्णाति जीवितम् ॥ ७ ॥
वितत्य पर्शुकाग्राणि गृहीत्वोरश्च मारुतः ।
स्तिमितस्यायताक्षस्य सद्यो मुष्णाति जीवितम् ॥ ८ ॥
हृदयञ्च गुदे चोभे गृहीत्वा मारुतो बली ।
दुर्ब्बलस्य विशेषेण सद्यो मुष्णाति जीवितम् ॥ ९ ॥
वङ्क्षणौ च गुदे चोभे गृहीत्वा मारुतो बली ।
श्वासं संजनयन् जन्तोः सद्यो मुष्णाति जीवितम् ॥ १० ॥

गङ्गाधरः—क्षीणेत्यादि । स्पष्टम् ॥ ६ ॥

गङ्गाधरः—अन्तरेणेत्यादि । कृशस्यानिलो गुदं नाभिञ्चान्तरेण गुदनाभी विना गच्छन् वङ्क्षणौ गृह्णन् जीवितं सद्यो मुष्णाति ॥ ७ ॥

गङ्गाधरः—वितत्येत्यादि । मारुतो नरस्य पर्शुकाग्राणि पार्श्वास्थ्नाम् अग्राणि वितत्य विस्तृतीकृत्य उरो वक्षश्च गृहीत्वा स्तिमितस्य स्तब्धाङ्गस्य आयताक्षस्य स्फारितनेत्रस्य तस्य जीवितं सद्यो मुष्णाति ॥ ८ ॥

गङ्गाधरः—हृदयञ्चेत्यादि । बली मारुतो नरस्य हृदयं वक्षो गुदे चोभे उत्तरगुदञ्चाधरगुदञ्च गृहीत्वा सर्व्वस्यापि जीवितं सद्यो मुष्णाति । दुर्ब्बलस्य विशेषेणातिशीघ्रं जीवितं मुष्णाति ॥ ९ ॥

गङ्गाधरः—वङ्क्षणौ चेत्यादि । स्पष्टम् ॥ १० ॥

इति तितिक्षत इव, प्राणानां प्रियत्वेन स्वयं हननायोग्यत्वात् । पिण्डिके इति जङ्घापिण्डिके ॥ १—६ ॥

चक्रपाणिः—गुदं नाभिञ्चान्तरेणेति गुदनाभिमध्ये । हृदयं गृहीत्वेति हृदयं स्वविकारेण प्राप्येति ॥ ७—१० ॥

* गुदं नाभिञ्चान्तरेण गृह्णाति सहसाऽनिलः इति चक्रोक्तः पाठः ।

नाभिं वस्तिशिरो मूत्रं पुरीषञ्चापि मारुतः।
विबध्य * जनयन् शूलं सद्यो मुष्णाति जीवितम् ॥ ११ ॥
भिद्येते वङ्क्षणौ यस्य वातशूलैः समन्ततः।
भिन्नं पुरीषं तृष्णा च सद्यः प्राणान् जहाति सः ॥ १२ ॥
आप्लुतं मारुतेनेह शरीरं यस्य केवलम्।
भिन्नं पुरीषं तृष्णा च सद्यः प्राणान् जहाति सः ॥ १३ ॥
शरीरं शोफितं यस्य वातशोफेन देहिनः।
भिन्नं पुरीषं तृष्णा च सद्यः प्राणान् जहाति सः ॥ १४ ॥
पक्वाशयसमुत्थाना यस्य स्यात् परिकर्त्तिका।
तृष्णा गुदग्रहश्चोग्रः सद्यः प्राणान् जहाति सः ॥ १५ ॥

गङ्गाधरः—नाभिमित्यादि। नरस्य मारुतो नाभिं विबध्य वस्तिशिरो विबध्य मूत्रं पुरीषञ्चापि विबध्य शूलं जनयन् जीवितं सद्यो मुष्णाति ॥ ११ ॥

गङ्गाधरः—भिद्येते इत्यादि। यस्य नरस्य वातशूलैर्वङ्क्षणौ समन्ततश्चतुर्दिक्षु भिद्येते भेदवत् पीड्येते, पुरीषञ्च भिन्नं द्रवीभूतं भवति, तृष्णा च भवति, स नरः प्राणान् सद्यो जहाति ॥ १२ ॥

गङ्गाधरः—आप्लुतमित्यादि। यस्य केवलं कृत्स्नं शरीरमिह मारुतेन आप्लुतं विगुणीभावेन व्याप्तं, पुरीषञ्च भिन्नं द्रवीभूतं, तृष्णा च वर्त्तते, स प्राणान् सद्यो जहाति ॥ १३ ॥

गङ्गाधरः—शरीरमित्यादि। स्पष्टम् ॥ १४ ॥

गङ्गाधरः—पक्वाशयेत्यादि। परिकर्त्तिका कर्त्तनवत् पीड़ा। गुदग्रहो गुदस्य रुक् ॥ १५ ॥

चक्रपाणिः—वस्तिशीर्षमिति वस्त्यूर्द्ध्वभागम्। प्रच्छिन्नमिति प्रच्छिन्नमिव प्रच्छिन्नं छेदनाकारवेदनायुक्तत्वात्। आप्लुतमिति व्याप्तम्। शोफितमिति शोफयुक्तम्। परिकर्त्तिका परिकर्त्तनाकारा वेदना ॥ ११—१५ ॥

* वस्तिशिरः इत्यत्र वस्तिशीर्षं तथा विबध्य इत्यत्र प्रच्छिन्नमिति पाठान्तरम्।

पक्वाशयमधिष्ठाय हत्वा संज्ञाञ्च मारुतः ।
कण्ठे घुर्घुरकं कृत्वा सद्यो हरति जीवितम् ॥ १६ ॥
दन्ताः कर्द्दमदिग्धाभा मुखं चूर्णकसंयुतम् ।
सिप्रायन्ते च गात्राणि लिङ्गं सद्यो मरिष्यतः ॥ १७ ॥
तृष्णाश्वासशिरोरोग-मोहदौर्ब्बल्यकूजनैः ।
स्पृष्टः प्राणान् जहात्याशु शकृद्भेदेन चातुरः ॥ १८ ॥

तत्र श्लोकः ।

एतानि खलु लिङ्गानि यः सम्यगवबुध्यते ।
स जीवितञ्च मर्त्त्यानां मरणञ्चापि बुध्यते ॥ १९ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते इन्द्रियस्थाने सद्यो-
मरणीयमिन्द्रियं नाम दशमोऽध्यायः ॥ १० ॥

गङ्गाधरः—पक्वाशयेत्यादि । मारुतः पक्वाशयमधिष्ठाय सञ्ज्ञाञ्च हत्वा कण्ठे घुर्घुरकं शब्दं कृत्वा नरस्य प्राणान् सद्यो हरति ॥ १६ ॥

गङ्गाधरः—दन्ता इत्यादि । सद्यो मरिष्यतः पुरुषस्य लिङ्गं—दन्ताः कर्द्दमदिग्धाभा भवन्ति, मुखञ्च चूर्णकसंयुतं शम्बूकशुक्तिकादिभस्मचूर्णयुक्तमिव भवति, गात्राणि च सिप्रायन्ते । सिप्रा नदी, सेवाचरन्ति स्वेदबाहुल्येन रोमाञ्चायन्ते वा इति ॥ १७ ॥

गङ्गाधरः—तृष्णेत्यादि । आतुरो येन केनापि व्याधिना व्याधितस्तृष्णादिभिः स्पृष्टः शकृद्भेदेन च स्पृष्टः आशु प्राणान् जहाति ॥ १८ ॥

गङ्गाधरः—तत्र श्लोक इत्यादिनाशीरस्याध्यायस्य ॥ १९ ॥

अध्यायं समापयति—अग्नीत्यादि ।

इति वैद्यश्रीगङ्गाधरकविरत्नविरचिते चरकजल्पकल्पतरौ इन्द्रियस्थानजल्पे
पञ्चमस्कन्धे सद्योमरणीयेन्द्रियजल्पाख्या दशमी शाखा ॥ १० ॥

चक्रपाणिः—घुर्घुरकमिति घुर्घुरकमित्याकारशब्दः, स कफात्मकेन श्वासेन भवति । मुखं चूर्णकसन्निभं श्वैत्यात् । सिप्रायन्त इति सिप्रानदीवत् स्वेदप्रादुर्भावादाचरन्तीति सिप्रायन्ते, किंवा सिप्रायन्त इति शिथिलीभवन्ति अनेकार्थत्वाद् धातूनाम् । स जीवितञ्चावबुध्यत इति यथोक्तरिष्टाभावेन जीवितं बुध्यते । तेन रिष्टसद्भावेन च मरणं बुध्यत इति ॥ १६—१९ ॥

इति महामहोपाध्यायचरकचतुराननश्रीमच्चक्रपाणिदत्तविरचितायामायुर्व्वेददीपिकायां चरक-
तात्पर्य्यटीकायाम् इन्द्रियस्थाने सद्योमरणीयेन्द्रियं नाम दशमोऽध्यायः ॥ १० ॥

# एकादशोऽध्यायः ।

अथातोऽणुज्योतीयमिन्द्रियं व्याख्यास्यामः,
इतिह स्माह भगवानात्रेयः ॥ १ ॥

अणुज्योतिरनेकाग्रो दुश्छायो दुर्म्मनाः सदा ।
रतिं न लभते गन्ता परलोकं समान्तरे ॥ २ ॥
बलिं बलिभुजो यस्य प्रणीतं नोपभुञ्जते ।
लोकान्तरगतः पिण्डं भुङ्क्ते संवत्सरेण सः ॥ ३ ॥
सप्तर्षीणां समीपस्थां यो न पश्यत्यरुन्धतीम् ।
संवत्सरान्तरे जन्तुः स पश्यति महत् तमः ॥ ४ ॥

गङ्गाधरः—अथ सद्योमरणीयेन्द्रियानन्तरं छायाधिकाराद्धेतोरणुज्योतीयम् अणुज्योतिरिति पदमधिकृत्य कृतमिन्द्रियं व्याख्यास्यामः ॥ १ ॥

गङ्गाधरः—अणुज्योतिरित्यादि । समान्तरे संवत्सरानन्तरं परलोकं गन्ता गमनशीलः पुरुषः । अणु ज्योतिः सर्व्वशरीरगतं तेजः, अल्पो वा जठराग्निर्यस्य सोऽणुज्योतिः । अनेकाग्रो नानाविधतया व्याकुलचित्तः, न एकाग्र इत्यर्थः । दुश्छायोऽशोभमानच्छविः । दुर्म्मना दुष्टं दुःखितं वा मनो यस्य सः । तेनानेकाग्र इत्यनेन न पौनरुक्त्यम् । रतिम् अवस्थितचित्तत्वं न लभते ॥ २ ॥

गङ्गाधरः—बलिमित्यादि । यस्य निमित्तं प्रणीतं कल्पितं बलिं भोज्यं बलिभुजः काका नोपभुञ्जते, स संवत्सरेण लोकान्तरगतः सन् पिण्डं भुङ्क्ते ॥ ३ ॥

गङ्गाधरः—सप्तर्षीणामित्यादि । स्वर्मार्गे गगनोपरि वसिष्ठादिसप्तर्षिनाम-

चक्रपाणिः—सद्यःकालनियतं रिष्टमभिधाय कालविशेषनियतारिष्टाभिधायकमणुज्योतीयमुच्यते । अणुज्योतिश्चेह यथाश्रुतं रोगं वर्ज्जयित्वा संज्ञायामनुक्रियते, ज्योतिः सकलशरीरान्तर्गतं तेजः, अणुज्योतिर्मन्दाग्निः । अनेकाग्रो व्याकुलचित्तः । दुर्म्मना इत्यनेन मनोदौर्ब्बल्यमित्युच्यते, तेन न पौनरुक्त्यम् । समान्तरमिति समामध्ये ॥ १।२ ॥

चक्रपाणिः—बलिमिति वायसानां विधिवद्दत्तमन्नम् । महत् तम इति मरणरूपं तमः ।

विकृत्या विनिमित्तं यः शोभामुपचयं धनम्।
प्राप्नोत्यतो वा विभ्रंशं समान्तं तस्य जीवितम्॥ ५॥
भक्तिः शीलं स्मृतिस्त्यागो बुद्धिर्बलमहेतुकम्।
षड़ेतानि निवर्त्तन्ते षड्भिर्मासैर्मरिष्यतः॥ ६॥
धमनीनामपूर्व्वाणां जालमत्यर्थशोभनम्।
ललाटे दृश्यते यस्य षड्भिर्मासैर्मरिष्यति॥ ७॥
लेखाभिश्चन्द्रवक्राभिर्ललाटमुपचीयते।
यस्य तस्यायुषः षड्भिर्मासैरन्तं समादिशेत्॥ ८॥

नक्षत्रसमीपस्थामरुन्धतीं तन्नामक्षुद्रतमनक्षत्रं यो न पश्यति, स जन्तुः संवत्सरान्तरे महत् तमो यमालयं पश्यति॥ ४॥

गङ्गाधरः—विकृत्येत्यादि। विनिमित्तं शोभोपचयधनलाभसूचकं स्वाभाविकं शरीरसम्बन्धि रेखाचिह्नादिकं लक्षणं विना विकृत्या विकारेण तत्तच्छोभादिसूचकं चिह्नं यः प्राप्नोति अतः शोभोपचयधनचिह्नाद् वा विभ्रंशं प्राप्नोति तस्य समान्तं वत्सरान्तपर्य्यन्तं जीवितम्॥ ५॥

गङ्गाधरः—भक्तिरित्यादि। षड्भिर्मासैर्मरिष्यतः पुरुषस्य भक्त्यादिबलान्तानि षड् एतानि अहेतुकं निवर्त्तन्ते। इति स्वभावविप्रतिपत्तिः॥ ६॥

गङ्गाधरः—धमनीनामित्यादि। यस्य पूर्व्वं यादृशीनां धमनीनां जालं वर्त्तते तद्विपर्य्ययेण धमनीनां जालमत्यर्थशोभनं ललाटे दृश्यते, स षड्भिर्मासैर्मरिष्यति॥ ७॥

गङ्गाधरः—लेखाभिरित्यादि। यस्य ललाटं चन्द्रवक्राभिर्द्वितीयातृतीयाभ्युदितचन्द्र इव वक्राभिर्लेखाभिर्बह्वीभिरुपचीयते वृध्यते, तस्य नरस्यायुषः अन्तं शेषं षड्भिर्मासैर्वैद्यः समादिशेत्॥ ८॥

विकृत्येति प्रसिद्धं धनादिकारणं विना। विनिमित्तमिति शरीरसम्बन्धधनादिसूचकलक्षणं विना कस्मिंश्च काले धनादि तदुपचयो वा भवति, तच्चानिमित्तलक्षणत्वादरिष्टं प्रथमाध्याय एवोक्तम्। उपचयमिति शरीर एवोपचयम्। अतो विभ्रंशमिति शोभाद्यभावम्॥ ३—५॥

चक्रपाणिः—भक्तिरिच्छा। अहेतुकमिति क्रियाविशेषणम्। संख्येयनिर्देशादेव षट्त्वं प्राप्तं पुनः 'षड्' इति पदं षण्णां समुदितानामेव निवृत्तिररिष्टमिति दर्शयितुम्। जालमिति जालाकारम्। चन्द्रवक्राभिरिति बालचन्द्रवक्राभिः॥ ६—८॥

शरीरकम्पः संमोहो गतिर्वचनमेव च।
मत्तस्येवोपलक्ष्यन्ते यस्य मासं न जीवति ॥ ९ ॥
रेतोमूत्रपुरीषाणि यस्य मज्जन्ति चाम्भसि।
स मासात् स्वजनद्वेष्टा मृत्युवारिणि मज्जति ॥ १० ॥
हस्तपादं मुखञ्चोभे विशेषाद् यस्य शुष्यतः।
शूयेते वा विना देहात् स च मासाद् विनश्यति ॥ ११ ॥
ललाटे वस्तिशीर्षे वा नीला यस्य प्रकाशते।
राजी बालेन्दुकुटिला न स जीवितुमर्हति ॥ १२ ॥
प्रवालगुटिकाभासा यस्य गात्रे मसूरिकाः।
उत्पद्याशु विलीयन्ते नचिरात् स विनश्यति ॥ १३ ॥

गङ्गाधरः—शरीरेत्यादि। यस्य मत्तस्य मदकरद्रव्यं भुक्तवतो मदेन यथा शरीरकम्पसम्मोहगतिवचनानि तथा उपलक्ष्यन्ते, स मासं न जीवति ॥ ९ ॥

गङ्गाधरः—रेत इत्यादि। यद्यपि नवमाध्याये निष्ठ्यूतञ्च पुरीषञ्चेत्यादिना रिष्टमिदमुक्तम्, तथाप्यत्र स्वजनद्वेष्टृत्वलक्षणमधिकमिति लक्षणान्तरमिदं न पुनरुक्तम् ॥ १० ॥

गङ्गाधरः—हस्तपादमित्यादि। यस्य हस्तपादं मुखञ्चेत्युभे विशेषाद् अङ्गान्तरमपेक्ष्यातिशयेन देहात् मध्यदेहाद्विना शुष्यतः देहो न शुष्यतीत्यर्थः, स मासात् परं विनश्यति। यस्य च हस्तपादं मुखञ्चेत्युभे देहाद्विना विशेषात् शूयेते शोफवती भवतः देहस्तु न शूनः स्यात्, स च मासात् परं विनश्यति ॥ ११ ॥

गङ्गाधरः—ललाटे इत्यादि। यस्य ललाटे वस्तिशीर्षे वा बालेन्दुकुटिला नीला राजी रेखा प्रकाशते उद्भवति, स जीवितुं नार्हति ॥ १२ ॥

गङ्गाधरः—प्रवालेत्यादि। यस्य गात्रे प्रवालगुटिकाभासा मसूरिका लोके

चक्रपाणिः—रेत इत्याद्यरिष्टम्, 'निष्ठ्यूतञ्च पुरीषम्' इत्यादिना यद्यप्युक्तम्, तथापीह समासवचनात् समुदितानामेव रेतःप्रभृतीनां मज्जनं स्वजनद्वेषे सति मारकं भवतीति ज्ञेयम् ॥ ९।१० ॥

चक्रपाणिः—'उभे' इति वचनं मुखात् हस्तादिशोषमिति दर्शयति। प्रवालकृतगुटिकावत्

ग्रीवामर्द्दो न बलवान् जिह्वाश्वयथुरेव च ।
अप्रास्यगलपाकश्च यस्य पक्वं तमादिशेत् ॥ १४ ॥
संभ्रमोऽति प्रलापोऽति पर्व्वभेदश्च दारुणः ।
कालपाशपरीतस्य त्रयमेतत् प्रवर्त्तते ॥ १५ ॥
प्रमुह्योल्लुञ्चयेत् केशान् परान् गृह्णात्यतीव च ।
नरः स्वस्थवदाहार-वचनः कालचोदितः ॥ १६ ॥
समीपे चक्षुषः कृत्वा मृगयेताङ्गुलीकरम् ।
स्मयतेऽपि च कालांश्च ऊर्द्ध्वाक्षोऽनिमिषेक्षणः ॥
शयनादासनादङ्गात् काष्ठात् कुड्यादथापि च ।
असन्मृगयते किञ्चित् स मुह्यन् कालचोदितः ॥ १७ ॥

वसन्तनामिका व्याधिः उत्पद्याशु विलीयन्ते लयमापद्यन्ते, स नचिरात् शीघ्रं विनश्यति ॥ १३ ॥

गङ्गाधरः—ग्रीवेत्यादि । यस्य ग्रीवामर्द्दो ग्रीवाग्रहः । न बलं वास्ति जिह्वाश्वयथुश्च आस्यगलपाकश्च तं बुद्ध्वा पक्वं आयुषोऽन्तत्वेन परिणतम् आदिशेत् ॥ १४ ॥

गङ्गाधरः—सम्भ्रम इत्यादि । सम्भ्रमोऽतिशयेन भ्रान्तिः । त्रयमेतन्मिलितं कालपाशपरीतस्य ( कालपक्वशरीरस्य ) आयुषः परिशेषाभाववतो नरस्य प्रवर्त्तते ॥ १५ ॥

गङ्गाधरः—प्रमुह्येत्यादि । कालचोदित आयुषः कालपरिणामेन चोदितः प्रेरितो नरः प्रमुह्य मुग्धो भूत्वा केशान् स्वकरेणोल्लुञ्चेत् उत्पाटयेत् एवं मुग्धो भूत्वा अतीव च परान् गृह्णाति तथा यथा प्रायेण कष्टात् मुच्यन्ते । किन्तु स्वस्थवदाहारवचनश्च भवति ॥ १६ ॥

गङ्गाधरः—समीपे इत्यादिश्लोकद्वयम् । यो नरो मुह्यन् मोहं प्राप्तः सन् अज्ञान इव सन् स्वचक्षुषः समीपे कृत्वा अङ्गुलीकरं मृगयते किमपि यत् तत्र

आभासन्त इति प्रवालगुडिकाभासाः । कालपाशपरीतस्येति शीघ्रं मरिष्यतः । परिगृह्णाति स्वस्थवदाहारमिति योजना, अबलः सन् स्वस्थवदाहारमत्यर्थं करोतीत्यर्थः ॥ ११—१६ ॥

चक्रपाणिः—समीप इत्यादि । चक्षुःसमीपेऽङ्गुलीकरं कृत्वा तत् पश्यन् अङ्गुलिकरञ्च मृगयते

अहास्यहासी संमुह्यन् यो लेढि दशनच्छदौ ।
शीतपादकरोच्छ्वासो यो नरो न स जीवति ॥ १८ ॥
आह्वयंस्तं समीपस्थं स्वजनं जनमेव वा ।
महामोहावृतमनाः पश्यन्नपि न पश्यति ॥ १९ ॥
अयोगमतियोगं वा शरीरे मतिमान् भिषक् ।
खादीनां युगपद् दृष्ट्वा भेषजं नावचारयेत् ॥ २० ॥

नास्ति। ऊर्द्ध्वाक्षश्च सन् अनिमिषेक्षणः अनिमिषेण दृष्टिशीलश्च सन् कालान् दिवारात्रिरूपान् स्मयते विस्मयीभवति। असच्च वस्तु किञ्चित् यत् तत्र तत्र नास्ति तत् तत्र तत्रासीदिति मत्वा मोहेन शयनात् शय्यायाम् आसनादासने तथाङ्कात् स्वकीयाङ्के काष्ठात् कुड्यात् काष्ठकुड्यादिषु च मृगयते अन्वेषणं कुरुते, स कालचोदितो मरणकालप्रेरितभाववान् ॥ १७ ॥

गङ्गाधरः—अहास्येत्यादि। यो नरो संमुह्यन् मदमुग्ध इव सन् अहास्यहासी हास्यविषयासत्त्वे हासशीलः, दशनच्छदावोष्ठौ लेढि, यश्च शीतपादकरोच्छ्वासश्च, स न जीवति ॥ १८ ॥

गङ्गाधरः—आह्वयंस्तमित्यादि। यो नरः समीपस्थं स्वजनं स्वजनभिन्नं जनमेव वा आह्वयंस्तं स्वजनं जनं वा महामोहावृतमनाः सन् पश्यन्नपि न पश्यति परिचयशीलो न भवति, स न जीवतीति पूर्व्वेणान्वयः ॥ १९ ॥

गङ्गाधरः—अयोगमित्यादि। खादीनामाकाशादीनां शब्दादिमतां विषयाणां सद्भावेऽपि श्रोत्रादिभिरयोगो यदा तदैव श्रोत्रस्पर्शनेन्द्रियादिभिरतियोग इति युगपदाकाशादीनां स्पर्शेन्द्रियाद्ययोगातियोगौ शरीरे दृष्ट्वा मतिमान् भिषक् भेषजं न कारयेत् ॥ २० ॥

प्रार्थयते। स्मयते विस्मितो भवति। ऊर्द्ध्वगम् अनिमिषञ्च ईक्षणं यस्य स तथा सन् मृगयते। अविद्यमानं शयनासनादि मृगयते प्रार्थयते ॥ १७ ॥

चक्रपाणिः—अहास्यहासी इति अहास्यविषये हास्यवान्। दशनच्छदौ ओष्ठौ। 'शीत'-शब्दः उच्छ्वासान्तैः संबध्यते। जनमिति गोबलीवर्दन्यायेनास्वजनम्। खादीनामिति खादिकार्य्याणां श्रोत्रादीनां योग्यविषयाग्रहणमयोगः ॥ १८—२० ॥

अतिप्रवृद्ध्या दोषाणां मनसश्च बलक्षयात् ।
वासमुत्सृजति क्षिप्रं शरीरी देहसंज्ञकम् ॥ २१ ॥
वर्णस्वरावग्निबलं वागिन्द्रियमनोबलम् ।
हीयतेऽसुक्षये निद्रा नित्या भवति वा न वा ॥ २२ ॥
भिषग्भेषजपानान्नगुरुमित्रद्विषश्च ये ।
वशगाः सर्व्व एवैते बोद्धव्याः समवर्त्तिनः ॥
एतेषु रोगः क्रमते भेषजं प्रतिहन्यते ।
नैषामन्नानि भुञ्जीत न चोदकमपि स्पृशेत् ॥ २३ ॥

गङ्गाधरः—अतीत्यादि । शरीरी आत्मा दोषाणामतिप्रवृद्ध्या मनसो बलक्षयाच्च देहसंज्ञकं वासं वसतिस्थानं क्षिप्रमुत्सृजति ॥ २१ ॥

गङ्गाधरः—तत्रापि कारणान्तरमाह—वर्णेत्यादि । वर्णश्च स्वरश्चाग्निबलश्च वाचामिन्द्रियाणां मनसश्च बलञ्चेति सर्व्वं नृणामसुक्षये हीयते । निद्रा च नित्या अविरता वा भवति नैव वा भवति ॥ २२ ॥

गङ्गाधरः—भिषगित्यादि । ये भिषगादिकानामेकद्व्यादीनां द्वेष्टार एते सर्व्व एव नराः समवर्त्तिनो यमस्य वशगा बोद्धव्याः । भिषगादिद्वेषिणां दोषम् आह—एतेष्वित्यादि । एतेषु भिषगादिद्वेषिषु रोगः क्रमते आक्रमते वर्द्धते इत्यर्थः । सम्यक्कृतमपि भेषजं प्रतिहन्यते भेषजेन रोगो न हन्यते, रोगेण

चक्रपाणिः—वासमिव वासं शरीरमात्मनो गृहमिव भवति । न वा भवतीति सर्व्वथा न भवतीत्यर्थः ॥ २१।२२ ॥

चक्रपाणिः—समवर्त्तिन इति यमस्य । अन्ये तु 'समवर्त्तिन्'शब्देन कालमृत्युं ब्रुवते । 'च'-शब्देनोक्तवक्ष्यमाणसकलारिष्टग्रहणं कुर्व्वन्ति । तेन सर्व्वमेव रिष्टं कालमृत्योः परं भवतीति रिष्टं वर्णयन्ति । अत्र द्वेषमनु रोगक्रमणम्, निष्फलो भेषजप्रयोगश्चापि स्यादित्याह—

पादाः समेताश्चत्वारः सम्पन्नाः साधकैर्गुणैः।
व्यर्था गतायुषो द्रव्याद्विना नास्ति गुणोदयः॥ २४॥
परीक्ष्यमायुर्भिषजा नीरुजस्यातुरस्य च।
आयुर्व्वेदफलं कृत्स्नमायुर्देह्यनुवर्त्तते॥ २५॥

पुनर्भेषजं हन्यते। एषां भिषगादिद्वेषिणामन्नानि साधुर्न भुञ्जीत न चोदकमपि स्पृशेत् पानस्य का कथा। भिषगादिद्वेषिणां मृतप्रायत्वेनान्नजलयोरशुद्धत्वात्। नन्वेवं चेत् सर्व्वेषामेव जातारिष्टानामन्नजलग्रहणं न प्रसज्येतेति चेन्न, तथाविधत्वेन ज्ञातत्वे मृतप्रायत्वेऽपि भिषगादिद्वेषिणामतिपापात्॥ २३॥

गङ्गाधरः—ननु जातारिष्टानां गुणवच्चतुष्पादेऽपि सति किं नारोग्यं स्यादित्यत आह—पादा इत्यादि। साधकैः फलसाधकतमैर्भिषगादीनां श्रुतपर्य्यवदातत्वादिभिर्गुणैः सम्पन्नाश्चत्वारः पादाः भिषग्द्रव्योपस्थातृरोगिणः समेता मिलिता अपि गतायुषो नरस्य व्यर्था निष्फलाः आरोग्यफलस्य न साधकाः। कस्मादित्यत आह—द्रव्यादित्यादि। यस्माद् द्रव्यात् जीवनहेतोः आयुषो विना गुणोदयश्चिकित्साफलस्यारोग्यस्योदयो नास्ति॥ २४॥

गङ्गाधरः—परीक्ष्यमित्यादि। नीरुजस्य स्वस्थस्य आतुरस्य चायुर्भिषजा परीक्ष्यं परीक्षितव्यम्। कृत्स्नमायुर्व्वेदफलमायुर्देही यस्मादनुवर्त्तते॥ २५॥

एतेष्वित्यादि। भेषजं प्रतिहन्यत इति सम्यक् कृतमपि भेषजं हन्यत इत्यर्थः। नैषामन्नानि भुञ्जीत इति प्रायेण तदन्नस्यारिष्टत्वात्। एवमुदकप्रतिषेधेऽपि बोध्यम्॥ २३॥

चक्रपाणिः—पादा भेषजादयः। साधकैर्गुणैरिति श्रुते पर्य्यवदातत्वमित्यादिभिः षोडशगुणैः सम्पन्नाः। कस्माद् वैद्यादयो गतायुषो रोगान् न साधयन्तीत्याह—द्रव्यं विना नास्ति गुणोदय इति, द्रव्यं कारणं विना आरोग्यलक्षणो गुणोदयो नास्ति, कारणञ्चेहारोग्योत्पत्तौ अगतायुष्ट्वम्, तच्च नास्तीति भावः। आयुर्ज्ञानफलं विद्यमानायुषि भेषजदानात्॥ २४।२५॥

तत्र श्लोकः ।

क्रियापथमतिक्रान्ताः केवलं देहमाप्लुताः ।
दोषा यत् कुर्व्वते चिह्नं तदरिष्टं निरुच्यते ॥ २६ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते इन्द्रियस्थाने अणु-ज्योतीयेन्द्रियं नामैकादशोऽध्यायः ॥ ११ ॥

गङ्गाधरः—नन्वरिष्टं किं तावदित्यत आह—तत्र श्लोक इति। क्रियापथ-मित्यादि। दोषा वातादयः क्रियापथं चिकित्साक्रियायाः पन्थानम् आरोग्य-लक्षणफलोदयजननव्यापारोपायमतिक्रान्ता उल्लङ्घ्य केवलं कृत्स्नं देहम् आप्लुता आप्लाव्य यच्चिह्नं कुर्व्वते, तच्चिह्नमरिष्टं निरुच्यते। तदेव नियत-मरणाख्यापकं लिङ्गमिति बोध्यम् ॥ २६ ॥

अध्यायं समापयति—अग्नीत्यादि ।

इति वैद्यश्रीगङ्गाधरकविरत्नकविराजविरचिते चरकजल्पकल्पतरौ इन्द्रियस्थानजल्पे पञ्चमस्कन्धेऽणुज्योतीयेन्द्रिय-जल्पाख्यैकादशी शाखा ॥ ११ ॥

चक्रपाणिः—रिष्टलक्षणमाह—क्रियापथमतिक्रान्ता इत्यादि। आप्लुता इति गताः। दूतादिगतरिष्टलक्षणमेतन्न भवति, किन्तु शरीररिष्टलक्षणम्। तेन व्याप्तिर्लक्षणस्य वाच्या। सर्व्वरिष्टव्यापकन्तु लक्षणम्, यथा—अन्तर्गतस्य लिङ्गमिति, तच्च 'इन्द्रिय'पदेनैवोक्तमिति। प्रथमाध्याय एव 'इन्द्रिय'पदव्याख्या प्रोक्ता। ननु निर्निमित्तं रिष्टमित्युक्तम्, इह दोषजन्यत्वं रिष्टानामुच्यत इति न कथं विरोधः? निर्निमित्तत्वं ह्यनुपलभ्यमाननिमित्तता, तस्मान्न विरोधः ॥ २६ ॥

इति महामहोपाध्यायचरकचतुराननश्रीमच्चक्रपाणिदत्तविरचितायामायुर्व्वेददीपिकायां चरकतात्पर्य्यटीकायाम् इन्द्रियस्थाने अणुज्योतीयेन्द्रियं नामैकादशोऽध्यायः ॥ ११ ॥

# द्वादशोऽध्यायः ।

अथातो गोमयचूर्णीयमिन्द्रियं व्याख्यास्यामः,
इतिह स्माह भगवानात्रेयः ॥ १ ॥

यस्य गोमयचूर्णाभं चूर्णं मूर्द्धनि जायते ।
सस्नेहे * भ्रश्यते चैव मासान्तं तस्य जीवितम् ॥ २ ॥

निर्घर्षन्निव यः पादौ च्युतांसः परिधावति ।
विकृत्या न स लोकेऽस्मिंश्चिरं वसति मानवः ॥ ३ ॥

यस्य स्नातानुलिप्तस्य पूर्व्वं शुष्यत्युरो भृशम् ।
आर्द्रेषु सर्व्वगात्रेषु सोऽर्द्धमासं न जीवति ॥ ४ ॥

गङ्गाधरः—अथाणुज्योतीयेन्द्रियमनन्तरं छायाधिकारात् पारिशेष्याच्च गोमयचूर्णीयं गोमयचूर्णाभमिति पदार्थमधिकृत्य कृतमिन्द्रियं व्याख्यास्याम इत्यर्थः ॥ १ ॥

गङ्गाधरः—यस्येत्यादि । यस्य नरस्य मूर्द्धनि गोमयचूर्णाभं चूर्णं वर्णाकृतिभ्यां जायते सस्नेहे च तस्मिन् मूर्द्धनि तैलादिना सस्नेहे कृते च सति तद्गोमयचूर्णाभचूर्णं भ्रश्यते लीयते एव, तस्य मासान्तं जीवितम् । सुश्रुतेऽप्युक्तं "गोमयचूर्णप्रकाशस्य वा रजसो दर्शनमुत्तमाङ्गे विलयनञ्च" इति ॥ २ ॥

गङ्गाधरः—निर्घर्षन्निवेत्यादि । विकृत्या विकारवशात् न तु प्रकृत्या तेनाकस्माद् यः पादौ निघर्षन्निव च्युतांसः सन्धिबन्धनान्मुक्तभुजोर्द्ध्वदेश इव च सन् परिधावति, स मानवस्तस्मिन् लोके चिरं न वसति । प्रकृत्या चेदेवम्, न तदाऽचिरान्म्रियते इत्यर्थः ॥ ३ ॥

गङ्गाधरः—यस्येत्यादि । स्नातः सन्ननुलिप्तोऽगुरुचन्दनादिना यस्तस्य यदि सर्व्वगात्रेषु आर्द्रेषु सत्सु पूर्व्वम् अङ्गान्तरस्थानुलेपनं न विशुष्य उरो वक्षःस्थलमेव भृशं शुष्यति, सोऽर्द्धमासं न जीवति ॥ ४ ॥

चक्रपाणिः—पारिशेष्याद् गोमयचूर्णीयमुच्यते । चूर्णमित्यस्य विशेषणं सस्नेहमिति । निकषन्निवेति घर्षन्निव । विकृत्येत्यनेन पादाद्यवघर्षणादि निषेधयति । 'पूर्व्वमुरः शुष्यति' इत्यभिधानादेव शेषगात्रार्द्रतायां लब्धायां पुनः 'आर्द्रेषु सर्व्वगात्रेषु' इति वचनात् विशेषेण अपरगात्राणामार्द्रतां दर्शयति ॥ १—४ ॥

---

* सस्नेहे इत्यत्र सस्नेहं तथा निर्घर्षन्निवेत्यत्र निकषन्निव इति चक्रधृतः पाठः ।

* समुद्दिश्यातुरं वैद्यः सम्पादयितुमौषधम् ।
यतमानो न शक्नोति दुर्लभं तस्य जीवितम् ॥ ५ ॥
विज्ञातं बहुशः सिद्धं विधिवच्चावचारितम् ।
न सिध्यत्यौषधं यस्य नास्ति तस्य चिकित्सितम् ॥ ६ ॥
आहारमपि भुञ्जानो भिषजा सूपकल्पितम् ।
यः फलं तस्य नाप्नोति दुर्लभं तस्य जीवितम् ॥ ७ ॥
दूताधिकारे वक्ष्यन्ते लक्षणानि मुमूर्षताम् ।
यानि दृष्ट्वा भिषक् प्राज्ञः प्रत्याख्यायादसंशयम् ॥ ८ ॥

गङ्गाधरः—समुद्दिश्येत्यादि । वैद्य आतुरं समुद्दिश्य यदातुरार्थम् औषधं सम्पादयितुं प्रस्तुतं कर्त्तुं यतमानोऽपि अत्यर्थमयत्नवानपि प्रस्तुतं कर्त्तुं केनाप्यभावेन न शक्नोति, तस्य जीवितं दुर्लभम् । कश्चिज्जीवति बहुकष्टेनेति भावः ॥ ५ ॥

गङ्गाधरः—विज्ञातमित्यादि । वैद्येन बहुशो बहुधा विज्ञातं सिद्धं दृष्टफलत्वेन यदौषधं बहुधा विज्ञातं तदेवौषधं यस्यातुरस्य विधिवच्चावचारितं सेवितं कृतं किन्तु तदौषधं फलदत्वेन न सिध्यति चेत् तदा तस्य चिकित्सितं नास्ति, स मरिष्यतीत्यर्थः ॥ ६ ॥

गङ्गाधरः—आहारमित्यादि । यः पुरुषो भिषजा सूपकल्पितं शास्त्रविधिना युक्त्या शोभनमुपकल्पितमाहारं भुञ्जानो न तस्याहारस्य फलं तत्तद् यदीप्सितं तन्नाप्नोति, तस्य जीवितं दुर्लभम् । कष्टेन कश्चिज्जीवतीति भावः ॥ ७ ॥

गङ्गाधरः—दूताधिकारे इत्यादि । प्रत्याख्यायादातुरमिति शेषः । सुश्रुतेऽप्युक्तम्—दूतदर्शनसम्भाषावेशश्चेष्टितमेव च । ऋक्षं वेलातिथिश्चैव निमित्तं शकुनोऽनिलः । देशो वैद्यस्य वाग्देह-मनसाञ्च विचेष्टितम् । कथयन्त्यातुरगतं शुभं वा यदि वाशुभम् ॥ इति ॥ ८ ॥

चक्रपाणिः—यमुद्दिश्येति यस्यार्थे । सिद्धमित्यनेन रूपेण बहुशो ज्ञातम् । आहारम् इत्यायरिष्टं रोगविषयम् । तेन 'दृष्टञ्च गुणसम्पन्नम्' इत्यादिग्रन्थोक्तेन स्वस्वविषयेणारिष्टेन समं न पौनरुक्त्यम् ॥ ५—८ ॥

* यमुद्दिश्य इति चक्रवर्णितः पाठः ।

मुक्तकेशेऽथवा नग्ने रुदत्यप्रयतेऽथवा।
भिषगभ्यागतं दृष्ट्वा दूतं मरणमादिशेत् ॥
सुप्ते भिषजि ये दूताश्छिन्दत्यपि च भिन्दति।
आगच्छन्ति भिषक् तेषां न भर्त्तारमनुव्रजेत् ॥ ९ ॥
जुहोत्यग्निमथो पिण्डान् पितृभ्यो निर्व्वपत्यपि।
वैद्ये दूता य आयान्ति * घ्नन्ति प्रतिजिघांसवः ॥ १० ॥

गङ्गाधरः—मुक्तकेशे इत्यादि। भिषक् स्वस्मिन् मुक्तकेशे सति अथवा नग्ने विवस्त्रे सति किंवा रुदति सति अथ वाप्यप्रयतेऽशुचौ सति। मरणाद्यशौचन्तु नाप्रयतं, तदात्वे हि तत्रैव प्रयतम्। इत्यतो विट्स्पर्शाद्यपवित्रे सति यस्यातुरस्य चिकित्सामुद्दिश्य स्वस्याह्वानार्थं स्वमभिलक्ष्य आगतं दूतं दृष्ट्वा तस्यातुरस्य मरणमादिशेत्। सुप्त इत्यादि। भिषजि स्वस्मिन् सुप्ते निद्रिते सति अथवा किमपि छिन्दति सति किंवा किमपि भिन्दति सति ये दूता यस्यातुरस्य चिकित्सार्थं स्वमाह्वयितुमागच्छन्ति तस्य भर्त्तारं तमातुरं चिकित्सितुं भिषङ् नानुव्रजेत् ॥ ९ ॥

गङ्गाधरः—जुहतीत्यादि। वैद्ये जुहति अग्निं प्रज्वालयति अग्निं प्रज्वाल्य होमं वा कुर्व्वति तण्डुलादिकं पचति वा सति, पिण्डान् पितृभ्यो निर्व्वपति वा सति ये दूता वैद्यमाह्वयितुमायान्ति ते प्रतिजिघांसवो दस्यव इव तमातुरं घ्नन्ति। सुश्रुतेऽप्युक्तम्—दक्षिणाभिमुखं देशन्त्वशुचौ वा हुताशनम्। ज्वालयन्तं पचन्तं वा क्रूरकर्म्मणि चोद्यतम्। नग्नं भूमौ शयानं वा वेगोत्सर्गेषु वाऽशुचिम्। प्रकीर्णकेशमभ्यक्तं स्विन्नं विक्लवमेव च। वैद्यं य उपसर्पन्ति दूतास्ते चापि गर्हिताः। वैद्यस्य पैत्रे दैवे वा कार्य्ये चोत्पातदर्शने ॥ इति ॥ १० ॥

चक्रपाणिः—अप्रयत इति अपवित्रे। सुप्त इत्यादि। न भर्त्तारमिति न दूतप्रेषकमातुरम् इत्यर्थः। न प्रतिजिघांसवश्च भवन्ति, न च शक्त्या दूता घ्नन्ति, अथो प्रजिघांसवो घ्नन्तीति चोक्तम्। दूताश्च यद्यपि रोगिहितमिच्छन्ति, तथापि यथातुरस्य विनाशो भवति तथा दैवप्रेरिताः सन्तः आगच्छन्तो दूताः प्रजिघांसव इव तथा घ्नन्तीवेति कृत्वा प्रजिघांसवो घ्नन्तीत्युच्यते। तेन 'इव'-शब्दो लुप्तनिर्द्दिष्टो द्रष्टव्यः ॥ ९।१० ॥

* ते घ्नन्ति प्रजिघांसवः इति चक्रः।

कथयत्यप्रशस्तानि चिन्तयत्यथवा पुनः ।
वैद्ये दूता मनुष्याणामागच्छन्ति मुमूर्षताम् ॥ ११ ॥
मृतदग्धविनष्टानि भजति व्याहरत्यपि ।
अप्रशस्तानि चान्यानि वैद्ये दूता मुमूर्षताम् ॥ १२ ॥
विकारसामान्यगुणे देशे कालेऽथवा भिषक् ।
दूतमभ्यागतं दृष्ट्वा नातुरं समुपाचरेत् ॥ १३ ॥

गङ्गाधरः—कथयतीत्यादि। वैद्येऽप्रशस्तानि कथयति सति, अथवा वैद्येऽप्रशस्तानि चिन्तयति सति, अथवा वैद्ये मृतं वा दग्धं वा विनष्टं वा भजति सति, किंवा वैद्येऽन्यानि चाप्रशस्तानि व्याहरति वदति व्यवहरति वा सति, मुमूर्षतां रोगिणां दूता आगच्छन्तीत्यर्थः ॥ ११ । १२ ॥

गङ्गाधरः—विकारसामान्येत्यादि। विकाराणां वायव्याग्नेयसौम्यानां सामान्यगुणो यत्र तस्मिन् देशेऽथवा विकारसामान्यगुणे कालेऽभ्यागतं दूतं दृष्ट्वा भिषगातुरं न समुपाचरेत्। तथा च वातरोगिणो दूतो यदि वैद्यमाह्वयितुं वैद्यस्य प्रायेण नित्यावस्थितिदेशं कालञ्च विना वातबहुदेशस्थे वैद्येऽपराह्ने वा वा शेषरात्रौ वा वातकाले गच्छति, तदा तं दूतं दृष्ट्वा तद्वातरोगिणं भिषङ् न समुपाचरेत्। एवं यदि पित्तरोगिणो वा कफरोगिणो दूत आगच्छति, तदा शुभम्। अथ पित्तरोगिणो दूतो यदि उष्णाभितप्ते देशे स्थिते वैद्ये उष्णाभिव्यासक्तदेहे वा मध्याह्ने मध्यरात्रे वाप्यायाति, तदा तं रोगिणं नोपाचरेत्। वातकफरोगिणश्चेत् तदा शुभम्। अथ कफरोगिणो दूतो यदि जलाद्याद्र देशे स्थिते वैद्ये पूर्व्वाह्ने पूर्व्वरात्रे वा रात्रिमात्रे वाप्यायाति, तदा तं कफरोगिणं नोपाचरेत्। वातपित्तरोगिणश्चेत् तदा शुभमिति भावः। सुश्रुतेऽप्युक्तम्—मध्याह्ने चार्द्धरात्रे वा सन्ध्ययोः कृत्तिकासु च। आर्द्राश्लेषमघामूल-पूर्व्वासु भरणीषु च। चतुर्थ्यां वा नवम्यां वा षष्ठ्यां सन्धिदिनेषु च। वैद्यं य उपसर्पन्ति दूतास्ते चापि गर्हिताः। स्विन्नाभितप्ता मध्याह्ने ज्वलनस्य समीपतः। गर्हिताः पित्तरोगेषु दूता

चक्रपाणिः—चिन्तयत्यप्रशस्तानीति सम्बन्धः। व्याहरत्यपि वैद्ये मृतदग्धविनष्टानीति योजना। विकारसामान्यगुणो देशो यथा—रक्तपित्ते ज्वलनसन्निहितो देशः। विकारसामान्यगुणः कालो यथा—रक्तपित्ते मध्याह्न इत्यादि ज्ञेयम् ॥ ११—१३ ॥

दीनभीतद्रुतत्रस्त-मलिनानसतीं स्त्रियम्।
त्रीन् व्याकृतींश्च पण्डांश्च * दूतान् विद्यान्मुमूर्षताम् ॥१४॥
अङ्गव्यसनिनं दूतं लिङ्गिनं व्याधितं तथा।
संप्रेक्ष्य चोग्रकर्म्माणां न वैद्यो गन्तुमर्हति ॥ १५ ॥
आतुरार्थमनुप्राप्तं खरोष्ट्ररथवाहनम्।
दूतं दृष्ट्वा भिषग् ब्रूयादातुरस्य पराभवम् ॥ १६ ॥
पलालतुषमांसास्थि-केशलोमनखद्विजान्।
मार्ज्जनीसूर्पमुषलान्युपानद्भग्नविच्युते।
तृणकाष्ठतुषाङ्गारं स्पृशन्तो लोष्ट्रमश्म च ॥ १७ ॥

वैद्यमुपागताः। त एव कफरोगेषु कर्म्मसिद्धिकराः स्मृताः। एतेन शेषं व्याख्यातं बुद्ध्वा संविभजेत् तु तत्। रक्तपित्तातिसारेषु प्रमेहेषु तथैव च। प्रशस्तो जलरोगेषु दूतवैद्यसमागमः। विज्ञायैव विभागन्तु शेषं बुध्येत पण्डितः ॥ इति ॥ १३ ॥

गङ्गाधरः—दीनेत्यादि। दीनान् वा भीतान् वा द्रुतान् वा त्रस्तान् वा मलिनान् वा दूतान् मुमूर्षतामातुराणां विद्यात्। असतीं स्त्रियं दूतीं मुमूर्षतां विद्यात्। त्रीन् जनान् दूतान् मुमूर्षतां विद्यात्। व्याकृतीन् विकृताकारान् दूतान् मुमूर्षतां विद्यात्। पण्डान् नपुंसकान् दूतान् मुमूर्षतां विद्यादित्यर्थः। सुश्रुतेऽप्युक्तम्—पाषण्डाश्रमवर्णानां स्वपक्षाः कर्म्मसिद्धये। त एव विपरीताः स्युर्दूताः कर्म्मविपत्तये। नपुंसकं स्त्री-बहवो नैककार्य्या असूयकाः। गर्द्दभोष्ट्ररथप्राप्ताः प्राप्ता वा स्युः परम्पराः। वैद्यं य उपसर्पन्ति दूतास्ते चापि गर्हिताः ॥ इति ॥ १४ ॥

गङ्गाधरः—अङ्गव्यसनिनमित्यादि। अङ्गेन व्यसनिनं छिन्ननासादिकं दूतं लिङ्गिनं पाषण्डधर्म्माश्रमं सन्न्यासिप्रभृतिकचिह्नयुक्तं तथा व्याधितं वा दूतं तथा उग्रकर्म्माणम् उग्रकर्म्म कुर्व्वन्नायाति यस्तं दूतं संप्रेक्ष्य वैद्यो गन्तुं नार्हति ॥ १५ ॥

गङ्गाधरः—आतुरेत्यादि। खरोष्ट्ररथवाहनमातुरार्थं वैद्यमनुप्राप्तं दूतं दृष्ट्वा आतुरस्य पराभवं रोगाद् ब्रूयाद् भिषक् ॥ १६ ॥

गङ्गाधरः—पलालेत्यादि। पलालं धान्योज्झिततृणविशेषः पोयाल इति

चक्रपाणिः—त्रीनिति त्रिसंख्या एव दूता अप्रशस्ताः। पण्डा नपुंसकाः। अङ्गव्यसनी

* पण्डांश्च इति चक्रपाणिधृतः पाठः।

तत्पूर्व्वदर्शने दूता व्याहरन्ति मुमूर्षताम्।
यस्मिंश्च दूते ब्रुवति वाक्यमातुरसंश्रयम्।
पश्यन् निमित्तमशुभं तञ्च नानुव्रजेद्भिषक्॥ १८॥
तथा व्यसनिनं प्रेतं प्रेतालङ्कारमेव वा।
भिन्नं दग्धं विनष्टं वा तद्वादीनि वचांसि वा॥

लोके। तुषं तण्डुलहीनधान्यम्। द्विजा दन्ताः। मार्ज्जनी गृहसम्मार्ज्जनी। सूर्पं कुला इति लोके। मुषलं प्रसिद्धम्। उपानच्चर्म्मपादुका तस्या भग्नविच्युते चर्म्मणी तृणादीनि लोष्ट्राश्मनी च स्पृशन्तं दूतं दृष्ट्वा भिषग् ब्रुयादातुरस्य पराभवमिति पूर्व्वेणान्वयः। सुश्रुतेऽप्युक्तम्—पाशदण्डायुधधराः पाण्डरेतरवाससः। आर्द्रजीर्णापसव्यैक-मलिनध्वस्तवाससः। न्यूनाधिकाङ्गा उद्विग्ना विकृता रौद्ररूपिणः। रूक्षनिष्ठुरवादाश्चाप्यमाङ्गल्याभिधायिनः। छिन्दन्तस्तृणकाष्ठानि स्पृशन्तो नासिकां स्तनम्। वस्त्रान्तानामिकाकेशनखरोमदशास्पृशः। स्रोतोऽवरोधहृद्गण्ड-मूर्द्धोरःकुक्षिपाणयः। कपालोपलभस्मास्थि-तुषाङ्गारकराश्च ये। विलिखन्तो महीं किञ्चित् मुञ्चन्तो लोष्ट्रभेदिनः। तैलकर्द्दमदिग्धाङ्गा रक्तस्रगनुलेपनाः। फलं पक्वमसारं वा गृहीत्वान्यच्च तद्विधम्। नखैर्नखान्तरं वापि करेण चरणं तथा। उपानच्चर्म्महस्ता वा विकृतव्याधिपीड़िताः। वामाचारा रुदन्तश्च श्वासिनो विकृतेक्षणाः। याम्यां दिशं प्राञ्जलयो विषमैकपदे स्थिताः। वैद्यं य उपसर्पन्ति दूतास्ते चापि गर्हिताः॥ इति॥ १७॥

गङ्गाधरः—तत्पूर्व्वदर्शने इत्यादिना दूतम्भाषां दर्शयति। तत्पूर्व्वदर्शने पूर्व्वं वैद्यदर्शने मुमूर्षतामातुराणां दूता इति व्याहरन्ति भाषन्ते। किं व्याहरन्ति तदाह—यस्मिन्नित्यादि। यस्मिन् दूते आतुरसंश्रयं वाक्यं ब्रुवति सति तत्कालमशुभं निमित्तं पश्यन् भिषक् तमातुरं नानुव्रजेत्॥ १८॥

गङ्गाधरः—तत्कालमशुभं निमित्तं किं किमित्यतस्तदाह—तथेत्यादि। व्यसनिनं प्रेतं वा मृतं वा प्रेतालङ्कारं वा भिन्नं वा किमपि दग्धं वा किमपि

छिन्ननासादिः। उग्रकर्म्मा मारणाद्यकार्य्यप्रवृत्तः। पलालेत्यादौ तृणकाष्ठादिपरिस्पृशो दूताः। तत्पूर्व्वदर्शन इति वैद्यपूर्व्वदर्शने पलालतुषादीनि स्पृशन्तो व्याहरन्तीति योजना। प्रेतालङ्कारम्

रसो वा कटुकस्तीव्रो गन्धो वा कौणपो महान्।
स्पर्शो वा विपुलः क्रूरो यद्वान्यदशुभं भवेत्॥
तत्पूर्व्वमभितो वाक्यं वाक्यकालेऽथवा पुनः।
दूतानां व्याहृतं श्रुत्वा धीरो मरणमादिशेत्॥ १९॥
इति दूताधिकारोऽयमुक्तः कृत्स्नो मुमूर्षताम्।
पथ्यातुरकुलानाञ्च वक्ष्याम्यौत्पातिकं पुनः॥ २०॥

विनष्टं वा किमपि किंवा व्यसनादिवाचकानि वचांसि। कटुको वा रसः तीव्रो गन्धो महान् कौणपो वा गन्धः। विपुलो वा स्पर्शो वह्निझञ्झावात्यादिः क्रूरो वा स्पर्शः सर्पादिस्पर्शः। अन्यद्वा यदशुभं किञ्चिद्भवेत्। ननु दूते व्याधितसंवादं वदति सति किं पूर्व्वं किं परमेवमशुभं पश्यन् अनुव्रजेत् इत्यत आह—तत्पूर्व्वमित्यादि। वैद्यस्य प्रथमतो दर्शने दूता आतुरार्थं यद् वदन्ति तत्-पूर्व्वं तस्मात् पूर्व्वमव्यवहितप्राक्कालमेवमशुभं यदि भवेत् किंवा तद्वाक्यमभितः पूर्व्वं पश्चाच्च भवेत्, अथवा तद्वाक्यकाले एवमशुभं भवेच्चेत्, तदा तद् दूतानां वाक्यं श्रुत्वा धीरो भिषक् तस्यातुरस्य मरणमादिशेत्॥ १९॥

गङ्गाधरः—दूतारिष्टाधिकारं समापयति—इतीत्यादि। शुभदूतोऽपि सुश्रुतेनोक्तः—स्वस्यां जातौ स्वगोत्रो वा दूतः कर्म्मकरः स्मृतः। गोयाने नागतस्तुष्टः पादाभ्यां शुभचेष्टितः। धृतिमान् विधिकालज्ञः स्वतन्त्रः प्रति-पत्तिमान्। अलङ्कृतो मङ्गलवान् दूतः कार्य्यकरः स्मृतः। स्वस्थ प्राङ्मुखमासीनं समे देशे शुचौ शुचिम्। उपसर्पति यो वैद्यं स च कर्म्मकरः स्मृतः॥ इति। दूताधिकारमुक्त्वा पथि चौत्पातिकम् आतुरकुलानाञ्चौत्पातिकं वक्ष्यामि। तथा च सुश्रुतः—मांसोदकुम्भातपत्र-विप्रवारणगोवृषाः। शुक्ल-वर्णाश्च पूज्यन्ते प्रस्थाने दर्शनं गताः। स्त्री पुत्रिणी सवत्सा गौर्वर्द्धमानम-लङ्कृताः। कन्या मत्स्याः फलञ्चामं स्वस्तिका मोदका दधि। हिरण्याक्षत-पात्रं वा रत्नानि सुमनो नृपः। अप्रशान्तोऽनलो वाजी हंसश्चाषः शिखी तथा। ब्रह्मदुन्दुभिजीमूत-शङ्खवेणुरथस्वनाः। सिंहगोवृषनादाश्च ह्रेषित

एव न्यस्तं पश्येत् यस्मिंस्तञ्च नानुव्रजेदिति सम्बन्धः। तद्वादीनि भिन्नादिवादीनि। तीव्र इति इन्द्रियोद्वेजकः। स्पर्शो विपुलो यथा तीव्रोष्णादिस्पर्शः। तत्पूर्व्वमिति दूतवचनात् पूर्व्वम् अभितो वाक्यमिति सर्व्वभूतकालवचनम्। व्याहृतमिति आतुरावस्थाकथनम्॥ १४—१९॥

अवक्षुतं तथोत्क्रुष्टं स्खलनं पतनं तथा ।
आक्रोशः संप्रहारो वा प्रतिषेधो विगर्हणम् ॥

गजबृंहितम् । शस्तं हंसरुतं नृणां कौशिकश्चैव वामतः । प्रस्थानयायिनः श्रेष्ठा वाचश्च हृदयङ्गमाः । पत्रपुष्पफलोपेतान् सक्षीरान् नीरुजो द्रुमान् । आश्रिता वा नभोवेश्म-ध्वजतोरणवेदिकाः । दिक्षु शान्तासु वक्तारो मधुरं पृष्ठतोऽनुगाः । वामा वा दक्षिणा वापि शकुनाः कर्म्मसिद्धये ॥ इति । सुश्रुतोक्तं यथा— शुष्केऽशनिहते पत्रे वल्लीनद्धे सकण्टके । वृक्षेऽथवाश्मभस्मास्थि-विट्तुषाङ्गार-पांशुषु । चैत्यवल्मीकविषम-स्थिता दीप्तखरस्वराः । पुरतो दिक्षु दीप्तासु वक्तारो नार्थसाधकाः । पुन्नामानः खगा वामाः स्त्रीसंज्ञा दक्षिणाः शुभाः । दक्षिणाद् वामगमनं प्रशस्तं श्वशृगालयोः । वामं नकुलचाषाणां नोभयं शशसर्पयोः । भासकौशिकयोश्चैव न प्रशस्तं किलोभयम् । दर्शनं वा रुतं वापि न गोधाकृकलासयोः । दूतैरनिष्टैस्तुल्यानामशस्तं दर्शनं नृणाम् । कुलत्थतिल-कार्पास-तुषपाषाणभस्मनाम् । पात्रं नेष्टं तथाङ्गार-तैलकर्दमपूरितम् । प्रसन्नेतरमद्यानां पूर्णं वा रक्तसर्षपैः । शवकाष्ठपलाशानां शुष्काणां पथि सङ्गमाः । नेष्यन्ते पतितान्तस्थ-दीनान्धरिपवस्तथा । मृदुः शीतोऽनुकूलश्च सुगन्धिश्चानिलः शुभः । खरोष्णोऽनिष्टगन्धश्च प्रतिलोमश्च गर्हितः । ग्रन्थ्यर्ब्बुदादिषु सदा च्छेदशब्दश्च पूजितः । विद्रध्युदरगुल्मेषु भेदशब्दस्तथैव च । रक्तपित्तातिसारेषु रुद्धशब्दः प्रशस्यते । एवं व्याधिविशेषेण निमित्तमुपधारयेत् । तथैवाक्रुष्टहाकष्ट-माक्रन्दरुदितस्वनाः । छर्द्यां वातपुरीषाणां शब्दो वै गर्द्दभोष्ट्रयोः । प्रतिषिद्धं तथा भग्नं क्षुतं स्खलितमाहतम् । दौर्म्मनस्यञ्च वैद्यस्य यात्रायां न प्रशस्यते ॥ इति ॥ २० ॥

गङ्गाधरः—वैद्यस्य गच्छतः पथि यात्राशुभमातुरार्थमाह—अवक्षुतमित्यादि । यात्राकालेऽवक्षुतं छिक् हाँचि इति लोके । उत्क्रुष्टं व्यग्रनो रुतं वैद्यस्य स्खलनं पादस्खलनम् आक्रोश उच्चैर्ध्वनिः प्रहार आघात प्रतिषेधो निषेधकरणम्

चक्रपाणिः—औत्पातिकमिति अरिष्टसूचकनिमित्तम् । अवक्षुतं छिक्का । उत्क्रुष्टं सन्त्रस्तरणम् ।

वस्त्रोष्णीषोत्तरासङ्ग-च्छत्रोपानद्युगाश्रयम्।
पतनं * दर्शनं वापि मृतं व्यसनिनं † तथा॥
चैत्यध्वजपताकानां पूर्णानां पतनानि च।
हतानिष्टप्रवादांश्च दूषणं ‡ भस्मपांशुभिः॥
पथश्छेदो बिड़ालेन शुना सर्पेण वा पुनः।
मृगद्विजानां क्रूराणां गिरो दीप्तां दिशं प्रति॥
व्रजतां दर्शनञ्चैवमुत्तानानाञ्च दर्शनम्।
इत्येतान्यप्रशस्तानि सर्व्वाण्याहुर्मनीषिणः॥
एतानि पथि वैद्येन पश्यतातुरवर्त्मनि §।
शृण्वतापि न मन्तव्यं तदागारं विपश्चिता॥ २१॥

विगर्हणं निन्दाकरणं वस्त्रं परिधानवसनम् उष्णीषं शिरोबन्धनवस्त्रम् उत्त... उत्तरीयवस्त्रं तेष्वासङ्गः। छत्रमुपानद्युगं तेषामाश्रयः। पतनं तेषां पतनमेव तेषां दर्शनं वा मृतं जन्तुं व्यसनिनं छेदवस्त्रादिविषयकव्यसनं पूर्णानां चैत्यादीनां पतनानि हतप्रवादान् अनिष्टप्रवादान् तथा भस्मपांशुभिर्दूषणं व्याकुलीभवनम्। बिड़ालेन पथश्छेदो बिड़ालो गमनपथस्य तिर्य्यग् यद् गच्छति तद् गमनं छेदः पथः। एवं शुना वा पथश्छेदः सर्पेण वा पथश्छेदः। क्रूराणां मृगद्विजानां मृगाणां व्याघ्रादीनां द्विजानां श्येनादीनां पक्षिणां गिरो नादान् दीप्तां सूर्य्यावस्थानेन सप्रकाशां नानाविधकोलाहलध्वनिभिर्वा स्फुटां नानाविध-स्फुटकरभावैर्वा स्फुटां दक्षिणां वा दिशं प्रति तादृशदिग्भागे। क्रूराणां मृगपक्षिणां व्रजतां गच्छतां दर्शनम्। एवमुत्तानानां क्रूराणां मृगपक्षिणां वा दर्शनम्। इत्येतानि सर्व्वाणि अप्रशस्तानि मनीषिण आहुः। पथि एतान्यप्रशस्तानि पश्यता वैद्येन विपश्चिता तदागारं न गन्तव्यम्। आतुरवर्त्मनि

प्रतिषेधो मा गच्छ इत्येवंरूपः। व्यसनं वस्त्रादीनां यत् स्फुटनादि। व्यसनीति व्यङ्गः, कलहवान् वा। पूर्णाः पूर्णकुम्भादयः। भूषणं भस्मपांशुभिरिति भस्मपांश्ववकिरणम्। पथिच्छेद

* व्यसनम् इति वा पाठः। † मृतव्यसनिनां इति चक्रः।
‡ भूषणमिति चक्रसम्मतः पाठः। § वेश्मनि इति च पठ्यते।

इत्यौत्पातिकमाख्यातं पथि वैद्यविगर्हितम् ।
इमामपि च बुध्येत गृहावस्थां मुमूर्षताम् ॥ २२ ॥
प्रवेशे पूर्णकुम्भाग्नि-मृद्बीजफलसर्पिषाम् ।
वृषब्राह्मणरत्नानां देवतानाञ्च निर्गतिम् ॥
अग्निपूर्णानि पात्राणि भिन्नानि विशिखानि च ।
भिषग् मुमूर्षतां वेश्म प्रविशन्नेव पश्यति ॥ २३ ॥
छिन्नभिन्नावभग्नानि दग्धानि मृदितानि च ।
दुर्ब्बलानि च सेवन्ते मुमूर्षोर्वैश्मिका जनाः ॥ २४ ॥
शयनं वसनं यानं गमनं भोजनं रुतम् ।
श्रूयतेऽमङ्गलं यस्य नास्ति तस्य चिकित्सितम् ॥ २५ ॥

आतुरार्थं गच्छता वर्त्मनि एतान्यप्रशस्तानि शृण्वतापि तदागारं न गन्तव्यम् ॥ २१।२२ ॥

गङ्गाधरः—पथि चौत्पातिकमुक्त्वा आतुरकुलानामौत्पातिकमाह—प्रवेशे इत्यादि । आतुरभवनप्रवेशकाले वैद्यः पूर्णकुम्भादीनां निर्गतिम् आतुरभवनान्निःसरणं, तथाग्निपूर्णानि पात्राणि भिन्नानि भग्नानि विशिखानि मुमूर्षतामातुराणां वेश्म प्रविशन् पश्यत्येव ॥ २३ ॥

गङ्गाधरः—छिन्नेत्यादि । आतुरस्य वैश्मिका गृहनियता जना यदि छिन्नभिन्नादीनि वस्तूनि सेवन्ते, तदा तमातुरं मुमूर्षुं विद्यादिति भावः । मुमूर्षोरातुरस्य हि वैश्मिका जनाश्छिन्नादीनि वस्तूनि सेवन्ते ॥ २४ ॥

गङ्गाधरः—शयनमित्यादि । यस्य शयनादिकममङ्गलं श्रूयते तस्य चिकित्सितं नास्ति ॥ २५ ॥

इति बिडालादिभिर्मार्गलङ्घनम् । मृगद्विजाः क्रूराः शृगालगृध्रादयः । दीप्ता दिक्, यस्यां सूर्य्यो वर्त्तते, किंवा दक्षिणा दिक् दीप्तोच्यते । शयनं खट्वादि । आसनं पीठादि ॥ २०—२२ ॥

चक्रपाणिः—विशिखानीति खण्डितानि । किंवा विशिकानीति पाठः, तदा शून्यानीत्यर्थः ।

शयनं वसनं यानमन्यद्वापि परिच्छदम् ।
प्रेतवद् यस्य कुर्व्वन्ति सुहृदः प्रेत एव सः ॥ २६ ॥
अन्नं व्यापद्यतेऽत्यर्थं ज्योतिश्चैव प्रशाम्यति ।
निवाते सेन्धनं यस्य नास्ति तस्य चिकित्सितम् ॥ २७ ॥
आतुरस्य गृहे यस्य भिद्यन्ते वा पतन्ति वा ।
अतिमात्रममत्राणि दुर्लभं तस्य जीवितम् ॥ २८ ॥

गङ्गाधरः—शयनमित्यादि । यस्यातुरस्य सुहृदः प्रेतवच्छयनवसनादिकं कुर्व्वन्ति, स प्रेतो मृत एव ॥ २६ ॥

गङ्गाधरः—अन्नमित्यादि । आतुरस्य यस्य भोजनाय पच्यमानमन्नमत्यर्थं व्यापद्यते निष्पन्नं न भवति । निवाते स्थाने सेन्धनं सकाष्ठं ज्योतिरग्निः प्रशाम्यति तस्य चिकित्सितं नास्ति ॥ २७ ॥

गङ्गाधरः—आतुरस्येत्यादि । यस्यातुरस्य गृहे वासगृहे अमत्राणि पात्राणि अतिमात्रं चूर्णचूर्णीभूय भिद्यन्तेऽतिशब्देन वा पतन्ति तस्य जीवितं दुर्लभं, कश्चिज्जीवति । सुश्रुतेऽप्युक्तं प्रवेशेऽप्येतदुद्देशादवेक्ष्यश्च तथातुरे। प्रति द्वारं गृहे वास्य पुनरेतन्न गण्यते। केशभस्मास्थिकाष्ठाश्म-तुषकार्पास-कण्टकाः । खट्वोर्द्धपादा मद्यापो वसा तैलं तिलास्तृणम् । नपुंसकव्यङ्ग-भग्न-नग्नमुण्डासिताम्बराः । प्रस्थाने वा प्रवेशे वा नेष्यन्ते दर्शनं गताः । भाण्डानां सङ्करस्थानात् स्थानात् सञ्चरणं तथा । निखातोत्पाटनं भङ्गः पतनं निर्गमस्तथा । वैद्यासनावसादो वा रोगी वा स्यादधोमुखः । वदंश्च सम्भाषमाणोऽङ्गं कुड्यमास्तरणानि वा । प्रमृज्याद्वा धुनीयाद्वा करौ पृष्ठं शिरस्तथा । हस्तञ्चाकृष्य वैद्यस्य न्यसेच्छिरसि चोरसि । यो वैद्यमुन्मुखः पृच्छेदुन्माष्टि स्वाङ्गमातुरः । न स सिध्यति वैद्यो वा गृहे यस्य न पूज्यते । भवने पूज्यते वापि यस्य वैद्यः स सिध्यति । शुभं शुभेषु दूतादिष्वशुभं ह्यशुभेषु च । आतुरस्य ध्रुवं तस्माद् दूतादीन् लक्षयेद्भिषग् ॥ इति ॥ २८ ॥

वैडिमका जना इति गृहप्रतिष्ठिता जनाः । प्रेतवत् मृतस्य यथा क्रियते तथा । 'सुहृदः' इति वचनेनासुहृद्भिर्द्दैं पादमङ्गलार्थं कृतं प्रेतवत् शयनादि निषेधयति । ज्योतिरग्निः निवाते सेन्धनश्च सन् यदि निर्व्वाति, ततो रिष्टम् । अमत्राणीति शरावस्थाल्यादीनि ॥ २३—२८ ॥

भवन्ति चात्र।

यद् द्वादशभिरध्यायैर्व्यासतः परिकीर्त्तितम्।
मुमूर्षतां मनुष्याणां लक्षणं जीवितान्तकृत्॥
तत् समासेन वक्ष्यामि पर्य्यायान्तरमाश्रितम्।
पर्य्यायवचनं श्रुत्वा विज्ञाना-*-योपकल्पते॥ २९॥
अत्यर्थं पुनरेवेयं विवक्षा नोपपद्यते।
तस्मिन्नेवाधिकरणे यत् पूर्व्वमभिदर्शितम्॥ ३०॥

गङ्गाधरः—शिष्यान् प्रत्यनुग्रहेण धारणार्थम् अर्थदार्ढ्यार्थञ्च संक्षेपेण विस्तरेण द्वादशाध्यायप्रोक्तारिष्टलक्षणान्याह—भवन्तीत्यादि। यद् द्वादशभिरित्यादि। मुमूर्षतां मनुष्याणां जीवितान्तकृद् यल्लक्षणं वर्णस्वरीयादिभिरेतदन्तैर्द्वादशभिरध्यायैर्व्यासतो विस्तरतः परिकीर्त्तितं, तत् सर्व्वं मनुष्याणां मुमूर्षतां जीवितान्तकृल्लक्षणं पर्य्यायान्तरमाश्रितं तदर्थवाचकसंस्कृतान्तरेण समासेन संक्षेपेण वक्ष्यामि। ननु कस्मादित्यत आह—पर्य्यायवचनमित्यादि। यस्मात् पर्य्यायवचनं तदर्थवाचकसंस्कृतान्तरवचनं श्रुत्वा विज्ञानाय पूर्व्वोक्तार्थज्ञाननिश्चयाय संक्षेपतो बुद्ध्या बुद्ध्वा कण्ठेन धृत्वा च स्वल्पकालेनातुराणां सर्व्वारिष्टलिङ्गज्ञानाय च उपकल्पते अध्येता॥ २९॥

गङ्गाधरः—ननु कथं पुनरपि विस्तरेण विवक्षते इत्यत आह—अत्यर्थमित्यादि। इयमेवारिष्टलक्षणस्य विवक्षा पुनर्व्वारम् अत्यर्थमतिशयेन नोपपद्यते। कस्मादित्यत आह—तस्मिन्नित्यादि। यद् यस्मात् पूर्व्वमेव तस्मिन् तस्मिन् वर्णस्वरीयादावधिकरणेऽभिदर्शितं विस्तरेण दर्शितमिति॥ ३०॥

चक्रपाणिः—सम्प्रति द्वादशाध्यायोक्तं रिष्टं दुरधिगमार्थं संग्रहेण स्पष्टीकरणार्थमाह—यद् द्वादशभिरित्यादि। पर्य्यायान्तरमाश्रितमिति संज्ञान्तरेण कीर्त्तितम्। अर्थविज्ञानायेति पूर्व्वाभिधानात् शब्दस्यानेकार्थाभिधायित्वादिना यत्र सन्देहो मिथ्याज्ञानं वा भवति, तस्य शब्दान्तरेण अभिधानाद्व्यक्तार्थो भवतीति॥ २९। ३०॥

* ह्यर्थविज्ञानाय इति च पाठः।

वसतां चरमे काले शरीरेषु शरीरिणाम्।
अभ्यग्राणां * विनाशाय देहेभ्यः प्रविवत्सताम्॥
इष्टांस्तितिक्षतां प्राणान् कान्तं वासं जिहासताम्।
तन्त्रयन्त्रेषु भिन्नेषु तमोऽन्त्यं प्रविविक्षताम्॥
विनाशायेह रूपाणि यान्यवस्थान्तराणि च।
भवन्ति तानि वक्ष्यामि यथोद्देशं यथागमम्॥ ३१॥
प्राणाः समुपरुध्यन्ते विज्ञानमुपरुध्यते।
वमन्ति बलमङ्गानि चेष्टा ह्युपरमन्ति च॥
इन्द्रियाणि विनश्यन्ति खिलीभवति वेदना।
औत्सुक्यं भजते सत्त्वं चेतो भीराविशत्यपि॥

गङ्गाधरः—इति प्रेत्यभावाय जातवतान्तकृल्लक्षणसंक्षेपोक्तिं प्रतिज्ञाय अपुनर्भवाय जीवितान्तकृल्लक्षणोक्तिं प्रतिजानीते—वसतामित्यादि। शरीरेषु वसतां शरीरिणां सूक्ष्मदेहवताम् अभ्यग्राणाम् आकुलानां नित्यानुबन्धानां विनाशाय देहेभ्यः प्रविवत्सतां देहं त्यक्त्वा प्रवासमिच्छताम्, इष्टान् प्राणान् तितिक्षतां क्षन्तीकुर्व्वताम्, कान्तं वासं स्थूलदेहे वासं जिहासतां हातुमिच्छताम्; तन्त्रयन्त्रेषु स्थूलदेहेषु भिन्नेषु सत्सु अन्त्यं तमो मृत्युं प्रविविक्षतां प्रवेष्टुम् इच्छताम्, विनाशाय इह शरीरे यानि रूपाणि यानि चावस्थान्तराणि भवन्ति तानि वक्ष्यामि यथोद्देशं यथागमं यथाशास्त्रमित्यर्थः॥ ३१॥

गङ्गाधरः—प्राणा इत्यादि। येषां प्राणाः श्वासोच्छ्वासाः समुपरुध्यन्ते, तेषां कर्म्म चिकित्सा न सिध्यति। येषां विज्ञानं ज्ञानेन्द्रियमुपरुध्यते तेषाम्। येषामङ्गानि बलं वमन्ति त्यजन्ति तेषाम्। येषां चेष्टाश्चोपरमन्ति नश्यन्ति वाग्देहमनसां चेष्टाः तेषाम्। येषामिन्द्रियाणि श्रोत्रादीनि विनश्यन्ति

चक्रपाणिः—अभ्युग्राणामिति अभ्युद्गतानाम्। प्रविवत्सतामिति प्रवस्तुमुद्यतानाम्। 'कान्तं वासम्' इत्यनेन सर्व्वप्राणिनामेव सर्व्वावस्थासु शरीरं काम्यं भवतीति दर्शयति। स्वकान्तमपि शरीररूपं वासं जीवितं वा बलादेव कर्म्मणा त्यज्यमानमपि इहोपचारात् 'इव'शब्दलोपाद् वा स्वतन्त्रेण निर्द्दिश्यते, यथा जिहासतामिति तथा तितिक्षतामिति। तन्त्रं शरीरम्, तस्य यन्त्रं शिरास्नाय्वादिरूपं तन्त्रयन्त्रम्। तमोऽन्त्यमिति मरणरूपं तमः। विनाशायेह रूपाणीति

* अभ्युग्राणाम् एवं पाठोऽपि वर्त्तते।

स्मृतिस्त्यजति मेधा च ह्रीश्रियौ चापसर्पतः ।
उपप्लवन्ते पाप्मानः क्रोधस्तेजश्च नश्यति ॥
शीलं व्यावर्त्ततेऽत्यर्थं शक्तिश्च परिवर्त्तते ।
विक्रियन्ते प्रतिच्छायाश्छायाश्च विकृतिं प्रति ॥
शुक्रं प्रच्यवते स्थानादुन्मार्गं भजतेऽनिलः ।
क्षयं मांसानि गच्छन्ति गच्छत्यसृगपि क्षयम् ॥
उष्माणः प्रलयं यान्ति विलयं यान्ति सन्धयः ।
गन्धा विकृतिमायान्ति भेदं वर्णस्वरौ तथा ॥
वैवर्ण्यं भजते कायः कायच्छिद्रं विशुष्यति ।
धूमः संजायते मूर्द्ध्नि दारुणाख्यश्च चूर्णकः ॥

तेषाम्। येषां वेदन खिलीभवति अथग्राहिणी सती कीलवद्भवति तेषाम्। येषां सत्त्वं मन औत्सुक्यं भजते भीर्भयश्च चेतो मन आविशति तेषाम्। यान् स्मृतिस्त्यजति तेषाम्। यान् मेधा त्यजति तेषाम्। येभ्यो ह्रीश्रियौ लज्जा श्रीश्चापसर्पतः अपगच्छतस्तेषाम्। येषां पाप्मानो दुःखसंज्ञा व्याधय उपप्लवन्ते नश्यन्ति हठात् तेषाम्। येषां क्रोधो नश्यति तेजश्च नश्यति तेषाम्। येषामत्यर्थं व्यावर्त्तते शीलं शीलता तेषाम्। येषां शक्तिश्चात्यर्थं परिवर्त्ततेऽशक्तिरायाति शक्तिगच्छतीति शक्तः परिवर्त्तनं तेषाम्। येषां प्रतिच्छायाः विक्रियन्ते विकृतिमापद्यन्ते तेषाम्। येषां छायाश्च विकृतिं प्रति भवन्ति तेषाम्। येषां शुक्रं स्थानात् प्रच्यवतेऽकारणात् तेषाम्। येषामनिलो वायुरुन्मार्गमूर्द्ध-मार्गं भजते तेषाम्। येषां मांसानि क्षयं गच्छन्ति तेषाम्। येषामसृगपि क्षयं गच्छति तेषाम्। येषामुष्माणो नित्योष्मवत्सु शरीरावयवेषूष्माणः प्रलयं क्षयं यान्ति तेषाम्। येषां सन्धयः शरीरे विलयं नाशं यान्ति तेषाम्। येषां देहगन्धा विकृतिं यान्ति तेषाम्। येषां वर्णस्वरौ वर्णश्च स्वरश्च भेदमन्यथात्वं यातः, येषां कायश्च वैरूप्यं भजते तेषाम्। येषां कायच्छिद्रं विवरवद्धमनीजातं

प्राणसमुपतापादीनि। खिलीभवतीति अपथग्राहिणी भवति। पाप्मान इति पापजनितरोगाः, अधर्म्माश्च क्रियाः। छायाश्च विकृतिं प्रतीति गच्छन्तीति शेषः। तेन प्रत्येकं छाया विकृतिं गच्छतीत्यर्थः। धूमः संजायते मूर्द्ध्नीति प्रकृतं वाष्पनिर्गमं विना बहलो धूम इति। दारुणाख्यश्च

सततस्पन्दना देशाः शरीरे येऽभिलक्षिताः।
ते स्तम्भानुगताः सर्व्वे न चलन्ति कथञ्चन॥
गुणाः शरीरदेशानां शीतोष्णमृदुदारुणाः।
विपर्य्यासेन वर्त्तन्ते स्थानेष्वन्येषु तद्विधाः॥
नखेषु जायते पुष्पं पङ्को दन्तेषु जायते।
जटाः पक्ष्मसु जायन्ते सीमन्ताश्चापि मूर्द्धनि॥
भेषजानि न संवृत्तिं प्राप्नुवन्ति तथा रुचिम् *।
यानि वाप्युपपद्यन्ते तेषां कर्म्म न सिध्यति॥ ३२॥
नानाप्रकृतयः क्रूरा विकारा विविधौषधाः।
क्षिप्रं समभिवर्त्तन्ते प्रतिहत्य बलौजसी॥

विशुध्यति तेषाम्। येषां मूर्द्धि धमो वाष्पनिगमो जायते तेषाम्। येषां मूर्द्धि दारुणाख्यो गोमयचूर्णाभश्चूर्णको जायते तेषाम्। येषां सर्व्वेषामेव सततस्पन्दना ये शरीरप्रदेशा अभिलक्षितास्ते शरीरप्रदेशाः स्तम्भानुगताः स्तब्धा भवन्ति न च चलन्ति कथञ्चित् तेषाम्। येषां शरीरप्रदेशानां शीतादयो गुणा विपर्य्यासेन विपर्य्ययरूपेण शीतम् उष्णत्वेन उष्णः शीतत्वेन मृदुर्दारुणत्वेन दारुणो मृदुत्वेन शुक्लः कृष्णत्वेन कृष्णः शुक्लत्वेन रक्तोऽरक्तत्वेनारक्तो रक्तत्वेन स्थिरश्चलत्वेन चलः स्थिरत्वेन अथान्यानि यान्युपपद्यन्ते पृथुः संक्षिप्तत्वेन संक्षिप्तः पृथुत्वेन दीर्घो ह्रस्वत्वेन ह्रस्वो दीर्घत्वेन अपतनधर्म्माणां पतनधर्म्मित्वं पतनधर्म्मिणाम् अपतनधर्म्मित्वमित्येवमादीनि यान्युपपद्यन्ते येषां तेषां कर्म्म न सिध्यति॥ ३२॥

गङ्गाधरः—येषां न सिध्यति तानाह—नानेत्यादि। येषां विकारा व्याधयो नानाप्रकृतयो वातादिनानाप्रकृतिकाः क्रूराः क्रूरगतयो विविधौषधाः प्रतिकारार्थमुपचारितनानौषधाः, तेषां कर्म्म न सिध्यति। क्षिप्रमित्यादि।

चूर्णक इति "यस्य गोमयचूर्णाभम्" इत्यादिग्रन्थोक्तश्चूर्णकः। स्थानेष्वन्येषु तद्विधा इति शरीरान्तरदेशेषु, बहुवचनेन स्नेहादयो विपर्य्यासेन वर्त्तन्त इत्यर्थः। संवृत्तिमिति निष्पत्तिम्।

* यथारुचि इत्यपि पाठः।

शब्दः स्पर्शो रसो रूपं गन्धश्चेष्टाश्च * चेष्टितम् ।
उत्पद्यन्तेऽशुभान्येव प्रतिकर्म्मप्रवृत्तिषु ॥
दृश्यन्ते दारुणाः स्वप्ना दौरात्म्यमुपजायते ।
प्रेष्याः प्रतीपतां यान्ति प्रेताकृतिरुदीर्य्यते ॥
प्रकृतिर्हीयतेऽत्यर्थं विकृतिश्चाभिवर्द्धते ।
कृत्स्नमौत्पातिकं घोरमनिष्टमुपलभ्यते ।
इत्येतानि मनुष्याणां भवन्ति विनशिष्यताम् ॥ ३३ ॥
लक्षणानि यथोद्देशं यान्युक्तानि यथागमम् ।
मरणायेह रूपाणि पश्यतापि भिषग्विदा ॥
अपृष्टेन न वक्तव्यं मरणं प्रत्युपस्थितम् ।
पृष्टेनापि न वक्तव्यं तत्र यत्रोपघातुकम् † ॥

येषां शब्दादयो बलौजसी प्रतिहत्य क्षिप्रं समभिवर्त्तन्ते सम्यगेव सम्पद्यन्ते, चेष्टा क्रिया चेष्टितं कर्म्म, शब्दादीनि तेषां तत्तद्व्याधेः प्रतिकर्म्मप्रवृत्तिषु अशुभान्युत्पद्यन्ते इति। अपराण्याह—दृश्यन्ते इत्यादि। यैर्दारुणाः स्वप्ना दृश्यन्ते, येषां दौरात्म्यमुपजायते, येषां प्रेष्याः भृत्याः प्रतीपतां विरोधितां यान्ति, येषां प्रेताकृतिर्मृताकार उदीर्य्यते, येषां प्रकृतिरत्यर्थं हीयते, येषां विकृतिश्चाभि सर्व्वतोभावेन वर्द्धते, यस्मै वैद्यस्य यात्रायां पथि कृत्स्नं घोरं भयानकमतिशयमौत्पातिकं भवति, येषां सर्व्वेषामनिष्टमुपलभ्यते, तेषामित्येतानि उक्तानि लक्षणानि विनशिष्यतां मरिष्यतां मनुष्याणां भवन्ति ॥ ३३ ॥

गङ्गाधरः—लक्षणानीत्यादि। लक्षणानि यानि यथोक्तानि यथागमञ्चेह मरणाय रूपाणि पश्यतापि भिषग्विदा वैद्येन अपृष्टेन तदातुरामात्य-

उपपद्यन्ते सिध्यन्ति। नानाप्रकृतय इति परस्परं विरुद्धस्वभावाः। क्रिया इति प्रतिक्रियाः। प्रतिकर्म्मप्रवृत्तिश्चिकित्साप्रवृत्तिः। औत्पातिकमिति आकस्मिकम्, तस्य विशेषणमरिष्टमिति, तेन अरिष्टमौत्पातिकमिति फलति ॥ ३१—३३ ॥

* क्रियाश्चेति चक्रः। † यत्रोपघातकम् इति च पाठः।

आतुरस्य भवेद् दुःखमथवान्यस्य कस्यचित् ।
अब्रुवंस्तस्य मरणं नैनमिच्छेच्चिकित्सितुम् * ॥ ३४ ॥
लिङ्गेभ्यो मरणाख्येभ्यो विपरीतानि पश्यता ।
लिङ्गान्यारोग्यमागन्तु वक्तव्यं भिषजा ध्रुवम् ॥
दूतैरौत्पातिकैर्भावैः पथ्यातुरकुलाश्रयैः ।
आतुराचारशीलैस्तु द्रव्यसम्पत्तिलक्षणैः ॥ ३५ ॥

स्वजनादिभिरजिज्ञासितेन मरणं प्रति उपस्थितं न वक्तव्यम् । यदि वा आतुरादिभिरस्मिन् रोगे जीवनं किं न वेति पृष्टेनापि भिषग्विदा तत्र यदुपघातुकं तदातुरामात्यादीनां हठादुपघातकरं तन्न वक्तव्यम् । कस्मादित्यत आह—आतुरस्येत्यादि । तस्य मरणमब्रुवन् न वदन् तमेनं चिकित्सितुं नेच्छेत् ॥ ३४ ॥

गङ्गाधरः—तर्हि किं ब्रूयादित्यत आह—लिङ्गेभ्य इत्यादि । भिषजा मरणाख्येभ्यो नियतमरणाख्येभ्यो लिङ्गेभ्यो विपरीतानि लिङ्गानि स्फुटारोग्य-सूचकानि दूतादिलिङ्गानि पश्यता दर्शयता आगन्तु आरोग्यं ध्रुवं वक्तव्यमिति । ननु कानि लिङ्गानि दृष्ट्वागन्त्वारोग्यं वक्तव्यमित्यत आह—दूतैरित्यादि । दूतैः पथि चौत्पातिकैर्भावैरातुरकुलाश्रयैर्भावैरातुराचारशीलैश्च द्रव्याणां सम्पत्ति-लक्षणैः करणैर्नियतमरणाख्येभ्यो लिङ्गेभ्यो विपरीतानि तदातुराद्यनुपघातु-कानि लिङ्गानि पश्यता आगन्तु आपातत आरोग्यं वक्तव्यमिति भावः ॥ ३५ ॥

चक्रपाणिः—सम्प्रति ज्ञातस्य रिष्टस्य यथार्हंप्रकाश्यत्वम् । तदाह—मरणायेत्यादि । आतुरस्य उपघातकमिति योज्यम् । भवेद् दुःखमन्यस्येति सम्बन्धः । हन्त मरणं चेदातुरस्य भावि नोच्यते, तत् किमारोग्यमपि भावि न वक्तव्यमेवेत्याह—लिङ्गेभ्य इत्यादि । मरणमाख्यान्तीति मरणाख्याः, तेभ्यो विपरीतानि आरोग्यसूचकानि । आगन्त्विति पश्चात्कालभावि । दूतैरौत्पातिकैरिति औत्पातिकैर्भावैः शुभाशुभसूचनार्थमकस्मादुत्पन्नैर्भावैः । सामान्येन शुभा-शुभसूचकं यदकस्माद्भवति तदौत्पातिकमुच्यते । द्रव्यसम्पत्तिलक्षणैरित्यन्ते आरोग्यमागन्तु वक्तव्यमिति योजना ॥ ३४ । ३५ ॥

* इतःपरं "यस्य पश्येद्विनाशाय लिङ्गानि कुशलो भिषक्" इत्यधिकः क्वचन पठ्यते ।

स्वाचारं हृष्टमव्यङ्गं यशस्यं शुक्लवाससम् ।
अमुण्डजटिलं दूतं जातिवेशक्रियासमम् ॥
अनुष्ट्रखरयानस्थमसन्ध्यास्वग्रहेषु च ।
अदारुणेषु नक्षत्रेष्वनुग्रेष्वध्रुवेषु * च ॥
विना चतुर्थीं नवमीं विना रिक्तां चतुर्द्दशीम् ।
मध्याह्नमर्द्धरात्रञ्च भूकम्पं राहुदर्शनम् ॥
विना देशमशस्तञ्चाशस्तौत्पातिकलक्षणम् † ।
दूतं प्रशस्तमव्यग्रं निर्द्दिशेदागतं भिषक् ॥ ३६ ॥

गङ्गाधरः—ननु किं लक्षणं शुभमागः कारोग्यव्यापकमित्यतो दूतादि-शुभलक्षणमाह—स्वाचारमित्यादि। अव्य सर्व्वाङ्गसम्पूर्णम् अमुण्डजटिलं मुण्डनजटाभ्यां रहितमातुरस्य जातिवेशक्रिया। समम् उष्ट्रादियानानवस्थितम् असन्ध्यासु सन्ध्याकालातिरिक्तकालेष्वागतम् अग्रहेषु क्रूरग्रहभुक्तभिन्नेषु अदारुणेषु भरण्यादिभिन्नेषु अनुग्रेषु उग्राः पूर्व्वमघान्तका इत्युग्रसंज्ञकनक्षत्र-भिन्नेषु अध्रुवेषु च ध्रुवसंज्ञकनक्षत्रभिन्नेषु च नक्षत्रेषु आगतम् रिक्तां विना तिथिष्वागतं रिक्तां विवृणोति चतुर्थीं नवमीं चतुर्द्दशीं विना मध्याह्नादि विना अशस्तं देशं विना अशस्तौत्पातिकलक्षणं विना आगतमव्यग्रं व्यग्रताशून्यं दूतं प्रशस्तमव्यङ्गं भिषगादिशेदिति। सुश्रुते चोक्तम्। शुक्लवासाः शुचिगौरः श्यामो वा प्रियदर्शनः। स्वस्यां जातौ स्वगोत्रो वा दूतः कार्य्यकरः स्मृतः। गोयानेनागतस्तुष्टः पादाभ्यां शुभचेष्टितः। धृतिमानपि कालज्ञः स्वतन्त्रः प्रतिपत्तिमान्। अलङ्कृतो मङ्गलवान् दूतः कार्य्यकरः स्मृतः। स्वस्थं प्राङ्मुख-

चक्रपाणिः—शुभलक्षणं स्वाचारमित्यादिना ब्रूते। अमुण्डमिति सशिखकृतवपनोऽभिप्रेतः। जात्यादिभिरातुरेण सह समो जातिवेशक्रियासमः। अग्रहेष्विति अपशस्तस्थानस्थितक्रूरग्रहानधिष्ठितेषु इत्यर्थः। अदारुणेषु नक्षत्रेषु अनुग्रेषु ध्रुवेषु चेति, दारुणानीति तीक्ष्णानि। यदुवाच वराहः—"मूलाशिवाशक्रभुजगाधिपानि तीक्ष्णानि" इति शिवा आर्द्रा, शक्रो ज्येष्ठा, भुजगाधिपमश्लेषा। उग्राणि च वराहोक्तानि यथा,—"उग्राणि पूर्व्वभरणीपित्र्याणि" इति। पूर्व्वाणि पूर्व्वाफाल्गुनी, पूर्व्वाषाढ़ा, पूर्व्वभाद्रपदम्। पित्र्यंञ्च मघा। वराहोक्तदारुणादीनि नक्षत्राणि वर्ज्जयित्वान्येषु नक्षत्रेषु दूता आगताः शुभा भवन्ति। रिक्तामिति चतुर्थ्यादिविशेषणम्, चतुर्थी नवमी चतुर्द्दशी

* [illegible]षु इति वा पाठः। † शस्तौत्पातिकलक्षणम् इति चक्रः।

दध्यक्षतद्विजातीनामृषभाणां नृपस्य च ।
रत्नानां पूर्णकुम्भानां सितस्य तुरगस्य च ॥
सुरध्वजपताकानां फलानां पावकस्य च ।
कन्यानां वर्द्धमानानां * बद्धस्यैकपशोस्तथा ॥
पृथिव्या उद्धृतायाश्च वह्नेः प्रज्वलितस्य च ।
मोदकानां सुमनसां शुक्लानां चन्दनस्य च ॥
मनोज्ञस्यान्नपानस्य पूर्णस्य शकटस्य च ।
नृभिर्धेन्वाः सवत्साया बड़वायाः स्त्रियास्तथा ॥

मासीनं समे देशे शुचौ शुचिम् । उपसर्पति यो वैद्यं स च कार्य्यकरः स्मृतः ॥ इति ॥ ३६ ॥

गङ्गाधरः—प्रशस्तदूतमुक्त्वा पथि चातुरवेश्मप्रवेशे च प्रशस्तमाह—दधीत्यादि । ऋषभो वृषः । सितस्य श्वेतवर्णस्य तुरगस्य । फलानामित्यामानाम्, पक्वानामशस्तत्वेनोक्तत्वात् । पावकस्य पवित्रकरवस्तुनः । कन्यानां वर्द्धमानानां कन्यानामनूढ़ानामङ्कुरितयौवनानाम् । एकस्य बद्धपशोर्दर्शनं शुभं न त्वनेकस्य । उद्धृताया हलादिनोद्धृतमृत्तिकायाः पृथिव्याः । शुक्लानां सुमनसां पुष्पाणाम् । चन्दनस्य शुक्लस्य, रक्तानुलेपनस्याप्रशस्तत्वेन उक्तत्वात् । नृभिः पूर्णस्य शकटस्य सवत्साया धेन्वा बडवायाश्च सवत्सायाः

रिक्तोच्यते, तथा रिक्तेति विशेषणेन चतुर्थ्यादीनां निष्फलत्वसूचनेन कर्म्मारम्भं प्रत्यनुपादेयत्वोपदिश्यते । शस्तमौत्पातिकमाकस्मिकं लक्षणं यस्य तत् शस्तौत्पातिकलक्षणम् ॥ ३६ ॥

चक्रपाणिः—दध्यक्षतेत्यादिना मार्गादिषु प्रशस्तदर्शनान्याह । सुरध्वजः शक्रध्वजः । कन्यासु वर्द्धमानानामिति अङ्कारोपिताः कुमार्य्यः कुमाराश्च वर्द्धमानाः, पुरुषोत्तमवत् समासः । अन्ये तु वर्द्धमानाः शरावा इत्याहुः, ते चालेपनादिना मण्डिता इति बोद्धव्यम् । एकपशुः श्रेष्ठपशुः

* कन्यासु वर्द्धमानानाम् इति चक्रसम्मतः पाठः ।

जीवञ्जीवकसिद्धार्थ-सारसप्रियवादिनाम् ।
हंसानां शतपत्राणां चाषाणां शिखिनां तथा ॥
मत्स्याजद्विजशङ्खानां मांसस्य च * घृतस्य च ।
रुचकादर्शसिद्धार्थ-रोचनानाञ्च दर्शनम् ॥
गन्धः सुगन्धो वर्णश्च सुशुक्लो मधुरो रसः ।
मृगपक्षिमनुष्याणां प्रशस्तानां गिरः शुभाः ॥
छत्रध्वजपताकानामुत्क्षेपणमभिप्लुतिः ।
भेरीमृदङ्गशङ्खानां शब्दाः पुण्याहनिस्वनः ॥
वेदाध्ययनशब्दाश्च सुखो वायुः प्रदक्षिणः ।
पथि वेश्मप्रवेशे च विद्यादारोग्यलक्षणम् ॥ ३७ ॥
मङ्गलाचारसम्पन्नः सातुरो वैश्मिको जनः ।
श्रद्दधानोऽनुकूलश्च प्रभूतद्रव्यसंग्रहः ॥

स्त्रियाश्च सवत्सायाः । जीवञ्जीवकश्चकोरः । अजश्छागः । मांसस्य सद्यस्कस्य न तु पर्युषितस्य। रुचकं लवणविशेषः। आदर्शो दर्पणम्। सिद्धार्थः श्वेतसर्षपः । रोचना गोरोचना। सुगन्धो गन्धः। सुशुक्लश्च वर्णः। रसो मधुर इत्येव। प्रशस्तानां मृगाणां हरिणशृगालादीनां पक्षिणां जीवञ्जीवकादीनां मनुष्याणां पुण्यशीलसाधुदातृप्रभृतीनां शुभा गिरः। छत्रादीनामुत्क्षेपणमुड्डीनता। अभिप्लुतिरितस्ततो दोलनमाच्छादनञ्च। पुण्याहनिस्वनः पुण्याहेतिशब्दो नादः। सुखो वायुः शैत्यमान्द्यसौगन्ध्यवहः। प्रदक्षिणो दाक्षिण्यगुणयुक्तः॥३७॥

<u>गङ्गाधरः</u>—पथि चातुरकुलप्रवेशे च शुभलक्षणमुक्त्वा अथातुरकुले प्रशस्तमाह—मङ्गलाचारेत्यादि। प्रभूतद्रव्यसंग्रहो नानाविधौषधस्वस्त्ययनादि-

इत्यर्थः। शकटस्य पूर्णस्य नृभिरिति सम्बन्धः। बड़वायाः स्त्रियाश्च सवत्साया इति योजना। जीवञ्जीवकः पक्षी प्रसिद्धः। प्रियवादी चातकः॥ ३७ ॥

* प्रियङ्गूणामित्यन्यः पाठः।

धनैश्वर्य्यसुखावाप्तिरिष्टलाभः * सुखेन च।
द्रव्याणां तत्र योग्यानां योजना सिद्धिरेव च ॥ ३८ ॥
गृहप्रासादशैलानां नागानां वृषभस्य च।
हयानां पुरुषाणाञ्च स्वप्ने समधिरोहणम् ॥
अर्णवानां प्रतरणं वृद्धिः सम्बाधनिःसृतिः।
स्वप्ने देवैः सपितृभिः प्रसन्नैश्चाभिभाषणम् ॥
सोमार्काग्निद्विजातीनां गवां नृणां यशस्विनाम्।
दर्शनं शुक्लवस्त्राणां ह्रदस्य विमलस्य च ॥
मांसमत्स्यविषामेध्य-च्छत्रादर्शप्रतिग्रहः।
स्वप्ने सुमनसाञ्चैव शुक्लाणां दर्शनं शुभम् ॥
अश्वगोरथयानञ्च यानं पूर्व्वोत्तरेण च।
रोदनं पतितोत्थानं द्विषताञ्चाभिमर्द्दनम् ॥ ३९ ॥

कर्म्मीयद्रव्यसम्पन्नः। धनाद्यवाप्तिर्वैशिमकजनानामातुरस्य च। इष्टलाभश्च सुखेन, न त्वनिष्टं किञ्चिद्वर्त्तते। इति। चिकित्साप्रशस्तिमाह—द्रव्याणामित्यादि। चिकित्सार्थं यद् द्रव्यं यादृशगुणेन सम्पन्नं तत्र योग्यं भवति, तस्य तद्द्रव्यस्य तत्रौषधपथ्यादौ योजना योजनार्थं लाभश्च। योजनायां सत्यां तत्क्रियायाः संशोधनादिरूपायाः सिद्धिश्चैवेत्यारोग्यलक्षणम् ॥ ३८ ॥

गङ्गाधरः—अथ प्रशस्तस्वप्नानाह—गृहेत्यादि। नागानां हस्तिनां स्वप्ने गृहाद्यारोहणं प्रशस्तम्। अर्णवानां प्रतरणं सन्तरणेनोत्तीर्णत्वं, प्रसरणमिति पाठे विस्तीर्णत्वम्। वृद्धिरर्णवानां पूर्णत्वम्। सम्बाधनिःसृतिः सङ्कटान्मुक्तिः। प्रसन्नदेवपितृभिः सह भाषणम्। सोमश्चन्द्रः। यशस्विनां नृणां विमलह्रदस्य मांस-मत्स्यानां विषाणां सविषप्राणिनां प्रतिग्रहः, अमेध्यानां विष्ठादीनां छत्रादर्शयोश्च प्रतिग्रहो ग्रहणम्। शुक्लानां सुमनसां पुष्पाणां स्वप्ने दर्शनम्। स्वप्नेऽश्वादियानं शुभम्। एवं पूर्व्वोत्तरेण च दिग्भागेन यानं गमनं शुभं स्वप्ने रोदनं शुभम्।

चक्रपाणिः—योजनायां सत्यां सिद्धिः योजनासिद्धिः। सम्बाधनिःसृतिः सङ्कटनिस्तरणम्।

* इष्टालम्भः सुखेन च इति चक्रधृतः पाठः।

सत्त्वलक्षणसंयोगो भक्तिर्वैद्य द्विजातिषु ।
साध्यत्वं न च निर्व्वेदस्तदारोग्यस्य लक्षणम् ॥ ४० ॥
आरोग्याद् वलमायुश्च सुखञ्च लभते महत् ।
इष्टांश्चाप्यपरान् भावान् पुरुषः शुभलक्षणः ॥ ४१ ॥

तत्र श्लोकौ ।

उक्तं गोमयचूर्णीये मरणारोग्यलक्षणम् ।
दूतस्वप्नातुरोत्पातसिद्धियुक्तिव्यपाश्रयम् ॥ ४२ ॥

पतितोत्थानं स्वप्ने स्वस्य पतित्वोत्थानदर्शनं शुभम् । द्विषतां शत्रूणामभिमर्द्दनं स्वबलेन मर्द्दीकरणम् । इति स्वप्नाः प्रशस्ताः । ॥ ३९ ॥

गङ्गाधरः—आतुरलक्षणप्रशस्तिमाह—सत्त्वेत्यादि । सत्त्वं मनस्तस्य स्वाभाविकलक्षणेन संयोगः न तु सत्त्वगुणस्य, राजसतामसयोः सत्त्वगुणोद्रेके सति स्वभावान्यथात्वेनारिष्टत्वात् । साध्यत्वं रोगस्य न त्वसाध्यरोगे सत्त्वादिमत्त्वे । न च निर्व्वेदः । विवेकिनी बुद्धिर्यदि न वर्त्तते । वैराग्यादेर्मनःखेदो निर्वेद उक्तः ॥ ४० ॥

गङ्गाधरः—आरोग्यस्य फलमाह—आरोग्यादित्यादि । इष्टांश्चाप्यपरान् तपोनिर्व्वाणादीन् ॥ ४१ ॥

गङ्गाधरः—अथास्याध्यायस्यार्थं संग्रहीतुमाह—तत्रेत्यादि । दूतादिव्यपाश्रयं मरणलक्षणमारोग्यलक्षणञ्च ॥ ४२ ॥

द्विषताञ्चावमर्द्दनमित्यन्तं स्वप्नेन ज्ञेयम् । सत्त्वस्य गुणस्य लक्षणैः सह संयोगः सत्त्वलक्षणसंयोगः । न च निर्व्वेद इत्यात्मन्यनवज्ञा इत्यर्थः ॥ ३८—४१ ॥

चक्रपाणिः—उक्तमित्याद्यध्यायसंग्रहः । दूतादिषु पृथक्कारणारोग्यलक्षणमिह नोक्तं व्यक्तमेव । युक्त्याश्रयं मरणलक्षणं यथा—'यमुद्दिश्यातुरं वैद्यः सम्पादयितुमौषधम्' इत्यादिग्रन्थोक्तम् । सिद्ध्याश्रयं मरणलक्षणं यथा—'विज्ञातम्' इत्यादिग्रन्थोक्तम् । आरोग्यलक्षणं युक्त्याश्रयं

इतीदमुक्तं निखिलं यथातथं *
तदन्ववेद्यं सततं भिषग्विदा।
तथा हि सिद्धिश्च यशश्च शाश्वतं
स सिद्धकर्म्मा लभते धनानि च ॥ ४३ ॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते इन्द्रियस्थाने गोमय-
चूर्णीयमिन्द्रियं नाम द्वादशोऽध्यायः ॥ १२ ॥

श्लोकसङ्ख्या ॥ ४०५ ॥

गङ्गाधरः—अथैतदिन्द्रियस्थानस्य ज्ञाने वैद्यानां फलमाह—इतीदमित्यादि। सिद्धिं क्रियासिद्धिम् ॥ ४३ ॥

अध्यायं समापयति—अग्नीत्यादि। इतीन्द्रियस्थानं सम्पूर्णम्।

इति वैद्यश्रीगङ्गाधरकविरत्नविरचिते चरकजल्पकल्पतराविन्द्रियस्थानजल्पे
पञ्चमस्कन्ध गोमयचूर्णीयद्वादशाध्यायजल्पाख्या
द्वादशी शाखा ॥ १२ ॥

सिद्धयाश्रयश्च यथा—'इष्टालम्भः सुखेन च' इति ग्रन्थोक्तम्। इतीत्यादिनेन्द्रियस्थानोक्तं प्रमेय-जातं महाफलत्वेनावश्यबोध्यतयोपदर्शयन्नुपसंहरति ॥ ४२ । ४३ ॥

इति महामहोपाध्यायचरकचतुराननश्रीमच्चक्रपाणिदत्तविरचितायामायुर्व्वेददीपिकायां
चरकतात्पर्य्यटीकायाम् इन्द्रियस्थाने गोमयचूर्णीयेन्द्रियं
नाम द्वादशोऽध्यायः ॥ १२ ॥

---

समाप्तमिदमिन्द्रियस्थानम्।

॥ श्रीः ॥

* यथा तथा इत्यपि पाठः।